इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा
स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् शके १९०८

# ॥ अथ ऋग्वेददशग्रंथप्रारंभः ॥

पुनर्मुद्रण : १९९५

प्रकाशक : वेदाचार्य **विनायक हरि घैसास**, घैसासगुरुजी वेदपाठशाला २/११ एरंडवणा, कर्वे पथ, पुण्यपत्तनम् ४११००४

मुद्रक : **वसंत गोविंद मोघे**, वसंत प्रिंटिंग प्रेस ४२६/३ चतुःशृंगी पथ पुण्यपत्तनम् ४११०१६

वितरक : अनमोल प्रकाशन, अप्पा बळवंत चौक, पुण्यपत्तनम् ४११००२.

**मूल्य : चारशे रुपये**

# ॥ विद्वदभ्यर्थनम् ॥

ऋग्वेदकल्पद्रुमशौनकादिप्राच्यद्रुपुष्पाणिधियाविविच्य । ऋक्संहिताख्यांपरिकल्प्यमालांसमर्पयेवैदिककंठदेशे ॥ १ ॥

## वेदप्रास्ताविकम् ।

श्रीः ॥ प्रणम्यवेदपुरुषंवेदज्ञान्पारिकांक्षिणः ॥ ऋक्संहितायाहोमादेःकुर्वेप्रास्ताविकंक्वचित् ॥

ननु कोऽयंवेदोनाम । कथंवातस्यापौरुषेयत्वेनप्रामाण्यम् । केवातस्यविषयप्रयोजनसंबंधाधिकारिणः । नखल्वेतस्मिन्सर्वस्मिन्नसति वेदेप्रवृत्तिः । अत्रोच्यते—इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायंयोग्रंथोवेदयतिसवेदः । अलौकिकपदेनप्रत्यक्षानुमानेव्यावर्त्येते । अनुभूयमानस्यस्रक्चंदनवनितादेरिष्टप्राप्तिहेतुत्वमौषधादेरनिष्टपरिहारहेतुत्वंच प्रत्यक्षतःसिद्धम् । स्वेनानुभविष्यमाणस्य पुरुषांतरगतस्यच

तथात्वमनुमानगम्यम् । एवंतर्हि भाविजन्मगतमप्यनुमानगम्यमितिचेन्न । तद्विशेषस्यानवगमात् । नखलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः कलंजभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगंतुंशक्नोति । तस्मादलौकिकोपायबोधकोवेदइतिलक्षणस्यनातिव्याप्तिः । अतएवोक्तं—'प्रत्यक्षेणानुमित्यावायस्तूपायोनबुध्यते । एनंवदंतिवेदेनतस्माद्वेदस्य वेदता ॥' इति । सएवोपायो वेदस्यविषयः तद्बोधएव प्रयोजनं तद्बोधार्थी चाधिकारी तेनसहोपकार्योपकारकभावः संबंधः ।

अथवेदानामपौरुषेयत्वेनस्वतःप्रामाण्यमनूद्यते—वेदांश्चैकेसंनिकर्षंपुरुषाख्याः । नन्वस्तुपदानांपदपदार्थसंबंधस्यचनित्यत्वं, वाक्यार्थप्रमितेश्चवाक्यजन्यतयाविधीनांप्रामाण्यं, तथाप्यानुपूर्वीरूपवेदानांनित्यत्वासंभवात्काठकादिसमाख्ययातत्कर्तृकत्वनिश्चयाच्च पौरुषेयत्वंसंभवति । पुरुषेचदोषसंबंधसंभावनयानप्रामाण्यंसंभवति । तथाहि । वेदःप्रागभावप्रतियोगितावच्छेदकधर्मवान् वाक्यत्वात् भारतवदित्यनुमानेनपौरुषेयत्वम् । नचसामान्यधर्मस्यप्रागभावप्रतियोगितानवच्छेदकत्वेनवेदत्वस्यातथात्वादसिद्धिरितिवाच्यम् । वेदत्वस्याताद्दशत्वेपिइदानींतनवेदत्वादीनांतदवच्छेदकतयानासिद्धिः । अन्यथाघटादीनामपौरुषेयत्वप्रसंगः । वस्तुतोवेदत्वंप्रागभावप्रतियोगितावच्छेदकं कार्यधर्मवृत्तित्वात् घटत्ववदित्यनुमानेनवेदत्वस्यापितथात्वात् । अतोवेदानांपौरुषेयत्वम् । एवंचकाठककालापकादिसमाख्या, बबरःप्रावाहणिरकामयतेत्याद्यनित्यसंयोगोप्युपपद्यते । तदुक्तं संनिकृष्टकालावेदाइदानींतनाइति । तत्रचास्मदादीनांकर्तृत्वासंभवाद्व्यासादिवदीश्वरएवकर्ता । एवंच 'त्रयोवेदाअजायंतेत्यग्नेर्ऋग्वेदोवायोर्यजुर्वेदः' इत्यादिदर्शनमुपपद्यते । अतोनस्वतःप्रामाण्यमितिचेत् । न । उक्तानुमानस्य वेदत्वंनप्रागभावप्रतियोगितावच्छेदकं सामान्यधर्मत्वादित्यनुमानेनसत्प्रतिपक्षितत्वात् । प्रतियोगिताव-

च्छेदकभेदाभावेन सकलघटप्रागभावैक्येप्रतियोग्युत्पत्तिनाश्यत्वासंभवेनचनित्यत्वापत्तेः। इष्टापत्तौतूत्पन्नस्यपुनरुत्पत्तिप्रसंगः, प्रागभा-
वनाशस्वीकारेघटानुत्पत्तिप्रसंगः । अवयवशस्तन्नाशस्वीकारोनिरवयवत्वादिवायुक्तः । प्रतियोगिभेदेनाभावनानात्वकल्पनेसंसर्गाभावा-
न्योन्याभावयोरैक्यप्रसंगः। अतोनसामान्यधर्मस्यप्रागभावप्रतियोगितावच्छेदकत्वम् । प्रथमानुमानमपि—वेदाःप्रागभावप्रतियोगिताव-
च्छेदकधर्माभाववंतोऽस्मर्यमाणकर्तृकत्वादात्मवदित्यन्वयिना, अस्मर्यमाणकर्तृकवाक्यत्वादितिव्यतिरेकिणाचसत्प्रतिपक्षितम्। वेदशून्य-
कालाभावेनवेदप्रागभावासिद्धेश्च । तथाहि। पूर्वकालोनवेदशून्यःकालत्वाद्वर्तमानकालवत् । पूर्वकालीनंवेदाध्ययनंगुर्वध्ययनपूर्वकं वेदा-
ध्ययनत्वादिदानींतनवेदाध्ययनवत् । वेदानपौरुषेयाःअस्मर्यमाणकर्तृकत्वादित्यनुमानेनापौरुषेयत्वसिद्धेश्च । एवं 'वाचाविरूपनित्यया'
इतिश्रुतिः । 'स्वयंभूरेषभगवान्वेदोगीतस्त्वयापुरा। शिवाद्याऋषिपर्यंताःस्मर्तारोऽस्यनकारकाः ॥' इतिस्मृतिश्चोपपद्यते । काठकादिस-
माख्यातु श्रुतिस्मृतिविरोधात्प्रवचननिमित्तत्वेनोपपादनीया । 'अग्नेर्ऋग्वेदः' इत्यादिश्रुतिरप्यग्निनाज्ञापितइतिव्याख्येया । अनित्य-
संयोगोऽपि प्रवाहनित्यतामादायोपपादनीयः। प्रवाहनित्यत्वंचसजातीयप्रागभावसमव्याप्तसजातीयध्वंसकत्वरूपम् । यद्वाबहुक्षीरा-
दिवाक्यवदसत्यकथादिनाविधेयस्तुतिपरत्वेनोपपादनीया । अतोऽपौरुषेयावेदाइतिसिद्धंवेदानांस्वतःप्रामाण्यम्। इतिगागाभट्टः ।

स्वाध्यायविषयेकिंचित्प्रस्तूयते—स्वाध्यायोऽध्येतव्यः । अत्रस्वाध्यायत्वं स्वशाखात्वम् । तत्र स्वत्वंचपरंपरयाध्ययनविषयत्व-
मनुष्ठानविषयत्वंच । तेन वेदत्रयांतर्गतैकैकशाखापरःस्वाध्यायशब्दः । तेनाध्ययनानुष्ठानयोः स्वपरंपरापरिगृहीताध्ययनानुष्ठानविषय-
त्वोपपत्तिः । अधीतवेदस्यप्रयोजनवत्त्वंचेत्थमवसेयम् । विधीनां प्रवृत्तिजनकप्रवर्तनाज्ञानम्, अर्थवादानां प्राशस्त्यज्ञानं, मंत्राणां

विशिष्टार्थस्मरणं, **नाम्नां** कर्मभेदो गुणफलोपबंधः संकल्पलाघवंच, **साम्नामक्षराभिव्यक्तिः**, **स्तोभानां** सामकालपूर्तिः, **उपनिषदां** पारलौकिकफलककर्मप्रवृत्तिजनकशरीरव्यतिरिक्तजीवात्मज्ञानं, क्रमज्ञानादिच यथेष्टमूहनीयम् । एवमंगानामपिवेदोपकारकत्वम् । तच्च **शिक्षायाः** स्वरादिनिश्चयद्वारा, **कल्पस्य** शाखांतरसंदिग्धविध्युपसंहारद्वारा-न्यायलब्धार्थतात्पर्यनिर्णयद्वाराच, **व्याकरणस्य** वैदिकोहविज्ञानद्वारा, **निरुक्तनिघण्ट्वो**र्वैदिकशब्दज्ञानद्वारा, **छंदसां** वैदिकवाक्यपरिमाणद्वारा, **ज्यौतिषस्य** वैदिककर्मप्रयोगोपयोगितिथ्यर्क्षादिज्ञानद्वारा, अधीतवेदजन्यार्थज्ञानोपयोगित्वात्सिद्धं सांगोवेदोऽध्येयोनुष्ठेयानितदुदितानिकर्माणीति । तथाच ऋग्वेदस्यैवाखिलवेदाद्यत्वेनाभ्यर्हितत्वात्तदंतर्गतशाकलसंहितामधिकृत्याध्ययनाध्यापनस्वाहाकाराद्युपकर्त्रीयंभूयादितिनैकशोविद्वत्साहाय्येनप्रयतितंमयाऽस्याःशोधनादिसंस्करणाय । योजितानिचार्षिदैवतच्छंदांसिआमूलांतंतत्तत्सूक्तपत्राधःप्रदेशेषु( )धनुश्चिह्नांतर्गततत्तच्छाखार्थविलासभांजि । प्रत्यध्यायमंतेतत्तदंतर्गतदेवतात्यागाःसूक्तपक्षेणभेदपक्षेणचदर्शिताः । तथाऋग्वेदकल्पद्रुमादिग्रंथेभ्योविद्वद्भ्यश्च यथावगतंस्वाहाकारनिर्णयप्रयोगाद्यपि प्रस्तावनाव्यवहितत्वेनसंग्रथितमत्र । अंतेशाकलसंहितावर्तिनामृचामकारादिवर्णक्रमकोशोऽप्यनल्पपरिश्रमेणप्रणीयसमयोजी । तिपुस्तकंयावच्छेमुषिपरिष्कृत्यसंशोधितम् । स्वाहाशब्दयोगेऋगंतस्वरस्योदात्तानुदात्तस्वरितत्वप्रतिपत्तिसौकर्यार्थमृगंते +एतादृगुदात्तचिह्नं *एतादृशंचस्वरितचिह्नंकल्पितंतत्रतत्र । तेनैतादृशचिह्नद्वयहीनाःकेवल-॥-रेखाद्वययुजःशेषाऋचोऽनुदात्तान्ताभवन्ति । अर्धर्चादावेकैवरेखेतिकल्पितास्त्यत्रपरिपाटी । एवंविहितेप्ययंतश्रमपरःसंशोधने शरीरिमात्रसाधारणभ्रान्त्यादिसमुत्थंदोषजातं सौजन्यधुरीणैः

सारस्पृहयालुभिः परिशीलितमरालचातुरीकैर्विपश्चिद्वरैरुपेक्ष्यमाणं कृतशोधनंचाशासानः सकलाध्येत्रध्यापकप्रयोजकादिसौकर्यमेत-द्ग्रंथात्संभावयन्गुणिजनचक्षुर्घटापथगामितयैवसार्थकतांमन्यमानोगुणिजनपरितोषमेवैतद्व्यापारात्प्रीयमाणोऽखिलजगन्नायकोविदधातु-प्रमाणसिद्धांतविरुद्धमत्रयत्किंचनाभून्मतिमांद्यदोषात् । मात्सर्यमुत्सार्यतदार्यचित्ताःप्रसादमाधायविशोधयंतु ॥ इत्याशास्ते

विद्वदेकांतवशंवदः—

वा. ल. पणशीकरः ।

## अत्रादर्शपुस्तकदातृनिर्देशः ।

१ वे ॥ शा ॥ सं ॥ गणेशभट्टआठल्ये आलीबागइत्येतैर्दत्तंमहतापरिश्रमेणतैरेवनिर्मितंस्वाहाकारपुस्तकमेकं ।

२ वे ॥ शा ॥ सं ॥ आत्मारामभटजी अळवणी सावंतवाडीइत्येतैर्दत्तंस्वीयसंग्रहस्थंकाशीस्थजड्येप्रणीतं ।

३ वे ॥ शा ॥ सं ॥ रामचंद्र(बाबा)पाध्ये गुर्जरभालावलीइत्येतैः महामहोपाध्यायगोपालोपाध्यायप्रणीतंसंपाद्यदत्तं ।

४ वे ॥ शा ॥ सं ॥ बाबुरामचंद्रदीक्षितजडेबनारसइत्येतैःप्रहितऋग्वेदकल्पद्रुमादिकोशान्शौनकीयांश्चाकलय्यमुद्रितमासीत्

## तच्चद्वैतीयीकेऽस्मिन्संस्करणे—

तदंतर्वर्तिमंत्रभागं वे ॥ रा ॥ गणेशभटजीआठल्यइत्येतत्साहाय्येनसर्वानुक्रमभाष्येणचपुनःसंशोध्यप्रकाशितोऽयंग्रंथइतिशम् ।

संहिताहोमेप्रमाणम् । तत्रादौसंहिताहोमेप्रमाणंफलंचप्रायश्चित्तप्रकरणेबृहदाश्वलायनस्मृतौ—'श्रौताग्निरपिस्मार्तोग्नौप्रायश्चि-
त्ताहुतीर्हुनेत् । संहितागणकूष्मांडपावमान्यादिभिर्द्विजः॥स्मार्ताभावेतुकृत्वाग्निंकुर्यादुत्तपनीयकमि'ति॥श्रौताग्निरपीत्यपिनास्मार्ताग्निमान-
पिस्मार्तोग्नौकुर्यादितिप्रतीयते। प्रायश्चित्ताहुतीरित्यनेनपापनिवृत्तिफलकत्वंबोध्यते । उत्तपनीयकोनामआधानसुबोधिन्यां—'दर्भेष्वग्निंस-
मारोप्यपुनर्दर्भेपुसंयुतं । पुनस्तद्वत्तृतीयोग्निःसएवोत्तपनीयकः'॥ इति । लौकिकमग्निंसंस्कारविशिष्टंकृत्वाकुर्याद्धोममितिशेषः । श्रुतावपि—
'यःसमिधायऽआहुतीयोवेदेनददाशसर्तोऽअग्नये। योनमसास्वध्वरः'॥ इतिमंत्रेस्वातंत्र्येणसंहिताहोमःप्रतीयते । तथाचमंत्रार्थः—अग्नये
अग्न्यर्थं । यः मर्तः—मनुष्यः । समिधा—पालाश्यादिसमिदाधानेन । आहुती—आहुत्या आज्यादिसाध्यया । यो वेदेन—संहितया तदंतर्गत-
सर्वमंत्रकरणकहोमेनच । ददाश—परिचरतीति ॥ यद्यपीयंश्रुतिर्वेदेनेत्यस्यब्रह्मयज्ञाध्ययनेनेत्यर्थंकरणेनपाकयज्ञप्रशंसाकरणपरतयायोजिता
तथाप्युक्तार्थपरतयापियोजयितुंशक्यते बाधकाभावात्, वेदेनाग्नयेददाशेतिसमभिव्याहृतपदस्वारस्याच्चअथचश्रुतीनांविश्वतोमुखत्वात् ।
तेनोक्तार्थतात्पर्यनिर्णायिकापूर्वोदाहृताश्वलायनस्मृतिरप्यनुगृहीताभवति । एतच्छ्रुतिविहितसमिदाधानाद्युक्तकर्मफलं'तस्येदर्वंत'इत्यग्रिम
श्रुतौस्फुटं । तथाहि—'तस्येदर्वंतोरंहयंतऽआशवस्तस्यद्युम्नितमंयशः । नतमंहोदेवकृतंकुतश्चननमर्त्यकृतंनशत्' ॥ इति । मंत्रार्थः—
तस्यैव आशवः—शीघ्रगंतारः । अर्वतः—अश्वाः । रंहयंते—वेगंकुर्वंति । शत्रून्प्रसहंतइत्यर्थः । तस्यैवद्युम्नितमंयशः—दीप्ततमाकीर्तिश्चभवति ।
अपिच । तं देवकृतं—देवेषुविहिताकरणेनयत्कृतं । अंहः—पापं । कुतश्चन—कस्मादपिहेतोः । ननशत्—नव्याप्नोति । अशत् नशत्

इतितन्नास्र । नचमर्त्यैक्तं—मनुष्येषुहिंसादितन्न । इत्येवंपापक्षयकामेनाग्निशुश्रूषाकार्येत्युक्तंभवति । अतःपापक्षयकामेनापिसंहिताहोमो विधेयइतियावत् । किंचोपाकर्मांगत्वेनापिसांख्यायनसूत्रे 'प्रत्यृचंवेदेनजुहुयादित्यादिनाऽनेकेहोमविधयोऽभिहिताः । तथाचसूत्रं— 'अक्षतसक्तूनांधानानांदधिघृतमिश्राणांप्रत्यृचंवेदेनजुहुयादितिहैकआहुःसूक्तानुवाकाद्याभिरितिवाध्यायार्षेयाद्यादिभिरितिमांडूकेयोऽथह- स्माहकौषीतकिरग्निमीळेपुरोहितमित्येकाकुंभकस्तदब्रवीदावदंस्त्वंशकुनेगृणानाजमग्निनाधामंतेविश्वंगंतानोयज्ञंयज्ञियायोनःस्वोअरणः प्रतिचक्ष्वविचक्ष्वाग्नेयाहिमरुत्सखायत्तेराजन्छ्रुतंहविरितिमृचास्तच्छंयोरावृणीमहइत्येकाहुतशेषाद्धविःप्राश्नंती'ति ॥

एवंपराशरस्मृतौप्रायश्चित्तप्रकरणेद्वितीयाध्यायेपारायणांगत्वेनदशांशहोमोऽभिहितः । तथाहि—'ब्रह्महानरकस्यांतेपांडुकुष्ठीप्रजा- यते । प्रायश्चित्तंप्रकुर्वीतसयत्पातकशांतये ॥ चत्वारःकलशाःकार्याःपंचरत्नसमन्विताः । पंचपल्लवसंयुक्ताःसितवस्त्रेणवेष्टिताः । कषाय- पंचकोपेतानानाविधफलान्विताः।सर्वौषधिसमायुक्ताःस्थाप्याःप्रतिदिशंदिशं ॥ रूप्यमष्टदलंपद्मंमध्यकुंभोपरिन्यसेत् । तस्योपरिन्यसेद्देवं ब्रह्माणंचचतुर्मुखं ॥ पलार्धार्धप्रमाणेनसुवर्णेनविनिर्मितं । अर्चयेत्पुरुषसूक्तेनत्रिकालंप्रतिवासरं ॥ यजमानःशुभैर्गंधैःपुष्पैर्धूपैर्यथाविधि । पूर्वादिकुंभेषुततोब्राह्मणाब्रह्मचारिणः ॥ पाठयेयुःस्वकान्वेदानृग्वेदप्रभृतीन्शनैः । दशांशेनततोहोमोग्रहशांतिपुरःसरः ॥ मध्येकुंडेविधा- तव्योघृताक्तैस्तिलव्रीहिभिः । द्वादशाहमिदंकर्मसमाप्यद्विजपुंगवः ॥ भद्रेपीठेयजमानमभिषिंचेद्यथाविधि । ततोदद्याद्यथाशक्तिगोभूहेम- तिलादिकं ॥ ब्राह्मणेभ्यस्ततोदेयमाचार्याययथाविधि । आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः ॥ प्रीताःसर्वेव्यपोहंतुममपापंसुदारुणं । इत्युदीर्यमुहुर्भक्त्यातमाचार्यंक्षमापयेत् ॥ एवंविधानेविहितेश्वेतकुष्ठंविनश्यति' ॥ इति ॥ यद्यपिरुद्रकल्पद्रुमेलिखितकालिकापुराणे—

'जपादशांशतोहोमस्तथाहोमात्तुतर्पणं। तर्पणस्यदशांशेनमार्जनंकथितंकिल ॥ मार्जनस्यदशांशेनब्राह्मणानपिभोजयेत् ॥ जपोर्चापूर्वकोहोमस्तर्पणंचाभिषेचनं ॥ भूदेवपूजनंपंचप्रकारोक्तापुरस्क्रियेति ॥ होमाशक्तौजपंकुर्याद्धोमसंख्याचतुर्गुणं। एवंकृतेतुमंत्रस्यजायतेसिद्धिरुत्तमा' ॥ इतिवचनैःपुरश्चरणांगजपसामान्यदशांशहोमःकर्तव्यइतिप्रतीयते तथापि—'पाठयेयुःस्वकान्वेदानृग्वेदप्रभृतीन्शनैः। दशांशेन ततोहोमोग्रहशांतिपुरःसरः' ॥ इतिप्रकृतप्रायश्चित्तप्रकरणस्थस्मृतिवचनेनविशिष्यदशांशहोमस्यविहितत्वाद्दशांशहोमोविधेयः। तत्संभवश्चदशावृत्तिपारायणेष्वेवैकावृत्तिरूपदशांशेनेतिफलितम् ॥ केचित्तुमहार्णवादिग्रंथेषु'रूपरुद्रजपांशेषोडशधामंत्रविभागपक्षेष्वाद्यमंत्रेराद्यंतमंत्रैर्वादशांशसंख्यापूरणवदेकसंख्याकादिपारायणपक्षेप्याद्यादिमंत्रैस्तद्दशांशसंख्यापूरणीया । एवंकल्पनायांतत्रयन्मूलंतदेवात्रान्वेषणीयमि'तिवदंति। महार्णवेतु 'चतुर्पुत्राह्मणेपुऋग्वेदप्रभृतिमंत्रब्राह्मणात्मकवेदचतुष्टयपारायणंकुर्वत्सुप्रतिदिनंपठितवेदभागदशांशसंख्ययाव्याहृतिभिर्होमःकार्य'इत्युक्तं। कैश्चित्तुसंहिताहोमांशेसाधकतयोपन्यस्तानिऋग्विधानस्थानि—'एषाहिसंहितावेदैःसर्वब्रह्ममयी निचृत्। उग्रेणतपसादृष्टाविश्वामित्रेणधीमता ॥ होमांश्चजपयज्ञांश्चनित्यंकुर्वीततवैतया' इत्यादीनिवचनानितान्युपक्रमोपसंहाराभ्यांगायत्रीमंत्रहोमपराण्येवनतुसंहिताहोमपराणि । कृत्स्नसंहितायाविश्वामित्रदृष्टत्वेनकाप्यनुपलंभात्गायत्र्यास्तदृष्टत्वाच्च निचृदितिविशेषणस्यसकलसंहितायामसंभवात् न्यूनाक्षरत्वेनगायत्र्यंशएवतत्संभवाच्च वेदैश्चतुर्भिर्वेदैःसंहितासम्यग्धृतेतिस्मृत्यक्षरार्थः। एवंचसंहितेतिपदश्रवणमात्रेणकृत्स्नसंहिताहोमपरतयापूर्वोक्तवचनानियोजयतांप्रमादएवेतिसुधियोविभावयंतु ॥ इतिऋग्वेदकल्पद्रुमः ॥



---

१ पुरस्क्रिया—पुरश्चरणम्।

॥ श्री ॥

वेदोऽखिलो धर्ममूलम्।

# पुरस्कारः

वेदाचार्यश्रीविनायकदेवघैसास गुरुभिः स्वीयपाठशालाद्वारा ऋग्वेददशग्रंथमुद्रणात्मकं महत् कार्यं संपादितम्। तदत्र उपास्यदेव-गणेशकृपा वेदाचार्याणाम् अखंडवेदाध्ययनाध्यापनात्मकं महत्तपश्च कारणमित्यत्र नास्ति संशयः। केवलं मनोरंजनमात्रप्रयोजनाः सहस्रशो ग्रन्थाः अस्मिन् काले मुद्राप्य प्रकाश्यमानाः दरीदृश्यन्ते। अयं तु पवित्रतमः परमेश्वरविग्रहात्मको ग्रन्थः यस्य विधिपूर्वकं सांगाध्ययनेन, आर्षर्णनिर्मोकः स्वतःप्रमाणभूतवेदपरंपरासंरक्षणं च यथार्थतया संपाद्यते। इदमेव विश्वकल्याणकरं भगवत्कृपासंवर्धकं महत् कार्यं, आजन्मवेदाध्ययननिष्ठैः भूदेवैः ऐहिकसुखपराङ्मुखतया अद्ययावत् भारते वर्षे कर्तव्यबुद्ध्या समनुष्ठितमिति कंटस्थेयं वेदानुपूर्वी संपूर्ण-आसेतुहिमाचलं प्रशस्ततमा संदृश्यते इत्यहो भाग्यं भारतवर्षस्य। पुस्तकस्थविद्यावन्नेयं वेदविद्या अप्रशस्ता बुद्धिस्थतया, कंठस्थतया च सर्वा-पेक्षया सर्वेषां वेदाचार्याणां महत्त्वमाख्यापयन्ती सर्वानेतानुत्तमर्णीकरोति। एतादृशं स्वायत्तं विद्याधारणं न केवलं मुद्रणेन सिद्ध्यति। मुद्रित-ग्रंथावलोकनेन केवलमक्षरवाचनसंभवेऽपि वेदाध्ययनसंस्कारशून्यैः, तत्रत्योदात्तादिस्वरज्ञानं तत्प्रकाशनं च कर्तुमशक्यमेव, इति निर्धार्य श्रीघैसासगुरुवर्यैः पुण्यपत्तनेऽस्मिन् महता प्रबंधेन वेदभवन निर्माय तद्द्वारा कंठस्था बुद्धिस्था चेयं प्रशस्ततमा वेदविद्यापरंपरा संचालयितुम-

भिलष्यते । तदिदं तेषामभीप्सितं विश्वोपकारकं पवित्रतमं कार्यं विश्वसंरक्षकस्य शास्त्रयोनेः परमकृपया धर्मश्रद्धालूनां सज्जनानां आत्मीयता-प्रकटनेन च निष्प्रत्यूहं संपद्यताम्, समेधतां च वेदाध्ययनाध्यापनपरंपराद्वारा विशुद्धा धर्मबुद्धिः राष्ट्रहितकारिणी इत्येव सर्वान्तर्यामिणः सर्वधीप्रेरकस्य परमेश्वरस्य चरणकमलयोः संततमनुनाथामहे । कामयामहे च वेदाचार्यघैसासगुरुवर्याणां दीर्घायुरारोग्य-वेदपरंपरासंरक्षकपुत्र-छात्राद्यभिवृद्धिं च सर्वकल्याणनिदानभूतामिति ।

फाल्गुन संकष्टी
मंदवासरः १९०७
दि. २९-३-१९८६

वेदमूर्तिकृपाकांक्षी
कवीश्वरकुलजनुर्दत्तात्रेयशर्मा
श्रीवासुदेवनिवासाश्रमः पुण्यपत्तनम्

॥ श्री ॥

वेदोऽखिलो धर्ममूलम् ।

# प्रस्तावना

वेदपुरुषाय नमः ।

वेदपुरुषाच्या कृपेमुळे ऋग्वेदान्तर्गत शाकलशाखेचे उपग्रन्थांसह नवमुद्रण वेदाभिमानी जनताजनार्दनापर्यंत उपलब्ध करून देण्याचा आज अत्यंत आनंददायक योग येत आहे. जग हे आश्चर्यांनी भरलेले आहे की, कार्यकारणभावांनी ? आश्चर्यांनी भरलेले आहे असे सिद्ध करायला गेलो, तर कार्यकारणभावच वापरायला लागतो आणि कार्यकारणभावाने ते भरलेले आहे असे म्हणावे, तर कार्यकारण-भावावर आपण विश्वास ठेवतो, हेच केवढे आश्चर्य आहे ! तेव्हा असे याबाबत आश्चर्य अन् कार्यकारणभाव यांचे जुळयाचे दुखणे कायम असल्यांनेच ही पोथी छापली गेल्याचे आश्चर्य मानण्याचे तूर्तास बाजूस ठेवतो; पण वास्तविक ते आश्चर्य आहे, असेच झटकन पाहता वाटत राहते.

गेली सुमारे ३८ ते ४० वर्षे वेदाध्यापन करण्याचे व्रत पुणे येथे मजकडून चालू आहे हे खरे, पण प्रकाशन या विषयाशी माझा तसा अगदीच थोडा संबंध होता. आमच्या वेदशाळेतील मुलांना दरवर्षी अध्ययनासाठी पोथ्या मिळणे दुरापास्त होत असल्याने, आम्ही पुष्कळ हिकमतींनी लोकांकडून जुन्या जुन्या पोथ्या हस्तगत करून, मुलांचे अध्ययन त्यावरून घेणे काही वर्षे केले. दरम्यान सरकार, इतर प्रकाशन-संस्था, धर्मरक्षण–संस्कृतिरक्षणात रस घेणाऱ्या संस्था व व्यक्तींशी बोलून वेदांची छपाई कोणी करून देईल काय ? याचा पुष्कळ प्रयत्न

केला. परंतु यश येणार होते ते आत्ता ज्या मार्गाला आले त्या मार्गाला, असे नंतर म्हणायचे. म्हणजे शेवटी वेदपुरुषावर भिस्त टाकून आपणच हे छपाईचे काम वेदपाठशाळेतर्फे हाती घ्यायचे ठरविले व त्याला विश्वस्तांनी पण मान्यता दिली. हे काम हाती घ्यायचे, असे माझ्या व विशेषतः माझ्या मुलाच्या, चि. वे. म. मोरेश्वरच्या मनात आले. पण असे करणे म्हणजे सशाच्या डोईला गेंडयाचे शिंग लावून सह्याद्री फोडण्यातलाच प्रकार होता. कारण या एकूण पोथीची सुमारे २२०० पाने दिमाखदार रीतीने छापायला ५ लाखाच्या दरम्यान खर्च येत आहे. अहो, आमच्या सगळयाच आयुष्याची एकूण उलाढाल या रकमेच्या पंचमांशाच्या आत ! पण सत्यसंकल्प वेदपुरुषच मनात आणवतो. आपल्याला निमित्तकारण करून तो संकल्प वेदपुरुष पूर्ण करून घेतो; असेच म्हणणे प्राप्त आहे. बाकी हे एवढे मोठे अजस्र काम कोणताच आर्थिक वा तांत्रिक अडथळा येऊ न देता एका दमात करणे आमच्या वेदशाळेच्या आवाक्याबाहेरचे होते ... पण ते काम झाले; हे तर खरेच. आता मला पुढचे आश्चर्य असे पाहायचा योग येवो की हे ग्रंथ माळयात ठेवायच्या आतच हातोहात खपून गेले. – ईश्वरी राज्याच्या हालचालीच्या भाषेत बोलतो आहे, म्हणून हा जाता जाता एक शुभविचार मांडला इतकेच. असो.

आपल्या धर्माचे आद्य प्रमाणग्रंथ म्हणजे वेद. वेद तर अपौरुषेय अशी आपली अविचल श्रद्धा ! सृष्टी जन्माला आली आणि गेली, असे होत असते. पण वेद मात्र प्रकाशमय, ज्ञानमय तेजाने कायमच तळपत असतात. म्हणजे सृष्टीचे इतिहास व त्यांची तात्पर्ये आणि जीवमात्राच्या कल्याणमार्गाचे द्योतन वेदच करतात, अशी आपली प्रामाणिक, साधुसंत ऋषिमुनींनी पुन्हा पुन्हा जोखलेली श्रद्धा. आजच्या आधुनिकांनासुद्धा वेद हा मानवी इतिहासातील सर्वात प्राचीनतम ग्रंथ आहे, हे मानावे लागते आहेच. असा हा वेद 'संहिता-ब्राह्मण आरण्यके' व उपग्रंथ अशा पूर्ण स्वरूपात गेल्या ७५ वर्षांत छापला गेलेला नाही. त्यामुळे गेली सुमारे ३५ वर्षे तो बाजारात अनुपलब्ध-स्थितीत होता. आमच्या वेदशाळेच्या या उपक्रमामुळे आणिक काही वर्षे तरी–आणि वेदपुरुषाने यश दिले तर कायमही हा एकूण ग्रंथसंभार उपलब्ध राहण्याची योजना झालेली आहे.

हा ग्रंथ छापण्याआधी आम्ही भारतभर वेगवेगळया भाषांतून जाहिराती देऊन मागणीचा अंदाज घेतला. मागणीचा आकडा स्पृहा करण्याजोगा नसला तरी सबंध भारतातील वेगवेगळया वेदशाळांकडून आम्हांस उत्स्फूर्त प्रतिसाद आला; याचा आम्हास आनंद होतो. भारत देश आसेतुहिमाचल वेगवेगळया बाह्य संस्कृतींनी नटला असला तरी, त्यातील अनुस्यूत वेदसंस्कृतीच या देशाला धरून राहते असे वाटल्यावाचून राहवले नाही. असे असले तरी मूठभरांनी काय होणार ? असा प्रश्न पडतोच. आधुनिक शिक्षणाची लाट वेदमूलक नसल्याने आपल्या पूर्वजांनी स्वधर्म मर्यादा संभाळून, प्राणांची बाजी लावून जतन केलेल्या वेदाचे नेमके महत्त्व काय ? याचे थोडेही शिक्षण मिळण्याची व्यवस्था प्रचलित समाजपद्धतीत नाही. समाजजीवनातून वेद इतका लुप्तप्राय हजारो लाखो वर्षात झाला नसेल. त्यामुळे वेदांतील विषयांबाबत त्याच्या अध्ययनपद्धतीबाबत अज्ञानामुळे अनेक वादप्रतिवाद चालू असतात.

वेदाची अध्ययनपरंपरा कशासाठी ? वेदाध्ययन झालेल्याकडून शब्दार्थाचे ज्ञान अपेक्षावे का ? वस्तुतः वेदांचे अध्ययन करणे हा अभ्यास वेगळा आणि त्यांचा अर्थ सांगण्याचे शास्त्र अवगत करण्याचा अभ्यास वेगळा. वेदांचे अध्ययन करतो तो वैदिक. त्याचेवर जबाबदारी ही असते की, वेदांचे प्रत्येक अक्षर, पद, ऋचा हे अत्यंत स्वच्छ करून त्याच्या उदात्तादि स्वरासहित नीट हृदयात आणि गळयात बसविणे. सबंध वेद विनापोथी मुखोद्‌गत राखणे. मग त्यातील शेकडो, हजारो ऋचांचा वापर म्हणजे विनियोग करून, याज्ञिक लोक दत्तयाग, गणेशयाग, पंचायतनयाग अशा छोटया छोटया यज्ञांपासून सोमयाग, वाजपेय यज्ञ, अश्वमेध यज्ञ इत्यादि अत्यंत प्रबल आणि भव्य यज्ञ करतात. या याज्ञिकांतसुद्धा श्रौत याज्ञिक वेगळे व स्मार्त याज्ञिक वेगळे. दत्तयागादि याग अथवा उपनयन, विवाह-संस्कार, वास्तुशांत इत्यादि ठिकाणी आवश्यक असते, ते स्मार्त याज्ञिक आणि सोमयागादि यज्ञ, पुत्रकामेष्टि इत्यादि इष्टिरूप अग्निहोत्री यज्ञ हे श्रौत याज्ञिकाचे भाग होत. या दोन्हीही याज्ञिकांच्या विद्या वेगळया आहेत. त्यांची तंत्रे वेगळी आहेत. फक्त त्यासाठी मंत्राचा भाग आला की वैदिक त्यांना मंत्र पुरवितो.

वेदांचा दुसरा विनियोग होतो पूजादि तंत्रविधींमध्य. वेगवेगळे अभिषेक, वेगवेगळया सूक्तांचे पारायण, वेगवेगळया मंत्रांचे जप करून शनि, राहू, केतूपासून इन्द्र, सूर्य, रुद्र, विष्णु, इत्यादि देवतांची प्रीति संपादन करणे आणि वेगवेगळी काम्य व कुलपारंपारिक अनुष्ठाने करून आपापल्या इच्छा पूर्ण करणे, यासाठीही वेदमंत्र लागताच. पण या विधीचीहि तंत्रे वेगळी असतात. वैदिक त्यांना फक्त मंत्र पुरवितो.

यानंतर योगाभ्यास करणारे लोक प्राणायामादि गोष्टी करण्यासाठी पूरक–कुंभकादिकांचा वापर करताना, प्रणव या एकाक्षरा गायत्रीपासून विराटापर्यन्त नानाविध मंत्रांचा उपयोग करतात; आणि त्या त्या देवतांना शरीरात स्थापण्यासाठी वेगवेगळया छंदातील त्या त्या देवतांचे मंत्र वापरतात. वैदिक हा अशा लोकांना मार्गदर्शन करतो इतकेच.

यानंतर वेदांचा संस्कृत भाषच्या दृष्टीने अर्थ लावणाऱ्यांचा गट येतो. त्यात वेदांचे अपौरुषेयत्व मानणाऱ्या मीमांसकांचा एक गट आणि दुसरा देवकल्पनांची स्थित्यंतरे, त्यांचे उदय व ऱ्हास इत्यादी वेदमाउलीने दिलेल्या शब्दब्रह्मावर मत प्रतिपादन करणाऱ्यांचा गट. या दोघांनाही वेदमंत्र उच्चारता येत नाहीत. त्यासाठी त्यांना वैदिकच पाचारावा लागतो.

इतिहासाचे संदर्भ, समाजशास्त्राचे संदर्भ, भूगर्भशास्त्राचे संदर्भ, गणित इत्यादी अनेक शास्त्रांच्या अभ्यासकांना हा वेदरूप ज्ञाननिधी कारणपरत्वे वापरावा लागतो; पण त्या वेळेला त्यांना ते मंत्र वैदिकामार्फतच जसेच्या तसे कळणार.

गानलिपींत जसेच्या तसे लिहून दिले तरी शास्त्रीय संगीत जसे गुरुपरंपरेशिवाय येणार नाही, शिलपशास्त्रावरील लठ्ठ लठ्ठ ग्रंथ वाचून ज्याप्रमाणे शिल्प, चित्रकला इत्यादी विद्या येत नाहीत; तद्वतच व्रतस्थ राहून गुरुपरंपरेचा सांभाळ केल्याशिवाय वेद येणार नाहीत. कारण वेदांची अक्षरे ही पुस्तकस्थ होऊ शकत असली तरी वेद कंठगत आणि हृदयस्थ करणे, ही एक शुचिर्भूत राहून गुरुसान्निध्याने अवगत करायची विद्या आहे. दशग्रंथ अष्टविकृतीतील जटाघनासह वेद जो मनसामनसात भिनवितो त्या वैदिकाचा आनन्द त्याचेजवळच !

या वैदिकाला त्याच्या अभ्यासासाठी लागणारे ग्रंथ म्हणजे आज प्रसिद्ध होत असलेले दशग्रंथ. वस्तुतः दशग्रंथात एका परंपरेप्रमाणे पदांचाही समावेश होतो. पण या प्रकल्पात पदांचा समावेश नाही. ते अजस्र काम वेदपुरुषाच्या मनात आले तर तो आम्हाकडून असेच बिनबोभाट करवून घेईल, याबद्दल विश्वास वाटतो. ज्या निर्णयसागरच्या मूळ पोथीवरून या नवमुद्रणाचे काम संपादित केले त्या मूळ निर्णयसागर छापखान्याने केलेले न भूतो न भविष्यति आश्चर्यकारक, सुन्दर, ठाशीव, बिनचूक मुद्रण सर्वदृष्टया अद्वितीयच म्हणावे लागेल. त्या मूळ प्रकाशकांना किती धन्यवाद द्यावेत ! आज ते नकलवायचे म्हणजे सुद्धा आभाळाला हात टेकले, असे आम्हास वाटत आहे. नवमुद्रणाच्या वेळी पूर्वी मुळातच अत्यल्प असलेल्या चुका दुरुस्त केल्या आहेत. त्यातूनही काही चुका राहिल्या असल्यास विद्वज्जनांनी त्या अवश्य कळवाव्यात.

तात्पर्य, असे हे वेद वेदांगांसह उपयोगाचे दृष्टीने जगभर सारीकडे महत्त्वाचे आहेत. हा मूळ सागर आहे. यामधून वेगवेगळे प्रवाह वाफेच्या मार्गाने अथवा भूगर्भ-मार्गातून येत असतात. म्हणून व्यासंगी अभ्यासकाने आपल्या ग्रंथभांडारात त्याचा अग्रक्रम टेवायला हवा.

हा ग्रंथ प्रकाशात आणण्याआधी त्याच्या सुबकपणा व टिकाऊपणाबद्दल आमचे काही आग्रह होते. शिवाय केवळ वेदाभिमानी जनतेच्या उदार दातृत्वावरच आमची भिस्त. त्यामुळे आर्थिक भपकेबाजी परवडणारी नव्हती. पण हा त्रैलोक्यातील सर्वोत्तम ग्रंथ निदान उत्तम रीतीने बाहेर पडावा अशी तळमळ होती. त्या दृष्टीने पेपर ॲण्ड पल्पचे डॉ. अरुणराव पारखे, आमचे परमस्नेही अनमोल प्रकाशनचे श्री. र. द. नांदुरकर, ॐकार प्रोसेसचे श्री. संजय देडपांडे, आणि वसंत प्रिंटिंग प्रेसचे वसंत गोविंद मोघे यांचे या कामात खरोखरच अनमोल साहाय्य लाभले आहे. वसंत प्रेसच्या कामगार व मालकांनी हे अत्यंत जिकिरीचे काम इतर आर्थिक प्रलोभने दूर सारून अत्यंत मन लावून करून दिले. आम्ही तर पर्वी म्हटल्याप्रमाणे या प्रकाशन कारभारातील अनभिज्ञच ! परन्तु आमच्या श्री. नांदुरकरांनी कमीत कमी

खर्चात अत्यंत उठावदार रीतीने हे काम करण्याबाबत आम्हास जी शक्ती व स्फूर्ति दिली, ती वस्तुतः त्यांचीच आहे. नाही तर हा ग्रंथ यशस्वीरीत्या प्रकाशनांत आणणे आम्हांस अत्यंत कठीण होते.

या सर्व लोकांच्या स्वतःच्या वेदप्रेमामुळे आणि त्यांच्या सहकाऱ्यांच्या कष्टामुळे हे काम झाले. त्या सर्वांस मनःपूर्वक धन्यवाद व वेदपुरुषाचे आशीर्वाद.

ज्या थोर महाभागांच्या आणि वेदाभिमानी जनताजनार्दनाच्या आर्थिक व इतर साहाय्याविना भारतीय संस्कृतीचा हा अमूल्य ठवा ७५ वर्षांनीसुद्धा पुन्हा प्रकाशित करता आला नसता, त्या सर्वांबद्दल मनातील कृतज्ञता बोलून दाखविता येत नाही इतकी मोठी आहे. वेदपुरुष त्या सर्वांचे कल्याण करो.

सद्‌बुद्धी, सदाचरण आणि सद्‌भाव मनात रुजविणाऱ्यांचे वेदपुरुष इहपर कल्याण करीत असतो, इतकेच सांगून तूर्तास विराम घेतो.

२/११ एरंडवणे, पुणे ४.
चैत्र शु. १ गुढी, पाडवा शके १९०८

**विनायक हरि घैसास**
प्रधान-विश्वस्त, वेदाचार्य घैसास गुरुजी वेदपाठशाळा, पुणे ४.

## INTRODUCTION

With this whole book the total Rigveda is reappearing, after some eight decades, in printed form. The Rigveda is historically the very first book and that too the first ever book of knowledge for the Vedas are the root foundations the human being should rely upon.

The Vedas define Vyashti and Samashti and give explicit rules by which ' Vyashti ' could utilise the energies of Samashti. Not even that, but the Vedas go even further and tell us very explicitly about the ultimate goal of any being without which no one will be happy for ever.

The Vedas say that one must know the meaning of the Vedas. But this is too broad a statement. There are many methods of interpreting the Vedas in meaningful ways. So choose at least one, believe in it, behave accordingly and you will be successful ... successful in the sense of achieving the goal given by the Vedas.

But there are of course people to whom the Vedas are just their bread and butter. And this can very well happen. In short, the Vedas have power to give eternal as well as material satisfaction.

To-day human knowledge has acquired vast horizons; but if one goes through the book of the Vedas one would meet even vaster ideas and there are ways of thinking over their truthfulness too !

This, of course, needs grudgeless thoughtful study of the Vedas and the coming generations, I think, will willingly shoulder this responsibility—may be this might be the need of current times.

2/11 Erandvane, Pune 4.
Chaitra Shuddha 1,
Gudhi Padwa, Shake 1908.

**Vinayak Hari Ghaisas**
Chief Trustee
Vedacharya Ghaisas Guruji
Ved–Pathashala, Pune 4.

But there are of course people to whom the Vedas are just their bread and butter. And this can very well happen. In short, the Vedas have power to give eternal as well as material satisfaction.

To-day human knowledge has acquired vast horizons; but if one goes through the book of the Vedas one would meet even vaster ideas and there are ways of thinking over their truthfulness too !

This, of course, needs grudgeless thoughtful study of the Vedas and the coming generations, I think, will willingly shoulder this responsibility—may be this might be the need of current times.

2/11 Erandvane, Pune 4.
Chaitra Shuddha 1,
Gudhi Padwa, Shake 1908.

**Vinayak Hari Ghaisas**
Chief Trustee
Vedacharya Ghaisas Guruji
Ved–Pathashala, Pune 4.

# ऋक्संहितास्थपरिशिष्टविषयानुक्रमणिका ।

# ऋग्वेदीयादशग्रंथाः ।

ऋक्संहिता—परिभाषा—सर्वानुक्रम-
छंदर्षि—स्वाहाकारहोमनिर्णयप्रयोगा-
दिविविधोपयुक्तविषयसहिता
मन्त्रकोशयुताच

ऐतरेयब्राह्मणम्—भाष्यपाठैस्तत्रतत्रा-
नुवादितम्

ऐतरेयारण्यकं ( उपनिषद् ) भाष्यपाठैः
संवाद्य शोधितमस्तीदं पुस्तकम्

गृह्यसूत्रं—आश्वलायनीयम्.

शिक्षादिवेदषडंगानि—नाम
१ शिक्षा पाणिनीया, २ ज्योतिषं लगधस्य,
३ छंदः पिंगलनागस्य, ४ निघंटुः, निरुक्तंच
यास्कस्य, ५ श्रौतसूत्रं आश्वलायनस्य,
६ अष्टाध्यायीसूत्रपाठः पाणिनीयः

शिक्षादिचतुष्टयं—नाम १ शिक्षा, २
ज्योतिषं, ३ छंदः, ४ निघंटुः इति

## प्रासंगिकविविधविषयनिर्णयसंग्रहः ।

मंत्रार्षनिर्णयः। 'ऋषिदैवतच्छंदांस्यनुक्रमिष्याम' इतिसर्वानुक्रमपरिभाषायामृषीणांप्रथमनिर्देशात्तदुल्लिख्यते। ननुमंत्रब्राह्मणयो-र्वेदाभिधेयत्वात्सर्वानुक्रमण्यां 'नह्येतज्ज्ञानमृते' इत्यादिज्ञानस्यमंत्रादावेवावश्यकत्वबोधनादैतरेयब्राह्मणेमंत्रभागसत्त्वेपितत्प्रतीकोपादा-नेनर्ष्यादिकथनस्याकरणाद्यात्रनैवर्ष्यादिज्ञानस्योपयोगइतिचेन्न सर्वानुक्रमण्यांब्राह्मणांतर्गतमंत्राणामृष्याद्यकथनेपि 'अज्ञातर्ष्यादिकोमंत्रो-दोषावहइतिश्रुतिः' इतिकल्पसारोक्त्या बृहद्देवतायां 'सौर्याणिचैवसामानिसर्वाणिब्राह्मणानिचे'त्यनेनदेवतोक्त्याच छंदसस्तुस्वरूपसि-द्धत्वेनचर्ष्यादिज्ञानस्यावश्यकत्वात् ब्राह्मणस्यानेकभागघटितत्वेनमंत्रभागस्यापितदंतर्भूतत्वात् तत्रर्ष्यादिज्ञानस्योपयोगः। 'मंत्रातिरिक्तं ब्राह्मण'मितिभेदव्यवहारस्तुसमुदायनिबंधनइत्यदोषात् एवंबृहद्देवतायां 'सर्वा[illegible]गब्राह्मणानी'तिसामान्योक्त्यामंत्रातिरिक्तब्राह्मणस्यापि-सूर्यदेवताकत्वंसिद्धम्। ऋषिस्तुतद्द्रष्टृत्वादैतरेयउक्तप्रायएव। छंदस्तुलक्षणाक्रांतेतदेव। अनाक्रांतेतु 'अत्रानुक्तंगाथे'तिसूत्रात्गाथैवेति। मंत्रविषयेतुविनियोजकवाक्यानुरोधेनदेवताकल्पनीयैव। तदुक्तं निरुक्तोत्तरषट्केप्रथमाध्यायचतुर्थखंडे—'तद्येनादिष्टदेवतामंत्रास्तेषु देवतोपपरीक्षायद्देवतःसयज्ञोवायज्ञांगंवातद्देवताभवंत्यथान्यत्रयज्ञात्प्राजापत्यइतियाज्ञिका—नाराशंस्यइतिनैरुक्ता—अपिवासाकामदेवता स्यात्—प्रायोदेवतावाऽस्तिह्याचारोबहुलंलोके देवदेवत्य—मतिथिदेवत्यं—पितृदेवत्यंयद्दैवतोमंत्र'इति। एतदर्थस्तद्भाष्यादवगंतव्यः। अत्रापिसंदेहेतु 'अनिरुक्तोवैप्रजापति'रितिब्राह्मणात्,—'मंत्रेषुह्यनिरुक्तेषुदेवतांकर्मतोवदेत्। मंत्रतःकर्मतश्चैवप्रजापतिरसंभवे' इति बृह-द्देवतास्थवचनाच्च प्रजापतिरेवेतिसिद्धमिष्टम्॥ ॥ विशेषरूपेणर्ष्यादीनामज्ञानेऽनुकल्पमाहकल्पसारः—'ऋष्यादीनामविज्ञानेवाम-

देवादिकानृषीन् । गायत्र्यादीनिच्छंदांसिविष्णुंदेवंचसंस्मरेदि’ति । तत्रऋषिज्ञानप्राथम्येउदाहरिष्यमाणसर्ववाक्यसंप्रतिपत्तेर्नास्त्येव-संशयः । तत्रसूक्तविशेषेसर्वानुक्रमणीव्याख्यातृवचनद्वैधेनर्षीणामनियमेप्राप्तेतन्निर्णयःक्रियते—‘प्रतआशव’ इतिसूक्ते ‘प्रतेष्टाचत्वारिंशदृषिगणादशर्चाअकृष्टामाषाःप्रथमे—सिकतानिवावरीद्वितीये—पृश्नयोजास्तृतीयेत्रयश्चतुर्थे’ इत्यत्रचतुर्थेदशर्चेपूर्वोक्ताऋषिगणास्त्रयइति-योजना । आर्षानुक्रमण्यां—‘प्रतेहिसूक्तंप्रथमंदशर्चमकृष्टमाषाऋषयोविदुस्ते । निवावरीस्तुसिकताद्वितीयंतृतीयमेतेखलुपृश्नयोजाः । गणास्त्रयोऽमीकथिताश्चतुर्थमेषांतुगोत्रंक्वचिदप्रसिद्धम् । शिष्टासुपंचस्वृषिरत्रिरेवत्वंत्येतृचेगृत्समदःप्रसिद्धः’इत्युक्तत्वात् सर्वानुक्रमभाष्येपि-त्रयइतिपदच्छेदेनव्याख्यानाच्च । वृत्तिकृतातु अत्रयइतिपदच्छेदंकृत्वाचतुर्थेदशर्चेअत्रयइतिनामानइतिव्याख्यातं तत्तुप्रमाणाभावादु-पेक्ष्यम् । तथा ‘माप्रगामे’तिसूक्तेसर्वानुक्रमण्यां ‘पराणिचत्वारिसूक्तान्युक्ताऋषय’ इत्युक्तम् । अस्यार्थः—सुबन्धुमित्रा—बंधुःश्रुतबंधुर्विप्रबंधुस्त्रयऋषयः । तेगौपायनाएवनलौपायनाः सुबंधोस्तत्कालमृतत्वेनाद्रष्टृत्वात् । अतएव सर्वानुक्रमण्यांच ‘गौपायनान्बंध्वा-दीन्पुरोहितांस्त्यक्त्वान्यौमायाविनौश्रेष्ठतमौमत्वापुरोदधेतमितरेक्रुद्धाअभिचेरुरथतौमायाविनौसुबंधोःप्राणानाचिक्षिपतुरथहास्यभ्रातर-स्त्रयोमाप्रगामेतिषट्कंगायन्तंस्वस्त्ययनंजप्त्वा’ इति—‘माप्रगामेत्युपक्रम्यचतुःसूक्तेष्वतःपरम् । बंध्वाद्याऋषयोज्ञेयागौपायनसुतास्त्रय’ इति । सर्वानुक्रमवृत्तिकारेण—अपरेत्वित्यादिनाचतुर्णांद्रष्टृत्वमुक्तंतन्मूलविरोधादसंगतमितिस्पष्टमेव । तथाचतुर्थाष्टकेप्रथमाध्यायेऽ-नस्वंतेतिसूक्ते ‘अनस्वंताषट्त्रैवृष्णपौरुकुत्स्यौद्वौत्र्यरुणत्रसदस्यूराजानौभारतश्चाश्वमेधोंत्यास्तिस्रोनुष्टुभ’इतिसर्वानुक्रमणी । अस्यार्थः—षडृचात्मकंसूक्तं एतत्त्रयंव्यवस्थयाअपश्यत् । [illegible]याहृत्यत्रैवृष्णपौरुकुत्स्यौत्र्यरुणत्रसदस्यूद्वौसंभूय-

द्रष्टारौ अंत्यास्तिस्रइत्यावर्त्य द्वितीयांतत्वेनविपरिणमय्य ताःभारतोऽश्वमेधोऽपश्यदितियोजना । अंत्यास्तिस्रइत्यपरंप्रथमांतं अनुष्टु-भइत्यत्रान्वेतीति । तथाचशौनकः आर्पानुक्रमण्यां—'अनस्वंतेतिसूक्तस्यत्रिवृष्णपुरुकुत्सजौ । त्र्यरुणत्रसदस्यूद्वावश्वमेधश्चभारतः । अंत्यानांतिसृणामासांपूर्वासामितरौसहे'ति । अतएवोभयत्रापिद्वावित्युक्तिरपिचरितार्था । यत्तु तद्वृत्तौ षण्णामपिऋषित्रयसितिव्या-ख्यातं—यच्च तद्भाष्ये द्वेद्वेऋचौएकैकऋषिक्रमेणापश्यदिति—व्याख्यातं तत्तुस्फुटतरमूलभूतशौनकोक्तऋष्यनुक्रमणीविरोधात् मंत्र-लिंगविरोधात् द्वावित्युक्तिविरोधात् इतरौसहेत्युक्तिविरोधाच्चानादेयम् । ( ऋ. क. ) इतिऋषिनिर्णयः ॥

**ऋषिदैवतछंदऊहनिर्णयः** । तत्रजपहोमादौप्रयुज्यमानेषुसूक्तर्क्षुपूर्वंदेवतोहःकार्यउतछंदऊहइतिविमर्शेसर्वानुक्रमपरिभाषा-रंभएव—'ऋषिदैवतच्छंदांस्यनुक्रमिष्यामः' इत्यनुक्रमपरिग्रहाद्, बह्वृचगृह्यपरिशिष्टेपि—'अथास्यमंत्राणामृषिदैवतच्छंदांसि' इति-तथैवांगीकारात्, तथासांख्यायनसूत्रे—'ऋषेर्यस्ययोयोमंत्रोयद्दैवत्योयच्छंदस्तथातथातंतंमंत्रमनुब्रूयात्' इतिक्रमनिर्देशात्, एवमाधुनिक-याज्ञिकाचाराच्च 'यद्यपिस्यात्स्वयंब्रह्मात्रैलोक्याकर्षणक्षमः । तथापिलौकिकाचारंमनसापिनलंघयेत् ॥' इतिवचनाद्याज्ञिकाचारानुगृहीत-देवताप्राथम्यबोधकवचनानांकर्मकांडविषयेप्राबल्याद्देवतायाःफलदातृत्वेनाभ्यर्हितत्वात्तत्प्राथम्यंयुक्तंमत्वा । तथाश्रौतस्मार्तकर्मकांडो-दधिपारदृश्वभिर्भट्टनारायणकौस्तुभकारशांतिरत्नहेमाद्रिपूर्तकमलाकरादिमहानिबंधकारधुरीणैर्लोकोद्दिधीर्षयानैकशःप्रणीतप्रयोग-धर्मशा-स्त्रादिग्रंथेष्वासेतुहिमालयंप्रथितेषु प्रसंगतःसूक्तमंत्रादिप्रयोगावसरेऋषिदैवतछंदःक्रमेणैवसूक्तादीनांविनियोगादत्रसंहितायासस्मासि-रपिसएवक्रमआदृतोऽस्ति ॥ **इमंपक्षंप्राचीनानसहंते**—तेषांमतेछंदःप्राथम्यएवादरः । तथाचऋग्वेदकल्पद्रुमे—छंदःप्राथम्ये 'आर्षेय-

छंदोदैवतवित्' इतिसर्वानुक्रमउदाहृतएव। अन्यान्युदाहरिष्यंते। तथाहिनिरुक्तभाष्योदाहृतसामवेदब्राह्मणे—'योहवाअविदितार्षेय-
छंदोदैवतब्राह्मणेनमंत्रेणयाजयतिवाध्यापयतिवास्थाणुंवर्च्छतिगर्तंवापात्यतेप्रमीयतेवापापीयान्भवति' इति। अथर्ववेदे—'गणकऋषिः
निचृद्गायत्रीछंदः गणपतिर्देवता' इत्यादि। पारिजाते—'आर्षंछंदोदैवतंचविनियोगस्तथैवच। वेदितव्यंप्रयत्नेनब्राह्मणेनविपश्चिता' इति।
गोभिलोप्येवमाह—'आयात्वित्यनुवाकस्यवामदेवऋषिःस्मृतः। आनुष्टुभंभवेच्छंदोवाग्देवीदेवतास्मृता' इति। मदनरत्नेकात्यायनः—
'आर्षंछंदश्चदैवत्यंविनियोगस्तथैवच। वेदितव्यंप्रयत्नेनब्राह्मणेनविशेषतः' इति। सांख्यायनसूत्रे—'ऋषीञ्छंदांसिदेवताःश्रद्धामेधेच-
तर्पयित्वे'ति सर्वत्रछंदःपूर्वमभिहितमितिकृत्वाछंदःप्राथम्यमेवन्याय्यं उदाहृतश्रुतिस्मृतिप्रामाण्यात्,तत्रश्रुतक्रमपरित्यागेबीजाभावात्तासां-
क्रमबोधनएवतात्पर्याच्च। तथाबृहद्देवतायां—'नियमोयंजपेहोमेऋषिश्छंदोथदैवतं। अन्यथाचेत्प्रयुंजानस्तत्फलंचात्रहीयते॥ अर्थे-
प्सवःखल्वृषयश्छंदोभिर्देवताःपुरा। अभ्यधावन्निति छंदोमध्येत्वाहुर्मनीषिणः॥ ऋषिंतुप्रथमंब्रूयाच्छंदस्तुतदनंतरं। देवतामथमंत्राणां-
कर्मस्वेवमितिश्रुतिः' इति॥ आचार्यखंडेगृह्याधानप्रस्तावे—'ऋषिंछंदोदैवतंचविनियोगमनुक्रमात्। अस्मृत्वार्षादिकंविप्रोजुहुयाद्वा-
जपेदपि॥ यजेद्वाध्यापयेद्वापिनलभेत्कर्मणांफलम्' इति। तथा रामवाजपेयगृह्यकारोपि—'ऋषिमादौप्रयुंजीतछंदोमध्येनियोज-
येत्। देवतामवसानेचमंत्रज्ञोमंत्रसिद्धये'इति। तथाश्रीवत्सगोत्रभास्करकृतमहारुद्रपद्धत्यांछंदोभाषायां—'वक्तव्यंछंदआदौतुततआर्षिःप्र-
कीर्तितः। देवताविनियोगश्चतैत्तिरीयकपाठकैः'॥ आश्वलायनानांतु ऋषिच्छंदोदैवतपूर्वकोविनियोगः। तथाचपरिभाषायां—'आर्षे-
यच्छंदोदैवतविद्याजनाध्यापनाभ्यांश्रेयोधि[illegible]'ति॥ [illegible]र्यैरपिऋग्भाष्योपोद्धातांतेऋषिच्छंदोदेवतावि-

चारःकृतः सुरूपकृत्नुमितिसूक्तेतेएवऋषिच्छंदसी इंद्रंपृच्छेतिचतुर्थ्यामृचिलिंगदर्शनादिंद्रोदेवतेतिछंदएवपूर्वमुदाहृतम् । आत्वेतिसूक्ते-ऋषिच्छंदोदेवताविनियोगाःपूर्ववत् । इत्यादिपुबहुपुस्थलेपुछंदएवपूर्वंधृतम् । निरुक्तभाष्यकारोप्येवमेवाह ॥

**अत्रेदंविचार्यते**—किंश्रुतिस्मृत्यादीनांद्वैविध्यदर्शनाद्विकल्पः । सोपिशाखाभेदेनकांडभेदेनवाव्यवस्थितउतसर्वत्र । **नतावदाद्यः** । शाखांतरेतैत्तिरीयशाखायांनारायणोपनिपत्सु—'गायत्र्यागायत्रीछंदोविश्वामित्रऋषिःसवितादेवता'इति । **छंदोभाषायां**—'वक्तव्यंछंद आदौतुततश्चर्षिःप्रकीर्तितः । देवताविनियोगश्चतैत्तिरीयकपाठकैः' इतिविशिष्यक्रमबोधकश्रुतिस्मृत्यादिप्रमाणदर्शनेनसंदेहस्यैवाभावात् । **नद्वितीयः** । 'योहवाअविदितार्षेयच्छंदोदैवतब्राह्मणेनमंत्रेणयाजयतिवाध्यापयतिवा' इत्यादिनाकर्मकांडएवर्ष्यादिज्ञानेफलस्य—तद-ज्ञानेप्रत्यवायस्यचाभिधानात्कांडांतरस्यानुपस्थितेः । **नतृतीयः** । विरुद्धार्थकानांनिरवकाशानांप्रमाणानांषोडशिग्रहणाग्रहणवद्वैकल्पिक-त्वस्यवक्तुंशक्यत्वेपिविरुद्धार्थकपदरहितानांप्रकृतेतथावक्तुमशक्यत्वात् । अतश्छंदःप्राथम्यबोधकश्रुत्यादीनांप्रमाणांतराणामपिसंग्राहक-त्वपरतया एकवाक्यत्वलाभाच्छंदःप्राथम्यमेवोचितं । सर्वानुक्रमस्थं—'अनुक्रमिष्याम'इत्यंतं सूक्तप्रतीकादीनिप्रदर्शयिष्यामइतिव्याख्येयं । अतएव **सर्वानुक्रमभाष्यकारेणापि** 'एताननुक्रमिष्यामोव्याख्यास्याम'इतिव्याख्यायअनेकार्थत्वाद्धातूनामित्युक्तं । देवतास्मरणमंतेवा-कुर्यादितिबह्वृचगृह्यपरिशिष्टवाक्यस्यकेषुचित्पुस्तकेष्वदर्शनात् । केषुचित्तुदेवतास्मरणमेववाकुर्यादितिपाठदर्शनेनतस्यापिदेवताप्राथम्ये-असाधकत्वात् । नचैवंविनिगमनाविरहः देवताप्राथम्यावगत्यविशेषेपिछंदोविषयेहेतुनिर्देशपूर्वकप्रथमादिपदघटितस्मृत्यवधृततात्पर्यक-क्रमबोधकोक्तश्रुतेरेवविनिगमकत्वात् । 'श्रुतिस्मृतिविरोधेतुश्रुतेरेवागरीयसी । तथैवलौकिकंवाक्यंस्मृतिबाधेपरित्यजेत्' इतिस्मृत्य-

पेक्षयाश्रुतेर्बलवत्त्वात् देवताप्राथम्यबोधकश्रुत्यनुपलब्धेश्च । देवताप्राथम्याभासकप्रमाणानांसंग्रहपरतयोन्नीतत्वात् । द्विविधाचारदर्शनेपि श्रुत्यविरुद्धाचारस्य प्रामाणिकत्वेन ‘अंधस्येवांधलग्नस्ये’ तिन्यायेनपरंपरागताचारांतरस्याश्रद्धेयत्वात् । सर्वानुक्रमण्यांदेवताप्राथम्यव्यवहार दर्शनेपि ‘तुह्हिहवैतच्छब्दविशिष्टान्यृषिदैवतच्छंदांसिद्वित्रिचतुःपंचषट्सूक्तभांजियथासंख्यम्’ इतिपरिभाषानुसारेणक्वचित्पूर्वसूक्तसाहचर्यात्प्रथमंदेवताउत्तरत्रऋषिः । क्वचित्पूर्वत्रछंदःउत्तरत्रदेवताइतिच । तदुदाहरणानितु—‘प्राग्नयेपंचाग्नेयोवत्सआग्नेयंतुप्रनूनंतृचमाग्नेयःश्येनः’, ‘अग्निर्होतागायत्रंत्विंद्राग्नीऐंद्राग्नं’ इत्यादीनि । तुह्यादिशब्दाभावेपियथा—‘परंगायत्रंप्राग्वत्सप्रेर्ऋषिश्चानुक्तगोत्रःप्राग्न्यत्स्यात्काण्वोऽष्टमंमंडलंमाचिच्चतुस्त्रिंशन्मेधातिथिमेध्यातिथी’ । ‘जागतमूर्ध्वंप्रागुशनसःप्रदेवंदशवत्सप्रिर्भालंदनः’ ‘नवमंमंडलंपावमानंसौम्यंस्वादिष्ठयादशमधुच्छंदाः’ इत्यादिबहुपुस्थलेषुव्युत्क्रमदर्शनात् । साहचर्योक्तेरबाधकत्वांगीकारेपि—‘अस्यमेष्टौजागतंत्र्यनुष्टुबंतंद्यावापृथिव्येकाद्वेऐंद्र्यौत्वाष्ट्र्यौवाद्वेद्वेराकासिनीवाल्योरंत्यालिंगोक्तदेवता’ । ‘ऋतमेकादशंजगत्यंतंषष्ठ्यैंद्रासोमीसरस्वतित्वमितिसारस्वतोर्धर्चोयोनोवार्हस्पत्येतंवोमारुती’ । ‘वायोसैकागायत्रमुक्तादेवताःप्रउगेणाद्येतुतृचेत्यैंद्रवायवीद्यावापृथिव्योंत्यस्तृचोहाविर्धानोवातृतीयःपादोवाग्नेयोंबितमेनुष्टुभौबृहतीच’ । ‘कनिक्रदत्तृचंप्रदक्षिणिज्जागतंमध्येतिशक्यर्षिष्टैवैंताभ्यामृषिरध्वनिवाश्यमानंशकुंतंतुष्टाव’ इति । ‘अयंसउपांत्यानुष्टुप्पुरीष्येभ्योग्निभ्यः’ इति । ‘तिस्रःषट्पार्जन्यंतुपर्जन्यायतृचंगायत्रमेतेकुमारआग्नेयोऽपश्यत्’ इत्यादिबहुस्थलेषुतत्रैवव्यभिचारदर्शनात् ऋषिदैवतच्छंदांसीत्यस्यसंग्राहकत्वमेवन्याय्यं । यत्तु आश्वलायनानांदेवताप्राथम्याभासकाथर्वणसर्वानुक्रमण्यां ‘आश्वलायनानुक्रमानुसारेणानुक्रमिष्यामः खिलान्वर्जयित्वे’ तिप्रतिज्ञाय ‘इंद्रत्वातृचंविश्वामित्रगोतमविरूपाःप्रत्यृचमिंद्रमरुदग्नयोपिगायत्रम्’

इत्यादीनां एकादशपटलेविंशतितमकांडस्याव्यभिचारेणर्षिदैवतछंदांसिप्रदर्शितानीतितद्बह्वृचानांश्रौतस्मार्तसूत्रकृदाश्वलायनमित्राश्वलायनपरंनतुवह्वृचश्रौतस्मार्तसूत्रकृद्बह्वृचाश्वलायनपरं॥तथाचबृहद् ाश्वलायनस्मृतौ—'तपसाविदितंविप्रामयातावल्क्षणादिव । श्रौतस्यकर्मणः सिद्ध्यैश्रौतसूत्रंमयाकृतम् ॥ तएतंमृदुगंभीरेगंभीरार्थशिवप्रदे । सुदुर्ज्ञेयेषुविदुषांमनसःप्रीतिवर्धने ॥ श्रौतस्येवचयद्भाष्यंमयैवचकृतं द्विजाः । गृह्यभाष्यंकरिष्यंतिद्विजाइतिनमेकृतं॥' इति । उपनयनप्रकरणेयज्ञोपवीतविधिप्रकरणेच । 'प्रत्यक्षरमृषिंछंदोदैवांगान्यक्षराणिच । भूतेतत्वात्मवर्णाश्चस्थानंज्ञात्वाजपेत्सदा' ॥ तथा । 'ऋष्यादिसर्वंविज्ञायतंत्रविन्मंत्रसूक्तयोः । यज्ञोपवीतमंत्रेणकुर्याद्यज्ञोपवीतिनम् ॥ ब्रह्मास्यार्षयज्ञसूत्रस्यमुनिर्गायत्रमीरितं । छंदःप्रजापतिर्देवओंकारोप्यथवात्रिवृत्' इति । एतेनसर्वानुक्रमण्यांभूयसाव्यपदेशेनाव्यभिचारेणचदेवताप्राथम्योक्त्याछंदोपेक्षयादेवतायाःप्राथम्यमितिवदंतोनिरस्ताः । सत्येकस्मिन्बाधकेसाधकसहस्रस्याप्यकिंचित्करत्वमितिन्यायेनभूयसाव्यपदेशस्यासाधकत्वात् । श्रुतिरूपसाधकस्यप्रमाणांतरानपेक्षस्यप्रागेवाभिहितत्वादित्यलंविस्तरेण ॥ श्रुतिस्मृतिप्रमाणानामेकवाक्यत्वकल्पनात् । सर्वेषांचाविरोधेनछंदःप्राथम्यमीरितम् ॥ १ ॥ इति ऋ. क. छंदोदेवतोहक्रमनिर्णयः ॥

**छन्दोनिर्णयः**।इदानींऋग्विशेषेष्वधिकाक्षरन्यूनत्वेछंदोनिर्णयः—ननुछंदःप्रकरणे 'गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टीधृत्यतिधृतयश्चतुर्विंशत्यक्षरादीनिचतुरुत्तराण्यूनाधिकेनैकेननिचृद्भुरिजौद्वाभ्यांविराट्स्वराजा'वित्युक्तंसर्वानुक्रमण्याम्। **अस्यार्थः**—चतुर्विंशत्यक्षरादिगायत्र्यादिछंदःसु एकेनाक्षरेणन्यूनेननिचृत्-एकेनाधिकेनभुरिक् द्वाभ्यांन्यूनेविराट्-अधिकेनस्वराट् इति । तत्रद्वाभ्यांन्यूनेविराडित्यत्रद्वित्वविवक्षायां 'वयंहितेअमन्महि' त्यत्रगायत्रीछंदसित्र्यक्षरैः,—'यत्रद्वाविवजघने' त्यत्रानुष्टुप्-

छंदसिचतुरक्षरैः,—‘इंद्रःसहस्रदाव्ना’मित्यत्रगायत्रीछंदसिपंचाक्षरैः,—‘अस्माइदुत्यमुपमंस्वर्षां’ मित्यत्रजगत्यांपड्भिः,—‘रायस्पूर्धिस्वधाव’ इतिसतोबृहतीपंक्तौसप्तभिः,—‘त्वमग्नेद्युभि’ रितिजगत्यामष्टाक्षरैः,—‘सिषक्तुन’ इत्यादिपुत्र्यक्षरैर्न्यूनत्वेउक्तविराड्लक्षणानाक्रांतत्वेन-छंदोहानिरितिचेन्न । द्वाभ्यामितिद्वित्वस्यत्र्याद्युपलक्षणत्वेनादोषात् । एवंचत्रिप्रभृतिभिरक्षरैर्न्यूनत्वेपिविराट्त्वसिद्धिः । तथाचशौनकः छंदोनुक्रमण्याम्—‘अस्यवामस्यसूक्तस्यजगत्यःपंक्तिमाऋचः । पंचपादंसाकंजानांयद्गायत्रेयमेव । सप्तार्धगर्भागौरीश्वतस्यानुष्टुबनुत्तमा । प्रस्तारपंक्तिस्तुविराड्द्वाचत्वारिंश्यृगस्यया’ । साचऋक् ‘तस्याःसमुद्रा०मुपजीवती’ तिसप्तत्रिंशदक्षराविराट्प्रस्तारपंक्तिरित्याह । चत्वारिं-शदक्षरातुकेवलापंक्तिरितिप्रातिशाख्यभाष्ये । सर्वानुक्रमभाष्येप्येवमेवोक्तंतत्रप्रातिशाख्यभाष्ये—‘याःकाश्चिद्बहुपादास्तुगायत्र्योहीन-तांगताः।अक्षरैर्बहुभिस्तास्तुगायत्र्यउपधारये’ दित्यभियुक्तोक्तिरप्यत्रानुकूला । आधिक्यांशेतुनोपलक्षणंतथाविधछंदसोभावादितिदिक् ॥

**अथदेवतास्तुत्युपयोगिस्थानभक्तिरूपगुणनिर्णयः**—(सचायमस्माभिरयोजितोपिनिर्दिश्यते) तथाहिदेवतास्तुतौकर्म-णिचऋष्यादिवद्देवतासंबंधिस्थाननामभक्तीनामनुसंधानंकर्तव्यम् । तथाबृहद्देवतायाम्—‘स्थानंनामानिभक्तीश्चदेवतायाःस्तुतौस्तुतौ । संपादयन्नुपेक्षेतयांकांचिदिहसंपद’ मित्यत्रस्तुतौस्तुताविति द्विर्निर्देशेनसूक्तभाजो—हविर्भाज—ऋग्भाजश्चभूयिष्ठाःकाश्चिन्निपातभाजइति । ‘प्रातःसवनंवसंतोगायत्रीत्रिवृत्स्तोमोरथंतरंसामे’ त्यग्निसंपत्सु—‘माध्यंदिनंसवनंग्रीष्मस्त्रिष्टुप्पंचदशस्तोमोबृहत्सामे’त्यादींद्रसंपत्सु—‘तृतीयसवनंवर्षाजगतीसप्तदशस्तोमोवैराजंसामयेचदेवगणाःसमाम्नाताउत्तमेस्थान’इत्यादित्यसंपत्सु—यांकांचित्संपदमुपेक्ष्यापिस्थानभ-क्तिरूपसंपत्तिसंपादनबोधकसंपादयन्नित्यनेनचतत्तद्देवतास्थानादीनामनुसंधानस्यस्तुत्यादिकर्ममात्रेआवश्यकत्वंबोध्यते । तत्रचस्तुतिर्नाम

गुण्यवच्छिन्नगुणकीर्तनम् । गुण्यवच्छिन्नत्वंचगुणिनिवस्तुतोविद्यमानत्वम् । बृहद्देवतायांतु—'स्तुतिस्तुनाम्नारूपेणकर्मणाबांधवेनचे'-त्युक्तम् । ननुस्तुतौस्तुतावित्युक्तयास्तुतिमात्रेस्थानाद्युत्कीर्तनस्यावश्यकत्वेपि कर्ममात्रेस्थानाद्युत्कीर्तनस्यनोपयोगइतिचेन्न । बृहद्देवतायामेवाग्रे—'विभागमिममेतेषांविभूतिस्थानसंभवम् । सम्यग्विज्ञायमंत्रेपुतंतुकर्मसुयोजयेत् । अव्यापयन्नधीयानोमंत्रंचैवानुकीर्तयन् । स्थानंसालोक्यसायुज्यमेतेषामेवगच्छति' इत्युक्त्याकर्ममात्रेस्थानाद्युत्कीर्तनस्यफलकथनेन स्तुतिपदस्यकर्ममात्रोपलक्षणत्वेन कर्ममात्रे स्थानाद्युत्कीर्तनस्यावश्यकत्वात् । एतेनस्तुतावित्यस्योपलक्षणत्वंनेतिवदंतोनिरस्ताः ।

स्थानादीनामनुत्कीर्तनेफलाभावउक्तोबृहद्देवतायाम्—'नहिकश्चिदविज्ञाययाथातथ्येनदैवतम् । लौक्यानांवैदिकानांचकर्मणांफलमश्नुते' इति । याथातथ्यंनामदेवतायाःस्थानभक्तिरूपगुणोत्कीर्तनपूर्वकमनुसंधीयमानत्वम् । तत्रैव—'तत्रतत्रयथावचमंत्रान्कर्मसुयोजयेत् । देवतायाःपरिज्ञानाचद्धिकर्मसमृद्ध्यत' इति । अत्रयथावदित्यस्यस्थानभक्तिगुणपुरस्कारेणेत्यर्थः । तथाचोक्तप्रकारेणदेवतोत्कीर्तनेनैवफलसिद्धिरितिनिष्कर्षः । अतएवच वेदभाष्येप्रथमाष्टकेसप्तमाध्याये 'आमनीपेति' ऋग्व्याख्यावसरेमध्यमस्थानसंबंधिनऋभवइत्युक्तम् । तथा 'आग्नेगिरोदिव' इतिमंत्रव्याख्यायांपृथिवीस्थानोग्निरितिचोक्तं सर्वानुक्रमण्यां—'हिरण्यकेशोद्वादशाद्यौतृचौत्रैष्टुभोणिहौपूर्वोग्नयेवामध्यमाये' ति । 'हिरण्यकेशोरजसोविसार' इतितृचस्याऽग्नयेवामध्यमायेत्यनेनमध्यमस्थानविशेषणोत्कीर्तनेनान्यस्थानगतोग्निर्व्यावर्तितः । तस्मात्स्थानाद्युत्कीर्तनंश्रुत्यादिसंमतमिति नात्रतदुत्कीर्तनेविप्रतिपत्तव्यम् । तत्प्रकारश्च—'भवद्भूतस्यभव्यस्यजंगमस्थावरस्यच । अस्यैकेसूर्यमेवैकंप्रभवंप्रलयंविदुः १ असतश्चसतश्चैवयोनिरेषाप्रजापतिः । यदक्षरंचवाच्यंचयथैतद्ब्रह्मशाश्वतम् २

कृत्वैषहित्रिधात्मानमेषुलोकेषुतिष्ठति । देवान्यथायथंसर्वान्निवेश्यस्वेषुरश्मिषु ३ एतद्भूतेषुलोकेषुअग्निभूतंस्थितंत्रिधा । ऋषयोगीर्भि-र्र्चंतिव्यंजितंनाममभिस्त्रिभिः ४ तिष्ठत्येवहिभूतानांजठरेजठरेज्वलन् । त्रिस्थानंचैवमर्चंतिहोत्रायांवृक्तबर्हिषः ५ इहैषपचमानोग्निर्मध्य-मोग्निर्वनस्पतिः । अमुष्मिन्नेवविप्रैस्तुलोकेग्निःशुचिरुच्यते ६ इहाग्निभूतस्त्वृषिभिर्लोकेस्तुतिभिरीडितः । जातवेदाःस्तुतोमध्येस्तुतो वैश्वानरोदिवि ७ रसान्रश्मिभिरादायवायुनासंगतःसह । वर्षत्येषचयल्लोकेतेनेंद्रइतिसस्मृतः ८ अग्निरस्मिन्नथेंद्रस्तुमध्यमोवायुरेवच । सूर्योदिवीतिविज्ञेयास्तिस्रएवेहदेवताः ९ एतासामेवमाहात्म्यान्नामान्यत्वंविधीयते । तत्तत्स्थानविभागेनतत्रतत्रेहदृश्यते १० तासामि-यंविभूतिर्हिनामानियदनेकशः । आहुस्तासांतुमंत्रेषुकवयोन्योन्ययोनिताम् ११ यथास्थानंप्रतिष्ठास्तानामान्यत्वेनदेवताः । तद्भक्तास्त-त्प्रधानाश्चकेचिदेवंवदंतिताः १२ पृथक्पुरस्ताद्येतूक्तालोकादिपतयस्त्रयः । तेषामात्मैवतत्सर्वंयद्यद्भक्तिःप्रकीर्त्यते १३ तेजस्तेवयवाः प्राहुर्वाहनंचैवयस्ययत् । इमामैंद्रींचदिव्यांचवाचमेवपृथक्स्तुताम् १४ बहुदेवायाःस्तुतयोद्विवत्संस्तुतयश्चयाः । प्राधान्यमेवसर्वासु-पतीनामिवतास्वपि १५ स्थानंनामानिभक्तीश्चदेवतायाःस्तुतौस्तुतौ । संपादयन्नुपेक्षेतयांकांचिदिहसंपदम् १६ अग्निभक्तिस्तुतान्सर्वा-नग्नावेवसमर्पयेत् । यदिंद्रभक्तितश्चेंद्रेसूर्येसूर्यानुगंचयत् १७ निरुप्यतेहविर्यस्यैयत्सूक्तंभजतेचया । सैवतत्रप्रधानंस्यान्ननिपातेनसंस्तुताः १८ इतित्रयाणामेतेषामुक्तःसामासिकोविधिः । समासेनैवमुक्तस्तुविस्तरेणत्वनुक्रमः १९ इतिबृहद्देवतायाम् ।



तथा–'महाभाग्याद्देवतायाएकआत्माबहुधास्तूयतएकस्यात्मनोन्येदेवाःप्रत्यंगानिभवंत्यपिचसत्वानांप्रकृतिभूमभिर्ऋषयःस्तुवंतीत्याहु'-रित्यादि, तत्रैव–'तिस्रएवदेवताइतिनैरुक्ताअग्निःपृथिवीस्थानो–वायुर्वेंद्रोवांतरिक्षस्थानः–सूर्योद्युस्थानस्तासांमाहाभाग्यादेकैकस्याअपि-

बहूनिनामधेयानिभवंती’ति, तत्रैव–‘तिस्रएवदेवताइत्युक्तंपुरस्तात्तासांभक्तिसाहचर्यंव्याख्यास्यामोथैतान्यग्निभक्तीनी’ त्यादि, ‘अथै-
तानींद्रभक्तीन्यंतरिक्षलोक’ इत्यादि, ‘अथैतान्यादित्यभक्तीन्यसौलोकस्तृतीयसवनमि’ त्यादि, ‘अथातोऽनुक्रमिष्यामोऽग्निःपृथिवी-
स्थानस्तंप्रथमंव्याख्यास्याम’ इत्यादि, ‘अथातोमध्यमस्थानादेवतास्तासांवायुःप्रथमागामीभवती’ त्यादि, ‘अथातोद्युस्थानादेवतास्ता-
सामश्विनौप्रथमागामिनौभवत’ इतिनिरुक्ते ‘तिस्रएवदेवताःक्षित्यंतरिक्षद्युस्थानाअग्निर्वायुःसूर्यइतितत्तत्स्थानाअन्यास्तद्विभूतयःकर्मपृथ-
क्त्वाद्धिपृथगभिधानस्तुतयोभवंत्येकैववामहानात्मादेवताससूर्यइत्याचक्षतेसहिसर्वभूतात्मा तदुक्तमृषिणासूर्यआत्माजगतस्तस्थुषश्चेति
तद्विभूतयोन्यादेवतास्तदप्येतदृचोक्तमिंद्रंमित्रंवरुणमग्निमाहुरितियथाभिधानंत्वनुक्रमिष्याम’ इतिसर्वानुक्रमण्यांचदर्शितःसएवस्फुटतरं-
प्रदर्श्यंते। तथाहि–एकएवमहानात्मामूलभूतादेवता तस्याअग्निवायुसूर्यरूपास्तिस्रएवांगभूतादेवताः क्रमेणपृथिव्यंतरिक्षद्युस्थानास्तासां-
तिसृणामितराःसर्वादेवताविभूतयःताश्चसर्वानुक्रमणीवृत्तिकारसंगृहीतश्लोकेषुप्रदर्शिताः। तेच–‘अग्न्यादिदेवपत्न्यंतंदेवताकांडमुच्यते’
तत्रच–‘अग्न्यादिदेवीऊर्जाहुत्यंतःक्षितिगतोगणः। वाय्वादयोभगांताःस्युरंतरिक्षस्थदेवताः। सूर्यादिदेवपत्न्यंताद्युस्थानादेवताइति’। तत्र
अग्न्यादिदेवीऊर्जाहुत्यंतोऽग्निगणःपृथिवीस्थानोऽग्निभक्तिः, वाय्वादिभगांतोवायुगणोंऽतरिक्षस्थानोवायुभक्तिः, सूर्यादिदेवपत्न्यंतः
सूर्यगणोद्युस्थानःसूर्यभक्तिः, यमदेवतायास्तुगणद्वयांतर्भूतत्वेनसर्वत्रस्थानद्वयप्राप्तावपिबृहद्देवतायां–‘यस्मिन्वृक्षइतित्वस्मिन्द्युस्थानः
स्तूयतेयमः’ इत्यनेन ‘यस्मिन्वृक्ष’ इतिसूक्तस्ययमदेवतायाःद्युस्थानस्यविशिष्योक्त्यासूक्तांतरसंबंधयमदेवतायाअंतरिक्षस्थानमर्थात्सिद्ध-
मिति । इत्थंचसर्वानुक्रमणीभाष्यकारोक्तदिशाबृहद्देवता–निरुक्त–सर्वानुक्रमण्युक्तानामेकवाक्यत्वंलभ्यतइतिनपक्षान्तरावसरः ।

सर्वानुक्रमण्युक्त 'एकैववामहानात्मे' तिवाशब्दस्यपक्षान्तरनिरासार्थंभाष्यकारेणोक्तत्वात् । एतेनवाशब्दस्यविकल्पार्थकत्वेनद्वयोः-पक्षयोःसमत्वात् अंतिमपक्षाश्रयणेस्थानादीनांनोपयोगइतिवदंतोनिरस्ताः । निरुक्तादिषुदेवताकांडोक्तस्थानादिकथनवैयर्थ्यापत्तेश्च । एतद्गणत्रयवद्भिर्भूतानामितरदेवतानांतु समासासमासनिर्दिष्टदेवताकेमंत्रेयाभिःसहयास्तूयतेतस्याःप्राधान्यात्प्रथमोपात्तत्वाच्च तदनुरोधेन संस्तविकदेवतानांस्थानादिनिर्णयः । तथाचोक्तंनिरुक्ते—'अथास्यसंस्तविकादेवाइंद्रःसोमोवरुणःपर्जन्यऋतवआग्नावैष्णवंहविर्नत्वृक्संस्तविकीदाशतयीषुविद्यतेऽथाप्याग्नापौष्णंहविर्नतुसंस्तवस्तत्रैतांविभक्तिस्तुतिमृचमुदाहरंति' । अत्रभाष्यम्—यैःसहाग्निःस्तूयते तद्यथा—'इंद्रःसोम' इत्येवमादयोमंत्राःस्वभावोपप्रदर्शनायसंस्तवोदाहरणम् । अग्नेःपूर्वनिपाताद्देवताद्वंद्वेमुख्यता । 'अग्नइंद्रश्चदाशुषोदुरोणे' इतींद्रेणसहाग्निःस्तूयते । 'अग्नीषोमाविमंसुमे' इतिसोमेनसहसंस्तवः । 'त्वंनोअग्नेवरुणस्यविद्वान्' इतिवरुणेनसहसंस्तवः । 'अग्नीपर्जन्याववतंधियंमे' इतिपर्जन्येनसहसंस्तवः । 'अग्नेदेवाँइहावह' इत्यृतुभिःसहसंस्तवः । 'अग्नाविष्णूसजोषसे००वाजेभिरागतं' इतिआग्नावैष्णवंहविः । हविर्ग्रहणाद्धविषएवसंप्रदानार्थयाऋचस्ताःसंस्तवेनाग्नाविष्णोःसंति नतुऋक्संस्तविकीदाशतयीषुविद्यते । नेतिप्रतिषेधः । तुशब्दोऽवधारणार्थः । ऋक्संस्तविकीसंस्तवयुक्ता । दाशतयीषु—दशमंडलावयवप्रविभागेनतायतइतिदशतयोऋग्वेदः तस्यशाखादाशतय्यः तासुसर्वास्वेकापिहविष्यविनियुक्ता शस्त्रमध्यपातिन्यृगग्नाविष्णोःसंस्तविकीनास्ति । स्यादप्यन्यत्रसंस्तविकीनतुदाशतयीषु । असंस्तवेनवा दाशतयीष्वपीत्युत्सर्गंदर्शयति—'एवमेतन्मयानिपुणमन्विष्यन्त' इति । अथाप्ययमपरउत्सर्गः—अथाप्याग्नापौष्णंहविरेवनतुसंस्तवः तस्मिंस्तुहविषि, किंतुपृथक्पृथगेवाग्निःस्तूयतेपूषाच । तत्रतस्मिन्संस्तवेऽग्निपूष्णोरेतंविभक्तिस्तुतिमृच-

मुदाहरंतिनैरुक्ताः—'पूषात्वेतश्च्यावयतु० ०सुविदत्रियेभ्यः', एवमिंद्रविषये 'अथैतानींद्रभक्तीनि' इत्यादि । अथसंस्तविकादेवताअग्निः-सोमोवरुणइत्यादि । तद्यथा—'इंद्राग्नीअव' इत्यग्निनासहसंस्तवः । 'इंद्रासोमासमघशंसं' इतिसोमेनसहसंस्तवः । 'इंद्रावरुणायुवं' इतिवरुणेनसहसंस्तवः । 'इंद्रानुपूषणावय' मितिपूष्णासहसंस्तवः । 'इदंवामास्येहवि'रितिबृहस्पतिनासहसंस्तवः । 'विश्वंसत्यंमघवाना' इतिब्रह्मणस्पतिनासहसंस्तवः । 'इंद्रापर्वताबृहते'ति पर्वतेनसहसंस्तवः । 'इंद्राकुत्सावहमाने' तिकुत्सेनसहसंस्तवः । 'इंद्राविष्णूदृंहिता' इतिविष्णुनासहसंस्तवः । 'इंद्रवायूइमेसुता' इतिवायुनासहसंस्तवः । मित्रावरुणेत्येवमादिषुयाप्रथमयानिर्दिश्यतेसामुख्यास्तुतिः । यातृतीययानिर्दिष्टासाऽमुख्या । 'आनोमित्रावरुणा','सोमापूषणाजनना','सोमारुद्रायुवमेतान्यस्मे' अग्निनाचपूष्णा मध्यस्थानेनचद्यु स्थानेनचसंस्तवइतिपार्थिवेनप्रतिषेधात्ऋचंनोदाहरति मृग्यमुदाहरणम् ।'धर्तारोदिवऋभव' इतिपर्जन्येनसहसंस्तवः । एवंसूर्यविषये 'अथैतान्यादित्यभक्तीनीत्यादियच्चकिंचित्प्रवह्लितमादित्यकर्मैवतच्चंद्रमसावायुनासंवत्सरेणे'ति संस्तवः । 'पूर्वापरंचरतोमाययैता' विति-चंद्रमसासहसंस्तवः । 'सप्तऋषयःप्रतिहिता' इतिवायुनासहसंस्तवः । 'पंचपादंपितर' मितिसंवत्सरेणसहसंस्तवः । इत्यादिनातत्रैवोक्तम् ।

## गणत्रयानुक्तदेवतास्थानादिविचारः ।

याश्चोक्तगणत्रयबहिर्भूतादेवताःस्वातंत्र्येणस्तूयंते नेतरदेवताभिःसहतासांस्थानादिनिर्णयस्तु **निरुक्ते**सप्तमाध्यायेएकादशखंडे—'एते-ष्वेवस्थानव्यूहेष्वृतुछंदःस्तोमपृष्ठस्यभक्तिशेषमनुकल्पयीत शरदनुष्टुवेकविंशस्तोमोवैराजंसामेतिपृथिव्यायतनानि, हेमंतःपंक्तिस्त्रिणवस्तो-मःशाक्वरंसामेत्यंतरिक्षायतनानि, शिशिरोतिच्छंदास्त्रयस्त्रिंशस्तोमोरैवतंसामेतिद्युभक्तीनि' । **अस्यार्थः**—ऋतवश्चछंदांसिचस्तोमाश्चपृष्ठा-

निचऋतुछंदस्तोमपृष्ठंतस्य ऋतुभक्तिशेषंछंदोभक्तिशेषंस्तोमभक्तिशेषंपृष्ठभक्तिशेषंच । तद्यथा—शरदनुष्टुबेकविंशस्तोमोवैराजंसामेतिपृथि-
व्यायतनानि। अनग्निलिङ्गोपिचेन्मंत्रएतेषामन्यतमःस्यात्सआग्नेयइतिप्रतिपत्तव्यम्। एवमेवोत्तरयोरपिस्थानव्यूहयोः। व्यूहोनामविस्तरः।
द्यांभजंतइतिद्युभक्तीनि। भक्तिग्रहणंप्रणालिकोपप्रदर्शनार्थम् । याएतेषांस्तुतिःसास्तुतिसंक्रमणन्यायेनस्थानाधिपतेःसूर्यस्यस्तुतिरिति ।
तत्रैवत्रयोदशेखंडेपि 'ऋग्भाजश्चभूयिष्ठा' इत्युक्तम्। तत्र भूयिष्ठग्रहणाच्चदर्शयति याअसमाम्नाताःसंतिताअप्युपेक्षितव्याइति । ताश्च-
यथालक्षणंत्रिषुस्थानेषुकल्प्याः । तद्यथा—'परमेष्ठिग्रहनक्षत्रसर्पलांगलकुशुंभकप्रभृतीनी' तितद्भाष्यकृताव्याख्यातम् । तत्रैवनवमाध्याये
'अथयानिपृथिव्यायतनानिसत्वानिस्तुतिंलभंतेतान्यतोऽनुक्रमिष्याम' इत्युक्तम्। अस्यार्थः—अथेतिविशेषाधिकारेप्रकृतार्थादनन्तर-
मधिकरोति । पृथिव्यायतनानिपृथिव्याश्रयाणिसत्वानिद्रष्टव्यानिच तेषामप्यत्रविवक्षितत्वात्स्तुतिंलभंतइतिसमाम्नातानितान्यतःपरम-
नुक्रमिष्यामोव्याख्यास्यामइतिशेषः । पूर्वस्मादाप्रीगणाद्विलक्षणोऽयमश्वादिगणइतिपृथगधिकारवचनंपृथिव्यायतनत्वाविशेषात् । सर्प-
लांगलकुशुंभकप्रभृतीनामप्यत्रैवांतर्भावः । तान्यपिस्तुतिंलभंतेलक्षणंचेदमिति। तस्मिन्नेवाष्टमाध्यायेषष्ठेखंडेनिघंटुस्थप्रथमोपात्तद्वाद्यंत-
र्गत—नाराशंसपदं 'नराशंसोयज्ञइतिकात्थक्योनराअस्मिन्नासीनाःशंसंत्यग्निरितिशाकपूणि' रितिव्याख्याय नवमाध्याये नवमेखंडे-
पृथिवीस्थानांतर्गतद्वितीयनराशंसपदार्थमाह—'येननराःप्रशस्यंतेसनाराशंसोमंत्रस्तस्यैषाभवती'ति । अत्रभाष्यम्—किमत्रमंत्रःस्तूयते ?
नेत्युच्यते—लक्षणंमंत्रः नराःस्तूयंते । एवंतर्हिनराणामेवसमाम्नानंप्राप्नमासीत् न, तेषांसामान्यस्तुत्यभावात् राज्ञांचस्तुत्युपपत्तेः तेषा-
मपिचसामान्यस्तुतिर्नास्ति अस्तित्वेकैकश्येनकेषांचित् । यतोभावयव्यंलक्षणीकृत्य नाराशंसोमंत्रउदाह्रियते तस्योदाहरणं 'तस्यभाव-

यव्यप्राधान्यस्तुतिरेषाङ्क्ग्भवती'ति । बृहद्देवतायामपि–'कर्माणियाभिःकथितानिराज्ञांदानानिचोच्चावचसध्यमानि । नाराशंसीरित्यृचस्ताःप्रतीयाद्याभिःस्तुतिर्दाशतयीषुराज्ञाम्'। तत्रैव–'आदावंतेतुह्यृषयःकीर्तयंतिप्रसंगतः । सूक्तेस्मिन्देवतात्वन्याअन्यास्त्वत्रभवंतिच । सालोक्यात्साहचर्याद्वासंस्तवादथवापुनः । गणस्थानाद्भक्तितोवाकीर्त्यंतेतास्तुदेवता'इति । एवंनिरुक्तभाष्यबृहद्देवतादिप्रमाणैर्निर्णयः कल्पनीयः । इत्थंचगणत्रयानुक्तदेवतानांकासांचित्प्रथमोपात्तदेवतानुरोधेन–कासांचिदनुष्टुबादिछंदःपर्यालोचनेन–कासांचित्पृथिव्याश्रयत्वेनाग्निभक्तित्वात्तदनुरोधेन–कासांचिन्नराशंसमंत्रस्तूयमानराजप्रभृतीनांभावयव्यादितत्तद्रूपेण–गणत्रयानुक्तानां सामान्यनराशंसपदेनाग्निगणान्तर्भूतत्वात्तदनुरोधेन–कासांचित्साहचर्येणसूक्तदेवतानुरोधेनचयथायथंस्थानादिद्रष्टव्यमितिफलितम् । अत्रापिच–'अवशिष्टंहिदेवतात्वमग्नावेव सर्वदेवतामिवादात्–अग्निर्वैसर्वादेवताइतिहविज्ञायते', 'अग्निर्वैदेवतानांभूयिष्ठभागि'तिच–'अपरिग्रहंचप्रधानगामि' इतिन्यायइतिसप्तमाध्यायस्थनिरुक्तभाष्यकारेणसर्वदेवतानामग्निरूपत्वबोधनात्प्रायोग्निभक्तित्वंदेवतानां इंद्रादित्यभक्तित्वं चाल्पशइतिविवेकः ।

**सर्वानुक्रमणीप्रोक्तस्थानादिकादेवताः** । ताश्चगणत्रयानुक्ताःसर्वानुक्रमणीप्रोक्ताःस्थानादिज्ञानार्थंतत्कथनपुरःसरंसंक्षेपेण संगृह्यन्ते । तथाहि–'गणत्रयेनिघंटूक्तेनोक्तोयोदेवतागणः । सर्वानुक्रमणीप्रोक्तस्तत्स्थानंभक्तिरुच्यते १ अविदित्वास्थानभक्तीनाममंत्रमुदीरयेत् । यदितत्सकलंकर्मवैयर्थ्यंयातिनिश्चितम् २ अतःस्थानंचभक्तिश्चनामचप्रोच्यतेमया । पृथ्वीस्थानाअग्निभागाःकथ्यंतेदेवताःपुरा ३ निर्मन्थ्याहवनीयाग्नीदक्षिणासदसस्पतिः । रोमशावरुणानीचगुंगूरन्नंचदेवता ४ उपाध्यायस्तथायूपोवामदेवःशुनोपिच । अत्रि-

श्चैवतथातक्षावृबुर्ग्राश्वशशीयसी ५ ऋभुक्षाश्ववसिष्ठश्चतथाचैवोपमश्रवाः । अध्येतारःपावमान्योंयजमानश्चदंपती ६ श्वानोवसुक्रोनिर्ऋ-
तिःसुवंधोर्जीवइत्यपि । वधूवासोयक्ष्मनाशःपुरुषःपणयस्तथा ७ धनदाताचैंद्रलवःसपत्नीनाशनस्तथा । अलक्ष्मीनाशदुःस्वप्ननाशौद्यौ-
चाथमायवः ८ द्रुघणोरथगोपाश्वहस्तत्राणंतथाकराः । अथराज्ञःप्रवक्ष्यामिदेवतात्वमुपागतान् ९ स्वनयःसोमकोराजा़त्रसदस्युर्ऋणं-
चयः । तरंतपुरुमीह्लौचतथैवौशनसोनृपः १० रथवीतिश्श्यायमानःसुदासासंगकावुभौ । ऋक्षाश्वमेधौराजानौकुरुश्रवणइत्यपि ११ पुरू-
रवाश्वासमातिःकशश्चाथतिरिंदिरः । पाकस्थामाभिपिक्तश्चकुरंगश्चनृपःस्मृतः १२ अंतरिक्षस्थितान्देवान्वायुभक्तीन्समासतः । प्रव-
क्ष्यामियतःकर्मसफलंतद्विनानहि १३ अर्यमाचऋतश्छंदअंतरिक्षंचतुर्थकम् । स्वर्गस्थानान्सूर्यभक्तीन्प्रवक्ष्यामिविशेषतः १४ आत्माच-
परमात्माचपृश्निर्यज्ञस्तथाक्षरम् । मायाभेदोभाववृत्तोद्युःसंज्ञानंतथैवच १५ इतिगणत्रयानुक्तदेवतानांस्थानादिविचारः ॥

**अथदेवतास्वरूपविचारः** । तासांरूपंचतुर्विधं—पौरुषविध्यं—अपौरुषविध्यं—कर्मार्थात्मोभयविध्यं—सत्यमौभयविध्यंचेति
सर्वंचैतदुपपद्यतेमहाभाग्यसत्यैश्वर्यादेव । स्पष्टंचेदंनिरुक्तोत्तरषट्केप्रथमाध्याये—'अथाकारचिंतनंदेवताना' मित्यादि । ताअपिपुनरनेक-
प्रकारैर्भिद्यंते । तेचप्रकाराः—सूक्तभाक्त्व—हविर्भाक्त्व—सूक्तहविरुभयभाक्त्व—निपातभाक्त्वरूपाः । तत्रैवनिरुक्तेतद्भाष्येचत्रयो-
दशखंडेऽभिहिताः । याचसूक्तमेवभजतेनहविःसासूक्तभागिनी । तथाचबृहद्देवतायाम्—'यस्यांवदत्यर्थवादात्साज्ञेयासूक्तभागिनी' इति ।
तदुदाहरणानि—'अयंवेनश्चोदयत्' इतिवेनदेवताकंअहविर्भागित्यादि । 'असुनीते' इतिद्वयोःअसुनीतिः । 'ऋतस्यहिशुरुधः' इतितृ-
चस्यऋतोदेवताः इतिद्वेदेवतेनसूक्तभागिन्यौनहविर्भागिन्यौतयोस्तुयथानुगुणंसूक्तभागिनीष्वंतर्भावः । वाय्वादयःसूक्तभाजोहविर्भाजश्च

एताःसूक्तंभजंतेहविश्चेत्युभयभाजः। याश्चऋचं—अर्धर्चं—पादंव्यृचादिकंचप्राधान्येनभजंतेताःसर्वाऋग्भाजःप्रायेणेत्यर्थः। तानसूक्तभाजः किंतुहविर्भाजएव। निपातभाजस्त्वनेकदेवतायामृचिसंभवंति। ताश्चक्वचित्समप्रधानाउपादीयंते क्वचित्प्राधान्येन क्वचिदप्राधान्येनेत्येव मनेकविधानिपातभाजोज्ञेयाः। तथाचबृहद्देवतायाम्—'यांतुस्तौतिप्रसंगेनसाविज्ञेयानिपातिनी' ति। विस्तरस्तुनिरुक्तभाष्यादवगन्तव्यः॥

**लिंगोक्तदेवतानांनिर्णयः।** तत्रलिंगंनाममऋगर्थः सर्वानुक्रमणीवृत्तौतथैवोक्तत्वात्। तेनउक्ताज्ञाता तात्पर्यानुरोधेनकल्प्ये-तियावत्। तात्पर्यंहिक्वचित्साक्षात्—क्वचिद्विनियोगवशात्—तदनुगुणार्थकल्पनयावगंतव्यम्। एतन्निर्वचनफलंतुवैश्वदेवादिसूक्तेषुसूक्त-भेदप्रयोगेसर्वानुक्रमण्यांलिंगोक्तदेवताकत्वोक्तावधिकारप्राप्तदेवताबाधनमेव। अन्यथोक्तलिंगोक्तदेवतालक्षणस्याऽव्यावर्तकत्वेनतत्रतत्र-लिंगोक्तदेवतोक्तिवैयर्थ्यापत्तेः। ताश्चद्विविधाः—देवताकांडपठिताः तद्बहिर्भूताश्च निपातभाक्त्वाद्बृहद्देवतायांवैश्वदेवसूक्ते देवताकांड-पठिताश्चतदानुपूर्वीकाएव नतुमंत्रपठिताःपर्यायभूताः। यथा—'वह्निंयशस' मितिमंत्रेवह्नेरुपादानेपिदेवताकांडेऽग्नित्वेनैवोपादानात्त-दनुरोधेनसर्वानुक्रमण्यामग्निरेवोपात्तोनतुवह्न्यादिरूपेण। एवमन्यत्राप्यूह्यम्। तद्बहिर्भूताअपिद्विविधाः—गणविशिष्टाःकेवलाश्च। ताश्च-सूक्तभाजोनसंति। अन्येनिपातभाक्त्वादयःसर्वेधर्माःसंभवंति। तथाचबृहद्देवतायाम्—'सप्तर्षयोवसवश्चापिदेवाअथर्वाणोभृगवःसोम-सूर्याः। पथ्यास्वस्तीरोदसीचोक्तमंत्रेकुहूगुंगूरदितिर्धेनुरघ्न्या १ असुनीतिरिळाचाप्त्याविधातानुमतिर्ह्रया। अंगिरोभिःसहैताःस्युरुक्तमंत्रा-श्चदेवताः २ वैश्वानरोहिसुपर्णोविवस्वान्प्रजापतिर्द्यौःसुधन्वानगोह्यः। अपान्नपादर्यमावातजूतिरिळस्पतिश्चापिरथस्पतिश्च ३ ऋभवः-पर्जन्यःपर्वताग्नाश्च (पत्नी) दक्षोभगोदेवपत्नीर्दिशश्च। आदित्यारुद्राःपितरोथसाध्यानिपातिनोवैश्वदेवेषुसर्वे ४ इति।

## लिंगोक्तदेवतास्थलनिर्देशः ।

१।३।६। ह्वयामि—आद्यालिंगोक्तदैवतपादा
१।६।१२। इमंपोळश—तन्नोमित्रोऽर्धर्चोलिंगोक्तदेवतः
१।७।३३। ईळेपंचाधिकाश्विनमाद्यौपादौलिंगोक्तदेवतौ
२।१।२६। प्रसुसप्तमैत्रावरुणंत्वंत्येलिंगोक्तदेवत्ये
२। २। ३। अस्तुश्रौषळेकादश—वैश्वदेवमेतदेवमन्यासामपिसूक्त-
प्रयोगेवैश्वदेवत्वं सूक्तभेदप्रयोगेयल्लिंगंसादेवता
२।६।२९। गणानासेकोना—बार्हस्पत्यास्तुदृष्टलिंगाः
२।७।१५। अस्यमेऽष्टौ—अंत्यालिंगोक्तदेवता
३।५।१३। प्रत्यग्निःपंचलिंगोक्तदैवतंत्वेके
४।१।२०। अग्ने(पावक)गायत्रमंत्यालिंगोक्तदेवता
४।२।२३। तंप्रत्नथा—अन्येचऋषयोत्रदृष्टलिंगाः [ देवतः
४।७।३०। स्वादुरेकत्रिंशद्वर्गःपंचादौसौम्योऽगव्यूत्यर्धर्चोलिंगोक्त-

४। ८ । ४। यज्ञायज्ञाद्यधिका-मारुत्यांत्यास्तिस्रोत्रासांलिंगोक्त-
[ देवताः
५।१।२२। जीमूतस्येवैकोना—रथगोपान्जगत्यांलिंगोक्तदेवता
५।१।२३। पराःपंक्त्यादयोलिंगोक्तदेवताः
५।४। ८। प्रातर्भागंजगत्याद्यालिंगोक्तदेवता
५।४।११। दधिक्रांदाधिक्रंजगत्याद्यालिंगोक्तदेवता
७।५।१५। परेयिवांसंषोळशयमोयामंषष्ठीलिंगोक्तदेवता
८।१।२३। प्रतारीतिदशर्चे—सप्तम्यांलिंगोक्तदेवताः
८।७। ९। इमंनोनव-आद्यास्तिस्रश्चाग्नेरात्मस्तवःशिष्टायथानिपातं
८।७।२०। ईजानंशकपूतो—आद्यालिंगोक्तदेवता
८।८।२४। तुभ्येदंचतुष्कं—तृतीयालिंगोक्तदेवता
८।८।४२। विष्णुस्त्वष्टागर्भार्थाशीर्लिंगोक्तदैवतं

देवताविशेषेदेवतांतरसमुच्चयः। अयंचपरिभाषयाप्राप्तः। तथाहि—'प्रायेणैंद्रेमरुतोराज्ञांचदानस्तुतयः' इतिसर्वानुक्रमणी। अस्यार्थः—इंद्रदेवताकसूक्तघटकबहुमंत्राणां दानादिदेवताकमंत्रान्विहायप्रायेणमरुद्देवताकत्वम्। तत्फलंतुसर्वत्रैंद्रदेवताकमंत्राणां-मरुद्वितीयप्रापणम्—तदप्युक्तंसर्वानुक्रमणीभाष्ये—प्रायेणैंद्रेमरुतःस्तूयंतइतिवाक्यशेषः। परिभाषेयं मरुद्वितीयप्रापणार्थमंतरेणापि-वचनं, तेन 'सुरूपकृत्नुमूतये' 'इंद्रायाहिचित्रभानो' 'योयजातियजातइत्' 'यज्ञेदिवोनृषदनेपृथिव्याः' इत्यादींद्रदेवताकेषुपरिभाषाप्राप्त-मरुद्देवतापिसिद्धा। प्रायेणेत्यनेनेंद्रमात्रदेवताबोधकोक्तिसत्त्वे गुणविशिष्टोपादानेचमरुदभावःसूच्यते। तद्यथा—'तन्वगस्त्योमारुतं-ही'तिहिशब्दप्रापितमरुद्देवताकसूक्तत्रयांतर्गतसहस्रंतइतिद्वितीयसूक्तस्यायैंद्रीत्यनेनइंद्रदेवताकत्वंबोधितं तत्रसमुच्चायकचशब्दाभावेन-मरुदभावः। अतएव 'आदहेत्येताःषण्मारुत्योवीलुचिदिंद्रेणेत्यैंद्र्यौचे'तिमरुत्समुच्चायकचशब्दोपादानंसंगच्छते। एवं 'जगृभ्माष्टौसप्त-गुर्वैकुंठमिंद्रंतुष्टावविकुंठानामासुरींद्रतुल्यंपुत्रमिच्छंतीमहत्तपस्तेपेतस्याःस्वयमेवेंद्रःपुत्रोजज्ञे' इतिसर्वानुक्रमणीतिहासेवैकुंठेंद्रेमरुत्वदिंद्रे-चमरुद्वितीयदेवताभावःसिध्यति। अतएव ब्राह्मणतृतीयपंचिकायांषोडशखंडे 'इंद्रंवैवृत्रंजघ्निवांसंनास्तृतेतिमन्यमानाःसर्वादेवता-आजहुस्तंमरुतएवस्वापयोनाजहुःप्राणावैमरुतःस्वापयःप्राणाहैवैनंनाजहुस्तस्मादेषोच्युतःस्वापिमान्प्रगाथःशस्यतआस्वापेस्वापिभिरिती'-ति। तदर्थोभाष्येदर्शितः—तथाहि—इंद्रोयदावृत्रंहतवान् तमिंद्रंसर्वादेवताअजहुःपरित्यक्तवत्यः। कीदृश्योदेवताः? नास्तृतेति नहिं-सितवानिंद्रइतिमन्यमानाः। वृत्रस्यातिप्रौढशरीरत्वात्प्रहारमात्रेणासौनमृतइतिदेवानांभीतिः। इतरदेवताभिःपरित्यक्तंतमिंद्रंमरुतएवाऽ-जहुःनपरित्यक्तवंतः तद्विशेषणंस्वापयइति। सुषुप्तिकालेपिवर्तमानाइत्यर्थः। स्वापिशब्दार्थःश्रुत्यैवप्रदर्श्यते—'प्राणावैदेहमध्येवर्तमानाः

प्राणाएवंस्वापयोमरुतःस्वापकालानुवर्तिनोवायवः' । प्राणानांतत्कालानुवृत्तिमाथर्वणिकाःप्रश्नोत्तराभ्यामामनंति—'भगवन्नेतस्मिन्पुरुष-
कानिस्वपंतिकान्यस्मिन्जाग्रती'तिप्रश्नः 'प्राणाग्नयएवैतस्मिन्पुरेजाग्रती'त्युत्तरं एवंविधायस्मात्प्राणरूपामरुतएवैनमिंद्रंतदानींनपरित्यक्त-
वंतस्तस्मात्कारणादेष'इंद्रनेदीय'इत्यादिकः स्वापिमान्प्रगाथोच्युतोमरुत्वतीयशस्त्रेसर्वथाप्यपरित्यक्तःशस्यते । स्वापिशब्दोयस्मिन्प्रगाथे-
स्तिसोयंस्वापिमान् 'आस्वापेस्वापिभि'रित्ययंपादोस्मिन्प्रगाथेआम्नायते तस्मादयंस्वापिमान् । इत्थंइन्द्रनिहवाख्यंप्रगाथंप्रशस्य पुनरपि-
प्रकारांतरेणप्रशंसति । अपिह अपिच । अतः एतत्प्रगाथशंसनादूर्ध्वंअस्मिन्मरुत्वतीयशस्त्रे यद्यैंद्रमेवछंदःइंद्रसंबंध्येवछंदःशब्दोपलक्षितो-
मन्त्रःशंस्यतेतद्धसर्वं तदपिजातंमरुत्वतीयशस्त्रंभवति । एषचेत्यादिनातत्रयुक्तिरुच्यते 'आस्वापेस्वापिभि'रितिपादोपेतत्वेनस्वापिमानेष-
प्रगाथोच्युतश्चेदपरित्यक्तश्चेत्तदामरुत्वतीयंभवति । स्वापिशब्दवाच्यानांमरुतांप्रतिपादकत्वादित्यर्थः । सोयंप्रगाथः शाखांतरेद्रष्टव्यः ।
बृहद्देवतायामपि—'इरांदृणातियत्कालेमरुद्भिःसहितोंबरे । रवेणमहतायुक्तस्तेनेंद्रमृषयोब्रुवन्' । अस्यार्थः—अंबरे मरुद्भिर्वायुभिःसहितः
महतारवेणशब्देनयुक्तः इरामुदकंदृणातिवर्षतितेनकारणेनर्षयइंद्रमब्रुवन् । तथातत्रैव—'रसान्रश्मिभिरादायवायुनायंगतःसह । वर्ष-
त्येवचयल्लोकेतेनेन्द्रइतिचस्मृतः' इति । निरुक्तेपि—'यदेनंप्राणैःसमैंधंस्तदिंद्रस्येंद्रत्वमितिविज्ञायते' । अस्यार्थः—तदिदमपरमिन्द्रस्येंद्र-
त्वंब्राह्मणउच्यते—यदेनंमध्यतोवस्थितंशरीरस्यप्राणभावेनविष्टभ्येतरान्प्राणान्वागादीनितरप्राणवृत्तिमाहाभाग्यसंप्रदानेनयदहंविशिष्टो-
स्मित्वंतद्विशिष्टोसीत्येवमादिनाप्राणाधिदेवताःसमैंधन्समदीपयन्संतानार्थंतदिंद्रस्येंद्रत्वमितिविज्ञायते । इंधेभूतानीतिकर्तरि प्राणैरेनं-
समिंधतेतिकर्मणि इत्यनेनेंद्रपदव्युत्पत्त्याइंद्रस्यमरुदवियोगएवयुक्तः । एवंचमरुतामिंद्रस्यप्रीत्याऽपरित्यक्तत्वात्प्राणिमात्रस्यजीवनहेतु-

त्वेनाप्यायकत्वात् इंद्रपदव्युत्पत्त्यातद्वियोगबोधनाच्चइंद्रदेवताकमंत्राणांद्वितीयामरुद्देवतानियतेतिसर्वमनवद्यम् । अन्यत्रतुविधिबोधितेंद्रातिरिक्तदेवताकसूक्तघटकानांकेषांचिदेवमंत्राणांमरुद्देवताकत्वमाचार्योक्तमेव 'प्रतित्यमाग्निमारुत'मित्यादि । दानस्तुतिस्तुराज्ञामेवनेतरेषाम् । तेनयत्किंचित्संबंधितयादानस्तुत्युक्तौतत्तन्नामकराजस्यदानस्तूयमानत्वाद्देवता । इतिपरिभाषाप्राप्तद्वितीयामरुद्देवताविचारः ।

**इंद्रासोमादिविचारः।** एवमिंद्रासोमदेवताकेराक्षोघ्नसूक्तेपि इंद्रादिदेवताभिरिंद्रासोमयोर्बाधेपिरक्षोघ्नत्वगुणस्याबाधात्तद्गुणकत्वमिंद्रादिदेवतानांनिर्विवादम् । अतएवबृहद्देवतायां—'पिबेंद्रंस्तौतिनेत्यंतरक्षोघ्नाग्नेयमुत्तरम् । रक्षोघ्नाग्नेयमित्युक्तंयत्त्वेतद्ब्राह्मणेतितु' इत्यादिवचनैर्गुणाभिधानंसंगच्छते । ननु 'इंद्रासोमातपत'मितिपंचविंशत्यृचात्मकेइंद्रसोमदेवताकराक्षोघ्नसूक्ते 'प्रवर्तयदिवोअश्मान'मित्यारभ्यपंचानां 'प्रवर्तयेतिपंचैंद्र्य' इत्यनेनैंद्रदेवताकत्वमुक्तं तत्रपंचम्याः पूर्वार्धर्चस्यवसिष्ठाशीर्देवताकत्वंउत्तरार्धर्चस्यपृथिव्यंतरिक्षदेवताकत्वस्यविशिष्योक्त्याबाधात् इंद्रदेवताकत्वविरहेणक्रमेणपंचत्वानुपपत्तिरितिचेन्न 'मानोरक्ष' इतिपंचमींविहाय 'इंद्रजही' त्यग्रिमायाःषष्ठ्याग्रहणेनपंचत्वोपपादनेनाक्षतेः । अतएवैतत्प्रकरणस्थसर्वानुक्रमण्यां 'अष्टमीषोळश्यावैंद्र्यौ' इत्युक्त्वापुनश्च 'मानोरक्ष' इतिपंचमींविहाय व्यवधानेन 'इंद्रजही' त्यग्रिमषष्ठीग्रहणरूपवैचित्र्यप्रदर्शनार्थं 'प्रवर्तयेतिपंचैंद्र्य' इतिइंद्रदेवताकत्वोक्तिःसंगच्छते।अन्यथाऋचांक्रमस्यविवक्षितत्वेलाघवात्स्थलांतरवत्सकृदुपादानमात्रेणैवतद्देवताकत्वेसिद्धेपुनरुपादानमसंगतंस्यात्। अतएव 'अस्तीदंषोळशाद्याचतुर्थीदशमीद्वादश्योनुष्टुभः षष्ठ्येकादश्युपांत्येचजगत्यःपंचम्यृत्विग्भ्योवा' । चतुर्विंशतितमेखंडे 'उपांत्येसीतायैतेचानुष्टुभावाद्याचतुर्थीचेति' । पंचविंशतितमेखंडे 'त्वामग्नेगयोंत्यापंचम्यौपंक्तीअग्नओजिष्ठमंत्याचतुर्थ्यौचे' त्यादिस्थलांतरेष्वुक्तवैचित्र्यस्यंकाप्यभावेनपुनरुपादानाभावः ।

अतएवचबृहद्देवतायां–'प्रवर्तयेतिपंचैंद्र्यऐंद्रासोमीत्वृगुत्तमा । ऋषिस्त्वाशिषआशास्तेमानोरक्षइतित्वृचि । दिविचैवपृथिव्यांचतथा-पालनमात्मनः' इत्युक्तम् । अत्रहिपंचानामिंद्रदेवताकत्वं 'मानोरक्ष' इत्यस्याःपंचम्याःवसिष्ठाशीरादिदेवताकत्वंचोक्तंतस्या इंद्रदेवता-कत्वंतुन विशेषोक्त्यात्वंतत्वेनचेंद्रदेवतासंबंधाभावत् इंद्रजहीत्यस्याइंद्रासोमदेवताकत्वमस्त्विवतिवाच्यम् । तत्रैव 'ऐंद्रासोमीत्वृगुत्तमे' त्यनेनोत्तमायाःसप्तम्याएवेंद्रासोमदेवताकत्वविधानात् । 'प्रवर्तयेतिचतस्रऐंद्र्य'इतित्वपपाठः बहुषुपुस्तकेष्वदर्शनात् उक्तबृहद्देवतावाक्य-विरोधात्साधकाभावाच्चेतिसर्वमनवद्यम् ।

**भाववृत्तविचारः** ।अथ'नासदासी'दित्यादिसूक्तेषुभाववृत्तदेवताऽभिहितातस्याःस्वरूपंविचार्यते–'नासत्सप्तप्रजापतिःपरमेष्ठी-भाववृत्तंतु'इतिसर्वानुक्रमण्यांभाववृत्तशब्दःभावानांपदार्थानांवृत्तिंःसृष्ट्यादिप्रवृत्तिर्यस्मादितिव्युत्पत्त्याजगदुत्पत्तिस्थितिलयकर्तृपरः । सचविशेष्यनिघ्नः । तथाच ब्रह्मणोयदाविशेष्यत्वंतदानपुंसकत्वम् । हरेर्यदाविशेष्यत्वंतदापुंस्त्वम् । अतएवबृहद्देवतायां–'यथेदमग्रे-नैवासीदसदप्यथवापिसत् । जज्ञेयथेदंसर्वंतद्भाववृत्तंवदंतितु' इतिनपुंसकनिर्देशः । तत्रैवचान्यत्र–'मायाभेदोभाववृत्तोद्युःसंज्ञानंतथै-वचे'ति । अग्निपुराणेआचाराध्याये–'गायत्रीतुविशेषेणअघमर्षणसूक्तके । देवताभाववृत्तस्तुऋषिश्चैवाघमर्षणः । छंदश्चानुष्टुभंतस्यभा-ववृत्तोहरिःस्मृतः'इतिपुंनिर्देशश्चसंगच्छते । सूक्तेतुभाववृत्तशब्दोऽर्शआद्यजंतोनित्यनपुंसकः इतिनकुत्रापिलिंगानुपपत्तिरितिदिक् ।



---

१ वृत्तिशब्देनविग्रहेभाववृत्तीतिस्यात् । वृत्तशब्देनविग्रहेतुभाववृत्तेतिस्यात् ।

अथप्रक्रांतगुणविशिष्टदेवताकसूक्तेदेवतांतरप्राप्तौगुणोच्चारणविचारः । तत्र 'नवमंमंडलंपावमानंसौम्य'मितिसर्वानुक्रमणी तस्याअयमर्थः—सोमःपवमानगुणकः । पृथक्पदोपादानंमंडलांतर्गतसोमापवादभूतदेवतांतरस्यापितद्गुणलाभार्थंनतुमंडलांतर्गतआप्री-सूक्तस्य गुणांतरयुक्तदेवताकत्वेनकथंपवमानगुणकत्वमितिचेन्न गुणांतरयुक्तत्वेपिपवमानगुणकत्वकल्पनेबाधकाभावात् तद्गुणाभावक-ल्पनेदृढतरप्रमाणाभावात् मंत्रलिंगविरोधाच्च । नह्येकदेवतायाएकएवगुणइतिनियमः । 'दैव्यौहोतारौप्रचेतसौतिस्रोदेव्यःसरस्वती-ळाभारत्य'इत्यादावेकस्याअप्यनेकगुणदर्शनात् । तथाचबृहद्देवतायां—'पवमानःस्तुतःसोमोनवमेमंडलर्षिभिः । पवमानवदाप्रयस्तुसमि-द्धइतिसंस्तुताः' इत्युक्तम् । पवमानवत्यश्चताआप्रयश्चेतिविग्रहः समिद्धइत्याद्यृग्भिःसंस्तुताइत्यर्थः । तेनआप्रीदेवतानांपवमानगुणकत्वं-स्पष्टमेवलभ्यते । तेनपवमानवदितिवतिप्रत्ययांतमंगीकृत्यसोमोयथापवमानमात्रगुणकः, एवमाप्रीदेवताअपीध्मादिमात्रगुणवत्यइति-दृष्टांतपरतयाव्याख्यानंकुर्वंतोनिरस्ताः । गुणानामुक्त्यैवसिद्धत्वेनात्रपवमानवदितिदृष्टांतकथनवैयर्थ्यात्सर्वानुक्रमणीवृत्तिकृत्कृतंपवमा-नगुणकत्वाभावपरंव्याख्यानंतुप्रमाणाभावान्निर्युक्तिकत्वाच्चोपेक्ष्यम् । इतिपवमानविशिष्टदेवताविचारः ।

अथऋभुगणस्थलिंगोक्तदेवतावाचकविभ्वशब्दस्वरूपविचारः । निघंटुस्थदेवताकांडेऋभुपदव्याख्यावसरेनिरुक्तोत्तरषट्केपंच-माध्यायेषोडशखंडेविष्ट्वीशमीतिमंत्रघटकऋभुपदव्याख्यावसरे'ऋभुर्विभ्वावाजइतिसुधन्वनआंगिरसस्यत्रयःपुत्राबभूवु'रित्यत्रविभ्वाइति नांतःशब्दः । तथाचाष्टमाष्टकेतृतीयाध्यायेऽष्टमेवर्गे'दिवश्चिदावोमवत्तरेभ्य'इतिमंत्रेविभ्वनाचिदितितृतीयांतपददर्शनात् । अतएव तृतीयाष्टकेसप्तमाध्याये'ऋभुतोरयिःप्रथमश्रवस्तम'इतिमंत्रव्याख्यावसरेविभ्वभिस्तष्टःविभ्वतष्टइतिव्याख्यातंवेदभाष्ये । एवंविभ्वाइति-

प्रथमांतं विभ्वानमितिद्वितीयांतं विभ्वनइतिचतुर्थ्यंतंयथायथंतत्रतत्रोह्यम् । एतेनदुर्गप्रणीतनिरुक्तभाष्ये'तेषांप्रथमोत्तमाभ्यांबहुवन्नि-गमाभवंतिनमध्यमेनविभ्वा'इतितृतीयांतसमानाधिकरणनिर्देशेनविभ्वाशब्दआकारांतइतिलभ्यतेसतुलेखकप्रमादइतिस्पष्टमेवप्रतीयते । आकारांतत्वेहिउक्तविभ्वनेतिपदविरोधःविभ्वमिस्तष्टइत्येवविग्रहप्रदर्शनपरउक्तभाष्यविरोधश्चेति । इतिविभ्वशब्दस्वरूपविचारः ॥



**अथरोदःशब्दविचारः ।** अथरोदःशब्दरोदसीशब्दयोर्नपुंसकस्त्रीलिंगयोर्विचारःक्रियते । रुदधातुप्रकृतिकअसुन्प्रत्ययांतः-सांतोनपुंसकएकः । तत्प्रकृतिकगौरादिङीषंतस्त्वपरःस्त्रीलिंगः । वेदेकोशेचोभयोरपितथादर्शनात् । तथाहि । 'नहित्वारोदसीउभे'—'वित्तंमेअस्यरोदसी'—'नरोदसीअपनुदंतघोराः'—इत्यादिमंत्रेषुद्यावापृथिवीवाचकःसांतोनपुंसकः । अतएवपदकालेद्विवचनांतत्वेन-प्रगृह्यत्वादितिशब्दप्रयोगःसंगच्छते । तस्यचद्यावापृथिवीदेवतावाचकस्यदेवतोच्चारणकालेप्रथमांतस्यरोदसीइतिस्वरूपं—अन्वाधानकाले-तुद्वितीयांतस्यरोदसीइति । हौम्यादिद्रव्यत्यागकालेचतुर्थ्यंतस्यरोदोभ्यामिति । अतएवचएतेपृष्टानीतिमंत्रेरोदसोरितिसप्तमीद्विवचनांत-मुपपद्यते । ङीषंतेतत्रतत्रांतोदात्तस्वरव्यत्ययकल्पनाछांदसत्वेनपूर्वसवर्णादिकंरोदसोरित्यत्रईकारलोपकल्पनंचस्यादितिमहद्देवगौरवम् । सांताश्रयणेतुनकिंचित्कल्पनीयमितिमहदेवलाघवम् । अमरकोशेपितृतीयकांडेनानार्थवर्गेएकोनत्रिंशदधिकद्विशतश्लोके—'प्रसूरश्वापि-भूद्यावौरौदस्यौरोदसीचते'इति, । रामाश्रमकृततट्टीकायामपि—'द्यावापृथिव्यौरोदस्यौद्यावाभूमीचरोदसी' । 'रोदश्चरोदसीचापिदि-विभूमौपृथक्पृथक् । सहप्रयोगेप्युभयोरोदःस्यादपिरोदसी'इतिविश्वः—इतिदर्शनाच्चसांतएवग्राह्यः । यस्तु । 'जोषद्यदीमसुर्यासचध्यै-विषितस्तुकारोदसी'—'सचामरुत्सुरोदसी'—'मिम्यक्षयेषुरोदसी'—'अधस्मैषुरोदसी'—इतिचतुर्षूदाहरणेषुईकारांतएकवचनांतःसतुमरु-

स्त्रीवाचकः—रुद्रस्त्रीवाचकः-विद्युद्वाचकश्चेतिनकाप्यनुपपत्तिः। स्पष्टंचेदंवेदभाष्ये—'जोषद्यदीमसुर्यासचध्यै' इतिमंत्रव्याख्यावसरे 'पराशुभ्राअयास' इतिमंत्रेरोदसीइत्यत्रद्यावापृथिवीवाचकत्वेङीषंतस्यांतोदात्तस्यवाछंदसीत्यनेनपूर्वसवर्णदीर्घेद्विवचनांतत्वेनप्रकृतिभावः । मरुत्स्त्रियादिवाचकत्वेतुलुप्तसप्तम्यंतं 'ईदूतौचसप्तम्यर्थे' इतिप्रगृह्यंद्रष्टव्यमितिसुधीभिर्विभावनीयं। इतिऋग्वेदकल्पद्रुमेरोदःशब्दनिर्णयः॥

**संहितास्थगायत्र्यादिच्छंदांसि ।** अथास्यांशाकलसंहितायांगायत्र्यादिच्छंदसामृगियत्ताबुभुत्सूनांप्रीत्यैतत्तत्संख्यानियमंदर्शयिष्ये । तत्रतावत्—गायत्र्यएकोनपंचाशदधिकचतुर्विंशतिशतानि २४४९ । उष्णिहएकचत्वारिंशदधिकंशतत्रयं ३४१ । अनुष्टुभःपंचपंचाशदधिकान्यष्टौशतानि ८५५ । बृहत्यएकाशीत्यधिकंशतं १८१ । पंक्तयोद्वादशाधिकंशतत्रयं ३१२ । त्रिष्टुभस्त्रिपंचाशदधिकद्विचत्वारिंशच्छतानि ४२५३ । जगत्योऽष्टाचत्वारिंशदुत्तरत्रिशताधिकंसहस्रं १३४८ । अतिजगत्यःसप्तदश १७ । शक्कर्यएकोनविंशतिः १९ । अतिशक्कर्योनव ९ । अष्ट्यःषट् ६ । अत्यष्ट्यश्चतुरशीतिः ८४ । धृतीद्वे २ । अतिधृतिरेका १ । एकपदाःषट् ६ । द्विपदाःसप्ताशीतिः ८७ । 'बार्हताःप्रगाथाःशतं १०० । विपरीतोत्तराश्चतुरधिकानवतिः ९४ । ककुभःपंचपंचाशत् ५५ । महाबार्हतएकः' १ । एवंसर्वेमिलित्वा सार्धशतद्वयं २५० । एतेद्वृचाद्वृचाइतिकृत्वातएताद्विगुणाऋचः पंचशतानि ५०० ॥ एवंसकलाःशाकलसंहितायांखिलरहितायामृचो द्व्युत्तरसप्तत्यधिकचतुःशताधिकदशसहस्राणि १०४७२ संख्येति ॥ यत्तु 'ऋचांदशसहस्राणिऋचांपंचशतानिच ॥ ऋचामशीतिःपादश्चैतत्पारायणमुच्यते ॥' इतिकस्यचिद्वचनं तद्वालखिल्याध्यायादि-

खिलसहितशाकलसंहिताविषयमितिज्ञेयम् ॥ खिलरहितायास्तुपूर्वोक्तायाएवसंख्यायाःप्रतीतेः ॥ एवमत्रप्रथमाष्टकेऋचः १३७० द्वितीये ११५७ तृतीये १२०९ चतुर्थे १२६९ पंचमे १२६३ षष्ठे १६५० सप्तमे १२६३ अष्टमे १२९३ । एतत्संकलनं-पूर्वोक्तमेव । सूक्तसंख्यात्वनुक्रमण्यामेव 'तदेतत्सूक्तसहस्रं' इत्यादिनापठिता सापिवालखिल्यरहितायाएवघटते । तदित्थं-प्रथमाष्टके सूक्तानि १२१ द्वितीये ११९ तृतीये १२२ चतुर्थे १४० पंचमे १२९ षष्ठे १२४ सप्तमे ११६ अष्टमे १४६ एतत्संकलनंप्रागुक्तमेव ।

**गायत्र्यादिछंदोभेदपरिगणनं–गायत्री८** पदपंक्तिः–उष्णिग्गर्भा–पादनिचृत्–अतिनिचृत्–यवमध्या–वर्धमाना–प्रतिष्ठा–ह्रसीयसी । **उष्णिक्** ७ पुरउष्णिक्–ककुप्–ककुब्न्यंकुशिरा–तनुशिरा–पिपीलिकमध्या–अनुष्टुब्गर्भा–उष्णिक् । **अनुष्टुप्** ६ महापदपंक्तिः–कृतिः–पिपीलिकमध्या–काविराजः–नष्टरूपीविराजः । **बृहती** १० पुरस्ताद्बृहती–न्यंकुसारिणी–उरोबृहती–स्कंधोग्रीवी–उपरिष्टाद्बृहती–विष्टारबृहती–ऊर्ध्वबृहती–पिपीलिकमध्या–विषमपदा–बृहती । **पंक्तिः** ७ विराट्–सतोबृहती–विपरीता–प्रस्तारपंक्तिः–आस्तारपंक्तिः–संस्तारपंक्तिः–विष्टारपंक्तिः । **त्रिष्टुप्** १२ जगती–अभिसारिणी–विराट्स्थाना–विराड्रूपा–ज्योतिष्मती–पुरस्ताज्ज्योतिः–मध्येज्योतिः–उपरिष्टाज्ज्योतिः–महाबृहती–यवमध्या–पंक्त्युत्तरा–विराट्पूर्वा । **जगती** ३ त्रिष्टुप्–महासतोबृहती–महापंक्तिः । **प्रगाथाः** ६ बार्हतः–काकुभः–महाबार्हतः–विपरीतोत्तरः–आनुष्टुभः–आनुष्टुम्मुखास्तृचाः इति ।

## स्वाहावत्यृचः ।

| मंत्रप्रतीकं. | अष्टकाध्यायवर्गाः | | | मंत्रप्रतीकं. | अष्टकाध्यायवर्गाः | | | मंत्रप्रतीकं. | अष्टकाध्यायवर्गाः | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| स्वाहायज्ञंकृणोतन | १ | १ | २५ | आपूर्णोऽअस्यकलशः* | ३ | २ | ११ | आयाह्यर्यऽआपरि० * | ६ | ३ | १२ |
| ततमेअपस्तदुतायते | १ | ७ | ३० | तिष्ठाहरीरथआ | ३ | २ | १७ | स्वाहाकृतस्यतृंपतं० | ६ | ३ | १७ |
| पूषण्वतेमरुत्वते० * | २ | २ | ११ | इंद्रःस्वाहापिबतु० * | ३ | ३ | १४ | आदूनुतेऽअनु० | ६ | ४ | ४२ |
| स्वाहाकृतान्याग० | २ | २ | ११ | स्वाहाग्नयेवरुणा० * | ३ | ८ | २१ | विश्वेदेवाःस्वाहाकृतं० | ६ | ७ | २५ |
| पुरोगाऽअग्निर्दे० | २ | ५ | ९ | आयाह्यग्नेस० | ५ | २ | २ | वेषिहोत्रमुतपोत्रं० * | ७ | ५ | ३० |
| घृतंमिमिक्षेघृतमस्य | २ | ५ | २३ | यथावःस्वाहा० * | ५ | २ | ४ | मार्तलीकव्यैर्यमो० | ७ | ६ | १४ |
| तुभ्यंहिन्वानोवं० | २ | ७ | २५ | आर्चनोबर्हिः० | ५ | ४ | २९ | आग्नेवहुवरुण० | ८ | २ | २२ |
| आयाह्यग्नेसमि० | २ | ८ | २३ | आनोयातमुप० | ५ | ८ | २५ | सद्योजातोव्यमिमीत० | ८ | ६ | ९ |

निर्दिष्टेषुस्वाहावन्मंत्रेष्वपिप्रदानाप्रदानार्थकस्वाहाकारभेदेनद्वैविध्यंपरिकल्प्य–प्रदानार्थकस्वाहाकारवत्स्वेवांतेपुनःस्वाहाकारोमास्त्व-न्यत्रापेक्षितएवेतिनिर्णीयजुह्वतिकेचनशिष्टास्तन्मतेनप्रदानार्थकस्वाहाकारघटितमंत्रप्रतीकमूर्ध्नि * ईदृक्पुष्पविन्यासःकृतः । तेष्वपि–स्वाहाग्नयेवरुणाय ३।८।२१ आयाह्यर्यआपरि ६।३।१२ वेषिहोत्रमुतपोत्रं ७।५।३० इतिमंत्रत्रयमेवप्रदानार्थकस्वाहाकारवत् तत्राप्याद्यो वैकल्पिकइतिवदन्ति । तस्मादत्रतत्त्वनिर्णयाय–एकसंबेकरोपाह्वनारायणशास्त्रिदर्शितप्रयोगलाघवानुसारेणविचारःक्रियते ।

**स्वाहाकारवन्मंत्रविचारः** । अथऋगाम्नायेकतिपयेमंत्राःस्वाहाकारवंतआम्नातास्तत्रसंशयः—किमेतेषांहोमेविनियोगःप्रदानार्थकस्वाहाकारांतरयुतानामुतकेवलानामिति । किंतावत्प्राप्तम् । नकेवलानांहोमेविनियोगःसंभवति । होमस्यत्यागात्मकतया, मंत्रमध्यपठितस्यचस्वाहाकारस्यमंत्रावयवतया प्रदानार्थत्वाभावादंतेपुनःप्रदानार्थकस्वाहाकारःप्रयोक्तव्यइति । अतएवभगवान्जैमिनिःसंकर्षकांडे 'स्वाहाकृत्य' (अ. १४ पा. ४ सू. १८) 'वषट्' (१४।४।१९) इतिसूत्राभ्यांक्रमेण 'स्वाहाकृत्यब्रह्मणातेजुहोमि' 'स्वाहाकृतमिंद्रायतेजुहोमि' इत्यादावुपसर्जनत्वेनान्वितानांस्वाहाकाराणांमुख्यविशेष्यत्वाभावात् द्रव्यस्तुतिद्वारैववाक्यार्थसमन्वयादप्रदानार्थत्वम् । 'वषट्तेविष्णवासआकृणोमी' त्यत्रवषट्पदस्य स्वाहाकृतशब्दवत्समासाभावेनस्वतंत्रतयाप्रदानार्थत्वेप्राप्ते 'आकृणोमि' इत्यत्रतदन्वयेनास्वातंत्र्याविशेषादप्रदानार्थत्वंनिर्णीय तत्रतत्रप्रदानार्थकस्वाहाकारांतरप्रयोगंब्रूते । इतिप्राप्तेब्रूमः—नऋगाम्नायपठितेषुस्वाहाकारवत्सुमंत्रेषुहोमकालेपुनरन्यःस्वाहाकारःप्रयोक्तव्यइति । कुतः । पठतिहिभगवानाश्वलायनःश्रौतसूत्रप्रथमाध्यायस्यैकादश्यांकंडिकायां—'स्वाहाकारांतैर्मंत्रैर्नचेन्मंत्रेपठितः' इति । व्याचख्यौ चैतद्वृत्तिकृन्नारायणः—'यत्रकापिस्वाहाकारोनपठितस्तदांतेस्वाहाकारःकर्तव्यः । यत्रकापिपठितश्चेत्सएवप्रदानार्थकोभवति' इति । कारिकाकार–मंचनाचार्यप्रभृतिप्राचीनप्रयोगकाराश्चैवमेवप्रतिपादयंति । शौनकोपि—'यस्मिन्मंत्रेनपठितःस्वाहाकारोभवेद्यदि । स्वाहांतश्चप्रयोक्तव्योहोमेषुप्रणवादिना' इति । अत्रवचनद्वयेपियद्यपूर्वविधिरंगीक्रियते तदापर्युदासन्यायेनस्वाहाकारघटितान्यहोमसाधनीभूतमंत्रत्वावच्छेदेनांतेस्वाहाकारविधिरितिवक्तव्यम् । अथहोमसाधनीभूतमंत्रेष्वंतेस्वाहाकारोवचनांतरेणप्राप्तइत्युच्यतेतदानेनवचनेन स्वाहाकारवत्सुमंत्रेषुसप्रतिषिध्यतइत्यापतति । अन्यथात्रचनवैयर्थ्यापत्ति-

दुर्वारा। नन्वेवं 'स्वाहाकृत्य' 'वषट्' इतिसंकर्षकांडस्थाधिकरणद्वयविरोधः । तत्रहीतरविशेषणतयान्वितार्थकस्वाहापदस्यप्रदानार्थत्वं निरस्यांतेपुनःस्वाहापदप्रयोगव्यवस्थापनात् । न । तस्याश्वलायनोक्तकर्मातिरिक्तकर्मविषयत्वात् । आश्वलायनप्रोक्तकर्मसूक्तसूत्रेण-तद्बाधात् । अतएवाग्निष्टोमस्थसौत्येहनिहौत्रकांडपठितप्रवृताहुतिहोमे 'स्वाहावाचे' इत्येकोमंत्रः । 'स्वाहावाचस्पतये' इतिद्वितीयः । एवमन्येपिबहवोमंत्राःसंति तत्रापिमंत्रपठितस्वाहाकारएवप्रदानार्थकइति मंत्रांतेप्रदानार्थकान्यस्वाहाकारंनप्रयुंजंति । एवमयाश्चेति-मंत्रेपि । अध्वर्युकांडपठितप्रवृताहुतिहोमेतु 'जुष्टोवाचोभूयासं' इतिमंत्रे स्वाहाकारसत्वेपि 'तस्मिन्माधाःस्वाहा—सरस्वत्या'इतिमंत्रांते-पुनःस्वाहाकारयोजनादरीदृश्यतेकेशवादिप्राचीनप्रयोगेषु । एवंबगलामुख्यादितांत्रिकमंत्रेष्वपि—मंत्रमध्येस्वाहाकारसत्वेपिमंत्रांतेपुनः-स्वाहाकारःप्रयोज्यइतितंत्रविद्भिरुक्तत्वात् । नचानंत्यस्वाहाकारस्यस्वस्थानच्युतनखकुंडलादीनांकंडूयनालंकरणादिकार्याक्षमत्वमिवन-प्रदानार्थत्वम् । अतएवयज्ञायज्ञीयेसामनि इरापदस्यगिरापदस्थानएवनिवेशआवृत्तिश्चकल्प्यतइतिशंक्यम् । यत्रक्वापिस्थितस्यदीपस्येवपद-स्याप्यर्थप्रकाशकत्वानपायात्, देहिब्राह्मणाय—ब्राह्मणायदेहीत्यादिवाक्याभ्यामविशेषेणबोधानुभवाच्च । अतएव 'पुरस्तात्स्वाहाकारावाअ-न्येदेवाउपरिष्टात्स्वाहाकारावाअन्ये' इतिश्रुत्याउभयोरपिप्रदानार्थत्वमनूद्यते । एतेनमंत्रषटकादिमध्यपठितस्वाहाकारांतेहुत्वाशेषमंत्रोनि-गदेनोच्चारणीयइतिकेषांचित्प्रलापोनिरस्तः । नचसकृच्छ्रुतस्येतरविशेषणतयोपस्थितार्थकस्यस्वाहाशब्दस्यकथंप्रधानतयाप्रदानार्थावबोध-कत्वमितिवाच्यम् । 'नचेन्मन्त्रेपठित'इतिसूत्रबलादेवतादृशस्वाहाकारघटितमन्त्रेषुस्वाहापदस्यावृत्त्याप्रदानार्थावबोधःकल्पनीयइतिदिक् ॥

**वासिष्ठविषयेविशेषः** । इंद्रोतिमिरितीमंवर्गंवासिष्ठानाधीयीरन्सर्वानुक्रमेवासिष्ठान्प्रतितच्छ्रवणनिषेधमुखेनोपेयभूततदध्य-
यनप्रतिषेधात् । तथाहि–'अंत्याअभिशापार्थास्तावसिष्ठद्वेषिण्योनवसिष्ठाःशृंण्वंति' इति । अत्रभाष्यम्–इंद्रापर्वतेतिसूक्तस्य अंत्याइंद्रो-
तिमिरित्याद्याश्चतस्रऋचोऽभिशापार्थाः । अभिशापोनामाऽप्रियशंसनरूपोऽर्थःप्रयोजनंयासां । ताश्चवसिष्ठद्वेषकर्त्र्यः । अतोवसिष्ठगो-
त्रोत्पन्नास्तानशृण्वंति । लिङर्थेलोटोरूपं । यदिशृणुयुस्तदातेषांशिरःशतधाभिद्येत । तदुक्तंबृहद्देवतायां–'शतधाभिद्यतेमूर्धाकीर्तितेनश्रु-
तेनवा । तेषांबालाःप्रमीयंते' इतीति । सकलसंहिताध्ययनादिकर्मफलसिद्धिस्त्वेषामेतद्वर्गविकलसंहिताध्ययनादिनैवभवति । अत-
एवचरणव्यूहे—एकंशतसहस्रंवाद्विपंचाशत्सहस्रार्धमेतानिचतुर्दशपदानिवासिष्ठानांतव्यतिरिक्तानांतुएकंशतेत्यादिचतुर्दशांतानिपदानि-
गृहीत्वाइंद्रोतिमिरित्याद्येकसप्ततिपदानिमिलित्वेतरेषांपंचाशीतिरितिपदसंख्याविभागःसंगच्छतइतिदिक् ॥

**पारायणहोमाद्यारंभकालः** । श्रीः ॥ जपाद्यारंभकालस्तुपरशुरामेणोक्तः–'वैशाखेश्रावणेमासेचाश्विनेमार्गशीर्षके । माघफा-
ल्गुनयोर्वापिसितेपक्षेशुभेदिने ॥ वेदारंभःप्रकर्तव्यःपुत्रपौत्रादिवृद्धये' ॥ इति । 'कार्तिकेस्वर्णलाभःस्यादि'तिकेचित् । वर्ज्याणितु-
संग्रहे–'अनध्यायतिथीन्सर्वान्रिक्ताष्टम्यौविहायच । इतरासुचकर्तव्योवेदारंभःशुभप्रदः ॥ अनध्यायेचसंध्यायामपराह्णेकथंचन ।
स्त्रियांरजस्वलायांतुवेदारंभोनसिद्धिदः' ॥ इति ॥ रत्नमालायां—'सोमसौम्यगुरुशुक्रवासराःसर्वकर्मसुभवंतिसिद्धिदा'इति ॥
निष्कामतयावेदाद्यनुष्ठानेतुयदाश्रद्धोत्पद्यतेतदैवारंभःकार्यः । 'नश्वःश्वमुपासीतकोहिमनुष्यस्यश्वोवेदे'तिश्रुतेः श्वःकरवाणीत्येवमुपास-
नाकालांतरप्रतीक्षानकार्या । हियस्मान्मनुष्यस्यश्वःकालसंबंधिजीवनंकोवेद–कोजानीयात् आयुषोऽस्थिरत्वादितिश्रुत्यर्थः । परशुरा-

मोपि—'यदैवजायतेवित्तंचित्तंश्रद्धासमन्वितम् । तदैवपुण्यकालोयंयतोऽनित्यंहिजीवितम् ।। अतःसर्वेषुकालेषुजपस्यारंभणंशुभम्' इति ।। दीपिकायामपि—'ईश्वराराधनार्थंवाअथवापापनुत्तये । यदिरुद्राद्यनुष्ठानंनमुहूर्तादिचिंतयेदि'ति ।। काम्येतुदिनंसंशोध्यमेव ।। एवमारंभोत्तरंमध्येनध्यायपातेपिजपहोमाभिषेकादिकर्तव्यमेव । 'ततोवेदादिमारभ्यसंततमधीयीतनास्यांतरानध्यायोनास्यांतराजनन-मरणमशुचि ( अशौचंनेत्यर्थः ) नांतराव्याहरेन्नांतराविरमेत्त्रिःप्राणानायम्याचम्याप्रणवंवाप्रविधाययावत्कालमधीयीतततःसर्वंनिशां-निशांतरंसलिलंलोप्यपरिदध्यात्' । निशांतरं–संध्यांनिशादीन्लोप्य–विहायसमापयेदित्यर्थः । इत्यादिविशेषोज्ञेयः ।।

**वेदपारायणप्रयोगः** । श्रीः ।। पूर्वोक्तशुभेकालेपारायणदिनंनिश्चित्यतत्प्राग्दिनेकृतनित्यक्रियःशुक्लवासाःसपत्नीकोयजमानः पूजितेष्टदेवतोगोमयलिप्तेशुचौदेशेप्राङ्मुखउपविश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकशर्मणोममकायिकादिसमस्तदो-षनिवर्हणद्वाराऋग्वेदांतर्गतसब्राह्मणशाकलसंहितापारायणाधिकारार्थंषडब्दचतुरब्दद्व्यब्दैकाब्दान्यतमंपूर्वोत्तरांगसहितंसर्वप्रायश्चित्तंप्र-तिकृच्छ्रंगोमूल्यरजतनिष्कपादप्रत्याम्नायेनकार्षापणैकगोमूल्यप्रत्याम्नायेनवाहमाचरिष्यामि इतिसंकल्प्योक्तप्रकारेणसर्वप्रायश्चित्तमाच-रेत् ।। पुनर्देशकालावुत्कीर्त्यममसमस्तपापक्षयद्वाराऋग्वेदांतर्गतसब्राह्मणशाकलसंहितापारायणाधिकारार्थमृग्विधानोक्तक्रमेणप्रणवा-दिजपमहंकरिष्ये इतिसंकल्प्य ।। प्रणवस्यपरब्रह्मपरमात्मागायत्रीव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहतीगायत्र्या० ।। आपोहि-ष्ठेतिनवर्चस्यांबरीषःसिंधुद्वीपआपोगायत्रीपंचमीवर्धमानासप्तमीप्रतिष्ठाअंत्येद्वेअनुष्टुभौ ।। एतोन्विंद्रमितितिसृणामांगिरसस्तिरश्चीइंद्रो-ऽनुष्टुप् ।। ऋतंचेतितृचस्यमाधुच्छंदसोघमर्षणोभाववृत्तिरनुष्टुप् ।। शंनइंद्राग्नीतिपंचदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् ।।

स्वस्तिनोमिमीतेतिपंचानांस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुबंत्येद्वेअनुष्टुभौ। पावमानीनांछंदर्ष्यादिनवमेमंडलेआलोचनीयम्। शंवत्यादीनांपाठः-कपिंजलाधिकरणन्यायेनतिसृणांतिसृणामेवेतिकेचित् ॥ ऋग्विधाने— तर्पयित्वाङ्गिराचार्यांनृषींश्छंदांसिदेवताइत्यनेनाचार्यादीनां-तर्पणमभिहितं तत्राचार्यादीनांविशेषरूपेणानुपादानात्सामान्यरूपेणेतिगम्यते। तद्यथा। आचार्यास्तृप्यंतु। ऋषयस्तृप्यंतु। छंदांसिस्तृप्यंतु। देवतास्तृप्यंत्विति। ततोरौद्रमंत्राञ्जपेत् ॥ कद्रुद्रायेतिनवर्चस्यघौरःकण्वोरुद्रोगायत्र्यंत्यानुष्टुप्तृतीयामैत्रावरुणी। इमारुद्रायतवस-इत्येकादशर्चस्यसूक्तस्यांगिरसःकुत्सोरुद्रोजगत्यंत्येद्वेत्रिष्टुभौ। आतेपितरितिपंचदशर्चस्यसूक्तस्यशौनकोगृत्समदोरुद्रस्त्रिष्टुप्। इमारुद्राय-स्थिरधन्वनइतिचतुर्ऋचस्यमैत्रावरुणिर्वसिष्ठोरुद्रोजगत्यंत्यात्रिष्टुप्। ततोयुतसहस्रशतदशान्यतमयासंख्ययागायत्रींजपेत् ॥ पुनर्देशकालौ-संकीर्त्यऋग्वेदांतर्गतब्राह्मणशाकलसंहितापारायणांगत्वेनगणपतिपूजनंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंग्रहयज्ञंचकरिष्य इतिसंकल्प्योक्तप्रकारेणकुर्यात्। एवंपूतोधिकारीभवति ॥ ॥ ततःपारायणदिनेकर्ताकृतनित्यक्रियोदर्भासनेप्राङ्मुखउपविश्यपवित्रपाणिःप्राणानायम्य-देशकालौनिर्दिश्य अमुकगोत्रस्यशर्मणोममकायिकादिसमस्तदुरितक्षयपूर्वकंश्रीवेदपुरुषप्रीतिद्वाराअमृतत्वप्राप्त्यर्थंआदौप्रणवसमस्तव्याहृ-तिसहितायाःअंतेमहानाम्न्युपनिषत्सहितायाऋग्वेदांतर्गतशाकलसंहितायाःपारायणमहंकरिष्ये। ऋत्विग्द्वाराकरणेतुऋत्विजंवृत्वातंमधुप-र्केणार्हयेत्। ततःपारायणकर्तादेवालयेस्वगृहेवागोमयोपलिप्तभूमौहस्तायामविस्तारोच्चांवेदिंकृत्वातदुपरियवसंमिश्रांमृत्तिकांसंस्थाप्यतत्र-महीद्यौरित्यादिविधिनासुदृढंकलशंसुप्रक्षालितंपुष्पपल्लवमालाचंदनकुंकुमादिभूषितंप्रतिष्ठाप्यतत्त्वायामीतितत्रवरुणमावाह्यसंपूज्य ॥ तत उत्तराग्रकुशकृतंवत्सजान्वाकृतिंनेदंब्रह्मणःशिरउपधानत्वेनकलशोपरिनिधायस्वस्त्ययनंपठेत्। स्वस्त्ययनंतार्क्ष्यमितिद्वयोःस्वस्त्यात्रेयोविश्वे-

देवाग्निष्टुप्इतिऋग्द्वयंपठेत् ॥ ततऊर्ध्वाग्रपंचाशत्कुशनिर्मितंकूर्चंप्रत्यगग्रंवेदोपरिप्रतिष्ठाप्यप्राणप्रतिष्ठापूर्वकंब्रह्मजज्ञानमितिमंत्रेणावाहनाद्युपचारैःपूजयेत् । ब्रह्मदक्षिणभागेद्वितीयकलशोपरिप्रतिमायांसावित्रीपूजनमुक्तंकैश्चित्तन्मूलाभावादुपेक्ष्यं । ततोगुरुंब्राह्मणांश्चसंपूज्यविष्णुंस्मरेत् ॥ ततोदेवतासंनिधौदर्भासनेदर्भपाणिःप्राङ्मुखउपविश्याचम्य । प्रणवस्यपरब्रह्मपरमात्मागायत्रीव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहतीजपेवि० । ॐ भूर्भुवःस्वःइतिजपित्वाऋषिछंदआद्युच्चारणपूर्वकंअग्निमीळइत्यादिपारायणमारभेत । पूर्वोक्तविरामस्थलेविरमेत् । प्रत्यहंप्रहरद्वयपर्यंतंपठेत् । त्वरयासमापनेच्छायांसार्धप्रहरद्वयपर्यंतंपठेत् । कर्मसमाप्त्यंतंब्रह्मचर्यमधःशयनंस्वल्पंहविष्याशनंचकार्यं । शक्तौसत्यामुपोषणंब्रह्मपूजनंचप्रत्यहंसमाप्त्यंतंकार्यं । पतितरजस्वलादिसंभाषणंतत्समक्षमध्ययनंचनकुर्यात् । आसमाप्तेर्नाश्नीयाद्यथाशक्तिवापःफलान्योदनंहविष्यमात्रमल्पंभुंजीत नोपरिशयीतनमैथुनंचरेत्पतिताद्यैर्नसंभाषेतनैतत्समीपेधीयीतेतिबाधायनोक्तेः । ऋत्विक्कर्तृकपारायणेपारायणकारयित्राप्येतेनियमाःकार्याः । संहितांसमाप्यमहानाम्नीःपठित्वाब्राह्मणंपठेत् । केवलसंहितापारायणेमहानाम्नीरेवपठेत् । आरण्यपंचकमध्येप्रथमारण्यकत्रयस्यब्राह्मणांतर्गतत्वाद्ब्राह्मणसमाप्त्यनंतरंपाठः । महानाम्नीसंज्ञकंचतुर्थारण्यकंपूर्वोक्तऋग्विधानवचनादेवसंहितासमाप्त्यनंतरमेवपठेत् । पंचमारण्यकस्यमहाव्रतयज्ञसूत्ररूपत्वादारण्यकत्रयानंतरंपाठः ॥ इतिपारायणविधिः ॥

ऋक्संहिताहोमपद्धतिः । श्रीवेदपुरुषायनमः ॥ श्रौतस्मार्तेषुकर्मस्वखिलविगुणतानाशनेनेष्टसिद्ध्यैरुद्रेंद्रब्रह्मवंद्यंसकल-विधिविदःकार्मिणोयंस्मरंति । प्रज्ञानानंददेहःसकलमुनिजनध्येयरूपःपरेशोविष्णुस्त्वैमात्रवाच्योनिखिलजनहितःसर्वगःसर्व-तोऽव्यात् ॥ १ ॥ ऋग्वेदेयाशाकलाख्यास्तिशाखातस्याःकुर्वेगुर्जरोपाह्वयोहम् । गोपालाख्यःपद्धतिंशौनकीयान्ग्रंथान्दृष्ट्वा-होमजांशालिनींच ॥ २ ॥ तत्रतावद्वेदपारायणफलमाहशौनकः–पारायणाभ्यांद्वाभ्यांवाऽनश्नन्यःसततंपठेत् । अनृतेभ्यः-पातकेभ्योमुच्यतेनात्रसंशयः ॥ १ ॥ त्रिभिःपारायणैःशूद्रीगमनात्पातकान्नरः । गंगाप्सुमज्जनाच्चैवमुच्यतेनात्रसंशयः ॥२॥ चतुर्भिःशूद्रीगमनात्तदन्नाशनपातकात् । पंचभिश्चायाज्ययाजैरग्राह्यग्रहणात्तथा ॥ ३ ॥ षड्भिःपारायणैःस्वर्णस्तेयस्त्रीपशुघा-तनात् । सप्तभिःप्राजापत्यस्यहीनाचाराच्चबंधनात् ॥ ४ ॥ अष्टभिश्चांद्रायणाच्चगुरुतल्पगमात्तथा । रजस्वलासंगमाच्चमुच्यते-पातकान्नरः ॥ ५ ॥ नवभिस्तुसुरापानात्पातकान्मुच्यतेतथा । असोमपानाद्दशभिरेकादशभिर्ब्रह्महा ॥ ६ ॥ द्वादशभिःपूर्व-जन्मकृतादिहापिजन्मनि ॥ पातकान्मुच्यतेस्वर्गलोकंगच्छतिशाश्वतम् ॥ ७ ॥ अग्निष्टोमादिक्रतुभिरिष्टंभवतितेनवै । वेदा-ध्यायीसदैवस्यादपाप्मासत्यवाक्शुचिः ॥ ८ ॥ यंयंकामयतेकामंतंतंवेदेनसाधयेत् । असाध्यंनास्तियत्किंचिद्ब्राह्मणोहिफलं-महत् ॥ ९ ॥ इतिवेदपारायणमहिमानंप्रदर्श्येदानींस्वाध्यायाभ्यासलक्षणानिवदन्तदंतरंगभूतंहोमविधिमाह—तत्रादौ-शरीरशुद्ध्यादिकमाह ॥ सिद्धमंत्रविधानेनजपैर्होमैर्द्विजोत्तमः । तपसास्वर्गमाप्नोतितपसाविंदतेमहत् ॥ १ ॥ तपोयुक्तस्यसि-ध्यंतिकर्माणिनियतात्मनः । विद्वेषणंसंवननंविषघ्नरोगनाशनम् ॥ २ ॥ ( विद्वेषणइमांखनामीत्याद्यं इंद्रोतिभिरित्यादिसूक्त-

खंडंच । संवननंसंसमिदित्यादि । विषघ्नंकंकतोनकंकतइत्यादि । रोगनाशनंअक्षीभ्यांतइत्यादि । उपलक्षणत्वादन्यान्यप्य-
लक्ष्मीनाशनादीन्यूह्यानि )॥ येनयेनार्थमृषिणायदर्थंदेवताःस्तुताः । ससकामःसमृद्धश्चतेषांतेषांयथातथा ॥ ३ ॥ तानि-
कर्माणिवक्ष्यामिविविधानिचकर्मणाम् । पुरश्चरणमादौतुकर्मणांसिद्धिकारणम् ॥ ४ ॥ स्वाध्यायाभ्यसनस्यादौप्राजापत्यं-
चरेद्विजः । केशश्मश्रुलोमनखान्वापयित्वाप्लुतःशुचिः ॥ ५ ॥ तिष्ठेदहनिरात्रौतुशुचिरासीतवाग्यतः । सत्यवादीपवित्राणि-
जपेद्व्याहृतयस्तथा ॥ ६ ॥ ॐकाराद्यास्तुताजप्त्वासावित्रींचतदित्यृचम् । आपोहिष्ठेतिसूक्तंतुशुद्धवत्योघमर्षणम् ॥ ७ ॥
शंवत्यःस्वस्तिमत्यश्चपावमान्यस्तथैव च । सर्वत्रैतत्प्रयोक्तव्यमादावंतेचकर्मणाम् ॥ ८ ॥ ( शुद्धवत्यःशुचीवोहव्येत्यादयः ।
अघमर्षणमृतंचेतिसूक्तम् । शंवत्यःशंनइंद्राग्नीत्यादयः । स्वस्तिमत्यःस्वस्तिनोमिमीतामित्यादयः । पावमान्यःस्वादिष्ठ-
येत्यादयः )॥ आसहस्रादाशताद्वादशांतमथवाजपेत् । ॐकारव्याहृतीस्तिस्रःसावित्रीमथवाऽयुतम् ॥ ९ ॥ ( आपोहिष्ठे-
त्यादिजप्यमंत्राणांशक्त्यपेक्षयासहस्रशतदशेत्यावृत्तिसंख्यावेदितव्याः । यद्वौंकारव्याहृतिपूर्विकांसावित्रीमयुतसंख्ययाज-
प्त्वाऽनंतरंकिंकर्तव्यंतदाह ) ॥ तर्पयित्वाद्भिराचार्यानृषीन्छंदांसिदेवताः । प्रपद्येतविरूपाक्षंरौद्रमंत्रगणंजपेत् ॥ १० ॥
अनार्यैर्नाभिभाषेतनशूद्रैर्नापिगर्हितैः । नरजस्वलयानार्यापतितैर्नांत्यजैर्नृभिः ॥ ११ ॥ नदेवब्राह्मणद्वेष्ट्रानाचार्यगुरुनिंदकैः ।
नमातापितृविद्विष्टैर्नावमन्येतकंचन ॥ १२ ॥ त्रिरात्रमेवोपवसेदादितःसर्वकर्मणाम् । त्रीणिनक्तानिवाकुर्यात्ततःकर्मसमा-
रभेत् ॥ १३ ॥ नित्यंप्रयोगिणांचैवप्रयोगादौव्रतंत्र्यहम् । उपरिष्टात्तुपवसेत्कृत्वासांतपनादिकम् ॥ १४ ॥ आयुष्याण्येव-

कर्माणिमंत्रयुक्तःसमारभेत् । सवासाःसशिरस्कोप्सुस्नात्वाभ्युक्ष्यजपेद्द्विजः ॥ १५ ॥ शुद्धवत्यस्तथाब्वत्यःपावमान्योऽघमर्षणम् । एवंत्रिराप्लुत्यशुचिःप्राणायामान्समाचरेत् ॥ १६ ॥ 'अब्वत्यआपोहिष्ठेत्यादयः' । त्रीन्षडष्टौद्वादशवाषोडशाष्टादशापिवा । आशताद्वाथमेत्प्राणान्जपन्ब्रह्माघमर्षणम् ॥ १७ ॥ प्राणायामैर्दग्धदोषःशुक्लांबरधरःशुचिः । यथाविध्यपआचम्यारोहेद्वैदर्भप्रस्तरम् ॥ १८ ॥ पवित्रपाणिःकृत्वातुउपस्थंदक्षिणोत्तरम् । दिशोरेवांतरंप्रेक्ष्यानिमिषंछाद्यचक्षुषी ॥ १९ ॥ ॐकारव्याहृतीस्तिस्रःसावित्रींचतदित्यृचम् । मनसैताअनुद्रुत्यवेदादिंसमुपक्रमेत् ॥ २० ॥ मंद्रमेवपठेत्प्रातरुच्चैर्मध्यंदिनेपठेत् । सोच्चैरेवापराह्णेतुसंध्याकालउपारमेत् ॥ २१ ॥ ब्राह्मेमुहूर्तेचोत्थायत्रिराप्लुत्यपठेद्द्विजः । मध्यमांवृत्तिमास्थायनद्रुतांनविलंबिताम् ॥ २२ ॥ पूर्वांसंध्यांजपंस्तिष्ठेदुपासीतचपश्चिमाम् । नचांतराव्याहरेतविरमेद्वाकथंचन ॥ २३ ॥ विरमेद्ब्राह्मणेप्राप्तेकामंतेनतुसंवदेत् । शूद्रंदृष्ट्वैवसंप्राप्तंनाधीयीतकदाचन ॥ २४ ॥ ऋष्यादिसर्वंविज्ञायपठेत्सुनियतःशुचिः । सर्वान्कामानवाप्नोतिपापैश्चपरिमुच्यते ॥ २५ ॥ अनश्नन्संहितामेतांप्रातःप्रातर्दिनेदिने । आयुर्विद्यांधनंपुत्रान्गृहांश्चाप्नोत्यनुत्तमान् ॥२६॥ एतद्ब्रह्मजपञ्छूद्रान्नेक्षेतान्यांश्चतद्विधान् । प्रेक्ष्याचम्योदकंपूतःपश्येद्वामग्निभास्करौ ॥२७॥ (इत्थंसाधारण्येनस्वाध्यायधर्मानभिधायसंप्रतिहोमधर्मान्वक्तुमुपक्रमते )॥ आदावेवतुसावित्र्याकर्मकुर्वीतशांतये । पुष्टयेधनलाभायपशुलाभायभूतये ॥२८॥ एषाहिसंहितादेवैःसर्वब्रह्ममयीनिचृत् । उग्रेणतपसादृष्टाविश्वामित्रेणधीमता ॥ २९ ॥ होमांश्चजपयज्ञांश्चनित्यंकुर्वीतवैतया । आज्यंद्रव्यमनादेशेजुहोतिषुविधीयते ॥ ३० ॥ सर्वपापहरोहोमः [illegible] तिलैःस्मृतः । गृह्योक्तविधिनासर्वंकर्म-

कुर्वीततत्त्ववित् ॥ ३१ ॥ शक्त्यातुविप्राःसंभोज्याऋक्सूक्तसमसंख्यया । वर्गाध्यायप्रसंख्यावामंडलावधिवापुनः ॥ ३२ ॥ अथैतस्य विवरणमित्थं—अनादेशेआज्यद्रव्यमित्यनेनास्मिन्संहिताहोमेआज्यंहौम्यद्रव्यंप्रकृतमितिसिद्धम् ॥ सर्वपापहरो- होमस्तिलैःस्मृतइतितिलहोमस्यसर्वपापहर्तृत्ववर्णनात्तिलद्रव्यंकाम्यमित्यपिसिद्धंस्यात् तथापिपापनाशनस्यसर्वस्याप्यपेक्षित- त्वात्तिलाअपिनित्यप्रायाएव ॥ तिलैराज्येनचहोतव्यमित्यर्थः[१] ॥ प्रत्यृचमितिवदतामंत्रविभागोज्ञापितएव ॥ ऋक्शब्दश्चात्र- छंदोवाची ॥ तेनयस्यछंदसोयानिर्दिष्टाक्षरसंख्यासायस्मिन्नवसानेपूर्यतेतावत्यृक्यथाग्निमीळइतिगायत्रीऋक् ॥ गायत्रीछंदस- स्तुचतुर्विंशत्यक्षराणि तान्यग्निमीळइत्यारभ्यरत्नधातममित्यवसानेपूर्यंते तस्माज्ज्ञातात्रैकऋक् ॥ एवमुष्णिगादिष्वपिद्रष्टव्यम् ॥ ऋचोपिक्वचिदेकावसानाभवंति—क्वचिद्व्यवसानाः—क्वचित्र्यवसानाअपि ॥ तत्रैकपदाद्विपदाश्चैकावसानाः—गायत्र्यादि- शक्कर्यंताःसर्वाद्व्यवसानाः—अतिशक्कर्याद्याःप्रायःसर्वास्त्र्यवसानाइति ॥ सर्वत्रऋगंतेस्वाहाकारंपठित्वाहोतव्यंनचेन्मंत्रेपठित- इत्याद्याश्वलायनेनोक्तत्वात् ॥ यस्मिन्मंत्रेनपठितःस्वाहाकारोभवेद्यादि ॥ स्वाहांतःसप्रयोक्तव्योहोमेषुप्रणवादिनाइतिकारिको- क्तेश्च प्रतिमंत्रमादौप्रणवःपठ्यएव ॥ होमविधेरुपसाधनीभूतंकुंडकरणादिप्राचीनंतंत्रंस्विष्टकृदादिप्रतीचीनंचगृह्योक्तविधि-

---

१ प्रयोगपद्धतिकर्तृभिस्तिलाज्ययोर्नित्यकाम्यत्वेनप्राधान्येनावश्यकत्वेनचसूपपादितेपि घृताक्ततिलाएवग्राह्याइतिमुख्यःपक्षः । लभ्यतेचात्रलेखसंवादःप्राचीन- प्रयोगपुस्तकेषुयाज्ञिकमहाशयांतरनिर्मितेषु । किंचसौकर्यंसौलभ्यंसुशकंचेति । अन्वाधानत्यागादौतथैवकीर्तनीयम् । अत्रयुक्तायुक्तविचारःपरंपराधिगतश्रुतिसिद्धा- चारविज्ञैर्याज्ञिकमंडनैःपंडितैर्हृदयालुभिःकार्यः ।

नैवकुर्यात् ॥ तत्त्वविदित्यनेनास्यहोमस्याधिकारिणंदर्शयति—योवेदस्यलक्षणतोर्थतश्चतत्त्वंजानातिसएवात्राधिकारीनान्य-
इति ॥ ततःकर्मविरामेविप्राभोज्याः ॥ तेचशक्त्यपेक्षयाऋक्सूक्तवर्गाध्यायमंडलसमसंख्याः ॥ ऋगादीनांसंख्यात्वन्यत्रज्ञे-
येति ॥ ॥ अथहोमकर्तुःफलंनिरूपयन्नभिचारणेविधिविशेषमाह—सर्वकामसमृद्ध्यर्थंपरंब्रह्मेदमुच्यते ॥ १ ॥
एषैवप्रतिलोमोक्तापच्छःशत्रुविनाशिनी । अक्षरप्रतिलोमेयमभिचारेषुशस्यते ॥ २ ॥ अक्षरप्रतिलोमेयंयस्मिन्युज्येतकर्मणि ।
तदमोघंविजानीयादेतद्वैब्रह्मणोबलम् ॥ ३ ॥ व्याघातकेध्मासमिधोप्यक्षरप्रतिलोमया । जुहुयात्सार्षपंतैलंविभीतक-
कृतस्रुवः ॥४॥ यदिच्छेत्पीडनंशत्रोरपिवोच्चाटनंपुनः । पच्छःसंपीडयेच्छत्रून्वर्णशश्चप्रमापयेदिति ॥ ५ ॥ ॐकारपूर्वाव्याहृत-
योमधुच्छंदसआदितः । सूक्तान्यंतेमहानाम्न्यःसंहितासाऽमृतास्मृता ॥ १ ॥ अमृतत्वंययुर्देवाःपूर्वंसंहितयानया । जपेदेनं-
शुचिर्नित्यममृतत्वंचगच्छति ॥ २ ॥ अत्रैवतुजपेन्मध्येपितृसूक्तान्यनेकशः । पित्र्यांतांसंहितांविद्यात्पितॄन्प्रीणातिचैतया ॥३॥
एवमेवसमाहृत्यवायवीसंहिताभवेत् । रौद्र्यादित्यावैश्वदेवीयद्दैवत्यांचकामयेत् ॥ ४ ॥ कुर्वीतवास्तुशमनंमध्येगोष्ठस्यधर्मवित् ।
पुष्पैर्गंधैश्चमाल्यैश्चवानस्पत्यैस्तथौषधैः ॥ ५ ॥ वास्तुसर्वंप्रतिकिरेत्सप्रधान्यैस्तथैवच । वास्तोष्पतिंयजेच्चात्रपायसेनबृहस्पतिम्
॥ ६ ॥ औदुंबरपलाशैश्चबलिंप्रतिदिशंहरेत् । सूर्योवायुर्यमःपितरोनिर्ऋतिर्वरुणस्तथा ॥ ७ ॥ सोमोमहेंद्रइत्येतादिक्षुदिग्देव-
ताःस्मृताः । दद्याद्दानंब्राह्मणेभ्यःशिवंभवतुवास्त्विति ॥ ( भवतिवास्तुनिइतिपाठः ) ॥ ३३ ॥ ऋषीणांमंत्रदृष्टेनप्रत्यक्षात्सि-
द्धिरिष्यते । सर्वत्रदक्षिणांदद्याद्धनंवाकर्मसिद्धये ॥ ३४ ॥ नत्वेवादक्षिणंकर्मकिंचिदस्तीतिशौनकः । भक्त्याहिपूर्णपात्रेणसंमि-

ताप्यंततोभवेत् ॥ ३५ ॥ तस्मात्स्वल्पापिदातव्यादक्षिणाकर्मसिद्धये । ऋषभैकादशादद्याद्येनवातुष्यतेगुरुः ॥ ३६ ॥ धर्मज्ञेसत्यवादिनिब्रह्मदानंचदीयते । तदिदंपरमंब्रह्मगुह्यंपावनमद्भुतम् ॥३७॥ नाप्रशांतायदातव्यंनापुत्रायातपस्विने । नासंवत्सरोपितायनाशिष्यायाहितायच ॥ ३८ ॥ यएतेनैवविधिनावेदमभ्यस्यतेद्विजः । सनरःसर्वदापूतोमनःशुद्धिश्चजायते ॥ ३९॥ इति ॥

ऋक्संहिताहोमप्रयोगः॥ अथैतत्प्राचीनप्रयोगान्साधारणींपरिभाषांचानुसृत्यप्रयोगोलिख्यते ॥ तत्रवेदतत्त्ववित्तपोनिष्ठःसंहिताहोमचिकीर्षुर्ब्राह्मणोहोमदिनात्पूर्वंचतुर्थेदिनेनित्यकर्माणिनिर्वर्त्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यकरिष्यमाणऋग्वेदांतर्गतशाकलसंहिताहोमेशरीरशुद्धिद्वाराधिकारसिद्धयेप्राजापत्यकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयीभूतामुकपरिमाणद्रव्यदानेनाहमाचरिष्येइतिसंकल्पयेत् ॥ प्राजापत्यस्यगोभिन्नप्रत्याम्नायचिकीर्षायांतत्राऊहयेत्॥ततोयानिकानीतिमंत्रेणकेशश्मश्रुलोमनखानिवापयित्वाविधिनास्नायात् ॥ ततोब्रह्मकूर्चविधिनापंचगव्यंपिबेदितिकेचिदाहुः ॥ ततस्तद्दिनंवाग्यतःशुचिस्तिष्ठन्नीत्वातथाविधआसीनोरात्रिंनयेत् ॥ ततःश्वोभूतेस्नानादिकृतनित्यक्रियःप्रणवव्याहृतिपूर्विकांसावित्रींजप्त्वावक्ष्यमाणान्मंत्रान्जपेत् ॥ तेच आपोहिष्ठेतिसूक्तं शुचीवोहव्या अग्निःशुचिव्रततमः उदग्नेशुचय इत्येवंतिस्रःएतोन्विंद्रमितितिस्रश्च ऋतंचेतिसूक्तं शंनइंद्राग्नीतिसूक्तं स्वस्तिनोमिमीतेतिसूक्तशेषं स्वादिष्ठयेत्यारभ्य क्षीरंसर्पिर्मधूदकमित्यंताःपावमान्योदशोत्तरषट्शतान्यृचइति एतेमंत्राः शक्तेनसहस्रावृत्त्याजप्याः तावदशक्तेनतुशतावृत्त्या तत्राप्यशक्तेनपुनर्दशावृत्त्येति॥ एवमशक्तौप्रणवव्याहृतिपूर्विकां गायत्रीमयुतसंख्ययाजपेत् ॥ केचिन्मंत्रजपगायत्रीजपयोःसमुच्चयमाहुः ॥ तत्र ॥ वाक्यमूलेऽथवेतिपदेनगायत्रीजपस्य-

पाक्षिकत्वद्योतनात् ॥ ततःआचार्यांस्तर्पयामि ऋषींस्तर्पयामि देवतास्तर्पयामि छंदांसितर्पयामीतिजलेनतर्पयित्वा रुद्रंशरणा-
गतोसीतिभावयन्रुद्रदैवत्यमंत्रगणंजपेत् ॥ तेचमंत्राः कद्रुद्रायेतिनवर्चंसूक्तं इमारुद्रायेत्येकादशर्चंसूक्तं आतेपितरितिपंच-
दशर्चंसूक्तं इमारुद्रायस्थिरधन्वनइतिचतुष्कंसूक्तं आवोराजानं तमुष्टुहि भुवनस्यपितरं त्र्यंबकमित्येताश्चतस्रऋचइत्येतान्मंत्रान्ज-
पित्वाऽनार्यशूद्रगर्हितरजस्वलास्त्रीपतितांत्यजदेवब्राह्मणद्वेष्टृगुर्वाचार्यनिंदकमातापितृद्वेष्टृभिःसहसंभाषणादिवर्जयेत्नचकमप्य-
वमन्येत ॥ अत्रत्रिरात्रंशक्तस्योपवासाः अशक्तस्यनक्तानि ॥ एतावान्त्रिधिर्वेदपारायणहोमयोःसमानः ॥ इतऊर्ध्वंपारायणविधौ-
विशेषोविधिर्मूलतएवबोध्यः होमविधानस्यैवात्रप्रतिज्ञातत्वात्तंनलिखितवंतोवयम् ॥

एवंत्रिरात्राचीर्णव्रतश्चंद्रताराद्यानुकूल्यादिनिर्णीतेपुण्येदिनेसंभृतसंभारःकर्तास्वासनेशुचौदेशेचोपविश्याचमनप्राणायामान्कृ-
त्वादेशकालौसंकीर्त्याऽमुकगोत्रस्यामुकशर्मणोममपूर्वजन्मेहजन्मसंचितसकलपापनिबर्हणद्वाराभीष्टकामसिद्ध्यर्थं श्रीवेदपुरु-
षांतर्गतसावित्रीप्रजापतिप्रीत्यर्थंचऋग्वेदांतर्गतशाकलसंहितायाःप्रत्यृचंतिलाज्यद्रव्यहोमंकरिष्यइतिसंकल्प्य तदंगंगणपति-
पूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये । ग्रहानुकूल्यार्थंग्रहयज्ञंआचार्यादिवरणंचकरिष्यइतिसंकल्पयेत् ॥ स्वयंहो-
मचिकीर्षायांब्रह्मादीनेववृणुयान्नत्वाचार्यं ॥ किंच ॥ श्रीकामःशांतिकामोवाग्रहयज्ञंसमाचरेत् ॥ तथा नैतद्दतेविसिध्यंतिकर्माणि-



---

१ देवताछंदःशब्दयोःप्रथमाविभक्तिस्वीकारेतृप्यंत्वितिक्रियाविज्ञेया ।

निखिलान्यपीतिवचनाद्ग्रहयज्ञसमुच्चयेच्छायांप्रजापतिप्रीत्यर्थमित्यंतेग्रहयज्ञपुरःसरमितिसंकल्पवाक्येऊहयेत् ॥ ततोगणेश-पूजनादिनांदीश्राद्धांतंकृत्वाआचार्यादीन्वृत्वा स्वयंहोमपक्षेब्रह्मादीनेववावृत्वामधुपर्कादिनापूजयेत् ॥ ततआचार्यःपवनपावन-भूशुद्ध्यादिविधिनात्मानंपावयित्वामंगलतूर्यादिघोषेणहोममंडपंप्रविश्यसर्षपविकिरणपंचगव्यप्रोक्षणादिदेवयजनंरक्षस्वेत्यंते हेमाद्र्याद्युक्तरीत्यामंडपपूजांकुर्यात् ॥ यथोक्तमंडपाभावपक्षेमंडपपूजापिनविधेया ॥ ततोद्विहस्तपरिमितनिर्मितकुंडात्स्थंडिला-द्वाप्राच्यांनिर्मितचतुरस्रवेद्यांसर्वतोभद्रमंडलंविरच्यतस्मिन्ब्रह्मादिमंडलदेवताआवाह्यतदुपरिमहीद्यौरित्यादिविधिनाकलशौसं-स्थाप्यप्रथमकलशोपर्यापलान्माषावधिहेमनिर्मितायांसावित्रीप्रतिमायामभ्युत्तारणविधिसंस्कृतायांसावित्रीमावाहयेदेवं ॥ त-त्सवितुर्विश्वामित्रःसविताागायत्रीसावित्र्यावाहनेविनियोगः ॐतत्सवितु० प्रचोदयात् भूर्भुवःस्वःसावित्रींसांगांसपरिवारांसा-युधांसशक्तिकामस्यांसुवर्णप्रतिमायामावाहयामीत्यावाह्य तदस्त्वित्यादिनाप्रतिष्ठापयेत् ॥ ततोद्वितीयकलशेपंचाशद्भिःकुशै-र्वत्सजानुसदृशंवेदंकृत्वातंनिधायतदुपरिप्रागुक्तपरिमाणांसौवर्णींब्रह्मप्रतिमामवस्थाप्यतत्रब्रह्माणमावाहयेदनेनमंत्रेण ॥ ब्रह्म-

---

१ ग्रहयज्ञेसमिच्चर्वाज्यहोमस्यमुख्यत्वात् हुतशिष्टचरोःप्रधानयागादूर्ध्वंकर्तव्यस्विष्टकृदर्थमवश्यत्वात् तस्यच यावद्यागसमाप्तिपर्युषितत्वेनाधार्यत्वाद्ग्रहयज्ञस्य पार्थक्यमुचितम् । यद्वाऽन्वाधानवाक्ये समित्तिलाज्यैरितिवदेत् । अथवा लक्षहोमकोटिहोमादाविवग्रहहोमोत्तरंचरोःस्विष्टकृतंहुनेत् । अंतेपितिलैःस्विष्टकृद्धोमो भिन्नः । एतत्सर्वं श्रीभट्टकमलाकरचरणैःशांतिरत्नेऽयुतहोमप्रयोगेसुस्पष्टमुपपादितम् । किंच यथोक्तमंडपे कूटमंडपेवाग्रहयज्ञेवास्तुहोमादौचपार्थक्येनसंपादितेग्रह-दिक्पालबलिदानादौ हुतशिष्टग्रहणाचारावलंबनमपिस्यात् । पौष्टिकत्वादस्यकर्मणोबलिदानाभावेपिनक्षतिः ।

जज्ञानं गौतमो वामदेवो ब्रह्मा त्रिष्टुप् ब्रह्मावाहने विनियोगः ॐ ब्रह्म जज्ञानं प्रथमं० विच ः भूर्भुवः स्वः ब्रह्माणं सांगं सपरिवारमित्यावाह्य ध्यायेत् ॥ यथा ॥ एह्येहि सर्वाधिपते सुरेंद्र लोकेन सार्धं पितृदेवताभिः । सर्वस्य धातास्यमितप्रभावो विशाध्वरं नः सततं हिताय ॥ १ ॥ हंसारूढं चतुर्वक्त्रं श्मश्रुलं रक्तवर्णकं । लंबोदरं च जटिलं चतुर्बाहुं प्रजापतिं ॥ २ ॥ अक्षमालां दर्भमुष्टिमूर्ध्वाधो दक्षिणे करे । स्रुवं कमंडलुं वामकरे सावित्रिसंयुतं ॥ ३ ॥ पद्मयोनिं चतुर्मूर्तिं वेदावासं पितामहं । यज्ञाध्यक्षं चतुर्वक्त्रं तस्मै तुभ्यं नमोनमः ॥ ४ ॥ इत्थं ध्यात्वा सावित्रीं ब्रह्माणं च कांडानुसमयेन पदार्थानुसमयेन वा षोडशोपचारैः पूजयेत् ॥ एतावत्कर्माचार्यसद्भावेपि यजमान एव कुर्यादिति केषांचिदाशयः ॥ अथाचार्यः कुंडे स्थंडिले वा तत्तदुक्तसंस्कारकरणपूर्वकमग्निस्थापनाग्निसंस्काराग्निध्यानान्युक्तमार्गेण कृत्वा ग्रहयज्ञपक्षे कुंडादीशान्यामुक्तलक्षणायां ग्रहवेद्यां सूर्यादिग्रहान् तदधिदेवतास्तत्प्रत्यधिदेवताः क्रतुसाद्गुण्यदेवताः क्रतुसंरक्षकदेवताश्चावाह्य संपूज्य तदीशान्यां कलशे वरुणं स्थापनपूर्वकं संपूज्याग्रेरंतिकमागत्यान्वादध्यात् ॥ तद्यथा ॥ समिद्द्वयं त्रयं वादाय देशकालौ स्मृत्वा सनवग्रहमखऋग्वेदांतर्गतशाकलसंहिताहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये ॥ ग्रहयज्ञाकरणपक्षे सनवग्रहमख इति नोच्चार्यं किंतु ऋग्वेदांतर्गतेत्यादि करिष्य इत्यंतमेवोच्चारयेत् ॥ ततोस्मिन्नन्वाहितेग्नावित्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा ग्रहयज्ञपक्षे सूर्यादिग्रहान् अष्टोत्तरशताष्टाविंशत्यष्टान्यतमसंख्याभिः अर्कादिजातीयसमिच्चर्वाज्याहुतिभिः तदधिदेवतास्तत्प्रत्यधिदेवताश्च तैरेव द्रव्यैः तन्न्यूनसंख्याहुतिभिः गणपत्यादिक्रतुसाद्गुण्यदेवताः इंद्रादिक्रतुसंरक्षकदेवताश्च तैरेव द्रव्यैः ततोपि न्यूनसंख्याहुतिभिरिति ॥ ग्रहयज्ञाकरणपक्षे त्वेतदनिर्दिश्यैवात्र प्रधानं—अग्निं १ सोमं २ विश्वान्देवान् ३ ब्रह्माणं ४

ऋषीन् ५ ऋग्वेदं ६ यजुर्वेदं ७ सामवेदं ८ सावित्रीं ९ ब्रह्माणं १० श्रद्धां ११ मेधां १२ प्रज्ञां १३ धारणां १४ सदसस्पतिं १५ अनुमतिं १६ छंदांस्यृषीन् १७ श्रियं १८ ह्रियं १९ सवितारं २० शतर्चिनः २१ माध्यमान् २२ गृत्समदं २३ विश्वामित्रं २४ वामदेवं २५ अत्रिं २६ भरद्वाजं २७ जामदग्न्यं २८ गौतमं २९ वसिष्ठं ३० प्रगाथान् ३१ पावमानीः ३२ क्षुद्रसूक्तान् ३३ महासूक्तान् ३४ महानाम्नीं ३५ उपनिषदं ३६ हव्यवाहं ३७ एतादेवतास्तिलाज्याभ्यामेकैकयाहुत्यायक्ष्ये ॥ पुनरत्रप्रधानं—अग्निनववारं ९ वायुं ३ इंद्रवायू ३ मित्रावरुणौ ३ अश्विनौ ३ इंद्रं ३ विश्वान्देवान् ३ सरस्वतीं ३ इंद्रं २३ मरुतः १ इंद्रमरुतः १ मरुतः १ इंद्रमरुतः १ मरुतः २ इंद्रं ५१ अग्निं ५ निर्मथ्याहवनीयावग्नी १ अग्निं ६ समिद्धमग्निं १ तनूनपातं १ नराशंसं १ इळं १ बर्हिषं १ देवीर्द्वारः १ उषासानक्ते १ दैव्यौहोतारौप्रचेतसौ १ सरस्वतीळाभारतीः १ त्वष्टारं १ वनस्पतिं १ स्वाहाकृतीः १ विश्वान्देवान् १२ इंद्रं १ मरुतः १ त्वष्टारं १ अग्निं १ इंद्रं १ मित्रावरुणौ १ द्रविणोदसमग्निं ४ अश्विनौ १ अग्निं १ इंद्रं ९ इंद्रावरुणौ ९ ब्रह्मणस्पतिं ३ इंद्रसोमब्रह्मणस्पतीन् १ दक्षिणेंद्रसोमब्रह्मणस्पतीन् १ सदसस्पतिं ३ नराशंसं १ अग्नामरुतः ९ [१] ऋभून् ८ इंद्राग्नी ६ अश्विनौ ४ सवितारं ४ अग्निं २ देवीः १

---

१–अत्रान्वाधाने ऐभिरग्नइत्यादिवैश्वदेवसूक्तेषु ‘वैश्वदेवत्वंसूक्तभेदप्रयोगे’इतिसर्वानुक्रममवष्टभ्यदेवताविभागंकेचिदिच्छंतितस्यपाक्षिकत्वाद्बहुविस्तृतिशंकयाच नास्माभिर्मध्येसमावेशःकृतः। अथचेद्भेदप्रयोगएवसौरस्यंमन्यमानास्तदाटिप्पनेनिवेशितादेवताआलोच्यतत्रतत्रान्वाधानेसंबध्योह्याः। २–इध्मंवा। ३–भेदपक्षे अग्निं २ विश्वान्देवान् १ अग्निं ९ (एवं १२)। ४–इतश्चतुर्णा[illegible]

इंद्राणीवरुणान्यग्नायीः १ द्यावापृथिव्यौ २ पृथिवीं १ विष्णुं ६ वायुं १ इंद्रवायू २ मित्रावरुणौ ३ मरुतः[1] ३ विश्वान्देवान् ३ पूषणं ३ अपः ७ अग्न्यपः १ अग्निं १ कम् १ अग्निं १ संवितारं[2] ३ वरुणं ३१ अग्निं २२ देवान् १ इंद्रं ४ उलूखलं २ उलूखलमुसले २ प्रजापतिंहरिश्चंद्रं[3] १ इंद्रं २३ अश्विनौ ३ उषसं ३ अग्निं १८ इंद्रं ३० [१५/१५ ।२] अश्विनौ १२ अग्निमित्रवरुणरात्रिसवितॄन् १ सवितारं १ अग्निं १२ यूपं २ अग्निं ६ मरुतः ४० ब्रह्मणस्पतिं ८ वरुणमित्रार्यम्णः ३ आदित्यान् ३ वरुणमित्रार्यम्णः ३ पूषणं १० रुद्रं २ रुद्रमित्रवरुणान् १ रुद्रं ३ सोमं ३ अग्न्यश्व्युषसः २ अग्निं २१ अग्निदेवान् १ अश्विनौ २५ [१५/१० ।३] उषसं २० सूर्यं १३ इंद्रं ७२ अग्निं ९ वैश्वानरमग्निं ७ अग्निं ५ इंद्रं ३८ [१६/२२ ।४] मरुतः १५ अग्निं १३२ इंद्रं ५७ [१६/४१ ।५] मरुतः ३४ विश्वान्देवान्[4] १९ सोमं २३ उषसं १५ अश्विनौ ३ अग्नीषोमौ १२ अग्निं ७ देवाग्नीन् १ अग्निं ७ अग्निमित्रवरुणादितिसिंधुपृथिवीद्याः[5] १ [ ६ ] उषसमग्निं[6] ११ द्रविणोदसमग्निं ९ शुचिमग्निं ८ वैश्वानरमग्निं ३ जातवेदसमग्निं १ इंद्रं ५८ विश्वान्देवान् २९ इंद्राग्नी २१ ऋभून् १४ द्यावापृथिव्यग्न्यश्विनः १ अश्विनौ २४

---

१–मरुत्वानिंद्रइतिकेचित्। २–भगभक्तस्येत्यस्याभगोवा। ३–अधिषवणचर्मदेवतावा। ४–मे. प. विश्वान्देवान् ४ इंद्रापूषणौ १ विश्वान्देवान् ४ अदितिं १ विश्वान्देवान् ९ (एवं १९)। ५–यद्दैवत्यंवासूक्तमितिपक्षेग्निरेवदेवता। ६–द्वेविरूपइत्यारभ्यजातवेदसइत्यंतंशुद्धोग्निर्विकल्पेन। ७–मे. प. विश्वान्देवान् १ रोदसी १ विश्वान्देवान् १ अग्निरोदसीः १ विश्वान्देवान् ३ इंद्ररोदसीः १ सूर्यरश्मिरोदसीः १ विश्वान्देवान् १ सूर्यरश्मिरोदसीः १ विश्वान्देवान् १ रोदस्यौ २ वरुणरोदसीः १ विश्वान्देवान् २ रोदसी १ विश्वदेवान् ११ (एवं २९)।

[ ७ ] उषोरात्री १ उषसं १९ रुद्रं ११ सूर्यं ६ अश्विनौ ८३ इंद्रं १५ [ ८ ] विश्वान्देवान् १५ उषसं २६ स्वनयं ७ भावयव्यं ५ रोमशां १ भावयव्यं १ अग्निं १९ इंद्रं ५ इंदुं १ इंद्रं २७ इंद्रापर्वतेंद्रान् १ इंद्रं ७ वायुं ९ इंद्रवायू ५ वायुं १ मित्रावरुणौ ५ सूर्यरोदसीमित्रवरुणरुद्रेंद्राग्न्यर्यमभगसोमान् १ देवमरुदग्निमित्रवरुणमघवतः १ [ ९ ] मित्रावरुणौ ३ पूषणं ४ विश्वान्देवान् १ मित्रावरुणौ १ अश्विनौ ३ इंद्रं १ अग्निं १ मरुतः १ इंद्राग्नी १ बृहस्पतिं १ विश्वान्देवान् १ अग्निं २६ समिद्धमग्निं १ तनूनपातं १ नराशंसं १ इळं १ बर्हिषं १ देवीर्द्वारः १ उषासानक्ते १ दैव्यौहोतारौप्रचेतसौ १ सरस्वतीळाभारतीः १ त्वष्टारं १ वनस्पतिं १ स्वाहाकृतीः १ इंद्रं १ अग्निं ४३ मित्रं १ मित्रावरुणौ १९ विष्णुं ६ इंद्राविष्णू ३ विष्णुं ८ अश्विनौ १२ [ $\frac{६}{६}$।१० ] द्यावापृथिव्यौ १० ऋभून् १४ अश्वं ३५ विश्वान्देवान् ४१ वाक्समुद्राक्षरापः १ शकधूमसोमौ १ अग्निवायुसूर्यान् १ वाचं ९ सूर्यं २ कालचक्रं १ सरस्वतीं १ साध्यान् १ सूर्यं[२] १ सरस्वंतं १ मरुत्वंतमिंद्रं १५ [ ११ ] मरुतः १५ इंद्रं १ मरुतः २० इंद्रं १३ मरुतः २ मरुत्वंतमिंद्रं ४ मरुतः ३ इंद्रं ४५ रतिं ६ अश्विनौ २९ [ $\frac{३३}{६}$।१२ ] द्यावापृथिव्यौ ११ विश्वान्देवान्[३] ११ अन्नं ११ समिद्धमग्निं १ तनूनपातं १ इळं १ बर्हिषं १ देवीर्द्वारः १ उषासानक्ते १ दैव्यौहोतारौप्रचेतसौ १ सरस्वतीळाभारतीः १ त्वष्टारं १ वनस्पतिं १ स्वाहाकृतीः १ अग्निं ८

---

१—मे. प. रुद्रमरुतः १ उषासानक्ते १ विश्वान्देवान् १ अश्विनौ १ विश्वान्देवान् १ मित्रवरुणसिंधून् १ विश्वान्देवान् २ मित्रावरुणौ २ विश्वान्देवान् ५ ( एवं १५ )। २—पर्जन्याग्नीवा। ३—मे. प. विश्वान्देवान् ४ अदितिं[illegible] १ त्वष्टारं १ इंद्रं १ मरुतः २ विश्वान्देवान् २ ( एवं ११ )।

बृहस्पतिं ८ अप्तृणसूर्यान् १६ अग्निं २९ समिद्धमग्निं १ नराशंसं १ इळं १ बर्हिषं १ देवीर्द्वारः १ उषासानक्ते १ दैव्यौहोतारौप्रचेतसौ १ सरस्वतीळाभारतीः १ त्वष्टारं १ वनस्पतिं १ स्वाहाकृतीः १ अग्निं ४९ [ ³⁷₁₂।१३ ] इंद्रं १२६ ब्रह्मणस्पतिं १ बृहस्पतिं ३ ब्रह्मणस्पतिं १ बृहस्पतिं ३ ब्रह्मणस्पतिं १ बृहस्पतिं १ ब्रह्मणस्पतिं १ बृहस्पतिं ५ ब्रह्मणस्पतिं १ बृहस्पतिं १ ब्रह्मणस्पतिं १ [ १४ ] बृहस्पतिं १ ब्रह्मणस्पतिं ८ बृहस्पतिं १ ब्रह्मणस्पतिं १ इंद्राब्रह्मणस्पती १ ब्रह्मणस्पतिं १३ आदित्यान् १७ वरुणं ११ विश्वान्देवान् ७ इंद्रं ५ इंद्रासोमौ १ इंद्रं १ सरस्वतींद्रौ १ बृहस्पतिं १ इंद्रं १ मरुतः १ विश्वान्देवान्[1] ७ द्यावापृथिव्यौ १ इंद्रं २ राकां २ सिनीवालीं २ गुंगूसिनीवालीराकासरस्वतींद्राणीवरुणानीः १ रुद्रं १५ मरुतः १५ अपान्नपातं १५ इंद्रं[3] १ मरुतः १ त्वष्टारं १ अग्निं १ इंद्रं १ मित्रावरुणौ १ [ १५ ] द्रविणोदसं ४ अश्विनौ १ अग्निं १ सवितारं ११ अश्विनौ ८ सोमापूषणौ ५ सोमापूषणादितीः १ वायुं २ इंद्रवायू १ मित्रावरुणौ ३ अश्विनौ ३ इंद्रं ३ विश्वान्देवान् ३ सरस्वतीं ३ द्यावापृथिव्यौ ३ शकुंतं ६ अग्निं २३ वैश्वानरमग्निं २६ समिद्धमग्निं १ तनूनपातं १ इळं १ बर्हिषं १ देवीर्द्वारः १ उषासानक्ते १ दैव्यौहोतारौप्रचेतसौ १ सरस्वतीळाभारतीः १ त्वष्टारं १ वनस्पतिं १ स्वाहाकृतीः १ अग्निं ३३ [ ²²₁₁।१६ ] यूपं ५ यूपान् ५ अश्वनं १ अग्निं २७ इंद्राग्नी ९ अग्निं ४२ विश्वान्देवान् १

१–मे. प. विश्वान्देवान् ६ वरुणं १ (एवं ७)। २–मे. प. मित्रावरुणौ १ विश्वान्देवान् १ उषासानक्ते १ विश्वान्देवान् २ द्यावापृथिवी १ इंद्रं १ (एवं ७)। ३–इंद्रमित्यादीनांषण्णामृतुविशेषणंवा। ४–हविर्धानावा। ५–प्रत्यग्निःप्रकारवेसूक्तयोरन्यासांद्यावापृथिव्यादीनांनिपाताद्दृश्यंतेअतस्तयोर्लिंगोक्तादेवताःपाक्षिकाः। ६–अत्रसूक्तेऽष्टम्याविश्वेदेवावा।

देवान् ४ पथ्यास्वस्ति २ विश्वदेवादितीः १ देवान् २ नराशंसपूषाग्निसूर्यचंद्रमोयमेंद्रवायूषोरात्र्यश्विनः १ अग्निबृहस्पत्यजैकपादहि-
र्बुध्न्यान् १ पृथिव्यर्यमणौ १ अश्वान् १ वाय्विंद्रपूषणः १ एकविंशतिनद्यृभुवनस्पतिपर्वताग्निकृशान्वस्तृतिष्यरुद्रान् १ नदीसरस्वती-
सरयुसिंध्वाद्याः १ देवमातृदेवपत्नीत्वष्ट्रिंद्रवाजभगमरुतः १ मरुतः १ मरुदिंद्रादिदेववरुणमित्रान् १ मरुददितीः १ द्यावापृथिव्यौ
१ होत्रायज्ञौ १ गयं १ विश्वदेवादितीः १ अग्नींद्रवरुणमित्रार्यमवायुपूषसरस्वत्यादित्यविष्णुमरुद्द्युसोमरुद्रादितिब्रह्मणस्पतीन् १
इंद्राग्नीषोमान् १ देवान् २ मित्रावरुणौ १ गां १ देवान् १ द्यावापृथिव्यौ १ पर्जन्येंद्रवायुवरुणमित्रार्यमादितिपार्थिवदिव्यांतरिक्ष-
देवान् १ ऋभुसोमान् १ देवान् १ अश्विनौ १ माध्यमिकवागजैकपात्सिंध्वद्भिश्वदेवसरस्वतीः १ देवान् १ देवानिंद्रज्येष्ठान् १
मरुतः १ इंद्रवस्वादित्यादितिरुद्रमरुत्त्वष्टृदेवपत्नीः १ अदितिद्युपृथिव्यग्नींद्रविष्णुमरुदादित्यवसुरुद्रसवितॄन् १ सरस्वद्वरुणपूषवि-
ष्णुवाय्वश्विनः १ यज्ञदेवर्त्विगध्वर्य्वादिद्युपृथिवींद्रान् १ अग्नीषोमौ १ देवान् २ देववातपर्जन्यावोषध्यर्यमाग्निवायुसूर्यान् १ सिंध्वं-
तरिक्षाजैकपान्मेधाहिर्बुध्न्यदेवान् १ देवान् १ अग्न्यादित्यक्षेत्रपतीन् १ देवान् २ बृहस्पतिं २४ अग्निं १२ अग्निंसमिद्धं १ अग्निं-
नराशंसं १ अग्निमिळं १ अग्निंबर्हिषं १ अग्निमूर्तीर्देवीर्द्वारः १ अग्निमूर्तींउषासानक्ते १ अग्नीदैव्यौहोतारौप्रचेतसौ १ अग्निमूर्तीः-
सरस्वतीळाभारतीः १ अग्निंत्वष्टारं १ अग्निंवनस्पतिं १ स्वाहाकृतीः १ ज्ञानं ११ ॥५८॥ देवान् ९ इंद्रं १७ नदीः ९ आ०णः ८
मरुतः १६ अग्निं १४ विश्वकर्माणं १४ मन्युं १४ सोमं ५ सूर्याविवाहं ११ देवान् १ सोमार्कौ १ चंद्रमसं १ विवाहमंत्रा-
शिषः ९ वधूवासःसंस्पर्शनिंदां २ दंपतियक्ष्मनाशं १ सूर्यासावित्रीं १६ ॥५९॥ इंद्रं २३ अग्निंरक्षोहणं २५ सूर्यमग्निंवैश्वानरंच १९

इंद्रं ४ सोमेंद्रौ १ इंद्रं १३ पुरुषं १६ अग्निं १५ देवान् १ अग्निं ३ अम्मरुदिंद्रान् १ मरुद्वरुणमित्रार्यमेंद्रान् १ इंद्रासूर्यौ १ इंद्रं १ रुद्रं १ बृहस्पतिसोमजाम्यथर्वदेवभृगून् १ द्युपृथिवीनराशंसयमादितित्वष्टृद्रविणोदऋभुरोदसीमरुद्विष्णून् १ अहिर्बुध्न्यसूर्यचंद्रमोद्युपृथिवीः १ पूषापांनपाद्वाय्वश्विनः १ अग्निदेवपद्व्यदितिचंद्रसूर्येंद्रान् १ अंगिरोग्रावेंद्रवस्वदितीः १ द्यावापृथिव्यौ १ देवान् २ अर्यममित्रवरुणदेवजनरुद्रमरुद्गणान् १ सूर्यचंद्रमोहिर्बुध्न्याश्विनः १ मित्रवरुणाश्विनः १ अश्विपूषभगभर्वादिब्रह्मादीन् १ इंद्रं १ सवित्रिंद्रमरुतः १ द्यावापृथिव्यौ १ इंद्रं १ देवस्तोत्रं १ गोयाच्ञां १ प्राण्णः १४ ॥ ६० ॥ उर्वशीं १ पुरूरवसं १ उर्वशीं १ पुरूरवसं २ उर्वशीं १ पुरूरवसं १ उर्वश्याद्यप्सरसः १ उर्वशीं १ पुरूरवसं १ उर्वशीं १ पुरूरवसं १ उर्वशीं १ पुरूरवसं २ उर्वशीं १ पुरूरवसं १ इंद्राश्वौ १३ औषधीः २३ बृहस्पतिमित्रवरुणपूषादित्यवस्विंद्रान् १ बृहस्पतिं ३ देवान् २ बृहस्पतिं १ अग्निं ५ इंद्रं १२ इंद्रदेवसवित्रदितीः १ गवादितीः १ इंद्रादिती २ ऋत्विजः १२ द्रुघणं १२ इंद्रं ३ बृहस्पतिं १ इंद्रं ७ देवीमप्वां १ मरुतः १ इंद्रं २२ ॥ ६१ ॥ अश्विनौ ११ दक्षिणां ११ सरमां १ पणीनसुरान् १ सरमां १ पणीनसुरान् १ सरमां १ पणीनसुरान् १ सरमां १ पणीनसुरान् १ सरमां १ पणीनसुरान् १ आदित्यवरुणवाय्वग्निसोमापाः १ सोमवरुणमित्राग्निबृहस्पतिब्रह्मजायादानानि १ देवबृहस्पतिब्रह्मजायाः १ देवसप्तर्षिबृहस्पतिब्रह्मजायाः १ देवजुहूबृहस्पतीन् १ देवमनुष्यराजबृहस्पतिब्रह्मजायादानानि १ देवबृहस्पतिब्रह्मजायाबार्हस्पत्ययज्ञान् १ अग्निंसमिद्धं १ अग्निंतनूनपातं १ अग्निमिळं १ अग्निंबर्हिषं १ अग्निमूर्तीर्देवीर्द्वारः १ अग्निमूर्तीउपासानक्के १ अग्नीदैव्यौहोतारौप्रचेतसौ १ अग्निमूर्तीःसरस्वतीळाभारतीः १ अग्नि-

त्वष्टारं १ अग्निंवनस्पतिं १ स्वाहाकृतीः १ इंद्रं ३० अग्न्यादित्यवायुसूर्यरश्मीन् १ अग्निवायुसूर्यान् १ वेदिजायापतिदेवान् १ देवं-
मध्यमस्थानं १ वाचंमाध्यमिकांचपरमात्मछंदःसोमग्रहान् १ यज्ञं २ ब्रह्मसर्वरूपांवाचं १ छंदोयोगधिष्ण्यवागृत्विगिंद्राश्वान् १ सप्ताश्वसू-
र्यान् १ अग्निं ९ इंद्रं ९ धनान्नदानं ९ अग्निंरक्षोहणं ९ इंद्रं २२ [ १३ ९ ] ॥ ६२ ॥ प्रजापतिं १० अग्निं ८ वेनं ८ अग्निं ४ वरुणं १
सोमं १ वरुणापाः २ इंद्रं १ वाचमांभृणीं ८ देवार्यममित्रवरुणान् १ वरुणमित्रार्यम्णः ३ वरुणमित्रार्यममरुद्रुद्रेंद्रान् १
वरुणमित्रार्यम्णः १ वरुणमित्रार्यमादित्यान् १ वसुमित्रवरुणार्यमाग्नीन् १ रात्रिं ८ अग्निं १ इंद्रमरुद्विष्णवग्न्यंतरिक्षवायून् १ देवान् २
द्युपृथिव्यहोरात्र्यवोषधिदेवसोमान् १ अग्निं १ इंद्राश्विबृहस्पतिदेवान् १ इंद्रं १ इंद्राग्निवसुरुद्रादित्यान् १ भाववृत्तिं १४ इंद्रं ३
अश्विनौ २ इंद्रं २ द्युभूम्यश्विनः १ मित्रावरुणौ ६ इंद्रं १४ यमं ७ अग्निसूर्यवायून् ७ देवान् १ वातौ १ वातं २ देवमरुद्भूतानि १
अपः १ जिह्वां १ इंद्रं ६ सवितारं ३ विश्वावसुं ३ अग्निं ७ अर्यमभगबृहस्पतिदेववाग्देवीः १ सोमाग्न्यादित्यविष्णुसूर्यब्रह्मबृहस्प-
तीन् १ इंद्रवायुबृहस्पतीन् १ अर्यमबृहस्पतींद्रवायुविष्णुसरस्वतीसवितॄन् १ अग्निं ९ ॥ ६३ ॥ अश्विनौ ६ इंद्रं ६ सपत्नीबाधनं ६
अरण्यानीं ६ इंद्रं १० सवितारं ५ अग्निं ५ श्रद्धां ५ इंद्रं १० भाववृत्तं ५ अलक्ष्मीनाशनं १ ब्रह्मणस्पतिं २ अलक्ष्मीनाशनं १
विश्वान्देवान् १ अग्निं ५ इंद्रदेवान् २ इंद्रमरुद्देवान् १ देवान् २ सूर्यं ५ शचीं ६ इंद्रं १० गर्भसमाधानं ६ यक्ष्मनाशनं ६ दुःस्व-
प्ननाशनं ५ देवान् ३ यमं १ देवान् १ सपत्ननाशनं ५ इंद्रं २ सोमवरुणबृहस्पत्यनुमतींद्रधातृविधातॄन् १ इंद्रं १ वायुं ४ गाः ४
सूर्यं ४ इंद्रं ४ उषसं ४ अभिषिक्तराजस्तुतिं ११ ग्राव्णः ४ ऋभून् १ अग्निं ३ मायाभेदं ३ तार्क्ष्यं ३ इंद्रं ६ धातृसवितृविष्णून् १

धातृसवितृविष्ण्वग्नीन् १ धातृसवितृविष्णुसूर्यान् १ बृहस्पतिं ३ पुत्रकामयजमानाशिषः १ पुत्रकामपत्न्याशिषः १ होत्राशिषः १ विष्णुत्वष्टृप्रजाविधातॄन् १ सिनीवालीसरस्वत्यश्विनः १ अश्विनौ १ अदितिं ३ वायुं ३ अग्निं ५ अग्निंजातवेदसं ३ सूर्यं ३ भाववृत्तिं ३ अग्निं १ संज्ञानं ३ ॥ ६४ ॥ इतिशाकलसंहितामंत्रदेवतान्वाधानम् ॥

## अनुवाकाद्यृग्देवतान्वाधानम् ।

श्रीः ॥ अग्निं १ इंद्रंद्विः ३ अग्निं ४ ब्रह्मणस्पतिं ५ कं ६ अग्निंद्विः ८ अग्न्यश्व्युषसः ९ इंद्रं १० अग्निंत्रिः १३ मरुतः १४ अग्निं १५ इंद्रं १६ अश्विनौ १७ इंद्रं १८ अग्निं १९ वायुं २० अग्निं २१ अश्विनौ २२ इंद्रंमरुत्वंतं २३ अश्विनौ २४ अग्निं २५ इंद्रं २६ ब्रह्मणस्पतिं २७ रुद्रं २८ अग्निंद्विः ३० इंद्रंद्विः ३२ अग्निंत्रिः ३५ इंद्रं ३६ ऋभून् ३७ वायुं ३८ अग्निंद्विः ४० इंद्रं ४१ इंद्रसूर्यौ ४२ मरुतः ४३ अश्विनौ ४४ अग्निंद्विः ४६ इंद्रंद्विः ४८ विश्वान्देवान् ४९ अश्विनौ ५० अग्निं ५१ इंद्रं ५२ देवान् ५३ मरुतः ५४ अश्विनौ ५५ इंद्रवायू ५६ इंद्रंचतुः ६० यज्ञयजमानौ ६१ अग्निंद्विः ६३ इंद्रंद्विः ६५ मरुतः ६६ सोमंपवमानंसप्त ७३ अग्निं ७४ सरण्यूः ७५ अपोपोनपातंवा ७६ इंद्रं ७७ रुद्रं ७८ अग्निं ७९ सोमं ८० अग्निं ८१ विश्वान्देवान् ८२ इंद्रं ८३ भाववृत्तिं ८४ इंद्रं ८५ ॥ इत्यनुवाकदेवताःपंचाशीतिः ॥

## अनुवाकाद्यृचामृष्यादयः ।

श्रीः ॥ अग्निमीळइत्यस्यवैश्वामित्रोमधुच्छंदाअग्निर्गायत्री १ सुरूपकृत्नुमित्यस्यवैश्वामित्रोमधुच्छंदाइंद्रोगायत्री २ एंद्रसानसिमित्यस्य

वैश्वामित्रोमधुच्छंदाइंद्रोगायत्री ३ अग्निंदूतमित्यस्यकाण्वोमेधातिथिरग्निर्गायत्री ४ सोमानमित्यस्यकाण्वोमेधातिथिर्ब्रह्मणस्पतिर्गायत्री ५ कस्यनूनमित्यस्याजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोदेवरातःकस्त्रिष्टुप् ६ त्वमग्नेप्रथमइत्यस्यांगिरसोहिरण्यस्तूपोग्निर्जगती ७ प्रवोयह्व-मित्यस्यघौरःकण्वोग्निर्बृहती ८ अग्नेविवस्वदित्यस्यकाण्वःप्रस्कण्वोग्न्यश्व्युषसोबृहती ९ अभित्यंमेषमित्यस्यांगिरसःसव्यइंद्रोजगती १० नूचित्सहोजाइत्यस्यगौतमोनोधाअग्निर्जगती ११ पश्वानतायुमित्यस्यशाक्त्यःपराशरोग्निर्द्विपदाविराट् १२ उपप्रयंतइत्यस्यराहूगणोगोत-मोग्निर्गायत्री १३ प्रयेशुंभंतइत्यस्यराहूगणोगोतमोमरुतोजगती १४ इमंस्तोममित्यस्यांगिरसःकुत्सोग्निर्जगती १५ इंद्रंमित्रंवरुणमग्निमू-तयइत्यस्यांगिरसःकुत्सइंद्रोजगती १६ नासत्याभ्यामित्यस्यदैर्घतमसःकक्षीवानश्विनौत्रिष्टुप् १७ कदित्थानॄनित्यस्यदैर्घतमसःकक्षीवानिंद्र-स्त्रिष्टुप् १८ अग्निंहोतारमित्यस्यदैवोदासिःपरुच्छेपोग्निरत्यष्टिः १९ आत्वाजुवइत्यस्यदैवोदासिःपरुच्छेपोवायुरत्यष्टिः २० वेदिषदइत्यस्यौ-चथ्योदीर्घतमाअग्निर्जगती २१ अवोध्यग्निरित्यस्यौचथ्योदीर्घतमाअश्विनौजगती २२ कयाशुभेत्यस्यैंद्रइंद्रोमरुत्वांस्त्रिष्टुप् २३ युवोर-जांसीत्यस्यमैत्रावरुणिरगस्त्योश्विनौत्रिष्टुप् २४ त्वमग्नेद्युभिरित्यस्यशौनकोगृत्समदोग्निर्जगती २५ योजातएवेत्यस्यशौनकोगृत्समदइंद्रस्त्रि-ष्टुप् २६ गणानांत्वेत्यस्यशौनकोगृत्समदोब्रह्मणस्पतिर्जगती २७ आतेपितरित्यस्यशौनकोगृत्समदोरुद्रोनिचृत्त्रिष्टुप् २८ सोमस्यमेत्यस्य गाथिनोविश्वामित्रोग्निस्त्रिष्टुप् २९ प्रवोदेवायेत्यस्यवैश्वामित्रऋषभोग्निरनुष्टुप् ३० इच्छंतित्वेत्यस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् ३१ इंद्रं-मतिरित्यस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् ३२ इमंमहइत्यस्यवैश्वामित्रोवाच्योवाप्रजापतिरग्निस्त्रिष्टुप् ३३ त्वांह्यग्नइत्यस्यगौतमोवामदेवो-ग्निरष्टिः ३४ भद्रंतेअग्नइत्यस्यगौतमोवामदेवोग्निस्त्रिष्टुप् ३५ यमग्नइंद्रइत्यस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् ३६ प्रऋभुभ्यइत्यस्यगौतमोवामदेव-

ऋभवस्त्रिष्टुप् ३७ अग्रंपिबेत्यस्यगौतमोवामदेवोवायुर्गायत्री ३८ अबोध्यग्निरित्यस्यात्रेयौबुधगविष्ठिरावग्निस्त्रिष्टुप् ३९ प्रवेधसइत्यस्यांगि-
रसोधरुणोग्निस्त्रिष्टुप् ४० महिमहइत्यस्यप्राजापत्यःसंवरणइंद्रस्त्रिष्टुप् ४१ विदादिवइत्यस्यात्रेयःसदापृणइंद्रसूर्यौत्रिष्टुप् ४२ आरुद्रासइ-
त्यस्यात्रेयःश्यावाश्वोमरुतोजगती ४३ यदद्यस्थइत्यस्यात्रेयःपौरोश्विनावनुष्टुप् ४४ त्वंह्यग्नइत्यस्यबार्हस्पत्योभरद्वाजोग्निस्त्रिष्टुप् ४५ त्वम-
ग्नेयज्ञानामित्यस्यबार्हस्पत्योभरद्वाजोग्निर्गायत्री ४६ वृषामहइत्यस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ४७ योरयिवइत्यस्यबार्हस्पत्यःशंयुरिंद्रोनु-
ष्टुप् ४८ हुवेवोदेवीमित्यस्यभारद्वाजऋजिश्वाविश्वेदेवास्त्रिष्टुप् ४९ स्तुषेनरेत्यस्यबार्हस्पत्योभरद्वाजोश्विनौत्रिष्टुप् ५० अग्निंनरइत्यस्यमैत्रा-
वरुणिर्वसिष्ठोग्निर्विराळनुष्टुप् ५१ त्वेहयदित्यस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् ५२ प्रशुक्रैत्वित्यस्यमैत्रावरुणिर्वसिष्ठोदेवाविराड्द्विपदा ५३
ऋजीयक्षाइत्यस्यमैत्रावरुणिर्वसिष्ठोमरुतोविराड्द्विपदा ५४ अपस्वसुरित्यस्यमैत्रावरुणिर्वसिष्ठोश्विनौत्रिष्टुप् ५५ प्रवीरयेत्यस्यमैत्रावरुणि-
र्वसिष्ठइंद्रवायूत्रिष्टुप् ५६ माचिदन्यदित्यस्यकाण्वःप्रगाथइंद्रोबृहती ५७ महाँइंद्रयइत्यस्यकाण्वोवत्सइंद्रोगायत्री ५८ इंद्रःसुतेष्वित्यस्य
काण्वोनारदइंद्रउष्णिक् ५९ वयमुत्वामपूर्व्येत्यस्यकाण्वःसोभरिरिंद्रःककुबुष्णिक् ६० योयजातीत्यस्यवैवस्वतोमनुर्यज्ञयजमानौगायत्री ६१
इमेविप्रस्येत्यस्यांगिरसोविरूपोग्निर्गायत्री ६२ अग्नआयाहीत्यस्यप्रागाथोभर्गोग्निर्बृहती ६३ योराजेत्यस्यांगिरसःपुरुहन्मेंद्रोबृहती ६४
आतूनइंद्रेत्यस्यकाण्वःकुसीदींद्रोगायत्री ६५ गौर्धयतीत्यस्यांगिरसोबिंदुर्मरुतोगायत्री ६६ स्वादिष्ठयेत्यस्यवैश्वामित्रोमधुच्छंदाःपवमानः
सोमोगायत्री ६७ पवस्वदक्षसाधनइत्यस्यागस्त्योदृढच्युतःपवमानःसोमोगायत्री ६८ अयावीतीत्यस्यांगिरसोमहीयुःपवमानःसोमोगायत्री
६९ प्रदेवमच्छेत्यस्यभालंदनोवत्सप्रिःपवमानःसोमोजगती ७० प्रतआश्वइत्यस्याकृष्टामाषाःपवमानःसोमोजगती ७१ अस्यप्रेषेत्यस्यमै-

त्रावरुणिर्वसिष्ठःपवमानःसोमस्त्रिष्टुप् ७२ सखायआनीत्यस्यकाण्वौपर्वतनारदौद्वेशिखंडिन्यावप्सरसावृषिकेवापवमानःसोमउष्णिक् ७३ अग्नेबृहन्नित्यस्याक्ष्यस्त्रितोग्निस्त्रिष्टुप् ७४ त्वष्टादुहित्रइत्यस्ययामायनोदेवश्रवासरण्यूत्रिष्टुप् ७५ प्रदेवत्रेत्यस्यैलूषःकवषआपोपोनपात्रिष्टुप् ७६ अच्छामइंद्रमित्यस्यांगिरसःकृष्णइंद्रोजगती ७७ इदमित्थेत्यस्यमानवोनाभानेदिष्ठोरुद्रस्त्रिष्टुप् ७८ भद्राअग्नेरित्यस्यवाध्र्यश्वःसुमित्रोग्निर्जगती ७९ सत्येनोत्तभितेत्यस्यसूर्यासावित्रीसोमोनुष्टुप् ८० संजागृवद्भिरित्यस्यवैतहव्योरुणोग्निर्जगती ८१ इंद्रदृह्येत्यस्यवांदनोदुवस्युर्विश्वेदेवाजगती ८२ तमस्यद्यावापृथिवीइत्यस्यवैरूपःशतप्रभेदनइंद्रोजगती ८३ नासदासीदित्यस्यप्रजापतिःपरमेष्ठीभाववृत्तिस्त्रिष्टुप् ८४ शासइत्थेत्यस्यभारद्वाजःशासइंद्रोनुष्टुप् ८५ ॥ इत्यनुवाकाद्यृचामृष्यादयः ॥

## ॥ अथऋग्विधानम् ॥

श्रीवेदपुरुषायनमः ॥ ॐस्वयंभुवेब्रह्मणेविश्वगोप्त्रेनमस्कृत्वामंत्रदृग्भ्यस्तथैव ॥ विवक्षुरस्म्यृग्विधानंपुराणंपुरादृष्टमृषिभिर्मंत्रदृग्भिः ॥१॥ मंत्रेभ्योमंत्रदृग्भ्यश्चसमाम्नायानुपूर्वशः ॥ कर्मणामृषिदृष्टानांविधिंप्रोवाचशौनकः ॥२॥ ऋषिभिर्विविधामंत्रादृष्टादृष्टप्रयोजनाः ॥ प्रयोजनायचोद्दिष्टास्तांस्मिंस्तस्मिन्प्रदर्शिताः ॥ ३ ॥ नानार्थानिचकर्माणिशांतिपुष्ट्याश्रयाणिच ॥ सिद्ध्यश्चतपोमूलाःश्रद्दधानस्यकुर्वतः ॥ ४ ॥ स्तुत्यादयोयेविकाराःप्रदिष्टास्तथार्थवादाऋक्षुसूक्तेषुचैव ॥ यैर्यैःकामैर्ऋषिभिर्देवताश्चतुष्टूयंतेतान्छृणुष्वोच्यमानान् ॥ ५ ॥ आयुःस्वर्गो द्रविणंसूनवश्चचतुर्विधंप्रोक्तमाशास्यमग्रे ॥ अन्येकामाःशतशःसंप्रदिष्टाःसंस्तुवद्भिर्ऋषिभिर्देवताश्च ॥ ६ ॥ सिद्धामंत्राविविधाब्राह्मणस्य फलंयच्छंतिविधिवत्प्रयुक्ताः ॥ सत्यंतेषांसाधनंसंयमश्चशमस्तितिक्षानसूयादमश्च ॥ ७ ॥ तस्माद्द्विजःप्रशांतात्माजपहोमपरायणः ॥ तपस्यध्ययनेयुक्तोभवेद्भूतानुकंपकः ॥ ८ ॥ क्षत्रियोबाहुवीर्येणतरेदापदमात्मनः ॥ धनेनवैश्यःशूद्रस्तुजपहोमैर्द्विजोत्तमः ॥९॥ तपसास्वर्गमाप्नोतितपसाविंदतेमहत् ॥ तपोयुक्तस्यसिध्यंतिकर्माणिनियतात्मनः ॥१०॥ विद्वेषणंसंवननंविषघ्नंरोगनाशनं ॥ येनयेनार्थमृषिणायदर्थंदेवताःस्तुताः ॥ ११ ॥ ससकामःसमृद्धश्चतेषांतेषांतथातथा ॥ तानिकर्माणिवक्ष्यामिविविधानिचकर्मणाम् ॥ १२ ॥ पुरश्चरणमादौतुकर्मणांसिद्धिकारकम् ॥ स्वाध्यायाभ्यसनस्यादौप्राजापत्यंचरेद्द्विजः ॥१३॥ केशश्मश्रुलोमनखान्वापयित्वाप्लुतःशुचिः ॥ तिष्ठेदहनिरात्रौतुशुचिरासीतवाग्यतः ॥ १४ ॥ सत्यवादीपवित्राणिजपेद्व्याहृतयस्तथा ॥ ॐकाराद्यास्तुताजस्वासावित्रींचतदित्यृचम् ॥१५॥ आपोहिष्ठेतिसूक्तंतुशुद्धवत्योऽघमर्षणम् ॥ शंवत्यःस्वस्तिमत्यश्चपावमान्यस्तथैवच ॥ १६ ॥ सर्वत्रैतत्प्रयोक्तव्यमादावंतेचकर्मणाम् ॥

आसहस्राद्दाशताद्वाद्दशांतमथवाजपेत् ॥ १७ ॥ ॐकारंव्याहृतीस्तिस्रःसावित्रीमथवायुतम् ॥ तर्पयित्वाद्भिराचार्यान्नृषींश्छंदांसिदेवताः ॥ १८ ॥ प्रपद्येतविरूपाक्षंरौद्रमंत्रगणंजपन् ॥ अनार्यैर्नचभाषेतनशूद्रैर्नापिगर्हितैः ॥ १९ ॥ नरजस्वलयानार्यापतितैर्नान्त्यजैर्नृभिः ॥ नदेवब्राह्मणद्विष्टैर्नाचार्यगुरुनिंदकैः ॥ २० ॥ नमातृपितृविद्विष्टैर्नावमन्येतकंचन ॥ मंगलाचारयुक्तःस्यात्रिरह्नोभ्युदयादपः (?) ॥ २१ ॥ अंतेद्वादशरात्रस्यस्थालीपाकंप्रकल्पयेत् ॥ अग्नयेचाथसोमायतृतीयाचतयोःसह ॥ २२ ॥ वैश्वदेवीचरौद्रीचजुहुयादुत्तरेततः ॥ अवसानस्यपतयेतथानुमतयेपिच ॥ २३ ॥ धन्वंतरयइत्यन्यागंधर्वाप्सरसामपि ॥ दशमीब्राह्मणस्पत्यापरातुब्रह्मणेस्मृता ॥ २४ ॥ सरस्वत्यैतथाविष्णोरंत्यासौविष्टकृत्यपि ॥ आज्याहुतयएवादौस्थालीपाकेहुतेपुनः ॥ २५ ॥ हुत्वाग्निंतर्पयेद्विद्वान्पितृभ्यश्चप्रकल्पयेत् ॥ ततःशेषंविधानेनशुचिर्भुंजीतवाग्यतः ॥ २६ ॥ कृच्छ्राणामेषसर्वेषांविधिरुक्तोऽनुपूर्वशः ॥ प्राजापत्यातिकृच्छ्रस्यतथासांतपनस्यच ॥ २७ ॥ पराकस्यचकृच्छ्रस्यविधिंचांद्रायणस्यच ॥ एकेनशुद्धिमाप्नोतिद्वाभ्यांपापैःप्रमुच्यते ॥ २८ ॥ त्रिभिःसिध्यंतिमंत्राश्चमुच्यतेचोपपातकैः ॥ चतुर्भिर्भ्रूणहत्यायास्तथैवायाज्ययाजनात् ॥ २९ ॥ पंचभिःपातकैःसर्वैर्दुष्कृतैश्चप्रमुच्यते ॥ तप्तकृच्छ्रेणसर्वाणिपापानिप्रतिबाधते ॥ ३० ॥ चांद्रायणंसहाद्यंतमेभिःकृच्छ्रैःसमंस्मृतम् ॥ त्रिभिश्चांद्रायणैःपूतोब्रह्मलोकंसमश्नुते ॥ ३१ ॥ अष्टाभिर्देवताःसाक्षात्पश्येतवरदास्तथा ॥ छंदांसिदशभिर्ज्ञात्वासर्वान्कामान्समश्नुते ॥ ३२ ॥ त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् ॥ त्र्यहंपरंचनाश्नीयात्प्राजापत्यंचरन्द्विजः ॥ ३३ ॥ एकैकंग्रासमश्नीयात्त्र्यहानित्रीणिपूर्ववत् ॥ त्र्यहंचोपवसेदंत्यमतिकृच्छ्रंचरन्द्विजः ॥ ३४ ॥ अमावास्यांनभुंजीतह्येषचांद्रायणोविधिः ॥ कुक्कुटांडप्रमाणंतुग्रासंकुर्यादतंद्रितः ॥ ३५ ॥ गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकम् ॥ एकरात्रोपवासश्चकृच्छ्रःसांतपनःस्मृ-

तः ॥ ३६ ॥ एवमेतत्र्यहैर्युक्तंमहासांतपनंविदुः ॥ उपवासस्तुसप्ताहंशिशुसांतपनंस्मृतम् ॥ ३७ ॥ तप्तकृच्छ्रंचरन्विप्रोजलक्षीरघृतानि-
लान् ॥ प्रतित्र्यहंपिबेदुष्णान्सकृत्स्नायीसमाहितः ॥ ३८ ॥ नियतस्तुपिबेदापःप्राजापत्यविधिःस्मृतः ॥ यतिकृच्छ्रंवदंत्येतद्रहसामपनो-
दनम् ॥ ३९ ॥ यतात्मनोऽप्रमत्तस्यद्वादशाहमभोजनम् ॥ पराकोनामकृच्छ्रोयंसर्वपापप्रणोदनः ॥ ४० ॥ एकैकंह्रासयेत्पिंडंकृष्णेशुक्लेच
वर्धयेत् ॥ उपस्पृशंस्त्रिषवणमेतच्चांद्रायणंस्मृतम् ॥ ४१ ॥ एतमेवविधिंकृत्स्नमाचरेद्यवमध्यमे ॥ शुक्लपक्षादिनियतश्चरंश्चांद्रायणव्रतम्
॥ ४२ ॥ चतुरःप्रातरश्नीयाद्विप्रःपिंडान्कृताह्निकः ॥ चतुरोऽस्तमितेसूर्येशिशुचांद्रायणंस्मृतम् ॥ ४३ ॥ अष्टावष्टौसमश्नीयात्पिंडान्म-
ध्यंदिनेस्थिते ॥ नियतात्माहविष्यस्ययतिचांद्रायणव्रतम् ॥४४॥ यथाकथंचित्पिंडानांतिस्रोऽशीतीःसमाहितः ॥ मासेनाश्नन्हविष्यस्यचं-
द्रस्यैतिसलोकताम् ॥ ४५ ॥ एतद्रुद्रास्तथादित्यावसवश्चाचरन्व्रतम् ॥ सर्वेकुशलमोक्षायमरुतश्चर्तुभिःसह ॥४६॥ यावकःसप्तरात्रेणपा-
तव्योनियतात्मना ॥ स्थानासनत्रिषवणैर्जपतापावमान्यृचः॥४७॥एकैकंसप्तरात्रेणपुनातिविधिवत्कृतः॥त्वगसृक्पिशितास्थीनिमेदोमज्जा-
नमेवच ॥ ४८ ॥ एकैकंसप्तरात्रंतुत्वगादीनांविशोधनम् ॥ एभिर्व्रतैर्विपूतात्माकुर्यात्कर्माण्यतंद्रितः ॥ ४९ ॥ इच्छन्कामांस्ततःसर्वानवाप्नो-
तिनसंशयः ॥ कणपिण्याकतक्राणामेकैकंशोधनंभवेत् ॥ ५० ॥ शुद्धात्माकर्मकुर्वीतसत्यवादीजितेंद्रियः ॥ एवंशुद्धस्यकर्माणिमंत्रैर्वक्ष्या-
मितद्यथा ॥ ५१ ॥ त्रिरात्रमेवोपवसेदादितःसर्वकर्मणाम् ॥ त्रीणिनक्तानिवाकुर्याच्चतःकर्मसमारभेत् ॥ ५२ ॥ नित्यप्रयोगिणांचैवप्रयो-
गादौव्रतंत्र्यहम् ॥ उपरिष्टादुपवसेत्कृत्वावासांनिपातिकम् ॥५३॥ आयुष्याण्येवकर्माणिमंत्रयुक्तःसमारभेत् ॥ शंवत्यःस्वस्तिमत्यश्चजपेत
त्रिवृताऋचः ॥ ५४ ॥ अरण्येवोदितेसूर्येदिशंप्राप्यापराजिताम् ॥ प्राचीमथोत्तरांवापिशुचौदेशेसमाहितः ॥ ५५ ॥ सवासाःसशिरस्को-

सुस्नात्वाभ्युक्ष्यजपेद्द्विजः ॥ शुद्धवत्यस्तथाब्त्यः पावमान्योऽघमर्षणम् ॥५६॥ एवंत्रिराप्लुत्यशुचिःप्राणायामान्समाचरेत् ॥ त्रीन्षडष्टौ द्वादशवाषोडशाष्टादशापिवा ॥ ५७ ॥ आशताद्वायमेत्प्राणान्जपन्ब्रह्माघमर्षणम् ॥ यावद्वामनसस्तुष्टिस्तावत्प्राणान्समायमेत् ॥ ५८ ॥ यथायथामनस्तस्यदुष्कृतंकर्मगर्हति ॥ तथातथाशरीरंतत्तेनाधर्मेणमुच्यते ॥ ५९ ॥ प्राणायामैर्दग्धदोषःशुक्लांबरधरःशुचिः ॥ यथाविध्य-पआचम्यआरोहेद्दर्भप्रस्तरम् ॥ ६० ॥ पवित्रपाणिःकृत्वातूपस्थंवैदक्षिणोत्तरम् ॥ दिशोरेवांतरंप्रेक्ष्यानिमिषंछाद्यचक्षुषी ॥ ६१ ॥ ॐकारं व्याहृतीस्तिस्रःसावित्रींचतदित्यृचम् ॥ मनसैताअनुद्रुत्यवेदादिंसमुपक्रमेत् ॥ ६२ ॥ मंद्रमेवपठेत्प्रातरुच्चैर्मध्यंदिनेपठेत् ॥ सोच्चैरेवापरा-ह्णेतुसंध्याकालउपारमेत् ॥ ६३ ॥ ब्राह्मेमुहूर्तेचोत्थायत्रिराप्लुत्यपठेद्द्विजः ॥ मध्यमांवृत्तिमास्थायनद्रुतांनविलंबिताम् ॥ ६४ ॥ पूर्वांसं-ध्यांजपंस्तिष्ठेदुपासीतचपश्चिमाम् ॥ नचांतराव्याहरेतविरमेद्वाकथंचन ॥६५॥ विरमेद्ब्राह्मणेप्राप्तेकामंतेनतुसंवदेत् ॥ शूद्रंदृष्ट्वैवसंप्राप्तंना-धीयीतकथंचन ॥ ६६ ॥ आग्नेयंसूक्तमाद्यंतुमुख्यंब्रह्मर्षिसंमतम् ॥ रायस्पोषंधुरंधन्यंजपन्विप्रोऽर्थमाप्नुयात् ॥ ६७ ॥ ऋषिंसर्वमिदंजप्त्वा सपुत्रंनियतःशुचिः ॥ संहिताफलमाप्नोतिऋग्वेदस्यनसंशयः ॥ ६८ ॥ एकादशगुणंह्येतज्जपन्ब्रह्मसनातनम् ॥ सर्वान्कामानवाप्नोतिपापैश्च परिमुच्यते ॥ ६९ ॥ अनश्नन्संहितामेतांप्रातःप्रातर्दिनेदिने ॥ आयुर्विद्यांधनंपुत्रान्गृहांश्चाप्नोत्यनामयान् ॥ ७० ॥ एतद्ब्रह्मजपन्शूद्रा-न्नक्षेतान्यांश्चतद्विधान् ॥ प्रेक्ष्याचम्योदकंपूतःपश्येद्रामग्निभास्करौ ॥ ७१ ॥ मंद्रंजपोदशगुणउपांशुस्याच्छतान्वितः ॥ सहस्रंमानसंवि-द्यादेषजप्यविधिःस्मृतः ॥ ७२ ॥ आदावेवतुसावित्र्याकर्मकुर्वीतशांतये ॥ पुष्ट्यैधनलाभायपशुकामायभूतये ॥ ७३ ॥ एषाहिसंहिता देवैःसर्वब्रह्ममयीनिचृत् ॥ उग्रेणतपसादृष्टात्विश्वामित्रेणधीमता ॥ ७४ ॥ होमांश्चजपयज्ञांश्चनित्यंकुर्वीतचैतया ॥ सर्वकामसमृद्ध्यर्थंपर-

न्ब्रह्मेदमुच्यते ॥ ७५ ॥ एषैवप्रतिलोमोक्तापच्छःशत्रुविनाशिनी ॥ अक्षरप्रतिलोमेयमभिचारेषुशस्यते ॥ ७६ ॥ अक्षरप्रतिलोमेयंयस्मि-
न्युज्येतकर्मणि ॥ तदमोघंविजानीयादेतद्वैब्रह्मणोबलम् ॥ ७७ ॥ व्याघातकेध्मसमिधोह्यक्षरप्रतिलोमया ॥ जुहुयात्सार्षपंतैलंवैभीतक-
कृतस्रुचः ॥ ७८ ॥ यइच्छेत्पीडनंशत्रोरपिवोच्चाटनंपुनः ॥ पच्छःसंपीडयेच्छत्रून्वर्णशश्चप्रमापयेत् ॥ ७९ ॥ इतिपरिभाषा ॥ ॥
ऋग्वेदाद्यस्यसूक्तस्यविधिंवक्ष्याम्यतःपरम् ॥ यथाऋषिर्मधुच्छंदाःकर्मैतेनाकरोत्पुरा ॥ ८० ॥ शिरसाधारयेदग्निंनियतःपरिवत्सरम् ॥
चतुर्थप्राणकालीयोहुतशिष्टमदन्हविः ॥ ८१ ॥ जुहूंत्रिरुपतिष्ठंश्चसत्यवादीदिनेदिने ॥ व्रतकालेतुसंप्राप्तेआग्नेयंनिर्वपेच्चरुम् ॥ ८२ ॥ अन-
ग्नोध्यानमात्रोऽग्निर्व्रतांतेऽस्योपतिष्ठति ॥ दहेयमितियंचेच्छेत्तंदहत्येवपावकः ॥ ८३ ॥ अप्स्वप्यग्निर्ज्वलत्येवतद्व्रतस्यमहात्मनः ॥ समर्धय-
तितंचेष्टैःकामैर्वह्निःप्रयत्नतः ॥ ८४ ॥ अतःपरंतृचाःसप्तवाय्वाद्यायेप्रकीर्तिताः ॥ तान्जपन्प्रयतोनित्यमिष्टान्कामान्समश्नुते ॥ ८५ ॥
मेधातिथावृषौपुनःसदसस्पतिमित्यृचम् ॥ मेधाकामोजपेन्नित्यंजुहुयाच्चाज्यमेतया ॥८६॥ स्योनेतिपृथिवीनित्यंस्नात्वाविप्रःशुचिर्जपेत् ॥
विंदतेमहतींभूमिमसपत्नामकंटकाम् ॥ ८७ ॥ इदंविष्णुरितीमाभिःपंचभिःश्राद्धकर्मणि ॥ अंगुष्ठमन्नेऽवगाह्येत्तेनंरक्षांसिबाधते ॥८८॥
अंगुष्ठमात्रोभगवान्विष्णुःपर्यटतेमहीं ॥ राक्षसानांवधार्थायतच्छ्राद्धेप्रहरिष्यति ॥ ८९॥ अक्षय्यंचभवेदन्नंश्रद्धाभक्तिसमन्वितम् ॥ तस्मा-
च्छ्राद्धेषुसर्वेष्वप्यंगुष्ठग्रहणंस्मृतम् ॥ ९० ॥ सप्तजन्मकृतंपापंकृत्वाचाभक्ष्यभक्षणम् ॥ तद्विष्णोरित्यपांमध्येसकृज्जप्त्वाविशुद्ध्यति ॥९१॥
अंबयोयंतियाःप्रोक्तानवर्चस्त्वाभिषेचनीः॥ आयुष्यस्ताःपरिप्रोक्ताभैषज्यःपापमोचनीः ॥९२॥ शुनःशेपमृषिंबद्धःसंनिरुद्धोथवाजपेत् ॥
मुच्यतेसर्वपापेभ्योगदीचाप्यगदोभवेत् ॥ ९३ ॥ यइच्छेच्छाश्वतान्कामानिंद्रात्प्राप्स्येपुरंदरात् ॥ सषोडशभिरेवर्ग्भिरिंद्रंस्तूयाद्दिनेदिने

॥९४॥ हैरण्यस्तूपइंद्रस्यसूक्तंकर्माभिसंस्तवम् ॥ तज्जपन्प्रयतःशत्रूनयत्नात्प्रतिबाध्यते ॥९५॥ आकृष्णेनेत्यृचात्वेवयोनित्यंसूर्यमर्चति ॥
प्रातर्मध्येऽस्तगंवापिसजीवेदगदःसुखी ॥ ९६ ॥ आकृष्णेनेत्यृचंत्वेतांध्यायन्निशिदिवौकसः ॥ अग्नौहुत्वैतयाचाज्यंदीर्घमायुरवाप्नुयात्
॥ ९७ ॥ येतेपंथाइतीमांतुसावित्रीमध्वगोऽभ्यसेत् ॥ स्वस्तिमान्व्रजतेऽध्वानंगृहांश्चाप्नोत्यनामयान् ॥ ९८ ॥ संपूषन्निितियत्सूक्तंघौरःक-
ण्वोजगावृषिः ॥ अध्वन्यमेतद्विज्ञेयंपरिपंथ्यपसेधनम् ॥ ९९ ॥ रौद्रीभिःषड्भिरीशानंतुष्टूयाद्योदिनेदिने ॥ सनारीसहितःशांतिंशंकरात्प्रा-
प्नुयात्सदा ॥ १०० ॥ एतेनैवषडर्चेनजुहुयादाज्यमन्वहम् ॥ चरुंचकल्पयेद्रौद्रंभूतिकामोऽथपर्वसु ॥ १ ॥ उदित्युद्यंतमादित्यमुपतिष्ठेद्दि-
नेदिने ॥ हृद्रोगनाशनंह्येतत्परमारोग्यवर्धनम् ॥ २ ॥ द्विषंतमित्यथार्धर्चंयंद्विष्यात्तंजपन्स्मरेत् ॥ आगस्कृत्सप्तरात्रेणविद्वेषमधिगच्छति
॥ ३ ॥ रोगैर्गृहीतोरोगीचप्रस्कण्वस्योत्तमंतृचम् ॥ आरोग्यमेतत्प्रयतोजपेन्नित्यमनेकशः ॥ ४ ॥ उत्तमस्तस्यचार्धर्चोद्विषद्द्वेषइतिस्मृतः ॥
यंद्विष्यात्तमभिध्यायेद्दृष्ट्वाचैनंजपेदिदम् ॥ ५ ॥ आगस्कृच्चेत्त्रिरात्रेणविद्वेषंसंनियच्छति ॥ उदयत्यायुरक्षय्यंतेजोमध्यंदिनेजपन् ॥ ६ ॥
अस्तंव्रजतिसूर्येतुद्विषंतंप्रतिबाध्यते ॥ ओजस्तेजस्तथारोग्यंद्विषद्द्वेषंप्रकीर्तितम् ॥ ७ ॥ नवपश्वेतिसूक्तानियानिगर्भेपराशरः ॥ अरातीनां
हरेत्प्राणाञ्छत्रूंश्चैवनियच्छति ॥ ८ ॥ सौपर्णानिपवित्राणिसूक्तान्येकादशाभ्यसेत् ॥ वांच्छन्पुत्रान्पशून्वित्तंस्वर्गमायुरनंधताम् ॥ ९ ॥
आध्यात्मिकीःकइत्येताजपंस्तुसुसमाहितः ॥ प्राप्नुयात्सपरंधामविश्वंज्योतिःसनातनम् ॥ ११० ॥ आनोभद्रीयमायुष्यंवैश्वदेवंजपन्मुनिः ॥
मुमूर्षुरपिजप्त्वैतद्दीर्घमायुरवाप्नुयात् ॥ ११ ॥ पितॄणांश्राद्धकालेतुमध्विवत्येतत्तृचंपठेत् ॥ अघोराःपितरस्तस्यविशंतिज्योतिरुत्तमम् ॥ १२ ॥

त्वंसोमेतिचसूक्तेनपश्येच्चंद्रमुपोदितम् ॥ उपतिष्ठेत्समित्पाणिर्मासिमासिनवंनवम् ॥ १३ ॥ तन्मासंतस्यदुःखंहिनजातुत्रिविधंभवेत् ॥ गौतमेन

पुराद्दष्टंमृत्योर्नाशनमात्मनः ॥ १४ ॥ उद्यंतमुपतिष्ठेतपूर्णेचैतत्समाहितः ॥ वासांस्यपिसविंदेतचंद्रस्यैतिसलोकताम् ॥ १५॥ धनकामो जपेन्नित्यमेताइतितुनित्यशः ॥ स्नात्वाशुचिस्तुनियतइष्टंधनमवाप्नुयात् ॥ १६ ॥ आयुरीप्सन्निसमितिकौत्संसूक्तंसदाभ्यसेत् ॥ आज्या- हुतीश्वजुहुयात्प्रत्यृचंवाग्यतःशुचिः ॥ १७ ॥ जपेदाप्लुत्यनियतःससाक्षादापदंतरेत् ॥ अपनःशोशुचदितिस्नात्वामध्यंदिनेरवौ ॥ १८ ॥ शुचिकामोजिताहारःप्रत्यृचंजुहुयाद्घृतम् ॥ समिधोऽन्वहमिष्टौवासूक्तमेतदघापहम् ॥ १९ ॥ यथामुंजादिवेषीकातथापापात्प्रमुच्यते ॥ जात- वेदसइत्यादिसदास्वस्त्ययनेजपेत् ॥ १२० ॥ दुर्गेपथिप्रयातस्यनास्यारिभ्योभयंभवेत् ॥ राजकार्येश्वयूथेवाअभिशस्तोऽप्यनेकधा ॥ २१ ॥ अशक्तोऽप्रतिभाकार्येभयेप्राणांतिकेथवा ॥ जातवेदसइत्येतांजपंस्तेभ्यःप्रमुच्यते ॥ २२ ॥ सिषाधयिषुरर्थंतुप्रस्थितोमनसाजपेत् ॥ सिद्धार्थःस्वस्तिमानेतिप्रसीयेतनचाध्वनि ॥ २३ ॥ कृतार्थःस्वगृहान्गच्छन्नेतामेवसदाभ्यसेत् ॥ उदितेसवितर्येतांजपेदस्तंगतेतथा ॥ २४ ॥ अहःस्वस्त्ययनंप्रातारात्रिस्वस्त्ययनंनिशि ॥ व्युष्टायांचजपेन्नित्यमेतांदुःस्वप्ननाशिनीम् ॥ २५ ॥ प्रमंदिनेप्रसूयंत्यांजपेद्गर्भ- प्रमोचनीम् ॥ इंद्रंचमनसाध्यायेन्नारीगर्भंप्रमुंचति ॥ २६ ॥ आपत्सुसर्वकामोवात्रितंनित्यंजपेदृषिम् ॥ जपन्निंद्रमितिस्नातोवैश्वदेवंतुसप्तकम् ॥ २७ ॥ मुच्यतेजुहुयादाज्यंविश्वस्मादेवसोंऽहसः ॥ शंतातीयंपरंसूक्तंपंचविंशकमुत्तमम् ॥ २८ ॥ नासत्यौतुनमस्कृत्यपरामृद्धिमवाप्नु- यात् ॥ घर्मसंस्तवनंसूक्तंसर्वपापैःप्रमुच्यते ॥ २९ ॥ इमाइतिजपेच्छश्वद्रौद्रसूक्तंद्विजःशुचिः ॥ आयुर्विद्यांधनंपुत्रान्गृहांश्चाप्नोत्यना मयान् ॥ १३० ॥ वीतेष्वपत्यगोष्ठेषुदुःस्वप्नेतिव्र(?)मात्मनः ॥ मानोमहांतमित्याभ्यांत्रिरात्रोपोषितःशुचिः ॥ ३१ ॥ औदुंबरीश्चजुहुयाद्द- धिमध्वाज्यसंस्कृताः ॥ सूक्तेनजुहुयादाज्यमादावंतेचकर्मणाम् ॥ ३२ ॥ ऊर्ध्वबाहुस्तुसूक्तेनतुष्टावशतशोभवम् ॥ छित्त्वासर्वान्मृ-

त्युपाशान्जीवेद्रोगैर्विवर्जितः ॥ ३३ ॥ तिष्ठन्नुद्यंतमादित्यंसमित्पाणिःशुचिःसदा ॥ चित्रमित्युपतिष्ठेतसूक्तेनानेनभास्करम् ॥ ३४ ॥
अतिस्तवेनचैतेननित्यंमध्यंदिनेरविम् ॥ गृणानोपोहतेक्षिप्रंप्राप्नोतिचधनायुषी ॥ ३५ ॥ अधःस्वप्नस्येतिजपेत्प्रातःप्रातर्दिनेदिने ॥ दुःस्वप्नं
नुदतेक्षिप्रंनचास्याभोजनाद्भयम् ॥ ३६ ॥ उभेपुनामीतिपरारिपुघ्न्यस्तुप्रकीर्तिताः ॥ ताजपन्हंतिरक्षांसिसपत्नांश्चनियच्छति ॥ ३७ ॥
निवर्त्यपंचयज्ञांश्चहुत्वाचाग्निंकृताह्निकः ॥ येदेवासोदिव्यनयाजपन्कामानवाप्नुयात् ॥ ३८ ॥ इंद्राविष्णूनमस्कृत्यविष्णोर्नुकमितित्रिभिः ॥
समित्पाणिःशुचिर्भूत्वोपतिष्ठेत्तुदिनेदिने ॥ ३९ ॥ धर्मंबुद्धिंधनंपुत्रानारोग्यंधर्मवर्धनम् ॥ प्राप्नोतिचपरंस्थानंज्योतीरूपंसनातनम् ॥ ४० ॥
आततायिनमायांतंदृष्ट्वाव्याघ्रमथोवृकम् ॥ नमागरन्नितिजपंस्तेभ्यएवप्रमुच्यते ॥ ४१ ॥ त्रिरात्रोपोषितोरात्रौजपेदासूर्यदर्शनात् ॥ आप्लु-
त्यप्रयतःसौरीरुपतिष्ठेद्दिवाकरम् ॥ ४२ ॥ पश्यंतितस्करानैनंनचान्येपापवृत्तयः ॥ एकशतानित्रायेततस्करेभ्यश्चरन्पथि ॥ ४३ ॥ स्तेयं
कृत्वाद्विजोमोहात्त्रिरात्रोपोषितःशुचिः ॥ सूक्तंजप्त्वास्यवामीयंक्षिप्रंमुच्येतकिल्बिषात् ॥ ४४ ॥ ज्ञातिपुत्रसुहृन्मित्रैर्यश्चराज्यंचिकीर्षति ॥
नित्यंसनियतोभूत्वासूक्तंतुमनसाजपेत् ॥ ४५ ॥ कयाशुभेतिपैशुन्यंकृत्वाचार्यंनृपद्विजैः ॥ श्रुत्वापरंरहस्यंतुगुरोरप्याहशौनकः ॥ ४६ ॥
इमंनुसोममित्येतेद्वेऋचौप्रयतोजपेत् ॥ सर्वान्कामानवाप्नोतिनकिंचित्पातकंभवेत् ॥ ४७ ॥ पितुंन्वित्युपतिष्ठेतनित्यमन्नमुपस्थितम् ॥ पूज-
येदशनंनित्यंभुंजीयादविकुत्सितम् ॥ ४८ ॥ नास्यस्यादन्नजोव्याधिर्विषमप्यन्नतामियात् ॥ विषंचपीत्वैतत्सूक्तंजपेतविषनाशनम् ॥ ४९ ॥
नावाग्यतस्तुभुंजीतनाशुचिर्नजुगुप्सितम् ॥ दद्याच्चपूजयेच्चैवजुहुयाच्चशुचिःसदा ॥ ५० ॥ क्षुद्भयंनास्यकिंचित्स्यान्नान्नजंव्याधिमाप्नुयात् ॥
उत्पथप्रतिपन्नोयोभ्रष्टोवापिपथःक्वचित् ॥ ५१ ॥ पंथानंप्रतिपद्येतकृत्वावाकर्मगर्हितम् ॥ अग्नेनयेतिसूक्तेनप्रत्यृचंजुहुयाद्घृतम् ॥ ५२ ॥

जपंश्चप्रयतोनित्यमुपतिष्ठेतचानलम् ॥ स्नात्वाजपेदनर्वाणंनमस्कृत्यबृहस्पतिम् ॥ ५३ ॥ वीरान्धनंचप्राप्नोतिसुश्लोक्यांकीर्तिमृच्छति ॥
कंकतोनेतियत्सूक्तंविषार्तःप्रयतोजपेत् ॥ ५४ ॥ विषंनक्रमतेचास्यसर्पाद्दृष्टिविषादपि ॥ यत्कीटलूतासुविषंदंष्ट्रीवृश्चिकजंचयत् ॥ ५५ ॥
मौलंचकृत्रिमंचैवजपन्सर्वंव्यपोहति ॥ धर्मंबुद्धिंधनंपुत्रान्सौभाग्यंधनवर्धनम् ॥५६॥आरोग्यंपुष्टिमायुष्यंपशून्विद्यांमहद्यशः॥त्रिरात्रेपो-
षितःस्नातःप्रयतश्चरितव्रतः ॥५७॥ प्राणायामशतंकृत्वोपतिष्ठेतशतक्रतुम् ॥ एकाहंकरसंयुक्तःपादौसंधायवाग्यतः ॥ ५८ ॥ योजातइ-
तिसूक्तेनऋषिंगृत्समदंस्मरन् ॥ शतकृत्वोजपेदिंद्रमिंद्रश्रेष्ठानिचांततः ॥ ५९ ॥ एकाहाल्लभतेवित्तंत्र्यहात्सिद्धिमनुत्तमाम् ॥ अहोभि-
स्त्रिभिरारोग्यंचतुर्भिरशनंबहु ॥ १६० ॥ पंचभिर्ब्रह्मवर्चस्त्वंषड्भिरायुःसुखावहम् ॥ सप्तभिस्तनयान्पुष्टिमष्टभिःप्राप्नुयात्सदा ॥ ६१ ॥
प्रियोभवतिचेंद्रस्यप्रियंधामसगच्छति ॥ रिपुघ्नंदस्युशमनंरायस्पोषकरंपरम् ॥ ६२ ॥ गणानामितियत्सूक्तंतज्जपेत्सुखवर्धनम् ॥ संध्ययोः
प्रयतस्त्वेतज्जपेन्नित्यंबृहस्पतिम् ॥ ६३ ॥ उपतिष्ठेतसूक्तेनसर्वकामसमृद्धये ॥ योमेराजन्नितीमांतुदुःस्वप्रशमनीमृचम् ॥ ६४ ॥ जप्त्वाना-
शयतिक्षिप्रंदुःस्वप्नंब्राह्मणःशुचिः ॥ अहोरात्रमुपोष्यैकंनियतोब्रह्मवित्तमः ॥ ६५ ॥ प्रजार्थंजुहुयादाज्यंचरुंवापयसिश्रृतम् ॥ राकामहमि-
तीमाभिःषष्ट्याशुक्लस्यपंचभिः ॥ ६६ ॥ हविःशेषंस्वयंप्राश्यविंदतेमहतींप्रजाम् ॥ व्याधिनायोऽभिभूतःस्याद्घोरेणप्राणहारिणा ॥६७॥
चतुर्दशीमुपोष्यैकांकृष्णस्यजुहुयाच्चरुम् ॥ आतेसूक्तेनरौद्रेणप्रत्यृचंवाग्यतःशुचिः ॥ ६८ ॥ पूर्वमाज्याहुतीर्हुत्वाअथोपस्थायशंकरम् ॥
हविःशेषेणवर्तेतएकांतरमतंद्रितः ॥ ६९ ॥ पूर्णेमासिजयेन्मृत्युंरोगेभ्यश्चप्रमुच्यते ॥ अभिशस्येतयोमोहात्कुर्याद्वाकर्मगर्हितम् ॥ १७० ॥
स्नात्वाभुंजन्जपेदप्सुअंबीत्यृचमतंद्रितः ॥ अध्वनिप्रस्थितोयस्तुपश्येच्छकुनिमुत्थितम् ॥७१॥ अप्रशस्तंप्रशस्तंवास्थित्वेक्ष्यप्रयतोजपेत् ॥

कनिक्रदद्विसूक्ताभ्यामुपतिष्ठेत्कृतस्वरम् ॥ ७२ ॥ शकुनिंवायसंवापिमृगंदंष्ट्रिणमेववा ॥ अथदृष्ट्वैवजप्तव्यमेतत्तस्करमोहनम् ॥ १७३ ॥
इत्यृग्विधानेप्रथमोऽध्यायः ॥ १ ॥ ॥ कल्याणवादीवान्योवानवारौतिनदृश्यते ॥ जपेदेवनमस्कृत्यसिद्धार्थःसनिवर्तते ॥१७४॥
नतस्यास्तिभयंकिंचिद्दस्युभ्योऽध्वनिनकचित् ॥ तरत्यपिचदुर्गाणिस्वस्तिमांश्चसुखीभवेत् ॥ ७५ ॥ यस्यभुक्तंनजीर्येतनतिष्ठेद्वाकथंचन ॥
ध्यात्वासोंऽतरमन्नस्याप्यग्निरसीत्यृचंजपेत् ॥७६॥ विश्वामित्रस्यसंवादंनद्यतिक्रमणेजपेत् ॥ आप्लुत्याचम्यविधिवदुदकस्यांजलिंक्षिपेत्
॥ ७७ ॥ नमःस्रवन्त्यइत्येतद्योनित्यंहिसमाचरेत् ॥ तंनद्यःस्रोतसःपांतिस्वंपुत्रमिवमातरः ॥ ७८ ॥ भयंचास्यनविद्येतनदीतीरेवनेष्वपि ॥
जलचरेभ्योभूतेभ्यःशीतोष्णैर्नचबाध्यते ॥ ७९ ॥ पूर्णांतितीर्षुःसरितंरमध्वसितिसंस्मरेत् ॥ ओष्विरयृचमपांमध्येजपेद्योवैनदींतरन्
॥ १८० ॥ सशीघ्रंतीरमाप्नोतिगाधंवाविंदतेद्विजः ॥ युक्तेनैवरथेनाशुयोपांपारंतितीर्षति ॥८१॥ उद्वऊर्मिरितीमांतुजपेतनियतःस्वयम् ॥
अध्वानंप्रस्थितश्चैवमामंद्रैरितिसंस्मरेत् ॥ ८२ ॥ कार्याण्यशेषतःकृत्वापुनरायातिवैगृहम् ॥ अदातारंसुपुष्टार्थंसर्वदाविष्टचेतनम् ॥ ८३ ॥
हत्वातद्धनमन्विच्छन्किंतेकृण्वंत्यृचंजपेत् ॥ इंद्रापर्वतेतिसूक्तमायुष्यंद्राविणंस्मृतम् ॥ ८४ ॥ वागिंद्रियप्रमूढोयोनविद्यांप्रतिपद्यते ॥ इंद्रि-
यार्थान्यथार्थान्वायोनवेत्तिकथंचन ॥ ८५ ॥ विद्यावाधिगतायस्यप्रणश्येतपुनःपुनः ॥ ससर्परीरितिचौजस्वाद्वौमासौप्रतिपद्यते ॥ ८६ ॥
अनसासंप्रयातस्तुस्थिरौगावावितिस्मरेत् ॥ चतस्रःकुशलेनैतिसिद्धार्थःस्थिरयानगः ॥ ८७ ॥ यानाक्षमपभग्नंतंदृष्ट्वादुर्गेपथिद्विजः ॥
अभिव्ययस्वेतिजपेदृचमक्षवलंदधत् ॥८८॥ कृष्णपक्षेचतुर्दश्यांत्रिरात्रोपोषितःशुचिः ॥ दक्षिणप्रवणेदेशेश्मशानस्थःसमाहितः ॥८९॥
रक्तोष्णीष्यसिपाणिश्चवैल्वकेध्मोऽनिलाशनः ॥ सप्ताहंजुहुयात्तैलंसार्षपंलवणान्वितम् ॥ १९० ॥ समिधोराजवृक्षस्यवसिष्ठद्वेषिणीःपठन् ॥

यंद्विष्यात्तस्यकृत्वातुशम्याकेनाकृतिंनिशि ॥९१॥ अधिष्टायचतांकुर्याद्दग्भिश्चतस्त्रभिर्द्विजः ॥ उद्दिश्यनामहोमोयंसप्तरात्रंनजीवति ॥९२॥ वसिष्ठानांततोहंतिब्रह्मतत्कुशिकोदितम् ॥ नास्यकश्चिदवध्योऽस्तिजपतोजुह्वतोपिवा ॥ ९३ ॥ द्वाविंशकंजपेत्सूक्तमाध्यात्मिकमनुत्तमम् ॥ पर्वसुप्रयतोनित्यमिष्टान्कामान्समश्नुते ॥ ९४ ॥ बृहस्पतिमजाश्वंसवितारंबभ्रुमेवच ॥ ऋतावृतौदिनेदिनेत्यृचैःपंचभिरन्वहम् ॥ ९५ ॥ बृहस्पतइतिपंचाहंप्रत्यृचंजुहुयाद्धृतम् ॥ हुत्वाग्निमर्चयित्वातुगंधमाल्यैःसुधूपकैः ॥९६॥ एतावद्देवताःपंचकामैरर्चतिपंचभिः ॥ रत्नैरपत्यैः पशुभिर्मखैर्दीर्वेणचायुषा ॥९७॥ अथवेदादिगीतायाःप्रसारजननंविधिम् ॥ गायत्र्याःसंप्रवक्ष्यामिधर्मकामार्थमोक्षदम् ॥ ९८ ॥ नित्यनै-मित्तिकेकाम्येत्रितयेतुपराक्रमम् ॥ गायत्र्याश्चपरंनास्तिइहलोकेपरत्रच ॥ ९९ ॥ मध्यान्नमितभुङ्मौनीत्रिःस्नानार्चनतत्परः ॥ जपेल्लक्षत्र-यंधीमाननन्यमानसक्रियः ॥ २०० ॥ कर्मभिर्योजयेत्पश्चात्क्रमशःस्वेच्छयापिवा ॥ यावत्कार्यनकुर्वीततावल्लुंपेन्नतद्व्रतम् ॥ १ ॥ आदित्य-स्योदयेस्नात्वासहस्रंप्रत्यहंजपेत् ॥ आयुरारोग्यमैश्वर्यंधनंचलभतेध्रुवम् ॥२॥ त्रिरात्रोपोषितःसम्यग्घृतंहुत्वासहस्रशः ॥ सहस्रंलाभमाप्नो-तिराहुसूर्यसमागमे ॥ ३ ॥ पालाशसमिधांचैवघृताक्तानांहुताशने ॥ सहस्रंलाभमाप्नोतिराहुसूर्यसमागमे ॥ ४ ॥ हुत्वातुखादिरंवह्नौस-घृतंरक्तचंदनम् ॥ सहस्रंहेमचाप्नोतिराहुचंद्रसमागमे ॥ ५ ॥ रक्तचंदनमिश्रंतुसघृतंहव्यवाहने ॥ हुत्वागोमयमाप्नोतिसहस्रंगोधनंद्विजः ॥ ६ ॥ यस्यास्तुगोर्गोमयेनगुटिकानांसहस्रशः ॥ हुत्वातांगामवाप्नोतिघृताक्तानांहुताशने ॥ ७ ॥ यवैरश्वांस्तिलैर्गजान्महिषीर्यावकैस्त-था ॥ शालितंडुलहोमेनकन्यालाभमवाप्नुयात् ॥ ८ ॥ जातीचंपकरक्तार्ककुसुमानांसहस्रशः ॥ हुत्वावस्त्राण्यवाप्नोतिघृताक्तानांहुताशने ॥ ९ ॥ सूर्यबिंबेजलमध्येतोयंहुत्वासहस्रशः ॥ सहस्रंप्राप्नुयाद्धैमंरौप्यमिंदुमयेहुते ॥ २१० ॥ अलक्ष्मीपापसंयुक्तोमलव्याधिविनाशकैः ॥

मुच्येत्सहस्रजप्तेनस्नायाद्यस्तुजलेनवै ॥ ११ ॥ यांदिशंसप्तजप्तेनलोष्टेनसंप्रचारयेत् ॥ चौराग्निमारुतोत्थानिभयानिनभवंतिवै ॥ १२ ॥
क्षीराहारोजपेल्लक्षमपमृत्युंव्यपोहति ॥ घृताशीप्राप्नुयान्मेधांबहुविज्ञानसंचयम् ॥ १३ ॥ हुत्वावेतसपत्राणिघृताक्तानिहुताशने ॥ लक्षाद्ध-
र्षापयद्देवंसार्वभौमंनसंशयः ॥ १४ ॥ लक्षेणभस्महोमस्यकृत्याह्युत्तिष्ठतेजलात् ॥ आदित्याभिमुखःस्थित्वानाभिमात्रेजलेशुचिः ॥ १५ ॥
तिलानांलक्षहोमेनघृताक्तानांहुताशने ॥ सर्वकामसमृद्धात्मापरंस्थानमवाप्नुयात् ॥ १६ ॥ यवानांलक्षहोमेनघृताक्तानांहुताशने ॥ सर्वका-
मसमृद्धात्मापरंस्थानमवाप्नुयात् ॥ १७ ॥ घृतस्याहुतिलक्षेणसर्वान्कामानवाप्नुयात् ॥ पंचगव्याशनोलक्षंजपन्जातिस्मरोभवेत् ॥ १८ ॥
तद्देवह्यनलेहुत्वाप्राप्नोतिवहुशोधनम् ॥ अन्नाद्यहवनान्नित्यमन्नाद्यंचभवेत्सदा ॥ १९ ॥ जुहुयात्सर्वसाध्यानामाहुत्ययुतसंख्यया ॥ रक्त-
सिद्धार्थकान्हुत्वासर्वान्साधयतेरिपून् ॥ २२० ॥ लवणंमधुसंयुक्तंहुत्वासर्ववशीभवेत् ॥ हुत्वातुकरवीराणिरक्तानिजनयेज्ज्वरम् ॥ २१ ॥
हुत्वाबैभीतकंतैलंदेशादेवप्रचारयेत् ॥ हुत्वातुनिंबपत्राणिविद्वेषंजनयेन्नृणाम् ॥२२॥ रक्तानांतंडुलानांतुघृताक्तानांहुताशने ॥ हुत्वाबल-
मवाप्नोतिशत्रुभिर्नसजीयते ॥ २३ ॥ प्रत्यानयनसिद्ध्यर्थंमधुसर्पिःसमन्वितम् ॥ गव्यंक्षीरंप्रदीप्तेग्नौजुह्वतस्तत्प्रशाम्यति ॥ २४ ॥ ब्रह्मचा-
रीमिताहारोयःसहस्रत्रयंजपेत् ॥ संवत्सरेणलभतेधनैश्वर्यंनसंशयः ॥ २५ ॥ शमीविल्वपलाशानामर्कस्यतुविशेषतः ॥ पुष्पाणांसमिधां
चैवहुत्वाहेममवाप्नुयात् ॥ २६ ॥ अत्रह्यत्र्यंबकादीनांयस्यायतनमाश्रितः ॥ जपेल्लक्षंनिराहारःसतस्यवरदोभवेत् ॥ २७ ॥ विल्वानांल-
क्षहोमेनघृताक्तानांहुताशने ॥ परांश्रियमवाप्नोतियदिनभ्रूणहाभवेत् ॥ २८ ॥ पद्मानांलक्षहोमेनघृताक्तानांहुताशने ॥ प्राप्नोतिराज्यम-
खिलमसपत्नमकंटकम् ॥ २९ ॥ पंचविंशतिलक्षेणदधिक्षीरघृताशनः ॥ स्वदेहेसिद्ध्यतेजंतुःकौशिकस्यमतंयथा ॥ २३० ॥ एकाहंपंच-

गव्याशीह्येकाहंमारुताशनः ॥ एकाहंब्राह्मणान्नाशीगायत्रीजपउच्यते ॥ ३१ ॥ शतेनगायत्र्यास्नात्वाशतमंतर्जलेजपेत् ॥ शतेनापस्ततः पीत्वासर्वपापैःप्रमुच्यते ॥ ३२ ॥ गोघ्नःपितृघ्नोमातृघ्नोब्रह्महागुरुतल्पगः ॥ सुवर्णरत्नहारीचयश्चविप्रःसुरांपिबेत् ॥ ३३ ॥ अयाज्ययाजनंकृत्वाकृत्वावाकर्मगर्हितम् ॥ नसीदेत्प्रतिगृह्णानोमहीमपिससागराम् ॥ ३४ ॥ येचास्यदुःस्थितालोकेग्रहाःसूर्यादयोभुवि ॥ तेयांतिसौम्यतांसर्वेशिवायेतिनसंशयः ॥ ३५ ॥ कृणुष्वेतिजपन्सूक्तंरक्षोघ्नंदस्युभिर्वृतः ॥ अरातीनांहरेत्प्राणान्रक्षांस्यपिचनाशयेत् ॥ ३६ ॥ उपतिष्ठेतयोवह्निंपरीत्यृचादिनेदिने ॥ तंरक्षतिस्वयंवह्निर्विश्वतोविश्वतोमुखः ॥ ३७ ॥ कोअद्येतितुसूक्तेनयोनित्यंशक्तिमर्चेति ॥ जपेद्वाथनमस्कारैःशक्तितोलभतेवरान् ॥ ३८ ॥ कयेतिवामदेव्येनकुर्यात्स्वस्त्ययनंनिशि ॥ जपेद्वासंधिवेलासुब्रह्मैतत्कुशिकोदितम् ॥ ३९ ॥ हंसःशुचिषदित्यृचाशुचिरीक्षेद्दिवाकरम् ॥ अंतकालेजपन्नेतिब्रह्मणःसद्मशाश्वतम् ॥ २४० ॥ कृषिंप्रपद्यमानस्तुस्थालीपाकंयथाविधि ॥ जुहुयात्क्षेत्रमध्येतुशुनंवाहास्तुपंचभिः ॥ ४१ ॥ यथालिंगंतुविहरेल्लांगलंचकृषीवलः ॥ इंद्रायचमरुद्भ्यश्चपर्जन्यायभगायच ॥ ४२ ॥ पूष्णेधान्यायसीतायैशुनासीरमथोत्तरम् ॥ हुत्वातुपृथगेतानियजेद्देताश्चदेवताः ॥ ४३ ॥ गंधमाल्योपहारैश्चफललाजासुरासवैः ॥ प्रलापनेप्रणयनेखलसीतोपहारयोः ॥ ४४ ॥ एताएवजपेन्नित्यंदेवताविधिनाशुचिः ॥ अमोघंकर्मभवतिकृषिर्वर्धतिसर्वदा ॥ ४५ ॥ क्षेत्रस्यपतिनेत्येतत्क्षेत्रपत्यंतृचंजपेत् ॥ ईक्षेत्सूर्यंद्विजोनित्यंविंदतेक्षेत्रमुत्तमम् ॥ ४६ ॥ आखूत्करेषुचरुणायजेदेतानमूषकान् ॥ चित्रइद्राजेत्यनयास्तुत्वाचाखुपतिंसदा ॥ ४७ ॥ ब्राह्मणान्भोजयेदत्रकीनाशांश्चैवभोजयेत् ॥ अप्रमत्तःशांतिपरःस्वयमेवकृषिंव्रजेत् ॥ ४८ ॥ भूमिभंगेगवांहिंसातृणकीटादिनाशनम् ॥ एतेषुयत्कृतंपापंखलदानेनशुद्ध्यति ॥ ४९ ॥ धान्यानांविंशकंभागंश्रोत्रियेभ्योनिवेदयेत् ॥ विंशकस्यहिदानेनकृषिदोषात्प्रमु-

न्यते ॥ २५० ॥ समुद्राद्विति सूक्तेनयःसदाजुहुयाद्धृतम् ॥ पूर्वोक्तेनैवकल्पेनसंयतात्माजितेंद्रियः ॥ ५१ ॥ विज्योतिषेतिज्वलयेद्यत्रे-
च्छेज्जातवेदसि ॥ तमग्निःसर्वतःपातिभद्रेणद्रविणेनच ॥ ५२ ॥ विश्वानिनइतिद्वाभ्यामृग्भ्यांयोवह्निमर्चति ॥ सतरत्यापदःसर्वायशः
प्राप्नोतिचाक्षयम् ॥५३॥ हुत्वावह्निमुपस्थायप्राणार्थंहव्यवाहनम् ॥ अग्नेत्वमितिसूक्तेनधनमायुश्चवांछता ॥५४॥ यइच्छेद्विविधंवित्तंस-
त्वंचानुपमंमहत् ॥ उरोष्टइतिसूक्तेनह्युपतिष्ठेच्छतक्रतुम् ॥५५॥ प्रजाकामोयजेन्नित्यंचरुणादेवपत्नयः ॥ उपहृत्योपहारंचशेषंभुंजीतवा-
ग्यतः ॥५६॥ उच्छिष्टंचप्रदातव्यंभार्यायैपुत्रमिच्छता ॥ धेन्वाःसरूपवत्सायाःपयसासाधयेच्चरुम् ॥५७॥ अनुरूपांप्रजामस्यांलभतेना-
त्रसंशयः ॥ स्वस्त्यात्रेयंजपेन्नित्यंप्रातःप्रातःशुचिर्द्विजः ॥५८॥ एतत्स्वस्त्ययनंपुण्यंसर्वकल्मषनाशनम् ॥ सुहृदंज्ञातिजंचैवगच्छंतमनुमं-
त्रयेत्॥५९॥स्वस्तिपंथामितिप्रोच्यस्वस्तिमान्व्रजतेऽध्वनि॥विजिहीर्षवनस्पतेतदिदंच्यावनंस्मृतम्॥२६०॥ यच्च्यावयितुकामःस्याच्च्याव-
येत्तदिदंजपन्॥ द्विषंतंवापदाक्रम्यभूमौपांसुमयींकृतिं॥६१॥निष्पिषन्निवसंग्रामाच्च्यवतेनात्रसंशयः॥ स्त्रियंगर्भप्रमूढांवापाययेदनुमंत्रितं
॥६२॥ उदकंच्यावयेन्नैवगर्भोऽधश्च्यवतेसुखम्॥ अच्छावदेतिसूक्तंतुवृष्टिकामःप्रयोजयेत्॥६३॥ निराहारःक्लिन्नवासाह्यचिरेणप्रवर्षति॥
हुत्वायुतंवैतसीनांक्षीराक्तानांहुताशने ॥ ६४ ॥ महद्वर्षमवाप्नोतिसूक्तेनाच्छावदेनहि ॥ यइच्छेद्वरदांदेवींश्रियंनित्यंकुलेस्थिताम् ॥ ६५ ॥
सशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहम्॥श्रियःपंचदशर्चंचश्रीकामःसततंजपेत्॥६६॥आवाहयेच्छ्रियंपद्मेपंचभिःक(न)न्यकेपिवा(?) ॥
उपहारानुपहरेच्छुक्लान्भक्ष्यान्पयोदधि ॥६७॥ स्थालीपाचितशालीनांपयसासंप्रकल्पयेत्॥चांद्रायणकृतात्मातुप्रपद्येत्प्रयतःश्रियम्॥६८॥
सर्वौषधीभिःफांटाभिःस्नात्वाद्भिःपावनैरपि॥उपैतुमांदेवसखइतिराज्ञोऽभिषेचनी॥६९॥मनसःकाममित्येषापशुकामाभिषेचनी॥ कर्दमेने-

तियःस्नायात्प्रजाकामःशुचिव्रतः ॥२७०॥ अश्वपूर्वामितिस्नायाद्राज्यकामःशुचिव्रतः ॥ लोहितेचर्मणिस्नायाद्ब्राह्मणस्तुयथाविधि ॥७१॥
राजकर्मणिवैयाघ्रेक्षत्रियस्त्वथरौरवे ॥ वस्तचर्मणिवैश्यस्तुहोमःकार्यस्त्वनंतरम ॥७२॥ चंद्रामितितुपद्मानिजुहुयात्सर्पिषाद्विजः ॥ आदि-
त्यवर्णइत्यनयाविल्वहोमोविधीयते ॥ ७३ ॥ विल्वेध्मएववाग्निःस्यात्स्थालीश्चजुहुयाद्विजः ॥ दशसाहस्रिकोहोमःश्रीकामःप्रथमोविधिः
॥ ७४ ॥ हुत्वातुप्रयुतंसम्यगनंतांविंदतेश्रियम् ॥ अयुतंशतकृत्वस्तुहुत्वाशुक्लानिसर्पिषा ॥ ७५ ॥ अनंतामव्यवच्छिन्नांशाश्वतींविंदते
श्रियम् ॥ अशक्तौजपएवोक्तोदशसाहस्रिकावरः ॥ ७६ ॥ जप्त्वातुप्रयुतंसम्यगनंतांविंदतेश्रियम् ॥ अयुतंशतकृत्वस्तुजप्त्वाश्रियमुपाश्नुते
॥७७॥अप्स्वेवजुहुयान्नित्यंपद्मान्ययुतशोनिशि ॥ दृष्ट्वाश्रियंतूपरमेत्किलासत्वाद्बिभेतवै ॥ ७८ ॥ विल्वाशीविल्वनिलयोजुह्वन्विल्वानिस-
र्पिषा ॥ एकविंशतिरात्रेणपरांसिद्धिंनियच्छति ॥ ७९ ॥ येनयेनचकामेनजुहोतिप्रयतःश्रियै ॥ पद्मान्यथापिविल्वानिससकामःसमृध्यति
॥ २८० ॥ नजातुकृपणोऽर्थायश्रियमावाहयेत्क्वचित् ॥ नयत्किंचनकामेनहोमःकार्यःकथंचन ॥ ८१ ॥ महद्वाप्राप्यर्थमानेनराज्यकामेनवा
पुनः ॥ वाचःपरंप्रार्थयितायत्नाद्युक्तःश्रियंयजेत् ॥ ८२ ॥ अग्नेत्वष्टर्चसूक्तेनजुहुयादाज्यमन्वहम् ॥ ओजस्विनीमवाप्नोतिप्रजांधर्मवतींशुभां
॥८३॥ अच्छानइत्यृचादीप्तमुपतिष्ठेद्विभावसुम् ॥ प्रजांप्राप्यजयेच्छत्रूंस्तरतेदुरितानिच ॥ ८४ ॥ आगावइतिसूक्तेनगोत्रगालोकमातरः ॥
उपतिष्ठेद्व्रजंतीश्चयइच्छेत्ताःसदाक्षयाः ॥८५॥ त्वामिद्धीतिप्रगाथेनह्युपतिष्ठेच्छतक्रतुम् ॥ मध्याह्नेसंध्ययोश्चैवजपन्धनमवाप्नुयात् ॥८६॥
उपेतितिसृभीराज्ञोदुंदुभीन्संस्पृशेद्रणे ॥ ओजोबलमवाप्नोतिशत्रूंश्चैवनियच्छति ॥ ८७ ॥ पाणिनातृणमादाययज्ञायज्ञेतियोऽभ्यसेत् ॥
सोऽधीतस्यास्यसूक्तस्यफलंप्राप्नोतिनातृणः॥८८॥सूक्तांते[illegible]दकेपिवा ॥ निक्षिपेत्तत्प्रयत्नेनत्यक्तेऽन्यत्रभयावहम्॥८९॥

तृणपाणिंजपन्सूक्तंरक्षोघ्नंदस्युभिर्वृतः ॥ नभयंविंदतेकिंचिद्रक्षोभ्योऽरिभ्यएवच ॥ २९० ॥ गृहात्प्रपद्यमानस्तुपंथानंधनकाम्यया ॥ जपे-
त्सोध्वनियत्तेननापिपंथामितिव्रजन् ॥९१॥ येकेचज्मेत्यृचंत्वेतांध्यायन्निशिदिवौकसः ॥ अग्नौहुत्वातयाचाज्यंदीर्घमायुरवाप्नुयात् ॥९२॥
वयमुत्वेतिसूक्तंतुपौष्णंद्रविणवर्धनम् ॥ नित्यंजपेच्छुचिर्भूत्वाधनंविंदत्यभीप्सितम् ॥९३॥ यस्यनष्टंभवेत्किंचिद्द्रव्यंगोद्विपदंधनम् ॥ नश्येे-
द्वाध्वनियोमोहात्संपूषन्सजपेन्निशि ॥९४॥ इयमित्येतदाद्यंतंसूक्तंसारस्वतंद्विजः ॥ नित्यंजपेच्छुचिर्भूत्वावाग्मीभवतिबुद्धिमान् ॥ ९५ ॥
संवामितितुयत्सूक्तमष्टर्चंत्रैष्टुभंमतम् ॥ तज्जपन्प्रयतोनित्यमिष्टान्कामान्समश्नुते ॥९६॥ योअद्रिभित्तुयत्सूक्तंतत्सपत्ननिबर्हणम् ॥ बृहस्पतिं
नमस्कृत्वासपत्नांस्तृणुतेबहून् ॥९७॥ एनस्वीवाभिशस्तोवाकृत्वाकर्मविगर्हितं ॥ सोमारौद्रंजपेत्सूक्तंकृत्स्नमेनोव्यपोहति ॥९८॥ जीमूतसूक्त-
स्यविधिंयथालिंगमवेक्ष्यवै ॥ ऋग्भिःकर्माणिकुर्वीतस्वस्यांगानांयथाविधि ॥९९॥ संग्रामंतुप्रयातस्यराज्ञश्चैतत्प्रयोजयेत् ॥ सर्वाण्यंगानिरथ्या-
श्वसदश्वांश्चानुमंत्रयेत् ॥३००॥ यमेवदेशंगच्छेतशत्रून्वाप्यनुमंत्रितः ॥ नाजित्वाविनिवर्तेतपरंह्येतद्ब्रह्मणोबलम् ॥ १ ॥ पुत्रानायुरथारोग्यंयइच्छे-
दव्ययंसुखम् ॥ सोग्निंनरइतिसूक्तेनजुहुयादाज्यमन्वहम् ॥२॥ प्राग्नयेथत्रिभिःसूक्तैःसंध्ययोर्जपमारभेत् ॥ नरक्षोभ्योभयंवैतिधनंप्राप्नोतिचा-
क्षयम् ॥ ३ ॥ अभित्वायःप्रगाथेननित्यमर्चेतिवज्रिणम् ॥ सश्रियंविपुलांभुंक्तेप्राप्नोतिचधनायुषी ॥ ४ ॥ शंवतीःशंनइंद्राग्नीइत्येतांसततंजपेत् ॥ न-
रक्षोभ्योनभूतेभ्योव्याधिभ्योनभयंभवेत् ॥५॥ निर्वेष्टुकामोरोगार्तोभगसूक्तंसदाभ्यसेत् ॥ निवेशंविंदतेक्षिप्रंरोगेभ्यश्चप्रमुच्यते ॥ ६ ॥ इमाइति-
जपेन्नित्यंरौद्रंसूक्तंद्विजःशुचिः ॥ तज्जपन्प्रजयावित्तैःस्वयंचैवतरिष्यति ॥७॥ उत्तितीर्षुरथोयस्तुशंकेत्स्रोत्याःसमागमे ॥ समुद्रज्येष्ठाइत्येतज्जपे-
त्सूक्तंभयापहम् ॥८॥ आदित्यदैवतेसूक्तेरिपुघ्नेरोगनाशने ॥ पठेत्प्रातःशुचिर्भूत्वारिपुरोगैःप्रमुच्यते ॥९॥ वास्तोष्पतेप्रतीत्येतत्सूक्तंवास्तो-

ष्पतिंजपन् ॥ स्नातःकृत्वावैश्वदेवंपरंब्रह्मेदमुच्यते ॥ ३१० ॥ अमीवहेतिसूक्तेनभूतानिस्वापयेन्निशि ॥ नहिप्रस्वापनंकिंचिदीदृशंविद्यते क्वचित् ॥ ११ ॥ संबाधेविषमेदुर्गेबद्धोवानिर्गतःक्वचित् ॥ पलायन्वागृहीतोवातस्करैःसंजपेदिदम् ॥ १२ ॥ अमीवहाविश्वव्रतीमुद्धृत्या-न्याःप्रयोजयेत् ॥ सूक्तमेतज्जपेत्सर्वमितिमन्वेतिशौनकः ॥१३॥ त्रिरात्रंनियतोऽनश्नन्श्रपयेत्पायसंचरुम् ॥ तेनाहुतिशतंपूर्णंजुहुयात्सर्पि-षाद्विजः ॥१४॥ समुद्दिश्यमहादेवंत्र्यंबकंत्र्यंबकेत्यृचा ॥ एतत्पर्वशतंकृत्वाजीवेदब्दशतंसुखी ॥१५॥ तच्चक्षुरित्यृचास्नातउपतिष्ठेद्दिवा-करम् ॥ उद्यंतंमध्यगंचैवदीर्घमायुर्जिजीविषुः ॥ १६ ॥ रात्र्याअपरकालेयउत्थायप्रयतःशुचिः ॥ व्युषाइत्युपतिष्ठेतषड्भिःसूक्तैःकृतां-जलिः ॥१७॥ प्राप्नुयात्सहिरण्यादिनानारूपंधनंवहु ॥ अश्वांश्चपुरुषान्धान्यंस्त्रियोवासांस्यजाविकान् ॥१८॥ ध्रुवासुत्वासुक्षितिषुजप-न्बद्धःप्रमुच्यते ॥ तिष्ठन्रात्रौजपेदेनाविपाशःसन्प्रमुच्यते ॥१९॥ अहोरात्रंस्थितश्चैवमनश्नन्स्याद्विचेष्टितः ॥ अयःपाशाःस्फुटंत्यस्यदा-रुपाशास्तथैवच ॥ ३२० ॥ स्योनेतिपृथिवींदेवींप्रपद्येन्नियतःसदा ॥ जपेदेनांचतत्रापिभूमिपाशात्प्रमुच्यते ॥२१॥ अगम्यागमनेचैत-त्प्रायश्चित्तंविधीयते ॥ अन्यत्रगुरुतल्पाच्चतस्मात्पापात्प्रमुच्यते ॥२२॥ द्वादशाहमभुंजानःस्वगोत्रागमनेंजपेत् ॥ अर्धमासमभुंजानःस-खिदारेषुसंविशन् ॥२३॥ इदमापःप्रवहतयत्किंचेदमृचंपुनः ॥ इतिचैताजपेदापःप्रविश्यैतेषुकर्मसु ॥ २४ ॥ इंद्राविष्णूनमस्कृत्यजुहु-यादाज्यमन्वहम् ॥ सूक्ताभ्यांपरएताभ्यांयइच्छेद्भूमिमात्मनः॥२५॥ आस्यदन्नंविगाह्यांभःप्राङ्मुखःप्रयतःशुचिः॥सूक्ताभ्यांतिस्रएताभ्या-मुपतिष्ठेद्दिवाकरम् ॥२६॥ अनश्नतातुजप्तव्यंवृष्टिकामेनयत्नतः ॥ पंचरात्रेव्यतीतेतुमहद्वर्षमवाप्नुयात् ॥२७॥ योऽरिभिःसंप्रपद्येतअभि शस्येतवामृषा ॥ उपोष्यैवंत्रिरात्रंसजुहुयादाज्यमन्वहम् ॥ २८ ॥ इंद्रासोमेतिसूक्तंतुजपेच्चैतच्छतावरम् ॥ किंचिद्दद्याद्द्विजेभ्योंतेस्तृणु-

तेसर्वशात्रवान् ॥ २९ ॥ यस्यलुप्येद्व्रतंमोहाद्व्रात्यैर्वासंस्पृशेद्द्विजः ॥ उपोष्याज्यंचजुहुयात्त्वमग्नेव्रतपाइति ॥३३०॥ प्रसम्राजमितित्वे-
तज्जपन्नीक्षेद्दिवाकरम् ॥ उद्यंतमुपतिष्ठेतस्नात्वास्नात्वादिनेदिने ॥३१॥ अभियुक्तोभवेद्यस्तुविवदेद्वापिकेनचित् ॥ निर्जित्यसगणान्शत्रू-
न्क्षिप्रंवादंपराजयेत् ॥ ३२॥ शमग्निरग्निभिश्चेतिप्रपद्येद्वायुभास्करौ ॥ अग्निंप्रथमतःस्तुत्वामहाकृच्छ्रात्प्रमुच्यते ॥ ३३ ॥ नहीतियश्च-
तुष्केणस्नात्वावैप्रातरुत्थितः ॥ द्यौर्भूमावुपतिष्ठेतसत्रायतिभयात्स्वयम्॥३४॥तृचंजप्त्वायदित्येतत्स्नात्वाभ्यर्च्यपुरंदरम् ॥ प्राप्नुयान्मान-
सान्कामान्संपूज्यवसुरोचिषः ॥३५॥ आद्यानित्रीणिसूक्तानिपंचचाग्नेबृहन्निति ॥ षट्तथान्यानिसूक्तानिअग्निंनरइतीतिच॥३६॥प्रकृता-
नितिचाध्यायंभोजनात्प्राक्पठेदिदम्॥सर्वान्कामानवाप्नोतिमुच्यतेसर्वकिल्बिषैः ॥३७॥ प्राग्भोजनमिदंब्रह्मन्मानवात्तुमहर्षिणाम्॥पूर्वा-
ह्णेजपतोनित्यमर्थसिद्धिःसदाभवेत् ॥३८॥ अग्निनेत्याश्विनंसूक्तंचतुर्विंशकमुत्तमम् ॥ जपेत्प्रातःशुचिर्भूत्वानासत्यावर्च्यसुव्रतः ॥३९॥
सप्राप्नुयात्परामृद्धिंद्रविणंचोर्जमेवच ॥ समिधेतिजुहोत्यग्नौसूक्तेनप्रत्यृचंघृतम् ॥१४०॥ समृद्धिमतुलांप्राप्यसमानांजीवतेशतम् ॥ द्विच-
त्वारिंशकेनेदंशुक्रेनाद्येतिवज्रिणम् ॥ ४१ ॥ सख्यंलब्ध्वामहेंद्रेणसपत्नांस्तृणुतेबहून् ॥ प्राश्नीयाज्जपतोन्नास्तिप्रश्नंकृत्वाविधानतः ॥ ४२ ॥
तस्मात्पूर्वाह्णिकोध्यायःस्मृतोयंरिप्रनाशनः ॥ वाशंमहीतिजप्त्वाचप्राप्नोत्यारोग्यमेवच ॥४३॥ दुःस्वप्नघ्नीःपराजप्त्वाप्रातःपापैःप्रमुच्यते ॥
शंनोभवेतिद्वाभ्यांतुभुक्त्वान्नंप्रयतःशुचिः ॥ ४४ ॥ हृदयेपाणिनास्पृष्ट्वाज्योग्जीवेदगदःसुखी ॥ यतोभयंविजानीयात्तस्यांदिशियतव्रतः
॥ ४५ ॥ शुचौदेशेग्निमाधायजुहुयादिंद्रमर्च्यच ॥ यतइत्याज्यमुत्पूतंषड्भिर्गंधान्निवेद्यच ॥४६॥ पायसंदधिमंथंवायूषान्वाभ्युपहार-
येत् ॥ अहोरात्रमुपोष्यैकंतिलान्वाघृतमेववा ॥४७॥ उत्वामदंत्वितिस्नातोहुत्वाशत्रून्प्रमापयेत् ॥ वद्धोवाप्यवरुद्धोवावाग्यतःप्रयतोजपेत्

॥ ४८ ॥ त्याञ्चित्यादित्यदैवत्यंसद्योमुच्येतबंधनात् ॥ यद्द्यावस्तुजपेन्नित्यंप्रगाथंनियतःशुचिः ॥ ४९ । सकीर्तिमतुलांप्राप्यसर्वोन्कामा-
न्समश्नुते ॥ त्वंनोअग्नइतिसूक्तेनहुत्वार्च्याग्निंघृतेनतु ॥ ३५० ॥ पालितोविश्वतोदीप्तात्प्राप्नुयाद्वह्नितोरयिम् ॥ आतुसूक्तेनसततंधनंयाचे-
त्पुरंदरम् ॥ ५१ ॥ प्रसमित्पाणयेतस्मैधनंयच्छतिवृत्रहा ॥ कन्यावारितिसूक्तंतुसततंनियतोजपेत् ॥ ५२ ॥ त्वग्दोषिणींतथालोम्नींक्षिप्रंत-
स्मात्प्रमोचयेत् ॥ यदद्यकच्चेत्युदितेरवौस्तुत्वापुरंदरम् ॥५३॥ गृणन्नपोहतेरिप्रंवश्यंवाकुरुतेजगत् ॥ यद्वागितिद्व्यृचेनैत्यगौरीर्योऽर्चतिसुव्र-
तः ॥ ५४ ॥ तस्यनासंस्कृतावाणीमुखादुच्चार्यतेक्वचित् ॥ बण्महानितिदृष्ट्वार्कमुपतिष्ठेदृचंपठन् ॥ ५५ ॥ ब्रुवन्नप्यनृतांवाणींनलिंपेदनृते-
नसः ॥ पूर्णेचंद्रमसिज्योत्स्नामियंयेत्यनुसेवयेत् ॥ ५६ ॥ चंद्रदृष्टिस्त्वनिमिषोवर्चस्वीदृष्टिमान्भवेत् ॥ प्रजाहेतिजपन्स्नात्वानयोनिंप्रति-
जायते ॥ ५७ ॥ मातेतिगामुपस्पृश्यजपन्मास्तुसमश्नुते ॥ वचोविदमितित्वेतांजपन्वाचंसमश्नुते ॥ ५८ ॥ पावमानंपरंह्येतन्नवमंमंडलं
पठेत् ॥ स्नात्वाशुचिःशुचौदेशेसपवित्रःसकांचनः ॥ ५९ ॥ इत्यृग्विधानेद्वितीयोऽध्यायः ॥ २ ॥ ॥ स्वादिष्ठयेतिगायत्रीःपावमानी-
र्जपेद्द्विजः ॥ पवित्राणांपवित्रंतुपावमानीर्ऋचोजपेत् ॥ ३६० ॥ प्रयतोऽप्सुनिमज्ज्याशुसर्वपापैःप्रमुच्यते ॥ एतासांकीर्तनंपुण्यंस्मरणंधार-
णंतथा ॥ ६१ ॥ याथातथ्येनचज्ञात्वाब्रह्मलोकंसमश्नुते ॥ एतेषांतुयथोक्तानांगुणवद्यद्यदुत्तरम् ॥ ६२ ॥ कीर्तनात्तुभवेत्पूतःस्मरणात्स्मर-
तेपरम् ॥ धारणाद्ब्रह्माणमेतिपूतात्माविजितेंद्रियः ॥६३॥ याथातथ्येनचज्ञात्वाब्रह्मणोविंदतेपदम् ॥श्रावयेद्देवताकृत्येब्राह्मणान्भुंजतोऽग्रतः
॥ ६४ ॥ प्रीणातिदेवतांशश्वत्समर्धयतिकर्मवा ॥ पित्र्येपितॄन्प्रीणयंतिश्राविताःप्रयतात्मना ॥ ६५ ॥ कृत्वादोषान्सुमहतोप्यपेयादीन्प्रपी-
यच ॥ जप्त्वातरत्समंदीयंप्रविश्यापह्नयहाच्छुचिः ॥ ६६॥ अक्षय्यंचभवेदन्नंपितृभ्यःपरमंमधु ॥ यःपावमानीरध्येतिपूतात्माविजितेंद्रियः

॥ ६७ ॥ तस्यकामदुघाभूत्वोपतिष्ठंतिचधेनवः॥आयुर्बलंयशोवित्तंप्रजांकीर्तिमनामयम् ॥६८॥ स्वाध्यायंपुण्यमतुलंपूतःप्राप्नोतिचाक्षयं ॥ अशक्तस्तुजपद्युक्तस्त्रिंशद्वैखानसीर्ऋचः ॥ ६९ ॥ सप्तर्षिभिश्चयाःप्रोक्ताःपवित्रस्यचयाःपराः ॥ ऋचांद्विषष्टिःप्रोक्तेयंपवस्वेत्यृषिसत्तमैः ॥ ३७० ॥ सर्वकल्मषनाशायपावनायशिवायच ॥ स्वादिष्ठयेतिसूक्तानांसप्तषष्टिरिहोदिताः ॥ ७१ ॥ दशोत्तराण्यृचांश्चैवपावमानीःशतानिषट् ॥ एतज्जुह्वन्जपेन्मंत्रंघोरंमृत्युभयंहरेत् ॥७२॥ व्याधिभ्यःपरिमोक्षंचलभतेनात्रसंशयः ॥ प्रतिगृह्याप्रतिग्राह्यंभुक्त्वाचान्नंविगर्हितम् ॥७३॥ जपंस्तरत्समंदीयंप्रविश्यापस्त्र्यहाच्छुचिः ॥ पावमानंपरंह्येतद्रहसामपनोदनम् ॥७४॥ प्राणानायम्यचध्यायेदंतेदेवान्पितॄन्नृषीन् ॥ उपोष्याज्यंचजुहुयादग्निंसोमंचपूजयेत् ॥७५॥ सरस्वतींचार्चयेतपयोंबुमधुसर्पिषा ॥ अध्यात्मकंपवित्रंतेसूक्तंजप्त्वापुनःशुचिः ॥ ७६ ॥ गतिमिष्टामवाप्नोतिविंदतेचेहसिद्धयः ॥ नानानमितिसूक्तान्यत्तत्कालेचजपेत्सकृत् ॥ ७७ ॥ जप्त्वाचैवपरंस्थानममृतत्वंचगच्छति ॥ आपोहिष्ठेतिनियतःप्रयुंजीतसदाद्विजः ॥७८॥ स्नानार्थंशुद्धिकामस्तुजपेतत्रिःसमाहितः ॥ अप्सुचैवनिमज्जित्वात्रिःपठेत्सुसमाहितः ॥ ७९ ॥ ब्रह्महातुकपालेनखट्वांगीचीरसंवृतः ॥ चरेद्द्वादशवर्षाणिस्वकर्मपरिकीर्तयन् ॥३८०॥ अजपन्मनसैवैतदापोहिष्ठेतिसंस्मरेत् ॥ ऊर्ध्वंतुपंचमाद्वर्षाज्जपेदेवसहस्रशः ॥ ८१ ॥ अपरस्तुत्रिसहस्रोजपःस्यात्प्रत्यहंसदा ॥ पूर्णेतुद्वादशेवर्षेब्राह्मणोविप्रमुच्यते ॥८२॥ समेत्यब्राह्मणाब्रूयुरथतंचरितव्रतम् ॥ आचरितंभवेत्किंचिन्मिथ्यावादीपतेत्पुनः ॥८३॥ दशावरान्दशपरान्हन्यात्स्वमनृतंवदन् ॥ ॐभोइतिवदेद्द्विजैरनुज्ञातःशुचिर्जपेत् ॥ ८४ ॥ स्थालीपाकंचकुर्वीतसोमायेव्रतचारिणे ॥ एवंसमुच्यतेपापात्सावित्रींप्रतिपद्यच ॥८५॥ ब्रह्महातुपुराशक्रस्त्वाष्ट्रंहत्वात्त्वृषिंप्रभुं ॥ सिंधुद्वीपस्तमेताभिरभिषिच्यव्यमोचयत् ॥ ८६ ॥ ब्रह्मस्वंचगुरुद्रव्यंस्तेयंकृत्वाजपन्निमाः ॥

अनेनैवविधानेनषड्भिर्वर्षैःप्रमुच्यते ॥ ८७ ॥ ब्रह्महाचसुरापश्चनियमेनजपन्निमाः ॥ अनेनैवोपचारेणब्रह्मघ्नइवमुच्यते ॥ ८८ ॥
ब्राह्मणस्यरुषोद्यम्यजयेद्देतान्निपात्यच ॥ त्र्यहंनिपात्योपवसेदेकाहमवगूर्यच ॥ ८९ ॥ शोणितंतुप्रहारेणोत्पाद्यसकथंचन ॥ त्रिरात्रमेवोप-
वसेज्जपेतापिप्रसाद्यतम् ॥३९०॥ प्रातरुत्थायसततंकुर्यान्मार्जनमात्मनः ॥ रात्रौकृतस्यपापस्याविज्ञातस्यापिनिष्कृतिः ॥९१॥ सायं-
चनित्यमेताभिःकुर्यान्मार्जनमात्मनः ॥ दिवाकृतस्यपापस्याविज्ञातस्यापिनिष्कृतिः ॥९२॥ उपतिष्ठेतराजानंऋअसूक्तेनवैद्विजः ॥ स्थाली-
पाकंतुकुर्वीतपक्षयोर्यमदैवतम् ॥९३॥ अष्टम्यांचचतुर्दश्यांयजेतहविषायमम् ॥ परेयिवांसमित्येतत्सूक्तमत्रप्रयोजयेत् ॥९४॥ पुरायुषःप्र-
मीयेतनजातुसकथंचन ॥ प्रीयेत्तस्ययमोराजामृतिंचांतेप्रयच्छति ॥९५॥ धर्मराजायस्वाहेतिमंत्रांतेजुहुयाद्धविः ॥ वैशाखपौर्णमास्यांतु
कर्मनित्यंप्रयोजयेत् ॥९६॥ अयनेपर्वसुस्नात्वायःप्रदद्यात्तिलोदकम् ॥ यमायसगणायैवतद्भयंनसविंदति ॥९७॥ नित्यमेवप्रपद्येतपरं-
मृत्योजपन्द्विजः ॥ नक्तभोजीमिताहारःपरिसंवत्सरंसदा ॥९८॥ नैनंपुरायुषान्मृत्युर्नयतेससुतप्रजम् ॥ फलाहारोजपन्मृत्युंत्रिभिर्वरमिता-
शनः ॥ ९९ ॥ षष्ठेकालेतुभुंजीतफलमूलमथापिवा ॥ स्थानासनाभ्यांविहरेदुदकेशिशिरेवसन् ॥४००॥ ग्रीष्मेपंचतपास्तुस्याद्वर्षास्व-
भ्रावकाशकः ॥ एवंयुक्तोजयेन्मृत्युंरोगेभ्यश्चप्रमुच्यते ॥१॥ भ्रातुर्भार्यामपुत्रस्यसंतानार्थंमृतेपतौ ॥ देवरोन्वारुरुक्षंतीमुदीर्ष्वेतिनिव-
र्तयेत् ॥२॥ ऋतुकालेतुसंप्राप्तेघृताभ्यक्तोऽथवाग्यतः ॥ एकमुत्पादयेत्पुत्रंनद्वितीयंकथंचन ॥ ३ ॥ दशारक्षंतुशांत्यर्थंभद्रंनइतिसंस्मरेत् ॥
नित्यंजपेच्छुचिर्भूत्वामानसंविंदतेसुखम् ॥ ४ ॥ फलाहारोभवेन्मासंमासंचापःपिबेत्ततः ॥ वायुभक्षोभवेन्मासंजपन्नेतत्सहस्रशः ॥ ५ ॥
तस्यैवास्यसिध्यंतिसर्वेकामाःसमीहिताः ॥दिव्यान्पश्यतिगंधर्वान्सिद्धान्पश्यतिचारणान् ॥६॥ अंतर्धानंव्रजत्यस्माल्लोकादाकाशगोभवे-

त् ॥ दूरात्पश्यतिदूराच्चशृणोतिपरमेष्ठिवत् ॥ ७ ॥ प्रदेवत्रेतिनियतोजपेतमरुधन्वसु ॥ प्राणांतिकेभयेप्राप्तेक्षिप्रमंभःसविंदति ॥८॥ वैभीतकांस्तुत्रीनक्षान्गंधैःसमभिवासयेत् ॥ पुष्पैरवकिरेच्चैवंस्थापयित्वाविहायसि ॥९॥ संहत्यपादौतांरात्रिंतिष्ठन्नक्षस्तुतिंजपेत् ॥ प्रावेपामेत्यृचंत्वेतांमनसैवजपेन्निशि ॥ ४१० ॥ व्युषायामुदितेसूर्येजपन्नादेवनंव्रजेत् ॥ एतामेवजपेन्नित्यंजयत्यक्षैर्नजीयते ॥११॥ यमेव जेतुमिच्छेतस्पृष्ट्वामूर्धनितंजपेत् ॥ सूक्तशेषंजयत्यन्यान्जीयतेनसकेनचित् ॥१२॥ अबुध्रमुषासानक्तेत्येतेस्वस्त्ययनेजपेत् ॥ नमोमित्रस्य वरुणस्यचक्षसइतिनित्यशः ॥ १३ ॥ अस्यैवचोत्तमर्गेकाययैनोभ्यःप्रमुच्यते ॥ तयाज्यंजुहुयान्नित्यमेनोभ्योविप्रमुच्यते ॥ १४ ॥ दिवस्परीतिसूक्तंतुजपेच्छ्रद्धासमन्वितः ॥ सर्वत्रलभतेश्रद्धांश्रद्धाकामःसमाहितः ॥ १५ ॥ माप्रगामेतिचजपेत्समूढोगहनेपथि ॥ स्वस्तिमान्व्रजतेऽध्वानंविंदतेचपरंसुखम् ॥१६॥ क्षीणायुरितिमन्येतयंकंचित्सुहृदंप्रियम् ॥ यत्तेयममितिस्नातस्तस्यमूर्धानमालभेत् ॥१७॥ सहस्रकृत्वःपंचाहंजपेदायुर्लभेतसः ॥ घृतेनसिंधुद्वीपस्यसूक्तेनैनंचलेपयेत् ॥१८॥ संविशन्शयनेनित्यमेतन्मंत्रंजपेतवै ॥ पुत्रान्भार्यांप्रियंचान्यमात्मानंचसमालभेत् ॥१९॥ जीवावृत्तिंप्रयुंजीतनित्यमेतांघृतेनतु ॥ स्रोतांस्यभज्यसर्वाणिसुखीभवतिविज्वरः ॥ ४२० ॥ इदमित्थेतिमंत्रोयंसहस्रसनिरुच्यते ॥ अर्धमासंहविष्यान्नमर्धमासंपयःपिबेत् ॥२१॥ उपोष्यचापरंपक्षमरण्येस्थंडिलेशुचौ ॥ औदुंबरेध्मं प्रज्वाल्यजुहुयात्पावकेघृतम् ॥२२॥ स्रुक्स्रुचौचमसाश्चैवसर्वमौदुंबरंभवेत् ॥ हुत्वाहुतिसहस्रंतुतेनकामेनयुज्यते ॥ २३ ॥ आभोगमेव कर्मैतज्जानीयात्सिद्धिमेवतु ॥ व्यर्थमव्यर्थमेवैतत्फलंचास्यप्रयच्छति ॥२४॥ चतुष्पथेचान्नकामआदित्याभिमुखोघृतम् ॥ जुहुयाद्धनकामस्तुसहस्रंभोजयेद्द्विजान् ॥२५॥ पशुकामोजपेद्गोष्ठेजुहुयाद्वाप्युपोषितः ॥ विधिनानेननियतःसहस्रंविंदतेपशून् ॥ २६ ॥ लोहलोहित-

हेमानांकारयेत्त्रिवृतंमणिम् ।। सहस्रसमिधांचैवसंपाताभिहुतोभवेत् ।।२७।। हुत्वासहस्रसंपातंशिरसाधारयेततम्।।पाणिनावाशुचिर्नित्यंस-
हस्रानुचरोभवेत् ।।२८।। परावतःस्वस्त्ययनंस्नातकस्यविधीयते ।। स्वर्गकामश्चतंनित्यंजपेतनियतव्रतः ।। २९ ।। बृहस्पतेप्रथममितिनि-
त्यंज्ञानस्तुतिंजपेत् ।। ज्ञानवान्भवतिश्रीमाननंतांविंदतेश्रियम् ।।४३०।। अलक्ष्मीनाशनार्थंतुपयोभक्षोभवेन्नरः ।। वयःसुपर्णाइत्येतांजप-
न्वैविंदतेश्रियम् ।।३१।। तमसाप्रावृतोयस्तुमन्येतात्मानमात्मनि ।। अश्रियावापिसंयुक्तोजपन्नेतांप्रमुच्यते ।।३२।। अक्षिणीप्रातरुत्थाय
विमृजीतैतयासदा ।। चक्षुष्मान्भवतिश्रीमाँल्लक्ष्मीश्चापिप्रवर्धते ।।३३।। नतंविदाथेत्येतांचजपन्विप्रःसमाहितः ।। विहायकल्मषंसर्वंब्रह्मा-
भ्येतिसनातनम् ।।३४।। अनयापर्वसुस्नात्वायःप्रदद्यात्तिलोदकम् ।। यमायसगणायैवतद्धयंसनविंदति ।।३५।। यस्तेमन्योइतिसदासपत्न-
ग्नेत्विमेजपेत् ।। घृतेनाभिहुतंद्वाभ्यांधारयेदायसंमणिम् ।।३६।। जुहुयादायसंशंकुमाभ्यामेवचतुर्दशीम्।।खादिरेध्मसमिद्धेग्नौसपत्नान्प्रति-
बाधते ।।३७।। यथाहिपरमंब्रह्मगुह्यंपावनमद्भुतम् ।। तथासंवननंहृद्यंनह्यस्माद्विद्यतेपरम् ।।३८।। उपोष्यद्वादशाहानिजपन्नेतमृषिंमुनिः ।।
तन्मनाप्रयतःसस्यात्रिरह्नोभ्युदयादपः ।।३९।। अंतेतुद्वादशाहस्यशुचौदेशेसमाहितः ।। पुंसःप्रतिकृतिंकुर्याद्भूमौपांसुमयींकृती ।।४४०।।
तस्याहृदयदेशंतुसमाक्रम्यजपेदृषिम् ।। अमोघंकर्मजानीयादहोरात्रेगतेसति।।४१।।त्र्यहेणधनिनंवैश्यंचतूरात्रेणक्षत्रियम् ।। राजानंपंचरा-
त्रेणषड्रात्रेणद्विजोत्तमम् ।।४२।। तपस्विनःसप्तरात्राज्जपेद्भुंजीतचैवतम् ।। अपिवोपोषितःस्नातोजपेदेतत्सदास्थितः ।।४३।। यइच्छेद्दशमा-
नेतुंहीनंतुपरिवर्जयेत् ।। सहस्रसंपातहुतंबिल्वानांचूर्णमावपेत् ।। ४४ ।। उदपानेवशंनेतुंतंजनंक्षिप्रमानयेत् ।। मातर्यात्मनिपुत्रेषुपितृभ्रा-
तृसुहृत्सुच ।।४५।। हृद्यमेतत्प्रयुंजीतशिरसाधारयेत्ततम् ।। सुमित्रंतुपरिष्वज्यमूर्धन्याघ्रायचात्मजम् ।। ४६ ।। हृद्यमेतत्प्रयुंजीतशांत्यर्थाय

सुखायच ॥ असंसिद्धेसंवननेपांसुप्रतिकृतिंपथि ॥४७॥ प्रज्वाल्यजुहुयादग्निंघृतेनब्राह्मणोयदि ॥ क्षत्रियस्त्वथतैलेनसार्षपेणविशोपिच ॥ ४८ ॥ आयसींवाप्रतिकृतिमग्निमध्येनिधापयेत् ॥ तांचप्रज्वलितांमत्वाजुहुयात्तन्मनाःशुचिः ॥४९॥ उग्रेणमहसाहन्यात्क्रुद्धश्चजुहुयाद्घृतम् ॥ यथायथाप्रज्वलितेहूयतेजातवेदसि ॥४५०॥ दीप्तांप्रतिकृतिंविप्रस्तथासवशमेष्यति ॥ श्मशानदग्धपांसूनांकुर्याद्वेदिंविलक्षणाम् ॥५१॥ वैभीतकेध्मज्वलितेलोहप्रतिकृतिंन्यसेत् ॥ अर्धरात्रेस्थितेतैलंसार्षपंलवणान्वितम् ॥ ५२ ॥ तत्रशरमयंकुर्यात्प्रस्तरंप्रतिलोमतः ॥ त्रिपुशंकुपुचासीनोजुहुयादुग्रदर्शनः ॥ ५३ ॥ मुक्तकेशोवधंप्रेप्सुरचिरेणप्रसाधयेत् ॥ अथवाभिचरेदेनंजुहुयादात्मशोणितम् ॥५४॥ वशंनयतिराजानंक्षिप्रंजनपदंपुरम् ॥ पुष्टिकर्मापिकर्तव्यंहृद्येनैवयतात्मना ॥ ५५ ॥ अनागसिनकुर्वीतब्राह्मणोवधसंयुतम्॥सरूपवत्सायागोश्चपयसासाधयेच्चरुम् ॥५६॥ सहस्रसंपातहुतंपायसेवत्समग्रजम् ॥ सहस्रानुचरोवत्सःसस्याद्रोगैर्विवर्जितः ॥५७॥ गाश्चैवपाययेत्ताश्चभवंतिव्याधिवर्जिताः ॥ पुत्रांश्चप्रार्थयेन्नित्यंप्रियानन्यांश्चसज्जनान् ॥५८॥ निरामयाश्चस्निग्धाश्चभवंतिविगतज्वराः ॥ स्त्रियंचेदभिमन्येततस्याःसंवननंमहत् ॥ ५९ ॥ व्रीहीणांनखभिन्नानांतंडुलान्सूक्ष्मचूर्णितान् ॥ सहस्रसंपातहुतान्स्वेदयेत्कुशलोग्निना ॥४६०॥ तेनप्रतिकृतिंकुर्यात्तांध्यात्वामनसास्त्रियम् ॥ अक्तांसर्षपतैलेनजुहुयादंगशश्चताम् ॥६१॥ पादौप्रथमतश्छिद्यात्स्फिडित्यग्नौनिधापयेत् ॥ अथजंघेजानुजीचऊरूबाहूततःशिरः ॥ ६२ ॥ छित्त्वाहृदयदेशंतुहृदयेस्वेनिवेशयेत् ॥ जपन्नेतमृषिंविप्रस्त्रीवशंसाधिगच्छति ॥ ६३ ॥ नैतत्परगृहीतासुनसाध्वीपुकथंचन ॥ नधर्मव्रतशीलासुकुर्वीतद्विजसत्तमः ॥६४॥ क्कामंपरिगृहीतासुहीनवर्णासुयश्चरेत् ॥ पतिमस्यागुणीकुर्वन्पूर्वंपश्चात्तुतांस्त्रियम् ॥६५॥ भुक्तांवापायसंसद्यश्छर्दयित्वानिधापयेत् ॥ तच्चूर्णंकृत्यजायायैदेयंसंवननंस्मृतम् ॥ ६६ ॥ महावृक्ष-

फलान्येवमयुग्मान्यभिमंत्रयेत् ॥ तेषांयुग्मानिभंजीतस्वयमर्धानिशेषयेत् ॥६७॥ तानिदद्याद्यमिच्छेत्तुवशीकर्तुंजपन्नृषिम् ॥ सुहृद्भूत्वासु-
हृद्यस्वदेयंसंवननंस्मृतम् ॥६८॥ एकैकमभिरूपंतुहृद्यसूक्तादतःपुनः ॥ कर्माणित्वभिरूपाणिकुर्याद्यस्तुयथेच्छति ॥ ६९ ॥ पराकदास-
स्यविधिंहृद्येनोक्तंविदुर्बुधाः ॥ स्त्रीणांसंवननंचैतत्पुंसामपिविधीयते ॥४७०॥ द्वेष्येतुज्ञातिनामेवजपेच्चैवसदायुधि ॥ खादिरंकारयेच्छं-
कुंहृदितंसंनिवेशयेत् ॥ ७१ ॥ कृत्वाप्रतिकृतिंपूर्वंपांसुभिर्वाथवातुषैः ॥ इषुमप्यनुमंत्र्यैनंसंग्रामंसंप्रकल्पयेत् ॥७२॥ रिपुन्नसेतज्जानी-
यात्प्रयुक्तमपराजितम् ॥ पराकदासप्रेष्यार्थंहृद्यंसंवननंस्मृतम् ॥७३॥ चिंतयन्मनसैवैतत्सूक्तंसिद्धिंनियच्छति ॥ सूर्यायैभाववृत्तंतुश्रावये-
त्कन्यकापिता ॥७४॥ अनुरूपंसुसदृशंभर्तारंतेनविंदति ॥ इमामितिजपेत्कन्यानाभिमालभ्यनित्यशः ॥ ७५ ॥ एवमेवजपेद्भर्तादीर्घा-
युःसभवेत्ततः ॥ स्नापयेदभिरूपैश्चभ्राताकन्यापितापिवा ॥७६॥ शतंपुत्रवतीयावन्नचभर्त्रावियुज्यते ॥ सम्राज्ञीतिजपेन्मूर्ध्निकन्यामालभ्य
नित्यशः॥७७॥श्वश्रूश्वशुरदेवरैर्ननांद्राचापिपूज्यते ॥ इंद्राण्याकृतसंवादंस्नानेसूक्तंप्रयोजयेत् ॥७८॥ नववर्गोत्तमयुतंपतिसौभाग्यपुत्रदम् ॥
जलपुष्पोत्करयुतेचित्रकुंभसमावृते ॥७९॥ कर्तव्योऽत्रतथायोगःसोमगंधर्ववह्निनाम् ॥ भगायाप्सरसांचैवयक्षाधिपतयेपिच ॥४८०॥
इंद्राण्यैदेवपत्नीनांरतिप्रद्युम्नयोस्तथा ॥ नदीसलिलसंपूर्णेपंचगव्यसमायुते ॥८१॥ हुत्वाग्निंस्नापयेत्कन्यांस्थितांदेशेतुदक्षिणे॥ प्रियंगुवटना-
गानांकषायोद्धृष्टकेरसम् ॥८२॥संपाताभिहुतंकृत्वासर्वौषधिसमन्वितम्॥अभिमंत्र्यचसूक्तांतेनवभिश्चस्तुवीतवै ॥८३॥ एताभिरद्भिःपूर्णे-
नअभिषिंचेदुपोषिताम्॥याःपतिघ्न्यःस्त्रियस्तन्व्यःशाम्यंतेनास्थितेनवै ॥८४॥ स्नापयेदाहनस्याद्भिर्विद्यायांविप्रवादिनीम्॥ सूक्तादुपोद्धरेदे
नंनसेशइतितुद्व्यृचम्॥८५॥उपदिष्टेयमेकेषांपुंसःकर्मणिपौरुषे॥रक्षोहणंवाजिनमित्येतद्रक्षोहणंजपेत्॥८६॥अग्निंप्रज्वाल्यचैतेनउपतिष्ठेतनि

त्यशः ॥ आज्याहुतीश्चजुहुयात्तेनरक्षांसिबाधते॥८७॥एतद्रक्षोहणंशांतिःपरमैषाप्रकीर्तिता॥हविष्पांतीयमेतत्तुसूक्तमत्रप्रयोजयेत् ॥८८॥
गर्हितान्नात्तृयोगेचहविष्पांतीयमभ्यसेत् ॥ पवित्रंपरमंह्येतद्ध्यातव्यंचाप्यभीक्ष्णशः ॥८९॥ आदित्येदृष्टिमास्थायषण्मासान्नियतोभवेत्॥
देवयानंसपंथानंपश्यत्यादित्यमंडले ॥४९०॥ विद्यावैश्वानरीचास्यस्वकायस्थाप्रकाशते ॥ हविष्पांतीयमभ्यस्यसर्वपापैःप्रमुच्यते ॥९१॥
इंद्रंस्तवेतिसूक्तंतुजपेच्छत्रुनिवर्हणम्॥पवित्राणांपवित्रंचगुह्यंपावनमद्भुतम् ॥९२॥ शुक्लपक्षेशुभेवारेसुनक्षत्रेसुगोचरे ॥द्वादश्यांपुत्रकामाय
चरुंकुर्वीतवैष्णवम्॥९३॥दंपत्योरुपवासःस्यादेकादश्यांसुरालये॥ऋग्भिःषोडशभिःसम्यगर्चयित्वाजनार्दनम् ॥९४॥चरुंपुरुषसूक्तेनश्रप-
येत्पुत्रकाम्यया॥प्राप्नुयाद्वैष्णवंपुत्रमचिरात्संततिक्षमम्॥९५॥द्वादशद्वादशीःसम्यक्पयसानिर्वपेच्चरुम् ॥ यःकरोतिहयस्थस्याद्यातिविष्णोः
परंपदम्॥ ९६ ॥ हुत्वाग्निंविधिवत्सम्यगृग्भिःषोडशभिर्बुधः ॥ कृतांजलिपुटोभूत्वास्तवंताभिःप्रयोजयेत् ॥ ९७ ॥ केशवंमार्गशीर्षेतुपौ-
षेनारायणंतथा ॥ माधवंमाघमासेतुगोविंदंफाल्गुनेपुनः ॥९८॥ चैत्रेचैवतथाविष्णुंवैशाखेमधुसूदनम् ॥ ज्येष्ठेत्रिविक्रमंविद्यादाषाढेवाम-
नंविदुः ॥ ९९ ॥ श्रावणेश्रीधरंविद्याद्धृषीकेशंततःपरे ॥ आश्विनेपद्मनाभंतुदामोदरंचकार्तिके ॥ ५०० ॥ द्वादशैतानिनामानिऋष्यशृं-
गोऽब्रवीन्मुनिः ॥ पूजयेन्मासनामभिःसर्वान्कामान्समश्नुते ॥१॥ आयुष्मंतंसुतंसूतेपरामेधासमन्वितम्॥धनवंतंप्रजावंतंधार्मिकंसात्विकं
तथा ॥२॥ ससमिधोश्वत्थवृक्षस्यहुत्वाग्निंजुहुयात्पुनः ॥ उपस्थानंहुताशस्यध्यात्वाचर्यमधुसूदनम् ॥ ३ ॥ हविर्होमंततःकुर्यात्प्रत्यृचंवाग्य-
तःशुचिः ॥ सूक्तेनजुहुयादाज्यमादावंतेचपूर्ववत् ॥ ४ ॥ हविःशेषंनमस्कृत्वानारीनारायणंपतिम् ॥ भक्षयित्वाहविःशेषंलब्धाशीःसंवि-
शेत्क्षणम् ॥५॥ ततस्तुकृत्वेदंकर्मकर्तव्यंद्विजतर्पणम् ॥ द्वितीयंस्त्रीनिवर्तेतयावद्गर्भंचविंदति ॥६॥ अपुत्रामृतपुत्रावायाचकन्याःप्रसूयते॥

क्षिप्रंसाजनयेत्पुत्रमृष्यशृंगोयथाब्रवीत् ॥ ७॥ अर्चनंसंप्रवक्ष्यामिविष्णोरमिततेजसः ॥ यत्कृत्वामुनयःसर्वेब्रह्मनिर्वाणमाप्नुयुः ॥ ८ ॥
अप्स्वग्नौहृदयेसूर्येस्थंडिलेप्रतिमासुच ॥ षट्स्वेतेषुहरेःसम्यगर्चनंमुनिभिःस्मृतम् ॥ ९ ॥ अग्नौक्रियावतांदेवोदिविदेवोमनीषिणाम् ॥
प्रतिमास्वल्पबुद्धीनांयोगिनांहृदयेहरिः ॥५१०॥ आपोह्यायतनंतस्यतस्मात्तासुसदाहरिः ॥तस्यसर्वगतत्वाच्चस्थंडिलेभावितात्मनाम्॥११॥
दद्यात्पुरुषसूक्तेनयःपुष्पाण्यपएववा ॥ अर्चितंस्याज्जगदिदंतेनसर्वंचराचरम् ॥१२॥ आनुष्टुभस्यसूक्तस्यत्रिष्टुबंतस्यदेवता ॥ पुरुषोऽथजग-
द्वीजमृषिर्नारायणःस्मृतः ॥ १३ ॥ नारायणमहाबाहोशृणुष्वैकंमहाप्रभो ॥ वक्ष्येपुरुषसूक्तस्यविधानंत्वर्चनंप्रति ॥१४॥ अग्निकार्यंज-
पविधिंस्तोत्रंचैवतदात्मकम् ॥ स्नात्वायथोक्तविधिनाप्राङ्मुखःशुद्धमानसः ॥१५॥ प्रथमांविन्यसेद्वामेद्वितीयांदक्षिणेकरे ॥ तृतीयांवाम-
पादेतुचतुर्थींदक्षिणेन्यसेत् ॥ १६ ॥ पंचमींवामजानुनिषष्ठींवैदक्षिणेन्यसेत् ॥ सप्तमींवामकुक्षौतुअष्टमींदक्षिणेन्यसेत् ॥१७॥ नवमीं
नाभिदेशेतुदशमींहृदयेन्यसेत् ॥ एकादशींकंठदेशेद्वादशींवामबाहुके ॥१८॥ त्रयोदशींदक्षिणेन्यआस्येचैवचतुर्दशीम् ॥ अक्ष्णोःपंचदशीं
चैवषोडशींमूर्ध्निविन्यसेत् ॥१९॥ एवंन्यासविधिंकृत्वापश्चात्पूजांसमारभेत् ॥ यथादेहेतथादेवेन्यासंकृत्वाविधानतः ॥५२०॥ आद्य-
यावाहयेदेवमृचातुपुरुषोत्तमम् ॥ द्वितीययासनंदद्यात्पाद्यंचैवतृतीयया ॥२१॥ अर्घ्यंचतुर्थ्यादातव्यंपंचम्याचमनीयकम् ॥ षष्ठ्यास्नानं
प्रकुर्वीतसप्तम्यामस्त्रमेवतु ॥२२॥ यज्ञोपवीतमष्टम्यानवम्याचानुलेपनम् ॥ पुष्पंदशम्यादातव्यमेकादश्यातुधूपकम् ॥ २३ ॥ द्वादश्या
दीपकंदद्यात्त्रयोदश्यानिवेदनम् ॥ चतुर्दश्यानमस्कारंपंचदश्याप्रदक्षिणाम् ॥२४॥ दक्षिणातुयथाशक्तिषोडश्याचप्रदापयेत् ॥ स्नानेवस्त्रेच-
नैवेद्येदद्यादाचमनीयकम् ॥२५॥ ततःप्रदक्षिणांकृत्वाजपंकुर्यात्समाहितः ॥ यथाशक्तिजपित्वातुसूक्तंतस्मैनिवेदयेत् ॥ २६ ॥ देवस्यद-

क्षिणेपार्श्वेकुंडंस्थंडिलमेववा ॥ कारयेत्प्रथमेनैवद्वितीयेनतुप्रोक्षणम् ॥२७॥ तृतीययाग्निमादध्याच्चतुर्थ्याचसमिंधनम ॥ पंचम्याज्यस्यश्रप
णंचरोश्चश्रपणंतथा ॥ २८ ॥ षष्ठेनैवाग्निमध्येतुकल्पयेत्पद्ममासनम् ॥ चिंतयेद्देवदेवेशंकालानलसमप्रभम् ॥२९॥ ततोगंधंचपुष्पंचधू-
पदीपनिवेदनम् ॥ अनुज्ञाप्यततःकुर्यात्सप्तम्यादियथाक्रमम् ॥५३०॥ सनियस्तावतीःपूर्वंजुहुयादभिघारिताः ॥ ततोघृतेनजुहुयाच्चरुणाच
ततःपुनः ॥३१॥ एवंहुत्वाततश्चैवमनुज्ञाप्ययथाक्रमम् ॥ अग्नेर्भगवतस्तस्यसमीपेस्तोत्रमुच्चरेत् ॥३२॥ जितंतेपुंडरीकाक्षनमस्तेविश्वभावन॥
सुब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज ॥ ३३ ॥ नमोहिरण्यगर्भायप्रधानाव्यक्तरूपिणे ॥ ॐनमोवासुदेवायशुद्धज्ञानस्वरूपिणे ॥ ३४ ॥
देवानांदानवानांचसामान्यमसिदैवतम् ॥ सर्वदाचरणद्वंद्वंव्रजामिशरणंतव ॥३५॥ एकस्त्वमसिलोकस्यस्रष्टासंहारकस्तथा ॥ अध्यक्ष-
श्चानुमंताचगुणमायासमावृतः ॥३६॥ संसारसागरंघोरमनंतंक्लेशभाजनम् ॥ त्वामेवशरणंप्राप्यनिस्तरंतिमनीषिणः ॥३७॥ नतेरूपंन-
चाकारोनायुधानिनचास्पदम् ॥ तथापिपुरुषाकारोभक्तानांत्वंप्रकाशसे ॥३८॥ नैवकिंचित्परोक्षंतेनप्रत्यक्षोसिकस्यचित् ॥ नैवकिंचिदसा-
ध्यंतेनचसाध्योसिकस्यचित् ॥ ३९ ॥ कार्याणांकारणंपूर्वंवचसांवाच्यमुत्तमम् ॥ योगिनांपरमांसिद्धिंविदंतिपरमंविदः ॥५४०॥ अहं
भीतोस्मिदेवेशसंसारेस्मिन्महाभये ॥ त्राहिमांपुंडरीकाक्षनजानेशरणंपरम् ॥ ४१ ॥ कालेष्वपिचसर्वेषुदिक्षुसर्वासुचाच्युत ॥ शरीरेविगते-
वापिवर्ततेमेमहद्भयम् ॥४२॥ त्वत्पादकमलादन्यन्नमेजन्मांतरेष्वपि ॥ निमित्तंकुशलस्यास्तियेनगच्छामिसद्गतिम् ॥ ४३ ॥ विज्ञानंयदि-
दंप्राप्तंयदिदंज्ञानमर्जितम् ॥ जन्मांतरेपिमेदेवमाभूदस्यपरिक्षयः ॥४४॥ दुर्गतावपिजातस्यत्वद्गतोमेमनोरथः ॥ यदिनाथंचविंदेयतावता-
स्मिकृतीसदा ॥४५॥ अकामकलुषंचित्तंममतेपादयोःस्थितम् ॥ कामयेविष्णुपादौतुसर्वजन्मसुकेवलम् ॥ ४६ ॥ पुरुषस्यहरेःसूक्तंस्वर्ग्यंध-

न्यंयशस्करम् ॥ आत्मज्ञानमिदंपुण्यंयोगज्ञानमिदंपरम् ॥ ४७ ॥ इत्येवमनयास्तुत्यास्तुत्वादेवंदिनेदिने ॥ किंकरोस्मीतिचात्मानंदेवायै
वनिवेदयेत् ॥ ४८ ॥ फलाहारोभवेन्मासंपश्यत्यात्मानमात्मनि ॥ ४९ ॥ फलानिभुक्त्वोपवसेन्मासमद्भिश्चवर्तयेत् ॥ अरण्ये
निवसेन्नित्यंजपन्नेतमृषिंसदा ॥ ५५० ॥ त्रिस्त्रिषवणकालेषुस्नायादप्सुसमाहितः ॥ आदित्यमुपतिष्ठेतसूक्तेनानेननित्यशः ॥ ५१ ॥
आज्याहुतीरनेनैवहुत्वैतंचिंतयेदृषिम् ॥ ऊर्ध्वंमासात्फलाहारस्त्रिभिर्वर्षैर्जयेद्दिवम् ॥ ५२ ॥ तद्भक्तस्तन्मनायुक्तोदशवर्षाण्यनन्यभाक् ॥
साक्षात्पश्यतितंदेवंनारायणमनामयम् ॥ ५३ ॥ प्राह्यमत्यंतयन्नेनत्वष्टारंजगतोऽव्ययम् ॥ गृहस्थधर्मेवर्तेतन्यायवृत्तःसमाहितः ॥५४॥
एतदेवंचिंतयेतनारायणमनामयम् ॥ अर्धरात्रेत्यक्तनिद्रउत्थायशुचिवाग्यतः ॥५५॥ संप्रसुप्तेषुसूतेपुयोगंयुंजीतयोगवित् ॥ ऋज्वासीनः
समेदेशेनिर्वातेशब्दवर्जिते ॥ ५६ ॥ सव्यंपादंदक्षिणस्यांजानुनिश्लेषयेत्ततः ॥ संहृत्यदक्षिणंपादंसव्येजानुनियच्छति ॥५७॥ ब्रह्मांज-
लिकृतःस्वस्थोयोगसंमीलितेक्षणः ॥ ॐमित्युक्त्वास्वहृदयंचिंतयेदविकुत्सितः ॥५८॥ तत्रात्मानंसमादध्यादिंद्रियाणिमनस्तथा ॥ नचबु-
ध्येतकिंचान्यन्नपश्येच्छृणुयान्नच ॥ ५९ ॥ ननमस्येत्सदायोगंतदाप्राप्तःसउच्यते ॥ हृद्येतमृषिमभ्यस्येत्पश्यंन्नेवयथाश्रुति ॥ ५६० ॥
प्राणानायम्यचासीनोयावच्चित्तंतदर्पितम् ॥ उच्छ्वसिष्यत्यधोनाभिगमयित्वामनस्तथा ॥ ६१ ॥ उच्छ्वसेदेवमसकृत्तन्मनायोगमुन्नयेत् ॥
एवंहियुंज्यात्सामान्यंनपश्येच्छृणुयान्नच ॥६२॥ तदाशनैर्नियच्छेतहृदयादूर्ध्वमेवतु ॥ समौतुजानूचास्यंचनासिकानयनेभ्रुवौ ॥६३॥
भ्रुवोर्मध्येपरंस्थानंतत्रैतद्धारयेत्स्थिरम् ॥ ललाटदेशेधार्याथमूर्धानंगमयेत्ततः ॥६४॥ उच्छ्वसंश्चयथाकालंनाभितश्चोच्छ्वसेत्पुनः ॥ एतत्प-
रंस्थानमुक्तंब्रह्मणःपरमात्मनः ॥ ६५ ॥ एवंयुक्तोमहात्मासन्महात्मानंप्रपद्यते ॥ यदिस्यात्सुकृतीशुद्धोयदिवापापकृत्तमः ॥६६॥ उप-

लभ्यपरंब्रह्मगतिंज्ञात्वाभवेच्छुचिः ॥ सर्वपापावबद्धश्चेद्वुद्धैतत्प्रयतोजपेत् ॥६७॥ अपिजिज्ञासनादेवगच्छेतपरमांगतिम् ॥ धारणात्तुपृ-
थक्कुर्याद्धर्मेणानेननित्यशः ॥ ६८ ॥ आदित्येग्नौचंद्रमसिवृक्षाग्रेपुचधारयेत् ॥ पर्वताग्रेसमुद्रेवायत्रवापिमनोरमेत् ॥ ६९ ॥ नत्वेवविष-
यान्प्राप्यधारयीतकथंचन ॥ वहत्रदुःखंजानीयात्प्रध्वसेन्मरणेसति ॥५७०॥ धार्मिकाणांकुलेशुद्धेयोगभ्रष्टोभिजायते ॥ मूर्ध्निब्रह्मसविं-
देतसएवऋषिसत्तमः ॥ ७१ ॥ तदामूर्ध्नःपरंज्योतिर्नक्षत्रपथमुन्नयेत् ॥ योगीयोगेश्वरंप्राप्यनिर्द्वंद्वःपरमात्मवित् ॥ ७२ ॥ सर्वत्रैवात्मना-
त्मानंपश्येद्दपिपरायणः ॥ जपेच्चैवसदास्नातःपवित्रमिदमुत्तमम् ॥७३॥ अपिपातकसंयुक्तःकालेनमुक्तीभवेत् ॥ येनयेनचकामेनजपेदि-
ममृषिंसदा ॥ ७४ ॥ संसकामःसमृद्धःस्याच्छ्रद्दधानस्यकुर्वतः ॥ होमंवाप्यथवाजाप्यमुपहारमथोचरुम् ॥ ७५ ॥ कुर्वीतयेनकामेनतत्सि-
द्धिमवधारयेत् ॥ ज्ञातिश्रैष्ठ्यंमहद्वित्तंयशोलोकेपरांगतिम् ॥ ७६ ॥ पापेनविप्रमोक्षस्तुतत्सिद्धिमवधारयेत् ॥ ज्ञानगम्यंपरंसूक्ष्मंव्याप्यसर्वं
व्यवस्थितम् ॥७७॥ ग्राह्यमत्यंतयत्नेनब्रह्माभ्येतिसनातनम् ॥ सहस्रशीर्षेतिसूक्तंसर्वकामफलप्रदम् ॥ ७८ ॥ वेदगर्भशरीरेणसवैनारायणः
स्मृतः ॥ ब्रह्मेंद्ररुद्रपर्जन्याअत्रसूक्तेव्यवस्थिताः ॥ ७९ ॥ अत्रस्थमेतद्द्रष्टव्यंजगत्स्थावरजंगमम् ॥ अतःसंपठमानोपिभक्तिंनपरिहारयेत्
॥५८०॥ भक्तानुकंपीभगवान्श्रूयतेपुरुषोत्तमः ॥ पूजार्थंतस्यदेवस्यवनात्स्वयमुपाहृतात् ॥ ८१ ॥ आरण्यकविधानेननिर्वपेत्प्रत्यहंचरुम् ॥
नारायणायस्वाहेतिमंत्रांतेजुहुयाद्धविः ॥ ८२ ॥ आसहस्रात्ततश्चक्षुर्दिव्यंहोतुर्ददातिसः ॥ अपिवाचरुसाहस्रंतंत्रेणैकेननिर्वपेत् ॥ ८३ ॥
यावंतोवापिशक्यंतेअह्नासर्वान्समापयेत् ॥ सहस्रस्येप्सितानांचकामानांलभतेफलम् ॥८४॥ पुरुषायुःसमायुक्तःसिद्धोवाविचरेन्महीम् ॥
ध्येयःसदासवितृमंडलमध्यवर्तीनारायणःसरसिजासनसंनिविष्टः॥केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥८५॥

एतत्तुयःपठतिकेवलमेवसूक्तंनारायणस्यचरणावभिवंद्यवंद्यौ ॥ पाठेनतेनपरमेणसनातनस्यस्थानंजरामरणवर्जितमेतिविष्णोः ॥ ८६ ॥ हविषाग्नौजलेपुष्पैर्ध्यानेनहृदयेहरिम् ॥ यजंतिसूरयोनित्यंजपंतिरविमंडले ॥ ८७ ॥ बिल्वपत्रंशमीपत्रंपत्रंभृंगारकस्यच ॥ मालतीकुशपद्मं चसद्यस्तुष्टिकरंहरेः ॥ ८८ ॥ यत्रैतत्पठ्यतेकिंचित्तद्ध्यायन्मनसैवतु ॥ संपाद्यतत्प्रसादाच्चदेवदेवस्यचक्रिणः ॥ ८९ ॥ पत्रैश्चपुष्पैश्चफलैश्च तोयैरक्रीतलभ्यैश्चसदैवसत्सु ॥ भक्त्यैकलभ्येपुरुषेपुराणेमुक्त्यैकिमर्थंक्रियतेतुयत्नः ॥५९०॥ इत्येवमुक्तःपुरुषस्यविष्णोरर्चाविधिर्विष्णु-कुमारनाम्ना ॥ मुक्त्येकमार्गप्रतिबोधनायदृष्टाविधानंत्विहनारदोक्तम् ॥९१॥ इत्यृग्विधानेतृतीयोध्यायः ॥ ३ ॥ ॥ याओषधीःस्वस्त्य-यनंजपेतनियतव्रतः ॥ ओषधीश्चयजेन्नित्यंषण्मासानेवनित्यशः ॥ ९२ ॥ दृष्ट्वाशरदिवैरुद्रमोषधीश्चयजेत्तथा ॥ नभवंत्यामयास्तस्यत-थाजीर्णादिकानिच ॥ ९३ ॥ क्रियांतुसप्तरात्रेणसप्तकृत्वःसमाहितः ॥ प्रपद्येतौषधीर्विप्रःसूक्तमेतज्जपन्सदा ॥ ९४ ॥ द्विषत्क्षेत्रादिहाल-ब्ध्वामितिविज्ञापयेतच ॥ स्वक्षेत्रेचरुणेवेष्ट्वाविंदतेद्विपदोषधीः ॥९५॥ वृष्टिकामोजिताहारःप्रपद्येतबृहस्पतिम् ॥ पायसेनोपहारेणहोमेनच समन्वितः ॥ ९६ ॥ बृहस्पतेप्रतीत्येतद्वृष्टिकामःप्रयोजयेत् ॥ पर्जन्यंचनमस्कृत्वावृष्टिंविंदतिशोभनाम् ॥ ९७ ॥ सर्वत्रतुपराशांतिर्ज्ञेयो-प्रतिरथस्त्वृषिः ॥ यमेवदेशंगच्छेतशत्रुंवाप्यनुमंत्रितः ॥९८॥ नाजित्वाविनिवर्तेतपरंहिब्रह्मणोबलं ॥ सर्वकामैर्जपेदेतत्सर्वकामसमृद्धये ॥ ९९ ॥ संग्राममभ्युद्यातोवाराजाचैतत्प्रयोजयेत् ॥ सर्वान्विजयतेशत्रून्नपराजीयतेपरैः ॥ ६०० ॥ पथिस्वस्त्ययनंचैतत्तस्करेभ्यश्चर-न्पथि ॥ भूतोरगपिशाचेभ्यःसर्वेभ्यःपरिरक्षति ॥ १ ॥ भूतांशस्यऋषेःसूक्तंप्रजाकामःशुचिर्जपन् ॥ अनुरूपांप्रजामाशुलभतेनात्रसंशयः ॥ २ ॥ स्थालीपाकेननासत्यावश्विनौतुयजेद्द्विजः ॥ अनेनैवतुसूक्तेनहुत्वाप्धानतुमंत्रयेत् ॥ ३ ॥ पायसंकृसरंमांससोदनंदधिसक्तुकान् ॥

भक्ष्यंभोज्यंचपेयंचसमाहृत्योदितेरवौ ॥ चित्रमाल्यशुभान्याधानन्नपानानियानिच ॥ ४ ॥
कुल्माषांश्चकरंभांश्चफलानिविविधानिच ॥ ४ ॥ चित्रमाल्यशुभान्याधानन्नपानानियानिच ॥ दीर्घायुषंसुरूपंचलभेत्पुत्रंसुवर्चसम् ॥ ६ ॥
भूतांशमभ्यसेत्तावद्यावदस्तमितोरविः ॥ ५ ॥ अर्धरात्रेत्वतिक्रांतेततोऽश्विभ्यांनिवेदयेत् ॥ दीर्घायुषंसुरूपंचलभेत्पुत्रंसुवर्चसम् ॥ ६ ॥
रूपवांश्चभवेन्नित्यंभूतांशंयोऽभ्यसेत्सदा ॥ सार्वकामिकमप्येनमृषिर्विद्याद्विचक्षणः ॥ ७ ॥ नवाउदेवाइत्येतज्जपेतनियतव्रतः ॥ अन्नंवै-
दतिसर्वत्रयत्रयत्रोपतिष्ठति ॥ ८ ॥ पाप्मोपहतमात्मानंयोमन्येतविचक्षणः ॥ सजपेन्नियतोभूत्वालघुमन्येतपाप्मना ॥ ९ ॥ वाचंप्रप-
द्येद्वाकामोहुनेदाशुजपन्निमाः ॥ अहंरुद्रेभिरित्येतद्वाग्मीभवतिपूजितः ॥ ६१० ॥ नतमित्यष्टकंसूक्तंवैश्वदेवंजपन्मुनिः ॥ कृत्स्नंतुकल्मषं
हत्वाविश्वैर्देवैःसहासते ॥ ११ ॥ रात्रींप्रपद्येमनसाशुचिःपर्णव्रतोनिशि ॥ यःकामयेतनपुनर्जायेयमितियोनिषु ॥ १२ ॥ सहस्रकृत्वोम-
नसाजपेद्रात्रीतिरात्रिषु ॥ स्थालीपाकेनरात्रिंचयजेताहरहर्निशि ॥ तन्मनानिशिचासीनस्तिष्ठेदहनिधार्मिकः ॥ १३ ॥ ऊर्ध्वंसंवत्सराच्चै-
वचरुंपयसिसंस्कृतम् ॥ सहस्रकृत्वस्त्वेतेनदिवाहोमोविधीयते ॥ १४ ॥ जुहुयान्निशिपूर्वस्मिन्भागेरात्रौसमाहितः ॥ दिवाचाविश्पतिंकार्यं
छायायामंशुतेजसा ॥ १५ ॥ प्रतिप्रयतआत्मवान्सूक्तंतुमनसाजपेत् ॥ संवत्सरेतृतीयेतुसर्पिषासाधयेच्चरुम् ॥१६॥ अथास्यवरदादेवी
रात्रिर्भवतिशर्वरी ॥ विज्ञापयीततांदेवींवरदांस्वयमागतां ॥१७॥ संवत्सरेऽकृतौमासिदिवसेस्मिन्क्षणेपिवा॥प्रयाणकालेभवितातववत्सेति
वत्सला ॥ १८ ॥ रात्रिसूक्तंजपन्नेवतंकालंप्रतिपद्यते ॥ नयोनिंपुनरायातिसर्वपापैःप्रमुच्यते ॥ १९ ॥ ममाग्नेवर्चइत्येतत्सर्वकामैर्जपेद्द्वि-
जः ॥ जुह्वन्नाज्यमनेनैवसर्वान्कामानवाप्नुयात् ॥ ६२० ॥ यांकल्पयंतीतिसदाजपेतनियतव्रतः ॥ नैनंकृत्यानिर्हिंसंतिक्रुद्धाभिचरितानि
च ॥ २१ ॥ यमांगिरसकल्पैस्तुतद्विदोभिचरेत्स्वयं ॥ प्रत्यंगिरसकल्पेनसर्वांस्तान्प्रतिबाधते ॥ २२ ॥ प्रत्यंगिरसविद्वांस्तुनरिष्येतकदा-

चन ॥ नैनंकृत्यानिहिंसंतिज्ञाताज्ञातानिवाक्वचित् ॥ २३ ॥ अजानताजानतावाक्रुद्धेनाधर्षितेनवा ॥ आक्रुष्टंवादुरुक्तंवानैनोविंदतितद्धि-
दम् ॥ २४ ॥ एवमेवजपेन्नित्यमृषिंस्वस्त्ययनायवै ॥ सर्वप्रायश्चित्तमेतदभाषतऋषिःस्वयम् ॥ २५ ॥ स्थावराणांनिवेशेषुनगराणांतथैवच ॥
ग्रामाणांचगृहाणांचजपेततमृषिंसदा ॥ २६ ॥ जातरूपमयंविद्वान्कारयेत्त्रिवृतंमणिम् ॥ सहस्रसंपातहुतमृषिणातेनतंततः ॥ २७ ॥ प्रति-
मुच्येतशिरसिग्रीवायामथवोरसि ॥ नैनंकृत्यानिहिंसंतिज्ञाताज्ञातानियानिच ॥ २८ ॥ अनेनैवतुसूक्तेनराज्ञांतुसमलोहितम् ॥ कारयेत
मणिंविद्वांस्तावदेवानुमंत्रणम् ॥ २९ ॥ संग्रामेषुध्वजाग्राणिवादित्राण्यनुमंत्रयेत् ॥ आसनानिचशय्याश्चयानानिविविधानिच ॥ ६३० ॥
तस्याभिचरतेसाक्षादंगिरार्षिरपिस्वयम् ॥ प्रत्यंगिरसकल्पेनसर्वंतत्प्रतिबाधते ॥३१॥ अमानुषीरभिचरेत्कृत्याःसूक्तंजपन्निदम् ॥ मुच्यतेस-
र्वतोनिष्टात्किंपुनर्मानुषाद्भयम् ॥३२॥ तपस्वीनियतोदांतःप्रयोक्ताचेद्भवेदृषिः ॥ सर्वंतरतिशांतात्मातपोहिसुमहद्बलम् ॥३३॥ आयुष्य-
मायुर्वर्चस्यंसूक्तंदाक्षायणंमहत् ॥ अलंकारंहिरण्यंवाप्राप्यदाक्षायणंजपेत् ॥ प्राप्नोसःश्रियमादत्तेबहुचान्नंसमश्नुते ॥ ३४ ॥ नासदासीदि-
तिजपेज्जुहुयाद्योगतत्परः ॥ प्रजापतेस्तुसायुज्यंद्वादशाब्दैःसमश्नुते ॥ ३५ ॥ उतदेवाइतिजपेदामयावीयतव्रतः ॥ घृतकुंभंनिधायाथजुहु-
याज्जातवेदसि ॥ ३६ ॥ कुंभसंपातमन्यस्मिन्कांस्यपात्रेनिधापयेत् ॥ योऽन्नार्थ्यलंनचान्नंस्यात्सइदंसंप्रकाशयेत् ॥ ३७ ॥ तेनाज्येनांगम-
भ्यज्यशनकैरन्नभाग्भवेत् ॥ रोगार्तस्याप्यनेनैवगात्रमंक्त्वाजपेदिदम् ॥ अजीर्णान्नोत्थंजयीतसुखीभवतिविज्वरः ॥३८॥ अग्नेअच्छावदे-
त्येतद्धनकामःप्रयोजयेत् ॥ नियतःसर्पिषाहुत्वाजपेदयुतशःपुनः ॥ ३९ ॥ खादिराणांहिसमिधांजुहुयाद्दशतीर्दश ॥ दशकृत्वःसदारेण
रायस्पोषेणपुष्यति ॥ ६४० ॥ बिल्वोदुंबरपालाशैस्तथारोहितकैश्शयः ॥ जुहुयाद्धनकामस्तुरायस्पोषेणपुष्यति ॥ ४१ ॥ बैभीतकेध्मै-

वैल्वैश्चजुहुयादर्धमासकम् ॥ द्विषद्द्वेषणंतस्यांतेसूक्तमेतत्प्रयोजयेत् ॥४२॥ द्विषंतंधनिनंहत्वाद्विषतोविंदतेधनम् ॥ अथवाजव्यमेवस्याद्राय-स्पोषधनार्थिना ॥ ४३ ॥ अयमग्नेजरितेतिजपेदग्निभयेसति ॥ विधिनातर्पयित्वाग्निंपयोदधिघृतादिभिः ॥ ४४ ॥ स्वयंपातुंयावदिच्छेत्ता-वद्धुत्वाचतुर्दिशम् ॥ अपामिदंपरिणयेत्संततोदकधारया॥४५॥उतत्द्रदइवभूत्वाप्यग्नेर्भेषजमंतिकात् ॥ अरण्यमेत्यपाठांतुक्रीणीयाद्यवमुष्टि-ना ॥ ४६ ॥ यदिसौम्यसिसोमायत्वांपरिक्रीणाम्योषधिम् ॥ यदिवारुण्यसिवरुणायत्वांपरिक्रीणाम्यहंततः ॥ ४७ ॥ वसुभ्यश्चाथरुद्रेभ्य आदित्येभ्योथवापुनः ॥ वैश्वदेव्यसिविश्वेभ्यःपरिक्रीणाम्यहंततः ॥ ४८ ॥ क्षिप्त्वासुमनसःपूर्वमोषध्यासहवीरुधैः ॥ तस्यवीर्यंसमादत्ते कर्मयत्रकरिष्यति ॥ ४९ ॥ तांतुमध्येसंदधीतौषधीनांचविहायसि ॥ ग्रहणेत्वौषधीनांचसर्वत्रैषविधिर्भवेत् ॥ ६५० ॥ उत्खापयीताथपा-ठांत्विमामितिजपन्निह ॥ प्रातश्चपेषयेदेनांसंसदिब्रह्मचारिणाम् ॥५१॥ तदलाभेव्रतवताकन्ययाब्राह्मणेनवा ॥ प्रातःशुचिस्तांघृतेनत्रिःपि-बेदनुमंत्रिताम् ॥ ५२ ॥ इमामितितुसूक्तेनशतकृत्वोदशावरम् ॥ सपत्नींबाधतेतेनपतिश्चातीवमन्यते ॥ ५३ ॥ पतिस्तुपरिजप्यैनांपाठामे-तेनवैपिबेत् ॥ पयसासप्तरात्रेणसपत्नान्प्रतिबाधते ॥ ५४ ॥ मूलमंत्रजपैरन्यैर्यापतिंजेतुमिच्छति ॥ अलोकायमलोकस्थामज्ञतेनरकेहिसा ॥ ५५ ॥ अन्यथाचोपनीतानिचूर्णमूलौषधान्यपि ॥ विनाशयेयुःपुरुषंतस्मान्नान्यत्समाचरेत् ॥ ५६ ॥ प्रियंवदाभर्तरियाभर्तायस्याःपरा-यणम् ॥ वाक्चैवमधुरायस्याःपत्युःसंवननंमहत् ॥ प्रियंभर्तारमासाद्यपिबेदेवौषधीमिमाम् ॥५७॥ प्रियंवदांसुशीलांचधर्मपत्नीमनिंदितां ॥ अवमन्येतयोमोहात्तमाहुःपुरुषाधमम् ॥५८॥ अरण्यानीत्यरण्येषुजपेत्सूक्तमनेकशः ॥ आरण्यानींनमस्कृत्वाआरण्यान्प्रतिबाधते ॥५९॥ श्रद्धासूक्तंजपेन्नित्यंश्रद्धाकामःसमाहितः ॥ सर्वत्रलभतेश्रद्धांमेधासूक्तंतथैवच ॥ ६६० ॥ ब्राह्मीमासाद्यसूक्तेद्वेजपेतनियतव्रतः ॥ तांपि-

वेतयथाशक्त्यात्र्यहात्सिद्धिंनियच्छति ॥ ६१ ॥ शंखपुष्पींतुपयसाब्राह्मीपुष्पाणिसर्पिषा ॥ शतावरींचपयसावचामद्भिर्घृतेनवा ॥ ६२ ॥
सूक्ताभ्यामनुमंत्राभ्यामेकैकांतुत्र्यहंपिबेत् ॥ श्रद्धांमेधांस्मृतिंपुष्टिंबलंलक्ष्मींचविंदति ॥ ६३ ॥ सिद्धिंप्राप्नोतिपरमांदीर्घमायुःसमश्नुते ॥
अथवामनसाध्यायेत्सूक्तंसिद्धिंनियच्छति ॥६४॥ शासइत्थासपत्नघ्नंसंग्रामेविजिगीषतः ॥ प्रयोक्तव्यंतुशुचिनाजुहुयात्तत्रसिद्धयः ॥६५॥
अथवाजप्यमेवस्यात्संग्राममभिगच्छतः ॥ शासइत्थेतियोहंतुंशत्रूंस्तांस्तुविबाधते ॥ ६६ ॥ अलक्ष्मीनाशनार्थंतुजपेन्नित्यंशिरिंबिठम् ॥
अपामार्गमयींशाखांसदर्भांसहवीरुधैः ॥६७॥ गृहीत्वात्मानंपावयेदधश्चोर्ध्वंचनित्यशः ॥ आज्यंवानेनजुहुयात्सहस्रंदशतीर्दश ॥ त्र्यहेणनु-
दतेदेहादलक्ष्मींशतवार्षिकीम् ॥ ६८ ॥ चांद्रायणंचरन्नेतत्सूक्तंसिद्धिकरंजपेत् ॥ अलक्ष्मीर्नुदतेदेहादपिवर्षसहस्रिकी ॥ ६९ ॥ गृहीतंय-
क्ष्मणादर्भान्गृहीत्वासंस्पृशन्जपेत् ॥ मुंचामित्वाहविषेतियक्ष्माणमपकर्षति ॥ ६७० ॥ समिद्धमग्निंजुहुयादाज्येनैवयथाविधि ॥ संपात-
माज्येनिनयेत्संपातैश्चपयःपिबेत् ॥ ७१ ॥ संपातभाजनेसर्पिश्चूर्णंतत्रनिधापयेत् ॥ तत्रास्यभोजनीयंस्यात्पानीयंचानुमंत्रितम् ॥ ७२ ॥
खादिराणिचकाष्ठानिचूर्णंकृत्वासहांबुभिः ॥ साधयीतरसंचैषांमध्वाज्याभ्यांपिबेत्सह ॥ ७३ ॥ मुंचामित्वाहविषेतितत्रतत्रप्रयोजयेत् ॥
यक्ष्माणमपकर्षंतिशरीरारोग्यकर्मणा ॥ ७४ ॥ यस्यागर्भःप्रमीयेततत्राग्नौजुहुयाद्धविः ॥ ब्रह्मणाग्निःसंविदानइत्याज्येनयथाविधि ॥ ७५ ॥
आज्यशेषेणचाभ्यज्यगर्भिणीप्रसवेत्ततः ॥ पिबेदेवाज्यशेषंतुजीवन्तस्याःप्रजायते ॥ ७६ ॥ जातानिचेत्प्रमीयेरन्नाज्यंकृत्वानुमंत्रितम् ॥
जुहुयाद्ब्रह्माग्निरितिसंपातान्निनयेन्मणौ ॥ ७७ ॥ मणिंतुत्रिवृतेसूत्रेवासयेद्वाससासह ॥ न्यग्रोधशुंगयातत्रशुक्ललोहितवेष्टितम् ॥ ७८ ॥
तंसावित्र्ययुतेनैवानुमंत्र्याथयथाविधि॥संपातैरयुतेनैवब्रह्मणेतिचसंस्तुतम् ॥७९॥उपरिष्टाच्चसावित्र्यातावदेवानुमंत्रणम्॥सर्वैःस्वस्त्ययनै-

श्चैवजपेदभिहुतंमणिम् ॥६८०॥ शिरसाधारयेन्नारीप्रयतागर्भिणीसती ॥ तृतीयेगर्भमासेतुमणिमेतंसमासजेत् ॥ पुष्पवतीपरंनारीगौः सवत्साचरेद्यथा ॥ ८१ ॥ वहुपानीययवसान्वत्सेनपिवतासह ॥ जातस्यतुकुमारस्यकंठेतंमणिमासजेत् ॥ ८२ ॥ आज्यशेषंपुरस्कृत्यतमभ्यज्यकुमारकम् ॥ हुत्वास्वस्त्ययनैरेवस्त्रीपुमांसंप्रसूयते ॥ ८३ ॥ ऊर्ध्वंवर्षात्स्वस्त्ययनंपुनरेवविधीयते ॥ पुनःस्तनप्रदानार्थंश्रद्धासूक्तेन पाययेत् ॥ ८४ ॥ मेधासूक्तेनचैवैतत्पिष्टंव्रीहिमयंकृतम् ॥ मधुमिश्रंजातरूपंमेधावीतेनजायते ॥ ८५ ॥ शतंवर्षाणिजीवेतम्रियतेनपुरायुषः ॥ स्मृतमेवचतस्यस्यात्षण्मासाचततःपरं ॥ ८६ ॥ आज्यंसंस्कृत्यजुहुयादक्षीभ्यांतइतिद्विजः ॥ पाणिनातुघृताक्तेनमूर्धानंसंस्पृशेत्ततः ॥ ८७ ॥ कर्णौनेत्रेचचुबुकंनासिकांचैवसंस्पृशेत् ॥ एवमेवजपेन्नित्यंयक्ष्मणोविप्रमुच्यते ॥ ८८ ॥ पूर्वोक्तेनैवकल्पेनयक्ष्मनाशनमाचरेत् ॥ होमैश्चैवजपैश्चैवयक्ष्मनाशनमाचरेत् ॥ ८९ ॥ अपेहीतिजपेत्सूक्तंशुचिर्दुःस्वप्ननाशनम् ॥ देवाःकपोतइतितुकपोतस्यप्रवेशने ॥ ६९० ॥ सूक्तेनजुहुयादाज्यंयमदूतंहतंविदुः ॥ सपत्नघ्नंप्रयुंजीतऋषभंजपहोमयोः ॥ ९१ ॥ येनेदमितिवैनित्यंजपेतनियतव्रतः ॥ समाधिंमनसस्तेनविंदतेनैवमुह्यति ॥ ९२ ॥ मयोभूर्वातइतितुगवांस्वस्त्ययनंजपेत् ॥ यवानांतुघृताक्तानांकारीषेग्नौसमाहितः ॥ ९३ ॥ जुहुयाद्गोष्ठमध्येतुदधिमध्वाज्यसंस्कृतान् ॥ राजानमभिषिच्येतपुष्येणश्रवणेनवा ॥ ९४ ॥ पौष्णसावित्रसौम्याश्विरोहिण्यामुत्तरासुच ॥ हुत्वाग्निंराजलिंगाभिःसावित्र्याप्रयतःशुचिः ॥ ९५ ॥ महाव्याहृतिभिश्चैवसंपाताभिहुतोभवेत् ॥ सर्वौषधिरसैःश्लक्ष्णैर्नदीनांसलिलेनच ॥९६॥ व्याघ्रचर्मण्यथासीनमासंद्यामभिषिच्यच ॥ तिष्ठन्प्रत्यङ्मुखोब्रूयाज्जयत्वंपृथिवीमिमाम् ॥९७॥ धर्मस्तेनिखिलोराजन्वर्धतांपालयप्रजाः ॥ वर्धत्वंचश्रियैपुष्ट्यैजयायाभ्युदयायच ॥ ९८ ॥ राजानःसंतुतेगोत्रेततोऽप्रतिरथंजपेत् ॥ वैयाघ्रंतुभवेच्चर्मसमिदौदुंबरीभवेत्

॥ ९९ ॥ त्रिरेनमभिषिच्यैवंदुंदुभीनभिमंत्रयेत् ॥ प्राच्यांत्वादिशिवसवोह्यभिषिंचंतुतेजसे ॥ ७०० ॥ दक्षिणस्यांत्वादिशिरुद्राअ-
भिषिंचंतुवृद्धये ॥ प्रतीच्यांत्वादिश्यादित्याअभिषिंचंतुपुष्टये ॥ १ ॥ विश्वेदेवाउदीच्यांत्वाअभिषिंचंतुश्रेयसे ॥ अभिषिच्यचराजा-
नमाशीर्भिरभिनंद्यच ॥ २ ॥ आत्वाहार्षमंतरेधीत्यथैनमभिमंत्रयेत् ॥ पतंगमितिवैनित्यंजपेदज्ञानभेदनम् ॥ ३ ॥ मायाभेदनमेत-
द्धिसर्वामायाःप्रबाधते ॥ शांबरीमिंद्रजालांवामायामेतेनवारयेत् ॥ ४ ॥ अदृष्टानांचसत्वानांमायामेतेनबाधते ॥ त्यमूष्वितिस्वस्त्य-
यनंजपेतनियतव्रतः ॥ ५ ॥ पुष्पंदृष्ट्वातुयागर्भंनगृह्णीयाद्वयोन्विता ॥ विष्णुर्योनिंनेजमेषयोनिंस्पृष्ट्वाततोजपेत् ॥ ६ ॥ महित्री-
णामवोस्त्विवतिपथिस्वस्त्ययनंजपेत् ॥ प्राग्नयेथद्विषद्वेष्यंजपेद्विष्यस्यनिष्कृतिम् ॥ ७ ॥ आयंगौःसार्पराज्ञीतुसर्पानेतेनबाधते ॥ पवि-
त्राणांपवित्रंतुजपेदेवाघमर्षणम् ॥ ८ ॥ आपःप्रविश्ययश्चैतत्रिःपठेतसमाहितः ॥ अथाश्वमेधावभृथस्तादृशंमनुरब्रवीत् ॥ ९ ॥ अशु-
च्येवन्निमज्जित्वात्रिःपठेदघमर्षणम् ॥ अथाश्वमेधावभृथाएवंतदृषिरब्रवीत् ॥ ७१० ॥ यथाश्वमेधःक्रतुराट्सर्वपापप्रणोदनः ॥ तथाघ-
मर्षणंसूक्तंसर्वपापप्रणोदनम् ॥ ११ ॥ सेनादारणमेतस्यान्नैर्हस्त्यमितिशौनकः ॥ मनसाध्येयमेतत्तुमन्यतेशौनकस्त्वृषिः ॥ १२ ॥ संस-
मिद्युवसेवृषन्सौभ्रातृकरणंमहत् ॥ ज्ञातिभेदेप्रयुंजीतनभिद्यंतेकदाचन ॥ १३ ॥ कृतेभेदेतुसंज्ञानमेतत्संधिकरंजपेत् ॥ नतत्रभेदोभूयः
स्याद्यत्रैतत्सततंजपेत् ॥ १४ ॥ तच्छंयोरावृणीमहइतिस्वस्त्ययनंजपेत् ॥ महानाम्न्यःपरंब्रह्मशुक्रंज्योतिःसनातनम् ॥ १५ ॥ सपत्नघ्यश्च-
पुण्याश्चपावमान्यःपराःस्मृताः ॥ वृष्टिकामोजपेच्चैताआपोहैताःसनातनाः ॥ १६ ॥ ॐकारपूर्वाव्याहृतयोमधुच्छंदसआदितः ॥ सूक्ता-
न्यंतेमहानाम्न्यःसंहितासाऽमृतास्मृता ॥ १७ ॥ अमृतत्वंययुर्वेदाःपूर्वसंहितयानया ॥ जपेदेनांशुचिर्नित्यममृतत्वंसगच्छति ॥ १८ ॥

अत्रैवतुजपेन्मध्येपितृसूक्तान्यनेकशः ॥ पित्र्यांतांसंहितांविद्यात्पितॄन्प्रीणातिचैतया ॥ १९ ॥ एवमेवसमाहृत्यवाससीसंहिताभवेत् ॥
रौद्र्यादित्यावैश्वदेवीयद्देवत्यांचकामयेत् ॥ ७२० ॥ कुर्वीतवास्तुशमनंमध्येगोष्ठस्यधर्मवित् ॥ पुष्पैर्गंधैश्चमाल्यैश्चवानस्पत्यैस्तथौषधैः
॥ २१ ॥ वास्तुसर्वंप्रविकिरेत्सप्तधान्यैस्तथैवच ॥ वास्तोष्पतिंयजेच्चात्रपायसेनबृहस्पतिम् ॥ २२ ॥ औदुंबरपलाशैश्चबलिंप्रतिदिशंहरेत् ॥
सूर्योवायुर्यमःपितरोवरुणोनिर्ऋतिस्तथा ॥ २३ ॥ सोमोमहेंद्रइत्येतादिक्षुदिग्देवताःस्मृताः ॥ दद्याद्दानंब्राह्मणेभ्यःशिवंभवतुवास्त्विति
॥ २४ ॥ प्रतिसंवत्सरंकार्यंगृहेवैगृहमेधिना ॥ यद्येवंसविधंनान्यदनुक्तमपिकिंचन ॥ २५ ॥ अग्निमिंद्रमथोवायुंसूर्यमन्याश्चदेवताः ॥
आराधयिषुर्योयोयामभिधत्तेतथात्रताम् ॥ २६ ॥ अभिरूपेणसूक्तेनयथादिष्टंप्रयोजनम् ॥ ऋषीणांमंत्रदृष्टेनप्रत्यक्षात्सिद्धिरिष्यते ॥ २७ ॥
सर्वत्रदक्षिणांदद्याद्धनंवाकर्मसिद्धये ॥ नत्वेवादक्षिणंकर्मकिंचिदस्तीतिशौनकः ॥ २८ ॥ शक्त्याहिपूर्णपात्रेणसंमिताप्यंततोभवेत् ॥
तस्मात्स्वल्पापिदातव्यादक्षिणाकर्मसिद्धये ॥ २९ ॥ ऋषभैकादशाद्द्याद्येनवातुष्यतेगुरुः ॥ धर्मज्ञेसत्यवादिनिब्रह्मदानंप्रदीयते ॥ ७३० ॥
तदिदंपरमंब्रह्मगुह्यंपावनमद्भुतम् ॥ नाप्रशांतायदातव्यंनापुत्रायातपस्विने ॥ नासंवत्सरोषितायनाशिष्यायाहितायच ॥ ३१ ॥ इत्यृग्वि-
धानेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ नराणांभाग्यहीनानामृग्विधानमजानताम् ॥ ऋग्वेदःकल्पवृक्षोयंफलंनैवप्रयच्छति ॥ ३२ ॥ रत्नगर्भइवा-
वासऋग्वेदःप्रतिभातिमे ॥ ऋग्विधानप्रदीपेनविनानैवप्रकाशते ॥ ३३ ॥ रत्नाकरइवोदारऋग्वेदोत्यंतदुस्तरः ॥ ऋग्विधानंमहापूतं
विनानैवफलप्रदम् ॥ ३४ ॥ निधानंसर्वरत्नानामृग्वेदोब्रह्ममंदिरम ॥ ऋग्विधानविधानेनध्रुवमेतदवाप्यते ॥ ३५ ॥ ऋग्वेदःपठितोप्येपनृ
णांभवतिनिष्फलः ॥ ऋग्विधानंविनातस्मादध्येयंतत्प्रयत्नतः ॥ ३६ ॥ सूक्ततत्त्वार्थकथनमृग्विधानमवैतियः ॥ ऋग्वेदोजायतेतस्यप्रसा-

दोत्फुल्लमानसः ॥ ३७॥ आयुष्यंसंपदोमूलंसद्यःकल्मषनाशनम् ॥ ऋग्विधानाभ्यनुष्ठानंशुभंकीर्तिकरंपरम् ॥ ३८ ॥ ऋग्विधानेनसंयुक्त-मृग्वेदंवेत्तियोद्विजः ॥ धर्मार्थकाममोक्षाणामाश्रयःसभवेद्ध्रुवम् ॥३९॥ वेदेषुप्रथमोवेदआयुर्वेदनिधिःप्रभुः॥ ऋग्विधानस्यचाभ्यासाद-तीवपरितुष्यति ॥ ७४० ॥ शत्रुनाशमनस्तुष्टिसुहृज्जनसमागमान् ॥ ऋग्वेदःकुरुतेनित्यमृग्विधानेनतोषितः ॥ ४१ ॥ ऋग्वेदंवेत्तियः सांगमृग्विधानरतःसदा ॥ मनोरथादप्यधिकंभवेत्तस्यसमीहितम् ॥ ४२ ॥ कुलेजन्मनिशीलेवाप्रज्ञायामुद्यमेपिवा ॥ ऋग्विधानपरिज्ञाना-दुशंतिचरितार्थताम् ॥ ४३ ॥ तुष्यंतिदेवताःसर्वाःसंपद्यंतेविभूतयः ॥ दुराधयःप्रणश्यंतिनित्यमृग्विधिपाठिनाम् ॥ ७४४ ॥ नमः शौनकायनमःशौनकाय ॥ इत्यृग्विधानफलश्रुतिः ॥ ॥ ऋग्विधानंसमाप्तम् ॥

## अथयामलाष्टकतंत्रेखिलोपनिषन्मंत्रसंहितास्वरूपम् ।

श्रीः ॥ पार्वत्युवाच ॥ शिवशंकरदेवेशपंचकृत्यपरायण ॥ स्वरूपमंगवेदानांश्रुतंत्वन्मुखतोमया ॥ १ ॥ इदानींश्रोतुमिच्छामि खिलान्युपखिलानिच ॥ महोपनिषदश्चैवयाश्चान्यामंत्रसंहिताः ॥ २ ॥ वेदानांसारभूतास्तुवदमेकरुणानिधे ॥ श्रीशिवउवाच ॥ शृणुदेविप्रवक्ष्यामिखिलान्युपखिलानिच ॥ महोपनिषदोमंत्रसंहिताःसकलार्थदाः ॥ ३ ॥ पुराव्यासेनवेदेषुसंक्षिप्तेषुचतुर्ष्वपि ॥ अनुवाकाष्टकाध्यायसूक्तवाक्यपदात्मसु ॥ ४ ॥ तत्रतत्रतुशिष्टानियानिवाक्यानिसंतिहि ॥ खिलानितानिचोच्यंतेखिलशिष्टानियानिच ॥ ५ ॥ वाक्यान्युपखिलानीतिकथ्यंनेतानिभामिनि ॥ वालखिल्यंचराजन्यंलक्ष्मीसूक्तंचगारुडम् ॥ ६ ॥ स्वास्तिकंभौतिकंभौम-मायुष्यंग्राहमेवच ॥ ऋक्खिलानिप्रकीर्त्यंतेमहांतिवरवर्णिनि ॥ ७ ॥ पैशाचंरात्रिकांडंचत्रैवेण्यंस्वाप्नमेवच ॥ ऋक्संभूतान्युपखि-

लान्युदीर्यंतिमहांतिवै ॥ ८ ॥ सत्याषाढ्यंप्राच्यकाठ्यंकाठ्यंमौद्गल्यमेवच ॥ वैत्रषोडशकर्माण्यंनागबलयंयजुःखिलम् ॥ ९ ॥ औधेयमापस्तंवीयमाप्नोर्यामीयमेवच ॥ यजुर्वेदस्योपखिलान्युच्यंतेवरवर्णिनि ॥ १० ॥ कौथुम्यंगौतमीयंचवानस्पत्यंरथंतरम् ॥ वैराज्यं सश्रियंसामखिलंचोपखिलंमहत् ॥ ११ ॥ बृहदार्य्यंबृहद्ब्रह्मसामवेदेप्रकीर्त्यते ॥ आंगिरसमथर्वाख्यशिरसौल्क्यमरिग्रहम् ॥ १२ ॥ महासंमोहनंचैत्यमथर्वणखिलंस्मृतम् ॥ पाठ्यंसुसाध्यमधिककर्षणंबलिकल्पनम् ॥ १३ ॥ अथर्वोपखिलान्येतान्युच्यंतेसुमहांतिच ॥ तथाचैवोपनिषदोद्वात्रिंशत्परिकीर्तिताः ॥ १४ ॥ ईशावास्यंचकेनाख्यंकठवह्व्याह्वयंततः ॥ मुंडकंमांडुकंचैवछांदोग्यंतैत्तिरीयकम् ॥ १५ ॥ प्रश्नाख्यंबृहदारण्यमैतरेयंतथैवच ॥ गर्भाख्यंचैवकैवल्यंश्वेताश्वतरमेवच ॥ १६ ॥ कालाग्निरुद्रहंसंचनारायणमतःपरम् ॥ शारीरंनादबिंद्वाख्यंमंत्रंचामृतबिंदुकम् ॥ १७ ॥ ब्रह्माख्यंचैवजाबालमथर्वशिरसंज्ञकम् ॥ बृहज्जाबालकंचैवसुबालकमतःपरम् ॥१८॥ मैत्रेयंपरमंहंसंछुरिकासंज्ञकंतथा ॥ कौषीतकंतापनीयमारुणीनामकंततः ॥ १९ ॥ मैत्रायणीयमाथर्वशिखासंज्ञंततःपरम् ॥ एतान्युपनिषच्छब्दवाच्यानितुहिमाद्रिजे ॥ २० ॥ मोक्षैकहेतुभूतानिनृणांश्रवणमात्रतः ॥ चतुर्वेदामृतोदन्वत्सुधारसनिबंधनात् ॥ २१ ॥ समुद्धूतान्युपनिषद्रत्नानिगिरिकन्यके ॥ संसारदुःखसंतापसंतप्ताखिलदेहिनाम् ॥ २२ ॥ महत्युपनिषत्प्रोक्ताजीवनौषधमालिका ॥ अज्ञानांधतमोयुक्तसर्वलोकगृहस्थितम् ॥ २३ ॥ दीपिकोपनिषत्प्रोक्तामुक्तिरत्नंप्रमार्गितुम् ॥ द्वात्रिंशदेवतादेविमहोपनिषदःशुभाः ॥ २४ ॥ महत्यःसर्ववेदानांमातरःपरिकीर्तिताः ॥ यान्येवकीर्त्यतेत्रब्रह्मतत्त्वंतत्त्वविदांवरे ॥ २५ ॥ अपूर्णं ॥ इत्यादिसंक्षेपः ॥

इतिश्रीमद्यामलाष्टकतंत्रेखिलोपनिषन्मंत्रसंहितास्वरूपकथनंनामत्रयोदशःपटलः ॥

इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा
स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् शके १९०८

# ॥ अथ ऋग्वेददशग्रंथप्रारंभः ॥

पुनर्मुद्रण : १९९५

प्रकाशक : वेदाचार्य विनायक हरि घैसास, घैसासगुरुजी वेदपाठशाला २/११ एरंडवणा, कर्वे पथ, पुण्यपत्तनम् ४११००४

मुद्रक : वसंत गोविंद मोघे, वसंत प्रिंटिंग प्रेस ४२६/३ चतुःशृंगी पथ पुण्यपत्तनम् ४११०१६

वितरक : अनमोल प्रकाशन, अप्पा बळवंत चौक, पुण्यपत्तनम् ४११००२.

मूल्य : चारशे रुपये

# ॥ अथ सर्वानुक्रमपरिभाषा ॥

श्रीगणेशायनमः॥ श्रीवेदपुरुषायनमः ॥हरिः ॐम्॥ अथऋग्वेदाम्नायेशाकलकेंसूक्तप्रतीकऋक्संख्यंऋषिदैवतच्छंदां
स्यनुक्रमिष्यामोंयथोपदेशं नह्येतज्ज्ञानमृतेंश्रौतस्मार्तकर्मप्रसिद्धिर्मंत्राणांब्राह्मणार्षेयच्छंदोदैवतविद्याजनाध्यापनाभ्यां
श्रेयोधिगच्छंत्येताभ्यामेवानेवंविदोयातयामानिच्छंदांसिभवंतिस्थाणुंवर्च्छतिगर्तेवापात्यतेप्रमीयतेवापापीयान्भवती
तिविज्ञायते॥१॥अथऋषयःशतर्चिनआद्येमंडलेंत्येक्षुद्रसूक्तामहासूक्तामध्यमेषुमाध्यमाःक्वचित्कथंचिदविशेषितंब्रह्मऋ
षिमस्त्रियमनुक्तगोत्रमांगिरसंविद्याद्यस्यवाक्यंसऋषिर्यातेनोच्यतेसादेवतायदक्षरपरिमाणंतच्छंदोऽर्थेप्सवऋषयोदेव
तांश्छंदोभिरभ्यधावंस्तिस्रऽएवदेवताःक्षित्यंतरिक्षद्युस्थानाऽअग्निर्वायुःसूर्यईत्येवंव्याहृतयःप्रोक्ताव्यस्ताःसमस्तानांप्र
जापतिं ( रार्षंतुप्रजापति ) रोंकारःसर्वदेवत्यःपारमेष्ठ्योवाब्राह्मोदैवआध्यात्मिकंस्तत्तत्स्थानाऽअन्यास्तद्विभूतयःकर्मपृथ
क्त्वाद्धिंपृथगभिधानस्तुतयोभवंत्यैकैववामहानात्मादेवताससूर्यइत्याचक्षते सहिसर्वभूतात्मातदुक्तमृषिणा—सूर्यऽआ
त्माजगतस्तुषश्चेतितद्विभूतयोऽन्यादेवतास्तदप्येतदृचोक्तमिंद्रंमित्रंवरुणमग्निमाहुरितियथाभिधानंत्वनुक्रमिष्यामः
प्रायेणैंद्रेमरुतौराज्ञांचदानस्तुतयः ॥ २ ॥ अथच्छंदांसिगायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुप्जगत्यतिजगतीशक्वर्यति
शक्वर्यष्ट्यत्यष्टीधृत्यतिधृतयश्चतुर्विंशत्यक्षरादीनिचतुरुत्तराण्यूनाधिकेनैकेननिचृद्भुरिजौद्वाभ्यांविराट्स्वराजौपादपूर

णार्थंतुंक्षैप्रसंयोगैकाक्षरीभावान्व्यूहेंदाद्येतुसप्तवर्गे पादविशेषात्संज्ञाविशेषास्तानतुक्रामंतएवोदाहरिष्यामोंविराड्पा
विराट्स्थानाश्चंवहूनाऽअपित्रिष्टुभऽएवेत्युद्देशस्तत्रदशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागताइतिसंज्ञांअनादेशे
ष्टाक्षराःपादाश्चतुष्पदाश्चर्चः ॥ ३ ॥ प्रथमंछंदस्त्रिपदागायत्रींपंचकाश्चत्वारःषट्कश्चैकश्चतुर्थश्चतुष्कोवापदपंक्तिःषट्सप्तै
कादशाउष्णिग्गर्भास्त्रयःसप्तकाःपादनिचृन्मध्यमःषट्कश्चेदतिनिचृद्दशकश्चेद्यवमध्या यस्यास्तुषट्कसप्तकाष्टकाःसावर्ध
मानाविपरीताप्रतिष्ठाद्वौषट्कौसप्तकश्चह्रसीयसी ॥ ४ ॥ द्वितीयमुष्णिक्त्रिपदांत्यौद्वादशकआद्यश्चेत्पुरउष्णिङ्म
ध्यमश्चेत्ककुप्त्रैष्टुभजागतचतुष्काःककुब्न्यंकुशिरैकादशिनौःपरःषट्कस्तनुशिरा मध्येचेत्पिपीलिकमध्याऽऽद्यःपंच
कस्त्रयोष्टकाऽअनुष्टुब्गर्भाचतुःसप्तकोष्णिगेव ॥ ५ ॥ तृतीयमनुष्टुप्पंचपंचकाःषट्कश्चैकोमहापदपंक्तिर्जागतावष्टकश्च
कृतिर्मध्येचेदष्टकःपिपीलिकमध्यानवकयोर्मध्येजागतः काविराण्नद्वैराजंत्रयोदशैर्नष्टरूपादशकास्त्रयोविराळेकादश
कावा ॥ ६ ॥ चतुर्थंबृहतीतृतीयोद्वादशाद्यश्चेत्पुरस्ताद्बृहतींद्वितीयश्चेन्न्यंकुसारिण्युरोबृहतीवास्कंधोग्रीवीवांत्यश्चेदु
परिष्टाद्बृहत्यष्टिनोर्मध्येदशकौविष्टारबृहतींत्रिजागतोर्ध्वबृहतींत्रयोदशिनोर्मध्येष्टकःपिपीलिकमध्यानवकाष्ट्येकादश्य
ष्टिनोविषमपदाचतुर्नवकाबृहत्येव ॥ ७ ॥ पंचमंपंक्तिःपंचपदाथचतुष्पदाविराड्दशकैरयुजौजागतौसतोबृहतींयुजौचे
द्विपरीताद्यौचेत्प्रस्तारपंक्तिरंत्यौचेदास्तारपंक्तिराद्यांत्यौचेत्संस्तारपंक्तिर्मध्यमौचेद्विष्टारपंक्तिः ॥ ८ ॥ षष्ठंत्रिष्टुप्त्रैष्टु

भपदाद्धौतुजागतौयस्याःसोजागतेजगतीत्रैष्टुभेत्रिष्टुब्वैराजौजागतौचाभिसारिणींनवकौवैराजस्त्रैष्टुभश्चद्वौवावैराजौ नवकस्त्रैष्टुभश्चविराट्स्थानैकादशिनस्त्रयोष्टकश्चविराड्रूपाद्द्वादशिनस्त्रयोष्टकश्चज्योतिष्मतीयतोष्टकस्ततोज्योतिश्चत्वा रोष्टकाजागतश्चमहाबृहतींमध्येचेद्यवमध्याद्यौदशकावष्टकास्त्रयःपंक्त्युत्तराविराट्पूर्वावा ॥ ९ ॥ सप्तमंजगतींजागतप दाष्टिनस्त्रयःस्वौचद्वौमहासतोबृहत्यष्टकौसप्तकःषट्कौदशकोनवकश्चषळष्टकावामहापंक्तिः ॥ १० ॥ अथप्रगाथाबृह तींसतोबृहत्यौबार्हतःककुप्चेत्पूर्वाकाकुभोमहाबृहतीमहासतोबृहत्यौमहाबार्हतोबृहतीविपरीतेविपरीतोत्तरोनुष्टुब्गा यत्र्यौचानुष्टुभोऽनुष्टुम्मुखास्तृचाइत्युक्तेः ॥ ११ ॥ सूक्तसंख्यानुवर्ततआन्यस्याःसूक्तसंख्यायांऋषिश्चान्यस्मादपेरवा विशिष्टस्तुहिहवैतच्छन्दविशिष्टान्यृषिदैवतच्छंदांसिद्वित्रिचतुःपंचषट्सूक्तभांजि यथासंख्यमनिरुक्तासंख्याविंशतिं रनादेशेत्विंद्रोदेवतात्रिष्टुप्छंदःप्रगाथावार्हताविंशिकाद्विपदाविराजस्तदर्धमेकपदाद्विर्द्विपदास्त्वृचःसमामनंत्ययुक्ष्वं त्याद्विपदैवंमंडलादिष्वाग्नेयमैंद्रात्रिष्टुवंतस्यसूक्तस्यशेषाजगत्यआदौगायत्रंप्राग्घिरण्यस्तूपात् ॥ १२ ॥ ( गोधाघो षाविश्ववारापालोपनिषन्निषत् । ब्रह्मजायाजुहूर्नामागस्त्यस्यस्वसादितिः ॥ इंद्राणीचेंद्रमाताचसरमारोमशोर्वशी । लोपामुद्राचनद्यश्चयमीनारीचशश्वती ॥ श्रीर्लाक्षासार्पराज्ञीवाक्श्रद्धामेधाचदक्षिणा । रात्रीसूर्याचसावित्रीब्रह्मवादि न्यईरिताः ॥ १३ ॥ पादाअतिजगत्यांतुत्रयोद्वादशकाःपरः । अष्टकौशक्करीपादाःसप्तैवाष्टाक्षराश्चते ॥ अतिशाक्कर

पादौद्वावादितःषोळशाक्षरौ । जागतश्चाष्टकावष्टिपादाःषोळशकास्त्रयः ॥ अष्टकौचात्यष्टिपादौजागतौचाष्टकास्त्रयः । जागतश्चाष्टकश्चार्थंधृतिपादौतुजागतौ ॥ पादास्त्रयोष्टकाश्चार्थंषोळशाक्षरएवच । अष्टकश्चाथातिधृतौजागतःषोळशाक्षरः ॥ त्रयोष्टकाजागतश्चंतथैवाष्टकइत्यपि । परःसप्तकपादास्तुंप्रसंगात्स्वयमीरिताः ) ॥ १४ ॥ इतिपरिभाषा ॥

अग्निंनवमधुच्छंदावैश्वामित्रोवायोवायव्यैंद्रवायवंमैत्रावरुणास्तृचाअश्विनाद्वादशाश्विनैंद्रवैश्वदेवसारस्वतास्तृचाःसप्तैताःप्रउगदेवताःसुरूपकृत्नुंदशैंद्रंमातुयुंजंत्यादहेत्येताःषण्मारुत्योवीळुचिदिंद्रेणेत्यैंद्र्यौचैंद्रमिदेंद्रसानसिंमिंद्रेहिगायंतिद्वादशानुष्टुभंत्विंद्रमष्टौजेतामाधुच्छंदसोग्निंद्वादशमेधातिथिःकाण्वआग्नेयमग्निनेतिपादोद्व्यग्निदैवतोनिर्मथ्याहवनीयाभ्यांसुसमिद्धइतीध्मःसमिद्धोवाग्निस्तनूनपान्नराशंसइळोवर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौप्रचेतसौतिस्रोदेव्यःसरस्वतीळाभारत्यस्त्वष्टावनस्पतिःस्वाहाकृतयइतिप्रत्यृचंदेवताएतदाप्रीसूक्तमेतेनान्यान्युक्तदेवतान्येकादशकानित्वंनाराशंसान्याप्रशब्दोक्तानित्वतनूनपांत्यैभिर्वैश्वदेवमिंद्रसोममृतव्यंतत्रैंद्रीमारुतीत्वाष्ट्र्याग्नेय्यैंद्रीमैत्रावरुणीचतस्रोद्रविणोदसआश्विन्याग्नेयृतुदेवताःसर्वत्रात्वानवेंद्रावरुणयोरैंद्रावरुणंयुवाकुपादनिचृतौ(इंद्रोहसीयसीवा)सोमानमितिपंचब्राह्मणस्पत्याश्चतुर्थ्यामिंद्रश्चसोमश्चपंचम्यांदक्षिणाचान्याःसादसस्पत्यानाराशंसीवांत्याप्रतित्यमाग्निमारुतं ॥ १ ॥ ॥ ॥

॥ श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीवेदपुरुषायनमः ॥

हरिः ओ३म् ॥ ( मं. १ अ. १ सू. १ ) अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं । होतारंरत्नधातमं ॥ अग्निःपूर्वेभिर्ऋषि भिरीड्योनूतनैरुत । सदेवाँऽएहवक्षति ॥ अग्निनारयिमंश्नवत्पोषमेवदिवेदिवे । यशसंवीरवत्तमं ॥ अग्नेयंयज्ञमध्वरं विश्वतःपरिभूरसि । सऽइद्देवेषुगच्छति ॥ अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः । देवोदेवेभिरागमत् ॥ १ ॥ यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसि । तवेत्तत्सत्यमंगिरः ॥ उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयं । नमोभरंतऽएमसि ॥ राजंतमध्वराणांगोपामृतस्यदीदिविं । वर्धमानंस्वेदमे ॥ सनःपितेवसूनवेग्नेसूपायनोभव । सचस्वानःस्वस्तये ॥ २ ॥(१।१।२) वायवायाहिदर्शतेमेसोमाऽअरंकृताः । तेषांपाहिश्रुधीहवं ॥ वायउक्थेभिर्जरंतेत्वामच्छाजरितारः । सुतसोमाऽअहर्विदः ॥ वायोतवप्रपृंचतीधेनाजिगातिदाशुषे । उरूचीसोमपीतये ॥ इंद्रवायूइमेसुताऽउपप्रयोभिरागतं । इंदवोवामुशंतिहि ॥ वायविंद्रश्चचेतथःसुतानांवाजिनीवसू । तावायातमुपद्रवत् ॥ ३ ॥ वायविंद्रश्चसुन्वतऽआयातमुपनिष्कृतं । मंक्ष्वि१त्थाधियानरा ॥ मित्रंहुवेपूतदक्षंवरुणंचरिशादसं । धियंघृताचींसाधंता ॥ ऋतेनमित्रावरुणावृ

---

( १।१।१ ) अग्निमीळइतिनवर्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदाअग्निर्गायत्री । ( १।१।२ ) वायवायाहीतिनवर्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदाःआद्यतृचस्यवायुःद्वितीयतृचस्येंद्रवायूतृतीयतृचस्यमित्रावरुणौगायत्री ।

ऋक्सं. अ.१अ.१ ॥ ४ ॥

तावृधावृतस्पृशा। क्रतुंबृहंतमाशाथे ॥ कवीनोमित्रावरुणातुविजाताऽउरुक्षया। दक्षंदधातेऽअपसं ॥ ४ ॥ ( १।१।३ ) अश्विनायज्वरीरिषोद्रवत्पाणीशुभस्पती । पुरुभुजाचनस्यतं ॥ अश्विनापुरुदंससानराशवीरयाधिया । धिष्ण्यावनं तंगिरः ॥ दस्रायुवाकवः सुतानासत्यावृक्तबर्हिषः ॥ आयातंरुद्रवर्तनी ॥ इंद्रायाहिचित्रभानोसुताऽइमेत्वायवः । अण्वीभिस्तनापूतासः ॥ इंद्रायाहिधियेषितोविप्रजूतः सुतावतः । उपब्रह्माणिवाघतः ॥ इंद्रायाहितूतुजानऽउपब्रह्मा णिहरिवः । सुतेदधिष्वनश्चनः ॥ ५ ॥ ओमासश्चर्षणीधृतोविश्वेदेवासऽआगत । दाश्वांसोदाशुषः सुतं+ ॥ विश्वेदे वासोऽअसुरः सुतमागंततूर्णयः । उस्राऽइवस्वसराणि ॥ विश्वेदेवासोऽअस्रिधऽएहिमायासोऽअद्रुहः । मेधंजुषंत वह्नयः । पावकानः सरस्वतीवाजेभिर्वाजिनीवती । यज्ञंवष्टुधियावसुः ॥ चोदयित्रीसूनृतानांचेतंतीसुमतीनां । यज्ञं दधेसरस्वती ॥ महोऽअर्णः सरस्वतीप्रचेतयतिकेतुना । धियोविश्वाविराजति ॥६॥ ( १।२।१ ) सुरूपकृत्नुमूतयेसुदुघामिव गोदुहे । जुहूमसिद्यविद्यवि ॥ उपनः सवनागहिसोमस्यसोमपाः पिब । गोदाऽइद्रेवतोमदः ॥ अथातेऽअंतमानांवि द्यामसुमतीनां । मानोऽअतिख्यऽआगहि ॥ परेहिविग्रमस्तृतमिंद्रंपृच्छाविपश्चितं । यस्तेसखिभ्यऽआवरं ॥ उतब्रु

मंडलं. १ अनु. २ ॥ ४ ॥

( १।१।३ ) अश्विनायज्वरीरितिद्वादशर्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदाः आद्यतृचस्याश्विनौद्वितीयतृचस्येंद्रः तृतीयतृचस्यविश्वेदेवाः चतुर्थतृचस्यसरस्वतीगायत्री । ( १।२।१ ) सुरूपकृत्नुमितिदशर्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदाइंद्रोगायत्री ।

वंतुनोनिदोनिरन्यतश्चिदारत । दधानाइंद्रइद्दुवः ॥ ७ ॥ उतनःसुभगाँऽअरिर्वोचेयुर्दस्मकृष्टयः । स्यामेदिंद्रस्यश र्मणि ॥ एमाशुमाशवेभरयज्ञश्रियंनृमादनं । पतयन्मंदयत्सखं ॥ अस्यपीत्वाशतक्रतोघनोवृत्राणामभवः । प्रावो वाजेषुवाजिनं ॥ तंत्वावाजेषुवाजिनंवाजयामःशतक्रतो । धनानामिंद्रसातये ॥ योरायो३वनिर्महान्त्सुपारःसुन्वतः सखा । तस्माऽइंद्रायगायत ॥८॥(१।२।२) आत्वेतानिषीदतेंद्रमभिप्रगायत । सखायःस्तोमवाहसः ॥ पुरूतमंपुरूणामी शानंवार्याणां । इंद्रंसोमेसचासुते+ ॥ सघानोयोगऽआभुवत्सरायेसपुरंध्यां । गमद्वाजेभिरासनः ॥ यस्यसंस्थेनवृण्वतेह रीसमत्सुशत्रवः । तस्माऽइंद्रायगायत ॥ सुतपान्नेसुताऽइमेशुचयोयंतिवीतये । सोमासोदध्याशिरः ॥ ९ ॥ त्वंसु तस्यपीतयेसद्योवृद्धोऽअजायथाः । इंद्रज्यैष्ठ्यायसुक्रतो ॥ आत्वाविशंत्वाशवःसोमासऽइंद्रगिर्वणः । शंतेसंतुप्रचेत से ॥ त्वांस्तोमाऽअवीवृधन्त्वामुक्थाशतक्रतो । त्वांवर्धंतुनोगिरः ॥ अक्षितोतिःसनेदिमंवाजमिंद्रःसहस्त्रिणं । यस्मि न्विश्वानिपौंस्या ॥ मानोमर्ताऽअभिद्रुहन्तनूनामिंद्रगिर्वणः । ईशानोयवयावधं+ ॥ १० ॥ (१।२।३) युंजंतिब्रध्नमरुषं चरंतंपरितस्थुषः । रोचंतेरोचनादिवि+ ॥ युंजंत्यस्यकाम्याहरीविपक्षसारथे । शोणाधृष्णूनृवाहसा ॥ केतुंकृण्वन्नके

---

( १।२।२ ) आत्वेतेतिदशर्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदाइंद्रोगायत्री । (१।२।३) युंजंतीतिदशर्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदाः आद्यानांतिसृणामिंद्रःततःषण्णांमरुतः (वीळुचिदिंद्रेणेतिद्वयोरिंद्रश्चवा) दशम्याइंद्रोगायत्री ।

तवेपेशोमर्यांऽअपेशसे । समुषद्भिरजायथाः ॥ आदहस्वधामनुपुनर्गर्भत्वमेरिरे । दधानानामयज्ञियं ॥ वीळुचिदा रुजत्नुभिर्गुहाचिदिंद्रवह्निभिः । अविंदऽउस्त्रियाऽअनु ॥ ११ ॥ देवयंतोयथामतिमच्छाविदद्वसुंगिरः । महामनूषतश्रुतं+ ॥ इंद्रेणसंहिदृक्षसेसंजग्मानोऽअबिभ्युषा । मंदूसमानवर्चसा ॥ अनवद्यैरभिद्युभिर्मखःसहस्वदर्चति । गणैरिंद्रस्यकाम्यैः ॥ अतःपरिज्मन्नागहिदिवोवारोचनादधि । समस्मिन्नृंजतेगिरः ॥ इतोवासातिमीमहेदिवोवापार्थिवादधि । इंद्रमहोवारजसः ॥ १२ ॥ (१।२।४) इंद्रमिद्गाथिनोबृहदिंद्रमर्केभिरर्किणः । इंद्रंवाणीरनूषत ॥ इंद्रऽइद्धर्योःसचासंमिश्लऽआवचोयुजा । इंद्रोवज्रीहिरण्ययः ॥ इंद्रोदीर्घायचक्षसऽआसूर्यंरोहयद्दिवि । विगोभिरद्रिमैरयत् ॥ इंद्रवाजेषुनोवसहस्रप्रधनेषुच । उग्रऽउग्राभिरूतिभिः ॥ इंद्रंवयंमहाधनऽइंद्रमर्भेहवामहे । युजंवृत्रेषुवज्रिणं ॥ १३ ॥ सनोवृषन्नमुंचरुंसत्रादावन्नपावृधि । अस्मभ्यमप्रतिष्कुतः ॥ तुंजेतुंजेयऽउत्तरेस्तोमाऽइंद्रस्यवज्रिणः । नविंधेऽअस्यसुष्टुतिं+ ॥ वृषायूथेववंसगःकृष्टीरियर्त्योजसा । ईशानोऽअप्रतिष्कुतः ॥ यऽएकश्चर्षणीनांवसूनामिरज्यति । इंद्रःपंचक्षितीनां+ ॥ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः । अस्माकमस्तुकेवलः ॥ १४ ॥ (१।३।१) एंद्रसानसिंरयिंसजित्वानंसदासहं । वर्षिष्ठमूतयेभर ॥ नियेनमुष्टिहत्ययानिवृत्रारुणधामहै । त्वोतासोन्यर्वता ॥ इंद्रत्वोतास

१ (१।२।४) इंद्रमिदितिदशर्चस्यसूक्तस्यवैश्वा० मधुच्छंदाइंद्रोगायत्री । (१।३।१) एंद्रेतिदशर्चस्यसूक्तस्यवैश्वा० मधुच्छंदाइंद्रोगायत्री ।

ऽआवयंवज्रंघनाददीमहि । जयेमसंयुधिस्पृधः ॥ वयंशूरेभिरस्तृभिरिंद्रत्वयायुजावयं । सासह्यामपृतन्यतः+ ॥ म
हाँऽइंद्रःपरश्चनुमहित्वमस्तुवज्रिणे । द्यौर्नप्रथिनाशवः ॥ १५ ॥ समोहेवायऽआशतनरःस्तोकस्यसनितौ । विप्रा
सोवाधियायवः ॥ यःकुक्षिःसोमपातमःसमुद्रऽइवपिन्वते । उर्वीरापोनकाकुदः ॥ एवाह्यस्यसूनृताविरप्शीगोमती
मही । पक्वाशाखानदाशुषे ॥ एवाहितेविभूतयऽऊतयऽइंद्रमावते । सद्यश्चित्संतिदाशुषे ॥ एवाह्यस्यकाम्यास्तोम
ऽउक्थंचशंस्या । इंद्रायसोमपीतये॥ १६ ॥ (१।३।२) इंद्रेहिमत्स्यंधसोविश्वेभिःसोमपर्वभिः । महाँऽअभिष्टिरोजसा ॥
एमेनंसृजतासुतेमंदिमिंद्रायमंदिने । चक्रिंविश्वानिचक्रये ॥ मत्स्वासुशिप्रमंदिभिःस्तोमेभिर्विश्वचर्षणे । सचैषुसव
नेष्वा+ ॥ असृग्रमिंद्रतेगिरःप्रतित्वामुदहासत । अजोषावृषभंपतिं ॥ संचोदयचित्रमर्वाग्राधऽइंद्रवरेण्यं । असदित्ते
विभुप्रभु+ ॥ १७ ॥ अस्मान्त्सुतत्रचोदयेंद्ररायेरभस्वतः । तुविद्युम्नयशस्वतः ॥ संगोमदिंद्रवाजवदस्मेपृथुश्रवोबृह
त् । विश्वायुर्धेह्यक्षितं ॥ अस्मेधेहिश्रवोबृहद्द्युम्नंसहस्रसातमं । इंद्रतारथिनीरिषः ॥ वसोरिंद्रंवसुपतिंगीर्भिर्गृणंतं
ऋग्मियं । होमगंतारमूतये ॥ सुतेसुतेन्योकसेबृहद्बृहतऽएदरिः । इंद्रायशूषमर्चति ॥ १८ ॥ (१।३।३) गायंतित्वा
ऽगायत्रिणोर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वाशतक्रतऽउद्वंशमिवयेमिरे ॥ यत्सानोःसानुमारुहद्भूर्यस्पष्टकर्त्वं । तदिंद्रो

(१।३।२) इंद्रेहीतिदशर्चस्यसूक्तस्यवैश्वा० मधुच्छंदाइंद्रोगायत्री । (१।३।३) गायंतीतिद्वादशर्चस्यसूक्तस्यवैश्वा० मधुच्छंदाइंद्रोनुष्टुप् ।

ऽअर्थंचेततियूथेनवृष्णिरेजति ॥ युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा । अथानऽइंद्रसोमपागिरामुपश्रुतिंचर ॥ एहि स्तोमाँऽअभिस्वराभिगृणीह्यारुव । ब्रह्मचनोवसोसचेंद्रयज्ञंचवर्धय ॥ उक्थमिंद्रायशंस्यंवर्धनंपुरुनिष्षिधे । शक्रोय थासुतेषुणोरारणत्सख्येषुच ॥ तमित्सखित्वईमहेतंरायेतंसुवीर्ये । सशक्रऽउतनःशकदिंद्रोवसुदयमानः ॥ १९ ॥ सुविवृतंसुनिरजमिंद्रत्वादातमिद्यशः । गवामपव्रजंवृधिकृणुष्वराधोऽअद्रिवः ॥ नहित्वारोदसीऽउभेऽऋघायमाण मिन्वतः । जेषःस्वर्वतीरपःसंगाऽअस्मभ्यंधूनुहि ॥ आश्रुत्कर्णश्रुधीहवंनूचिद्दधिष्वमेगिरः । इंद्रस्तोममिमंममकृ ष्वायुजश्चिदंतरं ॥ विद्माहित्वावृषंतमंवाजेषुहवनश्रुतं । वृषंतमस्यहूमहऊतिंसहस्रसातमां ॥ आतूनऽइंद्रकौशिकम दसानःसुतंपिब । नव्यमायुःप्रसूतिरकृधीसहस्रसामृषिं ॥ परित्वागिर्वणोगिरइमाभवंतुविश्वतः । वृद्धायुमनुवृद्ध योजुष्टाभवंतुजुष्टयः ॥ २० ॥ (१।३।४) इंद्रंविश्वाऽअवीवृधन्त्समुद्रव्यचसंगिरः । रथीतमंरथीनांवाजानांसत्पतिंप तिं ॥ सख्येतऽइंद्रवाजिनोमाभेमशवसस्पते । त्वामभिप्रणोनुमोजेतारमपराजितं ॥ पूर्वीरिंद्रस्यरातयोनविदस्यंत्यू तयः । यदीवाजस्यगोमतःस्तोतृभ्योमंहतेमघं+ ॥ पुरांभिंदुर्युवाकविरमितौजाऽअजायत । इंद्रोविश्वस्यकर्मणोधर्ता वज्रीपुरुष्टुतः+ ॥ त्वंवलस्यगोमतोपावरद्रिवोबिलं । त्वांदेवाऽअबिभ्युषस्तुज्यमानासऽआविषुः ॥ तवाहंशूररराति

(१।३।४) इंद्रंविश्वाइत्यष्टर्चस्यसूक्तस्यजेतामाधुच्छंदसइंद्रोनुष्टुप् ।

भिः प्रत्यायंसिंधुमावदन् । उपातिष्ठंतगिर्वणोविदुष्टेतस्यकारवः ॥ मायाभिरिंद्रमायिनंत्वंशुष्णमवातिरः । विदुष्टेत स्यमेधिरास्तेषांश्रवांस्युत्तिर ॥ इंद्रमीशानमोजसाभिस्तोमाऽअनूपत । सहस्रंयस्यरातयऽउतवासंतिभूयसीः ॥ २१ ॥ ( १।४।१ ) अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं । अस्ययज्ञस्यसुक्रतुं ॥ अग्निमग्निंहवीमभिःसदाहवंतविश्पतिम् । हव्यवाहंपुरुप्रियं ॥ अग्नेदेवाँऽइहावहजज्ञानोवृक्तबर्हिषे । असिहोतानऽईड्यः ॥ ताँऽउशतोविबोधययदग्नेयासिदू त्यं । देवैरासत्सिबर्हिषि ॥ घृताहवनदीदिवःप्रतिष्मरिषतोदह । अग्नेत्वंरक्षस्विनः ॥ अग्निनाग्निःसमिध्यतेकविर्गृह पतिर्युवा । हव्यवाड्जुह्वास्यः ॥ २२ ॥ कविमग्निमुपस्तुहिसत्यधर्माणमध्वरे । देवममीवचातनं ॥ यस्त्वामग्नेहविष्प तिर्दूतंदेवसपर्यति । तस्यस्मप्राविताभव ॥ योऽअग्निंदेववीतयेहविष्माँऽआविवासति । तस्मैपावकमृळय ॥ सनः पावकदीदिवोग्नेदेवाँऽइहावह । उपयज्ञंहविश्चनः ॥ सनःस्तवानऽआभरगायत्रेणनवीयसा । रयिंवीरवतीमिषं ॥ अग्ने शुक्रेणशोचिषाविश्वाभिर्देवहूतिभिः । इमंस्तोमंजुषस्वनः ॥ २३ ॥ ( १।४।२ ) सुसमिद्धोनआवहदेवाँऽअग्नेहविष्म

---

(१।४।१) अग्निंदूतमितिद्वादशर्चस्यसूक्तस्यकाण्वोमेधातिथिरग्निर्गायत्री अग्निनाग्निरित्यस्यनिर्मथ्याहवनीयावग्नीदेवते । (१।४।२) सुसमिद्धइतिद्वादशर्चस्यसूक्तस्यकाण्वोमेधातिथिःप्रथमायाइध्मः (समिद्धोग्निर्वा) द्वितीयायास्तनूनपात्तृतीयायानराशंसःचतुर्थ्याइळःपंचम्याबर्हिःपष्ठ्यादेव्योद्वारःसप्तम्याउपासानक्ताअष्टम्यादैव्यौहोतारौ(प्रचेतसावितिगुणः) नवम्याःसरस्वतीळाभारत्यःदशम्यास्त्वष्टाएकाद

ते । होतः॑पावककुयक्षि॑च ॥ मधु॑मंतंतनूनपाद्यज्ञंदे॒वेषु॑नःकवे । अ॒द्याकृ॑णुहि॒वी॒तये॑ ॥ नरा॒शंस॑मि॒हप्रि॒यम॒स्मिन्य॒ज्ञऽउप॑ ह्वये । मधु॑जिह्वंहवि॒ष्कृतं॑ ॥ अग्ने॒सुख॑तमेरथे॑दे॒वाँऽई॑ळि॒तऽआव॑ह । असि॒होता॒मनु॑र्हितः । स्तृ॒णीतब॒र्हिरा॑नुषग्घृ॒तपृ॑ष्ठंमनीषिणः । यत्रा॒मृत॑स्य॒चक्ष॑णं ॥ विश्र॑यंतामृता॒वृधो॒द्वारो॑दे॒वीर॑स॒श्चतः॑ । अ॒द्यानू॒नंच॒यष्ट॑वे ॥ २४ ॥ नक्तो॒षासा॑ सु॒पेश॑सा॒स्मिन्य॒ज्ञऽउप॑ह्वये । इ॒दंनो॑ब॒र्हिरा॒सदे॑ ॥ तासु॒जि॒ह्वाऽउप॑ह्वये॒होता॑रा॒दैव्या॑कवी । य॒ज्ञंनो॑यक्षतामि॒मम् ॥ इ॒ळासर॑स्वतीम॒हीति॒स्रोदे॒वीर्म॑यो॒भुवः॑ । ब॒र्हिःसीदंत्व॒स्रिधः॑ ॥ इ॒हत्वष्टा॑रमग्रि॒यंवि॒श्वरू॑प॒मुप॑ह्वये । अ॒स्माक॑मस्तु॒केव॑लः ॥ अव॑सृजावनस्पते॒देव॑दे॒वेभ्यो॑ह॒विः । प्रदा॒तुर॑स्तु॒चेत॑नं ॥ स्वाहा॑य॒ज्ञंकृ॑णोतने॒न्द्राय॒यज्व॑नोगृ॒हे । तत्र॑दे॒वाँऽउप॑ह्वये ॥ २५ ॥ ( १।४।३ ) ऐभि॑रग्ने॒दुवो॒गिरो॒विश्वे॑भि॒ःसोम॑पीतये । दे॒वेभि॑र्याहि॒यक्षि॑च ॥ आत्वा॒कण्वा॑ऽअहूषतगृ॒णंति॑विप्रते॒धियः॑ । दे॒वेभि॑रग्न॒ऽआग॑हि ॥ इं॒द्र॒वा॒यू॒बृह॒स्पति॑मि॒त्राग्निंपू॒षणं॒भगं॑ । आ॒दि॒त्यान्मारु॑तंग॒णं ॥ प्रवो॑भ्रि॒यंत॒ऽइंद॑वोमत्स॒रामा॑दयि॒ष्णवः॑ । द्र॒प्सामध्व॑श्च॒मू॒षदः॑ ॥ ईळ॑ते॒त्वाम॑व॒स्यवः॒कण्वा॑सोवृ॒क्तब॑र्हिषः । ह॒विष्म॑न्तोऽअरं॒कृतः॑ ॥ घृ॒तपृ॑ष्ठाम॒नो॒युजो॒येत्वा॒वह॑न्ति॒वह्न॑यः । आदे॒वान्त्सोम॑पीतये ॥ २६ ॥ तान्यज॑त्राँऽऋता॒वृधोऽग्ने॒पत्नी॑वतस्कृधि । मध्वः॑

---

इयावनस्पतिःद्वादश्याःस्वाहाकृतयोदेवताःगायत्रीछंदः (एतदाप्रीसूक्तं)। (१।४।३) ऐभिरग्नइतिद्वादशर्चस्यसूक्तस्यकाण्वोमेधातिथिर्विश्वेदेवागायत्री। (वैश्वदेवत्वंसूक्तभेदप्रयोगेयल्लिंगंसादेवतेतिपक्षआद्ययोर्द्वयोरग्निः तृतीयायाविश्वेदेवाः ततोनवानामग्निः एवंद्वादशर्चं )।

सुजिह्वपायय ॥ येयजत्राय॒ऽईड्या॒स्तेतेपिबंतुजि॒ह्वया॑ । मधो॑रग्नेवषट्कृति ॥ आकीं॑सूर्य॑स्यरोच॒नाद्विश्वा॑न्दे॒वाँ॑ऽउ॑षर्बु॒धः॑ । विप्रो॑होते॒हव॑क्षति ॥ विश्वे॑भिः॒सो॒म्यंमध्वग्न॒ऽइंद्रे॑णवा॒युना॑ । पिबा॑मि॒त्रस्य॒धाम॑भिः ॥ त्वंहोता॒मनु॑र्हि॒तोग्ने॑य॒ज्ञेषु॑सी दसि । सेमंनो॑ऽअध्व॒रंयंज ॥ यु॒क्ष्वाह्यरु॑षी॒रथे॑ह॒रितो॑देव॒रोहितः॑ । ताभि॑र्दे॒वाँ॑ऽइ॒हाव॑ह ॥ २७ ॥ ( १।४।४ ) इंद्र॒सो मं॒पिब॑ऽऋ॒तुना॒त्वावि॑शं॒त्विंद॑वः । म॒त्स॒रास॒स्तदो॑कसः ॥ मरु॑तः॒पिब॑तऽऋ॒तुना॒पो॒त्राद्य॒ज्ञंपु॑नीतन । यू॒यंहिष्ठासु॑दानवः ॥ अ॒भिय॒ज्ञंगृ॑णीहि॒नो॒ग्नावो॒नेष्टः॒पिब॑ऽऋ॒तुना॑ । त्वंहिर॑त्न॒धाऽअसि॑ ॥ अग्ने॑दे॒वाँ॑ऽइ॒हाव॑हसा॒दया॒योनि॑षुत्रि॒षु । परि॑भूषपि ब॑ऽऋ॒तुना॑ ॥ ब्राह्म॑णादिंद्र॒राध॑सः॒पिबा॒सोम॑मृ॒तूँर॑नु । तवेद्धिस॒ख्यमस्तृ॑तं ॥ युवंदक्षं॑धृतव्रत॒मित्रा॑वरुणदू॒ळभं॑ । ऋ॒तुना॑य॒ज्ञमा॑शाथे ॥ २८ ॥ द्र॒वि॒णो॒दाद्रवि॑णसो॒ग्राव॑हस्तासो॒ऽअध्व॒रे । य॒ज्ञेषु॑दे॒वमी॑ळते ॥ द्र॒वि॒णो॒दाद॑दातु॒नो॒वसू॑ नि॒यानि॑शृ॒ण्वि॒रे । दे॒वेषु॒ताव॑नामहे ॥ द्र॒वि॒णो॒दाः॒पि॑पीषतिजु॒होत॒प्रच॑तिष्ठत । ने॒ष्ट्रादृ॒तुभि॑रिष्यत ॥ यत्त्वा॑तु॒रीय॑मृ॒तु भि॒र्द्रवि॑णोदो॒यजा॑महे । अध॑स्मानोद॒दिर्भ॑व ॥ अश्वि॑ना॒पिब॑त॒मधु॒दीद्य॑ग्नी॒शुचिव्रता । ऋ॒तुना॑यज्ञवाहसा ॥ गार्ह॑पत्ये नसंत्य॒ऽऋ॒तुना॑य॒ज्ञनी॒र॑सि । दे॒वान्दे॑वय॒तेयंज ॥ २९ ॥ ( १।४।५ ) आत्वा॑वहंतु॒हर॑यो॒वृष॑णं॒सोम॑पीतये । इंद्र॑त्वा॒सूर॑

---

( १।४।४ ) इंद्रसोममितिद्वादशर्चस्यसूक्तस्यकाण्वोमेधातिथिःआद्यानांषण्णांइंद्रोमरुतस्त्वष्टाग्निरिंद्रोमित्रावरुणौततश्चतसृणांद्रविणोदा अग्निःएकादश्याअश्विनौद्वादश्याअग्निर्गायत्री (ऋतुदेवताएताः)।( १।४।५ ) आत्वावहंत्विति नवर्चस्यसूक्तस्यकाण्वोमेधातिथिरिंद्रोगायत्री ।

ऋक्सं.

अ.१अ.१

॥ ८ ॥

चक्षसः ॥ इमाधानाघृतस्नुवोहरीऽइहोपवक्षतः । इंद्रंसुखतमेरथे ॥ इंद्रंप्रातर्हवामहइंद्रंप्रयत्यध्वरे । इंद्रंसोमस्य पीतये ॥ उपनःसुतमागहिहरिभिरिंद्रकेशिभिः । सुतेहित्वाहवामहे ॥ सेमंनःस्तोममागह्युपेदंसवनंसुतं । गौरोनतृषितः पिब ॥ ३० ॥ इमेसोमासइंदवःसुतासोऽअधिबर्हिषि । ताँऽइंद्रसहसेपिब ॥ अयंतेस्तोमोऽअग्रियोहृदिस्पृगस्तुशंतमः । अथासोमंसुतंपिब ॥ विश्वमित्सवनंसुतमिंद्रोमदायगच्छति । वृत्रहासोमपीतये ॥ सेमंनःकाममापृणगोभिरश्वैःशतक्रतो । स्तवामत्वास्वाध्यः* ॥ ३१ ॥ ( १।४।६ ) इंद्रावरुणयोरहंसम्राजोरवऽआवृणे । तानोमृळातऽईदृशे ॥ गंताराहिस्थोवसेहवंविप्रस्यमावतः । धर्तारांचर्षणीनां+ ॥ अनुकामंतर्पयेथामिंद्रावरुणरायऽआ । तावांनेदिष्ठमीमहे ॥ युवाकुहिशचीनांयुवाकुसुमतीनां । भूयामवाजदाव्नां ॥ इंद्रःसहस्रदाव्नांवरुणःशंस्यानां । क्रतुर्भवत्युक्थ्यः* ॥ ३२ ॥ तयोरिदवसावयंसनेमनिचधीमहि । स्यादुतप्ररेचनं ॥ इंद्रावरुणवामहंहुवेचित्रायराधसे । अस्मान्त्सुजिग्युषस्कृतं ॥ इंद्रावरुणनूनुवांसिषासंतीषुधीष्वा । अस्मभ्यंशर्मयच्छतं ॥ प्रवामश्नोतुसुष्टुतिरिंद्रावरुणयांहुवे । यामृधाथेसधस्तुतिं ॥ ३३ ॥ ( १।५।१ ) सोमानंस्वरणंकृणुहिब्रह्मणस्पते । कक्षीवंतंयऽऔशिजः+ ॥ योरेवान्योऽअमीवहावसुवि

मंडलं १

अनु. ५

॥ ८ ॥

---

( १।४।६ ) इंद्रावरुणयोरितिनवर्चस्यसूक्तस्यकाण्वोमेधातिथिरिंद्रावरुणौगायत्री । युवाकुहिद्वेचौपादनिचृतौ ( इंद्रःसहस्रेतिह्रसीयसीवा)।(१।५।१) सोमानमितिनवर्चस्यसूक्तस्यकाण्वोमेधातिथिःआद्यानांतिसृणांब्रह्मणस्पतिःचतुर्थ्याइंद्रसोमब्रह्मणस्पतयःपंचम्याइंद्रसोम

त्पुष्टिवर्धनः । सनःसिषक्तुयस्तुरः+ ॥ मानःशंसोऽअररुषोधूर्तिःप्रणङ्मर्त्यस्य । रक्षाणोब्रह्मणस्पते ॥ सघावीरोनरिं
ष्यतियमिंद्रोब्रह्मणस्पतिः । सोमोहिनोतिमर्त्यं ॥ त्वंतंब्रह्मणस्पतेसोमऽइंद्रश्चमर्त्यं । दक्षिणापात्वंहसः ॥ ३४ ॥
सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं । सनिंमेधामयासिषं ॥ यस्मादृतेनसिध्यतियज्ञोविपश्चितश्चन । सधीनांयोगमि
न्वति ॥ आदृध्नोतिहविष्कृतिंप्रांचंकृणोत्यध्वरं । होत्रादेवेषुगच्छति ॥ नराशंसंसुधृष्टममपश्यंसप्रथस्तमं । दिवोन
सद्ममखसं ॥ ३५ ॥ ( १।५।२ ) प्रतित्यंचारुमध्वरंगोपीथायप्रहूयसे । मरुद्भिरग्नऽआगहि ॥ नहिदेवोनमर्त्योमहस्त
वक्रतुंपरः । मरुद्भि० ॥ येमहोरजसोविदुर्विश्वेदेवासोऽअद्रुहः । मरुद्भि० ॥ यऽउग्राऽअर्कमानृचुरनाधृष्टासऽओज
सा । मरुद्भि० ॥ येशुभ्राघोरवर्पसःसुक्षत्रासोरिशादसः । मरुद्भि० ॥ ३६ ॥ येनाकस्याधिरोचनेदिविदेवासऽआस
ते । मरुद्भि० ॥ यऽईंखयंतिपर्वतान्तिरःसमुद्रमर्णवं । मरुद्भि० ॥ आयेतन्वंतिरश्मिभिस्तिरःसमुद्रमोजसा । मरु
द्भि० ॥ अभित्वापूर्वपीतयेसृजामिसोम्यंमधु । मरुद्भि० ॥ ३७ ॥ ॥ इतिप्रथमाष्टकेप्रथमोऽध्यायः ॥ १ ॥

---

ब्रह्मणस्पतयोदक्षिणाचततश्चतसृणांसदसस्पतिः (अंत्यायानराशंसोवा) गायत्री । (१।५।२) प्रतित्यमितिनवर्चस्यसूक्तस्यकाण्वोमेधाति
थिरग्नामरुतोगायत्री । इतिप्रथमोऽध्यायः ॥ १ ॥

# ॥ अथ प्रत्यध्यायगतदैवतत्यागसंग्रहः ॥

## प्रथमाष्टके सूक्तसंख्या १२१ ऋचः १३७०

प्रथमाध्याये वर्गाः ३७ सूक्तानि १९ ऋचः १९४ ॥ अथ त्यागः ॥ अग्नयइदंनमम ९ वायवइदं०३ इंद्रवायुभ्यामिदं०३ मित्रावरुणाभ्यामिदं०३ अश्विभ्यामिदं०३ इंद्रायेदं०३ विश्वेभ्योदेवेभ्यइदं०३ सरस्वत्याइदं०३ इंद्रायेदं०२३ मरुद्भ्यइदं० इंद्रमरुद्भ्यइदं० मरुद्भ्यइदं० इंद्रमरुद्भ्यइदं० मरुद्भ्यइदं० २ इंद्रायेदं० ५१ अग्नयइदं० ५ निर्मंथ्याहवनीयाभ्यामग्निभ्यामिदं० अग्नयइदं०६ इध्माय(समिद्धायत्रा)ग्नयइदं० तनूनपातइदं० नराशंसायेदं० इळायेदं० बर्हिषइदं० देवीभ्योद्वार्भ्यइदं० उषासानक्ताभ्यामिदं० दैवीभ्यांहोतृभ्यांप्रचेतोभ्यामिदं० सरस्वतीळाभारतीभ्यइदं० त्वष्ट्रइदं० वनस्पतयइदं० स्वाहाकृतिभ्यइदं० विश्वेभ्योदेवेभ्यइदं० १२ (अग्नयइदं०२ विश्वेभ्योदेवेभ्यइदं० अग्नयइदं० ९) इंद्रायेदं[1]० मरुद्भ्यइदं० त्वष्ट्रइदं० अग्नयइदं० इंद्रायेदं० मित्रावरुणाभ्यामिदं० द्रविणोदसेग्नयइदं० ४ अश्विभ्यामिदं० अग्नयइदं० इंद्रायेदं०९ इंद्रावरुणाभ्यामिदं०९ ब्रह्मणस्पतयइदं०३ इंद्रसोमब्रह्मणस्पतिभ्यइदं० दक्षिणेंद्रसोमब्रह्मणस्पतिभ्यइदं० सदसस्पतयइदं० ३ नराशंसाये (सदसस्पतयेवे)दं० अग्नामरुद्भ्यइदं० ९ ॥ इतिप्रथमोऽध्यायः ॥ १ ॥

---

१ इंद्रायमंत्यंताकृतुदेवताद्वादश ।

अयमष्टावार्भवंमिहषळैंद्राग्नंप्रातर्युजासैकांचतस्रआश्विन्यस्तथासावित्र्यंआग्नेय्यौद्वेदेवीनामेकैकेंद्राणीवरुणा न्यग्नायीनांद्यावापृथिव्येपार्थिवीषड्वैष्णव्यौऽतोदेवादैवीर्वातीन्राश्चतुर्विंशतिर्वायव्यैकैंद्रवायव्यौमैत्रावरुणमरु त्वतीयवैश्वदेवपौष्णास्तृचाः शिष्टाआप्यौंत्याध्यर्धाग्नेय्यंप्स्वंतःपुरउष्णिक्कुपरानुष्टुप्तिस्रश्चांत्याएकविंशीप्रतिष्ठा कस्यपंचोनाजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोदेवरातोवारुणंतुत्रैष्टुभंमादौकाय्याग्नेय्यौसावित्रस्तृचोगाय त्रौस्यांत्याभागीवायच्चित्सैकावसिष्वदशाग्नेयंत्वंश्वंसप्तोनागायत्रैंत्यादैवीत्रिष्टुब्व्यत्रग्रावानवषळनुष्टुबादियच्चि द्धौलूखलयौपरेमौसल्यौचप्रजापतेर्हरिश्चंद्रस्यांत्याचर्मप्रशंसावायच्चित्सप्तपांक्तमावोद्व्यधिकास्माकंपादनिचृ च्छश्वत्रिष्टुप्परौतृचावाश्विनौषस्यौत्वमग्नेद्व्यूनाहिरण्यस्तूपआग्नेयंत्रिष्टुबंत्याष्टमीषोळश्यौचैंद्रस्यपंचोना ॥ २ ॥

हरिः ॐ ॥ ( १।५।३ ) अ_यंदे_वाय_जन्म॑ने_स्तोमो_विप्रे॑भिरा_स_या । अका॑रिर_त्नधा॑त॑मः ॥ यइंद्रा॑यव_चो॑यु_जा॑तत_क्षुर्मन॑सा_हरी॑ । शमी॑भिर्य_ज्ञमा॑शत ॥ तक्ष_न्नास॑त्याभ्यां_परि॑ज्मानं॑सु_खंरथं॑ । तक्ष॑न्धे_नुंस॑ब_र्दुघा॑म् ॥ युवा॑नापि_तरा_पुन॑ःस_त्यमं॑त्राऽऋजू_य वः । ऋ_भवो॑वि_ष्ट्य॑क्रत ॥ संवो_मदा॑सोऽअग्म_तेंद्रे॑णचम_रुत्व॑ता । आ_दि_त्येभि॒श्च_राज॑भिः ॥ १ ॥ उ_तत्यं॑च_म_सं॑नवं॑त्व ष्टु॑र्दे_वस्य_निष्कृ॑तं । अक॑र्तच_तुर_ःपुन॑ः ॥ तेनो_रत्ना॑निधत्तन_त्रिरासा॑प्ता॑नि_सु_न्व_ते । एक॑मेकं॑सु_श_स्तिभि॑ः ॥ अधा॑रयं॑त_वह्न

---

( १।५।३ ) अयंदेवायेत्यष्टर्चस्यसूक्तस्यकाण्वोमेधातिथिर्ऋभवोगायत्री ।

योभंजंतसुकृत्यया । भागंदेवेषुयज्ञियम् ॥ २ ॥ ( १।५।४ ) इहेंद्राग्नीऽउपह्वयेतयोरित्स्तोमंमुश्मसि । तासोमंसोम पातमा ॥ तायज्ञेषुप्रशंसतेंद्राग्नीशुंभतानरः । तागायत्रेषुगायत ॥ तामित्रस्यप्रशस्तयऽइंद्राग्नीताहवामहे । सोमपा सोमपीतये ॥ उग्रासंताहवामहऽउपेदंसवनंसुतम् । इंद्राग्नीऽएहगच्छतां ॥ तामहांतासदस्पतीऽइंद्राग्नीरक्षउब्जतं । अप्रजाःसंत्वत्रिणः ॥ तेनसत्येनजागृतमधिप्रचेतुनेपदे । इंद्राग्नीशर्मयच्छतम् ॥ ३ ॥ ( १।५।५ ) प्रातर्युजाविबोधया श्विनावेहगच्छताम् । अस्यसोमस्यपीतये ॥ यासुरथारथीतमोभादेवादिविस्पृशा । अश्विनाताहवामहे ॥ यावांक शामधुमत्यश्विनासूनृतावती । तयायज्ञंमिमिक्षतम् ॥ नहिवामस्तिदूरकेयत्रारथेनगच्छथः । अश्विनासोमिनोगृ हम्+ ॥ हिरण्यपाणिमूतयेसवितारमुपह्वये । सचेत्तादेवतापदं+ ॥ ४ ॥ अपांनपातमवसेसवितारमुपस्तुहि । तस्यव्र तान्युश्मसि ॥ विभक्तारंहवामहेवसोश्चित्रस्यराधसः ॥ सवितारंनृचक्षसम् ॥ सखायऽआनिषीदतसवितास्तोम्योनु नः । दाताराधांसिशुंभति । अग्नेपत्नीरिहावहदेवानामुशतीरुप । त्वष्टारंसोमपीतये ॥ आग्नाऽअग्नऽइहावसेहोत्रां

---

( १।५।४ ) इहेंद्राग्नीइतिपळर्चस्यसूक्तस्यकाण्वोमेधातिथिरिंद्राग्नीगायत्री । ( १।५।५ ) प्रातर्युजेत्येकविंशत्यृचस्यसूक्तस्यकाण्वोमेधा तिथिःआद्यानां चतसृणामश्विनौततश्चतसृणांसविताततोद्वयोरग्निःततएकस्यादेव्यःततएकस्याइंद्राणीवरुणान्यग्नाय्यःततोद्वयोर्द्यावापृथि व्यौततएकस्याःपृथिवीततःषण्णांविष्णुः(अतोदेवाइत्यस्यादेवावा)गायत्री ।

यविष्ठभारतीम् । वरूत्रींधिषणांवह ॥ ५ ॥ अभिनोदेवीरवसामहःशर्मणानृपत्नीः । अच्छिन्नपत्राःसचंतां ॥ इहेंद्राणीमुपह्वयेवरुणानींस्वस्तये । अग्नायींसोमपीतये ॥ महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां । पिपृतांनोभरीमभिः ॥ तयोरिद्घृतवत्पयोविप्रारिहंतिधीतिभिः । गंधर्वस्यध्रुवेपदे ॥ स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः ॥ ६ ॥ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे । पृथिव्याःसप्तधामभिः ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् । समूळ्हमस्यपांसुरे ॥ त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः । अतोधर्माणिधारयन् ॥ विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे । इंद्रस्ययुज्यःसखा ॥ तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः । दिवीवचक्षुराततम् ॥ तद्विप्रासोविपन्यवोजागृवांसःसमिंधते । विष्णोर्यत्परमंपदं ॥ ७ ॥ (१।५।६) तीव्राःसोमासआगह्याशीर्वंतःसुताइमे । वायोतान्प्रस्थितान्पिब ॥ उभादेवादिविस्पृशेंद्रवायूहवामहे । अस्यसोमस्यपीतये ॥ इंद्रवायूमनोजुवाविप्राहवंतऊ

---

(१।५।६) तीव्राःसोमासइतिचतुर्विंशत्यृचस्यसूक्तस्यकाण्वोमेधातिथिःआद्यायावायुःततोद्वयोरिंद्रवायूततस्तिसृणांमित्रावरुणौततस्तिसृणांमरुतः (मरुत्वानिंद्रइतिकेचित्)ततस्तिसृणांविश्वेदेवाःततस्तिसृणांपूषाततःसप्तानामापःततएकस्याअग्न्यापःततएकस्याअग्निःअप्स्वंतरितिपुरउष्णिक्अप्सुमइत्यनुष्टुप्इदमापइत्याद्यास्तिस्रोनुष्टुभःआपःपृणीतेतिप्रतिष्ठाशेषागायत्र्यः । ( अग्न्यापइत्यत्रापूशब्दस्यपूर्वनिपातेप्राप्तेद्वंद्वेघिइतिसूत्रादग्निशब्दस्यपूर्वनिपातःकृतः ) ।

तये । सहस्राक्षाधियस्पती ॥ मित्रंवयंहवामहेवरुणंसोमपीतये । जज्ञानापूतदक्षसा ॥ ऋतेनयावृतावृधावृतस्यज्यो तिषस्पती । तामित्रावरुणाहुवे ॥ ८ ॥ वरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः । करतांनःसुराधसः ॥ मरुत्वं तंहवामहइंद्रमासोमपीतये । सजूर्गणेनतृंपतु ॥ इंद्रज्येष्ठामरुद्गणादेवासःपूषरातयः । विश्वेममश्रुताहवम् ॥ हत वृत्रंसुदानवइंद्रेणसहसायुजा । मानोदुःशंसऽईशत ॥ विश्वान्देवान्हवामहेमरुतःसोमपीतये । उग्राहिपृश्निमातरः ॥ ९ ॥ जयंतामिवतन्यतुर्मरुतामेतिधृष्णुया । यच्छुभंयाथनानरः ॥ हस्काराद्विद्युतस्पर्यतोजाताऽअवंतुनः । मरुतोमृळयंतुनः ॥ आपूषंचित्रबर्हिषमाघृणेधरुणंदिवः । आजानष्टंयथापशुम्+ ॥ पूषाराजानमाघृणिरपगूळ्हंगुहाहि तं । अविंदच्चित्रबर्हिषम् ॥ उतोसमह्यमिंदुभिःषड्युक्ताँऽअनुसेषिधत् । गोभिर्यवंनचर्कृषत् ॥ १० ॥ अंबयोयंत्य ध्वभिर्जामयोऽअध्वरीयतां । पृंचतीर्मधुनापयः ॥ अमूर्याऽउपसूर्येयाभिर्वासूर्यःसह । तानोहिन्वंत्वध्वरम्+ ॥ अपोदेवीरुपह्वयेयत्रगावःपिबंतिनः । सिंधुभ्यःकर्त्वंहविः+ ॥ अप्स्वं१तरमृतमप्सुभेषजमपामुतप्रशस्तये । देवाभ वतवाजिनः ॥ अप्सुमेसोमोऽअब्रवीदंतर्विश्वानिभेषजा । अग्निंचविश्वशंभुवमापश्चविश्वभेषजीः ॥ ११ ॥ आपः पृणीतभेषजंवरूथंतन्वे३ममं । ज्योक्चसूर्यंदृशे+ ॥ इदमापःप्रवहतयत्किंचदुरितंमयि । यद्वाहमभिदुद्रोहयद्वा शेपऽउतानृतम् ॥ आपोऽअद्यान्वचारिषंरसेनसमगस्महि । पयस्वानग्नऽआगहितंमासंसृजवर्चसा ॥ संमाग्ने

वर्च॑सासृ॒जसं॒प्रज॑या॒समायु॑षा । वि॒द्युर्मे॑ऽअस्यदे॒वाऽइंद्रो॑विद्यात्स॒हऽऋषि॑भिः ॥ १२ ॥ ( १।६।१ ) कस्य॑नू॒नं क॑त॒मस्या॒मृता॑ना॒म्मना॑महे॒चारु॑दे॒वस्य॒नाम॑ । कोनो॑म॒ह्याऽअदि॑तये॒पुन॑र्दात्पि॒तर॑ञ्चदृ॒शेय॑म्मा॒तर॑ञ्च ॥ अ॒ग्नेर्व॒यम्प्र॑थ॒मस्या॒मृता॑ना॒म्मना॑महे॒चारु॑दे॒वस्य॒नाम॑ । सनो॑म॒ह्याऽअदि॑तये॒पुन॑र्दात्पि॒तर॑ञ्चदृ॒शेय॑म्मा॒तर॑ञ्च ॥ अ॒भित्वा॑देवसवित॒रीशा॑नं॒वार्या॑णां । सदा॑वन्भा॒गमी॑महे ॥ यश्चि॒द्धित॑इ॒त्थाभगः॑शशमा॒नःपु॒रानि॒दः । अ॒द्वे॒षोहस्त॑योर्द॒धे ॥ भग॑भक्तस्यतेव॒यमु॒दशे॑म॒तवाव॑सा । मू॒र्धान॑रा॒यऽआ॒रभे॑ ॥ १३ ॥ न॒हिते॑क्ष॒त्रंनसहो॒नम॒न्युंवय॑श्च॒नामीप॒तय॑न्तऽआपुः । नेमाऽआपो॑ऽअनिमि॒षंचर॑न्ती॒र्नय॑॑वात॑स्यप्रमि॒नंत्यभ्वं॑ ॥ अ॒बु॒ध्नेराजा॒वरु॑णो॒वन॑स्यो॒र्ध्वंस्तूप॑न्ददतेपू॒तद॑क्षः । नी॒चीनाः॑स्थु॒रु॒परि॑बु॒ध्नऽए॑षाम॒स्मेऽअ॒न्तर्निहि॑ताःके॒तवः॑स्युः ॥ उ॒रुंहिराजा॒वरु॑णश्च॒कार॒सूर्या॑य॒पन्थ॒मन्वे॑त॒वाऽउ॑ । अ॒पदे॒पादा॒प्रति॑धातवेकरु॒ताप॑वक्ताहृ॑दया॒विध॑श्चित् ॥ श॒तन्ते॑राजन्भि॒षजः॑स॒हस्र॑मु॒र्वीग॑म्भी॒रासु॑म॒तिष्टे॑ऽअस्तु । बाध॑स्वदू॒रेनिर्ऋ॑तिंपरा॒चैः॑कृ॒तंचि॒देनः॒प्रमु॑मुग्ध्य॒स्मत् ॥ अ॒मीयऽऋक्षा॒निहि॑तासऽउ॒च्चानक्त॒न्दद्दृ॑श्रे॒कुह॑चि॒द्दिवे॑युः । अद॑ब्धानि॒वरु॑णस्यव्र॒तानि॑वि॒चाक॑शच्च॒न्द्रमा॒नक्त॑मेति ॥ १४ ॥ तत्त्वा॑यामि॒ब्रह्म॑णा॒वन्द॑मान॒स्तदाशा॑स्ते॒यज॑मानोह॒विर्भिः॑ । अहे॑ळमानोवरुणे॒हबो॒ध्युरु॑शंस॒मान॒

---

(१।६।१) कस्यनूनमितिपंचदशर्चस्यसूक्तस्याजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोदेवरातः आद्यायाःकःद्वितीयायाअग्निस्ततस्तिसृणांसविता ( भगभक्तस्येत्यस्याभगोवा ) नहितेक्षत्रमित्याद्यानांवरुणस्त्रिष्टुप् अभित्वेत्यादितिस्रोगायत्र्यः ।

ऽआयुःप्रमोषीः ॥ तदिन्नक्तंतद्दिवामह्यमाहुस्तदयंकेतोहृदऽआविचष्टे । शुनःशेपोयमह्वद्गृभीतःसोऽअस्मान्राजावरु
णोमुमोक्तु ॥ शुनःशेपोह्यह्वद्गृभीतस्त्रिष्वादित्यंद्रुपदेषुबद्धः । अवैनंराजावरुणःससृज्याद्विद्वाँऽअदब्धोविमुमोक्तुपा
शान् ॥ अवतेहेळोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः । क्षयन्नस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि ॥ उदु
त्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय । अथावयमादित्यव्रतेतवानागसोऽअदितयेस्याम॥१५॥(१।६।२) यच्चि
द्धितेविशोयथाप्रदेववरुणव्रतं । मिनीमसिद्यविद्यवि ॥ मानोवधायहत्नवेजिहीळानस्यरीरधः । माहृणानस्यमन्यवे ॥
विमृळीकायतेमनोरथीरश्वंनसंदितं । गीर्भिर्वरुणसीमहि ॥ पराहिमेविमन्यवःपतन्तिवस्यइष्टये । वयोनवसतीरुप ॥
कदाक्षत्रश्रियंनरमावरुणंकरामहे । मृळीकायोरुचक्षसं ॥ १६ ॥ तदित्समानमाशातेवेनंतानप्रयुच्छतः । धृतव्रताय
दाशुषे ॥ वेदायोवीनांपदमन्तरिक्षेणपततां । वेदनावःसमुद्रियः ॥ वेदमासोधृतव्रतोद्वादशप्रजावतः । वेदायऽउप
जायते ॥ वेदवातस्यवर्तनिमुरोर्ऋष्वस्यबृहतः । वेदायेऽअध्यासते ॥ निषसादधतव्रतोवरुणःपस्त्या३स्वा । साम्रा
ज्यायसुक्रतुः ॥ १७ ॥ अतोविश्वान्यद्भुताचिकित्वाँऽअभिपश्यति । कृतानियाचकर्त्वा ॥ सनोविश्वाहासुक्रतुरा
दित्यःसुपथाकरत् । प्रणऽआयूंषितारिषत् ॥ बिभ्रद्द्रापिंहिरण्ययंवरुणोवस्तनिर्णिजं । परिस्पशोनिषेदिरे ॥ नयं

---

( १।६।२ ) यच्चिद्धितइत्येकविंशत्यृचस्यसूक्तस्याजीगर्तिःशुनःशेपोवरुणोगायत्री ।

दि॒प्संति॒दि॒प्सवो॒नद्रुह्वा॒णो॒जना॑नां । नदे॒वम॒भिमा॑तयः । उ॒तयोमानु॑षे॒ष्वायश॑श्चक्रेऽअसा॒म्या । अ॒स्माक॑मु॒दरे॒ष्वा ॥ १८ ॥ परा॑मेयंतिधी॒तयो॒गावो॒नगव्यूती॒रनु॑ । इ॒च्छंती॑रुरु॒चक्ष॑सं ॥ संनुवोचावहै॒पुन॒र्यतो॑मे॒मध्वाभृ॑तं । होते॑व॒क्षद॑से॒प्रि॒यं+ ॥ दर्श॒नुवि॒श्वद॑र्शतं॒दर्शं॒रथ॒मधि॒क्षमि॑ । ए॒ताजु॑षतमे॒गिर॑ः ॥ इ॒मंमे॑वरुणश्रु॒धीहव॑म॒द्याच॑मृळय । त्वाम॑व॒स्युरा च॑के ॥ त्वंविश्व॑स्यमेधिरदि॒वश्च॒ग्मश्च॑राजसि । सयाम॑नि॒प्रति॑श्रुधि ॥ उदु॑त्त॒मंमु॑मुग्धिनो॒विपाश॑मध्य॒मंचृ॑त । अवा॑ध॒मानि॑जी॒वसे॑ ॥ १९ ॥ ( १।६।३ ) वसि॑ष्वा॒हिमि॑येध्य॒वस्त्रा॑ण्यूर्जांपते । सेमंनो॑ऽअध्व॒रंय॑ज ॥ नि॒नोहोता॒वरे॑ण्यःसदा॑य वि॒ष्ठमन्म॑भिः । अग्ने॑दि॒वित्म॑ताव॒च॑ः ॥ आहिष्मा॑सू॒नवे॑पि॒तापिर्य॑जत्या॒पये॑ । सखा॒सख्ये॒वरे॑ण्यः ॥ आनो॑ब॒र्हीरि॒शाद॑सो॒वरु॑णोमि॒त्रोऽअर्य॒मा । सीद॑न्तु॒मनु॑षोयथा ॥ पूर्व्य॑होतर॒स्यनो॒मंद॑स्वस॒ख्यस्य॑च । इ॒माऽउ॒षुश्रु॑धी॒गिर॑ः ॥ २० ॥ यच्चि॒द्धिशश्व॑ता॒तना॑दे॒वंदे॑वं॒यजा॑महे । त्वेऽइद्धू॑यतेह॒विः ॥ प्रि॒योनो॑ऽअस्तुवि॒श्पति॒र्होता॑मं॒द्रोवरे॑ण्यः । प्रि॒याःस्व॒ग्नयो॑व॒यं+ ॥ स्व॒ग्नयो॒हिवार्यं॑दे॒वासो॑दधि॒रेच॑नः । स्व॒ग्नयो॑मनामहे ॥ अथा॑नऽउ॒भयेषा॒मम॑मृत॒मर्त्या॑नां । मि॒थःसं॑तु॒प्रश॑स्तयः ॥ विश्वे॑भिरग्नेऽअ॒ग्निभि॑रि॒मंय॒ज्ञमि॒दंवच॑ः । चनो॑धाःसहसोयहो ॥ २१ ॥ ( १।६।४ ) अश्वं॒नत्वा॒वार॑वंतंव॒दध्या॑ऽअ॒ग्निंनमो॑

---

( १।६।३ ) वसिष्वेतिदशर्चस्यसूक्तस्याजीगर्तिःशुनःशेपोग्निर्गायत्री । (१।६।४) अश्वंनत्वेतित्रयोदशर्चस्यसूक्तस्याजीगर्तिःशुनःशेपोऽग्निर्गायत्री । नमोमहद्भ्यइत्यस्यादेवास्त्रिष्टुप् ।

भिः । सम्राजंतमध्वराणां ॥ सघानःसूनुःशवसापृथुप्रगामासुशेवः । मीढ्वाँऽअस्माकंवभूयात् ॥ सनोदूराच्चासाच्चनि सर्त्यादघायोः । पाहिसदमिद्विश्वायुः ॥ इममूषुत्वमस्माकंसनिंगायत्रंनव्यांसं । अग्नेदेवेषुप्रवोचः ॥ आनोभजपर मेष्वावाजेषुमध्यमेषु । शिक्षावस्वोऽअंतमस्य ॥ २२ ॥ विभक्तासिचित्रभानोसिंधोरूर्माऽउपाकऽआ । सद्योदाशुषे क्षरसि ॥ यमग्नेपृत्सुमर्त्यमवावाजेषुयंजुनाः । सयंताशश्वतीरिषः ॥ नकिरस्यसहंत्यपर्येताकयस्यचित् । वाजोऽअ स्तिश्रवाय्यः ॥ सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता । विप्रेभिरस्तुसनिता ॥ जरावोधतद्विविड्ढिविशेविशेयज्ञियाय । स्तोमंरुद्रायदृशीकं ॥ २३ ॥ सनोमहाँऽअनिमानोधूमकेतुःपुरुश्चंद्रः । धियेवाजायहिन्वतु ॥ सरेवाँऽइवविश्पतिर्दै व्यःकेतुःशृणोतुनः । उक्थैरग्निर्बृहद्भानुः ॥ नमोमहद्भ्योनमोऽअर्भकेभ्योनमोयुवभ्योनमऽआशिनेभ्यः । यजामदे वान्यदिशक्नवाममाज्यायसःशंसमावृक्षिदेवाः ॥ २४ ॥ ( १।६।५ ) यत्रग्रावापृथुबुध्नऽऊर्ध्वोभवतिसोतवे । उलूखलसु तानामवेद्विंद्रजल्गुलः ॥ यत्रद्वाविवजघनाधिषवण्याकृता । उलूखल० ॥ यत्रनार्यपच्यवमुपच्यवंचशिक्षते । उलूख ल० ॥ यत्रमंथांविबध्नतेरश्मीन्यमितवाऽइव । उलूखल० ॥ यच्चिद्धित्वंगृहेगृहऽउलूखलकयुज्यसे । इहद्युमत्तमं



( १।६।५ ) यत्रग्रावेतिनवर्चस्यसूक्तस्याजीगर्तिःशुनःशेपःआद्यानांचतसृणामिंद्रःततोद्वयोरुलूखलंततोद्वयोरुलूखलमुसलेअंत्यायाः प्रजापतिर्हरिश्चंद्रः ( अधिषवणचर्मदेवतावा ) आद्याःषळनुष्टुभःअंत्यास्तिस्रोगायत्र्यः ।

वदुजयंतामिवदुंदुभिः+ ॥ २५ ॥ उतस्मंतेवनस्पतेवातोविवात्यग्रमित् । अथोऽइंद्रायपातवेसुनुसोममुलूखल ॥ आयजीवाजसातमाताह्युच्चाविजर्भृतः । हरीऽइवांधांसिवप्सता ॥ तानोऽअद्यवनस्पतीऽऋष्वावृष्वेभिःसोतृभिः । इंद्रायमधुमत्सुतम् ॥ उच्छिष्टंचम्वोर्भरसोमंपवित्रऽआसृज । निधेहिगोरधित्वचि+ ॥ २६ ॥ ( १।६।६ ) यच्चिद्धिसंत्यसोमपाऽअनाशस्ताऽइवस्मसि । आतूनऽइंद्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ शिप्रिन्वाजानांपतेशचीवस्तवदंसना । आतूनं० ॥ निष्वापयामिथूदृशासस्तामबुध्यमाने ॥ आतूनं० ॥ ससंतुत्याऽअरातयोबोधंतुशूररातयः । आतूनं० ॥ समिंद्रगर्दभंमृणनुवंतंपापयामुया । आतूनं० ॥ पतातिकुंडृणाच्यादूरंवातोवनादधि । आतूनं० ॥ सर्वंपरिक्रोशंजहिजंभयाकृकदाश्वं । आतूनं० ॥ २७ ॥ ( १।६।७ ) आवऽइंद्रंक्रिविंयथावाजयंतःशतक्रतुं । मंहिष्ठंसिंचऽइंदुभिः ॥ शतंवायःशुचीनांसहस्रंवासमाशिरां । एदुनिम्नंनरीयते ॥ संयन्मदायशुष्मिणऽएनाह्यस्योदरे । समुद्रोनव्यचोदधे ॥ अयमुतेसमतसिकपोतऽइवगर्भधिं । वचस्तच्चिन्नऽओहसे ॥ स्तोत्रंराधानांपतेगिर्वाहोवीरयस्यते । विभूतिरस्तुसूनृता ॥ २८ ॥ ऊर्ध्वस्तिष्ठानऽऊतयेस्मि

---

( १।६।६ ) यच्चिद्धिसत्येतिसप्तर्चस्यसूक्तस्याजीगर्तिःशुनःशेपइंद्रःपंक्तिः । ( १।६।७ ) आवइंद्रमितिद्वाविंशत्यृचस्यसूक्तस्याजीगर्तिःशुनःशेपइंद्रःसप्तदश्यादितिसृणामश्विनौततस्तिसृणामुषागायत्रीअस्माकमितिपादनिचृत्शश्वदिंद्रइतित्रिष्टुप् ।

ऋक्सं.
अ.१अ.२
॥ १४ ॥

न्वाजेशतक्रतो । समन्येषुब्रवावहै ॥ योगेयोगेतवस्तरंवाजेवाजेहवामहे । सखायइंद्रमूतये ॥ आघागमद्यदिश्रवं त्सहस्रिणीभिरूतिभिः । वाजेभिरुपनोहवं ॥ अनुप्रत्नस्यौकसोहुवेतुविप्रतिंनरं । यंतेपूर्वंपिताहुवे+ ॥ तंत्वावयंविश्व वाराशास्महेपुरुहूत । सखेवसोजरितृभ्यः ॥ २९ ॥ अस्माकंशिप्रिणीनांसोमपाःसोमपाव्नां । सखेवज्रिन्त्सखीना म् ॥ तथातदस्तुसोमपाःसखेवज्रिन्तथाकृणु । यथातउश्मसीष्टये ॥ रेवतीर्नःसधमादइंद्रेसंतुतुविवाजाः । क्षुमं तोयाभिर्मदेम ॥ आघत्वावान्त्मनाप्तःस्तोतृभ्योधृष्णवियानः । ऋणोरक्षंनचक्र्योः* ॥ आयद्दुवःशतक्रतवाकामंजरि तृणां । ऋणोरक्षंनशचीभिः ॥ ३० ॥ शश्वदिंद्रःपोप्रुथद्भिर्जिगायनानदद्भिःशाश्वसद्भिर्धनानि । सनोहिरण्यरथंदं सनावान्त्सनःसनितासनयेसनोदात् ॥ आश्विनावश्वावत्येषायातंशवीरया । गोमद्दस्राहिरण्यवत् ॥ समानयोज नोहिवांरथोदस्रावमर्त्यः । समुद्रेअश्विनेयते ॥ न्यंघ्न्यस्यमूर्धनिचक्रंरथस्ययेमथुः । परिद्यामन्यदीयते ॥ कस्तंउषःकधप्रियेभुजेमर्तोअमर्त्ये । कंनक्षसेविभावरि ॥ वयंहितेअमन्मह्यान्तादापराकात् । अश्वेनचित्रेअरुषि ॥ त्वंत्येभिरागहिवाजेभिर्दुहितर्दिवः । अस्मेरयिंनिधारय ॥ ३१ ॥ ( १।७।१ ) त्वमग्नेप्रथमोअंगिराऋषिर्देवोदे वानामभवःशिवःसखा । तवव्रतेकवयोविद्मनापसोजायंतमरुतोभ्राजदृष्टयः । त्वमग्नेप्रथमोअंगिरस्तमःकविर्देवा

मंडलं १
अनु. ७
॥ १४ ॥

( १।७।१ ) त्वमग्नइत्यष्टादशर्चस्यसूक्तस्यांगिरसोहिरण्यस्तूपोग्निर्जगतीअष्टमीषोळश्यंत्यास्त्रिष्टुभः ।

नांपरिभूषसिव्रतं । विभुर्विश्वस्मैभुवनायमेधिरोद्विमाताशयुःकतिधाचिदायवे ॥ त्वमग्नेप्रथमोमातरिश्वनऽआविर्भ
वसुक्रतूयाविवस्वते । अरेजेतांरोदसीहोतृवूर्येसघ्नोर्भारमयजोमहोवसो ॥ त्वमग्नेमनवेद्यामवाशयःपुरूरवसेसुकृतेसु
कृत्तरः । श्वात्रेणयत्पित्रोर्मुच्यसेपर्यात्वापूर्वमनयन्नापरंपुनः ॥ त्वमग्नेवृषभःपुष्टिवर्धनऽउद्यतस्रुचेभवसिश्रवाय्यः ।
यऽआहुतिंपरिवेदावषट्कृतिमेकायुरग्रेविशऽआविवाससि ॥ ३२ ॥ त्वमग्नेवृजिनवर्तनिनरंसक्मन्पिपर्षिविदथेवि
चर्षणे । यःशूरसातापरितक्म्येधनेदभ्रेभिश्चित्समृताहंसिभूयसः ॥ त्वंतमग्नेऽअमृतत्वउत्तमेमर्तंदधासिश्रवसेदिवे
दिवे । यस्तातृषाणऽउभयायजन्मनेमयःकृणोषिप्रयऽआचसूरये ॥ त्वंनोऽअग्नेसनयेधनानांयशसंकारुंकृणुहिस्तवा
नः । ऋध्यामकर्मापसानवेनदेवैर्द्यावापृथिवीप्रावतंनः ॥ त्वंनोऽअग्नेपित्रोरुपस्थऽआदेवोदेवेष्वनवद्यजागृविः । तनू
कृद्बोधिप्रमतिश्चकारवेत्वंकल्याणवसुविश्वमोपिषे ॥ त्वमग्नेप्रमतिस्त्वंपितासिनस्त्वंवयस्कृत्तवजामयोवयं । संत्वारा
यःशतिनःसंसहस्रिणःसुवीरंयंतिव्रतपामदाभ्य ॥ ३३ ॥ त्वामग्नेप्रथममायुमायवेदेवाऽअकृण्वन्नहुषस्यविश्पतिम् ।
इळामकृण्वन्मनुषस्यशासनींपितुर्यत्पुत्रोममकस्यजायते ॥ त्वंनोऽअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य । त्राता
तोकस्यतनयेगवामस्यनिमेषंरक्षमाणस्तवव्रते+ ॥ त्वमग्नेयज्यवेपायुरंतरोनिषंगायचतुरक्षऽइध्यसे । योरातहव्योवृ
कायधायसेकीरेश्चिन्मंत्रंमनसावनोषितं+ ॥ त्वमग्नऽउरुशंसायवाघतेस्पार्हंयद्रेक्णःपरमंवनोषितत् । आध्रस्यचित्प्र

मतिरुच्यसेपिताप्रपाकंशास्सिप्रदिशोविदुष्टरः ॥ त्वमंग्नेप्रयंतदक्षिणंनरंवर्मेवस्यूतंपरिपासिविश्वतः । स्वादुक्षद्मायो
वसतौस्योनकृज्जीवयाजंयजतेसोपमादिवः+ ॥ ३४ ॥ इमामंग्नेशरणिंमीमृषोनऽइममध्वानंयमगामदूरात् । आपिः
पिताप्रमतिःसोम्यानांभृमिरस्यृषिकृन्मर्त्यानां ॥ मनुष्वदंग्नेऽअंगिरस्वदंगिरोययातिवत्सदनेपूर्ववच्छुचे । अच्छंया
ह्यावंहादैव्यंजनमासादयबर्हिषियक्षिचप्रियं+ ॥ एतेनाग्नेब्रह्मणावावृधस्वशक्तीवायत्तेचकृमाविदावा । उतप्रणेष्यभि
वस्योऽअस्मान्त्संनःसृजसुमत्यावाजवत्या ॥ ३५ ॥ (१।७।२) इंद्रस्यनुवीर्याणिप्रवोचंयानिचकारप्रथमानिवज्री ।
अहन्नहिमन्वपस्ततर्दप्रवक्षणाऽअभिनत्पर्वतानां ॥ अहन्नहिंपर्वतेशिश्रियाणंत्वष्टास्मैवज्रंस्वर्यंततक्ष । वाश्राऽइवधेनवः
स्यंदमानाऽअंजःसमुद्रमवजग्मुरापः ॥ वृषायमाणोवृणीतसोमंत्रिकद्रुकेष्वपिबत्सुतस्य ॥ आसायकंमघवादत्तवज्रम
हन्नेनंप्रथमजामहीनां ॥ यदिंद्राहन्प्रथमजामहीनामान्मायिनाममिनाःप्रोतमायाः । आत्सूर्यंजनयन्द्यामुषासंतादी
त्नाशत्रुंनकिलाविवित्से ॥ अहन्वृत्रंवृत्रतरंव्यंसमिंद्रोवज्रेणमहतावधेन । स्कंधांसीवकुलिशेनाविवृक्णाहिःशयतऽउ
पपृक्पृथिव्याः+ ॥ ३६ ॥ अयोद्धेवदुर्मदऽआहिजुह्वेमहावीरंतुविबाधमृजीषं । नातारीदस्यसमृतिंवधानांसंरुजानाः
पिपिषऽइंद्रशत्रुः ॥ अपादहस्तोऽअपृतन्यदिंद्रमास्यवज्रमधिसानौजघान । वृष्णोवध्रिःप्रतिमानंबुभूषन्पुरुत्रावृत्रोऽअ





(१।७।२।) इंद्रस्यन्वितिपंचदशर्चस्यसूक्तस्यांगिरसोहिरण्यस्तूपइंद्रस्त्रिष्टुप् ।

शयद्व्यस्तः ॥ नदंनभिन्नमंमुयाशयानंमनोरुहाणाऽअतियंत्यापः । याश्चिद्वृत्रोमहिनापर्यतिष्ठत्तासामहिःपत्सुतःशीर्बभूव ॥ नीचावयाऽअभवद्वृत्रपुत्रेंद्रोऽअस्याऽअववधर्जभार । उत्तरासूरधरःपुत्रऽआसीद्दानुःशयेसहवत्सानधेनुः ॥ अतिष्ठंतीनामनिवेशनानांकाष्ठानांमध्येनिहितंशरीरं । वृत्रस्यनिण्यंविचरंत्यापोदीर्घंतमऽआशयदिंद्रशत्रुः ॥ ३७ ॥ दासपत्नीरहिगोपाऽअतिष्ठन्निरुद्धाऽआपःपणिनेवगावः । अपांबिलमपिहितंयदासीद्वृत्रंजघन्वाँऽअपतद्ववार ॥ अश्व्योवारोऽअभवस्तदिंद्रसृकेयत्त्वाप्रत्यहन्देवऽएकः । अजयोगाऽअजयःशूरसोममवासृजःसर्तवेसप्तसिंधून् ॥ नास्मैविद्युन्नतन्यतुःसिषेधनयांमिहमकिरद्ध्रादुनिंच । इंद्रश्चयद्युयुधातेऽअहिश्चोतापरीभ्योमघवाविजिग्ये ॥ अहेर्यातारंकमपश्यऽइंद्रहृदियत्तेजघ्नुषोभीरगच्छत् । नवचयन्नवतिंचस्रवंतीःश्येनोनभीतोऽअतरोरजांसि ॥ इंद्रोयातोवसितस्यराजाशमस्यचशृंगिणोवज्रबाहुः । सेदुराजाक्षयतिचर्षणीनामरान्ननेमिःपरितावभूव ॥ ३८ ॥ इतिप्रथमाष्टके द्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

द्वितीयाध्याये वर्गाः ३८ सूक्तानि १३ ऋचः १८९ ॥ त्यागः ॥ ऋभुभ्यइदं.८ इंद्राग्निभ्यामिदं.६ अश्विभ्यामिदं.४ सवित्र-इदं.४ अग्नयइदं.२ देवीभ्यइदं. इंद्राणीवरुणान्यग्नायीभ्यइदं. द्यावापृथिवीभ्यामिदं.२ पृथिव्याइदं. विष्णवइदं. ( प्रथमायादेवेभ्योवा )६ वायवइदं. इंद्रवायुभ्यामिदं.२ मित्रावरुणाभ्यामिदं.२ मरुद्भ्यः( मरुत्वतइंद्रायवा )इदं.३ विश्वेभ्योदेवेभ्यइदं.३ पूष्णइदं.३

अग्न्यइदं.७ अग्न्यग्न्यइदं. अग्नयइदं. कायेदं. अग्नयइदं. सवित्रइदं.३ (अंत्यायाभगायवा) वरुणायेदं.३१ अग्नयइदं.२२ देवेभ्यइदं. इंद्रायेदं.४ उलूखलायेदं.२ उलूखलमुसलाभ्यामिदं.२ प्रजापतयेहरिश्चंद्राय (अधिषवणचर्मणे) वेदं. इंद्रायेदं.२३ अश्विभ्यामिदं.३ उषसइदं.३ अग्नयइदं.१८ इंद्रायेदं.१५ ॥ इतिद्वितीयोऽध्यायः ॥

एतत्रिंश्चिद्द्वादशाश्विनंनवम्यंत्येत्रिष्टुभौह्वयाम्येकादशसावित्रंनवमीजगत्याद्याचसालिंगोक्तदैवतपादाप्रवोविंशतिःकण्वोघौरआग्नेयंप्रागाथंमूर्ध्वऊषुयौप्यौक्रीळंपंचोनामारुतंहिगायत्रंतुकद्धप्रयद्दशप्रागाथंतूत्तिष्ठाष्टौब्राह्मणस्पत्यंयंरक्षंतिनववरुणमित्रार्यम्णांमध्येतृचआदित्येभ्योगायत्रंहिंसंपूषन्दशपौष्णंकद्रुद्रायनवरौद्रंतृतीयामैत्रावरुणीचांत्यस्तृचःसौम्योंत्यानुष्टुबग्नेषळूनाप्रस्कण्वःकाण्वआग्नेयंतुप्रागाथमाद्योद्वृचोश्व्युषसांचत्वमग्नेदशानुष्टुभमर्धर्चौत्योदैवएषोपंचोनाश्विनंतुगायत्रं ॥ ३ ॥

हरिः ओ३म्॥(१।७।३)एतायामोपगव्यंतऽइंद्रमस्माकंसुप्रमतिंवावृधाति । अनामृणःकुविदादस्यरायोगवांकेतंपरमावर्जतेनः ॥ उपेदहंधनदामप्रतीतंजुष्टांनश्येनोवसतिंपतामि । इंद्रंनमस्यन्नुपमेभिरर्कैर्यःस्तोतृभ्योहव्योऽअस्तियामन् ॥ निसर्वसेनऽइषुधींऽरसक्तसमर्योगाऽअंजतियस्यवष्टि । चोष्कूयमाणऽइंद्रभूरिवामंमापणिर्भूरस्मदधिप्रवृद्ध ॥



---

(१।७।३) एतायामेतिपंचदशर्चस्यसूक्तस्यांगिरसोहिरण्यस्तूपइंद्रस्त्रिष्टुप् ।

वधीर्हिदस्युंधनिनंघनेनँऽएकश्चरन्नुपशाकेभिरिंद्र । धनोरधिविषुणक्तेव्यायन्नयज्वानःसनकाःप्रेतिमीयुः ॥ पराचि
च्छीर्षाववृजुस्तइंद्रायज्वानोयज्वभिःस्पर्धमानाः । प्रयद्दिवोहरिवःस्थातरुग्रनिरव्रताँऽअधमोरोदस्योः ॥ १ ॥ अयु
युत्सन्ननवद्यस्यसेनामयातयंतक्षितयोनवग्वाः । वृषायुधोनवध्रयोनिरष्टाःप्रवद्भिरिंद्राच्चितयंतऽआयन् ॥ त्वमेतान्रुद
तोजक्षतश्चायोधयोरजसऽइंद्रपारे । अवादहोदिवऽआदस्युमुच्चाप्रसुन्वतःस्तुवतःशंसमावः ॥ चक्राणासःपरीणहंपृथि
व्याहिरण्येनमणिनाशुंभमानाः । नहिन्वानासस्तितिरुस्तऽइंद्रंपरिस्पशोऽअदधात्सूर्येण ॥ परियदिंद्ररोदसीऽउभेऽअबु
भोजीर्महिनाविश्वतःसीम् । अमन्यमानाँऽअभिमन्यमानैर्निर्ब्रह्मभिरधमोदस्युमिंद्र ॥ नयेदिवःपृथिव्याऽअंतमापुर्न
मायाभिर्धनदांपर्यभूवन् । युजंवज्रंवृषभश्चक्रऽइंद्रोनिर्ज्योतिषातमसोगाऽअधुक्षत् ॥ २ ॥ अनुस्वधामक्षरन्नापो
ऽअस्यावर्धतमध्यऽआनाव्यानां । सध्रीचीनेनमनसातमिंद्रऽओजिष्ठेनहन्मनाहन्नभिद्यून्+ ॥ न्याविध्यदिलीबिशस्य
दृह्लाविशृंगिणमभिनच्छुष्णमिंद्रः । यावत्तरोमघवन्यावदोजोवज्रेणशत्रुमवधीःपृतन्युं+ ॥ अभिसिध्मोऽअजिगादस्यश
त्रून्वितिग्मेनवृषभेणापुरोभेत् । संवज्रेणासृजद्वृत्रमिंद्रःप्रस्वांमतिमतिरच्छाशदानः ॥ आवःकुत्समिंद्रयस्मिन्चाक
न्प्रावोयुध्यंतंवृषभंदशद्युं । शफच्युतोरेणुर्नक्षतद्यामुच्छ्वैत्रेयोनृषाह्यायतस्थौ ॥ आवःशमंवृषभंतुग्र्यासुक्षेत्रजेषेमघव

न्छ्वित्र्यंगां ॥ ज्योक्कि॒दत्र॒तस्थि॒वांसो॑ऽअक्रन्छत्रूय॒तामध॑रा॒वेदं॑नाकः ॥ ३ ॥ ( १।७।४ ) त्रिश्चि॑न्नोऽअ॒द्याभ॑वतंनवेदसावि॒भुर्वा॑यामंऽउ॒तरा॒तिर॑श्विना । यु॒वोर्हि॒यं॒त्रंहि॒म्येव॒वास॑सोभ्यायं॒सेन्या॑भवतंम॒नीषिभिः ॥ त्रयः॑प॒वयो॑मधु॒वाहने॒रथे॑सोम॑स्यवे॒नामनु॒विश्व॒इद्वि॑दुः । त्रयः॑स्कं॒भास॑ःस्कभि॒तास॑ऽआ॒रभे॒त्रिर्नक्तं॒या॒थस्त्रिर्वश्विना॒दिवा॑ ॥ स॒मानेऽअह॒न्त्रिर॑वद्यगोहना॒त्रिर॒द्ययज्ञंमधु॑नामिमिक्षतं । त्रिर्वाज॑वती॒रिषो॑ऽअश्विनायुवंदो॒षाऽअ॒स्मभ्य॑मु॒षस॑श्चपिन्वतं ॥ त्रिर्व॒र्तिर्या॑तं॒त्रिरनु॑व्रते॒जने॒त्रिःसु॑प्रा॒व्ये॒त्रे॒धेव॑शिक्षतं । त्रिर्ना॒न्द्यं॑वहतमश्विनायुवं॒त्रिःपृक्षो॑ऽअ॒स्मेऽअ॒क्षरे॑वपिन्वतं ॥ त्रिर्नो॑र॒यिंव॑हतमश्विनायुवं॒त्रिर्दे॒वता॑ता॒त्रिरु॒ताव॑तं॒धियः॑ । त्रिःसौ॑भग॒त्वंत्रिरु॒तश्रवां॑सिनस्त्रि॒ष्ठंवां॒सूरे॑दुहि॒तारु॑ह॒द्रथं॑ ॥ त्रिर्नो॑ऽअश्विनादि॒व्यानि॑भेष॒जात्रिःपार्थि॑वानि॒त्रिरु॑दत्तम॒द्भ्यः । ओमानं॑शं॒योर्मम॑कायसूनवे॒त्रिधातु॒शर्म॑वहतंशुभस्पती ॥ ४ ॥ त्रिर्नो॑ऽअश्विनाय॒जता॒दि॒वेदि॑वे॒परि॒त्रिधातु॑पृथि॒वीम॑शायतं । ति॒स्रोना॑सत्यारथ्यापरा॒वतऽआ॒त्मेव॒वातः॒स्वस॑राणिगच्छतं ॥ त्रिर॑श्विना॒सिंधु॑भिःस॒प्तमा॑तृभि॒स्त्रयऽआहा॒वास्त्रे॒धाह॒विष्कृ॒तं । ति॒स्रःपृ॑थि॒वीरु॒परि॒प्रवा॒दि॒वोनाकं॑रक्षेथे॒द्युभिर॒क्तुभि॒र्हि॑तं॑ ॥ क्व१त्रीच॒क्रात्रि॒वृतो॒रथ॑स्य॒क्व१त्रयो॑व॒न्धुरो॒येसनी॑ळाः । कु॒दायोगो॑वा॒जिनो॒रास॑भस्य॒येन॑य॒ज्ञंना॑सत्योपया॒थः॑ ॥ आना॑सत्या॒गच्छ॑तंहू॒यते॑ह॒विर्मध्वः॑पिवतंमधु॒पेभि॑रा॒सभिः । यु॒वोर्हि॒पूर्व॑सवि॒तोषसो॒रथ॑मृ॒ताय॑चि॒त्रंघृ॒तव॑न्त॒मि



( १।७।४ ) त्रिश्चिदिति द्वादशर्चस्य सूक्तस्यांगिरसो हिरण्यस्तूप अश्विनौ जगती नवम्यंत्ये त्रिष्टुभौ ।

ष्यंति ॥ आनासत्यात्रिभिरेकादशैरिहदेवेभिर्यातंमधुपेयमश्विना । प्रायुस्तारिष्टंनीरपांसिमृक्षतंसेधतंद्वेषोभवतंसचाभुवा ॥ आनोऽअश्विनात्रिवृतारथेनार्वाचंरयिंवहतंसुवीरं । शृण्वंतावामवसेजोहवीमिवृधेचनोभवतंवाजसातौ ॥५॥ (१७१५) ह्वयाम्यग्निंप्रथमंस्वस्तयेह्वयामिमित्रावरुणाविहावसे । ह्वयामिरात्रींजगतोनिवेशनींह्वयामिदेवंसवितारमूतये ॥ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ यातिदेवःप्रवतायात्युद्वतायातिशुभ्राभ्यांयजतोहरिभ्यां । आदेवोयातिसवितापरावतोपविश्वादुरिताबाधमानः ॥ अभीवृतंकृशनैर्विश्वरूपंहिरण्यशम्यंयजतोबृहंतं । आस्थाद्रथंसविताचित्रभानुःकृष्णारजांसितविषींदधानः ॥ विजनांछ्यावाःशितिपादोऽअख्यन्रथंहिरण्यप्रउगंवहंतः । शश्वद्विशःसवितुर्दैव्यस्योपस्थेविश्वाभुवनानितस्थुः ॥ तिस्रोद्यावःसवितुर्द्वाऽउपस्थाँऽएकायमस्यभुवनेविराषाट् । आणिंनरथ्यममृताधितस्थुरिहब्रवीतुयऽउतच्चिकेतत् ॥ ६ ॥ विसुपर्णोऽअंतरिक्षाण्यख्यद्गभीरवेपाऽअसुरःसुनीथः । क्वेदानींसूर्यःकश्चिकेतकतमांद्यांरश्मिरस्याततान ॥ अष्टौव्यख्यत्ककुभःपृथिव्यास्त्रीधन्वयोजनासप्तसिंधून् । हिरण्याक्षःसविता‌देवऽआगाद्दधद्रत्नादाशुषेवार्याणि ॥

---

(१७१५) ह्वयामीत्येकादशर्चस्यसूक्तस्यांगिरसोहिरण्यस्तूपःसविता त्रिष्टुप् । आद्यायाश्चतुर्षुपादेषुक्रमेणाग्निमित्रावरुणरात्रिसवितारोदेवताःआद्यानवम्यौजगत्यौ ।

हिरण्यपाणिःसविताविचर्षणिरुभेद्यावापृथिवीऽअंतरीयते । अपामीवांबाधतेवेतिसूर्यमभिकृष्णेनरजसाद्यामृणोति ॥ हिरण्यहस्तोअसुरःसुनीथःसुमृळीकःस्ववांयात्वर्वाङ् । अपसेधन्रक्षसोयातुधानानस्थाद्देवःप्रतिदोषंगृणानः+ ॥ येतेपंथाःसवितःपूर्व्यासोरेणवःसुकृताऽअंतरिक्षे ॥ तेभिर्नोऽअद्यपथिभिःसुगेभीरक्षाचनोऽअधिचब्रूहिदेव ॥७॥ (१।८।१) प्रवोयह्वंपुरूणांविशांदेवयतीनां । अग्निंसूक्तेभिर्वचोभिरीमहेयंसीमिदन्यईळते ॥ जनासोऽअग्निंदधिरेसहोवृधंहविष्मंतोविधेमते । सत्वंनोऽअद्यसुमनाऽइहाविताभवावाजेषुसंत्य ॥ प्रत्वादूतंवृणीमहेहोतारंविश्ववेदसं । महस्तेसतोविचरंत्यर्चयोदिविस्पृशंतिभानवः ॥ देवासस्त्वावरुणोमित्रोऽअर्यमासंदूतंप्रत्नमिंधते । विश्वंसोऽअग्नेजयतित्वयाधनंयस्तेददाशमर्त्यः ॥ मंद्रोहोतागृहपतिरग्नेदूतोविशामसि । त्वेविश्वासंगतानिव्रताध्रुवायानिदेवाऽअकृण्वत ॥ ८ ॥ त्वेऽइदग्नेसुभगेयविष्ठ्यविश्वमाहूयतेहविः । सत्वंनोऽअद्यसुमनाऽउतापरंयक्षिदेवान्त्सुवीर्या ॥ तंघेमित्थानमस्विनऽउपस्वराजमासते । होत्राभिरग्निंमनुषःसमिंधतेतितिर्वांसोऽअतिस्रिधः ॥ घ्नंतोवृत्रमतरन्रोदसीऽअपऽउरुक्षयायचक्रिरे । भुवत्कण्वेवृषाद्युम्न्याहुतःक्रंददश्वोगविष्टिषु ॥ संसीदस्वमहाँऽअसिशोचस्वदेववीतमः ॥ विधूममग्नेऽअरुषंमियेध्यसृजप्रशस्तदर्शतं+ ॥ यंत्वादेवासोमनवेदधुरिहयजिष्ठंहव्यवाहन । यंकण्वोमेध्यातिथिर्धनस्पृतंयंवृषायमुपस्तुतः+ ॥९॥



(१।८।१) प्रवोयह्वमितिविंशत्यचस्यसूक्तस्यघौरःकण्वोग्निःऊर्ध्वऊषुणइतिद्वयोर्यूपःप्रगाथः (अयुजोबृहत्यःयुजःसतोबृहत्यइत्यर्थः)

यमग्निंमेध्यातिथिःकण्वईधऽऋतादधि ॥ तस्यप्रेषोदीदियुस्तमिमाऽऋचस्तमग्निंवर्धयामसि ॥ रायस्पूर्धिस्वधावो
स्तिहितेग्नेदेवेष्वाप्यं ॥ त्वंवाजस्यश्रुत्यस्यराजसिसनोमृळमहाँऽअसि ॥ ऊर्ध्वऽऊषुणऽऊतयेतिष्ठादेवोनसविता ।
ऊर्ध्वोवाजस्यसनितायदंजिभिर्वाघद्भिर्विह्वयामहे ॥ ऊर्ध्वोनःपाह्यंहसोनिकेतुनाविश्वंसमत्रिणंदह । कृधीनऽऊर्ध्वा
चरथायजीवसेविदादेवेषुनोदुवः ॥ पाहिनोऽअग्नेरक्षसःपाहिधूर्तेरराव्णः । पाहिरीषतऽउतवाजिघांसतोबृहद्भानो
यविष्ठ्य ॥ १० ॥ घनेवविष्वग्विजह्यराव्णस्तपुर्जंभयोऽअस्मध्रुक् । योमर्त्यःशिशीतेऽअत्यक्तुभिर्मानःसरिपुरीशत ॥
अग्निर्वव्नेसुवीर्यमग्निःकण्वायसौभगं । अग्निःप्रावन्मित्रोतमेध्यातिथिमग्निःसाताऽउपस्तुतं ॥ अग्निनातुर्वशंयदुं
परावतऽउग्रादेवंहवामहे ॥ अग्निर्नयन्नववास्त्वंबृहद्रथंतुर्वीतिंदस्यवेसहः ॥ नित्वामग्नेमनुर्दधेज्योतिर्जनायशश्व
ते ॥ दीदेथकण्वऽऋतजातऽउक्षितोयन्नमस्यंतिकृष्टयः ॥ त्वेषासोऽअग्नेरमवंतोऽअर्चयोभीमासोनप्रतीतये ॥ रक्षस्वि
नःसदमिद्यातुमावतोविश्वंसमत्रिणंदह ॥ ११ ॥ ( १।८।२ ) क्रीळंवःशर्धोमारुतमनर्वाणंरथेशुभं । कण्वाऽअभिप्र
गायत ॥ येपृषतीभिर्ऋष्टिभिःसाकंवाशीभिरंजिभिः । अजायंतस्वभानवः ॥ इहेवशृण्वऽएषांकशाहस्तेषुयद्वदान् ।
नियामन्चित्रमृंजते ॥ प्रवःशर्धायघृष्वयेत्वेषद्युम्नायशुष्मिणे । देवत्तंब्रह्मगायत ॥ प्रशंसागोष्वघ्न्यंक्रीळंयच्छर्धोमारुतं ।

---

(१।८।२) क्रीळंवइतिपंचदशर्चस्यसूक्तस्यघौरःकण्वोमरुतोगायत्री ।

जंभेरसंस्यवावृधे ॥ १२ ॥ कोवोवर्षिष्ठऽआनरोदिवश्चग्मश्चधूतयः । यत्सीमंतंनधूनुथ ॥ निवोयामायमानुषोदध्रऽउग्रायमन्यवे । जिहीतपर्वतोगिरिः ॥ येषामज्मेषुपृथिवीजुजुर्वाँऽइवविश्पतिः ॥ भियायामेषुरेजते । स्थिरंहिजानमेषांवयोमातुर्निरेतवे । यत्सीमनुद्विताशवः ॥ उदुत्येसूनवोगिरःकाष्ठाऽअज्मेष्वलत । वाश्राऽअभिज्ञुयातवे ॥ १३ ॥ त्यंचिद्धादीर्घंपृथुंमिहोनपातममृध्रं । प्रच्यावयंतियामभिः ॥ मरुतोयद्धवोबलंजनाँऽअचुच्यवीतन । गिरीँरचुच्यवीतन ॥ यद्धयांतिमरुतःसंहब्रुवतेध्वन्ना ॥ शृणोतिकश्चिदेषां ॥ प्रयातशीभमाशुभिःसंतिकण्वेषुवोदुवः ॥ तत्रोषुमादयाध्वै ॥ अस्तिहिष्मामदायवःस्मसिष्मावयमेषां । विश्वंचिदायुर्जीवसे ॥ १४ ॥ (१।८।३) कद्धनूनंकधप्रियःपितापुत्रंनहस्तयोः । दधिध्वेवृक्तबर्हिषः ॥ क्वनूनंकद्वोऽअर्थंगंतादिवोनपृथिव्याः । क्ववोगावोनरण्यंति ॥ क्ववःसुम्नानव्यांसिमरुतःक्वसुविता । क्वो३विश्वानिसौभगा ॥ यद्यूयंपृश्निमातरोमर्तासःस्यातन । स्तोतावोऽअमृतःस्यात् ॥ मावोमृगोनयवसेजरिताभूदजोष्यः । पथायमस्यगादुप ॥ १५ ॥ मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् । पदीष्टतृष्णयासह ॥ सत्यंत्वेषाऽअमवंतोधन्वन्चिदारुद्रियासः । मिहंकृण्वंत्यवातां ॥ वाश्रेवविद्युन्मिमातिवत्संनमातासिषक्ति । यदेषांवृष्टिरसर्जि ॥ दिवाचित्तमःकृण्वंतिपर्जन्येनोदवाहेन । यत्पृथिवींव्युंदंति ॥ अधस्वनान्मरुतांविश्वमासद्मपार्थिवं ।



( १।८।३ ) कद्धनूनमितिपंचदशर्चस्यसूक्तस्यघौरःकण्वोमरुतोगायत्री ।

अरेंजंतप्रमानुषाः ॥ १६ ॥ मरुतोवीळुपाणिभिश्चित्रारोधस्वतीरनु । यातेमखिद्रयामभिः ॥ स्थिरावःसंतुनेमयोरथाऽअश्वासऽएषां । सुसंस्कृताऽअभीशवः ॥ अच्छावदातनागिराजरायैब्रह्मणस्पतिं । अग्निंमित्रंनदर्शतं+ ॥ मिमीहिश्लोकमास्येपर्जन्यऽइवततनः । गायगायत्रमुक्थ्यं* ॥ वंदस्वमारुतंगणंत्वेषंपनस्युमर्किणं । अस्मेवृद्धाऽअसन्निह+ ॥ १७ ॥ ( १।८।४ ) प्रयदित्थापरावतःशोचिर्नमानमस्यथ । कस्यक्रत्वामरुतःकस्यवर्पसाकंयाथकंहधूतयः ॥ स्थिरावःसंत्वायुधापराणुदेवीळूऽउतप्रतिष्कभे । युष्माकमस्तुतविषीपनीयसीमामर्त्यस्यमायिनः ॥ पराहयत्स्थिरंहथनरोवर्तयथागुरु । वियाथनवनिनःपृथिव्याव्याशाःपर्वतानां ॥ नहिवःशत्रुर्विविदेऽअधिद्यविनभूम्यांरिशादसः । युष्माकमस्तुतविषीतनायुजारुद्रासोनूचिदाधृषे ॥ प्रवेपयंतिपर्वतान्विविंचंतिवनस्पतीन् । प्रोऽआरतमरुतोदुर्मदाऽइवदेवासःसर्वयाविशा+ ॥ १८ ॥ उपोरथेषुपृषतीरयुग्ध्वंप्रष्टिर्वहतिरोहितः । आवोयामायपृथिवीचिदश्रोदबीभयंतमानुषाः ॥ आवोमक्षूतनायकंरुद्राऽअवोवृणीमहे । गंतानूनंनोवसायथापुरेत्थाकण्वायबिभ्युषे ॥ युष्मेषितोमरुतोमर्त्येषितऽआयोनोऽअभ्वऽईषते । वितंयुयोतशवसाव्योजसावियुष्माकाभिरूतिभिः ॥ असामिहिप्रयज्यवःकण्वंददप्रचेतसः । असामिभिर्मरुतऽआनऽऊतिभिर्गंतावृष्टिंनविद्युतः ॥ असाम्योजोबिभृथासुदानवोसामिधूतयःशवः ।

---

( १।८।४ ) प्रयदित्थेतिदशर्चस्यसूक्तस्यघौरःकण्वोमरुतोबार्हतप्रगाथः ( अयुजोबृहत्यःयुजःसतोबृहत्यः ) ।

ऋक्सं. मंडलं १

अ.१अ.३ अनु. ८

॥ २० ॥

ऋषिद्विषेमरुतःपरिमन्यवइषुंनसृजतद्विषं ॥ १९ ॥ ( १।८।५ ) उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे । उपप्रयंतुमरुतःसुदानवऽइंद्रप्राशूर्भवासचा । त्वामिद्धिसहसस्पुत्रमर्त्यऽउपब्रूतेधनेहिते । सुवीर्यंमरुतऽआस्वश्व्यंदधीतयोवऽआचके+ ॥ प्रैतुब्रह्मणस्पतिःप्रदेव्येतुसूनृता । अच्छावीरंनर्यंपंक्तिराधसंदेवायज्ञंनयंतुनः ॥ योवाघतेददातिसूनरंवसुसधत्तेऽअक्षितिश्रवः । तस्माऽइळांसुवीरामायजामहेसुप्रतूर्तिमनेहसं ॥ प्रनूनंब्रह्मणस्पतिर्मंत्रंवदत्युक्थ्यं । यस्मिन्निंद्रोवरुणोमित्रोऽअर्यमादेवाऽओकांसिचक्रिरे+ ॥ २० ॥ तमिद्वोचेमाविदथेषुशंभुवंमंत्रंदेवाऽअनेहसं । इमांचवाचंप्रतिहर्यथानरोविश्वेद्वामावोऽअश्नवत् ॥ कोदेवयंतमश्नवज्जनंकोवृक्तबर्हिषं । प्रप्रदाश्वान्पस्त्याभिरस्थितांतर्वावत्क्षयंदधे ॥ उपक्षत्रंपृंचीतहंतिराजभिर्भयेचित्सुक्षितिंदधे । नास्यवर्तानतरुतामहाधनेनार्भेऽअस्तिवज्रिणः ॥ २१ ॥ ( १।८।६ ) यंरक्षंतिप्रचेतसोवरुणोमित्रोऽअर्यमा । नूचित्सदभ्यतेजनः ॥ यंबाहुतेवपिप्रतिपांतिमर्त्यंरिषः । अरिष्टःसर्वऽएधते ॥ विदुर्गाविद्विषःपुरोघ्नंतिराजानऽएषां । नयंतिदुरितातिरः+ ॥ सुगःपंथाऽअनृक्षरऽआदित्यासऽऋतंयते । नात्रावखादोऽअस्तिवः ॥ यंयज्ञंनयथानरऽआदित्याऽऋजुनापथा । प्रवःसधीतयेनशत् ॥ २२ ॥ सरत्नंमर्त्योवसु

॥ २० ॥

---

( १।८।५ ) उत्तिष्ठेत्यष्टर्चस्यसूक्तस्यघौरःकण्वोब्रह्मणस्पतिःप्रगाथः (अयुजोबृहत्यःयुजःसतोबृहत्यः) । ( १।८।६ ) यंरक्षन्तीतिनवर्चस्यसूक्तस्यघौरःकण्वःआद्यानांतिसृणामंत्यानांतिसृणांचवरुणमित्रार्यमणस्तृतीयादितिसृणामादित्यागायत्री ।

विश्वंतोकमुतत्मना ॥ अच्छागच्छत्यस्तृतः ॥ कुथाराधामसखायःस्तोमंमित्रस्यार्यम्णः । महिप्सरोवरुणस्य ॥ मावो घ्नंतंमाशपंतंप्रतिवोचेदेवयंतं । सुम्नैरिद्वऽआविवासे ॥ चतुरश्चिद्ददमानाद्बिभीयादानिधातोः । नदुरुक्तायस्पृहये त् ॥ २३ ॥ ( १।८।७ ) संपूषन्नध्वनस्तिरव्यंहोविमुचोनपात् । सक्ष्वादेवप्रणस्पुरः+ ॥ योनःपूषन्नघोवृकोदुःशेवऽ आदिदेशति । अपस्मतंपथोजहि ॥ अपत्यंपरिपंथिनंमुषीवाणंहुरश्चितं । दूरमधिस्रुतेरज ॥ त्वंतस्यद्वयाविनोघशंस स्यकस्यचित् । पदाभितिष्ठतपुषिं ॥ आतत्तेदस्रमंतुमःपूषन्नवोवृणीमहे । येनपितृनचोदयः ॥ २४ ॥ अधानोविश्व सौभगहिरण्यवाशीमत्तम । धनानिसुषणाकृधि ॥ अतिनःसश्चतोनयसुगानःसुपथाकृणु । पूषन्निहक्रतुंविदः ॥ अ भिसूयवसंनयननवज्वारोऽअध्वने । पूषन्निहक्रतुं० ॥ शग्धिपूर्धिप्रयंसिचशिशीहिप्रास्युदरं । पूषन्निहक्रतुं० ॥ नपूषणंमेथामसिसूक्तैरभिगृणीमसि । वसूनिदस्ममीमहे ॥ २५ ॥ ( १।८।८ ) कद्रुद्रायप्रचेतसेमीळ्हुष्टमायतव्यसे । वोचेमशंतमंहृदे+ ॥ यथानोऽअदितिःकरत्पश्वेनृभ्योयथागवे । यथातोकायरुद्रियं ॥ यथानोमित्रोवरुणोयथारुद्र श्चिकेतति । यथाविश्वेसजोषसः ॥ गाथपतिंमेधपतिंरुद्रंजलाषभेषजं । तच्छंयोःसुम्नमीमहे ॥ यःशुक्रऽइवसूर्योहि

---

( १।८।७ ) संपूषन्नितिदशर्चस्यसूक्तस्यघौरःकण्वःपूषागायत्री । ( १।८।८ ) कद्रुद्रायेतिनवर्चस्यसूक्तस्यघौरःकण्वोरुद्रस्तृती यायामित्रावरुणौचसप्तम्यादितृचस्यसोमोगायत्र्यन्त्यानुष्टुप् ।

रण्यमिवरोचते । श्रेष्ठोदेवानांवसुः ॥ २६ ॥ शंनःकरत्यर्वतेसुगंमेषायमेष्ये । नृभ्योनारिभ्योगवे ॥ अस्मेसोमश्रिय
मधिनिधेहिशतस्यनृणां । महिश्रवस्तुविनृम्णं ॥ मानःसोमपरिबाधोमारातयोजुहुरंत । आनऽइंदोवाजेभज ॥
यास्तेप्रजाऽअमृतस्यपरस्मिन्धामन्नृतस्य । मूर्धानाभासोमवेनऽआभूषंतीःसोमवेदः ॥ २७ ॥ ( १।९।१ ) अग्नेविव
स्वदुषसश्चित्रंराधोऽअमर्त्य । आदाशुषेजातवेदोवहात्वमद्यादेवाँऽउषर्बुधः ॥ जुष्टोहिदूतोऽअसिहव्यवाहनोग्नेरथीर
ध्वराणां । सजूरश्विभ्यामुषसासुवीर्यमस्मेधेहिश्रवोबृहत् ॥ अद्यादूतंवृणीमहेवसुमग्निंपुरुप्रियं । धूमकेतुंभाऽऋजीकं
व्युष्टिषुयज्ञानामध्वरश्रियं ॥ श्रेष्ठंयविष्ठमतिथिंस्वाहुतंजुष्टंजनायदाशुषे । देवाँऽअच्छायातवेजातवेदसमग्निमीळेव्यु
ष्टिषु ॥ स्तविष्यामित्वामहंविश्वस्यामृतभोजन । अग्नेत्रातारममृतंमियेध्ययजिष्ठंहव्यवाहन ॥ २८ ॥ सुशंसोबोधि
गृणतेयविष्ठ्यमधुजिह्वःस्वाहुतः । प्रस्कण्वस्यप्रतिरन्नायुर्जीवसेनमस्यादैव्यंजनं ॥ होतारंविश्ववेदसंसंहित्वाविशऽ
इंधते । सऽआवहपुरुहूतप्रचेतसोग्नेदेवाँऽइहद्रवत् ॥ सवितारमुषसमश्विनाभगमग्निंव्युष्टिषुक्षपः । कण्वासस्त्वासु
तसोमासऽइंधतेहव्यवाहंस्वध्वर ॥ पतिर्ह्यध्वराणामग्नेदूतोविशामसि ।उषर्बुधऽआवहसोमपीतयेदेवाँऽअद्यस्वर्दृशः॥
अग्नेपूर्वाऽअनूषसोविभावसोदीदेथविश्वदर्शतः । असिग्रामेष्ववितापुरोहितोसियज्ञेषुमानुषः ॥ २९ ॥ नित्वायज्ञस्य





( १।९।१ ) अग्नेविवस्वदितिचतुर्दशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वोग्निरग्निरश्व्युषश्चप्रगाथः ( अयुजोबृहत्यःयुजःसतोबृहत्यः )

साधनमग्नेहोतारमृत्विजं । मनुष्वद्देवधीमहिप्रचेतसंजीरंदूतमर्मत्यं ॥ यद्देवानांमित्रमहःपुरोहितोंतरोयासिदूत्यं । सिंधोरिवप्रस्वनितासऽऊर्मयोग्नेर्भ्राजंतेऽअर्चयः ॥ श्रुधिश्रुत्कर्णवह्निभिर्देवैरग्नेसयावभिः । आसीदंतुबर्हिषिमित्रोऽअर्यमाप्रातर्यावाणोऽअध्वरं+ ॥ शृण्वंतुस्तोमंमरुतःसुदानवोग्निजिह्वाऽऋतावृधः । पिबंतुसोमंवरुणोधृतव्रतोश्विभ्यामुषसासजूः+ ॥ ३० ॥ ( १।९।२ ) त्वमग्नेवसूँऽरिहरुद्राँऽआदित्याँऽउत । यजास्वध्वरंजनंमनुजातंघृतप्रुषं ॥ श्रुष्टीवानोहिदाशुषेदेवाऽअग्नेविचेतसः । तान्रोहिदश्वगिर्वणस्त्रयस्त्रिंशतमावह ॥ प्रियमेधवदत्रिवज्जातवेदोविरूपवत् । अंगिरस्वन्महिव्रतप्रस्कण्वस्यश्रुधीहवं ॥ महिकेरवऽऊतयेप्रियमेधाऽअहूषत । राजंतमध्वराणामग्निंशुक्रेणशोचिषा ॥ घृताहवनसंत्येमाऽउषुश्रुधीगिरः । याभिःकण्वस्यसूनवोहवंतेवसेत्वा ॥ ३१ ॥ त्वांचित्रश्रवस्तमहवंतेविक्षुजंतवः । शोचिष्केशंपुरुप्रियाग्नेहव्यायवोढवे ॥ नित्वाहोतारमृत्विजंदधिरेवसुवित्तमं । श्रुत्कर्णंसप्रथस्तमंविप्राऽअग्नेदिविष्टिषु ॥ आत्वाविप्राऽअचुच्यवुःसुतसोमाऽअभिप्रयः । बृहद्भाबिभ्रतोहविरग्नेमर्तायदाशुषे ॥ प्रातर्याव्णःसहस्कृतसोमपेयायसंत्य । इहाद्यदैव्यंजनंबर्हिरासादयावसो ॥ अर्वाचंदैव्यंजनमग्नेयक्ष्वसहूतिभिः । अयंसोमःसुदान

---

( १।९।२ ) त्वमग्नेवसूनितिदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वोग्निरन्त्यायादेवाश्चानुष्टुप् ।

वस्तंपांततिरोऽअंह्यम् ॥ ३२ ॥ ( १।९।३ ) एषोऽउषाऽअपूर्व्याव्युंच्छतिप्रियादिवः । स्तुषेवामश्विनाबृहत्⁺ ॥ यादस्रासिंधुंमातरामनोतरारयीणां । धियादेवावसुविदा ॥ वच्यंतेवांककुहासोजूर्णायामधिविष्टपि । यद्वांरथोवि भिष्पतात् ॥ हविषांजारोऽअपांपिपर्तिपपुरिर्नरा । पिताकुटस्यचर्षणिः⁺ ॥ आदारोवांमतीनांनासत्यामतवचसा । पातंसोमस्यधृष्णुया⁺ ॥ ३३ ॥ यानःपीपरदश्विनाज्योतिष्मतीतमस्तिरः । तामस्मेरासाथामिषं ॥ आनोनावाम तीनांयातंपारायगंतवे । युंजाथामश्विनारथं ॥ अरित्रंवांदिवस्पृथुतीर्थेसिंधूनांरथः । धियायुयुज्रऽइंदवः ॥ दिवस्क ण्वासऽइंदवोवसुसिंधूनांपदे । स्वंवव्रिंकुहधित्सथः ॥ अभूदुभाऽउऽअंशवेहिरण्यंप्रतिसूर्यः । व्यख्यज्जिह्वयासितः ॥ ३४ ॥ अभूदुपारमेतवेपंथाऽऋतस्यसाधुया । अदर्शिविस्रुतिर्दिवः⁺ ॥ तत्तदिदश्विनोरवोजरिताप्रतिभूषति । मदेसोमस्यपिप्रतोः ॥ वावसानाविवस्वतिसोमस्यपीत्यागिरा । मनुष्वच्छंभूऽआगतं ॥ युवोरुषाऽअनुश्रियंपरिज्मनो रुपाचरत् । ऋतावनथोऽअक्तुभिः ॥ उभापिबतमश्विनोभानःशर्मयच्छतं । अविद्रियाभिरूतिभिः ॥ ३५ ॥ इतिप्रथमा ष्टकेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥



---

( १।९।३ ) एषोउषाइतिपंचदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वोश्विनौगायत्री ।

तृतीयाध्याये वर्गाः ३५ सूक्तानि १४ ऋचः १७३ ॥ त्यागः ॥ इंद्रायेदं.१५ अश्विभ्यामिदं.१२ अग्निमित्रावरुणरात्रिसवितृभ्यइदं.१ सवित्रइदं.१० अग्नयइदं.१२ यूपायेदं.२ अग्नयइदं.६ मरुद्भ्यइदं.४० ब्रह्मणस्पतयइदं.८ वरुणमित्रार्यमभ्यइदं.३ आदित्येभ्यइदं.३ वरुण-मित्रार्यमभ्यइदं.३ पूष्णइदं.१० रुद्रायेदं.२ मित्रावरुणरुद्रेभ्यइदं. रुद्रायेदं.३ सोमायेदं.३ अग्न्यश्व्युषोभ्यइदं.२ अग्नयइदं.२१ अग्निदेवे-भ्यइदं. अश्विभ्यामिदं.१५ ॥ इतिप्रथमेतृतीयोऽध्यायः ॥

अयंदशप्रागाथंतुसहषोळशोषस्यंतूषश्चतुष्कमानुष्टुभंतूदुत्यंसप्तोनासौर्यैनवाद्यागायत्र्यौत्यस्तृचोरोगघ्नंउपनिष दंत्योर्धर्चोद्विषघ्नोऽभित्यंपंचोनासव्योद्वित्रिष्टुवंतंमंगिराइंद्रतुल्यंपुत्रमिच्छंन्नभ्यध्यायत्सव्यइतींद्रएवास्यपुत्रो जायतंत्यंसुत्रयोदश्यंत्येत्रिष्टुभौन्यूष्वेकादशांत्येत्रिष्टुभौमानोत्यात्रिष्टुप्षष्ठ्यष्टमीनवमीचंदिवश्चिदष्टौजागतंह्य षप्रषट्प्रमंहिष्ठायंनूचिन्नवनोधागौतमआग्नेयंहिचतुस्त्रिष्टुवंतंवयाइत्सप्तवैश्वानरीयंवह्निंपंचास्माइदुषोळश ॥४॥

हरिः ॐ३म् ॥ ( १ । ९ । ४ ) अ॒यंवां॒मधु॑मत्तमः सु॒तः सोम॑ऽऋतावृधा । तम॑श्विनापिबतंति॒रोऽअ॑ह्न्यंध॒त्तंरत्ना॑नि दा॒शुषे॑ ॥ त्रि॒वं॒धु॒रेण॑त्रि॒वृता॑सु॒पेश॑सा॒रथे॒नायातमश्विना । कण्वा॑सोवां॒ब्रह्म॑कृण्वंत्यध्व॒रेतेषां॒सुशृ॑णुतं॒हवं॑ ॥ अश्वि॑ना॒म धु॑मत्तमंपा॒तंसोम॑मृतावृधा । अथा॒द्यद॑स्रा॒वसु॒बिभ्र॑ता॒रथे॑दा॒श्वांस॒मुप॑गच्छतं ॥ त्रि॒ष॒ध॒स्थे॒ब॒र्हिषि॑विश्ववेद॒सामध्वा॑य॒ज्ञं

(१।९।४) अयंवामितिदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वोश्विनौप्रगाथः (अयुजोबृहत्योयुजः सतोबृहत्यः) ।

ऋक्सं. अ.१अ.४ ॥ २३ ॥

मिमिक्षतं । कण्वासोवांसुतसोमाऽअभिद्यवोयुवांहवंतेऽअश्विना ॥ याभिःकण्वमभिष्टिभिःप्रावतंयुवमश्विना । ताभिःष्व१स्माँऽअवतंशुभस्पतीपातंसोममृतावृधा ॥ १ ॥ सुदासेदस्रावसुबिभ्रतारथेपृक्षोवहतमश्विना । रयिंसमुद्रादुतवादिवस्पर्यस्मेधत्तंपुरुस्पृहं ॥ यन्नासत्यापरावतियद्वास्थोऽअधितुर्वशे । अतोरथेनसुवृताऽनऽआगतंसाकंसूर्यस्यरश्मिभिः ॥ अर्वाचावांसप्तयोध्वरश्रियोवहंतुसवनेदुप । इषंपृंचंतासुकृतेसुदानवऽआबर्हिःसीदतंनरा ॥ तेननासत्यागतंरथेनसूर्यत्वचा । येनशश्वदूहथुर्दाशुषेवसुमध्वःसोमस्यपीतये ॥ उक्थेभिरर्वागवसेपुरूवसूऽअर्कैश्चनिह्वयामहे । शश्वत्कण्वानांसदसिप्रियेहिकंसोमंपपथुरश्विना ॥ २ ॥ ( १।९।५ ) सहवामेननऽउषोव्युच्छादुहितर्दिवः । सहद्युम्नेनबृहताविभावरिरायादेविदास्वती ॥ अश्वावतीर्गोमतीर्विश्वसुविदोभूरिच्यवंतवस्तवे । उदीरयप्रतिमासूनृताऽउषश्चोदराधोमघोनां ॥ उवासोषाऽउच्छाच्चनुदेवीजीरारथानां । येऽअस्याऽआचरणेषुदध्रिरेसमुद्रेनश्रवस्यवः ॥ उषोयेतेप्रयामेषुयुंजतेमनोदानायसूरयः । अत्राहतत्कण्वऽएषांकण्वतमोनामगृणातिनृणां ॥ आघायोषेवसूनर्युषायातिप्रभुंजती । जरयंतीवृजनंपद्वदीयतऽउत्पातयतिपक्षिणः ॥ ३ ॥ वियासृजतिसमनंव्य१र्थिनःपदंनवेत्योदती । वयोनकिष्टेपप्तिवांसऽआसतेव्युष्टौवाजिनीवति ॥ एषायुक्तपरावतःसूर्यस्योदयनादधि । शतंरथेभिःसुभगोषाऽइयंविया

मंडलं १ अनु. ९ ॥ २३ ॥



(१।९।५) सहवामेनेतिषोळशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वउषाःप्रगाथः( अयुजोबृहत्योयुजःसतोबृहत्यः ) ।

त्यभिमानुषान् ॥ विश्वमस्यानानामचक्षसेजगज्ज्योतिष्कृणोतिसूनरी । अपद्वेषोमघोनीदुहितादिवऽउषाऽउच्छदप
स्त्रिधः ॥ उषऽआभाहिभानुनाचंद्रेणदुहितर्दिवः । आवहंतीभूर्यस्मभ्यंसौभगंव्युच्छंतीदिविष्टिषु ॥ विश्वस्यहिप्राण
नंजीवनंत्वेवियदुच्छसिसूनरि । सानोरथेनबृहताविभावरिश्रुधिचित्रामघेहवं ॥ ४ ॥ उषोवाजंहिवंस्वयश्चित्रोमानु
षेजने । तेनावहसुकृतोऽअध्वराँऽउपयेत्वागृणंतिवह्नयः ॥ विश्वान्देवाँऽआवहसोमपीतयेंतरिक्षादुषस्त्वं । सास्मासु
धागोमदश्वावदुक्थ्य१मुषोवाजंसुवीर्यम् ॥ यस्यारुशंतोऽअर्चयःप्रतिभद्राऽअदृक्षत । सानोरयिंविश्ववारंसुपेशसमु
षाददातुसुग्म्यं ॥ येचिद्धित्वामृषयःपूर्वऽऊतयेजुहूरेवसेमहि । सानःस्तोमाँऽअभिगृणीहिराधसोषःशुक्रेणशोचिषा ॥
उषोयदद्यभानुनाविद्वारावृणवोदिवः । प्रनोयच्छतादवृकंपृथुच्छर्दिःप्रदेविगोमतीरिषः ॥ संनोरायाबृहताविश्वपेश
सामिमिक्ष्वासमिळाभिरा । संद्युम्नेनविश्वतुरोषोमहिसंवाजैर्वाजिनीवति ॥ ५ ॥ ( ११९१६ ) उषोभद्रेभिरागहिदि
वश्चिद्रोचनादधि । वहंत्वरुणप्सवऽउपत्वासोमिनोगृहं ॥ सुपेशसंसुखंरथंयमध्यस्थाऽउषस्त्वं । तेनासुश्रवसंजनंप्रा
वाद्यदुहितर्दिवः ॥ वयश्चित्तेपतत्रिणोद्विपच्चतुष्पदर्जुनि । उषःप्रारन्नृतूँरनुदिवोऽअंतेभ्यस्परि ॥ व्युच्छंतीहिरश्मि

---

( ११९१६ ) उषोभद्रेभिरितिचतुर्ऋचस्यसूक्तस्यकाण्वःप्रस्कण्वउषाअनुष्टुप् ।

ऋक्सं. अ.१अ.४ ॥ २४ ॥

मंडलं १ अनु.१०

भिर्विश्वमाभासिरोचनं । तांत्वामुषर्वसूयवोगीर्भिःकण्वाऽअहूषत ॥ ६ ॥ ( १।९।७ ) उदुत्यंजातवेदसंदेववंहंतिकेतवः । दृशेविश्वायसूर्यम् ॥ अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः । सूरायविश्वचक्षसे ॥ अदृश्रमस्यकेतवोविरश्मयोजनाँऽअनु । भ्राजंतोऽअग्नयोयथा ॥ तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य । विश्वमाभासिरोचनं ॥ प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ ७ ॥ येनापावकचक्षसाभुरण्यंतंजनाँऽअनु । त्वंवरुणपश्यसि ॥ विद्यामेषिरजस्पृथ्वहामिमानोऽअक्तुभिः । पश्यन्जन्मानिसूर्य ॥ सप्तत्वाहरितोरथेवहंतिदेवसूर्य । शोचिष्केशंविचक्षण ॥ अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः । ताभिर्यातिस्वयुक्तिभिः ॥ उद्वयंतमसस्परिज्योतिष्पश्यंतऽउत्तरं । देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उद्यन्नद्यमित्रमहऽआरोहन्नुत्तरांदिवं । हृद्रोगंममसूर्यहरिमाणंचनाशय ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि । अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ उदगादयमादित्योविश्वेनसहसासह । द्विषंतंमह्यंरंधयन्मोऽअहंद्विषतेरधं ॥ ८ ॥ ( १।१०।१ ) अभित्यंमेषंपुरुहूतमृग्मियमिंद्रंगीर्भिर्मदतावस्वोऽअर्णवं । यस्यद्यावोनविचरंतिमानुषाभुजेमंहिष्ठमभिविप्रमर्चत ॥ अभीमवन्वन्त्स्वभिष्टिमूतयोंतरिक्षप्रांतविषीभिरावृतं । इंद्रं

॥ २४ ॥

---

( १।९।७ ) उदुत्यमितित्रयोदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वःसूर्योगायत्रीअंत्याश्चतस्रोनुष्टुभः ( अंत्यस्तृचोरोगघ्नउपनिषदंत्योर्धर्चोद्विषघ्न इतिगुणः )।( १।१०।१ ) अभित्यमितिपंचदशर्चस्यसूक्तस्यआंगिरसःसव्यइंद्रोजगतीअंत्येद्वेत्रिष्टुभौ ।

दक्षासऽऋभवोमदच्युतंशतक्रतुंजवनीसूनृतारुहत् ॥ त्वंगोत्रमंगिरोभ्योवृणोरपोतात्रयेशतदुरेषुगातुवित् । ससेनचि
द्विमदायावहोवस्वाजावद्रिंवावसानस्यनर्तयन् ॥ त्वमपामपिधानावृणोरपाधारयःपर्वतेदानुमद्वसु । वृत्रंयदिंद्रशव
सावधीरहिमादित्सूर्यंदिव्यारोहयोदृशे ॥ त्वंमायाभिरपमायिनोधमःस्वधाभिर्येऽअधिशुप्तावजुह्वत । त्वंपिप्रोर्नृम
णःप्रारुजःपुरःप्रऽऋजिश्वानंदस्युहत्येष्वाविथ ॥ ९ ॥ त्वंकुत्संशुष्णहत्येष्वाविथारंधयोतिथिग्वायशंबरम् । महांतंचि
दर्बुदंनिक्रमीःपदासनादेवदस्युहत्यायजज्ञिषे ॥ त्वेविश्वातविषीसध्र्यग्घितातवराधःसोमपीथायहर्षते । तववज्रश्चि
कितेबाह्वोर्हितोवृश्चाशत्रोरवविश्वानिवृष्ण्या ॥ विजानीह्यार्यान्येचदस्यवोबर्हिष्मतेरंधयाशासदव्रतान् । शाकीभव
यजमानस्यचोदिताविश्वेत्तातेसधमादेषुचाकन ॥ अनुव्रतायरंधयन्नपव्रतानाभूभिरिंद्रःश्नथयन्ननाभुवः । वृद्धस्य
चिद्वर्धतोद्यामिनक्षतःस्तवानोवम्रोविजघानसंदिहः ॥ तक्षद्यत्तऽउशनासहसासहोविरोदसीमज्मनाबाधतेशवः ।
आत्वावातस्यनृमणोमनोयुजऽआपूर्यमाणमवहन्नभिश्रवः ॥ १० ॥ मंदिष्टयदुशनेकाव्येसचाँऽइंद्रोवंकूवंकुतराधिति
ष्ठति । उग्रोययिंनिरपःस्रोतसासृजद्विशुष्णस्यदृंहिताऽऐरयत्पुरः ॥ आस्मारथंवृषपाणेषुतिष्ठसिशार्यातस्यप्रभृतायेषु
मंदसे । इंद्रयथासुतसोमेषुचाकनोनर्वाणंश्लोकमारोहसेदिवि ॥ अददाऽअर्भांमहतेवचस्यवेकक्षीवतेवृचयामिंद्रसु
न्वते । मेनाभवोवृषणश्वस्यसुक्रतोविश्वेत्तातेसवनेषुप्रवाच्या ॥ इंद्रोऽअश्रायिसुध्योनिरेकेपज्रेषुस्तोमोदुर्योनयूपः ।

ऋक्सं. अ.१अ.४ ॥ २५ ॥

मंडलं १ अनु. १०

अश्वयुर्गव्यूरंथयुर्वसूयुरिंद्रऽइंद्रायःक्षयतिप्रयंता ॥ इदंनमोवृषभायस्वराजेसत्यशुष्मायतवसेवाचि । अस्मिन्निंद्रवृजनेसर्ववीराःस्मत्सूरिभिस्तवशर्मन्त्स्याम ॥ ११ ॥ ( १।१०।२ ) त्वंसुमेषंमहयास्वर्विदंशतंयस्यसुभ्वःसाकमीरते । अत्यंनवाजंहवनस्यदंरथमेंद्रंववृत्यामवसेसुवृक्तिभिः ॥ सपर्वतोनधरुणेष्वच्युतःसहस्रमूतिस्तविषीषुवावृधे । इंद्रोयद्वृत्रमवधीन्नदीवृतमुब्जन्नर्णांसिजर्हृषाणोऽअंधसा ॥ सहिद्वरोद्वरिषुवव्रऽऊधनिचंद्रवुध्नोमदवृद्धोमनीषिभिः । इंद्रंतमह्वेस्वपस्ययाधियामंहिष्ठरातिंसहिपप्रिरंधसः ॥ आयंपृणंतिदिविसद्मबर्हिषःसमुद्रंनसुभ्वः१स्वाऽअभिष्टयः । तंवृत्रहत्येऽअनुतस्थुरूतयःशुष्माऽइंद्रमवाताऽअहुतप्सवः ॥ अभिस्ववृष्टिंमदेऽअस्ययुध्यतोरघ्वीरिवप्रवणेसस्रुरूतयः । इंद्रोयद्वज्रीधृषमाणोऽअंधसाभिनद्वलस्यपरिधींरिवत्रितः ॥ १२ ॥ परींघृणाचरतितित्विषेशवोपोवृत्वीरजसोवुध्नमाशयत् । वृत्रस्ययत्प्रवणेदुर्गृभिश्वनोनिजघंथहन्वोरिंद्रतन्यतुं ॥ ह्रदंनहित्वान्यृषंत्यूर्मयोब्रह्माणींद्रतवयानिवर्धना । त्वष्टाचित्तेयुज्यंवावृधेशवस्ततक्षवज्रमभिभूत्योजसं ॥ जघन्वाँऽउहरिभिःसंभृतक्रतविंद्रवृत्रंमनुषेगातुयन्नपः । अयच्छथावाह्वोर्वज्रमायसमधारयोदिव्यासूर्यंदृशे ॥ बृहत्स्वश्चंद्रममवद्यदुक्थ्य१मकृण्वतभियसारोहणंदिवः । यन्मानुषप्रधनाऽइंद्रमूतयःस्वर्नृषाचोमरुतोमदन्ननु ॥ द्यौश्चिदस्यामवाँऽअहेःस्वनादयोयवीद्भियसावज्रऽइंद्रते । वृत्रस्ययद्व

॥ २५ ॥

( १।१०।२ ) त्वंसुमेषमितिपंचदशर्चस्यसूक्तस्यांगिरसःसव्यइंद्रोजगतीत्रयोदश्यंत्येत्रिष्टुभौ ।

द्व धानस्यरोदसीमदेसुतस्यशवसाभिनच्छिरः ॥ १३ ॥ यदिन्विंद्रपृथिवीदशभुजिरहानिविश्वाततनंतकृष्टयः । अ
त्राहतेमघवन्विश्रुतंसहोद्यामनुशवसावर्हणाभुवत् ॥ त्वमस्यपारेरजसोव्योमनःस्वभूत्योजाऽअवसेधृषन्मनः । चकृषे
भूमिंप्रतिमानमोजसोपःस्वःपरिभूरेष्यादिवं ॥ त्वंभुवःप्रतिमानंपृथिव्याऽऋष्ववीरस्यबृहतःपतिर्भूः । विश्वमाप्राऽ
अंतरिक्षंमहित्वासत्यमद्धानकिरन्यस्त्वावान् ॥ नयस्यद्यावापृथिवीऽअनुव्यचोनसिंधवोरजसोऽअंतमानशुः । नोत
स्ववृष्टिंमदेऽअस्ययुध्यंतऽएकोऽअन्यच्चकृषेविश्वमानुषक् ॥ आर्चन्नत्रमरुतःसस्मिन्नाजौविश्वेदेवासोऽअमदन्ननुत्वा।
वृत्रस्ययद्भृष्टिमताविधेननित्वमिंद्रप्रत्यानंजघंथ ॥ १४ ॥ ( १।१०।३ ) न्यू३षुवाचंप्रमहेभरामहेगिरऽइंद्रायसदने
विवस्वतः । नूचिद्धिरत्नंससतामिवाविदन्नदुष्टुतिर्द्रविणोदेषुशस्यते ॥ दुरोऽअश्वस्यदुरऽइंद्रगोरसिदुरोयवस्यवसुनऽइ
नस्पतिः । शिक्षानरःप्रदिवोऽअकामकर्शनःसखासखिभ्यस्तमिदंगृणीमसि ॥ शचीवऽइंद्रपुरुकृद्द्युमत्तमतवेदिदमभि
तश्चेकितेवसु । अतःसंगृभ्याभिभूतऽआभरमात्वायतोजरितुःकाममूनयीः ॥ एभिर्द्युभिःसुमनाएभिरिंदुभिर्निरुंधा
नोऽअमतिंगोभिरश्विना । इंद्रेणदस्युंदरयंतऽइंदुभिर्युतद्वेषसःसमिषारभेमहि ॥ समिंद्ररायासमिषारभेमहिसंवाजे
भिःपुरुश्चंद्रैरभिद्युभिः । संदेव्याप्रमत्यावीरशुष्मयागोऽअग्रयाश्वावत्यारभेमहि ॥ १५ ॥ तेत्वामदाऽअमदन्तानिवृ

( १।१०।३ ) न्यूषुवाचमित्येकादशर्चस्यसूक्तस्यांगिरसःसव्यइंद्रोजगतीअंत्येद्वेत्रिष्टुभौ ।

ऋक्सं. अ.१अ.४ ॥ २६ ॥

ष्ण्यातेसोमासोवृत्रहत्येषुसत्पते ॥ यत्कारवेदशवृत्राण्यप्रतिबर्हिष्मतेनिसहस्राणिबर्हयः ॥ युधायुधमुपघेदेषिधृष्णुया पुरापुरंसमिदंहंस्योजसा । नम्यायदिंद्रसख्यापरावतिनिबर्हयोनमुचिंनाममायिनं ॥ त्वंकरंजमुतपर्णयंवधीस्तेजिष्ठया तिथिग्वस्यवर्तनी । त्वंशतावंगृदस्याभिनत्पुरोनानुदःपरिषूताऋजिश्वना ॥ त्वमेतान्जनराज्ञोद्विर्दशाबंधुनासुश्रव सोपजग्मुषः । षष्टिंसहस्रानवतिंनवश्रुतोनिचक्रेणरथ्यादुष्पदावृणक् ॥ त्वमाविथसुश्रवसंतवोतिभिस्तवत्रामभिरिंद्र तूर्वयाणं । त्वमस्मैकुत्समतिथिग्वमायुंमहेराज्ञेयूनेऽअरंधनायः ॥ यऽउदृचींद्रदेवगोपाःसखायस्तेशिवतमाऽअसा म । त्वांस्तोषामत्वयासुवीराद्राघीयऽआयुःप्रतरंदधानाः ॥ १६ ॥ ( १।१०।४ ) मानोऽअस्मिन्मघवन्पृत्स्वंहसिन हितेऽअंतःशवसःपरीणशे । अक्रंदयोनद्योरोरुवद्वनाकथानक्षोणीर्भियसासमारत ॥ अर्चाशक्रायशाकिनेशचीवते शृण्वंतमिंद्रमहयन्नभिष्टुहि । योधृष्णुनाशवसारोदसीऽउभेवृषावृषत्वावृषभोन्यृंजते ॥ अर्चादिवेबृहतेशूष्यं१वचःस्वक्ष त्रंयस्यधृषतोधृषन्मनः । बृहच्छ्रवाऽअसुरोबर्हणाकृतःपुरोहरिभ्यांवृषभोरथोहिषः ॥ त्वंदिवोबृहतःसानुकोपयोवत्मना धृषताशंबरंभिनत् । यन्मायिनोव्रंदिनोमंदिनाधृषच्छितांगभस्तिमशनिंपृतन्यसि । नियद्वृणक्षिश्वसनस्यमूर्धनिशुष्ण स्यचिद्व्रंदिनोरोरुवद्वना । प्राचीनेनमनसाबर्हणावतायदद्याचित्कृणवःकस्त्वापरि ॥ १७ ॥ त्वमाविथनर्यंतुर्व

मंडलं १ अनु. १० ॥ २६ ॥



( १।१०।४ ) मानोअस्मिन्नित्येकादशर्चस्यसूक्तस्यांगिरसःसव्यइंद्रोजगतीपष्ठ्यष्टमीनवम्यैकादश्यस्त्रिष्टुभः ।

शंयदुत्वंतुर्वीतिंवर्य्यंशतक्रतो । त्वंरथमेतशंकृत्व्येधनेत्वंपुरोनवतिंदंभयोनव ॥ सघाराजासत्पतिःशूशुवज्जनोरातहं
व्यःप्रतियःशासमिन्वंति । उक्थावायोऽअभिगृणातिराधसादानुरस्माऽउपरापिन्वतेदिवः+ ॥ असंमंक्षत्रमसंमामनी
षाप्रसोमपाऽअपसासंतुनेमे । येतऽइंद्रददुषोवर्धयंतिमहिक्षत्रंस्थविरंवृष्ण्यंच ॥ तुभ्येदेतेबहुलाऽअद्रिदुग्धाश्चमूषद
श्चमसाऽइंद्रपानाः । व्यश्नुहितर्पयाकाममेषामथामनोवसुदेयायकृष्व ॥ अपामतिष्ठद्धरुणह्वरंतमोंतर्वृत्रस्यजठरेषुप
र्वतः ॥ अभीमिंद्रोनद्योवव्रिणाहिताविश्वाऽअनुष्ठाःप्रवणेषुजिघ्नते ॥ सशेवृधमधिधाद्युम्नमस्मेमहिक्षत्रंजनाषाळिंद्रत
व्यं ॥ रक्षाचनोमघोनःपाहिसूरीन्रायेचनःस्वपत्याऽइषेधाः ॥ १८ ॥ ( १।१०।५ ) दिवश्चिदस्यवरिमाविपप्रथऽइंद्रं
नमह्नापृथिवीचनप्रति । भीमस्तुविष्मान्चर्षणिभ्यऽआतपःशिशीतेवज्रंतेजसेनवंसगः ॥ सोऽअर्णवोननद्यःसमुद्रियः
प्रतिगृभ्णातिविश्रितावरीमभिः । इंद्रःसोमस्यपीतयेवृषायतेसनात्सयुध्मऽओजसापनस्यते ॥ त्वंतमिंद्रपर्वतंनभोज
सेमहोनृम्णस्यधर्मणामिरज्यसि । प्रवीर्येणदेवतातिचेकितेविश्वस्माऽउग्रःकर्मणेपुरोहितः ॥ सऽइद्वनेनमस्युभिर्वच
स्यतेचारुजनेषुप्रब्रुवाणऽइंद्रियं । वृषाछंदुर्भवतिहर्यतोवृषाक्षेमेणधेनांमघवायदिन्वति ॥ सऽइन्महानिसमिथानिम
ज्मनाकृणोतियुध्मऽओजसाजनेभ्यः । अधाचनश्रद्दधतित्विषीमतऽइंद्रायवज्रंनिघनिघ्नतेवधं+ ॥ १९ ॥ सहिश्रव

( १।१०।५ ) दिवश्चिदित्यष्टर्चस्यसूक्तस्यांगिरसःसव्यइंद्रोजगती ।

स्युः सदनानिकृत्रिमाक्ष्मयावृधानऽओजसाविनाशयन् । ज्योतींषिकृण्वन्नवृकाणियज्यवेवसुक्रतुःसर्तवाऽअपःसृजत् ॥ दानायमनःसोमपावन्नस्तुतेर्वाचाहरीवंदनश्रुदाकृधि । यमिष्ठासःसारथयोयऽइंद्रतेनत्वाकेताऽआदभ्नुवंतिभूर्णयः ॥ अप्रक्षितंवसुबिभर्षिहस्तयोरषाळ्हंसहस्तन्विश्रुतोदधे । आवृतासोवतासोनकर्तृभिस्तनूषुतेक्रतवऽइंद्रभूरयः ॥ २० ॥ ( १।१०६ ) एषप्रपूर्वीरवतस्यचम्रिषोत्योनयोषामुदयंस्तभुर्वणिः । दक्षंमहेपाययतेहिरण्ययंरथमावृत्याहरियोगमृभ्वसं ॥ तंगूर्तयोनेमन्निषःपरीणसःसमुद्रंनसंचरणेसनिष्यवः । पतिंदक्षस्यविदथस्यनूसहोगिरिंनवेनाऽअधिरोहतेजसा ॥ सतुर्वणिर्महाँऽअरेणुपौंस्येगिरेर्भृष्टिर्नभ्राजतेतुजाशवः । येनशुष्णंमायिनमायसोमदेदुध्रऽआभूषुरामयन्निदामनि ॥ देवीयदितविषीत्वावृधोतयऽइंद्रंसिषक्त्युषसंनसूर्यः । योधृष्णुनाशवसाबाधतेतमऽइयर्तिरेणुंबृहदर्हरिष्वणिः ॥ वियत्तिरोधरुणमच्युतंरजोतिष्ठिपोदिवऽआतासुबर्हणा । स्वर्मीळ्हेयन्मदऽइंद्रहर्ष्याहन्वृत्रंनिरपामौब्जोऽअर्णवं ॥ त्वंदिवोधरुणंधिषऽओजसापृथिव्याऽइंद्रसदनेषुमाहिनः । त्वंसुतस्यमदेऽअरिणाऽअपोविवृत्रस्यसमयापाष्यारुजः ॥ २१ ॥ ( १।१०७ ) प्रमंहिष्ठायबृहतेबृहद्रयेसत्यशुष्मायतवसेमतिंभरे । अपामिवप्रवणेयस्यदुर्धरंराधोविश्वायुशवसेऽअपावृतं ॥ अधतेविश्वमनुहासदिष्टयऽआपोनिम्नेवसवनाहविष्मतः । यत्पर्वतेनसमशीतहर्यतऽइंद्रस्यवज्रः



( १।१०६ ) एषप्रपूर्वीरितिषळर्चस्यसूक्तस्यांगिरसःसव्यइंद्रोजगती । ( १।१०७ ) प्रमंहिष्ठायेतिषळर्चस्यसूक्तस्यांगिरसः

श्रथिताहिरण्ययं: ॥ अस्मैभीमायनमसासमध्वरऽउषोनशुभ्रऽआभरापनीयसे । यस्यधामश्रवसेनामेंद्रियंज्योतिर
कारिहरितोनायसे ॥ इमेतऽइंद्रतेवयंपुरुष्टुतयेत्वारभ्यचरामसिप्रभूवसो । नहित्वदन्योगिर्वणोगिरःसघत्क्षोणीरिव
प्रतिनोहर्यतद्वचः ॥ भूरितऽइंद्रवीर्यं१तवस्मस्यस्यस्तोतुर्मघवन्काममापृण । अनुतेद्यौर्बृहतीवीर्यंममऽइयंचतेपृथिवी
नेमऽओजसे ॥ त्वंतमिंद्रपर्वतंमहामुरुंवज्रेणवज्रिन्पर्वशश्चकर्तिथ । अवासृजोनिवृताःसर्तवाऽअपःसत्राविश्वंदधिषे
केवलंसहः ॥ २२॥ ( इतिप्रथममेमण्डलेदशमोनुवाकः ) ॥ ( १।११।१ ) नूचित्सहोजाऽअमृतोनितुंदतेहोतायदूतोऽअ
भवद्विवस्वतः । विसाधिष्ठेभिःपथिभीरजोममऽआदेवताताहविषाविवासति ॥ आस्वमद्मयुवमानोऽअजरस्तृष्व
विष्यन्नतसेषुतिष्ठति । अत्योनपृष्ठंप्रुषितस्यरोचतेदिवोनसानुस्तनयन्नचिक्रदत् । क्राणारुद्रेभिर्वसुभिःपुरोहितोहोता
निषत्तोरयिषाळमर्त्यः । रथोनविक्ष्वृंजसानऽआयुषुव्यानुषग्वार्यादेवऽऋण्वति ॥ विवातजूतोऽअतसेषुतिष्ठतेवृथाजु
हूभिःसृण्यातुविष्वणिः । तृषुयदग्नेवनिनोवृषायसेकृष्णंतऽएमरुशदूर्मेऽअजर ॥ तपुर्जंभोवनऽआवातचोदितोयूथेन
साह्वाँऽअववातिवंसगः । अभिव्रजन्नक्षितंपाजसारजःस्थातुश्चरथंभयतेपतत्रिणः ॥ २३ ॥ दधुष्ट्वाभृगवोमानुषेष्वार
यिंनचारुंसुहवंजनेभ्यः । होतारमग्नेऽअतिथिंवरेण्यंमित्रंनशेवंदिव्यायजन्मने ॥ होतारंसप्तजुह्वो३यजिष्ठंयंवाघतोवृ



सव्यइंद्रोजगती । ( १।११।१ ) नूचिदितिनवर्चस्यसूक्तस्यगौतमोनोधाअग्निर्जगतीअंत्याश्चतस्रस्त्रिष्टुभः ।

णतेऽअध्वरेषु । अग्निंविश्वेषामरतिंवसूनांसपर्यामिप्रयसायामिरत्नं ॥ अच्छिद्रासूनोसहसोनोऽअद्यस्तोतृभ्योमित्रमहः शर्मयच्छ। अग्नेगृणंतमंहसऽउरुष्योर्जोनपात्पूर्भिरायसीभिः ॥ भवावरूथंगृणतेविभावोभवामघवन्मघवद्भ्यःशर्म । उरुष्याग्नेऽअंहसोगृणंतंप्रातर्मक्षूधियावसुर्जगम्यात् ॥ २४ ॥ (१।११।२) वयाऽइदग्नेऽअग्नयस्तेऽअन्येत्वेविश्वेऽअमृतामादयंते । वैश्वानरनाभिरसिक्षितीनांस्थूणेवजनाँऽउपमिद्ययंथ । मूर्धादिवोनाभिरग्निःपृथिव्याऽअथाभवदरतीरोदस्योः । तंत्वादेवासोजनयंतदेवंवैश्वानरज्योतिरिदार्याय ॥ आसूर्येनरश्मयोध्रुवासोवैश्वानरेदधिरेग्नावसूनि । यापर्वतेष्वोषधीष्वप्सुयामानुषेष्वसितस्यराजा ॥ बृहतीऽइवसूनवेरोदसीगिरोहोतामनुष्योऽनदक्षः ॥ स्वर्वतेसत्यशुष्मायपूर्वीर्वैश्वानरायनृतमाययह्वीः+ ॥ दिवश्चित्तेबृहतोजातवेदोवैश्वानरप्ररिरिचेमहित्वं । राजाकृष्टीनामसिमानुषीणांयुधादेवेभ्योवरिवश्चकर्थ ॥ प्रनूमहित्वंवृषभस्यवोचंयंपूरवोवृत्रहणंसचंते । वैश्वानरोदस्युमग्निर्जघन्वाँऽअधूनोत्काष्ठाऽअवशंबरंभेत् ॥ वैश्वानरोमहिम्नाविश्वकृष्टिर्भरद्वाजेषुयजतोविभावा । शातवनेयेशतिनीभिरग्निःपुरुणीथेजरतेसूनृतावान् ॥ २५ ॥ (१।११।३) वह्निंयशसंविदथस्यकेतुंसुप्राव्यंदूतंसद्योऽअर्थं । द्विजन्मानंरयिमिवप्रशस्तंरातिंभरद्भृगवेमातरिश्वा ॥ अस्यशासुरुभयासःसचंतेहविष्मंतऽउशिजोयेचमर्ताः । दिवश्चित्पूर्वोन्यसादिहोतापृच्छ्यो

॥ २८ ॥

(१।११।२) वयाइदितिसप्तर्चस्यसूक्तस्यगौतमोनोधावैश्वानरोग्निस्त्रिष्टुप् । (१।११।३) वह्निंयशसमितिपंचर्चस्यसूक्तस्यगौतमो

विश्पतिर्विक्षुवेधाः+ ॥ तंनव्यंसीहृदऽआजायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः । यमृत्विजोवृजनेमानुषासःप्रयस्वंतऽआयवोजीजनंत ॥ उशिक्पावकोवसुर्मानुषेषुवरेण्योहोताधायिविक्षु । दमूनागृहपतिर्दमऽआँऽअग्निर्भुवद्रयिपतीरयीणां+ ॥ तंत्वावयंपतिमग्नेरयीणांप्रशंसामोमतिभिर्गोतमासः । आशुंनवाजंभरंमर्जयंतःप्रातर्मक्षूधियावसुर्जगम्यात् ॥ २६ ॥ (१।११।४) अस्माऽइदुप्रतवसेतुरायप्रयोनहर्मिस्तोमंमाहिनाय । ऋचीषमायाध्रिगवऽओहमिंद्रायब्रह्माणिराततमा ॥ अस्माऽइदुप्रयऽइवप्रयंसिभराम्यांगूषंवाधेसुवृक्ति । इंद्रायहृदामनसामनीषाप्रत्नायपत्येधियोमर्जयंत ॥ अस्माऽइदुत्यमुपमंस्वर्षांभराम्यांगूषमास्येन । मंहिष्ठमच्छोक्तिभिर्मतीनांसुवृक्तिभिःसूरिंवावृधध्यै ॥ अस्माऽइदुस्तोमंसंहिनोमिरथंनतष्टेवतत्सिनाय । गिरश्चगिर्वाहसेसुवृक्तींद्रायविश्वमिन्वंमेधिराय ॥ अस्माऽइदुसप्तिमिवश्रवस्येंद्रायार्कंजुह्वा३समंजे । वीरंदानौकसंवंदध्यैपुरांगूर्तश्रवसंदर्माणं ॥ २७ ॥ अस्माऽइदुत्वष्टातक्षद्वज्रंस्वपस्तमंस्वर्यं१रणाय । वृत्रस्यचिद्विदद्येनमर्मतुजन्नीशानस्तुजताकियेधाः+ ॥ अस्येदुमातुःसवनेषुसद्योमहःपितुंपपिवाञ्चार्वन्ना । मुषायद्विष्णुःपचतंसहीयान्विध्यद्वराहंतिरोऽअद्रिमस्ता । अस्माऽइदुग्नाश्चिद्देवपत्नीरिंद्रायार्कमहिहत्यऽऊवुः । परिद्यावापृथिवीजभ्रउर्वीनास्यतेमहिमानंपरिष्टः ॥ अस्येदेवपरिरिरिचेमहित्वंदिवस्पृथिव्याःपर्यंतरिक्षात् । स्वराळिंद्रोदमऽ

---

नोधाअग्निस्त्रिष्टुप् । ( १।११।४ ) अस्माइद्विति षोळशर्चस्य सूक्तस्य गोतमो नोधा इंद्रस्त्रिष्टुप् ।

ऋक्सं. अ.१अ.५ ॥ २९ ॥

आविश्वगूर्तःस्वरिरमंत्रोववक्षेरणाय ॥ अस्येदेवशवंसाशुषंतंविवृश्चद्वज्रेणवृत्रमिंद्रः । गानत्राणाऽअवनीरमुंचदभिश्र वोदावनेसचेताः ॥ २८ ॥ अस्येदुत्वेषसारंतसिंधवःपरियद्वज्रेणसीमयच्छत् । ईशानकृद्दाशुषेदशस्यन्तुर्वीतयेगाधं तुर्वणिःकः ॥ अस्माऽइदुप्रभंरातूतुंजानोवृत्रायवज्रमीशानःकियेधाः । गोर्नपर्ववि रदातिरश्चेष्यन्नर्णांस्यपांचरध्यै ॥ अस्येदुप्रब्रूहिपूर्व्याणितुरस्यकर्माणिनव्यंऽउक्थैः । युधेयदिष्णानऽआयुधान्यृघायमाणोनिरिणातिशत्रून् ॥ अस्येदु भियागिरयश्चदृह्वाद्यावांचभूमाजनुषस्तुजेते । उपोवेनस्यजोगुवानऽओणिंसद्योभुवद्वीर्यायनोधाः ॥ अस्माऽइदुत्यद नुदाय्येषामेकोयद्वव्नेभूरेरीशानः । प्रैतशंसूर्येपस्पृधानंसौवश्व्येसुष्विमावदिंद्रः ॥ एवातेहारियोजनासुवृक्तींद्रब्रह्माणि गोतमासोऽअक्रन् । ऐषुविश्वपेशसंधियंधाःप्रातर्मक्षूधियावसुर्जगम्यात् ॥ २९ ॥ इतिप्रथमाष्टकेचतुर्थोऽध्यायः ॥ ४ ॥

चतुर्थाध्यायेवर्गाः २९ सूक्तानि १५ ऋचः १५२ ॥ त्यागः ॥ अश्विभ्यामिदं. १० उषसइदं. २० सूर्यायेदं. १३ इंद्रायेदं. ७२ अग्नयइदं. ९ अग्नयेवैश्वानरायेदं. ७ अग्नयइदं. ५ इंद्रायेदं. १६ ॥ तिप्रथमेचतुर्थः ॥

प्रसप्तोनात्वंनववृष्णेपञ्चोनामारुतंत्रिष्टुवंतंपरमाग्नेयमैंद्रांतपश्चादशपराशरःशाक्त्योद्विपदंतंद्रयिर्वनेषुश्रीण्न्छुक्रोवने मैकादशोपप्रदशनिकाव्यांरयिर्नोपप्रयंतोनवगोतमोराहूगणोगायत्रंतुंजुषस्वपंचकातेकथाभित्वागायत्रंतुंहिरण्यकेशो द्वादशाद्यौतृचौत्रैष्टुभौष्णिहौपूर्वोग्नयेवामध्यमायेत्थाषोळशैंद्रंपांक्तंहियामित्यस्यांनिपातिनोदध्यङ्ङनुरथर्वाचेति ५

मंडलं १ अनु. ११ ॥ २९ ॥

हरिः ओ३म् ॥ ( १।११।५ ) प्रमन्महेशवसानायशूषमांगूषंगिर्वणसेऽअंगिरस्वत् । सुवृक्तिभिःस्तुवतऽऋग्मियायार्चामार्कंनरेविश्रुताय ॥ प्रवोमहेमहिनमोभरध्वमांगूष्यंशवसानायसाम । येनानःपूर्वेपितरःपदज्ञाऽअर्चंतोऽअंगिरसोगाऽअविंदन् ॥ इंद्रस्यांगिरसांचेष्टौविदत्सरमातनयायधासिं । बृहस्पतिर्भिनदद्रिंविदद्गाःसमुस्त्रियाभिर्वावशंतनरः ॥ ससुष्टुभासस्तुभासप्तविप्रैःस्वरेणाद्रिंस्वर्यो३नवग्वैः । सरण्युभिःफलिगमिंद्रशक्रवलंरवेणदरयोदशग्वैः ॥ गृणानोऽअंगिरोभिर्दस्मविवरुषसासूर्येणगोभिरंधः । विभूम्याऽअप्रथयऽइंद्रसानुदिवोरजऽउपरमस्तभायः ॥ १ ॥ तदुप्रयक्षतममस्यकर्मदस्मस्यचारुतममस्तिदंसः । उपह्वरेयदुपराऽअपिन्वन्मध्वर्णसोनद्य१श्चतस्रः ॥ द्विताविवव्रेसनजासनीळेऽअयास्यस्तवमानेभिरर्कैः । भगोनमेनेपरमेव्योमन्नधारयद्रोदसीसुदंसाः ॥ सनाद्दिवंपरिभूमाविरूपेपुनर्भुवायुवतीस्वेभिरेवैः । कृष्णेभिरक्तोषारुशद्भिर्वपुर्भिराचरतोऽअन्यान्या ॥ सनेमिसख्यंस्वपस्यमानःसूनुर्दाधारशवसासुदंसाः । आमासुचिद्दधिषेपक्वमंतःपयःकृष्णासुरुशद्रोहिणीषु ॥ सनात्सनीळाऽअवनीरवाताव्रतारक्षंतेऽअमृताःसहोभिः । पुरूसहस्राजनयोनपत्नीर्दुवस्यंतिस्वसारोऽअह्रयाणं ॥ २ ॥ सनायुवोनमसानव्योऽअर्कैर्वसूयवोमतयोदस्मदद्रुः । पतिंनपत्नीरुशतीरुशंतंस्पृशंतित्वाशवसावन्मनीषाः+ ॥ सनादेवतवरायोगभस्तौनक्षीयंतेनोपदस्यंतिदस्म ।

---

( १।११।५ ) प्रमन्महइतित्रयोदशर्चस्यसूक्तस्यगौतमोनोधाइंद्रस्त्रिष्टुप् ।

द्युमाँऽअसि॒क्रतु॑माँऽइंद्र॒धीरः॒शिक्षा॑शचीवः॒स्तव॑नः॒शचीभिः ॥ स॒ना॒य॒तेगोत॑मऽइंद्र॒नव्य॒मत॑क्ष॒द्ब्रह्म॑हरि॒योज॑नाय । सु॒नी॒थाय॑नः॒शवसान॒नो॒धाः॒प्रा॒तर्म॒क्षू॒धि॒यावसु॑र्जगम्यात् ॥ ३ ॥ ( १।११।६ ) त्वंम॒हाँऽइंद्र॒योह॒शुष्मै॒र्द्यावा॑जज्ञा॒नः॒पृ॒थि॒वीऽअमे॑धाः । यद्ध॑ते॒विश्वा॑गि॒रय॑श्चि॒दभ्वा॑भि॒याद्दृ॒ह्लासः॑कि॒रणा॒नैज॑न् ॥ आयद्धरी॑ऽइंद्र॒विव्र॑ता॒वेरा॒तेवज्रं॑जरि॒ता॒बा॒ह्वोर्धा॑त् । येना॑विहर्यतक्रतोऽअ॒मित्रा॒न्पुर॑ऽइ॒ष्णासि॑पुरुहूतपू॒र्वीः+ ॥ त्वंस॒त्यऽइंद्र॒धृ॒ष्णुरे॒तान्त्वमृ॑भु॒क्षानर्य॒स्त्वंषाट् । त्वंशुष्णं॑वृ॒जने॑पृ॒क्षऽआ॒णौयू॒नेकुत्सा॑यद्युमते॒सचा॑हन् ॥ त्वंह॒त्यदिं॑द्र॒चोदीः॒सखा॑वृ॒त्रंयद्व॑ज्रि॒न्वृषकर्म॒न्नु॒भ्नाः । यद्ध॑शूर वृषमणः॒परा॒चैर्वि॒दस्यूँ॒र्यो॑ना॒वकृ॑तोवृ॒था॒षाट्+ ॥ त्वंह॒त्यदिं॑द्रा॒रि॑षण्य॒न्दृ॒ह्लस्य॑चि॒न्मर्ता॑ना॒मजु॑ष्टौ । व्य१स्मदाकाष्ठा॒ऽअ॒र्व॑तेव॒र्घने॑वव॒ज्रि॒च्छ्नथिह्य॒मित्रा॒न् ॥ ४ ॥ त्वांह॒त्यदिं॑द्रा॒र्णसा॑तौ॒स्वर्मी॑ह्ळे॒नर॑ऽआ॒जाह॑वंते ॥ तव॑स्वधाव॒ऽइ॒यमा॒स॑म॒र्यऽऊ॒तिर्वाजे॑ष्वत॒साय्या॑भूत् । त्वंह॒त्यदिं॑द्र॒स॒प्तयुध्य॒न्पुरो॑वज्रि॒न्पुरु॒कुत्सा॑यदर्दः । व॒र्हिर्नय॒त्सु॒दासे॒वृथा॒वर्गं॒होरा॑ज॒न्वरि॑वः पू॒र्वेकः॑ । त्वंत्यान्न॑ऽइंद्र॒देव॒चि॒त्रामिष॒मापो॒नपी॑पय॒ः॒परि॑ज्मन् । यया॑शूर॒प्रत्य॒स्मभ्यं॑यंसि॒त्मन॒मूर्जं॒नवि॒श्वध॒क्षर॑ध्यै ॥ अका॑रित॒ऽइंद्र॒गोत॑मेभि॒र्ब्रह्मा॒ण्योक्ता॒नम॑सा॒हरि॑भ्यां । सु॒पेश॑सं॒वाज॒माभ॑रा॒नः॒प्रा॒तर्म॒क्षू॒धि॒यावसु॑र्जगम्यात् ॥ ५ ॥ ( १।११।७ ) वृष्णे॒शर्धा॑यसु॒म॑खाय॒वे॒धसे॒नोधः॑सुवृ॒क्तिंप्रभ॑रामरु॒द्भ्यः । अपो॒नधीरो॒मन॑सासु॒हस्त्यो॒गिरः॒सम॑ञ्जे॒वि॒दथे॑



(१।११।६) त्वंमहानितिनवर्चस्यसूक्तस्यगौतमोनोधाइंद्रस्त्रिष्टुप् । (१।११।७) वृष्णेशर्धायेतिपंचदशर्चस्यसूक्तस्यगौतमोनोधामरुतोजगती अंत्यात्रिष्टुप् ।

ष्वाभुवः ॥ तेजज्ञिरेदिवऽऋष्वासऽउक्षणोरुद्रस्यमर्याऽअसुराऽअरेपसः । पावकासःशुचयःसूर्याऽइवसत्वानोनद्र
प्सिनोघोरवर्पसः ॥ युवानोरुद्राऽअजराऽअभोग्घनोववक्षुरध्रिगावःपर्वताऽइव । दृह्लाचिद्विश्वाभुवनानिपार्थिवाप्र
च्यावयंतिदिव्यानिमज्मना ॥ चित्रैरंजिभिर्वपुषेव्यंजतेवक्षःसुरुक्माँऽअधियेतिरेशुभे । अंसेष्वेषांनिमिमृक्षुऽऋष्टयः
साकंजज्ञिरेस्वधयादिवोनरः ॥ ईशानकृतोधुनयोरिशादसोवातान्विद्युतस्तविषीभिरक्रत । दुहंत्यूधर्दिव्यानिधूत
योभूमिंपिन्वंतिपयसापरिज्रयः ॥ ६ ॥ पिन्वंत्यपोमरुतःसुदानवःपयोघृतवद्विदथेष्वाभुवः । अत्यंनमिहेविनयं
तिवाजिनमुत्संदुहंतिस्तनयंतमक्षितं ॥ महिषासोमायिनश्चित्रभानवोगिरयोनस्वतवसोरघुष्यदः । मृगाऽइवहस्तिनः
खादथावनायदारुणीषुतविषीरयुग्ध्वं ॥ सिंहाऽइवनानदतिप्रचेतसःपिशाऽइवसुपिशोविश्ववेदसः । क्षपोजिन्वंतःपृ
षतीभिऽऋष्टिभिःसमित्सबाधःशवसाहिमन्यवः ॥ रोदसीऽआवदतागणश्रियोनृषाचःशूराःशवसाहिमन्यवः ॥ आवं
धुरेष्वमतिर्नदर्शताविद्युन्नतस्थौमरुतोरथेषुवः ॥ विश्ववेदसोरयिभिःसमोकसःसंमिश्लासःस्तविषीभिर्विरप्शिनः ।
अस्तारऽइषुंदधिरेगभस्त्योरनंतशुष्मावृषखादयोनरः ॥ ७ ॥ हिरण्ययेभिःपविभिःपयोवृधऽउज्जिघ्नंतऽआपथ्योꣳन
पर्वतान् । मखाऽअयासःस्वसृतोध्रुवच्युतोदुध्रकृतोमरुतोभ्राजदृष्टयः ॥ घृषुंपावकंवनिनंविचर्षणिंरुद्रस्यसूनुंहवसा
गृणीमसि । रजस्तुरंतवसंमारुतंगणमृजीषिणंवृषणंसश्चतश्रिये+ ॥ प्रनूसमर्तःशवसाजनाँऽअतितस्थौवऽऊतीमरुतो

यमावंत । अर्वद्भिर्वाजंभरतेधनानृभिरापृच्छ्यंक्रतुमाक्षेतिपुष्यति ॥ चर्कृत्यंमरुतःपृत्सुदुष्टरंद्युमंतंशुष्मंमघवत्सुधत्तन । धनस्पृतमुक्थ्यंविश्वचर्षणिंतोकंपुष्येमतनयंशतंहिमाः । नूष्ठिरंमरुतोवीरवंतमृतीषाहंरयिमस्मासुधत्त । सहस्रिणंशतिनंशूशुवांसंप्रातर्मक्षूधियावसुर्जगम्यात् ॥ ८ ॥ ( १।१२।१ ) पश्वानतायुंगुहाचरंतंनमोयुजानंनमोवहंतं ॥ सजोषाधीराः पदैरनुग्मन्नुपत्वासीदन्विश्वेयजत्राः ॥ ऋतस्यदेवाऽअनुव्रतागुर्भुवत्परिष्टिर्द्यौर्नभूम ॥ वर्धंतीमापःपन्वासुशिश्विमृतस्ययोनागर्भेसुजातं ॥ पुष्टिर्नरण्वाक्षितिर्नपृथ्वीगिरिर्नभुज्मक्षोदोनशंभु ॥ अत्योनाज्मन्त्सर्गप्रतक्तःसिंधुर्नक्षोदःकईवराते ॥ जामिःसिंधूनांभ्रातेवस्वस्रामिभ्यान्नराजावनान्यत्ति ॥ यद्वातजूतोवनाव्यस्थादग्निर्हदातिरोमापृथिव्याः ॥ श्वसित्यप्सुहंसोनसीदन्क्रत्वाचेतिंष्ठोविशामुषर्भुत् ॥ सोमोनवेधाऽऋतप्रजातःपशुर्नशिश्वाविभुर्दूरेभाः ॥ ९ ॥ ( १।१२।२ ) रयिर्नचित्रासूरोनसंदृगायुर्नप्राणोनित्योनसूनुः ॥ तक्वानभूर्णिर्वनासिषक्तिपयोनधेनुःशुचिर्विभावा ॥ दाधारक्षेममोकोनरण्वोयवोनपक्वोजेताजनानां ॥ ऋषिर्नस्तुभ्वाविक्षुप्रशस्तोवाजीनप्रीतोवयोदधाति ॥ दुरोकशोचिःक्रतुर्ननित्योजायेवयोनावरंविश्वस्मै ॥ चित्रोयदभ्राट्छ्वेतोनविक्षुरथोनरुक्मीत्वेषःसमत्सु ॥ सेनेवसृष्टामंदधात्यस्तुर्नदिद्युत्त्वेषप्रतीका ॥ यमोहजातोयमोजनित्वंजारःकनीनांपतिर्जनीनां ॥ तंवश्चराथावयंवसत्यास्तंनगावोनक्षंतऽइद्धं ॥



---

(१।१२।१)पश्वानेतिदशर्चस्यसूक्तस्यशाक्त्यःपराशरोग्निर्द्विपदाविराट्(१।१२।२)रयिर्नेतिदशर्चस्यसूक्तस्यशाक्त्यःपराशरोग्निर्द्विपदाविराट्

सिंधुर्नक्षोदः प्रनीचीरैनोन्नवंतगावः स्वर्दृशीके ॥ १० ॥ ( १।१२।३ ) वनेषुजायुर्मर्तेषुमित्रोवृणीतेश्रुष्टिंराजेवाजुर्यं ॥ क्षेमोनसाधुः क्रतुर्नभद्रोभुवत्स्वाधीर्होताहव्यवाट् ॥ हस्तेदधानोनृम्णाविश्वान्यमेदेवान्धाद्गुहानिषीदन् ॥ विंदंतीमत्रनरोधियंधाहृदायत्तष्टान्मंत्राँऽअशंसन् ॥ अजोनक्षांदाधारपृथिवींतस्तंभद्यांमंत्रेभिः सत्यैः ॥ प्रियापदानिपश्वोनिपाहिविश्वायुरग्नेगुहागुहंगाः ॥ यऽईंचिकेतगुहाभवंतमायःससादधारामृतस्य ॥ वियेचृतंत्यृतासपंतऽआदिद्वसूनिप्रववाचास्मै ॥ वियोवीरुत्सुरोधन्महित्वोतप्रजाऽउतप्रसूष्वंतः ॥ चित्तिरपांदमेविश्वायुः सद्मेवधीराः संमायचक्रुः ॥ ११ ॥ ( १।१२।४ ) श्रीणन्नुपस्थाद्दिवंभुरण्युः स्थातुश्चरथमक्तून्व्यूर्णोत् ॥ परियदेषामेकोविश्वेषांभुवद्देवोदेवानांमहित्वा ॥ आदित्तेविश्वेक्रतुंजुषंतशुष्काद्यद्देवजीवोजनिष्ठाः ॥ भजंतविश्वेदेवत्वंनामऽऋतंसपंतोऽअमृतमेवैः ॥ ऋतस्यप्रेषाऽऋतस्यधीतिर्विश्वायुर्विश्वेऽअपांसिचक्रुः ॥ यस्तुभ्यंदाशाद्योवातेशिक्षात्तस्मैचिकित्वान्रयिंदयस्व ॥ होतानिषत्तोमनोरपत्येसचिन्न्वासांपतीरयीणां ॥ इच्छंतरेतोमिथस्तनूषुसंजानतस्वैर्दक्षैरमूराः ॥ पितुर्नपुत्राः क्रतुंजुषंतश्रोषन्येऽअस्यशासंतुरासः ॥ विरायऽऔर्णोद्दुरः पुरुक्षुः पिपेशनाकंस्तृभिर्दमूनाः ॥ १२ ॥ ( १।१२।५ ) शुक्रः शुशु

---

( १।१२।३ ) वनेष्वितिदशर्चस्यसूक्तस्यशाक्त्यः पराशरोग्निर्द्विपदाविराट् । ( १।१२।४ ) श्रीणन्नितिदशर्चस्यसूक्तस्यशाक्त्यः पराशरोग्निर्द्विपदाविराट् । ( १।१२।५ ) शुक्रइतिदशर्चस्यसूक्तस्यशाक्त्यः पराशरोग्निर्द्विपदाविराट् ।

ऋक्सं. अ.१अ.५ ॥ ३२॥

क्राँऽउ॒षोन॒जा॒रः प॒प्रासं॑मी॒चोदि॒वोनज्योतिः॑ ॥ परि॑प्रजा॒तःक्रत्वा॑बभूथ॒भुवो॑दे॒वानां॑पि॒तापु॒त्रःसन् ॥ वे॒धाऽअदृ॑प्तोऽ
अ॒ग्निर्वि॑जा॒नन्नूध॒र्नगोनां॒स्वाद्मा॑पि॒तूनां॑+ ॥ ज॒नेनशेवं॑ऽआ॒हूर्यः॒सन्मध्ये॒निषं॑त्तोर॒ण्वोदु॑रो॒णे+ ॥ पु॒त्रोनजा॒तोर॒ण्वोदु॑रो
णेवा॒जीन॒प्री॒तोविशो॒वितां॑रीत् ॥ विशो॒यद॑ह्वे॒नृभि॒ःसनी॑ळाऽअ॒ग्निर्दे॑व॒त्वाविश्वा॒न्य॑श्याः ॥ नाकि॑ष्टऽए॒ता॒व्र॒ता॑मि॒नंति॒नृ
भ्यो॒यदे॒भ्यःश्रु॒ष्टिंच॒कर्थ॑ ॥ तत्तु॒तेदंसो॒यदहं॑न्त्स॒मा॒नैर्नृभि॒र्यद्यु॒क्तोवि॒वेर॒पांसि ॥ उ॒षोन॒जा॒रोवि॒भा॒वो॒स्रःसंज्ञा॑त॒रू॒प॒श्चिके॑
तद॑स्मै ॥ त्मना॒वह॑न्तो॒दु॒रो॒व्यृ॑ण्व॒न्नवं॑त॒विश्वे॒स्व॒र्दृशी॑के ॥ १३ ॥ ( १।१२।६ ) व॒नेमं॒पू॒र्वीर॒र्यो॑मं॑नी॒षाऽअ॒ग्निःसु॒शो
को॒विश्वा॒न्य॑श्याः ॥ आदैव्या॑नि॒व्र॒ता॑चि॑कि॒त्वाना॒मानु॑षस्य॒जन॑स्य॒जन्म॑ ॥ गर्भो॒योऽअ॒पांगर्भो॒वना॑नां॒गर्भ॑श्च॒स्था॒तांगर्भ॑
श्च॒रथां॑ ॥ अद्रौ॑चिदस्माऽअं॒तर्दु॑रो॒णेवि॒शांनविश्वो॑ऽअ॒मृतः॑स्वा॒धीः+ ॥ सहि॒क्ष॒पावाँ॑ऽअ॒ग्नी॒रयी॑णांदा॒श॒द्योऽअ॑स्माऽअ
रं॑सू॒क्तैः+ ॥ ए॒ता॑चिकि॒त्वोभू॒मा॒निपा॑हिदे॒वानां॒जन्म॒मर्तां॑श्चवि॒द्वान्+ ॥ व॒र्धान्यं॑पू॒र्वीःक्ष॒पोविरू॑पाःस्था॒तुश्च॒रथ॒मृ॒तप्र॑
वीतं ॥ अरा॑धि॒होता॒स्व॑र्निषं॑त्तःकृ॒ण्वन्विश्वा॒न्यपां॑सिस॒त्या+ ॥ गोषु॒प्रश॑स्तिं॒वने॑षुधिषे॒भरं॑त॒विश्वे॑ब॒लिंस्व॑र्णः ॥ वि॒त्वा
नरः॑पुरु॒त्रासं॑पर्य॒न्पि॒तुर्नजिव्रे॒र्विवेदो॑भरंत ॥ सा॒धुर्नगृ॒ध्नुरस्ते॑व॒शूरो॒याते॑वभी॒मस्त्वे॒षःस॒मत्सु॑ ॥ १४ ॥ ( १।१२।७ ) ॥ ३२॥
वी॒ळुचि॒
उप॑प्र॒जिन्व॑न्नु॒श॒तीरु॒शंतं॒पतिं॒ननित्यं॒जन॑यः॒सनी॑ळाः । स्वसा॑रः॒श्या॒वीमरु॑षीमजुष्र॒न्चि॒त्रमु॒च्छंती॑मु॒षसं॒नगावः॑ ॥

( १।१२।६ ) वनेमेत्येकादशर्चस्यसूक्तस्यशात्तयःपराशरोग्निर्द्विपदाविराट् । ( १।१२।७ ) उपप्रजिन्वन्निति दशर्चस्यसूक्तस्यशात्तयः

दृह्लापितरोनऽउक्थैरद्रिंरुजन्नंगिरसोरवेण । चक्रुर्दिवोबृहतोगातुमस्मेऽअहःस्वर्विविदुःकेतुमुस्राः+ ॥ दधन्नृतंधनयन्नस्यधीतिमादिदर्योदिधिष्वोऽविभृत्राः । अतृष्यंतीरपसोयंत्यच्छादेवान्जन्मप्रयसावर्धयंतीः ॥ मथीद्यदींविभृतोमातरिश्वागृहेगृहेश्येतोजेन्योभूत् । आदींराज्ञेनसहीयसेसचासन्नादूत्यं१भृगवाणोविवाय ॥ महेयत्पित्रऽईंरसंदिवेकरवत्सरत्पृशन्यश्चिकित्वान् । सृजदस्तांधृषतादिद्युमस्मैस्वायांदेवोदुहितरित्विषिंधात् ॥ १५ ॥ स्वऽआयस्तुभ्यंदमऽआविभातिनमोवादाशादुशतोऽअनुद्यून् । वर्धोऽअग्नेवयोऽअस्यद्विबर्हायासद्रायासरथंयंजुनासि ॥ अग्निंविश्वाऽअभिपृक्षःसचंतेसमुद्रंनस्रवतःसप्तयह्वीः । नजामिभिर्विचिकितेवयोनोविदादेवेषुप्रमतिंचिकित्वान्+ ॥ आयदिषेनृपतिंतेजऽआनट्छुचिरेतोनिषिक्तंद्यौरभीके । अग्निःशर्धमनवद्यंयुवानंस्वाध्यंजनयत्सूदयच्च ॥ मनोनयोध्वनःसद्यऽएत्येकःसत्रासूरोवस्वऽईशे । राजानामित्रावरुणासुपाणीगोषुप्रियममृतंरक्षमाणा ॥ मानोऽअग्नेसख्यापित्र्याणिप्रमर्षिष्ठाऽअभिविदुष्कविःसन् । नभोनरूपंजरिमामिनातिपुरातस्याऽअभिशस्तेरधीहि ॥ १६ ॥ ( १ । १२ । ८ ) निकाव्यावेधसःशश्वतस्करहस्तेदधानोनर्यापुरूणि । अग्निर्भुवद्रयिपतीरयीणांसत्राचक्राणोऽअमृतानिविश्वा ॥ अस्मेवत्संपरिषंतंनविंदन्निच्छंतोविश्वेऽअमृताऽअमूराः । श्रमयुवःपदव्योधियंधास्तस्थुःपदेपरमेचार्वग्नेः+ ॥ तिस्रोयदग्ने

---

पराशरोग्निस्त्रिष्टुप् । ( १।१२।८ ) निकाव्येतिदृचस्यसूक्तस्यशाक्त्यःपराशरोग्निस्त्रिष्टुप् ।

ऋक्सं. अ.१अ.५ ॥ २३ ॥

मंडलं १ अनु. १२

शरदस्त्वामिच्छुचिंघृतेनशुचयःसपर्यान् । नामानिचिद्दधिरेयज्ञियान्यसूदयंततन्वः१सुजाताः ॥ आरोदसीबृहती वेविदानाःप्ररुद्रियाजभ्रिरेयज्ञियासः । विदन्मर्तोनेमधिताचिकित्वानग्निंपदेपरमेतस्थिवांसं ॥ संजानानाऽउपसीद न्नभिज्ञुपत्नीवंतोनमस्यंन्नमस्यन् । रिरिक्कांसस्तन्वःकृण्वतस्वाःसखासख्युर्निमिषिरक्षमाणाः ॥ १७ ॥ त्रिःसप्तयद्गु ह्यानित्वेऽइत्पदाविंदन्निहितायज्ञियासः । तेभीरक्षंतेऽअमृतंसजोषाःपशून्चस्थातृन्चरथंचपाहि ॥ विद्वाँऽअग्नेवयुना निक्षितीनांव्यानुषक्छुरुधोजीवसेधाः । अंतर्विद्वाँऽअध्वनोदेवयानानतंद्रोदूतोऽअभवोहविर्वाट् ॥ स्वाध्योदिवऽ आसप्तयह्वीरायोदुरोव्यृतज्ञाऽअजानन् । विदद्गव्यंसरमादृढमूर्वंयेनानुकंमानुषीभोजतेविट् ॥ आयेविश्वास्वपत्या नितस्थुःकृण्वानासोऽअमृतत्वायगातुं । मह्नामहद्भिःपृथिवीवितस्थेमातापुत्रैरदितिर्धायसेवेः ॥ अधिश्रियंनिदधु श्चारुमस्मिन्दिवोयदक्षीऽअमृताऽअकृण्वन् । अधक्षरंतिसिंधवोनसृष्टाःप्रनीचीरग्नेऽअरुषीरजानन् ॥ १८ ॥ ( १।१२।९ ) रयिर्नयःपितृवित्तोवयोधाःसुप्रणीतिश्चिकितुषोनशासुः । स्योनशीरतिथिर्नप्रीणानोहोतेवसद्मविधतो वितारीत् ॥ देवोनयःसवितासत्यमन्माक्रत्वानिपातिवृजनानिविश्वा । पुरुप्रशस्तोऽअमतिर्नसत्यऽआत्मेवशेवोदिधि षाय्योभूत् ॥ देवोनयःपृथिवींविश्वधायाऽउपक्षेतिहितमित्रोनराजा । पुरःसदःशर्मसदोनवीराऽअनवद्यापतिजुष्टेव

॥ २३ ॥

---

( १।१२।९ ) रयिर्नेतिदशर्चस्यसूक्तस्यशाक्त्यःपराशरोग्निस्त्रिष्टुप् ।

नारी ॥ तंत्वानरोदमऽआनित्यमिद्धमग्नेसचंतक्षितिषुध्रुवासु । अधिद्युम्नंनिदधुर्भूर्यस्मिन्भवाविश्वायुर्धरुणोरयीणां+ ॥
विपृक्षोऽअग्नेमघवानोऽअश्युर्विसूरयोददतोविश्वमायुः । सनेमवाजंसमिथेष्वर्योभागंदेवेषुश्रवसेदधानाः ॥ १९ ॥ ऋ
तस्यहिधेनवोवावशानाःस्मदूध्नीःपीपयंतद्युभक्ताः । परावतःसुमतिंभिक्षमाणाविसिंधवःसमयासस्रुरद्रिं ॥ त्वेऽअग्ने
सुमतिंभिक्षमाणादिविश्रवोदधिरेयज्ञियासः । नक्ताचचक्रुरुषसाविरूपेकृष्णंचवर्णमरुणंचसंधुः ॥ यान्रायेमर्तान्त्सु
षूदोऽअग्नेतेस्याममघवानोवयंच । छायेवविश्वंभुवनंसिसक्ष्यापप्रिवान्रोदसीऽअंतरिक्षं ॥ अर्वद्भिरग्नेऽअर्वतोनृभिर्नॄ
न्वीरैर्वीरान्वनुयामात्वोताः । ईशानासःपितृवित्तस्यरायोविसूरयःशतहिमानोऽअश्युः ॥ एतातेऽअग्नऽउचथानिवे
धोजुष्टानिसंतुमनसेहृदेच । शकेमरायःसुधुरोयमंतेधिश्रवोदेवभक्तंदधानाः ॥ २० ॥ ( १।१३।१ ) उपप्रयंतोऽअध्वरं
मंत्रंवोचेमाग्नये । आरेऽअस्मेचशृण्वते+ ॥ यःस्नीहितीषुपूर्व्यःसंजग्मानासुकृष्टिषु । अरक्षद्दाशुषेगयं ॥ उतब्रुवंतुजं
तवऽउदग्निर्वृत्रहाजनि । धनंजयोरणेरणे ॥ यस्यदूतोऽअसिक्षयेवेषिहव्यानिवीतये । दस्मत्कृणोष्यध्वरम्+ ॥ तमि
त्सुहव्यमंगिरःसुदेवंसहसोयहो । जनाऽआहुःसुबर्हिषं ॥ २१ ॥ आचवहासिताँऽइहदेवाँऽउपप्रशस्तये । हव्यासुश्चं
द्रवीतये ॥ नयोरुपब्दिरश्व्यःशृण्वेरथस्यकच्चन । यदग्नेयासिदूत्यं* ॥ त्वोतोवाज्यह्रयोभिपूर्वस्मादपरः । प्रदाश्वाँ

( १।१३।१ ) उपप्रयंतइतिनवर्चस्यसूक्तस्यराहूगणोगोतमोग्निर्गायत्री ।

ऽअग्नेऽअस्थात् ॥ उतद्युमत्सुवीर्यंबृहदग्नेविवाससि । देवेभ्योदेवदाशुषे ॥ २२ ॥ ( १।१३।२ ) जुषस्वसप्रथस्तमं
वचोदेवप्सरस्तमं । हव्याजुह्वानऽआसनि ॥ अथातेऽअंगिरस्तमाग्नेवेधस्तमप्रियं । वोचेमब्रह्मसानसि+ ॥ कस्तेजा
मिर्जनानामग्नेकोदाश्वध्वरः । कोहकस्मिन्नसिश्रितः+ ॥ त्वंजामिर्जनानामग्नेमित्रोऽअसिप्रियः । सखासखिभ्यऽई
ड्यः ॥ यजानोमित्रावरुणायजादेवाँऽऋतंबृहत् । अग्नेयक्षिस्वंदमं ॥ २३ ॥ ( १।१३।३ ) कातऽउपेतिर्मनसोवरा
यभुवदग्नेशंतमाकामनीषा । कोवायज्ञैःपरिदक्षंतऽआपकेनवातेमनसादाशेम । एह्यग्नऽइहहोतानिषीदादब्धःसुपुरऽ
एताभवानः । अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान्+ ॥ प्रसुविश्वान्रक्षसोधक्ष्यग्नेभवायज्ञानामभि
शस्तिपावा । अथावहसोमपतिंहरिभ्यामातिथ्यमस्मैचकृमासुदाव्ने ॥ प्रजावताचसावह्निरासाचहुवेनिचसत्सीहदे
वैः । वेषिहोत्रमुतपोत्रंयजत्रबोधिप्रयंतर्जनितर्वसूनां ॥ यथाविप्रस्यमनुषोहविर्भिर्देवाँऽअयजःकविभिःकविःसन् ।
एवाहोतःसत्यतरत्वमद्याग्नेमंद्रयाजुह्वायजस्व ॥ २४ ॥ ( १।१३।४ ) कथादाशेमाग्नयेकास्मैदेवजुष्टोच्यतेभामिने
गीः । योमर्त्येष्वमृतऽऋतावाहोतायजिष्ठऽइत्कृणोतिदेवान्+ ॥ योऽअध्वरेषुशंतमऽऋतावाहोतातमूनमोभिराकृणु



---

( १।१३।२ ) जुषस्वेतिपंचर्चस्यसूक्तस्यराहूगणोगोतमोग्निर्गायत्री । ( १।१३।३ ) कातइतिपंचर्चस्यसूक्तराहूगणोगोतमोग्निस्त्रि
ष्टुप् । ( १।१३।४ ) कथादाशेमेतिपंचर्चस्यसूक्तस्यराहूगणोगोतमोग्निस्त्रिष्टुप् ।

ध्वं । अग्निर्यद्वेर्मर्तायदेवान्त्सचाबोधातिमनसायजाति ॥ सहिक्रतुःसमर्यःससाधुर्मित्रोनभूदद्भुतस्यरथीः । तंमेधे
षुप्रथमंदेवयंतीर्विशऽउपब्रुवतेदस्ममारीः ॥ सनोनृणांनृतमोरिशादाऽअग्निर्गिरोवसावेतुधीतिं । तनाचयेमघवानःश
विष्ठावाजप्रसूताऽइषयंतमन्म ॥ एवाग्निर्गोतमेभिऽर्ऋतावाविप्रेभिरस्तोष्टजातवेदाः । सऽएषुद्युम्नंपीपयत्सवाजंसपु
ष्टिंयातिजोषमाचिकित्वान्+ ॥ २५ ॥ ( १।१३।५ ) अभित्वागोतमागिराजातवेदोविचर्षणे । द्युम्नैरभिप्रणोनुमः ॥
तमुत्वागोतमोगिरारायस्कामोदुवस्यति । द्युम्नै० ॥ तमुत्वावाजसातममंगिरस्वद्धवामहे । द्युम्नै० ॥ तमुत्वावृत्रहं
तमंयोदस्यूँरवधूनुषे । द्युम्नै० ॥ अवोचामरहूगणाऽअग्नयेमधुमद्वचः । द्युम्नै० ॥ २६ ॥ ( १।१३।६ ) हिरण्यके
शोरजसोविसारेहिर्धुनिर्वातऽइवध्रजीमान् । शुचिभ्राजाऽउषसोनवेदायशस्वतीरपस्युवोनसत्याः+ ॥ आतेसुपर्णाऽ
अमिनंतँऽएवैःकृष्णोनोनाववृषभोयदीदं । शिवाभिर्नस्मयमानाभिरागात्पतंतिमिहःस्तनयंत्यभ्रा+ ॥ यदीमृतस्यप
यसापियानोनयन्नृतस्यपथिभीरजिष्ठैः । अर्यमामित्रोवरुणःपरिज्मात्वचंपृंचंत्युपरस्ययोनौ । अग्नेवाजस्यगोमतऽई
शानःसहसोयहो । अस्मेधेहिजातवेदोमहिश्रवः ॥ सऽइधानोवसुष्कविरग्निरीळेन्योगिरा । रेवदस्मभ्यंपुर्वणीकदी

---

( १।१३।५ ) अभित्वेतिपंचर्चस्यसूक्तस्यराहूगणोगोतमोग्निर्गायत्री । ( १।१३।६ ) हिरण्यकेशइतिद्वादशर्चस्यसूक्तस्यराहूगणो
गोतमोग्निर्गायत्रीआद्यास्तिस्रोनुष्टुभःततस्तिस्रउष्णिहः ( आद्यानांतिसृणांमध्यमोग्निःपार्थिवोवा ) ।

ऋक्सं. अ.१अ.५ ॥ ३५ ॥

दिहि ॥ क्षपोराजन्नुतत्मनाग्नेवस्तोरुतोषसः । सतिग्मजंभरक्षसोदहप्रति ॥ २७ ॥ अवानोऽअग्नऽऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासुधीषुवंद्य ॥ आनोऽअग्नेरयिंभरसत्रासाहंवरेण्यं । विश्वासुपृत्सुदुष्टरं ॥ आनोऽअग्नेसुचेतुनार यिंविश्वायुपोषसं ॥ मार्डीकंधेहिजीवसे ॥ प्रपूतास्तिग्मशोचिषेवाचोगोतमाग्नये । भरस्वसुम्नयुर्गिरः ॥ योनोऽअग्ने भिदासत्यंतिदूरेपदीष्टसः । अस्माकमिद्वृधेभव ॥ सहस्राक्षोविचर्षणिरग्नीरक्षांसिसेधति । होतागृणीतऽउक्थ्यः* ॥ २८ ॥ ( १।१३।७ ) इत्थाहिसोमऽइन्मदेब्रह्माचकारवर्धनं । शविष्ठवज्रिन्नोजसापृथिव्यानिःशशाऽअहिमर्चन्न नुस्वराज्यं ॥ सत्वामदद्वृषामदःसोमःश्येनाभृतःसुतः । येनावृत्रंनिरद्भ्योजघंथवज्रिन्नोजसार्चन्ननु० ॥ प्रेह्यभीहिधृ ष्णुहिनतेवज्रोनियंसते । इंद्रनृम्णंहितेशवोहनोवृत्रंजयाऽअपोर्चन्ननु० ॥ निरिंद्रभूम्याऽअधिवृत्रंजघंथनिर्दिवः । सृ जामरुत्वतीरवजीवधन्याऽइमाऽअपोर्चन्न० ॥ इंद्रोवृत्रस्यदोधतःसानुंवज्रेणहीळितः । अभिक्रम्यावजिघ्नतेपःसर्मायचो दयन्नर्चन्ननु० ॥ २९ ॥ अधिसानौनिजिघ्नतेवज्रेणशतपर्वणा । मंदानऽइंद्रोऽअंधसःसखिभ्योगातुमिच्छत्यर्चन्ननु० ॥ इंद्रतुभ्यमिदद्रिवोनुत्तंवज्रिन्वीर्यं । यद्धत्यंमायिनंमृगंतमुत्वंमाययावधीरर्चन्ननु० ॥ वितेवज्रासोऽअस्थिरन्नवतिंना व्याऽ३ अनु । महत्तऽइंद्रवीर्यंबाह्वोस्तेबलंहितमर्चन्ननु० ॥ सहस्रंसाकमर्चतपरिष्टोभतविंशतिः ॥ शतैनमन्वनोनवुरिंद्रा

मंडलं १ अनु. १२ ॥ ३५ ॥

( १।१३।७ ) इत्थाहीतिषोडशर्चस्यसूक्तस्यराहूगणोगोतमइंद्रोंत्यायादध्यज्ञानुरथर्वाचपंक्तिः ।

यत्रब्रह्मोद्यंतमर्चन्ननु० ॥ इंद्रोवृत्रस्यतविषींनिरहन्त्सहसासहः । महत्तदस्यपौंस्यंवृत्रंजघन्वाँऽअसृजदर्चन्ननु० ॥ २० ॥
इमेचित्तवमन्यवेवेपेतेभियसामही । यदिंद्रवज्रिन्नोजसावृत्रंमरुत्वाँऽअवधीरर्चन्ननु० ॥ नवेपसानतन्यतेंद्रंवृत्रोविबी
भयत् । अभ्येनंवज्रऽआयसःसहस्रभृष्टिरायतार्चन्ननु० ॥ यद्वृत्रंतवचाशनिंवज्रेणसमयोधयः । अहिमिंद्रजिघांसतो
दिवितेवद्बधेशवोर्चन्ननु० ॥ अभिष्टनेतेऽअद्रिवोयत्स्थाजगच्चरेजते । त्वष्टाचित्तवमन्यवऽइंद्रवेविज्यतेभियार्चन्ननु० ॥
नहिनुयादधीमसींद्रंकोवीर्यापरः । तस्मिन्नृम्णमुतक्रतुंदेवाऽओजांसिसंदधुरर्चन्ननु० ॥ यामथर्वामनुष्पितादध्यङ्धियं
मत्नत । तस्मिन्ब्रह्माणिपूर्वथेंद्रऽउक्थासमग्मतार्चन्ननु० ॥ ३१ ॥ इतिप्रथमाष्टकेपंचमोऽध्यायः ॥ ५ ॥

पंचमाध्यायेवर्गाः ३१ सूक्तानि १९ ऋचः १८५ ॥ त्यागः ॥ इंद्रायेदं. २२ मरुद्भ्यइदं. १५ अग्नयइदं. १२९ मध्यमायाग्नयइदं. ३
अग्नयइदं. ९ इंद्रायेदं १६ ॥ इतिप्रथमेपंचमोऽध्यायः ॥

इंद्रोनवोपोषुषड्जगत्यंतमश्वावतिजागतमसाविविंशतिःषळनुष्टुभंऽऔष्णिहपांक्तगायत्रत्रैष्टुभास्तृचाः पार्थः
प्रयेद्वादशमारुतंहपंचम्यंत्येत्रिष्टुभौमरुतोदशगायत्रंप्रत्वक्षसःषड्जागतमाविद्युन्मद्भिराद्यांत्येप्रस्तारपंक्तीपंत्र
मीविराड्रूपानोदशवैश्वदेवंतुपंचाद्याःसप्तमीचजगत्यःषष्ठीविराट्स्थानंऋजुनीतीनवगायत्रमंत्यानुष्टुप्त्वंसोम
त्र्यधिकासौम्यंपंचम्यादिगायत्र्योद्वादशोष्णिकुचैताउत्याद्यूनोषस्यंचतुर्जगत्यादिषळुष्णिगंतंतृचोंत्यऽआश्वि

नौग्नीषोमौद्वादशाग्नीषोमीयंमाद्यास्तिस्रोनुष्टुभंऽउपांत्यास्तिस्रोगायत्र्योंष्टमीजगतीवेभंपोळशंकुत्सआग्नेयंतद्वित्रिष्टुवंतंपूर्वोदेवास्त्रयःपादादेवांस्तन्नोमित्रोर्धर्चोलिंगोक्तदेवतोयद्दैवत्यंवासूक्तम् ॥ ६ ॥

हरिःओ३म् ॥ ( १।१३।८ ) इंद्रोमदायवावृधेशवसेवृत्रहानृभिः । तमिन्महत्स्वाजिषूतेमभैहवामहेसवाजेषुप्रनोविषत् ॥ असिहिवीरसेन्योसिभूरिपरादृदिः ॥ असिदभ्रस्यचिद्वृधोयजमानायशिक्षसिसुन्वतेभूरितेवसु ॥ यदुदीरतऽआजयोधृष्णवेधीयतेधना । युक्ष्वामदच्युताहरीकंहनःकंवसौदधोस्माँऽइंद्रवसौदधः ॥ ऋत्वामहाँऽअनुष्वधंभीमऽआवावृधेशवः । श्रियऽऋष्वऽउपाकयोर्निशिप्रीहरिवान्दधेहस्तयोर्वज्रमायसं+ ॥ आपप्रौपार्थिवंरजोवद्बधेरोचनादिवि । नत्वावाँऽइंद्रकश्चननजातोनजनिष्यतेतिविश्वंववक्षिथ ॥ १ ॥ योऽअर्योमर्तभोजनंपरादर्दातिदाशुषे । इंद्रोऽअस्मभ्यंशिक्षतुविभंजाभूरितेवसुभक्षीयतवराधसः ॥ मदेमदेहिनोददिर्यूथागवामृजुक्रतुः । संगृभायपुरूशतोभयाहस्त्यावसुशिशीहिरायऽआभर ॥ मादयस्वसुतेसचाशवसेशूरराधसे । विद्माहित्वापुरूवसुमुपकामान्त्ससृज्महेथानोविताभव ॥ एतेतऽइंद्रजंतवोविश्वंपुष्यंतिवार्यं । अंतर्हिख्योजनानामर्योवेदोऽअदाशुषांतेषांनोवेदऽआभर ॥ २ ॥ ( १।१३।९ ) उपोषुशृणुहीगिरोमघवन्मातथाऽइव । यदानःसूनृतावतःकरऽआदर्थयासऽइद्योजान्विंद्रते



(१।१३।८) इंद्रोमदायेतिनवर्चस्यसूक्तस्यराहूगणोगोतमइंद्रःपंक्तिः(१।१३।९)उपोष्वितिषळर्चस्यसूक्तस्यराहूगणोगोतमइंद्रःपंक्तिरंत्याजगती

हरा ॥ अक्षन्नमीमदंतह्यवप्रियाऽअंधूषत । अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजा० ॥ सुसंदृशंत्वावयंमघवन्वं
दिषीमहिं । प्रनूनंपूर्णवंधुरःस्तुतोयाहिवशाँऽअनुयोजा० ॥ सघातंवृषणंरथमधितिष्ठातिगोविदं । यःपात्रंहारियोज
नंपूर्णमिंद्रचिकेततियोजा० ॥ युक्तस्तेऽअस्तुदक्षिणऽउतसव्यःशतक्रतो । तेनजायामुपप्रियांमंदानोयाह्यंधसोयोजा० ॥
युनज्मितेब्रह्मणाकेशिनाहरीऽउपप्रयाहिदधिषेगभस्त्योः । उत्त्वासुतासोरभसाऽअमंदिषुःपूषण्वान्वज्रिन्त्समुपत्न्या
मदः ॥ ३ ॥ ( १।१३।१० ) अश्वावतिप्रथमोगोषुगच्छतिसुप्रावीरिंद्रमर्त्यस्तवोतिभिः । तमित्पृणक्षिवसुनाभवी
यसासिंधुमापोयथाभितोविचेतसः ॥ आपोनदेवीरुपयंतिहोत्रियमवःपश्यंतिविततंयथारजः । प्राचैर्देवासःप्रणयंति
देवयुंब्रह्मप्रियंजोषयंतेवराऽइव ॥ अधिद्वयोरदधाऽउक्थ्यं१वचोयतस्रुचामिथुनायासपर्यतः । असंयत्तोव्रतेतेक्षेति
पुष्यतिभद्राशक्तिर्यजमानायसुन्वते ॥ आदंगिराःप्रथमंदधिरेवयऽइद्धाग्नयःशम्यायेसुकृत्यया । सर्वंपणेःसमविंदं
तभोजनमश्वावंतंगोमंतमापशुंनरः ॥ यज्ञैरथर्वाप्रथमःपथस्तततःसूर्योव्रतपावेनऽआजनि । आगाऽआजदुशनाका
व्यःसचायमस्यजातममृतंयजामहे ॥ बर्हिर्वायत्स्वपत्यायवृज्यतेर्कोवाश्लोकमाघोषतेदिवि । ग्रावायत्रवदतिकारुरु
क्थ्य१स्तस्येदिंद्रोऽअभिपित्वेषुरण्यति ॥ ४ ॥ ( १।१३।११ ) असाविसोमऽइंद्रतेशविष्ठधृष्णवागहि । आत्वापृण

---

(१।१३।१०)अश्वावतीतिषड़ृचस्यसूक्तस्यराहूगणोगोतमइंद्रोजगती। (१।१३।११)असावीतिविंशत्यृचस्यसूक्तस्यराहूगणोगोतमइंद्रआद्याः

ऋक्सं. अ.१अ.६ ॥ ३७ ॥ मंडलं १ अनु. १३

किं॒त्वद्रि॒यंर॒जः॒सूर्यो॒नर॒श्मिभिः॑ ॥ इंद्र॒मिद्धरी॑वह॒तोप्र॑तिधृष्टशवसं । ऋषी॑णाचस्तु॒तीरुप॑य॒ज्ञंच॒मानु॑षाणां ॥ आति॑ष्ठ

वृत्रह॒न्रथं॑यु॒क्तातेब्रह्म॑णा॒हरी॑ । अ॒र्वा॒चीनं॒सुते॒मनो॒ग्रावा॑कृणोतुव॒ग्नुना॑ ॥ इ॒ममि॑द्रसु॒तंपि॑ब॒ज्येष्ठ॒मम॑र्त्य॒मदं॑ । शु॒क्रस्य॑त्वा

भ्य॑क्षर॒न्धारा॑ऽऋ॒तस्य॒साद॑ने ॥ इंद्रा॑यनू॒नम॑र्चतो॒क्थानि॑चब्रवीतन । सु॒ताऽअ॑मत्सु॒रिंद॑वो॒ज्येष्ठं॑नमस्यता॒सहः॑ ॥ ५ ॥

नकि॒ष्ट्वद्र॒थीत॑रो॒हरी॒यदि॑द्र॒यच्छ॑से । नकि॒ष्ट्वानु॑म॒ज्मना॒नकिः॒स्वश्व॑ऽआनशे ॥ यऽएक॒ऽइद्वि॒दय॑ते॒वसु॒मर्ता॑यदा॒शुषे॑ ।

ईशा॑नो॒ऽअप्र॑तिष्कुत॒ऽइंद्रो॑ऽअ॒ंग ॥ क॒दामर्त॑म॒रा॒धसं॑प॒दाक्षुंप॑मिवस्फुरत् । क॒दानः॑शुश्रव॒द्गिर॒ऽइंद्रो॑० ॥ यश्चि॒द्धित्वा

ब॒हुभ्य॒ऽआसु॒तावाँ॑ऽआ॒विवा॑सति । उ॒ग्रंतत्प॑त्यते॒शव॒ऽइंद्रो॑० ॥ स्वा॒दोरि॒त्थावि॑षू॒वतो॒मध्वः॑पिबंति॒गौर्यः॑ । याऽइंद्रे॑ण

स॒याव॑रीर्वृष्ण॒ामद॑ंतिशो॒भसे॒वस्वी॒रनु॑स्व॒राज्य॑ं ॥ ६ ॥ ताऽअ॑स्यपृश॒नायु॑वः॒सोमं॑श्रीणंति॒पृश्न॑यः । प्रि॒याऽइंद्र॑स्य॒धेन॑वो॒

वज्रं॑हिन्वंति॒साय॑कं॒वस्वी॑० ॥ ताऽअ॑स्य॒नम॑सा॒सहः॑सप॒र्यंति॒प्रचे॑तसः । व्र॒तान्य॑स्यसश्चिरे॒पुरू॑णिपू॒र्वचि॑त्तये॒वस्वी॑० ॥

इंद्रो॑द॒धीचो॑ऽअ॒स्थभि॑र्वृ॒त्राण्यप्र॑तिष्कुतः । ज॒घान॑नव॒तीर्नव॑ ॥ इ॒च्छन्नश्व॑स्य॒यच्छिर॒ः॒पर्व॑ते॒ष्वप॑श्रितं । तद्वि॑दच्छ॒र्य॒णा

वंति ॥ अत्राह॒गोर॑मन्वत॒नाम॒त्वष्टु॑रपी॒च्यं॑ । इ॒त्थाचं॒द्रम॑सोगृ॒हे ॥ ७ ॥ कोऽअ॒द्ययु॑ङ्क्ते॒धु॒रिगाऽऋ॒तस्य॒शिमी॑वतोभा

मिनो॑दुर्हृ॒णायू॑न् । आ॒सन्नि॑षून्हृ॒त्स्वसो॑मयो॒भून्य॑ऽए॒षांभृ॒त्यामृ॒ण॒धत्सजी॑वात् ॥ कऽई॑षते॒तु॒ज्यते॒कोबि॑भाय॒कोमं॑सते ॥ ३७ ॥

---

षळनुष्टुभः सप्तम्याद्यास्तिस्रउष्णिहः दशम्याद्यास्तिस्रः पंक्तयः त्रयोदशाद्यास्तिस्रोगायत्र्यः षोळश्याद्यास्तिस्रस्त्रिष्टुभः अंत्येद्वेबृहतीसतोबृहत्यौ।

संतमिंद्रंकोऽअंर्ति । कस्तोकायकऽइभायोतरायेधिब्रवत्तन्वे३ कोजनाय ॥ कोऽअग्निमीट्टेहविषाघृतेनस्त्रुचायजाताऽऋ
तुभिर्ध्रुवेभिः । कस्मैदेवाऽआवहानाशुहोमकोमंसतेवीतिहोत्रःसुदेवः+ ॥ त्वमंगप्रशंसिषोदेवःशविष्ठमर्त्यं । नत्वद
न्योमघवन्नस्तिमर्डितेंद्रब्रवीमितेवचः ॥ मातेराधांसिमातेऽऊतयोवसोस्मान्कदाचनादभन् । विश्वाचनऽउपमिमी
हिमानुषवसूनिचर्षणिभ्यऽआ+ ॥ ८ ॥ ( १।१४।१ ) प्रयेशुंभंतेजनयोनसप्तयोयामन्त्रुद्रस्यसूनवःसुदंससः । रो
दसीहिमरुतश्चक्रिरेवृधेमदंतिवीराविदथेषुघृष्वयः ॥ तऽउक्षितासोमहिमानमाशतदिविरुद्रासोऽअधिचक्रिरेसदः ।
अर्चंतोऽअर्कंजनयंतऽइंद्रियमधिश्रियोदधिरेपृश्निमातरः ॥ गोमातरोयच्छुभयंतेऽअंजिभिस्तनूषुशुभ्रादधिरेविरु
क्मतः । बाधंतेविश्वमभिमातिनमपवर्त्मान्येषामनुरीयतेघृतं+ ॥ वियेभ्राजंतेसुमखासऽऋष्टिभिःप्रच्यावयंतोऽअच्यु
ताचिदोजसा । मनोजुवोयन्मरुतोरथेष्वावृषव्रातासःपृषतीरयुग्ध्वं ॥ प्रयद्रथेषुपृषतीरयुग्ध्वंवाजेऽअद्रिंमरुतोरंहयं
तः । उतारुषस्यविष्यंतिधाराश्चर्मेवोदभिर्व्युंदंतिभूम ॥ आवोवहंतुसप्तयोरघुष्यदोरघुपत्वानःप्रजिगातबाहुभिः ।
सीदताबर्हिरुरुवःसदस्कृतंमादयध्वंमरुतोमध्वोऽअंधसः ॥ ९ ॥ तेवर्धंतस्वतवसोमहित्वनानाकंतस्थुरुरुचक्रिरेसदः ।
विष्णुर्यद्धावद्वृषणंमदच्युतंवयोनसीदन्नधिबर्हिषिप्रिये+ ॥ शूराऽइवेद्युयुधयोनजग्मयःश्रवस्यवोनपृतनासुयेतिरे ।

---

(१।१४।१) प्रयेशुंभंतइतिद्वादशर्चस्यसूक्तस्यराहूगणोगोतमोमरुतोजगतीपंचम्यंत्येत्रिष्टुभौ ।

भयंते विश्वाभुवनामरुद्भ्योराजानऽइवत्वेषसंदृशोनरः ॥ त्वष्टायद्वज्रंसुकृतंहिरण्ययंसहस्रभृष्टिंस्वपाऽअवर्तयत् ।
धत्तऽइंद्रोनर्यपांसिकर्तवेहन्वृत्रंनिरपामौब्जदर्णवं+ ॥ ऊर्ध्वंनुनुद्रेवतंतऽओजसादादृहाणंचिद्बिभिदुर्विपर्वतं । धमं
तोवाणंमरुतःसुदानवोमदेसोमस्यरण्यानिचक्रिरे ॥ जिह्मंनुनुद्रेवतंतयादिशासिंचन्नुत्संगोतमायतृष्णजे । आगच्छं
तीमवसाचित्रभानवःकामंविप्रस्यतर्पयंतधामभिः ॥ यावःशर्मशशमानायसंतित्रिधातूनिदाशुषेयच्छताधि । अस्म
भ्यंतानिमरुतोवियंतरयिंनोधत्तवृषणःसुवीरं ॥ १० ॥ ( १।१४।२ ) मरुतोयस्यहिक्षयेपाथादिवोविमहसः । ससु
गोपातमोजनः ॥ यज्ञैर्वायज्ञवाहसोविप्रस्यवामतीनां । मरुतःशृणुताहवं ॥ उतवायस्यवाजिनोनुविप्रमतक्षत । सगं
तागोमतिव्रजे+ ॥ अस्यवीरस्यबर्हिषिसुतःसोमोदिविष्टिषु । उक्थंमदश्चशस्यते ॥ अस्यश्रोषंत्वाभुवोविश्वायश्चर्षणी
रभि । सूरंचित्सस्रुषीरिषः ॥ ११ ॥ पूर्वीभिर्हिददाशिमशरद्भिर्मरुतोवयं । अवोभिश्चर्षणीनां+ ॥ सुभगःसप्रयज्य
वोमरुतोऽअस्तुमर्त्यः । यस्यप्रयांसिपर्षथ ॥ शशमानस्यवानरःस्वेदस्यसत्यशवसः । विदाकामस्यवेनतः ॥ यूयंत
त्सत्यशवसऽआविष्कर्तमहित्वना । विध्यताविद्युतारक्षः ॥ गूहतागुह्यंतमोवियातविश्वमत्रिणं । ज्योतिष्कर्तायदु
श्मसि ॥ १२ ॥ ( १।१४।३ ) प्रत्वक्षसःप्रतवसोविरप्शिनोनानताऽअविथुराऽऋजीषिणः । जुष्टतमासोनृतमासो

( १।१४।२ ) मरुतोयस्येतिदशर्चस्यसूक्तस्यराहूगणोगोतमोमरुतोगायत्री। ( १।१४।३ ) प्रत्वक्षसइतिषडृचस्यसूक्तस्यराहूगणोगोतमो

ऽअंजिभिर्व्यानज्रे केचिदुस्राऽइवस्तृभिः ॥ उपह्वरेषुयदचिध्वंययिंवयऽइवमरुतःकेनचित्पथा । श्चोतंतिकोशाऽउप
वोरथेष्वाघृतमुक्षतामधुवर्णमचते ॥ प्रैषामज्मेषुविथुरेवरेजतेभूमिर्यामेषुयद्धयुंजतेशुभे । तेक्रीळयोधुनयोभ्राजदृष्टयः
स्वयंमहित्वंपनयंतधूतयः ॥ सहिस्वसृत्पृषदश्वोयुवागणो३या ऽईशानस्तविषीभिरावृतः । असिसत्यऽऋणयावानेद्यो
स्याधियःप्राविताथावृषागणः+ ॥ पितुःप्रत्नस्यजन्मनावदामसिसोमस्यजिह्वाप्रजिगातिचक्षसा । यदीमिंद्रंशम्यृक्का
णऽआशतादिन्नामानियज्ञियानिदधिरे ॥ श्रियसेकंभानुभिःसंमिमिक्षिरेतेरश्मिभिस्तऽऋक्वभिःसुखादयः । तेवाशी
मंतऽइष्मिणोऽअभीरवोविद्रेप्रियस्यमारुतस्यधाम्नः ॥ १३ ॥ ( १।१४।४ ) आविद्युन्मद्भिर्मरुतःस्वर्कैरथेभिर्यातऽ
ऋष्टिमद्भिरश्वपर्णैः । आवर्षिष्ठयानऽइषावयोनपप्तसुमायाः ॥ तेरुणेभिर्वरमापिशंगैःशुभेकंयांतिरथतूर्भिरश्वैः ।
रुक्मोनचित्रःस्वधितीवान्पव्यारथस्यजंघनंतभूम ॥ श्रियेकंवोऽअधितनूषुवाशीर्मेधावनानकृणवंतऽऊर्ध्वा । युष्म
भ्यंकंमरुतःसुजातास्तुविद्युम्नासोधनयंतेऽअद्रिं ॥ अहानिगृध्राःपर्यावऽआगुरिमांधियंवार्कार्यांचदेवीं । ब्रह्मकृण्वं
तोगोतमासोऽअर्कैरूर्ध्वंनुनुद्रऽउत्सधिंपिबध्यै ॥ एतत्त्यन्नयोजनमचेतिसस्वर्हयन्मरुतोगोतमोवः । पश्यन्हिरण्यच
क्रानयोदंष्ट्रान्विधावतोवराहून् ॥ एषास्यावोमरुतोनुभर्त्रीप्रतिष्टोभतिवाघतोनवाणी । अस्तोभयद्वृथासामनुस्वधांग

---

मरुतोजगती । ( १।१४।४ ) आविद्युन्मद्भिरितिषडृचस्यसूक्तस्यराहूगणोगोतमोमरुतस्त्रिष्टुप्आद्यांत्येप्रस्तारपंक्तीपंचमीविराड्रूपा ।

भ॑स्त्योः ॥ १४ ॥ ( १।१४।५ ) आनो॑भ॒द्राःक्रत॑वोयंतुवि॒श्वतो॑दब्धासो॒ऽअप॑रीतासऽउ॒द्भिदः॑ । दे॒वानो॒यथा॒सद॒मि
द्वृ॒धेऽअस॑न्न॒प्रायु॑वोर॒क्षि॒तारो॑दि॒वेदि॑वे ॥ दे॒वानां॑भ॒द्रासु॑म॒तिर्ऋ॑जूय॒तांदे॒वानां॑रा॒तिर॒भिनो॒निव॑र्ततां । दे॒वानां॑स॒ख्यमुप॑
से॑दिमाव॒यंदे॒वान॒ऽआयुः॒प्रति॑रंतुजी॒वसे॑ ॥ तान्पूर्व॑यानि॒विदा॑हूमहेव॒यंभगं॑मि॒त्रमदि॑तिं॒दक्ष॑म॒स्रिधं॑ । अ॒र्य॒मणं॒वरु॑णं॒सो
मम॒श्विना॒सर॑स्वतीनः॒सु॒भगा॒मय॑स्करत् ॥ तन्नो॒वातो॑मयो॒भुवा॑तुभेष॒जंतन्मा॒तापृ॑थि॒वीतत्पि॒ताद्यौः । तद्ग्रावा॑णःसोम॒
सुतो॑मयो॒भुव॒स्तद॑श्विनाशृणुतंधिष्ण्यायुवं॑+ ॥ तमीशा॑नं॒जग॑तस्त॒स्थुष॒स्पतिं॑धियंजि॒न्वमव॑सेहूमहेव॒यं । पू॒षानो॒यथा॒वे
द॑सा॒मस॑द्वृ॒धेर॑क्षि॒तापा॒युरद॑ब्धःस्व॒स्तये॑ ॥ १५ ॥ स्व॒स्तिन॒ऽइंद्रो॑वृ॒द्धश्र॑वाःस्व॒स्तिनः॑पू॒षावि॒श्ववे॑दाः । स्व॒स्तिन॒स्तार्क्ष्यो॒
ऽअरि॑ष्टनेमिःस्व॒स्तिनो॒बृह॒स्पति॑र्दधातु ॥ पृष॑दश्वाम॒रुतः॒पृश्नि॑मातरःशुभं॒याव्ना॑नोवि॒दथे॑षु॒जग्म॑यः । अ॒ग्नि॒जि॒ह्वाम॑न॑
वः॒सूर॑चक्षसो॒विश्वे॑नोदे॒वाऽअव॒साग॑मन्नि॒ह+ ॥ भ॒द्रंकर्णे॑भिःशृणुयामदेवाभ॒द्रंप॑श्येमा॒क्षभि॒र्यजत्राः । स्थि॒रैरंगै॑स्तुष्टु॒
वांस॑स्त॒नूभि॒र्व्य॑शेमदे॒वहि॑तं॒यदायुः॑ ॥ श॒तमिन्नु॒शर॑दो॒ऽअंति॑देवा॒यत्रा॑नश्च॒क्राज॒रसं॑त॒नूनां॑ । पु॒त्रासो॒यत्र॑पि॒तरो॒भव॑न्ति॒
मानो॑म॒ध्यारी॑रिष॒तायु॒र्गंतोः॑ ॥ अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒तासपि॒तासपु॒त्रः । विश्वे॑दे॒वाऽअदि॑तिः॒पंच॒जना॒ऽ



---

( १।१४।५ ) आनोभद्राइतिदशर्चस्यसूक्तस्यराहूगणोगोतमोविश्वेदेवास्त्रिष्टुप् आद्याःपंचसप्तमीचजगत्यःषष्ठीविराट्स्थाना ।
( सूक्तभेदप्रयोगपक्षेतुआद्यानांचतसृणांविश्वेदेवाःततएकस्याइंद्रापूषणौततश्चतसृणांविश्वेदेवाःततएकस्याअदितिःएवंदश ) ।

अदितिर्जातमदितिर्जनित्वं ॥ १६ ॥ ( १।१४।६ ) ऋजुनीतीनोवरुणोमित्रोनयतुविद्वान् । अर्यमादेवैःसजोषाः ॥ तेहिवस्वोवसवानास्तेऽअप्रमूरामहोभिः । व्रतारक्षंतेविश्वाहा ॥ तेऽअस्मभ्यंशर्मयंसन्नमृतामर्त्येभ्यः । बाधमानाऽ अपद्विषः ॥ विनःपथःसुवितायचियंत्विंद्रोमरुतः । पूषाभगोवंद्यासः ॥ उतनोधियोगोऽअग्राःपूषन्विष्णवेवयावः । कर्तानःस्वस्तिमतः ॥ १७ ॥ मधुवाताऽऋतायतेमधुक्षरंतिसिंधवः । माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः । मधुद्यौरस्तुनःपिता+ ॥ मधुमान्नोवनस्पतिर्मधुमाँऽअस्तुसूर्यः । माध्वीर्गावोभवंतुनः ॥ शंनोमित्रःशंवरुणःशंनोभवत्वर्यमा । शंनऽइंद्रोबृहस्पतिःशंनोविष्णुरुरुक्रमः+ ॥ १८ ॥ ( १।१४।७ ) त्वंसोमप्रचिकितोमनीषात्वंरजिष्ठमनुनेषिपंथां । तवप्रणीतीपितरोनऽइंदोदेवेषुरत्नमभजंतधीराः ॥ त्वंसोमक्रतुभिःसुक्रतुर्भूस्त्वंदक्षैःसुदक्षोविश्ववेदाः । त्वंवृषावृषत्वेभिर्महित्वाद्युम्नेभिर्द्युम्न्यभवोनृचक्षाः ॥ राज्ञोनुतेवरुणस्यव्रतानिबृहद्गभीरंतवसोमधाम । शुचिष्ट्वमसिप्रियोनमित्रोदक्षाय्योऽअर्यमेवासिसोम ॥ यातेधामानिदिवियापृथिव्यांयापर्वतेष्वोषधीष्वप्सु । ते

---

( १।१४।६ ) ऋजुनीतीनइतिनवर्चस्यसूक्तस्यराहूगणोगोतमोविश्वेदेवागायत्रीअंत्यानुष्टुप् । ( वैश्वदेवसूक्तेप्यस्मिन्भेदप्रयोगकरणाशक्यत्वान्नवानामपिविश्वेदेवाएव ) । ( १।१४।७ ) त्वंसोमइतित्रयोविंशत्यृचस्यसूक्तस्यराहूगणोगोतमःसोमस्त्रिष्टुप्पंचम्यादिद्वादशगायत्र्यःसप्तदश्युष्णिक् ।

भिर्नोविश्वैःसुमनाऽअहेळन्राजन्त्सोमप्रतिहव्यागृभाय ॥ त्वंसोमासिसत्पतिस्त्वंराजोतवृत्रहा । त्वंभद्रोऽअसिक्रतुः ॥ १९ ॥ त्वंचसोमनोवशोजीवातुंनमरामहे । प्रियस्तोत्रोवनस्पतिः ॥ त्वंसोममहेभगंत्वंयूनऽऋतायते । दक्षंदधासिजीवसे ॥ त्वंनःसोमविश्वतोरक्षाराजन्नघायतः । नरिष्येत्त्वावतःसखा ॥ सोमयास्तेमयोभुवऽऊतयःसंतिदाशुषे । ताभिर्नोविताभव ॥ इमंयज्ञमिदंवचोजुजुषाणऽउपागहि । सोमत्वंनोवृधेभव ॥ २० ॥ सोमगीर्भिष्ट्वावयंवर्धयामोवचोविदः । सुमृळीकोनऽआविश ॥ गयस्फानोऽअमीवहावसुवित्पुष्टिवर्धनः । सुमित्रःसोमनोभव ॥ सोमरारंधिनोहृदिगावोनयवसेष्वा । मर्यऽइवस्वऽओक्ये* ॥ यःसोमसख्येतवरारणद्देवमर्त्यः । तंदक्षःसचतेकविः+ ॥ उरुष्याणोऽअभिशस्तेःसोमनिपाह्यंहसः । सखासुशेवऽएधिनः ॥ २१ ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं । भवावाजस्यसंगथे+ ॥ आप्यायस्वमदिन्तमसोमविश्वेभिरंशुभिः । भवानःसुश्रवस्तमःसखावृधे+ ॥ संतेपयांसिसमुयंतुवाजाःसंवृष्ण्यान्यभिमातिषाहः । आप्यायमानोऽअमृतायसोमदिविश्रवांस्युत्तमानिधिष्व ॥ यातेधामानिहविषायजंतितातेविश्वापरिभूरस्तुयज्ञं । गयस्फानःप्रतरणःसुवीरोवीरहाप्रचरासोमदुर्यान् ॥ सोमोधेनुंसोमोऽअर्वंतमाशुंसोमोवीरंकर्मण्यंददाति । सादन्यंविदथ्यंसभेयंपितृश्रवणंयोददाशदस्मै ॥ २२ ॥ अषाळ्हंयुत्सुपृतनासुपप्रिंस्वर्षामप्सांवृजनस्यगोपां । भरेषुजांसुक्षितिंसुश्रवसंजयंतंत्वामनुमदेमसोम ॥ त्वमिमाऽओषधीःसोमविश्वास्त्वमपोऽअज

नयस्त्वंगाः । त्वमाततंथोर्व१ंतरिक्षंत्वंज्योतिषावितमोववर्थ ॥ देवेनंनोमनसादेवसोमरायोभागंसहसावन्नभियुध्य । मात्वातनदीशिषेवीर्यस्योभयेभ्यःप्रचिकित्सागविष्टौ ॥ २३ ॥ ( १।१४।८ ) एताऽउत्याऽउषसःकेतुमक्रतपूर्वेऽअर्धेरजसोभानुमंजते । निष्कृण्वानाऽआयुधानीवधृष्णवःप्रतिगावोरुषीर्यंतिमातरः ॥ उदपप्तन्नरुणाभानवोवृथास्वायुजोऽअरुषीर्गाऽअयुक्षत । अक्रन्नुषासोवयुनानिपूर्वथारुशंतंभानुमरुषीरशिश्रयुः ॥ अर्चंतिनारीरपसोनविष्टिभिःसमानेनयोजनेनापरावतः । इषंवहंतीःसुकृतेसुदानवेविश्वेदहयजमानायसुन्वते+ ॥ अधिपेशांसिवपतेनृतूरिवापोर्णुतेवक्षऽउस्रेवबर्जहं । ज्योतिर्विश्वस्मैभुवनायकृण्वतीगावोनव्रजंव्यु१षाऽआवर्तमः ॥ प्रत्यर्चीरुशदस्याऽअदर्शिवितिष्ठतेबाधतेकृष्णमभ्वं । स्वरुंनपेशोविदथेष्वंजन्चित्रंदिवोदुहिताभानुमश्रेत् ॥ २४ ॥ अतारिष्मतमसस्पारमस्योषाऽउच्छंतीवयुनाकृणोति । श्रियेछंदोनस्मयतेविभातीसुप्रतीकासौमनसायाजीगः ॥ भास्वतीनेत्रीसूनृतानांदिवस्तवेदुहितागोतमेभिः । प्रजावतोनृवतोऽअश्वबुध्यानुषोगोऽअग्राँऽउपमासिवाजान् ॥ उषस्तमश्यांयशसंसुवीरंदासप्रवर्गंरयिमश्वबुध्यं । सुदंससाश्रवसायाविभासिवाजप्रसूतासुभगेबृहंतं ॥ विश्वानिदेवीभुवनाभिचक्ष्याप्रतीचीचक्षुरुर्वियाविभाति । विश्वंजीवंचरसेबोधयंतीविश्वस्यवाचमविदन्मनायोः+ ॥ पुनःपुनर्जायमानापुराणीसमानंवर्णमभि

---

(१।१४।८) एताउत्याइत्यष्टादशर्चस्यसूक्तस्यराहूगणोगोतमउषाः अंत्यानांतिसृणामश्विनौ आद्याश्चतस्रोजगत्यः ततोष्टौत्रिष्टुभः अंत्याःषळुष्णिहः

ऋक्सं. अ.१अ.६ ॥ ४१ ॥

शुंभमाना । श्वघ्नीवकृत्नुर्विजंऽआमिनानामर्तस्यदेवीजरयंत्यायुः ॥ २५ ॥ व्यूर्ण्वतीदिवोऽअंताँऽअबोध्यपस्वसारं सनुतर्युयोति । प्रमिनतीमंनुष्यायुगानियोषांजारस्यंचक्षंसाविभांति ॥ पशूनचित्रासुभगाप्रथानासिंधुर्नक्षोदंऽउर्वि यान्व्यश्वैत् । अमिनतीदैव्यानिव्रतानिसूर्यस्यचेतिरश्मिभिर्दृशाना ॥ उषस्तच्चित्रमाभंरास्मभ्यंवाजिनीवति । येन तोकंचतनयंचधामंहे ॥ उषोऽअद्येहगोंमत्यश्वावतिविभावरि । रेवदस्मेव्युच्छसूनृतावति ॥ युक्ष्वाहिवाजिनीवत्य श्वाँऽअद्यारुणाँऽउषः । अथानोविश्वासौभगान्यावंह ॥ २६ ॥ अश्विनावर्तिरस्मदागोमंदस्राहिरंण्यवत् । अर्वाग्र थंसमनसानियंच्छतं ॥ यावित्थाश्लोकमादिवोज्योतिर्जनायचक्रथुः । आनऽऊर्जंवहतमश्विनायुवं ॥ एहदेवाम योभुवादस्राहिरंण्यवर्तनी । उषर्बुधोवहंतुसोमपीतये ॥ २७ ॥ ( १।१४।९ ) अग्नींषोमाविमंसुमेशृणुतंवृषणाहवं । प्रतिसूक्तानिहर्यतंभवतंदाशुषेमयः ॥ अग्नींषोमायोऽअद्यवामिदंवचः सपर्यति । तस्मैधत्तंसुवीर्यंगवांपोषंस्वश्व्यं ॥ अग्नींषोमायऽआहुंतिंयोवांदाशाद्धविष्कृतिं । सप्रजयासुवीर्यंविश्वमायुर्व्यश्नवत् ॥ अग्नींषोमाचेतितद्वीर्यंवांयदमु ष्णीतमवसंपणिंगाः । अवातिरतंबृसयस्यशेषोविंदतंज्योतिरेकंबहुभ्यः ॥ युवमेतानिदिविरोचनान्यग्निश्चसोमसक्रतू अधत्तं । युवंसिंधूँऽरभिशस्तेरवद्यादग्नींषोमावमुंचतंगृभीतान् ॥ आन्यंदिवोमातरिश्वाजभारामंथ्नादन्यंपरिश्येनो

मंडलं १ अनु. १४ ॥ ४१ ॥

(१।१४।९)अग्नीषोमाविति द्वादशर्चस्यसूक्तस्यराहूगणोगोतमोग्नीषोमौत्रिष्टुप् आद्यास्तिस्रोनुष्टुभो(ष्टमीजगतीवा)नवम्यादितिस्रोगायत्र्यः।

ऽअद्रेः । अग्नीषोमाब्रह्मणावावृधानोरुंयज्ञायचक्रथुरुलोकं+ ॥ २८ ॥ अग्नीषोमाहविषःप्रस्थितस्यवीतंहर्यतंवृषणा जुषेथां । सुशर्माणास्ववसाहिभूतमथाधत्तंयजमानायशंयोः ॥ योऽअग्नीषोमाहविषासपर्याद्देवद्रीचामनसायोघृतेन । तस्यव्रतंरक्षतंपातमंहसोविशेजनायमहिशर्मयच्छतं ॥ अग्नीषोमासवेदसासहूतीवनतंगिरः । संदेवत्राबभूवथुः ॥ अग्नीषोमावनेनवांयोवांघृतेनदाशति । तस्मैदीदयतंबृहत्+ ॥ अग्नीषोमाविमानिनोयुवंहव्याजुजोषतं । आयातमुप नःसचा ॥ अग्नीषोमापिपृतमर्वतोनऽआप्यायंतामुस्रियाहव्यसूदः । अस्मेबलानिमघवत्सुधत्तंकृणुतंनोऽअध्वरंश्रुष्टि मंतं ॥ २९ ॥ ( १।१५।१ ) इमंस्तोममर्हतेजातवेदसेरथमिवसंमहेमामनीषया । भद्राहिनःप्रमतिरस्यसंसद्यग्नेस ख्येमारिषामावयंतव ॥ यस्मैत्वमायजसेससाधत्यनर्वाक्षेतिदधतेसुवीर्यं । सतूताववनैनमश्नोत्यंहतिरग्ने० ॥ शकेमत्वा समिधंसाधयाधियस्त्वेदेवाहविरदंत्याहुतं । त्वमादित्याँऽआवहतान्ह्यु१श्मस्यग्ने० ॥ भरामेध्मंकृणवामाहवींषितेचि तयंतःपर्वणापर्वणावयं । जीवातवेप्रतरंसाधयाधियोग्ने० ॥ विशांगोपाऽअस्यचरंतिजंतवोद्विपच्चयदुतचतुष्पदक्तु भिः । चित्रःप्रकेतऽउषसोमहाँऽअस्यग्ने० ॥ ३० ॥ त्वमध्वर्युरुतहोतासिपूर्व्यःप्रशास्तापोताजनुषापुरोहितः । वि

---

( १।१५।१ ) इमंस्तोममितिषोडशर्चस्यसूक्तस्यकुत्सोग्निःपूर्वोदेवाइत्यस्यादेवाअग्निश्चतन्नोमित्रइत्यंत्यार्धर्चस्यमित्रवरुणादितिसिंधु- पृथिवीद्यावोजगतीअंत्येत्रिष्टुभौ । ( यद्दैवत्यंवासूक्तमितिपक्षेऽग्निरेवदेवता ) ।

श्वाविद्वाँऽआर्त्विज्याधीरपुष्यस्यग्ने० ॥ योविश्वतःसुप्रतीकःसदृङ्ङसिदूरेचित्संतळिदिवातिरोचसे । रात्र्याश्चिदंधोऽअतिदेवपश्यस्यग्ने० ॥ पूर्वोदेवाभवतुसुन्वतोरथोस्माकंशंसोऽअभ्यस्तुदूढ्यः । तदाजानीतोतपुष्यतावचोग्ने० ॥ वधैर्दुःशंसाँऽअपदूढ्योजहिदूरेवायेऽअंतिवाकेचिदत्रिणः । अथायज्ञायगृणतेसुगंकृध्यग्ने० ॥ यदयुक्थाऽअरुषारोहितारथेवातजूतावृषभस्येवतेरवः । आदिन्वसिवनिनोधूमकेतुनाग्ने० ॥ ३१ ॥ अधस्वनादुतबिभ्युःपतत्रिणोद्रप्सायत्तेयवसादोव्यस्थिरन् । सुगंतत्तेतावकेभ्योरथेभ्योग्ने० ॥ अयंमित्रस्यवरुणस्यधायसेवयातांमरुतांहेळोऽअद्भुतः । मृळासुनोभूत्वेषांमनःपुनरग्ने० ॥ देवोदेवानामसिमित्रोऽअद्भुतोवसुर्वसूनामसिचारुरध्वरे । शर्मन्त्स्यामतवसप्रथस्तमेग्ने० ॥ तत्तेभद्रंयत्समिद्धःस्वेदमेसोमाहुतोजरसेमृळयत्तमः । दधासिरत्नंद्रविणंचदाशुषेग्ने० ॥ यस्मैत्वंसुद्रविणोददाशोनागास्त्वमदितेसर्वताता । यंभद्रेणशवसाचोदयासिप्रजावताराधसातेस्याम ॥ सत्वमग्नेसौभगत्वस्यविद्वानस्माकमायुःप्रतिरेहदेव । तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीऽउतद्यौः ॥ ३२ ॥ ॥ इतिप्रथमाष्टकेषष्ठोऽध्यायः ॥ ६ ॥

षष्ठाध्यायेवर्गाः ३२ सूक्तानि १४ ऋचः १६३ ॥ त्यागः ॥ इंद्रायेदं.४१ मरुद्भ्यइदं.३४ विश्वेभ्योदेवेभ्यइदं.४ इंद्रापूषभ्यामिदं.१ विश्वेभ्योदेवेभ्यइदं.४ अदित्याइदं.१ विश्वेदेवेभ्यइदं.९ सोमायेदं.२३ उषसइदं.१५ अश्विभ्यामिदं.३ अग्नीषोमाभ्यामिदं.१२ अग्नयइदं.७देवाग्निभ्यामिदं (देवेभ्योऽग्निभ्यइदं.) अग्नयइदं.७ अग्निमित्रावरुणादितिसिंधुपृथिवीद्युभ्यइदं.१ ॥ इतिप्रथमेषष्ठोऽध्यायः ॥ ६ ॥

द्वेएकादशौषसायवाग्नयेसप्रत्नथानवद्द्रविणोदसेंपनोष्टौशुचयेगायत्रंवैश्वानरस्यतृचंवैश्वानरीयंजातवेदसएका
जातवेदस्यमेतदादीन्येकभूयांसिसूक्तसहस्रमेतत्तुकश्यपार्षंसयोवृषैकोनांवार्षागिराऋज्राश्वांबरीषंसहदेवभय
मानसुराधसः प्रमंदिनएकादशकुत्संश्चतुस्त्रिष्टुबंतंमाद्यागर्भस्त्राविण्युपनिषदिंमांतेत्यात्रिष्टुप्षत्तेष्टौयोनिर्नवचंद्र
माएकोनाप्त्यस्त्रितोवांवैश्वदेवंहिपांक्तमंत्यात्रिष्टुंबष्टमीमहाबृहतीयवमध्यैंद्रंमित्रंसप्तत्रिष्टुबंतंयज्ञस्तृचंयइंद्रा
ग्नीसप्तोनैंद्राग्नंतुविह्यष्टौततंनवाभवंतुपंचम्यंत्येत्रिष्टुभौतक्षन्पंचांत्यात्रिष्टुंबीळेपंचाधिकाश्विनंमाद्यौपादौलिङ्गो
क्तदेवतांवंत्येत्रिष्टुभौ ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥

हरिःओ३म् ॥ ( १।१५।२ ) द्वेविरूपेचरतःस्वर्थेऽअन्यान्यांवत्समुपंधापयेते । हरिंरन्यस्यांभवंतिस्वधावान्छु
क्रोऽअन्यस्यांददृशेसुवर्चाः ॥ दशेमंत्वष्टुर्जनयंतगर्भमतंद्रासोयुवतयोविभृत्रं । तिग्मानीकंस्वयशसंजनेषुविरोचमानं
परिंषींनयंति ॥ त्रीणिजानापरिंभूषंत्यस्यसमुद्रऽएकंदिव्येकमप्सु । पूर्वामनुप्रदिशंपार्थिवानामृतून्प्रशासद्विदधावनु
ष्टु+ ॥ कऽइमंवोंनिण्यमाचिकेतवत्सोमातृर्जनयतस्वधाभिः । बह्वीनांगर्भोऽअपसामुपस्थान्महान्कविर्निश्चरतिस्वधा
वान् ॥ आविष्ट्योवर्धतेचारुरासुजिह्मानांमूर्ध्वःस्वयशाऽउपस्थे । उभेत्वष्टुर्बिभ्यतुर्जायमानात्प्रतीचीसिंहंप्रतिजोषयेते

( १।१५।२ ) द्वेविरूपेइत्येकादशर्चस्यसूक्तस्यकुत्सउषोग्निस्त्रिष्टुप् । ( इतआरभ्यजातवेदसइत्यंतंशुद्धोग्निर्वा ) ।

॥ १ ॥ उभेभद्रेजोषयेतेनमेनेगावोनवाश्राऽउपतस्थुरेवैः । सदक्षाणांदक्षपतिर्बभूवांजंतियंदक्षिणतोहविर्भिः ॥ उद्यं यमीतिसवितेवबाहूऽउभेसिचौयततेभीमऽऋंजन् । उच्छुक्रमत्कमजतेसिमस्मान्नवामातृभ्योवसनाजहाति ॥ त्वेषंरूपं कृणुतऽउत्तरंयत्संपृंचानःसदनेगोभिरद्भिः । कविर्बुध्नंपरिमर्मृज्यतेधीःसादेवतातासमितिर्बभूव ॥ उरुतेज्रयःपर्येति बुध्नंविरोचमानंमहिषस्यधाम । विश्वेभिरग्नेस्वयंशोभिरिद्धोदब्धेभिःपायुभिःपाह्यस्मान्+ ॥ धन्वन्त्स्रोतःकृणुतेगा तुमूर्मिंशुक्रैरूर्मिभिरभिनक्षतिक्षां । विश्वासनानिजठरेषुधत्तेंतर्नवासुचरतिप्रसूषु ॥ एवानोऽअग्नेसमिधावृधानोरेव त्पावकश्रवसेविभाहि । तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीऽउतद्यौः+ ॥ २ ॥ ( १।१५।२ ) सप्रत्नथा सहसाजायमानःसद्यःकाव्यानिबळधत्तविश्वा । आपश्चमित्रंधिषणाचसाधन्देवाऽअग्निंधारयन्द्रविणोदां ॥ सपूर्वं यानिविदाकव्यतायोरिमाःप्रजाऽअंजनयन्मनूनां । विवस्वताचक्षसाद्यामपश्चदेवा० ॥ तमीळतप्रथमंयज्ञसाधंविश ऽआरीराहुतमृंजसानं । ऊर्जःपुत्रंभरतंसृप्रदानुंदेवा० ॥ समातरिश्वापुरुवारपुष्टिर्विदद्गातुंतनयायस्वर्वित् । विशां गोपाजनितारोदस्योर्देवा० ॥ नक्तोषासावर्णमामेम्यानेधापयेतेशिशुमेकंसमीची । द्यावाक्षामारुक्मोऽअंतर्विभातिदे वा० ॥ ३ ॥ रायोबुध्नःसंगमनोवसूनांयज्ञस्यकेतुर्मन्मसाधनोवेः । अमृतत्वंरक्षमाणासऽएनंदेवा० ॥ नूचपुराचसदनं



( १।१५।३ ) सप्रत्नथेतिनवर्चस्यसूक्तस्यकुत्सोद्रविणोदाअग्निस्त्रिष्टुप् ।

रयीणांजातस्यंचजायमानस्यचक्षां । सतश्चगोपांभवतश्चभूरेर्देवा० ॥ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्य
प्रयंसत् । द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदीर्घमायुः ॥ एवानोऽअग्नेसमिधावृधानोरेवत्पावकश्रवसेविभा
हि । तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीऽउतद्यौः ॥ ४ ॥ ( १।१५।४ ) अपनःशोशुचदघमग्नेशुशु
ग्ध्यारयिं । अपनःशोशुचदघं+ ॥ सुक्षेत्रियासुगातुयावसूयाचयजामहे । अपनः० ॥ प्रयद्भंदिष्ठऽएषांप्रास्माकासश्च
सूरयः । अपनः० ॥ प्रयत्तेऽअग्नेसूरयोजायेमहिप्रतेवयं । अपनः० ॥ प्रयदग्नेःसहस्वतोविश्वतोयंतिभानवः । अप
नः० ॥ त्वंहिविश्वतोमुखविश्वतःपरिभूरसि । अपनः० ॥ द्विषोनोविश्वतोमुखातिनावेवपारय । अपनः० ॥ सनः
सिंधुमिवनावयातिपर्षास्वस्तये । अपनः० ॥ ५ ॥ ( १।१५।५ ) वैश्वानरस्यसुमतौस्यामराजाहिकंभुवनानामभि
श्रीः । इतोजातोविश्वमिदंविचष्टेवैश्वानरोयततेसूर्येण ॥ पृष्टोदिविपृष्टोऽअग्निःपृथिव्यांपृष्टोविश्वाऽओषधीराविवे
श । वैश्वानरःसहसापृष्टोऽअग्निःसनोदिवासरिषःपातुनक्तं ॥ वैश्वानरतवतत्सत्यमस्त्वस्मान्रायोमघवानःसचंतां ।
तन्नोमित्रो० ॥ ६ ॥ ( १।१५।६ ) जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः । सनःपर्षदतिदुर्गाणिविश्वा

( १।१५।४ ) अपनइत्यष्टर्चस्यसूक्तस्यकुत्सःशुचिरग्निर्गायत्री । ( १।१५।५ ) वैश्वानरस्येतितृचस्यसूक्तस्यकुत्सोवैश्वानरोग्निस्त्रिष्टुप् ।
( १।१५।६ ) जातवेदसइत्येकर्चस्यसूक्तस्यमारीचःकश्यपोजातवेदाग्निस्त्रिष्टुप् ।

नावेवसिंधुंदुरितात्यग्निः ॥ ७ ॥ ( १।१५।७ ) सयोवृषावृष्ण्येभिःसमोकामहोदिवःपृथिव्याश्चसम्राट् । सतीनसत्वाहव्योभरेषुमरुत्वान्नोभवत्विंद्रऽऊती ॥ यस्यानाप्तःसूर्यस्येवयामोभरेभरेवृत्रहाशुष्मोऽअस्ति । वृषन्तमःसखिभिःस्वेभिरेवैर्मरु० ॥ दिवोनयस्यरेतसोदुघानाःपंथासोयंतिशवसापरीताः । तरद्द्वेषाःसासहिःपौंस्येभिर्मरु० ॥ सोऽअंगिरोभिरंगिरस्तमोभूद्वृषावृषभिःसखिभिःसखासन् । ऋग्मिभिर्ऋग्मीगातुभिर्ज्येष्ठोमरु० ॥ ससूनुभिर्नरुद्रेभिर्ऋभ्वानृषाह्येसासह्वाँऽअमित्रान् । सनीळेभिःश्रवस्यानितूर्वन्मरु० ॥ ८ ॥ समन्युमीःसमदनस्यकर्तास्माकेभिर्नृभिःसूर्यंसनत् । अस्मिन्नहन्त्सत्पतिःपुरुहूतोमरु० ॥ तमूतयोरणयन्छूरसातौतंक्षेमस्यक्षितयःकृण्वतत्रां । सविश्वस्यकरुणस्येशऽएकोमरु० ॥ तमप्संतशवसऽउत्सवेषुनरोनरमवसेतंधनाय । सोऽअंधेचित्तमसिज्योतिर्विदन्मरु० ॥ ससव्येनयमतिव्राधतश्चित्सदक्षिणेसंगृभीताकृतानि । सकीरिणाचित्सनिताधनानिमरु० ॥ सग्रामेभिःसनिताסरथेभिर्विदेविश्वाभिःकृष्टिभिर्न्व१द्य । सपौंस्येभिरभिभूरशस्तीर्मरु० ॥ ९ ॥ सजामिभिर्यत्समजातिमीह्ळेजामिभिर्वापुरुहूतऽएवैः । अपांतोकस्यतनयस्यजेषेमरु० ॥ सवज्रभृद्दस्युहाभीमऽउग्रःसहस्रचेताःशतनीथऽऋभ्वा । चम्रीषोनशवसापांचज



---

( १।१५।७ ) सयोवृषेत्येकोनविंशत्यृचस्यसूक्तस्यवार्षागिराऋज्राश्वांवरीषसहदेवभयमानसुराधसइंद्रस्त्रिष्टुप् । ( इतआरभ्यमरुत्वानिंद्रइतिकश्चित् । तन्न । सर्वानुक्रमादिभिरनादृतत्वात् । )

न्योमरु० ॥ तस्यवज्रः क्रंदतिस्मत्स्वर्षादिवोनत्वेषोरवथः शिमीवान् । तंसंचंतेसनयस्तंधनानिमरु० ॥ यस्याजस्रंशवसामानमुक्थंपरिभुजद्रोदसीविश्वतःसीं । सपारिषत्क्रतुभिर्मंदसानोमरु० ॥ नयस्यदेवादेवतानमर्ताऽआपश्चनशवसोऽअंतमापुः । सप्ररिक्कात्वक्षसाक्ष्मोदिवश्चमरु० ॥ १० ॥ रोहिच्छ्यावासुमदंशुर्ललामीर्द्युक्षारायऽऋज्राश्वस्य । वृषण्वंतंबिभ्रतीधूर्षुरथंमंद्राचिकेतनाहुषीषुविक्षु ॥ एतत्त्यत्तऽइंद्रवृष्णंऽउक्थंवार्षागिराऽअभिगृणंतिराधः । ऋज्राश्वः प्रष्टिभिरंबरीषः सहदेवोभयमानः सुराधाः ॥ दस्यून्छिम्यूँश्चपुरुहूतऽएवैर्हत्वापृथिव्यांशर्वानिबर्हीत् । सनत्क्षेत्रंसखिभिः श्वित्न्येभिः सनत्सूर्यसनदपः सुवज्रः ॥ विश्वाहेंद्रोऽअधिवक्तानोऽअस्त्वपरिह्वृताः सनुयामवाजं । तन्नोमित्रो० ॥ ११ ॥ ( ११५।८ ) प्रमंदिनेपितुमदर्चतावचोयः कृष्णगर्भानिरहन्नृजिश्वना । अवस्यवोवृषणंवज्रदक्षिणंमरुत्वंतंसख्यायहवामहे ॥ योव्यंसंजाहृषाणेनमन्युनायः शंबरंयोऽअहन्पिप्रुमव्रतं । इंद्रोयः शुष्णमशुषंन्यावृणङ्मरु० ॥ यस्यद्यावापृथिवीपौंस्यंमहद्यस्यव्रतेवरुणोयस्यसूर्यः । यस्येंद्रस्यसिंधवः सश्चतिव्रतंमरु० ॥ योऽअश्वानांयोगवांगोपतिर्वशीयऽआरितः कर्मणिकर्मणिस्थिरः । वीळोश्चिदिंद्रोयोऽअसुन्वतोवधोमरु० ॥ योविश्वस्यजगतः प्राणतस्पतिर्योब्रह्मणेप्रथमोगाऽअविंदत् । इंद्रोयोदस्यूँरधराँऽअवातिरन्मरु० ॥ यः शूरेभिर्हव्योयश्चभीरुभिर्योधावद्भिर्हूयतेयश्चजिग्यु

---

( ११५।८ ) प्रमंदिनइत्येकादशर्चस्यसूक्तस्यकुत्सइंद्रोजगतीअंत्याश्चतस्रस्त्रिष्टुभः । ( आद्यागर्भस्राविणीतिगुणः ) ।

भिः । इंद्रंयंविश्वाभुवनाभिसंदधुर्मरु० ॥ १२ ॥ रुद्राणामेतिप्रदिशाविचक्षणोरुद्रेभिर्योषातनुतेपृथुज्रयः । इंद्रंम
नीषाऽअभ्यर्चतिश्रुतंमरु० ॥ यद्वामरुत्वःपरमेसधस्थेयद्वावमेवृजनेमादयासे । अतऽआयाह्यध्वरंनोऽअच्छात्वाया
हविश्चकृमासत्यराधः ॥ त्वायेंद्रसोमंसुषुमासुदक्षत्वायाहविश्चकृमाब्रह्मवाहः । अधानियुत्वःसगणोमरुद्भिरस्मिन्य
ज्ञेबर्हिषिमादयस्व ॥ मादयस्वहरिभिर्येतऽइंद्रविष्यस्वशिप्रेविसृजस्वधेने । आत्वासुशिप्रहरयोवहंतूशन्हव्यानिप्रति
नोजुषस्व ॥ मरुत्स्तोत्रस्यवृजनस्यगोपावयमिंद्रेणसनुयामवाजं । तन्नोमित्रो० ॥ १३ ॥ ( १।१५।९ ) इमांतेधियंप्र
भरेमहोमहीमस्यस्तोत्रेधिषणायत्तऽआनजे । तमुत्सवेचप्रसवेचसासहिमिंद्रंदेवासःशवसामदन्ननु ॥ अस्यश्रवोनद्यः
सप्तबिभ्रतिद्यावाक्षामापृथिवीदर्शतंवपुः । अस्मेसूर्याचंद्रमसाभिचक्षेश्रद्धेकमिंद्रचरतोवितर्तुरं+ ॥ तंस्मारथंमघव
न्प्रावसातयेजैत्रंयंतेऽअनुमदामसंगमे । आजानऽइंद्रमनसापुरुष्टुतत्वायद्भ्योमघवञ्छर्मयच्छनः ॥ वयंजयेमत्वयायु
जावृतमस्माकमंशमुदवाभरेभरे । अस्मभ्यमिंद्रवरिवःसुगंकृधिप्रशत्रूणांमघवन्वृष्ण्यारुज ॥ नानाहित्वाहवमानाज
नाऽइमेधनानांधर्तरवसाविपन्यवः । अस्माकंस्मारथमातिष्ठसातयेजैत्रंहींद्रनिभृतंमनस्तव ॥ १४ ॥ गोजिताबाहूऽ
अमितक्रतुःसिमःकर्मन्कर्मञ्छतमूतिःखजंकरः । अकल्पऽइंद्रःप्रतिमानमोजसाथाजनाविह्वयंतेसिषासवः ॥ उत्तेश



---

( १।१५।९ ) इमांतइत्येकादशर्चस्यसूक्तस्यकुत्सइंद्रोजगतीअंत्यात्रिष्टुप् ।

तान्मघवन्नुच्चभूयंसऽउत्सहस्रांद्रिरिचेकृष्टिषुश्रवः । अमात्रंत्वाधिषणातित्विषेमह्यधावृत्राणिजिघ्नसेपुरंदर ॥ त्रिविष्टिधातुप्रतिमानमोजंसस्तिस्रोभूमीर्नृपतेत्रीणिरोचना । अतीदंविश्वंभुवनंववक्षिथाशत्रुरिंद्रजनुषासनादसि ॥ त्वांदेवेषुप्रथमंहवामहेत्वंबभूथपृतनासुसासहिः । सेमंनःकारुमुपमन्युमुद्भिदमिंद्रःकृणोतुप्रसवेरथंपुरः+ ॥ त्वंजिगेथनधनारुरोधिथार्भेष्वाजामघवन्महत्सुच । त्वामुग्रमवसेसंशिशीमस्यथानऽइंद्रहवनेषुचोदय ॥ विश्वाहेंद्रोऽअधिवक्तानोऽअस्त्वपरिह्वृताःसनुयामवाजं । तन्नोमित्रो० ॥ १५ ॥ (१।१५।१०) तत्तऽइंद्रियंपरमंपराचैरधारयंतकवयःपुरेदं । क्षमेदमन्यद्दिव्य१न्यदस्यसमीपृच्यतेसमनेवकेतुः+ ॥ सधारयत्पृथिवींपप्रथच्चवज्रेणहत्वानिरपःससर्ज । अहन्नहिमभिनद्रौहिणंव्यहन्व्यंसंमघवाशचीभिः ॥ सजातूभर्माश्रद्दधानऽओजःपुरोविभिंदन्नचरद्विदासीः । विद्वान्वज्रिन्दस्यवेहेतिमस्यार्यंसहोवर्धयाद्युम्नमिंद्र ॥ तदूचुषेमानुषेमायुगानिकीर्तेन्यंमघवानामबिभ्रत् । उपप्रयन्दस्युहत्यायवज्रीयद्धसूनुःश्रवसेनामदधे+ ॥ तदस्येदंपश्यताभूरिपुष्टंश्रदिंद्रस्यधत्तनवीर्याय । सगाऽअविंदत्सोऽअविंददश्वान्त्सऽओषधीःसोऽअपःसवनानि ॥ १६ ॥ भूरिकर्मणेवृषभायवृष्णेसत्यशुष्मायसुनवामसोमं । यऽआदृत्यापरिपंथीवशूरोयज्वनोविभजन्नेतिवेदः ॥ तदिंद्रप्रेववीर्यंचकर्थयत्ससंतंवज्रेणाबोधयोहिं । अनुत्वापत्नीर्हृषितंवयश्चविश्वेदेवासोऽ

---

(१।१५।१०) तत्तइत्यष्टर्चस्यसूक्तस्यकुत्सइंद्रस्त्रिष्टुप् ।

अमदन्ननुत्वा ॥ शुष्णंपिप्रुंकुयवंवृत्रमिंद्रयदावधीर्विपुरःशंबरस्य । तन्नोमित्रो० ॥ १७ ॥ ( १।१५।११ ) योनिष्ट ऽइंद्रनिषदेंऽअकारितमानिषींदस्वानोनार्वा । विमुच्यावयोवसायाश्वान्दोषावस्तोर्वहीयसःप्रपित्वे+ ॥ ओत्येनरऽइं द्रमूतयेगुर्नूचित्तान्त्सद्योऽअध्वनोजगम्यात् । देवासोमन्युंदासस्यश्चम्नन्तेनऽआवक्षन्त्सुवितायवर्णं ॥ अवत्मनाभर तेकेतवेदाऽअवत्मनाभरतेफेनमुदन् । क्षीरेणस्नातःकुयवस्ययोषेहतेतेस्यातांप्रवणेशिफायाः ॥ युयोपनाभिरुपरस्या योःप्रपूर्वाभिस्तिरतेराष्टिशूरः । अंजसीकुलिशीवीरपत्नीपयोहिन्वानाऽउदभिर्भरंते ॥ प्रतियत्स्यानीथादर्शिदस्योरो कोनाच्छासदनंजानतीगात् । अधस्मानोमघवन्चर्कृतादिन्मानोमघेवनिष्षपीपरादाः ॥ १८ ॥ सत्वंनऽइंद्रसूर्येसोऽ अप्स्वनागास्त्वऽआभंजजीवशंसे । मांतरांभुजमारीरिषोनःश्रद्धितंतेवहतऽइंद्रियाय ॥ अधामन्येश्रत्तेऽअस्माऽअ धायिवृषाचोदस्वमहतेधनाय । मानोऽअकृतेपुरुहूतयोनाविंद्रक्षुध्यद्भ्योवयऽआसुतिंदाः ॥ मानोवधीरिंद्रमापरादा मानःप्रियाभोजनानिप्रमोषीः । आंडामानोमघवञ्छक्रनिर्भेन्मानःपात्राभेत्सहजानुषाणि ॥ अर्वाङेहिसोमकामंत्वा हुरयंसुतस्तस्यंपिबामदाय । उरुव्यचाजठरऽआवृषस्वपितेवनःशृणुहिहूयमानः ॥ १९ ॥ ( १।१५।१२ ) चंद्रमाऽ



---

( १।१५।११ ) योनिष्टइतिनवर्चस्यसूक्तस्यकुत्सइंद्रस्त्रिष्टुप् । ( १।१५।१२ ) चंद्रमाइत्येकोनविंशत्यृचस्यसूक्तस्यास्यत्रितोविश्वेदेवाः पंक्तिःअंत्यात्रिष्टुप्अष्टमीमहाबृहतीयवमध्या । (सूक्तभेदप्रयोगपक्षेतुआद्यायाविश्वेदेवाःद्वितीयायारोदसीतृतीयायाविश्वेदेवाःचतुर्थ्याअग्नि

अप्स्वं१तरासुपर्णोधावतेदिवि । नवोहिरण्यनेमयःपदंविंदंतिविद्युतोवित्तंमेऽअस्यरोदसी ॥ अर्थमिद्वाऽउंऽअर्थिन
ऽआजायायुवतेपतिं । तुंजातेवृष्ण्यंपयःपरिदायरसंदुहेवित्तं० ॥ मोषुदेवाऽअदःस्वं१रवपादिदिवस्परि । मासोम्य
स्यशंभुवःशूनेभूमकदाचनवित्तं० ॥ यज्ञंपृच्छाम्यवमंसतद्दूतोविवोचति । क्वंऽऋतंपूर्व्यंगतंकस्तद्बिभर्तिनूतनोवित्तं० ॥
अमीयेदेवाःस्थनत्रिष्वारोचनेदिवः । कद्वंऽऋतंकदनृतंक्वंप्रत्नावऽआहुतिर्वित्तं० ॥ २० ॥ कद्वंऽऋतस्यधर्णसिकद्व
रुणस्यचक्षणं । कदर्यम्णोमहस्पथातिक्रामेमदूढ्योवित्तं० ॥ अहंसोऽअस्मियःपुरासुतेवदामिकानिचित् । तंमाव्यं
त्याध्यो३वृकोनतृष्णजंमृगंवित्तं० ॥ संमातपंत्यभितःसपत्नीरिवपर्शवः । मूषोनशिश्नाव्यदंतिमाध्यःस्तोतारंतेशतक्र
तोवित्तं० ॥ अमीयेसप्तरश्मयस्तत्रामेनाभिरातता । त्रितस्तद्वेदाप्त्यःसजामित्वायरेभतिवित्तं० ॥ अमीयेपंचोक्षणो
मध्येतस्थुर्महोदिवः । देवत्रानुप्रवाच्यंसध्रीचीनानिवावृतुर्वित्तं० ॥ २१ ॥ सुपर्णाऽएतऽआसतेमध्यऽआरोधनेदि
वः । तेसेधंतिपथोवृकंतरंतंयह्वतीरपोवित्तं० ॥ नव्यंतदुक्थ्यंहितंदेवासःसुप्रवाचनं । ऋतमर्षंतिसिंधवःसत्यंतातान
सूर्योवित्तं० ॥ अग्नेतवत्यदुक्थ्यंदेवेष्वस्त्याप्यं । सनःसत्तोमनुष्वदादेवान्यक्षिविदुष्टरोवित्तं० ॥ सत्तोहोतामनुष्वदा

---

रोदस्यःततस्तिसृणांविश्वेदेवाःअष्टम्याइंद्ररोदस्यःनवम्याःसूर्यरश्मिरोदस्यःदशम्याविश्वेदेवाःएकादश्याःसूर्यरश्मिरोदस्यःद्वादश्याविश्वेदे
वाःततोद्वयोरग्निरोदसीततएकस्यावरुणरोदस्यःततोद्वयोर्विश्वेदेवाःततएकस्यारोदसीअंत्यायाविश्वेदेवाः । उत्तरसूक्तद्वयेविश्वेदेवाएव ) ।

ऋक्सं. मंडलं १

अ.१अ.७ अनु. १६

॥ ४७ ॥

देवाँऽअच्छाविदुष्टरः । अग्निर्हव्यासुषूदतिदेवोदेवेषुमेधिरोवित्तं० ॥ ब्रह्माकृणोतिवरुणोगातुविदंतमीमहे । व्यूर्णोतिहृदामतिंनव्योजायतामृतंवित्तं० ॥ २२ ॥ असौयःपंथाऽआदित्योदिविप्रवाच्यंकृतः । नसदेवाऽअतिक्रमेतंमर्तासोनपश्यथवित्तं० ॥ त्रितःकूपेवहितोदेवान्हवतऽऊतये । तच्छुश्रावबृहस्पतिःकृण्वन्नंहूरणादुरुवित्तं० ॥ अरुणोमासकृद्वृकःपथायंतंददर्शहि । उज्जिहीतेनिचाय्यातष्टेवपृष्ट्यामयीवित्तं० ॥ एनांगूषेणवयमिंद्रवंतोभिष्यामवृजनेसर्ववीराः । तन्नोमित्रो० ॥ २३ ॥ ( १।१६।१ ) इंद्रंमित्रंवरुणमग्निमूतयेमारुतंशर्धोऽअदितिंहवामहे । रथंनदुर्गाद्वसवःसुदानवोविश्वस्मान्नोऽअंहसोनिष्पिपर्तन ॥ तऽआदित्याऽआगंतासर्वतातयेभूतदेवावृत्रतूर्येषुशंभुवः । रथंन० ॥ अवंतुनःपितरःसुप्रवाचनाऽउतदेवीदेवपुत्रेऽऋतावृधा । रथंन० ॥ नराशंसंवाजिनंवाजयन्निहक्षयद्वीरंपूषणंसुम्नैरीमहे । रथंन० ॥ बृहस्पतेसदमिन्नःसुगंकृधिशंयोर्यत्तेमनुर्हितंतदीमहे । रथंन० ॥ इंद्रंकुत्सोवृत्रहणंशचीपतिंकाटेनिबाह्ळऽऋषिरह्वदूतये । रथंन० ॥ देवैर्नोदेव्यदितिर्निपातुदेवस्त्राताऽत्रायतामप्रयुच्छन् । तन्नोमित्रो० ॥ २४ ॥ ( १।१६।२ ) यज्ञोदेवानांप्रत्येतिसुम्नमादित्यासोभवतामृळयंतः । आवोर्वाचीसुमतिर्ववृत्यादंहोश्चिद्यावरिवोवित्त

॥ ४७ ॥

( १।१६।१ ) इंद्रंमित्रमितिसप्तर्चस्यसूक्तस्यकुत्सोविश्वेदेवाजगतीअंत्यात्रिष्टुप् । ( १।१६।२ ) यज्ञोदेवानामितितृचस्यसूक्तस्य कुत्सोविश्वेदेवास्त्रिष्टुप् ।

रासत् ॥ उपनोदेवाऽअवसागमंत्वंगिरसांसामभिःस्तूयमानाः । इंद्रऽइंद्रियैर्मरुतोमरुद्धिरादित्यैर्नोऽअदितिःशर्मयंसत् ॥ तन्नऽइंद्रस्तद्वरुणस्तदग्निस्तदर्यमातत्सविताचनोधात् । तन्नोमित्रो० ॥ २५ ॥ ( १।१६।३ ) यऽइंद्राग्नीचित्रतमोरथोवामभिविश्वानिभुवनानिचष्टे । तेनायातंसरथंतस्थिवांसाथासोमस्यपिबतंसुतस्य ॥ यावदिदंभुवनंविश्वमस्त्युरुव्यचावरिमतागभीरं । तावाँऽअयंपातवेसोमोऽअस्त्वरमिंद्राग्नीमनसेयुवभ्यां ॥ चक्राथेहिसध्र्य१ङ्नामभद्रंसध्रीचीनावृत्रहणाऽउतस्थः । ताविंद्राग्नीसध्र्यंचानिषद्यावृष्णःसोमस्यवृषणावृषेथां ॥ समिद्धेष्वग्निष्वानजानायतस्रुचाबर्हिरुतिस्तिराणा । तीव्रैःसोमैःपरिषिक्तेभिरर्वागेंद्राग्नीसौमनसाययातं ॥ यानींद्राग्नीचक्रथुर्वीर्याणियानिरूपाण्युतवृष्ण्यानि । यावांप्रत्नानिसख्याशिवानितेभिःसोमस्यपिबतंसुतस्य ॥ २६ ॥ यदब्रवंप्रथमंवांवृणानो३यंसोमोऽअसुरैर्नोविहव्यः । तांसत्यांश्रद्धामभ्याहियातमथासोमस्यपिबतंसुतस्य ॥ यदिंद्राग्नीमदथःस्वेदुरोणेयद्ब्रह्मणिराजनिवायजत्रा । अतःपरिवृषणावाहियातमथा० ॥ यदिंद्राग्नीयदुषुतुर्वशेषुयद्द्रुह्युष्वनुषुपूरुषुस्थः । अतःपरिवृषणावाहियातमथा० ॥ यदिंद्राग्नीऽअवमस्यांपृथिव्यांमध्यमस्यांपरमस्यामुतस्थः । अतःपरिवृषणावाहियातमथा० ॥ यदिंद्राग्नीपरमस्यांपृथिव्यांमध्यमस्यामवमस्यामुतस्थः । अतःपरिवृषणावाहियातमथा० ॥ यदिंद्राग्नीदिविष्ठोयत्पृथि

---

( १।१६।३ ) यइंद्राग्नीइतित्रयोदशर्चस्यसूक्तस्यकुत्सइंद्राग्नीत्रिष्टुप् ।

व्यांयतपर्वतेष्वोषधीष्वप्सु । अतःपरिवृषणावाहियातमथा० ॥ यदिंद्राग्नीऽउदितासूर्यस्यमध्येदिवःस्वधयामादयेथे । अतःपरिवृषणावाहियातमथा० ॥ एवेंद्राग्नीपपिवांसासुतस्यविश्वास्मभ्यंसंजयतंधनानि । तन्नोमित्रो० ॥ २७ ॥ ( १।१६।४ ) विह्यख्यंमनसावस्यऽइच्छन्निंद्राग्नीज्ञासऽउतवासजातान् । नान्यायुवत्प्रमतिरस्तिमह्यंसवांधियंवाजयंतीमतक्षं ॥ अश्रवंहिभूरिदावत्तरावांविजामातुरुतवांघास्यालात् । अथासोमस्यप्रयतीयुवभ्यामिंद्राग्नीस्तोमंजनयामिनव्यं ॥ माच्छेद्मरश्मीँरितिनाधमानाःपितॄणांशक्तीरनुयच्छमानाः । इंद्राग्निभ्यांकंवृषणोमदंतिताह्यद्रीधिषणायाऽउपस्थे ॥ युवाभ्यांदेवीधिषणामदायेंद्राग्नीसोममुशतीसुनोति । तावश्विनाभद्रहस्तासुपाणीऽआधावतंमधुनापृङ्क्तमप्सु ॥ युवामिंद्राग्नीवसुनोविभागेतवस्तमाशुश्रववृत्रहत्ये । तावासद्यावर्हिषियज्ञेऽअस्मिन्प्रचर्षणीमादयेथांसुतस्य ॥ २८ ॥ प्रचर्षणिभ्यःपृतनाहवेषुप्रपृथिव्यारिरिचाथेदिवश्च । प्रसिंधुभ्यःप्रगिरिभ्योमहित्वाप्रेंद्राग्नीविश्वाभुवनात्यन्या ॥ आभरतंशिक्षतंवज्रबाहूऽअस्माँऽइंद्राग्नीऽअवतंशचीभिः । इमेनुतेरश्मयःसूर्यस्ययेभिःसपित्वंपितरोनऽआसन् ॥ पुरंदराशिक्षतंवज्रहस्तास्माँऽइंद्राग्नीऽअवतंभरेषु । तन्नोमित्रो० ॥ २९ ॥ ( १।१६।५ ) ततंमेऽअपस्तदुतायतेपुनःस्वादिष्ठाधीतिरुचथायशस्यते । अयंससुद्रऽइहविश्वदेव्यःस्वाहाकृतस्यसमुतृप्णुतऽऋभवः ॥ आभोगयं

( १।१६।४ ) विह्यख्यमित्यष्टर्चस्यसूक्तस्यकुत्सइंद्राग्नीत्रिष्टुप् । ( १।१६।५ ) ततंमइतिनवर्चस्यसूक्तस्यकुत्सऋभवोजगतीपंचस्यंत्येत्रिष्टुभौ ।

प्रयदि॒च्छंत॒ऽऐत॒नापाका॒ःप्रांचो॒मम॒केचि॑दा॒पयः । सौध॑न्वनासश्चरि॒तस्य॑भू॒मनाग॑च्छतसवि॒तुर्दा॒शुषो॑गृ॒हं ॥ तत्सवि॒तावो॑मृत॒त्वमासु॑व॒दगो॑ह्यं॒यच्छ्र॒वय॑न्त॒ऽऐत॑न । त्यंचि॑च्चम॒सम॒सु॑रस्य॒भक्ष॑ण॒मेकं॒संत॑मकृणुता॒चतु॑र्वयं ॥ वि॒ष्ट्वीशमी॑तरणि॒त्वेन॑वा॒घतो॒मर्ता॑स॒ःसंतो॑ऽअमृत॒त्वमा॑नशुः । सौध॒न्व॒नाऽऋ॒भव॒ःसूर॑चक्षसःसंवत्स॒रेसम॑पृच्यंतधी॒तिभिः ॥ क्षेत्र॑मिव॒विम॑मु॒स्तेज॑नेन॒ऽएकं॒पात्र॑मृ॒भवो॒जेह॑मानं । उप॑स्तुताऽउप॒मंनाध॑माना॒ऽअम॑र्त्येषु॒श्रव॑ऽइ॒च्छमा॑नाः ॥ ३० ॥ आम॑नी॒षाम॒न्तरि॑क्षस्य॒नृभ्य॑ःस्रु॒चेव॑घृ॒तंजु॑हवामवि॒द्मना॑ । तर॒णि॒त्वाये॒पि॒तुर॑स्यसश्चि॒रऽऋ॒भवो॑वाजमरुहन्दि॒वोरजः ॥ ऋ॒भुर्न॒ऽइंद्रः शव॑सा॒नवी॑यानृ॒भुर्वाजे॑भि॒र्वसु॑भि॒र्वसु॑र्द॒दिः । युष्माकं॑देवा॒ऽअव॒साह॑नि॒प्रिये३॒ऽभि॒ति॑ष्ठेमपृत्सु॒तीरसु॑न्वतां ॥ निश्चर्म॑णऽऋभ॒वोगाम॑पिंशत॒सं॑वत्सेना॑सृजतामा॒तरं॑पुनः । सौध॑न्वनासःस्वप॒स्या॑नरो॒जिव्री॑युवा॑नापि॒तरा॑कृणोतन ॥ वाजे॑भि॒र्नो॑वाज॑सातावविड्ढ्यृभुमाँ॑ऽइंद्रचि॒त्रमा॑दर्षि॒राधः । तन्नो॑मि॒त्रो० ॥ ३१ ॥ ( १।१६।६ ) तक्ष॒न्रथं॑सु॒वृतं॑वि॒द्मना॑पस॒स्तक्ष॒न्हरी॑ऽइंद्र॒वाहा॒वृष॑ण्वसू । तक्ष॑न्पि॒तृभ्या॑मृ॒भवो॒युव॒द्वय॒स्तक्ष॑न्व॒त्साय॑मा॒तरं॑सचा॒भुवं॑ ॥ आनो॑य॒ज्ञाय॑तक्षतऽऋभु॒मद्वय॒ःक्रत्वे॒दक्षा॑यसुप्र॒जाव॑ती॒मिषं॑ । यथा॒क्षया॑म॒सर्व॑वीरया॒वि॒शातन्न॒ःशर्धा॑यधासथा॒स्विन्द्रि॒यं ॥ आत॑क्षतसा॒तिम॒स्मभ्य॑मृभवःसा॒तिंरथा॑यसा॒तिमर्व॑तेनरः । सा॒तिंनो॒जैत्रीं॒संम॑हेतवि॒श्वहा॑जा॒मिमजा॑मिंपृत॑नासुस॒क्षणिं ॥ ऋ॒भु॒क्षण॒मिंद्र॒माहु॑वऽ

( १।१६।६ ) तक्षन्नथमितिपंचर्चस्यसूक्तस्यकुत्सऋभवोजगतीअंत्यात्रिष्टुप् ।

ऊतयेऽऋभून्वाजान्मरुतःसोमपीतये । उभामित्रावरुणानूनमश्विनातेनोहिन्वंतुसातयेधियेजिषे+ ॥ ऋभुर्भरायसं शिशातुसातिंसमर्यजिद्वाजोऽअस्माँऽअविष्टु । तन्नोमित्रो० ॥ ३२ ॥ ( १।१६।७ ) ईळेद्यावापृथिवीपूर्वचित्तयेग्निंघ र्मंसुरुचंयामन्निष्टये । याभिर्भरेकारमंशायजिन्वथस्ताभिरूषुऽऊतिभिरश्विनागतं ॥ युवोर्दानायसुभराऽअसश्चतो रथमातस्थुर्वचसंनमंतवे । याभिर्धियोवथःकर्मन्निष्टयेताभि० ॥ युवंतासांदिव्यस्यप्रशासनेविशांक्षयथोऽअमृतस्यम ज्मना । याभिर्धेनुमस्वंपिन्वथोनरताभि० ॥ याभिःपरिज्मातनयस्यमज्मनाद्विमातातूर्षुतरणिर्विभूषति । याभि स्त्रिमंतुरभवद्विचक्षणस्ताभि० ॥ याभीरेभंनिवृतंसितमद्भ्यऽउद्वंदनमैरयतंस्वर्दृशे । याभिःकण्वंप्रसिषासंतमावतंता भि० ॥ ३३ ॥ याभिरंतकंजसमानमारणेभुज्युंयाभिरव्यथिभिर्जिजिन्वथुः । याभिःकर्कंधुंवय्यंचजिन्वथस्ताभि० ॥ याभिःशुचंतिंधनसांसुषंसदंतप्तंघर्ममोम्यावंतमत्रये । याभिःपृश्निगुंपुरुकुत्समावतंताभि० ॥ याभिःशचीभिर्वृषणापरावृजंप्रांधंश्रोणंचक्षसऽएतवेकृथः । याभिर्वर्तिकांग्रसितामसुंचतंताभि० ॥ याभिःसिंधुंमधुमंतमसश्चतंवासिष्ठंयाभि रजरावजिन्वतं । याभिःकुत्संश्रुतर्यंनर्यमावतंताभि० ॥ याभिर्विश्पलांधनसामथर्व्यंसहस्रमीळ्हऽआजावजिन्वतं । याभिर्वशमश्व्यंप्रेणिमावतंताभि० ॥ ३४ ॥ याभिःसुदानूऽऔशिजायवणिजेदीर्घश्रवसेमधुकोशोऽअक्षरत् । कक्षी



---

( १।१६।७ ) ईळेद्यावापृथिवीइतिपंचविंशत्यृचस्यसूक्तस्यकुत्सःआद्यायाद्यावापृथिव्यग्न्यश्विनःशिष्टानामश्विनौजगतीअंत्येद्वेत्रिष्टुभौ ।

वंतंस्तोतारंयाभिरावतंताभिः० ॥ याभीरसांक्षोदसोद्नःपिपिन्वथुरनश्वंयाभीरथमावतंजिषे । याभिस्त्रिशोकऽउस्त्रियाऽउदाजतताभिः० ॥ याभिःसूर्यंपरियाथःपरावतिमंधातारंक्षैत्रपत्येष्वावतं । याभिर्विप्रंप्रभरद्वाजमावतंताभिः० ॥ याभिर्महामतिथिग्वंकशोजुवंदिवोदासंशंबरहत्यऽआवतं । याभिःपूर्भिद्येत्रसदस्युमावतंताभिः० ॥ याभिर्वम्रंविपिपानमुपस्तुतंकलिंयाभिर्वित्तजानिंदुवस्यथः । याभिर्व्यश्वमुतपृथिमावतंताभिः० ॥ २५ ॥ याभिर्नराशयवेयाभिरत्रयेयाभिःपुरामनवेगातुमीषथुः । याभिःशारीराजतंस्यूमरश्मयेताभिः० ॥ याभिःपठर्वाजठरस्यमज्मनाग्निर्नादीदेच्चितऽइद्धोऽअज्मन्ना । याभिःशर्यातमवथोमहाधनेताभिः० ॥ याभिरंगिरोमनसानिरण्यथोग्रंगच्छथोविवरेगोऽअर्णसः । याभिर्मनुंशूरमिषासमावतंताभिः० ॥ याभिःपत्नीर्विमदायन्यूहथुराघवायाभिररुणीरशिक्षतं । याभिःसुदासऽऊहथुःसुदेव्यं१ताभिः० ॥ याभिःशंतातीभवथोददाशुषेभुज्युंयाभिरवथोयाभिरध्रिगुं । ओम्यावतींसुभरामृतस्तुभंताभिः० ॥ २६ ॥ याभिःकृशानुमसनेदुवस्यथोजवेयाभिर्यूनोऽअर्वंतमावतं । मधुप्रियंभरथोयत्सरड्भ्यस्ताभिः० ॥ याभिर्नरंगोषुयुधंनृषाह्येक्षेत्रस्यसातातनयस्यजिन्वथः । याभीरथाँऽअवथोयाभिरर्वतस्ताभिः० ॥ याभिःकुत्समार्जुनेयंशतक्रतूप्रतुर्वीतिंप्रचदभीतिमावतं । याभिर्ध्वसंतिंपुरुषंतिमावतंताभिः० ॥ अप्नस्वतीमश्विनावाचमस्मेकृतंनोदस्रावृ

षणामनीषां । अद्यूत्येवसेनिह्वयेवांवृधेचनोभवतंवाजसातौ ॥ द्युभिरक्तुभिःपरिपातमस्मानरिष्टेभिरश्विनासौभगेभिः । तन्नोमित्रो० ॥ ३७ ॥ ॥ इतिप्रथमाष्टकेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥

सप्तमाध्याये वर्गाः ३७ सूक्तानि १८ ऋचः १७९ ॥ त्यागः ॥ उषसेग्नयइदं. ११ द्रविणोदसेग्नयइदं. ९ अग्नयेशुचयइदं. ८ अग्नयेवैश्वानरायेदं. ३ जातवेदसेग्नयइदं. इंद्रायेदं. ५८ विश्वेभ्योदेवेभ्यइदं. २९ [ भे. प. विश्वेभ्योदेवेभ्य. रोदसीभ्या. विश्वेभ्योदेवेभ्य. अग्निरोदसीभ्य. विश्वेभ्योदेवेभ्य. ३ इंद्ररोदसीभ्य. सूर्यरश्मिरोदसीभ्य. विश्वेभ्योदेवेभ्य. सूर्यरश्मिरोदसीभ्य. विश्वेभ्योदेवेभ्य. अग्निरोदसीभ्य. २ वरुणरोदसीभ्य. विश्वेभ्योदेवेभ्य. २ रोदसीभ्या. विश्वेभ्योदेवेभ्य. ११ ] इंद्राग्निभ्यामिदं. २१ ऋभुभ्यइदं. १४ द्यावापृथिव्यग्न्यश्विभ्यइदं. अश्विभ्यामिदं.२४ ॥ इतिप्रथमेसप्तमोऽध्यायः ॥ ७ ॥

इदंविंशतिरुषस्यंद्वितीयोर्धर्चोरात्र्यैश्चैमाएकादशरौद्रंद्वित्रिष्टुबंतंचित्रंषट्सौर्यंनासत्याभ्यांपंचाधिकाकक्षीवान्दैर्घतमसंऽउशिक्प्रसूतआश्विनंवैमध्वआवामेकादशावांरथंदशजागतंकाराधद्द्वादशांत्यादुःस्वप्ननाशिन्याद्यागायत्रीद्वितीयाककुप्तृतीयाचतुर्थ्यौकाविराण्नष्टरूप्यौपंचमीतनुशिराषष्ठ्यक्षरैरुष्णिग्विष्टारबृहतीकृतिर्विराट्तिस्रोगायत्र्यःकदित्थापंचोनावैश्वदेवंवा ॥ ८ ॥ ॥ ॥ ॥ ॥

हरिः३ओम् ( १।१६।८ ) इदंश्रेष्ठंज्योतिषांज्योतिरागाच्चित्रःप्रकेतोऽअजनिष्टविभ्वा । यथाप्रसूतासवितुःसवायँ



( १।१६।८ ) इदंश्रेष्ठमितिविंशत्यृचस्यसूक्तस्यकुत्सउषाद्वितीयायाअर्धर्चोरात्रिस्त्रिष्टुप् ।

ऽएवारात्र्युषसेयोनिमारैक् ॥ रुशद्वत्सारुशतीश्वेत्यागादारैगुकृष्णासदनान्यस्याः । समानबंधूऽअमृतेऽअनूचीद्या
वावर्णंचरतऽआमिनाने ॥ समानोऽअध्वास्वस्रोरनंतस्तमन्यान्याचरतोदेवशिष्टे । नमेथेतेनतस्थतुःसुमेकेनक्तोषा
सासमनसाविरूपे ॥ भास्वतीनेत्रीसूनृतानामचेतिचित्राविदुरोनऽआवः । प्राप्यर्जगव्युनोरायोऽअख्यदुषाऽअंजी
गर्भुवनानिविश्वा ॥ जिह्मश्येरे चरितवेमघोन्याभोगयऽइष्टयेरायऽउत्वं । दभ्रंपश्यद्भ्यऽउर्वियाविचक्षऽउषा० ॥
॥ १ ॥ क्षत्रायत्वंश्रवसेत्वंमहीयाऽइष्टयेत्वमर्थमिवत्वमित्यै । विसदृशाजीवितामिप्रचक्षऽउषा० ॥ एषादिवोदुहि
ताप्रत्यदर्शिव्युच्छंतीयुवतिःशुक्रवासाः । विश्वस्येशानापार्थिवस्यवस्वऽउषोऽअद्येहसुभगेव्युच्छ ॥ परायतीनामन्वे
तिपाथऽआयतीनांप्रथमाशश्वतीनां । व्युच्छंतीजीवमुदीरयंत्युषामृतंकंचनबोधयंती ॥ उषोयदग्निंसमिधेचकर्थवि
यदावश्चक्षसासूर्यस्य । यन्मानुषान्यक्ष्यमाणाँऽअजीगस्तद्देवेषुचकृषेभद्रमप्नः ॥ कियात्यायत्समयाभवातियाव्यूषुर्या
श्चनूनंव्युच्छान् । अनुपूर्वाःकृपतेवावशानाप्रदीध्यानाजोषमन्याभिरेति ॥ २ ॥ ईयुष्टेयेपूर्वतरामपश्यन्व्युच्छंतीमु
षसंमर्त्यासः । अस्माभिरूनुप्रतिचक्ष्याभूदोतेयंतियेऽअपरीषुपश्यान् ॥ यावयद्द्वेषाऽऋतपाऽऋतेजाःसुम्नावरीसूनृता
ईरयंती । सुमंगलीर्बिभ्रतीदेववीतिमिहाद्योषःश्रेष्ठतमाव्युच्छ ॥ शश्वत्पुरोषाव्युवासदेव्यथोऽअद्येदंव्यावोमघोनी ।
अथोव्युच्छादुत्तराँऽअनुद्यूनजरामृताचरतिस्वधाभिः ॥ व्यंजिभिर्दिवऽआतास्वद्यौदपकृष्णांनिर्णिजंदेव्यावः ।

ऋक्सं. अ.१अ.८ ॥ ५१ ॥

प्रबोधयंत्यरुणेभिरश्वैरोषायातिसुयुजारथेन ॥ आवहंतीपोष्यावार्याणिचित्रंकेतुंकृणुतेचेकिताना । ईयुषीणामुपमा शश्वंतीनांविभातीनांप्रथमोषाव्यंश्वैत् ॥ ३ ॥ उदीर्ध्वंजीवोऽअसुर्नऽआगादपप्रागात्तमऽआज्योतिरेति । आरैक्पंथांयातवेसूर्यायागन्मयत्रप्रतिरंतऽआयुः ॥ स्यूमनावाचऽउदियर्तिवह्निःस्तवानोरेभऽउषसोविभातीः । अद्यातदुच्छगृणतेमघोन्यस्मेऽआयुर्निदिदीहिप्रजावत् ॥ यागोमतीरुषसःसर्ववीराव्युच्छंतिदाशुषेमर्त्याय । वायोरिवसूनृतानामुदर्केताऽअंश्वदाऽअंश्ववत्सोमसुत्वा ॥ मातादेवानामदितेरनीकंयज्ञस्यकेतुर्बृहतीविभाहि । प्रशस्तिकृद्ब्रह्मणेनोव्युच्छानोजनेजनयविश्ववारे ॥ यच्चित्रमप्नऽउषसोवहंतीजानायशशमानायभद्रं । तन्नोमित्रो० ॥ ४ ॥ ( १।११४।१ )

इमारुद्रायंतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः । यथाशमसंद्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मिन्ननातुरं ॥ मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते । यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषु ॥ अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः । सुम्नायन्निद्विशोऽअस्माकमाचरारिष्टवीराजुहवामतेहविः ॥ त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे । आरेऽअस्मद्दैव्यंहेळोऽअस्यतुसुमतिमिद्वयमस्यावृणीमहे ॥ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे । हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥ ५ ॥ इदंपित्रेमरुतामुच्यते

मंडलं १ अनु. १६ ॥ ५१ ॥

( १।११४।१ ) इमारुद्रायेत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रोजगतीअंत्येद्वेत्रिष्टुभौ ।

वर्चःस्वादोःस्वादीयोरुद्रायवर्धनं । रास्वाचनोऽअमृतमर्तभोजनंत्मनेतोकायतनयायमृळ ॥ मानोमहांतमुतमानोऽअर्भ
कंमानऽउक्षंतमुतमानऽउक्षितं । मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिषः ॥ मानस्तोकेतनयेमानऽआयौ
मानोगोषुमानोऽअश्वेषुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ उपतेस्तोमान्पशुपाऽइ
वाकरंरास्वापितर्मरुतांसुम्नमस्मे । भद्राहितेसुमतिर्मृळयत्तमाथावयमवऽइत्तेवृणीमहे ॥ आरेतेगोघ्नमुतपूरुषघ्नंक्षय
द्वीरसुम्नमस्मेतेऽअस्तु । मृळाचनोऽअधिचब्रूहिदेवाधाचनःशर्मयच्छद्विबर्हाः ॥ अवोचामनमोऽअस्माऽअवस्यवःशृणो
तुनोहवंरुद्रोमरुत्वान् । तन्नोमित्रो० ॥ ६ ॥ ( १।११६।१० ) चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ।
आप्राद्यावापृथिवीऽअंतरिक्षंसूर्यऽआत्माजगतस्तस्थुषश्च ॥ सूर्योदेवीमुषसंरोचमानांमर्योनयोषामभ्येतिपश्चात् ।
यत्रानरोदेवयंतोयुगानिवितन्वतेप्रतिभद्रायभद्रं+ ॥ भद्राऽअश्वाहरितःसूर्यस्यचित्राऽएतग्वाऽअनुमाद्यासः । नम
स्यंतोदिवऽआपृष्ठमस्थुःपरिद्यावापृथिवीयंतिसद्यः+ ॥ तत्सूर्यस्यदेवत्वंतन्महित्वंमध्याकर्तोर्विततंसंजभार । यदेद
युक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे । अनंतमन्यद्रु
शदस्यपाजःकृष्णमन्यद्धरितःसंभरंति ॥ अद्यादेवाऽउदितासूर्यस्यनिरंहसःपिपृतानिरवद्यात् । तन्नोमित्रो० ॥ ७ ॥

---

( १।११६।१० ) चित्रंदेवानामितिषडृचस्यसूक्तस्यकुत्सःसूर्यस्त्रिष्टुप् ।

ऋक्सं. अ.१अ.८ ॥ ५२ ॥

( १।११७।१ ) नासत्याभ्यां बर्हिरिव प्र वृंजे स्तोमाँ इयर्म्यभ्रियेव वातः । यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ॥ वीळुपत्मभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना । तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय ॥ तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः । तमूहथुर्नौभिरात्मन्वतीभिरंतरिक्षप्रुद्भिरपोदकाभिः ॥ तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतंगैः । समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥ अनारंभणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे । यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसं ॥ ८ ॥ यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति । तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः+ ॥ युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिं । कारोतराच्छफादश्वस्य वृष्णः शतं कुंभाँ असिंचतं सुरायाः ॥ हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तं । ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति+ ॥ परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारं । क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥ जुजुरुषो नासत्योत वव्रिं प्रामुंचतं द्रापिमिव च्यवानात् । प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनां ॥ ९ ॥ तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथं । यद्विद्वांसा निधिमिवापगूळ्हमुद्दर्शतादूपथुर्वंदनाय ॥ तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिं ।

मंडलं. १ अनु. १६ ॥ ५२ ॥

---

( १।११७।१ ) नासत्याभ्यामिति पंचविंशत्यृचस्य सूक्तस्य दैर्घतमसः कक्षीवानश्विनौ त्रिष्टुप् ।

दध्यङ्हयन्मध्वाथर्वणोवामश्वस्यशीर्ष्णाप्रयदीमुवाच ॥ अजोहवीन्नासत्याकरावांमहेयामन्पुरुभुजापुरंधिः । श्रुतंत
च्छासुरिववध्रिमत्याहिरण्यहस्तमश्विनावदत्तं ॥ आस्नोवृकस्यवर्तिकामभीकेयुवंनरानासत्यामुमुक्तं । उतोकविंपुरुभु
जायुवंहकृपमाणमकृणुतंविचक्षे ॥ चरित्रंहिवेरिवाच्छेदिपर्णमाजाखेलस्यपरितक्म्यायां । सद्योजंघामायसींविश्पला
यैधनेहितेसर्तवेप्रत्यधत्तं ॥ १० ॥ शतंमेषान्वृक्येचक्षदानमृज्राश्वंतंपितांधंचकार । तस्माऽअक्षीनासत्याविचक्षऽ
आधत्तंदस्राभिषजावनर्वन्+ ॥ आवांरथंदुहितासूर्यस्यकार्ष्मेवातिष्ठदर्वताजयंती ।। विश्वेदेवाऽअन्वमन्यंतहृद्भिःस
मुश्रियानासत्यासचेथे ॥ यदयातंदिवोदासायवर्तिर्भरद्वाजायाश्विनाहयंता । रेवदुवाहसचनोरथोवांवृषभश्चशिंशु
मारश्चयुक्ता+ ॥ रयिंसुक्षत्रंस्वपत्यमायुःसुवीर्यंनासत्यावहंता । आजह्नावींसमनसोपवाजैस्त्रिरह्नोभागंदधतीमयातं ॥
परिविष्टंजाहुषंविश्वतःसींसुगेभिर्नक्तमूहथूरजोभिः । विभिंदुनानासत्यारथेनविपर्वताँऽअजरयूऽअयातं ॥ ११ ॥
एकस्यावस्तोरावतंरणायवशमश्विनासनयेसहस्रा । निरहतंदुच्छुनाऽइंद्रवंतापृथुश्रवसोवृषणावरातीः ॥ शरस्यचि
दार्चत्कस्यावतादानीचादुच्चाचक्रथुःपातवेवाः । शयवेचिन्नासत्याशचीभिर्जसुरयेस्तर्यंपिप्यथुर्गां+ ॥ अवस्यतेस्तुवते
कृष्णियायऽऋजूयतेनासत्याशचीभिः । पशुंननष्टमिवदर्शनायविष्णाप्वंददथुर्विश्वकाय ॥ दशरात्रीरशिवेनानवद्यून
वनद्धंश्नथितमप्स्वं१तः । विप्रुतंरेभमुदनिप्रवृक्तमुन्निन्यथुःसोममिवस्रुवेण ॥ प्रवांदंसांस्यश्विनाववोचमस्यपतिःस्यां

सुगवंःसुवीरंः । उतपश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणंजगम्यां ॥ १२ ॥ ( १।१७।२ ) मध्वःसोमस्याश्विना मदायप्रत्नोहोताविवासतेवां । बर्हिष्मंतीरातिर्विश्रिताग़ीरिषायातंनासत्योपवाजैः ॥ योवामश्विनामनसोजवीयान्र थःस्वश्वोविशऽआजिगाति । येनगच्छथःसुकृतोदुरोणंतेननरावर्तिरस्मभ्यंयातं ॥ ऋषिंनरावंहसःपांचजन्यमृबीसा दत्रिंमुंचथोगणेन । मिनंतादस्योरशिवस्यमायाऽअनुपूर्वंवृषणाचोदयंता ॥ अश्वंनगूह्लमश्विनादुरेवैरृषिंनरावृषणारे भमप्सु । संतंरिणीथोविप्रुतंदंसोभिर्नवांजूर्यंतिपूर्व्याकृतानि ॥ सुषुप्वांसंननिर्ऋतेरुपस्थेसूर्यंनदस्रातमसिक्षियंतं । शुभेरुक्मंनदर्शतंनिखातमुदूपथुरश्विनावंदनाय ॥ १३ ॥ तद्वांनराशंस्यंपज्रियेणकक्षीवतानासत्यापरिज्मन् । श फादश्वस्यवाजिनोजनायशतंकुंभाँऽअसिंचतंमधूनां ॥ युवंनरास्तुवतेकृष्णियायविष्णाप्वंददथुर्विश्वकाय । घोषायै चित्पितृषदेदुरोणेपतिंजूर्यंत्याऽअश्विनावदत्तं ॥ युवंश्यावांयरुशतीमदत्तंमहःक्षोणस्याश्विनाकण्वाय । प्रवाच्यंतद्वृष णाकृतंवांयन्नार्षदायश्रवोऽअध्यधत्तं ॥ पुरूवर्पांस्यश्विनादधानानिपेदवऽऊहथुराशुमश्वं । सहस्रसांवाजिनमप्रतीत महिहनंश्रवस्यंतरुत्रं ॥ एतानिवांश्रवस्यासुदानूब्रह्मांगूषंसदनंरोदस्योः । यद्वांपज्रासोऽअश्विनाहवंतेयातमिषाचं विदुषेचवाजं ॥ १४ ॥ सूनोर्मानेनाश्विनागृणानावाजंविप्रायभुरणारदंता । अगस्त्येब्रह्मणावावृधानासंविश्पलांना



---

( १।१७।२ ) मध्वःसोमस्येतिपंचविंशत्यृचस्यसूक्तस्यदैर्घतमसःकक्षीवानश्विनौत्रिष्टुप् ।

सत्यारिणीतं ॥ कुहयांतासुष्टुतिंकाव्यस्यदिवोनपातावृषणाशयुत्रा । हिरण्यस्येवकुलशंनिखातमुदूपथुर्दशमेऽअश्वि
नाहन् ॥ युवंच्यवानमश्विनाजरंतंपुनर्युवानंचक्रथुःशुचीभिः । युवोरथंदुहितासूर्यस्यसहश्रियानासत्यावृणीत ॥ युवं
तुग्राययपूर्व्येभिरेवैःपुनर्मन्यावभवतंयुवाना । युवंभुज्युमर्णसोनिःसमुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः ॥ अजोहवीदश्वि
नातौग्र्योवांप्रोह्लःसमुद्रमव्यथिर्जगन्वान् । निष्टमूहथुःसुयुजारथेनमनोजवसावृषणास्वस्ति+ ॥ १५ ॥ अजोहवीद
श्विनावर्तिकावामास्नोयत्सीममुंचतंवृकस्य । विजयुषाययथुःसान्वद्रेर्जातंविष्वाचोऽअहतंविषेण ॥ शतंमेषान्वृक्ये
मामहानंतमःप्रणीतमशिवेनपित्रा । आक्षीऽऋज्राश्वेऽअश्विनावधत्तंज्योतिरंधायचक्रथुर्विचक्षे ॥ शुनमंधायभरमह्व
यत्सावृकीरश्विनावृषणानरेति । जारःकनीनऽइवचक्षदानऽऋज्राश्वःशतमेकंचमेषान् ॥ महीवामूतिरश्विनामयो
भूरुतस्त्रामंधिष्ण्यासंरिणीथः । अथायुवामिदह्वयत्पुरंधिरागच्छतंसींवृषणाववोभिः ॥ अधेनुंदस्रास्तर्यं१विषक्ताम
पिन्वतंशयवेऽअश्विनागां । युवंशचीभिर्विमदायजायांन्यूहथुःपुरुमित्रस्ययोषां ॥ १६ ॥ यवंवृकेणाश्विनावपंतेषंदु
हंतामनुषायदस्रा । अभिदस्युंबकुरेणाधमंतोरुज्योतिश्चक्रथुरार्याय ॥ आथर्वणायाश्विनादधीचेश्व्यंशिरःप्रत्यैरयतं ।
सवांमधुप्रवोचदृतायन्त्वाष्ट्रंयद्दस्रावपिकक्ष्यंवां ॥ सदाकवीसुमतिमाचकेवांविश्वाधियोऽअश्विनाप्रावतंमे । अस्मेर
यिंनासत्याबृहंतमपत्यसाचंश्रुत्यंरराथां ॥ हिरण्यहस्तमश्विनाररोणापुत्रंनरावध्रिमत्याऽअदत्तं । त्रिधाहश्यावमश्वि

ऋक्सं. अ.१अ.८ ॥ ५४ ॥

नाविकस्तमुज्जीवसंऽऐरयतंसुदानू ॥ एतानिवामश्विनावीर्याणिप्रपूर्व्याण्यायवोऽवोचन् । ब्रह्मकृण्वंतोवृषणायुव भ्यांसुवीरासोविदथमावदेम ॥ १७ ॥ ( १ । १७ । ३ ) आवांरथोऽअश्विनाश्येनपत्वासुमृळीकःस्ववाँयात्वर्वाङ् । योमर्त्यस्यमनसोजवीयान्त्रिवंधुरोवृषणावातरंहाः ॥ त्रिवंधुरेणत्रिवृतारथेनत्रिचक्रेणसुवृतायातमर्वाक् । पिन्वं तंगाजिन्वतमर्वतोनोवर्धयतमश्विनावीरमस्मे+ ॥ प्रवद्यामनासुवृतारथेनदस्राविमंशृणुतंश्लोकमद्रेः । किमंगवांप्रत्य वर्तिंगमिष्ठाहुर्विप्रासोऽअश्विनापुराजाः+ ॥ आवांश्येनासोऽअश्विनावहंतुरथेयुक्तासऽआशवःपतंगाः । येऽअप्तुरो दिव्यासोनगृध्राऽअभिप्रयोऽनासत्यावहंति ॥ आवांरथंयुवतिस्तिष्ठदत्रजुष्ट्वीनरादुहितासूर्यस्य । परिवामश्वावपुषः पतंगावयोवहंत्वरुषाऽअभीके ॥ १८ ॥ उद्वंदनमैरतंदंसनाभिरुद्रेभंदस्रावृषणाशचीभिः । निष्टौग्र्यंपारयथःसमु द्रात्पुनश्च्यवानंचक्रथुर्युवानं ॥ युवमत्रयेवनीतायतप्तमूर्जमोमानमश्विनावधत्तं । युवंकण्वायापिरिप्तायचक्षुःप्रत्यध त्तंसुष्टुतिंजुजुषाणा+ ॥ युवंधेनुंशयवेनाधितायापिन्वतमश्विनापूर्व्याय । अमुंचतंवर्तिकामंहसोनिःप्रतिजंघांविश्प लायाऽअधत्तं ॥ युवंश्वेतंपेदवऽइंद्रजूतमहिहनमश्विनादत्तमश्वं । जोहूत्रमर्योऽअभिभूतिमुग्रंसहस्रसांवृषणंवीड्वंगं ॥ तावांनरास्ववसेसुजाताहवामहेऽअश्विनानाधमानाः । आनऽउपवसुमतारथेनगिरोजुषाणासुविताययातं ॥ आश्ये

मंडलं १ अनु. १७ ॥ ५४ ॥

( १।१७।३ ) आवांरथइत्येकादशर्चस्यसूक्तस्यदैर्घतमसःकक्षीवानश्विनौत्रिष्टुप् ।

नस्युजवसानूतनेनास्मेयातंनासत्यासजोषाः । हवेहिवामश्विनारातहव्यःशश्वत्तमायाऽउषसोव्युष्टौ ॥ १९ ॥ (११७४)
आवांरथंपुरुमायंमनोजुवंजीराश्वंयुज्ञियंजीवसेहुवे । सहस्रकेतुंवनिनंशतद्वसुंश्रुष्टीवानंवरिवोधामभिप्रयः ॥ ऊर्ध्वा
धीतिःप्रत्यस्यप्रयामन्यधायिशस्मन्त्समयंतऽआदिशः । स्वदामिघर्मंप्रतियंत्यूतयऽआवामूर्जानीरथमश्विनारुहत् ॥
संयन्मिथःपस्पृधानासोऽअग्मतशुभेमखाऽअमिताजायवोरणे । युवोरहप्रवणेचेकितेरथोयदश्विनावहथःसूरिमावरं ॥
युवंभुज्युंभुरमाणंविभिर्गतंस्वयुक्तिभिर्निवहंतापितृभ्यऽआ । यासिष्टंवर्तिर्वृषणाविजेन्यं१दिवोदासायमहिचेतिवाम
वः ॥ युवोरश्विनावपुषेयुवायुजंरथंवाणीयेमतुरस्यशर्ध्यं । आवांपतित्वंसख्यायजग्मुषीयोषावृणीतजेन्यायुवांपती ॥
॥ २० ॥ युवंरेभंपरिषूतेरुरुष्यथोहिमेनघर्मंपरितप्तमत्रये । युवंशयोरवसंपिप्यथुर्गविप्रदीर्घेणवंदनस्तार्यायुषा ॥ यु
वंवंदनंनिर्ऋतंजरण्ययारथंनदस्राकरणासमिन्वथः । क्षेत्रादाविप्रंजनथोविपन्ययाप्रवामत्रविधतेदंसनाभुवत् ॥ अग
च्छतंकृपमाणंपरावतिपितुःस्वस्यत्यजसानिबाधितं । स्वर्वतीरितऽऊतीर्युवोरहचित्राऽअभीकेऽअभवन्नभिष्टयः ॥
उतस्यावांमधुमन्मक्षिकारपन्मदेसोमस्यौशिजोहुवन्यति । युवंदधीचोमनऽआविवासथोथाशिरःप्रतिवामश्व्यंवदत् ॥
युवंपेदवेपुरुवारमश्विनास्पृधांश्वेतंतरुतारंदुवस्यथः । शर्यैरभिद्युंपृतनासुदुष्टरंचर्कृत्यमिन्द्रमिवचर्षणीसहं ॥ २१ ॥



( ११७४ ) आवांरथमितिदशर्चस्यसूक्तस्यदैर्घतमसःकक्षीवानश्विनौजगती ।

ऋक्सं. अ.१अ.८ ॥५५॥

मंडलं. १ अनु. १८

( १।१७।५ ) कारांधद्धोत्रांश्विनावांकोवांजोषऽउभयोः । कथाविधात्यप्रचेताः ॥ विद्वांसाविद्दुरंःपृच्छेदविद्वानित्थापरोऽअचेताः । नूचिन्नुमर्तेऽअक्रौ ॥ ताविद्वांसाहवामहेवांतानोविद्वांसामन्मवोचेतमद्य । प्रार्चद्दयमानोयुवाकुः ॥ विपृच्छामिपाक्याइनदेवान्वषट्कृतस्याद्भुतस्यदस्रा । पातंचसह्यसोयुवंचरभ्यंसोनः ॥ प्रयाघोषेभृगवाणेनशोभेययावाचायजतिपज्रियोवां । प्रैषयुर्नविद्वान्+ ॥ २२ ॥ श्रुतंगायत्रंतकवानस्याहंचिद्धिरिरेभाश्विनावां । आक्षीशुभस्पतीदन्+ ॥ युवंह्यास्तंमहोरन्युवंवायन्निरततंसतं । तानोवसूसुगोपास्यातंपातंनोवृकादघायोः+ ॥ माकस्मैधातमभ्यंमित्रिणेनोमाकुत्रानोगृहेभ्योधेनवोगुः । स्तनाभुजोऽअशिश्वीः ॥ दुहीयन्मित्रधितयेयुवाकुरायेचनोमिमीतंवाजवत्यै ॥ इषेचनोमिमीतंधेनुमत्यै ॥ अश्विनोरसननंरथमनश्वंवाजिनीवतोः । तेनाहंभूरिचाकन ॥ अयंसमहमातनूह्यातेजनाँऽअनु । सोमपेयंसुखोरथः ॥ अधस्वप्नस्यनिर्विदेभुंजतश्चरेवतः । उभातावस्निनश्यतः ॥ २३ ॥ ( १।१८।१ ) कदित्थानॄःपात्रंदेवयतांश्रवद्गिरोऽअंगिरसांतुरण्यन् । प्रयदानड्विशऽआहर्म्यस्योरुक्रंसतेऽअध्वरेयजत्रः ॥ स्तंभीद्ध

॥५५॥

---

( १।१७।५ ) काराधदितिद्वादशर्चस्यसूक्तस्यदैर्घतमसःकक्षीवानश्विनौआद्यागायत्रीद्वितीयाककुप्तृतीयाकाविराट्चतुर्थीनष्टरूपीपंचमीतनुशिराषष्ठ्युष्णिक्सप्तमीविष्टारबृहत्यष्टमीकृतिर्नवमीविराट्अंत्यास्तिस्रोगायत्र्यः ( अंत्यादुःस्वप्ननाशिनी ) । ( १।१८।१ ) कदित्थेतिपंचदशर्चस्यसूक्तस्यदैर्घतमसःकक्षीवानिंद्रस्त्रिष्टुप् ( विश्वेदेवावा ) ।

द्यांसधरुणंप्रुषायद्दभुर्वाजायद्रविणंनरोगोः । अनुस्वजांमहिषश्चक्षतव्रांमेनामश्वस्यपरिमातरंगोः+ ॥ नक्षद्धवमरुणीः
पूर्व्यंराट्तुरोविशामंगिरसामनुद्यून् । तक्षद्वज्रंनियुतंतस्तंभद्द्यांचतुष्पदेनर्यायद्विपादे ॥ अस्यमदेस्वर्यंदाऽऋतायापी
वृतमुस्रियाणामनीकं । यद्धप्रसर्गेत्रिककुम्निवर्तदपद्रुहोमानुषस्यदुरोवः ॥ तुभ्यंपयोयत्पितरावनीतांराधःसुरेतस्तु
रणेभुरण्यू । शुचियत्तेरेक्णऽआयजंतसबर्दुघायाःपयऽउस्रियायाः ॥ २४ ॥ अधप्रजज्ञेतरणिर्ममत्तुप्ररोच्यस्याऽउष
सोनसूरः । इंदुर्येभिराष्टस्वेदुहव्यैःस्रुवेणसिंचन्जरणाभिधाम ॥ स्विध्मायद्वनधितिरपस्यात्सूरोऽअध्वरेपरिरोधना
गोः । यद्धप्रभासिकृत्व्याँऽअनुद्यूनर्विशेपश्विषेतुराय ॥ अष्टामहोदिवऽआदोहरीऽइहद्युम्नासाहमभियोधानऽउत्सं ।
हरिंयत्तेमंदिनंदुक्षन्वृधेगोरभसमद्रिभिर्वाताप्यं ॥ त्वमायसंप्रतिवर्तयोगोर्दिवोऽअश्मानमुपनीतमृभ्वा । कुत्सायय
त्रपुरुहूतवन्वन्छुष्णमनंतैःपरियासिवधैः+ ॥ पुरायत्सूरस्तमसोऽअपीतेस्तमद्रिवःफलिगंहेतिमस्य । शुष्णस्यचित्प
रिहितंयदोजोदिवस्परिसुग्रथितंतदादः ॥ २५ ॥ अनुत्वामहीपाजसीऽअचक्रेद्यावाक्षामामदतामिंद्रकर्मन् । त्वंवृत्र
माशयानंसिरासुमहोवज्रेणसिष्वपोवराहुं ॥ त्वमिंद्रनर्योयाँऽअवोनॄन्तिष्ठावातस्यसुयुजोवहिष्ठान् । यंतेकाव्यऽउश
नामंदिनंदाद्वृत्रहणंपार्यंततक्षवज्रं ॥ त्वंसूरोहरितोरामयोनॄन्भरच्चक्रमेतशोनायमिंद्र । प्रास्यपारंनवतिंनाव्यानाम
पिकर्तमवर्तयोयज्यून् ॥ त्वंनोऽअस्याऽइंद्रदुर्हणायाःपाहिवज्रिवोदुरितादभीकेॆ । प्रनोवाजान्रथ्योऽअश्वबुध्यानिषे

यं॑धिश्र॒वसे॑सू॒नृता॑यै ॥ मासा॑तेऽअ॒स्मत्सु॑म॒तिर्विदं॑स॒द्वाज॑प्रम॒हः॒समिषो॑वरंत । आनो॑भजमघव॒न्गोष्व॒र्यो मंहि॑ष्ठास्तेसध॒मादः॑स्याम ॥ २६ ॥ ॥ इतिप्रथमाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

अष्टमाध्यायेवर्गाः २६ सूक्तानि ९ ऋचः १२५ ॥ त्यागः ॥ उषोरात्रिभ्यामिदं. उषसइदं. १८ उषोमित्रावरुणादितिसिंधुपृथिवीद्युभ्यइदं. रुद्रायेदं. ११ सूर्यायेदं. ६ अश्विभ्यामिदं. ८३ इंद्रायेदं १५ ॥ इतिप्रथमेऽष्टमोऽध्यायः ॥ ८ ॥

॥ इति प्रथमाष्टकः समाप्तः ॥

ॐप्रवोवैश्वदेवंमावोविराड्रूपेंपृथुःसप्तोनोषस्यंतूषाउच्छंतीप्रातारत्नंसप्तस्वनयस्यदानस्तुतिरुपजगत्यावमंदानि
तिंकक्षीवान्दानतुष्टःपंचभिर्भावयव्यंतुष्टावोंत्येअनुष्टुभौभावयव्यरोमशयोर्दंपत्योःसंवादोग्निमेकादशपरुच्छे
पोदैवोदासिराग्नेयंतुपारुच्छेपंसर्वमात्यष्टैतत्रातिधृतिःषष्ठ्यंयंजायताष्टौयंत्वमेकादशषष्ठ्यैंदवींप्रप्रावोतिशक्कर्या
वष्टिरंत्यैंद्रयाहिदशांत्यात्रिष्टुंविंद्रायसप्तत्वयावयंषड्युंवंतमैंद्रापार्वतोर्धर्चैंउभेसप्तादौत्रिष्टुप्तिस्रोनुष्टुभौगायत्री
धृतिरष्टिरात्वाषड्वायव्यंत्वंत्याष्टिःस्तीर्णनवचतुर्थ्याद्याःपंचैंद्र्यश्चोपांत्येअष्टौप्रसुतसप्तमैत्रावरुणंत्वंत्यालिंगोक्तदेव
तेंअंत्यात्रिष्टुप् ॥ १ ॥
हरिः३ओम् ॥ ( १।१८।२ ) प्रवः॒पांतंरघुमन्युवोंधोंयु॒ज्ञंरु॒द्रायं॒मीढ्ळुषेंभरध्वं । दि॒वोऽअस्तो॒ष्यसु॑रस्यवी॒रैरिंषुध्येव
म॒रु॒तोरोदंस्योः ॥ पत्नींवपूर्वहूंतिंवावृ॒धध्यांऽउ॒षासा॒नक्तांपुरु॒धाविदाने । स्तरीर्नात्कंव्युतंवसाना॒सूर्यंस्यश्रि॒यासुदृशी
हिरंण्यैः ॥ म॒मत्तु॒न॒ःपरिंज्मावस॒र्हाम॒मत्तुवातोंऽ॒अपांवृषंण्वान् । शि॒शी॒तमिंद्रापर्वतायुवंन॒स्तन्नोविश्वेवरिवस्यंतुदे॒वाः+ ॥
उ॒तत्यामैंयु॒शसा॑श्वेतु॒नायैव्यंता॒पांतौशि॒जोहु॒वध्यै । प्रवो॒नपांतम॒पांकृंणुध्वंप्रमा॒तरांरास्पि॒नस्या॒योः+ ॥ आवोरुवण्यु

( १।१८।२ ) प्रवःपांतमितिपंचदशर्चस्यसूक्तस्यदैर्घतमसःकक्षीवान्विश्वेदेवास्त्रिष्टुप्पंचमीषष्ठ्यौविराड्रूपे । ( भेदप्रयोगपक्षेतुआद्या
नांषण्णांक्रमेणरुद्रमरुतउषासानक्ताविश्वेदेवाअश्विनौविश्वेदेवामित्रावरुणासिंधवोदेवताःततोद्वयोर्विश्वेदेवाःततोद्वयोर्मित्रावरुणौअंत्यपंचा
नांविश्वेदेवाः एवं १५ ) ।

मौशिजोहुवध्यैघोषैवशंसमर्जुनस्यनंशे । प्रवःपूष्णेदावनऽआँऽअच्छावोचेयवसुतातिमग्नेः+ ॥ १ ॥ श्रुतंमेमित्रावरुणाहवेमोतश्रुतंसदनेविश्वतःसीं । श्रोतुनःश्रोतुरातिःसुश्रोतुःसुक्षेत्रासिंधुरद्भिः+ ॥ स्तुषेसावाँवरुणमित्ररातिर्गवांशतापृक्षयामेषुपज्रे । श्रुतरथेप्रियरथेदधानाःसद्यःपुष्टिंनिरुंधानासोऽअग्मन् ॥ अस्यस्तुषेमहिमघस्यराधःसचासनेमनहुषःसुवीराः । जनोयःपज्रेभ्योवाजिनीवानश्वावतोरथिनोमह्यंसूरिः+ ॥ जनोयोमित्रावरुणावभिध्रुगपोनवांसुनोत्यक्ष्णयाध्रुक् । स्वयंसयक्ष्मंहृदयेनिधत्तऽआपयदींहोत्राभिर्ऋतावा ॥ सव्राधतोनहुषोदंसुजूतःशर्धस्तरोनरांगूर्तश्रवाः । विसृष्टरातिर्यातिबाळ्हसृत्वाविश्वासुपृत्सुसदमिच्छूरः ॥ २ ॥ अधग्मंतानहुषोहवंसूरेःश्रोताराजानोऽअमृतस्यमंद्राः । नभोजुवोयन्निरवस्यराधःप्रशस्तयेमहिनारथवते ॥ एतंशर्धंधामयस्यसूरेरित्यवोचन्दशतयस्यनंशे । द्युम्नानियेषुवसुतातीराराविश्वैसन्वंतुप्रभृथेषुवाजं ॥ मंदामहेदशतयस्यधासेर्द्विर्यत्पंचबिभ्रतोयंत्यन्ना । किमिष्टाश्वऽइष्टरश्मिरेतऽईशानासस्तरुषऽऋंजतेनॄन् ॥ हिरण्यकर्णमणिग्रीवमर्णस्तन्नोविश्वेवरिवस्यंतुदेवाः । अर्योगिरःसद्यऽआजग्मुषीरोस्राश्चाकंतूभयेष्वस्मे+ ॥ चत्वारोमामशर्शारस्यशिश्वस्त्रयोराज्ञऽआयवसस्यजिष्णोः । रथोवांमित्रावरुणादीर्घाप्साःस्यूमगभस्तिःसूरोनाद्यौत् ॥ ३ ॥ ( १।१८।३ ) पृथूरथोदक्षिणायाऽअयोज्यैनंदेवासोऽअमृतासोऽअस्थुः । कृष्णादु



---

( १।१८।३ ) पृथूरथइतित्रयोदशर्चस्यसूक्तस्यदैर्घतमसःकक्षीवानुषास्त्रिष्टुप् ।

दस्थादर्या ३ विहायाश्चिकिंत्संतीमानुषायक्षयाय ॥ पूर्वाविश्वस्माद्भुवनादबोधिजयंतीवाजंबृहतीसनुत्री । उच्चाव्यं
ख्यद्युवतिःपुंनर्भूरोषाऽअंगन्प्रथमापूर्वहूंतौ ॥ यदद्यभागंविभजासिनृभ्यऽउषोदेवमर्त्यत्रासुजाते । देवोनोऽअत्रंस
विताद्मूनाऽअनागसोवोचतिसूर्याय ॥ गृहंगृहमहनायात्यच्छादिवेदिवेऽअधिनामादधाना । सिषासंतीद्योतनाश
श्वदागादग्रंमग्रमिद्भंजतेवसूंनां ॥ भगस्यस्वसावरुणस्यजामिरुषःसूनृतेप्रथमाजरस्व । पश्चासदघ्यायोऽअघस्यधाता
जयेमतंदक्षिणयारथेन ॥ ४ ॥ उदीरतांसूनृताऽउत्पुरंधीरुदग्नयःशुशुचानासोऽअस्थुः । स्पार्हावसूनितमसापगूह्ला
विष्कृण्वंत्युषसोविभातीः ॥ अपान्यदेत्यभ्य१न्यदेतिविषुरूपेऽअहनीसंचरेते । परिक्षितोस्तमोऽअन्यागुहाकरद्यौ
दुषाःशोशुंचतारथेन ॥ सदृशीरद्यसदृशीरिदुश्वोदीर्घसंचंतेवरुणस्यधाम । अनवद्यास्त्रिंशतंयोजनान्यकैकाक्रतुंपरियं
तिसद्यः ॥ जानत्यह्नःप्रथमस्यनामशुक्राकृष्णादजनिष्टश्वितीची । ऋतस्ययोषानमिनातिधामाहरहर्निष्कृतमाचरं
ती ॥ कुन्यैवतन्वा३शाशदानाँऽएषिदेविदेवमियंक्षमाणं । संस्मयमानायुवतिःपुरस्तादाविर्वक्षांसिकृणुषेविभाती
॥ ५ ॥ सुसंकाशामातृमृष्टेवयोषाविस्तन्वंकृणुषेदृशेकं । भद्रात्वमुषोवितरंव्युच्छनतत्तेऽअन्याऽउषसोनशंत ॥ अ
श्वावतीर्गोमतीर्विश्ववारायतमानारश्मिभिःसूर्यस्य । पराचयंतिपुनराचयंतिभद्रानामवहमानाऽउषासः ॥ ऋत
स्यरश्मिमनुयच्छमानाभद्रंभद्रंक्रतुमस्मासुधेहि । उषोनोऽअद्यसुहवाव्युच्छास्मासुरायोमघवत्सुचस्युः ॥ ६ ॥

ऋक्सं.

अ.२अ.१

॥ २ ॥

मंडलं. १

अनु. १८

( १।११८।४ ) उषाऽउच्छंतीसमिधानेऽअग्नाऽउद्यन्त्सूर्यऽउर्वियाज्योतिरश्रेत् । देवोनोऽअत्रसवितान्वर्थंप्रासावीद्द्वि
पत्प्रचतुष्पदित्यै+ ॥ अमिनतीदैव्यानिव्रतानिप्रमिनतीमनुष्यायुगानि । ईयुषीणामुपमाशश्वतीनामायतीनांप्रथमो
षाव्यद्यौत् ॥ एषादिवोदुहिताप्रत्यदर्शिज्योतिर्वसानासमनापुरस्तात् । ऋतस्यपंथामन्वेतिसाधुप्रजानतीवनदिशोमि
नाति ॥ उपोऽअदर्शिशुंध्युवोनवक्षोनोधाऽइवाविरकृतप्रियाणि । अद्मसन्नससतोबोधयंतीशश्वत्तमागात्पुनरेयुषी
णां ॥ पूर्वेऽअर्धेरजसोऽअप्त्यस्यगवांजनित्र्यकृतप्रकेतुं । व्युप्रथतेवितरंवरीयऽओभापृणंतीपित्रोरुपस्था ॥ ७ ॥
एवेदेषापुरुतमादृशेकंनाजामिंनपरिवृणक्तिजामिं । अरेपसातन्वाशाशदानानार्भादीषतेनमहोविभाती+ ॥ अभ्रा
तेवपुंसऽएतिप्रतीचीगर्तारुगिवसनयेधनानां । जायेवपत्यऽउशतीसुवासाऽउषाहस्रेवनिरिणीतेऽअप्सः ॥ स्वसास्व
स्रेज्यायस्यैयोनिमारैगपैत्यस्याःप्रतिचक्ष्येव । व्युच्छंतीरश्मिभिःसूर्यस्यांज्यंक्तेसमनगाऽइवव्राः+ ॥ आसांपूर्वासामहं
सुस्वसृणामपरापूर्वामभ्येतिपश्चात् । ताःप्रत्नवन्नव्यसीर्नूनमस्मेरेवदुच्छंतुसुदिनाऽउषासः ॥ प्रबोधयोषःपृणतोमं
घोन्यबुध्यमानाःपणयःससंतु । रेवदुच्छमघवद्भ्योमघोनिरेवत्स्तोत्रेसूनृतेजारयंती ॥ ८ ॥ अवेयमश्वैद्युवतिःपुरस्ताद्युंक्ते
गवामरुणानामनीकं । विनूनमुच्छादसतिप्रकेतुर्गृहंगृहमुपतिष्ठातेऽअग्निः+ ॥ उत्तेवयश्चिद्वसतेरपप्तन्नरश्चयेपितुभा

॥ २ ॥

---

( १।११८।४ ) उषाउच्छंतीतित्रयोदशर्चस्यसूक्तस्यदैर्घतमसःकक्षीवानुषास्त्रिष्टुप् ।

जोव्युंष्टौ । अमासतेवंहसिभूरिंवाममुषोंदेविदाशुषेमर्त्याय ॥ अस्तोंढ्वंस्तोम्याब्रह्मंणामेवींवृधध्वमुशतीरुषासः । युष्मा कंदेवीरवंसासनेमसहस्रिणंचशतिनंचवाजं ॥ ९ ॥ ( १।१८।५ ) प्रातारत्नंप्रातरित्वांदधातितंचिकित्वान्प्रतिगृह्यानिध त्ते । तेनंप्रजांवर्धयंमानआयूरायस्पोषेणसचतेसुवीरः ॥ सुगुरसत्सुहिरण्यःस्वश्वोबृहदंस्मैवयइंद्रोदधाति । यस्त्वा यंतंवसुनाप्रातरित्वोमुक्षीजंयेवपदिमुत्सिनाति ॥ आर्यमद्यसुकृतंप्रातरिच्छन्निष्टेःपुत्रंवसुमतारथेन । अंशोःसुतंपायय मत्सरस्यंक्षयद्वीरंवर्धयसूनृताभिः ॥ उपक्षरंतिसिंधवोमयोभुवऽईजानंचयक्ष्यमाणंचधेनवः । पृणंतंचपपुरिंचश्रवस्य वोघृतस्यधाराऽउपयंतिविश्वतः ॥ नाकस्यपृष्ठेऽअधितिष्ठतिश्रितोयःपृणातिसहदेवेषुगच्छति । तस्माऽआपोघृतमर्ष तिसिंधवस्तस्माऽइयंदक्षिणापिन्वतेसदा ॥ दक्षिणावतामिदिमानिचित्रादक्षिणावतांदिविसूर्यासः । दक्षिणावंतोऽ अमृतंभजंतेदक्षिणावंतःप्रतिरंतऽआयुः ॥ मापृणंतोदुरितमेनऽआरन्माजारिषुःसूरयःसुव्रतासः । अन्यस्तेषांपरिधि रस्तुकश्चिदपृणंतमभिसंयंतुशोकाः ॥ १० ॥ ( १।१८।६ ) अमंदान्त्स्तोमान्प्रभरेमनीषासिंधावधिक्षियतोभाव्यस्य ।

---

( १।१८।५ ) प्रातारत्नमितिसप्तर्चस्यसूक्तस्यदैर्घतमसःकक्षीवान्त्स्वनयस्यदानस्तुतिस्त्रिष्टुप्चतुर्थीपंचम्यौजगत्यौ । ( स्वनयनाम्नोरा ज्ञोदानस्तुतिरतःस्वनयोदेवता ) । ( १।१८।६ ) अमंदानितिसप्तर्चस्यसूक्तस्यदैर्घतमसःकक्षीवानृषिःआगधितेत्यस्यभावयव्यऋषिःरो मशादेवताउपोपमइत्यस्यरोमशाऋषिकास्वनयोदेवतात्रिष्टुप् अंत्येद्वेअनुष्टुभौ । ( स्वनयएवभावयव्यशब्देनोच्यतेरोमशास्वनयभार्याअंत्ये

योमेसहस्रममिमीतसवानतूर्तोराजाश्रवंऽइच्छमानः ॥ शतंराज्ञोनाधमानस्यनिष्काञ्छतमश्वान्प्रयतान्त्सद्यऽआदं । शतंकक्षीवाँऽअसुरस्यगोनांदिविश्रवोजरमाततान ॥ उपमाश्यावाःस्वनयेनदत्तावधूमंतोदशरथासोऽअस्थुः । षष्टिः सहस्रमनुगव्यमागात्सनत्कक्षीवाँऽअभिपित्वेऽअह्नां ॥ चत्वारिंशद्दशरथस्यशोणाःसहस्रस्याग्रेश्रेणिंनयंति । मदच्यु तःकृशनावतोऽअत्यान्कक्षीवंतऽउदमृक्षंतपज्राः+ ॥ पूर्वामनुप्रयतिमाददेवस्त्रीन्युक्ताँऽअष्टावरिधायसोगाः । सुबंध वोयेविश्याऽइवव्राऽअनस्वंतःश्रवऽऐषंतपज्राः+ ॥ आगधितापरिगधितायाकशीकेवजंगहे । ददातिमह्यंयादुरीयाशू नांभोज्यांशता+ ॥ उपोपमेपरामृशमामेदभ्राणिमन्यथाः । सर्वाहमस्मिरोमशागंधारीणामिवाविका+ ॥ ११ ॥

( १।१९।१ ) अग्निंहोतारंमन्येदास्वंतंवसुंसूनुंसहसोजातवेदसंविप्रंनजातवेदसं । यऽऊर्ध्वयास्वध्वरोदेवोदेवाच्याकृ पा । घृतस्यविभ्राष्टिमनुवष्टिशोचिषाजुह्वानस्यसर्पिषः ॥ यजिष्ठंत्वायजमानाहुवेमज्येष्ठमंगिरसांविप्रमन्मभिर्विप्रे भिःशुक्रमन्मभिः । परिज्मानमिवद्यांहोतारंचर्षणीनां । शोचिष्केशंवृषणंयमिमाविशःप्रावंतुजूतयेविशः ॥ सहिपुरू चिदोजसाविरुक्मतादीद्यानोभवतिद्रुहंतरःपरशुर्नद्रुहंतरः । वीळुचिद्यस्यसमृतौश्रुवद्वनेवयत्स्थिरं । निष्षहमाणोय



---

द्वेऋचौतयोःपरस्परंसंवादः आद्याभिःपंचभिर्दानतुष्टःकक्षीवान्भावयव्यमस्तौत्ततश्चसएवदेवता ) । ( १।१९।१ ) अग्निंहोतारमित्ये कादशर्चस्यसूक्तस्यदैवोदासिःपरुच्छेपोऽग्निरत्यष्टिःषष्ठ्यतिधृतिः ।

मतेनायतेधन्वासहानायते ॥ दृह्लाचिदस्माऽअनुदुर्यथाविदेतेजिष्ठाभिररणिभिर्दाष्ट्यवसेऽग्नयेदाष्ट्यवसे । प्रयःपुरूणि
गाहतेतक्षद्वनेवशोचिषा । स्थिराचिदन्नानिरिणात्योजसानिस्थिराणिचिदोजसा ॥ तमस्यपृक्षमुपरासुधीमहिनक्कंयः
सुदर्शतरोदिवातरादप्रायुषेदिवातरात् । आदस्यायुर्ग्रभणवद्वीळुशर्मनसूनवे । भक्तमभक्तमवोव्यंतोऽअजराऽअग्न
योव्यंतोऽअजराः ॥ १२ ॥ सहिशर्धोनमारुतंतुविष्वणिरप्नस्वतीषूर्वरास्विष्टनिरातनास्विष्टनिः । आदद्धव्यान्याद
दिर्यज्ञस्यकेतुरर्हणा । अधस्मास्यहर्षतोहृषीवतोविश्वेजुषंतपंथांनरःशुभेनपंथा ॥ द्विताद्यदींकीस्तासोऽअभिद्यवोनम
स्यंतऽउपवोचंतभृगवोमथ्नंतोदाशाभृगवः । अग्निरीशेवसूनांशुचिर्योधर्णिरेषां । प्रियाँऽअपिधाँऽवनिषीष्टमेधिरऽआ
वनिषीष्टमेधिरः ॥ विश्वासांत्वाविशांपतिंहवामहेसर्वासांसमानंदंपतिंभुजेसत्यगिर्वाहसंभुजे । अतिथिंमानुषाणांपि
तुर्नयस्यासया । अमीचविश्वेऽअमृतासऽआवयोहव्यादेवेष्वावयः ॥ त्वमग्नेसहसासहन्तमःशुष्मिन्तमोजायसेदेव
तातयेरयिर्नदेवतातये । शुष्मिन्तमोहितेमदोद्युम्निन्तमऽउतक्रतुः । अधस्मातेपरिचरंत्यजरश्रुष्टीवानोनाजर ॥
प्रवोमहेसहसासहस्वतऽउषर्बुधेपशुषेनाग्नयेस्तोमोबभूत्वग्नये । प्रतियदींहविष्मान्विश्वासुक्षासुजोगुवे । अग्रेरेभोनजं
रतऽऋषूणांजूर्णिर्होतऽऋषूणां+ ॥ सनोनेदिष्ठंददृशानऽआभराग्नेदेवेभिःसचनाःसुचेतुनामहोरायःसुचेतुना । महि

शविष्ठनस्कृधिसंचक्षेभुजेऽअस्यै । महिस्तोतृभ्योमघवन्त्सुवीर्यंमथीरुग्रोनशवसा ॥ १३ ॥ ( १।१९।२ ) अयंजाय
तमनुषोधरीमणिहोतायजिष्ठऽउशिजामनुव्रतमग्निःस्वमनुव्रतं । विश्वश्रुष्टिःसखीयतेरयिरिवश्रवस्यते । अदब्धोहोता
निषददिळस्पदेपरिवीतऽइळस्पदे+ ॥ तंयज्ञसाधमपिवातयामस्यृतस्यपथानमसाहविष्मताद्वेवताताहविष्मता । सनं
ऽऊर्जामुपाभृत्ययाकृपानजूर्यति । यंमातरिश्वामनवेपरावतोदेवंभाःपरावतः ॥ एवेनसद्यःपर्यैतिपार्थिवंमुहुर्गीरेतो
वृषभःकनिक्रदद्दधद्रेतःकनिक्रदत् । शतंचक्षाणोऽअक्षभिर्देवोवनेषुतुर्वणिः । सदोदधानऽउपरेषुसानुष्वग्निःपरेषुसानु
षु ॥ ससुक्रतुःपुरोहितोदमेदमेग्निर्यज्ञस्याध्वरस्यचेततिक्रत्वायज्ञस्यचेतति । क्रत्वावेधाऽइषूयतेविश्वाजातानिपस्पशे ।
यतोघृतश्रीरतिथिरजायतवह्निर्वेधाऽअजायत ॥ क्रत्वायदस्यतविषीषुपृंचतेग्नेरवेणमरुतांनभोज्यैषिरायनभोज्या । सहि
ष्मादानमिन्वतिवसूनांचमज्मना । सनस्त्रासतेदुरितादभिह्रुतःशंसादघादभिह्रुतः ॥ १४ ॥ विश्वोविहायाऽअरतिर्वसुर्द
धेहस्तेदक्षिणेतरणिर्नशिश्रथच्छ्रवस्ययानशिश्रथत् । विश्वस्माऽइदिषुध्यतेदेवत्राहव्यमोहिषे । विश्वस्माऽइत्सुकृतेवार
मृण्वत्यग्निर्द्वाराव्यृण्वति ॥ समानुषेवृजनेशंतमोहितो३ग्निर्यज्ञेषुजेन्योनविश्पतिःप्रियोयज्ञेषुविश्पतिः । सहव्यामा
नुषाणामिळाकृतानिपत्यते । सनस्त्रासतेवरुणस्यधूर्तेर्महोदेवस्यधूर्तेः+ ॥ अग्निंहोतारमीळतेवसुधितिंप्रियंचेतिष्ठमर



---

( १।१९।२ ) अयंजायतेत्यष्टर्चस्यसूक्तस्यदैवोदासिःपरुच्छेपोग्निरत्यष्टिः ।

तिंन्यैरिरेहव्यवाहुंन्यैरिरे । विश्वायुंविश्ववेंदसंहोतारंयजतंकविं । देवासौरण्वमवंसेवसूयवौगीभीरण्वंवंसूयवंः ॥ १५ ॥ ( १।१९।३ ) यंत्वंरथमिंद्रमेधसांतयेपाकासंतमिषिरप्रणयंसिप्रानंवद्यनयंसि । सद्यश्चित्तमभिष्टंयेकरोव शंश्चवाजिनं । सास्माकंमनवद्यतूतुजानवेधसांमिमांवाचंनवेधसां ॥ सःश्रुधियःस्मापृतनासुकासुचिद्दक्षाय्यंऽइंद्रभर हूतयेनृभिरसिप्रतूर्तयेनृभिः । यःशूरैःस्वंःसनिंतायोविप्रैर्वाजंतरुंता । तमीशानासंऽइरधंतवाजिनंपृक्षमत्यंनवाजि नं ॥ दस्मोहिष्मावृषंणंपिन्वंसित्वचंकंचिद्यावीररुंशूरमत्यंपरिवृणक्षिमत्यं । इंद्रोततुभ्यंतद्दिवेतद्रुद्रायस्वयंशसे । मित्रायंवोचंवरुंणायसप्रथंःसुमृळीकायसप्रथंः ॥ अस्माकंवऽइंद्रंमुश्मसीष्टयेसखायंविश्वायुंप्रासहंयुजंवाजेषुप्रासहंयु जं । अस्माकंब्रह्मोतयेवांपृत्सुषुकासुचित् । नहित्वाशत्रुःस्तरंतेस्तृणोषियंविश्वंशत्रुंस्तृणोषियं ॥ निषूनमातिंमतिंकय स्यचित्तेजिष्ठाभिररणिंभिर्नोतिंभिरुग्राभिरुग्रोतिभिः । नेषिणोयथांपुरानेनाःशूरमन्यंसे । विश्वानिपूरोरपंपर्षिवह्निं रासावह्निर्नोऽअच्छं ॥ १६ ॥ प्रतद्वोंचेयंभव्यायेंदवेहव्योनयऽइषवान्मन्मरेजंतिरक्षोहामन्मरेजंति । स्वयंसोऽअस्मदा निदोवधैरंजेतदुर्मतिं । अवंस्रवेदघशंसोवतरमवंक्षुद्रमिवस्रवेत् ॥ वनेमतद्धोत्रयाचितंत्यावनेमरयिंरंयिवःसुवीर्यंर ण्वंसंतंसुवीर्यं । दुर्मन्मानंसुमंतुभिरेमिषापृंचीमहि । आसत्याभिरिंद्रंद्युम्नहूतिभिर्यजंत्रंद्युम्नहूतिभिः ॥ प्रप्रावोऽअ

---

( १।१९।३ ) यंत्वंरथमित्येकादशर्चस्यसूक्तस्यदैवोदासिःपरुच्छेपइंद्रःषष्ठ्याइंद्रुरत्यष्टिःअष्टमीनवम्यावतिशक्वर्यावेकादश्यष्टिः ।

स्मेस्वयंशोभिरूतीपरिवर्गऽइंद्रोदुर्मतीनांदरीमन्दुर्मतीनां । स्वयंसारिषयध्यैयानंऽउपेषेऽअत्रैः । हतेमसन्नवक्षतिक्षिप्ताजूर्णिर्नवक्षति ॥ त्वंनंऽइंद्ररायापरीणसायाहिपथाँऽअनेहसांपुरोयाह्यरक्षसां । सचस्वनःपराकऽआसचस्वास्तमीकऽआ । पाहिनोदूरादारादभिष्टिभिःसदापाह्यभिष्टिभिः ॥ त्वंनंऽइंद्ररायातरूषसोग्रंचित्त्वामहिमासक्षदवसेमहेमित्रंनावसे । ओजिष्ठत्रातरवितारथंकंचिदमर्त्य । अन्यमस्मद्रिरिषेःकंचिदद्रिवोरिरिक्षंतंचिदद्रिवः ॥ पाहिनंऽइंद्रसुष्टुतस्रिधोवयातासदमिदुर्मतीनांदेवःसन्दुर्मतीनां ॥ हंतापापस्यरक्षसस्त्राताविप्रस्यमावतः । अधाहित्वाजनिताजीजनद्वसोरक्षोहणंत्वाजीजनद्वसो ॥ १७ ॥ ( १।१९।४ ) एंद्रयाह्युपनःपरावतोनायमच्छाविदथानीवसत्पतिरस्तंराजेवसत्पतिः । हवामहेत्वावयंप्रयस्वंतःसुतेसचा । पुत्रासोनपितरंवाजसातयेमंहिष्ठंवाजसातये ॥ पिबासोममिंद्रसुवानमद्रिभिःकोशेनसिक्तमवतंनवंसगस्तातृषाणोनवंसगः । मदायहर्यतायतेतुविष्टमायधायसे । आत्वायच्छंतुहरितोनसूर्यमहाविश्वेवसूर्यं ॥ अविंदद्दिवोनिहितंगुहानिधिंवेर्नगर्भंपरिवीतमश्मन्यनंतेऽअंतरश्मनि । व्रजंवज्रीगवामिवसिषासन्नंगिरस्तमः । अपावृणोदिषऽइंद्रःपरीवृताद्वारऽइषःपरीवृताः ॥ दादृहाणोवज्रमिंद्रोगभस्त्योःक्षद्मेवतिग्ममसनायसंश्यदहिहत्यायसंश्यत् । संविव्यानऽओजसाशवोभिरिंद्रमज्मना । तष्टेववृक्षंवनिनोनिवृश्चसिपरश्वेवनिवृश्चसि ॥

( १।१९।४ ) एंद्रयाहीतिदशर्चस्यसूक्तस्यदैवोदासिःपरुच्छेपइंद्रोत्यष्टिरंत्यात्रिष्टुप् । ( अष्टिरित्येवप्रयोगःसाधुः ) ।

त्वंवृथानद्यंऽइंद्रसर्तवेच्छांसमुद्रमंसृजोरथाँऽइववाजयतोरथाँऽइव । इतऽऊतीरंयुंजतसमानमर्थमक्षितं । धेनूरिंवमनंवे विश्वदोहसोजनायविश्वदोहसः ॥ १८ ॥ इमांतेवाचंवसूयंतंऽआयवोरथंनधीरःस्वपाऽअतक्षिषुःसुम्नायत्वामंतक्षिषुः । शुंभंतोजेन्यंयथावाजेषुविप्रवाजिनं । अत्यंमिवशवंसेसातयेधनाविश्वाधनानिसातये ॥ भिनत्पुरोनवतिमिंद्रपूरवेदिवो दासायमहिंदाशुषेनृतोवज्रेणदाशुषेनृतो । अतिथिग्वायशंबरंगिरेरुग्रोऽअवाभरत् । महोधनानिदयंमानऽओजंसावि श्वाधनान्योजंसा ॥ इंद्रःसमत्सुयजंमानमार्यंप्रावद्विश्वेषुशतमूतिराजिषुस्वंमीळ्हेष्वाजिषु । मनंवेशासंदव्रतान्त्वचंकृ ष्णामंरंधयत् । दक्षन्नविश्वंततृषाणमोषतिन्यंर्शसानमोषति ॥ सूरंश्चक्रंप्रवृहज्जातऽओजंसाप्रपित्वेवाजंमरुणोमुंषाय तीशानऽआमुंषायति । उशनायत्परावतोजंगन्नूतयेकवे । सुम्नानिविश्वामनुंषेवतुर्वणिरहाविश्वेवतुर्वणिः ॥ सनोन व्यंभिर्वृषकर्मन्नुक्थैःपुरांदर्तःपायुभिःपाहिशग्मैः । दिवोदासेभिरिंद्रस्तवानोवावृधीथाऽअहोभिरिवद्यौः+ ॥ १९ ॥ ( १।१९।५ ) इंद्रायहिद्यौरसुंरोऽअनम्नतेंद्रायमहीपृथिवीवरीमभिर्द्युम्नसातावरीमभिः । इंद्रंविश्वेसजोषसोदेवासो दधिरेपुरः । इंद्रायविश्वासवंनानिमानुंषारातानिंसंतुमानुंषा ॥ विश्वेषुहित्वासवंनेषुतुंजतेसमानमेकंवृषमण्यवःपृथक् स्वःसनिष्यवःपृथक् । तंत्वानावंनपर्षणिंशूषस्यंधुरिधीमहि । इंद्रंनयज्ञैश्चितयंतऽआयवःस्तोमेभिरिंद्रमायवः ॥ वि

---

( १।१९।५ ) इंद्रायहीतिसप्तर्चस्यसूक्तस्यदैवोदासिःपरुच्छेपऋषिः ।

त्वांततस्रेमिथुनाऽअवस्यवोव्रजस्यसातागव्यस्यनिःसृजःसक्षंतऽइंद्रनिःसृजंः । यद्गव्यंताद्वाजनास्व१र्यंतासमूहंसि । आविष्कारिंक्रद्वृषणंसचाभुवंवज्रमिंद्रसचाभुवं ॥ विदुष्टेऽअस्यवीर्यस्यपूरवःपुरोयदिंद्रशारदीरवातिरःसासहानोऽ अवातिरः । शासस्तमिंद्रमर्त्यमयज्युंशवसस्पते । महीममुष्णाःपृथिवीमिमाऽअपोमंदसानऽइमाऽअपः+ ॥ आदित्ते ऽअस्यवीर्यस्यचर्किरन्मदेषुवृषन्नुशिजोयदाविथसखीयतोयदाविथ । चकर्थकारमेभ्यःपृतनासुप्रवंतवे । तेऽअन्यामं न्यांनद्यंसनिष्णतश्रवस्यंतःसनिष्णत ॥ उतोनोऽअस्याऽउषसोजुषेतह्य१र्कस्यबोधिहविषोहवीमभिःस्वर्षाताहवीम भिः । यदिंद्रहंतवेमृधोवृषावज्रिन्चिकेतसि । आमेऽअस्यवेधसोनवीयसोमन्मश्रुधिनवीयसः ॥ त्वंतमिंद्रवावृ धानोऽअस्मयुरमित्रयंतंतुविजातमर्त्यंवज्रेणशूरमर्त्यं । जहियोनोऽअघायतिशृणुष्वसुश्रवस्तमः । रिष्टंनयामन्नपभूतु दुर्मतिर्विश्वापभूतुदुर्मतिः+ ॥ २० ॥ (१।१९।६) त्वयावयंमघवन्पूर्व्येधनऽइंद्रत्वोताःसासह्यामपृतन्यतोवनुयामं वनुष्यतः । नेदिष्ठेऽअस्मिन्नहन्यधिवोचानुसुन्वते । अस्मिन्यज्ञेविचयेमाभरेकृतंवाजयंतोभरेकृतं+ ॥ स्वर्जेषे भरेऽआप्रस्यवक्मन्युषर्बुधःस्वस्मिन्नंजसिक्राणस्यस्वस्मिन्नंजसि । अहन्निंद्रोयथाविदेशीर्ष्णाशीर्ष्णोपवाच्यः । अस्म त्रातेसध्र्यक्संतुरातयोभद्राभद्रस्यरातयः ॥ तत्तुप्रयःप्रत्नथातेशुशुक्वनंयस्मिन्यज्ञेवारमकृण्वतक्षयमृतस्यवारसिक्षयं ।



(१।१९।६) त्वयावयमितिषडृचस्यसूक्तस्यदैवोदासिःपरुच्छेपइंद्रोयुवंतमिंद्रेत्यर्धर्चेइंद्रापर्वतावत्यष्टिः ।

वितद्वौचेरधद्वितांतःपंश्यंतिरश्मिभिः । सघांविदेऽअन्विंद्रौगवेषणोवंधुक्षिद्भ्योगवेषणः ॥ नूऽइत्थातेंपूर्वथाचप्रवा
च्यंयदंगिरोभ्योवृंणोरपंव्रजमिंद्रशिक्षन्नपंव्रजं । ऐभ्यंःसमान्यादिशास्मभ्यंजेषियोत्सिच । सुन्वद्भ्योरंधयाकंचिंदव्रतं
हृंणायंतंचिदव्रतं+ ॥ संयज्जनान्क्रतुंभिःशूरंऽईक्षयद्धनेहितेतंरुषंतश्रवस्यवःप्रयंक्षंतश्रवस्यवंः । तस्माऽआयुंःप्रजाव
दिद्बाधेंऽअर्चंत्योजंसा । इंद्रंऽओक्यंदिधिषंतधीतयोंदेवाँऽअच्छानधीतयंः ॥ युवंतमिंद्रापर्वतापुरोयुधायोनंःपृत
न्यादपतंतमिद्धंतंवज्रेणतंतमिद्धंतं । दूरेचत्तायंच्छन्त्सद्गहंनंयदिनंक्षत् । अस्माकंशत्रून्परिंशूरविश्वतोंदर्मादंर्षीष्टवि
श्वतंः ॥ २१ ॥ ( १।१९।७ ) उभेपुंनामिरोदंसीऽऋतेनद्रुहोंदहामिसंमहीरंनिंद्राः । अभिव्लग्ययत्रंहताऽअमित्रां
वैलस्थानंपरिंतृह्वाऽअशेरन् ॥ अभिव्लग्यांचिदद्रिवःशीर्षायांतुमतीनां । छिंधिवंटूरिणांपदामहावंतूरिणापदा+ ॥
अवांसांमघवन्जहिशर्धोयातुमतीनां । वैलस्थानकेऽअंर्मकेमहावैलस्थेऽअर्मके+ ॥ यासाँतिस्रःपंचाशतोंभिव्लंगैरपाव
पः । तत्सुतेंमनायतितकत्सुतेंमनायति ॥ पिशंगंभृष्टिमंभृणंपिशाचिंमिंद्रसंमृण । सर्वंरक्षोनिर्बर्हय ॥ अवर्महऽइंद्र
दादृहिश्रुधीनंःशुशोचहिद्यौःक्षानभीषाँऽअंद्रिवोघृणान्नभीषाँऽअंद्रिवः । शुष्मिन्तंमोहिशुष्मिभिर्वधैरुग्रेभिरीयंसे । अ
पूरुषघ्नोऽअप्रतीतशूरसत्वंभिस्त्रिसप्तैःशूरसत्वभिः ॥ वनोतिहिसुन्वन्क्षयंपरीणसःसुन्वानोहिष्मायंजत्यवद्विषोंदेवा

---

( १।१९।७ ) उभेपुनामीतिसप्तर्चस्यसूक्तस्यदैवोदासिःपरुच्छेपइंद्रआद्यात्रिष्टुप्द्वितीयादितिस्रोनुष्टुभःपंचमीगायत्रीषष्ठीधृतिःसप्तम्यष्टिः।

नामवद्विषः । सुन्वानऽइत्सिंषासतिसहस्रांवाज्यवृंतः । सुन्वानायेंद्रोंददात्याभुवंरयिंददात्याभुवं ॥ २२ ॥ ( १।२०।१ ) आत्वाजुवोंरारहाणाऽअभिप्रयोवायोवहंत्विहपूर्वपीतयेसोमंस्यपूर्वपीतये । ऊर्ध्वातेऽअनुंसूनृतामनंस्तिष्ठतुजानती । नियुत्वंतारथेनायांहिदावनेवायोंमखस्यंदावने ॥ मंदंतुत्वामंदिनोंवायविंदवोस्मत्क्राणासःसुकृताऽअभिद्यवोगोभिः क्राणाऽअभिद्यवः । यद्धक्राणाऽइरध्यैदक्षंसचंतऽऊतयः । सध्रीचीनानियुतोंदावनेधियऽउपब्रुवतऽईंधियंः ॥ वायुर्युंक्तेरोहिंतावायुररुणावायूरथेंऽअजिराधुरिवोळ्हवेवहिंष्ठाधुरिवोळ्हवे । प्रबोधयापुरंधिंजारऽआसंसतीमिंव । प्रचक्षयरोदसीवासयोषसःश्रवंसेवासयोषसंः ॥ तुभ्यंमुषासःशुचयःपरावतिभद्रावस्त्रातन्वतेदंसुरश्मिषुचित्रानव्येषुरश्मिषु । तुभ्यंधेनुःसंबर्दुघाविश्वावसूंनिदोहते । अजनयोमरुतोंवक्षणाभ्योदिवऽआवक्षणाभ्यः ॥ तुभ्यंशुक्रासःशुचयस्तुरण्यवोमदेषूग्राऽइषणंतभुर्वण्यपामिषंतभुर्वणि । त्वांत्सारीदसमानोभगमीट्टेतक्ववीये । त्वंविश्वस्माद्भुवनात्पासिधर्मणासुर्यात्पासिधर्मणा ॥ त्वंनोवायवेषामपूर्व्यःसोमानांप्रथमःपीतिमर्हसिसुतानांपीतिमर्हसि । उतोविहुत्मतीनांविशांववर्जुषीणां । विश्वाऽइत्तेधेनवोंदुह्रऽआशिरंघृतंदुह्रतऽआशिरम् ॥ २३ ॥ ( १।२०।२ ) स्तीर्णंबर्हिरुपनोयाहि



---

( १।२०।१ ) आत्वाजुवइतिषड्टचस्यसूक्तस्यदैवोदासिःपरुच्छेपोवायुरत्यष्टिरंत्याष्टिः । ( १।२०।२ ) स्तीर्णंबर्हिरितिनवर्चस्यसूक्तस्यदैवोदासिःपरुच्छेपोवायुश्चतुर्थ्यादिपंचानामिंद्रोवाअत्यष्टिःसप्तम्यष्टम्यावष्टी ।

वीतयेसहस्रिणनियुतांनियुत्वतेशतिनींभिर्नियुत्वते । तुभ्यंहिपूर्वपीतयेदेवादेवाययेमिरे । प्रतेसुतासोमधुमंतोऽअस्थिरन्मदायक्रत्वेऽअस्थिरन् ॥ तुभ्यायंसोमःपरिपूतोऽअद्रिभिःस्पार्हावसानःपरिकोशमर्षतिशुक्रावसानोऽअर्षति । तवायंभागऽआयुषुसोमोदेवेषुहूयते । वहवायोनियुतोयाह्यस्मयुर्जुषाणोयाह्यस्मयुः+ ॥ आनोनियुद्भिःशतिनीभिरध्वरंसहस्रिणीभिरुपयाहिवीतयेवायोहव्यानिवीतये । तवायंभागऽऋत्वियःसरश्मिःसूर्येसचा । अध्वर्युभिर्भरमाणाऽअयंसततवायोशुक्राऽअयंसत ॥ आवांरथोनियुत्वान्वक्षदवसेभिप्रयांसिसुधितानिवीतयेवायोहव्यानिवीतये । पिबतंमध्वोऽअंधसःपूर्वपेयंहिवांहितं । वायवाचंद्रेणराधसागतमिंद्रश्चराधसागतं ॥ आवांधियोववृत्युरध्वराँऽउपेममिंदुंमर्मृजंतवाजिनमाशुमत्यंनवाजिनं । तेषांपिबतमस्मयूऽआनोगंतमिहोत्या । इंद्रवायूसुतानामद्रिभिर्युवंमदायवाजदायुवं+ ॥ २४ ॥ इमेवांसोमाऽअप्स्वासुताऽइहाध्वर्युभिर्भरमाणाऽअयंसततवायोशुक्राऽअयंसत । एतेवामभ्यसृक्षततिरःपवित्रमाशवः । युवायवोतिरोमाण्यव्ययासोमासोऽअत्यव्यया ॥ अतिवायोससतोयाहिशश्वतोयत्रग्रावावदतितत्रगच्छतंगृहमिंद्रश्चगच्छतं । विसूनृतादद्दशेरीयतेघृतमापूर्णयानियुतायाथोऽअध्वरमिंद्रश्चयाथोऽअध्वरं+ ॥ अत्राहतद्वहेथेमध्वऽआहुतिंयमश्वत्थमुपतिष्ठंतजायवोस्मेतेसंतुजायवः । साकंगावःसुवतेपच्यतेयवोनतेवायऽउपदस्यंतिधेनवोनापदस्यंतिधेनवः ॥ इमेयेतेसुवायोबाह्वोजसोंतर्नदीतेपतयंत्युक्षणोमहिव्राधंतऽउक्षणः । धन्वंन्चिद्येऽअनाशवोजीरा

ऋक्सं. अ.२अ.१ ॥ ९ ॥

मंडलं १ अनु. २० ॥ ९ ॥

श्चिदगिरौकसः । सूर्यस्येवरश्मयोदुर्नियंतवोहस्तयोर्दुर्नियंतवः ॥ २५ ॥ ( १।२०।३ ) प्रसुज्येष्ठंनिचिराभ्यांबृहन्नमो
हव्यंमतिंभरतामृळयद्भ्यांस्वादिष्ठंमृळयद्भ्यां । तासम्राजाघृतासुतीयज्ञेयज्ञऽउपस्तुता । अथैनोःक्षत्रंनकुतश्चनाधृषेदेव
त्वंनूचिदाधृषे ॥ अदर्शिगातुरुरवेवरीयसीपंथाऽऋतस्यसमयंस्तरश्मिभिश्चक्षुर्भगस्यरश्मिभिः । द्युक्षंमित्रस्यसादनमर्य
म्णोवरुणस्यच । अथादधातेबृहदुक्थ्यं१वयऽउपस्तुत्यंबृहद्वयः । ज्योतिष्मतीमदितिंधारयत्क्षितिंस्वर्वतीमासचेते
दिवेदिवेजागृवांसादिवेदिवे । ज्योतिष्मत्क्षत्रमाशातेऽआदित्यादानुनस्पती । मित्रस्तयोर्वरुणोयातयज्जनोर्यमायात
यज्जनः ॥ अयंमित्रायवरुणायशंतमःसोमोभूत्ववपानेष्वाभगोदेवोदेवेष्वाभगः । तंदेवासोजुषेरतविश्वेऽअद्यसजोष
सः । तथाराजानाकरथोयदीमहऽऋतावानायदीमहे ॥ योमित्रायवरुणायाविधज्जनोनर्वाणंतंपरिपातोऽअंहसोदा
श्वांसंमर्तमंहसः । तमर्यमाभिरक्षत्यृजूयंतमनुव्रतं । उक्थैर्यऽएनोःपरिभूषतिव्रतंस्तोमैराभूषतिव्रतं+ ॥ नमोदिवेबृ
हतेरोदसीभ्यांमित्रायवोचंवरुणायमीळ्हुषेसुमृळीकायमीळ्हुषे । इंद्रमग्निमुपस्तुहिद्युक्षमर्यमणंभगं । ज्योग्जीवंतःप्रज

---

( १।२०।३ ) प्रसुज्येष्ठमितिसप्तर्चस्यसूक्तस्यदैवोदासिःपरुच्छेपोमित्रावरुणौनमोदिवइत्यस्यारोदसीमित्रावरुणेंद्राग्न्यर्यमभगसोमा
देवताःऊतीदेवानामित्यस्यादेवमरुदग्निमित्रवरुणमघवंतोदेवताअत्यष्टिःअंत्यात्रिष्टुप् ।

यांसचेमहिसोमंस्योतीसंचेमहि ॥ ऊतीदेवानांवयमिंद्रवंतोमंसीमहिस्वयंशसोमरुद्भिः । अग्निर्मित्रोवरुणःशर्मंयंसन्त दश्यामम्घवानोवयंच ॥ २६ ॥ इतिद्वितीयाष्टकेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥

## द्वितीयाष्टके सूक्तानि ११९ ऋचः ११५७

नवमाध्यायेवर्गाः २६ सूक्तानि १५ ऋचः १३७॥त्यागः॥ विश्वेभ्योदेवेभ्य. १५ [ भे. प. रुद्रमरुद्भ्यइदं. उषासानक्ताभ्यामिदं. विश्वेभ्यो-देवेभ्यइदं. अश्विभ्यामिदं. विश्वेभ्योदेवेभ्यइदं. मित्रावरुणसिंधुभ्यइदं. विश्वेभ्योदेवेभ्यइदं. २ मित्रावरुणाभ्यामिदं. २ विश्वेभ्योदेवेभ्यइदं. ५ ] उषसइदं. २६ स्वनयायेदं. ७ भावयव्यायेदं. ५ रोमशायेदं. भावयव्यायेदं. अग्नयइदं. १९ इंद्रायेदं. ५ इंदवइदं. इंद्रायेदं. २७ इंद्रा-पर्वतेंद्रेभ्यइदं. इंद्रायेदं. ७ वायवइदं. ९ इंद्रवायुभ्यामिदं ५ वायवइदं. मित्रावरुणाभ्यामिदं. ५ सूर्यरोदसीमित्रवरुणरुद्रेंद्राग्न्यर्यमभगसो-मेभ्यइदं. देवमरुदग्निमित्रवरुणमघवद्भ्यइदं. १ ॥ इतिद्वितीयेप्रथमः ॥ १ ॥

सुषुमतृचमतिशाक्वरंप्रप्रचतुष्कंपौष्णमस्तुश्रौषळेकादशवैश्वदेवींमैत्रावरुण्याश्विन्यस्तिस्रऐंद्र्याग्नेयीमारुत्यैं द्राग्नीबार्हस्पत्यावैश्वदेव्यंत्यात्रिष्टुप्पंचमीबृहतीवैश्वदेवमेतदेवमन्यासामपिसूक्तप्रयोगेवैश्वदेवत्वंसूक्तभेदप्रयो गेयलिंगंसादेवतावेदिषदेसप्तोनांदीर्घतमाऔचथ्यआग्नेयंतुद्विस्त्रिष्टुबंतंतुत्रिष्टुब्दशमीवांबळित्थासमिद्धआप्रि यंआनुष्टुभमंत्यैंद्रींप्रतव्यसीमष्टावाग्नेयंतंतत्रिष्टुबंतमेतिप्रसप्तजागतंतंपश्च्छतपंचांत्यात्रिष्टुप्त्रिमूर्धानंकथामथी

न्महः सत्रैराजैंपुरुतृचमौष्णिहंमित्रंनवमैत्रावरुणंहिंजागतंमैत्र्याद्यांयुवंसप्तयजामहेचतुष्कंविष्णोःषड्वैष्णवंहिं
प्रवोजागतंत्वैंद्रश्चाद्यस्तृचोभवपंचानोधिषळाश्विनंत्वंत्येत्रिष्टुभौ ॥ २ ॥ ॥ ॥



हरिः३ओम्(१।२०१४) सुषुमायातमद्रिभिर्गोश्रीतामत्सराऽइमेसोमासोमत्सराऽइमे। आराजानादिविस्पृशास्मत्रागंतमुपनः। इमेवांमित्रावरुणागवाशिरःसोमाःशुक्रागवाशिरः॥ इमऽआयातमिंदवःसोमासोदध्याशिरःसुतासोदध्याशिरः। उतवामुषसोबुधिसाकंसूर्यस्यरश्मिभिः। सुतोमित्रायवरुणायपीतयेचारुर्ऋतायपीतये॥ तांवांधेनुंनवासरीमंशुंदुहंत्यद्रिभिःसोमंदुहंत्यद्रिभिः। अस्मत्रागंतमुपनोर्वाचासोमपीतये। अयंवांमित्रावरुणानृभिःसुतःसोमऽआपीतयेसुतः+॥१॥(१।२०१५) प्रप्रपूष्णस्तुविजातस्यंशस्यतेमहित्वमस्यतवसोनतंदतेस्तोत्रमस्यनतंदते। अर्चामिसुम्नयन्नहमंत्यूतिंमयोभुवं। विश्वस्ययोमनऽआयुयुवेमखोदेवऽआयुयुवेमखः+ ॥ प्रहित्वापूषन्नजिरंनयामनिस्तोमेभिःकृण्वऽऋणवोयथामृधऽउष्ट्रोनपीपरोमृधः। हुवेयत्त्वामयोभुवंदेवंसख्यायमर्त्यः। अस्माकमांगूषान्द्युम्निनस्कृधिवाजेषुद्युम्निनस्कृधि॥ यस्यतेपूषन्त्सख्येविपन्यवःक्रत्वाचित्संतोवसाबुभुज्रिरऽइतिक्रत्वाबुभुज्रिरे। तामनुत्वानवीयसींनियुतंरायऽईमहे। अहेळमानऽउरुशंससरीभववाजेवाजेसरीभव॥ अस्याऽऊषुणऽउपसातयेभुवोहेळमानोररिवाँऽअजा



(१।२०१४) सुषुमेतितृचस्यसूक्तस्यदैवोदासिःपरुच्छेपोमित्रावरुणावतिशक्करी। (१।२०१५) प्रप्रपूष्णइतिचतुर्ऋचस्यसूक्तस्य

श्वश्रवस्यतामंजाश्व । ओषुत्वांववृतीमहिस्तोमेभिर्दस्मसाधुभिः । नहित्वांपूषन्नतिमन्यऽआघृणेनतेसख्यमपह्नुवे + ॥
॥ २ ॥ ( १।२०।६ ) अस्तुश्रौषट्पुरोऽअग्निंधियादधऽआनुतच्छर्धोदिव्यंवृणीमहऽइंद्रवायूवृणीमहे । यद्धक्राणा
विवस्वतिनाभासंदायिनव्यसी । अधप्रसूनऽउपयंतुधीतयोदेवाँऽअच्छानधीतयः ॥ यद्धत्यन्मित्रावरुणावृतादध्या
ददाथेऽअनृतंस्वेनमन्युनादक्षस्यस्वेनमन्युना । युवोरित्थाधिसद्मस्वपश्यामहिरण्ययं । धीभिश्चनमनसास्वेभिरक्षभिः
सोमस्यस्वेभिरक्षभिः ॥ युवांस्तोमेभिर्देवयंतोऽअश्विनाश्रावयंतऽइवश्लोकमायवोयुवांहव्याभ्या३यवः । युवोर्विश्वा
ऽअधिश्रियःपृक्षश्चविश्ववेदसा । प्रुषायंतेवांपवयोहिरण्ययेरथेदस्राहिरण्यये ॥ अचेतिदस्राव्यु१नाकमृण्वथोयुंजते
वांरथयुजोदिविष्टिष्वध्वस्मानोदिविष्टिषु । अधिवांस्थामवंधुरेरथेदस्राहिरण्यये । पथेवयंतावनुशासतारजोंजसाशा
संतारजः ॥ शचीभिर्नःशचीवसूदिवानक्तंदशस्यतं । मावांरातिरुपदसत्कदाचनास्मद्रातिःकदाचन + ॥ ३ ॥ वृषन्निं

---

दैवोदासिःपरुच्छेपःपूषात्यष्टिः । ( १।२०।६ ) अस्तुश्रौषडित्येकादशर्चस्यसूक्तस्यदैवोदासिःपरुच्छेपआद्यायाविश्वेदेवाःद्वितीयाया
मित्रावरुणौतृतीयादितिसृणामाश्विनौषष्ठ्याइंद्रःसप्तम्याअग्निरष्टम्यामरुतोनवम्याइंद्राग्नीदशम्याबृहस्पतिरंत्यायाविश्वेदेवाअत्यष्टिःपंचमी
बृहत्यंत्यात्रिष्टुप् । ( वैश्वदेवमेतत्सूक्तं । अत्रप्रत्येकंदेवताविभागस्त्वाकरएवपठितः । अनयैवदिशासर्वत्रापिवैश्वदेवसूक्तेदेवताविभागः
कर्तव्यइतिहितदनुज्ञा । यथाह—एवमन्यासामपिसूक्तप्रयोगेवैश्वदेवत्वं सूक्तभेदप्रयोगेतुयाल्लिंगंसादेवतेति ) ।

ऋक्सं. अ.२अ.२ ॥११॥ मंडलं १ अनु. २१

द्रवृषपाणासऽइंदंवऽइमेसुताऽअद्रिषुतासऽउद्भिदस्तुभ्यंसुतासऽउद्भिदः । तेत्वामंदंतुदावनेमहेचित्रायराधसे । गीर्भिर्गिर्वाहःस्तवमानऽआगहिसुमृळीकोनऽआगहि ॥ ओषूणोऽअग्नेश्रृणुहित्वमीळितोदेवेभ्योब्रवसियज्ञियेभ्योराजभ्योयज्ञियेभ्यः । यद्धत्यामंगिरोभ्योधेनुंदेवाऽअदत्तन । वितांदुह्रेऽअर्यमाकर्तरीसचाँऽएषतांवेदमेसचा ॥ मोषुवोऽअस्मदभितानिपौंस्यासनाभूवन्द्युम्नानिमोतजारिषुरस्मत्पुरोतजारिषुः । यद्वश्चित्रंयुगेयुगेनव्यंघोषादमर्त्यं । अस्मासुतन्मरुतोयच्चदुष्टरंदिधृतायच्चदुष्टरं ॥ दध्यङ्हमेजनुषंपूर्वोऽअंगिराःप्रियमेधःकण्वोऽअत्रिर्मनुर्विदुस्तेमेपूर्वेमनुर्विदुः । तेषांदेवेष्वायतिरस्माकंतेषुनाभयः । तेषांपदेनमह्यानमेगिरेंद्राग्नीऽआनमेगिरा+ ॥ होतायक्षद्वनिनोवंतवार्यंबृहस्पतिर्यजतिवेनऽउक्षभिःपुरुवारेभिरुक्षभिः । जगृभ्मादूरऽआदिशंश्लोकमद्रेरधत्मना । अधारयदररिंदानिसुक्रतुःपुरूसद्मानिसुक्रतुः ॥ येदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ । अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमंजुषध्वं ॥ ४ ॥ ( १।२१।१ ) वेदिषदेप्रियधामायसुद्युतेधासिमिवप्रभरायोनिमग्नये । वस्त्रेणेववासयामन्मनाशुचिंज्योतीरथंशुक्रवर्णंतमोहनं ॥ अभिद्विजन्मात्रिवृदन्नमृज्यतेसंवत्सरेवावृधेजग्धमीपुनः । अन्यस्यासाजिह्वयाजेन्योवृषान्यं१न्येनवनिनोमृष्टवारणः+ ॥ कृष्णप्रुतौवेविजेऽअस्यसक्षिताऽउभातरेतेऽअभिमातराशिशुं । प्राचाजिह्वं

( १।२१।१ ) वेदिषदइतित्रयोदशर्चस्यसूक्तस्यौचथ्योदीर्घतमाऋषिर्जगतीछंदोऽग्निर्देवता त्रिष्टुभौदशमीत्रिष्टुब्वा ।

ध्वसयंतंतृषुच्युतमासाच्यंकुपयंवर्धनंपितुः+ ॥ मुमुक्ष्वो३ मनंवेमानवस्यतेरघुद्रुवःकृष्णसीतासऽऊजुवः । असमनाऽ
अंजिरासोरघुष्यदोवातजूताऽउपयुज्यंतऽआशवः ॥ आदस्यतेध्वसयंतोवृथेरतेकृष्णमभ्वंमहिवर्पःकरिक्रतः । यत्सीं
महीमवनिंप्राभिमर्मृशदभिश्वसन्स्तनयन्नेतिनानदत् ॥ ५ ॥ भूषन्नयोधिबभ्रूषुनम्नतेवृषेवपत्नीरभ्येतिरोरुवत् ।
ओजायमानस्तन्वश्चशुंभतेभीमोनश्रृंगादविधावदुर्गृभिः ॥ ससंस्तिरोविष्टिरःसंगृभायतिजानन्नेवजानतीर्नित्यऽआ
शये । पुनर्वर्धंतेऽअपियंतिदेव्यमन्यद्वर्पःपित्रोःकृण्वतेसचा ॥ तमग्रुवःकेशिनीःसंहिरेभिरऽऊर्ध्वास्तस्थुर्ममुषीःप्राय
वेपुनः । तासांजरांप्रमुंचन्नेतिनानददसुंपरंजनयन्जीवमस्तृतं ॥ अधीवासंपरिमातूरिहन्नहतुविग्रेभिःसत्वभिर्यातिवि
ज्रयः । वयोदधत्पद्वतेरेरिहत्सदानुश्येनीसचतेवर्तनीरह ॥ अस्माकमग्नेमघवत्सुदीदिह्यधश्वसीवान्वृषभोदमूनाः ।
अवास्याशिशुमतीरदीदेर्वर्मेवयुत्सुपरिजर्भुराणः ॥ ६ ॥ इदमग्नेसुधितंदुर्धितादधिप्रियादुचिन्मन्मनःप्रेयोऽअस्तुते ।
यत्तेशुक्रंतन्वो३ रोचतेशुचितेनास्मभ्यंवनसेरत्नमात्वं+ ॥ रथायनावमुतनोगृहायनित्यारित्रांपद्वतींरास्यग्ने । अस्मा
कंवीराऽउतनोमघोनोजनांश्चयापारयाच्छर्मयाच ॥ अभीनोऽअग्नऽउक्थमिज्जुगुर्याद्यावाक्षामासिंधवश्चस्वगूर्ताः ।
गव्यंयव्यंयंतोदीर्घाहेषंवरमरुण्योवरंत ॥ ७ ॥ ( १।२१।२ ) बळित्थातद्वपुषेधायिदर्शतंदेवस्यभर्गःसहसोयतोजनि ।

( १।२१।२ ) बळित्थेतित्रयोदशर्चस्यसूक्तस्यौचथ्योदीर्घतमाअग्निर्जगतीअंत्येद्वेत्रिष्टुभौ ।

ऋक्सं. यदीमुपह्वरंतेसाधंतेमतिर्ऋतस्यधेनाऽअनयंतसस्रुतः ॥ पृक्षोवपुःपितुमान्नित्यऽआशयेद्वितीयमासप्तशिवासुमातृषु । मंडलं १
अ.२अ.२ तृतीयमस्यवृषभस्यदोहसेदशप्रमतिंजनयंतयोषणः ॥ निर्यदींबुध्नान्महिषस्यवर्पसऽईशानासःशवसाक्रंतसूरयः । यदी अनु. २१
मनुप्रदिवोमध्वऽआधवेगुहासंतंमातरिश्वामथायति ॥ प्रयत्पितुःपरमान्नीयतेपर्यापृक्षुधोवीरुधोदंसुरोहति । उभाय
॥१२॥ दस्यजनुषंयदिन्वतऽआदिद्यविष्ठोऽअभवद्धृणाशुचिः ॥ आदिन्मातॄराविशद्यास्वाशुचिरहिंस्यमानऽउर्वियाविवावृ
धे । अनुयत्पूर्वाऽअरुहत्सनाजुवोनिनव्यसीष्ववरासुधावते ॥ ८ ॥ आदिद्धोतारंवृणतेदिविष्टिषुभगमिवपपृचाना
सऽऋंजते । देवान्यत्क्रत्वामज्मनापुरुष्टुतोमर्तंशंसंविश्वधावेतिधायसे ॥ वियदस्थाद्यजतोवातचोदितोह्वारोनवक्वाज
रणाऽअनाकृतः । तस्यपत्मन्दक्षुषःकृष्णजंहसःशुचिजन्मनोरजऽआव्यध्वनः ॥ रथोनयातःशिक्वभिःकृतोद्यामंगेभि
ररुषेभिरीयते । आदस्यतेकृष्णासोदक्षिसूरयःशूरस्येवत्वेषथादीषतेवयः ॥ त्वयाह्यग्नेवरुणोधृतव्रतोमित्रःशाशद्रेऽअ
र्यमासुदानवः । यत्सीमनुक्रतुनाविश्वथाविभुररान्ननेमिःपरिभूरजायथाः ॥ त्वमग्नेशशमानायसुन्वतेरत्नंयविष्ठदेव
तातिमिन्वसि । तंत्वानुनव्यंसहसोयुवन्वयंभगंनकारेमहिरत्नधीमहि ॥ अस्मेरयिंनस्वर्थंदमूनसंभगंदक्षंनपपृचासिध ॥१२॥
र्णसिं । रश्मींऽरिवयोयमतिजन्मनीऽउभेदेवानांशंसमृतऽआचसुक्रतुः ॥ उतनःसुद्योत्माजीराश्वोहोतामंद्रःशृणवच्चं
द्ररथः । सनोनेषन्नेषतमैरमूरोग्निर्वामंसुवितंवस्योऽअच्छ ॥ अस्ताव्यग्निःशिमीवद्भिरर्कैःसाम्राज्यायप्रतरंदधानः ।

अमीचयेमघवांनोवयंचमिहुंनसूरोऽअतिनिष्टंतन्युः ॥ ९ ॥ ( १।२१।३ ) समिद्धोऽअग्नऽआवहदेवाँऽअद्ययतस्रुचे । तंतुंतनुष्वपूर्व्यंसुतसोमायदाशुषे ॥ घृतवंतमुपमासिमधुमंतंतनूनपात् । यज्ञंविप्रस्यमावतःशशमानस्यदाशुषः ॥ शुचिःपावकोऽअद्भुतोमध्वायज्ञंमिमिक्षति । नराशंसस्त्रिरादिवोदेवेषुयज्ञियः ॥ ईळितोऽअग्नऽआवहेंद्रंचित्रमिह प्रियं । इयंहित्वामतिर्ममाच्छासुजिह्ववच्यते ॥ स्तृणानासोयतस्रुचोबर्हिर्यज्ञेस्वध्वरे । वृंजेदेवव्यचस्तममिंद्रायशर्मस प्रथः ॥ विश्रयंतामृतावृधःप्रयैदेवेभ्योमहीः । पावकासःपुरुस्पृहोद्वारोदेवीरसश्चतः ॥ १० ॥ आभंदमानेऽउपाके नक्तोषासासुपेशसा । यह्वीऽऋतस्यमातरासीदतांबर्हिरासुमत्+ ॥ मंद्रजिह्वाजुगुर्वणीहोतारादैव्याकवी । यज्ञंनोय क्षतामिमंसिध्रमद्यदिविस्पृशं ॥ शुचिर्देवेष्वर्पिताहोत्रामरुत्सुभारती । इळासरस्वतीमहीबर्हिःसीदंतुयज्ञियाः ॥ त न्नस्तुरीपमद्भुतंपुरुवारंपुरुत्मना । त्वष्टापोषायविष्यतुरायेनाभानोऽअस्मयुः+ ॥ अवसृजन्नुपत्मनादेवान्यक्षिवनस्प ते । अग्निर्हव्यासुषूदतिदेवोदेवेषुमेधिरः ॥ पूषण्वतेमरुत्वतेविश्वदेवायवायवे । स्वाहागायत्रवेपसेहव्यमिंद्रायकर्त न ॥ स्वाहाकृतान्यागह्युपहव्यानिवीतये । इंद्रागहिश्रुधीहवंत्वांहवंतेऽअध्वरे+ ॥ ११ ॥ ( १।२१।४ ) प्रतव्यसीं

---

( १।१२।३ ) समिद्धोअग्नइतित्रयोदशर्चस्यसूक्तस्यौचथ्योदीर्घतमाऋषिःइध्मस्तनूनपान्नराशंसइळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौ सरस्वतीळाभारत्यस्त्वष्टावनस्पतिःस्वाहाकृतयइतिक्रमेणदेवताःअंत्यायाइंद्रोनुष्टुप् । ( १।२१।४ ) प्रतव्यसीमित्यष्टर्चस्यसूक्तस्यौचथ्यो

नव्यसीं धीतिमग्नये वाचो मतिं सहसः सूनवे भरे । अपां नपाद्यो वसुभिः सह प्रियो होता पृथिव्यां न्यसीददृत्वियः । स जायमानः परमे व्योमन्याविरग्निरभवन्मातरिश्वने । अस्य क्रत्वा समिधानस्य मज्मना प्र द्यावा शोचिः पृथिवी अरोचयत् ॥ अस्य त्वेषा अजरा अस्य भानवः सुसंदृशः सुप्रतीकस्य सुद्युतः । भात्वक्षसो अत्यक्तुर्न सिंधवोऽग्ने रेजंते अससंतो अजराः ॥ यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना । अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥ न यो वराय मरुतामिव स्वनः सेनेव सृष्टा दिव्या यथाशनिः । अग्निर्जंभैस्तिगितैरत्ति भर्वति योधो न शत्रून्त्स वना न्यृंजते ॥ कुविन्नो अग्निरुचथस्य वीरसद्वसुष्कुविद्वसुभिः काममावरत् । चोदः कुवित्तुतुज्यात्सातये धियः शुचिप्रतीकं तमया धिया गृणे ॥ घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋंजते । इंधानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियं ॥ अप्रयुच्छन्नप्रयुच्छद्भिरग्ने शिवेभिर्नः पायुभिः पाहि शग्मैः । अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः परि पाहि नो जाः ॥ १२ ॥ ( १।२१।५ ) एति प्र होता व्रतमस्य माययोर्ध्वां दधानः शुचिपेशसं धियं । अभि स्रुचः क्रमते दक्षिणावृतो या अस्य धाम प्रथमं ह निंसते ॥ अभी मृतस्य दोहना अनूषत योनौ देवस्य सदने परीवृताः । अपामुपस्थे विभृतो यदावसदध स्वधा अधयद्याभिरीयते ॥ युयूषतः सवयसा तदिद्वपुः समानमर्थं वितरित्रता मिथः । आदीं भगो न



दीर्घतमा अग्निर्जगती अंत्या त्रिष्टुप् । ( १।२१।५ ) एतीति सप्तर्चस्य सूक्तस्यौचथ्यो दीर्घतमा अग्निर्जगती ।

हव्यः सम्स्रदावोह्लुर्नरश्मीन्त्समयंस्त्सारथिः ॥ यमीद्वासवयसासपर्यतःसमानेयोनामिथुनासमोकसा । दिवाननक्तंपलितोयुवाजनिपुरूचरन्नजरोमानुषायुगा ॥ तमींहिन्वंतिधीतयोदशव्रिशोदेवंमर्तासऽऊतयेहवामहे । धनोरधिप्रवतऽआसऽऋण्वत्यभिव्रजद्भिर्वयुनानवाधित ॥ त्वंह्यग्नेदिव्यस्यराजसित्वंपार्थिवस्यपशुपाऽइवत्मना । एनीतऽएतेबृहतीऽअभिश्रियाहिरण्ययीवक्करीवर्हिराशाते ॥ अग्नेजुषस्वप्रतिहर्यतद्वचोमंद्रस्वधावऽऋतजातसुक्रतो । योविश्वतःप्रत्यङ्ङसिदर्शतोरण्वःसंदृष्टौपितुमाँऽइवक्षयः ॥ १३ ॥ ( १।२१।६ ) तंपृच्छतासजगामासवेदसचिकित्वाँईयतेसान्वीयते । तस्मिन्त्संतिप्रशिषस्तस्मिन्निष्टयःसवाजस्यशवसःशुष्मिणस्पतिः ॥ तमित्पृच्छंतिनसिमोविपृच्छतिस्वेनेवधीरोमनसायदग्रभीत् । नमृष्यतेप्रथमंनापरंवचोस्यक्रत्वासचतेऽअप्रदृपितः ॥ तमिद्गच्छंतिजुह्वस्तमर्वतीर्विश्वान्येकःशृणवद्वचांसिमे । पुरुप्रैषस्ततुरिर्यज्ञसाधनोच्छिद्रोतिःशिशुरादत्तसंरभः ॥ उपस्थायंचरतियत्समारतसद्योजातस्तत्सारयुज्येभिः । अभिश्वांतंमृशतेनांद्येमुदेयदींगच्छंत्युशतीरपिष्ठितं ॥ सईंमृगोऽअप्योवनर्गुरुपत्वच्युपमस्यांनिधायि । व्यब्रवीद्वयुनामर्त्येभ्योग्निर्विद्वाँऽऋतचिद्धिसत्यः ॥ १४ ॥ ( १।२१।७ ) त्रिमूर्धानंसप्तरश्मिंगृणीषेनूनमग्निंपित्रोरुपस्थे । निषत्तमस्यचरतोध्रुवस्यविश्वादिवोरोचनापप्रिवांसं ॥ उक्षामहाँऽअभिववक्षऽएनेऽअजरस्त

---

( १।२१।६ ) तंपृच्छतेतिपंचर्चस्यसूक्तस्यौचथ्योदीर्घतमाअग्निर्जगतीअंत्यात्रिष्टुप् । ( १।२१।७ ) त्रिमूर्धानमितिपंचर्चस्यसूक्तस्यौचथ्यो

स्थावितऽऊंतिर्क्रुष्वः । उर्व्याःपदोनिदंधातिसानौरिहंत्यूधोऽअरुषासोऽअस्य ॥ समानंवत्समभिसंचरंतीविष्वंक्धे
नूविचंरतःसुमेकें । अनपवृज्याँऽअध्वंनोमिमांनेविश्वान्केताँऽअधिंमहोदधांने ॥ धीरांसःपदंकवयोंनयंतिनानांहृदा
रक्षंमाणाऽअजुर्यं । सिषांसंतःपर्यंपश्यंतसिंधुमाविरेंभ्योऽअभवत्सूर्योऽनृन्+ ॥ दिदृक्षेण्यःपरिकाष्ठांसुजेन्यंऽईळेन्यो
महोऽअर्भायजीवसें । पुरुत्रायदभंवत्सूरहैंभ्योगर्भेभ्योमघवांविश्वदंर्शतः ॥१५॥ (१।२१।८) कुथातेंऽअग्नेशुचयंतऽआ
योर्दंदाशुर्वाजेंभिराशुषाणाः । उभेयत्तोकेतनयेदधांनाऽऋतस्यसामंन्रणयंतदेवाः+ ॥ बोधांमेऽअस्यवचंसोयविष्ठमं
हिंष्ठस्यप्रभृंतस्यस्वधावः । पीयंतित्वोऽअनुंत्वोगृणातिवंदारुस्तेतन्वंवंदेऽअग्ने ॥ येपायवोंमामतेयंतेंऽअग्नेपश्यंतोऽअं
धंदुंरितादरंक्षन् । ररक्षतान्त्सुकृतोंविश्ववेंदादिप्संतऽइद्रिपवोनाहंदेभुः ॥ योनोंऽअग्नेऽअररिवाँऽअघायुररातीवा
मर्चयंतिद्वयेनं । मंत्रोंगुरुःपुनंरस्तुसोऽअंस्माऽअनुंमृक्षीष्टतन्वंदुरुक्तैः+ ॥ उतवायःसंहस्यप्रविद्वान्मर्तोमर्तंमर्चयंति
द्वयेनं । अतःपाहिस्तवमानस्तुवंतमग्नेमाकिंनोंदुरितायंधायीः ॥ १६ ॥ ( १।२१।९ ) मथीद्यदींविष्टोमांतरिश्वाहो
तांरंविश्वाप्सुंविश्वदेंव्यं । नियंदधुर्मनुष्यांसुविक्षुस्वं१र्णचित्रंवपुंषेविभावं ॥ ददानमिन्नदंदभंतमन्माग्निर्वरूथंममत
स्यंचाकन् । जुषंतविश्वान्यस्यकर्मोपंस्तुतिंभरंमाणस्यकारोः+ ॥ नित्येंचिन्नुयंसदंनेजगृभ्रेप्रशंस्तिभिर्दधिरेयज्ञियां

दीर्घतमाअग्निस्त्रिष्टुप् । ( १।२१।८ ) कथातइतिपंचर्चस्यसूक्तस्यौचथ्योदीर्घतमाअग्निस्त्रिष्टुप् । (१।२१।९) मथीद्यदीमितिपंचर्चस्यसूक्त

सः । प्रसूनयंतगृभयंतऽइष्टावश्वासोनरथ्योरारहाणाः+ ॥ पुरूणिदस्मोनिरिणातिजंभैराद्रोचतेवनऽआविभावा । आदस्यवातोऽअनुवातिशोचिरस्तुर्नशर्यामसनामनुद्यून्+ ॥ नयंरिपवोनरिषण्यवोगर्भेसंतंरेषणारेषयंति । अंधाऽअ पश्यानदभन्नभिख्यानित्यासऽईंप्रेतारोऽअरक्षन् ॥ १७ ॥ ( १।२१।१० ) महःसरायऽएषंतेपतिर्दन्निनऽइनस्यव सुनःपदऽआ । उपध्रजंतमद्रयोविधन्नित्+ ॥ सयोवृषानरांनरोदस्योःश्रवोभिरस्तिजीवपीतसर्गः । प्रयःसस्राणःशि श्रीतयोनौ ॥ आयःपुरंनार्मिणीमदीदेदत्यःकविर्नभन्योऽ३नार्वा । सूरोनरुरुक्वान्छतात्मा ॥ अभिद्विजन्मात्रीरोच नानिविश्वारजांसिशुशुचानोऽअस्थात् । होतायजिष्ठोऽअपांसधस्थे ॥ अयंसहोतायोद्विजन्माविश्वादधेवार्याणिश्रव स्या । मर्तोयोऽअस्मैसुतुकोददाश ॥ १८ ॥ ( १।२१।११ ) पुरुत्वादाश्वान्वोचेरिरग्नेतववस्विदा । तोदस्येवशरण ऽआमहस्य ॥ व्यऽनिनस्यधनिनःप्रहोषेचिदररुषः । कदाचनप्रजिगतोऽअदेवयोः ॥ सचंद्रोविप्रमर्त्योमहोव्राधन्त मोदिवि । प्रप्रेत्तेऽअग्नेवनुषःस्याम॥ १९॥ ( १।२१।१२ ) मित्रंनयंशिम्यागोषुगव्यवःस्वाध्योविदथेऽअप्सुजीजनन् । अरेजेतांरोदसीपाजसागिराप्रतिप्रियंयजतंजनुषामवः ॥ यद्धत्यद्वांपुरुमीह्ळस्यसोमिनःप्रमित्रासोनदधिरेस्वाभुवः ।

---

स्यौचथ्योदीर्घतमाअग्निस्त्रिष्टुप् । ( १।२१।१० ) महःसरायइतिपंचर्चस्यसूक्तस्यौचथ्योदीर्घतमाअग्निर्विराट् । ( १।२१।११ ) पुरुत्वेतितृ चस्यसूक्तस्यौचथ्योदीर्घतमाअग्निरुष्णिक् । ( १।२१।१२ ) मित्रंनयमितिनवर्चस्यसूक्तस्यौचथ्योदीर्घतमामित्रावरुणावाद्यायामित्रोजगती ।

ऋक्सं. अ.२अ.२ ॥१५॥

अधक्रतुंविदतंगातुमर्चंतऽउतश्रुतंवृषणापस्त्यावतः ॥ आवांभूषन्क्षितयोजन्मरोदंस्योःप्रवाच्यंवृषणादक्षसेमहे । यदींमृतायभरथोयदर्वतेप्रहोत्रयाशिम्यावीथोऽअध्वरं ॥ प्रसाक्षितिरसुरयामहिप्रियऽऋतावानावृतमाघोषथोबृहत् । युवंदिवोबृहतोदक्षमाभुवंगांनधुर्युपयुंजाथेऽअपः ॥ महीऽअत्रमहिनावारमृण्वथोरेणवस्तुजऽआसद्मन्धेनवः । स्वरं तिताऽउपरतातिसूर्यमानिम्रुचंऽउषसस्तक्ववीरिव ॥ २० ॥ आवामृतायकेशिनीरनूषतमित्रयत्रवरुणगातुमर्चथः । अवत्मनासृजतंपिन्वतंधियोयुवंविप्रस्यमन्मनामिरज्यथः ॥ योवांयज्ञैःशशमानोहदाशतिकविर्होतायजतिमन्मसाधनः । उपाहतंगच्छथोवीथोऽअध्वरमच्छागिरःसुमतिंगंतमस्मयू ॥ युवांयज्ञैःप्रथमागोभिरंजतऽऋतावानामनसोन प्रयुक्तिषु । भरंतिवांमन्मनासंयतागिरोदृप्यतामनसारेवदाशाथे ॥ रेवद्वयोदधाथेरेवदाशाथेनरामायाभिरितऽऊतिमाहिनं । नवांद्यावोहभिर्नोतसिंधवोनदेवत्वंपणयोनानशुर्मघं ॥ २१ ॥ ( १।२१।१३ ) युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः । अवातिरतमनृतानिविश्वऽऋतेनमित्रावरुणासचेथे ॥ एतच्चनत्वोविचिकेतदेषांसत्योमंत्रःकविशस्तऽऋघावान् । त्रिरश्रिंहंतिचतुरश्रिरुग्रोदेवनिदोहप्रथमाऽअजूर्यन् ॥ अपादेतिप्रथमापद्वतीनांकस्तद्वांमित्रावरुणाचिकेत । गर्भोभारंभरत्याचिदस्यऽऋतंपिपर्त्यनृतंनितारीत् ॥ प्रयंतमित्परिजारंकनीनांपश्यामसिनो

मंडलं १ अनु. २१ ॥१५॥

( १।२१।१३ ) युवंवस्त्राणीतिसप्तर्चस्यसूक्तस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् ।

पनिपद्यमानं । अनवपृग्णाविततावसानंप्रियंमित्रस्यवरुणस्यधाम ॥ अनश्वोजातोऽअनभीशुरर्वाकनिक्रदत्पतयदूर्ध्व
सानुः । अचित्तंब्रह्मजुजुषुर्युवानःप्रमित्रेधामवरुणेगृणंतः ॥ आधेनवोमामतेयमवंतीर्ब्रह्मप्रियंपीपयन्त्सस्मिन्नूधन् ।
पित्वोभिक्षेतवयुनानिविद्वानासाविवासन्नदितिमुरुष्येत् ॥ आवांमित्रावरुणाहव्यजुष्टिंनमसादेवाववसाववृत्यां ।
अस्माकंब्रह्मपृतनासुसह्याऽअस्माकंवृष्टिर्दिव्यासुपारा॥ २२ ॥( १।२१।१४ ) यजामहेवांमहःसजोषाहव्येभिर्मित्रावरु
णानमोभिः । घृतैर्घृतस्नूऽअधयद्वामस्मेऽअध्वर्यवोनधीतिभिर्भरंति ॥ प्रस्तुतिर्वाधामनप्रयुक्तिरयामिमित्रावरुणासुवृ
क्तिः । अनक्तियद्वांविदथेषुहोतासुम्नंवांसूरिर्वृषणावियक्षन् ॥ पीपायधेनुरदितिर्ऋतायजनायमित्रावरुणाहविर्दे ।
हिनोतियद्वांविदथेसपर्यन्त्सरातहव्योमानुषोनहोता ॥ उतवांविक्षुमद्यास्वंधोगावऽआपश्चपीपयंतदेवीः । उतोनोऽ
अस्यपूर्व्यःपतिर्दन्वीतंपातंपयसऽउस्रियायाः ॥ २३ ॥ (१।२१।१५ ) विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिवि
ममेरजांसि । योऽअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायः+ ॥ प्रतद्विष्णुःस्तवतेवीर्येणमृगोनभीमःकुचरोगि
रिष्ठाः । यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वा ॥ प्रविष्णवेशूषमेतुमन्मगिरिक्षितऽउरुगायायवृष्णे ।

---

( १।२१।१४ ) यजामहइतिचतुर्ऋचस्यसूक्तस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् । ( १।२१।१५ ) विष्णोर्नुकमितिषड्ऋचस्यसूक्त
स्यौचथ्योदीर्घतमाविष्णुस्त्रिष्टुप् ।

यऽइदंदीर्घंप्रयंतंसधस्थमेकोविममेत्रिभिरित्पदेभिः ॥ यस्यत्रीपूर्णामधुनापदान्यक्षीयमाणाःस्वधयामदंति । यऽउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वा ॥ तदस्यप्रियमभिपाथोऽअश्यांनरोयत्रदेवयवोमदंति । उरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेपरमेमध्वऽउत्सः ॥ तावांवास्तून्युश्मसिगमध्यैयत्रगावोभूरिशृंगाऽअयासः । अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरि ॥ २४ ॥ ( १।२१।१६ ) प्रवःपांतमंधसोधियायतेमहेशूरायविष्णवेचार्चत । यासानुनिपर्वतानामदाभ्यामहस्तस्थतुरर्वतेवसाधुना ॥ त्वेषमित्थासमरणंशिमीवतोरिंद्राविष्णूसुतपावामुरुष्यति । यामर्त्यायप्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥ ताऽईंवर्धंतिमह्यस्यपौंस्यंनिमातरानयतिरेतसेभुजे । दधातिपुत्रोवरंपरंपितुर्नामतृतीयमधिरोचनेदिवः[+] ॥ तत्तदिदस्यपौंस्यंगृणीमसीनस्यत्रातुरवृकस्यमीह्ळुषः । यःपार्थिवानित्रिभिरिद्विगामभिरुरुक्रमिष्टोरुगायायजीवसे ॥ द्वेऽइदस्यक्रमणेस्वर्दृशोभिख्यायमर्त्योभुरण्यति । तृतीयमस्यनकिरादधर्षतिवयश्चनपतयंतःपतत्रिणः ॥ चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्यतीँऽरवीविपत् । बृहच्छरीरोविमिमानऽऋक्वभिर्युवाकुमारःप्रत्येत्याहवं[+] ॥ २५ ॥ ( १।२१।१७ ) भवामित्रोनशेव्योघृतासुतिर्विभूतद्युम्नऽएवयाऽउसप्रथाः । 

---

( १।२१।१६ ) प्रवःपांतमितिषड्टचस्यसूक्तस्यौचथ्योदीर्घतमाआद्यानांतिसृणामिंद्राविष्णूततस्तिसृणांविष्णुर्जगती । (१।२१।१७) भवामित्रइतिपंचर्चस्यसूक्तस्यौचथ्योदीर्घतमाविष्णुर्जगती ।

अधांतेविष्णोविदुषांचिदर्ध्यः स्तोमोयज्ञश्चराध्योंहविष्मंता ॥ यःपूर्व्यायवेधसेनवीयसेसुमज्जानयेविष्णवेददाशति ।
योजातमस्यमहतोमहिब्रवत्सेदुश्रवोभिर्युज्यंचिदभ्यसत् ॥ तमुस्तोतारःपूर्व्यंयथाविदऽऋतस्यगर्भंजनुषापिपर्तन ।
आस्यजानंतोनामचिद्विवक्तनमहस्तेविष्णोसुमतिंभजामहे ॥ तमस्यराजावरुणस्तमश्विनाक्रतुंसचंतमारुतस्यवेधसः ।
दाधारदक्षमुत्तममहर्विदंव्रजंचविष्णुःसखिवाँऽअपोर्णुते ॥ आयोविवायसचथायदैव्यऽइंद्रायविष्णुःसुकृतेसुकृत्तरः ।
वेधाऽअजिन्वत्त्रिषधस्थऽआर्यमृतस्यभागेयजमानमाभजत् ॥ २६ ॥ ( १।२२।१ ) अबोध्यग्निर्ज्मऽउदेतिसूर्योव्युषाश्चंद्रामह्यावोऽअर्चिषा । आयुक्षातामश्विनायातवेरथंप्रासावीद्देवःसविताजगत्पृथक् । यद्युंजाथेवृषणमश्विनारथंघृतेननोमधुनाक्षत्रमुक्षतं । अस्माकंब्रह्मपृतनासुजिन्वतंवयंधनाशूरसाताभजेमहि ॥ अर्वाङ्त्रिचक्रोमधुवाहनोरथोजीराश्वोऽअश्विनोर्यातुसुष्टुतः । त्रिवंधुरोमघवाविश्वसौभगःशंनऽआवक्षद्द्विपदेचतुष्पदे ॥ आनऊर्जंवहतमश्विनायुवंमधुमत्यानःकशयामिमिक्षतं । प्रायुस्तारिष्टंनीरपांसिमृक्षतंसेधतंद्वेषोभवतंसचाभुवा ॥ युवंहगर्भंजगतीषुधत्थोयुवंविश्वेषुभुवनेष्वंतः । युवमग्निंचवृषणावपश्चवनस्पतीँऽरश्विनावैरयेथां ॥ युवंहस्थोभिषजाभेषजेभिरथोहस्थोरथ्याराथ्यैभिः । अथोहक्षत्रमधिधत्थऽउग्रायोवांहविष्मान्मनसाददाश ॥२७॥ ॥ इतिद्वितीयाष्टकेद्वितीयोऽध्यायः ॥२॥

( १।२२।१ ) अबोध्यग्निरितिषडृचस्यसूक्तस्यौचथ्योदीर्घतमाअश्विनौजगत्यंत्येद्वेत्रिष्टुभौ ।

दशमाध्याये वर्गाः २७ सूक्तावि २१ ऋचः १४३ ॥ त्यागः-मित्रावरुणाभ्यामिदं.३ पूष्णइदं.४ विश्वेभ्योदेवेभ्यइदं. मित्रावरुणाभ्यामिदं. अश्विभ्यामिदं.३ इंद्रायेदं. अग्नयइदं. मरुद्भ्यइदं. इंद्राग्निभ्यामिदं. बृहस्पतयइदं. विश्वेभ्योदेवेभ्यइदं. अग्नयइदं.२६ इध्मायेदं. तनूनपातइदं. नराशंसायेदं. इळायेदं. बर्हिषइदं. देवीभ्योद्वार्भ्यइदं. उषासानक्ताभ्यामिदं. देवीभ्यांहोतृभ्यांप्रचेतोभ्यामिदं. सरस्वतीळाभारतीभ्यइदं. त्वष्ट्रइदं. वनस्पतयइदं. स्वाहाकृतीभ्यइदं. इंद्रायेदं. अग्नयइदं.४३ मित्रायेदं. मित्रावरुणाभ्यामिदं.१९ विष्णवइदं.६ इंद्राविष्णुभ्यामिदं.३ विष्णवइदं.८ अश्विभ्यामिदं.६ ॥ इतिद्वितीयेद्वितीयः ॥ २ ॥

वसूअंत्यानुष्टुप्प्रद्यावापंचद्यावापृथिवीयंतुजागतंतुतेहिंकिमुश्रेष्ठःषळूनांभवंत्रिष्टुवंतंमानोद्व्यधिकाश्वस्तुतिस्तु तृतीयाषष्ठ्यौजगत्यौयदक्रंदःसप्तोनास्यद्विपंचाशदल्पस्तवंत्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्रप्रायेणंज्ञान मोक्षाक्षरप्रशंसार्चपंचपादंसाकंजानांयद्गायत्रेयंसशिंक्तैसप्तार्धगर्भागौरीरितिजगत्यएतदंतंतुवैश्वदेवंतस्याःस मुद्राइतिवाचःसमुद्राआपोक्षरंसाप्रस्तारपंक्तिःशकमयमितिशकधूमंउक्षाणंपृश्निमितिसोमंत्रयःकेशिनइत्यग्निः सूर्योवायुश्चकेशिनश्चत्वारिवाग्वाचंइंद्रंमित्रंसौर्यौद्वादशेतिसंवत्सरसंस्थंकालचक्रवर्णनंयस्तेसरस्वत्यैयज्ञेनसा ध्येभ्यःपरानुष्टुप्सौरीपर्जन्याग्निदेवतावांत्यासरस्वतेसूर्यायवाकयापंचोनासंवाद्स्तृतीयाद्ययुजोमरुतांवाक्यमं त्यस्तृचोगस्त्यस्यर्चशिष्टाइंद्रस्यैकादशीचंमरुत्वांस्त्विंद्रोदेवता ॥ ३ ॥ ॥ ॥

हरिः ३ ओम् ॥ ( १।२२।२ ) वसूरुद्रापुरुमंतूवृधंतादशस्यतंनोवृषणावभिष्टौ । दस्राहयद्रेक्णऽऔचथ्योवांप्रयतस्स्राथेऽअकवाभिरूती+ ॥ कोवांदाशत्सुमतयेचिदस्यैवसूयद्धेथेनमसापदेगोः । जिगृतमस्मेरेवतीःपुरंधीःकामप्रेणेवमनंसाचरंता ॥ युक्तोहयद्वांतौग्र्यायपेरुर्विमध्येऽअर्णसोधायिपज्रः । उपवामवःशरणंगमेयंशूरोनाज्मपतयद्भिरेवैः ॥ उपस्तुतिरौचथ्यमुरुष्येन्मामामिमेपतत्रिणीविदुग्धां । मामामेधोदशतयश्चितोधाक्प्रयद्वांबद्धस्त्मनिखादतिक्षां+ ॥ नमागरन्नद्योमातृतमादासायदींसुसमुब्धमवाधुः । शिरोयदस्यत्रैतनोवितक्षत्स्वयंदासऽउरोऽअंसावपिग्ध ॥ दीर्घतमामामतेयोजुजुर्वान्दशमेयुगे । अपामर्थंयतीनांब्रह्माभवतिसारथिः ॥ १ ॥ ( १।२२।३ ) प्रद्यावायज्ञैःपृथिवीऽऋतावृधामहीस्तुषेविदथेषुप्रचेतसा । देवेभिर्येदेवपुत्रेसुदंससेत्थाधियावार्याणिप्रभूषतः ॥ उतमन्येपितुरद्रुहोमनोमातुर्महिस्वतवस्तद्धवीमभिः । सुरेतसापितराभूमचक्रतुरुरुप्रजायाऽअमृतंवरीमभिः ॥ तेसूनवःस्वपसःसुदंससोमहीजज्ञुर्मातरापूर्वचित्तये । स्थातुश्चसत्यंजगतश्चधर्मणिपुत्रस्यपाथःपदमद्वयाविनः ॥ तेमायिनोममिरेसुप्रचेतसोजामीसयोनीमिथुनासमोकसा । नव्यंनव्यंतंतुमातन्वतेदिविसमुद्रेऽअंतःकवयःसुदीतयः ॥ तद्राधोऽअद्यसवि

( १।२२।२ ) वसूरुद्राइतिषडृचस्यसूक्तस्यौचथ्योदीर्घतमाअश्विनौत्रिष्टुबंत्यानुष्टुप् । ( १।२२।३ ) प्रद्यावायज्ञैरितिपंचर्चस्यसूक्तस्यौचथ्योदीर्घतमाद्यावापृथिव्यौजगती ।

तुर्वरेण्यंवयंदेवस्यप्रसवेमनामहे । अस्मभ्यंद्यावापृथिवीसुचेतुनारयिंधत्तंवसुमंतंशतग्विनं ॥ २ ॥ ( १।२२।४ ) तेहिद्यावापृथिवीविश्वशंभुवऽऋतावरीरजसोधारयत्कवी । सुजन्मनीधिषणेऽअंतरीयतेदेवोदेवीधर्मणासूर्यःशुचिः ॥ उरुव्यचसामहिनीऽअसश्चतापितामाताचभुवनानिरक्षतः । सुधृष्टमेवपुष्येऽनरोदसीपितायत्सीमभिरूपैरवासयत् ॥ सवह्निःपुत्रःपित्रोःपवित्रवान्पुनातिधीरोभुवनानिमायया । धेनुंचपृश्निंवृषभंसुरेतसंविश्वाहाशुक्रंपयोऽअस्यदुक्षत ॥ अयंदेवानामपसामपस्तमोयोजजानरोदसीविश्वशंभुवा । वियोममेरजसीसुक्रतूययाजरेभिःस्कंभनेभिःसमानृचे ॥ तेनोगृणानेमहिनीमहिश्रवःक्षत्रंद्यावापृथिवीधासथोबृहत् । येनाभिकृष्टीस्ततनामविश्वहापनाय्यमोजोऽअस्मेसमिन्वतं ॥ ३ ॥ ( १।२२।५ ) किमुश्रेष्ठःकिंयविष्ठोनऽआजगन्किमीयतेदूत्यं१कद्यदूचिम । ननिंदिमचमसंयोमहाकुलोग्नेभ्रातर्द्रुणऽइद्भूतिमूदिम ॥ एकंचमसंचतुरःकृणोतनतद्वोदेवाऽअब्रुवंतद्वऽआगमं । सौधन्वनायद्येवाकरिष्यथ साकंदेवैर्यज्ञियासोभविष्यथ ॥ अग्निंदूतंप्रतियदब्रवीतनाश्वःकर्त्वोरथऽउतेहकर्त्वः । धेनुःकर्त्वायुवशाकर्त्वाद्वातानि भ्रातरनुवःकृत्व्येमसि ॥ चकृवांसऽऋभवस्तदपृच्छतक्वेदभूद्यःस्यदूतोनऽआजगन् । यदावाख्यच्चमसांचतुरःकृताना



( १।२२।४ ) तेहीतिपंचर्चस्यसूक्तस्यौचथ्योदीर्घतमाद्यावापृथिव्यौजगती। ( १।२२।५ ) किमुश्रेष्ठइतिचतुर्दशर्चस्यसूक्तस्यौचथ्यो दीर्घतमाऋभवोजगत्यंत्यात्रिष्टुप् ।

दि॒त्त्वष्टा॒ग्नास्वं॒तन्र्यां॑नजे ॥ हना॑मैना॒ँऽइति॒त्वष्टा॒यदब्र॑वीच्चम॒सं॑येदे॑व॒पान॒मनि॑ँदिषुः । अ॒न्यानामा॑निकृ॒ण्वतेसु॒तेसचा॑ँ अ॒न्यैरे॑ना॒न्क॒न्या॒३॒॑नाम॑भिःस्परत् ॥ ४ ॥ इं॒द्रोहरी॑युयु॒जेऽअ॒श्विना॒रथं॒बृह॒स्पति॑र्वि॒श्वरू॑पा॒मुपा॑जत । ऋ॒भुर्वि॒भ्वावा जो॑दे॒वाँऽअ॑गच्छ॒तस्वप॑सोय॒ज्ञियं॑भा॒गमै॑तन ॥ निश्च॑र्मणो॒गाम॑रिणीतधी॒तिभि॒र्याज॑रं॑तायु॒वशाता॑कृणोतन । सौध॑न्व ना॒ऽअश्वा॒दश्वं॑मतक्षतयु॒क्त्वारथ॒मुप॑दे॒वाँऽअ॑यातन ॥ इ॒दमु॒द॒कं॑पिब॒तेत्य॑ब्रवीत॒नेदं॑वा॒घापिबतामुं॒ज॒नेजनं॑ । सौध॑न्व ना॒यदि॒तन्नेव॒हर्यै॑थतृ॒तीयै॑घा॒सव॑नेमादयाध्वै ॥ आपो॒भूयि॑ष्ठा॒ऽइत्ये॑कोऽअब्रवीद॒ग्निर्भूयि॑ष्ठ॒ऽइत्य॒न्योऽअ॑ब्रवीत् । व॒धर्यं॑ तीं॑ब॒हुभ्य॒ःप्रै॑कोऽअब्रवीदृ॒तावद॑न्तश्चम॒साँऽअ॑पिंशत ॥ श्रो॒णामेकं॑ऽउद॒कंगाम॑वाजति॒मांसमेकं॑ःपिंशतिसू॒नयाभृ॑तं । आनि॒म्रुच॒ःशकृ॒देक॒ोऽअपा॑भर॒त्किंस्वि॑त्पु॒त्रेभ्य॑ःपि॒तरा॒ऽउपा॑वतुः ॥ ५ ॥ उ॒द्वत्स्व॑स्माऽअकृणोतना॒तृणं॑नि॒वत्स्व॒पःस्व॑ प॒स्यया॑नरः । अगो॑ह्यस्य॒यद॑सस्तनागृ॒हेतद॒द्येदमृ॑भवो॒नानु॑गच्छथ ॥ सं॒मील्य॒यद्भुव॑नापर्यस॑र्पत॒क्वस्वि॑त्ता॒त्यापि॒तरा॑वऽ आसतुः । अश॑पत॒यःक॒रस्नं॑वऽआद॒देयःप्राब्र॑वी॒त्प्रोतस्मा॑ऽअब्रवीतन ॥ सु॒षु॒प्वांस॑ऽऋभव॒स्तद॑पृच्छ॒तागो॑ह्य॒कऽइ॒दंनो॑ ऽअबूबुधत् । श्वानं॑ब॒स्तोबो॑धयि॒तार॑मब्रवीत्सं॑वत्स॒रऽइ॒दम॒द्याव्य॑ख्यत ॥ दि॒वाया॑न्तिम॒रुतो॒भूम्या॒ग्निर॒यंवातो॑ऽअं॒तरि॑ क्षेणयाति । अ॒द्भिर्या॑ति॒वरु॑णःसमु॒द्रैर्यु॒ष्माँऽइ॒च्छन्त॑ःशवसोनपातः ॥ ६ ॥ ( १।२२।६ ) मानो॑मि॒त्रोवरु॑णोऽअर्य॒

---

( १।२२।६ ) मानोमित्रइतिद्वाविंशत्यृचस्यसूक्तस्यौचथ्योदीर्घतमाअश्वस्त्रिष्टुप्तृतीयाषष्ठ्यौजगत्यौ । ( अश्वस्तुत्याश्वोदेवता )।

मायुरिंद्रऽऋभुक्षामरुतःपरिख्यन् । यद्वाजिनोदेवजातस्यसप्तेःप्रवक्ष्यामोविदथेवीर्याणि ॥ यन्निर्णिजारेक्णसाप्रावृतस्यरातिंगृभीतांमुखतोनयंति । सुप्राङजोमेम्यद्विश्वरूपऽइंद्रापूष्णोःप्रियमप्येतिपाथः ॥ एषच्छागःपुरोऽअश्वेनवाजिनापूष्णोभागोनीयतेविश्वदेव्यः । अभिप्रियंयत्पुरोळाशमर्वतात्वष्टेदेनंसौश्रवसायजिन्वति ॥ यद्धविष्यमृतुशोदेवयानंत्रिर्मानुषाःपर्यश्वंनयंति । अत्रापूष्णःप्रथमोभागऽएतियज्ञंदेवेभ्यःप्रतिवेदयन्नजः+ ॥ होताध्वर्युरावयाऽअग्निमिंधोग्रावग्राभऽउतशंस्तासुविप्रः । तेनयज्ञेनस्वरंकृतेनस्विष्टेनवक्षणाऽआपृणध्वं ॥ ७ ॥ यूपव्रस्काऽउतयेयूपवाहाश्चषालंयेऽअश्वयूपायतक्षति । येचार्वतेपचनंसंभरंत्युतोतेषामभिगूर्तिर्नऽइन्वतु ॥ उपप्रागात्सुमन्मेधायिमन्मदेवानामाशाऽउपवीतपृष्ठः । अन्वेनंविप्राऽऋषयोमदंतिदेवानांपुष्टेचकृमासुबंधुं ॥ यद्वाजिनोदामसंदानमर्वतोयाशीर्षण्यारशनारज्जुरस्य । यद्वाघास्यप्रभृतमास्ये३तृणंसर्वाताते अपिदेवेष्वस्तु ॥ यदश्वस्यक्रविषोमक्षिकाशयद्वास्वरौस्वधितौरिप्तमस्ति । यद्धस्तयोःशमितुर्यन्नखेषुसर्वाताते अपिदेवेष्वस्तु ॥ यदूवध्यमुदरस्यापवातियऽआमस्यक्रविषोगंधोऽअस्ति । सुकृतातच्छमितारःकृण्वंतूतमेधंशृतपाकंपचंतु ॥ ८ ॥ यत्तेगात्रादग्निनापच्यमानादभिशूलंनिहतस्यावधावति । मातद्भूम्यामाश्रिषन्मातृणेषुदेवेभ्यस्तदुशद्भ्योरातमस्तु ॥ येवाजिनंपरिपश्यंतिपक्वंयऽईमाहुःसुरभिर्निर्हरेति । येचार्वतोमांसभिक्षामुपासतऽउतोतेषामभिगूर्तिर्नऽइन्वतु ॥ यन्नीक्षणंमांस्पचन्याऽउखायायापात्राणियूष्णऽ

आसेचनानि । ऊष्मण्यापिधानाचरूणामंकाःसूनाःपरिभूषंत्यश्वं ॥ निक्रमणंनिषदनंविवर्तनंयच्चपड्बीशमर्वतः । यच्चपपौयच्चघासिंजघाससर्वातातेऽअपिदेवेष्वस्तु ॥ मात्वाग्निर्ध्वनयीद्धूमगंधिर्मोखाभ्राजंत्यभिविक्तजघ्रिः । इष्टंवीतमभिगूर्तंवषट्कृतंतंदेवासःप्रतिगृभ्णंत्यश्वं ॥ ९ ॥ यदश्वायवासऽउपस्तृणंत्यधीवासंयाहिरण्यान्यस्मै । संदानमर्वंतंपड्बीशंप्रियादेवेष्वायामयंति ॥ यत्तेसादेमहसाशूकृतस्यपार्ष्ण्यावाकशयावातुतोद । स्रुचेवताहविषोऽअध्वरेषुसर्वातातेब्रह्मणासूदयामि ॥ चतुस्त्रिंशद्वाजिनोदेवबंधोर्वंक्रीरश्वस्यस्वधितिःसमेति । अच्छिद्रागात्रावयुनाकृणोतपरुष्परुरनुघुष्याविशस्त ॥ एकस्त्वष्टुरश्वस्याविशस्ताद्वायंताराभवतस्तथऽऋतुः । यातेगात्राणामृतुथाकृणोमितातापिंडानांप्रजुहोम्यग्नौ+ ॥ मात्वातपत्प्रियऽआत्मापियंतंमास्वधितिस्तन्व१आतिष्ठिपत्ते । मातेगृध्नुरविशस्तातिहायछिद्रागात्राण्यसिनामिथूकः ॥ नवाउऽएतन्म्रियसेनरिष्यसिदेवाँऽइदेषिपथिभिःसुगेभिः । हरीतेयुंजापृषतीऽअभूतामुपास्थाद्वाजीधुरिरासभस्य ॥ सुगव्यंनोवाजीस्वश्व्यंपुंसःपुत्राँऽउतविश्वापुषंरयिं । अनागास्त्वंनोऽअदितिःकृणोतुक्षत्रंनोऽअश्वोवनतांहविष्मान् ॥ १० ॥ ( १।२२।७ ) यदक्रंदःप्रथमंजायमानऽउद्यन्त्समुद्रादुतवापुरीषात् । श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यंमहिजातंतेऽअर्वन् ॥ यमेनदत्तंत्रितऽएनमायुनगिंद्रऽएणंप्रथमोऽअध्यतिष्ठत् । गंधर्वोऽ

( १।२२।७ ) यदक्रंदइतित्रयोदशर्चस्यसूक्तस्यौचथ्योदीर्घतमाअश्वस्त्रिष्टुप् ।

ऋक्सं.
अ.२अ.३
॥२०॥

अस्यरशनामगृभ्णात्सूरादश्वंवसवोनिरतष्ट ॥ असियमोऽअस्यादित्योऽअर्वन्नसित्रितोगुह्येनव्रतेन । असिसोमेनसम
याविपृक्तऽआहुस्तेत्रीणिदिविबंधनानि ॥ त्रीणितऽआहुर्दिविबंधनानित्रीण्यप्सुत्रीण्यंतःसमुद्रे । उतेवमेवरुणश्छ
न्त्स्यर्वन्यत्रातऽआहुःपरमंजनित्रं ॥ इमातेवाजिन्नवमार्जनानीमाशफानांसनितुर्निधाना । अत्रातेभद्रारशनाऽअप
श्यमृतस्ययाऽअभिरक्षंतिगोपाः+ ॥ ११ ॥ आत्मानंतेमनसारादजानामवोदिवापतयंतंपतंगं । शिरोऽअपश्यंपथि
भिःसुगेभिररेणुभिर्जेहमानंपतत्रि+ ॥ अत्रातेरूपमुत्तममपश्यंजिगीषमाणमिषऽआपदेगोः । यदातेमर्तोऽअनुभोग
मानळादिद्ग्रसिष्ठऽओषधीरजीगः ॥ अनुत्वारथोऽअनुमर्योऽअर्वन्ननुगावोनुभगःकनीनां । अनुव्रातासस्तवसख्यमी
युरनुदेवाममिरेवीर्यंते ॥ हिरण्यशृंगोयोऽअस्यपादामनोजवाऽअवरऽइंद्रऽआसीत् । देवाऽइदस्यहविरद्यमायन्योऽ
अर्वंतंप्रथमोऽअध्यतिष्ठत् ॥ ईर्मांतासःसिलिकमध्यमासःसंशूरणासोदिव्यासोऽअत्याः । हंसाऽइवश्रेणिशोयतंतेय
दाक्षिषुर्दिव्यमज्ममश्वाः ॥ १२ ॥ तवशरीरंपतयिष्ण्वर्वन्तवचित्तंवातऽइवध्रजीमान् । तवशृंगाणिविष्ठितापुरुत्रा
रण्येषुजर्भुराणाचरंति ॥ उपप्रागाच्छसनंवाज्यर्वादेवद्रीचामनसादीध्यानः । अजःपुरोनीयतेनाभिरस्यानुपश्चात्कव
योयंतिरेभाः+ ॥ उपप्रागात्परमंयत्सधस्थमर्वाँऽअच्छापितरंमातरंच । अद्यादेवान्जुष्टतमोहिगम्याऽअथाशास्तेदाशु

मंडलं. १
अनु. २२
॥२०॥

षेवार्यीणि ॥ १३ ॥ ( १।२२।८ ) अस्यवामस्यपलितस्यहोतुस्तस्यभ्राता मध्यमोऽअस्त्यश्नः । तृतीयोभ्राताघृतपृष्ठो ऽअस्यात्रापश्यंविश्पतिंसप्तपुत्रं ॥ सप्तयुंजंतिरथमेकचक्रमेकोऽअश्वोवहतिसप्तनामा । त्रिनाभिचक्रमजरमनर्वंयत्रे माविश्वाभुवनाधितस्थुः+ ॥ इमंरथमधियेसप्ततस्थुःसप्तचक्रंसप्तवहंत्यश्वाः । सप्तस्वासारोऽअभिसंनवंतेयत्रगवांनि हितासप्तनाम ॥ कोददर्शप्रथमंजायमानमस्थन्वंतंयदनस्थाबिभर्ति । भूम्याऽअसुरसृगात्माक्वस्वित्कोविद्वांसमुपगा त्प्रष्टुमेतत् ॥ पाकःपृच्छामिमनसाविजानन्देवानामेनानिहितापदानि । वत्सेबष्कयेधिसप्ततंतून्वितत्निरेकवयऽओ तवाऽउ ॥ १४ ॥ अचिकित्वान्चिकितुषश्चिदत्रकवीन्पृच्छामिविद्मनेनविद्वान् । वियस्तस्तंभषळिमारजांस्यजस्यरूपे किमपिस्विदेकं ॥ इहब्रवीतुयऽईमंगवेदास्यवामस्यनिहितंपदंवेः । शीर्ष्णःक्षीरंदुहतेगावोऽअस्यवव्रिंवसानाऽउदकं

---

( १।२२।८ ) अस्यवामस्येतिद्विपंचाशदृचस्यसूक्तस्यौचथ्योदीर्घतमाआद्यानामेकचत्वारिंशदृचांविश्वेदेवास्तस्याःसमुद्राइत्यस्यावाक्स मुद्राक्षरापःशकमयमित्यस्याःशकधूमसोमौत्रयःकेशिनइत्यस्याअग्निसूर्यवायवो (केशिनइतिगुणः) चत्वारिवागित्यस्यावाक्इंद्रंमित्रमिति द्वयोःसूर्योद्वादशप्रधयइत्यस्याःकालचक्रं ( अत्रसंवत्सरसंस्थंकालचक्रवर्णनं ) यस्तइत्यस्याःसरस्वतीयज्ञेनेत्यस्याःसाध्याःसमानमित्यस्याः सूर्यः ( पर्जन्याग्नीवा ) दिव्यंसुपर्णमित्यस्याःसरस्वान् ( सूर्योवा ) त्रिष्टुप् द्वादशीपंचदशीत्रयोविंशीएकोनत्रिंशीषट्त्रिंश्येकचत्वारिं- शीचजगत्यः द्विचत्वारिंशीप्रस्तारपंक्तिःएकपंचाश्यनुष्टुप् ।

पदापुः ॥ मातापितरंमृतऽआबभाजधीत्यग्रेमनसासंहिजग्मे । साबीभत्सुर्गर्भरसानिविद्धानमस्वंतऽइदुपवाकमीयुः ॥ युक्तामातासीद्धुरिदक्षिणायाऽअतिष्ठद्गर्भोवृजनीष्वंतः । अमीमेद्वत्सोऽअनुगामपश्यद्विश्वरूप्यंत्रिषुयोजनेषु ॥ तिस्रोमातृस्त्रीन्पितृन्बिभ्रदेकऽऊर्ध्वस्तस्थौनेमवग्लापयंति । मंत्रयंतेदिवोऽअमुष्यपृष्ठेविश्वविदंवाचमविश्वमिन्वां ॥ १५ ॥ द्वादशारंनहितज्जरायवर्वर्तिचक्रंपरिद्यामृतस्य । आपुत्राऽअग्नेमिथुनासोऽअत्रसप्तशतानिविंशतिश्चतस्थुः ॥ पंचपादंपितरंद्वादशाकृतिंदिवऽआहुःपरेऽअर्धेपुरीषिणं । अथेमेऽअन्यऽउपरेविचक्षणंसप्तचक्रेषळरऽआहुरर्पितं ॥ पंचारेचक्रेपरिवर्तमानेतस्मिन्नातस्थुर्भुवनानिविश्वा । तस्यनाक्षस्तप्यतेभूरिभारःसनादेवनशीर्यतेसनाभिः ॥ सनेमिचक्रमजरंविवावृतऽउत्तानायांदशयुक्तावहंति । सूर्यस्यचक्षूरजसैत्यावृतंतस्मिन्नार्पिताभुवनानिविश्वा ॥ साकंजानांसप्तथमाहुरेकजंषळिद्यमाऽऋषयोदेवजाऽइति । तेषामिष्टानिविहितानिधामशःस्थात्रेरेजंतेविकृतानिरूपशः+ ॥ १६ ॥ स्त्रियःसतीस्ताँऽउमेपुंसऽआहुःपश्यदक्षण्वान्नविचेतदंधः । कविर्यःपुत्रःसईमाचिकेतयस्ताविजानात्सपितुष्पितासत् ॥ अवःपरेणपरऽएनावरेणपदावत्संबिभ्रतीगौरुदस्थात् । साकद्रीचीकंस्विदर्धंपरागात्कस्वित्सूतेनहियूथेऽअंतः+ ॥ अवःपरेणपितरंयोऽअस्यानुवेदपरऽएनावरेण । कवीयमानःकऽइहप्रवोचद्देवंमनःकुतोऽअधिप्रजातं ॥ येऽअर्वाचस्ताँऽउपराचऽआहुर्येपरांचस्ताँऽउऽअर्वाचऽआहुः । इंद्रश्चयाचक्रथुःसोमतानिधुरानयुक्तारजसोवहंति ॥

द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते । तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योऽअभिचाकशीति ॥ १७ ॥ यत्रासुपर्णाऽअमृतस्यभागमनिमेषंविदथाभिस्वरंति । इनोविश्वस्यभुवनस्यगोपाःसमाधीरःपाकमत्राविवेश ॥ यस्मिन्वृक्षेमध्वदःसुपर्णानिविशंतेसुवतेचाधिविश्वे । तस्येदाहुःपिप्पलंस्वाद्वग्रेतन्नोन्नशद्यःपितरंनवेद ॥ यद्गायत्रेऽअधिगायत्रमाहितंत्रैष्टुभाद्वात्रैष्टुभंनिरतक्षत । यद्वाजगज्जगत्याहितंपदंयऽइत्तद्विदुस्तेऽअमृतत्वमानशुः ॥ गायत्रेणप्रतिमिमीतेऽअर्कमर्केणसामत्रैष्टुभेनवाकं । वाकेनवाकंद्विपदाचतुष्पदाक्षरेणमिमतेसप्तवाणीः ॥ जगतासिंधुंदिव्यस्तभायद्रथंतरेसूर्यपर्यपश्यत् । गायत्रस्यसमिधस्तिस्रऽआहुस्ततोमह्नाप्ररिरिचेमहित्वा+ ॥ १८ ॥ उपह्वयेसुदुघांधेनुमेतांसुहस्तोगोधुगुतदोहदेनां । श्रेष्ठंसवंसवितासाविषन्नोभीद्धोघर्मस्तदुषुप्रवोचं ॥ हिंकृण्वतीवसुपत्नीवसूनांवत्समिच्छंतीमनसाभ्यागात् । दुहामश्विभ्यांपयोऽअघ्न्येयंसावर्धतांमहतेसौभगाय ॥ गौरमीमेदनुवत्संमिषंतंमूर्धानंहिङ्ङकृणोन्मातवाऽउ । सृक्वाणंघर्ममभिवावशानामिमातिमायुंपयतेपयोभिः ॥ अयंसशिंक्तेयेनगौरभीवृतामिमातिमायुंध्वसनावधिश्रिता । साचित्तिभिर्निहिचकारमर्त्यंविद्युद्भवंतीप्रतिवव्रिमौहत ॥ अनच्छयेतुरगातुजीवमेजद्ध्रुवंमध्यऽआपस्त्यानां । जीवोमृतस्यचरतिस्वधाभिरमर्त्योमर्त्येनासयोनिः ॥ १९ ॥ अपश्यंगोपामनिपद्यमानमाचपराचपथिभिश्चरंतं । ससध्रीचीःसविषूचीर्वसानऽआवरीवर्तिभुवनेष्वंतः+ ॥ यईचकारनसोऽअस्यवेदऽयईददर्शहिरुगिन्नुतस्मात् ।

समातुर्योनापरिवीतोऽअंतर्बहुप्रजानिर्ऋतिमाविवेश ॥ द्यौर्मेपिताजनितानाभिरत्रबंधुर्मेमातापृथिवीमहीयं । उत्तान
योश्चम्वो३ र्योनिरंतरत्रापितादुहितुर्गर्भमाधात् ॥ पृच्छामित्वापरमंतंपृथिव्याःपृच्छामियत्रभुवनस्यनाभिः । पृच्छा
मित्वावृष्णोऽअश्वस्यरेतःपृच्छामिवाचःपरमंव्योम ॥ इयंवेदिःपरोऽअंतःपृथिव्याऽअयंयज्ञोभुवनस्यनाभिः । अयं
सोमोवृष्णोऽअश्वस्यरेतोब्रह्मायंवाचःपरमंव्योम ॥ २० ॥ सप्तार्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठंतिप्रदिशाविधर्मणि ।
तेधीतिभिर्मनसातेविपश्चितःपरिभुवःपरिभवंतिविश्वतः ॥ नविजानामियदिवेदमस्मिनिण्यःसंनद्धोमनसाचरामि ।
यदामागन्प्रथमजाऽऋतस्यादिद्वाचोऽअश्नुवेभागमस्याः ॥ अपाङ्प्राङेतिस्वधयागृभीतोमर्त्योमर्त्येनासयोनिः ।
ताशश्वंताविषूचीनावियंतान्यं१न्यंचिक्युर्ननिचिक्युरन्यं ॥ ऋचोऽअक्षरेपरमेव्योमन्यस्मिन्देवाऽअधिविश्वेनिषे
दुः । यस्तन्नवेदकिमृचाकरिष्यतियऽइत्तद्विदुस्तऽइमेसमासते ॥ सूयवसाद्भगवतीहिभूयाऽअथोवयंभगवंतःस्याम ।
अद्धितृणमघ्न्येविश्वदानींपिबशुद्धमुदकमाचरंती ॥ २१ ॥ गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ।
अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ तस्याःसमुद्राऽअधिविक्षरंतितेनजीवंतिप्रदिशश्चतस्रः । ततःक्ष
रत्यक्षरंतद्विश्वमुपजीवति ॥ शकमयंधूममारादपश्यंविषूवतापरऽएनावरेण । उक्षाणंपृश्निमपचंतवीरास्तानिधर्माणि
प्रथमान्यासन् ॥ त्रयःकेशिनऽऋतुथाविचक्षतेसंवत्सरेवपतऽएकएषां । विश्वमेकोऽअभिचष्टेशचीभिर्ध्राजिरेकस्य

ददृशेनरूपं+ ॥ चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणः । गुहात्रीणिनिहितानेंगयंतितुरीयंवाचो मनुष्यावदंति ॥ इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान् । एकंसद्विप्रावहुधावदंत्यग्निंयमंमातरिश्वान माहुः ॥ २२ ॥ कृष्णंनियानंहरयःसुपर्णाऽअपोवसानादिवमुत्पतंति । तऽआववृत्रन्त्सदनादृतस्यादिद्धृतेनपृथिवी व्युद्यते ॥ द्वादशप्रधयश्चक्रमेकंत्रीणिनभ्यानिकऽउतच्चिकेत । तस्मिन्त्साकंत्रिशतानशंकवोर्पिताःषष्टिर्नचलाचला सः ॥ यस्तेस्तनःशशयोयोमयोभूर्येनविश्वापुष्यसिवार्याणि । योरत्नधावसुविद्यःसुदत्रःसरस्वतितमिहधातवेकः ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् । तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः+ ॥ समान मेतदुदकमुच्चैत्यवचाहभिः । भूमिंपर्जन्याजिन्वंतिदिवंजिन्वंत्यग्नयः ॥ दिव्यंसुपर्णवायसंबृहंतमपांगर्भंदर्शतमोषधी नां । अभीपतोवृष्टिभिस्तर्पयंतंसरस्वंतमवसेजोहवीमि ॥ २३ ॥ ( १।२३।१ ) कयाशुभासवयसःसनीळाःसमान्या मरुतःसंमिमिक्षुः । कयामतीकुतऽएतासऽएतेर्चंतिशुष्मंवृषणोवसूया+ ॥ कस्यब्रह्माणिजुजुषुर्युवानःकोऽअध्वरेमरु तऽआववर्त । श्येनाँऽइवध्रजतोऽअंतरिक्षेकेनमहामनसारीरमाम ॥ कुतस्त्वमिंद्रमाहिनःसन्नेकोयासिसत्पतेकिंतऽ

---

( १।२३।१ ) कयाशुभेतिपंचदशर्चस्यसूक्तस्यतृतीयाद्ययुगृचामेकादशीवर्ज्यानांमरुतःत्रयोदश्यादितिसृणामगस्त्यःशिष्टानामिंद्रऋषिः सर्वसूक्तस्यमरुत्वानिंद्रोदेवतात्रिष्टुप्छंदः ।

इत्था । संपृच्छसेसमराणःशुभानैर्वोचेस्तन्नोहरिवोयत्तेऽअस्मे+ ॥ ब्रह्माणिमेमतयःशंसुतासःशुष्मंऽइयर्तिप्रभृतोमेऽअ
द्रिः । आशासतेप्रतिहर्यंत्युक्थेमाहरीवहतस्तानोऽअच्छं ॥ अतोवयमंतमेभिर्युजानाःस्वक्षत्रेभिस्तन्व१ःशुंभमानाः ।
महोभिरेताँऽउपयुज्महेन्विंद्रस्वधामनुहिनोबभूथ ॥ २४ ॥ क्व१स्यावोमरुतःस्वधासीद्यन्मामेकंसमधत्ताहिहत्ये ।
अहंह्यु१ग्रस्तविषस्तुविष्मान्विश्वस्यशत्रोरनमंवधस्नैः+ ॥ भूरिचकर्थयुज्येभिरस्मेसमानेभिर्वृषभपौंस्येभिः । भूरीणि
हिकृणवामाशविष्ठेंद्रक्रत्वामरुतोयद्वशाम । वधींवृत्रंमरुतऽइंद्रियेणस्वेनभामेनतविषोबभूवान् । अहमेतामनवेवि
श्वश्चंद्राःसुगाऽअपश्चकरवज्रबाहुः ॥ अनुत्तमातेमघवन्नकिर्नुनत्वावाँऽअस्तिदेवताविदानः । नजायमानोनशतेनजा
तोयानिकरिष्याकृणुहिप्रवृद्ध ॥ एकस्यचिन्मेविभ्व१स्त्वोजोयानुदधृष्वान्कृणवैमनीषा । अहंह्यु१ग्रोमरुतोविदानो
यानिच्यवमिंद्रऽइदीशऽएषां ॥ २५ ॥ अमंदन्मामरुतःस्तोमोऽअत्रयन्मेनरःश्रुत्यंब्रह्मचक्र । इंद्रायवृष्णेसुमखायम
ह्यंसख्येसखायस्तन्वेतनूभिः ॥ एवेदेतेप्रतिमारोचमानाऽअनेद्यःश्रवऽएषोदधानाः । संचक्ष्यामरुतश्चंद्रवर्णाऽअच्छां
तमेछदयाथाचनूनं+ ॥ कोन्वत्रमरुतोमामहेवःप्रयातनसखीँऽरच्छासखायः । मन्मानिचित्राऽअपिवातयंतऽएषांभू
तनवेदामऽऋतानां ॥ आयद्दुवस्यादुवसेनकारुरस्मांचक्रेमान्यस्यमेधा । ओषुवर्तमरुतोविप्रमच्छेमाब्रह्माणिजरिता

वोऽअर्चंत् ॥ एषवःस्तोमोमरुतऽइयंगीर्मांदार्यस्यमान्यस्यकारोः । एषायासीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुं ॥
॥ २६ ॥ इतिद्वितीयाष्टकेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥ ॥

एकादशाध्याये वर्गाः २६ सूक्तानि ८ ऋचः १३२ ॥ त्यागः ॥ अश्विभ्यामिदं. ६ द्यावापृथिवीभ्यामिदं. १० ऋभुभ्यइदं. १४ अश्वायेदं. ३५ विश्वेभ्योदेवेभ्यइदं. ४१ वाक्समुद्राक्षरोभ्यइदं. (वागभ्यइतिवा). शकधूमसोमाभ्यामिदं. केश्यग्निसूर्यवायुभ्यइदं. वाचइदं. सूर्यायेदं. २ कालचक्रायेदं. सरस्वत्याइदं. साध्येभ्यइदं. पर्जन्याग्निभ्यामिदं. सरस्वतइदं. मरुत्वत. इंद्रायेदं. १५ ॥ इतिद्वितीयेतृतीयः ॥ ३ ॥

तद्वगस्त्योमारुतंहिंद्वित्रिष्टुबंतंमित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसंदृष्ट्वावासतीवरेकुंभेरेतोपतत्ततोगस्त्यव सिष्ठावजायेतांसहस्रमेकादशाद्यैंद्रीयज्ञायज्ञादशत्रित्रिष्टुबंतंमहोष्टौद्वितीयाविराण्नंनूनंपंचागस्त्येनैंद्रेहविषिम रुतामुद्यतंइंद्रागस्त्ययोःसंवादऐंद्रस्तत्राद्यातृतीयाचेंद्रवाक्यंचतुर्थीचादौबृहतीतिस्रोनुष्टुभःप्रतिवःषण्मारुतं तुंचतस्रोंत्यामरुत्वतीयाश्चित्रस्तृचंगायत्रंगायत्सप्तोनात्वंराजादशमत्सिषळानुष्टुभंतुत्रिष्टुबंतंत्वाद्यास्कंधोग्री वीवांमत्सिनआचर्षणिप्राःपंचयद्धस्यापूर्वीःषट्जायापत्योर्लोपामुद्रायाअगस्त्यस्यचद्व्यृचाभ्यांरत्यर्थंसंवादंश्रु त्वांतेवासीब्रह्मचार्यंत्येबृहत्यादीअपश्यंद्यद्वोर्दशाश्विनंवैकदनवाभूदिदमष्टौषष्ठ्यंत्येत्रिष्टुभौतंयुंजाथांषट् ॥ ४ ॥

हरिः ओम् ॥ ( १।२३।२ ) तन्नुवोचामरभसायजन्मनेपूर्वंमहित्वंवृषभस्यकेतवे । ऐधेवयामन्मरुतस्तुविष्वणो युधेवशक्रास्तविषाणिकर्तन ॥ नित्यंनसूनुंमधुबिभ्रतऽउपक्रीळंतिक्रीळाविदथेषुघृष्वयः । नक्षंतिरुद्राऽअवसानमस्विनंनमर्धंतिस्वतवसोहविष्कृतं ॥ यस्माऽऊमासोऽअमृताऽअरासतरायस्पोषंचहविषाददाशुषे । उक्षंत्यस्मैमरुतोहिताऽइवपुरूरजांसिपयसामयोभुवः ॥ आयेरजांसितविषीभिरव्यतप्रवऽएवासःस्वयतासोऽअध्रजन् । भयंतेविश्वाभवनानिहर्म्याचित्रोवोयामःप्रयतास्वृष्टिषु ॥ यत्त्वेषयामानदयंतपर्वतान्दिवोवापृष्ठंनर्याऽअचुच्यवुः । विश्वोवोऽअज्मन्भयतेवनस्पतीरथीयंतीवप्रजिहीतऽओषधिः ॥ १ ॥ यूयंनऽउग्रामरुतःसुचेतुनारिष्टग्रामाःसुमतिंपिपर्तन । यत्रावोदिद्युद्रदतिक्रिविर्दतीरिणातिपश्वःसुधितेवबर्हणा ॥ प्रस्कंभदेष्णाऽअनवभ्रराधसोलातृणासोविदथेषुसुष्टुताः । अर्चंत्यर्कंमदिरस्यपीतयेविदुर्वीरस्यप्रथमानिपौंस्या ॥ शतभुजिभिस्तमभिह्रुतेरघात्पूर्भीरक्षतामरुतोयमावत । जनंयमुग्रास्तवसोविरप्शिनःपाथनाशंसात्तनयस्यपुष्टिषु ॥ विश्वानिभद्रामरुतोरथेषुवोमिथस्पृध्येवतविषाण्याहिता । अंसेष्वावःप्रपथेषुखादयोक्षोवश्चक्रासमयाविवावृते ॥ भूरीणिभद्रानर्येषुबाहुषुवक्षःसुरुक्मारभसासोऽअंजयः । अंसेष्वेताःपविषुक्षुराऽअधिवयोनपक्षान्व्यनुश्रियोधिरे ॥ २ ॥ महांतोमह्नाविभ्वो३विभूतयोदूरेदृशोयेदिव्याऽइवस्तृभिः ।



( १।२३।२ ) तन्नुवोचामेतिपंचदशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्योमरुतोजगत्यंत्येद्वेत्रिष्टुभौ ।

मंद्राः सुजिह्वाः स्वरितारऽआसभिः संमिश्लाऽइंद्रेमरुतः परिष्टुभः ॥ तद्वः सुजातामरुतोमहित्वनंदीर्घंवोदात्रमदितेरि
वव्रतं । इंद्रश्चनत्यजसाविह्रुणातितज्जनाययस्मैसुकृतेऽअराध्वं ॥ तद्वोजामित्वंमरुतः परेयुगेपुरूयच्छंसममृतासऽआ
वत । अयाधियामनवेश्रुष्टिमाव्यासाकंनरोदंसनैराचिकित्रिरे ॥ येनदीर्घंमरुतः शूशवामयुष्माकेनपरीणसातुरासः ।
आयत्ततनन्वृजनेजनासऽएभिर्यज्ञेभिस्तदभीष्टिमश्यां ॥ एषवःस्तोमोमरुतऽइयंगीर्मांदार्यस्यमान्यस्यकारोः । एषाया
सीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुं ॥ ३ ॥ ( १।२३।२ ) सहस्रंतऽइंद्रोतयोनः सहस्रमिषोहरिवोगूर्ततमाः । सह
स्रारायोमादयध्यैसहस्रिणऽउपनोयंतुवाजाः ॥ आनोवोभिर्मरुतोयांत्वच्छाज्येष्ठेभिर्वाबृहद्दिवैः सुमायाः । अधयदेषां
नियुतः परमाः समुद्रस्यचिद्धनयंतपारे+ ॥ मिम्यक्षयेषुसुधितावृताचीहिरण्यनिर्णिगुपरानऋष्टिः । गुहाचरंतीमनु
षोनयोषासभावतीविदथ्येवसंवाक्+ ॥ परांशुभ्राऽअयासोयव्यासाधारण्येवमरुतोमिमिक्षुः । नरोदसीऽअपनुदंत
घोराजुषंतवृधंसख्यायदेवाः+ ॥ जोषद्यदीमसुर्यासचध्यैविषितस्तुकारोदसीनृमणाः । आसूर्येवविधतोरथंगात्त्वेषप्र
तीकानभसोनेत्या+ ॥ ४ ॥ आस्थापयंतयुवतिंयुवानः शुभेनिमिश्लांविदथेषुपज्रां । अर्कोयद्वोमरुतोहविष्मान्गायद्गा
थंसुतसोमोदुवस्यन्+ ॥ प्रतंविवक्मिवक्म्योयऽएषांमरुतांमहिमासत्योऽअस्ति । सचायदींवृषमणाऽअहंयुः स्थिरा

---

( १।२३।२ ) सहस्रंतइत्येकादशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्योमरुतआद्यायाइंद्रस्त्रिष्टुप् ।

चिज्जनीर्वहतेसुभागाः + ॥ पांतिमित्रावरुणावव॒द्याच्चयत ऽईमर्यमोऽअप्रंशस्तान् । उतच्यवंतेऽअच्युताध्रुवाणिवावृधऽ ईंमरुतोदातिवारः ॥ नहीनुवोमरुतोऽअंत्यस्मेऽआरात्ताच्चिच्छवसोऽअंतमापुः । तेधृष्णुनाशवसाशूशुवांसोर्णोनद्वेषोधृ षतापरिष्ठुः ॥ वयमद्येंद्रस्यप्रेष्ठावयंश्वोवोचेमहिसमर्ये । वयंपुरामहिंचनोऽअनुद्यून्तन्नऽऋभुक्षानरामनुष्यात् ॥ एष वःस्तोमोमरुतऽइयंगीर्मांदार्यस्यमान्यस्यकारोः । एषायासीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुं ॥ ५ ॥ ( १।२३।४ ) यज्ञायंज्ञावःसमनातुतुर्वणिर्धियंधियंवोदेवयाऽउंदधिध्वे । आवोर्वाचःसुवितायरोदस्योर्महेववृत्यामवसेसुवृक्तिभिः ॥ वव्रासोनयेस्वजाःस्वतवसऽइषंस्वरभिजायंतधूतयः । सहस्रियासोऽअपांनोर्मयऽआसागावोवंद्यासोनोक्षणः ॥ सोमा सोनयेसुतास्तृप्तांशवोहृत्सुपीतासोदुवसोनासते । ऐषामंसेषुरंभिणीवरारभेहस्तेषुखादिश्चकृतिश्चसंदधे ॥ अवस्वयु क्तादिवऽआवृथायथुरमर्त्याःकशयाचोदतत्मना । अरेणवस्तुविजाताऽअंचुच्यवुर्दृह्ळानिंचिन्मरुतोभ्राजदृष्टयः ॥ कोवोंतर्मरुतऽऋष्टिविद्युतोरेजतित्मनाहन्वेवजिह्वया । धन्वच्युतऽइषांनयामनिपुरुप्रैषाऽअहन्योऽनैतशः ॥ ६ ॥ क्वस्विदस्यरजसोमहस्परंक्वावरंमरुतोयस्मिन्नायय । यच्च्यावयथविथुरेवसंहितंव्यद्रिणापतथत्वेषमर्णवं + ॥ सातिर्न वोमवतीस्वर्वतीत्वेषाविपाकामरुतःपिपिष्वती । भद्रावोरातिःपृणतोनदक्षिणापृथुज्रयीऽअसुर्येवजंजती ॥ प्रतिष्टो



( १।२३।४ ) यज्ञायज्ञेतिदशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्योमरुतोजगती अंत्यास्तिस्रस्त्रिष्टुभः ।

भंतिसिंधवः पविभ्योयदभ्रियांवाचमुदीरयंति । अवस्मयंतविद्युतःपृथिव्यांयदीघृतंमरुतःप्रुष्णुवंति ॥ असूतपृश्निर्महतेरणायत्वेषमयासांमरुतामनीकं । तेसप्सरासोजनयंताभ्वमादित्स्वधामिषिरांपर्यपश्यन् ॥ एषवःस्तोमोमरुतऽइयंगीर्मांदार्यस्यमान्यस्यकारोः । एषायासीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुं ॥ ७ ॥ ( १।२३।५ ) महश्चित्त्वमिंद्रयतऽएतान्महश्चिदसित्यजसोवरूता । सनोवेधोमरुतांचिकित्वान्त्सुम्नावनुष्वतवहिप्रेष्ठा ॥ अयुजन्तऽइंद्रविश्वकृष्टीर्विदानासोनिष्षिधोमर्त्यत्रा । मरुतांपृत्सुतिर्हासमानास्वर्मीळ्हस्यप्रधनस्यसातौ ॥ अम्यक्सातऽइंद्रऽऋष्टिरस्मेसनेम्यभ्वंमरुतोजुनंति । अग्निश्चिद्धिष्मातसेशुशुक्वानापोनद्वीपंदधतिप्रयांसि ॥ त्वंतूनऽइंद्रतंरयिंदाऽओजिष्ठयादक्षिणयेवरातिं । स्तुतश्चयास्तेचकनंतवायोःस्तनंनमध्वःपीपयंतवाजैः ॥ त्वेरायऽइंद्रतोशतमाःप्रणेतारःकस्यचिदृतायोः । तेषुणोमरुतोमृळयंतुयेस्मापुरागातूयंतीवदेवाः ॥ ८ ॥ प्रतिप्रयाहींद्रमीळ्हुषोनॄन्महःपार्थिवेसदनेयतस्व । अधयदेषांपृथुबुध्नासऽएतास्तीर्थेनार्यःपौंस्यानितस्थुः ॥ प्रतिघोराणामेतानामयासांमरुतांशृण्वऽआयतामुपब्दिः । येमर्त्यंपृतनायंतमूमैर्ऋणावानंनपतयंतसर्गैः ॥ त्वंमानेभ्यऽइंद्रविश्वजन्यारदामरुद्भिःशुरुधोगोऽअग्राः । स्तवानेभिःस्तव

---

( १।२३।५ ) महश्चिदित्यष्टर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्यइंद्रस्त्रिष्टुप्द्वितीयाविराट् ।

सेदेवदेवैर्विद्यामेषंवृजनंजीरदानुं ॥ ९ ॥ ( १।२३।६ ) ननूनमस्तिनोश्वःकस्तद्वेदयदद्भुतं । अन्यस्यचित्तमभिसं
चरेण्यमुताधीतंविनश्यति ॥ किंनऽइंद्रजिघांससिभ्रातरोमरुतस्तव । तेभिःकल्पस्वसाधुयामानःसमरणेवधीः ॥
किंनोभ्रातरगस्त्यसखासन्नतिमन्यसे । विद्माहितेयथामनोस्मभ्यमिन्नदित्ससि ॥ अरंकृण्वंतुवेदिंसमग्निमिंधतांपुरः ।
तत्रामृतस्यचेतनंयज्ञंतेतनवावहै ॥ त्वमीशिषेवसुपतेवसूनांत्वंमित्राणांमित्रपतेधेष्ठः । इंद्रत्वंमरुद्भिःसंवदस्वाधप्रा
शानऽऋतुथाहवींषि ॥ १० ॥ ( १।२३।७ ) प्रतिवऽएनानमसाहमेमिसूक्तेनभिक्षेसुमतिंतुराणां । रराणतामरुतो
वेद्याभिर्निहेळोधत्तविमुचध्वमश्वान् ॥ एषवःस्तोमोमरुतोनमस्वान्हृदातष्टोमनसाधायिदेवाः । उपेमायातमनसाजु
षाणायूयंहिष्ठानमसऽइद्वृधासः ॥ स्तुतासोनोमरुतोमृळयंतूतस्तुतोमघवाशंभविष्ठः । ऊर्ध्वानःसंतुकोम्यावनान्यहा
निविश्वामरुतोजिगीषा+ ॥ अस्मादहंतविषादीषमाणऽइंद्राद्भियामरुतोरेजमानः । युष्मभ्यंहव्यानिशितान्यासन्ता
न्यारेचकृमामृळतानः ॥ येनमानासश्चितयंतऽउस्राव्युष्टिषुशवसाशश्वतीनां । सनोमरुद्भिर्वृषभश्रवोधाऽउग्रऽउग्रे
भिःस्थविरःसहोदाः+ ॥ त्वंपाहींद्रसहीयसोनॄन्भवामरुद्भिरवयातहेळाः । सुप्रकेतेभिःसासहिर्दधानोविद्यामेषंवृजनं

---

( १।२३।६ ) ननूनमितिपंचर्चस्यसूक्तस्यप्रथमतृतीयाचतुर्थीनामृचामिंद्रोगस्त्योद्वितीयापंचम्योरगस्त्यऋषिरिंद्रोदेवताआद्याबृहती
ततस्तिस्रोनुष्टुभोंत्यात्रिष्टुप् । ( १।२३।७ ) प्रतिवइतिषड्चस्यसूक्तस्यागस्त्योमरुतःअंत्यानांचतसृणांमरुत्वानिंद्रस्त्रिष्टुप् ।

जीरदानुं ॥ ११ ॥ ( १।२३।८ ) चित्रोवोस्तुयामश्चित्रऽऊतीसुदानवः । मरुतोऽअहिभानवः ॥ आरेसावःसु दानवोमरुतऽऋंजतीशरुः । आरेऽअश्मायमस्यथ ॥ तृणस्कंदस्यनुविशःपरिवृंक्तसुदानवः । ऊर्ध्वान्नःकर्तजीवसे ॥ १२ ॥ ( १।२३।९ ) गायत्सामनभन्यं१यथावेरर्चामतद्वावृधानंस्वर्वत् । गावोधेनवोवर्हिष्यदब्धाऽआयत्सद्मा नंदिव्यंविवासान् ॥ अर्चद्वृषावृषभिःस्वेदुहव्यैर्मृगोनाश्नोऽअतियज्जुगुर्यात् । प्रमंदुयुर्मनांगूर्तहोताभरतेमर्योमिथुना यजत्रः ॥ नक्षद्धोतापरिसद्मंमितायन्भरद्गर्भमाशरदःपृथिव्याः । क्रंदुदश्वोनयमानोरुवद्गौरंतर्दूतोनरोदसीचरद्वा क्+ ॥ ताकर्मार्षतरास्मैप्रच्यौत्नानिदेवयंतोभरंते । जुजोषदिंद्रोदस्मवर्चानासत्येवसुग्भ्योरथेष्ठाः+ ॥ तमुष्टुहींद्रंयोह सत्वायःशूरोमघवायोरथेष्ठाः । प्रतीचश्चिद्योधीयान्वृषण्वान्ववव्रुषश्चित्तमसोविहंता+ ॥ १३ ॥ प्रयदित्थामहिना नृभ्योऽअस्त्यरंरोदसीकक्ष्ये३नास्मै । संविव्यऽइंद्रोवृजनंनभूमाभर्तिस्वधावाँऽओपशमिवद्यां+ ॥ समत्सुत्वाशूरसता मुराणंप्रपथिंतमंपरितंसयध्यै । सजोषसऽइंद्रंमदेक्षोणीःसूरिंचिद्येऽअनुमदंतिवाजैः ॥ एवाहितेशंसवनासमुद्रऽआ पोयत्तऽआसुमदंतिदेवीः । विश्वातेऽअनुजोष्याभूद्गौःसूरींश्चिद्यदिधिषावेषिजनान् ॥ असामयथासुषखायऽएन स्वभिष्टयोनरांनशंसैः । असद्यथानऽइंद्रोवंदनेष्ठास्तुरोऽनकर्मनयमानऽउक्था+ ॥ विष्पर्धसोनरांनशंसैरस्माकासदिं

---

( १।२३।४ ) चित्रोवइतितृचस्यसूक्तस्यमैत्रावरुणिरगस्त्योमरुतोगायत्री । ( १।२३।९ ) गायत्सामेतित्रयोदशर्चस्यसूक्तस्यमैत्रावरुणि

द्रोवज्रंहस्तः । मित्रायुवोनपूर्पतिंसुशिष्टौमध्यायुवऽउपंशिक्षंतियज्ञैः+ ॥ १४ ॥ यद्ध्वोहिष्मेंद्रंकाश्चिद्दृंधन्जुंहुराणश्चिन्म
नंसापरियन् । तीर्थेनाच्छांतातृषाणमोकोंदीर्घोनसिध्रमाकृंणोत्यध्वा ॥ मोषूणंऽइंद्रात्रंपृत्सुदेवैरस्तिहिष्मांतेशुष्मिन्न
वयाः । महश्चिद्यस्यंमीढुषोंयव्याहविष्मंतोमरुतोवंदंतेगीः+ ॥ एषःस्तोमंऽइंद्रतुभ्यंमस्मेऽएतेनंगातुंहरिवोविदोनः ।
आनोंववृत्याःसुवितायंदेवविद्यामेषंवृजनंजीरदांनुं ॥ १५ ॥ ( १।२३।१० ) त्वंराजेंद्रयेचंदेवारक्षानॄन्पाह्यंसुरत्वम
स्मान् । त्वंसत्पंतिर्मघवांनस्तरुत्रस्त्वंसत्योवसंवानःसहोदाः+ ॥ दनोविशंऽइंद्रमृध्रवांचःसप्तयत्पुरःशर्मंशारंदीर्दत् ।
ऋणोरपोऽअंनवद्याणांयूनेवृत्रंपुरुकुत्सांयरंधीः ॥ अजावृतंऽइंद्रशूरंपत्नीर्द्यांचयेभिःपुरुहूतनूनं । रक्षोंऽअग्निमशुषं
तूर्वंयाणंसिंहोनदमेऽअपांसिवस्तोंः ॥ शेषन्नुतऽइंद्रसस्मिन्योनौप्रशंस्तयेपवीरवस्यमह्ना । सृजदर्णांस्यवयद्युधागास्ति
ष्ठद्धरींधृषतामृष्टवाजांन् ॥ वहकुत्संमिंद्रयस्मिंन्चाकन्त्स्यूमन्यूऽऋज्रावातस्याश्वां । प्रसूरंश्चक्रंवृंहतादभीकेभिस्पृधों
यासिषद्वज्रंबाहुः ॥ १६ ॥ जघन्वाँऽइंद्रमित्रेरूंन्चोदप्रंवृद्धोहरिवोऽअदांशून् । प्रयेपश्यंन्नर्यमणंसचायोस्त्वयांशूर्ता
वहंमानाऽअपंत्यं ॥ रपंत्कविरिंद्रार्कसांतौक्षांदासायोपवर्हंणींकः । करंत्तिस्रोमघवादानुंचित्रानिदुर्योणेकुयवाचंमृ
धिश्रेंत् ॥ सनातांतंऽइंद्रनव्याऽआगुःसहोनभोविंरणायपूर्वीः । भिनत्पुरोनभिदोऽअदेवीर्ननमोवधरदेवस्यपीयोः+ ॥



---

रगस्त्यइंद्रस्त्रिष्टुप् । ( १।२३।१० ) त्वंराजेतिदशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्यइंद्रस्त्रिष्टुप् ।

त्वंधुनिरिंद्रधुनिमतीर्ऋणोरपःसीरानस्रवंतीः । प्रयत्समुद्रमतिशूरपर्षिपारयातुर्वशंयदुंस्वस्ति ॥ त्वमस्माकमिंद्रवि
श्वधस्याऽअवृकतमोनरांनृपाता । सनोविश्वासांस्पृधांसहोदाविद्यामेषंवृजनंजीरदानुं ॥ १७ ॥ ( १।२३।११ ) म
त्स्यपायितेमहःपात्रस्येवहरिवोमत्सरोमदः । वृषातेवृष्णऽइंदुर्वाजीसहस्रसातमः ॥ आनस्तेगंतुमत्सरोवृषामदोवरे
ण्यः । सहावाँऽइंद्रसानसिःपृतनाषाळमर्त्यः ॥ त्वंहिशूरःसनिताचोदयोमनुषोरथं । सहावांदस्युमव्रतमोषःपात्रंनशो
चिषा ॥ मुषायसूर्यंकवेचक्रमीशानऽओजसा । वहशुष्णायवधंकुत्संवातस्याश्वैः ॥ शुष्मिन्तमोहितेमदोद्युम्निन्तमऽ
उतक्रतुः । वृत्रघ्नावरिवोविदामंसीष्ठाऽअश्वसातमः ॥ यथापूर्वेभ्योजरितृभ्यऽइंद्रमयऽइवापोनतृष्यतेबभूथ । ता
मनुत्वानिविदंजोहवीमिविद्यामेषंवृजनंजीरदानुं ॥ १८ ॥ ( १।२३।१२ ) मत्सिनोवस्यऽइष्टयऽइंद्रमिंदोवृषाविश ।
ऋघायमाणऽइन्वसिशत्रुमंतिनविंदसि ॥ तस्मिन्नावेशयागिरोयऽएकश्चर्षणीनां । अनुस्वधायमुप्यतेयवंनचर्कृषद्वृषा ॥
यस्यविश्वानिहस्तयोःपंचक्षितीनांवसु । स्पाशयस्वयोऽअस्मध्रुग्दिव्येवाशनिर्जहि ॥ असुन्वंतंसमंजहिदूणाशंयोनते
मयः । अस्मभ्यमस्यवेदनंदद्धिसूरिश्चिदोहते ॥ आवोयस्यद्विबर्हसोर्केषुसानुषगसत् । आजाविंद्रस्येंदोप्रावोवाजेषु

---

( १।२३।११ ) मत्स्यपायीतिषडृचस्यसूक्तस्यमैत्रावरुणिरगस्त्यइंद्रोनुष्टुप्आद्यास्कंधोग्रीवाअंत्यात्रिष्टुप् । ( १।२३।१२ ) मत्सि
नइतिषडृचस्यसूक्तस्यमैत्रावरुणिरगस्त्यइंद्रोनुष्टुबंत्यात्रिष्टुप् ।

वाजिनं ॥ यथापूर्वेभ्योजरितृभ्यऽइंद्रमयऽइवापोनतृष्यतेबभूथ । तामनुत्वानिविदंजोहवीमिविद्यामेषंवृजनंजीरदा
नुं ॥ १९ ॥ ( १।२३।१३ ) आचर्षणिप्रावृषभोजनानांराजाकृष्टीनांपुरुहूतऽइंद्रः । स्तुतःश्रवस्यन्नवसोपमद्रिग्यु
क्त्वाहरीवृषणायाह्यर्वाङ्+ ॥ येतेवृषणोवृषभासऽइंद्रब्रह्मयुजोवृषरथासोऽअत्याः । ताँऽआतिष्ठतेभिरायाह्यर्वाङ्ह
वामहेत्वासुतऽइंद्रसोमे ॥ आतिष्ठरथंवृषणंवृषातेसुतःसोमःपरिषिक्तामधूनि । युक्त्वावृषभ्यांवृषभक्षितीनांहरिभ्यां
याहिप्रवतोपमद्रिक्+ ॥ अयंयज्ञोदेवयाऽअयंमियेधऽइमाब्रह्माण्ययमिंद्रसोमः । स्तीर्णंबर्हिरातुशक्रप्रयाहिपिबानि
षद्यविमुचाहरीऽइह+ ॥ ओसुष्टुतऽइंद्रयाह्यर्वाङुपब्रह्माणिमान्यस्यकारोः । विद्यामवस्तोरवसागृणंतोविद्यामेषंवृज
नंजीरदानुं ॥ २० ॥ ( १।२३।१४ ) यद्धस्यातऽइंद्रश्रुष्टिरस्तिययाबभूथजरितृभ्यऽऊती । मानःकाममहयं
तमाधग्विश्वातेऽअश्यांपर्यापऽआयोः+ ॥ नघाराजेंद्रऽआदभन्नोयानुस्वसाराकृणवंतयोनौ । आपश्चिदस्मैसुतु
काऽअवेषन्गमन्नऽइंद्रःसख्यावयश्च ॥ जेतानृभिरिंद्रःपृत्सुशूरःश्रोताहवंनाधमानस्यकारोः । प्रभर्तारथंदाशुषऽउ
पाकऽउद्यंतागिरोयदिचत्मनाभूत्+ ॥ एवानृभिरिंद्रःसुश्रवस्याप्रखादःपृक्षोऽअभिमित्रिणोभूत् । समर्यऽइषःस्तव
तेविवाचिसत्राकरोयजमानस्यशंसः ॥ त्वयावयंमघवन्निंद्रशत्रूनभिष्यामममहतोमन्यमानान् । त्वंत्रातात्वमुनोवृधेभू

( १।२३।१३ ) आचर्षणिप्राइतिपंचर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्यइंद्रस्त्रिष्टुप् । ( १।२३।१४ ) यद्धस्यातइतिपंचर्चस्यसूक्तस्यमैत्रावरुणि

विंद्यामषवृजनंजीरदांनुं ॥ २१ ॥ ( १।२३।१५ ) पूर्वीरहंशुरदंःशश्रमाणादोषावस्तोरुषसोंजरयंतीः । मिनातिश्रियंजरिमातनूनामप्यूनुपत्नीर्वृषणोजगम्युः ॥ येचिद्धिपूर्वंऽऋतसापऽआसंन्त्साकंदेवेभिरवंदन्नृतानिं । तेचिदवांसुर्न ह्यंतमापुःसमूनुपत्नीर्वृषभिर्जगम्युः ॥ नमृषांश्रांतंयदवंतिदेवाविश्वाऽइत्स्पृधोंऽअभ्यंश्नवाव । जयावेदत्रंशतनींथमाजिंयत्सम्यंचांमिथुनावभ्यजांव ॥ नदस्यमारुधतःकामऽआगंन्नितऽआजांतोऽअमुतःकुतंश्चित् । लोपांमुद्रावृषणंनीरिणातिधीरमधीराधयतिश्वसंतं ॥ इमंनुसोममंतितोहृत्सुपीतमुपंब्रुवे । यत्सीमागंश्चकृमातत्सुमृळतुपुलुकामोहिमर्त्यः ॥ अगस्त्यःखनंमानःखनित्रैःप्रजामपंत्यंबलमिच्छमानः । उभौवर्णावृषिंरुग्रःपुंपोषसत्यादेवेष्वाशिषोंजगाम ॥ २२ ॥ ( १।२४।१ ) युवोरजांसिसुयमांसोऽअश्वारथोयद्वांपर्यर्णांसिदीयंत् । हिरण्ययांवांपवयंःप्रुषायन्मध्वःपिबंताऽउषसंःसचेथे ॥ युवमत्यस्यावंनक्षथोयद्विपंत्मतोनयंस्यप्रयंज्योः । स्वसायद्वांविश्वगूर्तीभरांतिवाजायेट्टेमधुपाविषेच ॥ युवंपयंऽउस्रियायामधत्तंपक्वमामायामवपूर्व्यंगोः । अंतर्यद्वनिनोंवामृतप्सूह्वारोनशुचिर्यजंतेहविष्मांन् ॥ युवंहंघर्मंमधुंमंतमत्रयेपोनक्षोदोंवृणीतमेषे । तद्वांनरावश्विनापश्वंऽइष्टीरथ्यैवचक्राप्रतिंयंतिमध्वंः ॥ आवांदानायं

---

रगस्त्यइंद्रस्त्रिष्टुप्। (१।२३।१५) पूर्वीरहमितिषड्चस्यसूक्तस्यमैत्रावरुणिरगस्त्यःआद्ययोर्द्वयोर्लोपामुद्राऋषिकाअंत्ययोर्द्वयोरगस्त्यांतेवासी ब्रह्मचारीऋषिःसर्वासांरतिर्देवतात्रिष्टुप्पंचमीबृहती । ( १।२४।१ ) युवोरजांसीतिदशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्योश्विनौत्रिष्टुप् ।

ववृतीयदस्रागोरोहेणतौग्र्योनजिव्रिः । अपःक्षोणीसंचतेमाहिनावांजूर्णोवामक्षुरंहसोयजत्रा ॥ २३ ॥ नियद्युवेथेनि
युतःसुदानूऽउपस्वधाभिःसृजथःपुरंधिं । प्रेषद्वेषद्वातोनसूरिरामहेददेसुव्रतोनवाजं ॥ वयंचिद्धिवांजरितारःसत्या
विपन्यामहेविपणिर्हितावान् । अधाचिद्धिष्माश्विनावनिंद्यापाथोहिष्मावृषणावंतिदेवं ॥ युवांचिद्धिष्माश्विनावनु
द्यून्विरुद्रस्यप्रस्रवणस्यसातौ । अगस्त्योनरांनृषुप्रशस्तःकाराधुनीवचितयत्सहस्रैः ॥ प्रयद्वहेथेमहिनारथस्यप्रस्पंद्राया
थोमनुषोनहोता । धत्तंसूरिभ्यऽउतवास्वश्व्यंनासत्यारयिषाचःस्याम ॥ तंवांरथंवयमद्याहुवेमस्तोमैरश्विनासुविताय
नव्यं । अरिष्टनेमिंपरिद्यामियानंविद्यामेषंवृजनंजीरदानुं ॥ २४ ॥ ( १।२४।२ ) कदुप्रेष्ठाविषांरयीणामध्वर्यंताय
दुन्निनीथोऽअपां । अयंवांयज्ञोऽअकृतप्रशस्तिंवसुधितीऽअवितारजनानां ॥ आवामश्वासःशुचयःपयस्पावातरंहसो
दिव्यासोऽअत्याः । मनोजुवोवृषणोवीतपृष्ठाऽएहस्वराजोऽअश्विनावहंतु ॥ आवांरथोवनिर्नप्रवत्वान्त्सृप्रवंधुरःसु
वितायगम्याः । वृष्णःस्थातारामनसोजवीयानहंपूर्वोयजतोधिष्ण्यायः+ ॥ इहेहजातासमवावशीतामरेपसातन्वा३
नामभिःस्वैः । जिष्णुर्वामन्यःसुमखस्यसूरिर्दिवोऽअन्यःसुभगःपुत्रऽऊहे ॥ प्रवांनिचेरुःककुहोवशाँऽअनुपिशंगरूपः
सदनानिगम्याः । हरीऽअन्यस्यपीपयंतवाजैर्मथ्नाराजांस्यश्विनाविघोषैः ॥ २५ ॥ प्रवांशरद्वान्वृषभोननिःषाट्पूर्वी

( १।२४।२ ) कदुप्रेष्ठावितिनवर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्योश्विनौत्रिष्टुप् ।

रिषंश्चरतिमध्वंऽइष्णन् । एवैरन्यस्यपीपयंतवाजैर्वेषंतीरूर्ध्वानद्योनुऽआगुः ॥ असंर्जिवांस्थविरावेधसागीर्बाढेऽअ श्विनात्रेधाक्षरंती । उपस्तुतावतंनाधमानंयामन्नयामन्छृणुतंहवंमे ॥ उतस्यावांरुशतोवप्सेसोगीस्त्रिबर्हिषिसदसि पिन्वतेनृन् । वृषावांमेघोवृषणापीपायगोर्नसेकेमनुषोदशस्यन्+ ॥ युवांपूषेवाश्विनापुरंधिरग्निमुषांनजरतेहविष्मा न्। हुवेयद्वांवरिवस्यागृणानोविद्यामेषंवृजनंजीरदानुं ॥ २६ ॥ ( १।२४।३ ) अभूदिदंवयुनमोषुभूषतारथोवृष ण्वान्मदंतामनीषिणः । धियंजिन्वाधिष्ण्याविश्पलावसूदिवोनपातासुकृतेशुचिव्रता ॥ इंद्रंतमाहिधिष्ण्यामरुत्तंमा दस्रादंसिष्ठारथ्यारथीतमा । पूर्णंरथंवहेथेमध्वऽआचितंतेनदाश्वांसमुपयाथोऽअश्विना ॥ किमत्रदस्राकृणुथः किमा साथेजनोयः कश्चिदहविर्महीयते । अतिक्रमिष्टंजुरतंपणेरसुंज्योतिर्विप्रायकृणुतंवचस्यवे ॥ जंभयतमभितोरायतः शु नोहतंमृधोविदथुस्तान्यश्विना । वाचंवाचंजरितूरत्निनींकृतमुभाशंसंनासत्यावतंमम ॥ युवमेतंचक्रथुः सिंधुषुप्लवमा त्मन्वंतंपक्षिणंतौग्र्यायकं । येनदेवत्रामनसानिरूहथुःसुपप्तनीपेतथुःक्षोदसोमहः+ ॥ २७ ॥ अवविद्धंतौग्र्यमप्स्वं१ तरनारंभणेतमसिप्रविद्धं । चतस्रोनावोजठलस्यजुष्टाऽउदश्विभ्यामिषिताःपारयंति ॥ कःस्विद्वृक्षोनिष्ठितोमध्येऽ अर्णसोयंतौग्र्योनाधितःपर्यषस्वजत् । पर्णामृगस्यपतरोरिवारभऽउदश्विनाऽऊहथुःश्रोमतायकं+ ॥ तद्वांनरानास

( १।२४।३ ) अभूदिदमित्यष्टर्चस्यसूक्तस्यैतावरुणिरगस्त्योऽश्विनौजगतीपंक्त्यंतेत्रिष्टुभौ ।

त्यावनुंष्याद्यद्धामानांसऽउचथमवोंचन् । अस्माद्द्यसदंसःसोम्यादाविद्यामेषंवृजनंजीरदांनुं ॥ २८ ॥ ( १।२४।४ )
तंयुंजाथांमनंसोयोजवींयान्त्रिवंधुरोवृंषणायस्त्रिचक्रः । येनोंपयाथःसुकृतोंदुरोणंत्रिधातुंनापतथोविर्नपर्णैः+ ॥ सुवृद्रथोंवर्ततेयन्नभिक्षांयत्तिष्ठथःक्रतुमंतानुंपृक्षे । वपुंर्वपुष्यासंचतामियंगीर्दिवोदुंहित्रोषसांसचेथे ॥ आतिंष्ठतंसुवृतंयोरथोंवामनुंव्रतानिवर्ततेहविष्मांन् । येनंनरानासत्येषयध्यैवर्तिर्याथस्तनंयायत्मनेंच ॥ मावांवृकोमावृकीरादंधर्षीन्मापरिवर्क्तमुतमातिंधक्तं । अयंवांभागोनिहिंतऽइयंगीर्दस्त्राविमेवांनिधयोमधूनां ॥ युवांगोतंमःपुरुमीह्ळोऽअत्रिर्दस्राहवतेवंसेहविष्मांन् । दिशंनदिष्टामृजूयेवयंतामेहवंनासत्योपंयातं ॥ अतांरिष्मतमंसस्पारमस्यप्रतिंवांस्तोमोंऽअश्विनावधायि । एहयातंपथिभिर्देवयानैर्विद्यामेषंवृजनंजीरदांनुं ॥ २९ ॥ इतिद्वितीयाष्टकेचतुर्थोऽध्यायः ॥ ४ ॥ ॥

द्वादशाध्याये वर्गाः २९ सूक्तानि १८ ऋचः १४२ ॥ त्यागः ॥ मरुद्भ्यइदं.१५ इंद्रायेदं. मरुद्भ्यइदं.२० इंद्रायेदं.१३ रुद्रमरुद्भ्य-इदं.२ मरुत्वतइंद्रायेदं.४ मरुद्भ्यइदं.३ इंद्रायेदं.४५ स्याइदं.६ अश्विभ्यामिदं.३३ ॥ इतिद्वितीयेचतुर्थः ॥ ४ ॥

तावांकतरैकादशंद्यावापृथिवीयमानोवैश्वदेवंपितुंन्वन्नस्तुतिर्गायत्रंत्वाद्यानुष्टुब्गर्भातृतीयांत्येपंचम्याद्याश्चतस्रोनुष्टुभौंत्याबृहतीवांसमिद्धआप्रियोग्नेनयाष्टावाग्नेयंमनर्वाणंबार्हस्पत्यंकंकतःषोळशोपनिषदसृणसौर्यस्रानु

( १।२४।४ ) तंयुंजाथामितिषड्डृचस्यसूक्तस्यमैत्रावरुणिरगस्त्योश्विनौत्रिष्टुप् ।

ष्टुभं विषशंकावानगस्त्यःप्राब्रवीद्दशम्याद्याश्चतिस्रोमहापंक्तयोमहाबृहतीचंयआंगिरसःशौनहोत्रोभूत्वाभार्ग
वःशौनकोभवत्सगृत्समदोद्वितीयंमंडलमपश्यंत्त्वमग्नेजागतंतुयज्ञेनसप्तोनासमिद्धएकादशाग्रंसप्तमीजगतीहु
वेनवसोमाहुतिर्भार्गवोहंहोताष्टावानुष्टुभंसमिमांमेगायत्रंहिंश्रेष्ठंषड्वाजयन्निवांत्यानुष्टुप् ॥ १ ॥

हरिः३ओम् ॥ ( १।२४।५ ) तावांमद्यतावंपरंहुवेमोच्छंत्यामुषसिवर्ह्निरुक्थैः । नासत्याकुहंचित्संतावर्योदिवोन
पांतासुदास्तराय ॥ अस्मेऽऊषुवृषणामादयेथामुत्पणींर्हतमूर्म्यामदंता । श्रुतंमेऽअच्छोक्तिभिर्मतीनामेष्टानराचि
चेताराचकर्णैः ॥ श्रियेपूषन्निषुकृतेवदेवानासत्यावहतुंसूर्यायाः । वच्यंतेवांककुहाऽअप्सुजातायुगाजूर्णेववरुणस्यभू
रेः ॥ अस्मेसावांमाध्वीरातिरस्तुस्तोमंहिनोतंमान्यस्यकारोः । अनुयद्वांश्रवस्यासुदानूसुवीर्यायचर्षणयोमदंति ॥ ए
षवांस्तोमोऽअश्विनावकारिमानेभिर्मघवानासुवृक्ति । यातंवर्तिस्तनयायत्मनेचागस्त्येनासत्यामदंता ॥ अतारिष्मत
मसस्पारमस्यप्रतिवांस्तोमोऽअश्विनावधायि । एहयातंपथिभिर्देवयानैर्विद्यामेषंवृजनंजीरदानुं ॥ १ ॥ ( १।२४।६ )
कतरापूर्वाकतरापरायोःकथाजातेकवयःकोविवेद । विश्वंत्मनाबिभृतोयद्धनामविवर्तेतेऽअहनीचक्रियेव ॥ भूरिंद्वेऽ
अचरंतीचरंतंपद्वंतंगर्भमपदीदधाते । नित्यंनसूनुंपित्रोरुपस्थेद्यावारक्षतंपृथिवीनोऽअभ्वात् ॥ अनेहोदात्रमदितेरनर्वं

( १।२४।५ ) तावामितिषड़ृचस्यसूक्तस्यमैत्रावरुणिरगस्त्योश्विनौत्रिष्टुप् । (१।२४।६) कतरेत्येकादशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्यो

हुवेस्वर्वदवधंनमस्वत् । तद्रोदसीजनयतंजरित्रेद्यावा० ॥ अतप्यमानेऽअवसावंतीऽअनुष्यामरोदसीदेवपुत्रे । उभेदेवानामुभयेभिरह्नांद्यावा० ॥ संगच्छमानेयुवतीसमंतेस्वसाराजामीपित्रोरुपस्थे । अभिजिघ्रंतीभुवनस्यनाभिंद्यावा० ॥ २ ॥ उर्वीसद्मनीबृहतीऽऋतेनहुवेदेवानामवसाजनित्री । दधातेयेऽअमृतंसुप्रतीकेद्यावा० ॥ उर्वींपृथ्वीबहुलेदूरेऽअंतेऽउपब्रुवेनमसायज्ञेऽअस्मिन् । दधातेयेसुभगेसुप्रतूर्तीद्यावा० ॥ देवान्वायच्चकृमाकच्चिदागःसखायंवासदमिज्जास्पतिंवा । इयंधीर्भूयाऽअवयानमेषांद्यावा० ॥ उभाशंसानर्यामामविष्टामुभेमामूतीऽअवसासचेतां । भूरिचिदर्यःसुदास्तरायेषामदंतऽइषयेमदेवाः ॥ ऋतंदिवेतदवोचंपृथिव्याऽअभिश्रावायप्रथमंसुमेधाः । पातामवद्याद्दुरितादभीकेपितामाताचरक्षतामवोभिः ॥ इदंद्यावापृथिवीसत्यमस्तुपितर्मातर्यदिहोपब्रुवेवां । भूतंदेवानामवमेऽअवोभिर्विद्यामेषंवृजनंजीरदानुं ॥ ३ ॥ ( १।२४।७ ) आनऽइळाभिर्विदथेसुशस्तिविश्वानरःसवितादेवऽएतु । अपियथायुवानोमत्सथानोविश्वंजगदभिपित्वेमनीषा+ ॥ आनोविश्वऽआस्क्रागमंतुदेवामित्रोऽअर्यमावरुणःसजोषाः । भुवन्यथानोविश्वेवृधासःकरन्त्सुषाहाविथुरंनशवः ॥ प्रेष्ठंवोऽअतिथिंगृणीषेग्निंशस्तिभिस्तुर्वणिःसजोषाः ।



---

द्यावापृथिवीत्रिष्टुप् । ( १।२४।७ ) आनइळाभिरित्येकादशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्योविश्वेदेवास्त्रिष्टुप् ( सूक्तभेदप्रयोगेतु-आद्यचतसृणांविश्वेदेवाःततएकस्याअहिर्बुध्न्यःततएकस्यास्त्वष्टाततएकस्याइंद्रःततोद्वयोर्मरुतःततोद्वयोर्विश्वेदेवाःएवमेकादश ) ।

असद्यथानोवरुणःसुकीर्तिरिषश्चपर्षदरिगूर्तःसूरिः+ ॥ उपवऽएषेनमसाजिगीषोषासानक्तासुदुघेवधेनुः । समानेऽअ
हन्विमिमानोऽअर्कंविषुरूपेपयसिसस्मिन्नूधन् ॥ उतनोहिर्बुध्न्योमयस्कःशिशुंनपिप्युषीववेतिसिंधुः । येनननपातम
पांजुनाममनोजुवोवृषणोयंवहंति ॥ ४ ॥ उतनऽईंत्वष्टागंत्वच्छास्मत्सूरिभिरभिपित्वेसजोषाः । आवृत्रहेंद्रश्चर्षणि
प्रास्तुविष्टमोनरांनऽइहगम्याः ॥ उतनऽईंमतयोश्वयोगाःशिशुंनगावस्तरुणंरिहंति । तमींगिरोजनयोनपत्नीःसुरभिष्ट
मंनरांनसंत ॥ उतनऽईंमरुतोवृद्धसेनाःस्मद्रोदसीसमनसःसदंतु । पृषदश्वासोवनयोनरथारिशादसोमित्रयुजोनदे
वाः+ ॥ प्रनुयदेषांमहिनाचिकित्रेप्रयुंजतेप्रयुजस्तेसुवृक्ति । अधयदेषांसुदिनेनशरुर्विश्वमेरिणंप्रुषायंतसेनाः ॥ प्रोऽ
अश्विनाववसेकृणुध्वंप्रपूषणंस्वतवसोहिसंति । अद्वेषोविष्णुर्वातऽऋभुक्षाऽअच्छासुम्नायववृतीयदेवान्+ ॥ इयंसावो
ऽअस्मेदीधितिर्यजत्राऽअपिप्राणीचसदनीचभूयाः । नियादेवेषुयततेवसूयुर्विद्यामेषंवृजनंजीरदानुं ॥ ५ ॥ ( १।२४।८ )
पितुंनुस्तोषंमहोधर्माणंतविषीं । यस्यत्रितोव्योजसावृत्रंविपर्वमर्दयत् ॥ स्वादोपितोमधोपितोवयंत्वाववृमहे । अस्मा
कमविताभव ॥ उपनःपितवाचरशिवःशिवाभिरूतिभिः । मयोभुरद्विषेण्यःसखासुशेवोऽअद्वयाः ॥ तवत्येपितोर
सारजांस्यनुविष्ठिताः । दिविवाताऽइवश्रिताः+ ॥ तवत्येपितोददतस्तवस्वादिष्ठतेपितो । प्रस्वाद्मानोरसानांतुविग्री

( १।२४।८ ) पितुंन्वित्येकादशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्योऽनंगायत्रीआद्यानुष्टुब्गर्भातृतीयापंचम्याद्याश्चतस्रोनुष्टुभोंत्याबृहतीवा ।

वा॑ऽइवेरते ॥ ६ ॥ त्वे॑पि॑तोम॒हाना॑न्दे॒वाना॒म्मनो॑हि॒तं । अका॑रि॒चारु॑के॒तुना॒तवा॒हि॒मव॑सावधीत् ॥ यद॒दो॑पि॑तो॒ऽअज॑गन्वि॒वस्व॒पर्व॑तानां । अत्रा॑चिन्नोमधोपि॒तोरं॑भ॒क्षाय॑गम्याः ॥ यद॒पामोष॑धीनां॒परिं॒शामा॑रि॒शाम॑हे । वाता॑पे॒पीव॒ऽइद्भ॑व ॥ यत्ते॑सोम॒गवा॑शिरो॒यवा॑शिरो॒भजा॑महे । वाता॑पे॒पी० ॥ क॒र॒म्भऽओ॑षधेभव॒पीवो॑वृ॒क्कऽउ॑दार॒थिः । वाता॑पे॒पी० ॥ तंत्वा॑व॒यंपि॑तो॒वचो॑भि॒र्गावो॒नह॒व्यासु॑षूदिम । दे॒वेभ्य॑स्त्वासध॒माद॑म॒स्मभ्य॑न्त्वासध॒माद॑ं ॥ ७ ॥ ( १।२४।९ ) समि॑द्धोऽअ॒द्यरा॑जसिदे॒वोदे॒वैः स॑हस्रजित् । दू॒तोह॒व्याक॒विर्व॑ह ॥ तनू॒नपा॑दृ॒तंय॒तेमध्वा॑य॒ज्ञः सम॑ज्यते । दध॑त्सह॒स्रिणी॑रि॒षः ॥ आ॒जुह्वा॑नो॒न॒ऽईड्यो॑दे॒वाँऽआव॑क्षिय॒ज्ञिया॑न् । अग्ने॑सहस्र॒सा॒ऽअ॑सि ॥ प्रा॒चीनं॑ब॒र्हिरो॒ज॑सासह॒स्रवी॑रमस्तृणन् । यत्रा॑दित्या॒विरा॑जथ ॥ वि॒राट्स॒म्राड्वि॒भ्वीः प्र॒भ्वीर्ब॒ह्वीश्च॒भूय॑सीश्च॒याः । दुरो॑घृ॒तान्य॑क्षरन् ॥ ८ ॥ सु॒रु॒क्मेहि॒सुपे॑श॒साधि॑श्रि॒याविरा॑जतः । उ॒षासा॒वेह॒सी॑दतां ॥ प्र॒थ॒माहि॒सुवाच॑सा॒होता॑रा॒दैव्या॒क॒वी । य॒ज्ञंनो॑यक्षतामि॒मं ॥ भार॑ती॒ळे॒सर॑स्वति॒यावः॒सर्वा॑ऽउपब्रुवे । तान॑श्चोदयत॒श्रिये॑ ॥ त्वष्टा॑रू॒पाणि॒हि॒प्र॒भुः प॒शून्विश्वा॑न्त्समा॒नजे । तेषा॑न्नःस्फा॒ति॒माय॑ज ॥ उप॒त्मन्या॑वनस्पते॒पाथो॑दे॒वेभ्यः॑सृज । अ॒ग्निर्ह॒व्यानि॑सिष्वदत् ॥ पु॒रो॒गाऽअ॒ग्निर्दे॒वानां॒गाय॒त्रेण॒सम॑ज्यते ।



( १।२४।९ ) समिद्धइत्येकादशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्यइध्मस्तनूनपादिळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौसरस्वतीळाभारत्यस्त्वष्टावनस्पतिस्वाहाकृतयइतिक्रमेणदेवताःगायत्रीच्छंदः ।

स्वाहांकृतीषुरोचते ॥ ९ ॥ ( १।२४।१० ) अग्नेनयंऽसुपथांरायेऽअस्मान्विश्वांनिदेववयुनांनिविद्वान् । युयोध्यं१
स्मज्जुंहुराणमेनोभूयिंष्ठांतेनमंऽउक्तिंविधेम ॥ अग्नेत्वंपांरयानव्योंऽअस्मान्त्स्वस्तिभिरतिंदुर्गाणिविश्वां । पूश्चंपृथ्वी
वंहुलानंऽउर्वीभवांतोकायतनंयायशंयोः+ ॥ अग्नेत्वमस्मद्युंयोध्यमींवाऽअनंग्नित्राऽअभ्यमंतकृष्टीः । पुनंरस्मभ्यंसु
वितायंदेवक्षांविश्वेंभिरमृतेंभिर्यजत्र ॥ पाहिनोंऽअग्नेपायुभिरजंस्रैरुतप्रियेसदंनऽआशुंशुक्वान् । मातेंभयंजरितारंय
विष्ठनूनंविदन्मापरंसहस्वः ॥ मानोंऽअग्नेवंसृजोऽअघायांविष्यवेंरिपवेंदुच्छुनांयै । मादत्वतेदशंतेमादतेंनोमारीषंते
सहसावन्परांदाः ॥ १० ॥ विघत्वावाँऽऋतजातयंसद्गृणानोऽअंग्नेतन्वे३ वरूथं । विश्वांद्रिरिक्षोरुतवांनिनित्सोरंभि
हुतामसिहिदेंववविष्पट् ॥ त्वंताँऽअंग्नऽउभयान्विविद्वान्वेषिप्रपित्वेमनुंषोयजत्र । अभिपित्वेमनंवेशास्योंभूर्मर्मृजे
न्यंऽउशिग्भिर्नाक्रः+ ॥ अवोचामनिवचंनान्यस्मिन्मानंस्यसूनुःसंहसानेऽअग्नौ । वयंसहस्रमृषिंभिःसनेमविद्यामेषंवृ
जनंजीरदांनुं ॥ ११ ॥ ( १।२४।११ ) अनर्वाणंवृषभंमंद्रजिंह्वंबृहस्पतिंवर्धयानव्यमर्कैः । गाथान्यःसुरुचोयस्यंदे
वाऽआंशृण्वंतिनवंमानस्यमर्ताः ॥ तमृत्वियाऽउपवाचंःसचंतेसर्गोनयोदेंवयतामसंर्जि । बृहस्पतिःसह्यंजोवरांसिवि
भ्वाभंवत्समृतेमांतरिश्वां ॥ उपंस्तुतिंनमंसऽउद्यंतिंचश्लोकंयंसत्सवितेवप्रबाहू । अस्यक्रत्वांहन्यो३ योऽअस्तिंमृगोन

(१।२४।१०) अग्नेनयेत्यष्टर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्योग्निस्त्रिष्टुप् । (१।२४।११) अनर्वाणमित्यष्टर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्यो

भीमोऽअरक्षसस्तुविष्मान् ॥ अस्यश्लोकोदिवीयतेपृथिव्यामत्योनयंसद्यक्षभृद्विचेताः । मृगाणांनहेतयोयंतिचेमाबृहस्पतेरहिंमायाँऽअभिद्यून्+ ॥ येत्वादेवोस्त्रिकंमन्यमानाःपापाभद्रमुपजीवंतिपज्राः । नदूढ्येऽअनुददासिवामंबृहस्पतेचयंसऽइत्त्रियारुं ॥ १२ ॥ सुप्रैतुःसूयवसोनपंथादुर्नियंतुःपरिप्रीतोनमित्रः । अनर्वाणोऽअभियेचक्षतेनोपीवृताऽअपोर्णुवंतोऽअस्थुः ॥ संयंस्तुभोवनयोनयंतिसमुद्रंनस्रवतोरोधचक्राः । सविद्वाँऽउभयंचष्टेऽअंतर्बृहस्पतिस्तरऽआपश्चगृध्रः ॥ एवामहस्तुविजातस्तुविष्मान्बृहस्पतिर्वृषभोधायिदेवः । सनःस्तुतोवीरवद्धातुगोमद्विद्यामेषंवृजनंजीरदानुं ॥ १३ ॥ ( १।२४।१२ ) कंकतोनकंकतोथोसतीनकंकतः । द्वावितिप्लुषीऽइतिन्य१दृष्टाऽअलिप्सत ॥ अदृष्टान्हंत्यायत्यथोहंतिपरायती । अथोऽअवघ्नतीहंत्यथोपिनष्टिपिंषती+ ॥ शरासःकुशरासोदर्भासःसैर्याऽउत । मौंजाऽअदृष्टावैरिणाःसर्वेसाकंन्यलिप्सत ॥ निगावोगोष्ठेऽअसदन्निमृगासोऽअविक्षत । निकेतवोजनानांन्य१दृष्टाऽअलिप्सत ॥ एतऽउत्येप्रत्यदृश्रन्प्रदोषंतस्कराऽइव । अदृष्टाविश्वदृष्टाःप्रतिबुद्धाऽअभूतन ॥ १४ ॥ द्यौर्वःपितापृथिवीमातासोमोभ्रातादितिःस्वसा । अदृष्टाविश्वदृष्टास्तिष्ठतेलयतासुकं ॥ येऽअंस्यायेऽअंग्याःसूचीकायेप्रकंकताः । अदृष्टाःकिंचनेहवःसर्वेसाकंनिजस्यत ॥ उत्पुरस्तात्सूर्यऽएतिविश्वदृष्टोऽअदृष्टहा । अदृष्टान्त्सर्वान्जंभयन्त्सर्वाश्चयातुधा

बृहस्पतिस्त्रिष्टुप् । ( १।२४।१२ ) कंकतइतिषोळशर्चस्यसूक्तस्यमैत्रावरुणिरगस्त्योमृणसूर्याअनुष्टुप्दशम्याद्यास्तिस्रोमहापंक्तयस्त्रयोदशी

न्यः ॥ उदपप्तदसौसूर्यःपुरुविश्वानिजूर्वन् । आदित्यःपर्वतेभ्योविश्वदृष्टोऽअदृष्टहा ॥ सूर्येविषमासंजामिदृतिंसूरा
वतोगृहे । सोचिन्नुनमराातिनोवयंमरामारेऽअस्ययोजनंहरिष्ठामधुत्वामधुलाचकार ॥ १५ ॥ इयत्तिकाशकुंतिकासका
जंघासतेविषं । सोचिन्नुनमराति० ॥ त्रिःसप्तविष्पुलिंगकाविषस्यपुष्पमक्षन् । ताश्चिन्नुनमरंति० ॥ नवानांनवतीनांविष
स्यरोपुषीणां । सर्वासामग्रभंनामारे० ॥ त्रिःसप्तमयूर्यःसप्तस्वसारोऽअग्रुवः । तास्तेविषंविजभ्रिरऽउदकंकुंभिनीरिव ॥
इयत्तकःकुषुंभकस्तकंभिनद्म्यश्मना । ततोविषंप्रवावृतेपराचीरनुसंवतः ॥ कुषुंभकस्तदब्रवीद्गिरेःप्रवर्तमानकः । वृश्चिक
स्यारसंविषमरसंवृश्चिकतेविषं ॥ १६ ॥ ( इतिशातर्चिनंप्रथमंमंडलं ॥ अत्रसूक्तानि १९१ ) ॥ ॥ परिशिष्टं ॥ मा
विभेर्नमरिष्यसिपरित्वापामिसर्वतः । घनेनहन्मिवृश्चिकमहिंदंडेनागतं ॥ आदित्यरथवेगेनविष्णुबाहुबलेनच । गरु
डपक्षनिपातेनभूमिंगच्छमहायशाः ॥ गरुडस्यजातमात्रेणत्रयोलोकाःप्रकंपिताः । प्रकंपितामहीसर्वासशैलवनकानं
ना ॥ गगनंनष्टचंद्रार्कज्योतिषंनप्रकाशते । देवताभयभीताश्चमारुतोनप्लुवायतिमारुतोनप्लुवायत्योंनमः ॥ भोसर्पभ
द्रभद्रंतेदूरंगच्छमहायशाः । जनमेजयस्ययज्ञांतेऽआस्तीकवचनंस्मर ॥ आस्तीकवचनंश्रुत्वायःसर्पोननिवर्तते । शत
धाभिद्यतेमूर्ध्निशिंशवृक्षफलंयथा ॥ नर्मदायैनमःप्रातर्नर्मदायैनमोनिशि । नमोस्तुनर्मदेतुभ्यंत्राहिमांविषसर्पतः ॥

---

महाबृहती ( विषघ्नसूक्तं ) ।

ऋक्सं. अ.२अ.५ ॥ ३४ ॥

योजर॒त्कारु॑णाजा॒तोज॒रत्क॑न्यांम॒हाय॑शाः । तस्य॒सर्पा॑पभ॒द्रंतेदू॒रंग॑च्छम॒हाय॑शाः ॥ १ ॥ ( २।१।१ ) त्वम॑ग्ने॒द्यु भि॒स्त्वमा॑शुशुक्षणि॒स्त्वम॒द्भ्यस्त्वमश्म॑न॒स्परि॑ । त्वंवने॑भ्य॒स्त्वमोष॑धीभ्य॒स्त्वंनृ॒णांनृ॑पतेजायसे॒शुचिः॑ ॥ तवा॑ग्नेहो॒त्रंतव॑ पो॒त्रमृ॒त्वियं॒तव॑ने॒ष्ट्रंत्वम॒ग्निदृ॑तायतः । तव॑प्रशा॒स्त्रंत्वम॑ध्वरीयसिब्र॒ह्माचासि॑गृ॒हप॑तिश्च॒नो॒दमे॑ ॥ त्वम॑ग्न॒ऽइंद्रो॑वृष॒भः॒स॒ता॒म॑सि॒त्वंविष्णु॑रुरु॒गा॒योन॑म॒स्यः॑ । त्वंब्र॒ह्मार॑यि॒विद्ब्र॑ह्मणस्पते॒त्वंवि॑धर्तः॒सच॑से॒पुरं॑ध्या ॥ त्वम॑ग्ने॒राजा॒वरु॑णोधृ॒तव्र॑त॒स्त्वं मि॒त्रोभ॑वसि॒द॒स्मऽई॒ड्यः॑ । त्वम॑र्य॒मास॒त्प॑ति॒र्यस्य॑सं॒भुजं॒त्वमंशो॑वि॒दथे॑देवभाज॒युः + ॥ त्वम॑ग्ने॒त्वष्टा॑विध॒तेसु॒वीर्यं॒तव॒ग्ना वो॑मित्रमहः॒सजा॒त्यं॑ । त्वमा॑शुहेमा॑ररिषे॒स्वश्व्यं॒त्वंन॒रांशर्धो॑ऽअसिपु॒रूवसुः॑ ॥ १७ ॥ त्वम॑ग्ने॒रु॒द्रोऽअसु॑रोम॒होदि॒वस्त्वं शर्धो॒मारु॑तंपृ॒क्षऽई॑शिषे । त्वंवातै॑ररु॒णैर्या॑सिशं॒ग॒यस्त्वंपू॒षावि॑ध॒तःपा॑सि॒नुत्मना॑ ॥ त्वम॑ग्नेद्रविणो॒दाऽअ॑रं॒कृ॒ते॒त्वंदे॒वः स॑वि॒तार॑त्न॒धाऽअ॑सि । त्वंभगो॑नृपते॒वस्व॒ऽई॑शिषे॒त्वंपा॒युर्दमे॒यस्ते॒वि॑धत् ॥ त्वाम॑ग्ने॒दम॒ऽआवि॒श्पतिं॒वि॒शस्त्वांरा॒जा॑ नंसुवि॒दत्र॑मृंजते । त्वंविश्वा॑निस्वनीकपत्यसे॒त्वंस॒हस्रा॑णि॒श॒तादश॒प्रति॑ ॥ त्वाम॑ग्नेपि॒तर॑मि॒ष्टिभि॒र्नर॒स्त्वांभ्रा॒त्राय॒ शम्या॑तनू॒रुचं॑ । त्वंपु॒त्रोभ॑वसि॒यस्ते॒वि॑ध॒त्त्वंसखा॑सु॒शेवः॑पास्या॒धृषः॑ ॥ त्वम॑ग्न॒ऽऋ॒भुरा॒केन॑म॒स्य१॒स्त्वंवाज॑स्यक्षु॒मतो॒ रा॒यऽई॑शिषे । त्वंवि॒भा॒स्यनु॑द॒क्षि॒दा॒वने॒त्वंवि॒शि॒क्षुर॑सि॒य॒ज्ञमा॒तनिः॑ ॥ १८ ॥ त्वम॑ग्ने॒ऽअदि॑तिर्देव॒दा॒शुषे॒त्वंहो॒त्राभार॑ती

मंडलं २ अनु. १ ॥ ३४ ॥

---

( २।१।१ ) ( अथगार्त्समदेद्वितीयेमंडलेचतस्रोऽनुवाकाः ) ॥ त्वमग्नइतिषोळशर्चस्यसूक्तस्यशौनकोगृत्समदोग्निर्जगती ।

त्वर्धसेगिरा । त्वमिळाशतहिमासिदक्षसेत्वंवृत्रहावसुपतेसरस्वती ॥ त्वमग्नेसुभृतऽउत्तमंवयस्तवस्पार्हेवर्णऽआसंदृशिश्रियः । त्वंवाजःप्रतरणोबृहन्नसित्वंरयिर्बहुलोविश्वतस्पृथुः+ ॥ त्वामग्नऽआदित्यासऽआस्यं१त्वांजिह्वांशुचयश्चक्रिरेकवे । त्वांरातिषाचोऽअध्वरेषुसश्चिरेत्वेदेवाहविरदंत्याहुतं ॥ त्वेऽअग्नेविश्वेऽअमृतासोऽअद्रुहऽआसादेवाहविरदंत्याहुतं । त्वयामर्तासःस्वदंतऽआसुतिंत्वंगर्भोवीरुधांजज्ञिषेशुचिः ॥ त्वंतान्त्संचप्रतिचासिमज्मनाग्नेसुजातप्रचदेवरिच्यसे । पृक्षोयदत्रमहिनावितेभुवदनुद्यावापृथिवीरोदसीऽउभे+ ॥ येस्तोतृभ्योगोऽअग्रामश्वपेशसमग्नेरातिमुपसृजंतिसूरयः । अस्मान्चतांश्चप्रहिनेषिवस्यऽआबृहद्वदेमविदथेसुवीराः ॥ १९ ॥ ( २।१।२ ) यज्ञेनवर्धतजातवेदसमग्निंयजध्वंहविषातनागिरा । समिधानंसुप्रयसंस्वर्णरंद्युक्षंहोतारंवृजनेषुधूर्षदं ॥ अभित्वानक्तीरुषसोववाशिरेग्नेवत्संनस्वसरेषुधेनवः । दिवऽइवेदरतिर्मानुषायुगाक्षपोभासिपुरुवारसंयतः ॥ तंदेवाबुध्नेरजसःसुदंससंदिवस्पृथिव्योररतिंन्येरिरे । रथमिववेद्यंशुक्रशोचिषमग्निंमित्रंनक्षितिषुप्रशंस्यं ॥ तमुक्षमाणंरजसिस्वऽआदमेचंद्रमिवसुरुचंह्वारऽआदधुः । पृश्न्याःपतरंचितयंतमक्षभिःपाथोनपायुंजनसीऽउभेऽअनु ॥ सहोताविश्वंपरिभूत्वध्वरंतमुहव्यैर्मनुषऽऋंजतेगिरा । हिरिशिप्रोवृधसानासुजर्भुरद्द्यौर्नस्तृभिश्चितयद्रोदसीऽअनु ॥ २० ॥ सनोरेवत्समिधानःस्वस्तयेसंददस्वान्र

( २।१।२ ) यज्ञेनेतित्रयोदशर्चस्यसूक्तस्यशौनकोगृत्समदोग्निर्जगती ।

यिमस्मासुदीदिहि । आनः कृणुष्वसुवितायरोदसीऽअग्नेहव्यामनुषोदेववीतये ॥ दानोऽअग्नेबृहतोदाः सहस्रिणोदुरोनवाजंश्रुत्याऽअपावृधि । प्राचीद्यावापृथिवीब्रह्मणाकृधिस्व१र्णशुक्रमुषसोविदिद्युतुः ॥ सऽइधानऽउषसोराम्याऽअनुस्व१र्णदीदेदरुषेणभानुना । होत्राभिरग्निर्मनुषः स्वध्वरोराजाविशामतिथिश्चारुरायवे ॥ एवानोऽअग्नेऽअमृतेषुपूर्व्यधीष्पीपायबृहद्दिवेषुमानुषा । दुहानाधेनुर्वृजनेषुकारवेत्मनाशतिनंपुरुरूपमिषणि ॥ वयमग्नेऽअर्वतावासुवीर्यंब्रह्मणावाचितयेमाजनाँऽअति । अस्माकंद्युम्नमधिपंचकृष्टिषूच्चास्व१र्णशुशुचीतदुष्टरं ॥ सनोबोधिसहस्यप्रशंस्योयस्मिन्त्सुजाताऽइषयंतसूरयः । यमग्नेयज्ञमुपयंतिवाजिनोनित्येतोकेदीदिवांसंस्वेदमे ॥ उभयासोजातवेदः स्यामतेस्तोतारोऽअग्नेऽसूरयश्चशर्मणि । वस्वोरायः पुरुश्चंद्रस्यभूयसः प्रजावतः स्वपत्यस्यशग्धिनः ॥ येस्तोतृभ्योगोऽअग्रामश्वपेशसमग्नेरातिमुपसृजंतिसूरयः । अस्मान्चतांश्चप्रहिनेषिवस्यऽआबृहद्वदेमविदथेसुवीराः ॥ २१ ॥ (२।१।२) समिद्धोऽअग्निर्निहितः पृथिव्यांप्रत्यङ्विश्वानिभुवनान्यस्थात् । होतापावकः प्रदिवः सुमेधादेवोदेवान्यजत्वग्निरर्हन् ॥ नराशंसः प्रतिधामान्यंजन्तिस्रोदिवः प्रतिमह्नास्वर्चिः । घृतप्रुषामनसाहव्यमुंदन्मूर्धन्यज्ञस्यसमनक्तुदेवान्[+] ॥ ईळितोऽ



---

(२।१।३) समिद्धोअग्निरित्येकादशर्चस्यसूक्तस्यशौनकोगृत्समदइध्मोनराशंसइळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौसरस्वतीळाभारत्यस्त्वष्टावनस्पतिस्वाहाकृतयइतिक्रमेणदेवतास्त्रिष्टुप्षष्ठीसप्तम्यौजगत्यौ ।

अग्नेमनसानोऽअर्हन्देवान्यक्षिमानुषात्पूर्वोऽअद्य । सऽआवहमरुतांशर्धोऽअच्युतमिंद्रंनरोबर्हिषदंयजध्वं ॥ देवब
र्हिर्वर्धमानंसुवीरंस्तीर्णंरायेसुभरंवेद्यस्यां । घृतेनाक्तंवसवःसीदतेदंविश्वेदेवाऽआदित्यायज्ञियासः ॥ विश्रयंतामुर्वि
याहूयमानाद्वारोदेवीःसुप्रायणानमोभिः । व्यचस्वतीर्विप्रथंतामजुर्यावर्णंपुनानायशसंसुवीरं ॥ २२ ॥ साध्वपांसि
सनतानऽउक्षितेऽउषासानक्तावय्येवरण्विते । तंतुंततंसंवयंतीसमीचीयज्ञस्यपेशःसुदुघेपयस्वती ॥ दैव्याहोताराप्रथ
माविदुष्टरऽऋजुयक्षतःसमृचावपुष्टरा । देवान्यजंतावृतुथासमंजतोनाभापृथिव्याऽअधिसानुषुत्रिषु+ ॥ सरस्वती
साधयंतीधियंनऽइळादेवीभारतीविश्वतूर्तिः । तिस्रोदेवीःस्वधयाबर्हिरेदमच्छिद्रंपांतुशरणंनिषद्य ॥ पिशंगरूपःसुभ
रोवयोधाःश्रुष्टीवीरोजायतेदेवकामः । प्रजांत्वष्टाविष्यंतुनाभिमस्मेऽअथादेवानामप्येतुपाथः ॥ वनस्पतिरवसृजन्नु
पस्थादग्निर्हविःसूदयातिप्रधीभिः । त्रिधासमक्तंनयतुप्रजानन्देवेभ्योदैव्यःशमितोपहव्यं+ ॥ घृतंमिमिक्षेघृतमस्ययो
निर्घृतेश्रितोघृतम्वस्यधाम । अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यं+ ॥ २३ ॥ (२।१।४) हुवेवःसुद्यो
त्मानंसुवृक्तिंविशामग्निमतिथिंसुप्रयसं । मित्रऽइवयोदिधिषाय्योभूद्देवऽआदेवेजनेजातवेदाः ॥ इमंविधंतोऽअपांस
धस्थेद्वितादधुर्भृगवोविक्ष्वा३ऽयोः । एषविश्वान्यभ्यस्तुभूमादेवानामग्निररतिर्जीराश्वः ॥ अग्निंदेवासोमानुषीषुविक्षु

(२।१।४)- हुवेवइतिनवर्चस्यसूक्तस्यभार्गवःसोमाहुतिरग्निस्त्रिष्टुप् ।

प्रियंधुः क्षेष्यंतोनमित्रं । सदीदयदुशतीरूर्म्याऽआदुक्षाय्योयोदास्वंतेदमुऽआ ॥ अस्यरण्वास्वस्यैवपुष्टिः संदृष्टिरस्य हियानस्यदक्षोः । वियोभरिंभ्रदोषंधीषुजिह्वामत्योनरथ्योदोधवीतिवारान् ॥ आयन्मेऽअभ्वंवनदः पनंतोशि ग्भ्योनामिमीतवर्णं । सचित्रेणंचिकितेरंसुभासाजुजुर्वांयोमुहुरायुवाभूत् ॥ २४ ॥ आयोवनांतातृषाणोनभातिवा र्णपथारथ्येवस्वानीत् । कृष्णाध्वातपूरण्वश्चिकेतद्यौरिवस्मयंमानोनभोभिः ॥ सयोव्यस्थादभिदक्षदुर्वींपशुर्नैतिस्वयुर गोपाः । अग्निः शोचिष्माँऽअतसान्युष्णन्कृष्णव्यंथिरस्वदयन्नभूम ॥ नूतेपूर्वस्यावसोऽअधीतौतृतीयेविदथेमन्मशंसि । अस्मेऽअग्नेसंयद्वीरंबृहंतंक्षुमंतंवाजंस्वपत्यंरयिंदाः ॥ त्वयायथागृत्समदासोऽअग्नेगुहावन्वंतऽउपराँऽअभिष्युः । सुवी रासोऽअभिमातिषाहः स्मत्सूरिभ्योगृणतेतद्वयोधाः ॥ २५ ॥ (२।१।५) होताजनिष्टचेतनः पितापितृभ्यऽऊतये । प्रयक्ष न्जेन्यंवसुशकेमवाजिनोयमं ॥ आयस्मिन्त्सप्तरश्मयस्ततायज्ञस्यनेतरि । मनुष्वद्दैव्यमष्टमंपोताविश्वंतदिन्वति ॥ दधन्वेवायदीमनुवोचद्ब्रह्माणिवेरुतत् । परिविश्वानिकाव्यानेमिश्चक्रमिवाभवत् ॥ साकंहिशुचिनाशुचिः प्रशास्ताक्र तुनाजनि । विद्वाँऽअस्यव्रताध्रुवावयाऽइवानुरोहते ॥ ताऽअस्यवर्णमायुवोनेष्टुः सचंतधेनवः । कुवित्तिसृभ्यऽआव रंस्वसारोयाऽइदंययुः ॥ यदीमातुरुपस्वसाघृतंभरंत्यस्थित । तासामध्वर्युरागतौयवोवृष्टीवमोदते ॥ स्वः स्वायधा

(२।१।५) होताजनिष्टेत्यष्टर्चस्यसूक्तस्यभार्गवः सोमाहुतिरग्निरनुष्टुप् ।

यंसेकृणुतामृत्विगृत्विजं । स्तोमैंयज्ञंचादरंवनेमाररिमावयं ॥ यथाविद्वाँऽअरंकरद्विश्वेभ्योयजतेभ्यं । अयमंग्नेत्वेऽ अपियंयज्ञंचकृमावयं+ ॥ २६ ॥ ( २।१।६ ) इमांमेंऽअग्नेसमिधंमिमामुपसदंवनेः । इमाऽउषुश्रुधीगिरंः ॥ अया तेंऽअग्नेविधेमोर्जोनपादश्वंमिष्टे । एनासूक्तेनंसुजात ॥ तंत्वांगीर्भिर्गिर्वणसंद्रविणस्युंद्रविणोदः । सपर्येमंसपर्यवंः ॥ सवोंधिसूरिर्मघवावसुंपतेवसुंदावन् । युयोध्यं१स्मद्वेषांसि ॥ सनोंवृष्टिंदिवस्परिसनोवाजंमनर्वाणं । सनंःसहस्रिणी रिषंः ॥ ईळांनायावस्यवेयविंष्ठदूतनोगिरा । यजिष्ठहोतरागंहि ॥ अंतर्ह्यंग्नऽईयसेविद्वान्जन्मोभयाकवे । दूतोजन्यें वमित्र्यंः ॥ सविद्वाँऽआचंपिप्रयोयक्षिचिकित्वऽआनुषक् । आचास्मिन्त्संत्सिबर्हिषि ॥ २७ ॥ ( २।१।७ ) श्रेष्ठंय विष्ठभारताग्नेंद्युमंतमाभंर । वसोंपुरुस्पृहंरयिं+ ॥ मानोऽअरांतिरीशतदेवस्यमर्त्यंस्यच । पर्षितस्याऽउतद्विषः+ ॥ विश्वांऽउतत्वयांवयंधाराऽउदन्याऽइव । अतिंगाहेमहिद्विषंः ॥ शुचिंःपावकवंद्योग्नेबृहद्विरोचसे । त्वंघृतेभिराहुतः ॥ त्वंनोंऽअसिभारताग्नेवशाभिरुक्षभिंः । अष्टापंदीभिराहुतः ॥ द्र्वन्नःसर्पिरांसुतिःप्रत्नोहोतावरेण्यः । सहंसस्पुत्रोऽअद्भुतः ॥ २८ ॥ ( २।१।८ ) वाजयन्निवनूरथान्योगाँऽअग्नेरुपंस्तुहि । यशस्तंमस्यमीढुषंः ॥ यःसुनीथोददाशुषेंजुर्योजरयंन्न

---

( २।१।६ ) इमांमइत्यष्टर्चस्यसूक्तस्यभार्गवःसोमाहुतिरग्निर्गायत्री । ( २।१।७ ) श्रेष्ठमितिषडृचस्यसूक्तस्यभार्गवःसोमाहुतिरग्नि गायत्री । ( २।१।८ ) वाजयन्नितिषडृचस्यसूक्तस्यशौनकोगृत्समदोग्निर्गायत्र्यंत्यानुष्टुप् ।

रिं। चारुप्रतीकऽआहुतः ॥ यऽउंश्रियादमेष्वादोषोषसिंप्रशस्यते । यस्यंव्रतंनमीयते ॥ आयःस्वर्णभानुनाचित्रोविभास्यर्चिषा । अंजानोऽअजरैरभि ॥ अत्रिमनुस्वराज्यंमग्निमुक्थानिवावृधुः । विश्वाऽअधिश्रियोदधे ॥ अग्नेरिंद्रस्यसोमस्यदेवानांमूतिभिर्वयं । अरिष्यंतःसचेमह्यभिष्यामपृतन्यतः ॥ २९ ॥ इतिद्वितीयाष्टकेपंचमोऽध्यायः ॥५॥



त्रयोदशाध्याये वर्गाः २९ सूक्तानि १६ ऋचः १५९ ॥ त्यागः ॥ अश्विभ्यामिदं.६ द्यावापृथिवीभ्यामिदं.११ विश्वेभ्योदेवेभ्य.११ [भे.प.विश्वभ्योदेवे.४ अहयेबुध्न्यायेदं. त्वष्ट्रइदं. इंद्रायेदं. मरुद्भ्यइदं.२ विश्वेभ्योदेवेभ्यइदं.२] अन्नायेदं.११ समिद्धायाग्नयइदं. तनूनपातइदं. इळायेदं. बर्हिषइदं. देवीभ्योद्वार्भ्यइदं. उषासानक्ताभ्या. दैवीभ्यांहोतृभ्यांप्रचेतोभ्यामिदं. सरस्वतीळाभारतीभ्यइदं. त्वष्ट्रइदं. वनस्पतयइदं. स्वाहाकृतीभ्यइदं. अग्नयइदं.८ बृहस्पतयइदं.८ अप्तृणसूर्येभ्यइदं.१६ अग्नयइदं.२९ समिद्धायाग्नयइदं. नराशंसायेदं. इळायेदं. बर्हिषइदं. दैवीभ्योद्वार्भ्यइदं. उषासानक्ताभ्यामिदं. दैवीभ्यांहोतृभ्यांप्रचेतोभ्यामिदं. सरस्वतीळाभारतीभ्यइदं. त्वष्ट्रइदं. वनस्पतयइदं स्वाहाकृतीभ्यइदं. अग्नयइदं.३७ ॥ इतिद्वितीयेपंचमः॥ ५ ॥



निहोताजोहूत्रःश्रुधिसैकैंद्रंविराट्स्थानमृतेत्यांयोजातःपंचोनऋतुःसप्तोनांत्यात्रिष्टुबध्वर्यवोद्वादशप्रघदशप्रवोनवांत्यात्रिष्टुप्सदस्सैंद्विंत्रिष्टुबंतंप्रातरपायिवयंतेसनोविराड्रूपाविश्वजितेषट्त्रिष्टुबंतंत्रिकद्रुकेषुचतुष्कमद्याद्यतिशाक्वरसंत्याष्टिर्वागणानामेकोनाब्राह्मणस्पत्यंहबार्हस्पत्यास्तुदृष्टलिंगाःपंचदश्यंत्येत्रिष्टुभौ ॥ १ ॥

हरिः ३ ओम् ॥ (२।१।९) निहोताहोतृषदनेविदानस्त्वेषोदीदिवाँऽअसदत्सुदक्षः । अदब्धव्रतप्रमतिर्वसिष्ठःसह
स्रंभरःशुचिजिह्वोऽअग्निः+ ॥ त्वंदूतस्त्वमुनःपरस्पास्त्वंवस्यऽआवृषभप्रणेता । अग्नेतोकस्यनस्तनेतनूनामप्रयुच्छ
न्दीद्यद्बोधिगोपाः+ ॥ विधेमतेपरमेजन्मन्नग्नेविधेमस्तोमैरवरेसधस्थे । यस्माद्योनेरुदारिथायजेतंप्रत्वेहवींषिजुहुरेसमि
द्धे ॥ अग्नेयजस्वहविषायजीयाञ्छ्रुष्टीदेष्णमभिगृणीहिराधः । त्वंह्यसिरयिपतीरयीणांत्वंशुक्रस्यवचसोमनोता ॥ उ
भयंतेनक्षीयतेवसव्यंदिवेदिवेजायमानस्यदस्म । कृधिक्षुमंतंजरितारमग्नेकृधिपतिंस्वपत्यस्यरायः+ ॥ सैनानीकेनसु
विदत्रोऽअस्मेयष्टादेवाँऽआयजिष्ठःस्वस्ति । अदब्धोगोपाऽउतनःपरस्पाऽअग्नेद्युमदुतरेवद्दिदीहि ॥ १ ॥(२।१।१०)
जोहूत्रोऽअग्निःप्रथमःपितेवेळस्पदेमनुषायत्समिद्धः । श्रियंवसानोऽअमृतोविचेतामर्मृजेन्यःश्रवस्य१ःसवाजी+ ॥
श्रूयाऽअग्निश्चित्रभानुर्हवंमेविश्वाभिर्गीर्भिरमृतोविचेताः । श्यावारथंवहतोरोहितावोतारुषाहचक्रेविभृत्रः ॥ उत्ताना
यामजनयन्त्सुषूतंभुवदग्निःपुरुपेशासुगर्भः । शिरिणायांचिदक्तुनामहोभिरपरीवृतोवसतिप्रचेताः ॥ जिघर्म्यग्निंहवि
षाघृतेनप्रतिक्षियंतंभुवनानिविश्वा । पृथुंतिरश्चावयसावृहंतंव्यचिष्ठमन्नैरभसंदृशानं ॥ आविश्वतःप्रत्यंचंजिघर्म्यरक्ष
सामनसातज्जुषेत । मर्यश्रीःस्पृहयद्वर्णोऽअग्निर्नाभिमृशेतन्वा३ जर्भुराणः ॥ ज्ञेयाभागंसहसानोवरेणत्वादूतासोमनु

(२।१।९) निहोतेतिषड्टचस्यसूक्तस्यशौनकोगृत्समदोग्निस्त्रिष्टुप्। (२।१।१०) जोहूत्रइतिषड्टचस्यसूक्तस्यशौनकोगृत्समदोग्निस्त्रिष्टुप्।

वर्द्धदेम । अनूनमग्निंजुह्वावचस्यामधुपृचंधनसाजोहवीमि ॥ २ ॥ ( २।१।११ ) श्रुधीहवमिंद्रमारिषण्यः स्यामतेदावनेवसूनां । इमाहित्वामूजोवर्धयंतिवसूयवःसिंधवोनक्षरंतः ॥ सृजोमहीरिंद्रयाऽअपिन्वःपरिष्ठिताऽअहिनाशूरपूर्वीः । अमर्त्यंचिद्दासंमन्यमानमवाभिनदुक्थैर्वावृधानः+ ॥ उक्थेष्विन्नुशूरयेषुचाकन्स्तोमेष्विंद्ररुद्रियेषुच । तुभ्येदेतायासुमंदसानःप्रवायवेसिस्रतेनशुभ्राः+ ॥ शुभ्रंनुतेशुष्मंवर्धयंतःशुभ्रंवज्रंबाह्वोर्दधानाः । शुभ्रस्त्वमिंद्रवावृधानोऽअस्मेदासीर्विशःसूर्येणसह्याः ॥ गुहाहितंगुह्यंगूळ्हमप्स्वपीवृतंमायिनंक्षियंतं । उतोऽअपोद्यांतस्तभ्वांसमहन्नहिंशूरवीर्येण ॥ ३ ॥ स्तवानुतंऽइंद्रपूर्व्यामहान्युतस्तवामनूतनाकृतानि । स्तवावज्रंबाह्वोरुशंतंस्तवाहरीसूर्यस्यकेतू+ ॥ हरीनुतंऽइंद्रवाजयंताघृतश्चुतंस्वारमस्वार्ष्टां । विसमनाभूमिरप्रथिष्टारंस्तपर्वतश्चित्सरिष्यन्+ ॥ निपर्वतःसाद्यप्रयुच्छन्त्संमातृभिर्वावशानोऽअक्रान् । दूरेपारेवाणींवर्धयंतऽइंद्रेषितांधमनिंपप्रथन्नि+ ॥ इंद्रोमहांसिंधुमाशयानंमायाविनंवृत्रमस्फुरन्निः । अरेजेतांरोदसीभियानेकनिक्रदतोवृष्णोऽअस्यवज्रात् ॥ अरोरवीद्वृष्णोऽअस्यवज्रोमानुषंयन्मानुषोनिजूर्वात् । निमायिनोदानवस्यमायाऽअपादयत्पपिवान्त्सुतस्य ॥ ४ ॥ पिबापिबेदिंद्रशूरसोमंमंदंतुत्वामंदिनःसुतासः । पृणंतस्तेकुक्षीवर्धयंत्वित्थासुतःपौरऽइंद्रमाव ॥ त्वेऽइंद्राप्यभूमविप्राधियंवनेमऽऋतयासपंतः । अवस्यवो

---

( २।१।११ ) श्रुधीहवमित्येकविंशत्यृचस्यसूक्तस्यशौनकोगृत्समदइंद्रोविराट्स्थानाअंत्यात्रिष्टुप् ।

धीमहिप्रशस्तिंसध्यस्तैरायोदावनैस्याम ॥ स्यामतेतंऽइंद्रयेतऽऊतीऽअवस्यवऽऊर्जंवर्धयंतः । शुष्मिन्तमंयंचाकनामदे
वास्मेरयिंरासिवीरवंतं ॥ रासिक्षयंरासिंमित्रमस्मेरासिशर्धंऽइंद्रमारुतंनः । सजोषसोयेचमंदसानाःप्रवायवःपांत्यग्र
णीतिं ॥ व्यंतिवन्नुयेषुमंदसानस्तृपत्सोमंपाहिद्रह्यदिंद्र । अस्मान्त्सुपृत्स्वातरुत्रावर्धयोद्यांबृहद्भिरर्कैः ॥ ५ ॥ बृहंत
ऽइन्नुयेतेतरुत्रोक्थेभिर्वासुम्नमाविवासान् । स्तृणानासोबर्हिःपस्त्यावत्त्वोताऽइदिंद्रवाजमग्मन् ॥ उग्रेष्विन्नुशूरमंद
सानस्त्रिकद्रुकेषुपाहिसोममिंद्र । प्रदोधुवच्छ्मश्रुषुप्रीणानोयाहिहरिभ्यांसुतस्यपीतिं+ ॥ धिष्वाशवःशूरयेनवृत्रमवा
भिनद्दानुमौर्णवाभं । अपावृणोर्ज्योतिरार्यायनिसव्यतःसादिदस्युरिंद्र ॥ सनेमयेतऽऊतिभिस्तरंतोविश्वाःस्पृधऽआ
र्येणदस्यून् । अस्मभ्यंतत्त्वाष्ट्रंविश्वरूपमरंधयःसाख्यस्यत्रितायं ॥ अस्यसुवानस्यमंदिनस्त्रितस्यन्यर्बुदंवावृधानोऽअ
स्तः । अवर्तयत्सूर्योनचक्रंभिनद्वलमिंद्रोऽअंगिरस्वान् ॥ नूनंसातेप्रतिवरंजरित्रेदुहीयदिंद्रदक्षिणामघोनी । शिक्षा
स्तोतृभ्योमातिधग्भगोनोबृहद्वदेमविदथेसुवीराः ॥ ६ ॥ ( २।२।१ ) योजातऽएवप्रथमोमनस्वान्देवोदेवान्क्रतुना
पर्यभूषत् । यस्यशुष्माद्रोदसीऽअभ्यसेतांनृम्णस्यमह्नासजनासऽइंद्रः ॥ यःपृथिवींव्यथमानामदृंहद्यःपर्वतान्प्रकुपि
ताँऽअरम्णात् । योऽअंतरिक्षंविममेवरीयोयोद्यामस्तभ्नात्सजनासऽइंद्रः ॥ योहत्वाहिमरिणात्सप्तसिंधून्योगाऽउदा

( २।२।१ ) योजातइतिपंचदशर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रस्त्रिष्टुप् ।

जंदपधावलस्यं । योऽअश्मनोरंतरग्निंजजानसंवृक्समत्सुसजनासऽइंद्रः ॥ येनेमाविश्वाच्यवनाकृतानियोदासंवर्णमधरंगुहाकः । श्वघ्नीवयोजिगीवाँलक्षमाददर्यःपुष्टानिस० ॥ यंस्मापृच्छंतिकुहसेतिघोरमुतेमाहुर्नैषोऽअस्तीत्येनं । सोऽअर्यःपुष्टीर्विजऽइवामिनातिश्रदस्मैधत्तस० ॥ ७ ॥ योरध्रस्यचोदितायःकृशस्ययोब्रह्मणोनाधमानस्यकीरेः । युक्तग्राव्णोयोऽविितासुशिप्रःसुतसोमस्यस० ॥ यस्याश्वासःप्रदिशियस्यगावोयस्यग्रामायस्यविश्वेरथासः । यःसूर्यंयऽउषसंजजानयोऽअपांनेतासजनास० ॥ यंक्रंदसीसंयतीविह्वयेतेपरेवरऽउभयाऽअमित्राः । समानंचिद्रथमातस्थिवांसानानाहवेतेस० ॥ यस्मान्नऽऋतेविजयंतेजनासोयंयुध्यमानाऽअवसेहवंते । योविश्वस्यप्रतिमानंबभूवयोऽअच्युतच्युत्स० ॥ यःशश्वतोमह्येनोदधानानमन्यमानाञ्छर्वाजघान । यःशर्धतेनानुददातिशृध्यांयोदस्योर्हंतास० ॥ ८ ॥ यःशंबरंपर्वतेषुक्षियंतंचत्वारिंश्यांशरद्यन्वविंदत् । ओजायमानंयोऽअहिंजघानदानुंशयानंस० ॥ यःसप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवेसप्तसिंधून् । योरौहिणमस्फुरद्वज्रबाहुर्द्यामारोहंतंस० ॥ द्यावाचिदस्मैपृथिवीनमेतेशुष्माच्चिदस्यपर्वताभयंते । यःसोमपानिचितोवज्रबाहुर्योवज्रहस्तःस० ॥ यःसुन्वंतमवतियःपचंतंयःशंसंतंयःशशमानमूती । यस्यब्रह्मवर्धनंयस्यसोमोयस्येदंराधःस० ॥ यःसुन्वतेपचतेदुध्रऽआचिद्वाजंदर्दर्षिसकिलासिसत्यः । वयंतऽइंद्रविश्वहप्रिया

सःसुवीरासोविदथमावदेम ॥ ९ ॥ ( २।२।२ ) ऋतुर्जनित्रीतस्याऽअपस्परिमक्षूजातऽआविशद्यासुवर्धते । तदाहु
नाऽअभवत्पिप्युषीपयोंशोःपीयूषंप्रथमंतदुक्थ्यं* ॥ सध्रीमायंतिपरिबिभ्रतीःपयोविश्वप्स्न्यायप्रभरंतभोजनं । समा
नोऽअध्वाप्रवतामनुष्यदेयस्ताकृणोःप्रथमंसास्युक्थ्यः* ॥ अन्वेकोवदतियद्ददातितद्रूपामिनन्तदपाऽएकऽईयते । वि
श्वाऽएकस्यविनुदस्तितिक्षतेयस्ता० ॥ प्रजाभ्यःपुष्टिंविभजंतऽआसतेरयिमिवपृष्ठंप्रभवंतमायते । असिन्वन्दंष्ट्रैःपितु
रत्तिभोजनंयस्ता० ॥ अधाकृणोःपृथिवींसंदृशेदिवेयोधौतीनामहिहन्नारिणक्पथः । तंत्वास्तोमेभिरुदभिर्नवाजिनंदे
वंदेवाऽअजनन्त्सास्युक्थ्यः* ॥१०॥ योभोजनंचदयसेचवर्धनमार्द्रादाशुष्कंमधुमद्दुदोहिथ । सशेवधिंनिदधिषेविवस्वति
विश्वस्यैकऽईशिषेसा० ॥ यःपुष्पिणीश्चप्रस्वश्चधर्मणाधिदानेव्य१वनीरधारयः । यश्चासमाऽअजनोदिद्युतोदिवऽउ
रुरूर्वाँऽअभितःसा० ॥ योनार्मरंसहवसुंनिहंतवेपृक्षायचदासवेशायचावहः । ऊर्जयंत्याऽअपरिविष्टमास्यमुतैवाद्यपु
रुकृत्सा० ॥ शतंवायस्यदशसाकमाद्यऽएकस्यश्रुष्टौयद्धचोदमाविथ । अरज्जौदस्यून्त्समुनब्दभीतयेसुप्राव्योऽअभवः
सा० ॥ विश्वेदनुरोधनाऽअस्यपौंस्यंददुरस्मैदधिरेकृत्नवेधनं । षळस्तभ्नाविष्टिरःपंचसंदृशःपरिपरोऽअभवःसा० ॥
॥११॥ सुप्रवाचनंतवरवीर्य१यदेकेनक्रतुनाविंदसेवसु । जातूष्ठिरस्यप्रवयःसहस्वतोयाचकर्थसेंद्रविश्वास्युक्थ्यः* ॥

( २।२।२ ) ऋतुर्जनित्रीतित्रयोदशर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रोजगत्यंत्यात्रिष्टुप् ।

अरंगयः सरंपसस्तरायकंतुर्वीतयेचवय्यायचस्तुतिं । नीचासंतमुर्दनयःपरावृजंप्रांधंश्रोणंश्रवयन्त्सा० ॥ अस्मभ्यंतद्दं
सोदानायराधःसमर्थयस्ववहुतेंवसव्यं । इंद्रयच्चित्रंश्रवस्याऽअनुद्यून्बृहद्वदेमविदथेसुवीराः ॥ १२ ॥ ( २।२।३ )
अध्वर्यवोभरतेंद्रायसोममामत्रेभिःसिंचतामद्यमंधः । कामीहिवीरःसदमस्यपीतिंजुहोतवृष्णेतदिदेषवष्टि ॥ अध्वर्य
वोयोऽअपोवव्रिवांसंवृत्रंजघानाशन्येवबृक्षं । तस्माऽएतंभरततद्वशायँऽएषऽइंद्रोऽअर्हतिपीतिमस्य ॥ अध्वर्यवोयोह
भींकंजघानयोगाऽउदाजदपहिवलंवः । तस्माऽएतमंतरिक्षेनवातमिंद्रंसोमैरोर्णुतजूर्नवस्त्रैः ॥ अध्वर्यवोयऽउरणंजघा
ननवचख्वांसंनवतिंचवाहून् । योऽअर्बुदमवनीचावबाधेतमिंद्रंसोमस्यभृथेहिनोत ॥ अध्वर्यवोयःस्वश्नंजघानयःशु
ष्णमशुषंयोव्यंसं । यःपिप्रुंनमुचिंयोरुधिक्रांतस्माऽइंद्रायांधसोजुहोत ॥ अध्वर्यवोयःशतंशंबरस्यपुरोविभेदाश्मनेवपू
र्वीः । योवर्चिनःशतमिंद्रःसहस्रमपावपद्भरतासोममस्मै ॥ १३ ॥ अध्वर्यवोयःशतमासहस्रंभूम्याऽउपस्थेवपज्जघ
न्वान् । कुत्सस्यायोरतिथिग्वस्यवीरान्न्यावृणग्भरतासोममस्मै ॥ अध्वर्यवोयन्नरःकामयाध्वेश्रुष्टीवहंतोनशथातदिं
द्रे । गभस्तिपूतंभरतश्रुतायेंद्रायसोमंयज्यवोजुहोत ॥ अध्वर्यवःकर्तनाश्रुष्टिमस्मैवनेनिपूतंवनऽउन्नयध्वं । जुषाणोह
स्त्यमभिवावशेवऽइंद्रायसोमंमदिरंजुहोत ॥ अध्वर्यवःपयसोधर्यथागोःसोमेभिरींपृणताभोजमिंद्रं । वेदाहमस्यनिभृतं



---

( २।२।३ ) अध्वर्यवइतिद्वादशर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रस्त्रिष्टुप् ।

मऽएतद्दित्सँतंभूयोयजतश्चिकेत ॥ अध्वर्यवोयोदिव्यस्यवस्वोयःपार्थिवस्यक्षम्यस्यराजा । तमूर्दरंनपृणतायवेनेंद्रंसोमेभिस्तदपोवोऽअस्तु ॥ अस्मभ्यंतद्वसोदानायराधःसमर्थयस्वबहुतेवसव्यं । इंद्रयच्चित्रंश्रवस्याऽअनुद्यून्बृहद्वदेमविदथेसुवीराः ॥ १४ ॥ ( २।२।४ ) प्रघान्वस्यमहतोमहानिसत्यासत्यस्यकरणानिवोचं । त्रिकद्रुकेष्वपिबत्सुतस्यास्यमदेऽअहिमिंद्रोजघान ॥ अवंशेद्यामस्तभायद्बृहंतमारोदसीऽअपृणदंतरिक्षं । सधारयत्पृथिवींपप्रथच्चसोमस्यतामदऽइंद्रश्चकार ॥ सद्मेववप्राचोविमिमायमानैर्वज्रेणखान्यतृणन्नदीनां । वृथासृजत्पथिभिर्दीर्घयाथैःसोमस्य० ॥ सप्रवोह्ळन्परिगत्यादभीतेर्विश्वमधागायुधमिद्धेऽअग्नौ । संगोभिरश्वैरसृजद्रथेभिःसोमस्य० ॥ सऽईंमहींधुनिमेतोररम्णात्सोऽअस्नातॄनपारयत्स्वस्ति । तऽउत्स्नायरयिमभिप्रतस्थुःसोमस्य० ॥ १५ ॥ सोदंचंसिंधुमरिणान्महित्वावज्रेणानऽउषसःसंपिपेष । अजवसोजविनीभिर्विवृश्चन्त्सोमस्य० ॥ सविद्वाँऽअपगोहंकनीनामाविर्भवन्नुदतिष्ठत्परावृक् । प्रतिश्रोणःस्थाद्व्य१नगचष्टसोमस्य० ॥ भिनद्वलमंगिरोभिर्गृणानोविपर्वतस्यदृंहितान्यैरत् । रिणग्रोधांसिकृत्रिमाण्येषांसोमस्य० ॥ स्वप्नेनाभ्युप्याचुमुरिंधुनिंचजघंथदस्युंप्रदभीतिमावः । रंभीचिदत्रविविदेहिरण्यंसोमस्य० ॥ नूनंसाते० ॥ १६ ॥ ( २।२।५ ) प्रवःसतांज्येष्ठतमायसुष्टुतिमग्नाविवसमिधानेहविर्भरे । इंद्रमजुर्यंजरयंतमुक्षितंसनाद्युवानमवसेहवामहे ॥

( २।२।४ ) प्रघान्वितिदशर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रस्त्रिष्टुप् । ( २।२।५ ) प्रवःसतामितिनवर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रो

ऋक्सं. अ.२अ.६ ॥४१॥

मंडलं २ अनु. २

यस्मादिंद्राद्बृहतःकिंचनेमृतेविश्वान्यस्मिन्त्संभृताधिवीर्या । जठरेसोमंतन्वी३ सहोहस्तेवज्रंभरतिशीर्षणिक्रतुं ॥ न क्षोणीभ्यांपरिभ्वेतऽइंद्रियंनसमुद्रैःपर्वतैरिंद्रतेरथः । नतेवज्रमन्वश्नोतिकश्चनयदाशुभिःपतसियोजनापुरु+ ॥ विश्वेह्यस्मैयजतायधृष्णवेक्रतुंभरंतिवृषभायसश्चते । वृषायजस्वहविषाविदुष्टरःपिबेंद्रसोमंवृषभेणभानुना ॥ वृष्णःकोशःपवते मध्वऽऊर्मिर्वृषभान्नायवृषभायपातवे । वृषणाध्वर्यूवृषभासोऽअद्रयोवृषणंसोमंवृषभायसुष्वति ॥ १७ ॥ वृषातेवज्रऽउततेवृषारथोवृषणाहरीवृषभाण्यायुधा । वृष्णोमदस्यवृषभत्वमीशिषऽइंद्रसोमस्यवृषभस्यतृप्णुहि ॥ प्रतेनावंनसमने वचस्युवंब्रह्मणायामिसवनेषुदाधृषिः । कुविन्नोऽअस्यवचसोनिबोधिषदिंद्रमुत्संनवसुनःसिचामहे ॥ पुरासंबाधादभ्याववृत्स्वनोधेनुर्नवत्संयवसस्यपिप्युषी । सकृत्सुतेसुमतिभिःशतक्रतोसंपत्नीभिर्नवृषणोनसीमहि ॥ नूनंसाते० ॥ १८ ॥ ( २।२।६ ) तदस्मैनव्यमंगिरस्वदर्चतशुष्मायदस्यप्रत्नथोदीरते । विश्वायद्गोत्रासहसापरीवृतामदेसोमस्यदृंहितान्यैरयत् ॥ सभूतुयोहप्रथमायधायसऽओजोमिमानोमहिमानमातिरत् । शूरोयोयुत्सुतन्वंपरिव्यतशीर्षणिद्यांमहिनाप्रत्यमुंचत ॥ अधाकृणोःप्रथमंवीर्यंमहद्यदस्याग्रेब्रह्मणाशुष्ममैरयः । रथेष्ठेनहर्यश्वेनविच्युताःप्रजीरयःसिस्रतेसध्र्य१क्पृथक् ॥ अधायोविश्वाभुवनाभिमज्मनेशानकृत्प्रवयाऽअभ्यवर्धत । आद्रोदसीज्योतिषावह्निरातनोत्सीव्यन्तमां

॥४१॥

---

जगत्यंत्यात्रिष्टुप् । ( २।२।६ ) तदस्माइतिनवर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रोजगत्यंत्येद्वेत्रिष्टुभौ ।

सि॒दुधि॑ता॒सम॑व्ययत् ॥ सप्राचीना॒न्पर्व॑ता॒न्दृंह॒दोज॑साधरा॒चीन॑मकृणोद॒पामपः॑ । अधा॑रयत्पृथि॒वींवि॒श्वधा॑यस॒मस्त॑भ्नान्माय॒याद्याम॑व॒स्रसः॑ ॥ १९ ॥ सास्मा॒ऽअरं॑बा॒हुभ्यां॒यंपि॒ताकृ॑णो॒द्विश्व॑स्मा॒दाज॒नुषो॒वेद॑स॒स्परि॑ । येना॑पृथि॒व्यांनि क्रिविं॑श॒यध्यै॒वज्रे॑णह॒त्व्यवृ॑णक्तुवि॒ष्वणिः॑ ॥ अ॒मा॒जूरि॑वपि॒त्रोःसचा॑स॒तीस॑मा॒नादास॑द॒सस्त्वामि॑येभगं॑ । कृ॒धिप्र॑के॒तमु प॑मा॒स्याभ॑रद॒द्धिभा॒गंतन्वो॒३॒॑येन॑मा॒महः॑ ॥ भो॒जंत्वामिं॑द्रव॒यंहु॑वेमद॒दिष्ट्वमिं॑द्रापां॑सिवाजा॑न् । अवि॒ड्ढीं॑द्रचि॒त्रया॑नऊ॒ ती॒कृधिवृ॑षन्निंद्र॒वस्य॑सोनः ॥ नू॒नंसा॑ते॒प्र० ॥ २० ॥ ( २।२।७ ) प्रा॒ता॒रथो॒नवो॑योजि॒सस्नि॒श्चतु॑र्यु॒गस्त्रि॑क॒शः स॒प्तर॑श्मिः । दशा॑रित्रोमनु॒ष्यः॑स्व॒र्षाःसऽइ॒ष्टिभि॑र्म॒तिभी॒रंह्यो॑भूत् ॥ सास्मा॒ऽअरं॑प्रथ॒मंसद्वि॒तीय॑मु॒तोतृ॒तीय॑मनु॒षः॑सहोता॑ । अ॒न्यस्या॒गर्भ॑म॒न्यऽऊ॑जनंत॒सोऽअ॒न्येभिः॑सचते॒जेन्यो॒वृषा॑ ॥ हरी॒नुकं॑रथ॒ऽइंद्र॑स्ययोजमा॒यैसू॒क्तेन॒वच॑सा॒नवे॑न । मोषु त्वाम॒त्रब॒हवो॒हिविप्रा॒निरी॑रम॒न्यज॑मानासो॒ऽअ॒न्ये ॥ आद्वाभ्यां॒हरि॑भ्यामिंद्र॒या॒ह्याच॒तुर्भि॒राष॒ड्भिर्हू॒यमा॑नः । आष्टाभि॒ र्द॒शभिः॑सोम॒पेय॑म॒यंसु॒तःसु॑मख॒मामृध॑स्कः ॥ आविं॑श॒त्यात्रि॒ंश॒ता॑या॒ह्यर्वाङाच॑त्वारिं॒श॒ताहरि॑भिर्युजा॒नः । आपं॑चा॒श ता॒सुर॒थेभि॑रिंद्रा॒षष्ट्यास॑प्त॒त्यासो॑म॒पेयं॑ ॥ २१ ॥ आशी॒त्यान॑व॒त्याया॑ह्य॒र्वाङ्श॒तेन॒हरि॑भिरु॒ह्यमा॑नः । अ॒यंहि॒ते॑शुन॒ हौत्रे॑षु॒सोम॒ऽइंद्र॑त्वा॒यापरि॑षिक्तो॒मदा॑य ॥ मम॒ब्रह्मे॑ंद्र॒या॒ह्यच्छा॒विश्वा॒हरी॑धु॒रिधि॑ष्वा॒रथ॑स्य । पु॒रु॒त्राहि॒वि॒हव्यो॑ब॒भूथा

( २।२।७ ) प्रातारथइतिनवर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रस्त्रिष्टुप् ।

स्मिन्छूर॒सव॑नेमादयस्व ॥ नम॒ऽइंद्रे॑णस॒ख्यंवि॒योषद॒स्मभ्यं॑मस्य॒दक्षि॑णादुहीत । उप॒ज्येष्ठे॒वरू॑थे॒गभ॑स्तौप्रा॒येप्रा॑येजिगी वांसः॑स्याम ॥ नू॒नंसा॒ते॰ ॥ २२ ॥ ( २।२।८ ) अपा॒य्य॑स्यांध॑सो॒मदा॑य॒मनी॑षिणः॒सु॒वा॒नस्य॒प्रय॑सः । यस्मि॒न्निंद्रः॑प्र दि॒विवा॑वृ॒धान॒ऽओको॑द॒धेब्र॑ह्म॒ण्यंत॑श्च॒नरः॑ ॥ अ॒स्यमं॒दा॒नोमध्वो॒वज्र॑ह॒स्तोहि॒मिंद्रो॑ऽअ॒र्णो॒वृतं॒विवृ॑श्चत् । प्रयद्वयो॒नस्वस॑ रा॒ण्यच्छा॒प्रया॑सिच॒नदी॑ना॒चक्र॑मंत ॥ समा॑हि॒न॒ऽइंद्रो॒ऽअ॒र्णो॑ऽअ॒पांप्रैर॑यद॒हि॒हाच्छा॑स॒मु॒द्रं । अज॑नय॒त्सूर्यं॑वि॒दद्गा॒ऽअ॒क्तु नाह्नां॑व॒युना॑निसाधत् ॥ सोऽअ॑प्र॒तीनि॒मन॑वेपु॒रूणींद्रो॑दा॒श॒द्दा॒शुषे॒हंति॑वृ॒त्रं । स॒द्योयो॒नृभ्यो॑ऽअत॒साय्यो॒भूत्प॑स्पृधाने भ्यः॒सूर्य॑स्यसा॒तौ+ ॥ स॒सु॒न्व॒त॒ऽइंद्रः॒सूर्य॒माद॒वो॒रिण॒ङ्मर्त्या॑यस्त॒वान् । आयद्र॒यिंगु॒हद॑वद्यमस्मै॒भर॒दंशं॒नैत॑शोदश॒स्यन्+ ॥ २३ ॥ स॒रं॑धयत्स॒दि॒वः॒सार॑थये॒शुष्ण॑म॒शुषं॒कुय॑वं॒कुत्सा॑य । दि॒वो॑दासायनव॒तिंच॒नवें॒द्रः॒पुरो॒व्यैर॒च्छंब॑रस्य ॥ ए॒वा तं॒ऽइंद्रो॒चथ॑महेमश्र॒व॒स्यान॒त्मना॑वा॒जयं॑तः । अ॒श्याम॒तत्साप्त॑मा॒शु॒षा॒णा॒न॒नमो॒व॒ध॒रदे॑वस्य॒पी॒योः+ ॥ ए॒वाते॑गृत्सम॒दाः शूर॒मन्मा॑व॒स्यवो॒नव॒युना॑नितक्षुः । ब्र॒ह्म॒ण्यंत॒ऽइंद्र॒ते॒नवी॑य॒ऽइष॒मूर्जं॑सुक्षि॒तिं॒सु॒म्नम॑श्युः ॥ नू॒नंसा॒ते॰ ॥ २४ ॥ ( २।२।९ ) व॒यंते॒वय॒ऽइंद्र॒वि॒द्धि॒षु॒णः॒प्रभ॑रामहे॒वा॒ज॒युर्नरथं॑ । वि॒प॒न्यवो॒दीध्य॑तोम॒नी॒षासु॒म्नमि॑यक्षं॒त॒स्त्वाव॑तो॒नॄन्+ ॥ त्वंन॒ऽइं॒द्र॒ त्वाभि॑रू॒ती॒त्वा॑य॒तो॒ऽअ॒भि॒ष्टि॒पा॒सि॒जना॑न् । त्वमि॒नो॒दा॒शुषो॑व॒रू॒थेत्थाधी॑र॒भियो॑नक्षतित्वा ॥ सनो॑युवेंद्रो॒जो॒हू॒त्रः॒सखा



( २।२।८ ) अपाय्यस्येतिनवर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रस्त्रिष्टुप् । (२।२।९) वयंतइतिनवर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रस्त्रिष्टुप्

शिवोनरामंस्तुपाता । यःशंसंतंयःशशमानमूतीपचंतंचस्तुवंतंचप्रणेषत् ॥ तमुंस्तुषऽइंद्रंतंगृणीषेयस्मिन्पुरावावृधुः शाशदुश्चं । सवस्वःकाममंपीपरदियानोब्रह्मण्यतोनूतनस्यायोः+ ॥ सोऽअंगिरसामुचथाजुजुष्वान्ब्रह्मातूतोदिंद्रोगातु मिषणन् । मुष्णन्नुषसःसूर्येणस्तवानश्श्नस्यचिच्छिश्नथत्पूर्व्याणि ॥ २५ ॥ सहश्रुतऽइंद्रोनामदेवऽऊर्ध्वोभुवन्मनुषेद स्मतमः । अवंप्रियमर्शसानस्यसाह्वान्छिरोभरद्दासस्यस्वधावान् ॥ सवृत्रहेंद्रःकृष्णयोनीःपुरंदरोदासीरैरयद्वि । अ जंनयन्मनवेक्षामपश्चसत्राशंसंयजमानस्यतूतोत् ॥ तस्मैतवस्यमनुंदायिसत्रेंद्रायदेवेभिरर्णसातौ । प्रतियदस्यवज्रं बाह्वोर्धुर्हत्वीदस्यून्पुरऽआयसीर्निंतारीत् ॥ नूनंसाते० ॥ २६ ॥ ( २।२।१० ) विश्वजितेधनजितेस्वर्जितेसत्राजितेनृजि तेऽउर्वराजिते । अश्वजितेगोजितेऽअब्जितेभरेंद्रायसोमंयजतायहर्यतं+ ॥ अभिभुवेभिभंगायवन्वतेषाह्वायसहमानाय वेधसे । तुविग्रयेवह्नयेदुष्टरीतवेसत्रासाहेनमऽइंद्रायवोचत ॥ सत्रासाहोजनभक्षोजनंसहश्च्यवनोयुध्मोऽअनुजोषमु क्षितः । वृतंचयःसहुरिर्विक्ष्वारितऽइंद्रस्यवोचंप्रकृतानिवीर्या* ॥ अनानुदोवृषभोदोधतोवधोगंभीरऽऋष्वोऽअसंम ष्टकाव्यः । रध्रचोदःश्नथनोवीळितस्पृथुरिंद्रःसुयज्ञऽउषसःस्वर्जनत् ॥ यज्ञेनगातुमप्तुरोविविद्रिरेधियोहिन्वानाऽउ शिजोमनीषिणः । अभिस्वरानिषदागाऽअवस्यवऽइंद्रेहिन्वानाद्रविणान्याशत ॥ इंद्रश्रेष्ठानिद्रविणानिधेहिचित्तिं

तृतीयाविराड्रूपा । ( २।२।१० ) विश्वजितइतिषड्चस्यसूक्तस्यशौनकोगृत्समदइंद्रोजगत्यंत्यात्रिष्टुप् ।

दक्षस्यसुभगत्वमस्मे । पोषंरयीणामरिष्टिंतनूनांस्वाद्मानंवाचःसुदिनत्वमह्नां ॥ २७ ॥ ( २।२।११ ) त्रिकद्रु केषुमहिषोयवाशिरंतुविशुष्मस्तृपत्सोममपिबद्विष्णुनासुतंयथावशत् । सऽईंममादमहिकर्मकर्तवेमहामुरुंसैनंसश्चद्देवोदेवंसत्यमिंद्रंसत्यऽइंदुः ॥ अधत्विषीमाँऽअभ्योजसाक्रिविंयुधाभवदारोदसीऽअपृणदस्यमज्मनाप्रवावृधे । अधत्तान्यंजठरेप्रेमरिच्यतसैनं० ॥ साकंजातःक्रतुनासाकमोजसाववक्षिथसाकंवृद्धोवीर्यैःसासहिर्मृधोविचर्षणिः । दातारांधःस्तुवतेकाम्यंवसुसैनं० ॥ तवत्यन्नर्यंनृतोपऽइंद्रप्रथमंपूर्व्यंदिविप्रवाच्यंकृतं । यद्देवस्यशवसाप्रारिणाऽअसुंरिणन्नपः । भुवद्विश्वमभ्यादेवमोजसाविदादूर्जंशतक्रतुर्विदादिषं ॥ २८ ॥ ( २।३।१ ) गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं । ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतऽआनःशृण्वन्नूतिभिःसीदसादनं ॥ देवाश्चित्तेऽअसुर्यप्रचेतसोबृहस्पतेयज्ञियंभागमानशुः । उस्राऽइवसूर्योज्योतिषामहोविश्वेषामिज्जनिताब्रह्मणामसि ॥ आविबाध्यापरिरापस्तमांसिचज्योतिष्मंतंरथमृतस्यतिष्ठसि । बृहस्पतेभीममममित्रदंभनंरक्षोहणंगोत्रभिदंस्वर्विदं ॥ सुनीतिभिर्नयसित्रायसेचनंयस्तुभ्यंदाशान्नतमंहोऽअश्नवत् । ब्रह्मद्विषस्तपनोमन्युमीरसिबृहस्पतेमहितत्तेमहित्वनं+ ॥ नतमंहोनदु



( २।२।११ ) त्रिकद्रुकेष्वितिचतुर्ऋचस्यसूक्तस्यशौनकोगृत्समदइंद्रआद्याष्टिस्ततोद्वेअतिशक्वर्यावंत्याष्टिर्वा ।(२।३।१) गणानामितिकोनविंशत्यृचस्यसूक्तस्यशौनकोगृत्समदःआद्यापंचमीनवम्येकादशीसप्तदश्यंत्यानांब्रह्मणस्पतिःशिष्टानांबृहस्पतिर्जगतीपंचदश्यंत्येत्रिष्टुभौ ।

रितंकुतश्चननारातयस्तितिरुर्नद्वयाविनः । विश्वाऽइदस्माद्ध्वरसोविवाधसेयंसुगोपारक्षसिब्रह्मणस्पते ॥ २९ ॥
त्वंनोगोपाःपथिकृद्विचक्षणस्तवव्रतायमतिभिर्जरामहे । बृहस्पतेयोनोऽअभिह्वरोदधेस्वातंमर्मर्तुदुच्छुनाहरस्वती ॥
उतवायोनोमर्चयादनागसोरातीवामर्तःसानुकोवृकः । बृहस्पतेऽअपतंवर्तयापथःसुगंनोऽअस्यैदेववीतयेकृधि ॥
त्रातारंत्वातनूनांहवामहेवस्पर्तरधिवक्तारमस्मयुं । बृहस्पतेदेवनिदोनिर्वर्हयमादुरेवाऽउत्तरंसुम्नमुन्नशन् ॥ त्वयांवयं
सुवृधांब्रह्मणस्पतेस्पार्हावसुमनुष्यादंदीमहि । यानोदूरेतळितोयाऽअरातयोभिसंतिजंभयाताऽअनप्नसः ॥ त्वयावय
मुत्तमंधीमहेवयोबृहस्पतेपप्रिणासस्निनायुजा । मानोदुःशंसोऽअभिदिप्सुरीशतप्रसुशंसामतिभिस्तारिषीमहि ॥३०॥
अनानुदोवृषभोजग्मिराहवंनिष्टप्ताशत्रुंपृतनासुसासहिः । असिसत्यऽऋणयाब्रह्मणस्पतऽउग्रस्यचिद्दमितावीळुहर्षि
णः ॥ अदेवेनमनसायोरिषण्यतिशासामुग्रोमन्यमानोजिघांसति । बृहस्पतेमाप्रणक्तस्यनोवधोनिकर्ममन्युंदुरेवस्यश
र्धतः ॥ भरेषुहव्योनमसोपसद्योगंतावाजेषुसनिताधनंधनं । विश्वाऽइदर्योऽअभिदिप्स्वो३मृधोबृहस्पतिर्विववर्हा
रथाँऽइव ॥ तेजिष्ठयातपनीरक्षसस्तपयेत्वानिदेदधिरेदृष्टवीर्यं । आविस्तत्कृष्वयदसत्तऽउक्थ्यं१बृहस्पतेविपरिरापो
ऽअर्दय ॥ बृहस्पतेऽअतियदर्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहि
चित्रं+ ॥ ३१ ॥ मानःस्तेनेभ्योयेऽअभिद्रुहस्पदेनिरामिणोरिपवोन्नेषुजागृधुः । आदेवानामोहतेविव्रयोहृदिबृहस्प

तेनपरःसाम्नोविदुः ॥ विश्वेभ्योहित्वाभुवनेभ्यस्परित्वष्टाजनत्साम्नःसाम्नःकविः । सऽऋणचिदृणयाब्रह्मणस्पतिर्द्रुहोहंतामहऽऋतस्यधर्तरि ॥ तवश्रियेव्यजिहीतपर्वतोगवांगोत्रमुदसृजोयदंगिरः । इंद्रेणयुजातमसापरीवृतंबृहस्पतेनिरपामौब्जोऽअर्णवं ॥ ब्रह्मणस्पतेत्वमस्ययंतासूक्तस्यबोधितनयंचजिन्व । विश्वंतद्भद्रंयदवंतिदेवाबृहद्वदेमविदथेसुवीराः ॥ ३२ ॥ ॥ इतिद्वितीयाष्टकेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥

चतुर्दशाध्याये वर्गाः ३२ सूक्तानि १५ ऋचः १५७ ॥ त्यागः ॥ अग्नयइदं.१२ इंद्रायेदं.१२३ ब्रह्मणस्पतयइदं. बृहस्पतयइदं.३ ब्रह्मणस्पतयइदं. बृहस्पतयइदं.३ ब्रह्मणस्पतयइदं. बृहस्पतयइदं. ब्रह्मणस्पदयइदं. बृहस्पतयइदं.५ ब्रह्मणस्पतयइदं. बृहस्पतयइदं. ब्रह्मणस्पतयइदं. ॥ इतिद्वितीयेषष्ठः ॥ ६ ॥

सेमांषोळशांत्यात्रिष्टुब्द्वादशीचसैंद्रीचैंधानःपंचजागतंत्वृजुश्चतुष्कंमिमागिरस्त्र्यूनाकूर्मोगात्र्समदोहिवादित्यमिदमेकादशवारुणंमुपांत्यादुःस्वप्ननाशिनींधृतव्रताःसप्तवैश्वदेवंमृतमेकादशजगत्यंतंषष्ठ्यैंद्रासोमींसरस्वतित्वमितिसारस्वतोर्धर्चौयोनोवार्हस्पत्यांतंवोमारुत्यस्माकंसप्तवैश्वदेवंत्रिष्टुबंतमस्यमेष्टौजागतंत्र्यनुष्टुबंतंद्यावापृथिव्यैकाद्वेऐंद्र्यौत्वाष्ट्र्यौत्रांद्वेद्वेराकासिनीवाल्यौरंत्यालिंगोक्तदेवतांतेपंचोनारौद्रंधारावरामारुतंत्रिष्टुबंतमुपेमपोनप्त्रीयंतुभ्यंषळृतव्यंतुजागतंतु ॥ १ ॥ ॥ ॥ ॥

हरिः३ओम् ॥ ( २।३।२ ) सेमामविड्ढिप्रभृतिंयऽईशिषेयाविधेमनवयामहागिरा । यथानोमीढ्वान्त्स्तवतेसखात वबृहस्पतेसीषधःसोतनोमतिं+ ॥ योनंत्वान्यनंमन्त्योजसोतादर्दर्मन्युनाशंवराणिवि । प्राच्यावयदच्युताब्रह्मणस्पति राचाविशद्वसुमंतंविपर्वतं ॥ तद्देवानांदेवतमायकर्त्वमश्रश्नन्दृह्वाव्रदंतवीळिता । उद्गाऽआजदभिनद्ब्रह्मणावलमगूह त्तमोव्यंचक्षयत्स्वः* ॥ अश्मास्यमवतंब्रह्मणस्पतिर्मधुधारमभियमोजसातृणत् । तमेवविश्वेपपिरेस्वर्दृशोवहुसाकंसि सिचुरुत्समुद्रिणं ॥ सनाताकाचिद्भुवनाभवीत्वामाद्भिःशरद्भिर्दुरोवरंतवः । अयंतंताचरतोऽअन्यदन्यदिद्याचका रवयुनाब्रह्मणस्पतिः ॥ १ ॥ अभिनक्षंतोऽअभियेतमानशुर्निधिंपणीनांपरमंगुहाहितं । तेविद्वांसःप्रतिचक्ष्यानृतापु नर्यतऽउऽआयंतदुदीयुराविशं ॥ ऋतावानःप्रतिचक्ष्यानृतापुनरातऽआतस्थुःकवयोमहस्पथः । तेबाहुभ्यांधमितम ग्निमश्मनिनकिष्षोऽअस्त्यरणोजहुर्हितं+ ॥ ऋतज्येनक्षिप्रेणब्रह्मणस्पतिर्यत्रवष्टिप्रतदश्नोतिधन्वना । तस्यसाध्वीरि षवोयाभिरस्यतिनृचक्षसोदृशयेकर्णयोनयः ॥ ससंनयःसविनयःपुरोहितःससुष्टुतःसयुधिब्रह्मणस्पतिः । चाक्ष्मोयद्वा जंभरतेमतीधनादित्सूर्यस्तपतितप्यतुर्वृथा ॥ विभुप्रभुप्रथमंमेहनावतोबृहस्पतेःसुविदत्राणिराध्या । इमासातानिवे न्यस्यवाजिनोयेनजनाऽउभयेभुंजतेविशः ॥२॥ योवरेवृजनेविश्वथाविभुर्महामुरण्वःशवसाववक्षिथ । सदेवोदेवान्प्रति

(२।३।२)सेमामितिषोळशर्चस्यसूक्तस्यशौनकोगृत्समदोब्रह्मणस्पतिःप्रथमादशम्योबृहस्पतिर्द्वादश्यैंद्राब्रह्मणस्पतीजगतीद्वादश्यंत्येत्रिष्टुभौ ।

पप्रथेपृथुविश्वेदुतापरिभूर्ब्रह्मणस्पतिः ॥ विश्वंसत्यंमघवानायुवोरिदापश्चनप्रमिनंतिव्रतंवां । अच्छेंद्राब्रह्मणस्पतीहविर्नोन्नंयुजेववाजिनाजिगातं॥उताशिष्ठाऽअनुशृण्वंतिवह्नयःसभेयोविप्रोभरतेमतीधना । वीळुद्वेषाऽअनुवशऽऋणमाददिःसहवाजीसमिथेब्रह्मणस्पतिः ॥ ब्रह्मणस्पतेरभवद्यथावशंसत्योमन्युर्महिकर्माकरिष्यतः । योगाऽउदाजत्सदिवेविचाभजन्महीवरीतिःशवसासरत्पृथक् ॥ ब्रह्मणस्पतेसुयमस्यविश्वहारायःस्यामरथ्योवयस्वतः । वीरेषुवीराँऽउपपृंग्धिनस्त्वंयदीशानोब्रह्मणावेषिमेहवं ॥ ब्रह्मणस्पतेत्वमस्ययंतासूक्तस्यबोधितनयंचजिन्व । विश्वंतद्भद्रंयदवंतिदेवाबृहद्वदेमविदथेसुवीराः ॥ ३ ॥ ( २।३।३ ) इंधानोऽअग्निंवनवद्वनुष्यतःकृतब्रह्माशूशुवद्रातहव्यऽइत् । जातेनजातमतिसप्रसर्सृतेयंयंयुजंकृणुतेब्रह्मणस्पतिः ॥ वीरेभिर्वीरान्वनवद्वनुष्यतोगोभीरयिंपप्रथद्बोधतित्मना । तोकंचतस्यतनयंचवर्धतेयंयंयुजं० ॥ सिंधुर्नक्षोदःशिमीवाँऽऋघायतोवृषेववध्रीँरभिवष्ट्योजसा । अग्नेरिवप्रसितिर्नाहवर्तवेयंयंयुजं०॥तस्माऽअर्षंतिदिव्याऽअसश्चतःससत्वभिःप्रथमोगोषुगच्छति । अनिभृष्टतविषिर्हंत्योजसायंयंयुजं० ॥ तस्माऽइद्विश्वेधुनयंतसिंधवोच्छिद्राशर्मदधिरेपुरूणि । देवानांसुम्नेसुभगःसऽएधतेयंयंयुजं० ॥ ४ ॥ ( २।३।४ ) ऋजुरिच्छंसोवनवद्वनुष्यतोदेवयन्निददेवयंतमभ्यसत् । सुप्रावीरिद्वनवत्पृत्सुदुष्टरंयज्वेदयज्योर्विभजातिभोजनं ॥ यजस्ववीरप्रविहिमनायतोभद्रंमनःकृणु



---

( २।३।३ ) इंधानइतिपंचर्चस्यसूक्तस्यशौनकोगृत्समदोब्रह्मणस्पतिर्जगती । ( २।३।४ ) ऋजुरिदितिचतुर्ऋचस्यसूक्तस्यशौनको

ष्ववृत्रतूर्ये । हविष्कृणुष्वसुभगोयथाससिब्रह्मणस्पतेरवऽआवृणीमहे ॥ सऽइज्जनेनसविशासजन्मनासपुत्रैर्वाजंभरतेध
नानृभिः । देवानांयःपितरमाविवासतिश्रद्धामनाहविषाब्रह्मणस्पतिं ॥ योऽअस्मैहव्यैर्घृतवद्भिरविधत्प्रतंप्राचानयति
ब्रह्मणस्पतिः । उरुष्यतीमंहसोरक्षतीरिषों३ होश्चिदस्माऽउरुचक्रिरद्भुतः ॥५॥ ( २।३।५ ) इमागिरऽआदित्येभ्योघृतस्नूः
सनाद्राजभ्योजुह्वाजुहोमि । शृणोतुमित्रोऽअर्यमाभगोनस्तुविजातोवरुणोदक्षोऽअंशः ॥ इमंस्तोमंसक्रतवोमेऽअद्यमित्रो
ऽअर्यमावरुणोजुषंत । आदित्यासःशुचयोधारपूताऽअवृजिनाऽअनवद्याऽअरिष्टाः ॥ तऽआदित्यासऽउरवोगभीरा
ऽअदब्धासोदिप्संतोभूर्यक्षाः । अंतःपश्यंतिवृजिनोतसाधुसर्वंराजभ्यःपरमाचिदंति ॥ धारयंतऽआदित्यासोजग
त्स्थादेवाविश्वस्यभुवनस्यगोपाः । दीर्घाधियोरक्षमाणाऽअसुर्यमृतावानश्चयमानाऽऋणानि ॥ विद्यामादित्याऽअवसो
वोऽअस्ययदर्यमन्भयऽआचिन्मयोभु । युष्माकंमित्रावरुणाप्रणीतौपरिश्वभ्रेवदुरितानिवृज्यां ॥ ६ ॥ सुगोहिवोऽ
अर्यमन्मित्रपंथाऽअनृक्षरोवरुणसाधुरस्ति । तेनादित्याऽअधिवोचतानोयच्छतानोदुष्परिहंतुशर्म ॥ पिपर्तुनोऽअदि
तीराजपुत्रातिद्वेषांस्यर्यमासुगेभिः । बृहन्मित्रस्यवरुणस्यशर्मोपस्यामपुरुवीराऽअरिष्टाः ॥ तिस्रोभूमीर्धारयन्त्रींऽरुत
द्यून्त्रीणिव्रताविदथेऽअंतरेषां । ऋतेनादित्यामहिवोमहित्वंतदर्यमन्वरुणमित्रचारु ॥ त्रीरोचनादिव्याधारयंतहिर

---

गृत्समदोब्रह्मणस्पतिर्जगती । ( २।३।५ ) इमागिरइतिसप्तदशर्चस्यसूक्तस्यगात्सर्मदःकूर्मआदित्यास्त्रिष्टुप् ।

ण्ययाः शुचयो धारपूताः । अस्वप्नजो अनिमिषा अदब्धा उरुशंसा ऋजवे मर्त्याय ॥ त्वं विश्वेषां वरुणासि राजा ये च देवा असुर ये च मर्ताः । शतं नो रास्व शरदो विचक्षेऽश्यामायूंषि सुधितानि पूर्वा ॥ ७ ॥ न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा । पाक्या चिद्वसवो धीर्या चिद्युष्मानीतो अभयं ज्योतिरश्याम् ॥ यो राजभ्य ऋतनिभ्यो ददाश यं वर्धयन्ति पुष्टयश्च नित्याः । स रेवान्याति प्रथमो रथेन वसुदावा विदथेषु प्रशस्तः ॥ शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः । नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥ अदिते मित्र वरुणोत मृळ यद्वो वयं चकृमा कच्चिदागः । उर्वश्यामभयं ज्योतिरिन्द्र मा नो दीर्घा अभि नशन्तमिस्राः ॥ उभे अस्मै पीपयतः समीची दिवो वृष्टिं सुभगो नाम पुष्यन् । उभा क्षयावाजयन्याति पृत्सूभावर्धौ भवतः साधू अस्मै ॥ या वो माया अभिद्रुहे यजत्राः पाशा आदित्या रिपवे विचृत्ताः । अश्वीव ताँ अति येषं रथेनारिष्टा उरावा शर्मन्त्स्याम ॥ माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः । मा रायो राजन्त्सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥ ८ ॥ ( २।३।६ ) इदं कवेरादित्यस्य स्वराजो विश्वानि सान्त्यभ्यस्तु मह्ना । अति यो मन्द्रो यजथाय देवः सुकीर्तिं भिक्षे वरुणस्य भूरेः ॥ तव व्रते सुभगासः स्याम स्वाध्यो वरुण तुष्टुवांसः । उपायन उषसां गोमतीनामग्नयो न जरमाणा अनु द्यून् ॥ तव स्याम पुरुवीरस्य शर्मन्नुरुशंसस्य वरुण प्रणेतः । यूयं



( २।३।६ ) इदं कवेरित्येकादशर्चस्य सूक्तस्य गार्त्समदः कूर्मो वरुणस्त्रिष्टुप् । ( दशमी दुःस्वप्ननाशिनी त्रिष्वपि सूक्तेषु पाक्षिको गृत्समदो स्त्येव ) ।

नः॒पु॒त्राऽअदि॑तेरद॑ब्धाऽअ॒भि॒क्षं॑मध्वं॑यु॒ज्यां॑यदे॒वाः ॥ प्रसी॑मादि॒त्योऽअ॑सृजद्वि॒ध॒र्ताँऽऋ॒तंसिं॑ध॑वो॒वरु॑णस्ययं॑ति । नश्रा॑म्यंति॒नवि॑मु॒चंत्य॒ते॒वयो॒नप॑प्तूरघु॒यापरि॑ज्मन् ॥ विम॑च्छ्रंथायरश॒नामि॒वाग॑ऽऋ॒ध्याम॑तेवरुण॒खामृ॒तस्य॑ । मातंतु॑श्छेदि॒वय॑तो॒धियं॑मे॒मामात्रा॑शार्य॒पसः॑पु॒रऽऋ॒तोः॑ ॥ ९ ॥ अपो॒सुम्य॑क्षवरुणभि॒यसं॒मत्सम्रा॒ळृत॒ावोनु॑मागृभाय । दामे॑ववत्साद्वि॒मु॑मुग्ध्यं॑हो॒नहित्वदा॒रेनि॒मिष॑श्चनेशे॑ ॥ मानो॑व॒धैर्व॑रुण॒ये॒तऽइ॒ष्टावेनः॑कृ॒ण्वंत॑मसुरभ्री॒णंति॑ । माज्योति॑षःप्रवस॒थानि॑गन्म॒विषू॒मृधः॑शिश्रथोजी॒वसे॑नः ॥ नमः॑पु॒राते॑वरुणो॒तनू॒नमु॒ताप॒रंतु॑विजातब्रवाम । त्वेहि॒कं॑पर्व॑ते॒नश्रि॒तान्य॑प्र॑च्युतानिदू॒ळभव्र॒तानि॑ ॥ पर॑ऽऋ॒णासा॑वी॒रध॒मत्कृ॑तानि॒माहं॑रा॒जन्नन्यकृ॑तेनभोजं । अव्यु॑ष्टाऽइन्नु॒भूय॑सीरु॒षास॒ऽआनो॑जी॒वान्व॑रुण॒तासु॑शाधि ॥ योमे॑राज॒न्युज्यो॑वा॒सखा॑वा॒स्वप्ने॑भ॒यंभी॒रवे॒मह्य॒माह॑ । स्ते॒नोवा॒योदि॒प्स॑तिनो॒वृको॑वा॒त्वंतस्मा॑द्वरुणपाह्य॒स्मान्[+] ॥ माहं० ॥ १० ॥ (२।३।७) धृ॒तव्र॑ता॒ऽआदि॑त्या॒ऽइषि॑राऽआ॒रेमत्क॑र्तर॒हसू॑रि॒वागः॑ । शृ॒ण्वतो॑वो॒वरु॑ण॒मित्र॒देवा॑भ॒द्रस्य॑वि॒द्वाँऽअव॑सेहुवेवः ॥ यू॒यंदे॑वा॒ःप्रम॑तिर्यू॒यमोजो॑यू॒यंद्वेषां॑सिसनु॒तर्यु॑योत । अ॒भि॒क्ष॒त्तारो॑ऽअ॒भिच॒क्षम॑ध्वम॒द्याच॑नोमृ॒ळय॑तापर॒च॑ ॥ किमू॒नुवः॑कृणवा॒माप॑रेण॒किंसने॑नवसव॒ऽआप्ये॑न । यू॒यंनो॑मित्रावरुणादितेचस्व॒स्तिमिं॑द्रामरुतोदधात ॥ हु॒येदे॑वायू॒यमिदा॒पयः॑स्थ॒तेमृ॑ळ॒तनाध॑मानाय॒मह्यं॑ । मावो॒रथो॑मध्यम॒वाळृ॒तेभू॒न्मायु॒ष्माव॑त्स्वा॒पिषु॑श्रमिष्म ॥ प्रव॒ऽएको॑

---

(२।३।७) धृतव्रताइतिसप्तर्चस्यसूक्तस्यगार्त्समदःकूर्मोविश्वेदेवास्त्रिष्टुप् । (भेदप्रयोगे—आद्यानांषण्णांविश्वेदेवाःअंत्यायावरुणः)।

मिमयुभूर्यागोयन्मांपितेवंकितवंशंशास । आरेपाशाऽआरेऽअघानिदेवामामाधिपुत्रेविमिवग्रभीष्ट ॥ अर्वांचोऽअद्या भवतायजत्राऽआवोहार्दिभयमानोव्ययेयं । त्राध्वंनोदेवानिजुरोवृकस्यत्राध्वंकर्तादवपदोयजत्राः ॥ माहं० ॥ ११॥ (२।३।८) ऋतंदेवायंकृण्वतेसंवित्रऽइंद्रायाहिघ्नेनरमंतऽआपः । अहरहर्यात्यक्तुरपांकियात्याप्रथमःसर्गऽआसां ॥ योवृत्रायसिनमत्राभरिष्यत्प्रतंजनित्रीविदुषऽउवाच । पथोरदंतीरनुजोषमस्मैदिवेदिवेधुनयोयंत्यर्थं ॥ ऊर्ध्वोह्यस्थादध्यंतरिक्षेधावृत्रायप्रवधंजभार । मिहंवसानऽउपहीमदुद्रोत्तिग्मायुधोऽअजयच्छत्रुमिंद्रः ॥ बृहस्पतेतपुषाश्नेवविध्यवृकद्वरसोऽअसुरस्यवीरान् । यथाजघंथधृषतापुराचिदेवाजहिशत्रुमस्माकमिंद्र ॥ अवक्षिपदिवोऽअश्मानमुच्चायेनशत्रुंमंदसानोनिजूर्वाः । तोकस्यसातौतनयस्यभूरेरस्माँऽअर्धंकृणुतादिंद्रगोनां ॥ १२ ॥ प्रहिक्रतुंवृहथोयंवनुथोरध्रस्यस्थोयजमानस्यचोदौ । इंद्रासोमायुवमस्माँऽअविष्टमस्मिन्भयस्थेकृणुतमुलोकं ॥ नमातमन्नश्रमन्नोततंद्रन्नवोचाममासुनोतेतिसोयं । योमेपृणाद्योददद्योनिबोधाद्योमासुन्वंतमुपगोभिरायत् ॥ सरस्वतित्वमस्माँऽअविड्ढिमरुत्वतीधृषतीजेषिशत्रून् । त्यंचिच्छर्धंतंतविषीयमाणमिंद्रोहंतिवृषभंशंडिकानां ॥ योनःसनुत्यऽउतवाजिघत्नुरभिख्यायतंतिगितेनविध्य । बृहस्पतऽआयुधैर्जेषिशत्रून्द्रुहेरीषंतंपरिधेहिराजन् ॥ अस्माकेभिःसत्वभिःशूरशूरैर्वीर्याकृधियानितेकर्त्वानि । ज्योग

(२।३।८) ऋतंदेवायेत्येकादशर्चस्यसूक्तस्यशौनकोगृत्समदइंद्रःषष्ठ्याइंद्रासोमौअष्टम्याःसरस्वतीनवम्यावृहस्पतिरेकादश्यामरुतस्त्रिष्टु

भूवन्ननुंधूपितासोहृत्वीतेषामाभरानोवसूंनि ॥ तंवः शर्धंमारुतंसुम्नयुर्गिरोपंब्रुवेनमंसादैव्यंजनं । यथांरयिंसर्ववीरंन शामहाऽअपत्यसाचंश्रुत्यंदिवेदिंवे ॥ १३ ॥ ( २।३।९ ) अस्माकंमित्रावरुणावतंरथमादित्यैरुद्रैर्वसुभिः सचाभुवा । प्रयद्वयोनपप्तन्वस्मनस्परिंश्रवस्यवोहृषींवंतोवनर्षदंः ॥ अधस्मानऽउदंवतासजोषसोरथंदेवासोऽअभिविक्षुवाजयुं । यदाशवःपद्याभिस्तित्रंतोरजंःपृथिव्याःसानौजंघनंतपाणिभिः ॥ उतस्यनऽइंद्रोविश्वचर्षणिर्दिवःशर्धंनमारुतेनसुक्र तुः । अनुनुस्थात्यवृकाभिरूतिभीरथंमहेसनयेवाजंसातये ॥ उतस्यदेवोभुवनस्यसक्षणिस्त्वष्टाग्नाभिःसजोषाजूजुवद्र थं । इळाभगोबृहद्दिवोतरोदसीपूषापुरंधिरश्विनावधापती ॥ उतत्येदेवीसुभगेमिथूदृशोषासानक्ताजगतामपीजुवा । स्तुषेयद्वांपृथिविनव्यंसावचःस्थातुश्चवयस्त्रिवयाऽउपस्तिरे ॥ उतवःशंसमुशिजामिवश्मस्यहिर्बुध्न्योऽजएकपादुत । त्रितऽऋभुक्षाःसविताचनोदधेपांनपादाशुहेमाधियाशमि ॥ एतावोवश्म्युद्यतायजत्राऽअतक्षन्नायवोनव्यसेसं । श्र वस्यवोवाजंचकानाःसप्तिर्नरथ्योऽअहधीतिमश्याः ॥ १४ ॥ ( २।३।१० ) अस्यमेद्यावापृथिवीऽऋतायतोभूतमवि

---

वंत्याजगती । ( २।३।९ ) अस्माकमितिसप्तर्चस्यसूक्तस्यशौनकोगृत्समदोविश्वेदेवाजगत्यंत्यात्रिष्टुप् । ( भेदपक्षे—आद्यायामित्रावरुणौ द्वितीयाचतुर्थीपंचमीनांविश्वेदेवाःतृतीयायाउषासानक्ताषष्ठ्याद्यावापृथिवीसप्तम्याइंद्रः ) । ( २।३।१० ) अस्यमइत्यष्टर्चस्यसूक्तस्यशौनको गृत्समदआद्यायाद्यावापृथिवीद्वितीयातृतीययोरिंद्रः ( त्वष्टावा ) चतुर्थीपंचम्योराकाषष्ठीसप्तम्योःसिनीवालीअंत्यायागुंगूसिनीवाली राकासरस्वतींद्राणीवरुणान्योजगतीअंत्यास्तिस्रोनुष्टुभः ।

त्रीवर्चसः सिषासतः । ययोरायुःप्रतरंतेऽइदंपुरऽउपस्तुतेवसूयुर्वांमहोदधे ॥ मानोगुह्यारिपऽआयोरहन्दभन्मानऽ
आभ्योरीरधोदुच्छुनाभ्यः । मानोवियौःसख्याविद्धितस्यनःसुम्नायताममनसातत्त्वेमहे ॥ अहेळतामनसाश्रुष्टिमाव
हदुहानांधेनुंपिप्युषीमसश्चतं । पद्याभिराशुंवचसाचवाजिनंत्वांहिनोमिपुरुहूतविश्वहा ॥ राकामहंसुहवांसुष्टुतीहुवे
श्रृणोतुनःसुभगाबोधतुत्मना । सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरंशतदायमुक्थ्यं* ॥ यास्तेराकेसुमतयःसुपेश
सोयाभिर्ददासिदाशुषेवसूनि । ताभिर्नोऽअद्यसुमनाऽउपागहिसहस्रपोषंसुभगेरराणा ॥ सिनीवालिपृथुष्टुकेयादेवा
नामसिस्वसा । जुषस्वहव्यमाहुतंप्रजांदेविदिदिड्ढिनः ॥ यासुबाहुःस्वंगुरिःसुषूमाबहुसूवरी । तस्यैविश्पत्न्यैहविःसि
नीवाल्यैजुहोतन ॥ यागुंगूर्यासिनीवालीयाराकायासरस्वती । इंद्राणीमह्वऽऊतयेवरुणानींस्वस्तये ॥ १५ ॥ (२।४।१)
आतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयोथाः । अभिनोवीरोऽअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिः ॥ त्वादत्ते
भीरुद्रशंतमेभिःशतंहिमाऽअशीयभेषजेभिः । व्य१स्मद्द्वेषोवितरंव्यंहोव्यमीवाश्चातयस्वाविषूचीः ॥ श्रेष्ठोजातस्यरु
द्रश्रियासितवस्तमस्तवसांवज्रबाहो । पर्षिणःपारमंहसःस्वस्तिविश्वाऽअभीतीरपसोयुयोधि ॥ मात्वारुद्रचुक्रुधामान
मोभिर्मादुष्टुतीवृषभमासहूती । उन्नोवीरांऽअर्पयभेषजेभिर्भिषक्तमंत्वाभिषजांश्रृणोमि ॥ हवीमभिर्हवतेयोहविर्भिरव



( २।४।१ ) आतेपितरितिपंचदशर्चस्यसूक्तस्यशौनकोगृत्समदोरुद्रोजगत्यंत्यात्रिष्टुप् ।

स्तोमेभीरुद्रंदिंषीय । ऋदूदरःसुहवोमानोऽअस्यैबभ्रुःसुशिप्रोरीरधन्मनायै ॥ १६ ॥ उन्मांममंदवृषभोमरुत्वान्त्वक्षीयसावयंसानाधमानं । घृणीवच्छायामरपाऽअंशीयाविवासेयंरुद्रस्यसुम्नं+ ॥ क्व१स्यतैरुद्रमृळयाकुर्हस्तोयोऽअस्तिभेषजोजलाषः । अपभर्तारपसोदैव्यस्याभीनुमावृषभचक्षमीथाः ॥ प्रवभ्रवेवृषभायश्वितीचेमहोमहींसुष्टुतिमीरयामि । नमस्याकल्मलीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनाम ॥ स्थिरेभिरंगैःपुरुरूपऽउग्रोवभ्रुःशुक्रेभिःपिपिशेहिरण्यैः । ईशानादस्यभुवनस्यभूरेर्नवाऽउयोषद्रुद्रादसुर्यं* ॥ अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं । अर्हन्निदंदयसेविश्वमभ्वंनवाऽओजीयोरुद्रत्वदस्ति ॥ १७ ॥ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं । मृळाजरित्रेरुद्रस्तवानोन्यंतेऽअस्मन्निवपंतुसेनाः ॥ कुमारश्चित्पितरंवंदमानंप्रतिनानामरुद्रोपयंतं । भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे+ ॥ यावोभेषजामरुतःशुचीनियाशंतमावृषणोयामयोभु । यानिमनुरवृणीतापितानस्ताशंचयोश्चरुद्रस्यवश्मि ॥ परिणोहेतीरुद्रस्यवृज्याःपरित्वेषस्यदुर्मतिर्महीगात् । अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृळ ॥ एवावभ्रोवृषभचेकितानयथादेवनहृणीषेनहंसि । हवनश्रुन्नोरुद्रेहवोधिबृहद्वदेमविदथेसुवीराः ॥ १८ ॥ ( २।४।२ ) धारावरामरुतोधृष्ण्वोजसोमृगानभीमास्तविषीभिरर्चिनः । अग्नयोनशुशुचानाऽऋजीषिणोभृमिंधमंतो

---

( २।४।२ ) धारावराइतिपंचदशर्चस्यसूक्तस्यशौनकोगृत्समदोमरुतोजगत्यंत्यात्रिष्टुप् ।

ऽअपगाऽअवृण्वत ॥ द्यावोनस्तृभिश्चितयंतखादिनोव्यं१भ्रियानद्युतयंतवृष्टयः । रुद्रोयद्वोमरुतोरुक्मवक्षसोवृषाजनिपृश्न्याःशुक्रऽऊधनि ॥ उक्षंतेऽअश्वाँऽअत्याँऽइवाजिषुनदस्यकर्णैस्तुरयंतऽआशुभिः । हिरण्यशिप्रामरुतोदविध्वतःपृक्षंयाथपृषतीभिःसमन्यवः ॥ पृक्षेताविश्वाभुवनाववक्षिरेमित्रायवासदमाजीरदानवः । पृषदश्वासोऽअनवभ्रराधसऽऋजिप्यासोनवयुनेषुधूर्षदः ॥ इंधन्वभिर्धेनुभीरप्शदूधभिरध्वस्मभिःपथिभिर्भ्राजदृष्टयः । आहंसासोनस्वसराणिगंतनमधोर्मदायमरुतःसमन्यवः ॥ १९ ॥ आनोब्रह्माणिमरुतःसमन्यवोनरांनशंसःसवनानिगंतन । अश्वामिवपिप्यतधेनुमूधनिकर्ताधियंजरित्रेवाजपेशसं ॥ तंनोदातमरुतोवाजिनंरथऽआपानंब्रह्मचितयद्दिवेदिवे । इषंस्तोतृभ्योवृजनेषुकारवेसनिंमेधामरिष्टंदुष्टरंसहः ॥ यद्युंजतेमरुतोरुक्मवक्षसोश्वान्रथेषुभगऽआसुदानवः । धेनुर्नशिश्वेस्वसरेषुपिन्वतेजनायरातहविषेमहीमिषं ॥ योनोमरुतोवृकतातिमर्त्योरिपुर्दधेवसवोरक्षतारिषः । वर्तयततपुषाचक्रियाभितमवरुद्राऽअशसोहंतनावधः ॥ चित्रंतद्वोमरुतोयामचेकितेपृश्न्यायदूधरप्याप्योदुहुः । यद्वानिदेनवमानस्यरुद्रियास्त्रितंजरायजुरतामदाभ्याः ॥ २० ॥ तान्वोमहोमरुतऽएवयाव्नोविष्णोरेषस्यप्रभृथेहवामहे । हिरण्यवर्णान्ककुहान्यतस्रुचोब्रह्मण्यंतःशंस्यंराधऽईमहे ॥ तेदशग्वाःप्रथमायज्ञमूहिरेतेनोहिन्वंतूषसोव्युष्टिषु । उषानरामीररुणैरपोर्णुतेमहोज्योतिषाशुचतागोऽअर्णसा ॥ तक्षाणोभिररुणेभिनाजिभीरुद्राऽऋतस्यसदनेषुवावृधुः । निमेघमाना

ऽअत्यैनपाजंसासुश्चंद्रंवर्णंदधिरेसुपेशसं ॥ ताँऽइंयानोमहिवरूथमूतयऽउपघेदेनानमसागृणीमसि । त्रितोनयान्पंच होतॄनभिष्टयऽआववर्तदवरान्चक्रियावसे ॥ ययारधंपारयथात्यंहोययानिदोमुंचथवंदितारं । अर्वाचीसामरुतोयाव ऽऊतिरोषुवाश्रेवसुमतिर्जिगातु ॥ २१ ॥ ( २।४।३ ) उपेमसृक्षिवाजयुर्वचस्यांचनोंदधीतनाद्योगिरोमे । अपांनपा दाशुहेमाकुवित्ससुपेशसस्करतिजोषिषद्धि ॥ इमंस्वस्मैहृदऽआसुतष्टंमंत्रंवोचेमकुविदस्यवेदत् । अपांनपादसुर्यस्यम ह्नाविश्वान्यर्योभुवनाजजान ॥ समन्यायंत्युपयंत्यन्याःसमानमूर्वंनद्यःपृणंति । तमूशुचिंशुचयोदीदिवांसमपांनपातं परितस्थुरापः ॥ तमस्मेरायुवतयोयुवानंमर्मृज्यमानाःपरियंत्यापः । सशुक्रेभिःशिक्वभीरेवदस्मेदीदायानिध्मोघृतनिं र्णिग्प्सु+ ॥ अस्मैतिस्रोऽअव्यथ्यायनारीर्देवायदेवीर्दिधिषंत्यन्नं । कृताऽइवोपहिप्रसर्स्रेऽअप्सुसपीयूषंधयतिपूर्वसू नां ॥ २२ ॥ अश्वस्यात्रजनिमास्यचस्वर्द्रुहोरिषःसंपृचःपाहिसूरीन् । आमासुपूर्षुपरोऽअप्रमृष्यंनारातयोविनंशन्नानृ तानि ॥ स्वऽआदमेसुदुघायस्यधेनुःस्वधांपीपायसुभ्वन्नमत्ति । सोऽअपांनपादूर्जयन्नप्स्वं१तर्वसुदेयायविधतेविभा ति ॥ योऽअप्स्वाशुचिनादैव्येनऽऋतावाजस्रऽउर्वियाविभाति । वयाऽइदन्याभुवनान्यस्यप्रजायंतेवीरुधश्चप्रजा भिः ॥ अपांनपादाह्यस्थादुपस्थंजिह्मानामूर्ध्वोविद्युतंवसानः । तस्यज्येष्ठंमहिमानंवहंतीर्हिरण्यवर्णाःपरियंतियह्वीः+ ॥

( २।४।३ ) उपेमितिपंचदशर्चस्यसूक्तस्यशौनकोगृत्समदऋषिरपांनपाद्देवतात्रिष्टुप् ।

हिरण्यरूपः सहिरण्यसंदृग्पांनपात्सेदुहिरण्यवर्णः । हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै ॥ २३ ॥ तदस्या
नीकमुतचारुनामापीच्यंवर्धतेनप्तुरपां । यमिंधतेयुवतयःसमित्थाहिरण्यवर्णंघृतमन्नमस्य ॥ अस्मैबहूनामवमायसख्ये
यज्ञैर्विधेमनमसाहविर्भिः । संसानुमार्ज्मिदिधिषामिबिल्मैर्दधाम्यन्नैःपरिवंदऽऋग्भिः + ॥ सऽईंवृषाजनयत्तासुगर्भंस
ऽईंशिशुर्धयतितंरिहंति । सोऽअपांनपादनभिम्लातवर्णोन्यस्येवेहतन्वाविवेष ॥ अस्मिन्पदेपरमेतस्थिवांसमध्वस्माभि
र्विश्वहादीदिवांसं । आपोनप्त्रेघृतमन्नंवहंतीःस्वयमत्कैःपरिदीयंतियह्वीः + ॥ अयांसमग्नेसुक्षितिंजनायायांसमुमघवंद्भ्यः
सुवृक्तिं । विश्वंतद्भद्रंयदवंतिदेवाबृहद्वदेमविदथेसुवीराः ॥ २४ ॥ ( २।४।४ ) तुभ्यंहिन्वानोवसिष्टगाऽअपोधुक्षन्त्सी
मविभिरद्रिभिर्नरः । पिबेंद्रस्वाहाप्रहुतंवषट्कृतंहोत्रादासोमंप्रथमोयऽईशिषे ॥ यज्ञैःसंमिश्लाःपृषतीभिर्ऋष्टिभिर्यामं
न्छुभ्रासोऽअंजिषुप्रियाऽउत । आसद्याबर्हिर्भरतस्यसूनवःपोत्रादासोमंपिबतादिवोनरः ॥ अमेवनःसुहवाऽआहिगंत
नानिबर्हिषिसदतनारणिष्टन । अथामंदस्वजुजुषाणोऽअंधसस्त्वष्टर्देवेभिर्जनिभिःसुमद्गणः ॥ आवक्षिदेवाँऽइहविप्रय
क्षिचोशन्होतर्निषदायोनिषुत्रिषु । प्रतिवीहिप्रस्थितंसोम्यंमधुपिबाग्नीध्रात्तवभागस्यतृप्णुहि ॥ एषस्यतेतन्वोनृम्णवर्ध
नःसहऽओजःप्रदिविबाह्वोर्हितः । तुभ्यंसुतोमघवन्तुभ्यमाभृतस्त्वमस्यब्राह्मणादातृपत्पिब ॥ जुषेथांयज्ञंबोधतंहवस्य



( २।४।४ ) तुभ्यमितिषडृचस्यसूक्तस्यशौनकोगृत्समदःइंद्रोमरुतस्त्वष्टाग्निरिंद्रोमित्रावरुणावितिक्रमेणदेवताजगती । ( एताऋतुदेवताः ) ।

मेसत्तोहोतानिविर्दः पूर्व्याऽअनुं । अच्छाराजानानमंऽएत्यावृतंप्रशास्त्रादापिंवतंसोम्यंमधुं ॥ २५ ॥ द्वितीयेसप्तमः ॥

पंचदशाध्याये वर्गाः २५ सूक्तानि १३ ऋचः १३७ ॥ त्यागः ॥ बृहस्पतयइदं. ब्रह्मणस्पतयइदं. ८ बृहस्पतय. ब्रह्मणस्पतय. इंद्राब्रह्मणस्पतिभ्या. ब्रह्मणस्पत. १३ आदित्येभ्य. १७ वरुणाये. ११ विश्वेभ्योदेवेभ्यः ७[भे. विश्वे. ६ वरुणा. १] वरुणाये. इंद्रायेदं. ५ इंद्रासोमाभ्या. इंद्राये. सरस्वतीइंद्राभ्यां. बृहस्पतय. इंद्राये. मरुद्भ्य. विश्वान्दे. ७ [भे. मित्रावरुणाभ्या. विश्वेभ्योदेवेभ्य. इंद्राये. विश्वेभ्योदेवेभ्य. उषासानक्ताभ्या. विश्वेभ्योदेवेभ्य. २ ] द्यावापृथिवीभ्या. इंद्राये. २ राकायाइ. २ सिनीवाल्या. २ गुंगूसिनीवालीराकासरस्वतींद्राणीवरुणानीभ्य. रुद्राये. १५ मरुद्भ्य. १५ अपांनप्त्रेग्नय. १५ इंद्राये. मरुद्भ्य. त्वष्ट्रे. अग्नय. इंद्राये. मित्रावरुणाभ्यामि. ॥ इति द्वितीयेसप्तमः ॥ ७ ॥

मंदस्वोदुष्यएकादशसावित्रंग्रावाणेवाष्टावाश्विनंसोमापूषणाषट्[1]सोमापौष्णंमंत्योर्धर्चोप्यदितेर्वायोसैकागायत्रंमुक्तादेवताःप्रउगेणांद्येतुतृचेंत्यैंद्रवायवींद्यावापृथिव्योंत्यस्तृचोहविर्धानोवांतृतीयःपादोवाग्नेयोंवितमेनुष्टुभौबृहतीचंकनिक्रदत्तृचंप्रदक्षिणिज्जागतंमध्येतिशक्रयंष्टिवैंताभ्यामृषिरध्वनिंवाश्यमानंशकुंतंतुष्टावंकुशिकस्त्वैषीरथिरिंद्रतुल्यंपुत्रमिच्छंन्ब्रह्मचर्यंचचारंतस्येंद्रएवगाथीपुत्रोजज्ञेगाथिनोविश्वामित्रःसतृतीयंमंडलमपश्यंत्सोमस्यत्र्यधिकांवैश्वानरायपंचोनांवैश्वानरीयंतुजागतंतुंवैश्वानरायैकादशंसमित्समिदाप्रियंःप्रत्यग्निःप्रकारवइत्याग्नेययोरन्यासाममपिनिपातोदृश्यते ॥ १ ॥ ॥ ॥ ॥ ॥

१ इतःषट्कृतुदेवताः ।

हरिः ओम् (२।४।५) मंदस्वहोत्रादनुजोषमंधसोध्वर्यवःसपूर्णांवष्ट्यासिचं । तस्माऽएतंभरततद्वशोददिर्होत्रात्सोमंद्रविणोदःपिबऽऋतुभिः ॥ यमुपूर्वमहुवेतमिदंहुवेसेदुहव्योददिर्योनामपत्यते । अध्वर्युभिःप्रस्थितंसोम्यंमधुपोत्रात्सोमंद्रवि० ॥ मेद्यंतुतेवह्नयोयेभिरीयसेरिषण्यन्वीळयस्वावनस्पते । आयूयाधृष्णोऽअभिगूर्यात्वंनेष्ट्रात्सोमंद्रवि० ॥ अपाद्धोत्रादुतपोत्रादमत्तोतनेष्ट्रादजुषतप्रयोहितं । तुरीयंपात्रममृक्तममर्त्यंद्रविणोदाःपिबतुद्राविणोदसः+ ॥ अर्वांचमद्ययय्यंनृवाहणंरथंयुंजाथामिहवांविमोचनं । पृंक्तंहवींषिमधुनाहिकंगतमथासोमंपिबतंवाजिनीवसू ॥ जोष्यग्नेसमिधंजोष्याहुतिंजोषिब्रह्मजन्यंजोषिसुष्टुतिं । विश्वेभिर्विश्वाँऽऋतुनावसोमहऽउशन्देवाँऽउशतःपाययाहविः ॥ १ ॥

(२।४।६) उदुष्यदेवःसवितासवायशश्वत्तमंतदपावह्निरस्थात् । नूनंदेवेभ्योविहिधातिरत्नमथाभजद्वीतिहोत्रंस्वस्तौ ॥ विश्वस्यहिश्रुष्टयेदेवऽऊर्ध्वःप्रबाहवापृथुपाणिःसिसर्ति । आपश्चिदस्यव्रतऽआनिमृग्राऽअयंचिद्वातोरमतेपरिज्मन् ॥ आशुभिश्चिद्यान्विमुचातिनूनमरीरमदतमानंचिदेतोः । अह्यर्षूणांचिन्न्ययाँऽअविष्यामनुव्रतंसवितुर्मोक्यागात् ॥ पुनःसमव्यद्विततंवयंतीमध्याकर्तोर्न्यधाच्छक्मधीरः । उत्संहायास्थाद्व्यृ१तूँरदर्धररमतिःसवितादेवऽआगा



(२।४।५) मन्दस्वेतिषड्डृचस्यसूक्तस्यशौनकोगृत्समदःआद्यानांचतसृणांद्रविणोदाःपंचम्याआश्विनौषष्ठ्याअग्निर्जगती ।(२।४।६) उदुष्यइत्येकादशर्चस्यसूक्तस्यशौनकोगृत्समदःसवितात्रिष्टुप् ।

त् ॥ नानौकांसिदुर्योविश्वमायुर्वितिष्ठतेप्रभवःशोकोऽअग्नेः । ज्येष्ठंमातासूनवेंभागमाधादन्वस्यकेतमिषितंसवित्रा ॥ २ ॥ समाववर्तिविष्ठितोजिगीषुर्विश्वेषांकामश्चरतामभूत् । शश्वाँऽअपोविकृतंहित्व्यागादनुव्रतंसवितुर्दैव्यस्य ॥ त्वयाहितमप्यमप्सुभागंधन्वान्वामृगयसोवितस्थुः । वनानिविभ्योनकिरस्यतानिव्रतादेवस्यसवितुर्मिनंति ॥ याद्राध्यं१वरुणोयोनिमप्यमनिशितंनिमिषिजर्भुराणः । विश्वोमार्ताण्डोव्रजमापशुर्गात्स्थशोजन्मानिसविताव्याकः ॥ नयस्येंद्रोवरुणोनमित्रोव्रतमर्यमानमिनंतिरुद्रः । नारातयस्तमिदंस्वस्तिहुवेदेवंसवितारंनमोभिः ॥ भगंधियंवाजयंतःपुरंधिंनराशंसोग्नास्पतिर्नोऽअव्याः । आयेवामस्यसंगथेरयीणांप्रियादेवस्यसवितुःस्याम ॥ अस्मभ्यंतद्दिवोऽअद्भ्यःपृथिव्यास्त्वयादत्तंकाम्यंराधऽआगात् । शंयत्स्तोतृभ्यऽआपयेभवात्युरुशंसायसवितर्जरित्रे ॥ ३ ॥ ( २।४।७ ) ग्रावाणेवतदिदर्थंजरेथेगृध्रेववृक्षंनिधिमंतमच्छ । ब्रह्माणेवविदथऽउक्थशासादूतेवहव्याजन्यापुरुत्रा ॥ प्रातर्यावाणारथ्येववीराजेवयमावरमासचेथे । मेनेऽइवतन्वा३शुंभमानेदंपतीवक्रतुविदाजनेषु ॥ श्रृंगेवनःप्रथमागंतमर्वाक्शफाविवजर्भुराणातरोभिः । चक्रवाकेवप्रतिवस्तोरुस्रावाँचायातंरथ्येवशक्रा ॥ नावेवनःपारयतंयुगेवनभ्येवनऽउपधीवप्रधीव । श्वानेवनोऽअरिषण्यातनूनांखृगलेवविस्रसःपातमस्मान् ॥ वातेवाजुर्यानद्येवरीतिरक्षीऽइवचक्षुषायातमर्वा

---

( २।४।७ ) ग्रावाणेवेत्यष्टर्चस्यसूक्तस्यशौनकोगृत्समदोश्विनौत्रिष्टुप् ।

कृ । हस्ताविवतन्वे३ शंभविष्ठापादेवनोनयतंवस्योऽअच्छ ॥ ४ ॥ ओष्ठाविवमध्वास्नेवदंतास्तनाविवपिप्यतंजीवसे नः । नासेवनस्तन्वोरक्षितारांकर्णाविवसुश्रुताभूतमस्मे ॥ हस्तेवशक्तिमभिसंददीनःक्षामेवनःसमजतंरजांसि । इमागिरोऽअश्विनायुष्मयंतीःक्ष्णोत्रेणेवस्वधितिंसंशिशीतं ॥ एतानिवामश्विनावर्धनानिब्रह्मस्तोमंगृत्समदासोऽअक्रन् । तानिनराजुजुषाणोपयातंबृहद्वदेमविदथेसुवीराः ॥ ५ ॥ ( २।४।८ ) सोमापूषणाजननारयीणांजननादिवो जननापृथिव्याः । जातौविश्वस्यभुवनस्यगोपौदेवाऽअकृण्वन्नमृतस्यनाभिं ॥ इमौदेवौजायमानौजुषंतेमौतमांसिगूहतामजुष्टा । आभ्यामिंद्रःपक्वमामास्वंतःसोमापूषभ्यांजनदुस्रियासु ॥ सोमापूषणारजसोविमानंसप्तचक्रंरथमविश्वमिन्वं । विषूवृतंमनसायुज्यमानंतंजिन्वथोवृषणापंचरश्मिं ॥ दिव्य१न्यःसदनंचक्रऽउच्चापृथिव्यामन्योऽअध्यंतरिक्षे । तावस्मभ्यंपुरुवारंपुरुक्षुंरायस्पोषंविष्यतांनाभिमस्मे ॥ विश्वान्यन्योभुवनाजजानविश्वमन्योऽअभिचक्षाणऽएति । सोमापूषणाववतंधियंमेयुवाभ्यांविश्वाःपृतनाजयेम ॥ धियंपूषाजिन्वतुविश्वमिन्वोरयिंसोमोरयिपतिर्दधातु । अवतुदेव्यदितिरनर्वाबृहद्वदेमविदथेसुवीराः ॥ ६ ॥ ( २।४।९ ) वायोयेतेसहस्रिणोरथासस्तेभिरागहि ।



---

(२।४।८) सोमापूषणेतिषडृचस्यसूक्तस्यशौनकोगृत्समदःसोमापूषणौअंत्यायाःसोमपूषादित्यास्त्रिष्टुप् । (२।४।९) वायोइत्येकविंशत्यृचस्य सूक्तस्यशौनकोगृत्समदःआद्ययोर्द्वयोर्वायुस्तृतीयायाइंद्रवायूचतुर्थ्यादितिसृणांमित्रावरुणौसप्तम्यादितिसृणामश्विनौदशम्यादितिसृणामिं

नियुत्वान्त्सोमपीतये ॥ नियुत्वान्वायवागह्ययंशुक्रोऽअयामिते । गंतासिसुन्वतोगृहं+ ॥ शुक्रस्याद्यगवाशिरऽइंद्रं
वायूनियुत्वंतः । आयातंपिबतंनरा ॥ अयंवांमित्रावरुणासुतःसोमऽऋतावृधा । ममेदिहश्रुतंहवं ॥ राजानावनभि
द्रुहाध्रुवेसदस्युत्तमे । सहस्रस्थूणऽआसाते ॥ ७ ॥ तासम्राजाघृतासुतीऽआदित्यादानुनस्पती । सचेतेऽअनवह्वरं ॥
गोमदूषुनासत्याश्वावद्यातमश्विना । वर्तीरुद्रानृपाय्यं ॥ नयत्परोनांतरऽआदधर्षद्वृषण्वसू । दुःशंसोमर्त्योरिपुः+ ॥
तानऽआवोह्ळमश्विनारयिंपिशंगसंदृशं । धिष्ण्यावरिवोविदं ॥ इंद्रोऽअंगमहद्भयमभीषदपचुच्यवत् । सहिस्थिरो
विचर्षणिः ॥ ८ ॥ इंद्रश्चमृळयातिनोननःपश्चादघंनशत् । भद्रंभवातिनःपुरः+ ॥ इंद्रऽआशाभ्यस्परिसर्वाभ्योऽअ
भयंकरत् । जेताशत्रून्विचर्षणिः ॥ विश्वेदेवासऽआगतश्रृणुतामऽइमंहवं । एदंबर्हिर्निषीदत ॥ तीव्रोवोमधुमाँऽ
अयंशुनहोत्रेषुमत्सरः । एतंपिबतकाम्यं ॥ इंद्रज्येष्ठामरुद्गणादेवासःपूषरातयः । विश्वेमसश्रुताहवं ॥ ९ ॥ अंबित
मेनदीतमेदेवितमेसरस्वति । अप्रशस्ताऽइवस्मसिप्रशस्तिमंबनस्कृधि ॥ त्वेविश्वासरस्वतिश्रितायूंषिदेव्यां । शुन
होत्रेषुमत्स्वप्रजांदेविदिदिड्ढिनः ॥ इमाब्रह्मसरस्वतिजुषस्ववाजिनीवति । यातेमन्मगृत्समदाऽऋतावरिप्रियादेवेषु
जुह्वति ॥ प्रेतांयज्ञस्यशंभुवायुवामिदावृणीमहे । अग्निंचहव्यवाहनं ॥ द्यावानःपृथिवीऽइमंसिध्रमद्यदिविस्पृशं ।

---

द्रःत्रयोदश्यादितिसृणांविश्वेदेवाःषोडश्यादितिसृणांसरस्वतीअंत्यानांतिसृणांद्यावापृथिवी ( हविर्धानावा ) गायत्रीअंबितमइतिद्वेअनुष्टुभौ

यज्ञंदेवेषुयच्छतां ॥ आवामुपस्थमद्रुहादेवाःसीदंतुयज्ञियाः । इहाद्यसोमपीतये ॥ १० ॥ ( २।४।१० ) कनिंक्रद ज्जनुषंप्रब्रुवाणऽइयर्तिवाचमरितेवनावं । सुमंगलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् ॥ मात्वाश्येन ऽउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोऽअस्ता । पित्र्यामनुप्रदिशंकनिंक्रदत्सुमंगलोभद्रवादीवदेह ॥ अवक्रंदद क्षिणतोगृहाणांसुमंगलोभद्रवादीशकुंते । मानःस्तेनऽईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ ११ ॥ ( २।४।११ ) प्रदक्षिणिदभिगृणंतिकारवोवयोवदंतऽऋतुथाशकुंतयः । उभेवाचौवदतिसामगाऽइवगायत्रंचत्रैष्टुभंचानुराजति ॥ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रऽइवसवनेषुशंससि । वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतो नःशकुनेपुण्यमावद ॥ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः । यदुत्पतन्वदसिकर्करिर्यथाबृह द्वदेमविदथेसुवीराः ॥ १२ ॥ ( इतिगार्त्समदंद्वितीयंमंडलंसमाप्तं अत्रसूक्तानि ४३ ) ( परिशिष्टं ॥ भद्रंवददक्षिणतोभ द्रमुत्तरतोवद । भद्रंपुरस्तान्नोवदभद्रंपश्चात्कपिंजल ॥ भद्रंवदपुत्रैर्भद्रंवदगृहेषुच । भद्रमस्माकंनोवदभद्रंनोऽअभ यंकृधि ॥ भद्रमधस्तान्नोवदभद्रमुपरिष्टान्नोवद । भद्रंभद्रंनऽआवदभद्रंनःसर्वतोवद ॥ असपत्नःपुरस्तान्नःशिवंदक्षि

---

इमाब्रह्मेतिबृहती । ( २।४।१० ) कनिक्रददितितृचस्यसूक्तस्यशौनकोगृत्समदःशकुंतस्त्रिष्टुप् । (२।४।११) प्रदक्षिणिदितितृचस्यसूक्तस्य शौनकोगृत्समदःशकुंतोजगतीद्वितीयातिशक्वर्यष्टिर्वा ।

णतस्कृधि । अभयंसतंतंपश्चाद्भद्रमुत्तरतोगृहे ॥ यौवनानिमहयंसिजिग्युषामिवदुंदुभिः । शकुंतकप्रदक्षिणंशतपत्राभिनोवद ॥ आवदंस्त्वं० ॥ इतिपरिशिष्टं॥१॥)(३।१।१)सोमस्यमातवसंवक्ष्यग्नेवह्निंचकर्थविदथेयजध्यै । देवाँऽअच्छादीद्यद्युंजेऽअद्रिंशमायेऽअग्नेतन्वंजुषस्व ॥ प्रांचंयज्ञंचकृमवर्धतांगीःसमिद्भिरग्निंनमसादुवस्यन् । दिवःशंशासुविदथाकवीनांगृत्सायचित्तवसेगातुमीषुः ॥ मयोदधेमेधिरःपूतदक्षोदिवःसुबंधुर्जनुषापृथिव्याः । अविंदन्नुदर्शतमप्स्वं१तर्देवासोऽअग्निमपसिस्वसृणां ॥ अवर्धयन्सुभगंसप्तयह्वीःश्वेतंजज्ञानमरुषंमहित्वा । शिशुंनजातमभ्यारुरश्वादेवासोऽअग्निंजनिमन्वपुष्यन् ॥ शुक्रेभिरंगैरजऽआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः । शोचिर्वसानःपर्यायुरपांश्रियोमिमीतेबृहतीरनूनाः ॥ १२ ॥ वव्राजासीमनदतीरदब्धादिवोयह्वीरवसानाऽअनग्नाः । सनाऽअत्रयुवतयःसयोनीरेकंगर्भंदधिरेसप्तवाणीः ॥ स्तीर्णाऽअस्यसंहतोविश्वरूपाघृतस्ययोनौस्रवथेमधूनां । अस्थुरत्रधेनवःपिन्वमानामहीदस्मस्यमातरासमीची ॥ बभ्राणःसूनोसहसोव्यद्यौद्दधानःशुक्रारभसावपूंषि । श्चोततिधारामधुनोघृतस्यवृषायत्रवावृधेकाव्येन ॥ पितुश्चिदूधर्जनुषाविवेदव्यस्यधाराऽअसृजद्विधेनाः । गुहाचरंतंसखिभिःशिवेभिर्दिवोयह्वीभिर्नगुहाबभूव ॥ पितुश्चगर्भंजनितुश्चबभ्रेपूर्वीरेकोऽअधयत्पीप्यानाः । वृष्णेसपत्नीशुचयेसबंधूऽउभेऽअस्मैमनुष्ये३

अथवैश्वामित्रेतृतीयेमंडलेपंचानुवाकाः ( ३।१।१ ) सोमस्यमेतित्रयोविंशत्यृचस्यसूक्तस्यगाथिनोविश्वामित्रोग्निस्त्रिष्टुप् ।

निपाहि ॥ १४ ॥ उरौमहाँऽअनिबाधेववर्धापोऽअग्निंयशसःसंहिपूर्वीः । ऋतस्ययोनांवशयदमूनाजामीनामग्निरप सिस्वसृणां ॥ अक्रोनवभ्रिःसमिथेमहीनांदिदृक्षेयःसूनवेभाऽऋजीकः । उदुस्त्रियाजनितायोजजानापांगर्भोनृतमोयह्वोऽअग्निः ॥ अपांगर्भंदर्शतमोषधीनांवनाजजानसुभगाविरूपं । देवासश्चिन्मनसासंहिजग्मुःपनिष्ठंजातंतवसंदुवस्यन् ॥ बृहंतऽइद्धानवोभाऽऋजीकमग्निंसचंतविद्युतोनशुक्राः । गुहेववृद्धंसदसिस्वेऽअंतरपारऽऊर्वेऽअमृतंदुहानाः ॥ ईळेचत्वायजमानोहविर्भिरीळेसखित्वंसुमतिंनिकामः । देवैरवोमिमीहिसंजरित्रेरक्षाचनोदम्येभिरनीकैः ॥ १५ ॥ उपक्षेतारस्तवसुप्रणीतेग्नेविश्वानिधन्यादधानाः । सुरेतसाश्रवसातुंजमानाऽअभिष्यामपृतनायूरदेवान् ॥ आदेवानामभवःकेतुरग्नेमंद्रोविश्वानिकाव्यानिविद्वान् । प्रतिमर्ताँऽअवासयोदमूनाऽअनुदेवान्रथिरोयासिसाधन् ॥ निदुरोणेऽअमृतोमर्त्यानांराजासमादविदथानिसाधन् । घृतप्रतीकऽउर्वियाव्यद्यौदग्निर्विश्वानिकाव्यानिविद्वान् ॥ आनोगहिसख्येभिःशिवेभिर्महान्महीभिरूतिभिःसरण्यन् । अस्मेरयिंबहुलंसंतरुत्रंसुवाचंभागंयशसंकृधीनः ॥ एतातेऽअग्नेजनिमासनानिप्रपूर्व्यायनूतनानिवोचं । महांतिवृष्णेसवनाकृतेमाजन्मन्जन्मन्निहितोजातवेदाः ॥ जन्मन्जन्मन्निहितोजातवेदाविश्वामित्रेभिरिध्यतेऽअजस्रः । तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ॥ इमंयज्ञंसहसावन्त्वंनोदेवत्राधेहिसुक्रतोरराणः । प्रयंसिहोतर्बृहतीरिषोनोग्नेमहिद्रविणमायजस्व ॥ इळामग्नेपुरुदंसंसनिंगोःशश्वत्त

मंहवंमानायसाध । स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ १६ ॥ ( ३।१।२ ) वैश्वानरायधिषणामृ
तावृधेघृतंनपूतमग्नयेजनामसि । द्विताहोतारंमनुषश्चवाघतोधियारथंनकुलिशःसमृण्वति ॥ सरोचयज्जनुषारोदसी
ऽउभेसमात्रोरभवत्पुत्रऽईड्यः । हव्यवाळग्निरजरश्चनोहितोदूळभोविशामतिथिर्विभावसुः ॥ क्रत्वादक्षस्यतरुषोविधर्म
णदेवासोऽअग्निंजनयंतचित्तिभिः । रुरुचानंभानुनाज्योतिषामहामत्यंनवाजंसनिष्यन्नुपब्रुवे ॥ आमंद्रस्यसनिष्यंतोव
रेण्यंवृणीमहेऽअह्रयंवाजमृग्मियं । रातिंभृगूणामुशिजंकविक्रतुमग्निंराजंतंदिव्येनशोचिषा ॥ अग्निंसुम्नायदधिरेपुरोज
नावाजश्रवसमिहवृक्तबर्हिषः । यतस्रुचःसुरुचंविश्वदेव्यंरुद्रंयज्ञानांसाधदिष्टिमपसां ॥ १७ ॥ पावकशोचेतवहिक्ष
यंपरिहोतर्यज्ञेषुवृक्तबर्हिषोनरः । अग्नेदुवऽइच्छमानासऽआप्यमुपासतेद्रविणंधेहितेभ्यः ॥ आरोदसीऽअपृणदा
स्वर्महज्जातंयदेनमपसोऽअधारयन् । सोऽअध्वरायपरिणीयतेकविरत्योनवाजसातयेचनोहितः ॥ नमस्यतहव्यदा
तिंस्वध्वरंदुवस्यतदम्यंजातवेदसं । रथीर्ऋतस्यबृहतोविचर्षणिरग्निर्देवानामभवत्पुरोहितः ॥ तिस्रोयह्वस्यसमिधःप
रिज्मनोग्नेरपुनन्नुशिजोऽअमृत्यवः । तासामेकामदधुर्मर्त्येभुजमुलोकमुद्वेऽउपजामिमीयतुः ॥ विशांकविंविश्पतिंमानु
षीरिषःसंसीमकृण्वन्त्स्वधितिंनतेजसे । सऽउद्वतोनिवतोयातिवेविषत्सगर्भमेषुभुवनेषुदीधरत् ॥१८॥ सजिन्वतेजठरे

( ३।१।२ ) वैश्वानरायेतिपंचदशर्चस्यसूक्तस्यगाथिनोविश्वामित्रोवैश्वानरोग्निर्जगती ।

ऋक्सं. मंडलं ३
अ.२अ.८ अनु. १
॥५५॥

षुप्रजज्ञिवान्वृषाचित्रेषुनानदन्नसिंहः । वैश्वानरःपृथुपाजाऽअमर्त्योवसुरत्नादयमानोविदाशुषे ॥ वैश्वानरःप्रत्नथाना
कमारुहद्दिवस्पृष्ठंभंदमानःसुमन्मभिः । सपूर्ववज्जनयन्जंतवेधनंसमानमज्मंपर्येतिजागृविः ॥ ऋतावानंयज्ञियंविप्र
मुक्थ्य१मायंदधेमातरिश्वादिविक्षयं । तंचित्रयामंहरिकेशमीमहेसुदीतिमग्निंसुवितायनव्यसे ॥ शुचिंनयामन्नि
षिरंस्वर्दृशंकेतुंदिवोरोचनस्थामुषर्बुधं । अग्निंमूर्धानंदिवोऽअप्रतिष्कुतंतमीमहेनमसावाजिनंबृहत् + ॥ मंद्रंहोतारंशु
चिमद्वयाविनंदमूनसमुक्थ्यंविश्वचर्षणिं । रथंनचित्रंवपुषायदर्शतंमनुर्हितंसदमिद्रायऽईमहे ॥ १९ ॥ ( ३।१।३ )
वैश्वानरायपृथुपाजसेविपोरत्नाविधंतधरुणेषुगातवे । अग्निर्हिदेवाँऽअमृतोदुवस्यत्यथाधर्माणिसनतानदूदुषत् ॥ अं
तर्दूतोरोदसीदस्मऽईयतेहोतानिषत्तोमनुषःपुरोहितः । क्षयंबृहंतंपरिभूषतिद्युभिर्देवेभिरग्निरिषितोधियावसुः ॥ केतुंय
ज्ञानांविदथस्यसाधनंविप्रासोऽअग्निंमहयंतचित्तिभिः । अपांसियस्मिन्नधिंदधुर्गिरस्तस्मिन्त्सुम्नानियजमानऽआच
के ॥ पितायज्ञानामसुरोविपश्चितांविमानमग्निर्वयुनंचवाघतां । आविवेशरोदसीभूरिवर्पसापुरुप्रियोभंदतेधामभिः
कविः + ॥ चंद्रमग्निंचंद्ररथंहरिव्रतंवैश्वानरमप्सुषदंस्वर्विदं । विगाहंतूर्णिंतविषीभिरावृतंभूर्णिंदेवासऽइहसुश्रियंदधुः
॥ २० ॥ अग्निर्देवेभिर्मनुषश्चजंतुभिस्तन्वानोयज्ञंपुरुपेशसंधिया । रथीरंतरीयतेसाधदिष्टिभिर्जीरोदमूनाऽअभिश

॥५५॥

( ३।१।३ ) वैश्वानरायेत्येकादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रोवैश्वानरोग्निर्जगती ।

स्तिचातनः । अग्नेजरस्वस्वपत्यऽआयुंन्यूर्जापिन्वस्वसमिषोदिदीहिनः । वयांसिजिन्वबृहतश्चंजागृवऽउशिग्देवाना मसिसुक्रतुर्विपां+ ॥ विश्पतिंयह्वमतिथिंनरःसदायंतारंधीनामुशिजंचवाघतां । अध्वराणांचेतनंजातवेदसंप्रशंसंति नमसाजूतिभिर्वृधे+ ॥ विभावादेवःसुरणःपरिक्षितीरग्निर्बभूवशवसासुमद्रथः । तस्यव्रतानिभूरिपोषिणोवयमुपभूषे मदमऽआसुवृक्तिभिः ॥ वैश्वानरतवधामान्याचकेयेभिःस्वर्विदभवोविचक्षण । जातऽआपृणोभुवनानिरोदसीऽअ ग्नेताविश्वापरिभूरसित्मना ॥ वैश्वानरस्यदंसनाभ्योबृहदरिणादेकःस्वपस्ययाकविः । उभापितरामहयन्नजायताग्नि र्द्यावापृथिवीभूरिरेतसा ॥ २१ ॥ ( ३।१।४ ) समित्संमित्सुमनाबोध्यस्मेशुचाशुचासुमतिंरासिवस्वः । आदेवदेवा न्यजथायवक्षिसखासखीन्त्सुमनायक्ष्यग्ने ॥ यंदेवासस्त्रिरहन्नायजंतेदिवेदिवेवरुणोमित्रोऽअग्निः । सेमंयज्ञंमधुमंतं कृधीनस्तनूनपाद्धृतयोनिंविधंतं ॥ प्रदीधितिर्विश्ववाराजिगातिहोतारमिळःप्रथमंयजध्यै । अच्छानमोभिर्वृषभंवंद ध्यैसदेवान्यक्षदिषितोयजीयान् ॥ ऊर्ध्वोवांगातुरध्वरेऽअकार्यूर्ध्वाशोचींषिप्रस्थितारजांसि । दिवोवानाभान्यसादि होतास्तृणीमहिदेवव्यचाविबर्हिः+ ॥ सप्तहोत्राणिमनसावृणानाऽइन्वंतोविश्वंप्रतियन्नृतेन । नृपेशसोविदथेषुप्रजा

---

( ३।१।४ ) समित्समिदित्येकादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रइध्मस्तनूनपादिळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौसरस्वती ळाभारत्यस्त्वष्टावनस्पतिस्वाहाकृतयइतिक्रमेणदेवतास्त्रिष्टुप् ।

ताऽअभीऽ३ मंयज्ञंविचरंतपूर्वीः+ ॥ २२ ॥ आभंदमानेऽउषसाऽउपाकेऽउतस्मंयेतेतन्वा३ विरूपे । यथानोमित्रोवरुणोजुजोषदिंद्रोमरुत्वाँऽउतवामहोभिः ॥ दैव्याहोताराप्रथमान्यृंजेसप्तपृक्षासःस्वधयामदंति । ऋतंशंसंतऽऋतमित्तऽआहुरनुव्रतंव्रतपादीध्यानाः ॥ आभारतीभारतीभिःसजोषाऽइळादेवैर्मनुष्येभिरग्निः । सरस्वतीसारस्वतेभिरर्वाक्तिस्रोदेवीर्बर्हिरेदंसदंतु ॥ तन्नस्तुरीपमधपोषयित्नुदेवत्वष्टर्विरराणःस्यस्व । यतोवीरःकर्मण्यःसुदक्षोयुक्तग्रावाजायतेदेवकामः ॥ वनस्पतेवसृजोपदेवानग्निर्हविःशमितासूदयाति । सेदुहोतासत्यतरोयजातियथादेवानांजनिमानिवेद ॥ आयाह्यग्नेसमिधानोऽअर्वाङिंद्रेणदेवैःसरथंतुरेभिः । बर्हिर्नऽआस्तामदितिःसुपुत्रास्वाहादेवाऽअमृतामादयंतां ॥ २३ ॥ ( ३।१।५ ) प्रत्यग्निरुषसश्चेकितानोबोधिविप्रःपदवीःकवीनां । पृथुपाजादेवयद्भिःसमिद्धोपद्वारातमसोवह्निरावः ॥ प्रेद्वग्निर्वावृधेस्तोमेभिर्गीर्भिःस्तोतृणांनमस्यऽउक्थैः । पूर्वीऽऋतस्यसंदृशश्चकानःसंदूतोऽअद्यौदुषसोविरोके+ ॥ अधाय्यग्निर्मानुषीषुविक्ष्वं१पांगर्भोमित्रऽऋतेनसाधन् । आहर्यतोयजतःसान्वस्थादभूदुविप्रोहव्योमतीनां+ ॥ मित्रोऽअग्निर्भवतियत्समिद्धोमित्रोहोतावरुणोजातवेदाः । मित्रोऽअध्वर्युरिषिरोदमूनामित्रःसिंधूनामुतपर्वं



( ३।१।५ ) प्रत्यग्निरित्येकादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रोग्निस्त्रिष्टुप् ( प्रत्यग्निःप्रकारवःसूक्तयोरन्यासांद्यावापृथिव्यादीनांनिपातादृश्यंतेअतस्तयोर्लिंगोक्तादेवताःपाक्षिकाः ) ।

तानां ॥ पातिप्रियंरिपोऽअग्रंपदंवेःपातियह्वश्चरणंसूर्यस्य । पातिनाभासप्तशीर्षाणमग्निःपातिदेवानामुपमादमृष्वः
॥ २४ ॥ ऋभुश्चक्रऽईड्यंचारुनामविश्वानिदेवोवयुनानिविद्वान् । ससस्यचर्मघृतवत्पदंवेस्तदिदग्नीरक्षत्यप्रयुच्छन् ॥
आयोनिमग्निर्घृतवंतमस्थात्पृथुप्रगाणमुशंतमुशानः । दीद्यानःशुचिर्ऋष्वःपावकःपुनःपुनर्मातरानव्यसीकः ॥ सद्यो
जातऽओषधीभिर्ववक्षेयदीवर्धंतिप्रस्वोघृतेन । आपऽइवप्रवताशुंभमानाऽउरुष्यदग्निःपित्रोरुपस्थे ॥ उदुष्टुतःसमिधा
यह्वोऽअद्यौद्वर्ष्मन्दिवोऽअधिनाभापृथिव्याः । मित्रोऽअग्निरीड्योमातरिश्वादूतोवक्षद्यजथायदेवान्+ ॥ उदस्तंभीत्स
मिधानाकमृष्वो३ग्निर्भवन्नुत्तमोरोचनानां । यदीभृगुभ्यःपरिमातरिश्वागुहासंतंहव्यवाहंसमीधे+ ॥ इळामग्ने० ॥ २५ ॥
(३।१।६) प्रकारवोमननावच्यमानादेवद्रीचींनयतदेवयंतः । दक्षिणावाड्वाजिनीप्राच्येतिहविर्भरंत्यग्नयेघृताची ॥ आ
रोदसीऽअपृणाजायमानऽउतप्ररिक्थाऽअधनुप्रयज्यो । दिवश्चिदग्नेमहिनापृथिव्यावच्यंतांतेवह्नयःसप्तजिह्वाः ॥ द्यौ
श्चत्वापृथिवीयज्ञियासोनिहोतारंसादयंतेदमाय । यदीविशोमानुषीर्देवयंतीःप्रयस्वतीरीळतेशुक्रमर्चिः+ ॥ महान्स
धस्थेध्रुवऽआनिषत्तोन्तर्द्यावामाहिनेहर्यमाणः । आस्क्रेसपत्नीऽअजरेऽअमृक्तेसबर्दुघेऽउरुगायस्यधेनू+ ॥ व्रतातेऽअ
ग्नेमहतोमहानितवक्रत्वारोदसीऽआततंथ । त्वंदूतोऽअभवोजायमानस्त्वंनेतावृषभचर्षणीनां+ ॥ २६ ॥ ऋतस्यवाके

(३।१।६) प्रकारवइत्येकादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रोगिरित्रिष्टुप् ।

शिनांयोग्याभिर्घृतस्नुवारोहिताधुरिधिष्व । अथावहदेवान्देवविश्वान्त्स्वध्वराकृणुहिजातवेदः ॥ द्विवश्चिदातेरुचयं तरोकाऽउषोविभातीरनुभासिपूर्वीः । अपोयदग्नऽउशधग्वनेषुहोतुर्मन्द्रस्यपनयंतदेवाः ॥ उरौवायेऽअंतरिक्षेमदंति दिवोवायेरोचनेसंतिदेवाः । ऊमांवायेसुहवासोयजत्राऽआयेमिरेरथ्योऽअग्नेऽअश्वाः ॥ ऐभिरग्नेसरथंयाह्यर्वाङ्नाना रथंवाविभवोह्यश्वाः । पत्नीवतस्त्रिंशतंत्रींश्चदेवाननुष्वधमावहमादयस्व ॥ सहोतायस्यरोदसीचिदुर्वीयज्ञंयज्ञमभिवृ धेगृणीतः । प्राचीऽअध्वरेवतस्थतुःसुमेकेऽऋतावरीऽऋतजातस्यसत्ये ॥ इळामग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमा नायसाध । स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ २७ ॥ इतिद्वितीयाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥ ॥

षोडशाध्याये वर्गाः २७ सूक्तानि १३ ऋचः १४० ॥ त्यागः ॥ द्रविणोदसेग्नयइषायेदं. द्रविणोदसेग्नयऊर्जाये. द्रविणोदसेग्नयेसहाये. द्रविणोदसेग्नयेसहस्याये. अश्विभ्यांतपस. अग्नयेतपस्याये. सवित्र. ११ अश्विभ्या. ८ सोमापूषणाभ्या. ५ सोमापूषणादितिभ्य. वायव. २ इंद्रवायुभ्या. मित्रावरुणाभ्या. ३ अश्विभ्या. ३ इंद्राये. ३ विश्वेभ्योदेवेभ्य. ३ सरस्वत्याइ. ३ द्यावापृथिवीभ्या. ३ शकुंताये. ६ अग्नय. २३ वैश्वानरायाग्नय. २६ समिद्धायाग्नय. तनूनपात. इळाये. बर्हिष. देवीभ्योद्वार्भ्य. उषासानक्ताभ्या. देवीभ्यांहोतृभ्यांप्रचेतो-भ्यामि. सरस्वतीळाभारतीभ्य. त्वष्ट्रइ. वनस्पतय. स्वाहाकृतिभ्य. अग्नयइदं. २२ ॥ इतिद्वितीयेऽष्टमः ॥ ( १ इतःषट् ऋतुदेवताः । )

## ॥ द्वितीयाष्टकःसमाप्तः ॥

श्रीः ॥ प्रयेंऽजंतियूपस्तुतिंः षष्ठ्याद्याभिर्बहवौंत्यात्रश्चन्यष्टमीवैश्वदेवीवांतृतीयासप्तम्यावनुष्टुभौसखायोनव
वार्हतंत्रिष्टुबंतंत्वामग्न औष्णिहंमग्निर्होतागायत्रंत्विंद्राग्नीऐंद्राग्नंप्रवः सप्तऋषभस्त्वानुष्टुभंमाहोताविपाजसाका
त्योत्कीलस्त्वंयमग्निः षट्प्रागाथंसमिध्यमानः पंचकतोवैश्वामित्रस्तुंभवानोग्निंहोतारंगाथीहाग्निमुषर्समाद्यांत्ये
वैश्वदेव्याविमंनउपाद्येअनुष्टुभौविराड्रूपासतोबृहतीचांत्यायंसउपांत्यानुष्टुप्पुंरीष्येभ्योग्निभ्योनिर्मथितोदेवश्र
वादेववातश्चभारतौतृतीयासतोबृहत्यग्नेसहस्वागायत्रमाद्यानुष्टुबग्नेदिवोवैराजमुपांत्याग्नेंद्रीवैश्वानरंनवतृचौ
वैश्वानरीयंमारुतौजागतौद्वृचआत्मस्तुतिर्वापूर्वात्मगीतांत्योपाध्यायस्तुतिंःप्रवः पंचोनागायत्रंत्वृतव्यावाद्याग्ने
जुषस्वषट्तृतीयाद्युष्णिक्त्रिष्टुप्जगत्यौस्तीदंषोळशाद्याचतुर्थीदशमीद्वादश्योनुष्टुभंःषष्ठ्येकादश्युपांत्येचजग
त्यंः पंचम्यृत्विग्भ्योवा ॥ १ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगणेशायनमः ॥ हरिः३ओम् ॥ ( ३।१।७ ) प्रयऽआरुःशितिपृष्ठस्यंधासेरामातराविविशुःसप्तवाणीः । परि
क्षितापितरासंचरेतेप्रसंर्स्रातेदीर्घमायुःप्रयक्षें ॥ दिवक्षसोधेनवोवृष्णोऽअश्वादेवीरातंस्थौमधुमद्वहंतीः । ऋतस्यत्वा
सदंसिक्षेमयंतंपर्येकाचरतिवर्तनिंगौः+ ॥ आसींमरोहत्सुयमाभवंतीःपतिश्चिकित्वान्रयिविद्रयीणां । प्रनीलंपृष्ठोऽअ

( ३।१।७ ) प्रयआरुरित्येकादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रोग्निस्त्रिष्टुप् ।

तसस्वधासेस्ताऽअंवासयत्पुरुधप्रतीकः ॥ महित्वाष्ट्रमूर्जयंतीरजुर्यस्तंभूयमानंवहतोवहंति । व्यंगेभिर्दिद्युतानःसधस्थऽएकामिवरोदसीऽआविवेश ॥ जानंतिवृष्णोऽअरुषस्यशेवमुतब्रध्नस्यशासनेरणंति । दिवोरुचःसुरुचोरोचमानाऽइळायेषांगण्यामाहिनागीः+ ॥ १ ॥ उतोपितृभ्यांप्रविदानुघोषंमहोमहद्भ्यामनयंतशूषं । उक्षाहयत्रपरिधानमक्तोरनुस्वंधामंजरितुर्ववक्ष ॥ अध्वर्युभिःपंचभिःसप्तविप्राःप्रियंरक्षंतेनिहितंपदंवेः । प्रांचोमदंत्युक्षणोऽअजुर्यादेवादेवानामनुहिव्रतागुः+ ॥ दैव्याहोताराप्रथमान्यृंजेसप्तपृक्षासःस्वधयामदंति । ऋतंशंसंतऽऋतमित्तऽआहुरनुव्रतंव्रतपादीध्यानाः ॥ वृषायंतेमहेऽअत्यायपूर्वीर्वृष्णेचित्रायरश्मयःसुयामाः । देवहोतर्मंद्रतरश्चिकित्वान्महोदेवान्रोदसीऽएहवक्षि ॥ पृक्षप्रयजोद्रविणःसुवाचःसुकेतवऽउषसोरेवदूषुः । उतोचिदग्नेमहिनापृथिव्याःकृतंचिदेनःसंमहेदशस्य ॥ इळामग्नेपुरुदंससंसनिंगोःशश्वत्तमंहवमानायसाध । स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे+ ॥ २ ॥ ( ३।१।८ ) अंजंतित्वामध्वरेदेवयंतोवनस्पतेमधुनादैव्येन । यदूर्ध्वस्तिष्ठाद्रविणेहधत्ताद्यद्वाक्षयोमातुरस्याऽउपस्थे ॥ समिद्धस्यश्रयमाणःपुरस्ताद्ब्रह्मवन्वानोऽअजरंसुवीरं । आरेऽअस्मदमतिंबाधमानऽउच्छ्रयस्वमहतेसौभगाय ॥ उच्छ्रयस्ववनस्पते

( ३।१।८ ) अंजंतीत्येकादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रोयूपःपष्ठ्यादिपंचानांयूपाः (अष्टम्याविश्वेदेवावा) अंत्यायात्रश्चन्नस्त्रिष्टुप् तृतीयासप्तम्यावनुष्टुभौ ।

वर्ष्मन्पृथिव्याऽअधि । सुमितीमीयमानोवर्चौधायज्ञवाहसे ॥ युवासुवासाःपरिवीतऽआगात्सऽउश्रेयान्भवतिजा
यमानः । तंधीरासःकवयऽउन्नयंतिस्वाध्योमनसादेवयंतः ॥ जातोजायतेसुदिनत्वेऽअह्नांसमर्यऽआविदथेवर्धमा
नः । पुनंतिधीराऽअपसोमनीषादेवयाविप्रऽउदियर्तिवाचं ॥ ३ ॥ यान्वोनरोदेवयंतोनिमिम्युर्वनस्पतेस्वधितिर्वात
तक्ष । तेदेवासःस्वरवस्तस्थिवांसःप्रजावदस्मेदिधिषंतुरत्नं ॥ येवृक्णासोऽअधिक्षमिनिमितासोयतस्रुचः । तेनोव्यंतु
वार्यंदेवत्राक्षेत्रसाधसः ॥ आदित्यारुद्रावसवःसुनीथाद्यावाक्षामापृथिवीऽअंतरिक्षं । सजोषसोयज्ञमवंतुदेवाऽऊर्ध्वं
कृण्वंत्वध्वरस्यकेतुं+ ॥ हंसाऽइवश्रेणिशोयतानाःशुक्रावसानाःस्वरवोनऽआगुः । उन्नीयमानाःकविभिःपुरस्ताद्देवा
देवानामपियंतिपाथः ॥ शृंगाणीवेच्छृंगिणांसंददृश्रेचषालवंतःस्वरवःपृथिव्यां । वाघद्भिर्वाविहवेश्रोषमाणाऽअस्माँ
ऽअवंतुपृतनाज्येषु ॥ वनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयंरुहेम । यंत्वामयंस्वधितिस्तेजमानःप्रणिनायमहते
सौभगाय ॥ ४ ॥ ( ३।१।९ ) सखायस्त्वाववृमहेदेवंमर्तासऽऊतये । अपांनपातंसुभगंसुदीदितिंसुप्रतूर्तिमनेहसं ॥
कायमानोवनात्वंयन्मातृरजगन्नपः । नतत्तेऽअग्नेप्रमृषेनिवर्तनंयद्दूरेसन्निहाभवः ॥ अतितृष्टंववक्षिथाथैवसुमनाऽअ
सि । प्रप्रान्येयंतिपर्यन्यऽआसतेयेषांसख्येऽअसिश्रितः+ ॥ ईयिवांसमतिस्रिधःशश्वतीरतिसश्चतः । अन्वीमविंद

( ३।१।९ ) सखायइतिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रोग्निर्बृहत्यंत्यात्रिष्टुप् ।

ऋक्सं. मंडलं. ३

अ३.अ.१ अनु. १

॥ ३ ॥

न्नि॒चि॒रासो॑ऽअ॒द्रुहो॒प्सु॒सिं॒हमि॑वश्रि॒तं ॥ स॒सृ॒वांस॑मि॒व॒त्मना॒ग्निमि॒त्थाति॒रोहि॑तं । ऐनं॑नयन्मात॒रिश्वा॑परा॒वतो॑दे॒वे भ्यो॑मथि॒तंपरि॑ ॥ ५ ॥ तंत्वा॒मर्ता॑ऽअगृभ्णतदे॒वेभ्यो॑हव्यवाहन । विश्वा॒न्यद्य॒ज्ञाँऽअ॑भि॒पासि॑मानु॒षतव॒क्रत्वा॑यवि ष्ठ्य ॥ तद्भ॒द्रंतव॑दं॒सना॒पाका॑यचिच्छदयति । त्वांयद॑ग्नेप॒शवः॑स॒मास॑ते॒समि॑द्धमपिशर्व॒रे ॥ आजु॑होतास्वध्व॒रंशी॒रंपा व॒कशो॑चिषं । आ॒शुंदू॒तम॑जि॒रंप्र॒त्नमीड्यं॑श्रु॒ष्टीदे॒वंस॑पर्यत ॥ त्रीणि॑श॒तात्रीस॒हस्रा॑ण्य॒ग्निंत्रिं॒शच्च॑दे॒वानव॑चासपर्यन् । औक्ष॑न्घृ॒तैरस्तृ॑णन्ब॒र्हिर॑स्मा॒ऽआदिद्धोता॑रं॒न्य॑सादयंत ॥ ६ ॥ ( ३।१।१० ) त्वाम॑ग्नेमनी॒षिणः॑स॒म्राजं॑चर्षणी॒नां । दे॒वंमर्ता॑सऽइंधते॒सम॑ध्व॒रे ॥ त्वांय॒ज्ञेष्वृ॒त्विज॒मग्ने॒होता॑रमीळते । गो॒पाऽऋ॒तस्य॑दीदिहि॒स्वेदमे॑ ॥ सघा॒यस्ते॒दद॑शति स॒मिधा॑जा॒तवे॑दसे । सोऽअ॑ग्नेधत्तेसु॒वीर्यं॒सपु॑ष्यति ॥ सके॒तुर॑ध्व॒राणा॑म॒ग्निर्दे॒वेभि॒राग॑मत् । अं॒जा॒नः स॒प्तहो॑तृ॒भिर्ह॒विष्म॑ ते ॥ प्रहो॒त्रेपू॒र्व्यंवचो॒ग्नये॑भरताबृ॒हत् । वि॒पांज्योतीं॑षि॒बिभ्र॑ते॒नवे॒धसे॑ ॥ ७ ॥ अ॒ग्निंव॑र्धंतु॒नोगिरो॒यतो॒जाय॑तऽउ॒क्थ्यः॑ । म॒हेवाजा॑यद्र॒विणा॑यद॒र्शतः ॥ अग्ने॒यजि॑ष्ठोऽअध्व॒रेदे॒वान्दे॑वय॒तेयंज । होता॑मं॒द्रोवि॒राज॒स्यति॒स्रिधः॑ ॥ सनः॑पावक दीदिहिद्यु॒मद॒स्मेसु॒वीर्यं॑ । भवा॑स्तो॒तृभ्यो॒ऽअंत॑मःस्व॒स्तये॑ ॥ तंत्वा॒विप्रा॑विप॒न्यवो॑जागृ॒वांसः॒समि॑धते । ह॒व्य॒वाह॒मम॑ र्त्यंसह॒ोवृधं॑ ॥ ८ ॥ ( ३।१।११ ) अ॒ग्निर्होता॑पु॒रोहि॑तोध्व॒रस्य॒विच॑र्षणिः । सवे॑दय॒ज्ञमा॑नु॒षक् ॥ सह॑व्य॒वाळम॑र्त्य

(३।१।१०)त्वामग्नइतिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रोग्निरुष्णिक्। (३।१।११) अग्निर्होतेतिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रोग्निर्गा

ऽउशिग्दूतश्चनोहितः । अग्निर्धियासमृण्वति ॥ अग्निर्धियासचेततिकेतुर्यज्ञस्यपूर्व्यः । अर्थंह्यस्यतरणि ॥ अग्निंसूनुं सनंश्रुतंसहसोजातवेदसं । वह्निंदेवाऽअकृण्वत ॥ अदाभ्यःपुरऽएताविशामग्निर्मानुषीणां । तूर्णीरथःसदानवः ॥ ९ ॥ साह्वान्विश्वाऽअभियुजःक्रतुर्देवानाममृक्तः । अग्निस्तुविश्रवस्तमः ॥ अभिप्रयांसिवाहसादाश्वाँऽअश्नोति मर्त्यः । क्षयंपावकशोचिषः ॥ परिविश्वानिसुधिताग्नेरश्याममन्मभिः । विप्रासोजातवेदसः ॥ अग्नेविश्वानिवार्या वाजेषुसनिषामहे । त्वेदेवासऽएरिरे ॥ १० ॥ ( ३।१।१२ ) इंद्राग्नीऽआगतंसुतंगीर्भिर्नभोवरेण्यं । अस्यपातंधि येषिता+ ॥ इंद्राग्नीजरितुःसचायज्ञोजिगातिचेतनः । अयापातमिमंसुतं+ ॥ इंद्रमग्निंकविच्छदायज्ञस्यजूत्यावृणे । तासोमस्येहतृंपतां ॥ तोशावृत्रहणाहुवेसजित्वानापराजिता । इंद्राग्नीवाजसातमा ॥ प्रवामर्चंत्युक्थिनोनीथाविदो जरितारः । इंद्राग्नीऽइषऽआवृणे ॥ ११ ॥ इंद्राग्नीनवतिंपुरोदासपत्नीरधूनुतं । साकमेकेनकर्मणा ॥ इंद्राग्नीऽअप सस्पर्युपप्रयंतिधीतयः । ऋतस्यपथ्याऽअनु ॥ इंद्राग्नीतविषाणिवांसधस्थानिप्रयांसिच । युवोरप्तूर्यंहितं+ ॥ इंद्राग्नी रोचनादिवःपरिवाजेषुभूषथः । तद्वांचेतिप्रवीर्यं+ ॥ १२ ॥ ( ३।२।१ ) प्रवोदेवायाग्नयेबर्हिष्ठमर्चास्मै । गमद्देवे भिरासनोयजिष्ठोबर्हिरासदत् ॥ ऋतावायस्यरोदसीदक्षंसचंतऽऊतयः । हविष्मंतस्तमीळतेतंसनिष्यंतोवसे ॥ सयं

---

यत्री । (३।१।२२) इंद्राग्नीइतिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्राग्नीगायत्री । (३।२।१) प्रवोदेवायेतिसप्तर्चस्यसूक्तस्यवैश्वामित्रऋषभो

ऋक्सं. अ.३अ.१ ॥ ४ ॥

मंडलं ३ अनु. २

ताविप्रऽएषांसयज्ञानामथाहिषः । अग्निंतंवोदुवस्यतदातायोवनितामघं ॥ सनःशर्माणिवीतयेग्निर्यच्छतुशंतमा । यतोनःप्रुष्णवद्वसुदिविक्षितिभ्योऽअप्स्वा ॥ दीदिवांसमपूर्व्यंवस्वीभिरस्यधीतिभिः । ऋक्वाणोऽअग्निमिंधतेहोतारंविश्पतिंविशां ॥ उतनोब्रह्मन्नविषऽउक्थेषुदेवहूतमः । शंनःशोचामरुद्वृधोग्नेसहस्रसातमः ॥ नूनोरास्वसहस्रवत्तोकवत्पुष्टिमद्वसु ॥ द्युमदग्नेसुवीर्यंवर्षिष्ठमनुपक्षितं ॥ १३ ॥ ( ३।२।२ ) आहोतामंद्रोविदथान्यस्थात्सत्योयज्वाकविर्तमःसवेधाः । विद्युद्रथःसहसस्पुत्रोऽअग्निःशोचिष्केशःपृथिव्यांपाजोऽअश्रेत् ॥ अयामितेनमऽउक्तिंजुषस्वऽऋतावस्तुभ्यंचेततेसहस्वः । विद्वाँऽआवक्षिविदुषोनिषत्सिमध्यऽआबर्हिरूतयेयजत्र ॥ द्रवतांतऽउषसावाजयंतीऽअग्नेवातस्यपथ्याभिरच्छ । यत्सीमंजंतिपूर्व्यंहविर्भिरावंधुरेवतस्थतुर्दुरोणे ॥ मित्रश्चतुभ्यंवरुणःसहस्वोग्नेविश्वेमरुतःसुम्नमर्चन् । यच्छोचिषासहसस्पुत्रतिष्ठाऽअभिक्षितीःप्रथयन्त्सूर्योनॄन् ॥ वयंतेऽअद्यररिमाहिकाममुत्तानहस्तानमसोपसद्य । यजिष्ठेनमनसायक्षिदेवानस्रेधतामन्मनाविप्रोऽअग्ने ॥ त्वद्धिपुत्रसहसोविपूर्वीर्देवस्ययंत्यूतयोविवाजाः । त्वंदेहिसहस्रिणंरयिंनोद्रोघेणवचसासत्यमग्ने ॥ तुभ्यंदक्षकविक्रतोयानीमादेवमर्तासोऽअध्वरेऽअकर्म । त्वंविश्वस्यसुरथस्यबोधिसर्वंतदग्नेऽअमृतस्वदेह ॥ १४ ॥ ( ३।२।३ ) विपाजसापृथुनाशोशुचानोबाधस्वद्विषोरक्षसोऽअमी

॥ ४ ॥

---

ग्निरनुष्टुप्।(३।२।२)आहोतेतिसप्तर्चस्यसूक्तस्यवैश्वामित्रऋषभोग्निस्त्रिष्टुप् ।(३ २ ३)विपाजसेतिसप्तर्चस्यसूक्तस्यकात्यउत्कीलोग्निस्त्रिष्टुप्।

वाः । सुशर्मणोबृहतःशर्मणिस्यामग्नेरहंसुहवस्यप्रणीतौ । त्वंनोऽअस्याऽउषसोव्युष्टौत्वंसूरऽउदितेबोधिगोपाः । जन्मेवनित्यंतनयंजुषस्वस्तोमंमेऽअग्नेतन्वासुजात ॥ त्वंनृचक्षावृषभानुपूर्वीःकृष्णास्वग्नेऽअरुषोविभाहि । वसोनेषिचपर्षिचात्यंहःकृधीनोरायऽउशिजोयविष्ठ ॥ अषाळ्होऽअग्नेवृषभोदिदीहिपुरोविश्वाःसौभगासंजिगीवान् । यज्ञस्यनेताप्रथमस्यपायोर्जातवेदोबृहतःसुप्रणीते ॥ अच्छिद्राशर्मजरितःपुरूणिदेवाँऽअच्छादीद्यानःसुमेधाः । रथोनसस्निरभिवक्षिवाजमग्नेत्वंरोदसीनःसुमेके ॥ प्रपीपयवृषभजिन्ववाजानग्नेत्वंरोदसीनःसुदोघे । देवेभिर्देवसुरुचारुचानोमानोमर्तस्यदुर्मतिःपरिष्ठात् ॥ इळामग्ने० ॥ १५ ॥ ( ३।२।४ ) अयमग्निःसुवीर्यस्येशेमहःसौभगस्य । रायऽईशेस्वपत्यस्यगोमतऽईशेवृत्रहथानां ॥ इमंनरोमरुतःसश्चतावृधंयस्मिन्रायःशेवृधासः । अभियेसंतिपृतनासुदूढ्योविश्वाहाशत्रुमादभुः+ ॥ सत्वंनोरायःशिशीहिमीढ्वोऽअग्नेसुवीर्यस्य । तुविद्युम्नवर्षिष्ठस्यप्रजावतोनमीवस्यशुष्मिणः ॥ चक्रिर्योविश्वाभुवनाभिसासहिश्चक्रिर्देवेष्वादुवः । आदेवेषुयततऽआसुवीर्यऽआशंसऽउतनृणां+ ॥ मानोऽअग्नेमतयेमावीरतायैरीरधः । मागोतायैसहसस्पुत्रमानिदेपद्वेषांस्याकृधि ॥ शग्धिवाजस्यसुभगप्रजावतोग्नेबृहतोऽअध्वरे । संराया

---

( ३।२।४ ) अयमग्निरितिषड्टचस्यसूक्तस्यकात्यउत्कीलोग्निःआद्यातृतीयापंचम्योबृहत्यःद्वितीयाचतुर्थीषष्ठ्यःसतोबृहत्यः।

भूर्यसास्तृजमयोभुनातुविंद्युम्नयशस्वता ॥ १६ ॥ ( ३।२।५ ) समिध्यमानःप्रथमानुधर्मासमक्तुभिरज्यतेविश्ववारः । शोचिष्केशोघृतनिर्णिकपावकःसुयज्ञोऽअग्निर्यजथायदेवान्+ ॥ यथायजोहोत्रमग्नेपृथिव्यायथादिवोजातवेदश्चिकित्वान् । एवानेनहविषायक्षिदेवान्मनुष्वद्यज्ञंप्रतिरेममद्य+ ॥ त्रीण्यायूंषितवजातवेदस्तिस्रऽआजानीरुषसस्तेऽअग्ने । ताभिर्देवानामवोयक्षिविद्वानथाभवयजमानायशंयोः+ ॥ अग्निंसुदीतिंसुदृशंगृणंतोनमस्यामस्त्वेड्यंजातवेदः । त्वांदूतमरतिंहव्यवाहंदेवाऽअकृण्वन्नमृतस्यनाभिं ॥ यस्त्वद्धोतापूर्वोऽअग्नेयजीयान्द्विताचसत्तास्वधयाचशंभुः । तस्यानुधर्मप्रयजाचिकित्वोथानोधाऽअध्वरंदेववीतौ ॥ १७ ॥ ( ३।२।६ ) भवानोऽअग्नेसुमनाऽउपेतौसखेवसख्येपितरेवसाधुः । पुरुद्रुहोहिक्षितयोजनानांप्रतिप्रतीचीर्दहतादरातीः ॥ तपोष्वग्नेऽअंतराँऽअमित्रान्तपाशंसमररुषःपरस्य । तपोवसोचिकितानोऽअचित्तान्वितेतिष्ठंतामजराऽअयासः ॥ इध्मेनाग्नऽइच्छमानोघृतेनजुहोमिहव्यंतरसेबलाय । यावदीशेब्रह्मणावंदमानऽइमांधियंशतसेयायदेवीं+ ॥ उच्छोचिषासहसस्पुत्रस्तुतोबृहद्वयःशशमानेषुधेहि । रेवदग्नेविश्वामित्रेषुशंयोर्मर्मृज्मातेतन्वं१भूरिकृत्वः ॥ कृधिरत्नंसुसनितर्धनानांसघेदग्नेभवसियत्समिद्धः । स्तोतुर्दुरोणे



---

( ३।२।५ ) समिध्यमानइतिपंचर्चस्यसूक्तस्यवैश्वामित्रःकतोग्निस्त्रिष्टुप् । ( ३।२।६ ) भवानइतिपंचर्चस्यसूक्तस्यवैश्वामित्रःकतोग्निस्त्रिष्टुप् ।

सुभगस्यरेवत्सृप्राकुरस्त्रादधिषेवपूंषि ॥ १८ ॥ ( ३।२।७ ) अग्निंहोतारंप्रवृणेमियेधेगृत्संकविंविश्वविदममूरं । सनोयक्षद्देवतातायजीयान्रायेवाजायवनतेमघानि ॥ प्रतेऽअग्नेहविष्मतीमियर्म्यच्छासुद्युम्नारातिनींघृताचीं ॥ प्रदक्षिणिद्देवतातिमुराणःसंरातिभिर्वसुभिर्यज्ञमश्रेत् ॥ सतेजीयसामनसात्वोतऽउतशिक्षस्वपत्यस्यशिक्षोः । अग्नेरायोनृतमस्यप्रभूतौभूयामतेसुष्टुतयश्चवस्वः ॥ भूरीणिहित्वेदधिरेऽअनीकाग्नेदेवस्ययज्यवोजनासः । सऽआवहदेवतातिंयविष्ठशर्धोयदद्यदिव्यंयजासि ॥ यत्त्वाहोतारमनजन्मियेधेनिषादयंतोयजथायदेवाः । सत्वंनोऽअग्नेवितेहबोध्यधिश्रवांसिधेहिनस्तनूषु ॥ १९ ॥ ( ३।२।८ ) अग्निमुषसमश्विनादधिक्रांव्युष्टिषुहवतेवह्निरुक्थैः । सुज्योतिषोनःशृण्वंतुदेवाःसजोषसोऽअध्वरंवावशानाः+ ॥ अग्नेत्रीतेवाजिनात्रीषधस्थातिस्रस्तेजिह्वाऽऋतजातपूर्वीः । तिस्रऽउतेतन्वोदेववातास्ताभिर्नःपाहिगिरोऽअप्रयुच्छन् । अग्नेभूरीणितवजातवेदोदेवस्वधावोमृतस्यनाम । याश्चमायामायिनांविश्वमिन्वत्वेपूर्वीःसंदधुःपृष्टबंधो ॥ अग्निर्नेताभगऽइवक्षितीनांदैवीनांदेवऽऋतुपाऽऋतावा । सवृत्रहासनयोविश्ववेदाःपर्षद्विश्वातिदुरितागृणंतं ॥ दधिक्राममग्निमुषसंचदेवींबृहस्पतिंसवितारंचदेवं । अश्विनामित्रावरुणाभगंचवसूंरुद्राँऽ

---

( ३।२।७ ) अग्निंहोतारमितिपंचर्चस्यसूक्तस्यकौशिकोगाथ्यग्निस्त्रिष्टुप् । ( ३।२।८ ) अग्निमुषसमितिपंचर्चस्यसूक्तस्यकौशिको गाथ्यग्निःआद्यांत्ययोर्विश्वेदेवास्त्रिष्टुप् ।

ऋक्सं. अ.३अ.१ ॥ ६ ॥

आदित्याँऽइहहुंवे ॥ २० ॥ ( ३।२।९ ) इमंनोयज्ञममृतेषुधेहीमाहव्याजातवेदोजुषस्व । स्तोकानामग्नेमेदसोघृतस्यहोतःप्राशानप्रथमोनिषद्य ॥ घृतवंतःपावकतेस्तोकाश्चोतंतिमेदसः । स्वधर्मन्देववीतयेश्रेष्ठंनोधेहिवार्यं ॥ तुभ्यंस्तोकाघृतश्चुतोग्नेविप्रायसंत्य । ऋषिःश्रेष्ठःसमिध्यसेयज्ञस्यप्राविताभव ॥ तुभ्यंश्चोतंत्यध्रिगोऽशचीवःस्तोकासोऽअग्नेमेदसोघृतस्य । कविशस्तोबृहताभानुनागाहव्याजुषस्वमेधिर ॥ ओजिष्ठंतेमध्यतोमेदऽउद्धृतंप्रतेवयंददामहे । श्चोततितेवसोस्तोकाऽअधित्वचिप्रतितान्देवशोविहि ॥ २१ ॥ ( ३।२।१० ) अयंसोऽअग्निर्यस्मिन्त्सोममिंद्रःसुतंदधेजठरेवावशानः । सहस्रिणंवाजमत्यंनसप्तिंससवान्त्सन्त्स्तूयसेजातवेदः ॥ अग्नेयत्तेदिविवर्चःपृथिव्यांयदोषधीष्वप्स्वायजत्र । येनांतरिक्षमुर्वाततंथत्वेषःसभानुरर्णवोनृचक्षाः ॥ अग्नेदिवोऽअर्णमच्छाजिगास्यच्छादेवाँऽऊचिषेधिष्ण्याये । यारोचनेपरस्तात्सूर्यस्ययाश्चावस्तादुपतिष्ठंतऽआपः ॥ पुरीष्यासोऽअग्नयःप्रावणेभिःसजोषसः । जुषंतांयज्ञमद्रुहोनमीवाऽइषोमहीः+ ॥ इळामग्ने० ॥ २२ ॥ ( ३।२।११ ) निर्मथितःसुधितऽआसधस्थेयुवाकविरध्वरस्य

( ३।२।९ ) इमंनइतिपंचर्चस्यसूक्तस्यकौशिकोगाथ्यग्निःआद्यात्रिष्टुप्द्वितीयातृतीयेनुष्टुभौचतुर्थीविराड्रूपांत्यासतोबृहती । ( ३।२।१० ) अयंसइतिपंचर्चस्यसूक्तस्यकौशिकोगाथ्यग्निरुपांत्यायाःपुरीष्याग्नयस्त्रिष्टुप्चतुर्थ्यनुष्टुप् । ( ३।२।११ ) निर्मथितइतिपंचर्चस्यसूक्तस्यभारतौदेवश्रवोदेववातावग्निस्त्रिष्टुप्तृतीयासतोबृहती ।

मंडलं ३ अनु. २ ॥ ६ ॥

प्रणेता । जूर्यत्स्वग्निरजरोवनेष्वत्रादधेऽअमृतंजातवेदाः ॥ अमंथिष्टांभारतारेवदग्निंदेवश्रवादेववातःसुदक्षं । अग्नेविपश्यबृहताभिरायेषांनोनेताभवतादनुद्यून्+ ॥ दशक्षिपःपूर्व्यंसीमजीजनन्त्सुजातंमातृषुप्रियं । अग्निंस्तुहिदैववातंदेवश्रवोयोजनानामसद्वशी+ ॥ निर्त्वादधेवरऽआपृथिव्याऽइळायास्पदेसुदिनत्वेऽअह्नां । दृषद्वत्यांमानुषऽआपयायांसरस्वत्यांरेवदग्नेदिदीहि ॥ इळामग्ने० ॥ २३ ॥ ( ३।२।१२ ) अग्नेसहस्वपृतनाऽअभिमातीरपास्य । दुष्टरस्तरन्नरातीर्वर्चोधायज्ञवाहसे ॥ अग्नऽइळासमिध्यसेवीतिहोत्रोऽअमर्त्यः । जुषस्वसूनोऽअध्वरं+ ॥ अग्नेद्युम्नेनजागृवेसहसःसूनवाहुत । एदंबर्हिःसदोमम ॥ अग्नेविश्वेभिरग्निभिर्देवेभिर्महयागिरः । यज्ञेषुयऽउचायवः ॥ अग्नेदादाशुषेरयिंवीरवंतंपरीणसं । शिशीहिनःसूनुमतः ॥ २४ ॥ ( ३।२।१३ ) अग्नेदिवःसूनुरसिप्रचेतास्तनापृथिव्याऽउतविश्ववेदाः । ऋधग्देवाँऽइहयजाचिकित्वः ॥ अग्निःसनोतिवीर्याणिविद्वान्त्सनोतिवाजममृतायभूषन् । सनोदेवाँऽएहवहापुरुक्षो ॥ अग्निर्द्यावापृथिवीविश्वजन्येऽआभातिदेवीऽअमृतेऽअमूरः । क्षयन्वाजैःपुरुश्चंद्रोनमोभिः ॥ अग्नऽइंद्रश्चदाशुषोदुरोणेसुतावतोयज्ञमिहोपयातं । अमर्धंतासोमपेयायदेवा ॥ अग्नेऽअपांसमिध्यसेदुरोणेनित्यःसूनोसहसोजातवेदः । सधस्था

---

( ३।२।१२ ) अग्नेसहस्वेतिपंचर्चस्यसूक्तस्यगाथिनोविश्वामित्रोग्निर्गायत्रीआद्यानुष्टुप् । ( ३।२।१३ ) अग्नेदिवइतिपंचर्चस्यसूक्तस्य गाथिनोविश्वामित्रोग्निश्चतुर्थ्याइंद्राग्नीविराट् ।

क्रमं. | अ.३अ १ | ॥ ७ ॥

मंडलं ३ | अनु. २ | ॥ ७ ॥

निमृहर्यमानऽऊती+ ॥ २५ ॥ ( ३।२।१४ ) वैश्वानरंमनसाग्निंनिचाय्याहविष्मंतोऽअनुषत्यंस्वर्विदं । सुदानुंदेवं
रथिरंवसूयवोगीर्भीरण्वंकुशिकासोहवामहे ॥ तंशुभ्रमग्निमवसेहवामहेवैश्वानरंमातरिश्वानमुक्थ्यं । बृहस्पतिंमनु
षोदेवतातयेविप्रंश्रोतारमतिथिंरघुष्यदं ॥ अश्वोनक्रंदन्जनिभिःसमिध्यतेवैश्वानरःकुशिकेभिर्युगेयुगे । सनोऽअग्निः
सुवीर्यंस्वश्व्यंदधातुरत्नममृतेषुजागृविः ॥ प्रयंतुवाजास्तविषीभिरग्नयःशुभेसंमिश्लाःपृषतीरयुक्षत । बृहदुक्षोमरुतो
विश्ववेदसःप्रवेपयंतिपर्वताँऽअदाभ्याः ॥ अग्निश्रियोमरुतोविश्वकृष्टयऽआत्वेषमुग्रमवऽईमहेवयं । तेस्वानिनोरुद्रि
यावर्षनिर्णिजःसिंहानहेषक्रतवःसुदानवः ॥ २६ ॥ व्रातंव्रातंगणंगणंसुशस्तिभिरग्नेर्भामंमरुतामोजऽईमहे । पृषदश्वासो
ऽअनवभ्रराधसोगंतारोयज्ञंविदथेषुधीराः ॥ अग्निरस्मिजन्मनाजातवेदाघृतंमेचक्षुरमृतंमऽआसन् । अर्कस्त्रिधातू
रजसोविमानोजस्रोघर्मोहविरस्मिनाम ॥ त्रिभिःपवित्रैरपुपोध्य१र्कंहृदामतिंज्योतिरनुप्रजानन् । वर्षिष्ठंरत्नमकृतस्व
धाभिरादिद्द्यावापृथिवीपर्यपश्यत् ॥ शतधारमुत्समक्षीयमाणंविपश्चितंपितरंवक्त्वानां । मेळिंमदंतंपित्रोरुपस्थेतंरो
दसीपिपृतंसत्यवाचं ॥ २७ ॥ ( ३।२।१५ ) प्रवोवाजाऽअभिद्यवोहविष्मंतोघृताच्या । देवान्जिगातिसुम्नयुः+ ॥

---

( ३।२।१४ ) वैश्वानरमितिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रःआद्यानांतिसृणांवैश्वानरोग्निश्चतुर्थ्यादितिसृणांमरुतःसप्तम्यष्टम्योरात्मा
अंत्यायाउपाध्यायःआद्याःषड्जगत्योंत्यास्तिस्त्रिष्टुभः । ( ३।२।१५ ) प्रवोवाजाइतिपंचदशर्चस्यसूक्तस्यगाथिनोविश्वामित्रोग्निःआद्याया

ईळेऽअग्निंविपश्चितंगिरायज्ञस्यसाधनं । श्रुष्टीवानंधितावानं ॥ अग्नेशकेमतेवयंयमंदेवस्यवाजिनः । अतिद्वेषांसित
रेम ॥ समिध्यमानोऽअध्वरे३ग्निःपावकऽईड्यः । शोचिष्केशस्तमीमहे ॥ पृथुपाजाऽअमर्त्योघृतनिर्णिक्स्वाहुतः ।
अग्निर्यज्ञस्यहव्यवाट्+ ॥ २८ ॥ तंसबाधोयतस्रुचऽइत्थाधियायज्ञवंतः । आचक्रुरग्निमूतये ॥ होतादेवोऽअमर्त्यः
पुरस्तादेतिमायया । विदथानिप्रचोदयन् ॥ वाजीवाजेषुधीयतेध्वरेषुप्रणीयते । विप्रोयज्ञस्यसाधनः ॥ धियाचक्रेव
रेण्योभूतानांगर्भमादधे । दक्षस्यपितरंतना ॥ नित्वादधेवरेण्यंदक्षस्येळासहस्कृत । अग्नेसुदीतिमुशिजं ॥ २९ ॥
अग्निंयंतुरमप्तुरमृतस्ययोगेवनुषः । विप्रावाजैःसमिंधते ॥ ऊर्जोनपातमध्वरेदीदिवांसमुपद्यवि । अग्निमीळेकविक्र
तुं ॥ ईळेन्योनमस्यस्तिरस्तमांसिदर्शतः । समग्निरिध्यतेवृषा ॥ वृषोऽअग्निःसमिध्यतेश्वोनदेववाहनः । तंहविष्मंत
ऽईळते ॥ वृषणंत्वावयंवृषन्वृषणःसमिधीमहि । अग्नेदीद्यतंबृहत्+ ॥ ३० ॥ ( ३।२।१६ ) अग्नेजुषस्वनोहविःपुरो
ळाशंजातवेदः । प्रातःसावेधियावसो ॥ पुरोळाऽअग्नेपचतस्तुभ्यंवाघापरिष्कृतः । तंजुषस्वयविष्ठ्य ॥ अग्नेवीहिपु
रोळाशमाहुतंतिरोऽअह्न्यं । सहसःसूनुरस्यध्वरेहितः+ ॥ माध्यंदिनेसवनेजातवेदःपुरोळाशमिहकवेजुषस्व । अग्नेय
ह्वस्यतवभागधेयंनप्रमिनंतिविदथेषुधीराः ॥ अग्नेतृतीयेसवनेहिकानिषःपुरोळाशंसहसःसूनवाहुतं । अथादेवेष्वध्वरं

ऋतवोवागायत्री । ( ३।२।१६ ) अग्नेजुषस्वेतिषड्चस्यसूक्तस्यगाथिनोविश्वामित्रोग्निर्गायत्रीतृतीयोष्णिक्चतुर्थीत्रिष्टुप्पंचमीजगती ।

विपन्यया धारत्वंतममृतेषु जागृविं ॥ अग्नेवृधानऽआहुतिंपुरोळाशंजातवेदः । जुषस्वतिरोऽअह्न्यं ॥२१॥ ( ३।२।१७ ) अस्तीदमधिमंथनमस्तिप्रजननंकृतं । एतांविश्पत्नीमाभराग्निंमंथामपूर्वथा ॥ अरण्योर्निहितोजातवेदागर्भऽइवसुधितोगर्भिणीषु । दिवेदिवऽईड्योजागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः+ ॥ उत्तानायामवभराचिकित्वान्त्सद्यःप्रवीतावृषणंजजान । अरुषस्तूपोरुशदस्यपाजऽइळायास्पुत्रोवयुनेजनिष्ट ॥ इळायास्त्वापदेवयंनाभापृथिव्याऽअधि । जातवेदोनिधीमह्यग्नेहव्यायवोळ्हवे ॥ मंथतानरःकविमद्वयंतंप्रचेतसममृतंसुप्रतीकं । यज्ञस्यकेतुंप्रथमंपुरस्तादग्निंनरोजनयतासुशेवं ॥ २२ ॥ यदीमंथंतिबाहुभिर्विरोचतेश्वोनवाज्यरुषोवनेष्वा । चित्रोनयामन्नश्विनोरनिवृतःपरिवृणक्त्यश्मनस्तृणादहन् ॥ जातोऽअग्नीरोचतेचेकितानोवाजीविप्रःकविशस्तःसुदानुः । यंदेवासऽईड्यंविश्वविदंहव्यवाहमदधुरध्वरेषु ॥ सीदहोतःस्वऽउलोकेचिकित्वान्त्सादयायज्ञंसुकृतस्ययोनौ । देवावीर्देवान्हविषायजास्यग्नेबृहद्यजमानेवयोधाः ॥ कृणोतधूमंवृषणंसखायोस्रेधंतऽइतनवाजमच्छ । अयमग्निःपृतनाषाट्सुवीरोयेनदेवासोऽअसहंतदस्यून् ॥ अयंतेयोनिर्ऋत्वियोयतोजातोऽअरोचथाः । तंजानन्नग्नऽआसीदाथानोवर्धयागिरः ॥ २३ ॥ तनूनपा

( ३।२।१७ ) अस्तीदमितिषोळशर्चस्यसूक्तस्यगाथिनोविश्वामित्रोग्निस्त्रिष्टुप् ( पंचम्याऋत्विजोवा ) आद्यचतुर्थीदशमीद्वादश्योनुष्टुभःषष्ठ्येकादशीपंचदश्योजगत्यः ।

दुच्यतेगर्भंऽआसुरोनराशंसोभवतियद्विजायते । मातरिश्वायदमिमीतमातरिवातंस्यसर्गोंऽअभवत्सरीमणि ॥ सुनिर्मथानिर्मथितःसुनिधानिहितःकविः । अग्नेस्वध्वराकृणुदेवान्देवयतेयज ॥ अजीजनन्नमृतंमर्त्यासोस्रेमाणंतरणिंवीळुजंभं । दशस्वसारोऽअग्रुवःसमीचीःपुमांसंजातमभिसंरभंते ॥ प्रसप्तहोतासनकादरोचतमातुरुपस्थेयदशोचदूधनि । ननिमिषतिसुरणोदिवेदिवेयदसुरस्यजठरादजायत ॥ अमित्रायुधोमरुतामिवप्रयाःप्रथमजाब्रह्मणोविश्वमिद्विदुः । द्युम्नवद्ब्रह्मकुशिकासऽएरिरऽएकंऽएकोदमेंऽअग्निंसमीधिरे ॥ यदुद्यत्वाप्रयतियज्ञेऽअस्मिन्होतश्चिकित्वोवृणीमहीह । ध्रुवमयाध्रुवमुताशमिष्ठाःप्रजानन्विद्वाँऽउपयाहिसोमं ॥ ३४ ॥ ॥ इतितृतीयाष्टकेप्रथमोऽध्यायः ॥ १ ॥

## तृतीयाष्टकेसूक्तानि १२२ ऋचः १२०९

सप्तदशाध्याये वर्गाः ३४ सूक्तानि २३ ऋचः १७६ ॥ त्यागः ॥ अग्नयइदं. ११ यूपायेदं. ५ यूपेभ्यं. ५ व्रश्चनाय. १ अग्नय. २७ इंद्राग्निभ्या. ९ अग्नय. ४२ विश्वेभ्योदेवेभ्य. अग्नय ३ विश्वेभ्योदेवेभ्य. अग्नय. ८ पुरीष्येभ्योग्निभ्य. अग्नय. १४ अग्नींद्राभ्यामि. अग्नय. वैश्वानरायाग्नय. ३ मरुद्भ्योग्निभ्य. ३ आत्मन. २ उपाध्यायाये. अग्नय. ३७ ॥ इतितृतीयेप्रथमः ॥ १ ॥ ( १ आदित्यारुद्रा-इत्यस्याअष्टम्याविश्वेदेवता । )

इच्छंतिद्व्यधिकैंद्रंशासत्कुशिकोविश्वामित्रएववांश्रुतोरिंद्रसोमंत्र्यूनांप्रपर्वतानांसप्तोनांसंवादोनदीभिर्विश्वामि
त्रस्योत्तितीर्षोस्तत्रनदीवाक्यंचतुर्थीषष्ठ्यष्टमीदशम्यंःषष्ठीसप्तम्योस्त्विंद्रस्तुतिरंत्यानुष्टुविंद्रःपूर्भिदेकादशांति
ष्ठाहरीइमामूर्षूपांत्यांघोरोपश्यंत्सानिर्दहेच्छस्यमानेतिश्रूयतेवात्रेहत्यायगायत्रमंत्यानुष्टुबभितष्टेवदशप्रजाप
तिःसवैश्वामित्रोवाच्योवाद्वौवातौनवैकोपींद्रंमतिर्नव ॥ १ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ ( ३।३।१ ) इच्छंतित्वासोम्यासःसखायःसुन्वंतिसोमंदधतिप्रयांसि । तितिंक्षंतेऽअभिशंस्तिंज
नानामिंद्रत्वदाकश्चनहिप्रकेतः+ ॥ नतेदूरेपरमाचिद्रजांस्यातुप्रयाहिहरिवोहरिभ्यां । स्थिरायवृष्णेसवनाकृतेमायु
क्ताग्रावाणःसमिधानेऽअग्नौ+ ॥ इंद्रःसुशिप्रोमघवातरुत्रोमहाव्रातस्तुविकूर्मिर्ऋघावान् । यदुग्रोधाबाधितोमर्त्येषुक्व१
त्यातेवृषभवीर्याणि ॥ त्वंहिष्मांच्यावयन्नच्युतान्येकोवृत्राचरसिजिघ्नमानः । तवद्यावापृथिवीपर्वतासोनुंव्रतायनि
मितेवतस्थुः ॥ उताभयेपुरुहूतश्रवोभिरेकोदृह्ळमवदोवृत्रहासन् । इमेचिदिंद्ररोदसीऽअपारेयत्संगृभ्णामघवन्काशि
रित्ते ॥ १ ॥ प्रसूनंऽइंद्रप्रवताहरिभ्यांप्रतेवज्रःप्रमृणन्नेतुशत्रून् । जहिप्रतीचोऽअनूचःपराचोविश्वंसत्यंकृणुहिविष्टम
स्तु ॥ यस्मैधायुरदधामर्त्यायाभक्तंचिद्भजतेगेह्यं१सः । भद्रातेऽइंद्रसुमतिर्घृताचीसहस्रदानापुरुहूतरातिः+ ॥



---

( ३।३।१ ) इच्छंतित्वेतिद्वाविंशत्यृचस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् ।

सुहदानुपुरुहूतक्षियंतंमहुस्तामिंद्रुसंपिंणक्कुणारुं । अभिवृत्रंवर्धमानंपियारुमपादमिंद्रतवसांजघंथ ॥ निसा
मनामिंषिरामिंद्रभूमिंमहीमपारांसदनेससत्थ । अस्तभ्नाद्द्यांवृषभोऽअंतरिक्षमर्षन्त्वापस्त्वयेहप्रसूताः ॥ अलातृणो
वलऽइंद्रव्रजोगोःपुराहंतोर्भयमानोव्यार । सुगान्पथोऽअकृणोन्निरजेगाःप्रावन्वाणीःपुरुहूतंधमंतीः ॥ २ ॥
एकोद्वेवसुमतीसमीचीऽइंद्रऽआपप्रौपृथिवीमुतद्यां । उतांतरिक्षादभिनःसमीकऽइषोरथीसयुजःशूरवाजान् ॥ दि
शःसूर्योनमिनातिप्रदिष्टादिवेदिवेहर्यश्वप्रसूताः । संयदानळध्वनऽआदिदश्वैर्विमोचनंकृणुतेतत्त्वस्य ॥ दिद्दक्षंतऽउ
षसोयामन्नक्तोर्विवस्वत्यामहिंचित्रमनीकं । विश्वेजानंतिमहिनायदागादिंद्रस्यकर्मसुकृतापुरूणि ॥ महिज्योतिर्निहि
तंवक्षणास्वामापक्वंचरतिबिभ्रतीगौः । विश्वंस्वाद्मसंभृतमुस्रियायांयत्सीमिंद्रोऽअदधाद्भोजनाय ॥ इंद्रदृह्यंयामकोशाऽअभूवन्यज्ञायशिक्षगृणतेसखिभ्यः । दुर्मायवोदुरेवामर्त्यासोनिषंगिणोरिपवोहंत्वासः ॥ ३ ॥ संघोषःशृण्वेवमैर
मित्रैर्जहीन्येष्वशनिंतपिष्ठां । वृश्चेमधस्ताद्विरुजासहस्वजहिरक्षोमघवन्रंधयस्व ॥ उद्वृहरक्षःसहमूलमिंद्रवृश्चामध्यंप्र
त्यग्रंशृणीहि । आकीवतःसललूकंचकर्थब्रह्मद्विषेतपुषिंहेतिमस्य ॥ स्वस्तयेवाजिभिश्चप्रणेतःसंयन्महीरिषऽआसत्सि
पूर्वीः । रायोवंतारोबृहतःस्यामास्मेऽअस्तुभगऽइंद्रप्रजावान् ॥ आनोभरभगमिंद्रद्युमंतंनितेदेष्णस्यधीमहिप्ररेके ।
ऊर्वऽइवपप्रथेकामोऽअस्मेतमापृणवसुपतेवसूनां ॥ इमंकामंमंदयागोभिरश्वैश्चंद्रवतारा धसापप्रथश्च । स्वर्यवोमति

भिस्तुभ्यंविप्राऽइंद्रायवाहःकुशिकासोऽअक्रन् ॥ आनोगोत्रादर्द्दहिगोपतेगाःसमस्मभ्यंसनयोयंतुवाजाः । दिवक्षाऽ
असिवृषभसत्यशुष्मोस्मभ्यंसुमघवन्बोधिगोदाः+ ॥ शुनंहुवेममघवानमिंद्रमस्मिन्भरेनृतमंवाजसातौ । शृण्वंतमुग्रमू
तयेसमत्सुघ्नंतंवृत्राणिसंजितंधनानां ॥ ४ ॥ ( ३।३।२ ) शासद्वह्निर्दुहितुर्नप्त्यंगाद्विद्वाँऽऋतस्यदीधितिंसपर्यन् ।
पितायत्रदुहितुःसेकमृंजन्त्संशग्म्येनमनसादधन्वे+ ॥ नजामयेतान्वोरिक्थमारैक्चकारगर्भंसनितुर्निधानं । यदी
मातरोजनयंतवह्निमन्यःकर्तासुकृतोरन्यऽऋंधन्+ ॥ अग्निर्जज्ञेजुह्वा३ रेजमानोमहस्पुत्राँऽअरुषस्यप्रयक्षे । महान्ग
र्भोमह्याजातमेषांमहीप्रवृद्धर्यश्वस्ययज्ञैः+ ॥ अभिजैत्रीरसचंतस्पृधानंमहिज्योतिस्तमसोनिरजानन् । तंजानतीःप्र
त्युदायन्नुषासःपतिर्गवामभवदेकऽइंद्रः ॥ वीळौसतीरभिधीराऽअतृंदन्प्राचाहिन्वमनसासप्तविप्राः । विश्वामविंद
न्पथ्यामृतस्यप्रजानन्नित्तानमसाविवेश ॥ ५ ॥ विदद्यदीसरमारुग्णमद्रेर्महिपाथःपूर्व्यंसध्र्यक्कः । अग्रंनयत्सुपद्यक्षरा
णामच्छारवंप्रथमाजानतीगात् ॥ अगच्छदुविप्रतमःसखीयन्नसूदयत्सुकृतेगर्भमद्रिः । ससानमर्योयुवभिर्मखस्यन्नथा
भवदंगिराःसद्योऽअर्चन् ॥ सतःसतःप्रतिमानंपुरोभूर्विश्वावेदजनिमाहंतिशुष्णं । प्रणोदिवःपदवीर्गव्युरर्चन्त्सखास
खीँऽरमुंचन्निरवद्यात्+ ॥ निर्गव्यतामनसासेदुरर्कैःकृण्वानासोऽअमृतत्वायगातुं । इदंचिन्नुसदनंभूर्येषांयेनमासाँऽ

( ३।३।२ ) शासद्वह्निरितिद्वाविंशत्यृचस्यसूक्तस्यैषीरथिःकुशिकइंद्रस्त्रिष्टुप् ।

असिंषासन्नृतेनं ॥ संपश्यमानाऽअमदन्नभिस्वंपयंःप्रत्नस्यरेतंसोदुघांनाः । विरोदंसीऽअतपद्घोषंऽएषांजातेनिष्ठामं
दंदुर्गोषुवीरान्+ ॥ ६ ॥ सजातेभिर्वृत्रहासेदुंहव्यैरुदुस्रियांऽअसृजदिंद्रोंऽअर्कैः । उरूच्यंस्मैघृतवद्भरंन्तीमधुस्वाद्मं
दुदुहेजेन्यागौः+ ॥ पित्रेचिंच्चक्रुःसदंनंसमंस्मैमहित्विषींमत्सुकृतोविहिख्यन् । विष्कभ्नंन्तःस्कंभंनेनाजनिंत्रीऽआसीं
नाऽऊर्ध्वंरंभसंविमिंन्वन् ॥ महीयदिंधिषणांशिश्नथेधात्संद्योवृधंविभ्वंंरोदंस्योः । गिरोयस्मिन्ननवद्याःसमीचीर्विं
श्वाऽइंद्रायतविंषीरनुंत्ताः ॥ मह्यातेंसख्यंवंश्मिशक्तीरावृंत्रघ्नेनियुतोंयंतिपूर्वीः । महिंस्तोत्रमवऽआगंन्मसूरेरस्माकंसुमं
घवन्बोधिगोपाः+ ॥ महिक्षेत्रंपुरुश्चंद्रंविंविद्वानादित्सखिंभ्यश्चरथंसमैरत् । इंद्रोनृभिंरजनद्दीद्यांनःसाकंसूर्यंमुषसंगा
तुमग्निं+ ॥ ७ ॥ अपश्चिंदेषविभ्वो३ दमूंनाःप्रसध्रीचींरसृजद्विश्वश्चंद्राः । मध्वंःपुनानाःकविभिंःपवित्रैर्द्युभिर्हिन्वंत्य
क्तुभिर्धनुंत्रीः ॥ अनुंकृष्णेवसुंधितीजिहातेऽउभेसूर्यंस्यमंहनायजंत्रे । परियत्तेंमहिमानंवृजध्यैसखांयऽइंद्रकाम्यांऽ
ऋजिप्याः+ ॥ पतिंर्भववृत्रहन्त्सूनृतांनांगिरांविश्वायुर्वृषभोवयोधाः । आनोगहिसख्येभिंःशिवेभिर्महान्महीभिंरू
तिभिंःसरण्यन्+ ॥ तमंगिरस्वन्नमंसासपर्यन्नव्यंकृणोमिसन्यंसेपुराजां । द्रुहोवियांहिबहुलाऽअदेंवीःस्वंश्चनोमघव
न्त्सातयेंधाः ॥ मिहंःपावकाःप्रतंताऽअभूवन्त्स्वस्तिनंःपिपृहिपारमांसां । इंद्रत्वंरंथिरःपाहिनोरिषोमक्षूमंक्षूकृणुहि
गोजितोंनः ॥ अदेंदिष्टवृत्रहागोपतिर्गाऽअंतःकृष्णाँऽअरुषैर्धामंभिर्गात् । प्रसूनृतांदिशमांनऽऋतेनदुरंश्चविश्वांऽअ

वृणोदपस्वाः ॥ शुनंहुवेममघवानमिंद्रं० ॥ ८ ॥ ( ३।३।३ ) इंद्रसोमंसोमपतेपिबेमंमाध्यंदिनंसवनंचारुयत्ते । प्रप्रुथ्याशिप्रेमघवन्नृजीषिन्विमुच्याहरीऽइहमादयस्व ॥ गवाशिरंमंथिनमिंद्रशुक्रंपिबासोमंररिमातेमदाय । ब्रह्मकृतामारुतेनागणेनसजोषारुद्रैस्तृपदावृषस्व ॥ येतेशुष्मंयेतविषीमवर्धन्नर्चंतऽइंद्रमरुतस्तऽओजः । माध्यंदिनेसवनेवज्रहस्तपिबारुद्रेभिःसगणःसुशिप्र ॥ तऽइन्न्वस्यमधुमद्विविप्रऽइंद्रस्यशर्धोमरुतोयऽआसन् । येभिर्वृत्रस्येषितोविवेदामर्मणोमन्यमानस्यमर्म ॥ मनुष्वदिंद्रसवनंजुषाणःपिबासोमंशश्वतेवीर्याय । सऽआववृत्स्वहर्यश्वयज्ञैःसरण्युभिरपोऽअर्णासिसर्षि ॥ ९ ॥ त्वमपोयद्धवृत्रंजघन्वाँऽअत्याँऽइवप्रासृजःसर्तवाजौ । शयानमिंद्रचरताबधेनवव्रिवांसंपरिदेवीरदेवं ॥ यजामऽइन्नमसावृद्धमिंद्रंबृहंतमृष्वमजरंयुवानं । यस्यप्रियेममतुर्यज्ञियस्यनरोदसीमहिमानंममाते ॥ इंद्रस्यकर्मसुकृतापुरूणिव्रतानिदेवानमिनंतिविश्वे । दाधारयःपृथिवींद्यामुतेमांजजानसूर्यमुषसंसुदंसाः ॥ अद्रोघसत्यंतवतन्महित्वंसद्योयज्जातोऽअपिबोहसोमं ! नद्यावऽइंद्रतवसस्तऽओजोनाहानमासाःशरदोवरंत ॥ त्वंसद्योऽअपिबोजातऽइंद्रमदायसोमंपरमेव्योमन् । यद्धद्यावापृथिवीऽआविवेशीरथाभवःपूर्व्यःकारुधायाः ॥ १० ॥ अहन्नहिंपरिशयानमर्णऽओजायमानंतुविजाततव्यान् । नतेमहित्वमनुभूदधद्यौर्यदन्ययास्फिग्याक्षामवस्थाः ॥ यज्ञोहितऽ



---

( ३।३।३ ) इंद्रसोममितिसप्तदशर्चस्यसूक्तस्यगाथिनोविश्वामित्रऋषिरिंद्रोदेवतात्रिष्टुप् ।

इंद्रवर्धनोभूदुतप्रियःसुतसोमोमियेधः । यज्ञेनंयज्ञमवयज्ञियःसन्यज्ञस्तेवज्रंमहिहत्यऽआवत् ॥ यज्ञेनेंद्रमवसाचक्रेऽ
अर्वागैनंसुम्नायनव्यंसेववृत्यां । यःस्तोमेभिर्वावृधेपूर्व्येभियोमध्यमेभिरुतनूतनेभिः ॥ विवेषयन्मांधिषणाजजानस्त
वैपुरापार्यादिंद्रमह्नः । अंहसोयत्रपीपरद्यथानोनावेवयांतमुभयेहवंते ॥ आपूर्णोऽअस्यकलशःस्वाहासेक्तेवकोशंसिसि
चेपिबध्यै । समुप्रियाऽआववृत्रन्मदायप्रदक्षिणिदभिसोमासऽइंद्रं ॥ नत्वांगभीरःपुरुहूतसिंधुर्नाद्रयःपरिषंतोवरंत ।
इत्थासखिभ्यऽइषितोयदिंद्राहृह्ळंचिदरुजोभव्यमूर्वं+ ॥ शुनंहुवेम० ॥ ११ ॥ ( ३।३।४ ) प्रपर्वतानामुशतीऽउप
स्थादश्वेऽइवविषितेहासमाने । गावेवशुभ्रेमातरारिहाणेविपाट्छुतुद्रीपयसाजवेते ॥ इंद्रेषितेप्रसवंभिक्षमाणेऽअ
च्छासमुद्रंरथ्येवयाथः । समाराणेऽऊर्मिभिःपिन्वमानेऽअन्यावामन्यामप्येतिशुभ्रे ॥ अच्छासिंधुंमातृतमामयासं
विपाशमुर्वींसुभगामगन्म । वत्समिवमातरासंरिहाणेसमानंयोनिमनुसंचरंती ॥ एनावयंपयसापिन्वमानाऽअनुयो
निंदेवकृतंचरंतीः । नवर्तवेप्रसवःसर्गतक्तःकिंयुर्विप्रोनद्योजोहवीति ॥ रमध्वंमेवचसेसोम्यायऽऋतावरीरुपमुहूर्त
मेवैः । प्रसिंधुमच्छाबृहतीमनीषावस्युरह्वेकुशिकस्यसूनुः+ ॥ १२ ॥ इंद्रोऽअस्माँऽअरदद्वज्रबाहुरपाहन्वृत्रंपरिधिं

( ३।३।४ ) प्रपर्वतानामितित्रयोदशर्चस्यसूक्तस्यगाथिनोविश्वामित्रःचतुर्थीषष्ठ्यष्टमीदशमीनांनदीऋषकानद्योदेवताःएनावयमेतद्वच
आतेकारोरितितिसृणांविश्वामित्रोदेवताइंद्रोअस्मानितिद्वयोरिंद्रस्त्रिष्टुबंत्यानुष्टुप् ।

नदीनां । देवोनयत्सविताासुपाणिस्तस्यवयंप्रसवेयामऽउर्वीः ॥ प्रवाच्यंशश्वधावीर्य१तदिंद्रस्यकर्मयदहिंविवृश्चत् । विवज्रेणपरिषदोजघानायन्नापोयनमिच्छमानाः ॥ एतद्वचोजरितर्मापिमृष्ठाऽआयत्तेघोषानुत्तरायुगानि । उक्थेषु कारोप्रतिनोजुषस्वमानोनिकःपुरुषत्रानमस्ते ॥ ओषुस्वसारःकारवेशृणोतययौवोदूरादनसारथेन । निषूनमध्वंभव तासुपाराऽअधोऽअक्षाःसिंधवःस्रोत्याभिः ॥ आतेकारोशृणवामावचांसिययाथदूरादनसारथेन । निंतेनंसैपी प्यानेवयोषामर्यायेवकन्याशश्वचैते ॥ १३ ॥ यदंगत्वाभरताःसंतरेयुर्गव्यन्ग्रामऽइषितऽइंद्रजूतः । अर्षादहप्र सवःसर्गतक्तऽआवोवृणेसुमतिंयज्ञियानां ॥ अतारिषुर्भरतागव्यवःसमभक्तविप्रःसुमतिंनदीनां । प्रपिन्वध्वमिषयं तीःसुराधाऽआवक्षणाःपृणध्वंयातशीभं ॥ उद्वऽऊर्मिःशम्याहंत्वापोयोक्राणिमुंचत । मादुष्कृतौव्येनसाघ्न्यौशूनमा रतां ॥ १४ ॥ ( ३।३।५ ) इंद्रःपूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानोविशत्रून् । ब्रह्मजूतस्तन्वावावृधानोभूरिदात्र ऽआपृणद्रोदसीऽउभे ॥ मखस्यतेतविषस्यप्रजूतिमियर्मिवाचममृतायभूषन् । इंद्रक्षितीनामसिमानुषीणांविशांदैवी नामुतपूर्वयावा ॥ इंद्रोवृत्रमवृणोच्छर्धनीतिःप्रमायिनाममिनाद्वर्पणीतिः । अहन्व्यंसमुशधग्वनेष्वाविर्धेनाऽअकृ णोद्राम्याणां ॥ इंद्रःस्वर्षाजनयन्नहानिजिगायोशिग्भिःपृतनाऽअभिष्टिः । प्रारोचयन्मनवेकेतुमह्नामविंदज्ज्योतिर्बृ



( ३।३।५ ) इंद्रःपूर्भिरित्येकादशर्चेस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् ।

हुतेरणाय ॥ इंद्रस्तुजोबर्हणाऽआविवेशनृवद्दधानोनर्यापुरूणि । अचेतयद्धियऽइमाजरित्रेप्रेमंवर्णमतिरच्छुक्रमासां ॥ १५ ॥ महोमहानिपनयंत्यस्येंद्रस्यकर्मसुकृतापुरूणि । वृजनेनवृजिनान्त्संपिपेषमायाभिर्दस्यूँरभिभूत्योजाः ॥ युधेंद्रोमह्नावरिवश्चकारदेवेभ्यःसत्पतिश्चर्षणिप्राः । विवस्वतःसदनेऽअस्यतानिविप्राऽउक्थेभिःकवयोगृणंति ॥ सत्रासाहंवरेण्यंसहोदांससवांसंस्वरपश्चदेवीः । ससानयःपृथिवींद्यामुतेमामिंद्रंमदंत्यनुधीरणासः ॥ ससानात्याँऽउतसूर्यं ससानेंद्रःससानपुरुभोजसंगां । हिरण्ययमुतभोगंससानहत्वीदस्यून्प्रार्यंवर्णमावत् ॥ इंद्रऽओषधीरसनोदहानिवनस्पतीँरसनोदंतरिक्षं । विभेदवलंनुनुदेविवाचोथाभवद्दमिताभिक्रतूनां ॥ शुनंहुवेम० ॥ १६ ॥ ( ३।३।६ ) तिष्ठाहरीरथऽआयुज्यमानायाहिवायुर्ननियुतोनोऽअच्छ । पिबास्यंधोऽअभिसृष्टोऽअस्मेऽइंद्रस्वाहाररिमातेमदाय ॥ उपाजिरापुरुहूतायसप्तीहरीरथस्यधूर्ष्वायुनज्मि । द्रवद्यथासंभृतंविश्वतश्चिदुपेमंयज्ञमावहातऽइंद्रं ॥ उपोनयस्ववृषणातपुष्पोतेमवत्वंवृषभस्वधावः । ग्रसैतामश्वाविमुंचेहशोणादिवेदिवेसदृशीरद्धिधानाः+ ॥ ब्रह्मणातेब्रह्मयुजायुनज्मि हरीसखायासधमादऽआशू । स्थिरंरथंसुखमिंद्राधितिष्ठन्प्रजानन्विद्वाँऽउपयाहिसोमं ॥ मातेहरीवृषणावीतपृष्ठानिरीरमन्यजमानासोऽअन्ये । अत्यायाहिशश्वतोवयंतेरंसुतेभिःकृणवामसोमैः ॥ १७ ॥ तवायंसोमस्त्वमेह्यर्वाङ्शश्व

( ३।३।६ ) तिष्ठाहरीइत्येकादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् ।

ऋक्सं.

अ.३अ.२

॥ १३ ॥

मंडलं ३

अनु. ३

त्तमंसुमनाऽअस्यपाहि । अस्मिन्यज्ञेबर्हिष्यानिषद्यादधिष्वेमंजठरऽइंदुमिंद्र ॥ स्तीर्णंतेबर्हिःसुतऽइंद्रसोमःकृताधाना ऽअत्तवेतेहरिभ्यां । तदोकसेपुरुशाकायवृष्णेमरुत्वतेतुभ्यंरातोहवींषि ॥ इमंनरःपर्वतास्तुभ्यमापःसमिंद्रगोभिर्मधु मंतमक्रन् । तस्यागत्यासुमनाऽऋष्वपाहिप्रजानन्विद्वान्पथ्याऽअनुस्वाः ॥ याँऽआभजोमरुतऽइंद्रसोमेयेत्वामवर्ध न्नभवन्गणस्ते । तेभिरेतंसजोषावावशानोऽग्नेःपिबजिह्वयासोममिंद्र ॥ इंद्रपिबस्वधयाचित्सुतस्याग्नेर्वापाहिजिह्वया यजत्र । अध्वर्योर्वाप्रयतंशक्रहस्ताद्धोतुर्वायज्ञंहविषोजुषस्व ॥ शुनंहुवेम० ॥ १८ ॥ ( ३।३।७ ) इमामूषुप्रभृतिंसा तयेधाःशश्वच्छश्वदूतिभिर्यादमानः । सुतेसुतेवावृधेवर्धनेभिर्यःकर्मभिर्महद्भिःसुश्रुतोभूत् ॥ इंद्रायसोमाःप्रदिवो विदानाऽऋभुर्येभिर्वृषपर्वाविहायाः । प्रयम्यमानान्प्रतिषूगृभायेंद्रपिबवृषधूतस्यवृष्णः ॥ पिबावर्धस्वतवघासुतास ऽइंद्रसोमासःप्रथमाऽउतेमे । यथापिबःपूर्व्याँऽइंद्रसोमाँऽएवापाहिपन्योऽअद्यानवीयान् ॥ महाँऽअमत्रोवृजनेविर प्श्युग्रंशवःपत्यतेधृष्ण्वोजः । नाहविव्याचपृथिवीचनैनंयत्सोमासोहर्यश्वममंदन् ॥ महाँऽउग्रोवावृधेवीर्यायसमा चक्रेवृषभःकाव्येन । इंद्रोभगोवाजदाऽअस्यगावःप्रजायंतेदक्षिणाऽअस्यपूर्वीः ॥ १९ ॥ प्रयत्सिंधवःप्रसवंयथाय न्नापःसमुद्रंरथ्येवजग्मुः ॥ अतश्चिदिंद्रःसदसोवरीयान्यदींसोमःपृणातिदुग्धोऽअंशुः ॥ समुद्रेणसिंधवोयादमानाऽ

॥ १३ ॥

---



( ३।३।७ ) इमामूष्वित्येकादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रोदशम्याआंगिरसोघोरइंद्रस्त्रिष्टुप् ।

इंद्रायसोमंसुषुतंभरंतः । अंशुंदुहंतिहस्तिनोभरित्रैर्मध्वःपुनंतिधारयापवित्रैः ॥ ह्रदाऽइवकुक्षयःसोमधानाःसमींवि व्याचसवनापुरूणि । अन्नायदिंद्रःप्रथमाव्याशवृत्रंजघन्वाँऽअवृणीतसोमं ॥ आतूभरमाकिरेतत्परिष्ठाद्विद्माहित्वा वसुपतिंवसूनां । इंद्रयत्तेमाहिनंदत्रमस्त्यस्मभ्यंतद्धर्यश्वप्रयंधि॥ अस्मेप्रयंधिमघवन्नृजीषिन्निंद्ररायोविश्ववारस्यभूरेः । अस्मेशतंशरदोजीवसेधाऽअस्मेऽवीरान्छश्वतऽइंद्रशिप्रिन् ॥ शुनंहुवेम० ॥ २० ॥ ( ३।३।८ ) वार्त्रहत्यायशवसेपृ तनाषाह्यायच । इंद्रत्वावर्तयामसि ॥ अर्वाचीनंसुतेमनऽउतचक्षुःशतक्रतो । इंद्रकृण्वंतुवाघतः ॥ नामानितेशतक्र तोविश्वाभिर्गीर्भिरीमहे । इंद्राभिमातिषाह्ये ॥ पुरुष्टुतस्यधामभिःशतेनमहयामसि । इंद्रस्यचर्षणीधृतः ॥ इंद्रंवृत्रा यहंतवेपुरुहूतमुपब्रुवे । भरेषुवाजसातये ॥ २१ ॥ वाजेषुसासहिर्भवत्वामीमहेशतक्रतो । इंद्रवृत्रायहंतवे ॥ द्युम्नेषु पृतनाज्येपृत्सुतूर्षुश्रवःसुच । इंद्रसाक्ष्वाभिमातिषु ॥ शुष्मिन्तमंनऽऊतयेद्युम्निनंपाहिजागृविं । इंद्रसोमंशतक्रतो ॥ इंद्रियाणिशतक्रतोयातेजनेषुपंचसु । इंद्रतानितऽआवृणे ॥ अगन्निंद्रश्रवोबृहद्द्युम्नंदधिष्वदुष्टरं । उत्तेशुष्मंतिरामसि ॥ अर्वावतोनऽआगह्यथोशक्रपरावतः । उलोकोयस्तेऽअद्रिवऽइंद्रेहततऽआगहि ॥ २२ ॥ ( ३।३।९ ) अभितष्टेवदी

---

( ३।३।८ ) वार्त्रहत्यायेत्येकादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रोगायत्रीअंत्यानुष्टुप् । ( ३।३।९ ) अभितष्टेवेतिदशर्चस्यसूक्तस्य वैश्वामित्रःप्रजापतिरिंद्रस्त्रिष्टुप् ( वाच्यःप्रजापतिर्वा [illegible] ) ।

धयामनीषामत्योनवाजीसुधुरोजिहानः । अभिप्रियाणिमर्मृशत्पराणिकवीँऽरिच्छामिसंदृशेसुमेधाः+ ॥ इनोतपृच्छ जनिमाकवीनांमनोधृतःसुकृतस्तक्षतद्यां । इमाऽउतेप्रण्योऽवर्धमानामनोवाताऽअधनुधर्मणिग्मन् ॥ निषीमिदत्रगुह्यादधानाऽउतक्षत्रायरोदसीसमंजन् । संमात्राभिर्ममिरेयेमुरुर्वीऽअंतर्महीसमृतेधायसेधुः ॥ आतिष्ठंतंपरिविश्वेऽअभूषञ्छ्रियोवसानश्चरतिस्वरोचिः । महत्तद्वृष्णोऽअसुरस्यनामाविश्वरूपोऽअमृतानितस्थौ ॥ असूतपूर्वोवृषभोज्यायानिमाऽअस्यशुरुधःसंतिपूर्वीः । दिवोनपाताविदथस्यधीभिःक्षत्रंराजानाप्रदिवोदधाथे ॥ २३ ॥ त्रीणिराजानाविदथेपुरूणिपरिविश्वानिभूषथःसदांसि । अपश्यमत्रमनसाजगन्वान्व्रतेगंधर्वाँऽअपिवायुकेशान् ॥ तदिन्न्वस्यवृषभस्यधेनोरानामभिर्ममिरेसक्म्यंगोः । अन्यदन्यदसुर्यंवसानानिमायिनोममिरेरूपमस्मिन् ॥ तदिन्न्वस्यसवितुर्नकिर्मेहिरण्ययीममतिंयामशिश्रेत् । आसुष्टुतीरोदसीविश्वमिन्वेऽअपीवयोषाजनिमानिवव्रे ॥ युवंप्रत्नस्यसाधथोमहोयदैवीस्वस्तिःपरिणःस्यातं । गोपाजिह्वस्यतस्थुषोविरूपाविश्वेपश्यंतिमायिनःकृतानि ॥ शुनंहुवेम० ॥ २४ ॥ (३।४।१) इंद्रंमतिर्हृदऽआवच्यमानाच्छापतिंस्तोमतष्टाजिगाति । याजागृविर्विदथेशस्यमानेंद्रयत्तेजायतेविद्धितस्य ॥ दिवश्चिदापूर्व्याजायमानाविजागृविर्विदथेशस्यमाना । भद्रावस्त्राण्यर्जुनावसानासेयमस्मेसनजापित्र्याधीः+ ॥ यमाचि



( ३।४।१ ) इंद्रंमातरितिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् ।

दत्रंयमसूरंसूतजिह्वायाऽअग्रंपतदाह्यस्थात् । वपूंषिजातामिथुनासंचेतेतमोहनातपुंशोबुध्नऽएता ॥ नकिंरेषांनिंदिता मर्त्येषुयेऽअस्माकंपितरोगोषुयोधाः । इंद्रंऽएषांदृंहितामाहिंनावानुद्गोत्राणिससृजेदंसनावान् ॥ सखाहयत्रसखिभिर्न वग्वैरभिज्वासत्वभिर्गाऽअनुग्मन् । सत्यंतदिंद्रोदशभिर्दशग्वैःसूर्यंविवेदतमसिक्षियंतं ॥ २५ ॥ इंद्रोमधुसंभृतमुस्रियायांपद्वद्विवेदशफवन्नमेगोः । गुहाहितंगुह्यंगूळ्हमप्सुहस्तेदधेदक्षिणेदक्षिणावान् ॥ ज्योतिर्वृणीततमसोविजानन्नारेस्या मदुरितादभीके । इमागिरःसोमपाःसोमवृद्धजुषस्वेंद्रपुरुतमस्यकारोः+ ॥ ज्योतिर्यज्ञायरोदसीऽअनुष्यादारेस्यामदुरितस्यभूरेः । भूरिंचिद्धितुजतोमर्त्यस्यसुपारासोवसवोबर्हणावत् ॥ शुनं० ॥ २६ ॥ इतितृतीयाष्टकेद्वितीयोध्यायः ॥ २ ॥

अष्टादशाध्याये वर्गाः २६ सूक्तानि १० ऋचः १३७ ॥ त्यागः ॥ इंद्रायेदं. ६१ नदीभ्य. ३ विश्वामित्रा. नदीभ्य. इंद्राये. २ विश्वामित्राये. नदीभ्य. विश्वामित्राये. नदीभ्य. ३ इंद्राये. ६३ ॥ तृतीयेद्वितीयः ॥ २ ॥

इंद्रत्वागायत्रंह्यांतूनउपनआयाह्यष्टावयंतेपंचबार्हतंत्वामंद्रैर्युध्मस्यमरुत्वान्त्सद्योहशंसामहामिंद्रःस्वाहाचर्षणीधृतं द्वादशाद्यांत्यौतृचौजागतगायत्रौधानावंतमष्टौपूर्वार्धगायत्रंषष्ठीजगतींद्रापर्वताचतुर्विंशतिराद्यैंद्रापार्वतीपंचदश्या दिद्वेवाचैससर्पर्यैचतस्रोरथांगस्तुतयोंत्याअभिशापार्थास्तावसिष्ठद्वेषिण्योनवसिष्ठाःशृण्वंतिदशमीषोळश्यौजगत्यौ त्रयोदशीगायत्रींद्वादशीविंशीद्वाविंश्योनुष्टुभौष्टादशीबृहतींसंमहेह्यधिकोक्तगोत्रःप्रजापतिर्हिवैश्वदेवंहोषसः ॥१॥

॥ हरिःओम् ॥ ( ३।४।२ ) इंद्रंत्वावृषभंवयंसुतेसोमेहवामहे । सपाहिमध्वोऽअंधसः ॥ इंद्रक्रतुविदंसुतंसोमं हर्यपुरुष्टुत । पिबावृषस्वतातृपिं ॥ इंद्रप्रणोधितावानंयज्ञंविश्वेभिर्देवेभिः । तिरस्तवानविश्पते ॥ इंद्रसोमाःसुताऽ इमेतवप्रयंतिसत्पते । क्षयंचंद्रासऽइंदवः ॥ दधिष्वाजठरेसुतंसोममिंद्रवरेण्यं । तवद्युक्षासऽइंदवः ॥ १ ॥ गिर्वणः पाहिनःसुतंमधोर्धाराभिरज्यसे । इंद्रत्वादातमिद्यशः ॥ अभिद्युम्नानिवनिनऽइंद्रंसचंतेऽअक्षिता । पीत्वीसोमस्यवावृधे ॥ अर्वावतोनऽआगहिपरावतश्चवृत्रहन् । इमाजुषस्वनोगिरः ॥ यदंतरापरावतमर्वावतंचहूयसे । इंद्रेहततऽ आगहि ॥ २ ॥ ( ३।४।३ ) आतूनऽइंद्रमद्र्यंग्घुवानःसोमपीतये । हरिभ्यांयाह्यद्रिवः ॥ सत्तोहोतानऽऋत्वियस्तिस्तिरेबर्हिरानुषक् । अयुज्रन्प्रातरद्रयः ॥ इमाब्रह्मब्रह्मवाहःक्रियंतऽआबर्हिःसीद । वीहिशूरपुरोळाशं ॥ रारंधिसवनेषुणऽएषुस्तोमेषुवृत्रहन् । उक्थेष्विंद्रगिर्वणः ॥ मतयःसोमपामुरुंरिहंतिशवसस्पतिं । इंद्रंवत्संनमातरः ॥ ३ ॥ समंदस्वाह्यंधसोराधसेतन्वामहे । नस्तोतारंनिदेकरः ॥ वयमिंद्रत्वायवोहविष्मंतोजरामहे । उतत्वमस्मयुर्वसो ॥ मारेऽअस्मद्विमुमुचोहरिप्रियार्वाङ्याहि । इंद्रस्वधावोमत्स्वेह ॥ अर्वांचंत्वासुखेरथेवहतामिंद्रकेशिना । घृतस्नूब

( ३।४।२ ) इंद्रत्वेतिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रोगायत्री । ( ३।४।३ ) आतूनइंद्रेतिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्र इंद्रोगायत्री ।

हिरासदे ॥ ४ ॥ ( ३।४।४ ) उपनःसुतमागहिसोममिंद्रगवाशिरं । हरिभ्यांयस्तेऽअस्मयुः+ ॥ तमिंद्रमदमागहिब
र्हिष्ठांग्रावभिःसुतं । कुविन्न्वस्यतृप्णवः ॥ इंद्रमित्थागिरोममाच्छागुरिषिताऽइतः । आवृतेसोमपीतये ॥ इंद्रंसोम
स्यपीतयेस्तोमैरिहहवामहे । उक्थेभिःकुविदागमत् ॥ इंद्रसोमाःसुताऽइमेतान्दधिष्वशतक्रतो । जठरेवाजिनीवसो
॥ ५ ॥ विद्माहित्वाधनंजयंवाजेषुदधृषंकवे । अधातेसुम्नमीमहे ॥ इममिंद्रगवाशिरंयवाशिरंचनःपिब । आगत्यावृ
षभिःसुतं+ ॥ तुभ्येदिंद्रस्वऽओक्ये३सोमंचोदामिपीतये । एषरारंतुतेहृदि+ ॥ त्वांसुतस्यपीतयेप्रत्नमिंद्रहवामहे ।
कुशिकासोऽअवस्यवः ॥ ६ ॥ ( ३।४।५ ) आयाह्यर्वाङुपवंधुरेष्ठास्तवेदनुप्रदिवःसोमपेयं । प्रियासखायाविमुचोप
बर्हिस्त्वामिमेहव्यवाहोहवंते ॥ आयाहिपूर्वीरतिचर्षणीराँऽअर्यऽआशिषऽउपनोहरिभ्यां । इमाहित्वामतयःस्तोमत
ष्टाऽइंद्रहवंतेसख्यंजुषाणाः+ ॥ आनोयज्ञंनमोवृधंसजोषाऽइंद्रदेवहरिभिर्याहितूयं । अहंहित्वामतिभिर्जोहवीमिघृ
तप्रयाःसधमादेमधूनां ॥ आचत्वामेतावृषणावहातोहरीसखायासुधुरास्वंगा । धानावदिंद्रःसवनंजुषाणःसखास
ख्युःश्रृणवद्वंदनानि ॥ कुविन्मागोपांकरसेजनस्यकुविद्राजानंमघवन्नृजीषिन् । कुविन्मऽऋषिंपपिवांसंसुतस्यकुविन्मे
वस्वोऽअमृतस्यशिक्षाः ॥ आत्वाबृहंतोहरयोयुजानाऽअर्वागिंद्रसधमादोवहंतु । प्रयेद्विताद्विवऽऋंजंत्याताःसुसंमृ

(३।४।४)उपनइतिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रोगायत्री। (३।४।५) आयाह्यर्वाङित्यष्टर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप्।

ष्ठासोवृषभस्यमूराः+ ॥ इंद्रपिबवृषधूतस्यवृष्णऽआयंतेंश्येनऽउशतेजभार । यस्यमदेच्यावयसिप्रकृष्टीर्यस्यमदेऽअप
गोत्राववर्थ ॥ शुनंहुवेम० ॥ ७ ॥ ( ३।४।६ ) अयंतेऽअस्तुहर्यतःसोमऽआहरिभिःसुतः । जुषाणऽइंद्रहरिभिर्नऽ
आगह्यातिष्ठहरितंरथं ॥ हर्यन्नुषसमर्चयःसूर्यंहर्यन्नरोचयः । विद्वांश्चिकित्वान्हर्यश्ववर्धसऽइंद्रविश्वाऽअभिश्रियः ॥
द्यामिंद्रोहरिधायसंपृथिवींहरिवर्पसं । अधारयद्धरितोर्भूरिभोजनंययोरंतर्हरिश्चरत् ॥ जज्ञानोहरितोवृषाविश्वमाभा
तिरोचनं । हर्यश्वोहरितंधत्तऽआयुधमावज्रंबाह्वोर्हरिं ॥ इंद्रोहर्यंतमर्जुनंवज्रंशुक्रैरभीवृतं । अपावृणोद्धरिभिरद्रि
भिःसुतमुद्गाहरिभिराजत ॥ ८ ॥ ( ३।४।७ ) आमंद्रैरिंद्रहरिभिर्याहिमयूररोमभिः । मात्वाकेचिन्नियमन्विंनपा
शिनोतिधन्वेवताँऽइहि ॥ वृत्रखादोवलंरुजःपुरांदर्मोऽअपामजः । स्थातारथस्यहर्योरभिस्वरऽइंद्रोदृह्लाचिदारुजः+ ॥
गंभीराँऽउदधीँऽरिवक्रतुंपुष्यसिगाऽइव । प्रसुगोपायवसंधेनवोयथाह्रदंकुल्याऽइवाशत ॥ आनस्तुजंरयिंभराशंनप्र
तिजानते । वृक्षंपक्कंफलमंकीवधूनुहींद्रसंपारणंवसु ॥ स्वयुरिंद्रस्वराळसिस्मद्दिष्टिःस्वयशस्तरः । सवावृधानऽओज
सापुरुष्टुतभवानःसुश्रवस्तमः ॥ ९ ॥ ( ३।४।८ ) युध्मस्यंतेवृषभस्यस्वराजऽउग्रस्ययूनःस्थविरस्यघृष्वेः । अजूर्यतो

---

( ३।४।६ ) अयंतइतिपंचर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रोबृहती । ( ३।४।७ ) आमंद्रैरितिपंचर्चस्यसूक्तस्यगाथिनोविश्वामित्र इंद्रोबृहती । ( ३।४।८ ) युध्मस्यतइतिपंचर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् ।

व॒ज्रिणो॑वी॒र्या॒३॑णीं॑द्रं॑श्रु॒तस्य॑म॒ह॒तो॑म॒हानि॑ ॥ म॒हाँ॒ऽअ॑सिमहि॒षवृ॒ष्ण्ये॑भि॒र्धन॒स्पृदु॑ग्र॒सह॑मानो॒ऽअ॒न्यान् । एको॒विश्व॑स्य॒भु॒व॑नस्य॒राजा॒सयो॒धया॑चक्ष॒यया॑च॒जना॑न् ॥ प्रमा॒त्रा॑भीरिरिचे॒रोच॑मान॒ःप्रदे॒वेभि॒र्वि॒श्वतो॒ऽअप्र॑तीतः । प्रम॒ज्मना॑दि॒वऽइंद्रः॑पृ॒थि॒व्याः॒प्रोरोर्म॒होऽअ॒न्तरि॑क्षादृजीषी॑ ॥ उ॒रुंग॑भी॒रंज॒नुषा॒भ्यु॑ग्रंवि॒श्वव्य॑चसमव॒तंम॑ती॒नां । इंद्रं॒सोमा॑सः॒प्रदि॒वि॑सु॒तास॑ःसमु॒द्रंनस्र॒वत॒ऽआवि॑शंति ॥ यंसोम॑मिंद्रपृथि॒वीद्यावा॒गर्भं॒नमा॒ता॒बि॒भृ॒तस्त्वा॒या । तंतें॑हिन्वंति॒तमु॑तेमृजंत्यध्व॒र्यवो॑वृषभ॒पात॒वाऽउं॑ ॥ १० ॥ ( ३।४।९ ) म॒रुत्वाँ॒ऽइंद्र॑वृ॒ष॒भोरणा॑य॒पिबा॒सोम॑मनुष्व॒धंमदा॑य । आसिं॑चस्व॒ज॒ठरे॒मध्व॒ऽऊर्मिं॒त्वंराजा॑सिप्र॒दिव॑ःसु॒ताना॑ं ॥ स॒जोषा॑ऽइंद्र॒सग॑णोम॒रुद्भिः॒सोमं॑पिबवृत्र॒हाशू॑रवि॒द्वान् । ज॒हिशत्रूँ॒रप॒मृधो॑नुद॒स्वाथाभ॑यंकृणुहिवि॒श्वतो॑नः ॥ उ॒तऽऋ॒तुभि॑र्ऋतुपाः॒पाहि॒सोम॒मिंद्र॑दे॒वेभि॒ःसखि॑भिःसु॒तंनः॑ । याँऽआभ॑जोम॒रुतो॒येत्वा॒न्वह॒न्वृत्रमद॑धु॒स्तुभ्य॒मोजः॑ ॥ येत्वा॑हि॒हत्ये॑मघव॒न्नव॑र्ध॒न्येशा॑ंब॒रे॒ह॑रि॒वोयेग॒वि॑ष्टौ । येत्वा॑नू॒नम॑नु॒मद॑ंति॒विप्राः॒पिबें॑द्र॒सो॒मंसग॑णोम॒रुद्भिः॑ ॥ म॒रुत्व॑ंतंवृ॒ष॒भंवा॑वृ॒धा॒नमक॑वारिं॒दि॒व्यंशा॒समिंद्रं॑ । वि॒श्वा॒साह॒मव॑से॒नूत॑नायो॒ग्रंस॑हो॒दामि॒हतंहु॑वेम ॥ ११ ॥ ( ३।४।१० ) स॒द्योह॑ज॒ातोवृ॑ष॒भःक॒नीन॒ःप्रभ॑र्तुमाव॒दंध॑सःसु॒तस्य॑ । सा॒धोः॑पिबप्रतिका॒मंयथा॑ते॒रसा॑शिरःप्रथ॒मंसो॒म्यस्य॑ ॥ यज्जाय॑था॒स्तदह॑रस्य॒कामें॑ऽशोः॒पीयू॑षमपिबोगिरि॒ष्ठां । तंतें॑मा॒तापरि॒योषा॒जनि॑त्रीम॒हः॒पि॒तुर्दम॒ऽआसिं॑च॒द

( ३।४।९ ) मरुत्वाँइंद्रेतिपंचर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् । ( ३।४।१० ) सद्योहजातइतिपंचर्चस्यसूक्तस्यगाथिनो

ग्रे ॥ उपस्थायंमातरमन्नमैट्टतिग्ममंपश्यदभिसोममूधः । प्रयावयन्नचरद्गृत्सोऽअन्यान्महानिचक्रेपुरुधप्रतीकः ॥ उग्रस्तुराषाळभिभूत्योजायथावशंतन्वंचक्रऽएषः । त्वष्टारमिंद्रोजनुषाभिभूयामुष्यासोममपिबच्चमूषु ॥ शुनंहुवेम० ॥ १२ ॥ ( ३।४।११ ) शंसामहामिंद्रंयस्मिन्विश्वाऽआकृष्टयःसोमपाःकाममव्यन् । यंसुक्रतुंधिषणेविभ्वतष्टंघनंवृत्राणांजनयंतदेवाः+ ॥ यंनुनकिःपृतनासुस्वराजंद्विताततरतिनृतमंहरिष्ठां । इनतमःसत्वभिर्योहशूषैःपृथुज्रयाऽअमिनादायुर्दस्योः ॥ सहावापृत्सुतरणिर्नार्वाव्यानशीरोदसीमेहनावान् । भगोनकारेहव्योमतीनांपितेवचारुःसुहवोवयोधाः+ ॥ धर्तादिवोरजसस्पृष्टऽऊर्ध्वोरथोनवायुर्वसुभिर्नियुत्वान् । क्षपांवस्ताजनितासूर्यस्यविभक्ताभागंधिषणेववाजं ॥ शुनंहुवेम० ॥ १३ ॥ ( ३।४।१२ ) इंद्रःस्वाहापिबतुयस्यसोमऽआगत्यातुम्रोवृषभोमरुत्वान् । ओरुव्यचाःपृणतामेभिरन्नैरास्यहविस्तन्वः१कामंमृध्याः ॥ आतेसपर्यूजवसेयुनज्मिययोरनुप्रदिवःश्रुष्टिमावः । इहत्वाधेयुर्हरयःसुशिप्रपिबात्व१स्यसुषुतस्यचारोः ॥ गोभिर्मिमिक्षुंदधिरेसुपारमिंद्रंज्यैष्ठ्यायधायसेगृणानाः । मंदानःसोमंपपिवाँऽऋजीषिन्त्समस्मभ्यंपुरुधागाऽइषण्य ॥ इमंकाममंदयागोभिरश्वैश्चंद्रवताराधसापप्रथश्च । स्वर्यवोमतिभिस्तुभ्यंवि



---

विश्वामित्रइंद्रस्त्रिष्टुप् । ( ३।४।११ ) शंसामहामितिपंचर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् । ( ३।४।१२ ) इंद्रःस्वाहेतिपंचर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप् ।

प्राऽइंद्रांयवाहःकुशिकासोंऽअक्रन् ॥ शुनंहुवेम० ॥ १४ ॥ ( ३।४।१३ ) चर्षणीधृतंमघवांनमुक्थ्यं१मिंद्रंगिरोंबृहतीरभ्यंनूषत । वावृधानंपुरुहूतंसुवृक्तिभिरमंर्त्यंजरमाणंदिवेदिवे ॥ शतक्रंतुमर्णवंशाकिनंनरंगिरोंमऽइंद्रमुपयंति विश्वतः । वाजसनिंपूर्भिदंतूर्णिमप्सुरंधामसाचंमभिषाचंस्वर्विदं ॥ आकरेवसोंर्जरितापंनस्यतेनेहसः स्तुभऽइंद्रोदुवस्यति । विवस्वंतःसदंनऽआहिपिप्रियेसंत्रासाहंमभिमातिहनंस्तुहि ॥ नृणामुत्वानृतंमंगीर्भिरुक्थैरभिप्रवीरमर्चतासबाधः । संसहंसेपुरुमायोजिंहीतेनमोंऽअस्यप्रदिवऽएकंऽईशे ॥ पूर्वीरस्यनिष्षिधोमत्येंषुपुरूवसूंनिपृथिवीबिंभर्ति । इंद्रांयद्यावऽओषंधीरुतापोरयिंरक्षंतिजीरयोवनांनि ॥ १५ ॥ तुभ्यंब्रह्माणिगिरंऽइंद्रतुभ्यंसत्रादंधिरेहरिवोजुषस्व । बोध्या३पिरवंसोनूतंनस्यसखेंवसोजरितृभ्योवयोंधाः ॥ इंद्रंमरुत्वऽइहपांहिसोमंयथांशार्यातेऽअपिबःसुतस्यं । तवप्रणीतीतवंशूरशर्मन्नाविंवासंतिकवयंःसुयज्ञाः+ ॥ सवांवशानऽइहपांहिसोमंमरुद्भिरिंद्रसखिभिःसुतंनः । जातंयत्त्वापरिंदेवाऽअभूंषन्महेभरांयपुरुहूतविश्वे ॥ अप्तूर्यैमरुतऽआपिरेषोमंदन्निंद्रमनुदातिंवाराः । तेभिंःसाकंपिबतुवृत्रखादःसुतंसोमंदाशुषःस्वेसधस्थे ॥ इदंह्यन्वोजंसासुतंरांधानांपते । पिबात्वं१स्यागिर्वणः ॥ यस्तेऽअनुंस्वधामसंत्सुतेनि

---

( ३।४।१३ ) चर्षणीधृतमितिद्वादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुपआद्यास्तिस्रोजगत्यःअंत्यास्तिस्रोगायत्र्यः ।

ऋक्सं. अ.३अ.२ ॥ १८ ॥

मंडलं ३ अनु. ४

यच्छतन्वं । सत्वांममत्तुसोम्यं+ ॥ प्रतेऽअश्नोतुकुक्ष्योःप्रेंद्रब्रह्मणाशिरः । प्रबाहूशूरराधसे ॥ १६ ॥ ( ३।४।१४ ) धानावंतंकरंभिणमपूपवंतमुक्थिनं । इंद्रप्रातर्जुषस्वनः ॥ पुरोळाशंपचत्यंजुषस्वेंद्रागुरस्वच । तुभ्यंहव्यानिसिस्रते ॥ पुरोळाशंचनोघसोजोषयासेगिरश्चनः । वधूयुरिवयोषणां ॥ पुरोळाशंसनश्रुतप्रातःसावेजुषस्वनः । इंद्रक्रतुर्हितेबृहन्+ ॥ माध्यंदिनस्यसवनस्यधानाःपुरोळाशमिंद्रकृष्वेहचारुं । प्रयत्स्तोताजरितातूर्ण्यर्थोवृषायमाणउपगीर्भिरीट्टे ॥ १७ ॥ तृतीयेधानाःसवनेपुरुष्टुतपुरोळाशमाहुतंमामहस्वनः । ऋभुमंतंवाजवंतंत्वाकवेप्रयस्वंतउपशिक्षेमधीतिभिः ॥ पूषण्वतेतेचकृमाकरंभंहरिवतेहर्यश्वायधानाः । अपूपमद्धिसगणोमरुद्भिःसोमंपिबवृत्रहाशूरविद्वान्+ ॥ प्रतिधानाभरततूयमस्मैपुरोळाशंवीरतमायनृणां । दिवेदिवेसदृशीरिंद्रतुभ्यंवर्धंतुत्वासोमपेयायधृष्णो ॥ १८ ॥ ( ३।४।१५ ) इंद्रापर्वताबृहतारथेनवामीरिषआवहतंसुवीराः । वीतंहव्यान्यध्वरेषुदेवावर्धेथांगीर्भिरिळयामदंता ॥ तिष्ठासुकंमघवन्मापरागाःसोमस्यनुत्वासुषुतस्ययक्षि । पितुर्नपुत्रःसिचमारभेतइंद्रस्वादिष्ठयागिराशचीवः ॥ शंसा

( ३।४।१४ ) धानावंतमित्यष्टर्चस्यसूक्तस्यगाथिनोविश्वामित्रइंद्रस्त्रिष्टुप्आद्याश्चतस्रोगायत्र्यःपष्ठीजगती । ( ३।४।१५ ) इंद्रापर्वतेतिचतुर्विंशत्यृचस्यसूक्तस्यगाथिनोविश्वामित्रऋषिरिंद्रोदेवताआद्यायाइंद्रापर्वतौपंचदश्यादिद्वयोःससर्परीवाक्रततश्चतसृणांरथांगानित्रिष्टुप्शमीषोळश्यौजगत्यौद्वादशीद्वाविंश्योनुष्टुभःत्रयोदशीगायत्रीअष्टादशीबृहती ।

॥ १८ ॥

वाध्वर्यो<sup></sup>ग्रतिमेगृणीहींद्रायवाहःकृणवावजुष्टं । एदंवर्हिर्यजमानस्यसीदाथाचभूदुक्थमिंद्रायशस्तं+ ॥ जायेदस्तंमघव न्त्सेदुयोनिस्तदित्त्वायुक्ताहरयोवहंतु । यदाकदाचसुनवामसोममग्निष्ट्वादूतोधन्वात्यच्छ ॥ परायाहिमघवन्नाचयाहीं द्रभ्रातरुभयत्रातेऽअर्थं । यत्रारथस्यबृहतोनिधानंविमोचनंवाजिनोरासभस्य ॥ १९ ॥ अपाःसोममस्तमिंद्रप्रयाहि कल्याणीर्जायासुरणंगृहेते । यत्रारथस्यबृहतोनिधानंविमोचनंवाजिनोदक्षिणावत् ॥ इमेभोजाऽअंगिरसोविरूपादि वस्पुत्रासोऽअसुरस्यवीराः । विश्वामित्रायददतोमघानिसहस्रसावेप्रतिरंतऽआयुः ॥ रूपंरूपंमघवाबोभवीतिमायाः कृण्वानस्तन्वं१परिस्वां । त्रिर्यद्दिवःपरिमुहूर्तमागात्स्वैर्मंत्रैरनृतुपाऽऋतावा ॥ महाँऽऋषिर्देवजादेवजूतोस्तभ्नात्सिंधु मर्णवंनृचक्षाः । विश्वामित्रोयदवहत्सुदासमप्रियायतकुशिकेभिरिंद्रः ॥ हंसाऽइवकृणुथश्लोकमद्रिभिर्मदंतोगीर्भिर ध्वरेसुतेसचा । देवेभिर्विप्राऽऋषयोनृचक्षसोविपिबध्वंकुशिकाःसोम्यंमधु ॥ २० ॥ उपप्रेतकुशिकाश्चेतयध्वमश्वंरा येप्रमुंचतासुदासः । राजावृत्रंजंघनत्प्रागपागुदगथायजातेवरऽआपृथिव्याः+ ॥ यऽइमेरोदसीऽउभेऽअहमिंद्रमतुष्ट वं । विश्वामित्रस्यरक्षतिब्रह्मेदंभारतंजनं ॥ विश्वामित्राऽअरासतब्रह्मेंद्रायवज्रिणे । करदिन्नःसुराधसः ॥ किंतेकृण्वं तिकीकटेषुगावोनाशिरंदुह्रेनतपंतिघर्मं । आनोभरप्रमगंदस्यवेदोनैचाशाखंमघवन्रंधयानः ॥ ससर्परीरमतिंबाधमा

सं. २३ नाबृहन्मिमायजमदग्निदत्ता । आसूर्यस्यदुहितातताना श्रवोदेवेष्वमृतमजुर्यं+ ॥ २१ ॥ ससर्परीरभरत्तूयमेभ्योधि

श्रवः पांचजन्यासुकृष्टिषु । सापक्ष्या३ नव्यमायुर्दधानायांमेपलस्तिजमदग्नयोददुः ॥ स्थिरौगावौभवतांवीळुरक्षोमेषा विवर्हिमायुगंविशारि । इंद्रःपातल्येददतांशरीतोररिष्टनेमेऽअभिनःसचस्व ॥ बलंधेहितनूषुनोबलमिंद्रानळुत्सुनः । बलंतोकायतनयायजीवसेत्वंहिबलदाऽअसि ॥ अभिव्ययस्वखदिरस्यसारमोजोधेहिस्पंदनेशिंशपायां । अक्षवीळो वीळितवीळयस्वमायामादस्मादवजीहिपोनः ॥ अयमस्मान्वनस्पतिर्मांचहामाचरीरिषत् । स्वस्त्यागृहेभ्यऽआवसाऽ आविमोचनात् ॥ २२ ॥ इंद्रोतिभिर्बहुलाभिर्नोऽअद्ययांच्छ्रेष्ठाभिर्मघवञ्छूरजिन्व । योनोद्वेष्ट्यधरः सस्पदीष्टयमुद्विष्मस्तमुप्राणोजहातु ॥ परशुंचिद्वितपतिशिंबलंचिद्विवृश्चति । उखाचिदिंद्रयेषंतीप्रयस्ताफेनमस्यति ॥ नसायकस्यचिकितेजनासोलोधंनयंतिपशुमन्यमानाः । नावाजिनंवाजिनाहासयंतिनगर्दभंपुरोऽअश्वान्नयंति ॥ इमऽइंद्रभरतस्य पुत्राऽअपपित्वंचिकितुर्नप्रपित्वं । हिन्वंत्यश्वमरणंननित्यंज्यावाजंपरिणयंत्याजौ+ ॥ २३ ॥ ( ३।५।१ ) इमंमहेविदथ्याय शूषंशश्वत्कृत्वऽईड्यायप्रजभ्रुः । शृणोतुनोदम्येभिरनीकैःशृणोत्वग्निर्दिव्यैरजस्रः ॥ महिमहेदिवेऽअर्चापृथिव्यैका

---

( ३।५।१ ) इमंमहइतिद्वाविंशत्यृचस्यसूक्तस्यवैश्वामित्रःप्रजापतिर्विश्वेदेवास्त्रिष्टुप् । ( सूक्तभेदप्रयोगपक्षेदेवताः क्रमेण—अग्निः १ विश्वेदेवाः २ द्यावापृथिवी १ विश्वे. १ सूर्यद्यावापृथिव्यः १ द्यावापृथिवी २ द्यौः १ विश्वेदेवाः १ सविता १ विश्वे. २ विष्णुः १ इंद्रः १ अश्विनौ १ विश्वेदेवाः ५ अग्निः १ एवं २२ ॥ उत्तरसूक्तेअखिलाअपिविश्वेदेवाः ) ।

मोमऽइच्छन्चरतिप्रजानन् । ययोर्हस्तोमेविदथेषुदेवाःसपर्यवोमादयंतेसचायोः+ ॥ युवोर्ऋतंरोदसीसत्यमस्तुमहेषुणः सुवितायप्रभूतं । इदंदिवेनमोऽअग्नेपृथिव्यैसपर्यामिप्रयसायामिरत्नं ॥ उतोहिवांपूर्व्याऽआविविद्रऽऋतावरीरोदसी सत्यवाचः । नरश्चिद्वांसमिथेशूरसातौववंदिरेपृथिविवेविदानाः ॥ कोऽअद्धावेदकऽइहप्रवोचद्देवाँऽअच्छापथ्याकासमेति । ददृश्रऽएषामवमासदाँसिपरेषुयागुह्येषुव्रतेषु ॥ २४ ॥ कविर्नृचक्षाऽअभिषीमचष्टऽऋतस्ययोनाविघृते मदंती । नानाचक्रातेसदनंयथावेःसमानेनक्रतुनासंविदाने+ ॥ समान्यावियुतेदूरेऽअंतेध्रुवेपदेतस्थतुर्जागरूके । उतस्वसारायुवतीभवंतीऽआदुब्रुवातेमिथुनानिनाम ॥ विश्वेदेतेजनिमासंविविक्तोमहोदेवान्बिभ्रतीनव्यथेते । एजद्ध्रुवंपत्यतेविश्वमेकंचरत्पतत्रिविषुणंविजातं+ ॥ सनापुराणमध्येम्यारान्महःपितुर्जनितुर्जामितन्नः । देवासोयत्रपनितारऽएवैरुरौपथिव्युतेतस्थुरंतः+ ॥ इमंस्तोमंरोदसीप्रब्रवीम्यृदूदराःश्रृणवन्नग्निजिह्वाः । मित्रःसम्राजोवरुणोयुवानऽआदित्यासःकवयःपप्रथानाः+ ॥ २५ ॥ हिरण्यपाणिःसवितासुजिह्वस्त्रिरादिवोविदथेपत्यमानः । देवेषुचसवितःश्लोकमश्रेरादस्मभ्यमासुवसर्वतातिं ॥ सुकृत्सुपाणिःस्ववाँऽऋतावादेवस्त्वष्टावसेतानिनोधात् । पूषण्वंतऽऋभवोमादयध्वमूर्ध्वग्रावाणोऽअध्वरमतष्ट ॥ विद्युद्रथामरुतऽऋष्टिमंतोदिवोमर्याऽऋतजाताऽअयासः । सरस्वतीश्रृणवन्यज्ञियासोधातारयिंसहवीरंतुरासः ॥ विष्णुंस्तोमासःपुरुदस्ममर्काभगस्येवकारिणोयामनिग्मन् । उरुक्रमःककुहोयस्य

पूर्वीर्नमर्धतियुवतयोजनित्रीः ॥ इंद्रोविश्वैर्वीर्यै३ःपत्यमानऽउभेऽआपंप्रौरोदसीमहित्वा । पुरंदरोवृत्रहाधृष्णुषेणः संगृभ्यानऽआभराभूरिंपश्वः+ ॥ २६ ॥ नासत्यामेपितरावंधुपृच्छासजात्यमश्विनोश्चारुनाम । युवंहिस्थोरयिदौनो रयीणांदात्रंरक्षेथेऽअकवैरदब्धा ॥ महत्तद्वः कवयश्चारुनामयद्धदेवाभवथविश्वऽइंद्रे । सखऽऋभुभिःपुरुहूतप्रिये भिरिमांधियंसातयेतक्षतानः ॥ अर्यमाणोऽअदितिर्यज्ञियासोदब्धानिवरुणस्यव्रतानि । युयोतनोऽअनपत्यानिगंतोः प्रजावान्नःपशुमाँऽअस्तुगातुः+ ॥ देवानांदूतःपुरुधप्रसूतोनागान्नोवोचतुसर्वताता । शृणोतुनःपृथिवीद्यौरुतापःसूर्यो नक्षत्रैरुर्व१ंतरिक्षं ॥ शृण्वंतुनोवृषणःपर्वतासोध्रुवक्षेमासऽइळयामदंतः । आदित्यैर्नोऽअदितिःशृणोतुयच्छंतुनोम रुतःशर्मभद्रं+ ॥ सदासुगःपितुमाँऽअस्तुपंथामध्वादेवाऽओषधीःसंपिपृक्त । भगोमेऽअग्नेसख्येनमृध्याऽउद्रायोऽअ श्यांसदनंपुरुक्षोः+ ॥ स्वदस्वहव्यासमिषोदिदीह्यस्मद्र्य१क्संमिमीहिश्रवांसि । विश्वाँऽअग्नेपृत्सुताञ्जेषिशत्रूनहाविश्वासुमनादीदिहीनः ॥ २७ ॥ ( ३।५।२ ) उषसःपूर्वाऽअधयद्व्यूषुर्महद्विजज्ञेऽअक्षरंपदेगोः । व्रतादेवानामुपनुप्र भूषन्महद्देवानामसुरत्वमेकं ॥ मोषूणोऽअत्रजुहुरंतदेवामापूर्वेऽअग्नेपितरःपदज्ञाः । पुराण्योःसद्मनोःकेतुरंतर्महद्दे० ॥ विमेपुरुत्रापतयंतिकामाःशम्यच्छादीद्येपूर्व्याणि । समिद्धेऽअग्नावृतमिद्वदेममहद्दे० ॥ समानोराजाविभृतःपुरुत्रा



( ३।५।२ ) उषसइतिद्वाविंशत्यृचस्यसूक्तस्यवैश्वामित्रःप्रजापतिर्विश्वेदेवास्त्रिष्टुप् ।

शयेंशयासुप्रयुंतोवनानु । अन्यावत्संभरंतिक्षेतिंमातामहद्दे० ॥ आक्षितपूर्वास्वपंराऽअनुरुत्सद्योजातासुतरुणीष्वंतः ।
अंतर्वतीःसुवतेऽअप्रंवीतामहद्दे० ॥ २८ ॥ शयुःपरस्तादधनुर्द्विमाताबंधनश्चंरतिवत्सऽएकंः । मित्रस्यतावरुणस्यव्र
तानिंमहद्दे० ॥ द्विमाताहोतांविदथेंषुसम्राळन्वग्रंचरंतिक्षेतिंबुध्नः । प्ररण्यांनिरण्यवाचोंभरंतेमहद्दे० ॥ शूरस्येवयु
ध्यतोऽअंतमस्यंप्रतीचीनंदद्दृशेविश्वंमायत् । अंतर्मतिश्चंरतिनिष्षिधंगोर्महद्दे० ॥ निवेवेतिपलितोदूतऽआस्वंतर्महाँ
श्चंरतिरोचनेनं । वपूंषिविभ्रंदभिनोविचंष्टेमहद्दे० ॥ विष्णुर्गोपाःपरमंपांतिपाथंःप्रियाधामांन्यमृतादधानः । अग्नि
ष्टाविश्वाभुवनानिवेदमहद्दे० ॥ २९ ॥ नानांचक्रातेयम्या३ वपूंषितयोरन्यद्रोचंतेकृष्णमन्यत् । श्यावींचयदरुषीच
स्वसांरौमहद्दे० ॥ माताचयत्रंदुहिताचंधेनूसंबर्दुघेंधापयेंतेसमीची । ऋतस्यतेसदंसीळेऽअंतर्महद्दे० ॥ अन्यस्यां
वत्संरिंहतीमिंमायकयांभुवानिदंधेधेनुरूधंः । ऋतस्यसापयंसापिन्वतेळामहद्दे० ॥ पद्यांवस्तेपुरुरूपावपूंष्यूर्ध्वांत
स्थौत्र्यविंरेरिंहाणा । ऋतस्यसद्मविचंरामिविद्वान्महद्दे० ॥ पदेऽइंवनिहिंतेदस्मेऽअंतस्तयोरन्यद्गुह्यमाविरन्यत् ।
सध्रीचीनापथ्या३ साविषूचीमहद्दे० ॥ ३० ॥ आधेनवोंधुनयंतामशिश्वीःसबर्दुघांःशशयाऽअप्रंदुग्धाः । नव्यान
व्यायुवतयोभवंतीर्महद्दे० ॥ यदन्यासुवृषभोरोरंवीतिसोऽअन्यस्मिन्यूथेनिदंधातिरेतंः । सहिक्षपांवान्त्सभगःसरा
जामहद्दे० ॥ वीरस्यनुस्वश्व्यंजनासःप्रनुवोचामविदुरंस्यदेवाः । षोळ्हायुक्ताःपंचपंचावहंतिमहद्दे० ॥ देवस्त्वष्टास

विताविश्वरूपःपुपोषप्रजाःपुरुधाजंजान । इमाचविश्वाभुवनान्यस्यमहद्दे० ॥ महीसमैरच्चम्वासमीचीऽउभेतेऽअस्य वसुनान्यूष्टे । श्रृण्वेवीरोविंदमानोवसूनिमहद्दे० ॥ इमांचनःपृथिवींविश्वधायाऽउपक्षेतिहितमित्रोनराजा । पुरःस दंःशर्मसदोनवीरामहद्दे० ॥ निष्षिध्वरीस्तऽओषधीरुतापोरयिंतऽइंद्रपृथिवीबिभर्ति । सखायस्तेवामभाजःस्यामम हद्दे० ॥ ३१ ॥ इतितृतीयाष्टकेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥ ॥

एकोनविंशाध्याये वर्गाः ३१ सूक्तानि १६ ऋचः १५८ ॥ त्यागः ॥ इंद्रायेदं. ९० इंद्रापर्वताभ्या. १ इंद्राये. १३ ससर्पयैवाचइ. २ रथांगेभ्य. ४ इंद्राये. ४ विश्वान्देवान् ४४ [ भे. प. अग्नय. विश्वेभ्योदेवेभ्यः २ द्यावापृथिवीभ्या. विश्वेभ्योदेवेभ्य. सूर्यद्यावापृथिवीभ्य. द्यावापृथिवीभ्या. २ द्यवइ. विश्वेभ्योदेवेभ्य. सवित्रइदं. विश्वेभ्योदेवेभ्य. २ विष्णवइ. इंद्राये. अश्विभ्यामि. विश्वेभ्योदेवेभ्य. ५ अग्नय. विश्वेभ्योदेवेभ्य. २२ एवं ४४ ] ॥ इतितृतीयेतृतीयः ॥ ३ ॥

नताष्टौप्रमेषड्धेनुर्नवाश्विनंमित्रोमैत्रंचतुर्गायत्र्यंतमिहेहवःसप्तार्भवंजागतंतृचौंत्यऐंद्रश्चोषउषस्यमिमाउह्यूनैं द्रावरुणवार्हस्पत्यपौष्णंसावित्रसौम्यमैत्रावरुणास्तृचांअंत्योजमदग्न्यार्षोवांचतुर्थ्याद्यागायत्र्योयःपूजयितुंदेव पितृमनुष्यान्पेचआंत्राणिशुनःश्येनरूपेणेंद्रोवृत्त्यर्थमाहरन्मधुयस्यसवामदेवोगौतमश्चतुर्थमंडलपश्यत्त्वांह्य ग्नेविंशतिरष्ट्यतिजगतीधृतिरुपाद्याश्चतस्रोवारुण्यश्चवायोमर्त्येष्वावःषोळशाद्यारौद्रींकृणुष्वपंचोनाराक्षोघ्नं॥१॥

॥ २१ ॥

॥ हरिःओम् ॥ ( ३।५।३ ) नतामिनंतिमायिनोनधीरांव्रतादेवानांप्रथमाध्रुवाणि । नरोदसीऽअद्रुहावेद्याभिर्नपर्वतानिनमेतस्थिवांसः ॥ षड्भाराँऽएकोऽअचरन्बिभर्त्यृतंवर्षिष्ठमुपगावऽआगुः । तिस्रोमहीरुपरास्तस्थुरत्यागुहाद्वेनिहितेदर्श्येका ॥ त्रिपाजस्योवृषभोविश्वरूपऽउतत्र्युधापुरुधप्रजावान् । त्र्यनीकःपत्यतेमाहिनावान्त्सरेतोधावृषभःशश्वतीनां ॥ अभीकऽआसांपदवीरबोध्यादित्यानामह्वेचारुनाम । आपश्चिदस्माऽअरमंतदेवीःपृथग्व्रजंतीःपरिषीमवृंजन् ॥ त्रीषधस्थासिंधवस्त्रिःकवीनामुतत्रिमाताविदथेषुसम्राट् । ऋतावरीर्योषणास्तिस्रोऽअप्यास्त्रिरादिवोविदथेपत्यमानाः ॥ त्रिरादिवःसवितर्वार्याणिदिवेदिवऽआसुवत्रिर्नोऽअह्नः । त्रिधातुरायऽआसुवावसूनिभगत्रातर्धिषणेसातयेधाः ॥ त्रिरादिवःसवितासोषवीतिराजानामित्रावरुणासुपाणी । आपश्चिदस्यरोदसीचिदुर्वीरत्नंभिक्षंतसवितुःसवाय ॥ त्रिरुत्तमादूणशारोचनानित्रयोराजंत्यसुरस्यवीराः । ऋतावानऽइषिरादूळभासस्त्रिरादिवोविदथेसंतुदेवाः+ ॥ १ ॥ ( ३।५।४ ) प्रमेविविक्वाँऽअविदन्मनीषांधेनुंचरंतींप्रयुतामगोपां । सद्यश्चिद्यादुदुहेभूरिधासेरिंद्रस्तदग्निः

( ३।५।३ ) नतामिनंतीत्यष्टर्चस्यसूक्तस्यगाथिनोविश्वामित्रोविश्वेदेवास्त्रिष्टुप् ( भेदपक्षेविभागःक्रमेण—विश्वेदेवाः १ संवत्सरादित्याः सिंधवः १ सविता १ विश्वेदेवाः २ एवमष्टौ ) । ( ३।५।४ ) प्रमेविविक्वानितिषड्चस्यसूक्तस्यगाथिनोविश्वामित्रोविश्वेदेवास्त्रिष्टुप् ( भेदपक्षेविश्वेदेवाः ४ अग्निः २ एवंषट् ) ।

पनितारोऽअस्याः ॥ इंद्रः सुपूषावृषणासुहस्तांदिवोनप्रीताःशशयंदुदुह्रे । विश्वेयदस्यांरणयंतदेवाःप्रवोत्रवसवःसुम्नमश्यां ॥ याजामयोवृष्णऽइच्छंतिशक्तिंनमस्यंतीर्जानतेगर्भमस्मिन् । अच्छांपुत्रंधेनवोवावशानामहश्चरंतिबिभ्रतंवपूंषि ॥ अच्छाविवक्मिरोदसीसुमेकेग्राव्णोयुजानोऽअध्वरेमनीषा । इमाऽउतेमनवेभूरिवाराऽऊर्ध्वाभवंतिदर्शतायजत्राः ॥ यातेजिह्वामधुमतीसुमेधाऽअग्नेदेवेषूच्यतऽउरूची । तयेहविश्वाँऽअवसेयजत्रानासादयपाययाचामधूनि ॥ यातेऽअग्नेपर्वतस्येवधारासश्चंतीपीपयद्देवचित्रा । तामस्मभ्यंप्रमतिंजातवेदोवसोरास्वसुमतिंविश्वजन्यां ॥ २ ॥ ( ३।५।५ ) धेनुःप्रत्नस्यकाम्यंदुहानांतःपुत्रश्चरतिदक्षिणायाः । आद्योतनिंवहतिशुभ्रयामोषसःस्तोमोऽअश्विनावजीगः ॥ सुयुग्वहंतिप्रतिवामृतेनोर्ध्वाभवंतिपितरेवमेधाः । जरेथामस्मद्विपणेर्मनीषांयुवोरवश्चकृमायातमर्वाक्+ ॥ सुयुग्भिरश्वैःसुवृतारथेनदस्राविमंशृणुतंश्लोकमद्रेः । किमंगवांप्रत्यवर्तिंगमिष्ठाहुर्विप्रासोऽअश्विनापुराजाः+ ॥ आमन्येथामागतंकच्चिदेवैर्विश्वेजनासोऽअश्विनाहवंते । इमाहिवांगोऽऋजीकामधूनिप्रमित्रासोनददुरुस्रोऽअग्रे ॥ तिरःपुरूचिदश्विनारजांस्यांगूषोवांमघवानाजनेषु । एहयातंपथिभिर्देवयानैर्दस्राविमेवांनिधयोमधूनां ॥ ३ ॥ पुराणमोकःसख्यंशिवंवांयुवोर्नराद्रविणंजह्राव्यां । पुनःकृण्वानाःसख्याशिवानिमध्वामदेमसहनूसमानाः+ ॥ अश्विनावा



---

( ३।५।५ ) धेनुःप्रत्नस्येतिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रोश्विनौत्रिष्टुप् ।

युनायुवंसुदक्षानियुद्भिश्चसजोषसायुवाना । नासत्यातिरोऽअह्न्यंजुषाणासोमंपिबतमस्रिधासुदानू ॥ अश्विनापरि
वामिषःपुरूचीरीयुर्गीर्भिर्यतमानाऽअमृध्राः । रथोहवामृतजाऽअद्रिजूतःपरिद्यावापृथिवीयातिसद्यः+ ॥ अश्विना
मधुषुत्तमोयुवाकुःसोमस्तंपातमागतंदुरोणे । रथोहवांभूरिवर्पःकरिक्रत्सुतावतोनिष्कृतमागमिष्ठः ॥ ४ ॥ ( ३।५।६ )
मित्रोजनान्यातयतिब्रुवाणोमित्रोदाधारपृथिवीमुतद्यां । मित्रःकृष्टीरनिमिषाभिचष्टेमित्रायहव्यंघृतवज्जुहोत ॥ प्रस
मित्रमर्तोऽअस्तुप्रयस्वान्यस्तऽआदित्यशिक्षतिव्रतेन । नहन्यतेनजीयतेत्वोतोनैनमंहोऽअश्नोत्यंतितोनदूरात्+ ॥
अनमीवासऽइळयामदंतोमितज्ञवोवरिमन्नापृथिव्याः । आदित्यस्यव्रतमुपक्षियंतोवयंमित्रस्यसुमतौस्याम ॥ अयं
मित्रोनमस्यःसुशेवोराजासुक्षत्रोऽअजनिष्टवेधाः । तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ॥ महाँऽआदि
त्योनमसोपसद्योयातयज्जनोगृणतेसुशेवः । तस्माऽएतत्पन्यतमायजुष्टमग्नौमित्रायहविराजुहोत ॥ ५ ॥ मित्रस्य
चर्षणीधृतोवोदेवस्यसानसि । द्युम्नंचित्रश्रवस्तमं ॥ अभियोमहिनादिवंमित्रोबभूवसप्रथाः । अभिश्रवोभिःपृथि
वीं+ ॥ मित्रायपंचयेमिरेजनाऽअभिष्टिशवसे । सदेवान्विश्वान्बिभर्ति ॥ मित्रोदेवेष्वायुषुजनायवृक्तबर्हिषे । इषऽ

---

( ३।५।६ ) मित्रोजनानितिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रोमित्रस्त्रिष्टुप् अंत्यास्तिस्रोगायत्र्यः ।

इष्टव्रताऽअकः ॥ ६ ॥ ( ३।५।७ ) इहेहवोमनसाबंधुतानरऽउशिजोजग्मुरभितानिवेदसा । याभिर्मायाभिःप्रति जूतिवर्पसःसौधन्वनायज्ञियंभागमानश ॥ याभिःशचीभिश्चमसाँऽअपिंशतयाधियागामरिणीतचर्मणः । येनह रीमनसानिरतक्षततेनदेवत्वमृभवःसमानश ॥ इंद्रस्यसख्यमृभवःसमानशुर्मनोर्नपातोऽअपसोदधन्विरे । सौधन्व नासोऽअमृतत्वमेरिरेविष्ट्वीशमीभिःसुकृतःसुकृत्यया ॥ इंद्रेणयाथसरथंसुतेसचाँऽअथोवशानांभवथासहश्रिया । न वःप्रतिमैसुकृतानिवाघतःसौधन्वनाऽऋभवोवीर्याणिच ॥ इंद्रऽऋभुभिर्वाजवद्भिःसमुक्षितंसुतंसोममावृषस्वागभ स्त्योः । धियेषितोमघवन्दाशुषोगृहेसौधन्वनेभिःसहमत्स्वानृभिः ॥ इंद्रऽऋभुमान्वाजवान्मत्स्वेहनोस्मिन्त्सवनेश च्यापुरुष्टुत । इमानितुभ्यंस्वसराणियेमिरेव्रतादेवानांमनुषश्चधर्मभिः ॥ इंद्रऽऋभुभिर्वाजिभिर्वाजयन्निहस्तोमंजरि तुरुपयाहियज्ञियं । शतंकेतेभिरिषिरेभिरायवेसहस्रणीथोऽअध्वरस्यहोमनि ॥ ७ ॥ ( ३।५।८ ) उषोवाजेनवाजि निप्रचेताःस्तोमंजुषस्वगृणतोमघोनि । पुराणीदेवियुवतिःपुरंधिरनुव्रतंचरसिविश्ववारे ॥ उषोदेव्यमर्त्याविभाहिचं द्ररथासूनृताऽईरयंती । आत्वावहंतुसुयमासोऽअश्वाहिरण्यवर्णापृथुपाजसोये ॥ उषःप्रतीचीभुवनानिविश्वोर्ध्वाति



---

( ३।५।७ ) इहेहवइतिसप्तर्चस्यसूक्तस्यगाथिनोविश्वामित्रऋभवःअंत्यानांतिसृणामिंद्रऋभवोजगती । ( ३।५।८ ) उषोवाजेनेति सप्तर्चस्यसूक्तस्यगाथिनोविश्वामित्रउषास्त्रिष्टुप् ।

छस्यमृतस्यकेतुः । समानमर्थंचरणीयमानाचक्रमिवनव्यस्याववृत्स्व ॥ अवस्यूमेवचिन्वतीमघोन्युषायातिस्वसरस्य पत्नी । स्व१र्जनंतीसुभगासुदंसाऽआंतादिवःपप्रथऽआपृथिव्याः ॥ अच्छावोदेवीमुषसंविभातींप्रवोभरध्वंनमसा सुवृक्तिं । ऊर्ध्वंमधुधादिविपाजोऽअश्रेत्प्ररोचनारुरुचेरण्वसंदृक् ॥ ऋतावरीदिवोऽअर्कैरबोध्यारेवतीरोदसीचित्रमं स्थात् । आयतीमग्नऽउषसंविभातींवाममेषिद्रविणंभिक्षमाणः ॥ ऋतस्यबुध्नऽउषसामिषण्यन्वृषामहीरोदसीऽआविवे श । महीमित्रस्यवरुणस्यमायाचंद्रेवभानुंविदधेपुरुत्रा ॥ ८ ॥ ( ३।५।९ ) इमाऽउवांभृमयोमन्यमानायुवावतेन तुज्याऽअभूवन् । क्व१त्यदिंद्रावरुणायशोवांयेनस्मासिनंभरथःसखिभ्यः ॥ अयमुवांपुरुतमोरयीयञ्छश्वत्तममवसे जोहवीति । सजोषाविंद्रावरुणामरुद्भिर्दिवापृथिव्याशृणुतंहवंमे ॥ अस्मेतदिंद्रावरुणावसुष्यादस्मेरयिर्मरुतःसर्ववी रः । अस्मान्वरूत्रीःशरणैरवंत्वस्मान्होत्राभारतीदक्षिणाभिः ॥ बृहस्पतेजुषस्वनोहव्यानिविश्वदेव्य । रास्वरत्नानि दाशुषे ॥ शुचिमर्कैर्बृहस्पतिमध्वरेषुनमस्यत । अनाम्योजऽआचके ॥ ९ ॥ वृषभंचर्षणीनांविश्वरूपमदाभ्यं । बृह

( ३।५।९ ) इमाउवामित्यष्टादशर्चस्यसूक्तस्यगाथिनोविश्वामित्रः ( अंत्यतृचस्यजमदग्निर्वा ) आद्यतिसृणामिंद्रावरुणौचतुर्थ्यादितिसृणांबृहस्पतिःइयंतइत्यादितिसृणांपूषातत्सवितुरित्यादितिसृणांसवितासोमइत्यादितिसृणांसोमआनइत्यादितिसृणांमित्रावरुणौदेवताः आद्यास्तिस्रस्त्रिष्टुभःशिष्टाःपञ्चदशगायत्र्यः ।

स्पतिंवरेण्यं ॥ इयंतेंपूषन्नाघृणेसुष्टुतिर्दैवनव्यसी । अस्माभिस्तुभ्यंशस्यते ॥ तांजुषस्वगिरंममवाजयंतीमवाधियं । वधूयुरिवयोषणां ॥ योविश्वाभिविपश्यतिभुवनासंचपश्यति । सनःपूषाविताभुवत् ॥ तत्संवितुर्वरेण्यंभर्गोदेवस्यं धीमहि । धियोयोनःप्रचोदयात् ॥ १० ॥ देवस्यंसवितुर्वयंवाजयंतःपुरंध्या । भगंस्यरातिमीमहे ॥ देवंनरःसवितारंविप्रायज्ञैःसुवृक्तिभिः । नमस्यंतिधियेषिताः+ ॥ सोमोंजिगातिगातुविद्देवानांमेतिनिष्कृतं । ऋतस्ययोनिमासदं ॥ सोमोऽअस्मभ्यंद्विपदेचतुष्पदेचपशवे । अनमीवाऽइषंस्करत् ॥ अस्माकमायुर्वर्धयंन्नभिमातीःसहमानः । सोमःसधस्थमासंदत् ॥ आनोंमित्रावरुणाघृतैर्गव्यूतिमुक्षतं । मध्वारजांसिसुक्रतू ॥ उरुशंसांनमोवृधांमह्नादक्षस्य राजथः । द्राघिष्ठाभिःशुचिव्रता ॥ गृणानाजमदग्निनायोनांवृतस्यसीदतं । पातंसोममृतावृधा ॥ ११ ॥ (इतिवैश्वामित्रंतृतीयंमंडलंसमाप्तं अत्रसूक्तानि ६२ )( ४।१।१ ) त्वांह्यग्नेसदमित्संमन्यवोंदेवासोदेवमरतिंन्येरिरइतिक्रत्वांन्येरिरे । अमर्त्यंयजतमर्त्येष्वादेवमादेवंजनतप्रचेतसंविश्वमादेवंजनतप्रचेतसं ॥ सभ्रातरंवरुणमग्नऽआववृत्स्वदेवाँऽअच्छांसुमतीयज्ञवनसंज्येष्ठंयज्ञवनसं । ऋतावानमादित्यंचर्षणीधृतंराजानंचर्षणीधृतं ॥ सखेसखायमभ्यावंवृत्स्वाशुं



---

वामदेवेचतुर्थेमंडलेपंचानुवाकाः ( ३।१।१ ) त्वांह्यग्नइतिविंशत्यृचस्यसूक्तस्यगौतमोवामदेवोग्निर्द्वितीयादिचतसृणामग्निवरुणौ त्रिष्टुप्आद्यास्तिस्रःक्रमेणाष्ट्यतिजगतीधृतयः ।

नचक्रेरथ्यैवरंह्यास्मभ्यंदस्मरंह्या । अग्नेमृळीकंवरुणेसचाविदोमरुत्सुविश्वभानुषु । तोकायतुजेशुशुचानशंकृध्यस्मभ्यंदस्मशंकृधि ॥ त्वंनोऽअग्नेवरुणस्यविद्वान्देवस्यहेळोवयासिसीष्ठाः । यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत् + ॥ सत्वंनोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ । अवयक्ष्वनोवरुणंरराणोवीहिमृळीकंसुहवोनऽएधि ॥ १२ ॥ अस्यश्रेष्ठासुभगस्यसंदृग्देवस्यचित्रतमामर्त्येषु । शुचिघृतंनतप्तमघ्न्यायाःस्पार्हादेवस्यमंहनेवधेनोः + ॥ त्रिरस्यतापरमासंतिसत्यास्पार्हादेवस्यजनिमान्यग्नेः । अनंतेऽअंतःपरिवीतऽआगाच्छुचिःशुक्रोऽअर्योरोरुचानः ॥ सदूतोविश्वेदभिवष्टिसद्माहोताहिरण्यरथोरंसुजिह्वः । रोहिदश्वोवपुष्योविभावासदारण्वःपितुमतीवसंसत् + ॥ सचेतयन्मनुषोयज्ञबंधुःप्रतंमह्यारशनयानयंति । सक्षेत्यस्यदुर्यासुसाधन्देवोमर्तस्यसधनित्वमाप ॥ सतूनोऽअग्निर्नयतुप्रजानन्नच्छारत्नंदेवभक्तंयदस्य । धियायद्विश्वेऽअमृताऽअकृण्वन्द्यौष्पिताजनितासत्यमुक्षन् ॥ १३ ॥ सजायतप्रथमःपस्त्यासुमहोबुध्नेरजसोऽअस्ययोनौ । अपादशीर्षागुहमानोऽअंतायोयुवानोवृषभस्यनीळे + ॥ प्रशर्धऽआर्तप्रथमंविपन्याँऽऋतस्ययोनावृषभस्यनीळे । स्पार्होयुवावपुष्योविभावासप्तप्रियासोजनयंतवृष्णे ॥ अस्माकमत्रपितरोमनुष्याऽअभिप्रसेदुर्ऋतमाशुषाणाः । अश्मव्रजाःसुदुघावव्रेऽअंतरुदुस्राऽआजन्नुषसोहुवानाः + ॥ तेमर्मृजतदद्वांसोऽअद्रिंतदेषामन्येऽअभितोविवोचन् । पश्वयंत्रासोऽअभिकारमर्चन्विदंतज्योतिश्चकृपंतधीभिः + ॥ तेगव्य

तामनसाद्रुध्रमुग्धंगायेमानंपरिषंतमद्रिं । दृळ्हंनरोवचसादैव्येनव्रजंगोमंतमुशिजोविवव्रुः ॥ १४ ॥ तेमन्वतप्रथमंनामधेनोस्त्रिःसप्तमातुःपरमाणिविंदन् । तज्जानतीरभ्यनूषतव्राऽआविर्भुवदरुणीर्यशसागोः ॥ नेशत्तमोदुधितंरोचतद्यौरुदेव्याऽउषसोभानुरर्त । आसूर्यौबृहतस्तिष्ठदज्राँऽऋजुमर्तेषुवृजिनाचपश्यन् ॥ आदित्पश्चाबुबुधानाव्यख्यन्नादिद्रत्नंधारयंतद्युभक्तं । विश्वेविश्वासुदुर्यासुदेवामित्रधियेवरुणसत्यमस्तु ॥ अच्छावोचेयशुशुचानमग्निंहोतारंविश्वभरसंयजिष्ठं । शुच्यूधोऽअतृणन्नगवामंधोनपूतंपरिषिक्तमंशोः ॥ विश्वेषामदितिर्यज्ञियानांविश्वेषामतिथिर्मानुषाणां । अग्निर्देवानामवऽआवृणानःसुमृळीकोभवतुजातवेदाः ॥ १५ ॥ ( ४।१।२ ) योमर्त्येष्वमृतऽऋतावादेवोदेवेष्वरतिर्निधायि । होतायजिष्ठोमह्नाशुचध्यैहव्यैरग्निर्मनुषऽईरयध्यै ॥ इहत्वंसूनोसहसोनोऽअद्यजातोजाताँऽउभयाँऽअंतरग्ने । दूतऽईयसेयुयुजानऽऋष्वऽऋजुमुष्कान्वृषणःशुक्राँश्च ॥ अत्यावृधस्नूरोहितघृतस्नूऽऋतस्यमन्येमनसाजविष्ठा । अंतरीयसेऽअरुषायुजानोयुष्माँश्चदेवान्विशऽआचमर्तान् ॥ अर्यमणंवरुणंमित्रमेषामिंद्राविष्णूमरुतोऽअश्विनोत । स्वश्वोऽअग्नेसुरथःसुराधाऽएदुवहसुहविषेजनाय ॥ गोमाँऽअग्नेविमाँऽअश्वीयज्ञोनृवत्सखासदमिदप्रमृष्यः । इळावाँऽएषोऽअसुरप्रजावान्दीर्घोरयिःपृथुबुध्नःसभावान् ॥ १६ ॥ यस्तऽइध्मंजभरत्सिष्विदानोमूर्धानंवा



( ४।१।२ ) योमर्त्येष्वितिविंशत्यृचस्यसूक्तस्यगौतमोवामदेवोग्निस्त्रिष्टुप् ।

ततपंतेत्वाया । भुवस्तस्यस्वतवाँःपायुरग्नेविश्वस्मात्सीमघायतऽउरुष्य ॥ यस्तेभरादन्नियतेचिदन्नंनिशिषन्मन्द्रमति
थिमुदीरत् । आदेवयुरिनधतेदुरोणेतस्मिन्रयिर्ध्रुवोऽअस्तुदास्वान् ॥ यस्त्वादोषायऽउषसिप्रशंसात्प्रियंवात्वाकृणव
तेहविष्मान् । अश्वोनस्वेदमऽआहेम्यावान्तमंहसःपीपरोदाश्वांसं ॥ यस्तुभ्यमग्नेऽअमृतायदाशद्दुवस्त्वेकृणवतेयत
स्रुक् । नसरायाशशमानोवियोषन्नैनमंहःपरिवरदघायोः+ ॥ यस्यत्वमग्नेऽअध्वरंजुजोषोदेवोमर्तस्यसुधितंरराणः ।
प्रीतेदसद्धोत्रासायविष्ठासामयस्यविधतोवृधासः ॥ १७॥ चित्तिमचित्तिंचिनवद्विविद्वान्पृष्ठेववीतावृजिनाचमर्तान् ।
रायेचनःस्वपत्यायदेवदितिंचरास्वादितिमुरुष्य ॥ कविंशशासुःकवयोदब्धानिधारयन्तोदुर्यास्वायोः । अतस्त्वंदृ
श्याँऽअग्नऽएतान्पड्भिःपश्येरद्भुताँऽअर्यऽएवैः ॥ त्वमग्नेवाघतेसुप्रणीतिःसुतसोमायविधतेयविष्ठ । रत्नंभरशशमानाय
घृष्वेपृथुश्चन्द्रमवसेचर्षणिप्राः+ ॥ अधाहयद्वयमग्नेत्वायापड्भिर्हस्तेभिश्चकृमातनूभिः । रथंनक्रन्तोऽअपसाभुरिजोर्ऋतं
येमुःसुध्यऽआशुषाणाः+ ॥ अधामातुरुषसःसप्तविप्राजायेमहिप्रथमावेधसोनॄन् । दिवस्पुत्राऽअंगिरसोभवेमाद्रिंरु
जेमधनिनंशुचन्तः ॥ १८ ॥ अधायथानःपितरःपरासःप्रत्नासोऽअग्नऽऋतमाशुषाणाः । शुचीदयन्दीधितिमुक्थ
शासःक्षामाभिन्दन्तोऽअरुणीरपव्रन् ॥ सुकर्माणःसुरुचोदेवयन्तोयोनदेवाजनिमाधमन्तः । शुचन्तोऽअग्निंववृधन्तऽइन्द्र
मूर्वंगव्यंपरिषदन्तोऽअग्मन् ॥ आयूथेवक्षुमतिपश्वोऽअख्यद्देवानांयज्जनिमान्त्युग्र । मर्तानांचिदुर्वशीरकृप्रन्वृधेचिद

र्यऽउपरस्यायोः ॥ अर्कमंतेस्वपसोऽअभूमऽऋतमवस्रन्नुषसोविभातीः । अनूनमग्निंपुरुधासुश्चंद्रंदेवस्यमर्मृजतश्चारुचक्षुः ॥ एतातेऽअग्नऽउचथानिवेधोवोचामकवयेताजुषस्व । उच्छोचस्वकृणुहिवस्यसोनोमहोरायःपुरुवारप्रयंधि ॥ १९ ॥ ( ४।१।३ ) आवोराजानमध्वरस्यरुद्रंहोतारंसत्ययजंरोदस्योः । अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसेकृणुध्वं ॥ अयंयोनिश्चकृमायंवयंतेजायेवपत्यऽउशतीसुवासाः । अर्वाचीनःपरिवीतोनिषीदेमाऽउतेस्वपाकप्रतीचीः ॥ आशृण्वतेऽअदृपितायमन्मनृचक्षसेसुमृळीकायवेधः । देवायशस्तिममृतायशंसग्रावेवसोतामधुषुद्यमीळे ॥ त्वंचिन्नःशम्याऽअग्नेऽअस्याऽऋतस्यबोध्यृतचित्स्वाधीः । कदातऽउक्थासधमाद्यानिकदाभवंतिसख्यागृहेते ॥ कथाहतद्वरुणायत्वमग्नेकथादिवेगर्हसेकन्नऽआगः । कथामित्रायमीळ्हुषेपृथिव्यैब्रवःकदर्यम्णेकद्भगाय ॥ २० ॥ कद्धिष्ण्यासुवृधसानोऽअग्नेकद्वातायप्रतवसेशुभंये । परिज्मनेनासत्यायक्षेब्रवःकदग्नेरुद्रायनृघ्ने ॥ कथामहेपुष्टिंभरायपूष्णेकद्रुद्रायसुमखायहविर्दे । कद्विष्णवऽउरुगायायरेतोब्रवःकदग्नेशरवेबृहत्यै ॥ कथाशर्धायमरुतामृतायकथासूरेबृहतेपृच्छयमानः । प्रतिब्रवोदितयेतुरायसाधादिवोजातवेदश्चिकित्वान् ॥ ऋतेनऽऋतंनियतमीळऽआगोरामासचामधुमत्पक्वमग्ने । कृष्णासतीरुशताधासिनैषाजामर्येणपयसापीपाय ॥ ऋतेनहिष्मावृषभश्चिदक्तःपुमाँऽअग्निःपयसापृष्ठ्ये



( ४।१।३ ) आवोराजानमितिषोडशर्चस्यसूक्तस्यगौतमोवामदेवआद्यायारुद्रोद्वितीयादीनामग्निस्त्रिष्टुप् ।

न । अस्पंदमानोऽअचरद्वयोधावृषाशुक्रंदुदुहेपृश्निरूधः ॥ २१ ॥ ऋतेनाद्रिंव्यसन्भिदंतःसमंगिरसोनवंतगोभिः । शुनंनरःपरिषदन्नुषासमाविःस्वरभवज्जातेऽअग्नौ+ ॥ ऋतेनदेवीरमृताऽअमृक्ताऽअर्णोभिरापोमधुमद्भिरग्ने । वाजीनसर्गेषुप्रस्तुभानःप्रसदमित्स्रवितवेदधन्युः ॥ माकस्ययक्षंसदमिद्धुरोगामावेशस्यप्रमिनतोमापेः । माभ्रातुरग्नेऽअनृजोर्ऋणंवेर्मासख्युर्दक्षंरिपोर्भुजेम ॥ रक्षाणोऽअग्नेतवरक्षणेभीराक्षाणःसुमखप्रीणानः । प्रतिष्फुरविरुजवीड्वंहोजहिरक्षोमहिचिद्वावृधानं+ ॥ एभिर्भवसुमनाऽअग्नेऽअर्कैरिमान्स्पृशमन्मभिःशूरवाजान् । उतब्रह्माण्यंगिरोजुषस्वसंतेशस्तिर्देववाताजरेत ॥ एताविश्वाविदुषेतुभ्यंवेधोनीथान्यग्नेनिण्यावचांसि । निवचनाकवयेकाव्यान्यशंसिषंमतिभिर्विप्रऽउक्थैः+ ॥ २२ ॥ ( ४।१।४ ) कृणुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाँऽइभेन । तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ तवभ्रमासऽआशुयापतंत्यनुस्पृशधृषताशोशुचानः । तपूंष्यग्नेजुह्वापतंगानसंदितोविसृजविष्वगुल्काः+ ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः । योनोदूरेऽअघशंसोयोऽअंत्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँऽओषतात्तिग्महेते । योनोऽअरातिंसमिधानचक्रेनीचातंधक्ष्यतसंनशुष्कं ॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने । अवस्थिरातनुहियातुजूनांजामिमजामिंप्रमृणीहि

( ४।१।४ ) कृणुष्वेतिपंचदशर्चस्यसूक्तस्यगौतमोवामदेवोरक्षोहाग्निस्त्रिष्टुप् ।

शत्रून् ॥ २३ ॥ सतेंजानातिसुमतिंयविष्ठयऽईवंतेब्रह्मणेगातुमैरत् । विश्वान्यस्मैसुदिनानिरायोद्युम्नान्यर्योविदुरो ऽअभिद्यौत् ॥ सेदंग्नेऽअस्तुसुभगःसुदानुर्यस्त्वानित्येनहविषायऽउक्थैः । पिप्रीषतिस्वऽआयुषिदुरोणेविश्वेदंस्मैसुदि नासासदिष्टिः+ ॥ अर्चामितेसुमतिंघोष्यर्वाक्संतेवावाताजरतामियंगीः । स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्राणिधार येरनुद्यून्+ ॥ इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनुद्यून् । क्रीळंतस्त्वासुमनसःसपेमाभिद्युम्नातस्थिवांसोज नानां ॥ यस्त्वास्वश्वःसुहिरण्योऽअग्नऽउपयातिवसुमतारथेन । तस्यंत्राताभवसितस्यसखायस्तंऽआतिथ्यमानु षग्जुजोषत् ॥ २४ ॥ महोरुजामिबंधुतावचोभिस्तन्मापितुर्गोतमादन्वियाय । त्वंनोऽअस्यवचसश्चिकिद्धिहोतर्यवि ष्ठसुक्रतोदमूनाः ॥ अस्वप्नजस्तरणयःसुशेवाऽअतंद्रासोवृकाऽअश्रमिष्ठाः । तेपायवःसध्र्यंचोनिषद्याग्नेतवनःपांत्वमू र ॥ येपायवोमामतेयंतेऽअग्नेपश्यंतोऽअंधंदुरितादरक्षन् । ररक्षतान्त्सुकृतोविश्ववेदादिप्संतऽइद्रिपवोनाहदेभुः ॥ त्वयावयंसधन्य१स्त्वोतास्तवप्रणीत्यश्यामवाजान् । उभाशंसासूदयसत्यतातेनुष्ठुयाकृणुह्यह्रयाण ॥ अयातेऽअग्नेस मिधाविधेमप्रतिस्तोमंशस्यमानंगृभाय । दहाशसोरक्षसःपाह्य१स्मान्द्रुहोनिदोमित्रमहोऽअवद्यात्+ ॥ २५ ॥ इति तृतीयाष्टकेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥

विंशाध्यायेवर्गाः २५ सूक्तानि ११ ऋचः १३५ ॥ त्यागः ॥ विश्वेभ्योदेवेभ्य. १४ [ भे. प. विश्वेभ्यो. १ संवत्सरादित्येभ्य. ३ सिंधुभ्य. सवित्र. विश्वेभ्योदेवेभ्य. ६ अग्नय. २ एवं १४ ] अश्विभ्यामि. ९ मित्राय. ९ ऋभुभ्य. ४ इंद्रऋभुभ्य. ३ उषस. ७ इंद्रावरुणाभ्यामि. ३ बृहस्पतय. ३ पूष्णइ. ३ सवित्र.३ सोमाये. ३ मित्रावरुणाभ्या. ३ अग्नय. अग्नीवरुणाभ्या. ४ अग्नय. ३५ रुद्राये. अग्नय. १५ रक्षोघ्नेग्नय. १५ ॥ इतितृतीयेचतुर्थः ॥ ४ ॥

वैश्वानरायवैश्वानरीयंमूर्ध्वऊष्वेकादशायमिहादौजगतींपंचानुष्टुभौदूतंवोष्टौगायत्रंत्वग्नेमृळाग्नेतमद्यपदपांक्तं पंचमीमहापदपंक्तिरंत्योष्णिक्चतुर्थीषष्ठ्युपांत्यावासप्तम्याःपंचकौमुख्यौतृतीयःसप्तकोनवकश्चाष्टम्याःपंचकः पादश्चतुष्कंःसप्तकस्त्रैष्टुभश्चभद्रंषड्यस्त्वांप्रत्यग्निःपंचलिंगोक्तदैवतंत्वेकैंप्रत्यग्निरग्निर्होतादशगायत्रंमृषिर्बोध दितिद्वाभ्यांसोमकंसाहदेव्यमभ्यवदत्पराभ्यामस्याश्विनावायुरयाचतांसत्यःसैकैंद्रंत्वंमहाँअसिन्नयामेकपदां यंपंथाःसप्तोनासंवादइंद्रादितिवामदेवानां ॥ १ ॥ ॥ ॥ ॥ ॥

॥ हरिःओम् ( ४।१।५ ) वैश्वानरायमीह्ळुषेसजोषाःकथादाशेमाग्नयेबृहद्भाः । अनूनेनबृहतावक्षथेनोपस्तभायदुपमिन्नरोधः ॥ मानिंदतयइमांमह्यंरातिंदेवोददौमर्त्यायस्वधावान् । पाकायगृत्सोअमृतोविचेतावैश्वानरोनृतं

---

( ४।१।५ ) वैश्वानरायेतिपंचदशर्चस्यसूक्तस्यगौतमोवामदेवोवैश्वानरोग्निस्त्रिष्टुप् ।

ऋक्सं. अ.३अ.५ ॥ २८ ॥

मंडलं ४ अनु. १

मोयह्वोऽअग्निः+ ॥ सामद्विबर्हामहितिग्मभृष्टिःसहस्त्ररेतावृषभस्तुविष्मान् । पदंनगोरपगूह्लंविविद्वानग्निर्मह्यंप्रेदुवो
चन्मनीषां+ ॥ प्रताँऽअग्निर्बभसत्तिग्मजंभस्तपिष्ठेनशोचिषायःसुराधाः । प्रयेमिनंतिवरुणस्यधामप्रियामित्रस्यचेत
तोध्रुवाणि ॥ अभ्रातरोनयोषणोव्यंतःपतिरिपोनजनयोदुरेवाः । पापासःसंतोऽअनृताऽअसत्याऽइदंपदमजनताग
भीरं+ ॥ १ ॥ इदंमेऽअग्नेकियतेपावकामिनतेगुरुंभारंनमन्म । बृहद्दधाथधृषतागभीरंयह्वंपृष्ठंप्रयसासप्तधातु ॥
तमिन्वे३वसमनासमानमभिक्रत्वापुनतीधीतिरश्याः । ससस्यचर्मन्नधिचारुपृश्नेरग्रेरुपऽआरुपितंजबारु ॥ प्रवाच्यं
वचसःकिंमेऽअस्यगुहाहितमुपनिणिग्वदंति । यदुस्रियाणामपवारिवव्रन्पातिप्रियंरुपोऽअग्रंपदंवेः+ ॥ इदमुत्यन्म
हिमहामनीकंयदुस्रियासचतपूर्व्यंगौः । ऋतस्यपदेऽअधिदीद्यानंगुहारघुष्यद्रघुयद्विवेद ॥ अधद्युतानःपित्रोःसचा
सामनुतगुह्यंचारुपृश्नेः । मातुष्पदेपरमेऽअंतिषद्गोर्वृष्णःशोचिषःप्रयतस्यजिह्वा+ ॥ २ ॥ ऋतंवोचेनमसापृच्छयमान
स्तवाशसाजातवेदोयदीदं । त्वमस्यक्षयसियद्धविश्वंदिवियदुद्रविणंयत्पृथिव्यां+ ॥ किंनोऽअस्यद्रविणंकद्धरत्नंविनो
वोचोजातवेदश्चिकित्वान् । गुहाध्वनःपरमंयन्नोऽअस्यरेकुपदंननिदानाऽअगन्म ॥ कामर्यादावयुनाकद्धवाममच्छा
गमेमरघवोनवाजं । कदानोदेवीरमृतस्यपत्नीःसूरोवर्णेनततनन्नुषासः ॥ अनिरेणवचसाफल्ग्वेनप्रतीत्येनकृधुनातृपा
सः । अधातेऽअग्नेकिमिहावदंत्यनायुधासऽआसतासचंतां ॥ अस्यश्रियेसमिधानस्यवृष्णोवसोरनीकंदमऽआरुरोच ।

अनु. १ ॥ २८ ॥

रुशद्वसानःसुदृशीकरूपःक्षितिर्नरायापुरुवारोऽअद्यौत् ॥ ३ ॥ (४।१।६) ऊर्ध्वऽऊषुणोऽअध्वरस्यहोतरग्नेतिष्ठदेवता
तायजीयान् । त्वंहिविश्वमभ्यसिमन्मप्रवेधसश्चित्तिरसिमनीषां+ ॥ अमूरोहोतान्यसादिविक्ष्व१ग्निर्मन्द्रोविदथेषुप्र
चेताः । ऊर्ध्वंभानुंसवितेवाश्रेन्मेतेवधूमंस्तभायदुपद्यां+ ॥ यतासुजूर्णीरातिनीघृताचीप्रदक्षिणिद्देवतातिमुराणः ।
उदुस्वरुर्नवजानाक्रःपश्वोऽअनक्तिसुधितःसुमेकः ॥ स्तीर्णेबर्हिषिसमिधानेऽअग्नाऽऊर्ध्वोऽअध्वर्युर्जुजुषाणोऽअस्था
त् । पर्यग्निःपशुपानहोतात्रिविष्ट्येतिप्रदिवऽउराणः+ ॥ परित्मनामितद्रुरेतिहोताग्निर्मन्द्रोमधुवचाऽऋतावा । द्रवन्त्य
स्यवाजिनोनशोकाभयन्तेविश्वाभुवनायदभ्राट् ॥ ४ ॥ भद्रातेऽअग्नेस्वनीकसंदृग्घोरस्यसतोविषुणस्यचारुः । नय
त्तेशोचिस्तमसावरंतनध्वस्मानस्तन्वी३रेपऽआधुः ॥ नयस्यसातुर्जनितोरवारिनमातरापितरानूचिदिष्टौ । अधामि
त्रोनसुधितःपावको३ग्निर्दीदायमानुषीषुविक्षु+ ॥ द्विर्यंपञ्चजीजनन्त्संवसानाःस्वसारोऽअग्निंमानुषीषुविक्षु । उषर्बुध
मथर्यो३नदन्तंशुक्रंस्वासंपरशुंनतिग्मं+ ॥ तवत्येऽअग्नेहरितोघृतस्नारोहितासऽऋज्वञ्चःस्वञ्चः । अरुषासोवृषणऽऋजु
मुष्काऽआदेवतातिमह्वन्तदस्माः+ ॥ येहत्येतेसहमानाऽअयासस्त्वेषासोऽअग्नेऽअर्चयश्चरन्ति । श्येनासोनदुवसना
सोऽअर्थंतुविष्वणसोमारुतंनशर्धः ॥ अकारिब्रह्मसमिधानतुभ्यंशंसात्युक्थंयजतेव्यूधाः । होतारमग्निमनुषोनिषेदु

( ४।१।६ ) ऊर्ध्वऊषुणइत्येकादशर्चस्यसूक्तस्यगौतमोवामदेवोग्निस्त्रिष्टुप् ।

नमस्यंतऽउशिजः शंसमायोः+ ॥ ५ ॥ ( ४।१।७ ) अयमिहप्रथमोधायिधातृभिर्होतायजिष्ठोऽअध्वरेष्वीड्यः । यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे ॥ अग्नेकदातऽआनुषग्भुवद्देवस्यचेतनं । अधाहित्वांजगृभ्रिरेमर्तासोविक्ष्वीड्यं ॥ ऋतावानंविचेतसंपश्यंतोद्यामिवस्तृभिः । विश्वेषामध्वराणांहस्कर्तारंदमेदमे ॥ आशुंदूतंविवस्वतोविश्वायश्चर्षणीरभि । आजभ्रुःकेतुमायवोभृगवाणंविशेविशे ॥ तमींहोतारमानुषक्चिकित्वांसंनिषेदिरे । रण्वंपावकशोचिषंयजिष्ठंसप्तधामभिः ॥ ६ ॥ तंशश्वतीषुमातृषुवनऽआवीतमश्रितं । चित्रंसंतंगुहाहितंसुवेदंकूचिदर्थिनं ॥ ससस्ययद्वियुतातस्मिन्नूधन्नृतस्यधामन्रणयंतदेवाः । महाँऽअग्निर्नमसारातहव्योवेरध्वरायसदमिदृतावा ॥ वेरध्वरस्यदूत्यानिविद्वानुभेऽअंतारोदसीसंचिकित्वान् । दूतऽईयसेप्रदिवऽउराणोविदुष्टरोदिवऽआरोधनानि ॥ कृष्णंतऽएमरुशतःपुरोभाश्चरिष्ण्वर्चिर्वपुषामिदेकं । यदप्रवीतादधतेहगर्भंसद्यश्चिज्जातोभवसीदुदूतः+ ॥ सद्योजातस्यददृशानमोजोयदस्यवातोऽअनुवातिशोचिः । वृणक्तितिग्मामतसेषुजिह्वांस्थिराचिदन्नादयतेविजंभैः ॥ तृषुयदन्नातृषुणावचक्षतृषुंदूतंकृणुतेयह्वोऽअग्निः । वातस्यमेळिंसचतेनिजूर्वन्नाशुंनवाजयतेहिन्वेऽअर्वा ॥ ७ ॥ ( ४।१।८ ) दूतं ।



---

( ४।१।७ ) अयमिहेत्येकादशर्चस्यसूक्तस्यगौतमोवामदेवोग्निस्त्रिष्टुपआद्याजगतीद्वितीयाद्याःपंचानुष्टुभः । ( ४।१।८ ) दूतंवइत्यष्टर्चस्यसूक्तस्यगौतमोवामदेवोवैश्वानरोग्निर्गायत्री ।

वोविश्ववेदसंहव्यवाहममर्त्यं । यजिष्ठमृंजसेगिरा+ ॥ सहिवेदावसुधितिंमहाँऽआरोधनंदिवः । सदेवाँऽएहवक्षति ॥ सवेददेवऽआनमंदेवाँऽऋतायतेदमे । दातिंप्रियाणिचिद्वसु ॥ सहोतासेदुदूत्यंचिकित्वाँऽअंतरीयते । विद्वाँऽआरोधनंदिवः+ ॥ तेस्यामयेऽअग्नयेददाशुर्हव्यदातिभिः । यऽईपुष्यंतऽइंधते ॥ तेरायातेसुवीयैः ससवांसोविशृण्विरे । येऽअग्नादधिरेदुवः ॥ अस्मेरायोदिवेदिवेसंचरंतुपुरुस्पृहः । अस्मेवाजासऽईरतां ॥ सविप्रश्चर्षणीनांशवसामानुषाणां । अतिक्षिप्रेवविध्यति ॥ ८ ॥ ( ४।१।९ ) अग्नेमृळमहाँऽअसियऽईमादेवयुंजनं । इयेथबर्हिरासदं ॥ समानुषीषुदूळभोविक्षुप्रावीरमर्त्यः । दूतोविश्वेषांभुवत् ॥ ससद्मपरिणीयतेहोतामंद्रोदिविष्टिषु । उतपोतानिषीदति ॥ उतग्नाऽअग्निरध्वरऽउतोगृहपतिर्दमे । उतब्रह्मानिषीदति ॥ वेषिह्यध्वरीयतामुपवक्ताजनानां । हव्याचमानुषाणां ॥ वेषीद्वस्यदूत्यं१यस्यजुजोषोऽअध्वरं । हव्यंमर्तस्यवोह्ळवे ॥ अस्माकंजोष्यध्वरमस्माकंयज्ञमंगिरः । अस्माकंशृणुधीहवं ॥ परितेदूळभोरथोस्माँऽअश्नोतुविश्वतः । येनरक्षसिदाशुषः ॥ ९ ॥ ( ४।१।१० ) अग्नेतमद्याश्वंनस्तोमैःक्रतुंनभद्रंहृदिस्पृशं । ऋध्यामातऽओहैः ॥ अधाह्यग्नेक्रतोर्भद्रस्यदक्षस्यसाधोः । रथीर्ऋतस्यबृहतोबभूथ ॥

---

( ४।१।९ ) अग्नेमृळेत्यष्टर्चस्यसूक्तस्यगौतमोवामदेवोग्निर्गायत्री । ( ४।१।१० ) अग्नेतमद्येत्यष्टर्चस्यसूक्तस्यगौतमोवामदेवोग्निःपदपंक्तिःपंचमीमहापदपंक्तिःअंत्येद्वेउष्णिहौ ।

एभिर्नोऽअर्कैर्भवानोऽअर्वाङ्स्व१र्णज्योतिः । अग्नेविश्वेभिःसुमनाऽअनीकैः ॥ आभिष्टेऽअद्ययगीर्भिर्गृणंतोग्नेदा
शेम । प्रतेदिवोनस्तनयंतिशुष्माः ॥ तवस्वादिष्ठाग्नेसंदृष्टिरिदाचिदह्नऽइदाचिदक्तोः । श्रियेरुक्मोनरोचतऽउ
पाके ॥ घृतंनपूतंतनूररेपाःशुचिहिरण्यं । तत्तेरुक्मोनरोचतस्वधावः ॥ कृतंचिद्धिष्मासनेमिद्वेषोग्नऽइनोषिम
र्तात् । इत्थायजमानादृतावः ॥ शिवानःसख्यासंतुभ्रात्राग्नेदेवेषुयुष्मे । सानोनाभिःसदनेसस्मिन्नूधन् ॥ १० ॥
( ४।२।१ ) भद्रंतेऽअग्नेसहसिन्ननीकमुपाकऽआरोचतेसूर्यस्य । रुशद्दृशेददृशेनक्तयाचिदरूक्षितंदृशऽआरूपेऽ
अन्नं ॥ विषाह्यग्नेगृणतेमनीषांखंवेपसातुविजातस्तवानः । विश्वेभिर्यद्वावनःशुक्रदेवैस्तन्नोरास्वसुमहोभूरिमन्म ॥
त्वदग्नेकाव्यात्वन्मनीषास्त्वदुक्थाजायंतेराध्यानि । त्वदेतिद्रविणंवीरपेशाऽइत्थाधियेदाशुषेमर्त्याय ॥ त्वद्वाजीवा
जंभरोविहायाऽअभिष्टिकृज्जायतेसत्यशुष्मः । त्वद्रयिर्देवजूतोमयोभुस्त्वदाशुर्जूजुवांऽअग्नेऽअर्वा ॥ त्वामग्नेप्रथमंदे
वयंतोदेवंमर्ताऽअमृतमंद्रजिह्वं । द्वेषोयुतमाविवासंतिधीभिर्दमूनसंगृहपतिममूरं ॥ आरेऽअस्मदमतिमारेऽअंहऽआ
रेविश्वांदुर्मतिंयन्निपासि । दोषाशिवःसहसःसूनोऽअग्नेयंदेवऽआचित्सचसेस्वस्ति ॥ ११ ॥ ( ४।२।२ ) यस्त्वा
मग्नऽइनधतेयतस्रुक्त्रिस्तेऽअन्नंकृणवत्सस्मिन्नहन् । ससुद्युम्नैरभ्यस्तुप्रसक्षत्तवक्रत्वाजातवेदश्चिकित्वान् ॥ इध्मंय



---

(४।२।१) भद्रंतइतिषड्ृचस्यसूक्तस्यगौतमोवामदेवोग्निस्त्रिष्टुप् । (४।२।२) यस्त्वामग्नइतिषड्ृचस्यसूक्तस्यगौतमोवामदेवोग्निस्त्रिष्टुप् ।

स्तांइ॒ध्मंज॒भर॑च्छश्रमा॒णोम॒होऽअग्ने॒ऽअनीक॒मासंप॒र्यन्। सइ॑धा॒नःप्रतिदो॒षामु॒षासंपुष्य॑न्त्रयिंसंचते॒घ्नन्न॒मित्रा॑न् ॥ अ॒ग्निरीशे बृह॒तःक्ष॒त्रियस्या॒ग्निर्वाजस्यपर॒मस्यरा॒यः । दधा॑ति॒रत्नंविध॒तेयविष्ठो॒व्या॑नु॒षङ्मर्त्यायस्व॒धावा॑न् ॥ यच्चि॒द्धितेपुरुष॒त्रायं वि॒ष्ठाचित्तिभिश्चकृ॒माकच्चि॒दागः । कृ॒धीष्व१स्माँऽअदि॑ते॒रना॑गा॒न्व्येनांसिशिश्रथो॒विष्वगग्ने ॥ म॒हश्चिदग्न॒ऽएनसोऽअ॒ भीकऽऊ॒र्वाद्दे॒वाना॑मु॒तमर्त्यानां । मा॑ते॒सखा॑यु॒ःसद॒मिद्रिषाम॒यच्छा॑तो॒काय॒तन॑याय॒शंयोः+ ॥ यथा॑ह॒त्यद्वसवोगौ॒र्यंचि त्प॒दिषि॒तामम्॑ुचतायजत्राः । ए॒वोष्व१स्मन्मुंचता॒व्यंह॒ःप्रतार्यग्नेप्रत॒रंन॒ऽआयुः ॥ १२ ॥ ( ४।२।३ ) प्रत्य॒ग्निरु॒षसा मग्र॑मख्यद्विभा॒तीनांसु॒मना॑रत्न॒धेयं । या॒तम॑श्विनासुकृतोदुरो॒णमुत्सूर्यो॒ज्योतिषादे॒वऽएति ॥ ऊ॒र्ध्वंभा॒नुंस॑वि॒तादे॒वो ऽअश्रेद्द्र॒प्संदविध्वद्गवि॒षोनसत्वा । अनु॑व्र॒तंवरुणोयंतिमि॒त्रोयत्सूर्यंदि॒व्यारो॒हयंति ॥ यंसी॒मकृण्व॒न्तमसेवि॒पृचेंध्रु॒वक्षे मा॒ऽअनवस्यंतो॒ऽअर्थं । तंसूर्यंह॒रितःस॒प्तय॒ह्वीःस्पशंविश्वस्य॒जगतोवहंति ॥ वहिष्ठेभिर्वि॒हर॑न्यासि॒तंतुमव॒व्यय॒न्नसितं देव॒वस्मं । दविध्वतोर॒श्मय॒ःसूर्यस्य॒चर्मे॒वावाधुस्तमोऽअ॒प्स्व१॒न्तः+ ॥ अनायतो॒ऽअनिबद्धःक॒थायंन्य॑ङ्ङु॒त्तानोवपद्यते॒न । कया॑यातिस्व॒धया॒कोदद॒दर्शदि॒वःस्कं॒भःसमृतःपाति॒नाकं ॥ १३ ॥ ( ४।२।४ ) प्रत्य॒ग्निरु॒षसोजा॒तवेदा॒ऽअख्यद्दे॒वोरोच॑

---

( ४।२।३ ) प्रत्यग्निरितिपंचर्चस्यसूक्तस्यगौतमोवामदेवोग्निस्त्रिष्टुप् । ( ४।२।४ ) प्रत्यग्निरुषसइतिपंचर्चस्यसूक्तस्यगौतमोवामदेवो- ग्निस्त्रिष्टुप् ( अनयोःसूक्तयोःकेचिदाचार्यालिङ्गोक्तदेवताआहुःताश्चआद्यसूक्तेआद्यानांतिसृणामग्निःचतुर्थ्याःसवितृवरुणमित्राःपंचम्याः

मानामहोभिः । आनासत्योरुगायारथेनेमंयज्ञमुपनोयातमच्छ ॥ ऊर्ध्वंकेतुंसविताद्वोऽअश्रेज्ज्योतिर्विश्वस्मैभुवनाय कृण्वन् । आप्राद्यावापृथिवीऽअंतरिक्षंविसूर्योरश्मिभिश्चेकितानः ॥ आवहंत्यरुणीर्ज्योतिषागान्महीचित्रारश्मिभिश्चेकिताना । प्रबोधयंतीसुवितायदेव्युषाऽईयतेसुयुजारथेन ॥ आवांवहिष्ठाऽइहतेवहंतुरथाऽअश्वासऽउषसोव्युष्टौ । इमेहिवांमधुपेयायसोमाऽअस्मिन्यज्ञेवृषणामादयेथां ॥ अनायतो० ॥ १४ ॥ ( ४।२।५ ) अग्निर्होतानोऽअध्वरेवाजीसन्परिणीयते । देवोदेवेषुयज्ञियः ॥ परित्रिविष्ट्यध्वरंयात्यग्नीरथीरिव । आदेवेषुप्रयोदधत् ॥ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानिदाशुषे ॥ अयंयःसृंजयेपुरोदैववातेसमिध्यते । द्युमाँऽअमित्रदंभनः ॥ अस्यघावीरऽईवतोग्नेरीशीतमर्त्यः । तिग्मजंभस्यमीह्लुषः ॥ १५ ॥ तमर्वंतंनसानसिमरुषंनदिवःशिशुं । मर्मृज्यंतेदिवेदिवे ॥ बोधद्यन्माहरिभ्यांकुमारःसाहदेव्यः । अच्छानहूतऽउदरं ॥ उतत्यायजताहरीकुमारात्साहदेव्यात् । प्रयतासद्यऽआददे ॥ एषवांदेवावश्विनाकुमारःसाहदेव्यः । दीर्घायुरस्तुसोमकः ॥ तंयुवंदेवावश्विनाकुमारंसाहदेव्यं । दीर्घायुषंकृणोतन ॥ १६ ॥ ( ४।२।६ ) आसत्योयातुमघवाँऽऋजीषीद्रवंत्वस्यहरयऽउपनः । तस्माऽइदंधःसुषुमा



---

सूर्यः । अपरसूक्तेक्रमेणअग्न्यश्विनःसूर्यउषाअश्व्युषसःसूर्यइत्येवंज्ञेयाः ) । ( ४।२।५ ) अग्निर्होतेतिदशर्चस्यसूक्तस्यगौतमोवामदेवोग्निःसप्तम्यष्टम्योःसोमःअंत्ययोरश्विनौगायत्री । ( ४।२।६ ) आसत्योयात्वित्येकविंशत्यृचस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् ।

सुदक्षमिहाभिपित्वंकरतेगृणानः+ ॥ अवस्यशूराध्वनोनांतेस्मिन्नोऽअद्यसवनेमंदध्यै । शंसात्युक्थमुशनेववेधाश्चिकि
तुषेऽअसुर्यायमन्म ॥ कविर्ननिण्यंविदथानिसाधन्वृषायत्सेकंविपिपानोऽअर्चात् । दिवऽइत्थाजीजनत्सप्तकारून
ह्नाचिच्चक्रुर्वयुनागृणंतः ॥ स्व१र्यद्वेदिसुदृशीकमर्कैर्महिज्योतीरुरुचुर्यद्धवस्तोः । अंधातमांसिदुधिताविचक्षेनृभ्यश्च
कारनृतमोऽअभिष्टौ ॥ ववक्षऽइंद्रोऽअमितमृजीष्यु१भेऽआपप्रौरोदसीमहित्वा । अतश्चिदस्यमहिमाविरेच्यभियो
विश्वाभुवनाबभूव ॥ १७ ॥ विश्वानिशक्रोनर्याणिविद्वानपोरिरेचसखिभिर्निकामैः । अश्मानंचिद्येबिभिदुर्वचोभि
र्व्रजंगोमंतमुशिजोविवव्रुः ॥ अपोवृत्रंवव्रिवांसंपराहन्प्रावत्तेवज्रंपृथिवीसचेताः । प्रार्णांसिसमुद्रियाण्यैनोःपतिर्भव
न्छवसाशूरधृष्णो ॥ अपोयदद्रिंपुरुहूतदर्दराविर्भुवत्सरमापूर्व्यंते । सनोनेतावाजमादर्षिभूरिंगोत्रारुजन्नंगिरोभिर्गृ
णानः+ ॥ अच्छाकविंनृमणोगाऽअभिष्टौस्वर्षातामघवन्नाधमानं । ऊतिभिस्तमिषणोद्युम्नहूतौनिमायावानब्रह्मादस्यु
र्र्त ॥ आदस्युघ्नामनसायाह्यस्तंभुवत्तेकुत्सःसख्येनिकामः । स्वेयोनौनिषदतंसरूपाविवांचिकित्सदृतचिद्धनारी
॥ १८ ॥ यासिकुत्सेनसरथमवस्युस्तोदोवातस्यहर्योरीशानः । ऋज्रावाजंनगध्युंयुयूषन्कविर्यदहन्पार्यायभूषात् ॥
कुत्सायशुष्णमशुषंनिबर्हीःप्रपित्वेऽअह्नःकुयवंसहस्रा । सद्योदस्यून्प्रमृणकुत्स्येनप्रसूरश्चक्रंवृहतादभीके ॥ त्वंपिप्रुंमृ
गयंशूशुवांसमृजिश्वनेवैदथिनायरंधीः । पंचाशत्कृष्णानिवपःसहस्रात्कंनपुरोजरिमाविदर्दः ॥ सूरऽउपाकेतन्व१द

धानोवियत्तेचेत्यमृतस्यवर्पः । मृगोनहस्तीतविषीमुषाणःसिंहोनभीमऽआयुधानिबिभ्रत् ॥ इंद्रंकामावसूयंतोऽअग्मन्त्स्वर्मीह्ळेनसवनेचकानाः । श्रवस्यवःशशमानासऽउक्थैरोकोनरण्वासुदृशीवपुष्टिः+ ॥ १९ ॥ तमिद्वऽइंद्रंसुहवंहुवेमयस्ताचकारनर्यापुरूणि । योमावतेजरित्रेगध्यंचिन्मक्षूवाजंभरतिस्पार्हराधाः ॥ तिग्मायदंतरशनिःपतातिकस्मिन्चिच्छूरमुहुकेजनानां । घोरायदर्यसमृतिर्भवात्यधस्मानस्तन्वोबोधिगोपाः+ ॥ भुवोवितावामदेवस्यधीनांभुवःसखावृकोवाजसातौ । त्वामनुप्रमतिमाजगन्मोरुशंसोजरित्रेविश्वधस्याः ॥ एभिर्नृभिरिंद्रत्वायुभिष्ट्वामघवद्भिर्मघवन्विश्वऽआजौ । द्यावोनद्युम्नैरभिसंतोऽअर्यःक्षपोमदेमशरदश्चपूर्वीः+ ॥ एवेदिंद्रायवृषभायवृष्णेब्रह्माकर्मभृगवोनरथं । नूचिद्यथानःसख्याबियोषदसन्नऽउग्रोवितातनूपाः+ ॥ नूष्टुतऽइंद्रनूगृणानऽइषंजरित्रेनद्योऽ३नपीपेः । अकारितेहरिवोब्रह्मनव्यंधियास्यामरथ्यःसदासाः+ ॥ २० ॥ ( ४।२।७ ) त्वंमहाँऽइंद्रतुभ्यंहक्षाऽअनुक्षत्रंमंहनामन्यतद्यौः । त्वंवृत्रंशवसाजघन्वान्त्सृजःसिंधूँरहिनाजग्रसानान्+ ॥ तवत्विषोजनिमन्रेजतद्यौरेजद्भूमिर्भियसास्वस्यमन्योः । ऋघायंतसुभ्वः१पर्वतासऽआर्दुधन्वानिसरयंतऽआपः ॥ भिनद्गिरिंशवसावज्रमिष्णन्नाविष्कृण्वानःसहसानऽओजः । वधींवृत्रंवज्रेणमंदसानःसरन्नापोजवसाहतवृष्णीः ॥ सुवीरस्तेजनितामन्यतद्यौरिंद्रस्यकर्तास्वपस्तमोभूत् । यऽईंजजानस्वर्यं



( ४।२।७ ) त्वंमहानित्येकविंशत्यृचस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् असिक्न्यामित्येकपदाविराट् ।

सुवज्रमनंपच्युतंसदंसोनभूमं ॥ यऽएकऽइच्च्यावयतिप्रभूमाराजाकृष्टीनांपुरुहूतऽइंद्रः । सत्यमेनमनुविश्वेमदंतिरा
तिंदेवस्यंगृणतोमघोनः ॥ २१ ॥ सत्रासोमाऽअभवन्नस्यविश्वेसत्रामदासोबृहतोमदिष्ठाः । सत्राभवोवसुपतिर्वसूनां
दत्रेविश्वाऽअधिथाऽइंद्रकृष्टीः+ ॥ त्वमधप्रथमंजायमानोमेविश्वाऽअधिथाऽइंद्रकृष्टीः । त्वंप्रतिप्रवतऽआशयानम
हिंवज्रेणमघवन्विवृश्चः ॥ सत्राहणंदाधृषिंतुम्रमिंद्रंमहामपारंवृषभंसुवज्रं । हंतायोवृत्रंसनितोतवाजंदातामघानिमघवा
सुराधाः ॥ अयंवृतश्चातयतेसमीचीर्यऽआजिषुमघवाशृण्वऽएकः । अयंवाजंभरतियंसनोत्यस्यप्रियासःसख्येस्याम ॥
अयंशृण्वेऽअधजयन्नुतघ्नन्नयमुतप्रकृणुतेयुधागाः । यदासत्यंकृणुतेमन्युमिंद्रोविश्वंदृळ्हंभयतऽएजदस्मात् ॥ २२ ॥
समिंद्रोगाऽअजयत्संहिरण्यासमश्वियामघवायोहपूर्वीः । एभिर्नृभिर्नृतमोऽअस्यशाकैरायोविभक्तासंभरश्चवस्वः ॥ कि
यत्स्विदिंद्रोऽअध्येतिमातुःकियत्पितुर्जनितुर्योजजान । योऽअस्यशुष्मंमुहुकैरियर्तिवातोनजूतःस्तनयद्भिरभ्रैः+ ॥ क्षि
यंतंत्वमक्षियंतंकृणोतीयर्तिरेणुंमघवासमोहं । विभंजनुरशनिमाँऽइवद्यौरुतस्तोतारंमघवावसौधात् ॥ अयंचक्रमिष
णत्सूर्यस्यन्येतंशरीरमत्ससृमाणं । आकृष्णऽईंजुहुराणोजिघर्तित्वचोबुध्नेरजसोऽअस्ययोनौ ॥ असिंक्न्यांयजमानोन
होता ॥ २३ ॥ गव्यंतऽइंद्रंसख्यायविप्राऽअश्वायंतोवृषणंवाजयंतः । जनीयंतोजनिदामक्षितोतिमाच्यावयामोव
तेनकोशं ॥ त्रातानोबोधिददृशानऽआपिरभिख्यातामर्डितासोम्यानां । सखापितापितृतमःपितृणांकर्तेमुलोकमुश

तेवयोधाः+ ॥ सखीयतामविताबोधिसखागृणानऽइंद्रस्तुवतेवयोधाः । वयंह्यातेचकृमासबाधऽआभिःशमीभिर्महयं तऽइंद्र ॥ स्तुतऽइंद्रोमघवायद्धवृत्राभूरीण्येकोऽअप्रतीनिहंति । अस्यप्रियोजरितायस्यशर्मन्नकिर्देवावारयंतेनमर्ताः ॥ एवानऽइंद्रोमघवाविरप्शीकरत्सत्याचर्षणीधृदनर्वा । त्वंराजाजनुषांधेह्यस्मेऽअधिश्रवोमाहिनंयज्जरित्रे+ ॥ नृष्टुतऽ इंद्र० ॥ २४ ॥ ( ४।२।८ ) अयंपंथाऽअनुवित्तःपुराणोयतोदेवाऽउदजायंतविश्वे । अतश्चिदाजनिषीष्टप्रवृद्धोमामा तरममुयापत्तवेकः ॥ नाहमतोनिरयादुर्गहैतत्तिरश्चतापार्श्वान्निर्गमाणि । बहूनिमेऽअकृताकर्त्वानियुध्यैत्वेनसंत्वेन पृच्छै ॥ परायतींमातरमन्वचष्टननानुगान्यनुनूगमानि । त्वष्टुर्गृहेऽअपिबत्सोममिंद्रःशतधन्यंचम्वोःसुतस्य ॥ किंस ऽऋधक्कृणवद्यंसहस्रंमासोजभारशरदश्चपूर्वीः । नहीन्वस्यप्रतिमानमस्त्यंतर्जातेषूतयेजनित्वाः ॥ अवद्यमिवमन्यमाना गुहाकरिंद्रंमातावीर्येणान्यृष्टं । अथोदस्थात्स्वयमत्कंवसानऽआरोदसीऽअपृणाज्जायमानः ॥ २५ ॥ एताऽअर्षंत्यल लाभवंतीरृतावरीरिवसंक्रोशमानाः । एताविपृच्छकिमिदंभनंतिकमापोऽअद्रिंपरिधिंरुजंति ॥ किमुष्विदस्मैनि विदोभनंतेंद्रस्यावद्यंदिधिषंतऽआपः । ममैतान्पुत्रोमहतावधेनवृत्रंजघन्वाँऽअसृजद्विसिंधून् ॥ ममंचनत्वायुवतिः



---

( ४।२।८ ) अयंपंथाइतित्रयोदशर्चस्यसूक्तस्यगौतमोवामदेवऋषिःआद्यायाइंद्रऋषिःनहीन्वस्येत्यादिसार्धतिसृणामदितिर्ऋषिका आद्यायावामदेवोदेवता नाहमतइत्यादिपंचार्धर्चानामंत्यानांषण्णामृचांचेंद्रोदेवतानहीन्वस्येतिसार्धतिसृणांवामदेवोदेवतात्रिष्टुप् ।

परासममंच्चनत्वांकुषवांजगारं । ममंच्चिदापःशिशंवेममृज्युर्ममंच्चिदिंद्रःसहुसोदंतिष्ठत् ॥ ममंच्चनतैमघवन्व्यंसोनि विविध्वाँऽअपहनूंजघानं । अधानिविंद्धऽउत्तरोबभूवान्छिरोंदासस्यसंपिंणग्वधेनं ॥ गृष्टिःसंसूवस्थविंरंतवागामंनाधृ प्यंवृषभंतुम्रामिंद्रं । अरींह्वंवत्संचरथांयमातास्वयंगातुंतन्वंऽइच्छमांनं ॥ उतमातामंहिषमन्वंवेनदमीत्वांजहतिपुत्रदे वाः । अथांब्रवीद्वृत्रमिंद्रोंहनिष्यन्त्सखेंविष्णोवितरंविक्रमस्व ॥ कस्तैमातरंविधवांमचक्रच्छयुंकस्त्वामंजिघांसच्चरं तं । कस्तेंदेवोऽअधिमार्डीकऽआंसीद्यत्प्राक्षिणाःपितरंपादगृह्यं ॥ अवंर्त्याशुनंऽआंत्राणिपेचेनदेवेषुविविदेमर्डितारं । अपंश्यंजायाममंहीयमानामधांमेश्येनोमध्वाजंभार ॥ २६ ॥ इतितृतीयाष्टकेपंचमोऽध्यायः ॥ ५ ॥

एकविंशाध्यायेवर्गाः २६ सूक्तानि १४ ऋचः १४८ ॥ त्यागः ॥ वैश्वानरायाग्नय. १५ अग्नय. ६१ सवितृवरुणमित्रेभ्य० सूर्या- ये. ३ अग्न्यश्विभ्य. सूर्याये. उषस. अश्व्युषोभ्य. सूर्याये. अग्नय. ६ सोमकाये. २ अश्विभ्या. २ इंद्राये. ४२ वामदेवाये. इंद्राये. २ इंद्रवामदेवाभ्या. वामदेवाये. ३ इंद्राये. ६ ॥ इतितृतीयेपंचमः ॥ ५ ॥

एवैकादशानआयातुंयंनःकथोपांत्यस्तिस्रऋतुदेव्योवांकासुष्टुतिरुपांत्यानुष्टुप्कोअद्याष्टावहंमनुःसप्तांद्याभिस्ति सृभिरिंद्रमिवांत्मानमृषिस्तुष्टावैंद्रोवात्मानंपरानवाष्टौवाश्येनस्तुतिर्गर्भेनुपंचांत्याशक्करीत्वायुजेंद्रासोमंवानः

स्तुतौनकिश्चतुर्विंशातिर्द्विवश्चित्तृचउषस्यश्चगायत्रंह्यष्टम्यंत्येअनुष्टुभौकयापंचोनाभीषुपादनिचृदातूनश्चतुर्विंश
तिरंत्याभ्यामैंद्राश्वौस्तुतौ ॥ १ ॥ ॥ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ ( ४।२।९ ) एवात्वामिंद्रवज्रिन्नत्रविश्वेदेवासःसुहवासऊमाः । महामुभेरोदसीवृद्धमृष्वंनिरे
कमिद्वृणतेवृत्रहत्ये ॥ अवासृजंतजिव्रयोनदेवाभुवःसम्राळिंद्रसत्ययोनिः । अहन्नहिंपरिशयानमर्णःप्रवर्तनीररदोवि
श्वधेनाः ॥ अतृप्णुवंतंवियतमबुध्यमबुध्यमानंसुषुपाणमिंद्र । सप्तप्रतिप्रवतऽआशयानमहिंवज्रेणविरिणाऽअपर्व
न्+ ॥ अक्षोदयच्छवसाक्षामबुध्नंवार्णवातस्तविषीभिरिंद्रः । दृळ्हान्यौभ्नादुशमानऽओजोवाभिनत्ककुभःपर्वतानां ॥
अभिप्रदद्रुर्जनयोनगर्भंरथाऽइवप्रययुःसाकमद्रयः । अतर्पयोविसृतऽउब्जऽऊर्मीन्त्वंवृताँऽअरिणाऽइंद्रसिंधून् ॥ १ ॥
त्वंमहीमवनिंविश्वधेनांतुर्वीतयेवय्यायक्षरंतीं । अरमयोनमसैजदर्णःसुतरणाँऽअकृणोरिंद्रसिंधून् ॥ प्राग्रुवोनभन्वो३
नवक्राध्वस्राऽअपिन्वद्युवतीर्ऋतज्ञाः । धन्वान्यज्राँऽअपृणक्तृषाणाँऽअधोगिंद्रःस्तर्यो३दंसुपत्नीः ॥ पूर्वीरुषसःश
रदश्चगूर्तावृत्रंजघन्वाँऽअसृजद्विसिंधून् । परिष्ठिताऽअतृणद्बद्बधानाःसीराऽइंद्रःस्रवितवेपृथिव्या+ ॥ वम्रीभिःपुत्र
मग्रुवोऽअदानंनिवेशनाद्धरिवऽआजभर्थ । व्य१धोऽअख्यदहिमाददानोनिर्भूदुखच्छित्समरंतपर्व ॥ प्रतेपूर्वाणिकर

( ४।२।९ ) एवात्वामित्येकादशर्चस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् ।

णानिविप्राविद्वाँऽआहविदुषेकरांसि । यथायथावृष्ण्यानिस्वगूर्तापांसिराजन्नर्याविवेषीः ॥ नूष्टुतऽइंद्र० ॥ २ ॥
( ४।२।१० ) आनऽइंद्रोदूरादानऽआसादभिष्टिकृदवसेयासदुग्रः । ओजिष्ठेभिर्नृपतिर्वज्रबाहुःसंगेसमत्सुतुर्वणिः
पृतन्यून्+ ॥ आनऽइंद्रोहरिभिर्यात्वच्छार्वाचीनोवसेराधसेच । तिष्ठातिवज्रीमघवाविरप्शीमंयज्ञमनुनोवाजसातौ ॥
इमंयज्ञंत्वमस्माकमिंद्रपुरोदधत्सनिष्यसिक्रतुंनः । श्वघ्नीववज्रिन्त्सनयेधनानांत्वयावयमर्यऽआजिंजयेम ॥ उशन्नुषु
णःसुमनाऽउपाकेसोमस्यनुसुषुतस्यस्वधावः । पाऽइंद्रप्रतिभृतस्यमध्वःसमंधसाममदःपृष्ठ्येन ॥ वियोररप्शऽऋषिभि
र्नवेभिर्वृक्षोनपक्वःसृण्योनजेता । मर्योनयोषामभिमन्यमानोच्छाविवक्मिपुरुहूतमिंद्रं ॥ ३ ॥ गिरिर्नयःस्वतवाँऽऋ
ष्वऽइंद्रःसनादेवसहसेजातऽउग्रः । आदर्तावज्रंस्थविरंनभीमऽउद्नेवकोशंवसुनान्यृष्टं ॥ नयस्यवर्ताजनुषान्वस्तिन
राधसऽआमरीतामघस्य । उद्वावृषाणस्तविषीवऽउग्रास्मभ्यंदद्धिपुरुहूतरायः+ ॥ ईक्षेरायःक्षयस्यचर्षणीनामुतव्रजम
पवर्तासिगोनां । शिक्षानरःसमिथेषुप्रहावान्वस्वोराशिमभिनेतासिभूरिं ॥ कयातच्छृण्वेशच्याशचिष्ठोययाकृणोतिमु
हुकाचिदृष्वः । पुरुदाशुषेविचयिष्ठोऽअंहोथादधातिद्रविणंजरित्रे+ ॥ मानोमर्धीराभरादद्धितन्नःप्रदाशुषेदातवेभूरियि
त्ते । नव्येदेष्णेशस्तेऽअस्मिन्तऽउक्थेप्रब्रवामवयमिंद्रस्तुवंतः ॥ नूष्टुतऽइंद्र० ॥ ४ ॥ ( ४।२।११ ) आयात्विंद्रोव

( ४।२।१० ) आनइंद्रइत्येकादशर्चस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् । ( ४।२।११ ) आयात्विंद्रइत्येकादशर्चस्यसूक्तस्यगौतमो

ऋक्सं.

अ.३अ.६

॥ ३५ ॥

स ऽउपनऽइहस्तुतःसंधमादस्तुशूरः । वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् ॥ तस्येदिहस्तवथवृष्ण्यानितुविद्युम्नस्यतुविराधसोनृन् । यस्यक्रतुर्विदथ्यो३नसम्राट्साह्वान्तरुत्रोऽअभ्यास्तिकृष्टीः ॥ आयात्विंद्रोदिवऽआपृथिव्यामक्षूसमुद्रादुतवापुरीषात् । स्वर्णरादवसेनोमरुत्वान्परावतोवासदनादृतस्य ॥ स्थूरस्यरायोबृहतोयऽईशेतमुष्टवामविदथेष्विंद्रं । योवायुनाजयतिगोमतीषुप्रधृष्णुयानयतिवस्योऽअच्छ ॥ उपयोनमोनमसिस्तभायन्नियर्तिवाचंजनयन्यजध्यै । ऋंजसानःपुरुवारऽउक्थैरेंद्रंकृण्वीतसदनेषुहोता ॥ ५ ॥ धिषायदिधिषण्यंतःसरण्यान्त्सदंतोऽअद्रिमौशिजस्यगोहे । आदुरोषाःपास्त्यस्यहोतायोनोमहान्त्संवरणेषुवह्निः ॥ सत्रायदीभार्वरस्यवृष्णःसिषक्तिशुष्मःस्तुवतेभराय । गुहायदीमौशिजस्यगोहेप्रयद्धियेप्रायसेमदाय ॥ वियद्वरांसिपर्वतस्यवृण्वेपयोभिर्जिन्वेऽअपांजवांसि । विदद्गौरस्यगवयस्यगोहेयदीवाजायसुध्यो३वहंति ॥ भद्रातेहस्तासुकृतोतपाणीप्रयंतारास्तुवतेराधऽइंद्र । कातेनिषत्तिकिमुनोममत्सिकिंनोदुदुहर्षसेदातवाऽउ ॥ एवावस्वऽइंद्रःसत्यःसम्राड्ढंतावृत्रंवरिवःपूरवेकः । पुरुष्टुतक्रत्वानःशग्धिरायोभक्षीयतेवसोदैव्यस्य ॥ नूष्टुतऽइंद्र० ॥ ६ ॥ ( ४।३।१ ) यन्नऽइंद्रोजुजुषेयच्चवष्टितन्नोमहान्करतिशुष्म्याचित् । ब्रह्मस्तोमंमघवासोममुक्थायोऽअश्मानंशवसाबिभ्रदेति ॥ वृषावृषंधिंचतुरश्रिमस्यन्नुग्रोबाहुभ्यांनृ

मंडलं ४

अनु० ३

॥ ३५ ॥

---

वामदेवइंद्रस्त्रिष्टुप् । ( ४।३।१ ) यन्नइंद्रइत्येकादशर्चस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् ।

तमः शचीवान् । श्रियेपरुष्णीमुषमाणऽऊर्णायस्याः पर्वाणिसख्यायविव्ये+ ॥ योदेवोदेवतमोजायमानोमहोवाजेभि
र्महद्भिश्चशुष्मैः । दधानोवज्रंबाह्वोरुशंतंद्यामनेनरेजयत्प्रभूम ॥ विश्वारोधांसिप्रवतश्चपूर्वीद्यौर्ऋष्वाज्जनिमन्रेजत
क्षाः । आमातराभरतिशुष्म्यागोर्नृवत्परिज्मन्नोनुवंतवाताः ॥ तातूतऽइंद्रमहतोमहानिविश्वेष्वित्सवनेषुप्रवाच्या ।
यच्छूरधृष्णोधृषताद्धृष्वानहिंवज्रेणशवसाविवेषीः ॥ ७ ॥ तातूतेसत्यातुविनृम्णविश्वाप्रधेनवः सिस्रतेवृष्णऽऊध्नः ।
अधाहत्वद्वृषमणोभियानाः प्रसिंधवोजवसाचक्रमंत ॥ अत्राहतेहरिवस्ताऽउदेवीरवोभिरिंद्रस्तवंतस्वसारः । यत्सीम
नुप्रमुचोबद्बधानादीर्घामनुप्रसितिंस्यंदयध्यै ॥ पिपीळेऽअंशुर्मद्योनसिंधुरात्वाशमीशशमानस्यशक्तिः । अस्मद्र्यक्शुशु
चानस्ययम्याऽआशुर्नरश्मिंतुव्योजसंगोः+ ॥ अस्मेवर्षिष्ठाकृणुहिज्येष्ठानृम्णानिसत्रासहुरेसहांसि । अस्मभ्यंवृत्रासुह
नानिरंधिजहिवधर्वनुषोमर्त्यस्य ॥ अस्माकमित्सुशृणुहित्वमिंद्रास्मभ्यंचित्राँऽउपमाहिवाजान् । अस्मभ्यंविश्वाऽइष
णः पुरंधीरस्माकंसुमघवन्बोधिगोदाः+ ॥ नूष्टुतऽइंद्र० ॥ ८ ॥ ( ४।३।२ ) कथामहामवृधत्कस्यहोतुर्यज्ञंजुषाणोऽअ
भिसोममूधः । पिबन्नुशानोजुषमाणोऽअंधोववक्षऽऋष्वः शुचतेधनाय ॥ कोऽअस्यवीरः सधमादमापसमानंशसुमति
भिः कोऽअस्य । कदस्यचित्रंचिकितेकदूतीवृधेभुवच्छशमानस्ययज्योः ॥ कथाशृणोतिहूयमानमिंद्रः कथाशृण्वन्नवसा

( ४।३।२ ) कथामहामित्येकादशर्चस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् ( अंत्यानांतिसृणांऋतंदेवतावा ) ।

ऋक्सं. अ.३अ.६ ॥ ३६ ॥

मस्यवेद । काऽअंस्यपूर्वीरुपंमातयोहकुथैनंमाहुःपपुंरिंजरित्रे+ ॥ कुथाऽसुबाधंःशशमानोऽअंस्यनशंदुभिद्रविणंदीध्यानः । दुवोभुंवन्नवेंदामऽऋतानांनमौजगृभ्वाँऽअभियज्जुजोषत् ॥ कुथाकदुस्याऽउषसोव्युंष्टौदुवोमतंस्यसुख्यंजुजोष । कुथाकदंस्यसुख्यंसखिभ्योयेऽअंस्मिन्कामंसुयुजंततुस्त्रे+ ॥ ९ ॥ किमादमंत्रंसुख्यंसखिभ्यःकुदानुतेभ्रात्रंप्रब्रवाम । श्रियेसुदृशोवपुंरस्यसर्गाःस्वंर्णचित्रतंममिषऽआगोः+ ॥ द्रुहंजिघांसन्ध्वरसंमनिंद्रांतेतिक्तेतिग्मातुजसेऽअनीका । ऋणाचिद्यत्रंऽऋणयानंऽउग्रोदूरेऽअज्ञाताऽउषसोंबबाधे+ ॥ ऋतस्यहिशुरुधःसंतिपूर्वीऋतस्यंधीतिर्वृजिनानिंहंति । ऋतस्यश्लोकोंबधिरातंतर्दुकर्णावुधानःशुचमानऽआयोः+ ॥ ऋतस्यंदृह्वाधुरुणानिसंतिपुरूणिचंद्रावपुंषेवपूंषि । ऋतेनंदीर्घमिषणंतपृक्षंऽऋतेनुगावंऽऋतमाविंवेशुः ॥ ऋतंयेमानऽऋतमिद्वनोत्यृतस्यशुष्मंस्तुरयाऽउंगव्युः । ऋतायंपृथ्वीबंहुलेगंभीरेऽऋतायंधेनूपंरमेदुंहाते ॥ नूष्टुतऽइंद्र० ॥ १० ॥ ( ४।३।२ ) कासुष्टुतिःशवसःसूनुमिंद्रमर्वाचीनंराधसुऽआवंवर्तत् । दुदिर्हिवीरोगृणतेवसूंनिसगोपंतिर्निष्षिधांनोजनासः ॥ सवृंत्रहत्येहव्यःसऽईड्यःससुष्टुतऽइंद्रःसुत्यरांधाः । सयामन्नामघवामर्त्यायब्रह्मण्यतेसुष्वंयेवरिवोधात् ॥ तमिन्नरोविह्वयंतेसमीकेरिरिक्कांसस्तन्वःकृण्वतत्रां । मिथोयत्त्यागमुभयांसोऽअग्मन्नरंस्तोकस्यतनंयस्यसातौ+ ॥ ऋतूयंतिंक्षितयोयोगंऽउग्राशुषाणासोंमिथो

मंडलं ४ अनु. २ ॥ २६ ॥

( ४।३।२ ) कासुष्टुतिरित्येकादशर्चस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् ।

ऽअर्णसातौ । संयद्विशोववृत्रंतयुध्माऽआदिन्नेमऽइंद्रयंतेऽअभीके ॥ आदिद्धनेमऽइंद्रियंयजंतऽआदित्पक्तिःपुरोळा
शंरिरिच्यात् । आदित्सोमोविपपृच्यादसुष्वीनादिज्जुजोषवृषभंयजध्यै ॥ ११ ॥ कृणोत्यस्मैवरिवोयऽइत्थेंद्रायसोम
मुशतेसुनोति । सध्रीचीनेनमनसाविवेनन्तमित्सखायंकृणुतेसमत्सु ॥ यऽइंद्रायसुनवत्सोममद्यपचात्पक्तीरुतभृज्जा
तिधानाः । प्रतिमनायोरुचथानिहर्यन्तस्मिन्दधद्वृषणंशुष्ममिंद्रः ॥ यदासमर्यंव्यचेदृघावादीर्घंयदाजिमभ्यख्यंद
र्यः । अचिक्रदद्वृषणंपत्न्यच्छादुरोणऽआनिशितंसोमसुद्भिः ॥ भूयसावस्नमचरत्कनीयोविक्रीतोऽअकानिषंपुनर्यन् ।
सभूयसाकनीयोनारिरेचीद्दीनादक्षाविदुहंतिप्रवाणं+ ॥ कऽइमंदशभिर्ममेंद्रंक्रीणातिधेनुभिः । यदावृत्राणिजंघनद
थैनंमेपुनर्ददत् ॥ नूष्टुतऽइंद्र० ॥ १२ ॥ ( ४।३।४ ) कोऽअद्यनर्योदेवकामऽउशन्निंद्रस्यसख्यंजुजोष । कोवामहेव
सेपार्यायसमिद्धेऽअग्नौसुतसोमऽईट्टे ॥ कोनानामवचसासोम्यायमनायुर्वाभवतिवस्तऽउस्राः । कऽइंद्रस्ययुज्यंकःस
खित्वंकोभ्रात्रंवष्टिकवयेकऽऊती+ ॥ कोदेवानामवोऽअद्यावृणीतेकऽआदित्याँऽअदितिंज्योतिरीट्टे । कस्याश्विना
विंद्रोऽअग्निःसुतस्यांशोःपिबंतिमनसाविवेनं ॥ तस्माऽअग्निर्भारतःशर्मयंसज्ज्योक्पश्यात्सूर्यमुच्चरंतं । यऽइंद्रायसुन
वामेत्याहनरेनर्यायनृतमायनृणां+ ॥ नतंजिनंतिबहवोनदभ्राऽउर्वस्माऽअदितिःशर्मयंसत् । प्रियःसुकृत्प्रियऽइंद्रेम

( ४।३।४ ) कोअद्येत्यष्टर्चस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् ।

नायुःप्रियःसुप्रावीःप्रियोऽअस्यसोमी+ ॥ १३ ॥ सुप्राव्यःप्राशुपाळेषवीरःसुष्वेःपक्तिंकृणुतेकेवलेंद्रः । नासुंष्वेरापिर्न
सखानजामिर्दुष्प्राव्योंवहंतेदवाचः ॥ नरेवतांपणिनांसख्यमिंद्रोऽसुंन्वतासुतपाःसंगृणीते । आस्यवेदःखिदतिहंति
नग्नंविसुष्वंयेपक्तये केवलोभूत् ॥ इंद्रंपरेवरेमध्यमासऽइंद्रंयांतोवसितासऽइंद्रं । इंद्रंक्षियंतऽउतयुध्यमानाऽइंद्रंनरो
वाजयंतोंहवंते ॥ १४ ॥ ( ४।३।५ ) अहंमनुरभवंसूर्यश्चाहंकक्षीवाँऽऋषिरस्मिविप्रः । अहंकुत्समार्जुनेयंन्यृंजेहंक
विरुशनापश्यंतामा ॥ अहंभूमिमददामार्यायाहंवृष्टिंदाशुषेमर्त्याय । अहमपोऽअनयंवावशानाममदेवासोऽअनुकेतं
मायन् ॥ अहंपुरोमंदसानोव्यैरंनवसाकंनवतीःशंबरस्य । शततमंवेश्यंसर्वतातादिवोदासमतिथिग्वंयदावं ॥ प्रसुष
विभ्योमरुतोविरस्तुप्रश्येनःश्येनेभ्यऽआशुपत्वा । अचक्रयायत्स्वधयासुपर्णोहव्यंभरन्मनवेदेवजुष्टं ॥ भरद्यदिविर
तोवेविजानःपथोरुणामनोजवाऽअसर्जि । तूयंययौमधुनासोम्येनोतश्रवोविविदेश्येनोऽअत्र ॥ ऋजीपीश्येनोददमा
नोऽअंशुंपरावतःशकुनोमंद्रंमदं । सोमंभरद्दादृहाणोदेवानांन्दिवोऽअमुष्मादुत्तरादादाय ॥ आदायश्येनोऽअभर

( ४।३।५ ) अहंमनुरितिसप्तर्चस्यसूक्तस्यगौतमोवामदेवःआद्यानांतिसृणामात्मादेवताअंत्यानांचतसृणांश्येनस्त्रिष्टुप् ( आद्यतृचेवा
मदेवेंद्रयोर्ऋषित्वविकल्पमाहुःकेचित् ) ।

त्सोमंसहस्रंसवाँऽअयुतंचसाकं । अत्रापुरंधिरजहादरातीर्मदेसोमस्यमूराऽअमूरः ॥ १५ ॥ ( ४।३।६ ) गर्भेनुसन्न न्वेषामवेदमहंदेवानांजनिमानिविश्वा । शतंमापुरऽआयसीररक्षन्नधश्येनोजवसानिरदीयं ॥ नघासमामपजोषंज भाराभीमासत्वक्षंसावीर्येण । ईर्मापुरंधिरजहादरातीरुतवाताँऽअतरच्छूशुवानः ॥ अवयच्छ्येनोऽअस्वनीदधद्योर्वि यद्यदिवातंऽऊहुःपुरंधिं । सृजद्यदस्माऽअवहक्षिपज्ज्यांकृशानुरस्तामनंसाभुरण्यन्+ ॥ ऋजिप्यऽईमिंद्रावतोनभुज्युं श्येनोजंभारबृहतोऽअधिष्णोः । अंतःपतत्पतत्र्यंस्यपर्णमधयामंनिप्रसितस्यतद्वेः+ ॥ अधश्वेतंकलशंगोभिरक्तमापि प्यानंमघवांशुक्रमंधः । अध्वर्युभिःप्रयंतंमध्वोऽअग्रमिंद्रोमदायप्रतिधत्पिवध्यैशूरोमदायप्रतिधत्पिवध्यै ॥ १६ ॥ ( ४।३।७ ) त्वायुजातवतत्सोमसख्यऽइंद्रोऽअपोमनंवेसस्रुतंस्कः । अहन्नहिमरिणात्सप्तसिंधूनपावृणोदपिहितेवखा नि ॥ त्वायुजानिखिदत्सूर्यस्येंद्रश्चक्रंसहसासद्यऽइंदो । अधिष्णुनाबृहतावर्तमानंमहोद्रुहोऽअपविश्वायुधायि ॥ अ हन्निन्द्रोऽअदहदग्निरिंदोपुरादस्यूंन्मध्यंदिनादभीकें । दुर्गेदुरोणेक्रत्वानयातांपुरूसहस्राशर्वानिवर्हीत् ॥ विश्वस्मा त्सीमधमाँऽइंद्रदस्यून्विशोदासीरकृणोरप्रशस्ताः । अवाधेथाममृणतंनिशत्रूनविन्देथामपचितिंवधत्रैः ॥ एवासत्यंम

---

( ४।३।६ ) गर्भेन्वितिपंचर्चस्यसूक्तस्यगौतमोवामदेवःश्येनस्त्रिष्टुब्त्याशक्करी (परानवाष्टौवेत्यनुक्रमण्यामुक्तेरधश्वेतमित्यस्यांपाक्षिकींद्रदेव तायदिश्येनदेवतायाअष्टर्चत्वंस्वीकृतंचेत् ) । ( ४।३।७ ) त्वायजेतिपंचर्चस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् ( इंद्रासोमौवादेवते )

ऋक्सं. मंडलं ४

अ.३अ.६ अनु. ३

॥ ३८ ॥

घवानायुवंतादिंद्रंश्वसोमोर्वमश्व्यंगोः । आर्दर्दतमपिंहितान्यश्नारिरिचिथुःक्षाश्चित्ततृदाना + ॥ १७ ॥ ( ४।३।८ )
आनंःस्तुतऽउपवाजेभिरूतीऽइंद्रयाहिहरिंभिर्मंदसानः । तिरश्चिदर्यःसवनापुरूण्यांगूषेभिर्गृणानःसत्यराधाः ॥ आ
हिष्मायातिनर्यश्चिकित्वान्हूयमानःसोतृभिरुपयज्ञं । स्वश्वोयोऽअभीरुर्मन्यमानःसुष्वाणेभिर्मदतिसंहवीरैः + ॥ श्रा
वयेदस्यकर्णावाजयध्यैजुष्टामनुप्रदिशंमंदयध्यै । उद्वावृषाणोराधसेतुविष्मान्करन्नऽइंद्रःसुतीर्थाभयंच ॥ अच्छायो
गंतानाधमानमूतीऽइत्थाविप्रंहवमानंगृणंतं । उपत्मनिदधानोधुर्याऽ३शून्सहस्राणिशतानिवज्रबाहुः ॥ त्वोतासोमघ
वन्निंद्रविप्रावयंतेस्यामसूरयोगृणंतः । भेजानासोबृहद्दिवस्यरायऽआकाय्यस्यदावनेपुरुक्षोः + ॥ १८ ॥ ( ४।३।९ )
नकिरिंद्रत्वदुत्तरोनज्यायाँऽअस्तिवृत्रहन् । नकिरेवायथात्वं + ॥ सत्रातेऽअनुकृष्टयोविश्वाचक्रेवंवावृतुः । सत्रामहाँऽ
असिश्रुतः + ॥ विश्वेचनेदनात्वादेवासऽइंद्रयुयुधुः । यदहानक्तमातिरः ॥ यत्रोतबाधितेभ्यश्चक्रंकुत्साययुध्यते ।
मुषायऽइंद्रसूर्यं ॥ यत्रदेवाँऽऋघायतोविश्वाँऽअयुध्यऽएकऽइत् । त्वमिंद्रवनूँरहन् ॥ १९ ॥ यत्रोतमर्त्यायकमरिणा
ऽइंद्रसूर्यं । प्रावःशचीभिरेतशं ॥ किमादुतासिवृत्रहन्मघवन्मन्युमत्तमः । अत्राहदानुमातिरः ॥ एतद्धेदुतवीर्यं१

॥ ३८ ॥

---

( ४।३।८ ) आनःस्तुतइतिपंचर्चस्यसूक्तस्यगौतमोवामदेवइंद्रस्त्रिष्टुप् । ( ४।३।९ ) नकिरिंद्रेतिचतुर्विंशत्यृचस्यसूक्तस्यगौतमोवाम
देवइन्द्रःचतुर्दश्यादितिसृणामिंद्रोषसौगायत्रीअष्टम्यंत्येअनुष्टुभौ ।

मिंद्रचकर्थपौंस्यं । स्त्रियंयद्दुर्हणायुवंवधींर्दुहितरंदिवः ॥ दिवश्चिद्घादुहितरंमहान्महीयमानां । उषासमिंद्रसंपिण
क् ॥ अपोषाऽअनसस्सरत्संपिष्टादहविभ्युषी । नियत्सींशिश्नथद्वृषा ॥ २० ॥ एतदस्याऽअनःशयेसुसंपिष्टंविपा
श्या । ससारसींपरावतः ॥ उतसिंधुंविबाल्यंवितस्थानामधिक्षमि । परिष्ठाऽइंद्रमायया ॥ उतशुष्णस्यधृष्णुयाप्रमृ
क्षोऽअभिवेदनं । पुरोयदस्यसंपिणक् ॥ उतदासंकौलितरंबृहतःपर्वतादधि । अवाहन्निंद्रशंबरं ॥ उतदासस्यवर्चि
नःसहस्राणिशतावधीः । अधिपंचप्रधींरिव ॥ २१ ॥ उतत्यंपुत्रमग्रुवःपरावृक्तंशतक्रतुः । उक्थेष्विंद्रऽआभजत् ॥
उतत्यातुर्वशायदूऽअस्नाताराशचीपतिः । इंद्रोविद्वाँऽअपारयत् ॥ उतत्यासद्यऽआर्यासरयोरिंद्रपारतः । अर्णाचि
त्ररथावधीः ॥ अनुद्वाजहितानयोधंश्रोणंचवृत्रहन् । नतत्तेसुम्नमष्टवे ॥ शतमश्मन्मयीनांपुरामिंद्रोव्यास्यत् । दि
वोदासायदाशुषे ॥ २२ ॥ अस्वापयद्दभीतयेसहस्रात्रिंशतंहथैः । दासानामिंद्रोमायया ॥ सघेदुतासिवृत्रहन्त्समा
नऽइंद्रगोपतिः । यस्ताविश्वानिचिच्युषे ॥ उतनूनंयदिंद्रियंकरिष्याऽइंद्रपौंस्यं । अद्यानकिष्टदामिनत् ॥ वामंवामं
तऽआदुरेदेवोददात्वर्यमा । वामंपूषावामंभगोवामंदेवःकरूळती ॥ २३ ॥ (४।३।१०) कयानश्चित्रऽआभुवदूतीस
दावृधःसखा । कथाशचिष्ठयावृता ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः । दृळ्हाचिदारुजेवसु ॥ अभीषुणःस

(४।३।१०७) कयानइतिपंचदशर्चस्यसूक्तस्यगौतमोवामदेवइंद्रोगायत्रीतृतीयापादनिचृत् ।

ऋक्सं.
अ.३.अ.६
॥ ३९ ॥

मंडलं.४
अनु.३

सखीनामविताजरितॄणां । शतंभवास्यूतिभिः ॥ अभीनऽआववृत्स्वचक्रंनवृत्तमर्वतः । नियुद्भिश्चर्षणीनां+ ॥ प्रवता
हिक्रतूनामाहापदेवगच्छसि । अभक्षिसूर्येसचा ॥ २४ ॥ संयत्तऽइंद्रमन्यवःसंचक्राणिदधन्विरे । अधत्वेऽअधसूर्ये ॥
उतस्माहित्वामाहुरिन्मघवानंशचीपते । दातारमविदीधयुं ॥ उतस्मासद्यऽइत्परिशशमानायसुन्वते । पुरूचिन्मंहसे
वसु ॥ नहिष्मातेशतंचनराधोवरंतऽआमुरः । नच्यौत्नानिकरिष्यतः+ ॥ अस्माँऽअवंतुतेशतमस्मान्त्सहस्रमूतयः ।
अस्मान्विश्वाऽअभिष्टयः ॥ २५ ॥ अस्माँऽइहावृणीष्वसख्यायस्वस्तये । महोरायेदिवित्मते ॥ अस्माँऽअविड्ढिवि
श्वहेंद्ररायापरीणसा । अस्मान्विश्वाभिरूतिभिः ॥ अस्मभ्यंताँऽअपावृधिव्रजाँऽअस्तेवगोमतः । नवाभिरिंद्रोतिभिः ॥
अस्माकंधृष्णुयारथोद्युमाँऽइंद्रानपच्युतः । गव्युरश्वयुरीयते ॥ अस्माकमुत्तमंकृधिश्रवोदेवेषुसूर्य । वर्षिष्ठंद्यामिवोपरि
॥ २६ ॥ ( ४।३।११ ) आतूनऽइंद्रवृत्रहन्नस्माकमर्धमागहि । महान्महीभिरूतिभिः ॥ भृमिश्चिद्घासितूतुजिराचित्रचित्रि
णीष्वा । चित्रंकृणोष्यूतये ॥ दभ्रेभिश्चिच्छशीयांसंहंसिव्राधंतमोजसा । सखिभिर्येत्वेसचा ॥ वयमिंद्रत्वेसचावयं
त्वाभिनोनुमः । अस्माँऽअस्माँऽइदुदव ॥ सनश्चित्राभिरद्रिवोनवद्याभिरूतिभिः । अनाधृष्टाभिरागहि ॥ २७ ॥
भूयामोषुत्वावतःसखायऽइंद्रगोमतः । युजोवाजायघृष्वये ॥ त्वंह्येकऽईशिषऽइंद्रवाजस्यगोमतः । सनोयंधिमहीमि

॥ ३९ ॥

( ४।३।११ ) आतूनइतिचतुर्विंशत्यृच[illegible]इंद्रो[illegible]गायत्री ।

षं ॥ नत्वांवरंतेऽअन्यथायदित्संसिस्तुतोमघं । स्तोतृभ्यंऽइंद्रगिर्वणः ॥ अभित्वागोतमागिरानूषतप्रदावने । इंद्रवाजायघृष्वये ॥ प्रतेवोचामवीर्याउयामंदसानऽआरुजः । पुरोदासीरभीत्य ॥ २८ ॥ तातेगृणंतिवेधसोयानिचकर्थपौंस्या । सुतेष्विंद्रगिर्वणः ॥ अवीवृधंतगोतमाऽइंद्रत्वेस्तोमवाहसः । ऐषुधावीरवद्यशः ॥ यच्चिद्धिशश्वतामसींद्रसाधारणस्त्वं । तंत्वावयंहवामहे ॥ अर्वाचीनोवसोभवास्मेसुमत्स्वांधसः । सोमानामिंद्रसोमपाः ॥ अस्माकंत्वामतीनामास्तोमऽइंद्रयच्छतु । अर्वागावर्तयाहरी ॥ पुरोळाशंचनोघसोजोषयासेगिरश्चनः । वधूयुरिवयोषणां ॥ २९ ॥ सहस्रंव्यतीनांयुक्तानामिंद्रमीमहे । शतंसोमस्यखार्यः ॥ सहस्रातेशतावयंगवामाच्यावयामसि । अस्मत्राराधऽएतुते ॥ दशतेकलशानांहिरण्यानामधीमहि । भूरिदाऽअसिवृत्रहन् ॥ भूरिदाभूरिदेहिनोमादभ्रंभूर्याभर । भूरिघेदिंद्रदित्ससि ॥ भूरिदाह्यसिश्रुतःपुरुत्राशूरवृत्रहन् । आनोभजस्वराधसि ॥ प्रतेबभ्रूविचक्षणशंसामिगोषणोनपात् । माभ्यांगाऽअनुशिश्रथः ॥ कनीनकेवविद्रधेनवेद्रुपदेऽअर्भके । बभ्रूयामेषुशोभेते ॥ अरंमऽउस्रयाम्णेरमनुस्रयाम्णे । बभ्रूयामेष्वस्रिधा ॥ ३० ॥ ॥ इतितृतीयाष्टकेषष्ठोध्यायः ॥ ६ ॥ ॥ ॥ ॥

द्वाविंशाध्यायेवर्गाः ३० सूक्तानि १४ ऋचः १५९ ॥ त्यागः ॥ इंद्रायेदं ५१ ऋताये. ३ इंद्राये. २० आत्मन. ३ सुपर्णात्मने श्येनाये. ८ इंद्राये. इंद्रासोमाभ्यामि. ५ इंद्राये. १३ इंद्रोषसाभ्यामि.३ इंद्राये. ५० इंद्राश्वाभ्या. २ ॥ इतितृतीयेषष्ठः ॥ ६ ॥

प्रऋभुभ्यएकादशार्भवंवांऋभुर्विभ्वेहोपनवानश्वांत्यात्रिष्टुबुपनोष्टौचतुरनुष्टुवंतमुतोहिदशदाधिक्रंहिंद्यावापृ
थिव्याद्याशुंषळंत्यानुष्टुंव्दधिक्राव्णःपंचचतस्रौंत्याजगत्योंत्यासौरींद्राकोवामेकादशैंद्रावरुणंतुमभद्वितादशत्र
सदस्युःपौरुकुत्स्यःषळाद्याआत्मस्तवंःकउश्रवत्सप्तंपुरुमीळ्हाजमीळ्हौसौहोत्रौत्वाश्विनंहितंवामेषस्यत्रिष्टुवंतमग्रं
वायव्याद्यैंद्रवायवंतुगायत्रंवायोचतुष्कमानुष्टुभंत्वाद्यावायव्यांविहिपंचवायव्यंमिदंवांषळैंद्रावार्हस्पत्यंगायत्रं
यस्तस्तंभैकादशवार्हस्पत्यमंत्येऐंद्र्यौचोपांत्याजगती ॥ १ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ ( ४।४।१ ) प्रऽऋभुभ्योदूतमिवुवाचमिष्यऽउपस्तिरेश्वैतरींधेनुमीळे । येवातजूतास्तरणिभिरे
वैःपरिद्यांसद्योऽअपसोंवभूवुः+ ॥ यदारमक्रन्नृभवःपितृभ्यांपरिविष्टीवेषणादंसनाभिः । आदिदेवानामुपसख्यमाय
न्धीरासःपुष्टिमवहन्मनायै ॥ पुनर्येचक्रुःपितरायुवानासनायूपेवजरणाशयाना । तेवाजोविभ्वाँऽऋभुरिंद्रवंतोमधु
प्सरसोनोवंतुयज्ञं ॥ यत्संवत्समृभवोगामरक्षन्यत्संवत्समृभवोमाऽअपिंशन् । यत्संवत्समभरन्भासोंऽअस्यास्ताभिःश
मीभिरमृतत्वमाशुः ॥ ज्येष्ठऽआहचमसाद्वाकरेतिकनीयान्त्रीन्कृणवामेत्याह । कनिष्ठऽआहचतुरस्करेतित्वष्टऽऋभव
स्तत्पनयद्वचोवः ॥ १ ॥ सत्यमूचुर्नरऽएवाहिचक्रुरनुस्वधामृभवोजग्मुरेतां । विभ्राजमानाँश्चमसाँऽअहेवावेनत्त्वष्टा



---

( ४।४।१ ) प्रऋभुभ्यइत्येकादशर्चस्यसूक्तस्य... 

चतुरोदद्दश्वान्+ ॥ द्वादंशद्यून्यदगोह्यस्यातिथ्येरणन्नृभवंःससंतंः । सुक्षेत्राकृण्वन्ननयंतसिंधून्धन्वातिष्ठन्नोषधीर्नि
म्नमापंः ॥ रथंयेचक्रुःसुवृतंनरेष्ठांयेधेनुंविश्वजुवंविश्वरूपां । तऽआतंक्षन्त्वृभवोरयिंनःस्ववंसःस्वपंसःसुहस्ताः ॥ अ
पोह्येषामजुषंतदेवाऽअभिक्रत्वामनंसादीध्यांनाः । वाजोदेवानांमभवत्सुकर्मेंद्रस्यऽऋभुक्षावरुणस्यविभ्वा ॥ येहरी
मेधयोक्थामदंन्तऽइंद्रांयचक्रुःसुयुजायेऽअश्वा । तेरायस्पोषंद्रविणान्यस्मेधत्तऽऋभवःक्षेमयंतोनमित्रं+ ॥ इदाह्नःपी
तिमुतवोमदंधुर्नऽऋतेश्रांतस्यंसख्यायदेवाः । तेनूनमस्मेऽऋभवोवसूनितृतीयेऽअस्मिन्त्सवनेदधात ॥ २ ॥ (४।४।२)
ऋभुर्विभ्वावाजऽइंद्रोनोऽअच्छेमंयज्ञंरत्नधेयोपंयात । इदाहिवोधिषणादेव्यह्नामधात्पीतिंसंमदाऽअग्मतावः ॥ वि
दानासोजन्मनोवाजरत्नाऽउतऽऋतुभिर्ऋभवोमादयध्वं । संवोमदाऽअग्मतसंपुरंधिःसुवीरांमस्मेरयिमेरयध्वं ॥ अयं
वोयज्ञऽऋभवोकारियमामनुष्वत्प्रदिवोदधिध्वे । प्रवोच्छांजुजुषाणासोऽअस्थुरभूतविश्वेऽअग्रियोतवाजाः ॥ अभूदु
वोविधतेरत्नधेयमिदानरोदाशुषेमर्त्याय । पिबंतवाजाऽऋभवोददेवोमहितृतीयंसवनंमदाय ॥ आवांजायातोपनऽ
ऋभुक्षामहोनरोद्रविणसोगृणानाः । आवःपीतयोभिपित्वेऽअह्नामिमाऽअस्तंनवस्वंऽइवग्मन् ॥ ३ ॥ आनपातःशव
सोयातनोपेमंयज्ञंनमंसाहूयमानाः । सजोषंसःसूरयोयस्यचस्थमध्वःपातरत्नधाऽइंद्रवंतः ॥ सजोषाऽइंद्रवरुणेनसोमंस

( ४।४।२ ) ऋभुर्विभ्वेत्येकादशर्चस्यसूक्तस्यगौतमोवामदेवऋभवस्त्रिष्टुप् ।

जोषाः पाहि गिर्वणो मरुद्भिः । अग्रेपाभिर्ऋतुपाभिः सजोषा ग्नास्पत्नीभीरत्नधाभिः सजोषाः ॥ सजोषसऽआदित्यैर्मादयध्वं सजोषसऽऋभवः पर्वतेभिः । सजोषसो दैव्येना सवित्रा सजोषसः सिंधुभीरत्नधेभिः ॥ येऽअश्विना ये पितरा यऽऊती धेनुंततक्षुर्ऋभवो येऽअश्वा । येऽअंसत्रा यऽऋधग्रोदसी ये विभ्वो नरः स्वपत्यानि चक्रुः ॥ ये गोमंतं वाजवंतं सुवीरं रयिं धत्थ वसुमंतं पुरुक्षुं । तेऽअग्रेपाऽऋभवो मंदसानाऽअस्मे धत्त ये च रातिं गृणंति ॥ नापाभूत न वोतीतृषामानिःशस्ताऽऋभवो यज्ञेऽअस्मिन् । समिंद्रेण मदथ सं मरुद्भिः सं राजभीरत्नधेयाय देवाः ॥ ४ ॥ ( ४।४।२ ) इहोप यात शवसो नपातः सौधन्वनाऽऋभवो माप भूत । अस्मिन्हि वः सवने रत्नधेयं गमंत्विंद्रमनु वो मदासः ॥ आगन्नृभूणामिह रत्नधेयमभूत्सोमस्य सुषुतस्य पीतिः । सुकृत्यया यत्स्वपस्यया चँऽएकं विचक्र चमसं चतुर्धा ॥ व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्यब्रवीत । अथैत वाजाऽअमृतस्य पंथां गणं देवानामृभवः सुहस्ताः ॥ किंमयः स्विच्चमसऽएषऽआस यं काव्येन चतुरो विचक्र । अथा सुनुध्वं सवनं मदाय पातऽऋभवो मधुनः सोम्यस्य ॥ शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानं । शच्या हरी धनुतरावतष्टेंद्रवाहावृभवो वाजरत्नाः ॥ ५ ॥ यो वः सुनोत्यभिपित्वेऽअह्नां तीव्रं वाजासः सवनं मदाय । तस्मै रयिमृभवः सर्ववीरमा तक्षत वृषणो मंदसानाः ॥ प्रातः सुतमपिबो हर्यश्व माध्यंदिनं सवनं केवलं ते । समृभुभिः पिबस्व रत्नधेभिः सखीँऽर्यांऽइंद्र



( ४।४।३ ) इहोपेति नवर्चस्य सूक्तस्य गौतमो वामदेव ऋभवस्त्रिष्टुप् ।

चकृषेसुकृत्या+ ॥ येदेवासोऽअभवतासुकृत्याश्येनाऽइवेदधिदिविनिषेद । तेरत्नंधातशवसोनपातःसौधन्वनाऽअभ
वतामृतासः ॥ यत्तृतीयंसवनंरत्नधेयमकृणुध्वंस्वपस्यासुहस्ताः । तदृभवःपरिषिक्तंवऽएतत्संमदेभिरिन्द्रियेभिःपिब
ध्वं ॥ ६ ॥ ( ४।४।४ ) अनश्वोजातोऽअनभीशुरुक्थ्योरथस्त्रिचक्रःपरिवर्ततेरजः । महत्तद्वोदेव्यस्यप्रवाचनंद्या
मृभवःपृथिवींयच्चपुष्यथ ॥ रथंयेचक्रुःसुवृतंसुचेतसोविह्वरंतंमनसस्परिध्यया । ताँऽऊन्व१स्यसवनस्यपीतयऽआवो
वाजाऽऋभवोवेदयामसि ॥ तद्वोवाचाऽऋभवःसुप्रवाचनंदेवेषुविभ्वोऽअभवन्महित्वनं । जिव्रीयत्संतापितरासना
जुरापुनर्युवानाचरथायतक्षथ ॥ एकंविचक्रचमसंचतुर्वयंनिश्चर्मणोगामरिणीतधीतिभिः । अथादेवेष्वमृतत्वमानश
श्रुष्टीवाजाऽऋभवस्तद्वऽउक्थ्यं ॥ ऋभुतोरयिःप्रथमश्रवस्तमोवाजश्रुतासोयमजीजनन्नरः । विभ्वतष्टोविदथेषुप्रवा
च्योयंदेवासोवथासविचर्षणिः ॥ ७ ॥ सवाज्यर्वासऽऋषिर्वचस्ययासशूरोऽअस्तापृतनासुदुष्टरः । सरायस्पोषंससुवी
र्यंदधेयंवाजोविभ्वाँऽऋभवोयमाविषुः ॥ श्रेष्ठंवःपेशोऽअधिधायिदर्शतंस्तोमोवाजाऽऋभवस्तंजुजुष्टन । धीरासोहि
ष्ठाकवयोविपश्चितस्तान्वऽएनाब्रह्मणावेदयामसि ॥ यूयमस्मभ्यंधिषणाभ्यस्परिविद्वांसोविश्वानर्याणिभोजना । द्यु
मंतंवाजंवृषशुष्ममुत्तममानोरयिमृभवस्तक्षतावयः ॥ इहप्रजामिहरयिंरराणाऽइहश्रवोवीरवत्तक्षतानः । येनवयंचि

( ४।४।४ ) अनश्वोजातइतिनवर्चस्यसूक्तस्यगौतमोवामदेवऋभवोजगत्यंत्यात्रिष्टुप् ।

ऋक्सं. अ.३अ.७ ॥ ४२ ॥

मंडलं ४ अनु. ४

तयेमात्यन्यान्तंवाजँचित्रमृंभवोददानः ॥ ८ ॥ ( ४।४।५ ) उपनोवाजाऽअध्वरमृंभुक्षादेवायातपथिभिर्देवयानैः । यथायज्ञंमनुंषोविक्ष्वा३ सुदधिध्वेरण्वाःसुदिनेष्वह्नां ॥ तेवोहृदेमनसेसंतुयज्ञाजुष्टासोऽअद्यघृतनिर्णिजोगुः । प्रवःसुतासोहरयंतपूर्णाःक्रत्वेदक्षायहर्षयंतपीताः+ ॥ त्र्युदायंदेवहितंयथावःस्तोमोवाजाऽऋभुक्षणोददेवः । जुह्वेमनुष्वदुपरासुविक्षुयुष्मेसचावृहद्दिवेषुसोमं ॥ पीवोऽअश्वाःशुचद्रथाहिभूतायःशिप्रावाजिनःसुनिष्काः । इंद्रस्यसूनोशवसोनपातोनुवश्चेत्यग्रियंमदाय ॥ ऋभुमृंभुक्षणोरयिंवाजेवाजिन्तमंयुजं । इंद्रस्वंतंहवामहेसदासातममश्विनं ॥ ९ ॥ सेदृभवोयमवथयूयमिंद्रश्चमर्त्यं । सधीभिरस्तुसनितामेधसातासोऽअर्वता ॥ विनोवाजाऽऋभुक्षणःपथश्चितनयष्टवे । अस्मभ्यंसूरयःस्तुताविश्वाऽआशास्तरीषणि ॥ तंनोवाजाऽऋभुक्षणऽइंद्रनासत्यारयिं । समश्वंचर्षणिभ्यऽआपुरुशस्तऽमघत्तये ॥ १० ॥ ( ४।४।६ ) उतोहिवांदात्रासंतिपूर्वायापूरुभ्यस्त्रसदस्युर्नितोशे । क्षेत्रासांददथुरुर्वरासांघनंदस्युभ्योऽअभिभूतिमुग्रं+ ॥ उतवाजिनंपुरुनिष्षिध्वानंदधिक्रामुददथुर्विश्वकृष्टिं । ऋजिप्यंश्येनंप्रुषितप्सुमाशुंचर्कृत्यमर्योनृपतिंनशूरं ॥ यंसीमनुप्रवतेवद्रवंतंविश्वःपूरुर्मदतिहर्षमाणः । पड्भिर्गृध्यंतंमेधयुंनशूरंरथतुरंवातमिवध्र

॥ ४२ ॥

( ४।४।५ ) उपनइत्यष्टर्चस्यसूक्तस्यगौतमोवामदेवऋभवस्त्रिष्टुप्अंत्याश्चतस्रोनुष्टुभः । ( ४।४।६ ) उतोहीतिदशर्चस्यसूक्तस्यगौतमोवामदेवोदधिक्रावाआद्यायाद्यावापृथिवीत्रिष्टुप् ।

जैतं ॥ यःस्मारुंधानोगध्यासमत्सुसनुंतरश्चरतिगोषुगच्छंन् । आविर्ऋजीकोविदथानिचिक्यंत्तिरोऽअरतिंपर्यापऽआ
योः+ ॥ उतस्मैनंवस्त्रमथिंनतायुमनुंक्रोशंतिक्षितयोभरेषु । नीचायमानंजसुरिंनश्येनंश्रवश्चाच्छापशुमच्चंयूथं+ ॥११॥
उतस्मासुप्रथमःसंरिष्यन्निवेवेतिश्रेणिभीरथानां । स्रजंकृण्वानोजन्योनशुभ्वारेणुंरेरिहत्किरणंददश्वान्+ ॥ उतस्य
वाजीसहुरिर्ऋतावाशुश्रूषमाणस्तन्वासमर्ये । तुरंयतीषुतुरयंन्नृजिप्योधिभ्रुवोःकिरतेरेणुमृंजन्+ ॥ उतस्मास्यतन्यतो
रिंवद्योर्ऋघायतोऽअभियुजोभयंते । यदासहस्रमभिषीमयोधीदुर्वर्तुःस्माभवतिभीमऽऋंजन्+ ॥ उतस्मास्यपनयंतिज
नाजूतिंकृष्टिप्रोऽअभिभूंतिमाशोः । उतैनमाहुःसमिथेवियंतःपरादधिक्राऽअसरत्सहस्रैः ॥ आदधिक्राःशवसापंचकृ
ष्टीःसूर्यऽइवज्योतिषापस्ततान । सहस्रसाःशंतसावाज्यर्वापृणक्तुमध्वासमिमावचांसि ॥ १२ ॥ ( ४।४।७ ) आशुं
दधिक्रांतमुनुष्टवामदिवस्पृथिव्याऽउतचर्किराम । उच्छंतीर्मामुषसःसूदयंत्वतिविश्वानिदुरितानिपर्षन् ॥ महश्चर्कं
र्म्यर्वतःक्रतुप्रादधिक्राव्णःपुरुवारस्यवृष्णः । यंपूरुभ्योदीदिवांसंनाग्निंददथुर्मित्रावरुणाततुरिं ॥ योऽअश्वस्यदधिक्रा
व्णोऽअकारीत्समिद्धेऽअग्नाऽउषसोव्युंष्टौ । अनागसंतमदितिःकृणोतुसमित्रेणवरुणेनासजोषाः ॥ दधिक्राव्णऽइष
ऽऊर्जोमहोयदमन्महिमरुतांनामभद्रं । स्वस्तयेवरुणंमित्रमग्निंहवामहऽइंद्रंवज्रबाहुं ॥ इंद्रमिवेदुभयेविह्वयंतऽउदीरा

---

( ४।४।७ ) आशुमितिषड्टृचस्यसूक्तस्यगौतमोवामदेवोदधिक्रावात्रिष्टुबंत्यानुष्टुप् ।

णायज्ञमुपप्रयंतः । दधिक्रामुसूदनंमर्त्यायदद्दथुर्मित्रावरुणानोऽअश्वं ॥ दधिक्राव्णोऽअकारिषंजिष्णोरश्वस्यवाजि
नः । सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ १३ ॥ ( ४।४।८ ) दधिक्राव्णऽइदुनुचर्किरामविश्वाऽइन्मामुष
सःसूदयंतु । अपामग्नेरुषसःसूर्यस्यबृहस्पतेरांगिरसस्यजिष्णोः+ ॥ सत्वाभरिषोगविषोदुवन्यसच्छ्रवस्यादिषऽउषस
स्तुरण्यसत् । सत्योद्रवोद्रवरःपतंगरोदधिक्रावेषमूर्जस्वर्जनत् ॥ उतस्मास्यद्रवतस्तुरण्यतःपर्णनवेरनुवातिप्रगर्धिनः ।
श्येनस्येवध्रजतोऽअंकसंपरिदधिक्राव्णःसहोर्जातरित्रतः ॥ उतस्यवाजीक्षिपणिंतुरण्यतिग्रीवायांबद्धोऽअपिकक्षऽआ
सनि । क्रतुंदधिक्राऽअनुसंतवीत्वत्पथामंकांस्यन्वापनीफणत् ॥ हंसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोण
सत् । नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतं ॥ १४ ॥ ( ४।४।९ ) इंद्राकोवांवरुणासुम्नमाप
स्तोमोहविष्माँऽअमृतोनहोता । योवांहृदिक्रतुमाँऽअस्मदुक्तःपस्पर्शदिंद्रावरुणानमस्वान् ॥ इंद्राहयोवरुणाचक्रऽआ
पीदेवौमर्तःसख्यायप्रयस्वान् । सहंतिवृत्रासमिथेषुशत्रूनवोभिर्वामहद्भिःसप्रशृण्वे ॥ इंद्राहरत्नंवरुणाधेष्ठेत्थानृभ्यः
शशमानेभ्यस्ता । यदीसखायासख्यायसोमैःसुतेभिःसुप्रयसामादयैते ॥ इंद्रायुवंवरुणादिद्युमस्मिन्नोजिष्ठमुग्रानिव



( ४।४।८ ) दधिक्राव्णइतिपंचर्चस्यसूक्तस्यगौतमोवामदेवोदधिक्रावाअंत्यायाःसूर्यस्त्रिष्टुप्अंत्याश्चतस्रोजगत्यः । ( ४।४।९ ) इंद्रा-
कोवामित्येकादशर्चस्यसूक्तस्यगौतमोवामदेवइंद्रावरुणौत्रिष्टुप् ।

धिष्टंवज्रं । योनोदुरेवोवृकतिर्दभीतिस्तस्मिन्मिमाथामभिभूत्योजः ॥ इंद्रायुवंवरुणाभूतमस्याधियःप्रेतारावृषभेवधे
नोः । सानोदुहीयद्यवसेवगत्वीसहस्रधारापयसामहीगौः+ ॥ १५ ॥ तोकेहितेतनयऽउर्वरासुसूरोदृशीकेवृषणश्चपौ
स्ये । इंद्रानोऽअत्रवरुणास्यातामवोभिर्दस्मापरितक्म्यायां ॥ युवामिद्ध्यवसेपूर्व्यायपरिप्रभूतीगविषःस्वापी । वृणीम
हेसख्यायप्रियायशूरामंहिष्ठापितरेवशंभू+ ॥ तावांधियोवसेवाजयंतीराजिंनजग्मुर्युवयूःसुदानू । श्रियेनगावऽउप
सोममस्थुरिंद्रंगिरोवरुणंमेमनीषाः+ ॥ इमाऽइंद्रंवरुणंमेमनीषाऽअग्मन्नुपद्रविणमिच्छमानाः । उपेमस्थुर्जोष्टारऽइव
वस्वोरघ्वीरिवश्रवसोभिक्षमाणाः ॥ अश्व्यस्यत्मनारथ्यस्यपुष्टेर्नित्यस्यरायःपतयःस्याम । ताचक्राणाऽऊतिभिर्नव्य
सीभिरस्मत्रारायोनियुतःसचंतां ॥ आनोबृहंताबृहतीभिरूतीऽइंद्रयातंवरुणवाजसातौ । यद्दिद्यवःपृतनासुप्रक्रीळा
न्तस्यवांस्यामसनितारऽआजेः+ ॥ १६ ॥ ( ४।४।१० ) ममद्विताराष्ट्रंक्षत्रियस्यविश्वायोर्विश्वेऽअमृतायथानः ।
क्रतुंसचंतेवरुणस्यदेवाराजामिकृष्टेरुपमस्यवव्रेः ॥ अहंराजावरुणोमह्यंतान्यसुर्याणिप्रथमाधारयंत । क्रतुंसचंते० ॥
अहमिंद्रोवरुणस्तेमहित्वोर्वीगंभीरेरजसीसुमेके । त्वष्टेवविश्वाभुवनानिविद्वान्त्समैरयंरोदसीधारयंच ॥ अहमपोऽअ
पिन्वमुक्षमाणाधारयंदिवंसदनऽऋतस्य । ऋतेनपुत्रोऽअदितेर्ऋतावोतत्रिधातुप्रथयद्विभूम ॥ मांनरःस्वश्वावाजयंतो

---

(४।४।१०) ममद्वितेतिदशर्चस्यसूक्तस्यपौरुकुत्स्यस्त्रसदस्युःआद्यानांषण्णांत्रसदस्युर्देवताअंत्यानांचतसृणामिंद्रावरुणौत्रिष्टुप् ।

ऋक्सं.
अ.३अ.७
॥ ४४ ॥

मांवृताःसमरंणेहवंते । कृणोम्याजिंमघवाहमिंद्रऽइर्यंमिंरेणुमभिभूत्योजाः ॥ १७ ॥ अहंताविश्वाचकरंनकिंर्मादैव्यं सहोवरतेऽअप्रंतीतं । यन्मासोमासोममदन्यदुक्थोभेभंयेतेरजंसीऽअपारे ॥ विदुष्टेविश्वाभुवनानितस्यताप्रब्रवीषिवरुणायवेधः । त्वंवृत्राणिशृण्विषेजघन्वान्त्वंवृताँऽअरिणाऽइंद्रसिंधून् ॥ अस्माकमत्रपितरस्तऽआंसन्त्सप्तऽऋषयोदौर्गहेबध्यमाने । तऽआयंजंतत्रसदस्युमस्याऽइंद्रंनवृत्रतुरमर्धदेवं ॥ पुरुकुत्सानीहिवामदाशद्धव्येभिरिंद्रावरुणानमोभिः । अथाराजानंत्रसदंस्युमस्यावृत्रहणंददथुरर्धदेवं ॥ रायावयंससवांसोमदेमहव्येनदेवायवसेनगावः । तांधेनुमिंद्रावरुणायुवंनोविश्वाहाधत्तमनपस्फुरंतीं ॥ १८ ॥ ( ४।४।११ ) कऽउंश्रवत्कतमोयज्ञियानांवंदारुदेवः कतमोजुंषाते । कस्येमांदेवीममृतेषुप्रेष्ठांहृदिश्रेषामसुष्टुतिंसुहव्यां ॥ कोमृळातिकतमऽआगमिष्ठोदेवानामुकतमःशंभविष्ठः । रथंकमाहुर्द्रवदंश्वमाशुंयंसूर्यस्यदुहितावृणीत ॥ मक्षूहिष्माागच्छंथऽईवतोद्यूनिंद्रोनशक्तिंपरितक्म्यायां । दिवऽआजाताद्दिव्यासुपर्णाकयाशचीनांभवथःशचिष्ठा ॥ कावांभूदुपमातिःकयानऽआश्विनागमथोहूयमाना । कोवांमहश्चित्त्यजंसोऽअभीकऽउरुष्यतंमाध्वीदस्रानऽऊती ॥ उरुवांरथःपरिनक्षतिद्यामायत्समुद्रादभिवर्ततेवां । मध्वामाध्वीमधुवांप्रुषायन्यत्सींवांपृक्षोभुरजंतपक्काः ॥ सिंधुर्हवांरसयासिंचदश्वान्घृणावयोरुषासःपरिग्मन् । तदूषु

(४।४।११) कउश्रवदितिसप्तर्चस्यसूक्तस्यसौहोत्रौपुरुमीह्लाजमीह्लावश्विनौत्रिष्टुप् ।

मंडलं ४
अनु. ४
॥ ४४ ॥

वामजिरंचैतियानंयेनपतीभवथःसूर्यायाः ॥ इहेहयद्वांसमनापपृक्षेसेयमस्मेसुमतिर्वाजरत्ना । उरुष्यतंजरितारंयुवं हश्रितःकामोनासत्यायुवद्रिक् ॥ १९ ॥ ( ४।४।१२ ) तंवांरथंवयमद्याहुवेमपृथुज्रयमश्विनासंगतिंगोः । यःसूर्यां वहतिवंधुरायुर्गिर्वाहसंपुरुतमंवसूयुं ॥ युवंश्रियमश्विनादेवतातांदिवोनपातावनथःशचीभिः । युवोर्वपुरभिपृक्षःस चंतेवहंतियत्ककुहासोरथेवां ॥ कोवामद्याकरतेरातहव्यऽऊतयेवासुतपेयायवार्कैः । ऋतस्यवावनुषेपूर्व्यायनमोयेमा नोऽअश्विनाववर्तत् ॥ हिरण्ययेनपुरुभूरथेनेमंयज्ञंनासत्योपयातं । पिबाथऽइन्मधुनःसोम्यस्यदधथोरत्नंविधतेजना य ॥ आनोयातंदिवोऽअच्छापृथिव्याहिरण्ययेनसुवृतारथेन । मावामन्येनियमन्देवयंतःसंयद्ददेनाभिःपूर्व्यावां ॥ नूनोरयिंपुरुवीरंबृहंतंदस्रामिमाथामुभयेष्वस्मे । नरोयद्वामश्विनास्तोममावन्त्सधस्तुतिमाजमीह्ळासोऽअग्मन् ॥ इहेहयद्वां० ॥ २० ॥ ( ४।४।१३ ) एषस्यभानुरुदियर्तियुज्यतेरथःपरिज्मादिवोऽअस्यसानवि । पृक्षासोऽअस्मिन्मिथुनाऽअधित्रयोदृतिस्तुरीयोमधुनोविरप्शते ॥ उद्वांपृक्षासोमधुमंतऽईरतेरथाऽअश्वासऽउषसोव्युष्टिषु । अपोर्णुवंतस्तमऽआपरीवृतंस्व१र्णशुक्रंतन्वंतऽआरजः ॥ मध्वःपिबतंमधुपेभिरासभिरुतप्रियंमधुनेयुंजाथांरथं । आवर्तनिंमधुनाजिन्वथस्पथोदृतिंवहेथेमधुमंतमश्विना ॥ हंसासोयेवांमधुमंतोऽअस्रिधोहिरण्यपर्णाऽउहुवऽउषर्बुधः । उद

( ४।४।१२ ) तंवामितिसप्तर्चस्यसूक्तस्यसौहोत्रौपुरुमीह्ळाजमीह्ळावश्विनौत्रिष्टुप् । ( ४।४।१३ ) एषस्यइतिसप्तर्चस्यसूक्तस्यगौतमो

प्रतोमंदिनोमंदिनिस्पृशोमध्वोनमक्षः सवनानिगच्छथः ॥ स्वध्वरासोमधुमंतोऽअग्नयंऽउस्राजरंतेप्रतिवस्तोरश्विना । यन्निक्तहस्तस्तरणिर्विचक्षणःसोमंसुषावमधुमंतमद्रिभिः ॥ आकेनिपासोऽअहभिर्दविध्वतःस्व१र्णशुक्रंतन्वंतऽआरजः । सूरश्चिदश्वान्युयुजानऽईयतेविश्वाँऽअनुस्वधयाचेतथस्पथः+ ॥ प्रवामवोचमश्विनाधियंधारथःस्वश्वोऽअजरोयोऽअस्ति । येनंसद्यःपरिरजांसियाथोहविष्मंतंतरणिंभोजमच्छ ॥ २१ ॥ (४।५।१) अग्रंपिबामधूनांसुतंवायोदिविष्टिषु । त्वंहिपूर्वपाऽअसि ॥ शतेनानोऽअभिष्टिभिर्नियुत्वाँऽइंद्रसारथिः । वायोसुतस्यंतृंपतं ॥ आवाँसहस्रंहरयऽइंद्रवायूऽअभिप्रयः । वहंतुसोमपीतये ॥ रथंहिरण्यवंधुरमिंद्रवायूस्वध्वरं । आहिस्थाथोदिविस्पृशं ॥ रथेनपृथुपाजसादाश्वांसमुपंगच्छतं । इंद्रवायूऽइहागतं ॥ इंद्रवायूऽअयंसुतस्तंदेवेभिःसजोषसा । पिबंतंदाशुषोगृहे ॥ इहप्रयाणमस्तुवामिंद्रवायूविमोचनं । इहवांसोमपीतये ॥ २२ ॥ (४।५।२) वायोशुक्रोऽअयामितेमध्वोऽअग्रंदिविष्टिषु । आयाहिसोमपीतयेस्पार्होदेवनियुत्वता ॥ इंद्रश्चवायवेषांसोमानांपीतिमर्हथः । युवांहियंतीदवोनिम्नमापोनसध्र्यक् ॥ वायविंद्रश्चशुष्मिणासरथंशवसस्पती । नियुत्वंतानऽऊतयऽआयातंसोमपीतये ॥ यावांसंतिपुरुस्पृहो



---

वामदेवोश्विनौजगत्यंत्यात्रिष्टुप्। (४।५।१) अग्रंपिबेतिसप्तर्चस्यसूक्तस्यगौतमोवामदेवइंद्रवायूआद्यायावायुर्गायत्री । (४।५।२) वायोशुक्रइतिचतुर्ऋचस्यसूक्तस्यगौतमोवामदेवइंद्रवायूआद्यायावायुरनुष्टुप् ।

नियुतोंदाशुषेनरा । अस्मेतायज्ञवाहसेंद्रवायूनियच्छतं ॥ २३ ॥ (४।५।३) विहिहोत्राऽअवीताविपोनरायोऽअर्यः । वायवाचंद्रेणरथेनयाहिसुतस्यपीतये ॥ निर्युवाणोऽअशस्तीर्नियुत्वाँऽइंद्रसारथिः । वायवा० ॥ अनुकृष्णेवसुधितीयेमातेविश्वपेशसा । वायवा० ॥ वहंतुत्वामनोयुजोयुक्तासोनवतिर्नव । वायवा० ॥ वायोशतंहरीणांयुवस्वपोष्याणां । उतवातेसहस्रिणोरथऽआयातुपाजसा ॥ २४ ॥ (४।५।४) इदंवामास्येहविःप्रियमिंद्राबृहस्पती । उक्थंमदश्चशस्यते ॥ अयंवांपरिषिच्यतेसोमऽइंद्राबृहस्पती । चारुर्मदायपीतये ॥ आनऽइंद्राबृहस्पतीगृहमिंद्रश्चगच्छतं । सोमपासोमपीतये ॥ अस्मेऽइंद्राबृहस्पतीरयिंधत्तंशतग्विनं । अश्वावंतंसहस्रिणं ॥ इंद्राबृहस्पतीवयंसुतेगीर्भिर्हवामहे । अस्यसोमस्यपीतये ॥ सोममिंद्राबृहस्पतीपिबतंदाशुषोगृहे । मादयेथांतदोकसा ॥ २५ ॥ (४।५।५) यस्तस्तंभसहसाविज्मोऽअंतान्बृहस्पतिस्त्रिषधस्थोरवेण । तंप्रत्नासऽऋषयोदीध्यानाःपुरोविप्रादधिरेमंद्रजिह्वं ॥ धुनेतयःसुप्रकेतंमदंतोबृहस्पतेऽअभियेनस्ततस्रे । पृषंतंसृप्रमदब्धमूर्वंबृहस्पतेरक्षतादस्ययोनिं ॥ बृहस्पतेयापरमापरावदतऽआतऽऋतस्पृशोनिषेदुः । तुभ्यंखाताऽअवताऽअद्रिदुग्धामध्वःश्चोतंत्यभितोविरप्शं ॥ बृहस्पतिःप्रथमंजाय

---

(४।५।३) विहिहोत्राइतिपंचर्चस्यसूक्तस्यगौतमोवामदेवोवायुरनुष्टुप् । (४।५।४) इदंवामितिषडृचस्यसूक्तस्यगौतमोवामदेवइंद्राबृहस्पतीगायत्री । (४।५।५) यस्तस्तंभेत्येकादशर्चस्यसूक्तस्यगौतमोवामदेवोबृहस्पतिरंत्ययोर्द्वयोरिंद्राबृहस्पतीत्रिष्टुप्दशमीजगती ।

ऋक्सं.

अ.३अ.७

॥ ४६ ॥

मानोमहोज्योतिंषःपरमेव्योंमन् । सुप्तास्यंस्तुविजातोरवेंणविसप्तरंश्मिरधमत्तमांसि ॥ ससुष्टुभासऽऋक्कंतागणेनव
लंरुरोजफलिगंरवेंण । बृहुस्पतिंरुस्रियांहव्यसूदःकनिक्रदद्वावंशतीरुदांजत् ॥ २६ ॥ एवापित्रेविश्वदेंवायवृष्णेंय
ज्ञैविंधेमनमंसाहविर्भिः । बृहंस्पतेसुप्रजावीरवंतोवयंस्यामपतंयोरयीणां+ ॥ सऽइद्राजाप्रतिंजन्यानिविश्वाशुष्मे
णतस्थावभिवीर्येण । बृहुस्पतिंयःसुभृतंबिभर्तिवल्गूयतिवंदंतेपूर्वभाजं ॥ सऽइत्क्षेतिसुधितऽओकसिस्वेतस्माऽइळा
पिन्वतेविश्वदानीम् । तस्मैविशःस्वयमेवानंमंतेयस्मिन्ब्रह्माराजनिपूर्वऽएति ॥ अप्रंतीतोजयतिसंधनांनिप्रतिंजन्या
न्युतयासजंन्या । अवस्यवेयोवरिंवःकृणोतिंब्रह्मणेराजातमंवंतिदेवाः+ ॥ इंद्रंश्चसोमंपिबतंबृहस्पतेस्मिन्यज्ञेमंदसा
नावृषण्वसू । आवांविशंत्विंदंवःस्वाभुवोस्मेरयिंसर्ववीरंनियंच्छतं ॥ बृहंस्पतऽइंद्रवधंतंनःसचासावांसुमतिर्भूत्वस्मे ।
अविष्टंधियोंजिगृतंपुरंधीर्जजस्तमर्योवनुषामरांतीः ॥ २७ ॥ इतितृतीयाष्टकेसप्तमोऽध्यायः ॥ ७ ॥ ॥

त्रयोविंशाध्यायेवर्गाः २७ सूक्तानि १८ ऋचः १४४ ॥ त्यागः ॥ ऋभुभ्य. ४८ द्याव्यापृथिवीभ्या. १ दधिक्राव्ण. १९ सूर्याये.१
इंद्रावरुणाभ्या. ११ त्रसदस्यव. ६ इंद्रावरुणाभ्या. ४ अश्विभ्या. २१ वायव. १ इंद्रवायुभ्या. ६ वायवे. इंद्रवायुभ्या. ३ वायव. ५
इंद्राबृहस्पतिभ्या. ६ बृहस्पतय. ९ इंद्राबृहस्पतिभ्या. २ ॥ इतितृतीयेसप्तमः ॥ ७ ॥

मंडलं ४

अनु. ५

॥ ४६ ॥

इदमुषस्यंतुप्रतिष्यासप्तगायत्रंतदेवस्यसावित्रंतुजागतंमभूदेवःषट्त्रिष्टुवंतंकोवोदशवैश्वदेवंत्रिगायत्र्यंतंतुम
हीसप्तद्यावापृथिवीयंक्षेत्रस्याष्टौतिस्रःक्षैत्रपत्याःशुनायैकापराशुरउष्णिक्सांत्याचशुनासीराभ्यांसुपांत्येसीतायै
तेचानुष्टुभांवाद्याचतुर्थीचसमुद्रादेकादशाग्नेयंजगत्यंतंसौर्यंवापंवागव्यंवाघृतस्तुतिर्वानमोत्रिभ्योभौमोत्रिःपं
चमेमंडलेनुक्तगोत्रमात्रेयंविद्यात्पंक्त्यंतस्यचसूक्तस्यशेषमानुष्टुभंमवोधिद्वादशवुधविष्ठिरौकुमारंकुमारोवृशो
वाजानउभौवाशक्रयंतंकंवीत्यृचोस्तुवृशएवंत्वमग्नेवसुश्रुतआद्याविराट्तृतीयामारुतरौद्रात्वैष्णवीत्वासग्नए
कादशंसुसमिद्धायाप्रंगायत्रमांग्नितंदशपांक्तंसखायइषःपंक्त्यंतंत्वामग्नेसप्तजागतं ॥ १ ॥ ॥ ॥

॥ हरिः ओम् ॥ ( ४।५।६ ) इदमुत्यत्पुरुतमंपुरस्ताज्ज्योतिस्तमसोवयुनांवदस्थात् । नूनंदिवोदुहितरोविभातीर्गातुंकृणवन्नुषसोजनाय ॥ अस्थुरुचित्राऽउषसःपुरस्तान्मिताऽइवस्वरवोध्वरेषु । व्यूव्रजस्यतमसोद्वारोच्छंतीरव्रञ्छुचयःपावकाः+ ॥ उच्छंतीरद्यचितयंतभोजान्राधोदेयायोषसोमघोनीः । अचित्रेऽअंतःपणयःससंत्वबुध्यमानास्तमसोविमध्ये ॥ कुवित्सदेवीःसनयोनवोवायामोवभूयादुषसोवोऽअद्य । येनानवग्वेऽअंगिरेदशग्वेसप्तास्येरेवतीरेवदूष+ ॥ यूयंहिदेवीऋतयुग्भिरश्वैःपरिप्रयाथभुवनानिसद्यः । प्रबोधयंतीरुषसःससंतंद्विपाच्चतुष्पाच्चरथायजीवं+ ॥ १ ॥

---

(* जननाम्नऋषेःपुत्रोजान इति सर्वा० भाष्यं । जार इति सायणः ।) (४।५।६) इदमुत्यदित्येकादशर्चस्यसूक्तस्यगौतमोवामदेवउषास्त्रिष्टुप् ।

ऋक्सं. अ.३अ.८ । ४७ ॥

कस्विदासांकतमापुराणीययाविधानाविदधुर्ऋभूणां । शुभंयच्छुभ्राऽउषसश्चरंतिनविज्ञायंतेसदृशीरजुर्याः+ ॥ ताघाताभद्राऽउषसःपुरासुरभिष्टिद्युम्नाऽऋतजातसत्याः । यास्वीजानःशशमानऽउक्थैःस्तुवञ्छंसंद्रविणंसद्यऽआप ॥ ताऽआचरंतिसमनापुरस्तात्समानतःसमनापप्रथानाः । ऋतस्यदेवीःसदसोबुधानागवांनसर्गाऽउषसोजरंते ॥ ताऽइन्न्वे३ वसमनासमानीरमीतवर्णाऽउषसश्चरंति । गूहंतीरभ्वमसितंरुशद्भिःशुक्रास्तनूभिःशुचयोरुचानाः+ ॥ रयिंदिवोदुहितरोविभातीःप्रजावंतंयच्छतास्मासुदेवीः । स्योनादावःप्रतिबुध्यमानाःसुवीर्यस्यपतयःस्याम ॥ तद्वोदिवोदुहितरोविभातीरुपब्रुवऽउषसोयज्ञकेतुः । वयंस्यामयशसोजनेषुतद्द्यौश्चधत्तांपृथिवीचदेवी+ ॥ २ ॥ (४।५।७) प्रतिष्यासूनरीजनीव्युच्छंतीपरिस्वसुः । दिवोऽअदर्शिदुहिता+ ॥ अश्वेवचित्रारुषीमातागवामृतावरी । सखाभूदश्विनोरुषाः+ ॥ उतसखास्यश्विनोरुतमातागवामसि । उतोषोवस्वऽईशिषे ॥ यावयद्द्वेषसंत्वाचिकित्वित्सूनृतावरि । प्रतिस्तोमैरभुत्स्महि ॥ प्रतिभद्राऽअदृक्षतगवांसर्गानरश्मयः । ओषाऽअप्राऽउरुज्रयः ॥ आपप्रुषीविभावरिव्यावज्योतिषातमः । उषोऽअनुस्वधामव ॥ आद्यांतनोषिरश्मिभिरांतरिक्षमुरुप्रियं । उषःशुक्रेणशोचिषा ॥३॥ (४।५।८) तद्देवस्यसवितुर्वार्यंमहद्वृणीमहेऽअसुरस्यप्रचेतसः । छर्दिर्येनदाशुषेयच्छतित्मनातन्नोमहाँऽउदयान्देवोऽअक्तुभिः ॥

मंडलं ४ अनु. ५ ॥ ४७ ॥

(४।५।७) प्रतिष्येतिसप्तर्चस्यसूक्तस्यगौतमोवामदेवउषागायत्री । (४।५।८) तद्देवस्येतिसप्तर्चस्यसूक्तस्यगौतमोवामदेवःसविताजगती ।

दिवोधर्ताभुवनस्यप्रजापतिःपिशंगंद्रापिंप्रतिमुंचतेकविः । विचक्षणःप्रथयन्नापृणन्नुर्वजीजनत्सवितासुम्नमुक्थ्यं* ॥ आप्रारजांसिदिव्यानिपार्थिवाश्लोकंदेवःकृणुतेस्वायधर्मणे । प्रबाहूऽअस्राक्सवितासवीमनिनिवेशयन्प्रसुवन्नक्तुभिर्जगत् ॥ अदाभ्योभुवनानिप्रचाकशद्व्रतानिदेवःसविताभिरक्षते । प्रास्राग्बाहूभुवनस्यप्रजाभ्योधृतव्रतोमहोऽअज्मस्यराजति ॥ त्रिरंतरिक्षंसवितामहित्वनात्रीरजांसिपरिभूस्त्रीणिरोचना । तिस्रोदिवःपृथिवीस्तिस्रऽइन्वतित्रिभिर्व्रतैरभिनोरक्षतित्मना ॥ बृहत्सुम्नःप्रसवीतानिवेशनोजगतःस्थातुरुभयस्ययोवशी । सनोदेवःसविताशर्मयच्छत्वस्मेक्षयायत्रिवरूथमंहसः ॥ आगन्देवऽऋतुभिर्वर्धतुक्षयंदधातुनःसवितासुप्रजामिषं । सनःक्षपाभिरहभिश्चजिन्वतुप्रजावंतंरयिमस्मेसमिन्वतु ॥ ४ ॥ ( ४।५।९ ) अभूद्देवःसवितावंद्योनुनऽइदानीमह्नऽउपवाच्योनृभिः । वियोरत्नाभजतिमानवेभ्यःश्रेष्ठंनोऽअत्रद्रविणंयथादधत् ॥ देवेभ्योहिप्रथमंयज्ञियेभ्योमृतत्वंसुवसिभागमुत्तमं । आदिद्दामानंसवितर्व्यूर्णुषेनूचीनाजीवितामानुषेभ्यः ॥ अचित्तीयच्चकृमादैव्येजनेदीनैर्दक्षैःप्रभूतीपूरुषत्वता । देवेषुचसवितर्मानुषेषुचत्वंनोऽअत्रसुवतादनागसः ॥ नप्रमियेसवितुर्दैव्यस्यतद्यथाविश्वंभुवनंधारयिष्यति । यत्पृथिव्यावरिमन्नास्वंगुरिर्वर्ष्मन्दिवःसुवतिसत्यमस्यतत्+ ॥ इंद्रज्येष्ठान्बृहद्भ्यःपर्वतेभ्यःक्षयाँऽएभ्यःसुवसिपस्त्यावतः । यथायथापतयंतोवि

---

( ४।५।९ ) अभूद्देवइतिषडृचस्यसूक्तस्यगौतमोवामदेवःसविताजगत्यंत्यात्रिष्टुप् ।

येमिरऽएवैवतस्थुःसवितःसवायते ॥ येतेत्रिरहन्त्सवितःसवासोदिवेदिवेसौभगमासुवंति । इंद्रोद्यावापृथिवीसिंधुर
द्भिरादित्यैर्नोऽअदितिःशर्मयंसत् ॥ ५ ॥ ( ४।५।१० ) कोवस्त्रातावसवःकोवरूताद्यावाभूमीऽअदितेत्रासीथां
नः । सहीयसोवरुणमित्रमर्तात्कोवोध्वरेवरिवोधातिदेवाः ॥ प्रयेधामानिपूर्व्याण्यर्चान्वियदुच्छान्वियोतारोऽअमू
राः । विधातारोवितेदधुरजस्राऽऋतधीतयोरुरुचंतदस्माः+ ॥ प्रपस्त्या३मदितिंसिंधुमर्कैःस्वस्तिमीळेसख्यायदेवीं ।
उभेयथानोऽअहनीनिपातऽउषासानक्ताकरतामदब्धे ॥ व्यर्यमावरुणश्चेतिपंथामिषस्पतिःसुवितंगातुमग्निः । इंद्रा
विष्णूनृवदुषुस्तवानाशर्मनोयंतममवद्वरूथं ॥ आपर्वतस्यमरुतामवांसिदेवस्यत्रातुरव्रिभगस्य । पात्पतिर्जन्यादंहसोनो
मित्रोमित्रियादुतनऽउरुष्येत् ॥ ६ ॥ नूरोदसीऽअहिनाबुध्न्येनस्तुवीतदेवीऽअप्येभिरिष्टैः । समुद्रंनसंचरणेसनिष्यवो
घर्मस्वरसोनद्यो३अपव्रन् ॥ देवैर्नोदेव्यदितिर्निपातुदेवस्त्रातात्रायतामप्रयुच्छन् । नहिमित्रस्यवरुणस्यधासिमर्हाम
सिप्रमियंसान्वग्नेः+ ॥ अग्निरीशेवसव्यस्याग्निर्महःसौभगस्य । तान्यस्मभ्यंरासते ॥ उषोमघोन्यावहसूनृतेवार्या
पुरु । अस्मभ्यंवाजिनीवति ॥ तत्सुनःसविताभगोवरुणोमित्रोऽअर्यमा । इंद्रोनोराधसागमत् ॥७॥ (४।५।११) मही



---

(४।५।१०) कोवस्त्रातेतिदशर्चस्यसूक्तस्यगौतमोवामदेवोविश्वेदेवास्त्रिष्टुप्‌अंत्यास्तिस्रोगायत्र्यः । ( भेदपक्षे–विश्वेदेवाः ७ अग्निः १ उषाः १ विश्वेदेवाः १ एवंदश ) । ( ४।५।११ ) महीइतिसप्तर्चस्यसूक्तस्यगौतमोवामदेवोद्यावापृथिवीत्रिष्टुप्‌अंत्यास्तिस्रोगायत्र्यः ।

द्यावापृथिवीऽइहज्येष्ठेरुचाभवतांशुचयद्भिरर्कैः । यत्सींवरिष्ठेबृहतीविमिन्वन्रुवद्धोक्षापप्रथानेभिरेवैः ॥ देवीदेवेभिर्यजतेयजत्रैरमिनतीतस्थतुरुक्षमाणे । ऋतावरीऽअद्रुहादेवपुत्रेयज्ञस्यनेत्रीशुचयद्भिरर्कैः+ ॥ सऽइत्स्वपाभुवनेष्वासयऽइमेद्यावापृथिवीजजान । उर्वीगंभीरेरजसीसुमेकेऽअवंशेधीरःशच्यासमैरत् ॥ नूरोदसीबृहद्भिर्नोवरूथैःपत्नीवद्भिरिषयंतीसजोषाः । उरूचीविश्वेयजतेनिपातंधियास्यामरथ्यःसदासाः+ ॥ प्रवांमहिद्यवीऽअभ्युपस्तुतिंभरामहे । शुचीऽउपप्रशस्तये ॥ पुनानेतन्वामिथःस्वेनदक्षेणराजथः । ऊह्याथेसनादृतं+ ॥ महीमित्रस्यसाधथस्तरंतीपिप्रतीऽऋतं । परियज्ञंनिषेदथुः ॥ ८ ॥ ( ४।५।१२ ) क्षेत्रस्यपतिनावयंहितेनेवजयामसि । गामश्वंपोषयित्न्वासनोमृळातीदृशे ॥ क्षेत्रस्यपतेमधुमंतमूर्मिंधेनुरिवपयोऽअस्मासुधुक्ष्व । मधुश्चुतंघृतमिवसुपूतमृतस्यनःपतयोमृळयंतु ॥ मधुमतीरोषधीर्द्यावऽआपोमधुमन्नोभवत्वंतरिक्षं । क्षेत्रस्यपतिर्मधुमान्नोऽअस्त्वरिष्यंतोऽअन्वेनंचरेम ॥ शुनंवाहाः

---

( ४।५।१२ ) क्षेत्रस्येत्यष्टर्चस्यसूक्तस्यगौतमोवामदेवआद्यानांतिसृणांक्षेत्रपतिर्देवताचतुर्थ्याःशुनःपंचम्यष्टम्योःशुनासीरौषष्ठीसप्तम्योःसीता आद्याचतुर्थीषष्ठीसप्तम्योनुष्टुभःपंचमीपुरउष्णिक्शेषास्त्रिष्टुभः ( अत्रचतुर्थ्याःशुनोऽदंतः । तथाशुनासीरावित्यत्रकेचिद्वाय्वादित्यावित्युच्चारयन्तितन्नचतुरस्रं यतःवायुःशुनःसूर्यएवात्रसीरःशुनासीरौवायुसूर्यौवदंति । शुनासीरंयास्कइंद्रंतुमेनेसूर्येंद्रौतौमन्यतेशाकपूणिरितिशुनासीरस्वरूपेशौनकेनाचार्यमतदर्शनव्याजेनवैविध्यंप्रतिपादितंतस्मात्प्रकृतिभूतशुनासीरशब्देनोच्चारणंयुक्तं ) ।

ऋक्सं० अ.३अ.८ ॥ ४९ ॥

शुनंनरः॑शुनंकृ॑षतुलांग॑लं । शुनंव॑र॒त्रावध्यं॑तांशुनमष्ट्रा॑मुदिं॑गय ॥ शुनासीराविमांवाचं॑जुषेथांयद्दि॒विच॒क्रथुः॑पयः॑ । ते नेमामु॑पसिंचतं ॥ अर्वाचीसुभगेभव॒सीतेवंदा॑महेत्वा । यथा॑नः॑सुभगास॑सि॒यथा॑नः॑सुफलास॑सि ॥ इंद्रः॑सीतां॒निगृ॑ह्णा तुतांपू॒षानुय॑च्छतु । सानः॒पय॑स्वतीदुहा॒मुत्त॑रामुत्त॒रांसमा॑ ॥ शुनंनः॒फाला॒विकृ॑षंतुभू॒मिंशुनंकी॒नाशा॑ऽअभिय॑ंतुवा॒हैः । शुनंप॒र्जन्यो॒मधु॑ना॒पयो॑भिः॒शुना॑सीराशुनम॒स्मासु॑धत्तं ॥ ९ ॥ (४।५।१३) स॒मु॒द्रादू॒र्मिर्मधु॑माँ॒ऽउदा॑र॒दुपां॒शुना॒सम॑मृत त्वमा॑नट् । घृ॒तस्य॒नाम॒गुह्यं॒यदस्ति॑जि॒ह्वादे॒वाना॑म॒मृत॑स्य॒नाभिः॑ ॥ व॒यंनाम॒प्रब्र॑वामाघृ॒तस्या॒स्मिन्य॒ज्ञेधा॑रयामा॒नमो॑भिः । उप॑ब्र॒ह्माशृ॑णवच्छ॒स्यमा॑नं॒चतुः॑शृंगोवमीद्गौ॒रऽए॒तत् ॥ च॒त्वारि॒शृंगा॒त्रयो॑ऽअस्य॒पादा॒द्वेशी॒र्षेस॒प्तहस्ता॑सोऽअस्य । त्रिधा॑ब॒द्धोवृ॑ष॒भोरो॑रवीतिम॒होदे॒वोमर्त्या॒ँऽआवि॑वेश ॥ त्रिधा॑हि॒तंप॒णिभि॑र्गु॒ह्यमा॑नं॒गवि॑दे॒वासो॑घृ॒तमन्व॑विंदन् । इंद्र॒ऽएकं॒सूर्य॒ऽएकं॑जजान॒वेनादेकं॑स्व॒धया॒निष्ट॑तक्षुः ॥ ए॒ताऽअ॑र्षन्ति॒हृद्या॑त्समु॒द्राच्छ॒तव्र॑जारि॒पुणा॒नाव॒चक्षे॑ । घृ॒तस्य॒धारा॑ऽअ॒भिचा॑कशीमिहि॒रण्ययो॑वेत॒सोमध्य॑ऽआसां ॥ १० ॥ स॒म्यक्स्र॑वंतिस॒रितो॒नधेना॑ऽअं॒तर्हृ॒दामन॑सापू॒यमा॑नाः । ए॒तेऽअ॑र्षन्त्यू॒र्मयो॑घृ॒तस्य॑मृ॒गाऽइ॑वक्षिप॒णोरीष॑माणाः ॥ सिंधो॑रिवप्राध्व॒नेशू॑घ॒नासो॒वात॑प्रमियः॒पत॑यंतिय॒ह्वाः । घृ॒तस्य॒धारा॑ऽअरु॒षोनवा॒जीकाष्ठा॑भि॒दन्नू॒र्मिभिः॒पिन्व॑मानः ॥ अ॒भिप्र॑वंत॒सम॑नेव॒योषाः॑कल्या॒ण्य१ः॒स्मय॑मानासो॒ऽअ॒ग्निं । घृ॒त

मंडलं ४ अनु० ५ ॥ ४९ ॥



(४।५।१३) समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यगोतमोवामदेवोग्निस्त्रिष्टुबंत्याजगती । (सूर्योवागावोवाघृतस्तुतिर्वादेवता) ।

स्यधाराःसमिधोनसंततांजुषाणोहर्यतिजातवेदाः ॥ कन्याऽइववहतुमेतवाऽउंऽअंज्यंजानाऽअभिचाकशीमि । यत्र सोमःसूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवंते ॥ अभ्यर्षतसुष्टुतिंगव्यमाजिमस्मासुभद्राद्रविणानिधत्त । इमंयज्ञंनय तदेवतानोघृतस्यधारामधुमत्पवंते ॥ धामन्तेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यं१तरायुषि । अपामनीकेसमिथेयऽ आभृतस्तमश्याममधुमंतंतऽऊर्मिं+ ॥ ११ ॥ (इतिवामदेवंचतुर्थंमंडलंसमाप्तं । अत्रसूक्तानि ५८)॥ (५।१।१) अ बोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं । यह्वाऽइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ ॥ अबोधि होतायजथायदेवानूर्ध्वोऽअग्निःसुमनाःप्रातरस्थात् । समिद्धस्यरुशददर्शिपाजोमहान्देवस्तमसोनिरमोचि ॥ यदींग णस्यरशनामजीगःशुचिरंक्तेशुचिभिर्गोभिरग्निः । आद्दक्षिणायुज्यतेवाजयंत्युत्तानामूर्ध्वोऽअधयज्जुहूभिः ॥ अग्निम च्छादेवयतांमनांसिचक्षूंषीवसूर्येसंचरंति । यदींसुवातेऽउषसाविरूपेश्वेतोवाजीजायतेऽअग्रेऽअह्नां ॥ जनिष्टहिजे न्योऽअग्रेऽअह्नांहितोहितेष्वरुषोवनेषु । दमेदमेसप्तरत्नादधानोग्निर्होतानिषसादायजीयान् ॥ अग्निर्होतान्यसीदद्य जीयानुपस्थेमातुःसुरभाऽउलोके । युवाकविःपुरुनिष्ठऽऋतावाधर्ताकृष्टीनामुतमध्यऽइद्धः ॥ १२ ॥ प्रणुत्यंविप्रम ध्वरेषुसाधुमग्निंहोतारमीळतेनमोभिः । आयस्ततानरोदसीऽऋतेननित्यंमृजंतिवाजिनंघृतेन ॥ मार्जाल्योमृज्यतेस्वे

---

आत्रेयेपंचमेमंडलेषडनुवाकाः । (५।१।१) अबोधीतिद्वादशर्चस्यसूक्तस्यात्रेयौबुधगविष्ठिरावग्निस्त्रिष्टुप् ।

दमूनाः कविप्रशस्तोऽअतिथिःशिवोनः । सहस्रशृंगोवृषभस्तदोजाविश्वाँऽअग्नेसहसाप्रास्यन्यान्+ ॥ प्रसद्योऽअग्नेऽ अत्येष्यन्यानाविर्यस्मैचारुतमोबभूथ । ईळेन्योवपुष्योविभावाप्रियोविशामतिथिर्मानुषीणां ॥ तुभ्यंभरंतिक्षितयोय विष्ठबलिमग्नेऽअंतितऽओतदूरात् । आभंदिष्ठस्यसुमतिंचिकिद्धिबृहत्तेऽअग्नेमहिशर्मभद्रं+ ॥ आद्यरथंभानुमोभानु मंतमग्नेतिष्ठयजतेभिःसमंतं । विद्वान्पथीनामुर्वंतरिक्षमेहदेवान्हविरद्यायवक्षि ॥ अवोचामकवयेमेध्यायवचोवंदा रुवृषभायवृष्णे । गविष्ठिरोनमसास्तोममग्नौदिवीवरुक्ममुरुव्यंचमश्रेत् ॥ १३ ॥ ( ५।१।२ ) कुमारंमातायुवतिः समुब्धंगुहाबिभर्तिनददातिपित्रे । अनीकमस्यनमिनज्जनासःपुरःपश्यंतिनिहितमरतौ ॥ कमेतंत्वंयुवतेकुमारंपेषी विभर्षिमहिषीजजान । पूर्वीर्हिगर्भःशरदोववर्धापश्यंजातंयदसूतमाता+ ॥ हिरण्यदंतंशुचिवर्णमारात्क्षेत्रादपश्यमा युधामिमानं । ददानोऽअस्माऽअमृतंविपृक्वत्किंमामनिंद्राःकृणवन्ननुक्थाः+ ॥ क्षेत्रादपश्यंसनुतश्चरंतंसुमद्यूथंनपुरु शोभमानं । नताऽअगृभ्रन्नजनिष्टहिषःपलिक्नीरिद्युवतयोभवंति ॥ केमेमर्यकंवियवंतगोभिर्नयेषांगोपाऽअरणश्चिदा स । यईंजगृभुरवतेसृजंत्वाजातिपश्वऽउपनश्चिकित्वान्+ ॥ वसांराजानंवसतिंजनानामरातयोनिदधुर्मर्त्येषु । ब्रह्मा



( ५।१।२ ) कुमारमितिद्वादशर्चस्यसूक्तस्यात्रेयःकुमारःकमेतंत्विज्योतिषेत्यनयोर्जानोवृशोग्निस्त्रिष्टुप्अंत्याशक्करी ( पाक्षिकोजारो वृशःसर्वसूक्तेपि । अत्रसर्वानुक्रमभाष्येजननाम्नऋषेःपुत्रोजानइत्येवनिर्णीतम् । जरनाम्नऋषेःपुत्रोजारोवृशइतितुसायनभाष्यम् ।)

ण्यत्रेरवतंसृजंतुनिंदितारोनिंद्यासोभवंतु ॥ १४ ॥ शुनंश्चिच्छेपंनिदिंतंसहस्राद्यूपादमुंचोऽअशंमिष्टहिषः । एवास्म
दंग्ने विमुमुग्धिपाशान्होतंश्चिकित्वऽइहतूनिषद्य ॥ हृणीयमानोऽअपहिमदैयेःप्रमेंदेवानांव्रतपाऽउंवाच । इंद्रोंविद्वाँ
ऽअनुहित्वाचचक्षतेनाहमंग्नेऽअनुशिष्टऽआगाँ ॥ विज्योतिषाबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा । प्रादेवी
र्मायाःसहतेदुरेवाःशिशींतेशृंगेरक्षसेविनिक्षे ॥ उतस्वानासोंदिविषंत्वग्नेस्तिग्मायुधारक्षसेहंतवाऽउं । मदेचिदस्यप्ररु
जंतिभामानवरंतेपरिबाधोऽअदेवीः ॥ एतंतेस्तोमंतुविजातविप्रोरथंनधीरःस्वपाऽअतक्षं । यदीदग्नेप्रतित्वंदेवहर्याः
स्वर्वतीरपऽएनाजयेम ॥ तुविग्रीवोवृषभोवावृधानोशत्र्व१र्यःसमंजातिवेदः । इतीममग्निममृताऽअवोचन्बर्हिष्मंते
मनंवेशमैयंसद्धविष्मंतेमनंवेशमैयंसत् ॥ १५ ॥ ( ५।१।२ ) त्वमंग्नेवरुणोजायसेयत्त्वंमित्रोभंवसियत्समिद्धः । त्वे
विश्वेसहसस्पुत्रदेवास्त्वमिंद्रोदाशुषेमर्त्याय ॥ त्वमंर्यमाभवसियत्कनीनांनामस्वधावन्गुह्यंबिभर्षि । अंजंतिमित्रंसु
धितंनगोभिर्यद्दंपतीसमंनसाकृणोषि ॥ तवश्रियेमरुतोमर्जयंतरुद्रयत्तेजनिमचारुचित्रं । पदंयद्विष्णोरुपमंनिधायि
तेनंपासिगुह्यंनामगोनां ॥ तवश्रियासुदृशोदेवदेवाःपुरूदधानाऽअमृतंसपंत । होतारमग्निंमनुषोनिषेदुर्दशस्यंतऽउ
शिजःशंसमायोः+ ॥ नत्वद्धोतापूर्वोऽअग्नेयजीयान्नकाव्यैःपरोऽअस्तिस्वधावः । विशश्चयस्याऽअतिथिर्भवासिसय

( ५।१।२ ) त्वमग्नइतिद्वादशर्चस्यसूक्तस्यात्रेयोवसुश्रुतोग्निस्तृतीयायामरुद्रद्वविष्णवस्त्रिष्टुवाद्याविराट् ।

ज्ञेनवनवद्देवमर्तान् ॥ वयमग्नेवनुयामत्वोतावसूयवोहविषाबुध्यमानाः । वयंसमर्येविदथेष्वह्नांवयंरायासहसस्पुत्रम र्तान् ॥ १६ ॥ योनऽआगोऽअभ्येनोभरात्यधीदघमघशंसेदधात । जहीचिकित्वोऽअभिशस्तिमेतामग्नेयोनोमर्चयति द्वयेन ॥ त्वामस्याव्युषिदेवपूर्वेदूतंकृण्वानाऽअयजंतहव्यैः । संस्थेयदग्नऽईयसेरयीणांदेवोमर्तैर्वसुभिरिध्यमानः ॥ अवस्पृधिपितरंयोधिविद्वान्पुत्रोयस्तेसहसःसूनऽऊहे । कदाचिकित्वोऽअभिचक्षसेनोग्नेकदाँऽऋतचिद्यातयासे ॥ भूरिनामवंदमानोदधातिपितावसोयदितज्जोषयासे । कुविद्देवस्यसहसाचकानःसुम्नमग्निर्वनतेवावृधानः+ ॥ त्वमंगजरितारंयविष्ठविश्वान्यग्नेदुरितातिपर्षि । स्तेनाऽअदृश्रन्रिपवोजनासोज्ञातकेतावृजिनाऽअभूवन् ॥ इमेयामासस्त्वद्रिगभूवन्वसवेवातदिदागोऽअवाचि । नाहायमग्निरभिशस्तयेनोनरीषतेवावृधानःपरादात् ॥ १७ ॥ ( ५।१।४ )
त्वामग्नेवसुपतिंवसूनामभिप्रमंदेऽअध्वरेषुराजन् । त्वयावाजंवाजयंतोजयेमाभिष्यामपृत्सुतीर्मर्त्यानां ॥ हव्यवाळग्निरजरःपितानोविभुर्विभावासुदृशीकोऽअस्मे । सुगार्हपत्याःसमिषोदिदीह्यस्मद्र्य१क्संमिमीहिश्रवांसि ॥ विशांकविंविश्पतिंमानुषीणांशुचिंपावकंघृतपृष्ठमग्निं । निहोतारंविश्वविदंदधिध्वेसदेवेषुवनतेवार्याणि ॥ जुषस्वाग्नऽइळयासजोषायतमानोरश्मिभिःसूर्यस्य । जुषस्वनःसमिधंजातवेदऽआचदेवान्हविरद्यायवक्षि ॥ जुष्टोदमूनाऽअतिथिर्दु

( ५।१।४ ) त्वामग्नइत्येकादशर्चस्यसूक्तस्यात्रेयोवसुश्रुतोग्निस्त्रिष्टुप् ।

रोणऽइमंनोयज्ञमुपयाहिविद्वान् । विश्वाऽअग्नेऽअभियुजोविहत्याशत्रूयतामाभराभोजनानि ॥ १८ ॥ वधेनदस्युं प्रहिचातयस्ववयःकृण्वानस्तन्वे३ स्वायै । पिपर्षियत्सहसस्पुत्रदेवान्त्सोऽअग्नेपाहिनृतमवाजेऽअस्मान् ॥ वयंतेऽअग्न ऽउक्थैर्विधेमवयंहव्यैःपावकभद्रशोचे । अस्मेरयिंविश्ववारंसमिन्वास्मेविश्वानिद्रविणानिधेहि ॥ अस्माकमग्नेऽअ ध्वरंजुषस्वसहसःसूनोत्रिषधस्थहव्यं । वयंदेवेषुसुकृतःस्यामशर्मणानस्त्रिवरूथेनपाहि ॥ विश्वानिनोदुर्गहाजातवेदः सिंधुंननावादुरितातिपर्षि । अग्नेऽअत्रिवन्नमसागृणानो३ स्माकंबोध्यविताततनूनां ॥ यस्त्वाहृदाकीरिणामन्यमानोम र्त्यमर्त्योजोहवीमि । जातवेदोऽयशोऽअस्मासुधेहिप्रजाभिरग्नेऽअमृतत्वमश्यां ॥ यस्मैत्वंसुकृतेजातवेदऽउलोकमग्ने कृणवःस्योनं । अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥ १९ ॥ ( ५।१।५ ) सुसमिद्धायशोचिषेघृतंतीव्रंजु होतन । अग्नयेजातवेदसे ॥ नराशंसःसुषूदतीमंयज्ञमदाभ्यः । कविर्हिमधुहस्त्यः ॥ ईळितोऽअग्नऽआवहेंद्रंचित्रमि हप्रियं । सुखैरथेभिरूतये ॥ ऊर्णम्रदाविप्रथस्वाभ्य१र्काऽअनूषत । भवानःशुभ्रसातये ॥ देवीर्द्वारोविश्रयध्वंसुप्रा यणानऽऊतये । प्रप्रयज्ञंपृणीतन ॥ २० ॥ सुप्रतीकेवयोवृधायह्वीऽऋतस्यमातरा । दोषामुषासमीमहे ॥ वातस्यप

---

( ५।१।५ ) सुसमिद्धायेत्येकादशर्चस्यसूक्तस्यात्रेयोवसुश्रुतःइध्मोनराशंसइळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौसरस्वतीळा-भारत्यस्त्वष्टावनस्पतिस्वाहाकृतयोगायत्री ।

त्वम॑ग्नीळि॒तादे॒व्याहोता॑राम॒नु॑षः । इ॒मंनो॑य॒ज्ञमागतं ॥ इळा॒सर॑स्वतीम॒हीति॒स्रोदे॒वीर्म॑यो॒भुवः । ब॒र्हिः सीदं॒त्व॒स्रिधः ॥ शि॒वस्त्व॑ष्टरि॒हाग॑हि॒वि॒भुः पोष॑ऽउ॒तत्मना॑ । य॒ज्ञेय॑ज्ञे॒नऽउ॒दव ॥ यत्र॒वेत्थ॑वनस्पतेदे॒वाना॒ंगुह्या॒नामा॑नि । तत्र॑ह॒व्यानि॑ गामय ॥ स्वाहा॒ग्नयेवरु॑णाय॒स्वाहेंद्रा॑यम॒रुद्भ्यः । स्वाहा॑दे॒वेभ्यो॑ह॒विः+ ॥ २१ ॥ ( ५।१।६ ) अ॒ग्निंतंम॑न्ये॒यो॒वसु॒र स्तंयंयंति॑धे॒नवः । अस्त॒मर्व॑न्तऽ॒आश॑वो॒स्तं॒नित्या॑सोवा॒जिन॒ऽइषं॑स्तो॒तृभ्य॒ऽआभ॑र ॥ सोऽअ॒ग्निर्यो॒वसु॑र्गृ॒णेसंयम॒ायंति॑धे॒ नवः । समर्व॑न्तोरघु॒द्रुवः॒ संसु॑जा॒तासः॑सू॒रय॒ऽइषं॑० ॥ अ॒ग्निर्हि॒वा॒जिनं॑वि॒शेददा॑तिवि॒श्वच॑र्षणिः । अ॒ग्नीरा॒येस्वा॒भुवं॒सप्री तोया॑तिवार्य॒मिषं॑० ॥ आतें॒ऽअग्न॒ऽइधीमहिद्यु॒मंतं॑देवा॒जरं॑ । यद्ध॒स्याते॒पनी॑यसीस॒मिद्दी॒दय॑ति॒द्यवीषं॑० ॥ आतें॒ऽअग्न ऽऋ॒चाह॒विः शु॒क्रस्य॑शोचिषस्पते । सुश्चं॑द्र॒दस्म॒विश्प॑ते॒हव्य॑वा॒ट्तुभ्यं॑हूयत॒ऽइषं॑० ॥ २२ ॥ प्रोत्येऽअ॒ग्नयो॒ग्निषु॒विश्वं॑पु ष्यंति॒वार्यं॑ । तेहिं॑न्वि॒रे॒तऽइं॑न्वि॒रे॒तऽइ॑षण्यंत्यानु॒षगिषं॑० ॥ तव॒त्येऽअ॑ग्ने॒ऽअ॒र्चयो॒महिं॑व्राधंतवा॒जिनः॑ । येपत्व॑भिः श॒फानां॑व्र॒जाभु॒रंत॒गोना॒मिषं॑० ॥ नवा॑नोऽअग्न॒ऽआभ॑रस्तो॒तृभ्यः॑सुक्षि॒तीरिषः॑ । तेस्या॑म॒यऽआ॑नृ॒चुस्त्वादू॑तासो॒दमें॑दम॒ ऽइषं॑० ॥ उ॒भेसु॑श्चंद्रस॒र्पिषो॒दर्वी॑श्रीणीष॒ऽआसनि॑ । उ॒तोन॒ऽउत्पु॑पूर्या॒ऽउ॒क्थेषु॑शवसस्पत॒ऽइषं॑० ॥ ए॒वाँऽअ॒ग्निम॑जुर्य सु॒र्गी॒र्भिर्य॒ज्ञेभि॑रानु॒षक् । दध॑द॒स्मेसु॒वीर्य॑मु॒तत्यदा॒श्वश्व्य॒मिषं॑० ॥ २३ ॥ ( ५।१।७ ) सखा॑यः॒ संवः॑स॒म्यंच॒मिषं॑स्तो



(५।१।६) अग्निंतमितिदशर्चस्यसूक्तस्यात्रेयोवसुश्रुतोग्निःपंक्तिः । (५।१।७) सखायःसमितिदशर्चस्यसूक्तस्यात्रेयइषोग्निरनुष्टुबंत्यापंक्तिः ।

मंचाग्नये । वर्षिष्ठायक्षितीनामूर्जोनप्त्रेसहस्वते ॥ कुत्राचिद्यस्यसमृतौरण्वानरोनृषदने । अर्हंतश्चिद्यमिंधतेसंजन
यंतिजंतवः ॥ संयदिषोवनामहेसंहव्यामानुषाणां । उतद्युम्नस्यशवसऽऋतस्यरश्मिमाददे ॥ सःस्माकृणोतिकेतु
मानक्तंचिद्दूरऽआसते । पावकोयद्वनस्पतीन्प्रस्मामिनात्यजरः ॥ अवस्मयस्यवेषणेस्वेदंपथिषुजुह्वति । अभीमह
स्वजेन्यंभूमापृष्ठेवरुरुहुः ॥ २४ ॥ यंमर्त्यःपुरुस्पृहंविदद्विश्वस्यधायसे । प्रस्वादनंपितूनामस्ततातिंचिदायवे ॥
सहिष्माधन्वाक्षितंदातानदात्यापशुः । हिरिश्मश्रुःशुचिदन्नृभुरनिभृष्टतविषिः ॥ शुचिःष्मयस्माऽअत्रिवत्प्रस्वधि
तीवरीयते । सुषूरसूतमाताक्राणायदानशेभगं ॥ आयस्तेसर्पिरासुतेऽग्नेशमस्तिधायसे । ऐषुद्युम्नमुतश्रवऽआचित्तं
मर्त्येषुधाः ॥ इतिचिन्मन्युमध्रिजस्त्वादातमापशुंददे । आदग्नेऽअपृणतोत्रिःसासह्याद्दस्यूनिषःसासह्यान्नृन् +
॥ २५ ॥ ( ५।१।८ ) त्वामग्नऽऋतायवःसमीधिरेप्रत्नंप्रत्नासऽऊतयेसहस्कृत । पुरुश्चंद्रंयजतंविश्वधायसंदमूनसंगृ
हपतिंवरेण्यं ॥ त्वामग्नेऽअतिथिंपूर्व्यविशःशोचिष्केशंगृहपतिंनिषेदिरे । बृहत्केतुंपुरुरूपंधनस्पृतंसुशर्माणंस्ववसंजर
द्विषं ॥ त्वामग्नेमानुषीरीळतेविशोहोत्राविदंविविचिंरत्नधातमं । गुहासंतंसुभगविश्वदर्शतंतुविष्वणसंसुयजंघृतश्रि
यं ॥ त्वामग्नेधर्णसिंविश्वधावयंगीर्भिर्गृणंतोनमसोपसेदिम । सनोजुषस्वसमिधानोऽअंगिरोदेवोमर्तस्ययशसासुदी

( ५।१।८ ) त्वामग्नऋतायवइतिसप्तर्चस्यसूक्तस्यात्रेयइषोऋषिर्जगती ।

तिभिः ॥ त्वमंग्नेपुरुरूपोंविशेविंशेवयोंदधासिप्रत्नथांपुरुष्टुत । पुरूण्यन्नासहंसाविरांजसित्विषिःसातेंतितिविषाणस्य नाधृषें ॥ त्वामंग्नेसमिधानंयविष्ठ्यदेवादूतंचक्रिरेहव्यवाहंनं । उरुज्रयंसंघृतयोंनिमाहुतंत्वेषंचक्षुर्दधिरेचोदयन्मंति ॥ त्वामंग्नेप्रदिवऽआहुंतंघृतैःसुंम्नायवंःसुषमिधासमींधिरे । सवावृधानऽओषंधीभिरुक्षितो३ भिज्रयांसिपार्थिवादिति ष्ठसे ॥ २६ ॥ इतितृतीयाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ ॥ ॥

चतुर्विंशाध्यायेवर्गाः २६ सूक्तानि १६ ऋचः १५२ ॥ त्यागः ॥ उषस. १८ सवित्र. १३ विश्वेभ्योदेवेभ्य. १० [ भे. प. विश्वेभ्यो. ७ अग्नय. उषस. विश्वेभ्योदेवेभ्य. ] द्यावापृथिवीभ्या. ७ क्षेत्रपतय. ३ शुनाये. शुनासीराभ्या. सीताया. २ शुनासीराभ्या. अग्नय. ३७ मरुद्रुद्रविष्णुभ्य. अग्नय. २० समिद्धायाग्नय. नराशंसाये. इळाये. बर्हिषद. देवीभ्योद्वार्भ्यइ. उषासानक्ताभ्या. दैवीभ्यां-होतृभ्यां. सरस्वतीळाभारतीभ्य. त्वष्ट्र. वनस्पतय. स्वाहाकृतिभ्य. अग्नय. २७ ॥ इतितृतीयेऽष्टमः ॥ ८ ॥

ॐ त्वामग्नेगयोंत्यापंचम्यौपंक्तीअग्नओजिष्ठमंत्याचतुर्थ्यौचंजनस्यषट्सुतंभरोजागतंप्राग्नयेचंतोगायत्रंत्वाग्निंस्तो
मेनंप्रवेधसेपंचांगिरसोधरुणोबृहत्पूरुःपंक्त्यंतंह्यायज्ञैःप्रातर्मृक्तवाहाद्वितोभ्यवस्थावव्रिर्गायत्रावनुष्टुभौविरा
ड्पायमग्नेचतुष्कंप्रयस्वंतःपंक्त्यंतंहंमनुष्वत्सर्सःप्रविश्वसामन्विश्वसामाग्नेद्युम्नोविश्वचर्षणिरग्नेत्वंगोपायना
लौपायनावांबंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चैकर्चाद्विपदमच्छावोनवंवसूयवआनुष्टुभमग्नेगायत्रमंत्यावैश्वदेव्यं
नस्वंतापट्त्रैवृष्णःपौरुकुत्स्यौद्वौत्र्यरुणत्रसदस्यूराजानौभारतश्चाश्वमेधोंत्यास्तिस्रोनुष्टुभोनात्मात्मनेदद्यादि
तिंसर्वास्वत्रिंकेचिदंत्यैंद्राग्नींसमिद्धोविश्ववारात्रेयीत्रिष्टुब्जगतीत्रिष्टुबनुष्टुव्गायत्र्यौत्र्यर्यमापंचोनागौरिवीतिः
शाक्त्यऐंद्रंमुशनायदौशनसोवापादःक्वस्यवभ्रुर्ऋणंचयोप्यत्रराजास्तुतंइंद्रोरथायसप्तोनावस्युरुग्रमितिंकौत्स्यौ
शनसौवापादौपरैंद्राकौत्स्यदर्दद्वादशगातुः ॥ १ ॥ ॥ ॥ ॥

॥ श्रीगणेशायनमः ॥ हरिःओम् ॥ ( ५।१।९ ) त्वामग्नेहुविष्मंतोदेवंमर्तासऽईळते । मन्यैत्वाजातवेदसंसह
व्यावंक्ष्यानुषक्+ ॥ अग्निर्होतादास्वंतःक्षयंस्यवृक्तबर्हिषः । संयज्ञासश्चरंतियंसंवाजासःश्रवस्यवः ॥ उतस्मयंशिशुंय
थानवंजनिष्टारणी । धर्तारंमानुषीणांविशामग्निंस्वध्वरं+ ॥ उतस्मदुर्गृभीयसेपुत्रोनह्वार्याणां । पुरूयोदग्धासिवनाग्ने

( ५।१।९ ) त्वामग्नइतिसप्तर्चस्यसूक्तस्यात्रेयोगयोग्निरनुष्टुप्पंचमीसप्तम्यौपंक्ती ।

पशुर्नयवंसे ॥ अधस्मयस्यार्चयःसम्यक्संयंतिधूमिनः । यदीमहत्रितोदिव्युपध्मातेवधमंतिशिशीतेध्मातरीयथा ॥ तवाहमंग्नऽऊतिभिर्मित्रस्यचप्रशस्तिभिः । द्वेषोयुतोनदुरितातुर्यामसमर्त्यानां ॥ तंनोऽअग्नेऽअभीनरोरयिंसहस्वऽआभर । सक्षेपयत्सपोषयद्भुवद्वाजस्यसातयऽउतैधिपृत्सुनोवृधे+ ॥ १ ॥ ( ५।१।१० ) अग्नऽओजिष्ठमाभरद्युम्नमस्मभ्यमध्रिगो । प्रनोरायापरीणसारत्सिवाजायपंथां ॥ त्वंनोऽअग्नेऽअद्भुतक्रत्वादक्षस्यमंहना । त्वेऽअसुर्यमारुहत्क्राणामित्रोनयज्ञियः ॥ त्वंनोऽअग्नऽएषांगयंपुष्टिंचवर्धय । येस्तोमेभिःप्रसूरयोनरोमघान्यानशुः+ ॥ येऽअग्नेचंद्रतेगिरःशुंभंत्यश्वराधसः । शुष्मेभिःशुष्मिणोनरोदिवश्चिद्येषांबृहत्सुकीर्तिर्बोधतित्मना ॥ तवत्येऽअग्नेऽअर्चयोभ्राजंतोयंतिधृष्णुया । परिज्मानोनविद्युतःस्वानोरथोनवाजयुः+ ॥ नूनोऽअग्नऽऊतयेसबाधसश्चरातये । अस्माकासश्चसूरयोविश्वाऽआशास्तरीषणि ॥ त्वंनोऽअग्नेऽअंगिरःस्तुतस्तवानऽआभर ॥ होतर्विभ्वासहंरयिंस्तोतृभ्यःस्तवसेचनऽउतैधिपृत्सुनोवृधे+ ॥ २ ॥ ( ५।१।११ ) जनस्यगोपाऽअजनिष्टजागृविरग्निःसुदक्षःसुवितायनव्यसे । घृतप्रतीकोबृहतादिविस्पृशाद्युमद्विभातिभरतेभ्यःशुचिः ॥ यज्ञस्यकेतुंप्रथमंपुरोहितमग्निंनरस्त्रिषधस्थेसमीधिरे । इंद्रेणदेवैःसरथं



---

( ५।१।१० ) अग्नओजिष्ठमितिसप्तर्चस्यसूक्तस्यात्रेयोगयोग्निरनुष्टुप्चतुर्थीसप्तम्यौपंक्ती । ( ५।१।११ )जनस्येतिषडृचस्यसूक्तस्यात्रेयःसुतंभरोग्निर्जगती ।

सवर्हिंषिसीदुन्निहोतायजथायसुक्रतुः ॥ असंमृष्टोजायसेमात्रोःशुचिर्मंद्रःकविरुदतिष्ठोविवस्वतः । घृतेनंत्वावर्धयन्न
ग्नऽआहुतधूमस्तेकेतुरभवद्दिविश्रितः+ ॥ अग्निर्नोयज्ञमुपवेतुसाधुयाग्निंनरोविभरंतेगृहेगृहे । अग्निर्दूतोऽअभवद्धव्य
वाहनोग्निंवृणानावृणतेकविक्रतुं ॥ तुभ्येदमग्नेमधुमत्तमंवचस्तुभ्यंमनीषाऽइयमस्तुशंहृदे । त्वांगिरःसिंधुमिवाव
नीर्महीरापृणंतिशवसावर्धयंतिच ॥ त्वामग्नेऽअंगिरसोगुहाहितमन्वविंदन्छिश्रियाणंवनेवने । सजायसेमथ्यमानःस
होमहत्त्वामाहुःसहसस्पुत्रमंगिरः ॥ ३ ॥ ( ५।१।१२ ) प्राग्नयेबृहतेयज्ञियायऽऋतस्यवृष्णेऽअसुरायमन्म । घृतं
नयज्ञऽआस्ये३ सुपूतंगिरंभरेवृषभायप्रतीचीं+ ॥ ऋतंचिकित्वऽऋतमिच्चिकिद्ध्यृतस्यधाराऽअनुतृंधिपूर्वीः । नाहंया
तुंसहसानद्वयेनऽऋतंसपाम्यरुषस्यवृष्णः ॥ कयानोऽअग्नऽऋतयन्नृतेनभुवोनवेदाऽउचथस्यनव्यः । वेदामेदेवऽऋ
तुपाऽऋतूनांनाहंपतिंसनितुरस्यरायः+ ॥ केतेऽअग्नेरिपवेबंधनासःकेपायवःसनिषंतद्युमंतः । केधासिमग्नेऽअनृतस्यपां
तिकऽआसंतोवचसःसंतिगोपाः+ ॥ सखायस्तेविषुणाऽअग्नऽएतेशिवासःसंतोऽअशिवाऽअभूवन् । अधूर्षतस्वयमे
तेवचोभिर्ऋजूयतेवृजिनानिब्रुवंतः ॥ यस्तेऽअग्नेनमसायज्ञमीट्टऽऋतंसपात्यरुषस्यवृष्णः । तस्यक्षयःपृथुरासाधुरेतु
प्रसर्स्राणस्यनहुषस्यशेषः ॥ ४ ॥ ( ५।१।१३ ) अर्चंतस्त्वाहवामहेर्चंतःसमिधीमहि । अग्नेऽअर्चंतऽऊतये ॥ अग्नेः

(५।१।१२) प्राग्नयइतिषडृचस्यसूक्तस्यात्रेयःसुतंभरोग्निस्त्रिष्टुप् । (५।१।१३) अर्चंतइतिषडृचस्यसूक्तस्यात्रेयःसुतंभरोग्निर्गायत्री ।

स्तोमैंमनामहेसिध्रमद्यादिविस्पृशैः । देवस्यंद्रविणस्यवः ॥ अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा । सयंक्षद्दैव्यंजनं ॥ त्वमंग्नेसप्रथांऽअसिजुष्टोहोतावरेण्यः । त्वयांयज्ञंवितन्वते ॥ त्वामंग्नेवाजसातंमंविप्रावर्धतिसुष्टुतं । सनोंरास्वसुवीर्यं ॥ अग्नेनेमिरराँऽइवदेवाँस्त्वंपरिभूरंसि । आराधश्चित्रमृंजसे ॥ ५ ॥ ( ५।१।१४ ॥ अग्निंस्तोमेनबोधयसमिधानोऽअमर्त्यं । हव्यादेवेषुनोदधत् ॥ तमध्वरेष्वीळतेदेवंमर्ताऽअमर्त्यं । यजिष्ठंमानुषेजने ॥ तंहिशश्वंतऽईळंतेस्रुचादेवंघृतश्चुता । अग्निंहव्यायवोढवे ॥ अग्निर्जातोऽअरोचतघ्नन्दस्यूञ्ज्योतिषातमः । अविंदद्गाऽअपःस्वः+ ॥ अग्निमीळेन्यंकविंघृतपृष्ठंसपर्यत । वेतुमेशृणवद्धवं ॥ अग्निंघृतेनवावृधुःस्तोमेभिर्विश्वचर्षणिं । स्वाधीभिर्वचस्युभिः ॥ ॥ ६ ॥ ( ५।२।१ ) प्रवेधसेकवयेवेद्यायगिरंभरेयशसेपूर्व्याय । घृतप्रसत्तोऽअसुरःसुशेवोरायोधर्ताधरुणोवस्वोऽअग्निः+ ॥ ऋतेनंऽऋतंधरुणंधारयंतयज्ञस्यंशाकेपरमेव्योमन् । दिवोधर्मन्धरुणेसेदुषोनृञ्जातैरजाताँऽअभियेनंनक्षुः+ ॥ अंहोयुवस्तन्वंस्तन्वतेविवयोमहद्दुष्टरंपूर्व्याय । ससंवतोनवजातस्तुतुर्यात्सिंहंनक्रुद्धमभितःपरिष्ठुः ॥ मातेवयद्धरसेपप्रथानोजनंजनंधायसेचक्षसेच । वयोवयोजरसेयद्दधानःपरित्मनाविषुरूपोजिगासि ॥ वाजोनुतेशवसस्पात्वंतमुरुं



(५।१।१४) अग्निंस्तोमेनेतिषडृचस्यसूक्तस्यात्रेयःसुतंभरोऽग्निर्गायत्री । (५।२।१) प्रवेधसइतिपंचर्चस्यसूक्तस्यांगिरसोधरुणोऽग्निस्त्रिष्टुप् ।

दोर्घं॒धरु॒णंदेव॒रा॒यः । प॒दंन॒ता॒युर्गु॒हा॒दधा॑नोम॒हो॒रा॒येचि॒तय॑न्नत्रि॑मस्पः ॥ ७ ॥ ( ५।२।२२ ) बृ॒हद्वयो॒हि॒भा॒नवेर्चा॑दे॒वा या॒ग्नये॑ । यंमि॒त्रंनप्रश॑स्तिभि॒र्मर्ता॑सोदधि॒रेपु॒रः॑ ॥ सहि॒द्युभि॒र्जना॑ना॒ंहोता॒दक्ष॑स्यबा॒ह्वोः । विह॒व्यम॒ग्निरा॑नु॒षग्भगोन वार॑मृ॒ण्वति ॥ अ॒स्यस्तोमे॑म॒घोनः॑स॒ख्येवृ॒द्धशो॑चिषः । विश्वा॒यस्मि॑न्तुवि॒ष्वणि॒सम॒र्येशुष्म॑मा॒द॒धुः ॥ अधा॒ह्य॑ग्नऽएषां सुवीर्य॑स्यमं॒हना॑ । तमिद्य॒ह्वंनरोद॒सीपरि॒श्रवो॑बभूवतुः ॥ नू॒नऽएहि॒वार्य॒मग्नेगृ॒णा॒नऽआभ॑र । येव॒यंयेच॒सूर॒यः॑स्व॒स्ति धाम॑हे॒सच॒ोतै॑धिपृ॒त्सुनो॑वृ॒धे ॥ ८ ॥ ( ५।२।३ ) आयज्ञैर्दे॑व॒मर्त्य॑ऽइ॒त्थातव्यां॑सम॒ूतये॑ । अ॒ग्निंकृ॒तेस्व॑ध्व॒रेपू॒रुरी॑ळी तावसे ॥ अस्य॒हिस्वय॑शस्तरऽआ॒सावि॑धर्म॒न्मन्य॑से । तंनाकं॒चि॒त्रशो॑चिषंमं॒द्रंप॒रोम॑नी॒षया॑ ॥ अ॒स्यवासाऽउ॒ंऽअ॒र्चिषा॒ यऽआयु॑क्ततु॒जागि॒रा । दि॒वोनयस्य॒रेत॑साबृ॒हच्छोचं॒त्य॒र्चयः॑ ॥ अ॒स्यक्रत्वा॒विचे॑तसोद॒स्मस्य॒वसु॒रथ॒ऽआ । अधा॒विश्वा॑ सुह॒व्यो॒ग्निर्वि॒क्षुप्रश॑स्यते ॥ नू॒नऽइद्धि॒वार्य॒मा॒सासच॑ंतसू॒रयः॑ । ऊर्जोनपाद॒भिष्ट॑येपा॒हिश॒ग्धिस्व॒स्तय॑ऽउ॒तैधिपृ॒त्सुनो॑वृ॒धे ॥ ९ ॥ ( ५।२।४ ) प्रा॒तर॒ग्निःपु॑रुप्रि॒यो॒वि॒शस्तंव॒ताति॑थिः । विश्वा॑नि॒योऽअम॑र्त्यो॒ह॒व्यामर्ते॑षुर॒ण्यति ॥ द्वि॒ता यम॑क्तवाहसे॒स्वस्य॒दक्ष॑स्यमं॒हना॑ । इंदु॒ंसधत्तऽआनु॒षक्स्तो॒ताचि॑त्तेऽअमर्त्य ॥ तंवो॑दी॒र्घायु॑शोचिषं॒गि॒राहु॑वेम॒घोना॑ ।

---

( ५।२।२ ) बृहद्वयइतिपंचर्चस्यसूक्तस्यात्रेयःपूरुरग्निरनुष्टुप्अंत्यापंक्तिः । ( ५।२।३ ) आयज्ञैरितिपंचर्चस्यसूक्तस्यात्रेयःपूरुरग्निरनुष्टुप्अंत्यापंक्तिः । ( ५।२।४ ) प्रातरग्निरितिपंचर्चस्यसूक्तस्यात्रेयोमृक्तवाहाद्वितोग्निरनुष्टुप्अंत्यापंक्तिः ।

आरिंष्टोयेषांरथोव्यंश्वदावन्नीयंते ॥ चित्रावायेषुदीधितिरासन्नुक्थापांतिये । स्तीर्णंबर्हिःस्वर्णरेश्रवांसिदधिरेपरिं ॥ येमेंपंचाशतंददुरश्वांनांसधस्तुति । द्युमदंग्नेमहिश्रवोबृहत्कृंधिमघोनांनृवदंमृतनृणां+ ॥ १० ॥ (५।२।५) अभ्यंवस्थाःप्रजायंतेप्रववव्रेर्वव्रिश्चिकेत । उपस्थेंमातुर्विचंष्टे ॥ जुहुरेविचितयंतोनिंमिषंनृम्णंपांति । आदृढांपुरंविविशुः ॥ आश्वैत्रेयस्यंजंतवोद्युमद्वंर्धतकृष्टयंः । निष्कग्रीवोबृहदुंक्थऽएनामध्वानवाजयुः+ ॥ प्रियंदुग्धंनकाम्यमजांमिजाम्योःसचां । घर्मोनवाजंजठरोदंब्धःशश्वंतोदभंः ॥ क्रीळंन्नोरश्मऽआभुंवःसंभस्मनावायुनावेविंदानः । ताऽअंस्यसन्धृषजोनतिग्माःसुसंशितावक्ष्योवक्षणेस्थाः+ ॥ ११ ॥ (५।२।६) यमंग्नेवाजसातमत्वंचिन्मन्यंसेरयिं । तंनोंगीर्भिःश्रवाय्यंदेवत्रापंनयायुजं ॥ येऽअंग्नेनेरयंतितेवृद्धाऽउग्रस्यशवंसः । अपद्वेषोऽअपह्वरोन्यव्रंतस्यसश्चिरे ॥ होतांरंत्वावृणीमहेग्नेदक्षंस्यसाधंनं । यज्ञेषुपूर्व्यंगिराप्रयंस्वंतोहवामहे ॥ इत्थायथांतऽऊतयेसहंसावन्दिवेदिंवे । रायऽऋतायंसुक्रतोगोभिःष्यामसधमादोंवीरैःस्यांमसधमादंः ॥ १२ ॥ (५।२।७) मनुष्वत्त्वानिधींमहिमनुष्वत्समिंधीमहि । अग्नेंमनुष्वदंगिरोदेवान्देंवयतेयंज ॥ त्वंहिमानुंषेजनेग्नेसुप्रीतऽइध्यसें । स्रुचंस्त्वायंत्यानुषक्सुजातसर्पिरासु



(५।२।५) अभ्यवस्थाइतिपंचर्चस्यसूक्तस्यात्रेयोवव्रिरग्निःआद्येद्वेगायत्र्यौतृतीयाचतुर्थ्यावनुष्टुभौपंचमीविराड्रूपा । (५।२।६) यमग्नइतिचतुर्ऋचस्यसूक्तस्यात्रेयःप्रयस्वंतोग्निरनुष्टुप्अंत्यापंक्तिः । (५।२।७) मनुष्वदितिदशर्चस्यसूक्तस्यात्रेयःससोग्निरनुष्टुप्अंत्यापंक्तिः ।

ते ॥ त्वांविश्वेसजोषसोदेवासोदूतमक्रत । सपर्यंतस्त्वाकवेयज्ञेषुदेवमीळते ॥ देवंवोदेवयज्ययाग्निमीळीतमर्त्यः । समिद्धःशुक्रदीदिह्यृतस्ययोनिमासदःससस्ययोनिमासदः ॥ १३ ॥ ( ५।२।८ ) प्रविश्वसामन्नत्रिवदर्चापावकशो चिषे । योऽध्वरेष्वीड्योहोतामंद्रतमोविशि ॥ न्य१ग्निंजातवेदसंदधातादेवमृत्विजं । प्रयज्ञऽएत्वानुषगद्यादेव व्यचस्तमः ॥ चिकित्विन्मनसंत्वादेवंमर्तासऽऊतये । वरेण्यस्यतेवसऽइयानासोऽअमन्महि ॥ अग्नेचिकिद्ध्य१स्यनं ऽइदंवचःसहस्य । तंत्वासुशिप्रदंपतेस्तोमैर्वर्धंत्यत्रयोगीर्भिःशुंभंत्यत्रयः ॥ १४ ॥ ( ५।२।९ ) अग्नेसहंतमाभरद्युम्न स्यप्रासहारयिं । विश्वायश्चर्षणीरभ्या३सावाजेषुसासहत् ॥ तमग्नेपृतनाषहंरयिंसहस्वऽआभर । त्वंहिसत्योऽअद्भु तोदातावाजस्यगोमतः ॥ विश्वेहित्वासजोषसोजनासोवृक्तबर्हिषः । होतारंसद्मसुप्रियंव्यंतिवार्यापुरु ॥ सहिष्मा विश्वचर्षणिरभिमातिसहोदधे । अग्नऽएषुक्षयेष्वारेवन्नःशुक्रदीदिहिद्युमत्पावकदीदिहि ॥१५॥ ( ५।२।१० ) अग्नेत्वं नोऽअंतमऽउतत्राताशिवोभवावरूथ्यः ॥ वसुरग्निर्वसुश्रवाऽअच्छानक्षिद्युमत्तमंरयिंदाः ॥ सनोबोधिश्रुधीहवमुरुष्या

---

( ५।२।८ ) प्रविश्वसामन्नितिचतुर्ऋचस्यसूक्तस्यात्रेयोविश्वसामाग्निरनुष्टुप्अंत्यापंक्तिः । ( ५।२।९ ) अग्नेसहंतमितिचतुर्ऋचस्य सूक्तस्यात्रेयोद्युम्नोविश्वचर्षणिरग्निरनुष्टुप्अंत्यापंक्तिः । ( ५।२।१० ) अग्नेत्वंनइतिचतुर्ऋचस्यसूक्तस्यगौपायनालौपायनावाबंधुःसुबंधुः श्रुतबंधुर्विप्रबंधुश्चक्रमेणर्षयोऽग्निर्द्विपदाविराट् ।

ऋक्सं. अ.४अ.१ ॥ ५ ॥

णोऽअधायतः॑सम॒स्मात् ॥ तंत्वा॑शोचिष्ठदीदिवः॒सुम्नाय॑नू॒नमी॑महे॒सखि॑भ्यः ॥१६॥ (५।२।११) अच्छा॑वोऽअ॒ग्निमव॑से दे॒वंगा॑सि॒सन॒नोवसुः । रास॑त्पु॒त्रऽऋ॑षूणामृ॒तावा॑पर्षतिद्वि॒षः॑ ॥ सहि॒सत्योयंपूर्वै॑चिद्दे॒वासश्चि॒द्यमी॑धि॒रे । होता॑रं॒मं॒द्रजि॑ह्वमित्सु॒दी॒तिभि॒र्वि॒भाव॑सुं ॥ सनो॒धीतीवरि॑ष्ठया॒श्रेष्ठ॑याचसुम॒त्या । अग्ने॑रा॒योदि॑दीहिनः॒सुवृ॒क्तिभि॑र्वरेण्य ॥ अ॒ग्निर्दे॒वे षुराजत्य॒ग्निर्म॒र्तेष्वा॑वि॒शन् । अ॒ग्निर्नो॑हव्य॒वाह॑नो॒ग्निंधी॒भिः स॑पर्यत ॥ अ॒ग्निस्तु॒विश्र॑वस्तमंतु॒विब्र॑ह्माणमुत्त॒मं । अ॒तूर्तं श्राव॒यत्प॑तिंपु॒त्रंद॑दातिदा॒शुषे॑ ॥ १७ ॥ अ॒ग्निर्द॑दातिसत्प॑तिंसा॒साह॒योयु॒धानृभिः॑ । अ॒ग्निरत्यं॑रघु॒ष्यदं॒जेता॑रमप॑राजि तं ॥ यद्वा॑हिष्ठंतद॒ग्नये॑बृ॒हद॑र्चविभावसो । महि॑षीवत्वद्र॒यिस्त्वद्वाजा॒ऽउदी॑रते ॥ तव॑द्यु॒मंतो॑ऽअ॒र्चयो॒ग्रावे॑वोच्यतेबृ॒ह त् । उ॒तोते॑त॒न्य॒तुर्य॑थास्वा॒नोऽअ॑र्त॒त्मना॑दि॒वः॑ ॥ ए॒वाँऽअ॒ग्निंव॑सू॒यवः॑सहसा॒नंव॑वंदिम । सनो॒विश्वा॒ऽअति॑द्वि॒षः॒पर्ष॑ न्ना॒वेव॑सु॒क्रतुः ॥ १८ ॥ (५।२।१२) अग्ने॒पाव॑करो॒चिषा॑मं॒द्रया॑देवजि॒ह्वया॑ । आदे॒वान्व॑क्षि॒यक्षि॑च ॥ तंत्वा॑घृतस्न वीमहे॒चित्र॑भानो॒स्व॒र्दृशं॑ । दे॒वाँऽआ॒वी॒तये॑वह ॥ वी॒तिहो॑त्रंत्वाकवेद्यु॒मंतं॒समि॑धीमहि । अग्ने॑बृ॒हंत॑मध्व॒रे ॥ अग्ने॒वि श्वे॑भि॒राग॑हिदे॒वेभि॑र्ह॒व्यदा॑तये । होता॑रंत्वावृणीमहे ॥ यज॑मानायसु॒न्वत॒ऽआग्ने॑सु॒वीर्यं॑वह । दे॒वैरास॑त्सिब॒र्हिषि॑

मंडलं ५ अनु. २ ॥ ५ ॥

(५।२।११) अच्छावइतिनवर्चस्यसूक्तस्यात्रेयोवसूयवोग्निरनुष्टुप् । (५।२।१२) अग्नेपावकेतिनवर्चस्यसूक्तस्यात्रेयोवसूयवोग्निरंत्यायाविश्वेदेवागायत्री ।

॥ १९ ॥ समिधानःसहस्रजिदग्नेधर्माणिपुष्यसि । देवानांदूतऽउक्थ्यः* ॥ न्य१ग्निंजातवेदसंहोत्रवाहंयविष्ठ्यं । दधातादेवमृत्विजं ॥ प्रयज्ञऽएत्वानुषगद्यादेवव्यचस्तमः । स्तृणीतबर्हिरासदे ॥ एदंमरुतोऽअश्विनामित्रःसीदंतुवरुणः । देवासःसर्वयाविशा+ ॥ २० ॥ ( ५।२।१३ ) अनस्वंतासत्पतिर्मामहेमेगावाचेतिष्ठोऽअसुरोमघोनः । त्रैवृष्णोऽअग्नेदशभिःसहस्रैर्वैश्वानरत्र्यरुणश्चिकेत ॥ योमेशताचविंशतिंचगोनांहरीचयुक्तासुधुराददाति । वैश्वानरसुष्टुतोवावृधानोग्नेयच्छत्र्यरुणायशर्म ॥ एवातेऽअग्नेसुमतिंचकानोनविष्ठायनवमंत्रसदस्युः । योमेगिरस्तुविजातस्यपूर्वीर्युक्तेनाभित्र्यरुणोगृणाति ॥ योमऽइतिप्रवोचत्यश्वमेधायसूरये । दधदृचासनिंयतेददन्मेधामृतायते+ ॥ यस्यमापरुषाःशतमुद्धर्षयंत्युक्षणः । अश्वमेधस्यदानाःसोमाऽइवत्र्याशिरः ॥ इंद्राग्नीशतदाव्न्यश्वमेधेसुवीर्यं । क्षत्रंधारयतंबृहद्दिविसूर्यमिवाजरं ॥ २१ ॥ ( ५।२।१४ ) समिद्धोऽअग्निर्दिविशोचिरश्रेत्प्रत्यङ्ङुषसमुर्वियाविभाति । एतिप्रा

---

( ५।२।१३ ) अनस्वंतेतिषडृचस्यसूक्तस्यत्रैवृष्णत्र्यरुणःपौरुकुत्स्यस्त्रसदस्युर्भारतोश्वमेधश्चैतेऋषयोऽग्निरंत्यायाइंद्राग्नीत्रिष्टुप् अंत्यास्तिस्रोनुष्टुभः । ( अस्मिन्सूक्तेभौमोत्रिरेवदेवतेतिकेचित् अन्यथायोमेशताचविंशतिंचगोनामित्यादिदातृक्रियायाअनुपपत्तेः । नैतदन्येमन्यंतेआत्माध्यासपक्षस्वीकारेणतथाप्युपपत्तेः ) । (५।२।१४) समिद्धइतिषडृचस्यसूक्तस्यात्रेयीविश्ववाराऋषिकाग्निः आद्याःक्रमेणत्रिष्टुब्जगतीत्रिष्टुबनुष्टुभःअंत्येद्वेगायत्र्यौ ।

चीविश्ववारानमोभिर्देवाँऽईळानाहविषाघृताचीं ॥ समिध्यमानोऽअमृतस्यराजसिहविष्कृण्वंतंसचसेस्वस्तये । वि
श्वंसधत्तेद्रविणंयमिन्वस्यातिथ्यमग्नेनिचधत्तऽइत्पुरः ॥ अग्नेशर्धमहतेसौभगायतवद्युम्नान्युत्तमानिसंतु । संजास्प
त्यंसुयममाकृणुष्वशत्रूयतामभितिष्ठामहांसि ॥ समिद्धस्यप्रमहसोग्नेवंदेतवश्रियं । वृषभोद्युम्नवाँऽअसिसमध्वरेष्वि
ध्यसे ॥ समिद्धोऽअग्नऽआहुतदेवान्यक्षिस्वध्वर । त्वंहिहव्यवाळसि ॥ आजुहोतादुवस्यताग्निंप्रयत्यध्वरे । वृणी
ध्वंहव्यवाहनं ॥ २२ ॥ ( ५।२।१५ ) त्र्यर्यमामनुषोदेवतातात्रीरोचनादिव्याधारयंत । अर्चंतित्वामरुतःपूतदक्षा
स्त्वमेषामृषिरिंद्रासिधीरः ॥ अनुयदीमरुतोमंदसानमार्चन्निंद्रंपपिवांसंसुतस्य । आदत्तवज्रमभियदहिंहन्नपोयह्वीर
सृजत्सर्तवाऽउ ॥ उतब्रह्माणोमरुतोमेऽअस्येंद्रःसोमस्यसुषुतस्यपेयाः । तद्धिहव्यंमनुषेगाऽअविंददहन्नहिंपपिवाँऽइं
द्रोऽअस्य ॥ आद्रोदसीवितरंविष्कभायत्संविव्यानश्चिद्भियसेमृगंकः । जिगर्तिमिंद्रोऽअपजर्गुराणःप्रतिश्वसंतमवदा
नवहन् ॥ अधक्रत्वामघवन्तुभ्यंदेवाऽअनुविश्वेऽअददुःसोमपेयं । यत्सूर्यस्यहरितःपतंतीःपुरःसतीरुपराऽएतशे
कः+ ॥ २३ ॥ नवयदस्यनवतिंचभोगान्त्साकंवज्रेणमघवाविवृश्चत् । अर्चंतींद्रंमरुतःसधस्थेत्रैष्टुभेनवचसाबाधत
द्यां+ ॥ सखासख्येऽअपचत्तूयमग्निरस्यक्रत्वामहिषात्रीशतानि । त्रीसाकमिंद्रोमनुषःसरांसिसुतंपिबद्वृत्रहत्यायसो



( ५।२।१५ ) त्र्यर्यमेतिपंचदशर्चस्यसूक्तस्यशाक्त्योगौरिवीतिरिंद्रः ( उशनायदितिपादस्योशनावा ) त्रिष्टुप् ।

मं ॥ त्रीयच्छतामहिषाणामघोमास्त्रीसरांसिमघवासोम्यापाः । कारंनविश्वेऽअह्वंतदेवाभरमिंद्राययदहिंजघान ॥ उशनायत्सहस्यै३रयातंगृहमिंद्रजूजुवानेभिरश्वैः । वन्वानोऽअत्रसरथंययाथकुत्सेनदेवैरवनोर्हशुष्णं ॥ प्रान्यच्चक्रमवृहः सूर्यस्यकुत्सायान्यद्वरिवोयातवेकः । अनासोदस्यूँऽरमृणोवधेननिदुर्योणऽआवृणङ्मृध्रवाचः ॥ २४ ॥ स्तोमासस्त्वागौरिवीतेरवर्धन्नरंधयोवैदथिनायपिप्रुं । आत्वामृजिश्वासख्यायचक्रेपचन्पक्तीरपिबःसोममस्य ॥ नवग्वासःसुतसोमासऽइंद्रंदशग्वासोऽअभ्यर्चंत्यर्कैः । गव्यंचिदूर्वमपिधानवंतंतंचिन्नरःशशमानाऽअपव्रन् ॥ कथोनुतेपरिचराणिविद्वान्वीर्यामघवन्याचकर्थ । याचोनुनव्याकृणवःशविष्ठप्रेदुतातेविदथेषुब्रवाम ॥ एताविश्वाचकृवाँऽइंद्रभूर्यपरीतोजनुषावीर्येण । याचिन्नुवज्रिन्कृणवोदधृष्वान्नतेवर्तातविष्याऽअस्तितस्याः ॥ इंद्रब्रह्मक्रियमाणाजुषस्वयातेशविष्ठनव्याऽअकर्म । वस्त्रेवभद्रासुकृतावसूयूरथंनधीरःस्वपाऽअतक्षं ॥ २५ ॥ ( ५।२।१६ ) क्व१स्यवीरःकोऽअपश्यदिंद्रंसुखरथमीयमानंहरिभ्यां । योरायावज्रीसुतसोममिच्छन्तदोकोगंतापुरुहूतऽऊती ॥ अवाचचक्षंपदमस्यसस्वरुग्रंनिधातुरन्वायमिच्छन् । अपृच्छमन्याँऽउततेमऽआहुरिंद्रंनरोबुबुधानाऽअशेम ॥ प्रनुवयंसुतेयातेकृतानींद्रब्रवामयानिनोजुजोषः । वेददविद्वान्छृणवच्चविद्वान्वहतेयंमघवासर्वसेनः ॥ स्थिरंमनश्चकृषेजातऽइंद्रवेषीदेकोयुधयेभू

सं. ३०

( ५।२।१६ ) क्वस्येतिपंचदशर्चस्यसूक्तस्यात्रेयोवभ्रुरिंद्रोंत्यानांचतसृणामृणंचयेंद्रौदेवतेत्रिष्टुप् ।

यंसश्चित् । अश्मानंचिच्छवसादिद्युतोविविदोगवांमूर्वमुस्रियाणां ॥ परोयत्त्वंपरमऽआजनिष्ठाःपरावतिश्रुत्यंनाम बिभ्रत् । अतश्चिदिंद्रादभयंतदेवाविश्वाऽअपोऽअजयद्दासपत्नीः ॥ २६ ॥ तुभ्येदेतेमरुतःसुशेवाऽअर्चंत्यर्कंसुन्वं त्यंधः । अहिमोहानमपऽआशयानंप्रमायाभिर्मायिनंसक्षदिंद्रः ॥ विषूमृधोजनुषादानमिन्वन्नहन्गवामघवन्त्संचका नः । अत्रादासस्यनमुचेःशिरोयदवर्तयोमनवेगातुमिच्छन् ॥ युजंहिमामकृथाऽआदिदिंद्रशिरोदासस्यनमुचेर्मथा यन् । अश्मानंचित्स्वर्यं१वर्तमानंप्रचक्रियेवरोदसीमरुद्भ्यः ॥ स्त्रियोहिदासऽआयुधानिचक्रेकिंमाकरन्नबलाऽअस्य सेनाः । अंतर्ह्यख्यदुभेऽअस्यधेनेऽअथोपप्रैद्युधयेदस्युमिंद्रः ॥ समत्रगावोभितोनवंतेहेहवत्सैर्वियुतायदासन् । सं ताऽइंद्रोऽअसृजदस्यशाकैर्यदींसोमासःसुषुताऽअमंदन् ॥ २७ ॥ यदींसोमाबभ्रुधूताऽअमंदन्नरोरवीद्वृषभःसादने षु । पुरंदरःपपिवाँऽइंद्रोऽअस्यपुनर्गवामददादुस्रियाणां ॥ भद्रमिदंरुशमाऽअग्नेऽअक्रन्गवांचत्वारिददतःसहस्रा । ऋणंचयस्यप्रयतामघानिप्रत्यग्रभीष्मनृतमस्यनृणां ॥ सुपेशसंमावसृजंत्यस्तंगवांसहस्रैरुशमासोऽअग्ने । तीव्राऽइंद्रं ममंदुःसुतासोक्तोर्व्युष्टौपरितक्म्यायाः ॥ औच्छत्साराात्रीपरितक्म्यायाँऽऋणंचयेराजनिरुशमानां । अत्योनवा जीरघुरज्यमानोबभ्रुश्चत्वार्यसनत्सहस्रा ॥ चतुःसहस्रंगव्यस्यपश्वःप्रत्यग्रभीष्मरुशमेष्वग्ने । घर्मश्चित्तप्तःप्रवृजेयऽ

आसीदयुस्मयुस्तम्वादांसुविप्राः ॥ २८ ॥ ( ५।२।१७ ) इंद्रोरथायप्रवतंकृणोतियमध्यस्थान्मघवावाजयंतं । यूथे वपश्वोव्युनोतिगोपाऽअरिष्टोयातिप्रथमःसिषासन् ॥ आप्रद्रवहरिवोमाविवेनःपिशंगरातेऽअभिनःसचस्व । नहि त्वादिंद्रवस्योऽअन्यदस्त्यमेनाँश्चिज्जनिवतश्चकर्थ ॥ उद्यत्सहःसहसऽआजनिष्टदेदिष्टऽइंद्रऽइंद्रियाणिविश्वा । प्राचो दयत्सुदुघावव्रेऽअंतर्विज्योतिषासंववृत्वत्तमोवः ॥ अनवस्तेरथमश्वायतक्षन्त्वष्टावज्रंपुरुहूतद्युमंतं । ब्रह्माणऽइंद्रंम हयंतोऽअर्कैरवर्धयन्नहयेहंतवाऽउ ॥ वृष्णेयत्तेवृषणोऽअर्कमर्चानिंद्रग्रावाणोऽअदितिःसजोषाः । अनश्वासोयेपव योरथाऽइंद्रेषिताऽअभ्यवर्तंतदस्यून् ॥ २९ ॥ प्रतेपूर्वाणिकरणानिवोचंप्रनूतनामघवन्याचकर्थ । शक्तीवोयद्विभरा रोदसीऽउभेजयन्नपोमनवेदानुचित्राः ॥ तदिन्नुतेकरणंदस्मविप्राहिंयद्घ्नन्नोजोऽअत्रामिमीथाः । शुष्णस्यचित्परि मायाऽअगृभ्णाःप्रपित्वंयन्नपदस्यूँऽरसेधः ॥ त्वमपोयदवेतुर्वशायारमयःसुदुघाःपारऽइंद्र । उग्रमयातमवहोहकुत्सं संहयद्वामुशनारंतदेवाः+ ॥ इंद्राकुत्सावहमानारथेनावामत्याऽअपिकर्णेवहंतु । निःषीमद्भ्योधमथोनिःषधस्थान्म घोनोहृदोवरथस्तमांसि ॥ वार्तस्ययुक्तान्त्सुयुजश्चिदश्वान्कविश्चिदेषोऽअजगन्नवस्युः । विश्वेतेऽअत्रमरुतःसखायऽ

---

( ५।२।१७ ) इंद्रोरथायेतित्रयोदशर्चस्यसूक्तस्यात्रेयोवस्युरिंद्रः ( उग्रमयातमित्यादिपादौकुत्सदैवत्यौउशनोदैवत्यौवा ) नवम्या इंद्राकुत्सौत्रिष्टुप् ।

ऋक्सं. मंडलं ५
अ.४अ.१ अनु. २
॥ ८ ॥

इंद्रब्रह्माणितविषीमवर्धन् ॥ ३० ॥ सूरश्चिद्रथंपरितक्म्यायांपूर्वंकरदुपरंजूजुवांसं । भरच्चक्रमेतशःसंरिणातिपुरो
दधत्सनिष्यतिक्रतुंनः ॥ आयंजनाऽअभिचक्षेजगामेंद्रःसखायंसुतसोममिच्छन् । वदन्ग्रावाववेदिंभ्रियातेयस्यजीर
मध्वर्यवश्चरंति ॥ येचाकनंतचाकनंतनूतेमर्ताऽअमृतमोतेऽअंहऽआरन् । वावंधियज्यूँऽरुततेषुधेह्योजोजनेषुयेषुते
स्यामं ॥ ३१ ॥ ( ५।२।१८ ) अदर्दरुत्समसृजोविखानित्वमर्णवान्बद्बधानाँऽअरम्णाः । महांतमिंद्रपर्वतंवियद्वः
सृजोविधाराऽअवदानवंहन् ॥ त्वमुत्साँऽऋतुभिर्बद्बधानाँऽअरंहऽऊधःपर्वतस्यवज्रिन् । अहिंचिदुग्रप्रयुतंशयानंज
घन्वाँऽइंद्रतविषीमधत्थाः ॥ त्यस्यचिन्महतोनिर्मृगस्यवधर्जघानतविषीभिरिंद्रः । यऽएकऽइदप्रतिर्मन्यमानऽआद
स्मादन्योऽअजनिष्टतव्यान् ॥ त्यंचिदेषांस्वधयामदंतंमिहोनपातंसुवृधंतमोगां । वृषप्रभर्मादानवस्यभामंवज्रेणवज्री
निजंघानशुष्णं ॥ त्यंचिदस्यक्रतुभिर्निषत्तममर्मणोविददिदस्यमर्म । यदींसुक्षत्रप्रभृतामदस्ययुयुत्संतंतमसिहर्म्येधाः+ ॥
त्यंचिदित्थाकत्पयंशयानमसूर्येतमसिवावृधानं । तंचिन्मंदानोवृषभःसुतस्योच्चैरिंद्रोऽअपगूर्याजघान ॥ ३२ ॥ उ
द्यदिंद्रोमहतेदानवायवधर्यमिष्टसहोऽअप्रतीतं । यदींवज्रस्यप्रभृतौददाभविश्वस्यजंतोरधमंचकार ॥ त्यंचिदर्णंमधु
पंशयानमसिन्वंवव्रंमह्यादुदुग्रः । अपादमत्रंमहतावधेननिर्दुर्योणऽआवृणङ्मृध्रवाचं ॥ कोऽअस्यशुष्मंतविषींवरात

॥ ८ ॥

( ५।२।१८ ) अदर्दरुत्समितिद्वादशर्चस्यसूक्तस्यात्रेयोगातुरिंद्रस्त्रिष्टुप् ।

ऽएको॒धना॑भरते॒ऽअप्र॑तीतः । इ॒मे चि॑दस्य॒ ज्रय॑सो॒नु दे॒वीऽइंद्र॒स्यौज॑सो॒भिय॑सा जिहाते ॥ न्य॑स्मै दे॒वी स्वधि॑तिर्जिहीत॒ऽइंद्रा॑य गा॒तुरु॑श॒ती वं॑येमे । सं यदोजो॑ यु॒वते॒ विश्व॑माभि॒रनु॑स्व॒धाव्ने॑ क्षि॒तयो॑ नमंत ॥ एकं॒ नु त्वा॒ सत्प॑तिं॒ पांच॑जन्यं जा॒तं शृ॑णोमि य॒शसं॒ जने॑षु । तं मे॑ जगृभ्र॒ऽआ॒शसो॒ नवि॑ष्ठं दो॒षा वस्तो॒र्हव॑मानास॒ऽइंद्रं॑ ॥ ए॒वा हि त्वामृ॑तु॒था या॒तयं॑तं म॒घा विप्रे॑भ्यो॒ ददं॑तं शृ॒णोमि॑ । किं ते॑ ब्र॒ह्माणो॑ गृहते॒ सखा॑यो॒ ये त्वा॒या नि॑द॒धुः काम॑मिंद्र ॥ ३३ ॥ इति चतुर्थाष्टके प्रथमोऽध्यायः ॥ १ ॥

चतुर्थाष्टके सूक्तानि १३० ऋचः १२६९

पंचविंशाध्याये वर्गाः ३३ सूक्तानि २४ ऋचः १६८ ॥ त्यागः ॥ अग्नय इदं.१०० विश्वेभ्यो देवेभ्य. अग्नय.५ इंद्राग्निभ्या. अग्नय.६ इंद्राये.८ उशन इंद्राभ्या. इंद्राये.१७ ऋणंचयेंद्राभ्या.४ इंद्राये.७ इंद्रकुत्सोशनोभ्य. इंद्रकुत्साभ्या. इंद्राये.१६ ॥ इति चतुर्थे प्रथमः ॥

महि दश प्राजापत्यः संवरणो जातशत्रुं नव त्रिष्टुबंतं यस्ते ष्टौ प्रभूवसुरांगिरसः पंक्त्यंतं स आगमत षट् तृतीया जगती सं भानुना पंचात्रिरुरोरानुष्टुभं यदिंद्र पंक्त्यंतं माया हि नव त्र्युष्णिगाद्यंत्यानुष्टुम्मध्ये च सा सौरीं तदादीति हासः स्तुति कर्मत्वादत्रिरेव देवः को नु विंशति वैश्वदेवं वैतं तषाळश्याद्याति जगत्यावंत्यैकपदा प्रशंतमाद्यूनैकादशी रौद्र्यांधेन

वरूयूनैतयोरुपांत्यैकपदांतंप्रत्नथापंचोनाकाश्यपोवत्सारोन्येचऋषयोदृष्टलिंगाद्विस्त्रिष्टुवंतंविदाएकादशसदापृ
णोहयोष्टौप्रतिक्षत्रोंत्योद्वृचोदेवपत्नीस्तवोंत्यात्रिष्टुप्द्वितीयाच ॥ १ ॥ ॥ ॥

॥ हरिःओम् ॥ ( ५।३।१ ) महिमहेतवसेदीध्येनृनिंद्रायेत्थातवसेऽअतव्यान् । योऽअस्मैसुमतिंवाजसातौस्तु
तोजनेसमर्यश्चिकेत ॥ सत्वंनऽइंद्रधियसानोऽअर्कैर्हरीणांवृषन्योक्रमश्रेः । याऽइत्थामघवन्ननुजोषवक्षोऽअभिप्रार्यः
सक्षिजनान् ॥ नतेतऽइंद्राभ्य१स्मदृष्वायुक्तासोऽअब्रह्मतायदसन् । तिष्ठारथमधितंवज्रहस्तारश्मिंदेवयमसेस्वश्वः ॥
पुरूयत्तऽइंद्रसंत्युक्थागवेचकर्थोर्वरासुयुध्यन् । ततक्षेसूर्यायचिदोकसिस्वेवृषासमत्सुदासस्यनामचित् ॥ वयंतेतऽइं
द्रयेचनरःशर्धोजज्ञानायाताश्चरथाः । आस्मान्जगम्यादहिशुष्मसत्वाभगोनहव्यःप्रभृथेषुचारुः ॥ १ ॥ पपृक्षेण्यमिं
द्रत्वेह्योजोनृम्णानिचनृतमानोऽअमर्तः । सनऽएनींवसवानोरयिंदाःप्रार्यःस्तुषेतुविमघस्यदानं ॥ एवानऽइंद्रोतिभि
रवपाहिगृणतःशूरकारून् । उतत्वचंददतोवाजसातौपिप्रीहिमध्वःसुषुतस्यचारोः ॥ उतत्येमापौरुकुत्स्यस्यसूरेस्त्रस
दस्योर्हिरणिनोरराणाः । वहंतुमादशश्येतासोऽअस्यगैरिक्षितस्यक्रतुभिर्नुसश्चे ॥ उतत्येमामारुताश्वस्यशोणाःक्रत्वा
मघासोविदथस्यरातौ । सहस्रामेच्यवतानोददानऽआनूकमर्योवपुषेनार्चत् ॥ उतत्येमाध्वन्यस्यजुष्टालक्ष्मण्यस्यसुरु



( ५।३।१ ) महिमहइतिदशर्चस्यसूक्तस्यप्राजापत्यःसंवरणइंद्रस्त्रिष्टुप् ।

चोयतांनाः । मह्वारायःसंवरणस्यऽऋषेर्व्रजंनगावःप्रयंताऽअपिग्मन् ॥ २ ॥ ( ५।३।२ ) अजातशत्रुमजरास्वर्वत्य नुस्वधामितादस्समीयते । सुनोतनपचंतब्रह्मवाहसेपुरुष्टुतायप्रतरंदधातन ॥ आयःसोमेनजठरमपिप्रतामंदतमघवा मध्वोऽअंधसः । यदींमृगायहंतवेमहावधःसहस्त्रभृष्टिमुशनावधंयमत् ॥ योऽअस्मैघ्रंसऽउतवायऽऊधनिसोमंसुनो तिभवंतिद्युमाँऽअह । अपापशक्रस्ततनुष्टिमूहतितनूशुभ्रंमघवायःकवासखः+ ॥ यस्यावधीत्पितरंयस्यमातरंयस्यश क्रोभ्रातरंनातऽईषते । वेतीद्वस्यप्रयंतायतंकरोनकिल्बिषादीषतेवस्वऽआकरः+ ॥ नपंचभिर्दशभिर्वष्ट्यारभंनासुन्व तासचतेपुष्यंताचन । जिनातिवेदमुयाहंतिवाधुनिरादेवयुंभजतिगोमतिव्रजे+ ॥ ३ ॥ वित्वक्षणःसमृतौचक्रमास जोसुन्वतोविषुणःसुन्वतोवृधः । इंद्रोविश्वस्यदमिताविभीषणोयथावशंनयतिदासमार्यः ॥ समींपणेरजतिभोजनंमु षेविदाशुषेभजतिसूनरंवसु । दुर्गेचनध्रियतेविश्वऽआपुरुजनोयोऽअस्यतविषीमचुक्रुधत् ॥ संयज्जनौसुधनौविश्वश र्धसाववेदिंद्रोमघवागोषुशुभ्रिषु । युजंह्य१न्यमकृतप्रवेपन्युदींगव्यंसृजतेसत्वभिर्धुनिः ॥ सहस्त्रसामाग्निवेशिंगृणी षेशत्रिमग्नऽउपमांकेतुमर्यः । तस्माऽआपःसंयतःपीपयंततस्मिन्क्षत्रममवत्त्वेषमस्तु ॥ ४ ॥ ( ५।३।२ ) यस्तेसाधिष्ठो

---

( ५।३।२ ) अजातशत्रुमितिनवर्चस्यसूक्तस्यप्राजापत्यःसंवरणइंद्रोजगत्यंत्यात्रिष्टुप् । ( ५।३।३ ) यस्तेसाधिष्ठइत्यष्टर्चस्यसूक्तस्यां- गिरसःप्रभूवसुरिंद्रोनुष्टुबंत्यापंक्तिः ।

वंसऽइंद्रक्रतुष्टमाभर । अस्मभ्यंचर्षणीसहंसस्निंवाजेषुदुष्टरं ॥ यदिंद्रतेचतस्रोयच्छूरसंतितिस्रः । यद्वापंचक्षितीना
मवस्तत्सुनऽआभर ॥ आतेवोवरेण्यंवृषन्तमस्यहूमहे । वृषंजूतिर्हिजज्ञिषऽआभूभिरिंद्रतुर्वणिः ॥ वृषाह्यसिराधसे
जज्ञिषेवृष्णितेशवः । स्वक्षत्रंतेधृषन्मनःसत्राहमिंद्रपौंस्यं ॥ त्वंतमिंद्रमर्त्यममित्रयंतमद्रिवः । सर्वरथाशतक्रतोनियां
हिशवसस्पते ॥ ५ ॥ त्वामिद्वृत्रहन्तमजनासोवृक्तबर्हिषः । उग्रंपूर्वीषुपूर्व्यंहवंतेवाजसातये ॥ अस्माकमिंद्रदुष्टरंपु
रोयावानमाजिषु । सयावानंधनेधनेवाजयंतमवारथं ॥ अस्माकमिंद्रेहिनोरथमवापुरंध्या । वयंशविष्ठवार्यंदिविश्र
वोदधीमहिदिविस्तोमंमनामहे ॥ ६ ॥ ( ५।३।४ ) सऽआगमदिंद्रोयोवसूनांचिकेतदातुंदामनोरयीणां । धन्वचरो
नवंसगस्तृषाणश्चकमानःपिबतुदुग्धमंशुं+ ॥ आतेहनूहरिवःशूरशिप्रेरुहत्सोमोनपर्वतस्यपृष्ठे । अनुत्वाराजन्नर्वतोन
हिन्वन्गीर्भिर्मदेमपुरुहूतविश्वे ॥ चक्रंनवृत्तंपुरुहूतवेपतेमनोभियामेऽअमतेरिदद्रिवः । रथादधित्वाजरितासदावृध
कुविन्नुस्तोषन्मघवन्पुरूवसुः ॥ एषग्रावेवजरितातऽइंद्रेयर्तिवाचंबृहदाशुषाणः । प्रसव्येनमघवन्यंसिरायःप्रदक्षिणि
द्धरिवोमाविवेनः ॥ वृषात्वावृषणंवर्धतुद्यौर्वृषावृषभ्यांवहसेहरिभ्यां । सनोवृषावृषरथःसुशिप्रवृषक्रतोवृषावज्रिन्भ
रेधाः ॥ योरोहितौवाजिनौवाजिनीवान्त्रिभिःशतैःसचमानावदिष्ट । यूनेसमस्मैक्षितयोनमंतांश्रुतरथायमरुतोदुवो



( ५।३।४ ) सआगमदितिषड्ऋचस्यसूक्तस्यांगिरसःप्रभूवसुरिंद्रस्त्रिष्टुप्तृतीयाजगती ।

या+ ॥ ७ ॥ ( ५।३।५ ) संभानुनायततेसूर्यस्याजुह्वानोघृतपृष्ठःस्वंचाः । तस्माऽअमृध्राऽउषसोव्युच्छान्यऽइंद्रा यसुनवामेत्याह ॥ समिद्धाग्निर्वनवत्स्तीर्णबर्हिर्युक्तग्रावासुतसोमोजराते । ग्रावाणोयस्येषिरंवदंत्ययंदध्वर्युर्हविषाव सिंधुं ॥ वधूरियंपतिमिच्छंत्येतियऽईंवहातेमहिषीमिषिरां । आस्यश्रवस्याद्रथऽआचघोषात्पुरूसहस्रापरिवर्तयाते ॥ नसराजाव्यथतेयस्मिन्निंद्रस्तीव्रंसोमंपिबतिगोसखायं । अ।सत्वनैरजतिहंतिवृत्रंक्षेतिक्षितीःसुभगोनामपुष्यन् ॥ पु ष्यात्क्षेमेऽअभियोगेभवात्युभेवृतौसंयतीसंजयाति । प्रियःसूर्येप्रियोऽअग्नाभवातियऽइंद्रायसुतसोमोददाशत् ॥ ८ ॥ ( ५।३।६ ) उरोष्टऽइंद्रराधसोविभ्वीरातिःशतक्रतो । अधानोविश्वचर्षणेद्युम्नासुक्षत्रमंहय ॥ यदीमिंद्रश्र वाय्यमिषंशविष्ठदधिषे । पप्रथेदीर्घश्रुत्तमंहिरण्यवर्णदुष्टरं ॥ शुष्मासोयेतेऽअद्रिवोमेहनाकेतसापः । उभादेवाव भिष्टयेदिवश्चग्मश्चराजथः ॥ उतोनोऽअस्यकस्यचिद्दक्षस्यतववृत्रहन् । अस्मभ्यंनृम्णमाभरास्मभ्यंनृमणस्यसे ॥ नूतंऽआभिरभिष्टिभिस्तवशर्मन्छतक्रतो । इंद्रस्यामसुगोपाःशूरस्यामसुगोपाः+ ॥ ९ ॥ ( ५।३।७ ) यदिंद्रचित्र मेहनास्तित्वादातमद्रिवः । राधस्तन्नोविदद्वसऽउभयाहस्त्याभर ॥ यन्मन्यसेवरेण्यमिंद्रद्युक्षंतदाभर । विद्याम

---

( ५।३।५ ) संभानुनेतिपंचर्चस्यसूक्तस्यभौमोत्रिरिंद्रस्त्रिष्टुप् । ( ५।३।६ ) उरोष्टइतिपंचर्चस्यसूक्तस्यभौमोत्रिरिंद्रोनुष्टुप् । ( ५।३।७ ) यदिंद्रेतिपंचर्चस्यसूक्तस्यभौमोत्रिरिंद्रोनुष्टुबंत्यापंक्तिः ।

तस्यंतेवयमकूपारस्यदावनें ॥ यत्तेदित्सुप्रराध्यंमनोऽअस्तिश्रुतंबृहत् । तेनंदृळ्हाचिंददद्रिवऽआवाजंदर्षिसातयें ॥ मंहिष्ठंवोमघोनांराजानंचर्षणीनां । इंद्रमुपप्रशंस्तयेपूर्वीभिर्जुजुषेगिरंः ॥ अस्माऽइत्काव्यंवचंऽउक्थमिंद्रायशंस्यं । तस्माऽउब्रह्मवाहसेगिरोंवर्धंत्यत्रयोगिरंःशुंभंत्यत्रंयः ॥ १० ॥ ( ५।३।८ ) आयाह्यद्रिभिःसुतंसोमंसोमपतेपिब । वृषन्निंद्रवृषभिर्वृत्रहंतम ॥ वृषाग्रावावृषामदोवृषासोमोंऽअयंसुतः । वृषन्निंद्र० ॥ वृषांत्वावृषणंहुवेवज्रिन्चित्राभिरूतिभिंः । वृषन्निंद्र० ॥ ऋजीषीवज्रीवृषभस्तुराषाट्छुष्मीराजावृत्रहासोमपावा । युक्त्वाहरिंभ्यामुपंयासदर्वाङ्माध्यंदिनेसवनेमत्सदिंद्रंः ॥ यत्त्वांसूर्यस्वंर्भानुस्तमसाविंध्यदासुरः । अक्षेत्रविद्यथामुग्धोभुवंनान्यदीधयुः ॥ ११ ॥ स्वंर्भानोरधयदिंद्रमायाऽअवोदिवोवर्तमानाऽअवाहंन् । गूळ्हंसूर्यंतमसापंव्रतेनतुरीयेंणब्रह्मणाविंददत्रिंः ॥ मामामिमंतवसंतमत्रऽइरस्याद्रुग्धोभियसानिगारीत् । त्वंमित्रोऽअंसिसत्यराधास्तौमेहावंतंवरुणश्चराजा ॥ ग्राव्णोंब्रह्मायुंयुजानःसंपर्यन्कीरिणादेवान्नमंसोपशिक्षंन् । अत्रिःसूर्यस्यदिविचक्षुराधात्स्वंर्भानोरपंमायाऽअघुक्षत् ॥ यंवैसूर्यंस्वंर्भानुस्तमसाविंध्यदासुरः । अत्रयस्तमन्वंविंदन्नह्यं१न्येऽअशंक्नुवन् ॥ १२ ॥ ( ५।३।९ ) कोनुवांमित्रावरुणावृताय



---

(५।३।८)आयाहीतिनवर्चस्यसूक्तस्यभौमोत्रिः [illegible] चतसृणामत्रिर्देवता आद्यास्तिस्रउष्णिहःपंच-म्यंत्येऽनुष्टुभौशिष्टास्त्रिष्टुभः । (५।३।९) कोनुवामितिविंशत्यृचस्यसूक्तस्यभौमोत्रिर्विश्वेदेवास्त्रिष्टुप्षोडशीसप्तदश्यावतिजगत्यावंत्यैकपदा ।

न्द्विवोवांमहःपार्थिवस्यवादे । ऋतस्यंवासदंसित्रासींथांनोयज्ञायतेवांपशुषोनवाजांन् ॥ तेनोमित्रोवरुणोऽअर्यमायु रिंद्रंऽऋभुक्षामरुतोंजुषंत । नमोभिर्वायेदधतेसुवृक्तिंस्तोमंरुद्रायंमीह्ळुषेसजोषाः ॥ आवांयेष्ठाश्विनाहुवध्यैवातस्यप त्मन्नरथ्यस्यपुष्टौ । उतवांदिवोऽअसुरायमन्मप्रांधांसीवयज्यंवेभरध्वं ॥ प्रसक्षणोदिव्यःकण्वहोतात्रितोदिवःसजोषा वातोऽअग्निः । पूषाभगःप्रभृथेविश्वभोजाऽआजिंनजंग्मुराश्वंश्वतमाः ॥ प्रवोरयिंयुक्ताश्वंभरध्वंरायऽएषेवसेदधी तधीः । सुशेवऽएवैरौशिजस्यहोतायेवऽएवांमरुतस्तुराणां ॥ १३ ॥ प्रवोवायुंरथयुजंकृणुध्वंप्रदेवंविप्रंपनितारम कैः । इषुध्यवंऽऋतसापःपुरंधीर्वस्वींर्नोऽअत्रपत्नीराधियेधुः ॥ उपंवऽएषेवंद्येभिःशूषैःप्रयह्वीदिवश्चितयंद्भिरकैः । उ षासानक्ताविदुषींवविश्वमाहावहतोमर्त्याययज्ञं॑ ॥ अभिवोऽअर्चेपोष्यावंतोनॄन्वास्तोष्पतिंत्वष्टारंरराणः । धन्यांस जोषाधिषणानमोभिर्वनस्पतींऽरोषधीरायऽएषे ॥ तुजेनस्तनेपर्वताःसंतुस्वैतवोयेवसवोनवीराः । पनितऽआप्त्योयज तःसदानोवर्धान्नःशंसंनर्योऽअभिष्टौ ॥ वृष्णोऽअस्तोषिभूम्यस्यगर्भंत्रितोनपातमपांसुवृक्तिः । गृणीतेऽअग्निरेतरीनशू षैःशोचिष्कैशोनिरिणातिवनां ॥ १४ ॥ कथामहेरुद्रियायब्रवामकद्रायेचिकितुषेभगाय । आपऽओषधीरुतनोवंतु

( भेदपक्षे—मित्रावरुणौ १ विश्वेदेवाः १ अश्विनौ १ विश्वेदेवाः १ मरुतः १ विश्वेदेवाः १ उषासानक्ते १ विश्वेदेवाः २ अग्निः १ विश्वेदेवाः २ मरुतः १ विश्वेदेवाः १ भूमिः १ विश्वेदेवाः ३ भूमिः १ विश्वेदेवाः १ एवं २० ।

द्यौर्वनागिरयोवृक्षकेशाः ॥ शृणोतुनऽऊर्जांपतिर्गिरःसनभस्तरीयाँऽइषिरःपरिज्मा । शृण्वंत्वापःपुरोनशुभ्राःपरिस्रुचोबबृहाणस्याद्रेः ॥ विदाचिन्नुमहांतोयेवऽएवाब्रवामदस्मावार्यंदधानाः । वयश्चनसुभ्व१आवयंतिक्षुभामर्तमनुयतंवधस्नैः+ ॥ आदैव्यानिपार्थिवानिजन्मापश्चाच्छासुमखायवोचं । वर्धंतांद्यावोगिरश्चंद्राग्राऽउदावर्धंतामभिषाताऽअर्णाः ॥ पदेपदेमेजरिमानिधायिवरूत्रीवाशक्रायापायुभिश्च । सिषक्तुमातामहीरसानःस्मत्सूरिभिर्ऋजुहस्तऽऋजुवनिः ॥ १५ ॥ कथादाशेमनमसासुदानूनेवयामरुतोऽअच्छोक्तौप्रश्रवसोमरुतोऽअच्छोक्तौ । मानोहिर्बुध्न्योरिषेधादस्माकंभूदुपमातिवनिः ॥ इतिचिन्नुप्रजायैपशुमत्यैदेवासोवनतेमर्त्योवऽआदेवासोवनतेमर्त्योवः । अत्राशिवांतन्वोधासिमस्याजरांचिन्मेनिर्ऋतिर्जग्रसीत ॥ तांवोदेवाःसुमतिमूर्जयंतीमिषमश्यामवसवःशसागोः । सानःसुदानुर्मृळयंतीदेवीप्रतिद्रवंतीसुवितायगम्याः ॥ अभिनऽइळायूथस्यमातास्मन्नदीभिरुर्वशीवागृणातु । उर्वशीवाबृहद्दिवागृणानाभ्यूर्ण्वानाप्रभृथस्यायोः+ ॥ सिषक्तुनऽऊर्जव्यस्यपुष्टेः+ ॥ १६ ॥ ( ५।३।१० ) प्रशंतमावरुणंदीधितीगीर्मित्रंभगमदितिंनूनमश्याः । पृषद्योनिःपंचहोताशृणोत्वतूर्तपंथाऽअसुरोमयोभुः+ ॥ प्रतिमेस्तोममदितिर्जगृभ्यात्सूनुंनमा

॥ १२ ॥

---

(५।३।१०) प्रशंतमेत्यष्टादशर्चस्यसूक्तस्यभौमोत्रिर्विश्वेदेवाःएकादश्यारुद्रस्त्रिष्टुप्सप्तदश्येकपदा। (भेदपक्षे—विश्वेदेवाः २ सविता १ इंद्रः १ विश्वेदेवाः१ इंद्रः१ बृहस्पतिः३ मरुतः१ रुद्रः१ विश्वेदेवाः१ पर्जन्यः२ मरुतः१ विश्वेदेवाः २ अश्विनौ १ एवं १८ )।

ताहृद्यंसुशेवं । ब्रह्मप्रियंदेवहितंयदस्त्यहंमित्रेवरुणेयन्मयोभु+ ॥ उदीरयकवितमंकवीनामुनत्तैनमभिमध्वाघृतेन ।
सनोवसूनिप्रयंताहितानिचंद्राणिदेवःसवितासुवाति ॥ सामिंद्रणोमनसानेषिगोभिःसंसूरिभिर्हरिवःसंस्वस्ति । संब्रह्म
णादेवहितंयदस्तिसंदेवानांसुमत्यायज्ञियानां ॥ देवोभगःसवितारायोऽअंशऽइंद्रोवृत्रस्यसंजितोधनानां । ऋभुक्षा
वाजऽउतवापुरंधिरवंतुनोऽअमृतासस्तुरासः ॥ १७ ॥ मरुत्वंतोऽअप्रतीतस्यजिष्णोरजूर्यतःप्रब्रवामाकृतानि । नते
पूर्वेमघवन्नापरासोनवीर्यं१नूतनःकश्चनाप ॥ उपस्तुहिप्रथमंरत्नधेयंबृहस्पतिंसनितारंधनानां । यःशंसतेस्तुवतेशंभ
विष्ठःपुरूवसुरागमज्जोहुवानं ॥ तवोतिभिःसचमानाऽअरिष्टाबृहस्पतेमघवानःसुवीराः । येऽअश्वदाऽउतवासंतिगो
दायेवस्त्रदाःसुभगास्तेषुरायः ॥ विसर्माणंकृणुहिवित्तमेषांयेभुंजतेऽअपृणंतोनऽउक्थैः । अपव्रतान्प्रसवेवावृधानान्ब्र
ह्मद्विषःसूर्याद्यावयस्व ॥ यऽओहतेरक्षसोदेववीतावचक्रेभिस्तंमरुतोनियात । योवःशमींशशमानस्यनिंदात्तुच्छ्या
न्कामान्करतेसिष्विदानः+ ॥ १८ ॥ तमुष्टुहियःस्विषुःसुधन्वायोविश्वस्यक्षयतिभेषजस्य । यक्ष्वामहेसौमनसायरु
द्रंनमोभिर्देवमसुरंदुवस्य ॥ दमूनसोऽअपसोयेसुहस्तावृष्णःपत्नीर्नद्योविभ्वतष्टाः । सरस्वतीबृहद्दिवोतराकादशस्यं
तीर्वरिवस्यंतुशुभ्राः+ ॥ प्रसूमहेसुशरणायमेधांगिरंभरेनव्यसींजायमानां । यऽआहनादुहितुर्वक्षणासुरूपामिनानोऽ
अकृणोदिदंनः ॥ प्रसुष्टुतिःस्तनयंतंरुवंतमिळस्पतिंजरितर्नूनमश्याः । योऽअब्दिमाँऽउदनिमाँऽइयर्तिप्रविद्युतारोद

ऋक्सं. अ.४अ.२ ॥१३॥

मंडलं ५ अनु. ३

सीऽउक्षमाणः ॥ एषःस्तोमोमारुतंशर्धोऽअच्छारुद्रस्यसूनूँर्युवन्यूँरुदश्याः । कामोरायेहवतेमास्वस्त्युपस्तुहिपृषदश्वाँ
ऽअयासः ॥ प्रैषःस्तोमःपृथिवीमंतरिक्षंवनस्पतीँरोषधीरायेऽअश्याः । देवोदेवःसुहवोभूतुमह्यंमानोमातापृथिवीदु
र्मतौधात् ॥ उरौदेवाऽअनिबाधेस्याम ॥ समश्विनोरवसानूतनेनमयोभुवासुप्रणीतीगमेम । आनोरयिंवहतमोतवीरा
नाविश्वान्यमृतासौभगानि ॥ १९ ॥ (५।३।११) आधेनवःपयसातूर्ण्यर्थाऽअमर्धंतीरुपनोयंतुमध्वा । महोराये
बृहतीःसप्तविप्रोमयोभुवोजरिताजोहवीति ॥ आसुष्टुतीनमसावर्तयध्यैद्यावावाजायपृथिवीऽअमृध्रे । पितामाताम
धुवचाःसुहस्ताभरेभरेनोयशसावविष्टां ॥ अध्वर्यवश्चकृवांसोमधूनिप्रवायवेभरतचारुशुक्रं । होतेवनःप्रथमःपाह्यस्य
देवमध्वोररिमातेमदाय ॥ दशक्षिपोयुंजतेबाहूऽअद्रिंसोमस्ययाशमितारासुहस्ता । मध्वोरसंसुगभस्तिर्गिरिष्ठांचनि
श्चदद्दुदुहेशुक्रमंशुः+ ॥ असावितेजुजुषाणायसोमःक्रत्वेदक्षायबृहतेमदाय । हरीरथेसुधुरायोगेऽअर्वागिंद्रप्रियाकृ
णुहिहूयमानः ॥ २० ॥ आनोमहीमरमतिंसजोषाग्नांदेवींनमसारातहव्यां । मधोर्मदायबृहतीमृतज्ञामाग्नेवहपथि
भिर्देवयानैः ॥ अंजंतियंप्रथयंतोनविप्रावपावंतंनाग्निनातपंतः । पितुर्नपुत्रऽउपसिप्रेष्ठऽआघर्मोऽअग्निमृतयन्नसादि ॥

॥१३॥

(५।३।११) आधेनवइतिसप्तदशर्चस्यसूक्तस्यभौमोत्रिर्विश्वेदेवास्त्रिष्टुपूषोडश्येकपदाविराट् (भेदपक्षे—नदी १द्यावापृथिवी १ वायुः१ सोमः १ इंद्रः १ अग्निः १ घर्मः १ अश्विनौ १ विश्वेदेवाः २ सरस्वती १ बृहस्पतिः १ अग्निः ३ विश्वेदेवाः १ अश्विनौ १ एवं १७)।

अच्छांमहीबृंहतीशंतमागीर्दूतोनगंत्वश्विनाहुवध्यै । मयोभुवांसरथायांतमर्वाग्गंतंनिधिंधुरमाणिर्ननाभिं ॥ प्रतव्यं सोनमंऽउक्तिंतुरस्याहंपूष्णऽउतवायोरंदिक्षि । याराधंसाचोदितारांमतीनांयावाजस्यद्रविणोदाऽउतत्मन्+ ॥ आनामं भिर्मरुतोंवक्षिविश्वानारूपेभिर्जातवेदोहुवानः । यज्ञंगिरोंजरितुःसुंष्टुतिंचविश्वेंगंतमरुतोविश्वंऽऊती+ ॥ २१ ॥ आ नोंदिवोबृंहतःपर्वतादासरंस्वतीयजतागंतुयज्ञं । हवंदेवीजुंजुषाणाघृताचींशग्मांनोवाचंमुशतीशृंणोतु ॥ आवेधसं नीलंपृष्ठंबृहंतंबृहस्पतिंसदंनेसादयध्वं । सादद्योंनिंदमऽआदींदिवांसंहिरंण्यवर्णमरुषंसंपेम ॥ आधर्णसिर्बृहर्दिवोररां णोविश्वेभिर्गंत्वोमंभिर्हुवानः । ग्नावसांनऽओषंधीरमृंध्रस्त्रिधातुंशृंगोवृषभोवंयोधाः+ ॥ मातुष्पदेपंरमेशुक्रऽआयो विंपन्यवोंरास्पिरासोंऽअग्मन् । सुशेव्यंनमंसारातहंव्याःशिशुंमृजंत्यायवोनवासे+ ॥ बृहद्वयोंबृहतेतुभ्यंमग्नेधिया जुरोंमिथुनासंःसचंत । देवोदेंवःसुहवोंभूतुमह्यंमानोंमातापृथिवीदुर्मतौधांत् ॥ उरौदेवाऽअनिबाधेस्याम ॥ सम श्विनोरवंसानूतंनेनमयोभुवांसुप्रणीतीगमेम । आनोंरयिंवहतमोतवीरानाविश्वान्यमृतासौभंगानि ॥२२॥(५।३।१२) तंप्रत्नथांपूर्वथांविश्वथेमथांज्येष्ठतांतिंबर्हिषदंस्वर्विदं । प्रतीचीनंवृजनंदोहसेगिराशुंजयंतमनुयासुवर्धसे ॥ श्रियेसुद

---

( ५।३।१२ ) तंप्रत्नथेतिपंचदशर्चस्यसूक्तस्यकाश्यपोवत्सारोविश्वेदेवाजगत्यंत्येद्वेत्रिष्टुभौ ( भेदपक्षे—इंद्रः २ अग्निः १ सूर्यः १ अग्निः १ विश्वेदेवाः १ सूर्यः १ अग्निः १ सूर्यः २ विश्वेदेवाः २ सुतंभरः १ अग्निः २ एवं १५ ) ।

शीरुपरस्यया:स्वर्विरोचमानःककुभामचोदते । सुगोपाऽअसिनदभायसुक्रतोपरोमायाभिर्ऋतऽआसनामते ॥ अत्यं
हविःसंचतेसच्चधातुचारिष्टगातुःसहोतासहोभरिः । प्रसर्स्राणोऽअनुबर्हिर्वृषाशिशुर्मध्येयुवाजरोविस्रुहाहितः+ ॥ प्र
वऽएतेसुयुजोयामन्निष्टयेनीचीरमुष्मैयम्यऽऋतावृधः । सुयंतुभिःसर्वशासैरभीशुभिःक्रिविर्नामानिप्रवणेमुषायति ॥
संजर्भुराणस्तरुभिःसुतेगृभंवयाकिनंचित्तगर्भासुसुस्वरुः । धारवाकेष्वृजुगाथशोभसेवर्धस्वपत्नीरभिजीवोऽअध्वरे+
॥ २३ ॥ याद्दगेवदद्दशेताद्दगुच्यतेसंच्छायर्यादधिरेसिध्रयाप्स्वा । महीमस्मभ्यमुरुषामुरुज्रयोबृहत्सुवीरमनपच्युतं
सहः ॥ वेत्यग्रुर्जनिवान्वाऽअतिस्पृधःसमर्यतामनसासूर्यःकविः । घ्रंसंरक्षंतंपरिविश्वतोगयमस्माकंशर्मवनवत्स्वाव
सुः ॥ ज्यायांसमस्ययतुनस्यकेतुनऽऋषिस्वरंचरतियासुनामते । याद्दश्मिन्धायितमपस्ययाविदद्यऽउस्वयंवहतेसोऽ
अरंकरत् ॥ समुद्रमासामवतस्थेऽअग्रिमानरिष्यतिसवनंयस्मिन्नायता । अत्रानहार्दिक्रवणस्यरेजतेयत्रामतिर्विद्यते
पूतबंधनी ॥ सहिक्षत्रस्यमनसस्यचित्तिभिरेवावदस्ययजतस्यसध्रेः । अवत्सारस्यस्पृणवामरण्वभिःशविष्ठंवाजंविदुषा
चिद्ध्यं ॥ २४ ॥ श्येनऽआसामदितिःकक्ष्योमदोविश्ववारस्ययजतस्यमायिनः । समन्यमन्यमर्थयंत्येतवेविदुर्विषा
णंपरिपानमंतिते+ ॥ सदापृणोयजतोविद्विषोवधीद्बाहुवृक्तःश्रुतवित्तर्योवःसचा । उभासवराप्रत्येतिभातिचयदींग
णंभजतेसुप्रयावभिः ॥ सुतंभरोयजमानस्यसत्पतिर्विश्वासामूधःसधियामुदंचनः । भरद्धेनूरसवच्छिश्रियेपयोनुब्रु

वाणोऽअध्यैतिनस्वपन्+ ॥ योजागारतमृचःकामयंतेयोजागारतमुसामानियंति । योजागारतमयंसोमऽआहतवाह
मस्मिसख्येन्योकाः ॥ अग्निर्जागारतमृचःकामयंतेग्निर्जागारतमुसामानियंति । अग्निर्जागारतमयंसोमऽआहतवाह
मस्मिसख्येन्योकाः ॥ २५ ॥ ( परिशिष्टं ॥ जागर्षित्वंभुवनेजातवेदोजागर्षियत्रयजंतेहविष्मान् । इदंहविःश्रद्दधा
नोजुहोमितेनपासिगुह्यंनामगोनाँ ॥ ( ५।४।१ ) विदादिवोविष्यन्नद्रिमुक्थैरायत्याऽउषसोऽअर्चिनोगुः । अपावृ
तव्रजिनीरुत्स्वर्गाद्विदुरोमानुषीर्देवऽआवः ॥ विसूर्योऽअमतिंनश्रियंसादोर्वाद्गवांमाताजानतीगात् । धन्वर्णसोनद्य१ः
खादोऽअर्णाःस्थूणेवसुमिताद्दंहतद्यौः+ ॥ अस्माऽउक्थायपर्वतस्यगर्भोमहीनांजनुषेपूर्व्याय । विपर्वतोजिहीतसा
धतद्यौराविवासंतोदसयंतभूम ॥ सूक्तेभिर्वोवचोभिर्देवजुष्टैरिंद्रान्व१ग्नीऽअवसेहुवध्यै । उक्थेभिर्हिष्माकवयःसुय
ज्ञाऽआविवासंतोमरुतोयजंति ॥ एतोन्व१द्यसुध्यो३भवामप्रदुच्छुनामिनवामावरीयः । आरेद्वेषांसिसनुतर्दधामा
यामप्रांचोयजमानमच्छ ॥ २६ ॥ एताधियंकृणवामासखायोपयामाताँऽऋणुतव्रजंगोः । ययामनुर्विशिशिप्रंजिगाय
ययावणिग्वंकुरापापुरीषं ॥ अनूनोदत्रहस्तयतोऽअद्रिरार्चन्येनदशमासोनवग्वाः । ऋतंयतीसरमागाऽअविंदद्विश्वा

(५।४।१) विदादिवइत्येकादशर्चस्यसूक्तस्यात्रेयःसदापृणोविश्वेदेवास्त्रिष्टुप् । ( भेदपक्षे—इंद्रसूर्यौ १ विश्वेदेवाः २ इंद्राग्नी १ विश्वेदेवाः
६ आपः १ एवं ११ । अत्रसूक्तेसदापृणर्षेर्यजतइत्यादिलिंगोक्तऋषिभिःसमुच्चयइतिकेचित् ) ।

निसत्यांगिंराश्चकार ॥ विश्वेंऽअस्याव्युषिमाहिंनायाःसंयद्गोभिरंगिंरसोनवंत । उत्संऽआसांपरमेसधस्थंऽऋतस्यपथा सरमांविदुद्गाः+ ॥ आसूर्यौयातुसप्ताश्वःक्षेत्रंयदस्योर्विंयादीर्घयाथे । रघुःश्येनःपंतयदंधोऽअच्छायुवांकविर्दीदय द्गोषुगच्छंन् ॥ आसूर्योऽअरुहच्छुक्रमर्णोयुक्तयद्धरितौवीतपृष्ठाः । उद्मानंनावमनयंतधीराऽआश्रृण्वतीरापोऽअर्वा गंतिष्ठन् ॥ धियंवोऽअप्सुदंधिषेस्वर्षांययातरन्दशमासोनवंग्वाः । अयाधियास्यांमदेवगोपाऽअयाधियातुंतुर्यामा त्यंहः ॥ २७ ॥ ( ५।४।२ ) हयोनविद्वाँऽअयुजिस्वयंधुरितांवहामिप्रतरंणीमवस्युवं । नास्यांवश्मिविमुचंनावृतंपु नर्विद्वान्पथःपुरऽएतंऽऋजुनेषति ॥ अग्नऽइंद्रवरुणमित्रदेवाःशर्धःप्रयंतमारुंतोतविष्णो । उभानासंत्यारुद्रोऽअध ग्नाःपूषाभगःसरंस्वतीजुषंत ॥ इंद्राग्नीमित्रावरुणादिंतिंस्वःपृथिवीद्यांमरुतःपर्वंताँऽअपः । हुवेविष्णुंपूषणंब्रह्मणस्प तिंभगंनुशंसंसवितारंमूतयें ॥ उतनोविष्णुंरुतवातोंऽअस्रिधोद्रविणोदाऽउतसोमोमयंस्करत् । उतऽऋभवंऽउतराये नोंऽअश्विनोतत्वष्टोतविभ्वानुंमंसते ॥ उतत्यन्नोमारुंतंशर्धंऽआगंमद्दिविक्षयंयंजतंबर्हिंरासदें । बृहस्पतिःशर्मंपूषोत नोयमद्वरूथ्यं१वरुणोमित्रोऽअर्यमा+ ॥ उतत्येनःपर्वंतासःसुशस्तयःसुदीतयोंनद्यं१स्त्रामंणेभुवन् । भगोंविभक्ताश



---

( ५।४।२ ) हयोनेत्यष्टर्चस्यसूक्तस्यात्रेयःप्रतिक्षत्रोविश्वेदेवाजगतीसप्तम्यष्टम्योर्देवपत्न्यःद्वितीयांत्येत्रिष्टुभौ-। ( भेदपक्षे—विश्वेदेवाः ६ देवपत्न्यः २ एवं ८ ) ।

वसावसार्गमदुरुव्यचाऽअर्दितिःश्रोतुमेहवं ॥ देवानांपत्नीरुशतीरंवंतुनःप्रावंतुनस्तुजयेवाजंसातये । याःपार्थिवा सोयाऽअपामपिंव्रतेतानोंदेवीःसुहवाःशर्मयच्छत ॥ उतग्नाव्यंतुदेवपत्नीरिंद्राण्यंग्नाय्यश्विनीराट् । आरोदसीवरु णानीश्रृंणोतुव्यंतुंदेवीर्यऽऋतुर्जनीनां ॥ २८ ॥ ॥ इतिचतुर्थाष्टकेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥

षड्विंशाध्यायेवर्गाः २८ सूक्तानि १४ ऋचः १४६ ॥ त्यागः ॥ इंद्रायेदं. ५२ सूर्याये. अत्रय. ४ विश्वेभ्योदेवेभ्य. ३० [भे. प. मित्रावरुणाभ्या. विश्वेभ्योदेवेभ्य. अश्विभ्या. विश्वेभ्योदेवेभ्य. मरुद्ध्य. विश्वेभ्योदेवेभ्य. उषासानक्ताभ्या. विश्वेभ्योदेवेभ्य. २ अग्नय. विश्वेभ्योदेवेभ्य. २ मरुद्ध्य. विश्वेभ्योदेवेभ्य. भूम्याइ. विश्वेभ्योदेवेभ्य. ३ भूम्याइ. विश्वेभ्योदेवेभ्य. ३ सवित्र. इंद्राये. विश्वेभ्योदेवेभ्य. इंद्राये. बृहस्पतय. ३ मरुद्ध्य.] रुद्राये. विश्वेभ्योदेवेभ्य. ५६ [भे. प. विश्वेभ्यो. पर्जन्याये. २ मरुद्ध्य. विश्वेभ्योदेवेभ्य. २ अश्विभ्या. नद्याइ. द्यावापृथिवीभ्या. वायव. सोमाये. इंद्राये. अग्नय. घर्माये. अश्विभ्या. विश्वेभ्योदेवेभ्य. २ सरस्वत्या. बृहस्पतय. अग्नय. ३ विश्वेभ्योदेवेभ्य. अश्विभ्या. इंद्राये. २ अग्नय. सूर्याये. अग्नय. विश्वेभ्योदेवेभ्य. सूर्याये. अग्नय. सूर्याये. २ विश्वेभ्योदेवेभ्य. २ सुतंभराये. अग्नय. २ इंद्रसूर्याभ्यामि. विश्वेभ्योदेवेभ्य. २ इंद्राग्निभ्या. विश्वेभ्योदेवेभ्य. ६ अद्भ्यइ. विश्वे. ६] देवानांपत्नीभ्य. २ ॥ इतिचतुर्थेद्वितीयः ॥

प्रयुंजतीसप्तप्रतिरथंःकदुपंचप्रतिभानुर्जागतंदेवंवःप्रतिभोत्यातृणपाणिर्विश्वंःस्वस्त्यात्रेयःपंक्त्यंतमग्नेपंचोना चतुर्थ्यैद्रवायवींवायव्यैकैंद्रवायव्यौचतस्रोगायत्र्यःषळुष्णिहस्तिस्रोजगत्यस्त्रिष्टुभोवांत्येअनुष्टुभौप्रश्यावाश्व

त्र्यूनां श्यावाश्वो मारुतं हतं तं पंक्तिः षष्ठ्यंत्ये चं को वेद षोळ शं ककुब्बृहत्यनुष्टुप्पुरउष्णिक्ककुप्सतोबृहत्यौ गायत्रीसतो
बृहतीककुभौ गायत्रीसतोबृहत्यौ ककुप्सतोबृहतीं प्रशर्धाय पंचोना जागतं मुपांत्यात्रिष्टुप् प्रयज्यवो दशांत्यात्रिष्टुब
ग्नेनव बार्हतं तं तृतीयासप्तम्यौ सतोबृहत्यावा रुद्रासो ष्टौ द्वित्रिष्टुबंतं तमु प्रवक्त्रिष्टुबंतं मीळे द्विजगत्यंतं माग्नेयं चवाके
ष्टैकोना गायत्रं श्यावाश्वोऽत्रवैदद श्वीं तरंतपुरुमीह्लौ दाभ्र्यैं रथवीतिं मरुतश्चं दानतुष्टः प्रशशंसं वुच्छ्राचतरंतमहिषीं
शशीयसीं पंचम्यनुष्टुम्नवमीसतोबृहत्यृतेनन वश्रुतविन्मैत्रावरुणं वैतत् ॥ ३ ॥ ॥ ॥ ॥

॥ हरिः ॐम् ॥ ॥ ( ५।४।३ ) प्रयुंजतीदिवऽएतिब्रुवाणामहीमातादुहितुर्बोधयंती । आविवासंतीयुवतिर्म
नीषापितृभ्यऽआसदनेजोहुवाना ॥ अजिरासस्तदपऽईयमानाऽआतस्थिवांसोऽअमृतस्यनाभिं । अनंतासऽउरवो
विश्वतःसींपरिद्यावापृथिवीयंतिपंथाः ॥ उक्षासमुद्रोऽअरुषःसुपर्णःपूर्वस्ययोनिंपितुराविवेश । मध्येदिवोनिहितःपृ
श्निरश्माविचक्रमेरजसस्पात्यंतौ ॥ चत्वारऽईंबिभ्रतिक्षेमयंतोदशगर्भंचरसेधापयंते । त्रिधातवःपरमाऽअस्यगावो
दिवश्चरंतिपरिसद्योऽअंतान् ॥ इदंवपुर्निवचनंजनासश्चरंतियन्नद्यस्तस्थुरापः । द्वेयदींबिभृतोमातुरन्येऽइहेहजाते



( ५।४।३ ) प्रयुंजतीतिसप्तर्चस्यसूक्तस्यात्रेयःप्रतिरथोविश्वेदेवास्त्रिष्टुप् । ( भेदपक्षे—उषाः १ सूर्यरश्मयः १ सूर्यः ३ विश्वेदेवाः १
मित्रावरुणाग्नयः १ एवं ७ ) ।

यम्याऽ३ सबंधू ॥ वितन्वतेधियोऽअस्माऽअपाँसिवस्त्रापुत्रायमातरोवयंति । उपप्रक्षेवृषणोमोदमानादिवस्पथावध्वो
यंत्यच्छं ॥ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तं । अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय
॥ १ ॥ ( ५।४।४ ) कदुप्रियायधाम्नेमनामहेस्वक्षत्रायस्वयशसेमहेवयं । आमेन्यस्यरजसोयदभ्रऽआँऽअपोवृणा
नावितनोतिमायिनी ॥ ताऽअत्नतवयुनंवीरवक्षणंसमान्यावृतयाविश्वमारजः । अपोऽअपाचीरपराऽअपेजतेप्रपूर्वा
भिस्तिरतेदेवयुर्जनः ॥ आग्रावभिरहन्येभिरक्तुभिर्वरिष्ठंवज्रमाजिघर्तिमायिनि । शतंवायस्यप्रचरन्त्स्वेदमेसंवर्तय
तोविचवर्तयन्नहा ॥ तामस्यरीतिंपरशोरिवप्रत्यनीकमख्यंभुजेऽअस्यवर्पसः । सचायदिपितुमंतमिवक्षयंरत्नंदधाति
भरहूतयेविशे+ ॥ सजिह्वयाचतुरनीकऽऋंजतेचारुवसानोवरुणोयतन्नरिं । नतस्यविद्मपुरुषत्वतावयंयतोभगःसवि
तादातिवार्यं ॥ २ ॥ ( ५।४।५ ) देवंवोऽअद्यसवितारमेषेभगंचरत्नंविभजंतमायोः । आवानरापुरुभुजाववृत्यांदि
वेदिवेचिदश्विनासखीयन्+ ॥ प्रतिप्रयाणमसुरस्यविद्वान्त्सूक्तैर्देवंसवितारंदुवस्य । उपब्रुवीतनमसाविजानञ्ज्येष्ठंच
रत्नंविभजंतमायोः+ ॥ अदत्रयादयतेवार्याणिपूषाभगोऽअदितिर्वस्तऽउस्रः । इंद्रोविष्णुर्वरुणोमित्रोऽअग्निरहानिभ

---

(५।४।४) कदुप्रियायेतिपंचर्चस्यसूक्तस्यात्रेयःप्रतिभानुर्विश्वेदेवाजगती ( भेदपक्षे—विद्युतोग्निः १ उषाः १ इंद्रसूर्यौ १ अग्निः २ एवं ५ )।
(५।४।५) देवंवइतिपंचर्चस्यसूक्तस्यात्रेयःप्रतिप्रभुर्विश्वेदेवास्त्रिष्टुप्अंत्यातृणपाणिः (भेदपक्षे—विश्वेदेवाः १ सूर्यः १ विश्वेदेवाः ३ एवं ५)।

द्राजनयंतदस्माः+ ॥ तन्नोऽअनर्वासविितावरूथंतत्सिंधवऽइषयंतोऽअनुग्मन् । उपयद्बोचेऽअध्वरस्यहोतारायःस्या मपतयोवाजरत्नाः ॥ प्रयेवसुभ्यऽईवदानमोदुर्येमित्रेवरुणेसूक्तवाचः । अवैत्वभ्वंकृणुतावरीयोदिवस्पृथिव्योरवसा मदेम ॥ ३ ॥ परिशिष्टं ॥ सूक्तांतेतृणान्यन्नावरण्येवोदकेपिवा ॥ यस्तृणैरध्ययनंतदधीतंस्तृणानिभवतेभव ॥ वा पीकूपतडागानांसमुद्रंगच्छस्वाहा ॥ ॥ ( ५।४।६ ) विश्वोदेवस्यनेतुर्मर्तोवुरीतसख्यं । विश्वोरायऽइषुध्यतिद्यु म्नंवृणीतपुष्यसे ॥ तेतेदेवनेतर्येचेमाँऽअनुशसे । तेरायातेह्या३पृचेसचेमहिसचथ्यैः* ॥ अतोनऽआनृनतिथीनतःप त्नीर्दशस्यत । आरेविश्वंपथेष्ठांद्विषोयुयोतुयूयुविः ॥ यत्रवह्निरभिहितोदुद्रवद्द्रोण्यःपशुः । नृमणावीरपस्त्योर्णाधीरे वसनिता ॥ एषतेदेवनेतारथस्पतिःशंरयिः । शंरायेशंस्वस्तयऽइषःस्तुतोमनामहेदेवस्तुतोमनामहे ॥ ४ ॥ ( ५।४।७ ) अग्नेसुतस्यपीतयेविश्वरूमेभिरागहि । देवेभिर्हव्यदातये ॥ ऋतधीतयऽआगतसत्यधर्माणोऽअध्वरं । अग्नेःपिवतजि

---

(५।४।६) विश्वोदेवस्येतिपंचर्चस्यसूक्तस्यस्वस्त्यात्रेयोविश्वेदेवाअनुष्टुप्अंत्यापंक्तिः। ( भेदपक्षे—सविता २ विश्वेदेवाः १ सविता २ एवं ५ ) ( ५।४।७ ) अग्नेसुतस्येतिपंचदशर्चस्यसूक्तस्यस्वस्त्यात्रेयोविश्वेदेवाश्चतुर्थीषष्ठीसप्तमीनामिंद्रवायूपंचम्यावायुःआद्याश्चतस्रो गायत्र्यःपंचम्यादिषलुष्णिहःएकादश्यादितिस्रोजगत्यः (त्रिष्टुभोवा) अंत्येद्वेअनुष्टुभौ। (भेदपक्षे—अग्निः २ विश्वेदेवाः १ इंद्रवायू १ वायुः १ इंद्रवायू २ अग्निः ३ विश्वेदेवाः ५ एवं १५ )

ह्वया ॥ विप्रेभिर्विप्रसंत्यप्रातर्यावभिरागहि । देवेभिःसोमपीतये ॥ अयंसोमश्चमूसुतोऽमत्रेपरिषिच्यते । प्रियऽइं द्रायवायवे ॥ वायवायाहिवीतयेजुषाणोहव्यदातये । पिबासुतस्यांधसोऽअभिप्रयः ॥ ५ ॥ इंद्रश्चवायवेषांसुतानां पीतिमर्हथः । तान्जुषेथामरेपसावभिप्रयः ॥ सुताऽइंद्रायवायवेसोमासोदध्याशिरः । निम्नंनयंतिसिंधवोभिप्रयः ॥ सजूर्विश्वेभिर्देवेभिरश्विभ्यामुषसासजूः । आयाह्यग्नेऽअत्रिवत्सुतेरण ॥ सजूर्मित्रावरुणाभ्यांसजूःसोमेनविष्णुना । आयाह्यग्नेऽअत्रिवत्सुतेरण ॥ सजूरादित्यैर्वसुभिःसजूरिंद्रेणवायुना । आयाह्यग्नेऽअत्रिवत्सुतेरण ॥ ६ ॥ स्वस्ति नोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः । स्वस्तिपूषाऽअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना ॥ स्वस्त येवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः । बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयऽआदित्यासोभवंतुनः ॥ विश्वेदेवा नोऽअद्यास्वस्तयेवैश्वानरोवसुरग्निःस्वस्तये । देवाऽअवंत्वृभवःस्वस्तयेस्वस्तिनोरुद्रःपात्वंहसः ॥ स्वस्तिमित्रावरुणा स्वस्तिपथ्येरेवति । स्वस्तिनऽइंद्रश्चाग्निश्चस्वस्तिनोऽअदितेकृधि ॥ स्वस्तिपंथामनुचरेमसूर्याचंद्रमसाविव । पुनर्ददता घ्नताजानतासंगमेमहि ॥ ७ ॥ ( परिशिष्टं ॥ ॥ स्वस्त्ययनंताक्ष्यमरिष्टनेमिंमहद्भूतंवायसंदेवतानां । असुरघ्नमिं द्रसखंसमत्सुबृहद्यशोनावमिवारुहेम ॥ अंहोमुचमांगिरसंगयंचस्वस्त्यात्रेयंमनसाचताक्ष्यं । प्रयतपाणिःशरणंप्रपद्ये

स्वस्तिसंबाधेष्वभयंनोऽअस्तु ॥ ) ( ५।४।८ ) प्रश्यावाश्वधृष्णुयार्चामरुद्भिर्ऋक्वभिः । येऽअद्रोघमनुष्वधंश्रवोम
दंतियज्ञियाः ॥ तेहिस्थिरस्यशवसःसखायःसंतिधृष्णुया । तेयामन्नाधृषद्विनस्त्मनापांतिशश्वतः ॥ तेस्पंद्रासोनोक्ष
णोतिष्कंदंतिशर्वरीः । मरुतामधामहोदिविक्षमार्चमन्महे ॥ मरुत्सुवोदधीमहिस्तोमंयज्ञंचधृष्णुया । विश्वेयेमानुषा
युगापांतिमर्त्यंरिषः ॥ अर्हंतोयेसुदानवोनरोऽअसामिशवसः । प्रयज्ञंयज्ञियेभ्योदिवोऽअर्चामरुद्भ्यः ॥ ८ ॥ आरु
क्मैरायुधानरऽऋष्वाऽऋष्टीरसृक्षत । अन्वेनाँऽअहविद्युतोमरुतोजज्झतीरिवभानुरर्तत्मनादिवः ॥ येवावृधंत
पार्थिवायऽउरावंतरिक्षऽआ । वृजनेवानदीनांसधस्थेवामहोदिवः ॥ शर्धोमारुतमुच्छंससत्यशवसमृभ्वसं । उतस्म
तेशुभेनरःप्रस्पंद्रायुजतत्मना ॥ उतस्मतेपरुष्ण्यामूर्णावसतशुंध्यवः । उतपव्यारथानामद्रिंभिंदंत्योजसा ॥ आपथ
योविपथयोंतस्पथाऽअनुपथाः । एतेभिर्मह्यंनामभिर्यज्ञंविष्टारऽओहते ॥ ९ ॥ अधानरोन्योहतेधानियुतऽओहते ।
अधापारावताऽइतिचित्रारूपाणिदश्र्या ॥ छंदःस्तुभःकुभंन्यवऽउत्समाकीरिणोनृतुः । तेमेकेचिन्नतायवऽऊमाऽआ
सन्दृशित्विषे ॥ यऽऋष्वाऽऋष्टिविद्युतःकवयःसंतिवेधसः । तमृषेमारुतंगणंनमस्यारमयागिरा ॥ अच्छऽऋषे
मारुतंगणंदानामित्रंनयोषणा । दिवोवाधृष्णवऽओजसास्तुताधीभिरिषण्यत ॥ नूमन्वानऽएषांदेवाँऽअच्छानवक्ष



( ५।४।८ ) प्रश्यावाश्वेतिसप्तदशर्चस्यसूक्तस्यात्रेयःश्यावाश्वोमरुतोनुष्टुपषष्ठीषोडशीसप्तदश्यःपंक्तयः ।

णां । दानासंचेतसूरिभिर्यामश्रुतेभिरंजिभिः ॥ प्रयेमेबंध्वेषेगांवोचंतसूरयः पृश्निंवोचंतमातरं । अधापितरमिष्मिणं रुद्रंवोचंतशिक्वसः ॥ सप्तमेसप्तशाकिनऽएकमेकाशतादंदुः । यमुनायामधिश्रुतमुद्राधोगव्यंमृजेनिराधोऽअश्व्यंमृजे ॥ १० ॥ ( ५।४।९ ) कोवेदजानमेषांकोवापुरासुम्नेष्वासमरुतां । यद्युयुज्रेकिलास्यः* ॥ ऐतान्रथेषुतस्थुषःकःशुश्रावकथायंयुः । कस्मैसस्रुःसुदासेऽअन्वापयऽइळाभिर्वृष्टयःसह+ ॥ तेमऽआहुर्यऽआययुरुपद्युभिर्विभिर्मदे । नरोमर्याऽअरेपसऽइमान्पश्यन्नितिष्टुहि ॥ येऽअंजिषुयेवाशीषुस्वभानवःस्रक्षुरुक्मेषुखादिषु । श्रायारथेषुधन्वसु ॥ युष्माकंस्मारथाँऽअनुमुदेदधेमरुतोजीरदानवः । वृष्टीद्यावोयतीरिव ॥ ११ ॥ आयंनरःसुदानवोददाशुषेदिवःकोशमचुच्यवुः । विपर्जन्यंसृजंतिरोदसीऽअनुधन्वनायंतिवृष्टयः ॥ ततृदानाःसिंधवःक्षोदसारजःप्रसस्रुर्धेनवोयथा । स्यंनाऽअश्वाऽइवाध्वनोविमोचनेवियद्वर्तंतऽएन्यः* ॥ आयातमरुतोदिवऽआंतरिक्षादमादुत । मावस्थातपरावतः ॥ मावोरसानितभाकुभाक्रुमुर्मावःसिंधुर्निरीरमत् । मावःपरिष्ठात्सरयुःपुरीषिण्यस्मेऽइत्सुम्नमस्तुवः ॥ तंवःशर्धंरथानांत्वेषंगणंमारुतंनव्यसीनां । अनुप्रयंतिवृष्टयः ॥ १२ ॥ शर्धंशर्धंवऽएषांव्रातंव्रातंगणंगणंसुशस्तिभिः । अनुक्रामे

---

( ५।४।९ ) कोवेदेतिषोळशर्चस्यसूक्तस्यात्रेयःश्यावाश्वोमरुतः क्रमेणककुप्बृहत्यनुष्टुप्पुरउष्णिक्ककुप्सतोबृहतीसतोबृहतीगायत्रीसतोबृहतीकंकुप्ककुबूगायत्रीसतोबृहतीसतोबृहतीककुप्सतोबृहत्यः ।

सं. ३२

मधीतिभिः ॥ कस्माऽअद्यसुजातायरातहव्यायप्रययुः । एनायामेनमरुतः ॥ येनतोकायतनयायधान्यं१बीजंवह
ध्वेऽअक्षितं । अस्मभ्यंतद्धत्तनयद्वऽईमहेराधोविश्वायुसौभगं ॥ अतीयामनिदस्तिरःस्वस्तिभिर्हित्वावद्यमरातीः ।
वृष्ट्वीशंयोरापऽउस्रिभेषजंस्याममरुतःसह+ ॥ सुदेवःसमहासतिसुवीरोनरोमरुतःसमर्त्यः । यंत्रायध्वेस्यामते+ ॥
स्तुहिभोजान्स्तुवतोऽअस्ययामनिरणन्गावोनयवसे । यतःपूर्वाँऽइवसखीँऽरनुह्वयगिरागृणीहिकामिनः ॥ १३ ॥
( ५।४।१० ) प्रशर्धायमारुतायस्वभानवऽइमांवाचमनजापर्वतच्युते । घर्मस्तुभेदिवऽआपृष्ठयज्वनेद्युम्नश्रवसेमहिनृ
म्णमर्चत ॥ प्रवोमरुतस्तविषाऽउदन्यवोवयोवृधोऽअश्वयुजःपरिज्रयः । संविद्युतादधतिवाशतित्रितःस्वरंत्यापोव
नापरिज्रयः ॥ विद्युन्महसोनरोऽअश्मदिद्यवोवातत्विषोमरुतःपर्वतच्युतः । अब्दयाचिन्मुहुराह्रादुनीवृतःस्तनयंद
मारभसाऽउदोजसः ॥ व्यं१क्तून्रुद्राव्यहानिशिक्वसोव्यं१तरिक्षंविरजांसिधूतयः । वियदज्राँऽअजथनावऽईंयथावि
दुर्गाणिमरुतोनाहरिष्यथ ॥ तद्वीर्यंवोमरुतोमहित्वनंदीर्घंततानसूर्योनयोजनं । एतानयामेऽअगृभीतशोचिषोनश्व
दांयन्न्ययातनागिरिं+ ॥ १४ ॥ अभ्राजिशर्धोमरुतोयदर्णसंमोषथावृक्षंकपनेववेधसः । अधस्मानोऽअरमतिंसजोष
सश्चक्षुरिवयंतमनुनेषथासुगं+ ॥ नसजीयतेमरुतोनहन्यतेनस्रेधतिनव्यथतेनरिष्यति । नास्यरायऽउपदस्यंतिनोत

( ५।४।१० ) प्रशर्धायेतिपंचदशर्चस्यसूक्तस्यात्रेयःश्यावाश्वोमरुतोजगतीचतुर्दशीत्रिष्टुप् ।

ऽऋषिंवायंराजानंवासुषूदथ ॥ नियुत्वंतोग्रामजितोयथानरोर्यमणोनमरुतःकवंधिनः । पिन्वंत्युत्संयदिनासोऽअ
स्वरन्व्युंदंतिपृथिवींमध्वोऽअंधसा ॥ प्रवत्वंतीयंपृथिवीमरुद्भ्यःप्रवत्वंतीद्यौर्भवतिप्रयद्भ्यः । प्रवत्वंतीःपथ्याऽअंतरि
क्ष्याःप्रवत्वंतःपर्वताजीरदानवः ॥ यन्मरुतःसभरसःस्वर्णरःसूर्यऽउदितेमदथादिवोनरः । नवोश्वाःश्रथयंताहसिस्र
तःसद्योऽअस्याध्वनःपारमश्नुथ ॥ १५ ॥ अंसेषुवऽऋष्टयःपत्सुखादयोवक्षःसुरुक्मामरुतोरथेशुभः । अग्निभ्राजसो
विद्युतोगभस्त्योःशिप्राःशीर्षसुवितताहिरण्ययीः ॥ तंनाकमर्योऽअगृभीतशोचिषंरुशत्पिप्पलंमरुतोविधूनुथः । समं
च्यंतवृजनातित्विषंतयत्स्वरंतिघोषंविततमृतायवः ॥ युष्मादत्तस्यमरुतोविचेतसोरायःस्यामरथ्यो३वयस्वतः । नयो
युच्छतितिष्यो३यथादिवो३स्मेरारंतमरुतःसहस्रिणं ॥ यूयंरयिंमरुतःस्पार्हवीरंयूयमृषिमवथसामविप्रं । यूयमर्वंतंभ
रतायवाजंयूयंधत्थराजानंश्रुष्टिमंतं ॥ तद्वोयामिद्रविणंसद्यऽऊतयोयेनास्व१र्णततनामनॄँरभि । इदंसुमेमरुतोहर्यता
वचोयस्यतरेमतरसाशतंहिमाः ॥ १६ ॥ ( ५।४।११ ) प्रयंज्यवोमरुतोभ्राजदृष्टयोबृहद्वयोदधिरेरुक्मवक्षसः । ई
यंतेऽअश्वैःसुयमेभिराशुभिःशुभंयातामनुरथाऽअवृत्सत ॥ स्वयंदधिध्वेतविषींयथाविदबृहन्महांतऽउर्वियाविराज
थ । उतांतरिक्षंममिरेव्योजसाशुभं० ॥ साकंजाताःसुभ्वःसाकमुक्षिताःश्रियेचिदाप्रतरंवावृधुर्नरः । विरोकिणःसूर्य

( ५।४।११ ) प्रयज्यवइतिदशर्चस्यसूक्तस्यात्रेयःश्यावाश्वोमरुतोजगत्यंत्यात्रिष्टुप् ।

स्येवरश्मयःशुभं० ॥ आभूषेण्यंवोमरुतोमहित्वनंदिदृक्षेण्यंसूर्यस्येवचक्षणं । उतोऽअस्माँऽअमृतत्वेदधातनशुभं० ॥ उदीरयथामरुतःसमुद्रतोयूयंवृष्टिंवर्षयथापुरीषिणः । नवोदस्राऽउपदस्यंतिधेनवःशुभं० ॥ १७ ॥ यदश्वान्धूर्षुपृषतीरयुग्ध्वंहिरण्ययान्प्रत्यत्काँऽअमुग्ध्वं । विश्वाऽइत्स्पृधोमरुतोव्यस्यथशुभं० ॥ नपर्वतानन्द्योवरंतवोयत्राचिध्वंमरुतोगच्छथेदुतत् । उतद्यावापृथिवीयाथनापरिशुभं० ॥ यत्पूर्व्यंमरुतोयच्चनूतनंयदुद्यतेवसवोयच्चशस्यते । विश्वस्यतस्यभवथानवेदसःशुभं० ॥ मृळतनोमरुतोमावधिष्टनास्मभ्यंशर्मबहुलंवियंतन । अधिस्तोत्रस्यसख्यस्यगातनशुभं० ॥ यूयमस्मान्नयतवस्योऽअच्छानिरंहतिभ्योमरुतोगृणानाः । जुषध्वंनोहव्यदातिंयजत्रावयंस्यामपतयोरयीणां+ ॥ १८ ॥ ( ५।४।१२ ) अग्नेशर्धंतमागणंपिष्टंरुक्मेभिरंजिभिः । विशोऽअद्यमरुतामवह्वयेदिवश्चिद्रोचनादधि ॥ यथाचिन्मन्यसेहृदातदिन्मेजग्मुराशसः । येतेनेदिष्ठंहवनान्यागमन्तान्वर्धभीमसंदृशः ॥ मीळ्हुष्मतीवपृथिवीपराहतामदंत्येत्यस्मदा । ऋक्षोनवोमरुतःशिमीवाँऽअमोदुध्रोगौरिवभीमयुः+ ॥ नियेरिणंत्योजसावृथागावोनदुर्धुरः । अश्मानंचित्स्वर्यंपर्वतंगिरिंप्रच्यावयंतियामभिः ॥ उत्तिष्ठनूनमेषांस्तोमैःसमुक्षितानां । मरुतांपुरुतममपूर्व्यंगवांसर्गमिवह्वये ॥ १९ ॥ युङ्ध्वंह्यरुषीरथेयुङ्ध्वंरथेषुरोहितः । युङ्ध्वंहरीऽअजिराधुरिवोळ्हवेवहिष्ठाधुरिवोळ्हवे ॥ उत



( ५।४।१२ ) अग्नेशर्धंतमितिनवर्चस्यसूक्तस्यात्रेयःश्यावाश्वोमरुतोबृहतीतृतीयासप्तम्यौसतोबृहत्यौ ।

स्यवाज्यंरुषस्तुंविष्वर्णिरिहस्संधायिदर्शतः । मावोयामेषुमरुतश्चिरंकरत्प्रतंरथेषुचोदत ॥ रथंनुमारुतंवयंश्रवस्युमा हुवामहे । आयस्मिन्तस्थौसुरणानिविभ्रतीसचामरुत्सुरोदसी ॥ तंवःशर्धंरथेशुभंत्वेषंपनस्युमाहुवे । यस्मिन्त्सुजा तासुभगामहीयतेसचामरुत्सुमीळ्हुषी ॥ २० ॥ ( ५।५।१ ) आरुद्रासइंद्रवंतःसजोषसोहिरण्यरथाःसुवितायगं तन । इयंवोअस्मत्प्रतिहर्यतेमतिस्तृष्णजेनदिवउत्साउदन्यवे ॥ वाशीमंतऋष्टिमंतोमनीषिणःसुधन्वानइषुमं तोनिषंगिणः । स्वश्वास्थसुरथाःपृश्निमातरःस्वायुधामरुतोयाथनाशुभं ॥ धूनुथद्यांपर्वतान्दाशुषेवसुनिवोवनाजिहते यामनोभिया । कोपयथपृथिवींपृश्निमातरःशुभेयदुग्राःपृषतीरयुग्ध्वं ॥ वातत्विषोमरुतोवर्षनिर्णिजोयमाइवसुस दृशःसुपेशसः । पिशंगाश्वाअरुणाश्वाअरेपसःप्रत्वक्षसोमहिनाद्यौरिवोरवः ॥ पुरुद्रप्साअंजिमंतःसुदानवस्त्वेष संदृशोअनवभ्रराधसः । सुजातासोजनुषारुक्मवक्षसोदिवोअर्काअमृतंनामभेजिरे ॥ २१ ॥ ऋष्टयोवोमरुतो अंसयोरधिसहओजोबाह्वोर्वोबलंहितं । नृम्णाशीर्षस्वायुधारथेषुवोविश्वावःश्रीरधितनूषुपिपिशे ॥ गोमदश्वावद्रथ वत्सुवीरंचंद्रवद्राधोमरुतोददानः । प्रशस्तिंनःकृणुतरुद्रियासोभक्षीयवोवसोदैव्यस्य ॥ हयेनरोमरुतोमृळतानस्तुवी

---

( ५।५।१ ) आरुद्रासइत्यष्टर्चस्यसूक्तस्यात्रेयःश्यावाश्वोमरुतोजगत्यंत्येद्वेत्रिष्टुभौ ।

मघासोऽअमृताऽऋतज्ञाः । सत्यंश्रुतःकवयोयुवानोबृहद्गिरयोबृहदुक्षमाणाः ॥ २२ ॥ ( ५।५।२ ) तमुनूनंतविषी मंतमेषांस्तुषेगणंमारुतंनव्यसीनां । यऽआश्वश्वाऽअमवद्वहंतऽउतेशिरेऽअमृतस्यस्वराजः ॥ त्वेषंगणंतवसंखादिहस्तंधुनिव्रतंमायिनंदातिवारं । मयोभुवोयेऽअमितामहित्वावंदस्वविप्रतुविराधसोनॄन्+ ॥ आवोयंतूदवाहासोऽअद्य वृष्टिंयेविश्वेमरुतोजुनंति । अयंयोऽअग्निर्मरुतःसमिद्धऽएतंजुषध्वंकवयोयुवानः ॥ यूयंराजानमिर्यंजनायविभ्वतष्टं जनयथायजत्राः । युष्मदेतिमुष्टिहावाहुजूतोयुष्मत्सदश्वोमरुतःसुवीरः ॥ अराऽइवेदचरमाऽअहेवप्रप्रजायंतेऽअकवामहोभिः । पृश्नेःपुत्राऽउपमासोरभिष्ठाःस्वयामत्यामरुतःसंमिमिक्षुः ॥ यत्प्रायासिष्टपृषतीभिरश्वैर्वीळुपविभिर्मरुतोरथेभिः । क्षोदंतऽआपोरिणतेवनान्यवोस्रियोवृषभःक्रंदतुद्यौः+ ॥ प्रथिष्टयामन्पृथिवीचिदेषांभर्तेवगर्भंस्वमिच्छवोधुः । वातान्ह्यश्वान्धुर्यायुयुज्रेवर्षंस्वेदंचक्रिरेरुद्रियासः ॥ हयेनरो० ॥२३॥ (५।५।३) प्रवःस्पळक्रन्त्सुवितायदावनेर्चादिवेप्रपृथिव्याऽऋतंभरे । उक्षंतेऽअश्वान्तरुषंतऽआरजोनुस्वंभानुंश्रथयंतेऽअर्णवैः+ ॥ अमादेषांभियसाभूमिरेजतिनौर्नपूर्णाक्षरतिव्यथिर्यती । दूरेदृशोयेचितयंतऽएमभिरंतर्महेविदथेयेतिरेनरः ॥ गवामिवश्रियसेशृंगमुत्तमंसूर्योन चक्षूरजसोविसर्जने । अत्याऽइवसुभ्वश्चारवस्थनमर्याऽइवश्रियसेचेतथानरः ॥ कोवोमहांतिमहतामुदश्नवत्कस्का



(५।५।२) तमुनूनमित्यष्टर्चस्यसूक्तस्यात्रेयःश्यावाश्वोमरुतस्त्रिष्टुप् । (५।५।३)प्रवःस्पळित्यष्टर्चस्यसूक्तस्यात्रेयःश्यावाश्वोमरुतोजगत्यंत्या

व्यांमरुतःकोहपौंस्यां । यूयंहभूमिंकिरणंनरेंजथप्रयच्छ्रर्ध्वेसुवितायंदावने ॥ अश्वांऽइवेदरुषासःसबंधवःशूरांऽइवप्रयु
धःप्रोतयुंयुधुः । मर्यांऽइवसुवृधोंवावृधुर्नरःसूर्यस्यचक्षुःप्रमिनंतिवृष्टिभिः ॥ तेऽअंज्येष्ठाऽअकंनिष्ठासऽउद्भिदोमध्य
मासोमहसाविवावृधुः । सुजातासोंजनुषापृश्निमातरोदिवोमर्यांऽआनोऽअच्छाजिगातन ॥ वयोनयेश्रेणींःपप्तुरोजसां
तान्दिवोबृहतःसानुनस्परि । अश्वांसऽएषामुभयेयथाविदुःप्रपर्वतस्यनभनूँरचुच्यवुः ॥ मिमातुद्यौरदितिर्वीतयेनःसं
दानुचित्राऽउषसोयतंतां । आचुंच्यवुर्दिव्यंकोशमेतऽऋषेरुद्रस्यमरुतोगृणानाः+ ॥२४॥ ( ५।५।४ ) ईळेऽअग्निंस्ववं
संनमोभिरिहप्रसत्तोविचंयत्कृतंनः । रथैरिवप्रभरेवाजयद्भिःप्रदक्षिणिन्मरुतांस्तोमंमृध्यां ॥ आयेतस्थुःपृषंतीषुश्रुता
सुंसुखेषुरुद्रामरुतोरथेषु । वनांचिदुग्राजिहतेनिवोंभियापृथिवीचिद्रेजतेपर्वतश्चित् ॥ पर्वतश्चिन्महिवृद्धोबिभायदि
वश्चित्सानुरेजतस्वनेवः । यत्क्रीळंथमरुतऽऋष्टिमंतऽआपऽइवसध्र्यंचोधवध्वे ॥ वराऽइवेद्रैवतासोहिरंण्यैरभि
स्वधाभिस्तन्वंःपिपिश्रे । श्रियेश्रेयांसस्तवसोरथेषुसत्रामहांसिचक्रिरेतनूषु ॥ अज्येष्ठासोऽअकंनिष्ठासऽएतेसंभ्रा
तंरोवावृधुःसौभगाय । युवांपितास्वपारुद्रऽएषांसुदुघापृश्निःसुदिनांमरुद्भ्यः ॥ यदुत्तमेमरुतोमध्यमेवायद्वांवमेसुभ
गासोदिविष्ठ । अतोंनोरुद्राऽउतवान्वं१स्याग्नेवित्ताद्धविषोयद्यजांम ॥ अग्निश्चयन्मरुतोविश्ववेदसोदिवोवहध्वऽउत्त

त्रिष्टुप् । ( ५।५।४ ) ईळेअग्निमित्यष्टर्चस्यसूक्तस्यात्रेयःश्यावाश्वोमरुतस्त्रिष्टुबंत्येद्वेजगत्यौ । ( आग्नेयंचवेत्यनुक्रमण्युक्तेरग्नामरुतोवा ) ।

रादधिष्णुभिः । तेमंदसानाधुनयोरिशादसोवामंधत्तयजमानायसुन्वते+ ॥ अग्नेमरुद्भिःशुभयद्भिर्ऋक्वभिःसोमंपिब मंदसानोगणश्रिभिः । पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानरप्रदिवाकेतुनासजूः+ ॥ २५ ॥ ( ५।५।५ ) केष्ठानरः श्रेष्ठतमायऽएकंऽएकऽआयय । परमस्याःपरावतः ॥ क्वशवोश्वाःक्वाभीशवःकथंशेककथायय । पृष्ठेसदोनसोर्यमः ॥ जघनेचोदऽएषांविसक्थानिनरोयमुः । पुत्रकृथेनजनयः ॥ परावीरासऽएतनमर्यासोभद्रजानयः । अग्नितपोयथासथ ॥ सनत्साश्व्यंपशुमुतगव्यंशतावयं । श्यावाश्वस्तुताययादोर्वीरायोपवर्बृहत् ॥ २६ ॥ उतत्वास्त्रीशशीयसीपुंसोभवतिवस्यसी । अदेवत्रादराधसः ॥ वियाजानातिजसुरिंवितृष्यंतंविकामिनं । देवत्राकृणुतेमनः ॥ उतघानेमोऽअस्तुतःपुमाँऽइतिब्रुवेपणिः । सवैरदेयऽइत्समः+ ॥ उतमेरपद्युवतिर्ममंदुषीप्रतिश्यावायवर्तनिं । विरोहितापुरुमीह्ळायरयेमतुर्विप्रायदीर्घयशसे ॥ योमेधेनूनांशतंवैददश्विर्यथाददत् । तरंतऽइवमंहना ॥ २७ ॥ यऽईवहंतऽआशुभिःपिबंतोमदिरंमधु । अत्रश्रवांसिदधिरे ॥ येषांश्रियाधिरोदसीविभ्राजंतेरथेष्वा । दिविरुक्मऽइवोपरि ॥

( ५।५।५ ) केष्टानरइत्येकोनविंशत्यृचस्यसूक्तस्यश्यावाश्वः आद्यानांचतसृणांयईवहंतइत्यादिषण्णांचमरुतःपंचम्यादिचतसृणांतरंतमहिषीशशीयसी उतमेरपदित्यस्याःपुरुमीह्ळोयोमेधेनूनामित्यस्यास्तरंतःएतंमेस्तोममित्यादितिसृणांरथवीतिर्गायत्रीपंचम्यनुष्टुप्नवमीसतोबृहती । ( अत्रत्यौपुरुमीह्ळतरंतौवैददश्वी रथवीतिर्दार्भ्यः ) ।

युवासमारुतोगणस्त्वेषरथोऽअनेद्यः । शुभंयावाप्रतिष्कुतः ॥ कोवेंदनूनमेषांयत्रामदंति धूतयः । ऋतजाताऽअरेप सः ॥ यूयंमर्तंविपन्यवःप्रणेतारऽइत्थाधिया । श्रोतारोयामहूतिषु ॥ २८ ॥ तेनोवसूनिकाम्यांपुरुश्चंद्रारिशादसः । आयंज्ञियासोववृत्तन ॥ एतंमेस्तोममूर्म्येदाभ्र्यायपरावह । गिरोदेविरथीरिव ॥ उतमेवोचतादितिसुतसोमेरथवी तौ । नकामोऽअपवेतिमे ॥ एषक्षेतिरथवीतिर्मघवागोमतीरनु । पर्वतेष्वपश्रितः ॥ २९ ॥ ( ५।५।६ ) ऋतेनऽऋ तमपिहितंध्रुवंवांसूर्यस्ययत्रविमुचंत्यश्वान् । दशशतासहतस्थुस्तदेकंदेवानांश्रेष्ठंवपुषामपश्यं ॥ तत्सुवांमित्रावरु णामहित्वमीर्मातस्थुषीरहभिर्दुदुह्रे । विश्वाःपिन्वथःस्वसरस्यधेनाऽअनुवामेकःपविरावंवर्त ॥ अधारयतंपृथि वीमुतद्यांमित्रराजानावरुणामहोभिः । वर्धयतमोषधीःपिन्वतंगाऽअववृष्टिंसृजतंजीरदानू ॥ आवामश्वासःसुयु जोवहंतुयतरश्मयऽउपयंत्वर्वाक् । घृतस्यनिर्णिगनुवर्ततेवामुपसिंधवःप्रदिविक्षरंति ॥ अनुश्रुताममतिंवर्धदुर्वी बर्हिरिवयजुषारक्षमाणा । नमस्वंताधृतदक्षाधिगर्तेमित्रासाथेवरुणेळास्वंतः+ ॥ ३० ॥ अक्रविहस्तासुकृतेपरस्पायं त्रासाथेवरुणेळास्वंतः । राजानाक्षत्रमहृणीयमानासहस्रस्थूणंबिभृथःसहद्वौ+ ॥ हिरण्यनिर्णिगयोऽअस्यस्थूणावि भ्राजतेदिव्यश्वाजनीव । भद्रेक्षेत्रेनिमितातिल्विलेवासनेममध्वोऽअधिगर्त्यस्य ॥ हिरण्यरूपमुषसोव्युष्टावयःस्थू

( ५।५।६ ) ऋतेनऋतमितिनवर्चस्यसूक्तस्यात्रेयःश्रुतविन्मित्रवारुणौत्रिष्टुप् ।

णमुदिंतासूर्यस्य । आरोहथोवरुणमित्रगर्तमतश्चक्षाथेऽअदितिंदितिंच ॥ यद्बंहिष्ठंनातिविधेसुदानूऽअच्छिद्रंशर्मभुवनस्यगोपा । तेननोमित्रावरुणावविष्टंसिषासंतोजिगीवांसःस्याम ॥ ३१ ॥ इतिचतुर्थाष्टकेतृतीयोऽध्यायः ॥ ३ ॥

सप्तविंशाध्यायेवर्गाः ३१ सूक्तानि १६ ऋचः १६१ ॥ त्यागः ॥ विश्वेभ्योदेवेभ्य. २५ [ भे. प. उषसइ. सूर्यरश्मिभ्य. सूर्याये.३ विश्वेभ्योदेवेभ्य. मित्रावरुणाभ्यामग्नय. विद्युतेग्नय. उषस. इंद्रसूर्याभ्या. अग्नय.२ विश्वेभ्यो. सूर्याये. विश्वेभ्योदेवेभ्य.३ सवित्र.२ विश्वेभ्योदेवे. सवित्र.२ अग्नय.२ विश्वेभ्योदेवेभ्य. ] इंद्रवायुभ्या. वायव. इंद्रवायुभ्या.२ विश्वेभ्योदेवेभ्य.८ मरुद्भ्य.९१ अग्नामरुद्भ्य.८ मरुद्भ्य.४ तरंतमहिष्याशसीयस्याइ.४ पुरुमीह्लाये. तरंताये. मरुद्भ्य.६ रथवीतय.३ मित्रावरुणाभ्या.९ ॥ इतिचतुर्थेतृतीयः ॥

ऋतस्यसप्तार्चनानाजागतंवरुणंपंक्त्यंतंतुयश्चिकेतषड्रातहव्यंआचिकितानानुष्टुभंतुवळित्थापंचयजतःप्रवोगा यत्रंत्रीरोचनाचतुष्कमुरुचक्रिःपुरूरुणागायत्रंत्वांनस्तृचंबाहुवृक्तआमित्रऔष्णिहंयदद्यदशपौरआश्विनंतदानुष्टुभंतुकूष्ठःप्रतिनवावस्युःपांक्तमाभातिपंचात्रिःप्रातर्यावाणाश्विनौनवसप्तवध्रिरुयुष्णिगादिचतुर्थीत्रिष्टुप्पंचानुष्टुभौंत्याःपंचगर्भस्रावित्र्यउपनिषन्महेदशसत्यश्रवाउषस्यंतुपांक्तंद्युतद्यामानंषड्ज्युंजतेपंचश्यावाश्वःसावित्रंतुजागतंतत्सवितुर्नवगायत्रमाद्यानुष्टुवच्छदशात्रिःपार्जन्यमुपाद्यास्तिस्रोजगत्यउपांत्यानुष्टुंब्बळित्थातृचंपार्थिवमानुष्टुभंप्रसम्राजेष्टौवारुणमिंद्राग्नीषळैंद्राग्नमानुष्टुभंविराट्पूर्वांतंप्रवोनवैवयामरुन्मारुतमतिजागतंबार्हस्पत्योभरद्वाजःषष्ठंमंडलमपश्यत्त्वंह्यग्नेसप्तोना ॥ १ ॥ ॥ ॥ ॥

॥ हरिः ओम् ॥ ( ५।५।७ ) ऋतस्यगोपावधितिष्ठथोरथंसत्यधर्माणापरमेव्योमनि । यमत्रमित्रावरुणावथोयुवं तस्मैवृष्टिर्मधुमत्पिन्वतेदिवः ॥ सम्राजावस्यभुवनस्यराजथोमित्रावरुणाविदथेस्वर्दृशा । वृष्टिंवांराधोऽअमृतत्व मीमहेद्यावापृथिवीविचरंतितन्यवः ॥ सम्राजाऽउग्रावृषभादिवस्पतीपृथिव्यामित्रावरुणाविचर्षणी । चित्रेभिरभ्रैरुप तिष्ठथोरवंद्यांवर्षयथोऽअसुरस्यमायया ॥ मायावांमित्रावरुणादिविश्रितासूर्योज्योतिश्चरतिचित्रमायुधं । तमभ्रेण वृष्ट्यागूहथोदिविपर्जन्यद्रप्सामधुमंतऽईरते ॥ रथंयुंजतेमरुतःशुभेसुखंशूरोनमित्रावरुणागविष्टिषु । रजांसिचित्रा विचरंतितन्यवोदिवःसम्राजापयसानऽउक्षतं ॥ वाचंसुमित्रावरुणाविरावतींपर्जन्यश्चित्रांवदतित्विषीमतीं । अभ्रा वसतमरुतःसुमाययाद्यांवर्षयतमरुणामरेपसं ॥ धर्मणामित्रावरुणाविपश्चितात्रतारक्षेथेऽअसुरस्यमायया । ऋतेन विश्वंभुवनंविराजथःसूर्यमाधत्थोदिविचित्र्यंरथं ॥ १ ॥ ( ५।५।८ ) वरुणंवोरिशादसमृचामित्रंहवामहे । परिव्र जेववाह्वोर्जगन्वांसास्वर्णरं ॥ ताबाहवासुचेतुनाप्रयंतमस्माऽअर्चते । शेवंहिजार्यंवांविश्वासुक्षासुजोगुवे ॥ यन्नूनम श्यांगतिंमित्रस्ययायांपथा । अस्यप्रियस्यशर्मण्यहिंसानस्यसश्चिरे ॥ युवाभ्यांमित्रावरुणोपमंधेयामृचा । यद्धक्षये

---

( ५।५।७ ) ऋतस्यगोपावितिसप्तर्चस्यसूक्तस्यात्रेयोर्चनानामित्रावरुणौजगती । ( ५।५।८ ) वरुणंवइतिसप्तर्चस्यसूक्तस्यार्चनाना मित्रावरुणावनुष्टुबंत्यापंक्तिः ।

मघोनांस्तोतृणांचस्पूर्धसे ॥ आनोमित्रसुदीतिभिर्वरुणश्चसधस्थऽआ । स्वेक्षयेमघोनांसखीनांचवृधसे ॥ युवंनोयेषुव रुणक्षत्रंबृहच्चबिभृथः । उरुणोवाजसातयेकृतंरायेऽस्वस्तये ॥ उच्छंत्यांमेयजतादेवक्षत्रेरुशद्गवि । सुतंसोमंनहस्ति भिरापड्भिर्धावतंनराबिभ्रतावर्चनानसं ॥ २ ॥ (५।५।९) यश्चिकेतससुक्रतुर्देवत्रासब्रवीतुनः । वरुणोयस्यदर्शतोमित्रो वावनंतेगिरः ॥ ताहिश्रेष्ठवर्चसाराजानादीर्घश्रुत्तमा । तासत्पतीऽऋतावृधऽऋतावानाजनेजने ॥ तावामियानोवसेपू र्वाऽउपब्रुवेसचा । स्वश्वासःसुचेतुनावाजाँऽअभिप्रदावने ॥ मित्रोऽअंहोश्चिदादुरुक्षयायगातुंवनते । मित्रस्यहिप्रतूर्व तःसुमतिरस्तिविधतः[+] ॥ वयंमित्रस्यावसिस्यामसप्रथस्तमे । अनेहसस्त्वोतयःसत्रावरुणशेषसः ॥ युवंमित्रेमंजनंयत थःसंचनयथः । मामघोनःपरिख्यतंमोऽअस्माकमृषीणांगोपीथेनऽउरुष्यतं ॥ ३ ॥ ( ५।५।१० ) आचिकितानसु क्रतूदेवौमर्तरिशादसा । वरुणायऽऋतपेशसेदधीतप्रयसेमहे[+] ॥ ताहिक्षत्रमविह्रुतंसम्यगसुर्य१माशाते । अधव्रतेव मानुषंस्व१र्णधायिदर्शतं[+] ॥ तावामेषेरथानामुर्वींगव्यूतिमेषां । रातहव्यस्यसुष्टुतिंदधृक्स्तोमैर्मनामहे ॥ अधाहि काव्यायुवंदक्षस्यपूर्भिरद्भुता । निकेतुनाजनानांचिकेथेपूतदक्षसा ॥ तदृतंपृथिविबृहच्छ्रवऽएषऽऋषीणां । श्रयसा



---

( ५।५।९ ) यश्चिकेतेतिषड्चस्यसूक्तस्यात्रेयोरातहव्योमित्रावरुणावनुष्टुवंत्यापंक्तिः । ( ५।५।१० ) आचिकितानेतिषड्चस्य सूक्तस्यात्रेयोरातहव्योमित्रावरुणावनुष्टुप् ।

नावरंपृथ्वतिक्षरंतियामंभिः ॥ आयद्वांमीयचक्षसामित्रवयंचसूरयः । व्यचिष्ठेवहुपाय्येयतेमहिस्वराज्ये ॥ ४ ॥ ( ५।५।११ ) वळित्थादेवनिष्कृतमादित्यायजतंबृहत् । वरुणमित्रार्यमन्वर्षिष्ठंक्षत्रमाशाथे ॥ आयद्योनिंहिरण्ययं वरुणमित्रसदंथः । धर्तारांचर्षणीनांयंतंसुम्नंरिशादसा ॥ विश्वेहिविश्ववेदसोवरुणोमित्रोऽअर्यमा । व्रतापदेवसश्चि रेपांतिमर्त्यंरिषः+ ॥ तेहिसत्याऽऋतस्पृशऽऋतावानोजनेजने । सुनीथासःसुदानवोंहोश्चिदुरुचक्रयः ॥ कोनुवांमि त्रास्तुतोवरुणोवातनूनां । तत्सुवामेषतेमतिरत्रिभ्यऽएषतेमतिः+ ॥ ५ ॥ ( ५।५।१२ ) प्रवोमित्रायगायतवरुणा यविपागिरा । महिक्षत्रावृतंबृहत्+ ॥ सम्राजायाघृतयोनीमित्रश्चोभावरुणश्च । देवादेवेषुप्रशस्ता+ ॥ तानःशक्तंपा र्थिवस्यमहोरायोदिव्यस्य । महिवांक्षत्रंदेवेषु ॥ ऋतमृतेनसपंतेषिरंदक्षमाशाते । अद्रुहादेवौवर्धेते ॥ वृष्टिद्यावारीत्या पेषस्पतीदानुमत्याः । बृहंतंगर्तमाशाते ॥ ६ ॥ (५।५।१३) त्रीरोचनावरुणत्रीँऽरुतद्यून्त्रीणिमित्रधारयथोरजांसि । वा वृधानावमतिंक्षत्रियस्यानुव्रतंरक्षमाणावजुर्यं+ ॥ इरावतीर्वरुणधेनवोवांमधुमद्वांसिंधवोमित्रदुह्रे । त्रयस्तस्थुर्वृष भासस्तिसृणांधिषणानांरेतोधाविद्युमंतः ॥ प्रातर्देवीमदितिंजोहवीमिमध्यंदिनऽउदितासूर्यस्य । रायेमित्रावरुणा

---

( ५।५।११ ) वळित्थादेवेतिपंचर्चस्यसूक्तस्यात्रेयोयजतोमित्रावरुणावनुष्टुप् । ( ५।५।१२ ) प्रवोमित्रायेतिपंचर्चस्यसूक्तस्यात्रेयो यजवोमित्रावरुणौगायत्री । ( ५।५।१३ ) त्रीरोचनेतिचतुर्ऋचस्यसूक्तस्यात्रेयउरुचक्रिर्मित्रावरुणौत्रिष्टुप् ।

सर्वतातेळेतोकायतनयायशंयोः ॥ याधर्तारारजसोरोचनस्योतादित्यादिव्यापार्थिवस्य । नवांदेवाऽअमृताऽआमिनंतिव्रतानिमित्रावरुणाध्रुवाणि ॥ ७ ॥ ( ५।५।१४ ) पुरूरुणाचिद्ध्यस्त्यवोनूनंवांवरुण । मित्रवंसिवांसुमतिं ॥ तावांसम्यगद्रुह्वाणेषमश्यामधायसे । वयंतेरुद्रास्याम ॥ पातंनोरुद्रापायुभिरुतत्रायेथांसुत्रात्रा । तुर्यामदस्यूंन्तनूभिः ॥ माकस्याद्भुतक्रतूयक्षंभुजेमातनूभिः । माशेषसामातनसा ॥ ८ ॥ ( ५।५।१५ ) आनोगंतंरिशादसावरुणमित्रबर्हणा । उपेमंचारुमध्वरं ॥ विश्वस्यहिप्रचेतसावरुणमित्रराजथः । ईशानापिप्यतंधियः ॥ उपनःसुतमागतंवरुणमित्रदाशुषः । अस्यसोमस्यपीतये ॥ ९ ॥ ( ५।५।१६ ) आमित्रेवरुणेवयंगीर्भिर्जुहुमोऽअत्रिवत् । निबर्हिषिसदतंसोमपीतये ॥ व्रतेनस्थोध्रुवक्षेमाधर्मणायातयज्जना । निबर्हिषि० ॥ मित्रश्चनोवरुणश्चजुषेतांयज्ञमिष्टये । निबर्हिषिसदतांसोम० ॥१०॥ ( ५।६।१ ) यदद्यस्थःपरावतियदर्वावत्यश्विना । यद्वापुरूपुरुभुजायदंतरिक्षऽआगतं ॥ इहत्यापुरुभूतमापुरूदंसांसिबिभ्रता । वरस्यायाम्यध्रिगूहुवेतुविष्टमाभुजे ॥ ईर्मान्यद्वपुषेवपुश्चक्रंरथस्ययेमथुः । पर्य

---

( ५।५।१४ ) पुरूरुणेतिचतुर्ऋचस्यसूक्तस्यात्रेयउरुचक्रिर्मित्रावरुणौगायत्री । ( ५।५।१५ ) आनोगंतमितितृचस्यसूक्तस्यात्रेयोबाहुवृक्तोमित्रावरुणौगायत्री । (५।५।१६) आमित्रइतितृचस्यसूक्तस्यात्रेयोबाहुवृक्तोमित्रावरुणावुष्णिक् । (५।६।१) यदद्यस्थइतिदशर्चस्यसूक्तस्यात्रेयःपौरोश्विनावनुष्टुप् ।

न्यानाहुंषायुगामहारजाँसिदीयथः ॥ तद्रूषुवामेनाकृतंविश्वायद्वामनुष्टवे । नानाजातावरेपसासमस्मेवंधुमेयंथुः ॥ आयद्वांसूर्यारथंतिष्ठद्रघुष्यदंसदा । परिवामरुषावयोघृणावरंतऽआतपः ॥ ११ ॥ युवोरत्रिश्चिकेततिनरांसुम्नेनचेतसा । घर्मंयद्वामरेपसंनासत्यास्नाभुरण्यति ॥ उग्रोवांककुहोययिःशृण्वेयामेषुसंतनिः । यद्वांदंसोभिरश्विनात्रिर्नरावर्वर्तति ॥ मध्वऽऊषुमधूयुवारुद्रासिषक्तिपिप्युषी । यत्समुद्रातिपर्षथःपक्काःपृक्षोभरंतवां ॥ सत्यमिद्वाऽउँऽअश्विनायुवामाहुर्मयोभुवा । तायामन्यासुहूतमायामन्नामृळयत्तमा ॥ इमाब्रह्माणिवर्धनाश्विभ्यांसंतुशंतमा । यातक्षामरथाँऽइवावोचामबृहन्नमः ॥ १२ ॥ ( ५।६।२ ) कुष्ठोदेवावश्विनाद्याद्दिवोमनावसू । तच्छ्रवथोवृषणवसूऽअत्रिर्वामाविवासति ॥ कुहत्याकुहनुश्रुतादिविदेवानासत्या । कस्मिन्नायतथोजनेकोवांनदीनांसचा ॥ कंयाथःकंहगच्छथःकमच्छायुंजाथेरथं । कस्यब्रह्माणिरण्यथोवयंवामुश्मसीष्टये ॥ पौरंचिद्युदप्रुतंपौरपौरायजिन्वथः । यदींगृभीततातयेसिंहमिवद्रुहस्पदे ॥ प्रच्यवानाज्जुजुरुषोवव्रिमत्कंनमुंचथः । युवायदीकृथःपुनराकाममृण्वेवध्वः ॥ १३ ॥ अस्तिहिवामिहस्तोतास्मसिवांसंदृशिश्रिये । नूश्रुतंमऽआगतमवोभिर्वाजिनीवसू ॥ कोवामद्यपुरूणामावव्नेमर्त्यानां । कोविप्रोविप्रवाहसाकोयज्ञैर्वाजिनीवसू ॥ आवांरथोरथानांयेष्ठोयात्वश्विना । पुरूचिदस्मयुस्तिरऽआँगूषोमर्त्येष्वा ॥

---

( ५।६।२ ) कुष्ठोदेवावितिदशर्चस्यसूक्तस्यात्रेयःपौरोऽश्विनावनुष्टुप् ।

शमूषुवांमधूयुवास्माकमस्तुचर्कृतिः । अर्वाचीनाविचेतसाविभिःश्येनेवदीयतं ॥ अश्विनायद्धकर्हिचिच्छुश्रूयातमिमंहवं । वस्वीरूषुवांभुजःपृंचंतिसुवांपृचः ॥ १४ ॥ ( ५।६।३ ) प्रतिप्रियतमंरथंवृषणंवसुवाहनं । स्तोतावामश्विनावृषिःस्तोमेनप्रतिभूषतिमाध्वीममश्रुतंहवं ॥ अत्यायातमश्विनातिरोविश्वाऽअहंसना । दस्राहिरण्यवर्तनीसुषुम्नासिंधुवाहसामाध्वी० ॥ आनोरत्नानिबिभ्रतावश्विनागच्छतंयुवं । रुद्राहिरण्यवर्तनीजुषाणावाजिनीवसूमाध्वी० ॥ सुष्टुभोवांवृषण्वसूरथेवाणीच्याहिता । उतवांककुहोमृगःपृक्षःकृणोतिवापुषोमाध्वी० ॥ बोधिन्मनसारथ्येषिराहवनश्रुता । विभिश्च्यवानमश्विनानियाथोऽअद्वयाविनंमाध्वी० ॥ १५ ॥ आवांनरामनोयुजोश्वासःप्रुषितप्सवः । वयोवहंतुपीतयेसहसुम्नेभिरश्विनामाध्वी० ॥ अश्विनावेहगच्छतंनासत्यामाविवेनतं । तिरश्चिदर्ययापरिवर्तिर्यातमदाभ्यामाध्वी० ॥ अस्मिन्यज्ञेऽअदाभ्याजरितारंशुभस्पती । अवस्युमश्विनायुवंगृणंतमुपभूषथोमाध्वी० ॥ अभूदुषारुशत्पशुराग्निरधाय्यृत्वियः । अयोजिवांवृषण्वसूरथोदस्रावमर्त्योमाध्वी० ॥ १६ ॥ ( ५।६।४ ) आभात्यग्निरुषसामनीकमुद्विप्राणांदेवयावाचोऽअस्थुः । अर्वाचानूनंरथ्येहयातंपीपिवांसमश्विनाघर्ममच्छ ॥ नसंस्कृतंप्रमिमीतोगमिष्ठांतिनूनमश्विनोपस्तुतेह । दिवाभिपित्वेवसागमिष्ठाप्रत्यवर्तिंदाशुषेशंभविष्ठा ॥ उतायातंसंगवेप्रातरह्नोमध्यं



(५।६।३)प्रतिप्रियतममतिनवर्चस्यसूक्तस्यात्रेयोवस्युरश्विनौपंक्तिः।(५।६।४)आभात्यग्निरितिपंचर्चस्यसूक्तस्यभौमोत्रिरश्विनौत्रिष्टुप्।

दिनऽउदितासूर्यस्य । दिवानक्तमवसाशंतमेननेदानींपीतिरश्विनातंतान ॥ इदंहिवांप्रदिविस्थानमोकऽइमेगृहाऽअश्विनेदंदुरोणं । आनोदिवोबृहतःपर्वतादाद्भ्योयातमिषमूर्जंवहंता ॥ समश्विनोरवसानूतनेनमयोभुवासुप्रणीतीगमेम । आनोरयिंवहतमोतवीरानाविश्वान्यमृतासौभगानि ॥ १७ ॥ ( ५।६।५ ) प्रातर्यावाणाप्रथमायजध्वंपुरागृध्रादररुषःपिबातः । प्रातर्हियज्ञमश्विनादधातेप्रशंसंतिकवयःपूर्वभाजः ॥ प्रातर्यजध्वमश्विनाहिनोतनसायमस्तिदेवयाऽअजुष्टं । उतान्योऽअस्मद्यजतेविचावःपूर्वःपूर्वोयजमानोवनीयान् ॥ हिरण्यत्वङ्मधुवर्णोघृतस्नुःपृक्षोवहन्नारथोवर्ततेवां । मनोजवाऽअश्विनावातरंहायेनातियाथोदुरितानिविश्वा ॥ योभूयिष्ठंनासत्याभ्यांविवेषचनिष्ठंपित्वोररतेविभागे । सतोकमस्यपीपरच्छमीभिरनूर्ध्वभासःसदमित्तुतुर्यात् ॥ समश्विनो० ॥ १८ ॥ ( ५।६।६ ) अश्विनावेहगच्छतंनासत्यामाविवेनतं । हंसाविवपततमासुतॉऽउप ॥ अश्विनाहरिणाविवगौराविवानुयवसं । हंसाविव० ॥ अश्विनावाजिनीवसूजुषेथांयज्ञमिष्टये । हंसाविव० ॥ अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेवयोषा । श्येनस्यचिज्जवसानूतनेनागच्छतमश्विनाशंतमेन ॥ १९ ॥ विजिहीष्ववनस्पतेयोनिःसूष्यंत्याऽइव । श्रुतंमेऽअश्विनाहवंस

---

( ५।६।५ ) प्रातर्यावाणेतिपंचर्चस्यसूक्तस्यभौमोत्रिरश्विनौत्रिष्टुप् । ( ५।६।६ ) अश्विनावितिनवर्चस्यसूक्तस्यात्रेयःसप्तवध्रिरश्विनावनुष्टुप्आद्यास्तिस्रउष्णिहश्चतुर्थीत्रिष्टुप ( पंचम्यादिपंचगर्भस्राविण्यउपनिषदः ) ।

सर्वांध्रिंचमुंचतं ॥ भीतायनाधमानायऽऋषंयेसप्तवंध्रये । मायाभिरश्विनायुवंवृक्षंसंचविचांचथः ॥ यथावार्तःपुष्करिणींसमिंगयंतिसर्वतः । एवातेगर्भंऽएजतुनिरैतुदशंमास्यः । यथावातोयथावनंयथांसमुद्रऽएजति । एवात्वंदंशमास्य सहावेहिजरायुणा ॥ दशमासांञ्छशयानःकुमारोऽअधिंमातरिं । निरैतुजीवोऽअक्षतोजीवोजीवंत्याऽअधिं ॥ २० ॥ (५।६।७) महेनोऽअद्यबोधयोषोरायेदिवित्मती । यथांचिन्नोऽअबोधयःसत्यश्रवसिवाय्येसुजातेऽअश्वसूनृते ॥ यासुनीथेशौचद्रथेव्यौच्छोदुहितर्दिवः । साव्युंच्छसहीयसिसत्य० ॥ सानोऽअद्याभरद्वसुर्व्युच्छादुहितर्दिवः । योव्यौच्छःसहीयसिसत्य० ॥ अभियेत्वांविभावरिस्तोमैर्गृणंतिवह्नयः । मघैर्मघोनिसुश्रियोदामन्वंतःसुरातयःसुजाते० ॥ यच्चिद्धितेगणाऽइमेछदयंतिमघत्तये । परिंचिद्वष्टयोदधुर्ददतोराधोऽअह्र्यंसुजाते० ॥ २१ ॥ ऐषुधावीरवद्यशऽउषोमघोनिसूरिषु । येनोराधांस्यह्र्यामघवानोऽअरासतसुजा० ॥ तेभ्योद्युम्नंबृहद्यशऽउषोमघोन्यावह । येनोराधांस्यश्व्यांगव्याभजंतसूरयःसुजा० ॥ उतनोगोमतीरिषऽआवहादुहितर्दिवः । साकंसूर्यस्यरश्मिभिःशुक्रैःशोचद्भिरर्चिभिःसुजा० ॥ व्युच्छादुहितर्दिवोमाचिरंतनुथाऽअपः । नेत्त्वांस्तेनंयथारिपुंतपातिसूरोऽअर्चिषासुजा० ॥ एतावद्वेदुषस्त्वंभूयोंवादातुमर्हसि । यास्तोतृभ्योविभावर्युच्छंतीनप्रमीयसेसुजा० ॥ २२ ॥ (५।६।८) द्युतद्यामानंबृहतीमृतेनऽऋतावरीमरुणप्सुं



(५।६।७) महेनइतिदशर्चस्यसूक्तस्यात्रेयःसत्यश्रवाउषाःपंक्तिः । (५।६।८) द्युतद्यामानमितिषड्चस्यसूक्तस्यात्रेयःसत्यश्रवाउषास्त्रिष्टुप् ।

विभातीं । देवीमुषसंस्वरावहंतींप्रतिविप्रासोमतिभिर्जरंते ॥ एषाजनंदर्शताबोधयंतीसुगान्पथःकृण्वतीयात्यग्रे । बृहद्रथाबृहतीविश्वमिन्वोषाज्योतिर्यच्छत्यग्रेऽअह्नां ॥ एषागोभिररुणेभिर्युजानास्रेधंतीरयिमप्रायुचक्रे । पथोरदंतीसुविताय‌देवीपुरुष्टुताविश्ववाराविभाति ॥ एषाव्येनीभवतिद्विबर्हाऽआविष्कृण्वानातन्वंपुरस्तात् । ऋतस्यपंथामन्वेतिसाधुप्रजानतीवनदिशोमिनाति ॥ एषाशुभ्रानतन्वोविदानोर्ध्वेवस्नातीदृशयेनोऽअस्थात् । अपद्वेषोबाधमानातमांस्युषादिवोदुहिताज्योतिषागात् ॥ एषाप्रतीचीदुहितादिवोनॄन्योषेवभद्रानिरिणीतेऽअप्सः । व्यूर्ण्वतीदाशुषेवार्याणिपुनर्ज्योतिर्युवतिःपूर्वथाकः ॥२३॥ (५।६।९) युंजतेमनऽउतयुंजतेधियोविप्राविप्रस्यबृहतोविपश्चितः । विहोत्रादधेवयुनाविदेकऽइन्महीदेवस्यसवितुःपरिष्टुतिः ॥ विश्वारूपाणिप्रतिमुंचतेकविःप्रासावीद्भद्रंद्विपदेचतुष्पदे । विनाकमख्यत्सवितावरेण्योनुप्रयाणमुषसोविराजति ॥ यस्यप्रयाणमन्वन्यऽइद्ययुर्देवादेवस्यमहिमानमोजसा । यःपार्थिवानिविममेसऽएतशोरजांसिदेवःसवितामहित्वना ॥ उतयासिसवितस्त्रीणिरोचनोतसूर्यस्यरश्मिभिःसमुच्यसि । उतरात्रीमुभयतःपरीयसऽउतमित्रोभवसिदेवधर्मभिः ॥ उतेशिषेप्रसवस्यत्वमेकऽइदुतपूषाभवसिदेवयामभिः । उतेदंविश्वंभुवनंविराजसिश्यावाश्वस्तेसवितःस्तोममानशे ॥ २४ ॥ ( ५।६।१० ) तत्सवितुर्वृणीमहेवयंदेवस्यभोजनं । श्रे

(५।६।९) युंजतेमनइतिपंचर्चस्यसूक्तस्यात्रेयःश्यावाश्वःसविताजगती । (५।६।१०) तत्सवितुरितिनवर्चस्यसूक्तस्यात्रेयःश्यावाश्वः

ॐसर्वधातमंतुरंभगस्यधीमहि ॥ अस्यहिस्वयंशस्तरंसवितुःकच्चनप्रियं । नमिनंतिस्वराज्यं ॥ सहिरत्नानिदाशुषेसुवा तिसविताभगः । तंभागंचित्रमीमहे ॥ अद्यानोदेवसवितःप्रजावत्सावीःसौभगं । परादुःष्वप्न्यंसुव ॥ विश्वानिदेव सवितर्दुरितानिपरासुव । यद्भद्रंतन्नऽआसुव ॥ २५ ॥ अनागसोऽअदितयेदेवस्यसवितुःसवे । विश्वावामानिधीम हि ॥ आविश्वदेवंसत्पतिंसूक्तैरद्यावृणीमहे । सत्यसवंसवितारं ॥ यऽइमेऽउभेऽअहनीपुरऽएत्यप्रयुच्छन् । स्वाधी र्देवःसविता ॥ यऽइमाविश्वाजातान्याश्रावयतिश्लोकेन । प्रचसुवातिसविता ॥ २६ ॥ (५।६।११) अच्छा वदतवसंगीर्भिराभिःस्तुहिपर्जन्यंनमसाविवास । कनिक्रदद्वृषभोजीरदानूरेतोदधात्योषधीषुगर्भं ॥ विवृक्षान्हंत्युतहं तिरक्षसोविश्वंबिभायभुवनंमहावधात् । उतानागाऽईषतेवृष्ण्यावतोयत्पर्जन्यःस्तनयन्हंतिदुष्कृतः ॥ रथीवकशया श्वाँऽअभिक्षिपन्नाविर्दूतान्कृणुतेवर्ष्याँ३ अह । दूरात्सिंहस्यस्तनथाऽउदीरतेयत्पर्जन्यःकृणुतेवर्ष्यं१नभः ॥ प्रवाता वांतिपतयंतिविद्युतऽउदोषधीर्जिहतेपिन्वतेस्वः । इराविश्वस्मैभुवनायजायतेयत्पर्जन्यःपृथिवींरेतसावति ॥ यस्यव्र तेपृथिवीनन्नमीतियस्यव्रतेशफवज्जर्भुरीति । यस्यव्रतऽओषधीर्विश्वरूपाःसनःपर्जन्यमहिशर्मयच्छ ॥ २७ ॥ दिवो नोवृष्टिंमरुतोररीध्वंप्रपिन्वतवृष्णोऽअश्वस्यधाराः । अर्वाङेतेनस्तनयित्नुनेह्यपोनिषिंचन्नसुरःपितानः ॥ अभिक्रंद



सवितागायत्रीआद्यानुष्टुप् । (५।६।११) अच्छावदेतिदशर्चस्य... पर्जन्य... द्वितीयादितिस्रोजगत्योनवम्यनुष्टुप् ।

स्तनयगर्भमाधाऽउदन्वतापरिदीयारथेन । दृतिंसुकर्षविषितंन्यंचंसमाभवंतूद्वतौनिपादाः+ ॥ महांतंकोशमुदचानि
षिंचस्यंदंतांकुल्याविषिताःपुरस्तात् । घृतेनद्यावापृथिवीव्युंधिसुप्रपाणंभवत्वघ्न्याभ्यः ॥ यत्पर्जन्यकनिक्रदत्स्तनय
न्हंसिदुष्कृतः । प्रतीदंविश्वंमोदतेयत्किंचपृथिव्यामधि ॥ अवर्षीर्वर्षमुदुषूगृभायाकर्धन्वान्यत्येतवाऽउ । अजीजन
ऽओषधीर्भोजनायकमुतप्रजाभ्योविदोमनीषां+ ॥ २८ ॥ ( ५।६।१२ ) बळित्थापर्वतानांखिद्रंबिभर्षिपृथिवि ।
प्रयाभूमिंप्रवत्वतिमह्नाजिनोषिमहिनि ॥ स्तोमासस्त्वाविचारिणिप्रतिष्टोभंत्यक्तुभिः । प्रयावाजंनहेषंतंपेरुमस्यस्यर्जु
नि ॥ दृह्वाचिद्यावनस्पतीन्क्ष्मयादर्धर्ष्योजसा । यत्तेऽअभ्रस्यविद्युतोदिवोवर्षंतिवृष्टयः ॥ २९ ॥ ॥ ( परिशिष्टं ॥
वर्षंतुतेविभावरिदिवोऽअभ्रस्यविद्युतः । रोहंतुसर्वबीजान्यवंब्रह्मद्विषोंजहि ॥ ) ( ५।६।१३ ) प्रसम्राजेबृहदर्चा
गभीरंब्रह्मप्रियंवरुणायश्रुताय । वियोजघानशमितेवचर्मोपस्तिरेपृथिवींसूर्याय ॥ वनेषुव्यं१तरिक्षंततानवाजमर्वत्सु
पयऽउस्रियासु । हृत्सुक्रतुंवरुणोऽअप्स्वं१ग्निंदिविसूर्यमदधात्सोममद्रौ ॥ नीचीनबारंवरुणःकवंधंप्रससर्जरोदसीऽ
अंतरिक्षं । तेनविश्वस्यभुवनस्यराजायवंनवृष्टिर्व्युनत्तिभूम ॥ उनत्तिभूमिंपृथिवीमुतद्यांयदादुग्धंवरुणोवष्ट्यादित् ।
समभ्रेणवसतपर्वतासस्तविषीयंतःश्रथयंतवीराः ॥ इमामूष्वासुरस्यश्रुतस्यमहींमायांवरुणस्यप्रवोचं । मानेनेवतस्थि

---

( ५।६।१२ ) बळित्थेतितृचस्यसूक्तस्यभौमोत्रिःपृथिव्यनुष्टुप् । ( ५।६।१३ ) प्रसम्राजइत्यष्टर्चस्यसूक्तस्यभौमोत्रिर्वरुणस्त्रिष्टुप् ।

ऋक्सं. अ.४अ.४ ॥ २९ ॥

मंडलं ५ अनु. ६

वाँऽअंतरिक्षेवियोममेपृथिवींसूर्येण ॥ ३० ॥ इमामूनुकवितमस्यमायांमहींदेवस्यनकिरादधर्ष । एकंयदुद्नानपृणंत्येनीरासिंचंतीरवनयःसमुद्रं ॥ अर्यम्यंवरुणमित्र्यंवासखायंवासदमिद्भ्रातरंवा । वेशंवानित्यंवरुणारणंवायत्सीमागश्चकृमाशिश्रथस्तत् ॥ कितवासोयद्रिरिपुर्नदीवियद्वाघासत्यमुतयन्नविद्म । सर्वाताविष्यशिथिरेवदेवाधातेस्यामवरुणप्रियासः ॥ ३१ ॥ ( ५।६।१४ ) इंद्राग्नीयमवथऽउभावाजेषुमर्त्यं । दृह्लाचित्सप्रभेदतिद्युम्नावाणीरिवत्रितः ॥ यापृतनासुदुष्टरायावाजेषुश्रवाय्या । यापंचचर्षणीरभींद्राग्नीताहवामहे ॥ तयोरिदमवच्छवस्तिग्मादिद्युन्मघोनोः । प्रतिद्रुणागभस्त्योर्गवांवृत्रघ्नऽएषते ॥ तावामेषेरथानामिंद्राग्नीहवामहे । पतींतुरस्यराधसोविद्वांसागिर्वणस्तमा ॥ तावृधंतावनुद्यून्मर्तायदेवावदभा । अर्हंताचित्पुरोदधेंशेवदेवावर्वते ॥ एवेंद्राग्निभ्यामहाविहव्यंशूष्यंघृतंनपूतमद्रिभिः । तासूरिषुश्रवोबृहद्रयिंगृणत्सुदिधृतमिषंगृणत्सुदिधृतं ॥ ३२ ॥ ( ५।६।१५ ) प्रवोमहेमतयोयंतुविष्णवेमरुत्वतेगिरिजाऽएवयामरुत् । प्रशर्धायप्रयज्यवेसुखादयेतवसेभंददिष्टयेधुनिव्रतायशवसे ॥ प्रयेजातामहिनायेचनुस्वयंप्रविद्मनाब्रुवतऽएवयामरुत् । क्रत्वातद्वोमरुतोनाधृषेशवोदानामह्नातदेषामधृष्टासोनाद्रयः ॥ प्रयेदिवोबृह

॥ २९ ॥

( ५।६।१४ ) इंद्राग्नीयमितिषडृचस्यसूक्तस्यभौमोत्रिरिंद्राग्न्यनुष्टुप् अंत्याविराट्पूर्वापंक्त्युत्तरावा । ( ५।६।१५ ) प्रवोमहइतिनवर्चस्यसूक्तस्यात्रेयएवयामरुन्मरुतोतिजगती ।

तःशृण्विरेगिरासुशुक्वानःसुभ्वंऽएवयामरुत् । नयेषामिरीसधस्थऽईष्टऽआँऽअग्नयोनस्वविद्युतःप्रस्पंद्रासोधुनीनां ॥
सचक्रमेमहतोनिरुरुक्रमःसमानस्मात्सदसऽएवयामरुत् । यदायुक्तत्मनास्वादधिष्णुभिर्विष्पर्धसोविमहसोजिगाति
शेवृधोनृभिः ॥ स्वनोनवोमवान्रेजयद्वृषात्वेषोययिस्तविषऽएवयामरुत् । येनासहंतऽऋंजतस्वरोचिषःस्थारश्मानोहिर
ण्ययांस्वायुधासऽइष्मिणः ॥ २३ ॥ अपारोवोमहिमावृद्धशवसस्त्वेषंशवोवत्वेवयामरुत् । स्थातारोहिप्रसितौ
संदृशिस्थनतेनऽउरुष्यतानिदःशुशुक्वांसोनाग्नयः ॥ तेरुद्रासःसुमखाऽअग्नयोयथातुविद्युम्नाऽअवंत्वेवयामरुत् । दी
र्घंपृथुपप्रथेसद्मपार्थिवंयेषामज्मेष्वामहःशर्धांस्यद्भुतैनसां ॥ अद्वेषोनोमरुतोगातुमेतनश्रोताहवंजरितुरेवयामरुत् ।
विष्णोर्महःसमन्यवोयुयोतनस्मद्रथ्योऽनदंसनापद्वेषांसिसनुतः+ ॥ गंतानोयज्ञंयज्ञियाःसुशमिश्रोताहवमरक्षऽएव
यामरुत् । ज्येष्ठासोनपर्वतासोव्योमनियूयंतस्यप्रचेतसःस्यातदुर्धर्तवोनिदः+ ॥३४॥ (इत्यात्रेयंपंचमंमंडलंसमाप्तम् ॥
अत्रसूक्तानि ८७) ॥ ५ ॥ ( ॥ परिशिष्टं ॥ हिरण्यवर्णांहरिणींसुवर्णरजतस्रजां । चंद्रांहिरण्मयींलक्ष्मींजातवे
दोमऽआवह ॥ तांमऽआवहजातवेदोलक्ष्मीमनपगामिनीं । यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहं ॥ अश्वपूर्वांरथमध्यां
हस्तिनादप्रमोदिनीं । श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषतां ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीं ।
पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं ॥ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां । तांपद्मिनीमींशरणमहं

प्रपद्येऽलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ १ ॥ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः । तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्याऽअलक्ष्मीः ॥ उपैतुमांदेवसखःकीर्तिश्चमणिनासह । प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहं । अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ मनसःकाममाकूतिंवाचःसत्यमशीमहि । पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ २ ॥ कर्दमेनप्रजाभूतामयिसंभवकर्दम । श्रियंवासयमेकुलेमातरंपद्ममालिनीं । आपःस्रजंतुस्निग्धानिचिक्लीतवसमेगृहे । निचदेवींमातरंश्रियंवासयमेकुले ॥ आर्द्रांपुष्करिणींपुष्टिंसुवर्णांहेममालिनीं । सूर्यांहिरण्मयींलक्ष्मींजातवेदोमऽआवह ॥ आर्द्रांयःकरिणींयष्टिंपिंगलांपद्ममालिनीं । चंद्रांहिरण्मयींलक्ष्मींजातवेदोमऽआवह ॥ तांमऽआवहजातवेदोलक्ष्मीमनपगामिनीं । यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विंदेयंपुरुषानहं ॥ ३ ॥ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं । सूक्तंपंचदशर्चंचश्रीकामःसततंजपेत् ॥ पद्माननेपद्मऽऊरूपद्माक्षीपद्मसंभवे । तन्मेभजसिपद्माक्षीयेनसौख्यंलभाम्यहं ॥ अश्वदायीगोदायीधनदायीमहाधने । धनंमेजुषतांदेविसर्वकामांश्चदेहिमे ॥ पद्माननेपद्मविपद्मपत्रेपद्मप्रियेपद्मदलायताक्षि । विश्वप्रियेविश्वमनोनुकूलेत्वत्पादपद्मंमयिसंनिधत्स्व ॥ पुत्रपौत्रधनंधान्यंहस्त्यश्वादिगवेरथं । प्रजानांभवसीमाताऽआयुष्मंतंकरोतुमे ॥ धनमग्निर्धनंवायुर्धनंसूर्योधनंवसुः । धनमिंद्रोबृ

हुस्पतिर्वरुणंधनमस्तुते ॥ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा । सोमंधनस्यसोमिनोमह्यंददातुसोमिनः ॥ नक्रोधोन
चमात्सर्यंनलोभोनाशुभामतिः । भवंतिकृतपुण्यानांभक्तानांश्रीसूक्तंजपेत् ॥ सरसिजनिलयेसरोजहस्तेधवलतरां
शुकगंधमाल्यशोभे । भगवतिहरिवल्लभेमनोज्ञेत्रिभुवनभूतिकरिप्रसीदमह्यं ॥ विष्णुपत्नींक्षमांदेवींमाधवींमाधवप्रि
यां । लक्ष्मींप्रियसखींदेवींनमाम्यच्युतवल्लभां ॥ महालक्ष्मीचविद्महेविष्णुपत्नीचधीमहि । तन्नोलक्ष्मीः प्रचोदयात् ॥
श्रीवर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानंमहीयते । धान्यंधनंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ ४ ॥
इतिपरिशिष्टं ॥ ६ ॥ ) ( ६।१।१ ) त्वंह्यग्नेप्रथमोमनोतास्याधियोऽअभवोदस्महोता । त्वंसींवृषन्नकृणोर्दुष्टरीतु
सहोविश्वस्मैसहसेसहध्यै ॥ अधाहोतान्यसीदोयजीयानिळस्पदऽइषयन्नीड्यःसन् । तंत्वानरःप्रथमंदेवयंतोमहोरायै
चितयंतोऽअनुग्मन् ॥ वृतेवयंतंबहुभिर्वसव्यैः३स्त्वेरयिंजागृवांसोऽअनुग्मन् । रुशंतमग्निंदर्शतंबृहंतंवपावंतंविश्वहा
दीदिवांसं ॥ पदंदेवस्यनमसाव्यंतःश्रवस्यवःश्रवऽआपन्नमृक्तं । नामानिचिद्दधिरेयज्ञियानिभद्रायांतेरणयंतसंदृ
ष्टौ ॥ त्वांवर्धंतिक्षितयःपृथिव्यांत्वांरायऽउभयासोजनानां । त्वंत्रातातरणेचेत्योभूःपितामातासदमिन्मानुषाणां
॥ ३५ ॥ सपर्येण्यःसप्रियोविक्ष्व१ग्निर्होतामंद्रोनिषसादायजीयान् । तंत्वावयंदमऽआदीदिवांसमुपज्ञुबाधोनमसा

भारद्वाजेषष्ठेमंडलेषडनुवाकाः । ( ६।१।१ ) त्वंह्यग्नइतित्रयोदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोग्निस्त्रिष्टुप् ।

सदेम ॥ तंत्वांवयंसुध्योऽ३ नव्यमग्नेसुम्नायवऽईमहेदेवयंतः । त्वंविशोऽअनयोदीद्यानोदिवोऽअग्नेबृहतारोचनेन ॥ विशांकविंविश्पतिंशश्वतीनांनितोशनंवृषभंचर्षणीनां । प्रेतीषणिमिषयंतंपावकंराजन्तमग्निंयजतंरयीणां ॥ सोऽअग्नऽईजेशशमेचमर्तोयस्तऽआनट्समिधाहव्यदातिं । यऽआहुतिंपरिवेदानमोभिर्विश्वेत्सवामादधतेत्वोतः ॥ अस्माऽउतेमहिमहेविधेमनमोभिरग्नेसमिधोतहव्यैः । वेदीसूनोसहसोगीर्भिरुक्थैरातेभद्रायांसुमतौयतेम ॥ आयस्ततंथरोदसीविभासाश्रवोभिश्चश्रवस्यस्तरुत्रः । बृहद्भिर्वाजैःस्थविरेभिरस्मेरेवद्भिरग्नेवितरंविभाहि ॥ नृवद्वसोसदमिद्धेह्यस्मेभूरितोकायतनयायपश्वः । पूर्वीरिषोबृहतीरारेऽअघाऽअस्मेभद्रासौश्रवसानिसंतु ॥ पुरूण्यग्नेपुरुधात्वायावसूनिराजन्वसुतातेऽअश्यां । पुरूणिहित्वेपुरुवारसंत्यग्नेवसुविधतेराजनित्वे ॥३६॥ इतिचतुर्थाष्टकेचतुर्थोऽध्यायः ॥४॥

अष्टाविंशाध्याये वर्गाः ३६ सूक्तानि २६ ऋचः १७७ ॥ त्यागः ॥ मित्रावरुणाभ्या.५० अश्विभ्या.४८ उषस.१६ सवित्र.१४ पर्जन्याये.१० पृथिव्या.३ वरुणाये.८ इंद्राग्निभ्यां.६ मरुद्भ्य.९ अग्नय.१३ ॥ इतिचतुर्थेचतुर्थः ॥



त्वंह्येकादशानुष्टुभंशक्वर्यंतमग्नेऽष्टौयथाहोतर्द्वेसप्तंप्रनव्यसामूर्धानंवैश्वानरीयंहिद्विजगत्यंतंपृक्षस्यांत्यात्रिष्टुबंहश्चपुरोवोद्विपदांतंयजस्वषण्मध्येत्वद्धिश्वाग्नायआनुष्टुभंशक्वर्यंतमिममूष्वेकोनावीतहव्यऋषिर्वाजागतंप्रा

ग्दशम्यास्तृतीयापंचदश्यौशक्वर्यौषष्ठ्यतिशक्वर्यनुष्टुंब्बृहत्याउपांत्यैत्वमग्नेष्टाचत्वारिंशद्गायत्रंवर्धमानाद्याषष्ठी चसप्तविंश्यनुष्टुप्त्रिष्टुप्पूर्वेचांत्ये ॥ १ ॥ ॥ ॥ ॥ ॥

॥ हरिः ओम् ॥ ( ६।१।२ ) त्वंहिक्षैतवद्यशोऽग्नेमित्रोनपत्यंसे । त्वंविचर्षणेश्रवोवसोपुष्टिंनपुष्यसि ॥ त्वांहिष्मा चर्षणयोयज्ञेभिर्गीर्भिरीळते । त्वांवाजीयात्यवृकोरजस्तूर्विश्वचर्षणिः ॥ सजोषस्त्वादिवोनरोयज्ञस्यकेतुमिंधते । यद्धस्यमानुषोजनःसुम्नायुर्जुह्वेऽअध्वरे॑ ॥ ऋधद्यस्तेसुदानवेधियामर्तःशशमते । ऊतीषबृहतोदिवोद्विषोऽअंहोनत रति ॥ समिधायस्तऽआहुतिंनिशितिंमर्त्योनशत् ॥ वयावंतंसपुष्यतिक्षयमग्नेशतायुषं ॥ १ ॥ त्वेषस्तेधूमऽऋण्वति दिविषञ्छुक्रऽआततः । सूरोनहिद्युतात्वंकृपापावकरोचसे ॥ अधाहिविक्ष्वीड्योसिप्रियोनोऽअतिथिः । रण्वःपुरी वजूर्यःसूनुर्नत्रयय्याय्यः ॥ क्रत्वाहिद्रोणेऽअज्यसेऽग्नेवाजीनकृत्व्यः । परिज्मेवस्वधागयोत्योनह्वार्यःशिशुः ॥ त्वंत्या चिदच्युताग्नेपशुर्नयवसे । धामाहयत्तेऽअजरवनावृश्चंतिशिक्वसः ॥ वेषिह्यध्वरीयतामग्नेहोतादमेविशां । समृधोवि श्पतेकृणुजुषस्वहव्यमंगिरः ॥ अच्छानोमित्रमहोदेवदेवानग्नेवोचःसुमतिंरोदस्योः । वीहिस्वस्तिंसुक्षितिंदिवोनॄन्द्वि



---

( ६।१।२ ) त्वंहिक्षैतवदित्येकादशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोऽग्निरनुष्टुबंत्याशक्वरी ।

षोऽअंहांसिदुरितातरेमतातरेमतवावसातरेम ॥ २ ॥ (६।१।३) अग्नेसक्षैषदृतपाऽऋतेजाऽउरुज्योतिर्नशतेदेवयुष्टे । यंत्वंमित्रेणवरुणःसजोषादेवपासित्यजसामर्तमंहः ॥ ईजेयज्ञेभिःशशमेशमीभिर्ऋधद्वारायाग्नयेददाश । एवाचनतंयशसामजुष्टिर्नाहोमर्तनशतेनप्रदृप्तिः ॥ सूरोनयस्यदृशतिररेपाभीमायदेतिशुचतस्तऽआधीः । हेषस्वतःशुरुधोनायमक्तोःकुत्राचिद्रण्वोवसतिर्वनेजाः ॥ तिग्मंचिदेममहिवर्पोऽअस्यभसदश्वोनयमसानऽआसा । विजेहमानःपरशुर्नजिह्वांद्रविर्नद्रावयतिदारुधक्षत् ॥ सऽइदस्तेवप्रतिधादसिष्यन्छिशीततेजोयसोनधारां । चित्रध्रजतिररतिर्योऽअक्तोर्वेर्नद्रुषद्वारघुपत्मजंहाः ॥ ३ ॥ सऽईरेभोनप्रतिवस्तऽउस्राःशोचिषारारपीतिमित्रमहाः । नक्तंयऽईमरुषोयोदिवानॄनमर्त्योऽअरुषोयोदिवानॄन् ॥ दिवोनयस्यविधतोनवीनोद्वृषारुक्षऽओषधीषुनूनोत् । घृणानयोध्रजसापत्मनायन्नारोदसीवसुनादंसुपत्नी ॥ धायोभिर्वायोयुज्येभिरर्कैर्विद्युन्नदविद्योत्स्वेभिःशुष्मैः । शर्धोवायोमरुतांततक्षऽऋभुर्नत्वेषोरभसानोऽअद्यौत् ॥ ४ ॥ (६।१।४) यथाहोतर्मनुषोदेवतातायज्ञेभिःसूनोसहसोयजासि । एवानोऽअद्यसमनासमानानुशन्नग्नऽउशतोयक्षिदेवान् ॥ सनोविभावाचक्षणिर्नवस्तोरग्निर्वन्दारुवेद्यश्चनोधात् । विश्वायुर्योऽअमृतोमर्त्येषूषर्भुद्भूदतिथिर्जातवेदाः ॥ द्यावोनयस्यपनयंत्यभ्वंभासांसिवस्तेसूर्योनशुक्रः । वियऽइनोत्यजरःपावकोश्न

(६।१।३) अग्नेसक्षेषदित्यष्टर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोऽग्निस्त्रिष्टुप् । (६।१।४) यथाहोतरित्यष्टर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोऽग्नि-

स्यचिच्छिश्नथत्पूर्व्याणि ॥ वृज्ञाहिसूनोऽअस्यंद्मसद्वांचक्रेऽअग्निर्जनुषाज्मान्नं । सत्वंनऽऊर्जसनऽऊर्जंधाराजेवजेर वृकेक्षेष्यंतः+ ॥ निर्तिक्तियोवारणमन्नमत्तिवायुर्नराष्ट्र्यत्यैत्यक्तून् । तुर्यामयस्तऽआदिशामरातीरत्योनहुतःपततः परिहुत्+ ॥ ५ ॥ आसूर्योनभानुमद्भिरर्कैरग्नेततंथरोदसीविभासा । चित्रोनयत्परितमांस्यक्तःशोचिषापत्मन्नौशिजो नदीयन् । त्वांहिमंद्रतममर्कशोकैर्ववृमहेमहिनःश्रोष्यग्ने । इंद्रंनत्वाशवसादेवतावायुंपृणंतिराधसानृतमाः ॥ नूनो ऽअग्नेवृकेभिःस्वस्तिवेषिरायःपथिभिःपर्ष्यंहः । तासूरिभ्योगृणतेरासिसुम्नंमदेमशतहिमाःसुवीराः ॥ ६ ॥ (६।१।५) हुवेवःसूनुंसहसोयुवानमद्रोघवाचंमतिभिर्यविष्ठं । यऽइन्वतिद्रविणानिप्रचेताविश्ववाराणिपुरुवारोऽअध्रुक्+ ॥ त्वे वसूनिपुर्वणीकहोतर्दोषावस्तोरेरिरेयज्ञियासः । क्षामेवविश्वाभुवनानियस्मिन्त्संसौभगानिदधिरेपावके+ ॥ त्वंविक्षु प्रदिवःसीदऽआसुक्रत्वारथीरभवोवार्याणां । अतऽइनोषिविधतेचिकित्वोव्यानुषग्जातवेदोवसूनि ॥ योनःसनुत्यो ऽअभिदासदग्नेयोऽअंतरोमित्रमहोवनुष्यात् । तमजरेभिर्वृषभिस्तवस्वैस्तपातपिष्ठतपसातपस्वान् ॥ यस्तेयज्ञेनसमि धायऽउक्थैरर्केभिःसूनोसहसोददाशत् । समर्त्येष्वमृतप्रचेताराद्युम्नेनश्रवसाविभाति ॥ सतत्कृधीषितस्तूयमग्ने स्पृधोबाधस्वसहसासहस्वान् । यच्छस्यसेद्युभिरक्तोवचोभिस्तज्जुषस्वजरितुर्घोषिमन्म ॥ अश्यामतंकाममग्नेतवोतीऽ

त्रिष्टुप् । (६।१।५) हुवेवइतिसप्तर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोऽग्निस्त्रिष्टुप् ।

अ॒श्यामं॑र॒यिं र॑यिवः सु॒वीरं॑ । अ॒श्याम॒ वाज॑म॒भि वा॒जय॑न्तो॒ऽश्याम॑ द्यु॒म्नम॑जरा॒जरं॑ ते ॥ ७ ॥ (६।१।६) प्र नव्य॑सा॒ सह॑सः सू॒नुम॒च्छा॑ य॒ज्ञेन॑ गा॒तुमव॑ इ॒च्छमा॑नः । वृ॒श्चद्व॑नं कृ॒ष्णया॑मं॒ रुश॑न्तं वी॒ती होता॑रं दि॒व्यं जि॑गाति ॥ स श्वि॑ता॒नस्त॑न्य॒तू रो॑चन॒स्था अ॒जरे॑भि॒र्नान॑दद्भि॒र्यवि॑ष्ठः । यः पा॑व॒कः पु॑रु॒तमः॑ पु॒रूणि॑ पृ॒थून्य॒ग्निर॑नु॒याति॒ भर्व॑न् ॥ वि ते॒ विष्व॒ग्वात॑जूतासो अग्ने॒ भामा॑सः शुचे॒ शुच॑यश्चरन्ति । तु॒वि॒म्र॒क्षासो॑ दि॒व्या नव॑ग्वा॒ वना॑ वनन्ति धृष॒ता रु॒जन्तः॑ ॥ ये ते॑ शु॒क्रासः॒ शुच॑यः शुचिष्मः॒ क्षां वप॑न्ति॒ विषि॑तासो॒ अश्वाः॑ । अध॑ भ्र॒मस्त॑ उर्वि॒या वि भा॑ति या॒तय॑मानो॒ अधि॒ सानु॒ पृश्नेः॑ ॥ अध॑ जि॒ह्वा पा॑पतीति॒ प्र वृष्णो॑ गोषु॒युधो॒ नाशनिः॑ सृजा॒ना । शूर॑स्येव॒ प्रसि॑तिः क्षा॒तिर॒ग्नेर्दु॒र्वर्तु॑र्भी॒मो द॑यते॒ वना॑नि ॥ आ भा॒नुना॒ पार्थि॑वानि॒ ज्रयां॑सि म॒हस्तो॒दस्य॑ धृष॒ता त॑तन्थ । स बा॑ध॒स्वाप॑ भ॒या सहो॑भिः॒ स्पृधो॑ वनुष्य॒न्वनु॑षो॒ नि जू॑र्व ॥ स चि॑त्र चि॒त्रं चि॒तय॑न्तम॒स्मे चित्र॑क्षत्र चि॒त्रत॑मं वयो॒धां । च॒न्द्रं र॒यिं पु॑रु॒वीरं॑ बृ॒हन्तं॒ चन्द्र॑ च॒न्द्राभि॑र्गृण॒ते यु॑वस्व ॥ ८ ॥ (६।१।७) मू॒र्धानं॑ दि॒वो अ॑र॒तिं पृ॑थि॒व्या वै॑श्वान॒रमृ॒त आ जा॒तम॒ग्निं । क॒विं स॒म्राज॒मति॑थिं॒ जना॑नामा॒सन्ना पात्रं॑ जनयन्त दे॒वाः ॥ नाभिं॑ य॒ज्ञानां॒ सद॑नं रयी॒णां म॒हामा॑हा॒वम॒भि सं न॑वन्त । वै॒श्वा॒न॒रं र॒थ्य॑मध्व॒राणां॑ य॒ज्ञस्य॑ के॒तुं ज॑नयन्त दे॒वाः ॥ त्वद्विप्रो॑ जायते वा॒ज्य॑ग्ने॒ त्वद्वी॒रासो॑ अभिमाति॒षाहः॑ । वैश्वा॑नर॒ त्वम॒स्मासु॑ धेहि॒ वसू॑नि राजन्त्स्पृह॒याय्या॑णि ॥ त्वां विश्वे॑ अमृत॒ जाय॑मानं॒ शिशुं॒ न दे॒वा अ॒भि सं न॑वन्ते । तव॒ क्रतु॑



(६।१।६) प्र नव्यसेति सप्तर्चस्य सूक्तस्य बार्हस्पत्यो भरद्वाजोऽग्निस्त्रिष्टुप् । (६।१।७) मूर्धानमिति सप्तर्चस्य सूक्तस्य बार्हस्पत्यो भरद्वाजो वैश्वानर

भिरमृतत्वमायन्वैश्वानरयत्पित्रोरदीदेः ॥ वैश्वानरतवतानिव्रतानिमहान्यग्नेनकिरादधर्ष । यज्जायमानःपित्रोरुप
स्थेविंदःकेतुंवयुनेष्वह्नां ॥ वैश्वानरस्यविमितानिचक्षसासानूनिदिवोऽअमृतस्यकेतुना । तस्येदुविश्वाभुवनाधिमूर्ध
निवयाऽइवरुरुहुःसप्तविस्रुहः ॥ वियोरजांस्यमिमीतसुक्रतुर्वैश्वानरोविदिवोरोचनाकविः । परियोविश्वाभुवनानिप
प्रथेदब्धोगोपाऽअमृतस्यरक्षिता ॥ ९ ॥ ( ६।१।८ ) पृक्षस्यवृष्णोऽअरुषस्यनूसहःप्रनुवोचंविदथाजातवेदसः ।
वैश्वानरायमतिर्नव्यसीशुचिःसोमऽइवपवतेचारुरग्नये ॥ सजायमानःपरमेव्योमनिव्रतान्यग्निर्व्रतपाऽअरक्षत । व्यं१
तरिक्षममिमीतसुक्रतुर्वैश्वानरोमहिनानाकमस्पृशत् ॥ व्यस्तभ्नाद्रोदसीमित्रोऽअद्भुतोंतर्वावदकृणोज्ज्योतिषातमः ।
विचर्मणीवधिषणेऽअवर्तयद्वैश्वानरोविश्वमधत्तवृष्ण्यं ॥ अपामुपस्थेमहिषाऽअगृभ्णतविशोराजानमुपतस्थुऽऋग्मि
यं । आदूतोऽअग्निमभरद्विवस्वतोवैश्वानरंमातरिश्वापरावतः ॥ युगेयुगेविदथ्यंगृणद्भ्योग्नेरयिंयशसंधेहिनव्यसीं ।
पव्येवराजन्नघशंसमजरनीचानिवृश्चवनिनंनतेजसा ॥ अस्माकमग्नेमघवत्सुधारयानामिक्षत्रमजरंसुवीर्यं । वयंजयेम
शतिनंसहस्रिणंवैश्वानरवाजमग्नेतवोतिभिः ॥ अदब्धेभिस्तवगोपाभिरिष्टेस्माकंपाहित्रिषधस्थसूरीन् । रक्षाचनोदुदु

---

त्रिष्टुबंत्येद्वेजगत्यौ । ( ६।१।८ ) पृक्षस्येतिसप्तर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोवैश्वानरोग्निर्जगत्यंत्यात्रिष्टुप् ।

षांशर्धोऽअग्नेवैश्वानरप्रचंतारीःस्तवानः ॥ १० ॥ ( ६।१।९ ) अहश्चकृष्णमहरर्जुनंचविवर्तेतेरजंसीवेद्याभिः । वैश्वानरोजायमानोनराजावातिरज्ज्योतिषाग्निस्तमांसि ॥ नाहंतंतुंनविजानाम्योतुंनयंवयंतिसमरेतमानाः । कस्यंस्वित्पुत्रऽइहवक्त्वानिपरोवंदात्यवरेणपित्रा ॥ सऽइत्तंतुंसविजानात्योतुंसवक्त्वान्यृतुथावंदाति । यऽईंचिकेतदमृतंस्यगोपाऽअवश्चरन्परोऽअन्येनपश्यन् ॥ अयंहोताप्रथमःपश्यंतेममिदंज्योतिरमृतंमर्त्येषु । अयंसजज्ञेध्रुवऽआनिषत्तोमर्त्यस्तन्वा३ वर्धमानः ॥ ध्रुवंज्योतिर्निहितंदृशयेकंमनोजविष्ठंपतयंत्स्वंतः । विश्वेदेवाःसमनसःसकेताऽएकंक्रतुमभिवियंतिसाधु ॥ विमेकर्णापतयतोविचक्षुर्वी३दंज्योतिर्हृदंयऽआहितंयत् । विमेमनश्चरतिदूरऽआधीःकिंस्विद्वक्ष्यामिकिमुनूमंनिष्ये ॥ विश्वेदेवाऽअनमस्यन्भियानास्त्वामंग्नेतमसितस्थिवांसं । वैश्वानरोवतूतयेनोमर्त्योवतूतये नः ॥ ११ ॥ ( ६।१।१० ) पुरोवोमन्द्रंदिव्यंसुवृक्तिंप्रयतियज्ञेऽअग्निमध्वरेदधिध्वं । पुरऽउक्थेभिःसहिनोविभावास्वध्वराकरतिजातवेदाः ॥ तमुद्युमःपुर्वणीकहोतरग्नेऽअग्निभिर्मनुषऽइधानः । स्तोमंयमस्मैममतेवशूषंघृतंनशुचिमतयःपवंते ॥ पीपायसःश्रवसामर्त्येषुयोऽअग्नयेददाशविप्रऽउक्थैः । चित्राभिस्तमूतिभिश्चित्रशोचिर्व्रजस्यसातागोमतो



( ६।१।९ ) अहश्चकृष्णमितिसप्तर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोवैश्वानरोग्निस्त्रिष्टुप् । ( ६।१।१० ) पुरोवइतिसप्तर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोग्निस्त्रिष्टुबंत्याद्विपदाविराट् ।

दधाति ॥ आयःपप्रौजायमानऽउर्वीदूरेदृशाभासाकृष्णाध्वा । अधबहुचित्तमऽऊर्म्यायास्तिरःशोचिषाददृशेपाव
कः+ ॥ नूनंश्चित्रंपुरुवाजाभिरूतीऽअग्नेरयिंमघवंद्ध्यश्चधेहि । येराधसाश्रवसाचात्यन्यान्त्सुवीर्येभिश्चाभिसंतिजना
न् ॥ इमंयज्ञंचनोधाऽअग्नऽउशन्यंतऽआसानोजुहुतेहविष्मान् । भरद्वाजेषुदधिषेसुवृक्तिमवीर्वाजस्यगध्यस्यसातौ+ ॥
विद्वेषांसीनुहिवर्धयेळांमदेमशतहिमाःसुवीराः ॥ १२ ॥ ( ६।१।११ ) यजस्वहोतरिषितोयजीयानग्नेबाधोमरुतां
नप्रयुक्ति । आनोमित्रावरुणानासत्याद्यावाहोत्रायपृथिवीववृत्याः ॥ त्वंहोतामंद्रतमोनोऽअध्रुगंतर्देवोविदथामर्त्ये
षु । पावकयाजुह्वा३वह्निरासाग्नेयजस्वतन्वं१तवस्वां+ ॥ धन्याचिद्धित्वेधिषणावष्टिप्रदेवान्जन्मगृणतेयजध्यै । वे
पिष्ठोऽअंगिरसांयद्धविप्रोमधुच्छंदोभनतिरेभऽइष्टौ+ ॥ अदिद्युतत्स्वपाकोविभावाग्नेयजस्वरोदसीऽउरूची । आयुं
नयंनमसारातहव्याऽअंजंतिसुप्रयसंपंचजनाः ॥ वृंजेहयन्नमसाबर्हिरग्नावयामिस्रुग्घृतवतीसुवृक्तिः । अम्यक्षिसद्मस
दनेपृथिव्याऽअश्रायियज्ञःसूर्येनचक्षुः ॥ दशस्यानःपुर्वणीकहोतर्देवेभिरग्नेऽअग्निभिरिधानः । रायःसूनोसहसोवाव
सानाऽअतिस्रसेमवृजनंनांहः ॥ १३ ॥ ( ६।१।१२ ) मध्येहोतादुरोणेबर्हिषोराळग्निस्तोदस्यरोदसीयजध्यै । अयं
ससूनुःसहसऽऋतावादूरात्सूर्योनशोचिषाततान ॥ आयस्मिन्त्वेस्वपाकेयजत्रयक्षद्राजन्त्सर्वतातेवनुद्यौः । त्रिषध

( ६।१।११ ) यजस्वहोतरितिषड्ऋचस्यसूक्तस्यबार्हस्पत्योभरद्वाजोऽग्निस्त्रिष्टुप् । ( ६।१।१२ ) मध्येहोतेतिषड्ऋचस्यसूक्तस्यबार्हस्पत्यो

॥ ३५ ॥

स्थस्ततरुषोनजंहोंहुव्यामघानिमानुषायजंध्यै ॥ तेजिष्ठायस्यारतिर्वनेराट्तोदोऽअध्वन्नवृधसानोऽअंद्यौत् । अद्रोघो नद्रविताचेततित्मन्नमर्त्योवर्त्रऽओषधीषु ॥ सास्माकेभिरेतरीनशूषैरग्निष्टवेदमऽआजातवेदाः । द्रुन्नोवन्वन्क्रत्वाना र्वोस्रःपितेवंजारयायियज्ञैः+ ॥ अधस्मास्यपनयंतिभासोवृथायत्तक्षदनुयातिपृथ्वीं । सद्योयस्पंद्रोविषितोधवीयानृ णोनतायुरतिधन्वाराट् ॥ सत्वंनोऽअर्वन्निदायाविश्वेभिरग्नेऽअग्निभिरिधानः । वेषिरायोवियासिदुच्छुनामदेमश तहिमाःसुवीराः ॥ १४ ॥ ( ६।१।१३ ) त्वद्धिश्वासुभगसौभगान्यग्नेवियंतिवनिनोनवयाः । श्रुष्टीरयिर्वाजोवृत्रतू र्येदिवोवृष्टिरीड्योरीतिरपां+ ॥ त्वंभगोनऽआहिरत्नमिषेपरिज्मेवक्षयसिदस्मवर्चाः । अग्नेमित्रोनबृहतऽऋतस्यासि क्षत्तावामस्यदेवभूरेः ॥ ससत्पतिःशवसाहंतिवृत्रमग्नेविप्रोविपणेर्भर्तिवाजं । यंत्वंप्रचेतऽऋतजातरायासजोषानप्त्रा पांहिनोषि ॥ यस्तेसूनोसहसोगीर्भिरुक्थैर्यज्ञैर्मर्तोनिशितिंवेद्यानट् । विश्वंसदेवप्रतिवारमग्नेधत्तेधान्यं१पत्यंतेवस व्यैः* ॥ तानृभ्यऽआसौश्रवसासुवीराग्नेसूनोसहसःपुष्यसेधाः । कृणोषियच्छवसाभूरिपश्वोवयोवृकायारयेजसु रये ॥ वद्मासूनोसहसोनोविहायाऽअग्नेतोकंतनयंवाजिनोदाः । विश्वाभिर्गीर्भिरभिपूर्तिमश्यामदेमशतहिमाः सुवीराः ॥ १५ ॥ ( ६ । १ । १४ ) अग्नायोमर्त्योदुवोधियंजुजोषधीतिभिः । भसन्नुषप्रपूर्व्यऽइषंवुरीतावसे ॥

॥ ३५ ॥



भरद्वाजोऽग्निस्त्रिष्टुप् । (६।१।१३) त्वद्धिश्वेतिषड्टचस्यसूक्तस्यवार्हस्पत्योभरद्वाजोऽग्निस्त्रिष्टुप्। ( ६।१।१४ ) अग्नायइतिषड्टचस्यसूक्तस्य

ऽअ॒ग्निरि॒द्धिप्रचे॑ताऽअ॒ग्निर्वे॒धस्त॑म॒ऽऋषिः । अ॒ग्निं होता॑रमीळते य॒ज्ञेषु॒ मनु॑षो वि॒शः ॥ नाना॒ह्य॑ग्नेऽव॑से॒ स्पर्ध॑न्ते॒ रायो॑ ऽअ॒र्यः । तूर्व॑न्तो॒ दस्यु॑मा॒यवो॑ व्र॒तैः सीक्ष॑न्तोऽअव्र॒तं ॥ अ॒ग्निर॒प्सामृ॑ती॒षहं॑ वी॒रं द॑दाति॒ सत्प॑तिं । यस्य॒ त्रस॑न्ति॒ शव॑सः सं॒चक्षि॒ शत्र॑वो भि॒या ॥ अ॒ग्निर्हि वि॒द्मना॑ नि॒दो दे॒वो मर्त॑मुरु॒ष्यति॑ । स॒हावा॒ यस्यावृ॑तो र॒यिर्वाजे॒ष्ववृ॑तः ॥ अच्छा॑ नो मि त्रमहो देव दे॒वान॑ग्ने॒ वोचः॑ सुम॒तिं रोद॑स्योः । वी॒हि स्व॒स्तिं सु॑क्षि॒तिं दि॒वो नॄन्द्वि॒षो ऽअंहां॑सि दुरि॒ता त॑रेम॒ ता त॑रेम॒ तवाव॑सा तरेम ॥ १६ ॥ ( ६।१।१५ ) इ॒ममू॒षु वो॒ ऽअति॑थिमुष॒र्बुधं॒ विश्वा॑सां वि॒शां पति॑मृंजसे गि॒रा । वेती॒द्दि॒वो ज॒नुषा॒ कच्चि॒दा शुचि॒र्ज्योक्चि॑दत्ति॒ गर्भो॒ यदच्यु॑तं ॥ मि॒त्रं न यं सुधि॑तं॒ भृग॑वो द॒धुर्वन॒स्पता॒वीड्य॑मू॒र्ध्वशो॑चिषं । स त्वं सुप्री॑तो वी॒तह॑व्येऽअद्भु त॒प्रश॑स्तिभिर्महयसे दि॒वेदि॑वे ॥ स त्वं दक्ष॑स्यावृ॒को वृ॒धो भू॑र॒र्यः पर॒स्यान्त॑रस्य॒ तरु॑षः । रा॒यः सू॑नो सहसो॒ मर्त्ये॒ष्वा छ॒र्दिर्य॑च्छ वी॒तह॑व्याय स॒प्रथो॑ भ॒रद्वा॑जाय स॒प्रथः॑ ॥ द्यु॒तानं॑ वो॒ ऽअति॑थिं॒ स्व॑र्णरम॒ग्निं होता॑रं॒ मनु॑षः स्वध्व॒रं । विप्रं॒ न द्यु॒क्षव॑चसं सुवृ॒क्ति भि॑र्हव्य॒वाह॑मर॒तिं दे॒वमृं॑जसे ॥ पा॒व॒कया॒ यश्चि॒तय॑न्त्या कृ॒पा क्षाम॑न्रुरु॒चऽउ॒षसो॒ न भा॒नुना॑ । तूर्व॒न्न याम॒न्नेत॑शस्य॒ नू रण॒ ऽआ यो घृ॒णे न त॑तृ॒षा॒णो ऽअ॒जरः॑ ॥ १७ ॥ अ॒ग्निम॑ग्निं वः स॒मिधा॑ दुवस्यत प्रि॒यम्प्रि॑यं वो॒ ऽअति॑थिं गृणी॒षणि॑ । उप॑ वो गी॒र्भिर्

---

बार्हस्पत्यो भरद्वाजोऽग्निरनुष्टुबंत्या शक्करी । ( ६।१।१५ ) इममूष्वित्येकोनविंशत्यृचस्य सूक्तस्यांगिरसो वीतहव्यो (भरद्वाजो वा) ग्निर्जगती तृतीया पंचदश्यौ शक्कर्यौ षष्ठ्यतिशक्करी सप्तदश्यनुष्टुप् अष्टादशी बृहती द्वयक्ष्याद्याः पंचषोडश्येकोनविंशी च त्रिष्टुभः ।

मृतेंविवासतदे॒वोदे॒वेषुवनते॒हिवार्यंदे॒वोदे॒वेषुवनंते॒हिनोदुवः ॥ सभिद्धम॒ग्निंस॒मिधागि॒रागृणेशुचिंपावकंपुरोऽअध्व॒रे ध्रुवं । विप्रंहोतारंपुरु॒वार॑मद्रुहंक॒विंसु॒म्नैरीमहेजा॒तवेदसं ॥ त्वांदू॒तम॑ग्नेऽअ॒मृतंयु॒गेयुंगेहव्य॒वाहंदधिरेपायुमीड्यं । दे॒वासंश्चमर्तासश्चजागृविंवि॒भुंवि॒श्पतिं॒नम॑सानिषेदिरे ॥ वि॒भूषन्नग्नऽउ॒भयाँऽअनु॒व्र॒तादू॒तोदे॒वानां॒रज॑सीस॒मीयसे । यत्तेधी॒तिंसु॑म॒तिमावृणीमहेध॑स्मानस्त्रि॒वरूथःशि॒वोभ॑व ॥ तंसु॒प्रतीकंसु॒दृशं॒स्वंच॒मविद्वांसोवि॒दुष्टरंसपेम । सयंक्षद्वि॒श्वावयुनानिवि॒द्वान्प्रह॒व्यम॒ग्निर॒मृतेषुवोचत् ॥ १८ ॥ तम॑ग्नेपास्यु॒ततंपिपर्षि॒यस्त॒ऽआन॑ट्क॒वयेशूर॒धी॒तिं । य॒ज्ञस्य॑वा॒ निशितिं॒वोदितिं॒वा॒तमित्पृणक्षि॒शव॑सो॒तरा॒या ॥ त्वम॑ग्नेवनुष्य॒तोनिपा॒हि॒त्वमु॑नःसहसावन्नव॒द्यात् । संत्वाध्वस्म॒न्वदु॒भ्येतुपाथः॒सं॒र॒यिःस्पृ॒ह॒याय्यःसह॒स्री ॥ अ॒ग्निर्हो॒तागृ॒हप॑तिः॒सराजा॒विश्वावे॒द॒जनि॑माजा॒तवेदाः । दे॒वानां॒मुतयोम॒र्त्यानां॒यजिष्ठःसप्र॒यंजतामृ॒तावा ॥ अग्ने॒यद॒द्यवि॒शोऽअध्व॒रस्यहोत॒ःपाव॑कशोचे॒वेष्ट्वंहि॒यज्वा । ऋ॒तायंजासि॒महि॒ना वि॒यद्भूर्ह॒व्यावहयविष्ठ॒यातेऽअ॒द्य ॥ अ॒भिप्रयांसि॒सुधि॑ताति॒हिख्योनि॒त्वादधीत॒रोद॑सीयज॒ध्यै । अर्वानोमघव॒न्वा॒जंसाता॒वग्ने॒विश्वा॑निदु॒रि॒ताते॒रेम॒ताते॒रेम॒तवाव॑सा॒तरेम ॥ १९ ॥ अग्ने॒विश्वे॑भिःस्वनीकदे॒वैरूर्णावंतंप्रथ॒मःसी॑द॒योनिं । कु॒ला॒यिनं॑घृ॒तवंतंसवि॒त्रेय॒ज्ञंन॑य॒यज॑मानायसा॒धु ॥ इ॒ममु॒त्यम॑थर्व॒वद॒ग्निंमंथंतिवे॒धसः । यमंकु॒यंत॒मान॑य॒न्नमूरंश्या॒व्याभ्यः ॥ जनि॑ष्वादे॒ववीतयेस॒र्वतातास्व॒स्तये । आदे॒वान्वक्ष्यमृताऽऋता॒वृधोय॒ज्ञंदे॒वेषुपिस्पृशः ॥ व॒यमु॑त्वागृह

पतेजनानामग्नेऽअर्कमसमिधाबृहंतं । अस्थूरिनोगार्हपत्यानिसंतुतिग्मेनंनस्तेजसासंशिशाधि ॥ २० ॥ ( ६।२।१ )
त्वमंग्नेयज्ञानांहोताविश्वेषांहितः । देवेभिर्मानुषेजने ॥ सनोंमंद्राभिरध्वरेजिह्वाभिर्यजामहः । आदेवान्वक्षियक्षि
च ॥ वेत्थाहिवेधोऽअध्वनःपथश्चदेवांजसा । अग्नेयज्ञेषुसुक्रतो ॥ त्वामीळेऽअर्धद्वितार्भरतोवाजिभिःशुनं । ईजेयु
ज्ञेषुयज्ञियं ॥ त्वमिमावार्यापुरुदिवोदासायसुन्वते । भरद्वाजायदाशुषे ॥ २१ ॥ त्वंदूतोऽअमर्त्यऽआवहादैव्यंज
नं । शृण्वन्विप्रस्यसुष्टुतिं+ ॥ त्वामंग्नेस्वाध्योऽमर्तासोदेववीतये । यज्ञेषुदेवमीळते ॥ तवप्रयंक्षिसंदृशमुतक्रतुंसुदा
नवः । विश्वेजुषंतकामिनः ॥ त्वंहोतामनुर्हितोवह्निरासाविदुष्टरः । अग्नेयक्षिदिवोविशः । अग्नऽआयाहिवीतयेगृ
णानोहव्यदातये । निहोतासत्सिबर्हिषि ॥ २२ ॥ तंत्वासमिद्भिरंगिरोघृतेनवर्धयामसि । बृहच्छोचायविष्ठ्य ॥ स
नःपृथुश्रवाय्यमच्छादेवविवाससि । बृहदग्नेसुवीर्यं ॥ त्वामग्नेपुष्करादध्यथर्वानिरमंथत । मूर्ध्नोविश्वस्यवाघतः ॥
तमुत्वादध्यङ्ऽऋषिःपुत्रऽईधेऽअथर्वणः । वृत्रहणंपुरंदरं+ ॥ तमुत्वापाथ्योवृषासमीधेदस्युहंतमं । धनंजयंरणेरणे
॥ २३ ॥ एह्यूषुब्रवाणितेग्नऽइत्थेतराःगिरः । एभिर्वर्धासऽइंदुभिः ॥ यत्रक्वचतेमनोदक्षंदधसऽउत्तरं । तत्रासदःकृ

( ६।२।१ ) त्वमग्नेयज्ञानामित्यष्टाचत्वारिंशदृचस्यसूक्तस्यबार्हस्पत्योभरद्वाजोग्निर्गायत्रीआद्याषष्ठ्यौत्र्यधमानेसप्तविंश्यनुष्टुप्षड्चत्वारिं
शीत्रिष्टुप्अंत्येद्वेअनुष्टुभौ ।

णवसे ॥ नहितेपूर्तमक्षिपद्भुवन्नेमानांवसो । अथादुवौवनवसे ॥ आग्निरगामिभारतोवृत्रहापुरुचेतनः । दिवोदासस्यसत्पतिः ॥ सहिविश्वातिपार्थिवारयिंदाशन्महित्वना । वन्वन्नवातोऽअस्तृतः ॥ २४ ॥ सप्रत्नवन्नवीयसाग्नेद्युम्नेनसंयता । बृहत्ततंथभानुना । प्रवःसखायोऽअग्नयेस्तोमंयज्ञंचधृष्णुया । अर्चगायचवेधसे । सहियोमानुषायुगासीद्धोताकविक्रतुः । दूतश्चहव्यवाहनः ॥ ताराजानाशुचिव्रतादित्यान्मारुतंगणं । वसोयक्षीहरोदसी ॥ वस्वीतेऽअग्नेसंदृष्टिरिषयतेमर्त्याय । ऊर्जोनपादमृतस्य ॥ २५ ॥ क्रत्वादाऽअस्तुश्रेष्ठोद्यत्वावन्वन्त्सुरेक्णाः । मर्तऽआनाशसुवृक्तिं ॥ तेतेऽअग्नेत्वोताऽइषयंतोविश्वमायुः । तरंतोऽअर्योऽअरातीर्वन्वंतोऽअर्योऽअरातीः ॥ अग्निस्तिग्मेनशोचिषायासद्विश्वंन्य१त्रिणं । अग्निर्नोवनतेरयिं ॥ सुवीरंरयिमाभरजातवेदोविचर्षणे । जहिरक्षांसिसुक्रतो ॥ त्वंनःपाह्यंहसोजातवेदोऽअघायतः । रक्षाणोब्रह्मणस्कवे ॥ २६ ॥ योनोऽअग्नेदुरेवऽआमर्तोवधायदाशति । तस्मान्नःपाह्यंहसः ॥ त्वंतंदेवजिह्वयापरिबाधस्वदुष्कृतं । मर्तोयोनोजिघांसति ॥ भरद्वाजायसप्रथःशर्मयच्छसहंत्य । अग्नेवरेण्यंवसु ॥ अग्निर्वृत्राणिजंघनद्द्रविणस्युर्विपन्यया । समिद्धःशुक्रऽआहुतः ॥ गर्भेमातुःपितुष्पिताविदिद्युतानोऽअक्षरे । सीदन्नृतस्ययोनिमा ॥ २७ ॥ ब्रह्मप्रजावदाभरजातवेदोविचर्षणे । अग्नेयद्दीदयद्दिवि ॥ उपत्वारण्वसंदृशंप्रयस्वंतःसहस्कृत । अग्नेससृज्महेगिरः ॥ उपच्छायामिवघृणेरगन्मशर्मतेवयं । अग्नेहिरण्यसंदृशः ॥ यऽउ

ग्रऽइंवशर्य्हातिग्मशृंगोनवंसंगः । अग्नेपुरोरुरोजिथ ॥ आयंहस्तेनखादिनंशिशुंजातंनबिभ्रति । विशामग्निंस्वध्व
रं+ ॥ २८ ॥ प्रदेवंदेववीतयेभरतावसुवित्तमं । आस्वेयोनौनिषीदतु ॥ आजातंजातवेदसिप्रियंशिशीतातिथिं ।
स्योनऽआगृहपतिं ॥ अग्नेयुक्ष्वाहियेतवाश्वासोदेवसाधवः । अरंवहंतिमन्यवे ॥ अच्छानोयाह्यावहाभिप्रयांसिवीत
ये । आदेवान्त्सोमपीतये ॥ उदग्नेभारतद्युमदजस्रेणदविद्युतत् । शोचाविभाह्यजर ॥ २९ ॥ वीतीयोदेवंमर्तोदु
वस्येदग्निमीळीताऽध्वरेहविष्मान् । होतारंसत्ययजंरोदस्योरुत्तानहस्तोनमसाविवासेत् ॥ आतेऽअग्नऽऋचाहविर्हृ
दातष्टंभरामसि । तेतेभवंतूक्षणऽऋषभासोवशाऽउत+ ॥ अग्निंदेवासोऽअग्रियमिंधतेवृत्रहन्तमं । येनावसून्याभृ
तातृह्वारक्षांसिवाजिना ॥ ३० ॥ इतिचतुर्थाष्टकेपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ ॥

एकोत्रिंशाध्यायेवर्गाः ३० सूक्तानि १५ ऋचः १६० ॥ त्यागः ॥ अग्नय.४१ वैश्वानरायाग्नय.२१ अग्नय.९८ ॥ इति
चतुर्थेपंचमः ॥

पिबपंचोनैंद्रंत्रैष्टुभंद्विपदांतंतमुष्टुहिमहान्त्सप्तोनाद्यौर्नविपिप्रोर्विरांळिमाउद्वादशनवम्येकादश्यौवैश्वदेव्यौय
एकएकादशसुतइद्दशवृषायातेनवश्रुधीनोष्टौकिमस्यांत्याचायमानस्याभ्यावर्तिनोदानस्तुतिरागावोगव्यंद्वि
तीयैंद्रीचांत्यश्चपादोंत्यानुष्टुब्जागतस्तृचोद्वितीयादिः ॥ १ ॥ ॥ ॥ ॥

ऋक्सं. अ.४अ.६ ॥३८॥

॥ हरिः ओम् ॥ ( ६।२।२ ) पिबासोममभियमुग्रतर्दऽऊर्वंगव्यंमहिंगृणानऽइंद्र । वियोधृष्णोवधिषोवज्रहस्तविश्वावृत्रममित्रियाशवोभिः ॥ सऽईंपाहियऽऋजीषीतरुत्रोयःशिप्रवान्वृषभोयोमतीनां । योगोत्रभिद्वज्रभृद्योहरिष्ठाःसऽइंद्रचित्राँऽअभितृंधिवाजान् ॥ एवापाहिप्रत्नथामंदतुत्वाश्रुधिब्रह्मवावृधस्वोतगीर्भिः । आविःसूर्यंकृणुहिपीपिहीषोजहिशत्रूँरभिगाऽइंद्रतृंधि ॥ तेत्वामदाबृहदिंद्रस्वधावऽइमेपीताऽउक्षयंतद्युमंतं । महामनूनंतवसंविभूतिंमत्सरासोजर्हृषंतप्रसाहं ॥ येभिःसूर्यमुषसंमंदसानोवासयोपदृह्वानिदर्द्रत् । महामद्रिंपरिगाऽइंद्रसंतंनुत्थाऽअच्युतंसदसस्परिस्वात्+ ॥ १ ॥ तवक्रत्वातवतद्दंसनाभिरामासुपक्वंशच्यानिदीधः । और्णोर्दुरऽउस्रियाभ्योविदृह्वोदूर्वाद्गाऽअसृजोऽअंगिरस्वान् ॥ पप्राथक्षांमहिदंसोव्युर्वीमुपद्यामृष्वोबृहदिंद्रस्तभायः । अधारयोरोदसीदेवपुत्रेप्रत्नेमातरायह्वीऽऋतस्य ॥ अधत्वाविश्वेपुरऽइंद्रदेवाऽएकंतवसंदधिरेभराय । अदेवोयदभ्यौहिष्टदेवान्त्स्वर्षातावृणतऽइंद्रमत्र ॥ अधद्यौश्चित्तेऽअपसानुवज्राद्द्वितानमद्भियसास्वस्यमन्योः । अहिंयदिंद्रोऽअभ्योहसानंनिचिद्विश्वायुःशयथेजघान ॥ अधत्वष्टातेमहऽउग्रवज्रंसहस्रभृष्टिंववृतच्छताश्रिं । निकाममरमणसंयेननवंतमहिंसंपिणगृजीषिन् ॥ २ ॥ वर्धान्यंविश्वेमरुतःसजोषाःपचच्छतंमहिषाँऽइंद्रतुभ्यं । पूषाविष्णुस्त्रीणिसरांसिधावन्वृत्रहणंमदिरमंशुमस्मै ॥ आ

मंडलं ६ अनु. २ ॥३८॥

---

( ६।२।२ ) पिबासोममितिपंचदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप्‌त्रिष्टुप् ।

क्षोदोमहिवृतंनदीनांपरिष्ठितमसृजऽऊर्मिमपां । तासामनुप्रवतंऽइंद्रपंथांप्रार्दयोनीचीरपसंःसमुद्रं+ ॥ एवाताविश्वां
चकृवांसमिंद्रंमहामुग्रमजुर्यंसहोदां । सुवीरंत्वास्वायुधंसुवज्रमाब्रह्मनव्यमवसेववृत्यात् ॥ सनोवाजायश्रवसऽइषेचं
रायेधेहिद्युमतंऽइंद्रविप्रान् । भरद्वाजेनृवतंऽइंद्रसूरीन्दिविचंस्मैधिपार्यैनऽइंद्र ॥ अयावाजंदेवहितंसनेममदेमशत
हिमाःसुवीराः ॥ ३ ॥ ( ६।२।३ ) तमुष्टुहियोऽअभिभूत्योजावन्वन्नवातःपुरुहूतऽइंद्रः । अषाह्ळमुग्रंसहमानमाभि
र्गीर्भिर्वर्धवृषभंचर्षणीनां+ ॥ सयुध्मःसत्वाखजकृत्समद्वातुविम्रक्षोनदनुमाँऽऋजीषी । बृहद्रेणुश्च्यवनोमानुषीणामे
कःकृष्टीनामभवत्सहावा ॥ त्वंहनुत्यदंदमायोदस्यूँरेकःकृष्टीरवनोरार्याय । अस्तिस्विन्नुवीर्यं१तत्तंऽइंद्रनस्विदस्तितदृ
तुथाविवोचः ॥ सदिद्धितेतुविजातस्यमन्येसहःसहिष्ठतुरतस्तुरस्य । उग्रमुग्रस्यतवसस्तवीयोरध्रस्यरध्रतुरोबभूव ॥
तन्नःप्रत्नंसख्यमस्तुयुष्मेऽइत्थावदद्भिर्वलमंगिरोभिः । हन्नच्युतच्युद्दस्मेषयंतमृणोःपुरोविदुरोऽअस्यविश्वाः ॥ ४ ॥
सहिधीभिर्हव्योऽअस्त्युग्रऽईशानकृन्महतिवृत्रतूर्ये । सतोकसातातनयेसवज्रीवितंतसाय्योऽअभवत्समत्सु ॥ सम
ज्मनाजनिमानुषाणाममर्त्येननाम्नातिप्रसर्स्रे । सद्युम्नेनसशवसोतरायासवीर्येणनृतमःसमोकाः ॥ सयोनमुहेनमि
थूजनोभूत्सुमंतुनामाचुमुरिंधुनिंच । वृणक्पिप्रुंशंबरंशुष्णमिंद्रःपुरांच्यौत्नायशयथायनूचित् ॥ उदावतात्वक्षसाप

( ६।२।३ ) तमुष्टुहीतिपंचदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ।

न्यसाचवृत्रहत्याग्रथमिंद्रतिष्ठ । धिष्वबज्रंहस्तऽआदक्षिणत्राभिप्रमंदपुरुदत्रमायाः+ ॥ अग्निर्नशुष्कंवनमिंद्रहेतीर
क्षोनिधक्ष्यशनिर्नभीमा । गंभीरयंऽऋष्वयायोरुरोजाध्वानयद्दुरितादंभयच्च ॥ ५ ॥ आसहस्रंपथिभिरिंद्ररायातुवि
द्युम्नतुविवाजेभिरर्वाक् । याहिसूनोसहसोयस्यनूचिददेवऽईशेपुरुहूतयोतोः ॥ प्रतुविद्युम्नस्यस्थविरस्यघृष्वेर्दिवोररर
प्शेमहिमापृथिव्याः । नास्यशत्रुर्नप्रतिमानमस्तिनप्रतिष्ठिःपुरुमायस्यसह्योः ॥ प्रतत्तेऽअद्याकरणंकृतंभूत्कुत्संयदायु
मतिथिग्वमस्मै । पुरूसहस्रानिशिशाऽअभिक्षामुत्तूर्वयाणंधृषतानिनेथ ॥ अनुत्वाहिघ्नेऽअधदेवदेवामदन्विश्वेकवितं
मंकवीनां । करोयत्रवरिवोबाधितायदिवेजनायतन्वेगृणानः+ ॥ अनुद्यावापृथिवीतत्तऽओजोमर्त्याजिहतऽइंद्रदे
वाः । कृष्वाकृत्नोऽअकृतंयत्तेऽअस्त्युक्थंनवीयोजनयस्वयज्ञैः+ ॥ ६ ॥ ( ६।२।४ ) महाँऽइंद्रोनृवदाचर्षणिप्राऽउ
तद्विबर्हाऽअमिनःसहोभिः । अस्मद्र्यग्वावृधेवीर्यायोरुःपृथुःसुकृतःकर्तृभिर्भूत् ॥ इंद्रमेवधिषणासातयेधाद्बृहंतमृष्व
मजरंयुवानं । अषाह्ळेनशवसाशूशुवांसंसद्यश्चिद्योवावृधेऽअसामि ॥ पृथूकरस्नाबहुलागभस्तीऽअस्मद्र्य१क्संमिमीहि
श्रवांसि । यूथेवपश्वःपशुपादमूनाऽअस्माँऽइंद्राभ्यावबृत्स्वाजौ+ ॥ तंवऽइंद्रंचतिनमस्यशाकैरिहनूनंवाजयंतोहुवेम ।
यथाचित्पूर्वेजरितारऽआसुरनेद्याऽअनवद्याऽअरिष्टाः ॥ धृतव्रतोधनदाःसोमवृद्धःसहिवामस्यवसुनःपुरुक्षुः । संजग्मिरे

---

( ६।२।४ ) महाँइंद्रइतित्रयोदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ।

पथ्या उ॒रायो॑ऽअस्मिन्त्समु॒द्रेनासिं॑धवो॒याद॑मानाः ॥ ७ ॥ शवि॑ष्ठंन॒ऽआभ॑रशूर॒शव॒ऽओजि॑ष्ठमोजो॑ऽअभिभूतऽउ॒ग्रं । विश्वा॑द्युम्नावृष्ण्या॒मानु॑षाणाम॒स्मभ्यं॑दाहरिवोमाद॒यध्यै॑ ॥ यस्ते॒मदः॑पृतना॒षाळमृ॑ध्र॒ऽइंद्र॒तंन॒ऽआभ॑रशूशु॒वांसं॑ । येन॑ तो॒कस्य॒तन॑यस्यसा॒तौमं॑सी॒मंहिं॑जिगी॒वांस॒स्त्वोताः॑ ॥ आनो॑भर॒वृष॑णंशुष्म॑मिंद्रधन॒स्पृतं॑शूशु॒वांसं॑सु॒दक्षं॑ । येन॒वंसा॑मपृ॒तं॑नासु॒शत्रू॒न्तवो॒तिभि॑रु॒तजा॒मीँ॑ऽरजा॑मीन् ॥ आते॒शुष्मो॑वृष॒भऽए॑तुप॒श्चादोत्त॒राद॑ध॒रादापुरस्ता॑त् । आवि॒श्वतो॑ऽअ॒भिसमे॑त्व॒र्वाङिं॑द्र॒द्युम्नं॒स्व॑र्वद्धेह्य॒स्मे ॥ नृ॒वत्त॑ऽइंद्र॒नृत॑माभिरू॒तीवं॑सीमहि॑वा॒मंश्रो॒म॑तेभिः । ईक्षे॒हिवस्व॑ऽउ॒भय॑स्यराज॒न्धार॒त्नं॑महिं॑स्थू॒रंबृ॒हंतं॑ ॥ म॒रुत्वं॑तंवृष॒भंवा॑वृधानमक॑वारिंदि॒व्यंशा॒सामिंद्रं॑ । वि॒श्वासाह॒मव॑सेनूत॑नायो॒ग्रंस॑हो॒दामि॒हतं॑ हुवेम ॥ जनं॑वज्रि॒न्महिं॑चि॒न्मन्य॑मानमे॒भ्योनृभ्यो॑रंधया॒येष्वस्मि॑ । अधा॒हित्वा॑पृथि॒व्यांशूर॑सा॒तौहवा॑महे॒तन॑ये॒गोष्व॒प्सु ॥ व॒यंत॑ऽए॒भिःपु॑रुहूतस॒ख्यैःशत्रोः॑शत्रो॒रुत्त॑र॒ऽइत्स्या॑म । घ्नंतो॑वृत्राण्यु॒भया॑निशूर॒रा॒याम॑देमबृह॒तात्वोताः॑ ॥ ८ ॥ ( ६।२।५ ) द्यौर्नय॑ऽइंद्रा॒भिभूमा॒र्यस्त॒स्थौर॒यिःशव॑सापृ॒त्सुजना॑न् । तंनः॑स॒हस्र॑भरमुर्व॒रासां॑द॒द्धिसू॑नोसहसोवृत्र॒तुरं॑ ॥ दि॒वोनतुभ्य॒मन्वि॑द्रस॒त्रासु॒र्यं॑दे॒वेभि॑र्धायि॒विश्वं॑ । अहिं॒यद्वृ॒त्रम॒पोव॑व्रि॒वांसं॒हन्नृ॑जीषि॒न्विष्णु॑नासचा॒नः ॥ तूर्व॒न्नोजी॑यान्तव॒स॒स्तवी॑यान्कृ॒तब्र॑ह्मेंद्रो॑वृ॒द्धम॑हाः । राजा॑भव॒न्मधु॑नः॒सोम्य॑स्य॒विश्वा॑सां॒यत्पु॒रांद॒र्त्नुमाव॑त् ॥ श॒तैर॑पद्र॒न्प॒णय॑ऽ

---

( ६।२।५ ) द्यौर्नयइतित्रयोदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप्सप्तमीविराट्पंक्तिः ।

इंद्रात्रदशोणयेकवयेर्कसातौ । वधैःशुष्णस्याशुषस्यमायाःपित्वोनारिरेचीत्किंचनप्र+ ॥ महोद्रुहोऽअपविश्वायुधायि वज्रस्ययत्पतनेपादिशुष्णः । उरुषसरथंसारथयेकरिंद्रःकुत्सायसूर्यस्यसातौ+ ॥ ९ ॥ प्रश्येनोनमदिरमंशुमस्मैशिरो दासस्यनमुचेर्मथायन् । प्रावन्नमींसाप्यंससंतंपृणग्रायासमिषासंस्वस्ति+ ॥ विपिप्रोरहिमायस्यदृह्ळाःपुरोवज्रिञ्छवसानदर्दः । सुदामन्तद्रेक्णोऽअप्रमृष्यमृजिश्वनेदात्रंदाशुषेदाः ॥ सवेतसुंदशमायंदशोणिंतूतुजिमिंद्रःस्वभिष्टिसुम्नः । आतुग्रंशश्वदिभंद्योतनायमातुर्नसीमुपसृजाऽइयध्यै ॥ सईस्पृधोवनतेऽअप्रतीतोबिभ्रद्वज्रंवृत्रहणंगभस्तौ । तिष्ठद्धरीऽअध्यस्तेवगर्तेवचोयुजावहतऽइंद्रमृष्वं+ ॥ सनेमतेवसानव्यऽइंद्रप्रपूरवस्तवंतऽएनायज्ञैः । सप्तयत्पुरःशर्मशारदीर्दर्धन्दासीःपुरुकुत्सायशिक्षन् ॥ त्वंवृधऽइंद्रपूर्व्योभूर्वरिवस्यन्नुशनेकाव्याय । परानववास्त्वमनुदेयंमहेपित्रेददाथस्वन्नपातं ॥ त्वंधुनिरिंद्रधुनिमतीर्ऋणोरपःसीरानस्रवंतीः । प्रयत्समुद्रमतिशूरपर्षिपारयातुवंशंयदुंस्वस्ति+ ॥ तवहत्यदिंद्रविश्वमाजौसस्तोधुनीचुमुरीयाहसिष्वप् । दीदयदित्तुभ्यंसोमेभिःसुन्वन्दभीतिरिध्मभृतिःपक्थ्य१र्कैः+ ॥ १० ॥ ( ६।२।६ ) इमाऽउत्वापुरुतमस्यकारोर्हव्यंवीरहव्याहवंते । धियोरथेष्ठामजरंनवीयोरयिर्विभूतिरीयते वचस्या+ ॥ तमुस्तुषऽइंद्रंयोविदानोगिर्वाहसंगीर्भिर्यज्ञवृद्धं । यस्यदिवमतिमह्नापृथिव्याःपुरुमायस्यरिरिचेमहि



---

( ६।२।६ ) इमाउत्वेतिद्वादशर्चस्यसूक्तस्यवार्हस्पत्योभरद्वाजइंद्रोनवम्येकादश्योर्विश्वेदेवास्त्रिष्टुप् ।

त्वं+ ॥ सऽइत्तमौवयुनंततन्वत्सूर्येणवयुनंवच्चकार । कदातेमर्ताऽअमृतस्यधामेयक्षंतोनमिनंतिस्वधावः ॥ यस्ताचका
रसकुहंस्विदिंद्रःकमाजनंचरतिकासुविक्षु । कस्तेयज्ञोमनसेशंवरायकोऽअर्कऽइंद्रकतमःसहोता ॥ इदाहितेवेविषतः
पुराजाःप्रत्नासऽआसुःपुरुकृत्सखायः । येमध्यमासऽउतनूतनासऽउतावमस्यपुरुहूतबोधि ॥ ११ ॥ तंपृच्छंतोवरा
सःपराणिप्रत्नातऽइंद्रश्रुत्यानुयेमुः । अर्चामसिवीरब्रह्मवाहोयादेवविद्मतात्त्वामहांतं ॥ अभित्वापाजोरक्षसोवितस्थे
महिजज्ञानमभितत्सुतिष्ठ । तवप्रत्नेनयुज्येनसख्यावज्रेणधृष्णोऽअपतानुदस्व ॥ सतुश्रुधींद्रनूतनस्यब्रह्मण्यतोवीर
कारुधायः । त्वंह्या३पिःप्रदिविपितृणांशश्वद्बभूथसुहवऽएष्टौ ॥ प्रोतयेवरुणंमित्रमिंद्रंमरुतःकृष्वावसेनोऽअद्य ।
प्रपूषणंविष्णुमग्निंपुरंधिंसवितारमोषधीःपर्वताँश्च ॥ इमऽउत्वापुरुशाकप्रयज्योजरितारोऽअभ्यर्चंत्यर्कैः । श्रुधीहव
माहुवतोहुवानोनत्वावाँऽअन्योऽअमृतत्वदस्ति ॥ नूमऽआवाचमुपयाहिविद्वान्विश्वेभिःसूनोसहसोयजत्रैः । येऽअ
ग्निजिह्वाऽऋतसापऽआसुर्येमनुंचक्रुरुपरंदसाय ॥ सनोबोधिपुरऽएतासुगेषूतदुर्गेषुपथिकृद्विदानः । येऽअश्रमासऽउर
वोवहिष्ठास्तेभिर्नऽइंद्राभिवक्षिवाजं ॥ १२ ॥ ( ६।२।७ ) यऽएकऽइद्धव्यश्चर्षणीनामिंद्रंतंगीर्भिरभ्यर्चऽआभिः ।
यःपत्यतेवृषभोवृष्ण्यावान्त्सत्यःसत्वापुरुमायःसहस्वान् ॥ तमुनःपूर्वेपितरोनवग्वाःसप्तविप्रासोऽअभिवाजयंतः ।

---

( ६।२।७ ) यएकइदित्येकादशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ।

नक्षद्दाभंततुरिंपर्वतेष्ठामद्रोघवाचंमतिभिःशविष्ठं ॥ तमीमहऽइंद्रमस्यरायःपुरुवीरस्यनृवतःपुरुक्षोः । योऽअस्कृधो
युरजरःस्वर्वान्तमाभरहरिवोमादयध्यै ॥ तन्नोविवोचोयदितेपुराचिज्जरितारऽआनशुःसुम्नमिंद्र । कस्तेभागःकिंव
योदुध्रखिद्वःपुरुहूतपुरूवसोसुरघ्नः+ ॥ तंपृच्छंतीवज्रहस्तंरथेष्ठामिंद्रंवेपीवक्करीयस्यनूगीः । तुविग्राभंतुविकूर्मिरभो
दांगातुमिषेनक्षतेतुम्रमच्छ ॥ १३ ॥ अयाहत्यंमाययावावृधानंमनोजुवास्वतवःपर्वतेन । अच्युताचिद्वीळितास्वोजो
रुजोविदृह्लाधृषताविरप्शिन् ॥ तंवोधियानव्यस्याशविष्ठंप्रत्नंप्रत्नवत्परितंसयध्यै । सनोवक्षदनिमानःसुवह्मेंद्रोविश्वा
न्यतिदुर्गहाणि ॥ आजनायद्रुहणेपार्थिवानिदिव्यानिदीपयोंतरिक्षा । तपावृषन्विश्वतःशोचिषातान्ब्रह्मद्विषेशोच
यक्षामपश्च ॥ भुवोजनस्यदिव्यस्यराजापार्थिवस्यजगतस्त्वेषसंदृक् । धिष्ववज्रंदक्षिणऽइंद्रहस्तेविश्वाऽअजुर्यदयसे
विमायाः+ ॥ आसंयतमिंद्रणःस्वस्तिंशत्रुतूर्यायबृहतीममृध्रां । ययादासान्यार्याणिवृत्राकरोवज्रिन्त्सुतुकानाहुषा
णि ॥ सनोनियुद्भिःपुरुहूतवेधोविश्ववाराभिरागहिप्रयज्यो । नयाऽअदेवोवरतेनदेवऽआभिर्याहितूयमामद्र्यद्रिक्+
॥ १४ ॥ (६।२।८) सुतऽइत्त्वंनिमिश्लऽइंद्रसोमेस्तोमेब्रह्मणिशस्यमानऽउक्थे । यद्वायुक्ताभ्यांमघवन्हरिभ्यांविभ्रद्व
ज्रंबाह्वोरिंद्रयासि ॥ यद्वादिविपार्येसुष्विमिंद्रवृत्रहत्येवसिशूरसातौ । यद्वादक्षस्यबिभ्युषोऽअबिभ्यदरंधयःशर्धतऽ

( ६।२।८ ) सुतइदितिदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ।

इंद्रदस्यून् ॥ पातासुतमिंद्रोऽअस्तुसोमंप्रनेनीरुग्रोजरितारमूती । कर्तावीरायसुष्वयऽउलोकंदातावसुस्तुवतेकीरये चित् ॥ गंतेयांतिसवनाहरिभ्यांबभ्रिर्वज्रंपपिःसोमंददिर्गाः । कर्तावीरंनर्यंसर्ववीरंश्रोताहवंगृणतःस्तोमवाहाः ॥ अ स्मैवयंयद्वावानतद्विविष्मऽइंद्राययोनःप्रदिवोऽअपस्कः । सुतेसोमेस्तुमसिशंसदुक्थेंद्रायब्रह्मवर्धनंयथासत् ॥ १५ ॥ ब्रह्माणिहिचकृषेवर्धनानितावत्तऽइंद्रमतिभिर्विविष्मः । सुतेसोमेसुतपाःशंतमानिरांद्र्याक्रियास्मवक्षणानियज्ञैः+ ॥ सनोबोधिपुरोळाशंरराणःपिबातुसोमंगोऽऋजीकमिंद्र । एदंबर्हिर्यजमानस्यसीदोरुंकृधित्वायतऽउलोकं+ ॥ समंद स्वाह्यनुजोषमुग्रप्रत्वायज्ञासऽइमेऽअश्नुवंतु । प्रेमेहवासःपुरुहूतमस्मेऽआत्वेयंधीरवसऽइंद्रयम्याः ॥ तंवःसखायःसं यथासुतेषुसोमेभिरींपृणताभोजमिंद्रं । कुवित्तस्माऽअसतिनोभरायनसुष्विमिंद्रोवसेमृधाति ॥ एवेदिंद्रःसुतेऽअस्ता विसोमेभरद्वाजेषुक्षयदिन्मघोनः । असद्यथाजरित्रऽउतसूरिरिंद्रोरायोविश्ववारस्यदाता+ ॥ १६ ॥ ( ६।३।१ ) वृषा मदऽइंद्रेश्लोकऽउक्थासचासोमेषुसुतपाऽऋजीषी । अर्चत्र्योमघवानृभ्यऽउक्थैर्द्युक्षोराजागिरामक्षितोतिः ॥ ततु रिर्वीरोनर्योविचेताःश्रोताहवंगृणतऽउर्व्यूतिः । वसुःशंसोनरांकारुधायावाजीस्तुतोविदथेदातिवाजं ॥ अक्षोनच क्र्योःशूरबृहन्प्रतेमह्नारिरिचेरोदस्योः । वृक्षस्यनुतेपुरुहूतवयाव्यू३तयोरुरुहुरिंद्रपूर्वीः+ ॥ शचीवतस्तेपुरुशाकशा

( ६।३।१ ) वृषामदइतिदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ।

कागवांमिवस्तुतयः संचरणीः । वत्सानांनतंतयस्तइंद्रदामन्वंतोअदामानःसुदामन् ॥ अन्यदद्यकर्वरमन्यदुश्वोस च्चसन्मुहुराचक्रिरिंद्रः । मित्रोनोअत्रवरुणश्चपूषार्योवशस्यपर्येतास्ति ॥ १७ ॥ वित्वदापोनपर्वतस्यपृष्ठादुक्थेभिरिं द्रानयंतयज्ञैः । तंत्वाभिःसुष्टुतिभिर्वाजयंतआजिंनजग्मुर्गिर्वाहोअश्वाः ॥ नयंजरंतिशरदोनमासानद्यावइंद्रम वकर्शयंति । वृद्धस्यंचिद्वर्धतामस्यतनूःस्तोमेभिरुक्थैश्चशस्यमाना ॥ नवीळवेनमतेनस्थिरायनशर्धतेदस्युजूतायस्त वान् । अज्राइंद्रस्यगिरयश्चिदृष्वागंभीरेचिंद्भवतिगाधमस्मै ॥ गंभीरेणनउरुणामत्रिन्प्रेषोयंधिसुतपावन्वाजा न् । स्थाऊषुऊर्ध्वऊतीअरिषण्यन्नक्तोर्व्युष्टौपरितक्म्यायां ॥ सचस्वनायमवसेअभीकइतोवातमिंद्रपाहिरि षः । अमाचैनमरण्येपाहिरिषोमदेमशतहिमाःसुवीराः ॥ १८ ॥ ( ६।३।२ ) यातऊतिरवमायापरमायामध्यमें द्रशुष्मिन्नस्ति । ताभिरूषुवृत्रहत्येवीर्नएभिश्चवाजैर्महान्नउग्र ॥ आभिःस्पृधोमिथतीररिषण्यन्नमित्रस्यव्यथयाम न्युमिंद्र । आभिर्विश्वाअभियुजोविषूचीरार्यायविशोवतारीर्दासीः ॥ इंद्रजामयउतयेजामयोर्वाचीनासोवनुषोयु युज्रे । त्वमेषांविथुराशवांसिजहिवृष्ण्यानिकृणुहीपराचः ॥ शूरोवाशूरंवनतेशरीरैस्तनूरुचातरुषियत्कृण्वैते । तोके वागोषुतनयेयदप्सुविक्रंदसीउर्वरासुब्रवैते ॥ नहित्वाशूरोनतुरोनधृष्णुर्नत्वायोधोमन्यमानोयुयोध । इंद्रनकिष्ट्वाप्र



---

( ६।३।२ ) यातऊतिरितिनवर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ।

त्वं॑स्त्येषां॒विश्वा॑जा॒तान्य॒भ्य॑सि॒तानि॑ ॥ १९ ॥ सप॑त्यत॑ऽउ॒भयो॒र्नृ॒म्णम॒यो॒र्यदी॑वे॒धसः॑समि॒थेहवं॑ते । वृ॒त्रेवा॑म॒होनृ॒वति॒ क्षये॑वा॒व्यच॑स्वं॒ता॒यदि॑वितं॑त॒सै॑ते ॥ अध॑स्मातेचर्ष॒णयो॒यदे॒जा॒निंद्र॑त्रा॒तोतभ॑वावरू॒ता । अ॒स्माका॑सो॒येनृत॑मासो॒ऽअर्य॑ऽ इंद्र॑सू॒रयो॑दधि॒रेपु॒रोनः॑ ॥ अनु॑तेदायिम॒हऽइं॑द्रि॒याय॑स॒त्रा॒ते॒विश्व॑म॒नु॒वृत्र॒हत्ये॑ । अनु॑क्षत्रमनु॒सहो॑यज॒त्रेंद्र॑दे॒वेभि॒रनु॑तेनृ॒ षह्ये॑ ॥ ए॒वान॒ःस्पृध॒ःसम॑जासमत्स्विंद्र॑रारं॒धिमिं॑थतीरदे॑वीः । वि॒द्याम॒वस्तो॒रव॑सागृ॒णंतो॑भ॒रद्वा॑जा॒ऽउ॒तत॑ऽइंद्र॒नूनं॑ ॥ २० ॥ ( ६।३।३ ) श्रु॒धीन॑ऽइंद्र॒ह्वया॑मसि॒त्वाम॒होवाज॑स्य॒सातौ॑वावृषा॒णाः । सं॒यद्विशो॑यं॑त॒शूर॑साता॒ऽउ॒ग्रंनोव॒ःपा र्ये॒ऽअह॒न्दाः ॥ त्वांवा॒जीह॑वतेवाजि॒ने॒योम॒होवाज॑स्य॒गध्य॑स्यसा॒तौ । त्वांवृ॒त्रेष्विंद्र॒सत्प॑तिं॒तरु॑त्रं॒त्वांच॑ष्टेमुष्टि॒हागोषु॒युध्य॑ न् ॥ त्वंक॒विंचो॑दयो॒र्कसा॑तौ॒त्वंकुत्सा॑य॒शुष्णं॑दा॒शुषे॑वर्क् । त्वंशिरो॑ऽअम॒र्मण॒ःपरा॑हन्नतिथि॒ग्वाय॒शंस्यं॑करि॒ष्यन् ॥ त्वंरथं॒प्रभ॑रो॒योधमृ॒ष्वमावो॒युध्यं॑तंवृ॒षभं॑दश॑द्युं । त्वंतु॒ग्रंवे॑त॒सवे॒सचा॑ह॒न्त्वंतु॒जिंगृ॒णंत॑मिंद्रतूतोः ॥ त्वंतदु॒क्थमिं॑द्रब॒र्ह णाकः॒प्रयच्छ॒तास॒हस्रा॑शूर॒दर्षि॑ । अव॑गि॒रेर्दासं॒शंब॑रंह॒न्प्राव॒ो॒दिवो॑दासंचि॒त्राभि॑रू॒ती ॥ २१ ॥ त्वंश्र॒द्धाभि॑र्मंदसा॒नः सोमै॑र्द॒भीत॑येचुमु॒रिमिं॑द्रसिष्वप् । त्वंर॒जिंपिठी॑नसेदश॒स्यन्ष॒ष्टिंस॒हस्रा॒शच्या॒सचा॑हन् ॥ अ॒हंच॒नतत्सू॒रिभि॑रानश्यां॒त व॒ज्याय॑ऽइंद्रसु॒म्नमोजः॑ । त्वया॒यत्स्तव॑तेसधवीरवी॒रास्त्रि॒वरू॑थेन॒नहु॑षाशवि॒ष्ठ ॥ व॒यंते॑ऽअ॒स्यामिं॑द्रद्यु॒म्नहू॑तौसखा॑यः

---

(६।३।३). श्रुधीनइत्यष्टर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ।

स्याममहिन्प्रेष्ठाः । प्रातर्दनिःक्षत्रश्रीरस्तुश्रेष्ठोघनेवृत्राणांसनयेधनानां ॥ २२ ॥ ( ६।३।४ ) किमस्यमदेकिम्वस्य पीताविंद्रःकिमस्यसख्येचकार । रणावायेनिषदिकिंतेऽअस्यपुराविविद्रेकिमुनूतनासः ॥ सदस्यमदेसद्धस्यपीताविं द्रःसदस्यसख्येचकार । रणावायेनिषदिसत्तेऽअस्यपुराविविद्रेसदुनूतनासः ॥ नहिनुतेमहिमनःसमस्यनमघवन्मघ वत्त्वस्यविद्म । नराधसोराधसोनूतनस्येंद्रनकिर्ददृशऽइंद्रियंते ॥ एतत्त्यत्तऽइंद्रियमचेतियेनावधीर्वरशिखस्यशेषः । वज्रस्ययत्तेनिहतस्यशुष्मात्स्वनाच्चिदिंद्रपरमोददार ॥ वधीदिंद्रोवरशिखस्यशेषोभ्यावर्तिनेचायमानायशिक्षन् । वृ चीवतोयद्धरियूपीयायांहन्पूर्वेऽअर्धेभियसापरोदर्त् ॥ २३ ॥ त्रिंशच्छतंवर्मिणऽइंद्रसाकंयव्यावत्यांपुरुहूतश्रवस्या । वृचीवंतःशरवेपत्यमानाःपात्राभिंदानान्यर्थान्यायन् ॥ यस्यगावावरुषासूयवस्यूऽअंतरूषुचरतोरेरिहाणा । ससृंज यायतुर्वशंपरादाद्वृचीवतोदैववातायशिक्षन् ॥ द्वयाँऽअग्नेरथिनोविंशतिंगावधूमतोमघवामह्यंसम्राट् । अभ्यावर्ती चायमानोददातिदूणाशेयंदक्षिणापार्थवानाम् ॥ २४ ॥ ( ६।३।५ ) आगावोऽअग्मन्नुतभद्रमक्रन्त्सीदंतुगोष्ठेरण यंत्वस्मे । प्रजावतीःपुरुरूपाऽइहस्युरिंद्रायपूर्वीरुषसोदुहानाः ॥ इंद्रोयज्वनेपृणतेचशिक्षत्युपेद्ददातिनस्वंमुषायति ।



---

(६।३।४)किमस्यमदइत्यष्टर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रः अंत्यास्वभ्यावर्तीचायमानोराजात्रिष्टुप्(चायमानस्यराज्ञोदानस्तुतिः)।(६।३।५) आगावइत्यष्टर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोगौस्त्रिष्टुप् ( द्वितीयायाइंद्रश्चांत्यपादस्यच ) द्वितीयाद्यास्तिस्रोजगत्योंत्यानुष्टुप् ।

भूयोभूयोर॒यिमिद॑स्यव॒र्धय॒न्नभि॑न्नेखि॒ल्येनिद॑धातिदेव॒युं+ ॥ नतान॑शंतिनद॑भातित॒स्कर॒ोनासा॑मामि॒त्रोव्यथि॒राद॑धर्षति । दे॒वाँश्च॒याभि॒र्यज॑ते॒दद॑ातिच॒ज्योगित्ताभि॑ःसचते॒गोप॑तिः॒सह+॥ नताऽअर्वा॑रे॒णुक॑काटोऽअश्नुतेनसं॑स्कृत॒त्रमुप॑यंति॒ताऽअ॒भि । उ॒रु॒गायमभ॑यं॒तस्य॒ताऽअनु॒गावो॒मर्त॑स्य॒विच॑रंति॒यज्व॑नः ॥ गावो॒भग॒ोगाव॒ऽइंद्रो॑मेऽअच्छा॒न्गाव॒ःसोम॑स्यप्रथ॒मस्य॑भ॒क्षः । इ॒मायागाव॒ःसज॑नास॒ऽइंद्र॑ऽइ॒च्छामीद्धृ॒दामन॑साचि॒दिंद्र॑ ॥ यूयं॑गावोमेदयथाकृ॒शंचि॑दश्री॒रंचि॑त्कृणुथासु॒प्रती॑कं । भ॒द्रंगृ॒हंकृ॑णुथभद्रवाचोबृ॒हद्वोवय॑ऽउच्यतेस॒भासु॑ ॥ प्र॒जाव॑तीःसूयव॑संरि॒शंती॑ःशु॒द्धाऽअ॒पःसु॑प्रपा॒णेपिब॑तीः । मावस्ते॒नऽई॑शत॒माघशं॑स॒ःपरि॑वोहे॒तीरु॒द्रस्य॑वृज्याः ॥ उप॒ेदमु॒पप॑र्चनमा॒सुगोषूप॑पृच्यतां । उप॑ऽऋष॒भस्य॒रेत॒स्युपे॑द्र॒तव॑वी॒र्ये॑* ॥ २५ ॥ इतिचतुर्थाष्टकेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥

त्रिंशाध्यायेवर्गाः २५ सूक्तानि १२ ऋचः १३२ ॥ त्यागः ॥ इंद्रायेदं. ६४ विश्वेभ्योदेवेभ्य. इंद्राये. विश्वेभ्योदेवेभ्य. इंद्राये. ५५ चायमानाये. गोभ्यइ. गवेंद्राभ्या. गोभ्य. ५ गवेंद्राभ्या. ॥ इतिचतुर्थेषष्ठः ॥

इंद्रंषड्भूयःपंचाभूरेकःसुहोत्रस्तुंचतुर्थींशक्तर्यपूर्व्यायओजिष्ठःशुनहोत्रस्तुंसंचत्वेकदानरस्तुंसत्रावागपान्मंद्रस्यैंद्रपिबाहेळमानःप्रत्यस्मैचतुष्कमानुष्टुभंबृहत्यंतंयस्यौष्णिहंयोरयिवश्चतुर्विंशतिःशंयुर्बार्हस्पत्योह्यादौषळनुष्टुभस्तिस्रश्चविराजोमध्यमैववासांयआनयत्र्यधास्त्रिंशद्गायत्र्यपुरूतममतिनिचृदधिबृबुःपादनिचृदंत्यानुष्टुप्तृचं

त्येबृवुस्तक्षादैवतंत्वामिद्धिषळूनाप्रागाथंस्वादुरेकत्रिंशद्वर्गः पंचादौसौम्यौगव्यूत्यर्धर्चोलिंगोक्तदैवतःप्रस्तो कइतित्रिष्टुवनुष्टुव्गायत्रीद्विपदासाञ्जयस्यप्रस्तोकस्यदानस्तुतिःपरौतृचौरथदुंदुभिदैवत्यावेंद्रोंत्योर्धर्चोयुजा नोबृहतीत्रिष्टुव्द्विपदादिवस्पृथिव्याजगती ॥ १ ॥ ॥ ॥ ॥ ॥



॥ हरिः ओम् ॥ ( ६।३।६ ) इंद्रंवोनरःसख्यायसेपुर्महोयंतःसुमतयेचकानाः । महोहिदातावज्रहस्तोऽअस्तिम हामुरण्वमवसेयजध्वं ॥ आयस्मिन्हस्तेनर्यामिमिक्षुरारथेहिरण्ययेरथेष्ठाः । आरश्मयोगभस्त्योःस्थूरयोराध्वन्नश्वा सोवृषणोयुजानाः+ ॥ श्रियेतेपादादुवऽआमिमिक्षुर्धृष्णुर्वज्रीशवसादक्षिणावान् । वसानोऽअत्कंसुरभिंदृशेकंस्व१ र्णनृंतविषिरोबभूथ ॥ ससोमऽआमिश्लतमःसुतोभूद्यस्मिन्पक्तिःपच्यतेसंतिधानाः । इंद्रंनरःस्तुवंतोब्रह्मकाराऽउ क्थाशंसंतोदेववाततमाः ॥ नतेऽअंतःशवसोधाय्यस्यवितुबाबधेऽरोदसीमहित्वा । आतासूरिःपृणतितूतुजानोयूथे वाप्सुसमीजमानऽऊती+ ॥ एवेदिंद्रःसुहवऽऋष्वोऽअस्तूतीऽअनूतीहिरिशिप्रःसत्वा । एवाहिजातोऽअसमात्योजाःपु रूचवृत्राहनतिनिदस्यून् ॥ १ ॥ ( ६।३।७ ) भूयऽइद्वावृधेवीर्यायँऽएकोऽअजुर्योदयतेवसूनि । प्ररिरिचेदिवऽइंद्रःपृथि व्याऽअर्धमिदस्यप्रतिरोदसीऽउभे+ ॥ अधामन्येबृहदसुर्यमस्ययानिदाधारनकिरामिनाति । दिवेदिवेसूर्योदर्शतोभू



(६।३।६) इंद्रंवइतिपङ्‌चस्यसूक्तस्यवार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् । (६।३।७) भूयइतिपंचर्चस्यसूक्तस्यवार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ।

द्विसद्मान्युर्वियासुक्रतुर्धात् ॥ अद्याचिन्नूचित्तदपोनदीनांयदाभ्योऽअरदोगातुमिंद्र । निपर्वताऽअद्मसदोनसेदुस्त्व
यादृह्लानिसुक्रतोरजांसि ॥ सत्यमित्तन्नत्वावाँऽअन्योऽअस्तींद्रदेवोनमर्त्योज्यायान् । अहन्नहिंपरिशयानमर्णोवासृ
जोऽअपोऽअच्छासमुद्रं+ ॥ त्वमपोविदुरोविषूचीरिंद्रदृह्लमरुजःपर्वतस्य । राजाभवोजगतश्चर्षणीनांसाकंसूर्यंजनय
न्द्यामुषासं ॥ २ ॥ ( ६।३।८ ) अभूरेकोरयिपतेरयीणामाहस्तयोरधिथाऽइंद्रकृष्टीः । वितोकेऽअप्सुतनयेचसूरेवो
चंतचर्षणयोविवाचः ॥ त्वद्भियेंद्रपार्थिवानिविश्वाच्युताचिच्च्यावयंतेरजांसि । द्यावाक्षामापर्वतासोवनानिविश्वंदृ
ह्लंभयतेऽअज्मन्नाते ॥ त्वंकुत्सेनाभिशुष्णमिंद्राशुषंयुध्यकुयवंगविष्टौ । दशप्रपित्वेऽअधसूर्यस्यमुषायश्चक्रमविवेरपां
सि ॥ त्वंशतान्यवशंवरस्यपुरोजघंथाप्रतीनिदस्योः । अशिक्षोयत्रशच्याशचीवोदिवोदासायसुन्वतेसुतक्रेभरद्वाजाय
गृणतेवसूनि ॥ ससत्यसत्वन्महतेरणायरथमातिष्ठतुविनृम्णभीमं । याहिप्रपथिन्नवसोपमद्रिक्प्रचश्रुतश्रावयचर्षणि
भ्यः ॥ ३ ॥ ( ६।३।९ ) अपूर्व्यापुरुतमान्यस्मैमहेवीरायतवसेतुराय । विरप्शिनेवज्रिणेशंतमानिवचांस्यासास्थ
विरायतक्षं ॥ समातरासूर्येणाकवीनामवासयद्रुजदद्रिंगृणानः । स्वाधीभिरृक्वभिर्वावशानऽउदुस्रियाणामसृजन्नि

(६।३।८) अभूरेकइतिपंचर्चस्यसूक्तस्यभारद्वाजःसुहोत्रइंद्रस्त्रिष्टुप्चतुर्थीशक्वरी ( सुहोत्रःशुनहोत्रोनरोगर्गऋजिश्वाइत्येतेऋषयोबृह
स्पतेःपौत्राउतदौष्यंतेर्भरतस्यपौत्राइतिविपर्ययेइतिहासःश्रूयते ) । ( ६।३।९ ) अपूर्व्येतिपंचर्चस्यसूक्तस्यभारद्वाजःसुहोत्रइंद्रस्त्रिष्टुप् ।

ऋक्सं. अ.४अ.७ ॥४५॥

दानं ॥ सवार्हिभिर्क्ककभिर्गोषुशश्वंन्मितज्ञुभिःपुरुकृत्वांजिगाय । पुरःपुरोहासखिभिःसखीयन्दृह्लारुरोजकविभिः कविःसन् ॥ सनीव्याभिर्जरितारमच्छामहोवाजेभिर्महद्भिश्चशुष्मैः । पुरुवीराभिर्वृषभक्षितीनामागिर्वणःसुवितायप्रयाहि ॥ ससर्गेणशवसातक्तोऽअत्यैरपऽइंद्रोदक्षिणतस्तुराषाट् । इत्थासृजानाऽअनपावृदर्थंदिवेदिवेविविषुरप्रमृष्यं ॥ ४ ॥ ( ६।३।१० ) यऽओजिष्ठऽइंद्रतंसुनोदामदोवृषन्तस्वभिष्टिर्दास्वान् । सौवश्व्यंयोवनवत्स्वश्वोवृत्रासमत्सुसासहदमित्रान् ॥ त्वांहींद्रावसेविवाचोहवंतेचर्षणयःशूरसातौ । त्वंविप्रेभिर्विपणीँरशायस्त्वोतऽइत्सनितावाजमर्वा ॥ त्वंताँऽइंद्रोभयाँऽअमित्रान्दासावृत्राण्यार्याचशूर । वधीर्वनेवसुधितेभिरत्कैरापृत्सुदर्षिनृणांनृतम ॥ सत्वंनऽइंद्राकवाभिरूतीसखाविश्वायुरविताबृधेभूः । स्वर्षातायद्धयामसित्वायुध्यंतोनेमधितापृत्सुशूर ॥ नूनंनऽइंद्रापरायचस्याभवामृळीकऽउतनोऽअभिष्टौ । इत्थागृणंतोमहिनस्यशर्मन्दिविष्यामपार्येगोषतमाः ॥ ५ ॥(६।३।११) संचत्वेजग्मुर्गिरऽइंद्रपूर्वीर्विचत्वद्यंतिविभ्वोमनीषाः । पुरानूनंचस्तुतयऽऋषीणांपस्पृध्रऽइंद्रेऽअध्युक्थार्का ॥ पुरुहूतोयःपुरुगूर्तऽऋभ्वाँऽएकःपुरुप्रशस्तोऽअस्तियज्ञैः । रथोनमहेशवसेयुजानोऽस्माभिरिंद्रोऽअनुमाद्योभूत् । नयंहिंसंतिधीतयोनवाणीरिंद्रंनक्षंतीदभिवर्धयंतीः । यदिस्तोतारःशतंयत्सहस्रंगृणंतिगिर्वणसंशंतदस्मै ॥ अस्माऽएतद्दि

मंडलं ६ अनु. ३ ॥४५॥

(६।३।१०) यओजिष्ठइतिपंचर्चस्यसूक्तस्यभारद्वाजःशुनहोत्रऋषिः ... (६।३।११) संचत्वइतिपंचर्चस्यसूक्तस्यभारद्वाजःशुनहोत्र-

व्यं१चेवंमासामिमिक्षऽइंद्रेन्यंयामिसोमंः । जनंनधन्वंन्नभिसंयदापः सात्रावावृधुर्हवनानियज्ञैः+ ॥ अस्मांऽएतन्मह्यां गूषमंस्माऽइंद्रायस्तोत्रंमतिभिरवाचि । असद्यथामहतिवृंत्रतूर्यंऽइंद्रोविश्वायुरविताावृधश्च ॥ ६ ॥ ( ६।३।१२ ) कदाभुवन्नथंक्षयाणिब्रह्मंकदास्तोत्रेसहस्रपोष्यंदाः । कदास्तोमंवासयोस्यरायाकदाधियंःकरसिवाजंरत्नाः ॥ कर्हिस्वित्तदिंद्रयन्नृभिर्नृन्वीरैर्वीरान्नीळयांसेजयाजीन् । त्रिधातुगाऽअधिजयासिगोष्विंद्रद्युम्नंस्वर्वद्धेह्यस्मे+ ॥ कर्हिस्वित्तदिंद्रयज्जरित्रेविश्वप्सुब्रह्मंकृणवंःशविष्ठ । कदाधियोननियुतोयुवासेकदागोमघाहवनानिगच्छाः ॥ सगोमघाजरित्रेऽअश्वंश्चंद्रावाजंश्रवसोऽअधिधेहिपृक्षः । पीपिहीषंःसुदुघामिंद्रधेनुंभरद्वाजेषुसुरुचोरुरुच्याः ॥ तमानूनंवृजनंमन्यथाचिच्छूरोयच्छंक्रविदुरोगृणीषे । मानिरंरंशुक्रदुघस्यधेनोरांगिरसान्ब्रह्मणाविप्रजिन्व ॥ ७ ॥ (६।३।१३) सत्रामदासस्तवंविश्वजंन्याःसत्रारायोधयेपार्थिवासः । सत्रावाजानामभवोविभक्तायद्देवेषुधारयथाऽअसुर्यं* ॥ अनुप्रयेजेजनऽओजोऽअस्यसत्रादंधिरेऽअनुंवीर्याय । स्यूमगृभेदुधयेवंतेचक्रतुंवृंजंत्यपिवृत्रहत्ये ॥ तंसध्रीचीरूतयोवृष्ण्यानिपौंस्यानिनियुतंःसश्चुरिंद्रं । समुद्रंनसिंधवऽउक्थशुष्माऽउरुव्यचंसंगिरऽआविंशंति ॥ सरायस्खामुपंसृजागृणानः

इंद्रस्त्रिष्टुप् । ( ६।३।१२ ) कदाभुवन्नितिपंचर्चस्यसूक्तस्यभारद्वाजोनरइंद्रस्त्रिष्टुप्। (६।३।१३) सत्रामदासइतिपंचर्चस्यसूक्तस्यभारद्वाजोनरइंद्रस्त्रिष्टुप् ।

पुरुश्चंद्रस्यत्वमिंद्रवस्वः । पतिर्बभूथासमोजनानामेकोविश्वस्यभुवनस्यराजा ॥ सतुश्रुधिश्रुत्यायोदुवोयुर्द्यौर्नभूमाभि रायोऽअर्यः । असोयथानःशवसाचकानोयुगेयुगेवयसाचेकितानः ॥ ८ ॥ ( ६।३।१४ ) अर्वाग्रथंविश्ववारंतउग्रें द्रयुक्तासोहरयोवहंतु । कीरिश्चिद्धित्वाहवतेस्वर्वानृधीमहिसधमादस्तेअद्य ॥ प्रोद्रोणेहरयःकर्माग्मन्पुनानास ऋज्यंतोअभूवन् । इंद्रोनोअस्यपूर्व्यःपपीयाद्युक्षोमदस्यसोम्यस्यराजा ॥ आसस्राणासःशवसानमच्छेंद्रंसुचक्रेरथ्या सोअश्वाः । अभिश्रवऋज्यंतोवहेयुर्नूचिन्नुवायोरमृतंविदस्येत् ॥ वरिष्ठोअस्यदक्षिणामियर्तींद्रोमघोनांतुविकूर्मि तमः । ययावज्रिवःपरियास्यंहोमघाचधृष्णोदयसेविसूरीन् ॥ इंद्रोवाजस्यस्थविरस्यदातेंद्रोगीर्भिर्वर्धतांवृद्धमहाः । इंद्रोवृत्रंहनिष्ठोअस्तुसत्वाताासूरिःपृणतितूतुजानः ॥ ९ ॥ ( ६।३।१५ ) अपादितउदुनश्चित्रतमोमहींभर्षद्द्युम तीमिंद्रहूतिं । पन्यसींधीतिंदैव्यस्ययामन्जनस्यरातिंवनतेसुदानुः ॥ दूराच्चिदावसतोअस्यकर्णाघोषादिंद्रस्यतन्यति ब्रुवाणः । एयमेनंदेवहूतिर्ववृत्यान्मद्र्यगिंद्रमियमृच्यमाना ॥ तंवोधियापरमयापुराजामजरमिंद्रमभ्यनूष्यर्कैः । ब्रह्माचगिरोदधिरेसमस्मिन्महांश्चस्तोमोअधिवर्धदिंद्रे ॥ वर्धाद्यंयज्ञउतसोमइंद्रंवर्धाद्ब्रह्मगिरउक्थाचमन्म । वर्धाहैनमुषसोयामन्नक्तोर्वर्धान्मासाःशरदोद्यावइंद्रं ॥ एवाजज्ञानंसहसेअसामिवावृधानंराधसेचश्रुताय । महा



---

(६।३।१४) अर्वाग्रथमितिपंचर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् । (६।३।१५) अपादितइतिपंचर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाज

मुग्रमवसेविप्रनूनमाविंवासेमवृत्रतूर्येषु ॥ १० ॥ ( ६।३।१६ ) मंद्रस्यकवेर्दिव्यस्यवह्नेर्विप्रमन्मनोवचनस्यमध्वः । अपानस्तस्यसचनस्यदेवेषोयुवस्वगृणतेगोऽअंग्राः ॥ अयमुशानःपर्यद्रिमुस्राऽऋतधीतिभिर्ऋतयुग्युजानः । रुजदरुग्णंविवलस्यसानुंपणींऽर्वचोभिरभियोधदिंद्रः ॥ अयंद्योतयदद्युतोव्य१क्तून्दोषावस्तोःशरदऽइंदुरिंद्र । इमंकेतुमंदधुर्नूचिदह्नांशुचिजन्मनऽउषसश्चकार ॥ अयंरोचयदरुचोरुचानो३यंवासयद्व्यृ१तेनपूर्वीः । अयमीयतऽऋतयुग्भिरश्वैःस्वर्विदानाभिनाचर्षणिप्राः+ ॥ नृगृणानोगृणतेप्रत्नराजन्निषःपिन्ववसुदेयायपूर्वीः । अपऽओषधीरविपावनानिगाऽअर्वतोनॄनृचसेरिरीहि ॥ ११ ॥ ( ६।३।१७ ) इंद्रपिबतुभ्यंसुतोमदायावस्यहरीविमुचासखाया । उतप्रगायगणऽआनिषद्याथायज्ञायगृणतेवयोधाः ॥ अस्यपिबयस्यजज्ञानऽइंद्रमदायक्रत्वेऽअपिबोविरप्शिन् । तमुतेगावोनरऽआपोऽअद्रिरिंदुंसमह्यन्पीतयेसमस्मै ॥ समिद्धेऽअग्नौसुतऽइंद्रसोमऽआत्वावहंतुहरयोवहिष्ठाः । त्वायतामनसाजोहवीमींद्रायाहिसुवितायमहेनः ॥ आयाहिशश्वदुशताययाथेंद्रमहामनसासोमपेयं । उपब्रह्माणिशृणवऽइमानोथातेयज्ञस्तन्वे३वयोधात् ॥ यदिंद्रदिविपार्येयदृधग्यद्वास्वेसदनेयत्रवासि । अतोनोयज्ञमवसेनियुत्वान्त्स

---

इंद्रस्त्रिष्टुप् । ( ६।३।१६ ) मंद्रस्यकवेरितिपंचर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् । ( ६।३।१७ ) इंद्रपिबेतिपंचर्चस्यसूक्तस्य बार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् ।

ऋक्सं. अ.४अ.७ ॥ ४७ ॥

जोषाःपाहिगिर्वणोमरुद्भिः ॥ १२ ॥ ( ६।३।१८ ) अहेळमानऽउपयाहियज्ञंतुभ्यंपवंतऽइंदवःसुतासः । गावोन वज्रिन्त्स्वमोकोऽअच्छेंद्रागहिप्रथमोयज्ञियानां ॥ यातेकाकुत्सुकृतायावरिष्ठाययाशश्वत्पिबसिमध्वऽऊर्मिं । तया पाहिप्रतेऽअध्वर्युरस्थात्संतेवज्रोवर्ततामिंद्रगव्युः ॥ एषद्रप्सोवृषभोविश्वरूपऽइंद्रायवृष्णेसमकारिसोमः । एतंपिब हरिवःस्थातरुग्रयस्येशिषेप्रदिवियस्तेऽअन्नं ॥ सुतःसोमोऽअसुतादिंद्रवस्यानयंश्रेयान्चिकितुषेरणाय । एतंतितिर्व ऽउपयाहियज्ञंतेनविश्वास्तविषीरापृणस्व ॥ ह्वयामसित्वेंद्रयाह्यर्वाङरंतेसोमस्तन्वेभवाति । शतक्रतोमादयस्वासुते षुप्रास्माँऽअवपृतनासुप्रविक्षु ॥ १३ ॥ ( ६।३।१९ ) प्रत्यस्मैपिपीषतेविश्वानिविदुषेभर । अरंगमायजग्मयेऽ पश्चाद्दघ्वनेनरे ॥ एमेनंप्रत्येतनसोमेभिःसोमपातमं । अमत्रेभिर्ऋजीषिणमिंद्रंसुतेभिरिंदुभिः ॥ यदीसुतेभिरिंदु भिःसोमेभिःप्रतिभूषथ ॥ वेदाविश्वस्यमेधिरोधृषत्तंतमिदेषते ॥ अस्माऽअस्माऽइदंधसोध्वर्योप्रभरासुतं । कुवित्समस्य जेन्यस्यशर्धतोभिशस्तेरवस्परत् ॥ १४ ॥ ( ६।३।२० ) यस्त्यच्छंबरंमदेदिवोदासायरंधयः । अयंससोमऽइंद्र तेसुतःपिब ॥ यस्यतीव्रसुतंमदंमध्यमंतंचरक्षसे । अयंस० ॥ यस्यगाऽअंतरश्मनोमदेदृह्ळाऽअवासृजः । अयंस० ॥

मंडलं ६ अनु. ३ ॥ ४७ ॥

( ६।३।१८ ) अहेळमानइतिपंचर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रस्त्रिष्टुप् । ( ६।३।१९ ) प्रत्यस्माइतिचतुर्ऋचस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रोनुष्टुबंत्याबृहती । ( ६।३।२० ) यस्त्यच्छंबरमितिचतुर्ऋचस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रउष्णिक् ।

यस्यमंदानोऽअंधसोमाघोनंदधिषेशर्वः । अयंस० ॥ १५ ॥ ( ६।४।१ ) योरयिवोरयिंतमोयोद्युम्नैर्द्युम्नवत्तमः । सोमःसुतःसऽइंद्रतेऽस्तिस्वधापतेमदः ॥ यःशग्मस्तुविशग्मतेरायोदामामतीनां । सोमःसुतः० ॥ येनवृद्धोनशवसा तुरोनस्वाभिरूतिभिः । सोमःसुतः० ॥ त्यमुवोऽअप्रहणंगृणीषेशवसस्पतिं । इंद्रंविश्वासाहंनरंमंहिष्ठंविश्वचर्षणिं ॥ यंवर्धयंतीद्गिरःपतिंतुरस्यराधसः । तमिन्न्वस्यरोदसीदेवीशुष्मंसपर्यतः ॥ १६ ॥ तद्वऽउक्थस्यबर्हणेंद्रायोपस्तृणीषणिं । विपोनयस्योतयोवियद्रोहंतिसक्षितः ॥ अविदद्दक्षंमित्रोनवीयान्पपानोदेवेभ्योवस्योऽअचैत् । ससवान्स्तौलाभिर्धौतरीभिरुरुष्यापायुरभवत्सखिभ्यः ॥ ऋतस्यपथिवेधाऽअपायिश्रियेमनांसिदेवासोऽअक्रन् । दधानोनाममहोवचोभिर्वपुर्दृशयेवेन्योव्यावः ॥ द्युमत्तमंदक्षंधेह्यस्मेसेधाजनानांपूर्वीररातीः । वर्षीयोवयःकृणुहिशचीभिर्धनस्यसातावस्माँऽअविड्ढि ॥ इंद्रतुभ्यमिन्मघवन्नभूमवयंदात्रेहरिवोमाविवेनः । नकिरापिर्ददृशेमर्त्यत्राकिमंगरध्रचोदनंत्वाहुः ॥ १७ ॥ माजस्वनेवृषभनोररीथामातेरेवतःसख्येरिषाम । पूर्वीष्टऽइंद्रनिष्षिधोजनेषुजह्यसुष्वीन्प्रवृहापृणतः ॥ उदभ्राणीवस्तनयन्नियर्तींद्रोराधांस्यश्व्यानिगव्या । त्वमसिप्रदिवःकारुधायामात्वादामानऽआदभन्मघो

---

(६।४।१) योरयिवइतिचतुर्विंशत्यृचस्यसूक्तस्यबार्हस्पत्यःशंयुरिंद्रस्त्रिष्टुबाद्याःषडनुष्टुभःसप्तम्यादितिस्रोविराट्पंक्तयः । ( तिसृष्वष्टम्येवविराट्सप्तमीनवम्यौतुत्रिष्टुभावितिकेचित् ) ।

नः ॥ अध्वर्योवीरप्रमहेसुतानामिंद्रायभरसह्यस्यराजा । यःपूर्व्याभिरुतनूतनाभिर्गीर्भिर्वावृधेगृणतामृषीणां ॥ अ
स्यमदेपुरुवर्पांसिविद्वानिंद्रोवृत्राण्यप्रतीजघान । तमुप्रहोषिमधुमंतमस्मैसोमंवीरायशिप्रिणेपिवध्यै ॥ पातासुतमिं
द्रोऽअस्तुसोमंहंतावृत्रंवज्रेणमंदसानः । गंतायज्ञंपरावतश्चिदच्छावसुर्धीनामविताकारुधायाः ॥ १८ ॥ इदंत्यत्पा
त्रमिंद्रपानमिंद्रस्यप्रियममृतमपायि । मत्सद्यथासौमनसायदेवंव्य१स्मद्द्वेषोयुयवद्व्यंहः ॥ एनामंदानोजहिशूरशत्रू
न्जामिमजामिंमघवन्नमित्रान् । अभिषेणाँऽअभ्या३देदिशानान्पराचऽइंद्रप्रमृणाजहीच ॥ आसुष्माणोमघवन्निंद्र
पृत्स्व१स्मभ्यंमहिवरिवःसुगंकः । अपांतोकस्यतनयस्यजेषऽइंद्रसूरीन्कृणुहिस्मानोऽअर्ध+ ॥ आत्वाहर्योवृषणोयुजा
नावृषरथासोवृषरश्मयोत्याः । अस्मत्रांचोवृषणोवज्रवाहोवृष्णेमदायसुयुजोवहंतु ॥ आतेवृषन्वृषणोद्रोणमस्थुर्घृत
प्रुषोनोर्मयोमदंतः । इंद्रप्रतुभ्यंवृषभिःसुतानांवृष्णेभरंतिवृषभायसोमं ॥ १९ ॥ वृषासिदिवोवृषभःपृथिव्यावृषा
सिंधूनांवृषभस्तियानां । वृष्णेतऽइंदुर्वृषभपीपायस्वादूरसोमधुपेयोवराय ॥ अयंदेवःसहसाजायमानऽइंद्रेणयुजाप
णिमस्तभायत् । अयंस्वस्यपितुरायुधानींदुरमुष्णादशिवस्यमायाः+ ॥ अयमकृणोदुषसःसुपत्नीरयंसूर्येऽअदधाज्ज्यो
तिरंतः । अयंत्रिधातुदिविरोचनेषुत्रितेषुविंददमृतंनिगूळ्हं ॥ अयंद्यावापृथिवीविष्कभायदयंरथमयुनक्सप्तरश्मिं ।
अयंगोषुशच्यापक्कमंतःसोमोदाधारदशयंत्रमुत्सं ॥ २० ॥ (परिशिष्टं) ॥ ॥ चक्षुश्चश्रोत्रंचमनश्चवाक्प्राणापानौदे

हऽइदंशरीरं ॥ द्वौप्रत्यंचांवनुलोमौविसर्गौवेतंत्वंमन्येदर्शयंत्रमुत्सँ ॥ नखंश्चपृष्ठश्चकरौंचबाहूजंघेचोरूऽउदरंशिरश्च ॥ रोमाणिमांसंरुधिरंस्थिमज्जमेतच्छरीरंजलबुंद्बुदोपमं ॥ भ्रुवौंललाटेचतथांचकर्णौहनूकपोलौछुबुकंस्तथाच । ओष्ठौ चदंताश्चतथैवजिह्वामेतच्छरीरंमुखरंलकोशं ॥ ) ( ६।४।२ ) यऽआनंयत्परावतःसुनीतीतुर्वशंयदुं । इंद्रःसनोयुवा सखा ॥ अविप्रेचिद्वयोदधदनाशुनांचिदर्वता । इंद्रोजेतांहितंधनं ॥ महीरस्यप्रणीतयःपूर्वीरुतप्रशस्तयः । नास्यक्षी यंतऽऊतयः । सखायोब्रह्मवाहसेर्चतप्रचंगायत । सहिनःप्रमतिर्मही ॥ त्वमेकस्यवृत्रहन्नविताद्वयोरसि । उतेदृ शेयथावयं ॥ २१ ॥ नयसीद्वतिद्विषःकृणोष्युक्थशंसिनः । नृभिःसुवीरऽउच्यसे ॥ ब्रह्माणंब्रह्मवाहसंगीर्भिःस खायमृग्मियं । गांनदोहसेहुवे ॥ यस्यविश्वानिहस्तयोरूचुर्वसूनिनिद्विता । वीरस्यपृतनाषहः ॥ विद्वह्वानिचिदद्रि वोजनानांशचीपते । वृहमायाऽअनानत ॥ तमुंत्वासत्यसोमपाऽइंद्रवाजानांपते । अहूमहिश्रवस्यवः ॥ २२ ॥ तमुंत्वायःपुरासिथयोवांनूनंहितेधनं । हव्यःसःश्रुधीहवं ॥ धीभिरर्वद्भिरर्वतोवाजाँऽइंद्रश्रवाय्यान् । त्वयांजेष्महि तंधनं ॥ अभूरुवीरगिर्वणोमहाँऽइंद्रधनेहिते । भरेवितंतसाय्यः ॥ यातऽऊतिरमित्रहन्मक्षूजवस्तमासति । तया नोहिनुहीरथं ॥ सरथेनरथीतमोस्माकेनाभियुग्वना । जेषिजिष्णोहितंधनं ॥ २३ ॥ यऽएकऽइत्तमुंष्टुहिकृष्टीनांविचं

( ६।४।२ ) यआनयदितित्रयस्त्रिंशदृचस्यसूक्तस्यबार्हस्पत्यःशंयुरिंद्रोंत्यतृचस्यबृवुस्तक्षागायत्री ९कोनत्रिंश्यतिनिचृदेकात्रिंशीपादनिचृ

र्षणिः । पतिर्जज्ञेवृषक्रतुः ॥ योगृणतामिदासिथापिरूतीशिवःसखा । सत्वंनऽइंद्रमृळय ॥ धिष्ववज्रंगभस्त्योर क्षोहत्यायवज्रिवः । सासहीष्ठाऽअभिस्पृधः ॥ प्रत्नंरयीणांयुजंसखायंकीरिचोदनं । ब्रह्मवाहस्तमंहुवे ॥ सहिविश्वा निपार्थिवाँऽएकोवसूनिपत्यते । गिर्वणस्तमोऽअध्रिगुः ॥ २४ ॥ सनोनियुद्भिरापृणकामंवाजेभिरश्विभिः । गोम द्भिर्गोपतेधृषत् ॥ तद्वोगायसुतेसचापुरुहूतायसत्वने । शंयद्गवेनशाकिने ॥ नघावसुर्नियमतेदानंवाजस्यगोमतः । यत्सीमुपश्रवद्गिरः ॥ कुवित्सस्यप्रहिव्रजंगोमंतंदस्युहागमत् । शचीभिरुपनोवरत् ॥ इमाऽउत्वाशतक्रतोभिप्रणोनु वुर्गिरः । इंद्रंवत्संनमातरः ॥ २५ ॥ दूणाशंसख्यंतवगौरसिवीरगव्यते । अश्वोऽअश्वायतेभव ॥ समंदस्वाह्यंध सोराधसेतन्वामहे । नस्तोतारंनिदेकरः ॥ इमाऽउत्वासुतेसुतेनक्षंतेगिर्वणोगिरः । वत्संगावोनधेनवः ॥ पुरूतमंपुरू णांस्तोतॄणांविवाचि । वाजेभिवाजयतां ॥ अस्माकमिंद्रभूतुतेस्तोमोवाहिष्ठोऽअंतमः । अस्मान्रायेमहेहिनु । अधि बृबुःपणीनांवर्षिष्ठेमूर्धन्नस्थात् । उरुःकक्षोनगांग्यः ॥ यस्यवायोरिवद्रवद्भद्रारातिःसहस्रिणी । सद्योदानायमंहते ॥ तत्सुनोविश्वेऽअर्यऽआसदागृणंतिकारवः । बृबुंसहस्रदातमंसूरिंसहस्रसातमं ॥ २६ ॥ ( ६।४।३ ) त्वामिद्धिहवा महेसातावाजस्यकारवः । त्वांवृत्रेष्विंद्रसत्पतिंनरस्त्वांकाष्ठास्ववंतः ॥ सत्वंनश्चित्रवज्रहस्तधृष्णुयामहस्तवानोऽअ

दंत्यानुष्टुप् । ( ६।४।३ ) त्वामिद्धीतिचतुर्दशर्चस्यसूक्तस्यबार्हस्पत्यःशंयुरिंद्रःअयुजोबृहत्यःयुजःसतोबृहत्यः ।

द्रिवः । गामश्वैरथ्यमिंद्रसंकिरसत्रावाजंनजिग्युषे ॥ यःसत्राहाविचर्षणिरिंद्रंतंहूमहेवयं । सहस्रमुष्कतुविनृम्णसत्पते भवासमत्सुनोवृधे+ ॥ वाधसेजनान्वृषभेवमन्युनाघृषौमीह्ळऋचीषम । अस्माकंबोध्यविताम्महाधनेतनूष्वप्सुसूर्ये ॥ इंद्रज्येष्ठंनआभरँओजिष्ठंपपुरिश्रवः । येनेमेचित्रवज्रहस्तरोदसीओभेसुशिप्रप्राः+ ॥ २७ ॥ त्वामुग्रमवसेचर्षणीसहंराजन्देवेषुहूमहे । विश्वासुनोविथुरापिब्दनावसोमित्रान्सुषहान्कृधि ॥ यदिंद्रनाहुषीष्वाँओजोनृम्णंचकृष्टिषु । यद्वापंचक्षितीनांद्युम्नमाभरसत्राविश्वानिपौंस्या ॥ यद्वातृक्षौमघवन्द्रुह्यावाजनेयत्पूरौकच्चवृष्ण्यं । अस्मभ्यंतद्रिरीहिसंनृषाह्येमित्रान्पृत्सुतुर्वणे ॥ इंद्रत्रिधातुशरणंत्रिवरूथंस्वस्तिमत् । छर्दिर्यच्छमघवद्भ्यश्चमह्यंचयावयादिद्युमेभ्यः ॥ येगव्यतामनसाशत्रुमादभुरभिप्रघ्नंतिधृष्णुया । अधस्मानोमघवन्निंद्रगिर्वणस्तनूपाअंतमोभव ॥ २८ ॥ अधस्मानोवृधेभवेंद्रनायमवायुधि । यदंतरिक्षेपतयंतिपर्णिनोदिद्यवस्तिग्ममूर्धानः ॥ यत्रशूरासस्तन्वोवितन्वतेप्रियाशर्मपितृणां । अधस्मायच्छतन्वेतनेचछर्दिरचित्तंयावयद्वेषः ॥ यदिंद्रसर्गेअर्वतश्चोदयासेमहाधने । असमनेअध्वनिवृजिनेपथिश्येनाँइवश्रवस्यतः+ ॥ सिंधूँरिवप्रवणआशुयायतोयदिक्रोशमनुष्वणि । आयेवयोनवर्वृतत्यामिषिगृभीताबाह्वोर्गवि ॥ २९ ॥ ( ६।४।४ ) स्वादुष्किलायंमधुमाँउतायंतीव्रःकिलायंरसवाँउतायं ।

---

( ६।४।४ ) स्वादुष्किलायमित्येकत्रिंशदृचस्यसूक्तस्यभारद्वाजोगर्गइंद्रःआद्यानांपंचानांसोमोऽगव्यूतीत्यस्यादेवभूमींद्राःप्रस्तोकइत्यादि

उतोन्व१स्यपपिवांसमिंद्रंनकश्चनसंहतऽआहवेषु ॥ अयंस्वादुरिहमदिष्ठऽआसयस्येंद्रोवृत्रहत्येममाद । पुरूणियश्च्यौत्नाशंवरस्यविनवतिंनवचदेह्यो३हन्+ ॥ अयंमेपीतऽउदियर्तिवाचमयंमनीषामुशतीमजीगः । अयंषळुर्वीरमिमीतधीरोनयाभ्योभुवनंकच्चनारे+ ॥ अयंसयोवरिमाणंपृथिव्यावर्ष्माणंदिवोऽअकृणोदयंसः । अयंपीयूषंतिसृषुप्रवत्सुसोमोदाधारोर्व१तरिक्षं ॥ अयंविदच्चित्रदृशीकमर्णःशुक्रसद्मनामुषसामनीके । अयंमहान्महतास्कंभनेनोद्यामस्तभ्नाद्वृषभोमरुत्वान् ॥ २० ॥ धृषत्पिबकलशेसोममिंद्रवृत्रहाशूरसमरेवसूनां । माध्यंदिनेसवनऽआवृषस्वरयिस्थानोरयिमस्मासुधेहि ॥ इंद्रप्रणःपुरऽएतेवपश्यप्रनोनयप्रतरंवस्योऽअच्छ । भवासुपारोऽअतिपारयोनोभवासुनीतिरुतवामनीतिः ॥ उरुंनोलोकमनुनेषिविद्वान्त्स्वर्वज्ज्योतिरभयंस्वस्ति । ऋष्वातऽइंद्रस्थविरस्यबाहूऽउपस्थेयामशरणाबृहंता ॥ वरिष्ठेनऽइंद्रवंधुरेधावहिष्ठयोःशतावन्नश्वयोरा । इषमावक्षीषांवर्षिष्ठांमानस्तारीन्मघवन्रायोऽअर्यः+ ॥ इंद्रमृळमह्यंजीवातुमिच्छचोदयधियमयसोनधारां । यत्किंचाहंत्वायुरिदंवदामितज्जुषस्वकृधिमादेववंतं ॥ २१ ॥ त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं । ह्वयामिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रः ॥



---

चतसृणांप्रस्तोकोवनस्पतइत्यादितिसृणारथउपश्वासयेतिद्वयोर्दुंदुभिःआमूरजइत्यस्यादुंदुभींद्रौ।त्रिष्टुप् एकोनविंशीबृहतीत्रयोविंश्यनुष्टुप् चतुर्विंशीगायत्रीपंचविंशीद्विपदासप्तविंशीजगती ।

इंद्रः सुत्रामा स्ववाँऽअवोभिः सुमृळीको भवतु विश्ववेदाः । बाधतां द्वेषोऽअभयं कृणोतु सुवीर्यस्य पतयः स्याम ॥ तस्य व यं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम । स सुत्रामा स्ववाँऽइंद्रोऽअस्मेऽआराच्चिद् द्वेषः सनुतर्युयोतु ॥ अवत्वेऽइंद्र प्र वतोनो र्मिर्गिरो ब्रह्माणि नियुतो धवंते । उरूनराधः सवनापुरूण्यपो गा वज्रिन्युवसे समिंदून् ॥ कऽईंस्तवत्कः पृणात्को यंजाते यदुग्रमिन्मघवा विश्वहावेत् । पादाविवप्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः ॥ ३२ ॥ शृण्वे वीरऽउग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विशऽइंद्रो मनुष्यान् * ॥ परापूर्वेषां सख्या वृणक्ति वितर्तुराणोऽअपरेभिरेति । अनानुभूतीरवधून्वानः पूर्वीरिंद्रः शरदस्तर्तरीति ॥ रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इंद्रो मायाभिः पुरुरूपऽईयते युक्ताह्यस्य हरयः शतादश ॥ युजानो हरिता रथे भूरित्वष्टेह राजति । को विश्वाहा द्विषतः पक्षऽआसतऽउतासीनेषु सूरिषु ॥ अगव्यूति क्षेत्रमागन्मदेवाऽउर्वी सती भूमिरंहूरणाभूत् । बृहस्पते प्रचिकित्सा गविष्टावित्था सते जरित्रऽइंद्र पंथाँ ॥ ३३ ॥ दिवे दिवे सदृशीरन्यमर्धं कृष्णाऽअसेधदप सद्मनोजाः । अहन्दासा वृषभो वस्नयंतोदव्रजे वर्चिनं शंबरंच ॥ प्रस्तोकऽइन्नुराधसस्तऽइंद्र दश कोशयीर्दश वाजिनोदात् । दिवोदासादतिथिग्वस्य राधः शांबरं वसु प्रत्यग्रभीष्म ॥ दशाश्वान्दश कोशान्दश वस्त्राधिभोजना । दशोहिरण्यपिंडान्दिवोदासादसानिषं ॥ दशरथान्प्रष्टिमतः शतंगाऽअथर्वभ्यः । अश्वथः पायवेदात् ॥ महिराधो विश्वजन्यं दधानान्भर

द्वाजान्त्सार्ज्ययोऽअभ्ययष्ट ॥ ३४ ॥ वनस्पतेवीड्वंगोहिभूयाऽअस्मत्सखाप्रतरणःसुवीरः । गोभिःसंनद्धोऽअसिवी ळयस्वास्थातातेजयतुजेत्वानि ॥ दिवस्पृथिव्याःपर्योजऽउद्धृतंवनस्पतिभ्यःपर्याभृतंसहः । अपामोज्मानंपरिगो भिरावृतमिंद्रस्यवज्रंहविषारथंयज ॥ इंद्रस्यवज्रोमरुतामनीकंमित्रस्यगर्भोवरुणस्यनाभिः । सेमांनोहव्यदातिंजुषा णोदेवरथप्रतिहव्यागृभाय ॥ उपश्वासयपृथिवीमुतद्यांपुरुत्रातेमनुतांविष्ठितंजगत् । सदुंदुभेसजूरिंद्रेणदेवैर्दूराद वीयोऽअपसेधशत्रून् ॥ आक्रंदयबलमोजोनऽआधानिष्टनिहिदुरितावाधमानः । अपप्रोथदुंदुभेदुच्छुनाऽइतऽइं द्रस्यमुष्टिरसिवीळयस्व ॥ आमूरजप्रत्यावर्तयेमाःकेतुमद्दुंदुभिर्वावदीति । समश्वपर्णाश्चरंतिनोनरोस्माकमिंद्ररथि नोजयंतु ॥ ३५ ॥ इतिचतुर्थाष्टकेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥

एकत्रिंशाध्यायेवर्गाः ३५ सूक्तानि १९ ऋचः १७६ ॥ त्यागः ॥ इंद्रायेदं.१२८ बृबवेतक्ष्णइ.३ इंद्राये.१४ सोमाये.५ इंद्राये.१४ देवभूमिबृहस्पतींद्रेभ्य. इंद्राये. प्रस्तोकाये.४ रथाये.३ दुंदुभ्या.२ दुंदुभींद्राभ्या. ॥ इतिचतुर्थसप्तमः ॥

यज्ञायज्ञाद्व्यधिकाशंयुस्तृणपाणिकंपृश्निसूक्तंप्रगाथौबृहतीमहासतोबृहतींमहाबार्हतबार्हतौप्रगाथावित्याग्ने य्यःकाकुभःप्रगाथःपुरउष्णिग्बृहत्यतिजगतीतिमारुत्यौत्यास्तिस्रोवासांलिंगोक्तदेवताःकाकुभःप्रगाथःपुरउ ष्णिग्बृहतीतिपौष्ण्यौबृहतीमहाबृहतीयवमध्यौत्यानुष्टुम्मारुत्यौत्याद्यावाभूम्योर्वापृश्नेर्वास्तुषेपंचोनऋजिश्वा

हवैश्वदेवंहयञकर्यंतंहुवेवउदुत्यत्षोळर्शंत्र्युष्णिगनुष्टुवंतंनतंत्र्यूनासप्तम्याद्याःषड्गायत्र्यश्चतुर्दशीजगतींसुहोत्रा
दयोनुक्तगोत्राभारद्वाजाःपौत्रांबृहस्पतेर्दौष्पंतेर्वाभरतस्यंवयंदशपौष्णंतद्गायत्रंवैयांपूषन्ननुष्टुप्संपूषन्नेहिवांष
ड्व्यंएनमंत्यानुष्टुबिंद्राग्वैंद्रंचंशुक्रंचतुष्कंद्वितीयाजगतींप्रनुदशैंद्राग्नंतुबार्हतंचतुरनुष्टुवंतंश्नथत्पंचोनागायत्रंतुं
त्रित्रिष्टुबादिंत्रिष्टुव्बृहत्यनुष्टुवंतंमियंषळूनासारस्वतंत्रिजगत्यादिंजगतीत्रिष्टुवंतं ॥ १ ॥ ॥ ॥

॥ हरिःओम् ॥ ( ६।४।५ ) यज्ञायंज्ञावोऽअग्नयेंगिरागिराचदक्षंसे । प्रप्रंवयमंमृतंजातवेदसंप्रियंमित्रंनशंसि
षं ॥ ऊर्जोनपातंसहिनायमंस्मयुर्दाशेमहुव्यदातये । भुवद्वाजेष्ववितांभुवद्वृधऽउतत्राताततनूनां ॥ वृषाह्यग्नेऽअज
रोमहान्विभास्यर्चिषा । अजंस्रेणशोचिषाशोशुंचच्छुचेसुदीतिभिःसुदीदिहि ॥ महोदेवान्यजंसियक्ष्यानुषक्तवक्रत्वो
तदंसनां । अर्वाचंःसींकृणुह्यग्नेवंसेरास्ववाजोतवंस्व ॥ यमापोऽअद्रयोवनागर्भंमृतस्यपिप्रति । सहंसायोमंथितोजायंते
नृभिंःपृथिव्याऽअधिसानंवि ॥ १ ॥ आयःपप्रौभानुनारोदंसीऽउभेधूमेनंधावतेदिवि । तिरस्तमोंदद्दशऽऊर्म्यास्वा

---

(६।४।५) यज्ञायज्ञावइतिद्वाविंशत्यृचस्यसूक्तस्यबार्हस्पत्यःशंयुस्तृणपाणिःआद्यानांदशानामग्निरेकादश्यादिपंचानांमरुतस्ततश्चतुर्णां
पूषाततस्तृचस्यमरुतः ( त्रयोदश्यादितिसृणामिंद्रार्यमपूषविष्णवाद्यालिंगोक्तदेवतावाअंत्ययोर्द्यावाभूमीवापृश्निर्वा ) आद्याबृहतीद्विती
यासतोबृहतीतृतीयाबृहतीचतुर्थीसतोबृहतीपंचमीबृहतीषष्ठीमहासतोबृहतीसप्तमीमहाबृहतीअष्टमीमहासतोबृहतीनवमीबृहतीदशमीस

ऋक्सं. अ.४ अ.८ ॥ ५२ ॥

श्यावाश्वस्वंरुषोवृषाश्यावाऽअंरुषोवृषा ॥ बृहद्भिरग्नेऽअर्चिभिःशुक्रेणदेवशोचिषा । भरद्वाजेसमिधानोयविष्ठ्यरेवन्नः शुक्रदीदिहिद्युमत्पावकदीदिहि ॥ विश्वासांगृहपतिर्विशामसित्वमग्नेमानुषीणां । शतंपूर्भिर्यविष्ठपाह्यंहसःसमेद्धारं शतंहिमाःस्तोतृभ्योयेचददति ॥ त्वंनश्चित्रऽऊत्यावसोराधांसिचोदय । अस्यरायस्त्वमग्नेरथीरसिविदागाधंतुचेतु नः ॥ पर्षितोकंतनयंपर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः । अग्नेहेळांसिदैव्यायुयोधिनोदेवानिह्वरांसिच ॥ २ ॥ आसखायः सबर्दुघांधेनुमजध्वमुपनव्यसावचः । सृजध्वमनपस्फुरां ॥ याशर्धायमारुतायस्वभानवेश्रवोमृत्युधुक्षत । यामृळीकेमरुतांतुराणांयासुम्नैरेवयावरी ॥ भरद्वाजायावधुक्षतद्विता । धेनुंचविश्वदोहसमिषंचविश्वभोजसं ॥ तंवऽइंद्रंनसुक्रतुंवरुणमिवमायिनं । अर्यमणंनमंद्रंसृप्रभोजसंविष्णुंनस्तुषऽआदिशे ॥ त्वेषंशर्धोनमारुतंतुविष्वण्यनर्वाणंपूषणं संयथाशता । संसहस्राकारिषच्चर्षणिभ्यऽआँऽआविर्गूह्ळावसूकरत्सुवेदानोवसूकरत् ॥ आमापूषन्नुपद्रवशंसिषंनुतेऽअपिकर्णऽआघृणे । अघाऽअर्योऽअरातयः ॥ ३ ॥ माकाकंबीरमुद्बृहोवनस्पतिमशस्तीर्विहिनीनशः । मोतसूरोऽअहऽएवाचनग्रीवाऽआदधतेवेः[+] ॥ दृतेरिवतेवृकमस्तुसख्यं । अच्छिद्रस्यदधन्वतःसुपूर्णस्यदधन्वतः ॥ पुरोहिम

मंडलं. ६ अनु. ४ ॥ ५२ ॥

---

तोबृहतीएकादशीककुप्द्वादशीसतोबृहतीत्रयोदशीपुरउष्णिक्चतुर्दशीबृहतीपंचदश्यतिजगतीषोडशीककुप्सप्तदशीसतोबृहतीअष्टादशी पुरउष्णिक्एकोनविंशीबृहतीविंशीबृहतीएकविंशीमहाबृहतीयवमध्याद्वाविंश्यनुष्टुप् । (पृश्निसूक्तमिदं) ।

त्यैरासिसमोदेवैरुतश्रिया । अभिख्यःपूषन्पृतनासुनस्त्वमवानूनंयथापुरा+ ॥ वामीवामस्यधूतयःप्रणीतिरस्तुसूनृ
ता । देवस्यवामरुतोमर्त्यस्यवेजानस्यप्रयज्यवः ॥ सद्यश्चिद्यस्यचर्कृतिःपरिद्यांदेवोनैतिसूर्यः । त्वेषंशवोदधिरेनाम
यज्ञियंमरुतोवृत्रहंशवोज्येष्ठंवृत्रहंशवः ॥ सकृद्धद्यौरजायतसकृद्भूमिरजायत । पृश्न्यादुग्धंसकृत्पयस्तदन्योनानुजाय
ते ॥ ४ ॥ परिशिष्टं ॥ सूक्तांतेतृणान्यन्नावरण्येवोदकेपिवा । यत्स्तृणैरध्ययनंतदधीतंस्तृणानिभवतेभव ॥ वा
पीकूपतडागानांसमुद्रंगच्छस्वाहा ॥ ) ( ६।४।६ ) स्तुषेजनंसुव्रतंनव्यसीभिर्गीर्भिर्मित्रावरुणासुम्नयंता । तऽआग
मंतुतऽइहश्रुवंतुसुक्षत्रासोवरुणोमित्रोऽअग्निः+॥ विशोविशऽईड्यमध्वरेष्वदृप्तक्रतुमरतिंयुवत्योः । दिवःशिशुंसहसः
सूनुमग्निंयज्ञस्यकेतुमरुषंयजध्यै ॥ अरुषस्यदुहितराविरूपेस्तृभिरन्यापिपिशेसूरोऽअन्या । मिथस्तुराविचरंतीपा
वकेमन्मश्रुतंनक्षतऽऋच्यमाने ॥ प्रवायुमच्छाबृहतीमनीषाबृहद्रयिंविश्ववारंरथप्रां । द्युतद्यामानियुतःपत्यमानः
कविःकविमियक्षसिप्रयज्यो ॥ समेवपुश्छदयदश्विनोर्योरथोविरुक्मान्मनसायुजानः । येननरानासत्येषयध्यैवर्ति
र्याथस्तनयायत्मनेच ॥ ५ ॥ पर्जन्यवातावृषभापृथिव्याःपुरीषाणिजिन्वतमप्यानि । सत्यश्रुतःकवयोयस्यगीर्भिर्ज

(६।४।६) स्तुषेजनमितिपंचदशर्चस्यसूक्तस्यभारद्वाजऋजिश्वाविश्वेदेवास्त्रिष्टुबंत्याशक्वरी (इतश्चत्वारिवैश्व. । भेदपक्षे—विश्वेदेवाः १ अग्निः १ अहोरात्रे १ वायुः १ अश्विनौ १ विश्वेदेवाः १ सरस्वती १ पूषा १ अग्नित्वष्टारौ १ रुद्रः १ मरुतः २ विष्णुः १ विश्वेदेवाः २ एवं १५ )

ऋक्सं. मंडलं ६

अ.४अ.८ अनु. ५

॥ ५३ ॥

गंतःस्यातर्जगदाकृणुध्वं ॥ पावीरवीकन्याचित्रायुःसरस्वतीवीरपत्नीधियंधात् । ग्नाभिरच्छिद्रंशरणंसजोषादुराधर्षंगृणतेशर्मयंसत् ॥ पथस्पथःपरिपतिंवचस्याकामेनकृतोऽअभ्यानळर्कं । सनोरासच्छुरुधश्चंद्राग्राधियंधियंसीषधातिप्रपूषा ॥ प्रथमभाजंयशसंवयोधांसुपाणिंदेवंसुगभस्तिमृभ्वं । होतायक्षद्यजतंपस्त्यानामग्निस्त्वष्टारंसुहवंविभावा ॥ भुवनस्यपितरंगीर्भिराभीरुद्रंदिवावर्धयारुद्रमक्तौ । बृहंतमृष्वमजरंसुषुम्नमृधग्घुवेमकविनेषितासः ॥ ६ ॥ आयुवानःकवयोयज्ञियासोमरुतोगंतगृणतोवरस्यां । अचित्रंचिद्धिजिन्वथावृधंतऽइत्थानक्षंतोनरोऽअंगिरस्वत् ॥ प्रवीरायप्रतवसेतुरायाजायूथेवपशुरक्षिरस्तं । सपिस्पृशतितन्विश्रुतस्यस्तृभिर्ननाकंवचनस्यविपः ॥ योरजांसिविममेपार्थिवानित्रिश्चिद्विष्णुर्मनवेबाधितायं । तस्यतेशर्मन्नुपदद्यमानेरायामदेमतन्वा३तनाच ॥ तन्नोहिर्बुध्न्योऽअद्भिरर्कैस्तत्पर्वतस्तत्सविताचनोधात् । तदोषधीभिरभिरातिषाचोभगःपुरंधिर्जिन्वतुप्ररायें ॥ नूनोरयिंरथ्यंचर्षणिप्रांपुरुवीरंमहऽऋतस्यगोपां । क्षयंदाताजरंयेनजनान्त्स्पृधोऽअदेवीरभिचक्रमामविशऽआदेवीरभ्य३श्नवाम ॥ ७ ॥ (६।५।२) हुवेवोदेवीमदितिंनमोभिर्मृळीकायवरुणंमित्रमग्निं । अभिक्षदामर्यमणंसुशेवंत्रातृन्देवान्त्सवितारंभगं

॥ ५३ ॥

---

(६।५।१) हुवेवइतिपंचदशर्चस्यसूक्तस्यभरद्वाजऋषिर्विश्वेदेवास्त्रिष्टुप् (अंत्यपादे विश्वे. १ सूर्यः १ द्यावापृथिवी १ मरुतः २ इंद्रः १ अपः १ सविता १ अग्निः १ अश्विनौ १ विश्वे० ५ एवं १५)।

च ॥ सुज्योतिषःसूर्यदक्षपितॄननागास्त्वेसुमहोवीहिदेवान् । द्विजन्मानोयऽऋतसापःसत्याःस्वर्वंतोयजताऽअग्निजि
ह्वाः+ ॥ उतद्यावापृथिवीक्षत्रमुरुबृहद्रोदसीशरणंसुषुम्ने । महस्करथोवरिवोयथानोस्मेक्षयायधिषणेऽअनेहः+ ॥
आनोरुद्रस्यसूनवोनमंतामद्याहूतासोवसवोधृष्टाः । यदीमर्भेमहतिवाहितासोबाधेमरुतोऽअह्वामदेवान्+ ॥ मिम्य
क्षयेषुरोदसीनुदेवीसिषक्तिपूषाऽअभ्यर्धयज्वा । श्रुत्वाहवंमरुतोयद्धयाथभूमारेजंतेऽअध्वन्निप्रविक्ते ॥ ८ ॥ अभि
त्यंवीरंगिर्वणसमर्चेंद्रंब्रह्मणाजरितर्नवेन । श्रवदिद्धवमुपचस्तवानोरासद्वाजाँऽउपमहोगृणानः+ ॥ ओमानमापो
मानुषीरमृक्तंधाततोकायतनयायशंयोः । यूयंहिष्ठाभिषजोमातृतमाविश्वस्यस्थातुर्जगतोजनित्रीः ॥ आनोदेवःस
वितात्रायमाणोहिरण्यपाणिर्यजतोजगम्यात् । योदत्रवाँऽउषसोनप्रतीकंव्यूर्णुतेदाशुषेवार्याणि ॥ उतत्वंसूनोसह
सोनोऽअद्यादेवाँऽअस्मिन्नध्वरेववृत्याः । स्यामहंतेसदमिद्रातौतवस्यामग्नेवसासुवीरः ॥ उतत्यामेहवमाजग्म्यातंना
सत्याधीभिर्युवमंगविप्रा । अत्रिंनमहस्तमसोमुमुक्तंतूर्वतंनरादुरितादभीके ॥ ९ ॥ तेनोरायोद्युमतोवाजवतोदाता
रोभूतनृवतःपुरुक्षोः । दशस्यंतोदिव्याःपार्थिवासोगोजाताऽअप्यामृळताचदेवाः ॥ तेनोरुद्रःसरस्वतीसजोषामीह्ळु
ष्मंतोविष्णुर्मृळंतुवायुः । ऋभुक्षावाजोदैव्योविधातापर्जन्यावातापिप्यतामिषंनः ॥ उतस्यदेवःसविताभगोनोपांन
पादवतुदानुपप्रिः । त्वष्टादेवेभिर्जनिभिःसजोषाद्यौर्देवेभिःपृथिवीसमुद्रैः+ ॥ उतनोहिर्बुध्न्यःशृणोत्वजऽएकपात्पृ

थिवीसमुद्रः । विश्वेदेवाऽऋतावृधोहुवानास्तुतामंत्राःकविशस्ताऽअवंतु ॥ एवानपातोममतस्यधीभिर्भरद्वाजाऽअ
भ्यर्चंत्यर्कैः । ग्नाहुतासोवसवोधृष्टाविश्वैःस्तुतासोभूतायजत्राः ॥१०॥ (६।५।२) उदुत्यच्चक्षुर्महिमित्रयोराँऽएतिप्रियं
वरुणयोरदब्धं । ऋतस्यशुचिदर्शतमनीकंरुक्मोनदिवऽउदिताव्यद्यौत् ॥ वेदयस्त्रीणिविदथान्येषांदेवानांजन्म
सनुतराचविप्रः । ऋजुमर्तेषुवृजिनाचपश्यन्नभिचष्टेसूरोऽअर्यऽएवान् ॥ स्तुषऽउवोमहऽऋतस्यगोपानदितिंमित्रंवरु
णंसुजातान् । अर्यमणंभगमदब्धधीतीनच्छावोचेसधन्यःपावकान्+ ॥ रिशादसःसत्पतीँऽरदब्धान्महोराज्ञःसुवस
नस्यदातॄन् । यूनःसुक्षत्रान्क्षयतोदिवोनॄनादित्यान्याम्यदितिंदुवोयु+ ॥ द्यौ३ष्पितःपृथिविमातरध्रुगग्नेभ्रातर्वसवो
मृळतानः । विश्वऽआदित्याऽअदितेसजोषाऽअस्मभ्यंशर्मवहुलंवियंत ॥ ११ ॥ मानोवृकायवृक्येसमस्माऽअघाय
तेरीरधतायजत्राः । यूयंहिष्ठारथ्योनस्तनूनांयूयंदक्षस्यवचसोबभूव+ ॥ मावऽएनोऽअन्यकृतंभुजेममातत्कर्मवसवो
यच्चयध्वे । विश्वस्यहिक्षयथविश्वदेवाःस्वयंरिपुस्तन्वंरीरिषीष्ट ॥ नमऽइदुग्रंनमऽआविवासेनमोदाधारपृथिवीमुत
द्यां । नमोदेवेभ्योनमऽईशऽएषांकृतंचिदेनोनमसाविवासे ॥ ऋतस्यवोरथ्यःपूतदक्षानृतस्यपस्त्यसदोऽअदब्धान् ।



( ६।५।२ ) उदुत्यदितिषोळशर्चस्यसूक्तस्यभारद्वाजऋजिश्वाविश्वेदेवास्त्रिष्टुप्त्रयोदश्याद्यास्तिस्रउष्णिहोंत्यानुष्टुप् । (भेदपक्षे–सूर्यः२ विश्वेदेवाः १० अग्निः १ सोमः १ विश्वेदेवाः २ एवं १६)।

ताँऽआनमोभिरुरुचक्षसोनृन्विश्वान्वऽआनमेमहोयजत्राः ॥ तेहिश्रेष्ठवर्चसस्तऽउनस्तिरोविश्वानिदुरितानयंति । सुक्षत्रासोवरुणोमित्रोऽअग्निर्ऋतधीतयोवक्मराजसत्याः ॥ १२ ॥ तेनऽइंद्रःपृथिवीक्षामवर्धन्पूषाभगोऽअदितिःपंचजनाः । सुशर्माणःस्ववसःसुनीथाभवंतुनःसुत्रात्रासःसुगोपाः+ ॥ नूसद्मानंदिव्यंनंशिदेवाभारद्वाजःसुमतियातिहोता । आसानेभिर्यजमानोमियेधैर्देवानांजन्मवसूयुर्ववंद ॥ अपत्यंवृजिनंरिपुंस्तेनमग्नेदुराध्यं । दविष्ठमस्यसत्पतेकृधीसुगं+ ॥ ग्रावाणःसोमनोहिकंसखित्वनायवावशुः । जहीन्य१त्रिणंपणिंवृकोहिषः+ ॥ यूयंहिष्ठासुदानवऽइंद्रज्येष्ठाऽअभिद्यवः । कर्तानोऽअध्वन्नासुगंगोपाऽअमा+ ॥ अपिपंथामगन्महिस्वस्तिगामनेहसं । येनविश्वाःपरिद्विषोवृणक्तिविंदतेवसु ॥ १३ ॥ ( ६।५।३ ) नतद्दिवानपृथिव्यानुमन्येनयज्ञेननोतशमीभिराभिः । उब्जंतुतंसुभ्व१ःपर्वतासोनिहीयतामतियाजस्ययष्टा+ ॥ अतिवायोमरुतोमन्यतेनोब्रह्मवायःक्रियमाणंनिनित्सात् । तपूंषितस्मैवृजिनानिसंतुब्रह्मद्विषमभितंशोचतुद्यौः+ ॥ किमंगत्वाब्रह्मणःसोमगोपांकिमंगत्वाहुरभिशस्तिपांनः । किमंगनःपश्यसिनिद्यमानान्ब्रह्मद्विषेतपुषिंहेतिमस्य ॥ अवंतुमामुषसोजायमानाऽअवंतुमासिंधवःपिन्वमानाः । अवंतुमापर्वतासो

( ६।५।३ ) नतद्दिवेतिसप्तदशर्चस्यसूक्तस्यभारद्वाजऋजिश्वाविश्वेदेवास्त्रिष्टुप्सप्तम्याद्याःषड्गायत्र्यश्चतुर्दशीजगती । ( भेदपक्षे—विश्वेदेवाः २ सोमः १ विश्वे० ८ अग्निः १ विश्वे० ३ अग्निपर्जन्यौ १ विश्वे० १ एवं १७ ) ।

ध्रुवासोवंतुमापितरोदेवहूतौ ॥ विश्वदानींसुमनसःस्यामपश्येमनुसूर्यमुच्चरंतं । तथाकरद्वसुपतिर्वसूनांदेवाँऽओहा नोवसागमिष्ठः ॥ १४ ॥ इंद्रोनेदिष्ठमवसागमिष्ठःसरस्वतीसिंधुभिःपिन्वमाना । पर्जन्योनऽओषधीभिर्मयोभुरग्निः सुशंसःसुहवःपितेव ॥ विश्वेदेवासऽआगतशृणुतामऽइमंहवं । एदंबर्हिर्निषीदत ॥ योवोदेवाघृतस्नुनाहव्येनप्रतिभू षति । तंविश्वऽउपगच्छथ ॥ उपनःसूनवोगिरःशृण्वंत्वमृतस्यये । सुमृळीकाभवंतुनः ॥ विश्वेदेवाऽऋतावृधऽऋतु भिर्हवनश्रुतः । जुषंतांयुज्यंपयः ॥ १५ ॥ स्तोत्रमिंद्रोमरुद्गणस्त्वष्टृमान्मित्रोऽअर्यमा । इमाहव्याजुषंतनः ॥ इमं नोऽअग्नेऽअध्वरंहोतर्वयुनशोयज । चिकित्वान्दैव्यंजनं ॥ विश्वेदेवाःशृणुतेमंहवंमेयेऽअंतरिक्षेयऽउपद्यविष्ठ । येऽ अग्निजिह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयध्वं ॥ विश्वेदेवाममशृण्वंतुयज्ञियाऽउभेरोदसीऽअपांनपाच्चम न्म । मावोवचांसिपरिचक्ष्याणिवोचंसुम्नेष्विद्वोऽअंतमामदेम ॥ येकेचज्मामहिनोऽअहिमायादिवोजज्ञिरेऽअपांस धस्थे । तेऽअस्मभ्यमिषयेविश्वमायुःक्षपऽउस्रावरिवस्यंतुदेवाः ॥ अग्नीपर्जन्याववतंधियंमेस्मिन्हवेसुहवासुष्टुतिंनः । इळामन्योजनयद्गर्भमन्यःप्रजावतीरिषऽआधत्तमस्मे ॥ स्तीर्णेबर्हिषिसमिधानेऽअग्नौसूक्तेनमहानमसाविवासे । अस्मिन्नोऽअद्यविदथेयजत्राविश्वेदेवाहविषिमादयध्वं ॥ १६ ॥ ( ६।५।४ ) वयमुत्वापथस्पतेरथंनवाजसातये ।





( ६।५।४ ) वयमुत्वेतिदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजःपूषागायत्रीअष्टम्यनुष्टुप् ।

धियेपूषन्नयुज्महि ॥ अभिनोनर्यंवसुंवीरंप्रयतदक्षिणं । वामंगृहपतिंनय ॥ अदित्संतंचिदाघृणेपूषन्दानायचो
दय । पणेश्चिद्विम्रदामनः ॥ विपथोवाजसातयेचिनुहिविमृधोजहि । साधंतामुग्रनोधियः ॥ परितृंधिपणीनामारं
यहृदयाकवे । अथेमस्मभ्यंरंधय ॥ १७ ॥ विपूषन्नारयातुदपणेरिच्छहृदिप्रियं । अथें० ॥ आरिखकिकिराकृणुप
णीनांहृदयाकवे । अथें० ॥ यांपूषन्ब्रह्मचोदनीमारांबिभर्ष्याघृणे । तयासमस्यहृदयमारिखकिकिराकृणु ॥ यातेऽ
अष्ट्रागोऽओपशाघृणेपशुसाधनी । तस्यास्तेसुम्नमीमहे ॥ उतनोगोषणिंधियमश्वसांवाजसामुत । नृवत्कृणुहिवीत
ये ॥ १८ ॥ ( ६।५।५ ) संपूषन्विदुषानयुयोऽअंजसानुशासति । यऽएवेदमितिब्रवत् ॥ समुपूष्णागमेमहियोगृ
हाँऽअभिशासति । इमऽएवेतिंचब्रवत् ॥ पूष्णश्चक्रंनरिष्यतिनकोशोवपद्यते । नोऽअस्यव्यथतेपविः ॥ योऽअस्मै
हविषाविधन्नतंपूषापिमृष्यते । प्रथमोविंदतेवसु ॥ पूषागाऽअन्वेतुनःपूषारक्षत्ववंतः । पूषावाजंसनोतुनः ॥ १९ ॥
पूषन्ननुप्रगाऽइहियजमानस्यसुन्वतः । अस्माकंस्तुवतामुत ॥ माकिर्नेशन्माकींरिषन्माकींसंशारिकेवटे । अथा
रिष्टाभिरागहि ॥ शृण्वंतंपूषणंवयमिर्यमनष्टवेदसं । ईशानंरायऽईमहे ॥ पूषन्तवव्रतेवयंनरिष्येमकदाचन । स्तोता
रस्तऽइहस्मसि ॥ परिपूषापरस्ताद्धस्तंदधातुदक्षिणं । पुनर्नोनष्टमाजतु ॥ २० ॥ ( ६।५।६ ) एहिवांविमुचोनपा

---

(६।५।५) संपूषन्नितिदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजःपूषागायत्री । (६।५।६) एहिवामितिषड्ऋचस्यसूक्तस्यबार्हस्पत्योभरद्वाजःपूषा

ऋक्सं. अ.४अ.८ ॥५६॥

दाघृणेसंसचावहै । रथीऋतस्यनोभव ॥ रथीतमंकपर्दिनमीशानंराधसोमहः । रायःसखायमीमहे ॥ रायोधारा स्याघृणेवसोराशिरजाश्व । धीवतोधीवतःसखा ॥ पूषणंन्व१जाश्वमुपस्तोषामवाजिनं । स्वसुर्योजारउच्यते ॥ मातुर्दिधिषुमब्रवंस्वसुर्जारःशृणोतुनः । भ्रातेंद्रस्यसखाममं ॥ आजासःपूषणंरथेनिशृंभास्तेजनश्रियं । देवंवहंतुबि भ्रतः ॥२१॥ (६।५।७) यएनमादिदेशतिकरंभादितिपूषणं । नतेनदेवआदिशे ॥ उतघासरथीतमःसख्यासत्पतिर्यु जा । इंद्रोवृत्राणिजिघ्नते ॥ उतादःपरुषेगविसूरश्चक्रंहिरण्ययं । न्यैरयद्रथीतमः ॥ यदद्यत्वापुरुष्टुतब्रवामदस्रमंतुमः । तत्सुनोमन्मसाधय ॥ इमंचनोगवेषणंसातयेसीषधोगणं । आरात्पूषन्नसिश्रुतः+ ॥ आतेस्वस्तिमीमहआरेअघा मुपावसुं । अद्याचसर्वतातयेश्वश्चसर्वतातये ॥ २२ ॥ ( ६।५।८ ) इंद्रानुपूषणावयंसख्यायस्वस्तये । हुवेमवाजसा तये ॥ सोममन्यउपासदत्पातवेचम्वोःसुतं । करंभमन्यइच्छति ॥ अजाअन्यस्यवह्नयोहरीअन्यस्यसंभृता । ताभ्यांवृत्राणिजिघ्नते ॥ यदिंद्रोअनयद्रितोमहीरपोवृषन्तमः । तत्रपूषाभवत्सचा ॥ तांपूष्णःसुमतिंवयंवृक्षस्यप्रव यामिव । इंद्रस्यचारभामहे ॥ उत्पूषणंयुवामहेभीशूँरिवसारथिः । मह्याइंद्रंस्वस्तये ॥ २३ ॥ ( ६।५।९ ) शुक्रं

मंडलं ६ अनु. ५ ॥५६॥

---

गायत्री । ( ६।५।७ ) यएनमितिषड्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजःपूषागायत्रीअंत्यानुष्टुप् । ( ६।५।८ ) इंद्रान्वितिषड्चस्यसूक्तस्य बार्हस्पत्योभरद्वाजइंद्रापूषणौगायत्री । ( ६।५।९ ) शुक्रंतइतिचतुर्ऋचस्यसूक्तस्यबार्हस्पत्योभरद्वाजःपूषात्रिष्टुप्द्वितीयाजगती ।

तेऽअन्यद्यजतंतेऽअन्यद्विषुरूपेऽअहनीद्यौरिवासि । विश्वाहिमायाऽअवसिस्वधावोभद्रातेपूषन्निहरातिरस्तु ॥ अ
जाश्वःपशुपावाजपस्त्योधियंजिन्वोभुवनेविश्वेऽअर्पितः । अष्ट्रांपूषाशिथिरामुद्वरीवृजत्संचक्षाणोभुवनादेवऽईयते ॥
यास्तेपूषन्नावोऽअंतःसमुद्रेहिरण्ययीरंतरिक्षेचरंति । ताभिर्यासिदूत्यांसूर्यस्यकामेनकृतश्रवऽइच्छमानः ॥ पूषासुबं
धुर्दिवऽआपृथिव्याऽइळस्पतिर्मघवादस्मवर्चाः । यंदेवासोऽअददुःसूर्यायैकामेनकृतंतवसंस्वंचं ॥ २४ ॥ ( ६।५।१० )
प्रनुवोचासुतेषुवांवीर्या३ यानिचक्रथुः । हतासोवांपितरोदेवशत्रवऽइंद्राग्नीजीवथोयुवं+ ॥ बळित्थामहिमावामिंद्रा
ग्नीपनिष्ठऽआ । समानोवांजनिताभ्रातरायुवंयमाविहेहमातरा ॥ ओकिवांसासुतेसचाँऽअश्वासप्तीऽइवादने । इं
द्रान्व१ग्नीऽअवसेहवज्रिणावयंदेवाहवामहे ॥ यऽइंद्राग्नीसुतेषुवांस्तवत्तेष्वृतावृधा । जोषवाकंवदतःपज्रहोषिणान
देवाभसथश्चन+ ॥ इंद्राग्नीकोऽअस्यवांदेवौमर्तश्चिकेतति । विषूचोऽअश्वान्युयुजानऽईयतऽएकःसमानऽआरथे
॥ २५ ॥ इंद्राग्नीऽअपादियंपूर्वागात्पद्वतीभ्यः । हित्वीशिरोजिह्वयावावदच्चरत्त्रिंशत्पदान्यक्रमीत् ॥ इंद्राग्नीऽआ
हितन्वतेनरोधन्वानिबाह्वोः । मानोऽअस्मिन्महाधनेपरावर्क्तंगविष्टिषु ॥ इंद्राग्नीतपंतिमाघाऽअर्योऽअरातयः ।
अपद्वेषांस्याकृतंयुयुतंसूर्यादधि ॥ इंद्राग्नीयुवोरपिवसुदिव्यानिपार्थिवा । आनऽइहप्रयच्छतंरयिंविश्वायुपोषसं ॥

( ६।५।१० ) प्रनुवोचेतिदशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्राग्नीबृहतीअंत्याश्चतस्रोनुष्टुभः ।

इंद्राग्नीऽउक्थवाहसास्तोमेभिर्हवनश्रुता । विश्वाभिर्गीर्भिरागतमस्यसोमस्यपीतये ॥ २६ ॥ ( ६।५।११ ) अथर्वृत्रमुतसंनोतिवाजमिंद्रायोऽअग्नीसहुरीसपर्यात् । इरज्यंतावसव्यस्यभूरेःसहस्तमासहसावाजयंता ॥ तायोधिष्टमभिगाऽइंद्रनूनमपःस्वरुषसोऽअग्नऽऊह्वाः । दिशःस्वरुषसऽइंद्रचित्राऽअपोगाऽअग्नेयुवसेनियुत्वान् ॥ आवृत्रहणावृत्रहभिःशुष्मैरिंद्रयातंनमोभिरग्नेऽअर्वाक् । युवंराधोभिरकवेभिरिंद्राग्नेऽअस्मेभवतमुत्तमेभिः ॥ताहुवेययोरिदंपप्नेविश्वंपुराकृतं । इंद्राग्नीनमर्धतः ॥ उग्राविघनिनामृधऽइंद्राग्नीहवामहे । तानोमृळातऽईदृशे ॥ २७ ॥ हतोवृत्राण्यार्याहतोदासानिसत्पती । हतोविश्वाऽअपद्विषः ॥ इंद्राग्नीयुवामिमे३भिस्तोमाऽअनूषत । पिबतंशंभुवासुतं ॥ यावांसंतिपुरुस्पृहोनियुतोदाशुषेनरा । इंद्राग्नीताभिरागतं ॥ ताभिरागच्छतंनरोपेदंसवनंसुतं । इंद्राग्नीसोमपीतये ॥ तमीळिष्वयोऽअर्चिषावनाविश्वापरिष्वजत् । कृष्णाकृणोतिजिह्वया ॥ २८ ॥ यऽइद्धऽआविवासतिसुम्नमिंद्रस्यमर्त्यः । द्युम्नायसुतराऽअपः+ ॥ तानोवाजवतीरिषऽआशून्पिपृतमर्वतः । इंद्रमग्निंचवोह्लवे ॥ उभावामिंद्राग्नीऽआहुवध्याऽउभाराधसःसहमादयध्यै । उभादातारविषांरयीणामुभावाजस्यसातयेहुवेवां ॥ आनोगव्येभिरश्व्यैर्वसव्यै३रुपगच्छतं । सखायौदेवौसख्यायशंभुवेंद्राग्नीताहवामहे ॥ इंद्राग्नीशृणुतंहवंयजमानस्यसुन्वतः । वीतं

(६।५।११) अथवृत्रमितिपंचदशर्चस्यसूक्तस्य[illegible]इंद्राग्नी[illegible]त्रयोदशीचत्रिष्टुभःचतुर्दशीबृहत्यंत्यानुष्टुप् ।

हव्यान्यागतंपिबतंसोम्यंमधु ॥ २९ ॥ ( ६।५।१२ ) इयमददाद्रभसमृणच्युतंदिवोदासंवध्र्यश्वायदाशुषे । या शश्वंतमाचखादावसंपणितातेदात्राणितविषासरस्वति ॥ इयंशुष्मेभिर्बिसखाइवारुजत्सानुगिरीणांतविषेभिरूर्मिभिः । पारावतघ्नीमवसेसुवृक्तिभिःसरस्वतीमाविवासेमधीतिभिः ॥ सरस्वतिदेवनिदोनिबर्हयप्रजांविश्वस्यबृसयस्य मायिनः । उतक्षितिभ्योवनीरविंदोविषमेभ्योऽअस्रवोवाजिनीवति ॥ प्रणोदेवीसरस्वतीवाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥ यस्त्वादेविसरस्वत्युपब्रूतेधनेहिते । इंद्रंनवृत्रतूर्ये ॥ ३० ॥ त्वंदेविसरस्वत्यवावाजेषुवाजिनि । रदापूषेवनःसनिं+ ॥ उतस्यानःसरस्वतीघोराहिरण्यवर्तनिः । वृत्रघ्नीवष्टिसुष्टुतिं+ ॥ यस्याऽअनंतोऽअह्रुतस्त्वेषश्चरिष्णुरर्णवः । अमश्चरंतिरोरुवत् ॥ सानोविश्वाऽअतिद्विषःस्वसॄरन्याऽऋतावरी । अतन्नहेवसूर्यः ॥ उतनःप्रियाप्रियासुसप्तस्वसासुजुष्टा । सरस्वतीस्तोम्याभूत् ॥ ३१ ॥ आपप्रुषीपार्थिवान्युरुरजोऽअंतरिक्षं । सरस्वतीनिदस्पातु ॥ त्रिषधस्थासप्तधातुःपंचजातावर्धयंती । वाजेवाजेहव्याभूत् ॥ प्रयामहिम्नामहिनासुचेकितेद्युम्नेभिरन्याऽअपसामपस्तमा । रथऽइवबृहतीविभ्वनेकृतोपस्तुत्याचिकितुषासरस्वती ॥ सरस्वत्यभिनोनेषिवस्योमापस्फरीःपयसामानऽआधक् । जुषस्वनःसख्यावेश्याचमात्वत्क्षेत्राण्यरणानिगन्म ॥ ३२ ॥ ॥ इतिचतुर्थाएकेऽष्टमोऽध्यायः ॥ ८ ॥

---

( ६।५।१२ ) इयमददादितिचतुर्दशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजःसरस्वतीगायत्रीआद्यास्तिस्रस्त्रयोदशीचजगत्यौत्यात्रिष्टुप् ।

द्वात्रिंशाध्यायेवर्गाः ३२ सूक्तानि १४ ऋचः १६६ ॥ त्यागः ॥ अग्नय. १० मरुद्भ्य. ५ पूष्णइदं. ४ मरुद्भ्य. ३ विश्वेभ्योदेवेभ्य. ६३ [ भे. प. विश्वेभ्योदेवेभ्य. अग्नय. अहोरात्राभ्या. वायव. अश्विभ्या. विश्वेभ्योदेवेभ्य. सरस्वत्याइ. पूष्ण. अग्नयेत्वष्ट्र्ऽइ. रुद्राये. मरुद्भ्य. २ विष्णव. विश्वेभ्योदेवेभ्य. ३ सूर्यायेदं. द्यावापृथिवीभ्या. मरुद्भ्य. २ इंद्राये. अद्भ्य. सवित्र. अग्नय. अश्विभ्या. विश्वेभ्योदेवेभ्य. ५ सूर्याये. २ विश्वेभ्योदेवेभ्य. १० अग्नय. सोमाये. विश्वेभ्योदेवेभ्य. ४ सोमाये. विश्वेभ्योदेवेभ्य. ८ अग्नय. विश्वेभ्योदेवेभ्य. ३ अग्निपर्जन्याभ्या. विश्वेभ्योदेवेभ्य. ] पूष्णइ. ३२ इंद्रापूषभ्या. ६ पूष्ण. ४ इंद्राग्निभ्या. २५ सरस्वत्याइ. १४ ॥ इतिचतुर्थेऽष्टमः ॥

## ॥ इतिचतुर्थाष्टकःसमाप्तः ॥

श्रीः ॥ स्तुषएकादशाश्विनंतुंक्तत्यैकपदांतंत्रैष्टुभंमाद्याविराळुदुश्रियेषळुषस्यंत्वेषास्यावपुन्वैकादशमारुतंवि
श्वेषांमैत्रावरुणंश्रुष्टीवामैंद्रावरुणंमुपांत्येजगत्यौसंवामष्टावैंद्रावैष्णवंघृतवतीषट्द्यावापृथिवीयंजागतंमुदुष्य:
सावित्रंत्रित्रिष्टुबंतंमिंद्रासोमापंचैंद्रासोमंयोअद्रिभित्तृचंबार्हस्पत्यंसोमारुद्राचतुष्कंसोमारौद्रंजीमूतस्येवैकोना
पायुर्भारद्वाजःसंग्रामांगान्यृक्शोभितुष्टावंवर्मंधनुर्ज्यामार्त्नीइषुधिंजगत्यर्धेसारथिमर्धेरश्मीनश्वान्रथंरथगोपा
न्जगत्याद्यालिंगोक्तदेवताद्वाभ्यामिषून्प्रतोदंहस्तघ्नंद्वाभ्यामिषून्पराःपंक्त्यादयोलिंगोक्तदेवताःसंग्रामाशिषों
त्यानुष्टुंबृजीतआलाक्तेतिचद्वेद्वैयोञ्यःसंभूतोंवसतीवरीषुगृह्यमाणासुपुष्करेस्थितवान्सर्वतःपुष्करंतत्रविश्वेदे
वाअधारयन्नुत्थापयतोमहत्तपश्चकारादृष्टमिंद्रमन्यैर्ऋषिभिर्योदृष्टवांस्तपसापूर्वैस्तोमभागान्परितुष्टःशक्रःप्रब्रूते
यस्यसगुणतोनामजज्ञेवसतःश्रैष्ठ्यकर्मणःससप्तमंमंडलंवसिष्ठोपश्यदग्निंपंचाधिकाविराजोष्टादशाद्याः ॥ १ ॥

श्रीगणेशायनमः ॥ ॥ हरिःओम् ॥ ( ६।६।१ ) स्तुषेनरादिवोऽअस्यप्रसंताश्विनाहुवेजरमाणोऽअर्कैः ।
यासद्यऽउस्राव्युषिज्मोऽअंतान्युयूषतःपर्युरूवरांसि ॥ तायुज्ञमाशुचिभिश्चक्रमाणारथस्यभानुंरुरुचूरजोभिः । पुरू
वरांस्यमिताभिमानापोधन्वान्यतियाथोऽअज्रान् ॥ ताहुत्यद्वार्तिर्यदरंध्रमुग्रेत्थाधियंऽऊहथुःशश्वदश्वैः । मनोजवे



षष्ठेनुवाकेचतुर्दशसूक्तानि ( ६।६।१ ) स्तुषेनरेत्येकादशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोश्विनौत्रिष्टुप् ।

भिरिषिरैःशयध्यैपरिव्यथिर्दाशुषोमर्त्यस्य ॥ तानव्यंसोजरमाणस्यमन्मोपभूषतोयुयुजानसप्ती । शुभंपृक्षमिषमूर्जंव
हंताहोतायक्षत्प्रत्नोऽअध्रुग्युवाना ॥ तावल्गूदस्रापुरुशाकतमाप्रत्नानव्यसावचसाविवासे । याशंसतेस्तुवतेशंभवि
ष्ठावभूवतुर्गृणतेचित्ररातीं ॥ १ ॥ ताभुज्युंविभिरद्भ्यःसमुद्रात्तुग्रस्यसूनुमूहथूरजोभिः । अरेणुभिर्योजनेभिर्भुजंताप
तत्रिभिरर्णसोनिरुपस्थात् ॥ विजयुषारथ्यायातमद्रिंश्रुतंहवंवृषणावध्रिमत्याः । दशस्यंताशयवेपिप्यथुर्गामितिच्य
वानासुमतिंभुरण्यू ॥ यद्रोदसीप्रदिवोऽअस्तिभूमाहेळोदेवानामुतमर्त्यत्रा । तदादित्यावसवोरुद्रियासोरक्षोयुजेतपु
रघंदधात ॥ यऽईंराजानावृतुथाविदधद्रजसोमित्रोवरुणश्चिकेतत् । गंभीरायरक्षसेहेतिमस्यद्रोधायचिद्वचसऽआन
वाय ॥ अंतरैश्चक्रैस्तनयायवर्तिर्द्युमतायातंनृवतारथेन । सनुत्येनत्यजसामर्त्यस्यवनुष्यतामपिशीर्षाववृक्तं ॥ आप
रमाभिरुतमध्यमाभिर्नियुद्भिर्यातमवमाभिरर्वाक् । दृळ्हस्यचिद्गोमतोविव्रजस्यदुरोवर्तंगृणतेचित्ररातीं ॥ २ ॥
( ६।६।२ ) कं१त्यावल्गूपुरुहूताद्यदूतोनस्तोमोविदन्नमस्वान् । आयोऽअर्वाङ्नासत्यावव्रर्तप्रेष्ठाह्यसथोऽअस्यमन्म
न् ॥ अरंमेगंतंहवनायास्मैगृणानायथापिबाथोऽअंधः । परिहत्यद्वर्तिर्याथोरिषोनयत्परोनांतरस्तुतुर्यात्+ ॥ अका
रिवामंधसोवरीमन्नस्तारिबर्हिःसुप्रायणतमं । उत्तानहस्तोयुवयुर्ववंदावांनक्षंतोऽअद्रयऽआंजन् ॥ ऊर्ध्वोवामग्निरध्व



( ६।६।२ ) कत्येत्येकादशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोऽश्विनौत्रिष्टुप्आद्याविराळंत्यैकपदा ।

रेष्वंस्थात्प्ररातिरैतिजूर्णिनींघृताचीं । प्रहोतांगूर्तमंनाऽउराणोयुंक्तयोनासत्याहवींमन् ॥ अधिंश्रियेदुंहितासूर्यस्य रथंतस्थौपुरुभुजाशतोतिं । प्रमायाभिर्मायिनाभूतमत्रनरांनृतूजनिमन्यज्ञियानां ॥ ३ ॥ युवंश्रीभिर्दर्शताभिराभिः शुभेपुष्टिमूहथुःसूर्यायाः । प्रवांवयोवपुषेनुंपप्तन्नक्षद्वाणीसुष्टुताधिष्ण्यावां ॥ आवांवयोश्वासोवहिंष्ठाऽअभिप्रयोना सत्यावहंतु । प्रवांरथोमनोजवाऽअसर्जीषःपृक्षऽइषिधोऽअनुपूर्वीः ॥ पुरुहिवांपुरुभुजादेष्णंधेनुंनऽइषंपिन्वतमसक्रां । स्तुतंश्चवांमाध्वीसुष्टुतिश्चरसाश्चयेवामनुंरातिमग्मन् ॥ उतमंऽऋज्रेपुरयस्यरघ्वीसुमीह्लेशतंपेरुकेचंपक्वा । शांडोदांद्धिरणिनःस्मद्दिंष्टीन्दशवशासोंऽअभिषाचंऽऋष्वान् ॥ संवांशतानासत्यासहस्राश्वानांपुरुपंथागिरेदांत् । भरद्वाजायवीरनूगिरेदांद्धतारक्षांसिपुरुदंससास्युः ॥ आवांसुम्नेवरिंमन्सूरिभिःष्यां ॥ ४ ॥ ( ६।६।३ ) उदुंश्रियऽउषसोरोचंमानाऽअस्थुरपांनोर्मयोरुशंतः । कृणोतिविश्वासुपथासुगान्यभूंदुवस्वीदक्षिणामघोनी ॥ भद्रादंदृक्षऽउर्वियाविभास्युत्तेंशोचिर्भानवोद्यामपप्तन् । आविर्वक्षःकृणुषेशुंभमानोषोदेविरोचंमानामहोभिः ॥ वहंतिसीमरुणासोरुशंतोगावःसुभगांमुर्वियाप्रथानां । अपेंजतेशूरोऽअस्तेंवशत्रून्बाधतेतमोंऽअजिरोनवोह्ला ॥ सुगोततेंसुपथापर्वतेष्ववातेऽअपस्तरसिस्वभानो । सानऽआवहपृथुयामन्नृष्वेरयिंदिवोदुहितरिषयध्यै ॥ सावहयोक्षभिरवातोषोवरंवहं

( ६।६।३ ) उदुश्रियइतिषड्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजउषास्त्रिष्टुप् ।

सिजोषमनु । त्वंदिवोदुहितर्याहदेवीपूर्वहूतौमंहनादर्शताभूः ॥ उत्तेवयंश्चिद्वसतेरपप्तन्नरश्चयेपितुभाजोव्युष्टौ । अमासतेवहसिभूरिवाममुषोदेवविदाशुषेमर्त्याय ॥ ५ ॥ ( ६।६।४ ) एषास्यानोदुहितादिवोजाःक्षितीरुच्छंतीमानुषीरजीगः । याभानुनारुशतारम्यास्वज्ञायितिरस्तमसश्चिदक्तून्+ ॥ वितद्ययुररुणयुग्भिरश्वैश्चित्रंभांत्युषसश्चंद्ररथाः । अग्रंयज्ञस्यबृहतोनयंतीर्विताबाधंतेतमऽऊर्म्यायाः ॥ श्रवोवाजमिषमूर्जंवहंतीर्निदाशुषऽउषसोमर्त्याय । मघोनीर्वीरवत्पत्यमानाऽअवोधातविधतेरत्नमद्य+ ॥ इदाहिवोविधतेरत्नमस्तीदावीरायदाशुषऽउषासः । इदाविप्रायजरतेयदुक्थानिष्मभावतेवहथापुराचित् ॥ इदाहितऽउषोऽअद्रिसानोगोत्रागवामंगिरसोगृणंति । व्य१र्केणबिभिदुर्ब्रह्मणाचसत्यानृणामभवद्देवहूतिः ॥ उच्छादिवोदुहितःप्रत्नवन्नोभरद्वाजवद्विधतेमघोनि । सुवीरंरयिंगृणतेरिरीह्युरुगायमधिधेहिश्रवोनः ॥ ६ ॥ ( ६।६।५ ) वपुर्नुतच्चिकितुषेचिदस्तुसमानंनामधेनुपत्यमानं । मर्तेष्वन्यद्दोहसेपीपायंसकृच्छुक्रंदुदुहेपृश्निरूधः ॥ येऽअग्नयोनशोशुचन्निधानाद्विर्यत्रिर्मरुतोवावृधंत । अरेणवोहिरण्ययासऽएषांसाकंनृम्णैःपौंस्येभिश्चभूवन् ॥ रुद्रस्ययेमीळ्हुषःसंतिपुत्रायांश्चोनुदाधृविर्भरध्यै । विदेहिमातामहोमहीषासेत्पृश्निःसुभ्वे३गर्भमाधात् ॥ नयऽईषंतेजनुषोयान्वं१तःसंतोवद्यानिपुनानाः । निर्यद्दुह्रेशुचयोनुजोषमनुश्रियातन्वमुक्षमाणाः ॥

---

(६।६।४) एषास्येतिषडृचस्यसूक्तस्यबार्हस्पत्योभरद्वाजउषास्त्रिष्टुप् । (६।६।५) वपुर्न्वित्येकादशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजोमरुत-

मक्षूनयेषुंदोहसेचिदुयाऽआनामंधृष्णुमारुंतंदधानाः । नयेस्तौनाऽअयासोंमहानूचित्सुदानुरवंयासदुग्रान् ॥ ७ ॥
तऽइदुग्राःशवसाधृष्णुषेणाऽउभेयुंजंतरोदंसीसुमेके । अधंस्मैषुरोदसीस्वशोंचिरामंवत्सुतस्थौनरोकः ॥ अनेनोवोम
रुतोयामोंऽअस्त्वनश्वश्चिद्यमजत्यरंथीः । अनवसोऽअंनभीशूरंजस्तूविरोदंसीपथ्यायातिसाधंन् ॥ नास्यंवर्तानतंरु
तान्वंस्तिमरुंतोयमवंथवाजंसातौ । तोकेवागोषुतनंयेयमप्सुसव्रजंदर्तापार्येऽअधद्योः ॥ प्रचित्रमर्कंगृणतेतुरायमा
रुंतायस्वतंवसेभरध्वं । येसहांसिसहंसासहंतेरेजंतेऽअग्नेपृथिवीमखेभ्यः ॥ त्विषीमंतोऽअध्वरस्येवदिद्युत्तृषुच्यवंसो
जुह्वो३नाग्नेः । अर्चत्रयोधुनंयोनवीराभ्राजंज्जन्मानोमरुतोऽअधृष्टाः ॥ तंवृधंतंमारुंतंभ्राजंदृष्टिंरुद्रस्यंसूनुंहवसाविं
वासे । दिवःशर्धायशुचंयोमनीषागिरयोनापंऽउग्राऽअंस्पृध्रन् ॥ ८ ॥ (६।६।६) विश्वेषांवःसतांज्येष्ठंतमागीर्भिर्मि
त्रावरुंणावावृधध्यै । संयारश्मेवंयमतुर्यमिष्ठाद्वाजनाँऽअसंमाबाहुभिःस्वैः ॥ इयंमद्वांप्रस्तृणीतेमनीषोपंप्रियानमं
सावर्हिरच्छं । यंतंनोंमित्रावरुणावधृष्टंच्छर्दिर्यद्वांवरूथ्यंसुदानू ॥ आयांतंमित्रावरुणासुशस्त्युपंप्रियानमंसाहूयमां
ना । संयावंप्नःस्थोऽअपसेवजनान्छ्रुधीयतश्चिद्यतथोमहित्वा ॥ अश्वानयावाजिनांपूतबंधूऽऋतायद्गर्भमदितिर्भरं
ध्यै । प्रयामहिमहांताजायंमानाघोरामर्तायरिपवेनिदीधः ॥ विश्वेयद्वांमंहनामंदमानाःक्षत्रंदेवासोऽअदंधुःसजो

त्रिष्टुप्। (६।६।६) विश्वेषामित्येकादशर्चस्यसूक्तस्यवार्हस्पत्योभरद्वाजोमित्रावरुणौत्रिष्टुप्।

र्षाः । परियद्भूथोरोदसीचिदुर्वीसंतिस्पशोऽअदब्धासोऽअमूराः ॥ ९ ॥ ताहिक्षत्रंधारयेथेऽअनुद्यून्दृंहेथेसानुमुपमादिवद्योः । दृह्ळोनक्षत्रऽउतविश्वदेवोभूमिमातान्द्यांधासिनायोः ॥ ताविग्रंधैथेजठरंपृणध्याऽआयत्सद्मसभृतयःपृणंति । नमृष्यंतेयुवतयोवातावियत्पयोविश्वजिन्वाभरंते ॥ ताजिह्वयासदमेदंसुमेधाऽआयद्वांसत्योऽअरतिर्ऋतेभूत् । तद्वांमहित्वंघृतान्नावस्तुयुवंदाशुषेविचयिष्टमंहः ॥ प्रयद्वांमित्रावरुणास्पूर्धन्प्रियाधामयुवधितामिनंति । नयेदेवासऽओहसानमर्ताऽअयज्ञसाचोऽअप्योनपुत्राः ॥ वियद्वाचंकीस्तासोभरंतेशंसंतिकेचिन्निविदोमनानाः । आद्वांब्रवामसत्यान्युक्थानकिर्देवेभिर्यतथोमहित्वा ॥ अवोरित्थावांछर्दिषोऽअभिष्टौयुवोर्मित्रावरुणावस्कृधोयु । अनुयद्गावःस्फुरानृजिप्यंधृष्णुंयद्रणेवृषणंयुनजन् ॥ १० ॥ ( ६।६।७ ) श्रुष्टीवांऽयज्ञऽउद्यतःसजोषामनुष्वद्वृक्तबर्हिषोयजध्यै । आयऽइंद्रावरुणाविषेऽअद्यमहेसुम्नायमहऽआववर्तत् ॥ ताहिश्रेष्ठादेवतातातुजाशूराणांशविष्ठाताहिभूतं । मघोनांमंहिष्ठातुविशुष्मऽऋतेनवृत्रतुरासर्वसेना ॥ तागृणीहिनमस्येभिःशूषैःसुम्नेभिरिंद्रावरुणाचकाना । वज्रेणान्यःशवसाहंतिवृत्रंसिषक्त्यन्योवृजनेषुविप्रः ॥ ग्नाश्चयन्नरश्चवावृधंतविश्वेदेवासोनरांस्वगूर्ताः । प्रैभ्यऽइंद्रावरुणामहित्वाद्यौश्चपृथिविभूतमुर्वी ॥ सऽइत्सुदानुःस्ववाँऽऋतावेंद्रायोवांवरुणदाशतितमन् । इषासद्विष

( ६।६।७ ) श्रुष्टीवामित्येकादशर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रावरुणौत्रिष्टुपन्त्यसीदशम्यौजगत्यौ ।

स्तरेद्दास्वान्वंसेद्रयिंरयिवतश्चजनान् ॥ ११ ॥ यंयुवंदाश्वंध्वरायदेवारयिंधत्थोवसुमंतंपुरुक्षुं । अस्मेसऽइंद्रावरुणा
वपिंष्यात्प्रयोभनक्तिवनुषामशंस्तीः ॥ उतनंःसुत्रात्रोदेवगोंपाःसूरिभ्यंऽइंद्रावरुणारयिःष्यात् । येषांशुष्मःपृतंनासु
साह्वान्प्रसद्योद्युम्नातिरतेततुरिः ॥ नूनंऽइंद्रावरुणागृणानापृंक्तंरयिंसौश्रवसायंदेवा । इत्थागृणंतोमहिनंस्यशर्धोपो
ननावादुरितातंरेम ॥ प्रसम्राजेबृहतेमन्मनुप्रियमर्चंदेवायवरुणायसप्रथंः । अयंयऽउर्वीमंहिनामहिंव्रतःक्रत्वांवि
भात्यजरोनशोचिषां ॥ इंद्रांवरुणासुतपाविमंसुतंसोमंपिबतंमद्यंधृतव्रता । युवोरथोंऽअध्वरंदेववीतयेप्रतिस्वसंरमु
पंयातिपीतयें ॥ इंद्रांवरुणामधुंमत्तमस्यवृष्णःसोमंस्यवृषणावृंषेथां । इदंवामंधःपरिंषिक्तमस्मेऽआसद्यास्मिन्बर्हिषि
मादयेथां ॥ १२ ॥ (६।६।८) संवांकर्मणासमिषाहिंनोमींद्रांविष्णूऽअपंसस्पारेऽअस्य । जुषेथांयज्ञंद्रविंणंचधत्तम
रिंष्टैर्नःपथिभिःपारयंता ॥ याविश्वांसांजनितारांमतीनामिंद्राविष्णूकलशांसोमधानां । प्रवांगिरंःशस्यमांनाऽअवं
तुप्रस्तोमांसोगीयमांनासोऽअर्कैः ॥ इंद्रांविष्णूमदपतीमदानामासोमंयातंद्रविंणोदधांना । संवांमंजंत्वक्तुभिर्मती
नांसंस्तोमांसःशस्यमांनासऽउक्थैः ॥ आवामश्वांसोऽअभिमातिषाहऽइंद्राविष्णूसधमादोंवहंतु । जुषेथांविश्वाह
वंनामतीनामुपब्रह्मांणिशृणुतंगिरोंमे ॥ इंद्रांविष्णूतत्पंनयाय्यंवांसोमंस्यमदंऽउरुचंक्रमाथे । अकृणुतमंतरिंक्षंवरीयो

---

(६।६।८) संवामित्यष्टर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्राविष्णूत्रिष्टुप् ।

ऋक्सं.
अ.५अ.१
॥५॥

प्रथतंजीवसेनोरजांसि ॥ इंद्राविष्णूहविषावावृधानाग्राद्वानानमसारातहव्या । घृतासुतीद्रविणंधत्तमस्मेसमुद्रःस्थः
कलशःसोमधानः ॥ इंद्राविष्णूपिबतंमध्वोऽअस्यसोमस्यदस्राजठरंपृणेथां । आवामंधांसिमदिराण्यग्मन्नुपब्रह्माणि
शृणुतंहवंमे ॥ उभाजिग्यथुर्नपराजयेथेनपराजिग्येकतरश्चनैनोः । इंद्रश्चविष्णोयदपस्पृधेथांत्रेधासहस्रंवितदैरये
थां ॥ १३ ॥ ( ६।६।९ ) घृतवतीभुवनानामभिश्रियोर्वीपृथ्वीमधुदुघेसुपेशसा । द्यावापृथिवीवरुणस्यधर्मणावि
ष्कभितेऽअजरेभूरिरेतसा ॥ असश्चंतीभूरिधारेपयस्वतीघृतंदुहातेसुकृतेशुचिव्रते । राजंतीऽअस्यभुवनस्यरोदसीऽ
अस्मेरेतःसिंचतंयन्मनुर्हितं ॥ योवामृजवेक्रमणायरोदसीमर्तोददाशधिषणेससाधति । प्रप्रजाभिर्जायतेधर्मणस्प
रिंयुवोःसिक्ताविषुरूपाणिसव्रता ॥ घृतेनद्यावापृथिवीऽअभीवृतेघृतश्रियाघृतपृचाघृतावृधा । उर्वीपृथ्वीहोतृवूर्येपु
रोहितेतेऽइद्विप्राऽईळतेसुम्नमिष्टये ॥ मधुनोद्यावापृथिवीमिमिक्षतांमधुश्चुतामधुदुघेमधुव्रते । दधानेयज्ञंद्रविणंच
देवतामहिश्रवोवाजमस्मेसुवीर्यं ॥ ऊर्जंनोद्यौश्चपृथिवीचपिन्वतांपितामाताविश्वविदासुदंससा । संरराणेरोदसीवि
श्वशंभुवासनिंवाजंरयिमस्मेसमिन्वतां ॥ १४ ॥ ( ६।६।१० ) उदुष्यदेवःसविताहिरण्ययाबाहूऽअयंस्तसवनायसु

मंडलं ६
अनु. ६
॥५॥

---

( ६।६।९ ) घृतवतीइतिषड्टचस्यसूक्तस्यबार्हस्पत्योभरद्वाजोद्यावापृथिव्यौजगती । ( ६।६।१० ) उदुष्येतिषड्टचस्यसूक्तस्यबार्हस्पत्यो



भरद्वाजःसविताजगतीअंत्यास्तिस्रस्त्रिष्टुभः ।

क्रतुः । घृतेनंपाणीऽअभिप्रुंष्णुतेमखोयुवांसुदक्षोरजंसोविधर्मणि ॥ देवस्यंवयंसंवितुःसवींमनिश्रेष्ठेस्यामवसुनश्चदाव नें । योविश्वंस्यद्विपदोयश्चतुंष्पदोनिवेशंनेप्रसवेचासिभूमंनः ॥ अदंब्धेभिःसवितःपायुभिष्ट्वंशिवेभिरद्यपरिंपाहिनोग यं । हिरंण्यजिह्वःसुवितायनव्यंसेरक्षामाकिंर्नोऽअघशंसऽई॒त ॥ उदुष्यदेवःसंवितादमूंनाहिरंण्यपाणिःप्रतिदोषमं स्थात् । अयोहनुर्यजतोमंद्रजिंह्वऽआदाशुषेंसुवतिभूरिंवामं+ ॥ उदूंऽअयाँऽउपवक्तेवबाहूहिरण्ययासवितासुप्रतीका । दिवोरोहांस्यरुहत्पृथिव्याऽअरींरमत्पतयत्कच्चिदभ्वं ॥ वाममद्यसंवितर्वाममुश्वोदिवेदिंवेवाममस्मभ्यंसावीः । वाम स्यहिक्षयंस्यदेवभूरेरयाधियावामभाजंःस्याम ॥ १५ ॥ ( ६।६।११ ) इंद्रासोमामहितद्वांमहित्वंयुवंमहानिप्रथमानिच क्रथुः । युवंसूर्यंविविदथुर्युवंस्व१र्विश्वातमांस्यहतंनिदश्च ॥ इंद्रासोमावासयथऽउषासमुत्सूर्यंनयथोज्योतिषासह । उपद्यांस्कंभथुःस्कंभनेनाप्रथतंपृथिवींमातरंवि+ ॥ इंद्रासोमावहिंमपःपरिष्ठांहथोवृत्रमनुवांद्यौरंमन्यत । प्रार्णांस्यै रयतंनदीनामासंमुद्राणिपप्रथुःपुरूणि ॥ इंद्रासोमापक्वमामास्वंतर्निंगवामिद्दंधथुर्वक्षणासु । जगृभथुरनंपिनद्धमासु रुशंच्चित्रासुजगंतीष्वंतः+ ॥ इंद्रासोमायुवमंगतरुत्रमपत्यसाचंश्रुत्यंरराथे । युवंशुष्मंनर्यंचर्षणिभ्यःसंविव्यथुःपृत नाषाहंमुग्रा ॥ १६ ॥ ( ६।६।१२ ) योऽअद्रिभित्प्रंथमजाऽऋतावाबृहस्पतिंरांगिरसोहविष्मान् । द्विबर्हज्माप्राघ



(६।६।११) इंद्रासोमेतिपंचर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजइंद्रासोमौत्रिष्टुप् । (६।६।१२) योअद्रिभिदितितृचस्यसूक्तस्यबार्हस्पत्यो

मेसतिपितान्ऽआरोदसीवृषभोरोरवीति ॥ जनायचिद्यऽईवतऽउलोकंबृहस्पतिर्देवहूतौचकार । घ्नन्वृत्राणिविपुरोदर्द रीतिजयञ्छत्रूँरमित्रान्पृत्सुसाहन् ॥ बृहस्पतिःसमजयद्वसूनिमहोव्रजान्गोमतोदेवऽएषः । अपःसिषासन्त्स्व१रप्रती तोबृहस्पतिर्हंत्यमित्रमर्कैः ॥१७॥ (६।६।१३) सोमारुद्राधारयेथामसुर्यं१प्रवामिष्टयोरमश्नुवंतु । दमेदमेसप्तरत्ना दधानाशंनोभूतंद्विपदेशंचतुष्पदे ॥ सोमारुद्राविवृहतंविषूचीममीवायानोगयमाविवेश । आरेबाधेथांनिर्ऋतिंपराचैर स्मेभद्रासौश्रवसानिसंतु ॥ सोमारुद्रायुवमेतान्यस्मेविश्वातनूषुभेषजानिधत्तं । अवस्यतंमुंचतंयन्नोऽअस्तितनूषुबद्धंकृ तमेनोऽअस्मत् ॥ तिग्मायुधौतिग्महेतीसुशेवौसोमारुद्राविहसुमृळतंनः । प्रनोमुंचतंवरुणस्यपाशाद्गोपायतंनःसुमन स्यमाना ॥ १८ ॥ (६।६।१४) जीमूतस्येवभवतिप्रतीकंयद्वर्मीयातिसमदामुपस्थे । अनाविद्धयातन्वाजयत्वंसत्वा वर्मणोमहिमापिपर्तु ॥ धन्वनागाधन्वनाजिंजयेमधन्वनातीव्राःसमदोजयेम । धनुःशत्रोरपकामंकृणोतिधन्वनास

---

भरद्वाजोबृहस्पतिस्त्रिष्टुप्। (६।६।१३)सोमारुद्रेतिचतुर्ऋचस्यसूक्तस्यबार्हस्पत्योभरद्वाजःसोमारुद्रौत्रिष्टुप् । (६।६।१४) जीमूतस्येवेत्येको नविंशत्यृचस्यसूक्तस्यभारद्वाजःपायुः आद्यानांनवानांक्रमेणवर्मधनुर्ज्याधनुष्कोटीषुधिःसारथीरश्मयोऽश्वारथोरथगोपाः दशम्याब्राह्मण पितृसोमपृथिवीपूषणः एकादश्यादिद्वयोरिषवः त्रयोदश्याःप्रतोदः चतुर्दश्याहस्तत्राणं पंचदशीषोडश्योरिषवः सप्तदश्यायुद्धभूमिकवच ब्रह्मणस्पत्यदित्यः अष्टादश्यावर्मसोमवरुणाः अंत्यायादेवब्रह्माणित्रिष्टुप् । षष्ठीदशम्यौजगत्यौद्वादशीत्रयोदशीपंचदशीषोळश्यंत्याअनुष्टुभः

वीः प्रदिशोजयेम ॥ वक्ष्यंतीवेदागनीगंतिकर्णंप्रियंसखायंपरिषस्वजाना। योषेवशिङ्क्तेवितताधिधन्वञ्ज्याऽइयंसमनेपारयंती ॥ तेऽआचरंतीसमनेवयोषामातेवपुत्रंबिभृतामुपस्थे। अपशत्रून्विध्यतांसंविदानेऽआर्त्नीऽइमेविष्फुरंतीऽअमित्रान् ॥ बह्वीनांपिताबहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य। इषुधिःसंकाःपृतनाश्चसर्वाःपृष्ठेनिनद्धोजयतिप्रसूतः ॥ १९ ॥ रथेतिष्ठन्नयतिवाजिनःपुरोयत्रयत्रकामयतेसुषारथिः। अभीशूनांमहिमानंपनायतमनःपश्चादनुयच्छंतिरश्मयः ॥ तीव्रान्घोषान्कृण्वतेवृषपाणयोश्वारथेभिःसहवाजयंतः। अवक्रामंतःप्रपदैरमित्रान्क्षिणंतिशत्रूँरनपव्ययंतः ॥ रथवाहनंहविरस्यनामयत्रायुधंनिहितमस्यवर्म। तत्रारथमुपशग्मंसदेमविश्वाहावयंसुमनस्यमानाः ॥ स्वादुषंसदःपितरोवयोधाःकृच्छ्रेश्रितःशक्तीवंतोगभीराः। चित्रसेनाऽइषुबलाऽअमृध्राःसतोवीराऽउरवोव्रातसाहाः+ ॥ ब्राह्मणासःपितरःसोम्यासःशिवेनोद्यावापृथिवीऽअनेहसा। पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोऽअघशंसऽईशत ॥ २० ॥ सुपर्णंवस्तेमृगोऽअस्यादंतोगोभिःसंनद्धापततिप्रसूता। यत्रानरःसंचविचद्रवंतितत्रास्मभ्यमिषवःशर्मयंसन् ॥ ऋजीतेपरिवृंग्धिनोश्मभवतुनस्तनूः। सोमोऽअधिब्रवीतुनोदितिःशर्मयच्छतु ॥ आजंघंतिसान्वेषांजघनाँ

---

सप्तदशीपंक्तिः।(त्रयोदश्याःप्रतोदइत्यत्राश्वोदेवतेतिकेचित्। चतुर्दश्याहस्तघ्नमित्यत्रहस्तत्राणंचतुर्दश्यामितिशौनकोक्तेर्हस्तत्राणमेवयुक्तं। पराःपंक्त्यादयोलिंगोक्तदेवताइत्येवमनुक्रमण्यांसत्यामंत्ययोर्द्वयोर्विश्वेदेवाइतिकेचिन्मन्यंतेबहुदैवतत्वात्।पंचदश्यादिद्वयोर्विषाक्तमुखबाण

ऽउपजिघ्नते । अश्वांजनिप्रचंतसोश्वान्त्समत्सुचोदय ॥ अहिंरिवभोगैःपर्यैतिबाहुंज्यायाहेतिंपरिबाधमानः । हस्तघ्नो विश्वावयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः ॥ आलाक्तायारुरुशीर्ष्ण्यथोयस्याऽअयोमुखं । इदंपर्जन्यरेतस ऽइष्वैदेव्यैबृहन्नमः ॥ २१ ॥ अवसृष्टापरापतशरव्येब्रह्मसंशिते । गच्छामित्रान्प्रपंद्यस्वमामीषांकंचनोच्छिषः ॥ यत्रबाणाःसंपतंतिकुमाराविशिखाऽइव । तत्रानोब्रह्मणस्पतिरदितिःशर्मयच्छतुविश्वाहाशर्मयच्छतु ॥ मर्माणितेव र्मणाछादयामिसोमस्त्वाराजामृतेनानुवस्तां । उरोर्वरीयोवरुणस्तेकृणोतुजयंतंत्वानुदेवामदंतु ॥ योनःस्वोऽअरणो यश्चनिष्ठ्योजिघांसति । देवास्तंसर्वेधूर्वंतुब्रह्मवर्ममममांतरं ॥ २२ ॥ ( इतिभारद्वाजंषष्ठंमंडलंसमाप्तं अत्रसूक्तानि ७५ )

( ७।१।१ ) अग्निंनरोदीधितिभिररण्योर्हस्तच्युतीजनयंतप्रशस्तं । दूरेदृशंगृहपतिमथर्युं+ ॥ तमग्निमस्तेवसवोन्यृ ण्वन्त्सुप्रतिचक्षमवसेकुतश्चित् । दक्षाय्योयोदमऽआसनित्यः ॥ प्रेद्धोऽअग्नेदीदिहिपुरोनोजस्रयासूर्म्यायविष्ठ । त्वांशश्वंतऽउपयंतिवाजाः ॥ प्रतेऽअग्नयोग्निभ्योवरंनिःसुवीरासःशोशुचंतद्युमंतः । यत्रानरःसमासतेसुजाताः+ ॥ दानोऽअग्नेधियारयिंसुवीरंस्वपत्यंसहस्यप्रशस्तं । नयंयावातरतियातुमावान् ॥ २३ ॥ उपयमेतियुवतिःसुदक्षंदो षावस्तोर्हविष्मतीघृताची । उपस्वैनमरमतिर्वसूयुः+ ॥ विश्वाऽअग्नेपदहारातीर्येभिस्तपोभिरदहोजरूथं । प्रनिस्वरं

---

इतिशौनकः)।वासिष्ठेसप्तमेमंडलेषडनुवाकाः(७।१।१)अग्निंनरइतिपंचविंशत्यृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निर्विराट्अंत्याःसप्तत्रिष्टुभः।

चातयस्वामीवां ॥ आयस्तेऽअग्नऽइधतेऽअनीकंवसिष्ठशुक्रदीदिवःपावक । उतोनऽएभिःस्तवथैरिहस्याः ॥ वियेते
ऽअग्नेभेजिरेऽअनीकंमर्तानरःपित्र्यासःपुरुत्रा । उतोनऽएभिःसुमनाऽइहस्याः ॥ इमेनरोवृत्रहत्येषुशूराविश्वाऽअदे
वीरभिसंतुमायाः । येमेधियंपनयंतप्रशस्तां+ ॥ २४ ॥ माशूनेऽअग्नेनिषदामनृणांमाशेषसोवीरतापरित्वा । प्रजाव
तीषुदुर्यासुदुर्य ॥ यमश्वीनित्यमुपयातियज्ञंप्रजावंतंस्वपत्यंक्षयंनः । स्वजन्मनाशेषसावावृधानं+ ॥ पाहिनोऽअग्नेर
क्षसोऽअजुष्टात्पाहिधूर्तेररुषोऽअघायोः । त्वायुजापृतनायूँरभिष्यां ॥ सेदग्निरग्नीँऽरत्यस्त्वन्यान्यत्रवाजीतनयोवी
ळुपाणिः । सहस्रपाथाऽअक्षरासमेति ॥ सेदग्निर्योवनुष्यतोनिपातिसमेद्धारमंहसऽउरुष्यात् । सुजातासःपरिचरं
तिवीराः+ ॥ २५ ॥ अयंसोऽअग्निराहुतःपुरुत्रायमीशानःसमिदिधेहविष्मान् । परियमेत्यध्वरेषुहोता ॥ त्वेऽअग्नऽ
आहवनानिभूरीशानासऽआजुहुयामनित्या । उभाकृण्वंतोवहतूमियेधे ॥ इमोऽअग्नेवीततमानिहव्याजस्रोवक्षिदेव
तातिमच्छ । प्रतिनऽईंसुरभीणिव्यंतु ॥ मानोऽअग्नेवीरतेपरादादुर्वाससेमतयेमानोऽअस्यै । मानःक्षुधेमारक्षसऽऋ
तावोमानोदमेमावनऽआजुहूर्थाः ॥ नूमेब्रह्माण्यग्नऽउच्छशाधित्वंदेवमघवद्भ्यःसुषूदः । रातौस्यामोभयासऽआतेयू
यंपातस्वस्तिभिःसदानः ॥ २६ ॥ त्वमग्नेसुहवोरण्वसंदृक्सुदीतीसूनोसहसोदिदीहि । मात्वेसचातनयेनित्यऽआध
ङ्मावीरोऽअस्मन्नर्योविदासीत् ॥ मानोऽअग्नेदुर्भृतयेसचैषुदेवेद्धेष्वग्निषुप्रवोचः । मातेऽअस्मान्दुर्मतयोभृमाच्चिद्देव

स्यंसूनोसहसोनशंत ॥ समतोंऽअग्नेस्वनीकरेवानमर्त्येयऽआंजुहोतिहव्यं । सदेवतावसुवनिंदधातियंसूरिरर्थीपृच्छमा नऽएतिं ॥ महोनोऽअग्नेसुवितस्यंविद्वान्रयिंसूरिभ्यऽआवहावृहंतं । येनवयंसहसावन्मदेमाविक्षितासऽआयुषासुवी रा: ॥ नूसेब्रह्मांण्य० ॥ २७ ॥ इतिपंचमाष्टकेप्रथमोऽध्याय: ॥ १ ॥ ॥ ॥ ॥



पंचमाष्टकेसूक्तानि १२९ ऋच: १२६३

त्रयस्त्रिंशाष्टकेवर्गा: २७ सूक्तानि १५ ऋच: १४३ ॥ त्याग: ॥ अश्विभ्यामिदं.२२ उषस.१२ मरुद्भ्य.११ मित्रावरुणाभ्या. ११ इंद्रावरुणाभ्या.११ इंद्राविष्णुभ्या.८ द्यावापृथिवीभ्या.६ सवित्र.६ इंद्रासोमाभ्या.५ बृहस्पतय.३ सोमारुद्राभ्या.४ वर्मणइ. धनुषइ. ज्यायाइ. धनुष्कोट्या. इषुध्याइ. सारथिरश्मिभ्य. अश्वेभ्य. रथाये. रथगोपेभ्य. ब्राह्मणपितृसोमद्यावापृथिवीपूषभ्य. इषुभ्य.२ प्रतोदाये. हस्तत्राणाये. इषुभ्य.२ युद्धभूमिकवचब्रह्मणस्पत्यदितिभ्य. वर्मसोमवरुणेभ्य. देवब्रह्मभ्य. अग्नये.२५ ॥ इतिपंचमेप्रथम: ॥

जुषस्वैकादशाग्नेमग्निंवोदशप्रव:प्राग्नयेनववैश्वानरीयंतुप्रसम्राज:सप्तप्रवोदेवमिंधेबोधिषलुषोनपंचमहानगन्म तृचंप्राग्नयेवैश्वानरीयंसमिधाबृहत्यांद्युपसद्यायपंचोनागायत्रमेनावोद्वादशप्रागाथमग्नेभवसप्तद्वैपदंत्रैष्टुभंत्वे हपंचाधिकैंद्रंसुदास:पैजवनस्यंचतस्रोंत्यादानस्तुतिर्यस्तिग्मश्रृंगएकादश ॥ २ ॥ ॥ ॥

॥ हरिः ओम् ॥ ( ७।१।२ ) जुषस्वनःसमिधमग्नेऽअद्यशोचाबृहद्यजतंधूममृण्वन् । उपस्पृशदिव्यंसानुस्तूपैः संरश्मिभिस्ततनःसूर्यस्य ॥ नराशंसस्यमहिमानमेषामुपस्तोषामयजतस्ययज्ञैः । येसुक्रतवःशुचयोधियंधाःस्वदंतिदेवाऽउभयानिहव्या ॥ ईळेन्यंवोऽअसुरंसुदक्षमंतर्दूतंरोदसीसत्यवाचं । मनुष्वदग्निंमनुनासमिद्धंसमध्वरायसदमिन्महेम ॥ सपर्यवोभरमाणाऽअभिज्ञुप्रवृंजतेनमसाबर्हिरग्नौ । आजुह्वानाघृतपृष्ठंपृषद्वदध्वर्यवोहविषामर्जयध्वं ॥ स्वाध्योऽविदुरोदेवयंतोशिश्रयूरथयुर्देवताता । पूर्वीशिशुंनमातरारिहाणेसमग्रुवोनसमनेष्वंजन् ॥ १ ॥ उतयोषणेदिव्येमहीनऽउषासानक्तासुदुघेवधेनुः । बर्हिषदापुरुहूतेमघोनीऽआयज्ञियेसुवितायश्रयेतां ॥ विप्रायज्ञेषुमानुषेषुकारूमन्येवांजातवेदसायजध्यै । ऊर्ध्वंनोऽअध्वरंकृतंहवेषुतादेवेषुवनथोवार्याणि ॥ आभारतीभारतीभिःसजोषाऽइळादेवैर्मनुष्येभिरग्निः । सरस्वतीसारस्वतेभिरर्वाक्तिस्रोदेवीर्बर्हिरेदंसदंतु ॥ तन्नस्तुरीपमधपोषयित्नुदेवत्वष्टर्विराणःस्यस्व । यतोवीरःकर्मण्यःसुदक्षोयुक्तग्रावाजायतेदेवकामः ॥ वनस्पतेवसृजोपदेवानग्निर्हविःशमितासूदयाति । सेदुहोतासत्यतरोयजातियथादेवानांजनिमानिवेद ॥ आयाह्यग्नेसमिधानोऽअर्वाङिंद्रेणदेवैःसरथंतुरेभिः । बर्हि

(७।१।२) जुषस्वेत्येकादशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठःइध्मोनराशंसइळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौसरस्वतीळाभारत्यस्त्वष्टावनस्पतिःस्वाहाकृतयस्त्रिष्टुप् ।

नेऽआस्तामदितिःसुपुत्रास्वाहादेवाऽअमृतामादयंतां ॥ २ ॥ ( ७।१।३ ) अग्निंवोदेवमग्निभिःसजोषायजिष्ठंदूत
मध्वरेकृणुध्वं । योमर्त्येषुनिध्रुविर्ऋतावातपुर्मूर्धाघृतान्नःपावकः+ ॥ प्रोथदश्वोनयवसेविष्यन्यदामहःसंवरणाद्व्यस्था
त् । आदस्यवातोऽअनुवातिशोचिरधस्मतेव्रजनंकृष्णमस्ति ॥ उद्यस्यतेनवजातस्यवृष्णोग्नेचरंत्यजराऽइधानाः ।
अच्छाद्यामरुषोधूमऽएतिसंदूतोऽअग्नऽईयसेहिदेवान्+ ॥ वियस्यतेपृथिव्यांपाजोऽअश्रेत्तृषुयदन्नासमवृक्तजंभैः ।
सेनेवसृष्टाप्रसितिष्टऽएतियवंनदस्मजुह्वाविवेक्षि ॥ तमिद्दोषातमुषसियविष्ठमग्निमत्यंनमर्जयंतनरः । निशिशानाऽ
अतिथिमस्ययोनौदीदायशोचिराहुतस्यवृष्णः ॥ ३ ॥ सुसंदृक्तेस्वनीकप्रतीकंवियद्रुक्मोनरोचसऽउपाके । दिवोनते
तन्यतुरेतिशुष्मश्चित्रोनसूरःप्रतिचक्षिभानुं+ ॥ यथावःस्वाहाग्नयेदाशेमपरीळाभिर्घृतवद्भिश्चहव्यैः । तेभिर्नोऽअग्ने
ऽअमितैर्महोभिःशतंपूर्भिरायसीभिर्निपाहि ॥ यावातेसंतिदाशुषेऽअधृष्टागिरोवायाभिर्नृवतीरुरुष्याः । ताभिर्नः
सूनोसहसोनिपाहिस्मत्सूरीन्जरितृन्जातवेदः ॥ निर्यत्पूतेवस्वधितिःशुचिर्गात्स्वयाकृपातन्वा३रोचमानः । आयोमा
त्रोरुशेन्योजनिष्टदेवयज्यायसुक्रतुःपावकः+ ॥ एतानोऽअग्नेसौभगादिदीह्यपिक्रतुंसुचेतसंवतेम । विश्वास्तोतृभ्यो
गृणतेचसंतुयूयंपातस्वस्तिभिःसदानः ॥ ४ ॥ ( ७।१।४ ) प्रवःशुक्रायभानवेभरध्वंहव्यंमतिंचाग्नयेसुपूतं । योदै



( ७।१।३ ) अग्निंवइतिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निस्त्रिष्टुप् । ( ७।१।४ ) प्रवःशुक्रायेतिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्नि

व्यानिमानुषाजनूंष्यंतविंश्वानिविद्मनाजिगाति ॥ सगृत्सोंऽअग्निस्तरुंणश्चिदस्तुयतोयविंष्ठोऽअजंनिष्टमातुः । संयो
वनांयुवतेशुचिंदन्भूरिंचिदन्नासमिदंत्तिसद्यः+ ॥ अस्यदेवस्यसंसद्यनीकेयंमर्तासःश्येतंजगृभ्रे । नियोगृभंपौरुषेयी
मुवोचंदुरोकंमग्निरायवेंशुशोच ॥ अयंकविरकंविषुप्रचेतामर्तेष्वग्निरमृतोनिधायि । समानोऽअत्रजुहुरःसहस्वःसदा
त्वेसुमनंसःस्याम ॥ आयोयोनिंदेवकृंतंससादक्रत्वाह्यग्निरमृताँऽअतारीत् । तमोषधीश्चवनिनंश्चगर्भंभूमिश्चविश्व
धायंसंबिभर्ति ॥ ५ ॥ ईशेह्यग्निरमृतस्यभूरेरीशेरायःसुवीर्यस्यदातोः । मात्वावयंसहसावन्नवीरामाप्संवःपरिष
दाम्ममादुवः ॥ परिषद्यंह्यरणस्यरेक्णोनित्यस्यरायःपतयःस्याम । नशेषोंऽअग्नेऽअन्यजातमस्त्यचेतानस्यमापथोवि
दुक्षः+ ॥ नहिग्रभायारणःसुशेवोन्योदंर्योमनंसामंतवाऽउं । अधाचिदोकःपुनरित्सऽएत्यानोवाज्यभीषाळेतुनव्यः ॥
त्वमंग्नेवनुष्यतोनिपाहित्वमुनःसहसावन्नवद्यात् । संत्वाध्वस्मन्वदभ्येतुपाथःसंरयिःस्पृहयाय्यःसहस्री+ ॥ एतानो
ऽअग्नेसौभंगादिदीह्यपिक्रतुंसुचेतंसंवतेम । विश्वास्तोतृभ्योगृणतेचंसंतुयूयंपातस्वस्तिभिःसदानः ॥६॥ (७।१।५) प्रा
ग्नयेतवसेंभरध्वंगिरंदिवोऽअरतयेपृथिव्याः । योविश्वेषाममृतानामुपस्थेवैश्वानरोवावृधेजागृवद्भिः ॥ पृष्टोदिवि
धाय्यग्निःपृथिव्यांनेतासिंधूनांवृषभःस्तियानां । समानुषीरभिविशोविभातिवैश्वानरोवावृधानोवरेण ॥ त्वद्भिया



त्रिष्टुप् । ( ७।१।५ ) प्राग्नयइतिनवर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोवैश्वानरोग्निस्त्रिष्टुप् ।

ऋक्सं.

अ.५अ. २

॥ १० ॥

विशः॑ऽआय॒न्नसि॑क्नीरस॑मनाजह॑तीर्भोज॑नानि । वैश्वा॑नरपू॒रवे॒शोशु॑चान॒ःपुरो॒यद॑ग्ने॒दर॒यन्न॒दीदेः ॥ तव॑त्रि॒धातु॑पृथि॒वी ऽउ॒तद्यौर्वैश्वा॑नरव्र॒तम॑ग्नेसचंत । त्वंभा॒सारोद॑सी॒ऽआत॑तं॒थाज॑स्रेणशो॒चिषा॒शोशु॑चानः ॥ त्वाम॑ग्ने॒हरि॑तोवावशा॒ना गिरः॑सचंते॒धुन॑योघृ॒ताचीः॑ । पतिं॑कृष्टी॒नांर॒थ्यं॑रयी॒णांवैश्वा॑न॒रमु॒षसां॑के॒तुमह्ना॑म् ॥ ७ ॥ त्वेऽअ॑सु॒र्यं१॒॑वस॑वो॒न्यृ॑ण्व॒न्क्र तुं॒हिते॑मित्रमहोजु॒षंत॑ । त्वंदस्यूँ॒रोक॑सोऽअग्नऽआज॒ऽउ॒रुज्योति॑र्ज॒नय॒न्नार्या॑य ॥ सजाय॑मानःप॒र॒मेव्यो॑मन्वा॒युर्नपा॒थः परि॑पासिस॒द्यः । त्वंभुव॑ना॒जनय॑न्न॒भिक्र॒न्नप॑त्यायजातवेदोदश॒स्यन् ॥ ताम॑ग्नेऽअ॒स्मेऽइष॒मेर॑यस्व॒वैश्वा॑नरद्यु॒मतीं॑ जातवेदः । यया॒राधः॒पिन्व॑सिविश्ववारपृ॒थुश्रवो॑दा॒शुषे॒मर्त्या॑य ॥ तंनो॑ऽअग्ने॒म॒घव॑द्भ्यःपुरु॒क्षुंर॒यिंनिवाजं॒श्रुत्यं॑युवस्व । वैश्वा॑नर॒महि॑न॒ःशर्म॑यच्छरु॒द्रेभि॑र॒ग्नेवसु॑भिःस॒जोषाः॑ ॥ ८ ॥ ( ७।१।६ ) प्रस॒म्राजो॒ऽअसु॑रस्य॒प्रश॑स्तिंपुंसःकृ॒ष्टीनाम॑ नु॒माद्य॑स्य । इंद्र॑स्येव॒प्रत॒वस॑स्कृ॒तानि॒वंदे॑दा॒रुवंद॑मानोविवक्मि ॥ क॒विंके॒तुंधा॒सिंभा॒नुमद्रे॑र्हि॒न्वंति॒शंरा॒ज्यंरोद॑स्योः । पु॒रं॒द॒रस्यं॑गी॒र्भिरा॑विवासे॒ऽग्नेर्व्र॒तानि॒पूर्व्या॑म॒हानि॑ ॥ न्य॑क्र॒तून्ग्र॒थिनो॑मृ॒ध्रवा॑चःप॒णीँर॑श्र॒द्धाँ॑ऽअवृ॒धाँ॑ऽअय॒ज्ञान् । प्रप्र॒ता न्दस्यूँ॑र॒ग्निर्वि॑वाय॒पूर्व॑श्चका॒राप॑राँ॒ऽअय॑ज्यून् ॥ योऽअ॑पा॒चीने॒तम॑सि॒मद॑न्तीः॒प्राचीः॑श्च॒कार॒नृत॑म॒ःशची॑भिः । तमीशा॑ नं॒वस्वो॑ऽअ॒ग्निंगृ॑णी॒षेना॑नतंद॒मय॑न्तंपृत॒न्यून् ॥ योदे॒ह्यो॒३॑अन॑मयद्वध॒स्नैर्यो॑ऽअ॒र्यप॑त्नीरु॒षस॑श्च॒कार॑ । सनि॒रुध्या॒नहु॑

मंडलं ७

अनु. १

॥ १० ॥

( ७।१।६ ) प्रसम्राजइतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोवैश्वानरोग्निस्त्रिष्टुप् ।

षोयह्वोऽअग्गिर्विंशश्चक्रेवलिहृतःसहोभिः ॥ यस्यशर्मन्नुपविश्वेजनासऽएवैस्तस्थुःसुमतिंभिक्षमाणाः । वैश्वानरोव
रमारोदस्योराग्निःसंसादपित्रोरुपस्थं ॥ आदेवोददेबुध्न्याउवसूनिवैश्वानरऽउदितासूर्यस्य । आसमुद्रादवरादापरं
स्मादाग्निर्ददेदिवऽआपृथिव्याः ॥ ९ ॥ (७।१।७) प्रवोदेवंचित्सहसानमग्निमश्वंनवाजिनंहिषेनमोभिः । भवानो
दूतोऽअध्वरस्यविद्वान्त्मनादेवेषुविविदेमितद्रुः ॥ आयाह्यग्नेपथ्याउअनुस्वामंद्रोदेवानांसख्यंजुषाणः । आसानुशु
ष्मैर्नदयन्पृथिव्याजंभेभिर्विश्वमुशधग्वनानि ॥ प्राचीनोयज्ञःसुधितंहिबर्हिःप्रीणीतेऽअग्निरीळितोनहोता । आमा
तराविश्ववारेहुवानोयतोयविष्ठजज्ञिषेसुशेवः ॥ सद्योऽअध्वरेरथिरंजनंतमानुषासोविचेतसोयऽएषां । विशामधा
यिविश्पतिर्दुरोणेउग्निर्मंद्रोमधुवचाऽऋतावा ॥ असादिवृतोवह्निराजगन्वानग्निर्ब्रह्मानृषदनेविधर्ता । द्यौश्चयंपृथि
वीवावृधातेऽआयंहोतायजंतिविश्ववारं ॥ एतेद्युम्नेभिर्विश्वमातिरंतमंत्रंयेवारंनर्याऽअतक्षन् । प्रयेविशस्तिरंतश्रोष
माणाऽआयेमेऽअस्यदीधयन्नृतस्य ॥ नूत्वामग्नऽईमहेवसिष्ठाऽईशानंसूनोसहसोवसूनां । इषंस्तोतृभ्योमघवद्भ्यऽआ
नड्यूयंपातस्वस्तिभिःसदानः ॥ १० ॥ (७।१।८) इंधेराजासमर्योनमोभिर्यस्यप्रतीकमाहुतंघृतेन । नरोहव्येभिं
रीळतेसवाधऽआग्निरग्रंऽउषसामशोचि ॥ अयमुष्यसुमहाँऽअवेदिहोतामंद्रोमनुषोयह्वोऽअग्निः । विभाऽअकःसस्र

(७।१।७) प्रवोदेवमितिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निस्त्रिष्टुप्। (७।१।८) इंधेराजेतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निस्त्रिष्टुप्।

जानः पृथिव्यां कृष्णपविरोषधीभिर्ववक्षे ॥ कयानोऽअग्नेविवसः सुवृक्तिंकामुस्वधामृणवः शस्यमानः । कदाभवेमपत
यःसुदत्रारायोवंतारोदुष्टरस्यसाधोः ॥ प्रप्रायमग्निर्भरतस्यशृण्वेवियत्सूर्योनरोचतेबृहद्भाः । अभियःपूरुंपृतनासुत
स्थौद्युतानोदैव्योऽअतिथिःशुशोच ॥ असन्नित्वेऽआहवनानिभूरिभुवोविश्वेभिःसुमनाऽअनीकैः । स्तुतश्चिदग्नेशृ
ण्विषेगृणानःस्वयंवर्धस्वतन्वंसुजात ॥ इदंवचःशतसाःसंसहस्रमुदग्नयेजनिषीष्टद्विबर्हाः । शंयत्स्तोतृभ्यऽआपयेभ
वातिद्युमदमीवचातनंरक्षोहा ॥ नूत्वामग्नऽईमहेवसिष्ठाऽईशानंसूनोसहसोवसूनां । इषंस्तोतृभ्योमघवद्भ्यऽआन
ड्यूयंपातस्वस्तिभिःसदानः ॥ ११ ॥ ( ७।१।९ ) अबोधिजारऽउषसामुपस्थाद्धोतामंद्रःकवितमःपावकः । दधा
तिकेतुमुभयस्यजंतोर्हव्यादेवेषुद्रविणंसुकृत्सु ॥ ससुक्रतुर्योविदुरःपणीनांपुनानोऽअर्कंपुरुभोजसंनः । होतामंद्रोवि
शांदमूनास्तिरस्तमोददृशेराम्याणां ॥ अमूरःकविरदितिर्विवस्वान्त्सुसंसन्मित्रोऽअतिथिःशिवोनः । चित्रभानुरुषसां
भात्यग्रेपांगर्भःप्रस्व१आविवेश ॥ ईळेन्योवोमनुषोयुगेषुसमनगाऽअशुचज्जातवेदाः । सुसंदृशाभानुनायोविभातिप्र
तिगावःसमिधानंबुधंत ॥ अग्नेयाहिदूत्यं१मारिषण्योदेवाँऽअच्छाब्रह्मकृतागणेन । सरस्वतींमरुतोऽअश्विनापोय
क्षिदेवान्रत्नधेयायविश्वान् ॥ त्वामग्नेसमिधानोवसिष्ठोजरूथंहन्यक्षिरायेपुरंधिं । पुरुणीथाजातवेदोजरस्वयूयंपातस्व





( ७।१।९ ) अबोधिजारइतिषड्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निस्त्रिष्टुप् ।

स्तिभिः सदा नः ॥ १२ ॥ ( ७।१।१० ) उषो न जारः पृथु पाजो अश्रेद्दविद्युतद्दीद्यच्छोशुचानः । वृषा हरिः शुचिरा भाति भासा धियो हिन्वान उशतीरजीगः ॥ स्वर्ण वस्तोरुषसामरोचि यज्ञं तन्वाना उशिजो न मन्म । अग्निर्जन्मानि देव आ वि विद्वान्द्रवद्दूतो देवयावा वनिष्ठः ॥ अच्छा गिरो मतयो देवयन्तीरग्निं यन्ति द्रविणं भिक्षमाणाः । सुसंदृशं सुप्रतीकं स्वंचं हव्यवाहमरतिं मानुषाणां ॥ इंद्रं नो अग्ने वसुभिः सजोषा रुद्रं रुद्रेभिरा वहा बृहंतं । आदित्येभिरदितिं विश्वजन्यां बृहस्पतिमृक्वभिर्विश्ववारं । मंद्रं होतारमुशिजो यविष्ठमग्निं विश ईळते अध्वरेषु । स हि क्षपावाँ अभवद्रयीणामतंद्रो दूतो यजथाय देवान् ॥ १३ ॥ ( ७।१।११ ) महाँ अस्यध्वरस्य प्रकेतो न ऋते त्वदमृता मादयंते । आ विश्वेभिः सरथं याहि देवैर्न्यग्ने होता प्रथमः सदेह ॥ त्वामीळते अजिरं दूत्याय हविष्मंतः सदमिन्मानुषासः । यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवंति ॥ त्रिश्चिदक्तोः प्र चिकितुर्वसूनि त्वे अंतर्दाशुषे मर्त्याय । मनुष्वदग्न इह यक्षि देवान्भवा नो दूतो अभिशस्तिपावा ॥ अग्निरीशे बृहतो अध्वरस्याग्निर्विश्वस्य हविषः कृतस्य । क्रतुं ह्यस्य वसवो जुषंताथा देवा दधिरे हव्यवाहं ॥ आग्ने वह हविरद्याय देवानिंद्रज्येष्ठास इह मादयंतां । इमं यज्ञं दिवि देवेषु धेहि यूयं पात स्वस्तिभिः

---

(७।१।१०) उषो न जार इति पंचर्चस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठोऽग्निस्त्रिष्टुप् । (७।१।११) महाँ असीति पंचर्चस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठो

ऋक्सं.

अ. ५ अ. २

॥ १२ ॥

सदा॑नः ॥ १४ ॥ ( ७।१।१२ ) अग॑न्मम॒हानम॑सा॒यवि॑ष्ठं॒योदी॒दाय॒सभि॑द्धः॒स्वेदु॑रो॒णे । चि॒त्रभा॑नुं॒रोद॑सी॒ऽअं॒तरु॒र्वी स्वा॑हुतंवि॒श्वतः॑प्र॒त्यंचं॑ ॥ सम॒ह्नाविश्वा॑दुरि॒ता॑नि॒सा॒ह्वान॒ग्निष्ट॑वे॒दम॒ऽआजा॒तवे॑दाः । सनो॑रक्षिष॒द्दु॒रि॒ताद॑व॒द्याद॒स्मा न्गृ॒ण॒तऽउ॒तनो॑म॒घोनः॑ ॥ त्वंव॑रुण॒ऽउ॒तमि॒त्रोऽअ॑ग्ने॒त्वांव॑र्धंतिम॒तिभि॒र्वसि॑ष्ठाः । त्वेव॒सु॑सुष॒णना॑नि॒संतु॒यू॒यंपा॑तस्व॒स्ति भि॒ःसदा॑नः ॥ १५ ॥ ( ७।१।१३ ) प्राग्नये॑विश्व॒शुचे॑धि॒यंधे॑सुर॒घ्नेमन्म॑धी॒तिं॑भरध्वं । भरे॑ह॒विर्न॑ब॒र्हिषि॑प्रीणा॒नोवै श्वान॒राय॒यत॑येम॒तीनां॑ ॥ त्वम॑ग्नेशो॒चिषा॒शोशु॑चान॒ऽआरोद॑सीऽअपृणा॒जाय॑मानः । त्वंदे॒वाँऽअ॒भिश॑स्तेरमुं॒चोवै श्वा॑नरजातवेदोमहि॒त्वा ॥ जा॒तोयद॑ग्ने॒भुव॑ना॒व्यख्यः॑प॒शून्नगो॒पाऽइर्यः॒परि॑ज्मा । वैश्वा॑नर॒ब्रह्म॑णेविंद॒गा॒तुंयू॒यंपा॑तस्व स्तिभि॒ःसदा॑नः ॥ १६ ॥ ( ७।१।१४ ) स॒मिधा॑जा॒तवे॑दसेदे॒वाय॑दे॒वहू॑तिभिः । ह॒विर्भिः॑शु॒क्रशो॑चिषेनम॒स्विनो॑व॒यंदा॑ शेमा॒ग्नये॑ ॥ व॒यंते॑ऽअग्नेस॒मिधा॑विधेमव॒यंदा॑शेमसुष्टु॒तीय॑जत्र । व॒यंघृ॒तेना॑ध्वरस्यहोतर्व॒यंदे॑वह॒विषा॑भद्रशोचे ॥ आ नो॑दे॒वेभि॒रुप॑दे॒वहू॑ति॒मग्ने॑या॒हिवष॑ट्कृतिंजुषा॒णः । तुभ्यं॑दे॒वाय॒दाश॑तःस्यामयू॒यंपा॑तस्व॒स्तिभि॒ःसदा॑नः ॥१७॥ (७।१।१५) उ॒प॒सद्या॑यमी॒ळ्हुष॑ऽआ॒स्ये॑जुहुताह॒विः । योनो॒नेदि॑ष्ठ॒माप्यं॑ ॥ यः॒पंच॑चर्ष॒णीर॒भिनि॑ष॒सादद॒मेद॑मे । कु॒विर्गृ॒हप॑ति॒र्युवा॑ ॥

मंडलं. ७

अनु. १

॥ १२ ॥

---

ग्निस्त्रिष्टुप्। (७।१।१२) अगन्मेतितृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निस्त्रिष्टुप् । (७।१।१३) प्राग्नयइतितृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठो वैश्वानरोग्निस्त्रिष्टुप् । (७।१।१४) समिधेतितृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निस्त्रिष्टुबाद्यावृहती । (७।१।१५) उपसद्यायेतिपंचदशर्चस्य

सनोवेदोऽअमात्यमग्नीरक्षतुविश्वतः । उतास्मान्पात्वंहसः ॥ नवंनुस्तोममग्नयेदिवःश्येनायजीजनं । वस्वःकुविद्वनातिनः ॥ स्पार्हायस्यश्रियोदृशेरयिर्वीरवतोयथा । अग्रेयज्ञस्यशोचतः ॥ १८ ॥ सेमांवेतुवषट्कृतिमग्निर्जुषतनोगिरः । यजिष्ठोहव्यवाहनः ॥ नित्वानक्ष्यविश्पतेद्युमंतंदेवधीमहि । सुवीरमग्नऽआहुत ॥ क्षपऽउस्रश्चदीदिहिस्वग्नयस्त्वयावयं । सुवीरस्त्वमस्मयुः ॥ उपत्वासातयेनरोविप्रासोयंतिधीतिभिः । उपाक्षरासहस्त्रिणी ॥ अग्नीरक्षांसिसेधतिशुक्रशोचिरमर्त्यः । शुचिःपावकऽईड्यः ॥ १९ ॥ सनोराधांस्याभरेशानःसहसोयहो । भगश्चदातुवार्यं ॥ त्वमग्नेवीरवद्यशोदेवश्चसविताभगः । दितिश्चदातिवार्यं ॥ अग्नेरक्षाणोऽअंहसःप्रतिष्मदेवरीषतः । तपिष्ठैरजरोदह ॥ अधामहीनऽआयस्यनाधृष्टोनृपीतये । पूर्भवाशतभुजिः ॥ त्वंनःपाह्यंहसोदोषावस्तरघायतः । दिवानक्तमदाभ्य ॥ २० ॥ ( ७।१।१६ ) एनावोऽअग्निंनमसोर्जोनपातमाहुवे । प्रियंचेतिष्ठमरतिंस्वध्वरंविश्वस्यदूतममृतं ॥ सयोजतेऽअरुषाविश्वभोजसासदुद्रवत्स्वाहुतः । सुब्रह्मायज्ञःसुशमीवसूनांदेवंराधोजनानां ॥ उदस्यशोचिरस्थादाजुह्वानस्यमीढुषः । उद्धूमासोऽअरुषासोदिविस्पृशःसमग्निमिंधतेनरः ॥ तंत्वादूतंकृण्महेयशस्तमंदेवाँऽआवीतयेवह । विश्वासूनोसहसोमर्तभोजनारास्वतद्यत्त्वेमहे ॥ त्वमग्नेगृहपतिस्त्वंहोतानोऽअध्वरे । त्वंपोताविश्ववारप्रचेतायक्षिवेषिचवार्यं ॥ कृधि

---

सूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निर्गायत्री । (७।१।१६) एनावोअग्निमितिद्वादशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निःप्रथमाद्ययुजोबृहत्यःद्वितीया

ऋक्सं. अ.५अ.२ ॥ १३ ॥

मंडलं ७ अनु. २

रत्नंयजमानायसुक्रतोत्वंहिरंत्नधाऽअसि । आनंऽऋतेशिशीहिविश्वंमृत्विजंसुशंसोयश्चदक्षंते ॥ २१ ॥ त्वेऽअंग्नेस्वाहुतप्रियासंःसंतुसूरयंः । यंतारोयेमघवानोजनानामूर्वांदयंतगोनाँ ॥ येषामिळाघृतहंस्तादुरोणऽआँऽअपिंप्रातानिषीदंति । ताँस्त्रांयस्वसहस्यद्रुहोनिदोयच्छांनःशर्मंदीर्घश्रुत् ॥ समंद्रयाचजिह्वयावह्निरासाविदुष्टरः । अग्नेरयिंमघवंद्भ्योनऽआवहहव्यदातिंचसूदय ॥ येराधांसिददत्यश्व्यांमघाकामेंनश्रवंसोमहः । ताँऽअंहंसःपिपृहिपर्तृभिष्ट्वंशतंपूर्भिर्यंविष्ट्य ॥ देवोवोंद्रविणोदाःपूर्णांविंवष्ट्यासिचं । उद्वांसिंचध्वमुपंवापृणध्वमादिद्वोंदेवऽओंहते ॥ तंहोतारमध्वरस्यप्रचेंतसंवह्निंदेवाऽअंकृण्वत । दधांतिरत्नंविधतेसुवीर्यमग्निर्जनायदाशुषे ॥ २२ ॥ ( ७।१।१७ ) अग्नेभवंसुषमिधासमिद्धऽउतबर्हिरुर्विंयाविस्तृणीतां ॥ उतद्वारंऽउशतीर्विश्रंयंतामुतदेवाँऽउंशतऽआवंहेह ॥ अग्नेवीहिहविषायक्षिदेवान्त्स्वंध्वराकृणुहिजातवेदः ॥ स्वध्वराकरतिजातवेदायक्षंद्देवाँऽअमृतान्पिप्रयंच्च ॥ वंस्वविश्वावार्याणिप्रचेतःसत्याभंवंत्वाशिषोंनोऽअद्य ॥ त्वामुतेदंधिरेहव्यवाहंदेवासोंऽअग्नऽऊर्जऽआनपातं ॥ तेतेंदेवायदाशंतःस्याममहोनोरत्नाविदंधऽइयानः ॥ २३ ॥ ( ७।२।१ ) त्वेहयत्पितरंश्चिन्नऽइंद्रविश्वांवामाजंरितारोऽअसंन्वन् । त्वे

॥ १३ ॥

दियुजःसतोबृहत्यः । ( ७।१।१७ ) अग्नेभवेतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोग्निर्द्विपदात्रिष्टुप् ॥ द्वितीयेनुवाकेषोडशसूक्तानि ( ७।२।१ ) त्वेहयदितिपंचविंशत्यृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रोत्यानांचतसृणांसुदासस्त्रिष्टुप् ।

गावः सुदुघास्त्वेह्यश्वास्त्वंवसुदेवयतेवनिष्ठः ॥ राजैवहिजनिभिःक्षेष्येवावद्युभिरभिविदुष्कविःसन् । पिशागिरोमघ
वन्गोभिरश्वैस्त्वायतःशिशीहिरायेऽअस्मान्+ । इमाऽउंत्वापस्पृधानासोऽअत्रमंद्रागिरोदेवयंतीरुपस्थुः । अर्वाचीं
तेपथ्याराय ऽएंतुस्यामतेसुमताविंद्रशर्मन् । धेनुंनत्वासूयवसेदुदुक्षन्नुपब्रह्माणिससृजेवसिष्ठः । त्वामिन्मेगोपतिंवि
श्वऽआहानऽइंद्रःसुमतिंगंत्वच्छ ॥ अर्णांसिचित्पप्रथानासुदासऽइंद्रोगाधान्यकृणोत्सुपारा । शर्धंतंशिम्युमुचथस्य
नव्यःशापंसिंधूनामकृणोदशस्तीः ॥ २४ ॥ पुरोळाऽइत्तुर्वशोयक्षुरासीद्रायेमत्स्यासोनिशिताऽअपीव । श्रुष्टिंचक्रुर्भृ
गवोद्रुह्यवश्चसखासखायमतरद्विषूचोः ॥ आपक्थासोभलानसोभनंतालिनासोविषाणिनःशिवासः । आयोनयत्स
धमाऽआर्यस्यगव्यातृत्सुभ्योऽअजगन्युधानॄन्+ ॥ दुराध्यो३ अदितिंस्रेवयंतोचेतसोविजगृभ्रेपरुष्णीं । मह्नाविव्य
क्पृथिवींपत्यमानःपशुष्कविरशयच्चायमानः ॥ ईयुरर्थंनन्यर्थंपरुष्णीमाशुश्चनेदभिपित्वंजगाम । सुदासऽइंद्रःसुतु
काँऽअमित्रानरंधयन्मानुषेवध्रिवाचः ॥ ईयुर्गावोनयवसादगोपायथाकृतमभिमित्रंचितासः । पृश्निगावःपृश्निनिप्रे
षितासःश्रुष्टिंचक्रुर्नियुतोरंतयश्च ॥ २५ ॥ एकंचयोविंशतिंचश्रवस्यावैकर्णयोर्जनान्राजान्यस्तः । दस्मोनसद्मन्निशि
शातिबर्हिःशूरःसर्गमकृणोदिंद्रऽएषां ॥ अधश्रुतंकवषंवृद्धमप्स्वनुद्रुह्युंनिवृणक्वज्रबाहुः । वृणानाऽअत्रसख्यायसख्यंत्वायंतोयेऽअमदन्ननुत्वा ॥ विसद्योविश्वादृंहितान्येषामिंद्रःपुरःसहसासप्तदर्दः । व्यानवस्यतृत्सवेगयंभाग्जेष्म

पूरुंविदथेमृध्रवाचं ॥ निगव्यवोनवोद्रुह्यवश्चषष्टिःशतासुषुपुःषट्सहस्रा । षष्टिर्वीरासोऽअधिषड्दुवोयुविश्वेदिंद्रस्य वीर्याकृतानि ॥ इंद्रेणैतेतृत्सवोवेविषाणाऽआपोनसृष्टाऽअधवंतनीचीः । दुर्मित्रासःप्रकलविन्मिमानाजहुर्विश्वानि भोजनासुदासे ॥ २६ ॥ अर्धंवीरस्यशृतपामनिंद्रंपराशर्धंतंनुनुदेऽअभिक्षां । इंद्रोमन्युंमन्युम्योमिमायभेजेपथोव र्तनिंपत्यमानः ॥ आध्रेणचित्तद्वेकंचकारसिंह्यंचित्पेत्वेनाजघान । अवस्रक्तीर्वेश्यावृश्चदिंद्रःप्रायच्छद्विश्वाभोजना सुदासे ॥ शश्वंतोहिशत्रवोरारधुष्टेभेदस्यचिच्छर्धतोविंदरंधिं । मर्ताऽएनःस्तुवतोयःकृणोतितिग्मंतस्मिन्निजहिवज्र मिंद्र ॥ आवदिंद्रंयमुनातृत्सवश्चप्रात्रभेदंसर्वतातामुषायत् । अजासश्चशिग्रवोयक्षवश्चबलिंशीर्षाणिजभ्रुरश्व्यानि ॥ नतऽइंद्रसुमतयोनरायःसंचक्षेपूर्वाऽउषसोननूत्नाः । देवकंचिन्मान्यमानंजघंथावत्मनाबृहतःशंबरंभेत् ॥ २७ ॥ प्रयेगृहादममदुस्त्वायापराशरःशतयातुर्वसिष्ठः । नतेभोजस्यसख्यंमृषंताधासूरिभ्यःसुदिनाव्युच्छान् ॥ द्वेनप्तुर्देव वतःशतेगोर्द्वारथावधूमंतासुदासः । अर्हन्नग्नेपैजवनस्यदानंहोतेवसद्मपर्येमिरेभन् ॥ चत्वारोमापैजवनस्यदानाःस्म द्दिष्टयःकृशनिनोनिरेके । ऋज्रासोमापृथिविष्ठाःसुदासस्तोकंतोकायश्रवसेवहंति ॥ यस्यश्रवोरोदसीऽअंतरुर्वीशी र्ष्णेशीर्ष्णेविबभाजाविभक्ता । सप्तेदिंद्रंनस्रवतोगृणंतिनियुध्यामधिमशिशादभीके ॥ इमंनरोमरुतःसश्चतानुदिवो

दासंनपितरंसुदासः । अविष्टनापैजवनस्यकेतंदूणाशंक्षत्रमजरंदुवोयु ॥ २८ ॥ ( ७।२।२ ) यस्तिग्मशृंगोवृषभो नभीमएकःकृष्टीश्च्यावयतिप्रविश्वाः । यःशश्वतोऽअदाशुषोगयस्यप्रयंतासिसुष्वितरायवेदः ॥ त्वंहत्यदिंद्रकुत्सं मावःशुश्रूषमाणस्तन्वासमर्ये । दासंयच्छुष्णंकुयवंन्यस्माऽअरंधयऽआर्जुनेयायशिक्षन् ॥ त्वंधृष्णोधृषतावीतहव्यं प्रावोविश्वाभिरूतिभिःसुदासं । प्रपौरुकुत्सिंत्रसदस्युमावःक्षेत्रसातावृत्रहत्येषुपूरुं ॥ त्वंनृभिर्नृमणोदेववीतौभूरी णिवृत्राहर्यश्वहंसि । त्वंनिदस्युंचुमुरिंधुनिंचास्वापयोदभीतयेसुहंतु ॥ तवच्यौत्नानिवज्रहस्ततानिनवयत्पुरोनवतिं चंसद्यः । निवेशनेशततमाविवेषीरहन्चवृत्रंनमुचिमुताहन् ॥ २९ ॥ सनातातेऽइंद्रभोजनानिरातहव्यायदाशुषेसु दासे । वृष्णेतेहरीवृषणायुनज्मिव्यंतुब्रह्माणिपुरुशाकवाजं ॥ मातेऽअस्यांसहसावन्परिष्टावघायभूमहरिवःपरादै । त्रायस्वनोवृकेभिर्वरूथैस्तवप्रियासःसूरिषुस्याम ॥ प्रियासऽइत्तेमघवन्नभिष्टौनरोमदेमशरणेसखायः । नितुर्वशंनि याद्वंशिशीह्यतिथिग्वायशंस्यंकरिष्यन् ॥ सद्यश्चिन्नुतेमघवन्नभिष्टौनरःशंसंत्युक्थशासऽउक्था । येतेहवेभिर्विपणीँ ऽरदाशन्नस्मान्वृणीष्वयुज्यायतस्मै ॥ एतेस्तोमानरांनृतमतुभ्यमस्मद्र्यंचोददतोमघानि । तेषामिंद्रवृत्रहत्येशिवोभूःस

( ७।२।२ ) यस्तिग्मशृंगइत्येकादशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् ।

खांचशूरोंविताचंनृणां+ ॥ नूऽइंद्रशूरस्तवंमानऽऊतीब्रह्मंजूतस्तन्वावावृधस्व । उपंनोवाजान्मिमीह्युपस्तीन्यूयंपात स्वस्तिभिःसदांनः ॥ ३० ॥ ॥ इतिपंचमाष्टकेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥

चतुस्त्रिंशाध्यायेवर्गाः ३० सूक्तानि १८ ऋचः १५६ ॥ त्यागः ॥ समिद्धायाग्नय. नराशंसाये. इळाये. बर्हिषइ. देवीभ्योद्वार्भ्यइ. उषासानक्ताभ्या. दैवीभ्यांहोतृभ्या. सरस्वतीळाभारतीभ्य. त्वष्ट्र. वनस्पतय. स्वाहाकृतीभ्य. अग्नय.२० वैश्वानरायाग्नय.१६ अग्नय.३२ वैश्वानरायाग्नय.३ अग्नय.३७ इंद्राये.२१ सुदासायेदं.४ इंद्राये.११ ॥ इतिपंचमेद्वितीयः ॥

उग्रोदशासाविंपिबनववैराजमृतेंत्यांमुदुषड्योनिरातैंनसोमःपंचेंद्रंनरोब्रह्माणोंयंसोमआनंःप्रवोद्वादशगायत्रं त्रिविराळंतंमोषुसप्ताधिकाप्रगाथंतृतीयाद्विपदांसौदासैरग्नौप्रक्षिप्यमाणाःशक्तिरंत्यंप्रगाथमालेभेसोर्धर्चउक्ते दह्यतंतंपुत्रोक्तंवसिष्ठःसमापयतेतिशाट्यायनकंवसिष्ठस्यैवहतपुत्रस्यार्षमितितांडकंश्वित्यंचःषळूनासंस्तवोंव सिष्ठस्यसपुत्रस्येंद्रेणवासंवादःप्रशुक्रापंचाधिकावैश्वदेवंहांद्याएकाविंशतिर्द्विपदांअब्जामहेरर्धर्चंउत्तरोहिर्बुध्न्या यंशंनःपंचोनाशांतिः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ (७।२।३) उग्रोजज्ञेवीर्यायस्वधावान्चक्रिरपोनर्योयत्करिष्यन् । जग्मिर्युवानृषदंनमवोभिस्त्राता

---

(७।२।३) उग्रोजज्ञइतिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् ।

नऽइंद्रऽएनंसोमहार्श्चित् ॥ हंतांवृत्रमिंद्रःशूशुवानःप्रावीन्नुवीरोजरितारमूती । कर्तासुदासेऽअहवाऽउंलोकंदातावसु मुहुरादाशुषेभूत् ॥ युध्मोऽअनर्वाखंजकृत्समद्वाशूरःसत्राषाड्जनुषेमषाढः । व्यासऽइंद्रःपृतनाःस्वोजाऽअधाविश्वं शत्रूयंतंजघान ॥ उभेचिदिंद्ररोदसीमहित्वापप्राथतविषीभिस्तुविष्मः । निवज्रमिंद्रोहरिवान्मिमिक्षन्त्समंधसाम देषुवाऽउवोच ॥ वृषाजजानवृषणंरणायतमुचिन्नारीनर्यंससूव । प्रयःसेनानीरधनृभ्योऽअस्तीनःसत्वागवेषणःसधृ ष्णुः+ ॥ १ ॥ नूचित्सभ्रेषतेजनोनरेषन्मनोयोऽअस्यघोरमाविवासात् । यज्ञैर्यऽइंद्रेदधतेदुवांसिक्षयत्सरायऽऋतपा ऽऋतेजाः+ ॥ यदिंद्रपूर्वोऽअपरायशिक्षन्नयज्ज्यायान्कनीयसोदेष्णं+ । अमृतऽइत्पर्यासीतदूरमाचित्रचित्र्यंभरार यिंनः ॥ यस्तऽइंद्रप्रियोजनोददाशदसन्निरेकेऽअद्रिवःसखाते । वयंतेऽअस्यांसुमतौचनिष्ठाःस्यामवरूथेऽअघ्नतोनृपी तौ ॥ एषःस्तोमोऽअचिक्रदद्वृषातऽउतस्तामुर्मघवन्नक्रपिष्ट । रायस्कामोजरितारंतऽआगन्त्वमंगशक्रवस्वऽआशको नः ॥ सनऽइंद्रत्वयंतायाऽइषेधास्त्मनाचयेमघवानोजुनंति । वस्वीषुतेजरित्रेऽअस्तुशक्तिर्यूयंपात० ॥२॥ (७।२।४) असाविदेवंगोऽऋजीकमंधोन्यस्मिन्निंद्रोजनुषेमुवोच । बोधामसित्वाहर्यश्वयज्ञैर्बोधानःस्तोममंधसोमदेषु ॥ प्रयंति यज्ञंविपयंतिबर्हिःसोममादोविदथेदुध्रवाचः । न्युभ्रियंतेयशसोगृभादादूरऽउपब्दोवृषणोनृषाचः ॥ त्वमिंद्रस्रवितु

---

( ७।२।४ ) असाविदेवमितिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् ।

वाऽअपस्कः परिष्ठिताऽअहिनाशूरपूर्वीः । त्वद्वावक्रेरथ्योउनधेनारेजंतेविश्वाकृत्रिमाणिभीषा ॥ भीमोविवेषायुधे
भिरेषामपांसिविश्वानर्याणिविद्वान् । इंद्रः पुरोजर्हषाणोविदूधोद्विवज्रहस्तोमहिनाजघान ॥ नयातवऽइंद्रजूजुवुर्नो
नवंदनाशविष्ठवेद्याभिः । सशर्धदर्योविषुणस्यजंतोर्माशिश्नदेवाऽअपिगुर्ऋतंनः ॥ ३ ॥ अभिक्रत्वेंद्रभूरधज्मन्नतेवि
व्यङ्महिमानंरजांसि । स्वेनाहिवृत्रंशवसाजघंथनशत्रुरंतंविविदद्युधाते ॥ देवाश्चित्तेऽअसुर्यायपूर्वेनुक्षत्रायममिरेस
हांसि । इंद्रोमघानिदयतेविषह्येंद्रंवाजस्यजोहुवंतसातौ ॥ कीरिश्चिद्धित्वामवसेजुहावेशानमिंद्रसौभगस्यभूरेः ।
अवोबभूथशतमूतेऽअस्मेऽअभिक्षत्तुस्त्वावतोवरूता ॥ सखायस्तऽइंद्रविश्वहस्यामनमोवृधासोमहिनातरुत्र । वन्वं
तुस्मातेवसासमीकेउभीतिमर्योवनुषांशवांसि ॥ सनंऽइंद्रत्वयताया ऽइषेधास्त्मनाचयेमघवानोजुनंति । वस्वीषुतेज
रित्रेऽअस्तुशक्तिर्यूयं० ॥४॥(७२१५)पिबासोममिंद्रमंदतुत्वायंतेसुषावहर्यश्वाद्रिः । सोतुर्बाहुभ्यांसुयतोनार्वा ॥ यस्ते
मदोयुज्यश्चारुरस्तियेनवृत्राणिहर्यश्वहंसि । सत्वामिंद्रप्रभूवसोममत्तु ॥ बोधासुमेमघवन्वाचमेमांयांतेवसिष्ठोऽअर्च
तिप्रशस्तिं । इमाब्रह्मसधमादेजुषस्व ॥ श्रुधीहवंविपिपानस्याद्रेर्बोधाविप्रस्यार्चतोमनीषां । कृष्वादुवांस्यंतमासचे
मा ॥ नतेगिरोऽअपिमृष्येतुरस्यनसुष्टुतिमसुर्यस्यविद्वान् । सदातेनामस्वयशोविवक्मि ॥ ५ ॥ भूरिहितेसवना

( ७२१५ ) पिबासोममितिनवर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रोविराळंत्यात्रिष्टुप् ।

मानुषेषु भूरिमनीषीहवते त्वामित् । मारे अस्मन्मघवञ्ज्योकः ॥ तुभ्येदिमा सवना शूर विश्वा तुभ्यं ब्रह्माणि वर्धना कृणोमि । त्वं नृभिर्हव्यो विश्वधासि ॥ नू चिन्नु ते मन्यमानस्य दस्मोदश्नुवंति महिमानमुग्र । न वीर्यमिंद्र ते न राधः ॥ ये च पूर्व ऋषयो ये च नूत्ना इंद्र ब्रह्माणि जनयंत विप्राः । अस्मे ते संतु सख्या शिवानि यूयं पात० ॥ ६ ॥ ( ७।२।६ ) उदु ब्रह्माण्यैरत श्रवस्येंद्रं समर्ये महया वसिष्ठ । आ यो विश्वानि शवसा ततानोपश्रोता म ईवतो वचांसि ॥ अयामि घोष इंद्र देवजामिरिरज्यंत यच्छुरुधो विवाचि । नहि स्वमायुश्चिकिते जनेषु तानीदंहांस्यति पर्ष्यस्मान् ॥ युजे रथं गवेषणं हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः । वि बाधिष्ट स्य रोदसी महित्वेंद्रो वृत्राण्यप्रती जघन्वान् ॥ आपश्चित्पिप्युस्तर्यो३ न गावो नक्षन्नृतं जरितारस्त इंद्र । याहि वायुर्न नियुतो नो अच्छा त्वं हि धीभिर्दयसे वि वाजान् ॥ ते त्वा मदा इंद्र मादयंतु शुष्मिणं तुविराधसं जरित्रे । एको देवत्रा दयसे हि मर्तानस्मिञ्छूर सवने मादयस्व ॥ एवेदिंद्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चंत्यर्कैः । स नः स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥ ( ७।२।७ ) यो निष्ट इंद्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि । असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः ॥ गृभीतं ते मन इंद्र द्विबर्हाः सुतः सोमः परिषिक्ता मधूनि । विसृष्टधेना भरते सुवृक्तिरियमिंद्रं जोहुवती मनीषा ॥ आ नो दिव आ पृथिव्या ऋजीषिन्निदं ब

---

( ७।२।६ ) उदु ब्रह्माणीति षड्चस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठ इंद्रस्त्रिष्टुप् । ( ७।२।७ ) यो निष्ट इति षड्चस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठ इंद्रस्त्रिष्टुप् ।

हिंःसोमपेयांययाहि । वहंतुत्वाहरंयोमद्र्यंचमांगूषमच्छांतवसंमदाय ॥ आनोविश्वांभिरूतिभिंःसजोषाब्रह्मंजुषाणो
हर्यश्वयाहि । वरींवृजत्स्थविरेभिःसुशिप्रास्मेदधद्वृषणंशुष्मंमिंद्र ॥ एषःस्तोमोंमहऽउग्रायवाहेधुरी३वात्योनवाजयंन्न
धायि । इंद्रंत्वायमर्कऽईट्टेवसूनांदिवींवद्यामधिनःश्रोमतंधाः ॥ एवानंऽइंद्रवार्यस्यपूर्धिप्रतेंमहींसुमतिंवेंविदाम ।
इषंपिन्वमघवंद्यःसुवीरांयूयंपांत० ॥ ८ ॥ ( ७।२।८ ) आतेंमहऽईंद्रोत्युंग्रसमंन्यवोयत्समरंतसेनांः । पतांतिदि
द्युन्नर्यस्यबाह्वोर्मातेमनोंविष्वद्र्य१ग्विचारीत् ॥ निदुर्गऽईंद्रश्नथिह्यमित्रांनभियेनोमतांसोऽअमंति । आरेतंशंसंकृ
णुहिनिनित्सोरानोंभरसंभरंणंवसूनां ॥ शतंतेंशिप्रिन्नूतयंःसुदासेंसहस्रंशंसांऽउतरातिरंस्तु । जहिवधर्वनुषोमर्त्यस्या
स्मेद्युम्नमधिरत्नंचधेहि ॥ त्वावंतोहींद्रक्रत्वेऽअस्मित्वावंतोवितुःशूंररातौ । विश्वेदहांनितविषीवऽउग्रँऽओकंःकृणु
ष्वहरिवोनमर्धीः ॥ कुत्सांऽएतेहयंश्वायशूषमिंद्रेसहोंदेवजूंतमियानाः । सत्राकृंधिसुहनांशूरवृत्रावयंतरुंत्राःसनुया
मवाजं ॥ एवानंऽइंद्रवार्यस्यपूर्धिप्रतेंमहींसुमतिंवेंविदाम । इषंपिन्वमघवंद्यःसुवीरांयूयंपांत० ॥ ९ ॥ ( ७।२।९ )
नसोमऽइंद्रमसुंतोममादनाब्रंह्माणोमघवांनंसुतासंः । तस्मांऽउक्थंजनयेयज्जुजोंषन्नृवन्नवींयःशृणवद्यथांनः ॥ उक्थ
ऽउंक्थेसोमऽइंद्रंममादनीथेनींथेमघवांनंसुतासंः । यदींसबाधंःपितरंनपुत्राःसंमानदंक्षाऽअवंसेहवंते । चकारताकृ

(७।२।८) आतेमहइतिषड्टृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् । ( ७।२।९ ) नसोमइतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् ।

णवंन्नूगमन्यायानिंन्नुवंतिवेधसंःसुतेषु । जनीरिवपतिरेकंःसमानोनिमांमृजेपुरऽइंद्रःसुसर्वाः ॥ एवातमांहुरुतशृण्व ऽइंद्रऽएकोविभक्तातरणिर्मघानां । मिथस्तुरंऽऊतयोयस्यपूर्वीरस्मेभद्राणिंसश्चतप्रियाणिं ॥ एवावसिंष्ठऽइंद्रमूतयेनॄ न्कृष्टीनांवृषभंसुतेगृणाति । सहस्रिणऽउपंनोमाहिवाजांन्यूयंपांत० ॥ १० ॥ ( ७।२।१० ) इंद्रंनरोनेमधिंताहव तेयत्पार्यायुनजंतेधियस्ताः । शूरोनृषांताशवंसश्चकानऽआगोमंतिव्रजेभंजात्वंनंः ॥ यऽइंद्रशुष्मोमघवन्तेऽअस्तिशि क्षासखिभ्यःपुरुहूतनृभ्यंः । त्वंहिदृह्ळामंघवन्विचेंताऽअपांवृधिपरिंवृतंनराधंः ॥ इंद्रोराजाजगंतश्चर्षणीनामधिक्षमि विषुरूपंयदस्ति । ततोददातिदाशुषेवसूंनिचोदद्राधऽउपंस्तुतश्चिदर्वाक् ॥ नूचिन्नऽइंद्रोमघवासहूंतीदानोवाजंनि यमतेनऽऊती । अनूंनायस्यदक्षिणापीपायवामंनृभ्योऽअभिवींतासखिभ्यः ॥ नूऽइंद्ररायेवरिवस्कृधीनऽआतेमनों ववृत्याममघाय । गोमदश्वांवद्रथंवद्व्यंतोयूयंपांत० ॥ ११ ॥ ( ७।२।११ ) ब्रह्मांणऽइंद्रोपंयाहिविद्वानर्वाचंस्तेहरं यःसंतुयुक्ताः । विश्वेचिद्धित्वांविहवंतमर्ताऽअस्माकमिच्छृंणुहिविश्वमिन्व ॥ हवंतऽइंद्रमहिमाव्यांनड्ब्रह्मयत्पासिं शवसिन्नृषीणां । आयद्वज्रंदधिषेहस्तंऽउग्रघोरःसन्क्रत्वांजनिष्ठाऽअषाह्ळः । तवप्रणीतींद्रजोहुवानान्त्संयन्नृन्नरोदं सीनिनेथं । महेक्षत्रायशवंसेहिजज्ञेतूंतुजिंचित्तूतुंजिरशिश्नत् ॥ एभिर्नंऽइंद्राहंभिर्दशस्यदुर्मित्रासोहिक्षितयःपवंते ।

---

(७।२।१०) इंद्रंनरइतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् । (७।२।११) ब्रह्माणइतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् ।

प्रतियच्चष्टेऽअनृतमनेनाऽअवद्विितावरुणोमायीनःसात् ॥ वोचेमेदिंद्रंमघवानमेनंमहोरायोराधसोयद्ददन्नः । योऽअर्चतोब्रह्मकृतिमविष्ठोयूयंपात० ॥ १२ ॥ ( ७।२।१२ ) अयंसोमऽइंद्रतुभ्यंसुन्वऽआतुप्रयाहिहरिवस्तदोकाः । पिबात्वं१स्यसुषुतस्यचारोर्ददोमघानिमघवन्नियानः+ ॥ ब्रह्मन्वीरब्रह्मकृतिंजुषाणोर्वाचीनोहरिभिर्याहितूयं । अस्मिन्नूषुसवनेमादयस्वोपब्रह्माणिशृणवऽइमानः ॥ कातेऽअस्त्यरंकृतिःसूक्तैःकदानूनंतेमघवन्दाशेम । विश्वामतीरातततनेत्वायाधामऽइंद्रश्रृणवोहवेमा+ ॥ उतोघातेपुरुष्या३इदासन्येषांपूर्वेषामश्रृणोर्ऋषीणां । अधाहंत्वामघवन्जोहवीमित्वंनइंद्रासिप्रमतिःपितेव ॥ वोचेमेदिंद्रंमघवानमेनंमहोरायोराधसोयद्ददन्नः । योऽअर्चतोब्रह्मकृतिमविष्ठोयूयंपात० ॥ १३ ॥ ( ७।२।१३ ) आनोदेवशवसायाहिशुष्मिन्भवावृधऽइंद्ररायोऽअस्य । महेनृम्णायनृपतेसुवज्रमहिक्षत्रायपौंस्यायशूर ॥ हवंतऽउत्वाहव्यंविवाचितनूषुशूराःसूर्यस्यसातौ । त्वंविश्वेषुसेन्योजनेषुत्वंवृत्राणिरंधयासुहंतु ॥ अहायदिंद्रसुदिनाव्युच्छान्दधोयत्केतुमुपमंसमत्सु । न्यं१ग्निःसीददसुरोनहोताहुवानोऽअत्रसुभगायदेवान्+ ॥ वयंतेतऽइंद्रयेचदेवस्तवंतशूरददतोमघानि । यच्छासूरिभ्यऽउपमंवरूथंस्वाभुवोजरणामश्नवंत ॥ वोचेमेदिंद्रंमघवा



( ७।२।१२ ) अयंसोमइतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् । ( ७।२।१३ ) आनोदेवइतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रस्त्रिष्टुप् ।

नमेनंमहोरायोराधंसोयद्दन्नः । योऽअर्चतोब्रह्मकृतिमविंष्ठोयूयंपात० ॥ १४ ॥ (७।२।१४) प्रवऽइंद्रायमादनं हर्यश्वायगायत । सखायःसोमपान्ने ॥ शंसेदुक्थंसुदानवऽउतद्युक्षंयथानरः । चकृमासत्यराधसे ॥ त्वंनऽइंद्रवाज युस्त्वंगव्युःशतक्रतो । त्वंहिरण्ययुर्वसो ॥ वयमिंद्रत्वायवोभिप्रणोनुमोवृषन् । विद्धीत्व१स्यनोवसो ॥ मानोनिदे चवक्तवेयोरंधीरराव्णे । त्वेऽअपिक्रतुर्मम ॥ त्वंवर्मासिसप्रथःपुरोयोधश्चवृत्रहन् । त्वयाप्रतिब्रुवेयुजा+ ॥ १५ ॥ महाँऽउतासियस्यतेनुस्वधावरीसहः । मम्नातेऽइंद्ररोदसी ॥ तंत्वामरुत्वतीपरिभुवद्वाणीसयावरी । नक्षमाणासह द्युभिः ॥ ऊर्ध्वासस्त्वान्विंदवोभुवन्दस्ममुपद्यवि । संतेनमंतकृष्टयः ॥ प्रवोमहेमहिवृधेभरध्वंप्रचेतसेप्रसुमतिंकृणु ध्वं । विशःपूर्वीःप्रचराचर्षणिप्राः+ ॥ उरुव्यचसेमहिनेसुवृक्तिमिंद्रायब्रह्मजनयंतविप्राः । तस्यव्रतानिनमिनंतिधी राः ॥ इंद्रंवाणीरनुत्तमन्युमेवसत्राराजानंदधिरेसहध्यै । हर्यश्वायबर्हयासमापीन्+ ॥ १६ ॥ (७।२।१५) मोषु त्वावाघतश्चनारेऽअस्मन्निरीरमन् । आरात्ताच्चित्सधमादंनऽआगहीहवासन्नुपश्रुधि ॥ इमेहितेब्रह्मकृतःसुतेसचाम

(७।२।१४) प्रवइंद्रायेतिद्वादशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रोगायत्र्यंत्यास्तिस्रोविराजः । (७।२।१५) मोषुत्वेतिसप्तविंशत्यृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रः प्रथमाचतुर्थीषष्ठ्यादिचतुर्थ्यश्चबृहत्यःद्वितीयापंचम्यावनुष्टुभश्चसतोबृहत्यःरायस्कामइतितृतीयाद्विपदाविराट् ( इंद्रक्रतुंनइत्यर्धर्चोवासिष्ठःशक्तिऋषिरितिशाट्यायनब्राह्मणं, इंद्रक्रतुंनइत्यृग्द्वयात्मकस्यशक्तिऋषिरितितांडकब्राह्मणं । )

ऋक्सं. अ.५ अ.३ ॥ १९ ॥

धौनमक्षऽआसंते । इंद्रेकामंजरितारोवसूयवोरथेनपादमादधुः ॥ रायस्कामोवज्रहस्तंसुदक्षिणंपुत्रोनपितरंहुवे ॥
इमऽइंद्रायसुन्विरेसोमासोदध्याशिरः । ताँऽआमदायवज्रहस्तपीतयेहरिभ्यांयाह्योकऽआ ॥ श्रवच्छुत्कर्णऽईयतेव
सूनांनूचिन्नोमर्धिषद्गिरः । सद्यश्चिद्यःसहस्राणिशतादददन्नकिर्दित्संतमामिनत् ॥ १७ ॥ सवीरोऽअप्रतिष्कुतऽइंद्रे
णशूशुवेनृभिः । यस्तेगभीरासवनानिवृत्रहन्त्सुनोत्याचधावति ॥ भवावरूथंमघवन्मघोनांयत्समजासिशर्धतः । वि
त्वाहतस्यवेदनंभजेमह्यादूणाशोभरागयं ॥ सुनोतासोमपाव्नेसोममिंद्रायवज्रिणे । पचंतापक्तीरवसेकृणुध्वमित्पृणन्नि
त्पृणतेमयः ॥ मास्रेधतसोमिनोदक्षतामहेकृणुध्वंरायऽआतुजे । तरणिरिज्जयतिक्षेतिपुष्यतिनदेवासःकवत्नवे ॥
नकिःसुदासोरथंपर्यासनरीरमत् । इंद्रोयस्याविितायस्यमरुतोगमत्सगोमतिव्रजे ॥ १८ ॥ गमद्वाजंवाजयन्निंद्रम
र्त्योयस्यत्वमविताभुवः । अस्माकंबोध्यवितारथानामस्माकंशूरनृणां ॥ उदिन्न्वस्यरिच्यतेंशोधनंनजिग्युषः । यऽ
इंद्रोहरिवान्नदभंतितंरिपोदक्षंदधातिसोमिनि ॥ मंत्रमखर्वंसुधितंसुपेशसंदधातयज्ञियेष्वा । पूर्वीश्चनप्रसितयस्तरंति
तंयऽइंद्रेकर्मणाभुवत् ॥ कस्तमिंद्रत्वावसुमामर्त्योदधर्षति । श्रद्धाऽइत्तेमघवन्पार्येदिविवाजीवाजंसिषासति ॥ म
घोनःस्मवृत्रहत्येषुचोदययेददतिप्रियावसु । तवप्रणीतीहर्यश्वसूरिभिर्विश्वातरेमदुरिता ॥ १९ ॥ तवेदिंद्रावमंव
सुत्वंपुष्यसिमध्यमं । सत्राविश्वस्यपरमस्यराजसिनकिष्ट्वागोषुवृण्वते ॥ त्वंविश्वस्यधनदाऽअसिश्रुतोयऽईंभवंत्याज

मंडलं ७ अनु. २ ॥ १९ ॥

यः । तवायंविश्वः पुरुहूतपार्थिवोवस्युर्नामभिक्षते ॥ यदिंद्रयावतस्त्वमेतावदहमीशीय । स्तोतारमिद्दिधिषेयरदाव सोनपापत्वायरासीय ॥ शिक्षेयमिन्महयतेदिवेदिवेरायऽआकुहचिद्विदे । नहित्वदन्यन्मघवन्नऽआप्यंवस्योऽअ स्तिपिताचन ॥ तरणिरित्सिषासतिवाजंपुरंध्यायुजा । आवऽइंद्रंपुरुहूतंनमेगिरानेमिंतष्टेवसुद्रुं ॥ २० ॥ नदुष्टु तीमर्त्योविंदतेवसुनस्रेधंतंरयिर्नशत् । सुशक्तिरिन्मघवन्तुभ्यंमावतेदेष्णंयत्पार्येदिवि ॥ अभित्वांशूरनोनुमोदु ग्धाऽइवधेनवः । ईशानमस्यजगतःस्वर्दृशमीशानमिंद्रतस्थुषः ॥ नत्वावाँऽअन्योदिव्योनपार्थिवोनजातोनजनि ष्यते । अश्वायंतोमघवन्निंद्रवाजिनोगव्यंतस्त्वाहवामहे ॥ अभीषतस्तदाभरेंद्रज्यायःकनीयसः । पुरूवसुर्हिमघव न्त्सनादसिभरेभरेचहव्यः ॥ पराणुदस्वमघवन्नमित्रान्त्सुवेदानोवसूकृधि । अस्माकंबोध्यविताम्हाधनेभवावृधःसखी नां ॥ इंद्रक्रतुंनऽआभरपितापुत्रेभ्योयथा । शिक्षाणोऽअस्मिन्पुरुहूतयामनिजीवाज्योतिरशीमहि ॥ मानोऽअज्ञा ताव्रजनादुराध्योऽमाशिवासोऽअवक्रमुः । त्वयावयंप्रवतःशश्वतीरपोतिशूरतरामसि ॥ २१ ॥ ( ७।२।१६ ) श्वि त्यंचौमादक्षिणतस्कपर्दाधियंजिन्वासोऽअभिहिप्रमंदुः । उत्तिष्ठन्वोचेपरिबर्हिषोनॄन्नमेदूरादवितवेवसिष्ठाः ॥ दूरा

---

( ७।२।१६ ) श्वित्यंचइतिचतुर्दशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठऋषिः आद्यानांपंचानांवसिष्ठपुत्राऋषयःआद्यानांनवानांवसिष्ठपुत्रा देवताःअंत्यानांपंचानांवसिष्ठोदेवतात्रिष्टुप् ( आद्यानांनवानामिंद्रोदेवताअंत्यानांपंचानांवसिष्ठोदेवतान्यत्यासेनमिथस्तौवाऋषी ) ।

ऋक्सं.
अ. ५ अ. ३
॥ २० ॥

मंडलं ७
अनु. २

दिंद्रंमनयन्नासुतेनतिरोवैशंतमतिपांतमुग्रं । पाशंद्युम्नस्यवायतस्यसोमात्सुतादिंद्रोऽवृणीतावसिष्ठान् ॥ एवेन्नुकंसिं
धुमेभिस्ततारेवेन्नुकंभेदमेभिर्जघान । एवेन्नुकंदाशराज्ञेसुदासंप्रावदिंद्रोब्रह्मणावोवसिष्ठाः ॥ जुष्टीनरोब्रह्मणावःपि
तृणामक्षमव्ययंनकिलारिषाथ । यच्छक्करीषुबृहतारवेणेंद्रेशुष्ममदधातावसिष्ठाः ॥ उद्द्यामिवेत्तृष्णजोनाथितासो
दीधयुर्दाशराज्ञेवृतासः । वसिष्ठस्यस्तुवतऽइंद्रोऽअश्रोदुरुंतृत्सुभ्योऽअकृणोदुलोकं ॥ २२ ॥ दंडाऽइवेद्गोऽअज
नासऽआसन्परिच्छिन्नाभरताऽअर्भकासः । अभवच्चपुरऽएतावसिष्ठऽआदित्तृत्सूनांविशोऽअप्रथंत ॥ त्रयःकृण्वंति
भुवनेषुरेतस्तिस्रःप्रजाऽआर्याज्योतिरग्राः । त्रयोघर्मासऽउषसंसचंतेसर्वाँऽइत्ताँऽअनुविदुर्वसिष्ठाः ॥ सूर्यस्येववक्ष
थोज्योतिरेषांसमुद्रस्येवमहिमागभीरः । वातस्येवप्रजवोनान्येनस्तोमोवसिष्ठाऽअन्वेतवेवः ॥ तऽइन्निण्यंहृदयस्यप्र
केतैःसहस्रवल्शमभिसंचरंति । यमेनततंपरिधिंवयंतोऽप्सरसऽउपसेदुर्वसिष्ठाः ॥ विद्युतोज्योतिःपरिसंजिहानंमि
त्रावरुणायदपश्यतांत्वा । तत्तेजन्मोतैकंवसिष्ठागस्त्योयत्त्वाविशऽआजभार ॥ २३ ॥ उतासिमैत्रावरुणोवसिष्ठोर्व
श्यांब्रह्मन्मनसोधिजातः । द्रप्संस्कन्नंब्रह्मणादैव्येनविश्वेदेवाःपुष्करेत्वाददंत ॥ सप्रकेतऽउभयस्यप्रविद्वान्त्सहस्र
दानऽउतवासदानः । यमेनततंपरिधिंवयिष्यन्नप्सरसःपरिजज्ञेवसिष्ठः ॥ सत्रेहजाताविषितानमोभिःकुंभेरेतःसि
षिचतुःसमानं । ततोहमानऽउदियायमध्यात्ततोजातमृषिमाहुर्वसिष्ठं ॥ उक्थभृतंसामभृतंबिभर्तिग्रावाणंबिभ्रत्प्र

॥ २० ॥

वंदात्यग्रे । उपैनमाध्वंसुमनस्यमाना ऽआवोंगच्छातिप्रतृदोवसिंष्ठः ॥ २४ ॥ ( ७।३।१ ) प्रशुक्रैतुदेवीमनीषाऽअस्मत्सुतष्टोरथोनवाजी+ ॥ विदुःपृथिव्यादिवोजनित्रंश्रृण्वंत्यापोऽअधक्षरंतीः ॥ आपश्चिदस्मैपिन्वंतपृथ्वीर्वृत्रेषुशूरामंसंतऽउग्राः+ ॥ आधूर्ष्वस्मैदधाताश्वानिंद्रोनवज्रीहिरण्यबाहुः ॥ अभिप्रस्थाताहेवयज्ञंयातेवपत्मन्त्मनाहिनोत ॥ त्मनासमत्सुहिनोतयज्ञंदधातकेतुंजनायवीरं+ ॥ उदस्यशुष्माद्भानुर्नार्तबिभर्तिभारंपृथिवीनभूम ॥ ह्वयामिदेवाँऽअयातुरग्नेसाधन्नृतेनधियंदधामि ॥ अभिवोदेवींधियंदधिध्वंप्रवोदेवत्रावाचंकृणुध्वं ॥ आचंष्टऽआसांपाथोनदीनांवरुणऽउग्रःसहस्रचक्षाः ॥ २५ ॥ राजाराष्ट्रानांपेशोनदीनामनुत्तमस्मैक्षत्रंविश्वायु ॥ अविष्टोऽअस्मान्विश्वासुविक्ष्वद्युंकृणोतशंसंनिनित्सोः+ ॥ व्येतुदिद्युद्द्विषामशेवायुयोतविष्वग्रपस्तनूनां ॥ अवीन्नोऽअग्निर्हव्यान्नमोभिःप्रेष्ठोऽअस्माऽअधायिस्तोमः ॥ सजूर्देवेभिरपांनपातंसखायंकृध्वंशिवोनोऽअस्तु ॥ अब्जामुक्थैरहिंगृणीषेबुध्नेनदीनांरजःसुषीदन् ॥ मानोहिर्बुध्न्योरिषेधान्मायज्ञोऽअस्यस्रिधदृतायोः+ ॥ उतनऽएषुनृषुश्रवोधुःप्ररायेयंतुशर्धतोऽअर्यः+ ॥

तृतीयेनुवाकेद्वाविंशतिसूक्तानि (७।३।१) प्रशुक्रैत्विवतिपंचविंशत्यृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवाद्विपदाविराट् अंत्याश्चतस्रस्त्रिष्टुभः अब्जामुक्थैरितिद्विपदायाअहिर्देवता मानोहिर्बुध्न्योरित्यस्याअहिर्बुध्न्यः (इतश्चत्वारिवैश्वदेवसूक्तानि। भेदपक्षे—देवाः१ आपः१ इंद्रः२ यज्ञः ३ देवाः २ वरुणः १ देवाः ३ अग्निः १ अपांनपात् १ अहिः १ अहिर्बुध्न्यः १ देवाः २ देवपत्नीत्वष्टारः १ त्वष्टा १ विश्वे. ४ एवं२५)

ऋक्सं.
अ. ५ अ. ३
॥ २१ ॥

मंडलं ७
अनु. ३

तपंतिशत्रुंस्वं१र्णभूमामहासेनासोऽअमेभिरेषां ॥ आयन्नःपत्नीर्गमन्त्यच्छात्वष्टासुपाणिर्दधातुवीरान्+ ॥ २६ ॥
प्रतिनःस्तोमंत्वष्टाजुषेतस्यादुस्मेऽअरमतिर्वसूयुः+ ॥ तानोरासन्रातिषाचोवसून्यारोदसीवरुणानीशृणोतु । वरूत्री
भिःसुशरणोनोऽअस्तुत्वष्टासुदत्रोविदधातुरायः ॥ तन्नोरायःपर्वतास्तन्नऽआपस्तद्रातिषाचऽओषधीरुतद्यौः । वन
स्पतिभिःपृथिवीसजोषाऽउभेरोदसीपरिपासतोनः ॥ अनुतदुर्वीरोदसीजिहातामनुद्युक्षोवरुणऽइंद्रसखा । अनुवि
श्वेमरुतोयेसहासोरायःस्यामधरुणंधियध्यै ॥ तन्नऽइंद्रोवरुणोमित्रोऽअग्निरापऽओषधीर्वनिनोजुषंत । शर्मन्स्याम
मरुतामुपस्थेयूयंपात० ॥ २७ ॥ ( ७।३।२ ) शंनऽइंद्राग्नीभवतामवोभिःशंनऽइंद्रावरुणारातहव्या । शमिंद्रासोमा
सुवितायशंयोःशंनऽइंद्रापूषणावाजसातौ ॥ शंनोभगःशमुनःशंसोऽअस्तुशंनःपुरंधिःशमुसंतुरायः । शंनःसत्यस्यसु
यमस्यशंसःशंनोऽअर्यमापुरुजातोऽअस्तु ॥ शंनोधाताशमुधर्तानोऽअस्तुशंनऽउरूचीभवतुस्वधाभिः । शंरोदसीबृ
हतीशंनोऽअद्रिःशंनोदेवानांसुहवानिसंतु ॥ शंनोऽअग्निर्ज्योतिरनीकोऽअस्तुशंनोमित्रावरुणावश्विनाशं । शंनःसु
कृतांसुकृतानिसंतुशंनऽइषिरोऽअभिवातुवातः ॥ शंनोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोऽअस्तु । शंनऽओष
धीर्वनिनोभवंतुशंनोरजसस्पतिरस्तुजिष्णुः+ ॥ २८ ॥ शंनऽइंद्रोवसुभिर्देवोऽअस्तुशमादित्येभिर्वरुणःसुशंसः ॥ शं

॥ २१ ॥

( ७।३।२ ) शंनइंद्राग्नीइतिपंचदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् । ( अत्रसूक्तेसर्वेपिविश्वेदेवाः ) ।

नोरुद्रोरुद्रेभिर्जलाषः शंनुस्त्वष्टाग्नाभिरिहश्रृंणोतु ॥ शंनः सोमोभवतुब्रह्मशंनः शंनोग्रावाणः शमुसंतुयज्ञाः । शंनः स्व
रूणांमितयोभवंतु शंनः प्रस्वः शम्वस्तुवेदिः ॥ शंनः सूर्यऽउरुचक्षाऽउदेतुशंनश्चतस्रः प्रदिशोभवंतु । शंनः पर्वताध्रुव
योभवंतुशंनः सिंधवः शमुसंत्वापः ॥ शंनोऽअदितिर्भवतुव्रतेभिः शंनोभवंतुमरुतः स्वर्काः । शंनोविष्णुः शमुपूषानोऽ
अस्तुशंनोभवित्रंशम्वस्तुवायुः + ॥ शंनोदेवः सविताात्रायमाणः शंनोभवंतूषसोविभातीः । शंनः पर्जन्योभवतुप्रजाभ्यः
शंनः क्षेत्रस्यपतिरस्तुशंभुः + ॥ २९ ॥ शंनोदेवाविश्वदेवाभवंतुशंसरस्वतीसहधीभिरस्तु । शमभिषाचः शमुरातिषा
चः शंनोदिव्याः पार्थिवाः शंनोऽअप्याः ॥ शंनः सत्यस्यपतयोभवंतुशंनोऽअर्वतः शमुसंतुगावः । शंनऽऋभवः सुकृतः
सुहस्ताः शंनोभवंतुपितरोहवेषु ॥ शंनोऽअजऽएकपादेवोऽअस्तुशंनोहिर्बुध्न्यः शंसमुद्रः । शंनोऽअपांनपात्पेरुरस्तु
शंनः पृश्निर्भवतुदेवगोपा ॥ आदित्यारुद्रावसवोजुषंतेदंब्रह्मक्रियमाणंनवीयः । शृण्वंतुनोदिव्याः पार्थिवासोगोजा
ताऽउतयेयज्ञियासः ॥ येदेवानांयज्ञियायज्ञियानांमनोर्यजत्राऽअमृताऽऋतज्ञाः । तेनोरासंतामुरुगायमद्ययूयंपात ०
॥ ३० ॥ ( अथपरिशिष्टं ॥ शंवतीः पारयंत्येतेतंपृच्छंतिवचोयुजा । अभ्यारंतंयमाकेतुंयऽएवेदमितिब्रवन् ॥ भा
साकेतुंपरिस्रुतंभारतीर्ब्रह्मवर्धनीः । संजानानामहीमातायऽएवेदमितिब्रवत् ॥ इंद्रस्तंकिंविभुंप्रभुंभानुनेयंसरस्वतीं ।
येनंसूर्यमरोचयद्येनेमेरोदसीऽउभे ॥ जुषस्वाग्नेऽअंगिरः काण्वंमेध्यातिथिं । मात्वासोमस्यबर्बृहत्सुतस्यमधुमत्तमः ॥

त्वमग्ने॒ऽअंगि॑रः॒शोच॑स्वदेव॒वीत॑मः । आशंत॒म॒शंत॑माभि॒र॒भिष्टि॑भिः॒शां॒तिः॒स्व॒स्ति॒मं॑कुर्वत ॥ शंन॒ः॒कनि॑क्र॒दद्दे॒वः॒प॒र्जन्यो॑ऽ अ॒भिव॑र्षतु । शंनो॒द्यावा॑पृथि॒वीशंप्र॒जाभ्यः॒शंन॑एधिद्वि॒पदे॒शंचतु॑ष्पदे ॥११॥ ) इतिपंचमाष्टकेतृतीयोऽध्यायः ॥ ३ ॥

पंचत्रिंशाध्यायेवर्गाः ३० सूक्तानि १६ ऋचः १६५ ॥ त्यागः ॥ इंद्रायेदं. १११ वसिष्ठपुत्रेभ्य. ९ वसिष्ठाये. ५ विश्वेभ्योदेवेभ्य. १५ [ भे. प. देवेभ्य. अद्भ्यइ. इंद्राये. २ यज्ञाये. ३ देवेभ्य. २ वरुणाये. देवेभ्य. ३ अग्नय. अपांनप्त्रेग्नय.] अहयेग्नय. अहयेबुध्न्यायाग्नय. विश्वेभ्योदेवेभ्य.२३ [ भे. प. देवेभ्य. २ देवपत्नीत्वष्टृभ्य. त्वष्ट्रे. विश्वेभ्योदेवेभ्यः १९ ] ॥ इतिपंचमेतृतीयः ॥

प्रब्रह्मनवावोष्टांवुदुष्यःसावित्रंमंत्येवाजिन्यौभगमितिभागोवार्धचैंऊर्ध्वःसप्तवैश्वदेवंत्वोश्रुष्टिःप्रातर्भागंजग त्याद्यालिंगोक्तदेवतांत्योषस्यांप्रब्रह्माणःषड्वैश्वदेवंतुप्रवःपंचदधिक्रांदाधिक्रंजगत्याद्यालिंगोक्तदेवतांदेवश्वतु ष्कंसावित्रंमिमारौद्रंत्रिष्टुवंतमापोयमापमृभुक्षणआर्भवंमंत्यावैश्वदेवीवांसमुद्रज्येष्ठाआपंमामांमैत्रावरुण्या ग्नेयीवैश्वदेवींनदीस्तुतिर्जागतंमंत्यातिजगतीशक्करीवांदित्यानांतृचमादित्यंत्वादित्यासःप्रद्यावाद्यावापृथि वीयंवास्तोर्वास्तोष्पत्यंममींवहाष्टौवास्तोष्पत्यांद्यागायत्रींशेषास्त्र्युपरिष्टाद्बृहत्यादयोनुष्टुभंःप्रस्वापिन्यउपनि षत्कईपंचाधिकामारुतंहांद्याएकादशद्विपदांमध्वःसप्तप्रसाकमुक्षेषंज्यंत्रायध्वेद्वादशंत्रिप्रगाथादिंनवम्याद्या गायत्र्योंत्यानुष्टुंत्रौद्रीमृत्युविमोचनी ॥ ४ ॥ ॥ ॥ ॥ ॥

॥ हरिः ॐ ॥ ( ७।३।३ ) प्रब्रह्मैंतुसदनादृतस्यविर्श्मिभिःससृजेसूर्योगाः । विसानुनापृथिवीसस्रऽउर्वीपृथु प्रतीकमध्येधेऽअग्निः+ ॥ इमांवांमित्रावरुणासुवृक्तिमिषंनकृण्वेऽअसुरानवीयः । इनोवामन्यःपदवीरदब्धोजनंच मित्रोयततिब्रुवाणः+ ॥ आवातस्यध्रजतोरंतऽइत्याऽअपीपयंतधेनवोनसूदाः । महोदिवःसदनेजायमानोचिक्रदद्वृष भःसस्मिन्नूधन् ॥ गिरायऽएतायुनजद्धरींतऽइंद्रप्रियासुरथांशूरधायू । प्रयोमन्युंरिरिक्षतोमिनात्यासुक्रतुमर्यमणंव वृत्यां ॥ यजंतेऽअस्यसख्यंवयश्चनमस्विनःस्वऽऋतस्यधामन् । विपृक्षोबावधेनृभिःस्तवानऽइदंनमोरुद्रायप्रेष्ठं ॥ १ ॥ आयत्साकंयशसोवावशानाःसरस्वतीसप्तथीसिंधुमाता । याःसुष्वयंतसुदुघाःसुधाराऽअभिस्वेनपयसापीप्यानाः ॥ उतत्येनोमरुतोमंदसानाधियंतोकंचवाजिनोवंतु । मानःपरिख्यदक्षराचरंत्यवीवृधन्युज्यंतेरयिंनः ॥ प्रवोमहीमरमं तिंकृणुध्वंप्रपूषणंविदथ्यं१नवीरं । भगंधियोवितारंनोऽअस्याःसातौवाजंरातिषाचंपुरंधिं ॥ अच्छायंवोमरुतःश्लो कंऽएत्वच्छाविष्णुंनिषिक्तपामवोभिः । उतप्रजायैगृणतेवयोधुर्यूयंपात० ॥ २ ॥ ( ७।३।४ ) आवोवाहिष्ठोवहतु

---

( ७।३।३ ) प्रब्रह्मेतिनवर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् । ( भेदपक्षे—विश्वेदेवाः ३ इंद्रार्यमणौ १ रुद्रः १ नद्यः १ मरुतः १ विश्वेदेवाः १ विष्णुमरुतः १ एवं ९ )। ( ७।३।४ ) आवोवाहिष्ठइत्यष्टर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् ( भेदपक्षे—ऋभवः २ इंद्रः ६ एवमष्टौ ) ।

स्तवध्यैरथौवाजाऽऋभुक्षणोऽअमृक्तः । अभित्रिपृष्ठैःसवनेषुसोमैर्मदेसुशिप्रामहभिःपृणध्वं ॥ यूयंहरत्नंमघवत्सुध
त्थस्वर्दृशंऽऋभुक्षणोऽअमृक्तं । संयज्ञेषुस्वधावंतःपिबध्वंविनोराधांसिमतिभिर्दयध्वं ॥ उवोचिथहिमघवन्देष्णंम
होऽअर्भस्यवसुनोविभागे । उभातेपूर्णावसुनागभस्तीनसूनृतानियमतेवसव्या* ॥ त्वमिंद्रस्वयशाऽऋभुक्षावाजोनसा
धुरस्तमेष्यृक्वा । वयंनुतेदाश्वांसःस्यामब्रह्मकृण्वंतोहरिवोवसिष्ठाः ॥ सनितासिप्रवतोदाशुषेचिद्याभिर्विवेषोहर्यश्व
धीभिः । ववन्मानुतेयुज्याभिरूतीकदानऽइंद्ररायऽआदशस्येः ॥ ३ ॥ वासयसीववेधसस्त्वंनःकदानऽइंद्रवचसोबु
बोधः । अस्तंतात्याधियारयिंसुवीरंपृक्षोनोऽअर्वान्युहीतवाजी+ ॥ अभियंदेवीनिर्ऋतिश्चिदीशेनक्षंतऽइंद्रंशरदःसुपृ
क्षः । उपत्रिबंधुर्जरदष्टिमेत्यस्ववेशंयंकृणवंतमर्ताः ॥ आनोराधांसिसवितःस्तवध्याऽआरायोयंतुपर्वतस्यराती । स
दानोदिव्यःपायुःसिषक्तुयूयंपात० ॥ ४ ॥ ( ७।३।५ ) उदुष्यदेवःसवितायंयामहिरण्ययीममतिंयामशिश्रेत् ।
नूनंभगोहव्योमानुषेभिर्वियोरत्नापुरूवसुर्दधाति ॥ उदुतिष्ठसवितःश्रुध्य१स्यहिरण्यपाणेप्रभृतावृतस्य । व्यु१र्वीपृ
थ्वीममतिंसृजानऽआनृभ्योमर्तभोजनंसुवानः+ ॥ अपिष्टुतःसवितादेवोऽअस्तुयमाचिद्विश्वेवसवोगृणंति । सनःस्तो
मान्नमस्य१श्चनोधाद्विश्वेभिःपातुपायुभिर्निसूरीन्+ ॥ अभियंदेव्यदितिर्गृणातिसवंदेवस्यसवितुर्जुषाणा । अभिसम्रा



(७।३।५) उदुष्यदेवइत्यष्टर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठःआद्यानांषण्णांसविताअंत्ययोर्द्वयोर्वाजिनस्त्रिष्टुप् ( भगमित्यर्धर्चस्यभगोवा )।

जोवरुणोगृणंत्यभिमित्रासोऽअर्यमासजोषाः ॥ अभियेमिथोवनुषःसपंतेरातिंदिवोरातिषाचःपृथिव्याः ॥ अहिर्बु
ध्न्यऽउतनःश्रृणोतुवरूत्र्येकंधेनुभिर्निपातु ॥ अनुतन्नोजास्पतिर्मंसीष्टरत्नंदेवस्यसवितुरियानः । भगमुग्रोवसेजोहवी
तिभगमनुग्रोऽअधयातिरत्नं ॥ शंनोभवंतुवाजिनोहवेषुदेवतातामितद्रवःस्वर्काः । जंभयंतोहिंवृकंरक्षांसिसनेम्यस्म
द्युयवन्नमीवाः ॥ वाजेवाजेवतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः । अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभि
र्देवयानैः ॥ ५ ॥ ( ७।३।६ ) ऊर्ध्वोऽअग्निःसुमतिंवस्वोऽअश्रेत्प्रतीचीजूर्णिर्देवतातिमेति । भेजातेऽअद्रीरथ्येव
पंथामृतंहोतानऽइषितोयजाति ॥ प्रवावृजेसुप्रयाबर्हिरेषामाविश्पतीवबीरिटऽइयाते । विशामक्तोरुषसःपूर्वहूतौवा
युःपूषास्वस्तयेनियुत्वान् ॥ ज्मयाऽअत्रवसवोरंतदेवाऽउरावंतरिक्षेमर्जयंतशुभ्राः । अर्वाक्पथऽउरुज्रयःकृणुध्वंश्रो
तादूतस्यजग्मुषोनोऽअस्य+ ॥ तेहियज्ञेषुयज्ञियासऊमाःसधस्थंविश्वेऽअभिसंतिदेवाः । ताँऽअध्वरऽउशतोयक्ष्यग्ने
श्रुष्टीभगंनासत्यापुरंधिं ॥ आग्नेगिरोदिवऽआपृथिव्यामित्रंवहवरुणमिंद्रमग्निं । आर्यमणमदितिंविष्णुमेषांसरस्व
तीमरुतोमादयंतां ॥ ररेहव्यंमतिभिर्यज्ञियानांनक्षत्कामंमर्त्यानामसिन्वन् । धातारयिमविदस्यंसदासांसक्षीमहियु
ज्यैभिर्नुदेवैः ॥ नूरोदसीऽअभिष्टुतेवसिष्ठैर्ऋतावानोवरुणोमित्रोऽअग्निः । यच्छंतुचंद्राऽउपमंनोऽअर्कंयूयंपात०

---

(७।३।६) ऊर्ध्वोअग्निरितिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् (भेदपक्षे—विश्वेदेवाः १ वायुपूषणौ १ विश्वेदेवाः ५ एवं ७)।

॥ ६ ॥ ( ७।३।७ ) ओश्रुष्टिर्विदथ्या३ समेंतुप्रतिस्तोमंदधीमहितुराणां । यद्द्यदेवःसंवितासुवातिस्यामांस्यरत्नि नोंविभागे+ ॥ मित्रस्तन्नोवरुणोरोदंसीचद्युभक्तमिंद्रोंऽअर्यमादंदातु । दिदेंष्टुदेव्यादिंतीरेक्णोंवायुश्चयन्नियुवैतेभगं श्च ॥ सेदुग्रोऽअंस्तुमरुतःसशुष्मीयंमर्त्यंपृषदश्वाऽअवांथ । उतेमग्निःसरंस्वतीजुनंतिनतस्यंरायःपर्येतास्ति ॥ अयं हिनेतावरुंणऽऋतस्यंमित्रोराजांनोऽअर्यमापोधुः । सुहवांदेव्यदिंतिरनर्वातेनोऽअंहोऽअतिंपर्षन्नरिंष्टान् ॥ अस्यदेव स्यंमीळ्हुषोंवयाविष्णोंरेपस्यंप्रभृथेहविर्भिः । विदेहिरुद्रोरुद्रियंमहित्वंयांसिष्टंवर्तिरंश्विनाविरांवत् ॥ मात्रंपूषन्नाघृ णऽइरस्योवरूंत्रीयद्रांतिषाचंश्चरासंन् । मयोभुवोंनोऽअर्वंतोनिपांतुवृष्टिंपरिंज्मावातोंददातु ॥ नूरोदंसीऽअभिष्टुते वसिंष्ठैर्ऋतावांनोवरुंणोमित्रोऽअग्निः । यच्छंतुचंद्राऽउंपमंनोऽअर्कंयूयंपांत० ॥ ७ ॥ ( ७।३।८ ) प्रातर ग्निंप्रातरिंद्रंहवामहेप्रातर्मित्रावरुंणाप्रातरश्विनां । प्रातर्भगंपूषणंब्रह्मंणस्पतिंप्रातःसोमंमुतरुद्रंहुंवेम ॥ प्रातर्जितंभगं मुग्रंहुंवेमवयंपुत्रमदिंतेर्योविंधर्ता । आध्रश्चिद्यंमन्यंमानस्तुरश्चिद्राजांचिद्यंभगंभक्षीत्याहं ॥ भगप्रणेंतर्भगसत्यंराधो भगेमांधियमुदंवाददंन्नः । भगप्रणोंजनयगोभिरश्वैर्भगप्रनृभिर्नृवंतःस्याम ॥ उतेदानींभगंवंतःस्यामोतप्रंपित्वऽउत

---

( ७।३।७ ) ओश्रुष्टिरितिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् ( अत्राखिलाविश्वेदेवाः )। ( ७।३।८ ) प्रातरग्निमितिसप्तर्च स्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोभगः आद्यायाअग्नींद्रमित्रावरुणाश्विभगपूषब्रह्मणस्पतिसोमरुद्रादेवताःअंत्यायाउषा आद्याजगतीशेषास्त्रिष्टुभः।

मध्येऽअह्नां । उतोदितामघवन्त्सूर्यस्यवयंदेवानांसुमतौस्याम ॥ भगऽएवभगवाँऽअस्तुदेवास्तेनवयंभगवंतःस्याम । तंत्वाभगसर्वऽइज्जोहवीतिसनोभगपुरऽएताभवेह+ ॥ समध्वरायोषसोनमंतदधिक्रावेवशुचयेपदाय । अर्वाचीनंवसुविदंभगंनोरथमिवाश्वावाजिनऽआवहंतु ॥ अश्वावतीर्गोमतीर्नऽउषासोवीरवतीःसदमुच्छंतुभद्राः । घृतंदुहाना विश्वतःप्रपीतायूयंपात० ॥ ८ ॥ ( ७।३।९ ) प्रब्रह्माणोऽअंगिरसोनक्षंतप्रक्रंदनुर्नभन्यस्यवेतु । प्रधेनवऽउदप्रुतोनवंतयुज्यातामद्रीऽअध्वरस्यपेशः ॥ सुगस्तेऽअग्नेसनवित्तोऽअध्वायुक्ष्वासुतेहरितोरोहितश्च । येवासद्मन्नरुषावीरवाहोहुवेदेवानांजनिमानिसत्तः+ ॥ समुवोयज्ञंमहयन्नमोभिःप्रहोतामंद्रोरिरिचऽउपाके । यजस्वसुपुर्वणीकदेवानायज्ञियामरमतिंववृत्याः ॥ यदावीरस्यरेवतोदुरोणेस्योनशीरतिथिराचिकेतत् । सुप्रीतोऽअग्निःसुधितोदमऽआसविशेदातिवार्यमियत्यै ॥ इमंनोऽअग्नेऽअध्वरंजुषस्वमरुत्स्विंद्रेयशसंकृधीनः । आनक्तावर्हिःसदतामुषासोशंतामित्रावरुणायजेह+ ॥ एवाग्निंसहस्यं१वसिष्ठोरायस्कामोविश्वप्स्न्यस्यस्तौत् । इषंरयिंपप्रथद्वाजमस्मेयूयंपात० ॥ ९ ॥ ( ७।३।१० ) प्रवोयज्ञेषुदेवयंतोऽअर्चन्द्यावानमोभिःपृथिवीऽइषध्यै । येषांब्रह्माण्यसमानिविप्राविष्वग्वियंतिवनि

---

( ७।३।९ ) प्रब्रह्माणइतिषडृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् ( भेदपक्षे—विश्वेदेवाः १ अग्निः १ देवाः १ अग्निः ३ एवं ६ ) । ( ७।३।१० ) प्रवोयज्ञेष्वितिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् ( भेदपक्षे—विश्वेदेवाः १ यज्ञः १

नोनशाखाः ॥ प्रयज्ञऽएंतुहेत्वोनसप्तिरुद्यंच्छध्वंसमंनसोघृताचीः । स्तृणीतबर्हिरध्वरायसाधूर्ध्वाशोचींषिदेवयून्यं स्थुः ॥ आपुत्रासोनमातरंविभृत्राःसानौदेवासोबर्हिषःसदंतु । आविश्वाचीविदथ्यामनक्त्वग्नेमानोदेवतातामृध स्कः ॥ तेसींपपंतजोषन्नायजंत्राऽऋतस्यधाराःसुदुघादुहानाः । ज्येष्ठंवोऽअद्यमहऽआवसूनामागंतनसमंनसोयति ष्ठ ॥ एवानोऽअग्नेविक्ष्वादशस्यत्वयावयंसहसावन्नास्क्राः । रायायुजासधमादोऽअरिष्टायूयंपात० ॥ १० ॥

( ७।३।११ ) दधिक्रांवःप्रथममश्विनोषसमग्निंसमिद्धंभगमूतयेहुवे । इंद्रंविष्णुंपूषणंब्रह्मणस्पतिमादित्यान्द्यावापृ थिवीऽअपःस्वः* ॥ दधिक्रामुनमसाबोधयंतऽउदीराणायज्ञमुपप्रयंतः । इळांदेवींबर्हिषिसादयंतोश्विनाविप्रासुहवा हुवेम ॥ दधिक्रावाणंबुबुधानोऽअग्निमुपब्रुवऽउषसंसूर्यंगां । ब्रध्नंमांश्चतोर्वरुणस्यबभ्रुंतेविश्वास्मद्दुरितायावयंतु ॥ दधिक्रावाप्रथमोवाज्यर्वाग्रेरथानांभवतिप्रजानन् । संविदानऽउषसासूर्येणादित्येभिर्वसुभिरंगिरोभिः ॥ आनोदधि क्राःपथ्यामनक्त्वृतस्यपंथामन्वेतवाऽउ । शृणोतुनोदैव्यंशर्धोऽअग्निःशृण्वंतुविश्वेमहिषाऽअमूराः ॥ ११ ॥



---

विश्वेदेवाः २ अग्निः १ एवं ५ )। ( ७।३।११ ) दधिक्रांवइतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोदधिक्रा आद्यायादधिक्राश्र्युषो ग्निभगेंद्रविष्णुपूषब्रह्मणस्पत्यादित्यद्यावापृथिव्यापस्त्रिष्टुबाद्याजगती ।

(७।३।१२) आदेवोयातुसविितासुरत्नोंतरिक्षप्राबहंमानोऽअश्वैः। हस्तेदधानोनर्यापुरूणिनिवेशयन्चप्रसुवन्चभूम ॥ उदस्यबाहूशिथिरावृहंताहिरण्ययादिवोऽअंताँऽअनष्टां। नूनंसोऽअस्यमहिमापनिष्टसूरश्चिदस्माऽअनुदादपस्यां ॥ सघानोदेवःसविितासहावासाविषद्वसुपतिर्वसूनि। विश्रयमाणोऽअमातमुरूचीमर्तभोजनमधरासतेनः ॥ इमागिरः सवितारंसुजिह्वंपूर्णगभस्तिमीळतेसुपाणिं। चित्रंवयोबृहदस्मेदधातुयूयंपात० ॥ १२ ॥ (७।३।१३) इमारुद्राय स्थिरधन्वनेगिरःक्षिप्रेषवेदेवायस्वधाव्ने। अषाढ्वायसहमानायवेधसेतिग्मायुधायभरताशृणोतुनः ॥ सहिक्षयेणक्ष म्यस्यजन्मनःसाम्राज्येनदिव्यस्यचेतति। अवन्नवंतीरुपनोदुरश्चरानमीवोरुद्रजासुनोभव ॥ यातेदिद्युदवसृष्टादिव स्परिक्ष्मयाचरतिपरिसावृणक्तुनः। सहस्रंतेस्वपिवातभेषजामानस्तोकेषुतनयेषुरीरिषः ॥ मानोवधीरुद्रमापरादा मातेभूमप्रसितौहीळितस्य। आनोभजबर्हिषिजीवशंसेयूयंपात० ॥ १३ ॥ (७।३।१४) आपोयंवःप्रथमंदेवयंतऽ इंद्रपानमूर्मिमकृण्वतेळः। तंवोवयंशुचिमरिप्रमद्यघृतप्रुषंमधुमंतंवनेम ॥ तमूर्मिमापोमधुमत्तमंवोनपादवत्वाशुहे मा। यस्मिन्निंद्रोवसुभिर्मादयातेतमश्यामदेवयंतोवोऽअद्य ॥ शतपवित्राःस्वधयामदंतीदेवीर्देवानामपियंतिपा

(७।३।१२) आदेवइतिचतुर्ऋचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठःसवितात्रिष्टुप्। (७।३।१३) इमारुद्रायेतिचतुर्ऋचस्यसूक्तस्यमैत्रा वरुणिर्वसिष्ठोरुद्रोजगत्यंत्यात्रिष्टुप्। (७।३।१४) आपोयंवइतिचतुर्ऋचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठआपस्त्रिष्टुप्।

थः । ताऽइंद्रस्यनमिनंतिव्रतानिसिंधुभ्योहव्यंघृतवज्जुहोत ॥ याःसूर्योरश्मिभिराततानयाभ्यऽइंद्रोऽअरदद्गातुमूर्मिं । तेसिंधवोवरिवोधातनानोयूयंपात० ॥ १४ ॥ ( ७।३।१५ ) ऋभुक्षणोवाजामादयध्वमस्मेनरोमघवानःसुतस्य । आवोर्वाचःक्रतवोनयातांविभ्वोरथंनर्यंवर्तयंतु ॥ ऋभुर्ऋभुभिरभिवःस्यामविभ्वोविभुभिःशवसाशवांसि । वाजोऽअस्माँऽअवतुवाजसाताविंद्रेणयुजातरुषेमवृत्रं ॥ तेचिद्धिपूर्वीरभिसंतिशासाविश्वाँऽअर्यऽउपरतातिवन्वन् । इंद्रोविभ्वाँऽऋभुक्षावाजोऽअर्यःशत्रोर्मिथत्याकृणवन्विनृम्णं ॥ नूदेवासोवरिवःकर्तनानोभूतनोविश्वेवसेसजोषाः । समस्मेऽइषंवसवोददीरन्यूयंपात० ॥ १५ ॥ ( ७।३।१६ ) समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः । इंद्रोयावज्रीवृषभोरराद्ताऽआपोदेवीरिहमामवंतु ॥ याऽआपोदिव्याऽउतवास्रवंतिखनित्रिमाऽउतवायाःस्वयंजाः । समुद्रार्थायाःशुचयःपावकास्ताऽआपो० ॥ यासांराजावरुणोयातिमध्येसत्यानृतेऽअवपश्यन्जनानां । मधुश्चुतःशुचयोयाःपावकास्ताऽआपो० ॥ यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्जंमदंति । वैश्वानरोयास्वग्निःप्रविष्टस्ताऽआपो० ॥ १६ ॥ ( ७।३।१७ ) आमांमित्रावरुणेहरक्षतंकुलाययद्विश्वयन्मानऽआगन् । अजकावंदुर्दृशीकंतिरो

---

(७।३।१५) ऋभुक्षणइतिचतुर्ऋचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठऋभवस्त्रिष्टुप्अंत्यायाविश्वेदेवावा । (७।३।१६)समुद्रज्येष्ठाइतिचतुर्ऋचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठआपस्त्रिष्टुप् । (७।३।१७) आमामितिचतुर्ऋचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमित्रावरुणावग्निर्विश्वेदेवानद्यइति-

दधेमामांपद्यैनरपंसाविदुत्तसरुः ॥ यद्धिजामन्परुषिवंदनंभुवदष्ठीवंतौपरिकुल्फौचदेहत् । अग्निष्टच्छोचन्नपबाधता
मितोमामां० ॥ यच्छल्मलौभवतियन्नदीषुयदोषधीभ्यःपरिजायतेविषं । विश्वेदेवानिरितस्तत्सुवंतुमामां० ॥ याः
प्रवतोनिवतऽउद्वतऽउदन्वतीरनुदकाश्चयाः । ताऽअस्मभ्यंपयसापिन्वमानाःशिवादेवीरशिपदाभवंतुसर्वानद्योऽअ
शिमिदाभवंतु ॥ १७ ॥ ( ७।३।१८ ) आदित्यानामवसानूतनेनसक्षीमहिशर्मणाशंतमेन । अनागास्त्वेऽअदिति
त्वेतुरासऽइमंयज्ञंदधतुश्रोषमाणाः ॥ आदित्यासोऽअदितिर्मादयंतांमित्रोऽअर्यमावरुणोरजिष्ठाः । अस्माकंसंतुभुव
नस्यगोपाःपिबंतुसोममवसेनोऽअद्य+ ॥ आदित्याविश्वेमरुतश्चविश्वेदेवाश्चविश्वऽऋभवश्चविश्वे । इंद्रोऽअग्निरश्वि
नांतुष्टुवानायूयंपात० ॥ १८ ॥ ( ७।३।१९ ) आदित्यासोऽअदितयःस्यामपूर्देवत्रावसवोमर्त्यत्रा । सनेममित्रावरु
णासनंतोभवेमद्यावापृथिवीभवंतः ॥ मित्रस्तन्नोवरुणोमामहंतशर्मतोकायतनयायगोपाः । मावोभुजेमान्यजातमे
नोमातत्कर्मवसवोयच्चयध्वे ॥ तुरण्यवोंगिरसोनक्षंतरत्नंदेवस्यसवितुरियानाः । पिताचतन्नोमहान्यजत्रोविश्वेदे
वाःसमनसोजुषंत ॥ १९ ॥ ( ७।३।२० ) प्रद्यावायज्ञैःपृथिवीनमोभिःसबाधऽईळेबृहतीयजत्रे । तेचिद्धिपूर्वेकव

क्रमेणदेवताजगत्यंत्यातिजगतीशक्करीवा।(७।३।१८)आदित्यानामितितृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठआदित्यास्त्रिष्टुप्।(७।३।१९)आ
दित्यासइतितृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठआदित्यास्त्रिष्टुप्।(७।३।२०) प्रद्यावेतितृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोद्यावापृथिव्यौत्रिष्टुप्।

योगृणंतःपुरोमहीदधिरेदेवपुत्रे ॥ प्रपूर्वजेपितरानव्यसीभिर्गीर्भिःकृणुध्वंसदनेऽऋतस्य । आनोद्यावापृथिवीदैव्येन
जनेनयातंमहिवांवरूथं ॥ उतोहिवांरत्नधेयानिसंतिपुरूणिद्यावापृथिवीसुदासे । अस्मेधत्तंयदसदस्कृधोयुयूयंपात०
॥ २० ॥ ( ७।३।२१ ) वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोऽअनमीवोभवानः । यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभ
वद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतरणोनऽएधिगयस्फानोगोभिरश्वेभिरिंदो । अजरासस्तेसख्येस्यामपितेवपुत्रान्प्र
तिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या । पाहिक्षेमऽउतयोगेवरंनोयूयंपात० ॥ २१ ॥
( ७।३।२२ ) अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् । सखासुशेवऽएधिनः ॥ यदर्जुनसारमेयदतःपिशंगयच्छ
से । वीवभ्राजंतऽऋष्टयऽउपस्रक्वेषुबप्सतोनिषुस्वप ॥ स्तेनंरायसारमेयतस्करंवापुनःसर । स्तोतॄनिंद्रस्यरायसिकि
मस्मान्दुच्छुनायसे० ॥ त्वंसूकरस्यदर्दृहितववदर्दर्तुसूकरः । स्तोतॄनिंद्रस्यरायसिकिमस्मा० ॥ सस्तुमातासस्तुपिता
सस्तुश्वासस्तुविश्पतिः । ससंतुसर्वेज्ञातयःसस्त्वयमभितोजनः ॥ यऽआस्तेयश्चचरतियश्चपश्यतिनोजनः । तेषांसं
हन्मोऽअक्षाणियथेदंहर्म्यंतथा ॥ सहस्रशृंगोवृषभोयःसमुद्रादुदाचरत् । तेनासहस्येनावयंनिजनान्त्स्वापयामसि ॥



---

( ७।३।२१ ) वास्तोष्पतइतितृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोवास्तोष्पतिस्त्रिष्टुप् । (७।३।२२) अमीवहेत्यष्टर्चस्यसूक्तस्यमैत्रावरुणि
र्वसिष्ठःआद्यायावास्तोष्पतिःद्वितीयादिसप्तानांप्रस्वापिनीआद्यागायत्रीततस्तिस्रउपरिष्टाद्बृहत्यःअंत्याश्चतस्रोनुष्टुभः ।

प्रोष्ठेशयावह्येशयानारीर्यास्तल्पशीवरी । स्त्रियोयाःपुण्यगंधास्ताःसर्वाःस्वापयामसि ॥ २२ ॥ ( ॥ परिशिष्टं ॥ स्वप्नस्वप्नाधिकरणेसर्वेनिष्वापयाजनं । आसूर्यमन्यान्स्वापयव्युष्टंजाग्रियादहं ॥ अजगरोनामसर्पःसर्पिरविषोमहान् । तस्मिन्हिसर्पःसुधितस्तेनत्वास्वापयामसि ॥ सर्पःसर्पोऽअजगरःसर्पिरविषोमहान् । तस्यसर्पात्सिंधवस्तस्यगाधमशीमहि ॥ काळिकोनामसर्पोनवनागसहस्रबळः । यमुनह्रदेहसोजातोयोनारायणवाहनः ॥ यदिकाळिकदूतस्ययदिकाःकाळिकाद्भयात् । जन्मभूमिमतिक्रांतोनिर्विषोयातिकाळिकः ॥ आयाहींद्रपथिभिरीळितेभिर्यज्ञमिमंनोभागधेयंजुषस्व । तृप्तांजहुर्मातुळस्येवयोषाभागस्तेपैतृष्वसेयींवपामिव ॥ यशस्करंबलवंतंप्रभुत्वंतमेवराजाधिपतिर्बभूव । संकीर्णनागाश्वपतिर्नराणांसुमंगल्यंसततंदीर्घमायुः ॥ कर्कोटकोनामसर्पोयोदृष्टीविषऽउच्यते । तस्यसर्पस्यसर्पत्वंतस्मैसर्पनमोस्तुते ॥ १ ॥ ) ( ७।४।१ ) कईंव्यक्तानरःसनीळारुद्रस्यमर्याऽअधास्वश्वाः ॥ नकिर्ह्येषांजनूंषिवेदतेऽअंगविद्रेमिथोजनित्रं ॥ अभिस्वपूभिर्मिथोवपंतवातस्वनसःश्येनाऽअस्पृध्रन् ॥ एतानिधीरोनिण्याचिकेतपृश्निर्यदूधोमहीजभार ॥ साविट्सुवीरामरुद्भिरस्तुसनात्सहंतीपुष्यंतीनृम्णं ॥ याममंयेष्ठाःशुभाशोभिष्ठाःश्रिया

---

चतुर्थेनुवाकेपंचदशसूक्तानि ( ७।४।१ ) कईंव्यक्ताइतिपंचविंशत्यृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमरुतस्त्रिष्टुप्आद्याएकादशद्विपदाविराजः । ( अत्रांत्यायावैश्वदेवत्वंकश्चिन्मन्यतेतन्मनाभावादुपेक्ष्यं ) ।

संमिश्लाऽओजोभिरुग्राः+ ॥ उग्रंवऽओजःस्थिराशवांस्यधामरुद्भिर्गणस्तुविष्मान् ॥ शुभ्रोवःशुष्मःक्रुध्मीमनांसि
धुनिर्मुनिरिवशर्धस्यधृष्णोः+ ॥ सनेम्यस्मद्युयोतदिद्युंमावोदुर्मतिरिहप्रणङ्नः ॥ प्रियावोनामहुवेतुराणामायत्तृपन्म
रुतोवावशानाः+ ॥ २३ ॥ स्वायुधासऽइष्मिणःसुनिष्काऽउतस्वयंतन्व१ःशुंभमानाः ॥ शुचीवोहव्यामरुतःशुची
नांशुचिंहिनोम्यध्वरंशुचिभ्यः । ऋतेनसत्यमृतसापऽआयन्छुचिजन्मानःशुचयःपावकाः ॥ अंसेष्वामरुतःखादयो
वोवक्षःसुरुक्माऽउपशिश्रियाणाः । विविद्युतोनवृष्टिभीरुचानाऽअनुस्वधामायुधैर्यच्छमानाः ॥ प्रबुध्न्यावऽईरतेम
हांसिप्रनामानिप्रयज्यवस्तिरध्वं । सहस्रियंदम्यंभागमेतंगृहमेधीयंमरुतोजुषध्वं ॥ यदिस्तुतस्यमरुतोऽअधीथेत्था
विप्रस्यवाजिनोहवीमन् । मक्षूरायःसुवीर्यस्यदातनूचिद्यमन्यऽआदभदरावा ॥ २४ ॥ अत्यासोनयेमरुतःस्वंचोयक्षदृशो
नशुभयंतमर्याः । तेहर्म्येष्ठाःशिशवोनशुभ्रावत्सासोनप्रक्रीळिनःपयोधाः+ ॥ दशस्यंतोनोमरुतोमृळंतुवरिवस्यंतोरोदसी
सुमेके । आरेगोहानृहावधोवोऽअस्तुसुम्नेभिरस्मेवसवोनमध्वं ॥ आवोहोताजोहवीतिसत्तःसत्राचींरातिंमरुतोगृणा
नः । यऽईवतोवृषणोऽअस्तिगोपाःसोऽअद्वयावीहवतेवऽउक्थैः+ ॥ इमेतुरंमरुतोरामयंतीमेसहःसहसऽआनमंति । 
इमेशंसंवनुष्यतोनिपांतिगुरुद्वेषोऽअररुषेदधंति ॥ इमेरध्रंचिन्मरुतोजुनंतिभृमिंचिद्यथावसवोजुषंत । अपबाधध्वं
वृषणस्तमांसिधत्तविश्वंतनयंतोकमस्मे ॥ २५ ॥ मावोदात्रान्मरुतोनिररामसापश्चाद्दध्मरथ्योविभागे । आनःस्पा

हेभंजतनावसव्ये ३ यदींसुजातंवृषणोवोऽअस्ति ॥ संयद्धनंतमन्युभिर्जनासःशूरायह्वीष्वोषधीषुविक्षु । अधस्मानोमरुतोरुद्रियासस्त्रातारोभूतपृतनास्वर्यः+ ॥ भूरिचक्रमरुतःपित्र्याण्युक्थानियावःशस्यंतेपुराचित् । मरुद्भिरुग्रःपृतनासुसाह्ळामरुद्भिरित्सनितावाजमर्वा ॥ अस्मेवीरोमरुतःशुष्म्यस्तुजनानांयोऽअसुरोविधर्ता । अपोयेनसुक्षितयेतरेमाधस्वमोकोऽअभिवःस्याम ॥ तन्नऽइंद्रोवरुणोमित्रोऽअग्निरापऽओषधीर्वनिनोजुषंत । शर्मन्त्स्याममरुतामुपस्थेयूयंपात० ॥२६॥ (७।४।२) मध्वोवोनाममारुतंयजत्राःप्रयज्ञेषुशवसामदंति । येरेजयंतिरोदसीचिदुर्वीपिन्वंत्युत्संयदयासुरुग्राः+ ॥ निचेतारोहिमरुतोगृणंतंप्रणेतारोयजमानस्यमन्म । अस्माकमद्यविदथेषुबर्हिरावीतयेसदतपिप्रियाणाः+ ॥ नैतावदन्येमरुतोयथेमेभ्राजंतेरुक्मैरायुधैस्तनूभिः । आरोदसीविश्वपिशःपिशानाःसमानमंज्यंजतेशुभेकं+ ॥ ऋधक्सावोमरुतोदिद्युदस्तुयद्वऽआगःपुरुषताकराम । मावस्तस्यामपिभूमायजत्राऽअस्मेवोऽअस्तुसुमतिश्चनिष्ठा ॥ कृतेचिदत्रमरुतोरणंतानवद्यासःशुचयःपावकाः । प्रणोवतसुमतिभिर्यजत्राःप्रवाजेभिस्तिरतपुष्यसेनः ॥ उतस्तुतासोमरुतोव्यंतुविश्वेभिर्नामभिर्नरोहवींषि । ददातनोऽअमृतस्यप्रजायैजिगृतरायःसूनृतामघानि ॥ आस्तुतासोमरुतोविश्वऽऊतीऽअच्छासूरीन्त्सर्वतातािजिगात । येनस्त्मनाशतिनोवर्धयंतियूयंपात० ॥ २७ ॥

(७।४।२) मध्वोवइतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमरुतस्त्रिष्टुप् ।

( ७।४।३ ) प्रसाकमुक्षेऽअर्चतागणायुयोदैव्यस्युधाम्नस्तुविष्मान् । उतक्षोदंतिरोदसीमहित्वानक्षंतेनाकंनिर्ऋतेरवंशात्+ ॥ जनूश्चिद्वोमरुतस्त्वेष्येणभीमासस्तुविमन्यवोयासः । प्रयेमहोभिरोजसोनसंतिविश्वोवोयामन्भयतेस्वर्दृक्+ ॥ बृहद्वयोमघवद्भ्योदधातजुजोषन्निन्मरुतःसुष्टुतिंनः । गतोनाध्वाविर्तिराततिजंतुंप्रणःस्पार्हाभिरूतिभिस्तिरेत ॥ युष्मोतोविप्रोमरुतःशतस्वीयुष्मोतोऽअर्वासहुरिःसहस्री । युष्मोतःसम्राळुतहंतिवृत्रंप्रतद्वोऽअस्तुधूतयोदेष्णं+ ॥ ताँऽआरुद्रस्यमीळ्हुषोविवासेकुविन्नंसंतेमरुतःपुनर्नः । यत्सस्वर्ताजिहीळिरेयदाविरवतदेनऽईमहेतुराणां ॥ प्रसावाचिसुष्टुतिर्मघोनामिदंसूक्तंमरुतोजुषंत । आराच्चिद्द्वेषोवृषणोयुयोतयूयंपात० ॥ २८ ॥ ( ७।४।४ ) यंत्रायध्वऽइदमिदंदेवासोयंचनयथ । तस्माऽअग्नेवरुणमित्रार्यमन्मरुतःशर्मयच्छत ॥ युष्माकंदेवाऽअवसाहनिप्रियऽईजानस्तरतिद्विषः । प्रसक्षयंतिरतेविमहीरिषोयोवोवरायदाशति ॥ नहिवश्चरमंचनवसिष्ठःपरिमंसते । अस्माकमद्यमरुतःसुतेसचाविश्वेपिबतकामिनः ॥ नहिवऽऊतिःपृतनासुमर्धतियस्माऽअराध्वंनरः । अभिवऽआवर्त्सुमतिर्नवीयसीतूयंयातपिपीषवः ॥ ओषुघृष्विराधसोयातनांधांसिपीतये । इमावोहव्यामरुतोररेहिकंमोष्वं१न्यत्रगंतन ॥ आच्च



( ७।४।३ ) प्रसाकमुक्षइतिषडृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमरुतस्त्रिष्टुप् । (७।४।४) यंत्रायध्वइतिद्वादशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमरुतोंत्यायारुद्रः आद्यातृतीयापंचम्योबृहत्यः द्वितीयाचतुर्थीषष्ठ्यः सतोबृहत्यः सप्तम्यष्टम्यौत्रिष्टुभौनवम्याद्यास्तिस्रोगायत्र्योंत्यानुष्टुप् ।

नोबर्हिःसदंताविताचनःस्पार्हाणिदातवेवसु । असैधंतोमरुतःसोम्येमधौस्वाहेहमादयाध्वै ॥ २९ ॥ सस्वश्चिद्धित न्वं१ःशुंभमानाऽआहंसासोनीलपृष्ठाऽअपप्तन् । विश्वंशर्धोऽअभितोमानिषेदनरोनरण्वाःसवनेमदंतः ॥ योनोमरुतो ऽअभिदुर्हृणायुस्तिरश्चित्तानिवसवोजिघांसति । द्रुहःपाशान्प्रतिसमुचीष्टतपिष्ठेनहन्मनाहंतनातं ॥ सांतपनाऽइ दंहविर्मरुतस्तज्जुजुष्टन । युष्माकोतीरिशादसः ॥ गृहमेधासऽआगतमरुतोमापभूतन । युष्माकोतीसुदानवः ॥ इहेहवःस्वतवसःकवयःसूर्यत्वचः । यज्ञंमरुतऽआवृणे ॥ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं । उर्वारुकमिवबंधनान्मृ त्योर्मुक्षीयमामृतात् ॥ ३० ॥ इतिपंचमाष्टकेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥

षट्त्रिंशाध्यायेवर्गाः ३० सूक्तानि २४ ऋचः १५६ ॥ त्यागः ॥ विश्वेभ्योदे. १७ [ भे. प. विश्वेभ्योदेवेभ्यइ. ३ इंद्रार्यमभ्या. रुद्राये. नदीभ्य. मरुद्भ्य. विश्वेभ्योदेवेभ्य. विष्णुमरुद्भ्य. ऋभुभ्य. २ इंद्राये. ६ ] सवित्र. ६ वाजिभ्य. २ विश्वेभ्योदे. १४ [ भे. प. विश्वेभ्योदे. वायुपूषभ्या. विश्वेभ्योदेवेभ्य. १२ ] अग्नींद्रमित्रावरुणाश्विभगपूषब्रह्मणस्पतिसोमरुद्रेभ्य. भगाये. ५ उषसइ. विश्वेभ्योदे० ११ [ भे. प. अग्नय. देवेभ्य. अग्नय. ३ विश्वेभ्योदेवेभ्य. यज्ञाये. विश्वेभ्योदेवेभ्य. २ अग्नय. दधिक्राश्व्युषोग्निभगेंद्रविष्णुपूषब्रह्मणस्पत्यादित्यद्यावापृथिव्य भ्यइ. ] दधिक्रायिदं. ४ सवित्र. ४ रुद्राये. ४ अद्भ्य. ४ ऋभुभ्य. ४ अद्भ्य. ४ मित्रावरुणाभ्या. अग्नय. विश्वेभ्योदेवेभ्य. नदीभ्य. आदि- त्येभ्य. ६ द्यावापृथिवीभ्या. ३ वास्तोष्पतय. ४ पस्त्यापिन्या. ७ मरुद्भ्य. ४९ रुद्राये. ॥ इतिपंचमेचतुर्थः ॥

यदद्यमैत्रावरुणंतुवैसौर्याद्योद्वांसप्तोत्सूर्यःषळाद्यास्तिस्रःसौर्यंउद्वेतीतिचार्धपंचमादिविपंचप्रतिवांप्रमित्रयोरे
कोनागायत्रंदशम्यादयस्त्रयःप्रगाथाःपुरंउष्णिक्कंतुर्थ्याद्यादशादित्यास्तिस्रःसौर्यैःप्रतिवांदशाश्विनंतुतदाशु
श्चानवसप्ताद्याविराजंआवांरथोष्टांवाविश्ववाराःसप्तांपस्वसुःषळागोमतापंचांतारिष्मेमाउवांषट्प्रागाथंव्यु
षाअष्टाउषस्यंतुवांउदुसप्तोपोरुरुचेषट्प्रतिपंचव्युषाःप्रतितृचं ॥ ५ ॥ ॥ ॥ ॥

॥ हरिः ओम् ॥ ( ७।४।५ ) यदद्यसूर्यब्रवोनांगाऽउद्यन्मित्रायवरुणायसत्यं । वयंदेवत्रादितेस्यामतवप्रियासो
ऽअर्यमन्गृणंतः ॥ एषःस्यमित्रावरुणानृचक्षाऽउभेऽउदेतिसूर्योऽअभिज्मन् । विश्वस्यस्थातुर्जगतश्चगोपाऽऋजुमर्तेषु
वृजिनाचपश्यन् ॥ अयुक्तसप्तहरितःसधस्थाद्याऽईंवहंतिसूर्यंघृताचीः । धामानिमित्रावरुणायुवाकुःसंयोयूथेवज
निमानिचष्टे ॥ उद्वांपृक्षासोमधुमंतोऽअस्थुरासूर्योऽअरुहच्छुक्रमर्णः । यस्माऽआदित्याऽअध्वनोरदंतिमित्रोऽअर्य
मावरुणःसजोषाः ॥ इमेचेतारोऽअनृतस्यभूरेर्मित्रोऽअर्यमावरुणोहिसंति । इमऽऋतस्यवावृधुर्दुरोणेशग्मासःपु
त्राऽअदितेरदब्धाः ॥ इमेमित्रोवरुणोदूळभासोचेतसंचिच्चितयंतिदक्षैः । अपिक्रतुंसुचेतसंवतंतस्तिरश्चिदंहःसुपथा
नयंति ॥ १ ॥ इमेदिवोऽअनिमिषापृथिव्याश्चिकित्वांसोऽअचेतसंनयंति । प्रव्राजेचिन्नद्योगाधमस्तिपारंनोऽअ

( ७।४।५ ) यदद्येतिद्वादशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमित्रावरुणावाद्यायाःसूर्यस्त्रिष्टुप् ।

स्यविष्पितस्यपर्षन् ॥ यद्रोपावददितिःशर्मभद्रंमित्रोयच्छंतिवरुणःसुदासे । तस्मिन्नातोकंतनयंदधानामाकर्मदेवहे
ळनंतुरासः ॥ अववेदिंहोत्राभिर्यजेतरिपःकाश्चिद्वरुणध्रुतःसः । परिद्वेषोभिरर्यमावृणक्तूरुंसुदासेवृषणाऽउलोकं ॥
सस्वश्चिद्धिसमृतिस्त्वेष्येषामपीच्येनसहसासहंते । युष्मद्भियावृषणोरेजमानादक्षस्यचिन्महिनामृळतानः ॥ योब्रह्म
णेसुमतिमायजातेवाजस्यसातौपरमस्यरायः । सीक्षंतमन्युंमघवानोऽअर्यऽउरुक्षयायचक्रिरेसुधातु ॥ इयंदेवपुरोहि
तिर्युवभ्यांयज्ञेषुमित्रावरुणावकारि । विश्वानिदुर्गापिपृतंतिरोनोयूयंपात० ॥ २ ॥ ( ७।४।६ ) उद्वांचक्षुर्वरुणसु
प्रतीकंदेवयोरेतिसूर्यस्ततन्वान् । अभियोविश्वाभुवनानिचष्टेसमन्युंमर्त्येष्वाचिकेत ॥ प्रवांसमित्रावरुणावृतावावि
प्रोमन्मानिदीर्घश्रुदियर्ति । यस्यब्रह्माणिसुक्रतूऽअवाथऽआयत्क्रत्वानशरदःपृणैथे ॥ प्रोरोमित्रावरुणापृथिव्याःप्र
दिवऽऋष्वाद्बृहतःसुदानू । स्पशोदधाथेऽओषधीषुविक्ष्वृधग्यतोऽअनिमिषंरक्षमाणा ॥ शंसामित्रस्यवरुणस्यधाम
शुष्मोरोदसीबद्बधेमहित्वा । अयन्मासाऽअयज्वनामवीराःप्रयज्ञमन्मावृजनंतिराते ॥ अमूराविश्वावृषणाविमावां
नयासुचित्रंददृशेनयक्षं । द्रुहःसचंतेऽअनृताजनानांनवांनिण्यान्यचितेऽअभूवन् ॥ समुवांयज्ञंमहयंनमोभिर्हुवेवां

( ७।४।६ ) उद्वांचक्षुरितिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमित्रावरुणौत्रिष्टुप् ।

ऋक्सं. मित्रावरुणासबाधः । प्रवांमन्मान्यृचसेनवानिकृतानिब्रह्मंजुजुषन्निमानि ॥ इयंदेवपुरोहितिः० ॥ ३ ॥ ( ७।४।७ ) मंडलं ७

अ. ५ अ. ५ उत्सूर्योबृहदर्चींष्यश्रेत्पुरुविश्वाजनिममानुषाणां । समोदिवादहशेरोचमानःक्रत्वाकृतःसुकृतःकर्तृभिर्भूत् ॥ ससूर्यप्रतिपुरोनऽउद्गाऽएभिःस्तोमेभिरेतशेभिरेवैः । प्रनोमित्रायवरुणायवोचोनागसोऽअर्यम्णेऽअग्नयेच ॥ विनःसहस्रंशुरुधोरदंत्वृतावानोवरुणोमित्रोऽअग्निः । यच्छंतुचंद्राऽउपमंनोऽअर्कमानःकामंपूपुरंतुस्तवानाः ॥ द्यावाभूमीऽअदितेत्रासीथांनोयेवांजज्ञुःसुजनिमानऽऋष्वे । माहेळेभूमवरुणस्यवायोर्मामित्रस्यप्रियतमस्यनृणां ॥ प्रवाहवासिसृतंजीवसेनऽआनोगव्यूतिमुक्षतंघृतेन । आनोजनेश्रवयतंयुवानाश्रुतंमेमित्रावरुणाहवेमा ॥ नूमित्रोवरुणोऽअर्यमानस्त्मनेतोकायवरिवोदधंतु । सुगानोविश्वासुपथानिसंतुयूयंपात० ॥४॥ ( ७।४।८ ) उद्वेतिसुभगोविश्वचक्षाःसाधारणःसूर्योमानुषाणां । चक्षुर्मित्रस्यवरुणस्यदेवश्चर्मेवयःसमविव्यक्तमांसि ॥ उद्वेतिप्रसवीताजनानांमहान्केतुरर्णवःसूर्यस्य । समानंचक्रंपर्याविवृत्सन्यदेतशोवहतिधूर्षुयुक्तः । विभ्राजमानऽउषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः । एषमेदेवःसविताचच्छंदयःसमानंनप्रमिनातिधाम ॥ दिवोरुक्मऽउरुचक्षाऽउदेतिदूरेऽअर्थस्तरणिर्भ्राजमानः । नूनंजनाःसूर्येणप्रसूताऽ

॥ ३१ ॥ अनु. ४ ॥ ३१ ॥

( ७।४।७ ) उत्सूर्यइतिषड्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठआद्यानांतिसृणांसूर्यस्ततस्तिसृणांमित्रावरुणौत्रिष्टुप् । ( ७।४।८ ) उद्वेतीतिषड्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठःआद्यानांसार्धचतसृणांसूर्यस्ततोमित्रावरुणौत्रिष्टुप् ।

अयन्नर्थानिकृणवन्नपांसि ॥ यन्नांचक्रुरमृतांगातुमस्मैश्येनोनदीयन्नन्वैतिपाथः । प्रतिंवांसूरऽउदितेविधेमनमोभिर्मित्रावरुणोतहव्यैः+ ॥ नूमित्रोवरुणो० ॥ ५ ॥ ( ७।४।९ ) दिविक्षयंतारजसःपृथिव्यांप्रवांघृतस्यनिर्णिजोददीरन् । हव्यंनोमित्रोऽअर्यमासुजातोराजासुक्षत्रोवरुणोजुषंत ॥ आराजानामहऽऋतस्यगोपासिंधुपतीक्षत्रियायातमर्वाक् । इळांनोमित्रावरुणोतवृष्टिमवदिवऽइन्वतंजीरदानू ॥ मित्रस्तन्नोवरुणोदेवोऽअर्यःप्रसाधिष्ठेभिःपथिभिर्नयंतु । ब्रवद्यथानऽआदरिःसुदासऽइषामदेमसहदेवगोपाः ॥ योवांगर्तंमनसातक्षदेतमूर्ध्वांधीतिंकृणवद्धारयच्च । उक्षेथांमित्रावरुणाघृतेनताराजानासुक्षितीस्तर्पयेथां ॥ एषःस्तोमोवरुणमित्रतुभ्यंसोमःशुक्रोनवायवेयामि । अविष्टंधियोजिगृतंपुरंधीर्यूयंपात० ॥ ६ ॥ ( ७।४।१० ) प्रतिंवांसूरऽउदितेसूक्तैर्मित्रंहुवेवरुणंपूतदक्षं । ययोरसुर्यमक्षितंज्येष्ठंविश्वस्ययामन्नाचितांजिगत्नु+ ॥ ताहिदेवानामसुरातावर्यातानःक्षितीःकरतमूर्जयंतीः । अश्यामंमित्रावरुणावयंवांद्यावांचयत्रपीपयन्नहांच ॥ ताभूरिपाशावनृतस्यसेतूदुरत्येतूरिपवेमर्त्याय । ऋतस्यमित्रावरुणापथावामपोननावादुरितातरेम ॥ आनोमित्रावरुणाहव्यजुष्टिंघृतैर्गव्यूतिमुक्षतमिळाभिः । प्रतिवामत्रवरमाजनायपृणीतमुद्नोदिव्यस्यचारोः ॥

---

( ७।४।९ ) दिविक्षयंतेतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमित्रावरुणौत्रिष्टुप् । ( ७।४।१० ) प्रतिवामितिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमित्रावरुणौत्रिष्टुप् ।

एषःस्तोमो० ॥ ७ ॥ (७।४।११) प्रमित्रयोर्वरुणयोःस्तोमोनऽएतुशूष्यः । नमस्वान्तुविजातयोः ॥ याधारयंतदेवाः सुदक्षादक्षपितरा । असुर्यायप्रमहसा ॥ तानःक्षितिपातनूपावरुणजरितॄणां । मित्रसाधयंतंधियः ॥ यदद्यसूरऽउदिते नागामित्रोऽअर्यमा । सुवातिसविताभगः ॥ सुप्रावीरस्तुसक्षयःप्रनुयामन्त्सुदानवः । येनोऽअंहोतिपिप्रति ॥ ८ ॥ उतस्वराजोऽअदितिरदब्धस्यव्रतस्ययये । महोराजानऽईशते ॥ प्रतिवांसूरऽउदितेमित्रंगृणीषेवरुणं । अर्यमणंरिशादसं ॥ रायाहिरण्ययामतिरियमवृकायशवसे । इयंविप्रामेधसातये ॥ तेस्यामदेववरुणतेमित्रसूरिभिःसह । इषंस्वश्चधीमहि ॥ बहवःसूरचक्षसोग्निजिह्वाऽऋतावृधः । त्रीणियेयेमुर्विदथानिधीतिभिर्विश्वानिपरिभूतिभिः ॥ ९ ॥ वियेदधुःशरदंमासमादहर्यज्ञमक्तुंचादृचं । अनाप्यंवरुणोमित्रोऽअर्यमाक्षत्रंराजानऽआशत ॥ तद्वोऽअद्यमनामहे सूक्तैःसूरऽउदिते । यदोहतेवरुणोमित्रोऽअर्यमायूयमृतस्यरथ्यः ॥ ऋतावानऽऋतजाताऽऋतावृधोघोरासोऽअनृतद्विषः । तेषांवःसुम्नेसुच्छर्दिष्टमेनरःस्यामयेचसूरयः ॥ उदुत्यदर्शतंवपुर्दिवऽएतिप्रतिह्वरे । यदीमाशुर्वहतिदेवऽएतशोविश्वस्मैचक्षसेऽअरं ॥ शीर्ष्णःशीर्ष्णोजगतस्तस्थुषस्पतिंसमयाविश्वमारजः । सप्तस्वसारःसुवितायसूर्यंवहं



---

( ७।४।११ ) प्रमित्रयोरित्येकोनविंशत्यृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमित्रावरुणौचतुर्थ्यादिदशानामादित्यःचतुर्दश्यादितिसृणां सूर्योगायत्रीदशमीद्वादशीचतुर्दश्योबृहत्यःएकादशीत्रयोदशीपंचदश्यःसतोबृहत्यःषोडशीपुरउष्णिक् ।

तिहुरितोरथे ॥ १० ॥ तच्चक्षुर्देवहितंशुक्रमुच्चरत् । पश्येमशरदःशतंजीवेमशरदःशतं ॥ काव्येभिरदाभ्यायां तंवरुणद्युमत् । मित्रश्चसोमपीतये ॥ दिवोधामभिर्वरुणमित्रश्चायातमद्रुहा । पिबतंसोममातुजी ॥ आयातंमि त्रावरुणाजुषाणावाहुतिंनरा । पातंसोममृतावृधा ॥ ११ ॥ ( ७।४।१२ ) प्रतिवांरथंनृपतीजरध्यैहविष्मतामनं सायज्ञियेन । योवांदूतोनधिष्ण्यावजीगरच्छासूनुर्नपितरविवक्मि ॥ अशोच्यग्निःसमिधानोऽअस्मेऽउपोऽअदृश्र न्तमसश्चिदंताः । अचेतिकेतुरुषसःपुरस्ताच्छ्रियेदिवोदुहितुर्जायमानः ॥ अभिवांनूनमश्विनासुहोतास्तोमैःसिषक्ति नासत्याविवक्वान् । पूर्वीभिर्यातंपथ्याभिरर्वाक्स्वर्विदावसुमतारथेन ॥ अवोर्वांनूनमश्विनायुवाकुर्हुवेयद्वांसुतेमाध्वी वसूयुः । आवांवहंतुस्थविरासोऽअश्वाःपिबाथोऽअस्मेसुषुतामधूनि ॥ प्राचीमुदेवाश्विनाधियंमेमृध्रांसातयेकृतंवसू युं । विश्वाऽअविष्टंवाजऽआपुरंधीस्तानःशक्तंशचीपतीशचीभिः ॥ १२ ॥ अविष्टंधीष्वश्विनानऽआसुप्रजावद्रेतोऽ अह्वयंनोऽअस्तु । आवांतोकेतनयेतूतुजानाःसुरत्नासोदेववीतिंगमेम ॥ एषस्यवांपूर्वगत्वेवसख्येनिधिर्हितोमाध्वी रातोऽअस्मे । अहेळतामनसायातमर्वागश्नंताहव्यंमानुषीषुविक्षु ॥ एकस्मिन्योगेभुरणासमानेपरिवांसप्तस्रवतोर थोगात् । नवायंतिसुभ्वोदेवयुक्तायेवांधूर्षुतरणयोवहंति ॥ असश्चतामघवद्भ्योहिभूतंयेरायामघदेयंजुनंति । प्रयेवं

( ७।४।१२ ) प्रतिवामितिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोश्विनौत्रिष्टुप् ।

धुंसूनृताभिस्तिरंतेगव्यापृंचंतोऽअश्व्यामघानि ॥ नूमेहवमाशृंणुतंयुवानायासिष्टंवर्तिरश्विनाविरावत् । धत्तंरत्नानि जरतंचसूरीन्यूयंपात० ॥ १३ ॥ ( ७।४।१३ ) आशुभ्रायातमश्विनास्वश्वागिरोदस्राजुजुषाणायुवाकोः । हव्यानि चप्रतिभृतावीतंनः ॥ प्रवामंधांसिमद्यान्यस्थुररंगंतंहविषोवीतयेमे । तिरोऽअर्योहवनानिश्रुतंनः ॥ प्रवांरथोमनो जवाऽइयर्तितिरोरजांस्यश्विनाशतोतिः । अस्मभ्यंसूर्यावसूऽइयानः ॥ अयंहयद्वांदेवयाऽउऽअद्रिरूर्ध्वोविवक्ति सोमसुद्युवभ्यां । आवल्गूविप्रोववृतीतहव्यैः ॥ चित्रंहयद्वांभोजनंन्वस्तिन्यत्रयेमहिष्वंतंयुयोतं । योवांमोमानंद धंतेप्रियःसन् ॥ १४ ॥ उतत्यद्वांजुरतेऽअश्विनाभूच्च्यवानायप्रतीत्यंहविर्दे । अधियद्वर्पऽइतऊतिधत्थः ॥ उत त्यंभुज्युमश्विनासखायोमध्येजहुर्दुरेवासःसमुद्रे । निरींपर्षदरावायोयुवाकुः ॥ वृकायचिज्जसमानायशक्तमुतश्रुतं शयवेहूयमाना । यावघ्न्यामपिन्वतमपोनस्तर्यंचिच्छक्त्यश्विनाशचीभिः ॥ एषस्यकारुर्जरतेसूक्तैरग्रेबुधानऽउषसां सुमन्मा । इषातंवर्धदघ्न्यापयोभिर्यूयंपात० ॥ १५ ॥ ( ७।४।१४ ) आवांरथोरोदसीबद्बधानोहिरण्ययोवृषभि र्यात्वश्वैः । घृतवर्तनिःपविभीरुचानऽइषांवोळ्हानृपतिर्वाजिनीवान् ॥ सपप्रथानोऽअभिपंचभूमात्रिवंधुरोमनसायातु



---

(७।४।१३) आशुभ्रेतिनवर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोश्विनौत्रिष्टुप्आद्याःसप्तविराजः । (७।४।१४) आवांरथइत्यष्टर्चस्यसूक्तस्य मैत्रावरुणिर्वसिष्ठोश्विनौत्रिष्टुप् ।

तुयुक्तः । विशोयेनगच्छंथोदेवयंतीःकुत्राचिद्यामंमश्विनादधाना ॥ स्वश्वायशसायातमर्वाग्दस्रानिधिंमधुमंतंपिबाथः । विवांरथोवध्वा३यादमानोंतान्दिवोवांधतेवर्तनिभ्यां ॥ युवोःश्रियंपरियोषावृणीतसूरोदुहितापरितक्म्यायां । यद्देवयंतमवथःशचीभिःपरिघ्रंसमोमनावांवयोगात् ॥ योहस्यवांरथिरावस्तऽउस्रारथोयुजानःपरियातिवर्तिः । तेनंनःशंयोरुषसोव्युष्टौन्यश्विनावहतंयज्ञेऽअस्मिन् ॥ नरागौरेवविद्युतंतृषाणास्माकमद्यसवनोपयातं । पुरुत्राहिवांमतिभिर्हवंतेमावामन्येनियमन्देवयंतः ॥ युवंभुज्युमवविद्धंसमुद्रऽउदूहथुरर्णसोऽअस्रिधानैः । पतत्रिभिरश्रमैरव्यथिभिर्दंसनाभिरश्विनापारयंता ॥ नूमेहवमाशृणुतंयुवानायासिष्टंवर्तिरश्विनाविरावत् । धत्तंरत्नानिजरतंचसूरीन्यूयंपात० ॥ १६ ॥ ( ७।४।१५ ) आविश्ववाराश्विनागतंनःप्रतत्स्थानमवाचिवांपृथिव्यां । अश्वोनवाजीशुनपृष्ठोऽअस्थादायत्सेदथुर्ध्रुवसेनयोनिं ॥ सिषक्तिसावांसुमतिश्चनिष्ठातापिघर्मोमनुषोदुरोणे । योवांसमुद्रान्त्सरितःपिपर्त्येतग्वाचिन्नसुयुजायुजानः+ ॥ यानिस्थानान्यश्विनादधाथेदिवोयह्वीष्वोषधीषुविक्षु । निपर्वतस्यमूर्धनिसदंतेषंजनायदाशुषेवहंता ॥ चनिष्टंदेवाऽओषधीष्वप्सुयद्योग्याऽअश्नवैथेऽऋषीणां । पुरूणिरत्नादधतौन्य१स्मेऽअनुपूर्वाणिचख्यथुर्युगानि ॥ शुश्रुवांसाचिदश्विनापुरूण्यभिब्रह्माणिचक्षाथेऽऋषीणां । प्रतिप्रयातंवरमाजनायास्मेवामस्तु

---

( ७।४।१५ ) आविश्ववारेतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोऽश्विनौत्रिष्टुप् ।

सुमतिश्चनिष्ठा ॥ योवांयज्ञोनासत्याहविष्मान्कृतब्रह्मासमर्योऽभवाति । उपप्रयातंवरमावसिष्ठमिमाब्रह्माण्यृच्यंते युवभ्यां ॥ इयंमनीषाऽइयमश्विनागीरिमांसुवृक्तिंवृषणाजुषेथां । इमाब्रह्माणियुवयून्यंग्मन्यूयंपात० ॥ १७ ॥ (७।५।१) अपस्वसुरुषसोनाग्जिहीतेरिणक्तिकृष्णीररुषायपंथां । अश्वामघागोमघावांहुवेमदिवानक्तंशरुमस्मद्युयोतं ॥ उपायातंदाशुषेमर्त्यायरथेनवाममश्विनावहंता । युयुतमस्मदनिरामर्मीवांदिवानक्तंमाध्वीत्रासीथांनः ॥ आवांरथमवमस्यांव्युष्टौसुम्नायवोवृषणोवर्तयंतु । स्यूमगभस्तिमृतयुग्भिरश्वैराश्विनावसुमंतंवहेथां ॥ योवांरथोनृपतीऽअस्तिवोळ्हात्रिवंधुरोवसुमाँऽउस्रयामा । आनऽएनानासत्योपयातमभियद्वांविश्वप्स्न्योजिगाति ॥ युवंच्यवानंजरसोमुमुक्तंनिपेदवऽऊहथुराशुमश्वं । निरंहसस्तमसःस्पर्तमत्रिंनिजाहुषंशिथिरेधातमंतः ॥ इयंमनीषा० ॥ १८ ॥ (७।५।२) आगोमतानासत्यारथेनाश्वावतापुरश्चंद्रेणयातं । अभिवांविश्वानियुतःसचंतेस्पार्हयाश्रियातन्वाशुभाना ॥ आनोदेवेभिरुपयातमर्वाक्सजोषसानासत्यारथेन । युवोर्हिनःसख्यापित्र्याणिसमानोबंधुरुततस्यवित्तं ॥ उदुस्तोमासोऽअश्विनोरबुध्रन्जामिब्रह्माण्युषसश्चदेवीः । आविवासन्रोदसीधिष्ण्येमेऽअच्छाविप्रोनासत्याविवक्ति ॥ विचेदुच्छंत्यश्विनाऽउषासःप्रवांब्रह्माणिकारवोभरंते । ऊर्ध्वंभानुंसविताद्वेवोऽअश्रेद्बृहदग्नयःसमिधाजरंते ॥ आपश्चातान्नासत्यापु



(७।५।१) अपस्वसुरितिषड़ृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोऽश्विनौत्रिष्टुप्। (७।५।२) आगोमतेतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोऽश्विनौ

रस्तादाश्विनायातमधराद़ुदक्तात् । आविश्वतःपांचजन्येनरायायूयंपात० ॥ १९ ॥ ( ७।५।३ ) अतारिष्मतमस
स्पारमस्यप्रतिस्तोमंदेवयंतोदधानाः । पुरुदंसापुरुतमापुराजामर्त्याहवतेऽअश्विनागीः ॥ न्युप्रियोमनुषःसादिहो
तानासत्यायोयजतेवंदतेच । अश्नीतंमध्वोऽअश्विनाऽउपाकऽआवांवोचेविदथेषुप्रयस्वान् ॥ अहेमयज्ञंपथामुराणाऽ
इमांसुवृक्तिंवृषणाजुषेथां । श्रुष्टीवेवप्रेषितोवामबोधिप्रतिस्तोमैर्जरमाणोवसिष्ठः ॥ उपत्यावह्नीगमतोविशंनोरक्षोह
णासंभृतावीळुपाणी । समंधांस्यग्मतमत्सराणिमानोमर्धिष्टमागतंशिवेन ॥ आपश्चातांन्नासत्या० ॥ २०॥ ( ७।५।४ )
इमाऽउवांदिविष्टयऽउस्राहवंतेऽअश्विना । अयंवामह्वेवसेशचीवसूविशंविशंहिगच्छथः ॥ युवंचित्रंददथुर्भोजनंनरा
चोदेथांसूनृतावते । अर्वाग्रथंसमनसानियच्छतंपिबतंसोम्यंमधु ॥ आयातमुपभूषतंमध्वःपिबतमश्विना । दुग्धंपयो
वृषणाजेन्यावसूमानोमर्धिष्टमागतं ॥ अश्वासोयेवामुपदाशुषोगृहंयुवांदीयंतिबिभ्रतः । मक्षूयुभिर्नराहयेभिरश्वि
नादेवायातमस्मयू ॥ अधाहयंतोऽअश्विनापृक्षःसचंतसूरयः । तायंसतोमघवद्भ्योध्रुवंयशश्छर्दिरस्मभ्यंनासत्या ॥
प्रयेययुरवृकासोरथाऽइवनृपातारोजनानां । उतस्वेनशवसाशूशुवुर्नरऽउतक्षियंतिसुक्षितिं ॥ २१ ॥ ( ७।५।५ ) व्युषा

---

त्रिष्टुप् । ( ७।५।३ ) अतारिष्मेतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोश्विनौत्रिष्टुप् । (७।५।४) इमाउवामितिषड्रृचस्यसूक्तस्यमैत्रावरुणि-
र्वसिष्ठोश्विनौबृहतीद्वितीयाचतुर्थीषष्ठ्यःसतोबृहत्यः । (७।५।५ ) व्युषाआवइत्यष्टर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठउषास्त्रिष्टुप् ।

ऋक्सं. मंडलं ७

अ. ५ अ. ५ अनु. ५

॥ ३५ ॥

ऽआवोदिविजाऽऋतेनाविष्कृण्वानामहिमानमागात् । अपद्रुहस्तमऽआवरजुष्टमंगिरस्तमापथ्याऽअजीगः ॥ गृहे नोऽअद्यसुवितायबोध्युषोमहेसौभगायप्रयंधि । चित्रंरयिंयशसंधेह्यस्मेदेविमर्तेषुमानुषिश्रवस्युं ॥ एतेत्येभानवोदर्शतायाश्चित्राऽउषसोऽअमृतासऽआगुः । जनयंतोदैव्यानिव्रतान्यापृणंतोऽअंतरिक्षाव्यस्थुः ॥ एषास्यायुजानापराकात्पंचक्षितीःपरिसद्योजिगाति । अभिपश्यंतीवयुनाजनानांदिवोदुहिताभुवनस्यपत्नी ॥ वाजिनीवतीसूर्यस्ययोषाचित्रामघारायऽईशेवसूनां । ऋषिष्टुताजरयंतीमघोन्युषाऽउच्छतिवह्निभिर्गृणाना ॥ प्रतिद्युतानामरुषासोऽअश्वाश्चित्राऽअदृश्रन्नुषसंवहंतः । यातिशुभ्राविश्वपिशारथेनदधातिरत्नंविधतेजनाय ॥ सत्यासत्येभिर्महतीमहद्भिर्देवीदेवेभिर्यजतायजत्रैः । रुजद्दृह्लानिददुस्रियाणांप्रतिगावऽउषसंवावशंत ॥ नूनोगोमद्वीरवद्धेहिरत्नमुषोऽअश्वावत्पुरुभोजोऽअस्मे । मानोबर्हिःपुरुषतानिदेकर्यूयंपात० ॥ २२ ॥ (७।५।६) उदुज्योतिरमृतंविश्वजन्यंविश्वानरःसवितादेवोऽअश्रेत् । क्रत्वादेवानामजनिष्टचक्षुराविरकर्भुवनंविश्वमुषाः ॥ प्रमेपंथादेवयानाऽअदृश्रन्नमर्धंतोवसुभिरिष्कृतासः । अभूदुकेतुरुषसःपुरस्तात्प्रतीच्यागादधिहर्म्येभ्यः ॥ तानीदहानिबहुलान्यासन्याप्राचीनमुदितासूर्यस्य । यतःपरिजारऽइवाचरंत्युषोदद्दृक्षेनपुनर्यतीव ॥ तऽइद्देवानांसधमादऽआसन्नृतावानःकवयःपूर्व्यासः । गूढं

॥ ३५ ॥

---

(७।५।६) उदुज्योतिरितिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठउषास्त्रिष्टुप् ।

ज्योतिः पितरोऽअन्वविंदन्त्सत्यमंत्राऽअजनयन्नुषासं ॥ समानऽऊर्वेऽअधिसंगतासः संजानतेनयंतंतेमिथस्ते । तेदेवा
नांनमिनंतिव्रतान्यमर्धंतोवसुभिर्यादमानाः ॥ प्रतित्वास्तोमैरीळतेवसिष्ठाऽउषर्बुधः सुभगेतुष्टुवांसः । गवांनेत्रीवाज
पत्नीनऽउच्छोषः सुजातेप्रथमाजरस्व ॥ एषानेत्रीराधसः सूनृतानामुषाऽउच्छंतीरिभ्यतेवसिष्ठैः । दीर्घश्रुतंरयिमस्मे
दधानायूयंपात० ॥ २३ ॥ ( ७।५।७ ) उपोरुरुचेयुवतिर्नयोषाविश्वंजीवंप्रसुवंतीचरायै । अभूदग्निः समिधेमानु
षाणामकर्ज्योतिर्बाधमानातमांसि ॥ विश्वंप्रतीचीसप्रथाऽउदस्थाद्रुशद्वासोबिभ्रतीशुक्रमश्वैत् । हिरण्यवर्णासुदृशी
कसंदृग्गवांमातानेत्र्यह्नामरोचि ॥ देवानांचक्षुः सुभगावहंतीश्वेतंनयंतीसुदृशीकमश्वं । उषाऽअदर्शिरश्मिभिर्व्यक्ता
चित्रामघाविश्वमनुप्रभूता ॥ अंतिवामादूरेऽअमित्रमुच्छोर्वींगव्यूतिमभयंकृधीनः । यावयद्द्वेषऽआभरावसूनिचोद
यराधोगृणतेमघोनि ॥ अस्मेश्रेष्ठेभिर्भानुभिर्विभाह्युषोदेविप्रतिरंतीनऽआयुः । इषंचनोदधतीविश्ववारेगोमदश्वाव
द्रथवच्चराधः ॥ यांत्वादिवोदुहितर्वर्धयंत्युषः सुजातेमतिभिर्वसिष्ठाः । सास्मासुधारयिमृष्वंबृहंतंयूयंपात० ॥२४॥
( ७।५।८ ) प्रतिकेतवः प्रथमाऽअदृश्रन्नूर्ध्वाऽअस्याऽअंजयोविश्रयंते । उषोऽअर्वाचाबृहतारथेनज्योतिष्मतावाम
मस्मभ्यंवक्षि ॥ प्रतिषीमग्निर्जरतेसमिद्धः प्रतिविप्रासोमतिभिर्गृणंतः । उषायातिज्योतिषाबाधमानाविश्वातमांसिदु

( ७।५।७ ) उपोरुरुचइतिषड्ऋचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठउषास्त्रिष्टुप् । ( ७।५।८ ) प्रतिकेतवइतिपंचर्चस्यसूक्तस्यमैत्रावरुणि-

रितापंदेवी+ ॥ एताऽउत्याःप्रत्यंदृश्रन्पुरस्ताज्ज्योतिर्यच्छंतीरुषसोंविभातीः । अजीजनन्त्सूर्यंयज्ञमग्निमंपाचीनंतमो ऽअगादजुष्टं ॥ अचेतिदिवोदुहितामघोनीविश्वेपश्यंत्युषसंविभातीं । आस्थाद्रथंस्वधयांयुज्यमानमायमश्वांसःसुयुजोवहंति ॥ प्रतित्वाद्यसुमनसोबुधंतास्माकांसोमघवानोवयंचं । तिल्विलायध्वमुषसोविभातीर्यूयंपात० ॥ २५ ॥ ( ७।५।९ ) व्युंषाऽआंवःपथ्याजनांनांपंचक्षितीर्मानुषीर्बोधयंती । सुसंदृग्भिरुक्षभिर्भानुमश्रेद्विसूर्योरोदंसीचक्षसावः ॥ व्यंजतेदिवोऽअंतेष्वक्तून्विशोनयुक्ताऽउषसोयतंते । संतेगावस्तमऽआवर्तयंतिज्योतिर्यच्छंतिसवितेवंबाहू+ ॥ अभूदुषाऽइंद्रतमामघोन्यजीजनत्सुवितायश्रवांसि । विदिवोदेवीदुहितादधात्यंगिरस्तमासुकृतेवसूनि ॥ तावंदुषोराधोंऽअस्मभ्यंरास्वयावत्स्तोतृभ्योऽअरंदोगृणाना । यांत्वाजज्ञुर्वृषभस्यारवेणविदृह्लस्यदुरोऽअद्रेरौर्णोः ॥ देवंदेवंराधसेचोदयंत्यस्मद्र्यंक्सूनृताऽईरयंती । व्युच्छंतीनःसनयेधियोधायूयंपात० ॥ २६ ॥ ( ७।५।१० ) प्रतिस्तोमेभिरुषसंवसिष्ठागीर्भिर्विप्रासःप्रथमाऽअंबुध्रन् । विवर्तयंतींरजसीसमंतेऽआविष्कृण्वतींभुवनानिविश्वा ॥ एषास्यानव्यमायुर्दधानागूढ्वीतमोज्योतिषोषाऽअंबोधि । अग्रंऽएतियुवतिरह्रयाणाप्राचिकितत्सूर्यंयज्ञमग्निं+ ॥ अश्वावती



---

र्वसिष्ठउषास्त्रिष्टुप् । ( ७।५।९ ) व्युषाआवइतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठउषास्त्रिष्टुप् । ( ७।५।१० ) प्रतिस्तोमेभिरितितृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठउषास्त्रिष्टुप् ।

गोमतीर्नऽउषासौवीरवतीःसदमुच्छंतुभद्राः । घृतंदुहानाविश्वतःप्रपीतायूयंपात० ॥ २७ ॥ ॥ इतिपंचमाष्टके पंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सप्तत्रिंशाध्यायेवर्गाः ३७ सूक्तानि २१ ऋचः १५० ॥ त्यागः ॥ सूर्याये. मित्रावरुणाभ्या.१८ सूर्याये.३ मित्रावरुणाभ्या.३ सूर्याये.४ सूर्यमित्रावरुणेभ्य. मित्रावरुणाभ्या.१४ आदित्येभ्य.१० सूर्याये.३ मित्रावरुणाभ्या.३ अश्विभ्या.५६ उषस.३४ ॥ इतिपंचमेपंचमः ॥

प्रत्युषट्प्रगाथमिंद्रावरुणादशैंद्रावरुणंहजागतंतुंयुवांनरावांपंचपुनीषेधीराष्टौवारुणंहंरदत्सप्तप्रशुंध्युवमंत्या पाशविमोचनींमोषुपंचगायत्रंजगत्यंतंप्रवीरयासप्तवायव्यंह्यैंद्रश्चयाद्विवदुक्ताःकुविदंगावायोपंचशुचिंन्वष्टावैं द्राग्नंत्विंयंवांद्वादशगायत्रमंत्यानुष्टुप्प्रक्षोदसाषट्सारस्वतंतुंतृतीयासरस्वतेबृहदुप्रगाथःप्रस्तारपंक्तिःपरास्ति स्रोगायत्र्यःसरस्वतेयज्ञेदशैंद्र्यादिंबार्हस्पत्यमंत्यैंद्रीचंतृतीयानवम्यावैंद्राब्राह्मणस्पत्येंअध्वर्यवःसप्तोक्तदेवतांत्या परोवैष्णवंतूरुमित्यैंद्रश्चतिस्रोनूमर्तः ॥ ६ ॥ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ ( ७।५।११ ) प्रत्युंऽअदर्श्यायत्युं१च्छंतींदुहितादिवः । अपोमहिंव्ययतिचक्षंसेतमोज्योतिंष्कृ

---

( ७।५।११ ) प्रत्युअदर्शीतिषड्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठउषाबृहतीद्वितीयाचतुर्थीषष्ठ्यःसतोबृहत्यः ।

ऋक्सं.
अ. ५ अ. ६
॥ ३७ ॥

णोतिसूनरी ॥ उदुस्रियाःसृजतेसूर्यःसचाँऽउद्यन्नक्षत्रमर्चिवत् । तवेदुषोव्युषिसूर्यस्यचसंभक्तेनगमेमहि ॥ प्रतित्वा
दुहितर्दिवऽउषोजीराऽअभुत्स्महि । यावहसिपुरुस्पार्हेवनन्वतिरत्नंनदाशुषेमयः ॥ उच्छंतीयाकृणोषिमंहनामहिप्र
ख्यैदेविस्वर्दृशे । तस्यास्तेरत्नभाजऽईमहेवयंस्याममातुर्नसूनवः ॥ तच्चित्रंराधऽआभरोषोयद्दीर्घश्रुत्तमं । यत्तेदिवो
दुहितर्मर्तभोजनंतद्रास्वभुनजामहै ॥ श्रवःसूरिभ्योऽअमृतंवसुत्वनंवाजाँऽअस्मभ्यंगोमतः । चोदयित्रीमघोनःसूनृ
तावत्युषाऽउच्छदपस्रिधः ॥ १ ॥ ( ७।५।१२ ) इंद्रावरुणायुवमध्वरायनोविशेजनायमहिशर्मयच्छतं । दीर्घप्रय
ज्युमतियोवनुष्यतिवयंजयेमपृतनासुदूढ्यः* ॥ सम्राळन्यःस्वराळन्यऽउच्यतेवांमहांताविंद्रावरुणामहावसू । विश्वे
देवासःपरमेव्योमनिसंवामोजोवृषणासंबलंदधुः ॥ अन्वपांखान्यतृंतमोजसासूर्यमैरयतंदिविप्रभुं । इंद्रावरुणामदे
ऽअस्यमायिनोपिन्वतमपितःपिन्वतंधियः ॥ युवामिद्युत्सुपृतनासुवह्नयोयुवांक्षेमस्यप्रसवेमितज्ञवः । ईशानावस्वऽ
उभयस्यकारवऽइंद्रावरुणासुहवाहवामहे ॥ इंद्रावरुणायदिमानिचक्रथुर्विश्वाजातानिभुवनस्यमज्मना । क्षेमेणमि
त्रोवरुणंदुवस्यतिमरुद्भिरुग्रःशुभमन्यऽईयते ॥ २ ॥ महेशुल्कायवरुणस्यनुत्विषऽओजोमिमातेध्रुवमस्ययत्स्वं । अ
जामिमन्यःश्नथयंतमातिरद्दभ्रेभिरन्यःप्रवृणोतिभूयसः ॥ नतमंहोनदुरितानिमर्त्यमिंद्रावरुणानतपःकुतश्चन ।

मंडलं ७
अनु. ५
॥ ३७ ॥

---

( ७।५।१२ ) इंद्रावरुणेतिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रावरुणौजगती ।

यस्यंदेवागच्छंथोवीथोऽअंध्वरंनतंमर्तस्यनशतेपरिंह्वृतिः ॥ अर्वाङ्नंरादैव्येनावसागंतंश्रृणुतंहवंयादिमेजुजोंषथः ।
युवोर्हिसख्यमुतवायदाप्यंमार्डीकमिंद्रावरुणानियंच्छतं ॥ अस्माकमिंद्रावरुणाभरेंभरेपुरोयोधाभंवतंकृष्ट्योजसा ।
यद्वांहवंतऽउभयेऽअधंस्पृधिनरंस्तोकस्यतनंयस्यसातिषु ॥ अस्मेऽइंद्रोवरुणोमित्रोऽअंर्यमाद्युम्नंयंच्छंतुमहिशर्मसप्रथः ।
अवध्रंज्योतिरदितेर्ऋतावृधोदेवस्यश्लोकंसवितुर्मनामहे ॥ ३ ॥ ( ७।५।१३ ) युवांनंरापश्यंमानासऽआप्यंप्राचाग
व्यंतःपृथुपर्शवोययुः । दासांचवृत्राहतमार्याणिचसुदासमिंद्रावरुणावंसावतं ॥ यत्रानरःसमयंतेकृतध्वंजोयस्मिन्ना
जाभवंतिकिंचनप्रियं । यत्राभयंतेभुवंनास्वर्दृशस्तत्रांनऽइंद्रावरुणाधिवोचतं ॥ संभूम्याऽअंताध्वसिराऽअंदृक्षतेंद्राव
रुणादिविघोषऽआरुंहत् । अस्थुर्जनानामुपमामरांतयोर्वागवंसाहवनश्रुतागंतं ॥ इंद्रावरुणावधनाभिरप्रतिभेदंवन्वं
ताप्रसुदासमावतं । ब्रह्माण्येषांश्रृणुतंहवीमनिसत्यातृत्सूनामभवत्पुरोहिंतिः ॥ इंद्रावरुणावभ्यातंपंतिमाघान्ययोंव
नुषामरांतयः । युवंहिवस्वंऽउभयंस्यराजथोधंस्मानोवतंपार्येदिवि ॥ ४ ॥ युवांहंवंतऽउभयासऽआजिष्विंद्रंचव
स्वोवरुणंचंसातयें । यत्रराजंभिर्दशभिर्निबांधितंप्रसुदासमावंतंतृत्सुभिःसह ॥ दशराजानःसमिताऽअयंज्यवःसु
दासमिंद्रावरुणानयुंयुधुः । सत्यानृणामंद्मसदामुपंस्तुतिर्देवाऽएषामभवन्देवहूंतिषु ॥ दाशराज्ञेपरिंयत्तायविश्वतः

---

( ७।५।१३ ) युवांनरेतिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रावरुणौजगती ।

सुदासऽइंद्रावरुणावशिक्षतं । श्वित्यंचोयत्रनमसाकपर्दिनोधियाधीवंतोऽअसंपंततृत्सवः ॥ वृत्राण्यन्यःसमिथेषुजि
घ्नंतेव्रतान्यन्योऽअभिरक्षतेसदा । हवामहेवांवृषणासुवृक्तिभिरस्मेऽइंद्रावरुणाशर्मयच्छतं ॥ अस्मेऽइंद्रोवरुणोमित्रोऽअ
र्यमाद्युम्नंयच्छंतुमहिशर्मसप्रथः । अवध्रंज्योतिरदितेर्ऋतावृधोदेवस्यश्लोकंसवितुर्मनामहे ॥ ५ ॥ (७।५।१४) आ
वांराजानावध्वरेववृत्यांहव्येभिरिंद्रावरुणानमोभिः । प्रवांघृताचीबाह्वोर्दधानापरित्मनाविषुरूपाजिगाति ॥ युवोरा
ष्ट्रंबृहदिन्वतिद्यौर्यौसेतृभिररज्जुभिःसिनीथः । परिनोहेळोवरुणस्यवृज्याऽउरुंनऽइंद्रःकृणवदुलोकं+ ॥ कृतंनोयज्ञं
विदथेषुचारुंकृतंब्रह्माणिसूरिषुप्रशस्ता । उपोरयिर्देवजूतोनऽएतुप्रणःस्पार्हाभिरूतिभिस्तिरेतं ॥ अस्मेऽइंद्रावरुणा
विश्ववारंरयिंधत्तंवसुमंतंपुरुक्षुं । प्रयऽआदित्योऽअनृतामिनात्यमिताशूरोदयतेवसूनि ॥ इयमिंद्रंवरुणमष्टमेगीःप्रा
वत्तोकेतनयेतूतुजाना । सुरत्नासोदेववीतिंगमेमयूयंपात० ॥ ६ ॥ (७।५।१५) पुनीषेवामरक्षसंमनीषांसोममिं
द्रायवरुणायजुह्वत् । घृतप्रतीकामुषसंनदेवींतानोयामन्नुरुष्यतामभीके ॥ स्पर्धंतेवाऽउदेवहूयेऽअत्रयेषुध्वजेषुदिद्य
वःपतंति । युवंताँऽइंद्रावरुणावमित्रान्हतंपराचःशर्वाविषूचः ॥ आपश्चिद्धिस्वयशसःसदःसुदेवीरिंद्रंवरुणंदेवताधुः ।
कृष्टीरन्योधारयतिप्रविक्तावृत्राण्यन्योऽअप्रतीनिहंति ॥ ससुक्रतुर्ऋतचिदस्तुहोतायऽआदित्यशवसावांनमस्वान् ।

(७।५।१४) आवांराजानावितिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रावरुणौत्रिष्टुप् । (७।५।१५) पुनीषेवामितिपंचर्चस्यसूक्तस्यमैत्रावरुणि

आववर्तदवसेवांहविष्मानसदित्ससुव्रितायप्रयस्वान् ॥ इयमिंद्रंवरुणमष्टमेगीःप्रावत्तोकेतनयेतूतुंजाना । सुरत्नासो
देववीतिंगमेमयूयंपात० ॥ ७ ॥ ( ७।५।१६ ) धीरात्वस्यमहिनाजनूंषिवियस्तस्तंभरोदसीचिदुर्वी । प्रनाकमृष्वंनु
नुदेबृहंतंद्विितानक्षत्रंपप्रथच्चभूम ॥ उतस्वयातन्वा३ संवदेतत्कदान्वं१तर्वरुणेभुवानि । किंमेहव्यमहृणानोजुषेतक
दामृळीकंसुमनाऽअभिख्यं ॥ पृच्छेतदेनोवरुणदिदृक्षूपोऽएमिचिकितुषोविपृच्छं । समानमिन्मेकवयश्चिदाहुरयं
हतुभ्यंवरुणोहृणीते ॥ किमागऽआसवरुणज्येष्ठंयत्स्तोतारंजिघांससिसखायं । प्रतन्मेवोचोदूळभस्वधावोवत्वाने
नानमसातुरऽइयां ॥ अवद्रुग्धानिपित्र्यासृजानोवयावयंचक्रमातनूभिः । अवराजन्पशुतृपंनतायुंसृजावत्संनदाम्नो
वसिष्ठं ॥ नसःस्वोदक्षोवरुणध्रुतिःसासुरामन्युर्विभीदकोऽअचित्तिः । अस्तिज्यायान्कनीयसऽउपारेस्वप्नश्चनेदनृ
तस्यप्रयोता+ ॥ अरंदासोनमीह्लुषेकराण्यहंदेवायभूर्णयेनागाः । अचेतयदचितोदेवोऽअर्योगृत्संरायेकवितरोजुना
ति ॥ अयंसुतुभ्यंवरुणस्वधावोहृदिस्तोमऽउपश्रितश्चिदस्तु । शंनःक्षेमेशमुयोगेनोऽअस्तुयूयंपातस्वस्तिभिः० ॥ ८ ॥
( ७।५।१७ ) रदत्पथोवरुणःसूर्यायप्रार्णांसिसमुद्रियानदीनां । सर्गोनसृष्टोऽअर्वतीर्ऋतायन्चकारमहीरवनीरहभ्यः ॥
आत्मातेवातोरजऽआनवीनोत्पशुर्नभूर्णिर्यवसेससवान् । अंतर्महीबृहतीरोदसीमेविश्वातेधामवरुणप्रियाणि ॥ परि

---

वसिष्ठइंद्रावरुणौत्रिष्टुप् । (७।५।१६) धीरात्वित्यष्टर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोवरुणस्त्रिष्टुप् । (७।५।१७) रदत्पथइतिसप्तर्चस्यसूक्तस्य

ऋक्सं.　　अ. ५ अ. ६　　॥ ३९ ॥

स्पशोवरुणस्यस्मदिष्टाऽउभेपश्यंतिरोदसीसुमेके । ऋतावानःकवयोयज्ञधीराःप्रचेतसोयऽइषयंतमन्म ॥ उवाचमेव रुणोमेधिरायत्रिःसप्तनामाघ्न्याबिभर्ति । विद्वान्पदस्यगुह्यानवोचद्युगायविप्रऽउपरायशिक्षन् ॥ तिस्रोद्यावोनिहिता ऽअंतरस्मिन्तिस्रोभूमीरुपराःषड्विधानाः । गृत्सोराजावरुणश्चक्रऽएतंदिविप्रेंखंहिरण्ययंशुभेकं ॥ अवसिंधुंवरुणो द्यौरिवस्थाद्द्रप्सोनश्वेतोमृगस्तुविष्मान् । गंभीरशंसोरजसोविमानःसुपारक्षत्रःसतोऽअस्यराजा ॥ योमृळयातिचक्रु षेचिदागोवयंस्याममवरुणेऽअनागाः । अनुव्रतान्यदितेर्ऋधंतोयूयंपात० ॥ ९ ॥ ( ७।५।१८ ) प्रशुंध्युवंवरुणायप्रे ष्ठांमतिंवसिष्ठमीळ्हुषेभरस्व । यईमर्वांचंकरतेयजत्रंसहस्रामघंवृषणंबृहंतं ॥ अधान्वस्यसंदृशंजगन्वानग्नेरनीकंवरुण स्यमंसि । स्व१र्यदश्मन्नधिपाऽउऽअंधोभिमावपुर्दृशयेनिनीयात् ॥ आयद्रुहावरुणश्चनावंप्रयत्समुद्रमीरयावमध्यं । अधियदपांस्नुभिश्चरावप्रप्रेंखऽईंखयावहैशुभेकं ॥ वसिष्ठंहवरुणोनाव्याधादृषिंचकारस्वपामहोभिः । स्तोतारंविप्रः सुदिनत्वेऽअह्नांयान्नुद्यावस्ततनन्यादुषासः ॥ क्व१त्यानिनौसख्याबभूवुःसचावहेयदवृकंपुराचित् । बृहंतंमानंवरुण स्वधावःसहस्रद्वारंजगमागृहंते ॥ यऽआपिर्नित्योवरुणप्रियःसन्त्वामागांसिकृणवत्सखाते । मातऽएनस्वंतोयक्षिन्भु जेमयंधिष्माविप्रःस्तुवतेवरूथं ॥ ध्रुवासुत्वासुक्षितिषुक्षियंतोव्य१स्मत्पाशंवरुणोमुमोचत् । अवोवन्वानाऽअदितेरु

मंडलं ७　　अनु. ५　　॥ ३९ ॥

मैत्रावरुणिर्वसिष्ठोवरुणस्त्रिष्टुप् । (७।५।१८) प्रशुंध्युवमितिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोवरुणस्त्रिष्टुवंत्याजगती । ( अंत्यापाशवि-

पस्थांद्यूयंपात० ॥ १० ॥ ( ७।५।१९ ) मोषुवरुणमृन्मयंगृहंराजन्नहंगमं । मृळासुक्षत्रमृळय ॥ यदेमिप्रस्फुरन्निव दृतिर्नध्मातोऽअद्रिवः । मृळा० ॥ क्रत्वःसमहदीनताप्रतीपंजगमाशुचे । मृळा० ॥ अपांमध्येतस्थिवांसंतृष्णाविद ज्जरितारं । मृळा० ॥ यत्किंचेदंवरुणदैव्येजनेभिद्रोहंमनुष्या३श्चरामसि । अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादे नसोदेवरीरिषः ॥ ११ ॥ ( ७।६।१ ) प्रवीरयाशुचयोदद्रिरेवामध्वर्युभिर्मधुमंतःसुतासः । वहवायोनियुतोयाह्य च्छापिबासुतस्यांधसोमदाय ॥ ईशानायप्रहुतिंयस्तऽआनट्शुचिंसोमंशुचिपास्तुभ्यंवायो । कृणोषितंमर्त्येषुप्रशस्तं जातोजातोजायतेवाज्यस्य ॥ रायेनुयंजज्ञतूरोदसीमेरायेदेवीधिषणाधातिदेवं । अधवायुंनियुतःसश्चतस्वाऽउतश्वे तंवसुधितिंनिरेके+ ॥ उच्छन्नुषसःसुदिनाऽअरिप्राऽउरुज्योतिर्विविदुर्दीध्यानाः । गव्यंचिदूर्वमुशिजोविवव्रुस्तेषामनुप्र दिवःसस्रुरापः । तेसत्येनमनसादीध्यानाःस्वेनयुक्तासःक्रतुनावहंति । इंद्रवायूवीरवाहंरथंवामीशानयोरभिपृक्षःस चंते ॥ ईशानासोयेदधतेस्वर्णोगोभिरश्वेभिर्वसुभिर्हिरण्यैः । इंद्रवायूसूरयोविश्वमायुरर्वद्भिर्वीरैःपृतनासुसह्युः ॥ अर्वंतोनश्रवसोभिक्षमाणाऽइंद्रवायूसुष्टुतिभिर्वसिष्ठाः । वाजयंतःस्ववसेहुवेमयूयंपात० ॥ १२ ॥ ( ७।६।२ ) कुवि

---

मोचनीतिगुणः ) ( ७।५।१९ ) मोषुवरुणेतिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोवरुणोगायत्र्यंत्याजगती । (७।६।१) प्रवीरयेतिसप्तर्चस्य सूक्तस्यमैत्रावरुणिर्वसिष्ठःआद्यानांचतसृणांवायुरंत्यानांतिसृणामिंद्रवायूत्रिष्टुप् । ( ७।६।२ ) कुविदंगेतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठ

दुंगनमंसायेवृधासंःपुरादेवाऽअंनवद्यासऽआसंन् । तेवायवेमनंवेबाधितायावासयन्नुषसंसूर्येण ॥ उशंतादूतानदभा यगोपामासश्चपाथःशरदंश्चपूर्वीः । इंद्रवायूसुष्टुतिर्वामियानामांर्डीकमींट्टेसुवितंचनव्यं ॥ पीवोंऽअन्नाँरयिवृधःसुमे धाःश्वेतःसिंषक्तिनियुतांमभिश्रीः । तेवायवेसमंनसोवितंस्थुर्विश्वेन्नरंःस्वपत्यानिंचक्रुः ॥ यावत्तरंस्तन्वोउयावदोजो यावन्नरश्चक्षसादीध्यांनाः । शुचिंसोमंशुचिपापातमस्मेऽइंद्रंवायूसदंतंबर्हिरेदं ॥ नियुवानानियुतःस्पार्हवींराऽइंद्रंवायू सरथंयातमर्वाक् । इदंहिवांप्रभृतंमध्वोऽअग्रमधप्रीणानाविमुंमुक्तमस्मे ॥ यावांशतंनियुतोयाःसहस्रमिंद्रंवायूविश्व वांराःसचंते । आभिर्यातंसुविदत्राभिरर्वाक्पातंनराप्रतिंभृतस्यमध्वः ॥ अर्वंतोनश्रवसोभिक्षंमाणाऽइंद्रवायूसुष्टुति भिर्वसिष्ठाः । वाजयंतःस्ववंसेहुवेमयूयंपात० ॥ १३ ॥ ( ७।६।३ ) आवांयोभूषशुचिपाऽउपंनःसहस्रंतेनियुतोवि श्ववार । उपोंतेऽअंधोमद्यंमयामियस्यंदेवदधिषेपूर्वपेयं ॥ प्रसोताजीरोऽअंध्वरेष्वस्थात्सोममिंद्रांयवायवेपिबंध्यै । प्रयद्वांमध्वोऽअग्रियंभरंत्यध्वर्यवोंदेवयंतःशचीभिः ॥ प्रयाभिर्यासिदाश्वांसमच्छांनियुद्भिर्वायविष्टयेंदुरोणे । निनों रयिंसुभोजसंयुवस्वनिवीरंगव्यमश्व्यंचराधः ॥ येवायवंऽइंद्रमादंनासऽआदेवासोनितोशंनासोऽअर्यः । घ्नंतोवृत्रा णिसूरिभिःष्यामसासह्वांसोयुधानृभिरमित्रान् ॥ आनोंनियुद्भिःशतिनीभिरध्वरंसंहस्रिणींभिरुपंयाहियज्ञं । वायो



इंद्रवायूआद्यातृतीययोर्वायुस्त्रिष्टुप् । ( ७।६।३ ) आवायवितिपंचर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोवायुर्द्वितीयाचतुर्थ्योरिंद्रवायूत्रिष्टुप् ।

ऽअस्मिन्त्सवनेमादयस्वयूयंपात० ॥ १४ ॥ ( ७।६।४ ) शुचिंनुस्तोमंनवजातमद्येंद्राग्नीवृत्रहणाजुषेथां । उभाहि वांसुहवाजोहवीमिताबाजंसद्यऽउशतेधेष्ठा ॥ तासानसीशवसानाहिभूतंसाकंवृधाशवसाशूशुवांसा । क्षयंतौरायोय वसस्यभूरेःपृंक्तंवाजस्यस्थविरस्यघृष्वेः ॥ उपोहयद्विदथंवाजिनोगुर्धीभिर्विप्राःप्रमतिमिच्छमानाः । अर्वंतोनकाष्ठां नक्षमाणाऽइंद्राग्नीजोहुवतोनरस्ते ॥ गीर्भिर्विप्रःप्रमतिमिच्छमानऽईट्टेरयिंयशसंपूर्वभाजं । इंद्राग्नीवृत्रहणासुवज्रा प्रनोनव्येभिस्तिरतंदेष्णैः ॥ संयन्महीमिथतीस्पर्धमानेतनूरुचाशूरसातायतैते । अदेवयुंविदथेदेवयुभिःसत्राहतं सोमसुताजनेन ॥ १५ ॥ इमामुषुसोमसुतिमुपनऽएंद्राग्नीसौमनसाययातं । नूचिद्धिपरिमम्नाथेऽअस्मानावांशश्व द्भिर्ववृतीयवाजैः ॥ सोऽअग्नऽएनानमसासमिद्धोच्छामित्रंवरुणमिंद्रंवोचेः । यत्सीमागश्चकृमातत्सुमृळतदर्यमादि तिःशिश्रथंतु ॥ एताऽअग्नऽआशुषाणासऽइष्टीर्युवोःसचाभ्यंश्यामवाजान् । मेंद्रोनोविष्णुर्मरुतःपरिख्यन्यूयंपात० ॥ १६ ॥ ( ७।६।५ ) इयंवामस्यमन्मनऽइंद्राग्नीपूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनि ॥ शृणुतंजरितुर्हवमिंद्राग्नीव नतंगिरः । ईशानापिप्यतंधियः ॥ मापापत्वायनोनरेंद्राग्नीमाभिशस्तये । मानोरीरधतंनिदे ॥ इंद्रेऽअग्नानमोबृह त्सुवृक्तिमेरयामहे । धियाधेनाऽअवस्यवः ॥ ताहिशश्वंतऽईळतऽइत्थाविप्रासऽऊतये । सबाधोवाजसातये ॥ ता

---

( ७।६।४ ) शुचिंन्वित्यष्टर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्राग्नीत्रिष्टुप् । ( ७।६।५ ) इयंवामितिद्वादशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्राग्नी

वाँगीर्भिर्विपन्यवः प्रयस्वंतो हवामहे । मेधसाता सनिष्यवः ॥ १७ ॥ इंद्राग्नी ऽअवसागतमस्मभ्यं चर्षणीसहा । मा नोदुःशंसऽईशत ॥ माकस्यनोऽअररुषो धूर्तिः प्रणङ्मर्त्यस्य । इंद्राग्नी शर्मयच्छतं ॥ गोमद्धिरण्यवद्वसुयद्वामश्वावदीमहे । इंद्राग्नी तद्वनेमहि ॥ यत्सोमऽआसुतेनरऽइंद्राग्नीऽअजोहवुः । सप्तीवंता सपर्यवः ॥ उक्थेभिर्वृत्रहंतमायामंदानाचिदागिरा । आंगूषैराविवासतः ॥ ताविद्दुःशंसंमर्त्यंदुर्विद्वांसंरक्षस्विनं । आभोगंहन्मनाहतमुदधिंहन्मनाहतं ॥ १८ ॥ ( ७।६।६ ) प्रक्षोदसाधायसासस्रऽएषासरस्वतीधरुणमायसीपूः । प्रबाबधानारथ्येवयातिविश्वाऽअपोमहिनासिंधुरन्याः+ ॥ एकाचेतत्सरस्वतीनदीनांशुचिर्यतीगिरिभ्यऽआसमुद्रात् । रायश्चेतंतीभुवनस्यभूरेर्घृतंपयोदुदुहेनाहुषाय ॥ सवावृधेनर्योयोषणासुवृषाशिशुर्वृषभोयज्ञियासु । सवाजिनंमघवद्भ्योदधातिविसातयेतन्वंमामृजीत ॥ उतस्यानःसरस्वतीजुषाणोपश्रवत्सुभगायज्ञेऽअस्मिन् । मितज्ञुभिर्नमस्यैरियानारायायुजाचिदुत्तरासखिभ्यः ॥ इमाजुह्वानायुष्मदानमोभिःप्रतिस्तोमंसरस्वतिजुषस्व । तवशर्मन्प्रियतमेदधानाऽउपस्थेयामशरणंनवृक्षं+ ॥ अयमुतेसरस्वतिवसिष्ठोद्वारावृतस्यसुभगेव्यावः । वर्धशुभ्रेस्तुवतेरासिवाजान्यूयंपात० ॥ १९ ॥ ( ७।६।७ ) बृहदु



गायत्र्यंत्यानुष्टुप्। (७।६।६)प्रक्षोदसेतिषड्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठःसरस्वतीतृतीयायाःसरस्वांस्त्रिष्टुप्। (७।६।७) बृहदुगायिषइतिषड्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठःसरस्वतीअंत्यानांसरस्वानाद्याबृहतीद्वितीयासतोबृहतीतृतीयाप्रस्तारपंक्तिःअंत्यास्तिस्रोगायत्र्यः।

गायिषेवचोसुर्यानदीनां । सरस्वतीमिन्महयासुवृक्तिभिःस्तोमैर्वसिष्ठरोदसी ॥ उभेयत्तेमहिनाशुभ्रेऽअंधसीऽअ
धिक्षियंतिपूरवः । सानोबोध्यवित्रीमरुत्सखाचोदराधोमघोनां ॥ भद्रमिद्भद्राकृणवत्सरस्वत्यकवारीचेततिवाजिनी
वती । गृणानाजमदग्निवत्स्तुवानाचवसिष्ठवत् ॥ जनीयंतोन्वग्रवःपुत्रीयंतःसुदानवः । सरस्वंतंहवामहे ॥ येतेस
रस्वऽऊर्मयोमधुमंतोघृतश्चुतः । तेभिर्नोऽविताभव ॥ पीपिवांसंसरस्वतःस्तनंयोविश्वदर्शतः । भक्षीमहिप्रजामिषं
॥ २० ॥ ( ७।६।८ ) यज्ञेदिवोनृषदनेपृथिव्यानरोयत्रदेवयवोमदंति । इंद्राययत्रसवनानिसुन्वेगमन्मदायप्रथमंवय
श्च ॥ आदैव्यावृणीमहेवांसिबृहस्पतिर्नोमहऽआसखायः । यथाभवेममीढुषेऽअनागायोनोदातापरावतःपितेव ॥
तमुज्येष्ठंनमसाहविर्भिःसुशेवंब्रह्मणस्पतिंगृणीषे । इंद्रंश्लोकोमहिदैव्यःसिषक्तुयोब्रह्मणोदेवकृतस्यराजा ॥ सऽआ
नोयोनिंसदतुप्रेष्ठोबृहस्पतिर्विश्ववारोयोऽअस्ति । कामोरायःसुवीर्यस्यतंदात्पर्षन्नोऽअतिसश्चतोऽअरिष्टान् ॥ तमानो
ऽअर्कममृतायजुष्टमिमेधासुरमृतासःपुराजाः । शुचिक्रंदंयजतंपस्त्यानांबृहस्पतिमनर्वाणंहुवेम ॥ २१ ॥ तंशग्मा
सोऽअरुषासोऽअश्वाबृहस्पतिंसहवाहोवहंति । सहश्चिद्यस्यनीलवत्सधस्थंनभोनरूपमरुषंवसानाः ॥ सहिशुचिःशत
पत्रःसशुंध्युर्हिरण्यवाशीरिषिरःस्वर्षाः । बृहस्पतिःसस्वावेशऽऋष्वःपुरूसखिभ्यऽआसुतिंकरिष्ठः ॥ देवीदेवस्यरोद

---

(७।६।८)यज्ञेदिवइतिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोबृहस्पतिःआद्यायाइंद्रःतृतीयानवम्योरिंद्राब्रह्मणस्पतीअंत्यायाइंद्राबृहस्पतीत्रिष्टुप्

सीजनित्रीबृहस्पतिंवावृधतुर्महित्वा । दुक्षाय्यायदक्षतासखायःकरद्ब्रह्मणेसुतरासुगाधा ॥ इयंवांब्रह्मणस्पतेसुवृक्तिर्ब्रह्मेंद्रायवज्रिणेऽअकारि । अविष्टंधियोजिगृतंपुरंधीर्जजस्तमर्योवनुषामरातीः ॥ बृहस्पतेयुवमिंद्रश्चवस्वोदिव्यस्येशाथेऽउतपार्थिवस्य । धत्तंरयिंस्तुवतेकीरयेचिद्यूयंपात० ॥ २२ ॥ ( ७।६।९ ) अध्वर्यवोरुणंदुग्धमंशुंजुहोतनवृषभायक्षितीनां । गौराद्वेदीयाँऽअवपानमिंद्रोविश्वाहेद्यातिसुतसोममिच्छन् ॥ यद्दधिषेप्रदिविचार्वन्नंदिवेदिवेपीतिमिदस्यवक्षि । उतहृदोतमनसाजुषाणऽउशन्निंद्रप्रस्थितान्पाहिसोमान् ॥ जज्ञानःसोमंसहसेपपाथप्रतेमातामहिमानमुवाच । एंद्रपप्राथोर्व१न्तरिक्षंयुधादेवेभ्योवरिवश्चकर्थ ॥ यद्योधयामहतोमन्यमानान्त्साक्षामतान्बाहुभिःशाशदानान् । यद्वानृभिर्वृतऽइंद्राभियुध्यास्तंत्वयाजिंसौश्रवसंजयेम ॥ प्रेंद्रस्यवोचंप्रथमाकृतानिप्रनूतनामघवायाचकार । यदेददेवीरसहिष्टमायाऽअथाभवत्केवलःसोमोऽअस्य ॥ तवेदंविश्वमभितःपशव्यं१यत्पश्यसिचक्षसासूर्यस्य । गवामसिगोपतिरेकऽइंद्रभक्षीमहितेप्रयतस्यवस्वः ॥ बृहस्पतेयुवमिंद्रश्चवस्वोदिव्यस्येशाथेऽउतपार्थिवस्य । धत्तंरयिंस्तुवतेकीरयेचिद्यूयंपात० ॥ २३ ॥ ( ७।६।१० ) परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंति । उभेते



( ७।६।९ ) अध्वर्यवइतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रोंत्यायाइंद्राबृहस्पतीत्रिष्टुप् । ( ७।६।१० ) परोमात्रयेतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविष्णुःउरुंयज्ञायेतितिसृणामिंद्राविष्णूत्रिष्टुप् ।

विद्मरजसीपृथिव्याविष्णोदेवत्वंपरमस्यवित्से ॥ नतेविष्णोजायमानोनजातोदेवमहिम्नःपरमंतमाप । उदस्तभ्नाना
कमृष्वंबृहंतंदाधर्थप्राचींककुभंपृथिव्याः+ ॥ इरावतीधेनुमतीहिभूतंसूयवसिनीमनुषेदशस्या । व्यस्तभ्नारोदसीवि
ष्णवेतेदाधर्थपृथिवीमभितोमयूखैः ॥ उरुंयज्ञायचक्रथुरुलोकंजनयंतासूर्यमुषासमग्निं । दासस्यचिद्वृषशिप्रस्यमाया
जघ्नथुर्नरापृतनाज्येषु ॥ इंद्राविष्णूदृंहिताःशंबरस्यनवपुरोनवतिंचश्नथिष्टं । शतंवर्चिनःसहस्रंचसाकंहथोऽअप्रत्य
सुरस्यवीरान्+ ॥ इयंमनीषाबृहतीबृहंतोरुक्रमातवसावर्धयंती । ररेवांस्तोमंविदथेषुविष्णोपिन्वतमिषोवृजनेष्विंद्र ॥
वषट्तेविष्णवासऽआकृणोमितन्मेजुषस्वशिपिविष्टहव्यं । वर्धंतुत्वासुष्टुतयोगिरोमेयूयंपात० ॥ २४ ॥ (७।६।११)
नूमर्तोदयतेसनिष्यन्योविष्णवऽउरुगायायदाशत् । प्रयःसत्राचामनसायजातऽएतावंतंनर्यमाविवासात् ॥ त्वंवि
ष्णोसुमतिंविश्वजन्यामप्रयुतामेवयावोमतिंदाः । पर्चोयथानःसुवितस्यभूरेरश्वावतःपुरुश्चंद्रस्यरायः+ ॥ त्रिर्देवःपृ
थिवीमेषऽएतांविचक्रमेशतर्चसंमहित्वा । प्रविष्णुरस्तुतवसस्तवीयान्त्वेषंह्यस्यस्थविरस्यनाम ॥ विचक्रमेपृथिवीमे
षऽएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् । ध्रुवासोऽअस्यकीरयोजनासऽउरुक्षितिंसुजनिमाचकार ॥ प्रतत्तेऽअद्यशिपिवि
ष्टनामार्यःशंसामिवयुनानिविद्वान् । तंत्वागृणामितवसमतव्यान्क्षयंतमस्यरजसःपराके+ ॥ किमित्तेविष्णोपरिचक्ष्यं

( ७।६।११ ) नूमर्तंइतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविष्णुस्त्रिष्टुप् ।

भूप्रयद्वंवक्षेशिंपिविष्टोऽअस्मि । मावर्पोऽअस्मदर्पगूहऽएतद्यदन्यरूपःसमिथेबभूर्थ ॥ वर्षट्तेविष्णवासऽआकृणोमितन्मेंजुषस्वशिपिविष्टहव्यं । वर्धंतुत्वासुष्टुतयोगिरोंमेयूयंपांत० ॥ २५ ॥ इतिपंचमाष्टकेषष्ठोऽध्यायः ॥ ६ ॥

अष्टात्रिंशाध्यायेवर्गाः २५ सूक्तानि २० ऋचः १४५ ॥ त्यागः ॥ उपस.६ इंद्रावरुणाभ्या.३० वरुणाये.२७ वायव. ४ इंद्रवायुभ्या.३ वायव. इंद्रवायुभ्या. वायव. इंद्रवायुभ्या.४ वायव. इंद्रवायुभ्या. वायव. इंद्रवायुभ्या. वायव. इंद्राग्निभ्या.२० सरस्वत्या.२ सरस्वत. सरस्वत्या.६ सरस्वत.३ इंद्राये. बृहस्पतय. इंद्राब्रह्मणस्पतिभ्या. बृहस्पतय.५ इंद्राब्रह्मणस्पतिभ्या. इंद्राबृहस्पतिभ्या. इंद्राये.६ इंद्राबृहस्पतिभ्या. विष्णव.३ इंद्राविष्णुभ्या.३ विष्णव.८ ॥ इतिपंचमेषष्ठः ॥

तिस्रःषट्पार्जन्यंतुपर्जन्यायतृचंगायत्रंद्वितीयापादनिचृदंतेकुमारआग्नेयोपश्यद्वसिष्ठएववावृष्टिकामःसंवत्सरंदशपर्जन्यस्तुतिःसंहृष्टान्मंडूकांस्तुष्टावाद्यानुष्टुविंद्रासोमापंचाधिकैंद्रासोमंराक्षोघ्नंशापाभिशापप्रायंषट्सप्तवाद्याजगत्यएकविंशीत्रयोविंश्यौचाष्टादशीमारुतीचदशमीचतुर्दश्यावाग्नेय्यौदैव्यैकादश्यंत्यानुष्टुम्नवमीद्वादशीत्रयोदशीसौम्यःसप्तदशीग्राव्ण्यष्टमीषोळश्यावैंद्र्यौप्रवर्तयेतिचतस्रऐंद्र्योमानोरक्षइत्यृषेरात्मानआशीरुत्तरोर्धर्चःपृथिव्यंतरिक्ष*दैवतःपरंगायत्रंप्राग्वत्सप्रैकर्षिश्चानुक्तगोत्रःप्राङ्नत्स्यात्काण्वोष्टमंमंडलंमाचिच्चतुस्त्रिंशन्मेधातिथिमेध्यातिथीऐंद्रंबार्हतंद्विप्रगाथादिद्वित्रिष्टुवंतमाद्यंद्वृचंप्रगाथोपश्यत्सघौरःसन्भ्रातुःकण्वस्यपुत्रता



---

*अत्रांतरिक्षंद्यौरितिदैवतइतिपाठोस्तिसचमानोरक्षइतिमंत्रेद्योर्देवत्वेनग्रहणाभावादुपेक्ष्यःवसिष्ठाशीःपृथिव्यंतरिक्षदेवतात्रयमेवात्रयुक्तं।

मर्गात्स्लायोगिश्चासंगोय:स्त्रीभूत्वापुमानभूत्समेध्यातिथयेदानंदत्त्वास्तुहिस्तुहीतिचतसृभिरात्मानंतुष्टावपत्नी
चास्यांगिरसीशश्वतींपुंस्त्वमुपलभ्यैनंप्रीतांत्ययातुष्टावेंदंवसोद्विचत्वारिंशन्मेधातिथिरांगिरसश्चप्रियमेध:स्वा
दवोनुष्टुभंत्याभ्यांसेधातिथिर्विभिंदोर्दानंतुष्टावपिवचतुर्विंशतिर्मेध्यातिथि:प्रागाथंत्वनुष्टुब्गायत्र्यौबृहतीचां
त्या:कौरयाणस्यपाकस्थाम्नोदानस्तुतिर्यदिंद्रसैकादेवातिथिस्तृचोंत्य:पुरउष्णिगंत:कुरुंगस्यदानस्तुतिस्ततपू
र्वाश्चतस्त्र:पौष्णयोवा ॥ ७ ॥ ॥ ॥ ॥ ॥

॥ हरि:ओम् ॥ ( ७।६।१२ ) तिस्रोवाच:प्रवंदज्योतिरग्राया॑ऽएतद्दुहेमंधुदोघमूधं: । सवत्संकृण्वन्गर्भमोषधी
नांसद्योजातोवृषभोरोरवीति ॥ योवर्धनऽओषधीनांयोऽअपांयोविश्वस्यजगतोदेवऽईशे । सत्रिधातुशरणंशर्मयंसत्रि
वर्तुज्योति:स्वभिष्ट्य१स्मे ॥ स्तरीरुत्वद्भवतिसूतऽउत्वद्यथावशंतन्वंचक्रऽएष: । पितु:पय:प्रतिगृभ्णातिमातातेननपि
तावर्धतेतेनपुत्र:+ ॥ यस्मिन्विश्वानिभुवनानितस्थुस्तिस्रोद्यावस्त्रेधासस्रुराप: । त्रय:कोशासऽउपसेचनासोमध्व:
श्चोतंत्यभितोविरप्शं+ ॥ इदंवच:पर्जन्यायस्वराजेहृदोऽअस्त्वंतरंतज्जुजोषत् । मयोभुवोवृष्टय:संत्वस्मेसुपिप्पलाऽ
ओषधीर्देवगोपा: ॥ सरेतोधावृषभ:शश्वतीनांतस्मिन्नात्माजगतस्तस्थुषश्च । तन्मऽऋतंपातुशतशारदाययूयंपात० ॥

(७।६।१२) तिस्रोवाचइतिषडृचस्यसूक्तस्याग्नेय:कुमार:पर्जन्यस्त्रिष्टुप् । ( तिस्रोवाच:पर्जन्यायेतिसूक्तयोर्वृष्टिकामोवसिष्ठ:पाक्षिक: ।

॥ १ ॥ ( ७।६।१३ ) पर्जन्यायप्रगायतदिवस्पुत्रायमीळ्हुषे । सनोयवसमिच्छतु ॥ योगर्भमोषधीनांगवांकृणोत्यर्वतां । पर्जन्यःपुरुषीणां ॥ तस्माऽइदास्येहविर्जुहोतामधुमत्तमं । इळांनःसंयतंकरत् ॥ २ ॥ ( ७।६।१४ ) संवत्सरंशशयानाब्राह्मणाव्रतचारिणः । वाचंपर्जन्यजिन्वितांप्रमंडूकाऽअवादिषुः ॥ दिव्याऽआपोऽअभियदेनमायन्दृतिंनशुष्कंसरसीशयानं । गवामहनमायुर्वत्सिनीनांमंडूकानांवग्नुरत्रासमेति ॥ यदीमेनाँऽउशतोऽअभ्यवर्षीत्तृष्यावतःप्रावृष्यागतायां । अक्खलीकृत्यापितरंनपुत्रोऽअन्योऽअन्यमुपवदंतमेति ॥ अन्योऽअन्यमनुगृभ्णात्येनोरपांप्रसर्गेयदमंदिषातां । मंडूकोयदभिवृष्टःकनिष्कन्पृश्निःसंपृंक्तेहरितेनवाचं ॥ यदेषामन्योऽअन्यस्यवाचंशाक्तस्येववदतिशिक्षमाणः । सर्वंतदेषांसमृधेवपर्वयत्सुवाचोवदथनाध्यप्सु ॥ ३ ॥ गोमायुरेकोऽअजमायुरेकःपृश्निरेकोहरितऽएकऽएषां । समानंनामबिभ्रतोविरूपाःपुरुत्रावाचंपिपिशुर्वदंतः ॥ ब्राह्मणासोऽअतिरात्रेनसोमेसरोनपूर्णमभितोवदंतः । संवत्सरस्यतदहःपरिष्ठयन्मंडूकाःप्रावृषीणंबभूव ॥ ब्राह्मणासःसोमिनोवाचमक्रतब्रह्मकृण्वंतःपरिवत्सरीणं । अध्वर्यवोघर्मिणःसिष्विदानाऽआविर्भवंतिगुह्यानकेचित् ॥ देवहितिंजुगुपुर्द्वादशस्यऽऋतुंनरोनप्रमिनंत्येते । संवत्सरेप्रावृ



---

( ७।६।१३ ) पर्जन्यायेतितृचस्यसूक्तस्याग्नेयःकुमारःपर्जन्योगायत्री । ( ७।६।१४ ) संवत्सरमितिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठःपर्जन्यस्तुतिसंहृष्टमंडूकास्त्रिष्टुबाद्यानुष्टुप् ।

ष्यागंतायांतप्ताघर्माऽअंश्नुवतेविसर्गं+ ॥ गोमांयुरदादजमांयुरदात्पृश्निरदाद्धरिंतोनोवसूंनि । गवांमंडूकाददंतः शतानिसहस्रसावेप्रतिंरंतऽआयुंः ॥ ४ ॥ ( परिशिष्टं ॥ उपप्लवंदमंडूकीवर्षमावंदतादुरि । मध्येंह्रदस्यंप्लवस्यंनि गृह्यंचतुरंःपरः ॥ ) ( ७।६।१५ ) इंद्रांसोमातपंतंरक्षंऽउब्जतंन्यंर्पयतंवृषणातमोवृधंः । परांश्रृणीतमचितोन्योंषतं हतंनुदेथांनिशिंशीतमत्रिणंः ॥ इंद्रांसोमासमघशंसमभ्यं१घंतपुंर्यंयस्तुचरुरंग्निवाँऽइंव । ब्रह्मद्विषेंक्रव्यादेंघोरचंक्षसे द्वेषोंधत्तमनवायंकिंमीदिनें ॥ इंद्रांसोमादुष्कृतोंवव्रेऽअंतरंनारंभणेतमंसिप्रविंध्यतं । यथानातःपुनरेकंश्चनोदयत्त द्वांमस्तुसहंसेमन्युमच्छवंः ॥ इंद्रांसोमावर्तयंतंदिवोवधंसंपृथिव्याऽअघशंसायतहँणं । उत्तंक्षतंस्वर्यं१पर्वतेभ्योयेनर क्षोंवावृधानंनिजूवंथः ॥ इंद्रांसोमावर्तयंतंदिवस्पर्यंग्नितप्तेभिंर्युवमश्मंहन्मभिः । तपुंर्वधेभिरजरेंभिरत्रिणोनिपर्शांने विध्यतंयंतुनिस्वरं+ ॥ ५ ॥ इंद्रांसोमापरिंवांभूतुविश्वतंऽइयंमतिःकक्ष्याश्वेंववाजिनां । यांवांहोत्रांपरिहिनोमिंमेध येमाब्रह्मांणिनृपतींवजिन्वतं ॥ प्रतिंस्मरेथांतुजयंद्भिरेवैंर्हतंद्रुहोरक्षसोंभंगुरावंतः । इंद्रांसोमादुष्कृतेमासुगंभूद्योनंः

---

(७।६।१५) इंद्रासोमेतिपंचविंशत्यृचस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठइंद्रासोमौअष्टमीषोडश्येकोनविंशीविंश्येकाविंशीद्वाविंशीचतुर्विंशीनामिं द्रःनवमीद्वादशीत्रयोदशीनांसोमःदशमीचतुर्दश्योरग्निः एकादश्याविश्वेदेवाःसप्तदश्याग्रावाणःअष्टादश्यामरुतःत्रयोविंश्यावसिष्ठाशीःपृ थिव्यंतारिक्षाणि आद्याःषडष्टादशीद्वाविंशीत्रयोविंश्योजगत्योंत्यानुष्टुप्शिष्टास्त्रिष्टुभः।(अस्मिन्सूक्तेरक्षोघ्नत्वंगुणःसर्वासांदेवतानांवक्तव्यः)

कुदाचिदभिदासतिद्रुहा ॥ योमापाकेनमनसाचरंतमभिचष्टेऽअनृतेभिर्वचोभिः । आपऽइवकाशिनासंगृभीताऽ
असन्नस्त्वासतऽइंद्रवक्ता ॥ येपाकशंसंविहरंतऽएवैर्येवाभद्रंदूषयंतिस्वधाभिः । अहयेवातान्प्रददातुसोमऽआवा
दधातुनिर्ऋतेरुपस्थे ॥ योनोरसंदिप्सतिपित्वोऽअग्नेयोऽअश्वानांयोगवांयस्तनूनां । रिपुःस्तेनःस्तेयकृद्दभ्रमेतुनिषहीं
यतांतन्वा३तनाच ॥ ६ ॥ परःसोऽअस्तुतन्वा३तनाचतिस्रःपृथिवीरधोऽअस्तुविश्वाः । प्रतिशुष्यतुयशोऽअस्यदे
वायोनोदिवादिप्सतियश्चनक्तं ॥ सुविज्ञानंचिकितुषेजनायसच्चासच्चवचसीपस्पृधाते । तयोर्यत्सत्यंयतरदृजीयस्तदि
त्सोमोवतिहंत्यासत् ॥ नवाऽउसोमोवृजिनंहिनोतिनक्षत्रियंमिथुयाधारयंतं । हंतिरक्षोहंत्यासद्वदंतमुभाविंद्रस्यप्रसिं
तौशयाते ॥ यदिवाहमनृतदेवऽआसमोघंवादेवाँऽअप्यूहेऽअग्ने । किमस्मभ्यंजातवेदोहृणीषेद्रोघवाचस्तेनिर्ऋथंसचं
तां ॥ अद्यामुरीययदियातुधानोऽअस्मियदिवायुस्ततपपूरुषस्य । अधासवीरैर्दशभिर्वियूयायोमामोघंयातुधानेत्याह
॥ ७ ॥ योमायातुंयातुधानेत्याहयोवारक्षाःशुचिरस्मीत्याह । इंद्रस्तंहंतुमहतावधेनविश्वस्यजंतोरधमस्पदीष्ट ॥ प्र
याजिगातिखर्गलेवनक्तमपद्रुहातन्वं१गूहमाना । वव्राँऽअनंताँऽअवसापदीष्टग्रावाणोघ्नंतुरक्षसऽउपब्दैः ॥ वि
तिष्ठध्वंमरुतोविक्ष्वि१च्छतगृभायतरक्षसःसंपिनष्टन । वयोयेभूत्वीपतयंतिनक्तभिर्येवारिपोदधिरेदेवेऽअध्वरे ॥
प्रवर्तयदिवोऽअश्मानमिंद्रसोमशितंमघवन्त्संशिशाधि । प्राक्तादपाक्तादधरादुदक्तादभिजहिरक्षसःपर्वतेन ॥ एत

ऽउत्येपतयंतिश्वयातवऽइंद्रंदिप्संतिदिप्सवोदाभ्यं । शिशीतेशक्रःपिशुनेभ्योवधंनूनंसृजदशनिंयातुमद्भ्यः ॥ ८ ॥ इंद्रोयातूनामभवत्पराशरोहविर्मथीनामभ्याऽविवासतां । अभीदुशक्रःपरशुर्यथावनंपात्रेवभिंदन्त्सतऽएतिरक्षसः ॥ उलूकयातुंशुशुलूकयातुंजहिश्वयातुमुतकोकयातुं । सुपर्णयातुमुतगृध्रयातुंदृषदेवप्रमृणरक्षऽइंद्र ॥ मानोरक्षोऽअभिनड्यातुमावतामपोच्छतुमिथुनायाकिमीदिना । पृथिवीनःपार्थिवात्पात्वंहसोंतरिक्षंदिव्यात्पात्वस्मान् ॥ इंद्रंजहि पुमांसंयातुधानमुतस्त्रियंमाययाशाशदानां । विग्रीवासोमूरदेवाऋदंतुमातेदृशन्त्सूर्यमुच्चरंतं ॥ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं । रक्षोभ्योवधमस्यतमशनिंयातुमद्भ्यः ॥ ९ ॥ ( इतिवासिष्ठंसप्तमंमंडलंसमाप्तंअत्रसूक्तानि १०० )

( ८।१।१ ) माचिदन्यद्विशंसतसखायोमारिषण्यत । इंद्रमित्स्तोतावृषणंसचासुतेमुहुरुक्थाचशंसत ॥ अवक्रक्षिणंवृषभंयथाजुरंगांनचर्षणीसहं । विद्वेषणंसंवननोभयंकरंमंहिष्ठमुभयाविनं ॥ यच्चिद्धित्वाजनाऽइमेनानाहवंतऽऊ

---

प्रागाथेष्टमेमंडलेदशानुवाकाः तत्रप्रथमेनुवाकेपंचसूक्तानि ( ८।१।१ ) माचिदन्यदितिचतुस्त्रिंशदृचस्यसूक्तस्यआद्ययोर्द्वयोःकाण्वः प्रगाथऋषिःशिष्टानांकाण्वौमेधातिथिमेध्यातिथीऋषी स्तुहिस्तुहीत्यादिचतसृणांप्लायोगिरासंगऋषिःअंत्यायाआंगिरसीशश्वतीऋषिका इंद्रोदेवतास्तुहिस्तुहीत्यादिपंचानामासंगोदेवताबृहती द्वितीयासतोबृहतीअंत्येद्वेत्रिष्टुभौ । ( काण्वःप्रगाथइत्यत्रत्यःप्रगाथोवस्तुतोघौरःसन भ्रातुःकण्वस्यपुत्रतांगतइतीतिहासःश्रूयते ) ।

तये । अस्माकंब्रह्मेदमिंद्रभूतुतेहाविश्वांचवर्धनं ॥ वितर्तूर्यंतेमघवन्विपश्चितोर्योविपोजनानां । उपक्रमस्वपुरुरूप
माभंरवाजंनेदिष्ठमूतये ॥ महेचनत्वामंद्रिवःपरांशुल्कायदेयां । नसहस्रायनायुतायवज्रिवोनशतायशतामघ ॥१०॥
वस्याँऽइंद्रासिमेपितुरुतभ्रातुरभुंजतः । मातार्चमेछदयथःसमावसोवसुत्वनायराधसे ॥ क्वेयथक्वेदसिपुरुत्राचिद्धिते
मनः । अलर्षियुधमखजकृत्पुरंदरप्रगायत्राऽअगासिषुः ॥ प्रास्मैगायत्रमर्चतवावातुर्यःपुरंदरः । याभिःकाण्वस्योपब
र्हिरासदंयासद्वज्रीभिनत्पुरः ॥ येतेसंतिदशग्विनःशतिनोयेसहस्रिणः । अश्वासोयेतेवृषणोरघुद्रुवस्तेभिर्नःस्तूयमा
गहि ॥ आत्वं१द्यसबर्दुघांहुवेगायत्रवेपसं । इंद्रंधेनुंसुदुघामन्यामिषमुरुधारामरंकृतं ॥ ११ ॥ यत्तुदत्सूरऽएतशंवं
कूवातस्यपर्णिनां । वहत्कुत्समार्जुनेयंशतक्रतुःत्सरद्गंधर्वमस्तृतं ॥ यऽऋतेचिदभिश्रिषःपुराजत्रुभ्यंऽआतृदः । सं
धातासंधिंमघवापुरूवसुरिष्कर्ताविह्रुतंपुनः ॥ माभूमनिष्ट्याऽइवेंद्रत्वदरणाऽइव । वनानिनप्रजहितान्यद्रिवोदुरोषा
सोऽअमन्महि ॥ अमन्महीदनाशवोनुग्रासश्चवृत्रहन् । सकृत्सुतेमहताशूरराधसानुस्तोमंमुदीमहि ॥ यदिस्तोमंमम
श्रवदस्माकमिंद्रमिंदवः । तिरःपवित्रंससृवांसऽआशवोमंदंतुतुग्र्यावृधः ॥ १२ ॥ आत्व१द्यसधस्तुतिंवावातुःसख्यु
रागहि । उपस्तुतिर्मघोनांप्रत्वावत्वधातेवश्मिसुष्टुतिं ॥ सोताहिसोममद्रिभिरेमेनमप्सुधावत । गव्यावस्त्रेववास
यंतऽइन्नरोनिर्धुक्षन्वक्षणाभ्यः ॥ अधज्मोऽअधवादिवोबृहतोरोचनादधि । अयावर्धस्वतन्वागिरामसाजातासुक्र

तोपृण ॥ इंद्रायसुमदिंतंमंसोमंसोतावरेण्यं । शक्रऽएणंपीपयद्विश्वयाधियाहिन्वानंनवाजयुं ॥ मात्वासोमस्यगल्द

यासदायाचंन्नहंगिरा । भूर्णिमृगंनसवनेषुचुक्रुधंकऽईशानंनयाचिषत् ॥१३॥ मदेनेषितंमदमुग्रमुग्रेणशवसा । विश्वे

षांतरुतारंमदच्युतंमदेहिष्मादादातिनः ॥ शेवारेवार्यापुरुदेवोमर्तायदाशुषे । ससुन्वतेचस्तुवतेचरासतेविश्वगूर्तोऽअ

रिष्टुतः ॥ एंद्रयाहिमत्स्वचित्रेणदेवराधसा । सरोनप्रास्युदरंसपीतिभिरासोमेभिरुरुस्फिरं । आत्वासहस्रमाश

तंयुक्तारथेहिरण्यये । ब्रह्मयुजोहरयऽइंद्रकेशिनोवहंतुसोमपीतये ॥ आत्वारथेहिरण्ययेहरीमयूरशेप्या । शितिपृष्ठा

वहतांमध्वोऽअंधसोविवक्षणस्यपीतये ॥ १४ ॥ पिबात्वस्यगिर्वणःसुतस्यपूर्वपाऽइव । परिष्कृतस्यरसिनऽइयमासु

तिश्चारुर्मदायपत्यते ॥ यऽएकोऽअस्तिदंसनामहाँऽउग्रोऽअभिव्रतैः । गमत्सशिप्रीनसयोषदागमद्धवन्नपरिवर्जति ॥

त्वंपुरंचरिष्ण्वंवधैःशुष्णस्यसंपिणक् । त्वंभाऽअनुचरोऽअधद्विताथदिंद्रहव्योभुवः ॥ ममत्वासूरऽउदितेममसध्यंदिने

दिवः । ममप्रपित्वेऽअपिशर्वरेवसवास्तोमासोऽअवृत्सत ॥ स्तुहिस्तुहीदेतेघातेमंहिष्ठासोमघोनां । निंदिताश्वःप्रप

थीपरमज्यामघस्यमेध्यातिथे ॥ १५ ॥ आयदश्वान्वनन्वतःश्रद्धयाहंरथेरुहं । उतवामस्यवसुनश्चिकेततियोऽअस्ति

याद्वःपशुः ॥ यऽऋज्रामह्यंमामहेसहत्वचाहिरण्यया । एषविश्वान्यभ्यस्तुसौभगासंगस्यस्वनद्रथः ॥ अधप्लायोगि

रतिदासदन्यानासंगोऽअग्नेदशभिःसहस्रैः । अधोक्षणोदशमह्यंरुशंतोनळाऽइवसरसोनिरतिष्ठन् ॥ अन्वस्यस्थूरंद

दृशेपुरस्तांदनस्थऽऊरुरवरंबमाणः । शश्वतीनार्यभिचक्ष्यांहसुभद्रमर्यभोजनंबिभर्षि ॥ १६ ॥ (८।१।२) इदंव सोसुतमंधःपिबासुपूर्णमुदरं । अनाभयिन्नरिमाते ॥ नृभिर्धूतःसुतोऽअश्नैरव्योवारैःपरिपूतः । अश्वोननिक्तोनदी षु ॥ तंतेयवंयथागोभिःस्वादुमकर्मश्रीणंतः । इंद्रंत्वास्मिन्त्संधमादे ॥ इंद्रऽइत्सोमपाऽएकऽइंद्रःसुतपाविश्वायुः । अंतर्देवान्मर्त्यांश्च ॥ नयंशुक्रोनदुराशीर्नतृप्राऽउरुव्यचसं । अपस्पृण्वतेसुहार्दं ॥ १७ ॥ गोभिर्यदींमन्येऽअस्मन्मृ गंनव्रामृगयंते । अभित्सरंतिधेनुभिः ॥ त्रयऽइंद्रस्यसोमाःसुतासःसंतुदेवस्य । स्वेक्षयेसुतपाव्नः ॥ त्रयःकोशासः श्चोतंतितिस्रश्चम्व१ःसुपूर्णाः । समानेऽअधिभार्मन् ॥ शुचिरसिपुरुनिष्ठाःक्षीरैर्मध्यतऽआशीर्तः । दध्नामंदिष्ठःशूर स्य ॥ इमेतऽइंद्रसोमास्तीव्राऽअस्मेसुतासः । शुक्राऽआशिरंयाचंते ॥ १८ ॥ तॉऽआशिरंपुरोळाशमिंद्रेमंसो मंश्रीणीहि । रेवंतंहित्वाशृणोमि ॥ हृत्सुपीतासोयुध्यंतेदुर्मदासोनसुरायां । ऊधर्ननग्नाजरंते ॥ रेवॉऽइद्रेवतःस्तोता स्यात्वावंतोमघोनः । प्रेदुहरिवःश्रुतस्य ॥ उक्थंचनशस्यमानमगोरररिराचिकेत । नगायत्रंगीयमानं ॥ मानऽइंद्र पीयत्नवेमाशर्धतेपरादाः । शिक्षाशचीवःशचीभिः ॥ १९ ॥ वयमुंत्वातदिदर्थाऽइंद्रत्वायंतःसखायः । कण्वाऽउ



(८।१।२) इदंवसोसुतमितिद्विचत्वारिंशदृचस्यसूक्तस्यमेधातिथिरांगिरसःप्रियमेधश्चेत्युभावृषीअंत्ययोर्द्वयोःकाण्वोमेधातिथिर्ऋषिरिंद्रः अंत्ययोर्विभिंदुर्गायत्रीअष्टाविंश्यनुष्टुप् । ( विभिंदोर्दानस्तुतिः )

क्थेभिर्जरंते ॥ नघेमन्यदापपनवज्रिन्नपसोनविष्टौ । तवेदुस्तोमंचिकेत ॥ इच्छंतिदेवाःसुन्वंतंनस्वप्नायस्पृहयंति ।
यंतिप्रमादमतंद्राः ॥ ओषुप्रयाहिवाजेभिर्माहृणीथाऽअभ्यं१स्वान् । महाँऽइवयुवजानिः ॥ मोष्वं१द्यदुर्हणावान्त्सा
यंकरदारेऽअस्मत् । अश्रीरऽइवजामाता ॥ २० ॥ विद्माह्यस्यवीरस्यभूरिदावरींसुमतिं । त्रिषुजातस्यमनांसि ॥
आतूषिंचकण्वमंतंनघाविद्मशवसानात् । यशस्तरंशतमूतेः ॥ ज्येष्ठेनसोतरिंद्रायसोमंवीरायशक्राय । भरापिबन्नर्याय ॥
योवेदिष्ठोऽअव्यथिष्वश्वावंतंजरितृभ्यः । वाजंस्तोतृभ्योगोमंतं । पन्यंपन्यमित्सोतारऽआधावतमद्याय । सोमंवीराय
शूराय ॥ २१ ॥ पातावृत्रहासुतमाघागमन्नारेऽअस्मत् । नियमतेशतमूतिः ॥ एहहरीब्रह्मयुजाशग्मावक्षतःसखा
यं । गीर्भिःश्रुतंगिर्वणसं ॥ स्वादवःसोमाऽआयाहिश्रीताःसोमाऽआयाहि । शिप्रिन्नृषीवःशचीवोनायमच्छासधमा
दं ॥ स्तुतश्चयास्त्वावर्धंतिमहेराधसेनृम्णाय । इंद्रकारिणंवृधंतः ॥ गिरश्चयास्तेगिर्वाहऽउक्थाचतुभ्यंतानि । सत्रा
दधिरेशवांसि ॥ २२ ॥ एवेदेषतुविकूर्मिर्वाजाँऽएकोवज्रहस्तः । सनादमृक्तोदयते ॥ हंतावृत्रंदक्षिणेनेंद्रःपुरूपुरुहूतः ।
महान्महीभिःशचीभिः ॥ यस्मिन्विश्वाश्चर्षणयऽउतच्यौत्नाज्रयांसिच । अनुघेन्मंदीमघोनः ॥ एषऽएतानिचकारें
द्रोविश्वायोतिशृण्वे । वाजदावामघोनां ॥ प्रभर्तारथंगव्यंतमपाकाच्चिद्यमवति । इनोवसुसहिवोढा ॥ २३ ॥
सनिताविप्रोऽअर्वद्भिर्हंतावृत्रंनृभिःशूरः । सत्योविताविधंतं ॥ यजध्वैनंप्रियमेधाऽइंद्रंसत्राचामनसा । योभूत्सोमैः

सत्यमंद्वा ॥ गाथश्रवसंसत्पतिंश्रवस्कामंपुरुत्मानं । कण्वासोगातवाजिनं ॥ यऽऋतेचिद्गास्पदेभ्योदात्सखानृभ्यः श चीवान् ॥ येऽअस्मिन्काममश्रियन् ॥ इत्थाधीवंतमद्रिवःकाण्वंमेध्यातिथिं । मेषोभूतो३ भियन्नयः ॥ शिक्षाविभिं दोऽअस्मैचत्वार्ययुतादददंत् । अष्टापरःसहस्रा ॥ उतसुत्येपयोवृधामाकीरणस्यनप्त्या । जनित्वनायमामहे ॥ २४ ॥ (८।१।३) पिबासुतस्यरसिनोमत्स्वानऽइंद्रगोमतः । आपिनोबोधिसधमाद्योवृधे३ स्माँऽअवंतुतेधियः ॥ भूयाम तेसुमतौवाजिनोवयंमानःस्तरभिमातये । अस्मान्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय ॥ इमाऽउत्वापुरूवसो गिरोवर्धतुयाममं । पावकवर्णाःशुचयोविपश्चितोभिस्तोमैरनूषत ॥ अयंसहस्रमृषिभिःसहस्कृतःसमुद्रऽइवपप्रथे । सत्यःसोऽअस्यमहिमागृणेशवोयज्ञेषुविप्रराज्ये ॥ इंद्रमिद्देवतातयऽइंद्रंप्रयत्यध्वरे । इंद्रंसमीकेवनिनोहवामहऽइंद्रं धनस्यसातये ॥ २५ ॥ इंद्रोमह्नारोदसीपप्रथच्छवऽइंद्रःसूर्यमरोचयत् । इंद्रेहविश्वाभुवनानियेमिरऽइंद्रेसुवानास ऽइंदवः ॥ अभित्वापूर्वपीतयऽइंद्रस्तोमेभिरायवः । समीचीनासऽऋभवःसमस्वरन्रुद्रागृणंतपूर्व्यं ॥ अस्येदिंद्रोवावृ धेवृष्ण्यंशवोमदेसुतस्यविष्णवि । अद्यातमस्यमहिमानमायवोनुष्टुवंतिपूर्वथा ॥ तत्त्वायामिसुवीर्यंतद्ब्रह्मपूर्वचित्तये ।



(८।१।३) पिबासुतस्येतिचतुर्विंशत्यृचस्यसूक्तस्यकाण्वोमेध्यातिथिरिंद्रःअंत्यचतसृणांपाकस्थामादेवता प्रथमाद्येकोनविंशत्यंताअयुजो बृहत्यःद्वितीयादिविंशत्यंतायुजःसतोबृहत्यःअंत्याश्चतस्रःक्रमेणानुष्टुब्गायत्र्यौबृहतीच ।

येनायतिभ्योभृगवेधनेहितेयेनप्रस्कण्वमाविथ ॥ येनासमुद्रमसृजोमहीरपस्तदिंद्रवृष्णितेशवः । सद्यःसोऽअस्यमहिमानसंनशेयंक्षोणीरनुचक्रदे ॥ २६ ॥ शग्धीनऽइंद्रयत्त्वारयिंयामिसुवीर्यं । शग्धिवाजायप्रथमंसिषासतेशग्धिस्तोमायपूर्व्य ॥ शग्धीनोऽअस्ययद्धपौरमाविथधियऽइंद्रसिषासतः । शग्धियथारुशमंश्यावकंकृपमिंद्रप्रावःस्वर्णरं ॥ कन्नव्योऽअतसीनांतुरोगृणीतमर्त्यः । नहीन्वस्यमहिमानमिंद्रियंस्वर्गृणंतऽआनशुः ॥ कदुस्तुवंतऽऋतयंतदेवतऽऋषिःकोविप्रऽओहते । कदाहवंमघवन्निंद्रसुन्वतःकदुस्तुवतऽआगमः ॥ उदुत्येमधुमत्तमागिरःस्तोमासऽईरते । सत्राजितोधनसाऽअक्षितोतयोवाजयंतोरथाऽइव ॥ २७ ॥ कण्वाऽइवभृगवःसूर्याऽइवविश्वमिद्धीतमानशुः । इंद्रंस्तोमेभिर्महयंतऽआयवःप्रियमेधासोऽअस्वरन् ॥ युक्ष्वाहिवृत्रहन्तमहरीऽइंद्रपरावतः । अर्वाचीनोमघवन्त्सोमपीतयऽउग्रऽऋष्वेभिरागहि ॥ इमेहितेकारवोवावशुर्धियाविप्रासोमेधसातये । सत्वंनोमघवन्निंद्रगिर्वणोवेनोनश्रृणुधीहवं ॥ निरिंद्रबृहतीभ्योवृत्रंधनुभ्योऽअस्फुरः । निरर्बुदस्यमृगयस्यमायिनोनिःपर्वतस्यगाऽआजः ॥ निरग्नयोरुरुचुर्निरुसूर्योनिःसोमऽइंद्रियोरसः । निरंतरिक्षादधमोमहामहिंकृषेतदिंद्रपौंस्यं ॥ २८ ॥ यंमेदुरिंद्रोमरुतःपाकस्थामाकौरयाणः । विश्वेषांत्मनाशोभिष्ठमुपेवदिविधावमानं ॥ रोहितंमेपाकस्थामासुधुरंकक्ष्यप्रां । अदाद्रायोविबोधनं ॥ यस्माऽअन्येदशप्रतिधुरंवहंतिवह्नयः । अस्तंवयोनतुग्र्यं ॥ आत्मापितुस्तनूर्वासऽओजोदाऽअभ्यंजनं । तुरीयमिद्रो

ऋक्सं. अ. ५ अ. ७ ॥ ४९ ॥

हिंतस्यपाकंस्थामानंभोजंदातारमब्रवं ॥ २९ ॥ ( ८।१।४ ) यदिंद्रप्रागपागुदङ्न्यग्वाहूयसेनृभिः । सिमापुरूनृषू तोऽअस्यानवेसिंप्रशर्धतुर्वशे ॥ यद्वारुमेरुशमेश्यावकेकृपऽइंद्रमादयसेसचा । कण्वासस्त्वाब्रह्मभिःस्तोमवाहसऽइंद्राय च्छंत्यागंहि ॥ यथागौरोऽअपाकृतंतृष्यन्नेत्यवेरिणं । आपित्वेनःप्रपित्वेतूयमागंहिकण्वेषुसुसचापिब ॥ मंदंतुत्वा मघवन्निंद्रेंदवोराधोदेयायसुन्वते । आमुष्यासोमंमपिबश्चमूसुतंज्येष्ठंतद्दधिषेसहः ॥ प्रचक्रेसहसासहोबभंजमन्युमो जसा । विश्वेतऽइंद्रपृतनायवोयहोनिवृक्षाऽइवयेमिरे ॥ ३० ॥ सहस्रेणेवसचतेयवीयुधायस्तऽआनळुपस्तुतिं । पुत्रं प्रावर्गंकृणुतेसुवीर्येदाश्नोतिनमऽउक्तिभिः ॥ माभेममाश्रमिष्मोग्रस्यसख्येतव । महत्तेवृष्णोऽअभिचक्ष्यंकृतंपश्येमतु र्वशंयदुं ॥ सव्यामनुस्फिग्यंवावसेवृषानदानोऽअस्यरोषति । मध्वासंपृक्ताःसारघेणधेनवस्तूयमेहिद्रवापिब ॥ अश्वी रथीसुरूपऽइद्गोमाँऽइदिंद्रतेसखा । श्वात्रभाजावयसासचतेसदाचंद्रोयातिसभामुप ॥ ऋश्योनतृष्यन्नवपानमागंहि पिबासोमंवशाँऽअनु । निमेघमानोमघवन्दिवेदिवऽओजिष्ठंदधिषेसहः ॥ ३१ ॥ अध्वर्योद्रावयात्वंसोममिंद्रःपिपास ति । उपनूनंयुयुजेवृषणाहरीऽआचजगामवृत्रहा ॥ स्वयंचित्समन्यतेदाशुरिर्जनोयत्रासोमस्यतृंपसि । इदंतेऽअ

मंडलं ८ अनु. १ ॥ ४९ ॥

---

( ८।१।४ ) यदिंद्रेत्येकविंशत्यृचस्यसूक्तस्यकाण्वोमेधातिथिरिंद्रःअंत्यतिसृणांकुरुंगः अयुजोबृहत्योयुजःसतोबृहत्यःअंत्यापुरउष्णिक् ( प्रपूषणमित्यादिचतसृणांपूषादेवतावा ) ।

न्नंयुज्यंसमुक्षितंतस्येहिप्रद्रवापिब ॥ रथेष्ठायाध्वर्यवःसोममिंद्रायसोतन । अधिब्रध्नस्याद्रयोविचक्षतेसुन्वंतोदाश्वध्वरं ॥ उपब्रध्नंवावाताबृषणाहरीऽइंद्रमपसुवक्षतः । अर्वाचंत्वासप्तयोध्वरश्रियोवहंतुसवनेदुप ॥ प्रपूषणंवृणीमहेयुज्यायपुरूवसुं । सशक्रशिक्षपुरुहूतनोधियातुजेरायेविमोचन ॥ ३२ ॥ संनःशिशीहिभुरिजोरिवक्षुरंरास्वरायोविमोचन । त्वेतन्नःसुवेदमुस्त्रियंवसुयंत्वंहिनोषिमर्त्यं ॥ वेमित्वापूषन्नृंजसेवेमिस्तोतवऽआघृणे । नतस्यवेम्यरणंहितद्वसोस्तुषेपज्रायसाम्ने ॥ परागावोयवसंकच्चिदाघृणेनित्यंरेक्णोऽअमर्त्य । अस्माकंपूषन्नविताशिवोभववमंहिष्ठोवाजसातये ॥ स्थूरंराधःशताश्वंकुरुंगस्यदिविष्टिषु । राज्ञस्त्वेषस्यसुभगस्यरातिषुतुर्वशेष्वमन्महि ॥ धीभिःसातानिकाण्वस्यवाजिनःप्रियमेधैरभिद्युभिः । षष्टिंसहस्रानुनिर्मजामजेनिर्यूथानिगवामृषिः ॥ वृक्षाश्चिन्मेऽअभिपित्वेऽअरारणुः । गांभजंतमेहनाश्वंभजंतमेहना ॥ ३३ ॥ इतिपंचमाष्टकेसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥

एकोनचत्वारिंशाध्यायेवर्गाः ३३ सूक्तानि ८ ऋचः १६५ ॥ त्यागः ॥ पर्जन्याये.९ मंडूकेभ्य.१० इंद्रासोमाभ्या.७ इंद्राये. सोमाये. अग्नय. विश्वेभ्योदेवेभ्य. सोमाये.२ अग्नय. इंद्रासोमाभ्यामि. इंद्राये. ग्रावभ्यइ. मरुद्भ्य. इंद्राये.४ वसिष्ठाशीःपृथिव्यंतरिक्षेभ्य. इंद्रासोमाभ्या.२ इंद्राये.२९ आसंगायात्मने.४ आसंगाये.१ इंद्राये.४० विभिंदव.२ इंद्राये. २० पाकस्थाम्न.४ इंद्राये.१८ कुरुंगाये.३ ॥ इतिपंचमेसप्तमः ॥

दूरादेकान्नचत्वारिंशद्ब्रह्मातिथिराश्विनं द्विबृहत्यनुष्टुब्वंतं मंत्याः पंचार्धर्चाश्चैद्यस्यकशोर्दानस्तुतिर्महाँ इंद्रोष्टाच त्वारिंशद्वत्सस्तृचोंत्यस्तिरिंदिरस्यपार्शव्यस्यदानस्तुतिः प्रयद्धः षट्त्रिंशत्पुनर्वत्सोमारुतं मानरूयधिकासध्वंस आश्विनं ह्यानुष्टुभं त्वांनूनं सैकाशशकर्णोत्येगायत्र्याउपाद्येचांद्याचतुर्थीषष्ठीचतुर्दश्याद्येचबृहत्यः पंचमीककुंब्द शम्याद्यास्त्रिष्टुब्विराड्जगत्योयत्स्थः षट्प्रगाथोपश्यंद्बृहतीमध्येज्योतिरनुष्टुब्वास्तारपंक्तिः प्रगाथस्त्वमग्नेदशव त्सआग्नेयेगायत्रंत्यादैवीत्रिष्टुब्वाद्याप्रतिष्ठोपाद्यावर्धमाना ॥ ८ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ ( ८।१।५ ) दूरादिहेवयत्सत्यरुणप्सुरशिश्वितत् । विभानुंविश्वधातनत् ॥ नृवद्दस्रामनोयुजा रथेनपृथुपाजसा । सचेथेऽअश्विनोषसं ॥ युवाभ्यांवाजिनीवसूप्रतिस्तोमाऽअदृक्षत । वाचंदूतोयथोहिषे ॥ पुरुप्रि याणऽऊतयेपुरुमंद्रापुरूवसू । स्तुषेकण्वासोऽअश्विना ॥ मंहिष्ठावाजसातमेषयंताशुभस्पती । गंतारादाशुषोगृहं ॥ १ ॥ तासुदेवायदाशुषेसुमेधामवितारिणीं । धृतैर्गव्यूतिमुक्षतं ॥ आनःस्तोममुपद्रवत्तूयंश्येनेभिराशुभिः । यात मश्वेभिरश्विना ॥ येभिस्तिस्रःपरावतोदिवोविश्वानिरोचना । त्रींऽरक्तून्परिदीयथः ॥ उतनोगोमतीरिषऽउतसाती



( ८।१।५ ) दूरादिहेवेत्येकोनचत्वारिंशदृचस्यसूक्तस्यकाण्वोब्रह्मातिथिरश्विनौ यथाचिच्चैद्यः कशुरित्यादिसार्धद्वयोः कशुर्गायत्रीअंत्या स्तिस्रःक्रमेणबृहत्यावनुष्टुप्च ।

रंहर्विदा । विपथःसातयेसितं ॥ आनोगोमंतमश्विनासुवीरंसुरथंरयिं । वोह्ळमश्वावतीरिषः ॥ २ ॥ वावृधानाशुभस्प तीदस्राहिरण्यवर्तनी । पिबतंसोम्यंमधु ॥ अस्मभ्यंवाजिनीवसूमघवद्भ्यश्चसप्रथः । छर्दिर्यंतमदाभ्यं ॥ निषुब्रह्मज नानांयाविष्टंतूयमागतं । मोष्वंन्याँऽउपारतं ॥ अस्यपिबतमश्विनायुवंमदस्यचारुणः । मध्वोरातस्यधिष्ण्या ॥ अस्मेऽआवहतंरयिंशतवंतंसहस्रिणं । पुरुक्षुंविश्वधायसं ॥ ३ ॥ पुरुत्राचिद्धिवांनराविह्वयंतेमनीषिणः । वाघद्भिर श्विनागतं ॥ जनासोवृक्तबर्हिषोहविष्मंतोऽअरंकृतः । युवांहवंतेऽअश्विना ॥ अस्माकमद्यवामयंस्तोमोवाहिष्ठोऽअंत मः । युवाभ्यांभूत्वश्विना ॥ योहवांमधुनोदृतिराहितोरथचर्षणे । ततःपिबतमश्विना ॥ तेननोवाजिनीवसूपश्वेतो कायशंगवे । वहंतंपीवरीरिषः ॥ ४ ॥ उतनोदिव्याऽइषऽउतसिंधूँरहर्विदा । अपद्वारेववर्षथः ॥ कदावांतौग्र्यो विधत्समुद्रेजहितोनरा । यद्वांरथोविभिष्पतात् ॥ युवंकण्वायनासत्यापिरिप्तायहर्म्ये । शश्वदूतीर्दशस्यथः ॥ ताभि रायातमूतिभिर्नव्यसीभिःसुशस्तिभिः । यद्वांवृषण्वसूहुवे ॥ यथाचित्कण्वमावतंप्रियमेधमुपस्तुतं । अत्रिंशिंजार मश्विना ॥ ५ ॥ यथोतकृत्व्येधनेंशुंगोष्वगस्त्यं । यथावाजेषुसोभरिं ॥ एतावद्वांवृषण्वसूऽअतोवाभूयोऽअश्विना । गृणंतःसुम्नमीमहे ॥ रथंहिरण्यवंधुरंहिरण्याभीशुमश्विना । आहिस्थाथोदिविस्पृशं ॥ हिरण्ययीवांरभिरीषाऽअक्षो हिरण्ययः । उभाचक्राहिरण्यया ॥ तेननोवाजिनीवसूपरावतश्चिदागत । उपमांसुष्टुतिंमम ॥ ६ ॥ आवहेथेपराका

तपूर्वीरश्वंतांवश्विना । इषोदासीरमर्त्या ॥ आनोद्युम्नैराश्रवोभिरारायायांतमश्विना । पुरुश्चंद्रानासत्या ॥ एहवांप्रुषितप्सवोवयोवहंतुपर्णिनः । अच्छास्वध्वरंजनं ॥ रथंवामनुगायसंयऽइषावर्ततेसह । नचक्रमभिबाधते ॥ हिरण्ययेनरथेनद्रवत्पाणिभिरश्वैः । धीजवनानासत्या ॥ ७ ॥ युवंमृगंजागृवांसंस्वदथोवावृषण्वसू । तानःपृंक्तमिषारयिं ॥ तामेऽअश्विनासनीनांविद्यातंनवानां । यथाचिच्चैद्यःकशुःशतमुष्ट्रानांददत्सहस्रादशगोनां ॥ योमेहिरण्यसंदृशोदशराज्ञोऽअमंहत । अधस्पदाऽइच्चैद्यस्यकृष्टयश्चर्मम्नाऽअभितोजनाः ॥ माकिरेनापथागाद्येनेमेयंतिचेदयः । अन्योनेत्सूरिरोहतेभूरिदावत्तरोजनः ॥ ८ ॥ (८।२।१) महाँऽइंद्रोयऽओजसापर्जन्योवृष्टिमाँऽइव । स्तोमैर्वत्सस्यवावृधे ॥ प्रजामृतस्यपिप्रतःप्रयद्भरंतवह्नयः । विप्राऽऋतस्यवाहसा ॥ कण्वाऽइंद्रंयदक्रतस्तोमैर्यज्ञस्यसाधनं । जामिब्रुवतऽआयुधं ॥ समस्यमन्यवेविशोविश्वानमंतकृष्टयः । समुद्रायेवसिंधवः ॥ ओजस्तदस्यतित्विषऽउभेयत्समवर्तयत् । इंद्रश्चर्मेवरोदसी ॥ ९ ॥ विचिद्वृत्रस्यदोधतोवज्रेणशतपर्वणा । शिरोबिभेदवृष्णिना ॥ इमाऽअभिप्रणोनुमोविपामग्रेषुधीतयः । अग्नेःशोचिर्नदिद्युतः ॥ गुहासतीरुपत्मनाप्रयच्छोचंतधीतयः । कण्वाऽऋतस्यधारया ॥ प्रतमिंद्रनशीमहिरयिंगोमंतमश्विनं । प्रब्रह्मपूर्वचित्तये ॥ अहमिद्धिपितुष्परिमेधामृतस्यजग्रभ । अहंसूर्यऽइवाज



---

(८।२।१) महाँइंद्रइत्यष्टाचत्वारिंशदृचस्यसूक्तस्यकाण्वोवत्सऋषिःइंद्रोदेवता । तिसृणांतिरिंदिरोगायत्री । (पार्शव्यस्यदानस्तुतिः)

नि ॥ १० ॥ अहंप्रत्नेनमन्मनागिरःशुंभामिकण्ववत् । येनेंद्रःशुष्ममिद्दधे+ ॥ येत्वामिंद्रनतुष्टुवुर्ऋषयोयेचतुष्टुवुः ।
ममेद्वर्धस्वसुष्टुतः ॥ यदस्यमन्युरध्वनीद्विवृत्रंपर्वशोरुजन् । अपःसमुद्रमैरयत् ॥ निशुष्णंऽइंद्रधर्णसिंवज्रंजघंथदस्यं
वि । वृषाह्युग्रशृण्विषे+ ॥ नद्यावऽइंद्रमोजसानांतरिक्षाणिवज्रिणं । नविव्यचंतभूमयः ॥ ११ ॥ यस्तऽइंद्रमहीर
पःस्तंभूयमानऽआशयत् । नितंपद्यासुशिश्नथः ॥ यऽइमेरोदसीमहीसमीचीसमजग्रभीत् । तमोभिरिंद्रतंगुहः ॥
यऽइंद्रयतयस्त्वाभृगवोयेचतुष्टुवुः । ममेदुग्रश्रुधीहवं ॥ इमास्तऽइंद्रपृश्नयोघृतंदुहतऽआशिरं । एनामृतस्यपिप्यु
षीः ॥ याऽइंद्रप्रस्वस्त्वासागर्भमचक्रिरन् । परिधर्मेवसूर्यं ॥ १२ ॥ त्वामिच्छवसस्पतेकण्वाऽउक्थेनवावृधुः । त्वांसु
तासऽइंदवः ॥ तवेदिंद्रप्रणीतिषूतप्रशस्तिरद्रिवः । यज्ञोवितंतसाय्यः ॥ आनऽइंद्रमहीमिषंपुरंनदर्षिगोमतीं । उत
प्रजांसुवीर्यं ॥ उतत्यदाश्वश्व्यंयदिंद्रनाहुषीष्वा । अग्रेविक्षुप्रदीदयत् ॥ अभिव्रजंनतत्निषेसूरऽउपाकचक्षसं । यदिंद्र
मृळयासिनः ॥ १३ ॥ यदंगतविषीयसऽइंद्रप्रराजसिक्षितीः । महाँऽअपारऽओजसा ॥ तंत्वाहविष्मतीर्विशऽउप
ब्रुवतऽऊतये । उरुज्रयसमिंदुभिः ॥ उपह्वरेगिरीणांसंगथेचनदीनां । धियाविप्रोऽअजायत ॥ अतःसमुद्रमुद्वतश्चि
कित्वाँऽअवपश्यति । यतोविपानऽएजति ॥ आदित्प्रत्नस्यरेतसोज्योतिष्पश्यंतिवासरं । परोयदिध्यतेदिवा+
॥ १४ ॥ कण्वासऽइंद्रतेमतिंविश्वेवर्धंतिपौंस्यं । उतोशविष्ठवृष्ण्यं ॥ इमांमऽइंद्रसुष्टुतिंजुषस्वप्रसुमामव ।

ऋक्सं. अ. ५ अ. ८ ॥ ५२ ॥

मंडलं ८ अनु. २

उतप्रवर्धयामतिं+ ॥ उतब्रह्मण्यावयंतुभ्यंप्रवृद्धवज्रिवः । विप्राऽअतक्ष्मजीवसे ॥ अभिकण्वाऽअनूषतापोनप्रवता यतीः । इंद्रंवनन्वतीमतिः+ ॥ इंद्रमुक्थानिवावृधुःसमुद्रमिवसिंधवः । अनुत्तमन्युमजरं ॥ १५ ॥ आनोयाहिपरावतोहरिभ्यांहर्यताभ्यां । इममिंद्रसुतंपिब ॥ त्वामिद्वृत्रहंतमजनासोवृक्तबर्हिषः । हवंतेवाजसातये ॥ अनुत्वारोदसीऽउभेचक्रंनवर्त्येतशं । अनुसुवानासऽइंदवः ॥ मंदस्वासुस्वर्णरऽउतेंद्रशर्यणावति । मत्स्वाविवस्वतोमती+ ॥ वावृधानऽउपद्यविवृषावज्र्यरोरवीत् । वृत्रहासोमपातमः ॥ १६ ॥ ऋषिर्हिपूर्वजाऽअस्येकऽईशानऽओजसा । इंद्रचोष्कूयसेवसु ॥ अस्माकंत्वासुताँऽउपवीतपृष्ठाऽअभिप्रयः । शतंवहंतुहरयः ॥ इमांसुपूर्व्यांधियंमधोर्घृतस्यपिप्युषीं । कण्वाऽउक्थेनवावृधुः ॥ इंद्रमिद्विमहीनांमेधेवृणीतमर्त्यः । इंद्रंसनिष्युरूतये ॥ अर्वाचंत्वापुरुष्टुतप्रियमेधस्तुताहरी । सोमपेयायवक्षतः ॥ शतमहंतिरिंदिरेसहस्रंपर्शावाददे । राधांसियाद्वानां ॥ त्रीणिशतान्यर्वतांसहस्रादशगोनां । ददुष्पज्राययसाम्ने ॥ उदानट्ककुहोदिवमुष्ट्रांन्चतुर्युजोददत् । श्रवसायाद्वंजनं ॥ १७ ॥ ( ८।२।२ ) प्रयद्वस्त्रिष्टुभमिषंमरुतोविप्रोऽअक्षरत् । विपर्वतेषुराजथ ॥ यदंगतविषीयवोयामंशुभ्राऽअचिध्वं । निपर्वताऽअहासत ॥ उदीरयंतवायुभिर्वाश्रासःपृश्निमातरः । धुक्षंतपिप्युषीमिषं ॥ वपंतिमरुतोमिहंप्रवेपयंतिपर्वतान् । यद्यामं

॥ ५२ ॥

( ८।२।२ ) प्रयद्वइतिषट्त्रिंशदृचस्यसूक्तस्यकाण्वःपुनर्वत्सोमरुतोगायत्री ।

यांतिवायुभिः ॥ नियद्यामांयवोगिगिरिर्निसिंधवोविधर्मणे । महेशुष्माययेमिरे ॥ १८ ॥ युष्माँऽउनक्तमूतयेयुष्मा
न्दिवांहवामहे । युष्मान्प्रयत्यध्वरे ॥ उदुत्येऽअरुणप्सवश्चित्रायामेभिरीरते । वाश्राऽअधिष्णुनादिवः ॥ सृजं
तिरश्मिमोजसापंथांसूर्याययातवे । तेभानुभिर्वितस्थिरे ॥ इमांमेमरुतोगिरमिमंस्तोममृभुक्षणः । इमंमेवनताहवं ॥
त्रीणिसरांसिपृश्नयोदुदुह्रेवज्रिणेमधु । उत्संकवंधमुद्रिणं ॥ १९ ॥ मरुतोयद्धवोदिवःसुम्नायंतोहवामहे । आतूनऽ
उपगंतन ॥ यूयंहिष्ठासुदानवोरुद्राऽऋभुक्षणोदमे । उतप्रचेतसोमदे ॥ आनोरयिंमदच्युतंपुरुक्षुंविश्वधायसं । इयं
र्तामरुतोदिवः ॥ अधीवयद्गिरीणांयामंशुभ्राऽअचिध्वं । सुवानैर्मदध्वऽइंदुभिः ॥ एतावतश्चिदेषांसुम्नंभिक्षेतम
र्त्यः । अदाभ्यस्यमन्मभिः ॥ २० ॥ येद्रप्साऽइवरोदसीधमंत्यनुवृष्टिभिः । उत्संदुहंतोऽअक्षितं ॥ उदुस्वानेभिरी
रतऽउद्रथैरुदुवायुभिः । उत्स्तोमैःपृश्निमातरः ॥ येनावतुर्वशंयदुंयेनकण्वंधनस्पृतं । रायेसुतस्यधीमहि ॥ इमाऽउ
वःसुदानवोघृतंनपिप्युषीरिषः । वर्धान्काण्वस्यमन्मभिः ॥ क्वनूनंसुदानवोमदथावृक्तबर्हिषः । ब्रह्माकोवःसपर्यति
॥ २१ ॥ नहिष्मयद्धवःपुरास्तोमेभिर्वृक्तबर्हिषः । शर्धांऽऋतस्यजिन्वथ ॥ समुत्येमहतीरपःसंक्षोणीसमुसूर्यं । संव
ज्रंपर्वशोदधुः ॥ विवृत्रंपर्वशोययुर्विपर्वताँऽअराजिनः । चक्राणावृष्णिपौंस्यं ॥ अनुत्रितस्ययुध्यतःशुष्ममावन्नुतक्र
तुं । अन्विंद्रंवृत्रतूर्ये ॥ विद्युद्धस्ताऽअभिद्यवःशिप्राःशीर्षन्हिरण्ययीः । शुभ्राव्यंजतश्रिये ॥ २२ ॥ उशनायत्प

रावतंऽउक्ष्णोरंध्रमयांतन । द्यौर्नचक्रदद्भिया+ ॥ आनोमखस्यंदावनेश्वैर्हिरण्यपाणिभिः । देवांसऽउपगंतन ॥ यदें षांपृषतीरथेप्रष्टिर्वहतिरोहितः । यांतिशुभ्रारिणन्नपः+ ॥ सुषोमेशर्यणावत्यार्जीकेपस्त्यावति । ययुर्निचक्रयानरः ॥ कदागच्छाथमरुतऽइत्थाविप्रंहवमानं । मार्डीकेभिर्नाधमानं ॥ २३ ॥ कद्धनूनंकधप्रियोयदिंद्रमजहातन । कोवः सखित्वऽओहते ॥ सहोषुणोवज्रहस्तैःकण्वासोऽअग्निंमरुद्भिः । स्तुषेहिरण्यवाशीभिः ॥ ओषुवृष्णःप्रयज्यूनानव्यं सेसुवितायं । ववृत्यांचित्रवाजान् ॥ गिरयश्चिन्निजिहतेपर्शानासोमन्यमानाः । पर्वताश्चिन्नियेमिरे ॥ आक्ष्णयावां नोवहंत्यंतरिक्षेणपततः । धातारःस्तुवतेवयः ॥ अग्निर्हिजानिपूर्व्यश्छंदोनसूरोऽअर्चिषां । तेभानुभिर्वितस्थिरे ॥ २४ ॥ ( ८।२।३ ) आनोविश्वाभिरूतिभिरश्विनागच्छंतंयुवं । दस्राहिरण्यवर्तनीपिबंतंसोम्यंमधु ॥ आनूनंयां तमश्विनारथेनसूर्यत्वचा । भुजीहिरण्यपेशसाकवीगंभीरचेतसा ॥ आयातंनहुषस्पर्यांतरिक्षात्सुवृक्तिभिः । पिबां थोऽअश्विनामधुकण्वानांसवनेसुतं+ ॥ आनोयातंदिवस्पर्यांतरिक्षादधप्रिया । पुत्रःकण्वस्यवामिहसुषावसोम्यंम धु ॥ आनोयातमुपश्रुत्यश्विनासोमपीतये । स्वाहास्तोमस्यवर्धनाप्रकवीधीतिभिर्नरा ॥ २५ ॥ यच्चिद्धिवांपुरऽऋष योजुहूरेवसेनरा । आयातमश्विनागतमुपेमांसुष्टुतिंमम ॥ दिवश्चिद्रोचनादध्यानोगंतंस्वर्विदा । धीभिर्वत्सप्रचेतसा





( ८।२।३ ) आनोविश्वाभिरितित्रयोविंशत्यृचस्यसूक्तस्यकाण्वःसध्वंसोश्विनावनुष्टुप् ।

स्तोमेभिर्हवनश्रुता ॥ किमन्येपर्यासतेस्मत्स्तोमेभिरश्विना । पुत्रःकण्वस्यवामृषिर्गीर्भिर्वत्सोऽअवीवृधत् ॥ आवांविप्रऽ
इहावसेह्वत्स्तोमेभिरश्विना । अरिप्रावृत्रहंतमातानोभूतंमयोभुवा ॥ आयद्वांयोषणारथमतिष्ठद्वाजिनीवसू । विश्वान्य
श्विनायुवंप्रधीतान्यगच्छतं ॥ २६ ॥ अतःसहस्रनिर्णिजारथेनायातमश्विना । वत्सोवांमधुमद्वचोशंसीत्काव्यःक
विः ॥ पुरुमंद्रापुरूवसूमनोतरारयीणां । स्तोमंमेऽअश्विनाविममभिवह्नीऽअनूषातां ॥ आनोविश्वान्यश्विनाधत्तंरा
धांस्यह्रया । कृतंनऽऋत्वियावतोमानोरीरधतंनिदे ॥ यन्नासत्यापरावतियद्वास्थोऽअध्यंवरे । अतःसहस्रनिर्णिजा
रथेनायातमश्विना ॥ योवांनासत्यावृषिर्गीर्भिर्वत्सोऽअवीवृधत् । तस्मैसहस्रनिर्णिजमिषंधत्तंघृतश्चुतं ॥ २७ ॥ प्रा
स्माऽऊर्जंघृतश्चुतमश्विनायच्छतंयुवं । योवांसुम्नायतुष्टवद्वसूयाद्दानुनस्पती ॥ आनोगंतंरिशादसेमंस्तोमंपुरुभुजा ।
कृतंनःसुश्रियोनरेमादातमभिष्टये ॥ आवांविश्वाभिरूतिभिःप्रियमेधाऽअहूषत । राजंतावध्वराणामश्विनायामहू
तिषु ॥ आनोगंतंमयोभुवाश्विनाशंभुवायुवं । योवांविपन्यूधीतिभिर्गीर्भिर्वत्सोऽअवीवृधत् ॥ याभिःकण्वंमेधाति
थिंयाभिर्वशंदशव्रजं । याभिर्गोशर्यमावतंताभिर्नोवतंनरा ॥ २८ ॥ याभिर्नरात्रसदस्युमावतंकृत्व्येधने । ताभिः
ष्व१स्माँऽअश्विनाप्रावतंवाजसातये ॥ प्रवांस्तोमाःसुवृक्तयोगिरोवर्धंत्वश्विना । पुरुत्रावृत्रहंतमातानोभूतंपुरुस्पृ

हा॑ ॥ त्रीणि॑प॒दान्य॒श्विनो॑रा॒विः सांति॒गुहा॑प॒रः । क॒वी ऽऋ॒तस्य॒पत्म॑भिर॒र्वाग्जी॒वेभ्य॒स्परि॑ ॥ २९ ॥ ( ८।२।४ ) आ नू॒नम॑श्विनायु॒वंव॒त्सस्य॑गंत॒मव॑से । प्रास्मै॑यच्छतमवृ॒कंपृ॒थुच्छ॒र्दिर्यु॑यु॒तंया ऽअरा॑तयः ॥ यद॒ंतरि॑क्षेयद्दि॒वियत्पंच॒मानु॑षाँ ऽअनु॑ । नृ॒म्णंतद्ध॑त्तमश्विना ॥ येवां॒दंसां॒स्यश्वि॒नाविप्रा॑सः परिमामृ॒शुः । ए॒वेत्का॒ण्वस्य॑बोधतं ॥ अ॒यंवां॑घ॒र्मो ऽअ॑श्वि॒नास्तोमे॑न॒परि॑षिच्यते । अ॒यंसोमो॒मधु॑मान्वाजिनीवसू॒येन॑वृ॒त्रंचिके॑तथः ॥ यद॒प्सुयद्वन॒स्पतौ॒यदोष॑धीषुपुरुदंससाकृ॒तं । तेन॑माविष्टमश्विना ॥ ३० ॥ यन्ना॑सत्याभु॒रण्यथो॒यद्वा॑देवभिष॒ज्यथः॑ । अ॒यंवा॑व॒त्सोम॒तिभि॒र्नवि॑धतेह॒विष्म॑तं हिगच्छ॑थः ॥ आनू॒नम॒श्विनो॒र्ऋषि॒ः स्तोम॑चिकेतवा॒मया॑ । आसोमं॒मधु॑मत्तमंघ॒र्मंसि॑चा॒दथ॑र्वणि ॥ आनू॒नंर॒घुव॑र्तनिंर॒थंतिष्ठाथो ऽअश्विना । आवां॒स्तोमा॑ ऽइ॒मेमम॒नभो॒नचु॑च्यवीरत ॥ यद॒द्यवां॑नासत्यो॒क्थैरा॑चुच्यु॒वीम॑हि । यद्वा॒वाणी॑भिरश्विने॒वेत्का॒ण्वस्य॑वोधतं ॥ यद्वां॑क॒क्षीवाँ॑ ऽउ॒तयद्व्य॑श्व॒ ऋषि॒र्यद्वां॑दी॒र्घत॑माजु॒हाव॑ । पृथी॒यद्वां॑वै॒न्यः साद॑नेष्वे॒वेदतो॑ ऽअश्विनाचेतयेथां ॥ ३१ ॥ या॒तंछ॒र्दि॒ष्पा ऽउ॒तनः॑ पर॒स्पाभू॒तंज॑ग॒त्पा ऽउ॒तन॑स्तनू॒पा । व॒र्तिस्तो॒काय॒तन॑याययातं ॥ यदिंद्रे॑ण॒सरथं॒या॒थो ऽअ॑श्वि॒नायद्वा॑वायु॒नाभव॑थः॒ समो॑कसा । यदा॑दि॒त्येभि॑र्ऋ॒भुभिः॑ स॒जोष॑सायद्वा॒विष्णो॒र्विक्र॑मणेषु॒ति



( ८।२।४ ) आनूनमित्येकविंशत्यृचस्यसूक्तस्यकाण्वः शशकर्णोश्विनावनुष्टुप् आद्याचतुर्थीषष्ठीचतुर्दशीपंचदश्योबृहत्यः द्वितीयातृतीया विंश्येकविंश्योगायत्र्यः पंचमीककुप्दशमीत्रिष्टुबेकादशीविराड्द्वादशीजगती ।

छ्थः ॥ यद्द्याश्विनावहंहुवेयवाजसातये । यत्पृत्सुतुर्वणेसहस्तच्छ्रेष्ठमश्विनोरवः ॥ आनूनंयातमश्विनेमाह
व्यानिवाहिता । इमेसोमासोऽअधितुर्वशेयदाविमेकण्वेषुवामथ ॥ यन्नासत्यापराकेऽअर्वाकेऽअस्तिभेषजं ।
तेननूनंविमदायप्रचेतसाछ्दिर्वत्सायय्यच्छतं ॥ ३२ ॥ अभुत्स्युप्रदेव्यासाकंवाचाहमश्विनोः । व्यावर्देव्याम
तिंविरातिंमर्त्येभ्यः ॥ प्रबोधयोषोऽअश्विनाप्रदेविसूनृतेमहि । प्रयज्ञहोतरानुषक्प्रमदायश्रवोबृहत् ॥ यदु
षोयासिभानुनासंसूर्येणरोचसे । आहायमश्विनोरथोवर्तिर्यातिनृपाय्यं ॥ यदापीतासोऽअंशवोगावोनदुह्रऽऊधभिः ।
यद्वावाणीरनूषतप्रदेवयंतोऽअश्विना ॥ प्रद्युम्नायप्रशवसेप्रनृषाह्यायशर्मणे । प्रदक्षायप्रचेतसा ॥ यन्नूनंधीभिरश्वि
नापितुर्योनानिषीदथः । यद्वासुम्नेभिरुक्थ्या ॥ ३३ ॥ ( ८।२।५ ) यत्स्थोदीर्घप्रसद्मनियद्वादोरोचनेदिवः । यद्वा
समुद्रेऽअध्याकृतेगृहेतऽआयातमश्विना ॥ यद्वायज्ञंमनवेसंमिमिक्षथुरेवेत्काण्वस्यबोधतं । बृहस्पतिंविश्वान्देवाँऽअहं
हुवऽइंद्राविष्णूऽअश्विनावाशुहेषसा ॥ त्यान्वश्विनाहुवेसुदंससागृभेकृता । ययोरस्तिप्रणःसख्यंदेवेष्वध्याप्यं ॥
ययोरधिप्रयज्ञाऽअसूरेसंतिसूरयः । तायज्ञस्याध्वरस्यप्रचेतसास्वधाभिर्यापिबतःसोम्यंमधु ॥ यद्द्याश्विनावपाग्य
त्प्राक्स्थोवाजिनीवसू । यद्द्रुह्यव्यनवितुर्वशेयदौहुवेवामथमागतं ॥ यदंतरिक्षेपतथःपुरुभुजायद्वेमेरोदसीऽअनु । यद्वा

( ८।२।५ ) यत्स्थइतिषड्चस्यसूक्तस्यकाण्वःप्रगाथोश्विनौकमेणबृहतीमध्येज्योतिरनुष्टुबास्तारपंक्तिर्बृहतीसतोबृहत्यः ।

स्वधाभिरधितिष्ठथोरथमतऽआयातमश्विना ॥ ३४ ॥ ( ८।२।६ ) त्वमग्नेव्रतपाऽअसिदेवऽआमर्त्येष्वा । त्वंयज्ञे ष्वीड्यः ॥ त्वमसिप्रशस्योविदथेषुसहंत्य । अग्नेरथीरध्वराणां ॥ सत्वमस्मदपद्विषोयुयोधिजातवेदः । अदेवीरग्नेऽ अरातीः ॥ अंतिचित्संतमहयज्ञंमर्तस्यरिपोः । नोपवेषिजातवेदः ॥ मर्ताऽअमर्त्यस्यतेभूरिनाममनामहे । विप्रासोजा तवेदसः ॥ ३५ ॥ विप्रंविप्रासोवसेदेवंमर्तासऽऊतये । अग्निंगीर्भिर्हवामहे ॥ आतेवत्सोमनोयमतपरमाच्चित्सध स्थात् । अग्नेत्वांकामयागिरा+ ॥ पुरुत्राहिसदृङ्ङसिविशोविश्वाऽअनुप्रभुः । समत्सुत्वाहवामहे ॥ समत्स्वग्निमवसे वाजयंतोहवामहे । वाजेषुचित्रराधसं ॥ प्रत्नोहिकमीड्योऽअध्वरेषुसनाच्चहोतानव्यश्चसत्सि । स्वांचाग्नेतन्वंपिप्रय स्वास्मभ्यंचसौभगमायजस्व ॥ ३६ ॥ इतिपंचमाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥ इतिपंचमोऽष्टकः ॥ ५ ॥ ॥

चत्वारिंशाध्यायेवर्गाः ३६ सूक्तानि ७ ऋचः १८३ ॥ त्यागः ॥ अश्विभ्या. ३६ अश्विकशुभ्य. कशव. २ इंद्राये. ४५ तिरिंदि- राये. ३ मरुद्भ्य. ३६ अश्विभ्या. ५० अग्नय. १० ॥ इतिपंचमेऽष्टमः ॥



---

( ८।२।६ ) त्वमग्नइतिदशर्चस्यसूक्तस्यकाण्वोवत्सोऋषिरग्निर्देवताद्वितीयाप्रथमाप्रतिष्ठाद्वितीयावर्धमानान्त्यात्रिष्टुप् ।

ॐ यइंद्रत्रयस्त्रिंशत्पर्वतऔष्णिहंत्विंद्रः सुतेषुनारदौयदिंद्रपंचोनांगोषूक्त्यश्वसूक्तिनौकाण्वायनौतम्वभिसप्तौष्णिहंप्रसम्राजंद्वादशोरिंबिठिरायाहिपंचोनाप्रगाथांतमिदंहक्र्यधिकादित्यमौष्णिहंमष्टम्यश्विभ्यांपराग्निसूर्यानिळानां ( देवेभिरित्यदितेरदितिर्नइतिचद्वे ) तंगूर्धयसप्तत्रिंशत्सोभरिंराग्नेयंकाकुभंप्रागाथंहपितुर्नद्विपदांत्येककुप्पंक्तीत्रसदस्योर्दानस्तुतिस्तत्पूर्वेउष्णिक्सतोबृहत्यावादित्येभ्यंआगंतषड्विंशतिर्मारुतं ॥ १ ॥

श्रीगणेशायनमः ॥ हरिःओम् ॥ ( ८।२।७ ) यऽइंद्रसोमपातमोमदः शविष्ठचेतति । येनाहंसिन्य१त्रिणंतमीमहे ॥ येनादशंग्वमध्रिगुंवेपयंतंस्वर्णरं । येनासमुद्रमाविथातमीमहे ॥ येनसिंधुंमहीरपोरथाँऽइवप्रचोदयः । पंथामृतस्ययातवेतमीमहे ॥ इमंस्तोममभिष्टयेघृतंनपूतमद्रिवः । येनानुसद्यऽओजसाववक्षिथ ॥ इमंजुषस्वगिर्वणः समुद्रइवपिन्वते । इंद्रविश्वाभिरूतिभिर्ववक्षिथ ॥ १ ॥ योनोदेवः परावतः सखित्वनायमामहे । दिवोनवृष्टिंप्रथयन्ववक्षिथ ॥ ववक्षुरस्यकेतवऽउतवज्रोगभस्त्योः । यत्सूर्योनरोदसीऽअवर्धयत् ॥ यदिंप्रवृद्धसत्पतेसहस्रंमहिषाँऽअघः । आदित्तंऽइंद्रियंमहिप्रवावृधे ॥ इंद्रः सूर्यस्यरश्मिभिन्यंर्शसानमोषति । अग्निर्वनेवसासहिः प्रवावृधे ॥ इयंतऽऋत्वियावतीधीतिरेतिनवीयसी । सपर्यंतीपुरुप्रियामिमीतऽइत् ॥ २ ॥ गर्भोयज्ञस्यदेवयुः क्रतुंपुनीतऽआनुषक् । स्तो

---

( ८।२।७ ) यइंद्रेतित्रयस्त्रिंशदृचस्यसूक्तस्यकाण्वः पर्वतइंद्रउष्णिक् ।

ऋक्सं.
अ. ६ अ. १
॥ २ ॥

मैरिंद्रंस्यवावृधेमिमीतऽइत् ॥ सनिर्मित्रस्यपप्रथऽइंद्रःसोमस्यपीतये । प्राचीवाशीवसुन्वतेमिमीतऽइत् ॥ यंविप्राऽ
उक्थवाहसोभिप्रमंदुरायवः । घृतंनपिप्यऽआसन्यृतस्ययत् ॥ उतस्वराजेऽअदितिःस्तोममिंद्रायजीजनत् । पुरुप्र
शस्तमूतयऽऋतस्ययत् ॥ अभिवह्नयऽऊतयेनूषतप्रशस्तये । नदेवविव्रताहरीऽऋतस्ययत् ॥ ३ ॥ यत्सोममिंद्रविष्णविय
द्वाघत्रितऽआप्त्ये । यद्वामरुत्सुमंदसेसमिंदुभिः॥यद्वाशक्रपरावतिसमुद्रेऽअधिमंदसे । अस्माकमित्सुतेरणासमिंदुभिः॥
यद्वासिसुन्वतोवृधोयजमानस्यसत्पते । उक्थेवायस्यरण्यसिसमिंदुभिः ॥ देवंदेवंवोवसऽइंद्रमिंद्रंगृणीषणि । अ
धायज्ञायतुर्वणेव्यानशुः ॥ यज्ञेभिर्यज्ञवाहसंसोमेभिःसोमपातमं । होत्राभिरिंद्रंवावृधुर्व्यानशुः ॥ ४ ॥ महीरस्यप्र
णीतयःपूर्वीरुतप्रशस्तयः । विश्वावसूनिदाशुषेव्यानशुः ॥ इंद्रंवृत्रायहंतवेदेवासोदधिरेपुरः । इंद्रंवाणीरनूषतास
मोजसे ॥ महांतंमहिनावयंस्तोमेभिर्हवनश्रुतं । अर्कैरभिप्रणोनुमःसमोजसे ॥ नयंविविक्तोरोदसीनांतरिक्षाणिवज्रि
णं । अमादिदस्यतित्विषेसमोजसः ॥ यदिंद्रपृतनाज्येदेवास्त्वादधिरेपुरः । आदित्तेहर्यताहरीववक्षतुः ॥ ५ ॥ य
दावृत्रंनदीवृतंशवसावज्रिन्नवधीः । आदित्ते० ॥ यदातेविष्णुरोजसात्रीणिपदाविचक्रमे । आदित्ते० ॥ यदातेहर्य
ताहरीवावृधातेदिवेदिवे । आदित्तेविश्वाभुवनानियेमिरे ॥ यदातेमारुतीर्विशस्तुभ्यमिंद्रनियेमिरे । आदित्ते० ॥
यदासूर्यममुंदिविशुक्रंज्योतिरधारयः ॥ आदित्ते० ॥ इमांतऽइंद्रसुष्टुतिंविप्रऽइयर्तिधीतिभिः । जामिंपदेवपिप्रतींप्रा

मंडलं ८
अनु. २
॥ २ ॥

ध्वरे ॥ यदस्य धामनि प्रिये समीचीनासो अस्वरन् । नाभा यज्ञस्य दोहना प्राध्वरे ॥ सुवीर्यं स्वश्व्यं सुगव्यमिंद्र दद्धि नः । होतेव पूर्वचित्तये प्राध्वरे ॥ ६ ॥ ( ८।३।१ ) इंद्रः सुतेषु सोमेषु क्रतुं पुनीत उक्थ्यं । विदे वृधस्य दक्षसो महान्हि षः ॥ स प्रथमे व्योमनि देवानां सदने वृधः । सुपारः सुश्रवस्तमः समप्सुजित् ॥ तमह्वे वाजसातय इंद्रं भराय शुष्मिणं । भवा नः सुम्ने अंतमः सखा वृधे ॥ इयं त इंद्र गिर्वणो रातिः क्षरति सुन्वतः । मंदानो अस्य बर्हिषो वि राजसि ॥ नूनं तदिंद्र दद्धि नो यत्त्वा सुन्वंत ईमहे । रयिं नश्चित्रमा भरा स्वर्विदं ॥ ७ ॥ स्तोता यत्ते विचर्षणिरतिप्रशर्धयद्गिरः । वया इवानु रोहते जुषंत यत् ॥ प्रत्नवज्जनया गिरः शृणुधी जरितुर्हवं । मदेमदे ववक्षिथा सुकृत्वने ॥ क्रीळंत्यस्य सूनृता आपो न प्रवता यतीः । अया धिया य उच्यते पतिर्दिवः ॥ उतो पतिर्य उच्यते कृष्टीनामेक इद्वशी । नमोवृधैरवस्युभिः सुते रण ॥ स्तुहि श्रुतं विपश्चितं हरी यस्य प्रसक्षिणा । गंतारा दाशुषो गृहं नमस्विनः ॥ ८ ॥ तूतुजानो महेमतेऽश्वेभिः प्रुषितप्सुभिः । आ याहि यज्ञमाशुभिः शमिद्धि ते ॥ इंद्र शविष्ठ सत्पते रयिं गृणत्सु धारय । श्रवः सूरिभ्यो अमृतं वसुत्वनं ॥ हवे त्वा सूर उदिते हवे मध्यंदिने दिवः । जुषाण इंद्र सप्तिभिर्न आ गहि ॥ आ तू गहि प्र तु द्रव मत्स्वा सुतस्य गोमतः । तंतुं तनुष्व पूर्व्यं यथा विदे ॥ यच्छक्रासि परावति यदर्वावति वृत्रहन् । यद्वा समुद्रे अंधसोऽवितेदसि ॥ ९ ॥ इंद्रं वर्धंतु नो गिर इंद्रं

तृतीयेनुवाकेष्टसूक्तानि ( ८।३।१ ) इंद्रः सुतेष्विति त्रयस्त्रिंशदृचस्य सूक्तस्य काण्वो नारद इंद्र उष्णिक् ।

सुतासऽइंदवः । इंद्रेह विश्मंतीर्विशोऽअराणिषुः ॥ तमिद्विप्राऽअवस्यवः प्रवत्वतीभिरूतिभिः । इंद्रंक्षोणीरवर्धयन्वयाऽ
इव ॥ त्रिकद्रुकेषुचेतनंदेवासोयज्ञमत्नत । तमिद्वर्धंतुनोगिरः सदावृधं ॥ स्तोतायत्तेऽअनुव्रतऽउक्थान्यृतुथादधे ।
शुचिःपावकऽउच्यतेसोऽअद्भुतः ॥ तदिद्रुद्रस्यचेततियह्वंप्रत्नेषुधामसु । मनोयत्रावितद्दधुर्विचेतसः ॥ १० ॥ यदि
मेसख्यमावरऽइमस्यपाह्यंधसः । येनविश्वाऽअतिद्विषोऽअतारिम ॥ कदातऽइंद्रगिर्वणःस्तोताभवातिशंतमः ।
कदानोगव्येऽअश्व्येवसौदधः ॥ उततेसुष्टुताहरीवृषणावहतोरथं । अजुर्यस्यमदिंतमंयमीमहे ॥ तमीमहेपुरुष्टुतंयह्वं
प्रत्नाभिरूतिभिः । निबर्हिषिप्रियेसददधद्विता+ ॥ वर्धस्वासुपुरुष्टुतऽऋषिष्टुताभिरूतिभिः । धुक्षस्वपिप्युषीमिषम
वाचनः ॥ ११ ॥ इंद्रत्वमवितेदसीत्थास्तुवतोऽअद्रिवः । ऋतादियर्मितेधियंमनोयुजं ॥ इहत्यासधमाद्यायुजानः
सोमपीतये । हरीऽइंद्रप्रतद्वसूऽअभिस्वर ॥ अभिस्वरंतुयेतवरुद्रासःसक्षतश्रियं । उतोमरुत्वतीर्विशोऽअभिप्रयः ॥
इमाऽअस्यप्रतूर्तयःपदंजुषंतयद्दिवि । नाभायज्ञस्यसंदधुर्यथाविदे+ ॥ अयंदीर्घायचक्षसेप्राचिप्रयत्यध्वरे । सिमीते
यज्ञमानुषग्विचक्ष्य ॥ १२ ॥ वृषायमिंद्रतेरथऽउतोतेवृषणाहरी । वृषात्वंशतक्रतोवृषाहवः ॥ वृषाग्रावावृषामदोवृ
षासोमोऽअयंसुतः । वृषायज्ञोयमिन्वसिवृषाहवः ॥ वृषात्वावृषणहुवेवज्रिन्चित्राभिरूतिभिः । वावंथहिप्रतिष्टुतिं

वृषाहवः ॥ १३ ॥ ( ८।३।२ ) यदिंद्राहंयथात्वमीशीयवस्वऽएकऽइत् । स्तोतामेगोषखास्यात् ॥ शिक्षेयमस्मैदित्सेयंशचीपतेमनीषिणे । यदहंगोपतिःस्यां+ ॥ धेनुष्टऽइंद्रसूनृतायजमानायसुन्वते । गामश्वंपिप्युषीदुहे ॥ नतेवर्तास्तिराधसऽइंद्रदेवोनमर्त्यः । यद्दित्ससिस्तुतोमघं+ ॥ यज्ञऽइंद्रमवर्धयद्यद्भूमिंव्यवर्तयत् । चक्राणऽओपशंदिवि+ ॥ १४ ॥ वावृधानस्यंतेवयंविश्वाधनानिजिग्युषः । ऊतिमिंद्रावृणीमहे ॥ व्यं१तरिक्षमतिरन्मदेसोमस्यरोचना । इंद्रोयदभिनद्वलं+ ॥ उद्गाऽआजदंगिरोभ्यऽआविष्कृण्वन्गुहासतीः । अर्वांचंनुनुदेवलं ॥ इंद्रेणरोचनादिवोदृह्वानिदृंहितानिच । स्थिराणिनपराणुदे ॥ अपामूर्मिर्मदन्निवस्तोमऽइंद्राजिरायते । वितेमदाऽअराजिषुः ॥ १५ ॥ त्वंहिस्तोमवर्धनऽइंद्रास्युक्थवर्धनः । स्तोतॄणामुतभद्रकृत्+ ॥ इंद्रमित्केशिनाहरीसोमपेयायवक्षतः । उपयज्ञंसुराधसं ॥ अपांफेनेननमुचेःशिरऽइंद्रोदवर्तयः । विश्वायदजयःस्पृधः ॥ मायाभिरुत्सिसृप्सतऽइंद्रद्यामारुरुक्षतः । अवदस्यूँऽरधूनुथाः ॥ असुन्वामिंद्रसंसदंविषूचींव्यनाशयः । सोमपाऽउत्तरोभवन् ॥ १६ ॥ ( ८।३।३ ) तम्वभिप्रगायतपुरुहूतंपुरुष्टुतं । इंद्रंगीर्भिस्तविषमाविवासत ॥ यस्यद्विबर्हसोबृहत्सहोदाधाररोदसी । गिरीँरज्राँऽअपःस्वः

---

( ८।३।२ ) यदिंद्राहमितिपंचदशर्चस्यसूक्तस्यकाण्वायनौगोषूक्त्यश्वसूक्तिनाविंद्रोगायत्री । ( ८।३।३ ) तम्वभीतित्रयोदशर्चस्यसूक्तस्यकाण्वायनौगोषूक्त्यश्वसूक्तिनाविंद्रउष्णिक् ।

वृ॒षत्व॒ना+ ॥ स रा॑जसि पुरुष्टु॒तँ॒ऽएको॑ वृ॒त्राणि॑ जिघ्नसे । इंद्र॒ जैत्रा॑ श्रव॒स्या॑ च॒ यंत॑वे ॥ तंते॒ मदं॑ गृणीमसि॒ वृष॑णं पृ॒त्सु सा॑स॒हिं । उ॒ लो॒क॒कृ॒त्नुम॑द्रिवो हरि॒श्रियँ॑ ॥ येन॒ ज्योतीं॑ष्या॒यवे॒ मन॑वे च वि॒वेदि॑थ । मं॒दा॒नो ऽअ॒स्य ब॒र्हिषो॒ वि रा॑जसि ॥ १७ ॥ तद॒द्या चि॑त्तऽउ॒क्थिनोऽनु॑ष्टुवंति पू॒र्वथा॑ । वृष॑पत्नीर॒पो ज॑या दि॒वेदि॑वे ॥ तव॒ त्यदिं॑द्रि॒यं बृ॒हत्तव॒ शुष्म॑मु॒त क्रतुं॑ । वज्रँ॑ शिशाति धि॒षणा॒ वरे॑ण्यं ॥ तव॒ द्यौरिं॑द्र॒ पौंस्यं॑ पृथि॒वी व॑र्धति॒ श्रवः॑ । त्वामापः॒ पर्व॑तासश्च हिन्विरे ॥ त्वां विष्णु॑र्बृ॒हन्क्षयो॑ मि॒त्रो गृ॑णाति॒ वरु॑णः । त्वां शर्धो॑ मद॒त्यनु॒ मारु॑तं ॥ त्वं वृषा॒ जना॑नां॒ मंहि॑ष्ठऽइंद्र जज्ञिषे । स॒त्रा विश्वा॑ स्वप॒त्यानि॑ दधिषे ॥ १८ ॥ स॒त्रा त्वं पु॑रुष्टु॒तँ॒ऽएको॑ वृ॒त्राणि॑ तोशसे । नान्यऽइंद्रा॒त्कर॑णं॒ भूय॑ऽइन्वति ॥ यदिं॑द्र मन्म॒शस्त्वा॒ नाना॒ हवं॑तऽऊ॒तये॑ । अ॒स्माकें॑भि॒र्नृभि॑र॒त्रा स्व॑र्जय ॥ अ॒रं॒क्षया॑य नो म॒हे विश्वा॑ रू॒पाण्या॑वि॒शन् । इंद्रं॒ जैत्रा॑य ह॒र्षया॒ शचीपतिं॑ ॥ १९ ॥ (८।३।४) प्र स॒म्राजं॑ चर्षणी॒नामिंद्रं॑ स्तोता॒ नव्यं॑ गी॒र्भिः । नरं॑ नृ॒षाहं॒ मंहि॑ष्ठं ॥ यस्मि॑न्नु॒क्थानि॒ रण्यं॑ति॒ विश्वा॑नि च श्रव॒स्या॑ । अ॒पामवो॒ न स॑मु॒द्रे+ ॥ तं सु॑ष्टु॒त्या वि॑वासे ज्येष्ठ॒राजं॒ भरे॑ कृ॒त्नुं । म॒हो वा॒जिनं॑ स॒निभ्यः॑ ॥ यस्या॒नूना॑ गभी॒रा मदा॑ऽउ॒रव॒स्तरु॑त्राः । ह॒र्षु॒मं॑त॒ः शूर॑सातौ ॥ तमिद्धने॑षु हि॒तेष्व॑धि॒वा॒काय॑ हवंते । येषा॒मिंद्र॒स्ते ज॑यंति ॥ तमिच्च्यौ॒त्नैरार्यं॑ति॒ तं कृ॒तेभि॑श्चर्ष॒णय॑ः । ए॒षऽइंद्रो॑ वरिव॒स्कृत्+ ॥ २० ॥ इंद्रो॑ ब्र॒ह्मेंद्र॒ऽऋषि॒रिंद्रः॑ पु॒रू पु॑रुहू॒तः । म॒हान्म॒हीभि॒ः शची॑भिः ॥ सः स्तोम्य॒ः सहव्य॑ः



( ८।३।४ ) प्रसम्राजमिति द्वादशर्चस्य सूक्तस्य काण्वइरिंबिठिरिंद्रो गायत्री ।

सत्यःसत्वांतुविकूर्मिः । एकश्चित्सन्नभिभूतिः ॥ तमर्केभिस्तंसामभिस्तंगायत्रैश्चर्षणयः । इंद्रंवर्धतिक्षितयः ॥ प्रणेता रंवस्योऽअच्छाकर्तारंज्योतिःसमत्सु । सासह्वांसंयुधामित्रान् ॥ सनःपप्रिःपारयातिस्वस्तिनावापुरुहूतः । इंद्रोविश्वा अतिद्विषः ॥ सत्वंनऽइंद्रवाजेभिर्दशस्याचगातुयाच । अच्छाचनःसुम्नंनेषि ॥ २१ ॥ ( ८।३।५ ) आयाहिसुषुमा हितऽइंद्रसोमंपिबाऽइमं । एदंबर्हिःसदोमम ॥ आत्वाब्रह्मयुजाहरीवहंतामिंद्रकेशिना । उपब्रह्माणिनःशृणु ॥ ब्र ह्माणंस्त्वावयंयुजासोमपामिंद्रसोमिनः । सुतावंतोहवामहे ॥ आनोयाहिसुतावतोस्माकंसुष्टुतीरुप । पिबासुशिप्रि न्नंधसः ॥ आतेसिंचामिकुक्ष्योरनुगात्राविधावतु । गृभायजिह्वयामधु ॥ २२ ॥ स्वादुष्टेऽअस्तुसंसुदेमधुमान्तन्वेउ तव । सोमःशमस्तुतेहृदे+ ॥ अयमुत्वाविचर्षणेजनीरिवाभिसंवृतः । प्रसोमऽइंद्रसर्पतु ॥ तुविग्रीवोवपोदरःसुबा हुरंधसोमदे । इंद्रोवृत्राणिजिघ्नते ॥ इंद्रप्रेहिपुरस्त्वंविश्वस्येशानऽओजसा । वृत्राणिवृत्रहन्जहि ॥ दीर्घस्तेऽअस्त्वंकु शोयेनावसुप्रयच्छसि । यजमानायसुन्वते+ ॥ २३ ॥ अयंतऽइंद्रसोमोनिपूतोऽअधिबर्हिषि । एहीमस्यद्रवापिब ॥ शाचिगोशाचिपूजनायंरणायतेसुतः । आखंडलप्रहूयसे ॥ यस्तेशृंगवृषोनपात्प्रणपात्कुंडपाय्यः । न्यस्मिन्दध्रऽआ

( ८।३।५ ) आयाहीतिपंचदशर्चस्यसूक्तस्यकाण्वइरिंबिठिरिंद्रोगायत्रीअंत्येद्वेबृहतीसतोबृहत्यौ । त्वास्तोष्पतइत्यस्यावास्तोष्पतिर्देव तेतिशौनकः । उपांत्यायाअर्धर्चेदेवोवास्तोष्पतिःस्तुतइतिहितद्वाक्यम् ) ।

ऋक्सं.
अ. ६ अ. १
॥ ५ ॥

मंडलं ८
अनु. ३

मर्नः ॥ वास्तोष्पतेध्रुवास्थूणांसत्त्रंसोम्यानां । द्रप्सोभेत्तापुरांशश्वतीनामिंद्रोमुनीनांसखा ॥ पृदाकुसानुर्यजतोगवेषणऽएकःसन्नभिभूयसः । भूर्णिमश्वंनयत्तुजापुरोगृभेंद्रंसोमस्यपीतये ॥ २४ ॥ ( ८।३।६ ) इदंहंनूनमेषांसुम्नंभिक्षेतमर्त्यः । आदित्यानामपूर्व्यंसवीमनि ॥ अनर्वाणोह्येषांपंथाऽआदित्यानां । अदब्धाःसंतिपायवःसुगेवृधः ॥ तत्सुनःसवितभगोवरुणोमित्रोऽअर्यमा । शर्मयच्छंतुसप्रथोयदीमहे ॥ देवेभिर्देव्यदितेरिष्टभर्मन्नागहि । स्मत्सूरिभिःपुरुप्रियेसुशर्मभिः ॥ तेहिपुत्रासोऽअदितेर्विदुर्द्वेषांसियोतवे । अंहोश्चिदुरुचक्रयोनेहसः ॥ २५ ॥ अदितिर्नोदिवापशुमदितिर्नक्तमद्वयाः । अदितिःपात्वंहसःसदावृधा ॥ उतस्यानोदिवामतिरदितिरूत्यागमत् । साशंतातिमयस्करदपस्रिधः ॥ उतत्यादैव्याभिषजाशंनःकरतोऽअश्विना । युयुयातामितोरपोऽअपस्रिधः ॥ शमग्निरग्निभिःकरच्छंनस्तपतुसूर्यः । शंवातोवात्वरपाऽअपस्रिधः ॥ अपामीवामपस्रिधमपसेधतदुर्मतिं । आदित्यासोयुयोतनानोऽअंहसः ॥ २६ ॥ युयोताशरुमस्मदाँऽआदित्यासऽउतामतिं । ऋधग्द्वेषःकृणुतविश्ववेदसः ॥ तत्सुनःशर्मयच्छतादित्यान्मुमोचति । एनस्वंतंचिदेनसःसुदानवः ॥ योनःकश्चिद्रिरिक्षतिरक्षस्त्वेनमर्त्यः । स्वैःषऽएवैरिरिषीष्टयुर्जनः ॥ समित्तमघमश्नवदुःशंसंमर्त्यंरिपुं । योऽअस्मत्रादुर्हणावाँऽउपद्वयुः ॥ पाकत्रास्थनदेवाहृत्सुजानीथमर्त्यं । उपद्वयुंचा

॥ ५ ॥

---

( ८।३।६ ) इदंहेतिद्वाविंशत्यृचस्यसूक्तस्यकाण्वइरिंबिठिरादित्याःचतुर्थीषष्ठीसप्तमीनामदितिःअष्टम्याअश्विनौनवम्याअग्निसूर्यानिला

द्वयुंचवसवः ॥ २७ ॥ आशर्मपर्वतानामोतापांवृणीमहे । द्यावांक्षामारेऽअस्मद्रपस्कृतं ॥ तेनोभद्रेणशर्मणायुष्मा
कंनावावसवः । अतिविश्वानिदुरितापिपर्तन ॥ तुचेतनायतत्सुनोद्राघीयऽआयुर्जीवसे । आदित्यासःसुमहसःकृ
णोतन ॥ यज्ञोहीळोवोऽअंतरऽआदित्याऽअस्तिमृळत । युष्मेऽइद्वोऽअपिष्मसिसजात्ये* ॥ बृहद्वरूथंमरुतांदेवंत्रा
तारमश्विना । मित्रमीमहेवरुणंस्वस्तये ॥ अनेहोमित्रार्यमन्नृवद्वरुणशंस्यं । त्रिवरूथंमरुतोयंतनश्छर्दिः+ ॥ येचि
द्धिमृत्युबंधवऽआदित्यामनवःस्मसि । प्रसूनऽआयुर्जीवसेतिरेतन ॥ २८ ॥ ( ८।३।७ ) तंगूर्धयास्वर्णरंदेवासोदे
वमरतिंदधन्विरे । देवत्राहव्यमोहिरे ॥ विभूतरातिंविप्रचित्रशोचिषमग्निमीळिष्वयंतुरं । अस्यमेधस्यसोम्यस्यसो
भरेप्रेमध्वरायपूर्व्यं ॥ यजिष्ठंत्वाववृमहेदेवंदेवत्राहोतारममर्त्यं । अस्ययज्ञस्यसुक्रतुं ॥ ऊर्जोनपातंसुभगंसुदीदितिम
ग्निंश्रेष्ठशोचिषं । सनोमित्रस्यवरुणस्यसोऽअपामासुम्नंयक्षतेदिवि+ ॥ यःसमिधायऽआहुतीयोवेदेनददाशमर्तोऽअ
ग्नये । योनमसास्वध्वरः+ ॥ २९ ॥ तस्येदर्वतोरंहयंतऽआशवस्तस्यद्युम्नितमंयशः । नतमंहोदेवकृतंकुतश्चननमर्त्यकृ

---

उष्णिक् । ( ८।३।७ ) तंगूर्धयेतिसप्तत्रिंशदृचस्यसूक्तस्यकाण्वःसोभरिरग्निः चतुस्त्रिंशीपंचत्रिंश्योरादित्याअंत्ययोर्द्वयोस्त्रसदस्युःप्रथमा
दिपंचविंश्यंताअयुजःककुभःद्वितीयादिषड्विंश्यंतायुजःसतोबृहत्यः पितुर्नेतिसप्तविंशीद्विपदाअष्टाविंशीत्रिंशीद्वात्रिंशीषट्त्रिंश्यःककुभः
एकोनत्रिंश्येकत्रिंशीत्रयस्त्रिंशीपंचत्रिंश्यःसतोबृहत्यःचतुस्त्रिंश्युष्णिक्सप्तत्रिंशीपंक्तिः ।

ऋक्सं. अ. ६ अ. १ ॥ ६ ॥

तंनशत् ॥ स्वग्नयोवोऽअग्निभिःस्यामसूनोसहसऽऊर्जांपते । सुवीरस्त्वमस्मयुः+ ॥ प्रशंसमानोऽअतिथिर्नमित्रियोग्नीरथोनवेद्यः । त्वेक्षेमासोऽअपिसंतिसाधवस्त्वंराजारयीणां+ ॥ सोऽअद्धादाश्वध्वरोग्नेमर्तःसुभगसप्रशंस्यः । सधीभिरस्तुसनिता ॥ यस्यत्वमूर्ध्वोऽअध्वरायतिष्ठसिक्षयद्वीरःससाधते । सोऽअर्वद्भिःसनितासविपन्युभिःसशूरैःसनिताकृतं+ ॥ ३० ॥ यस्याग्निर्वपुर्गृहेस्तोमंचनोदधीतविश्ववार्यः । हव्यावावेविषद्विषः ॥ विप्रस्यवास्तुवतःसहसोयहोमक्षूतमस्यरातिषु । अवोदेवमुपरिमर्त्यंकृधिवसोविविदुषोवचः ॥ योऽअग्निंहव्यदातिभिर्नमोभिर्वासुदक्षमाविवासति । गिरावाजिरशोचिषं ॥ समिधायोनिशितीदाशददितिंधामभिरस्यमर्त्यः । विश्वेत्सधीभिःसुभगोजनाँऽअतिद्युम्नैरुद्नऽइवतारिषत् ॥ तदग्नेद्युम्नमाभरयत्सासहत्सदनेकंचिदत्रिणं । मन्युंजनस्यदूढ्यः* ॥ ३१ ॥ येनचष्टेवरुणोमित्रोऽअर्यमायेननासत्याभगः । वयंतत्तेशवसागातुवित्तमाऽइंद्रत्वोताविधेमहि ॥ तेघेदग्नेस्वाध्योऽयेत्वाविप्रनिदधिरेनृचक्षसं । विप्रासोदेवसुक्रतुं ॥ तऽइद्वेदिंसुभगतऽआहुतिंतेसोतुंचक्रिरेदिवि । तऽइद्वाजेभिर्जिग्युर्महद्धनंयेत्वेकामंन्येरिरे+ ॥ भद्रोनोऽअग्निराहुतोभद्रारातिःसुभगभद्रोऽअध्वरः । भद्राऽउतप्रशस्तयः ॥ भद्रंमनःकृणुष्ववृत्रतूर्येयेनासमत्सुसासहः । अवस्थिरातनुहिभूरिशर्धतांवनेमातेऽअभिष्टिभिः ॥ ३२ ॥ ईळेगिरामनुर्हितंयंदेवादूतमरतिंन्येरिरे । यजिष्ठंहव्यवाहनं ॥ तिग्मजंभायतरुणायराजतेप्रयोगायस्यग्नये । यःपिंशतेसूनृताभिःसुवीर्यमग्निर्घृते

मंडलं ८ अनु. ३ ॥ ६ ॥

भिराहुतः ॥ यदींघृतेभिराहुतोवाशीमग्निर्भरत्तऽउच्चावच । असुरऽइवनिर्णिजं ॥ योहव्यान्यैरयतामनुर्हितोदेवऽ
आसासुगंधिना । विवासतेवार्याणिस्वध्वरोहोतादेवोऽअमर्त्यः ॥ यदग्नेमर्त्यस्त्वंस्यामहंमित्रमहोऽअमर्त्यः । सहसः
सूनवाहुत ॥ ३३ ॥ नत्वारासीयाभिशस्तयेवसोनपापत्वायसंत्य । नमेस्तोतामतीवानदुर्हितःस्यादग्नेनपापया ॥
पितुर्नपुत्रःसुभृतोदुरोणऽआदेवाँऽएतुप्रणोहविः+ ॥ तवाहमग्नऽऊतिभिर्नेदिष्ठाभिःसचेयजोषमावसो । सदादेवस्य
मर्त्यः ॥ तवक्रत्वासनेयंतवरातिभिरग्नेतवप्रशस्तिभिः । त्वामिदाहुःप्रमतिंवसोममाग्नेहर्षस्वदातवे ॥ प्रसोऽअग्नेतवो
तिभिःसुवीराभिस्तिरतेवाजभर्मभिः । यस्यत्वंसख्यमावरः ॥ ३४ ॥ तवद्रप्सोनीलवान्वाशऽऋत्वियऽइंधानःसिष्ण
वाददे । त्वंमहीनामुषसामसिप्रियःक्षपोवस्तुषुराजसि ॥ तमागन्मसोभरयःसहस्रमुष्कंस्वभिष्टिमवसे । सम्राजंत्रास
दस्यवं ॥ यस्यतेऽअग्नेऽअन्येऽअग्नयऽउपक्षितोवयाऽइव । विपोनद्युम्नानियुवेजनानांतवक्षत्राणिवर्धयन् ॥ यमादि
त्यासोऽअद्रुहःपारंनयथमर्त्यं । मघोनांविश्वेषांसुदानवः ॥ यूयंराजानःकंचिच्चर्षणीसहःक्षयंतंमानुषाँऽअनु । वयंते
वोवरुणमित्रार्यमन्त्स्यामेदृतस्यरथ्यः* ॥ अदान्मेपौरुकुत्स्यःपंचाशतंत्रसदस्युर्वधूनां । मंहिष्ठोऽअर्यःसत्पतिः ॥ उत
मेप्रयियोर्वयियोःसुवास्त्वाऽअधितुग्वनि । तिसृणांसप्ततीनांश्यावःप्रणेताभुवद्वसुर्दियानांपतिः ॥३५॥(८।३।८)आगं



( ८।३।८ ) आगंतेतिषड्विंशत्यृचस्यसूक्तस्यकाण्वःसोभरिरग्निः । अयुजःककुभोयुजःसतोबृहत्यः ।

तामारिषण्यतप्रस्थांवानोमापस्थातासमन्यवः । स्थिराचिन्नमयिष्णवः ॥ वीळुपविभिर्मरुतऽऋभुक्षणऽआरुद्रासःसु
दीतिभिः । इषानोऽअद्यागतापुरुस्पृहोयज्ञमासोभरीयवः ॥ विद्माहिरुद्रियाणांशुष्ममुग्रंमरुतांशिमीवतां । विष्णोरे
षस्यमीळ्हुषां ॥ विद्वीपानिपापततिष्ठद्दुच्छुनोभेयुजंतरोदसी । प्रधन्वान्यैरतशुभ्रखादयोयदेजथस्वभानवः ॥ अच्यु
ताचिद्वोऽअज्मन्नानानदतिपर्वतासोवनस्पतिः । भूमिर्यामेषुरेजते ॥ ३६ ॥ अमायवोमरुतोयातवेद्यौर्जिहीतऽउत्तराबृ
हत् । यत्रानरोदेदिशतेतनूष्वात्वक्षांसिबाह्वोजसः ॥ स्वधामनुश्रियंनरोमहित्वेषाऽअमवंतोवृषप्सवः । वहंतेऽअह्रुत
प्सवः ॥ गोभिर्वाणोऽअज्यतेसोभरीणांरथेकोशेहिरण्यये । गोबंधवःसुजातासऽइषेभुजेमहांतोनःस्परसेनु[+] ॥ प्रति
वोवृषदंजयोवृष्णेशर्धायमारुताय भरध्वं । हव्यावृषप्रयाव्णे ॥ वृषणश्वेनमरुतोवृषप्सुनारथेनवृषनाभिना । आश्ये
नासोनपक्षिणोवृथानरोहव्यानोवीतयेगत ॥ ३७ ॥ समानमंज्येषांविभ्राजंतेरुक्मासोऽअधिबाहुषु । दविद्युत
त्यृष्टयः ॥ तऽउग्रासोवृषणऽउग्रबाहवोनकिष्टनूषुयेतिरे । स्थिराधन्वान्यायुधारथेषुवोनीकेष्वधिश्रियः ॥ ये
षामर्णोनसप्रथोनामत्वेषंशश्वतामेकमिद्भुजे । वयोनपित्र्यंसहः ॥ तान्वंदस्वमरुतस्ताँऽउपस्तुहितेषांहिधुनीनां ।
अराणांनचरमस्तदेषांदानामह्नातदेषां ॥ सुभगःसवऽऊतिष्वासपूर्वासुमरुतोव्युष्टिषु । योवानूनमुतासति ॥ ३८ ॥
यस्यंवायूयंप्रतिवाजिनोनरऽआहव्यावीतयेगथ । अभिषद्युम्नैरुतवाजसातिभिःसुम्नावोधूतयोनशत् ॥ यथारुद्रस्य

सूनवोंदिवोवशंत्यसुरस्यवेधसः । युवांनस्तथेदसत् ॥ येचार्हंतिमरुतःसुदानवःस्मन्मीह्लुषश्चरंतिये । अतश्चिदानऽ उपवस्यंसाहृदायुवांनऽआववृध्वं ॥ यूनंऽऊषुनविष्ठयावृष्णःपावकाँऽअभिसोभरेगिरा । गायगाऽइवचर्कृषत् ॥ साहायेसंतिमुष्टिहेवहव्योविश्वासुपृत्सुहोतृषु । वृष्णश्चंद्रान्नसुश्रवस्तमान्गिरावंदस्वमरुतोऽअह ॥ ३९ ॥ गावश्चि द्वासमन्यवःसजात्येनमरुतःसबंधवः । रिहतेककुभोमिथः+ ॥ मर्तश्चिद्वोनृतवोरुक्मवक्षसऽउपभ्रातृत्वमायति । अधिनोगातमरुतःसदाहिवंऽआपित्वमस्तिनिध्रुवि ॥ मरुतोमारुतस्यनऽआभेषजस्यवहतासुदानवः । यूयंसखायः सप्तयः ॥ याभिःसिंधुमवथयाभिस्तूर्वथयाभिर्दशस्यथाक्रिविं । मयोनोभूतोतिभिर्मयोभुवःशिवाभिरसचद्विषः ॥ यत्सिंधौयदसिक्न्यांयत्समुद्रेषुमरुतःसुबर्हिषः । यत्पर्वतेषुभेषजं+ ॥ विश्वंपश्यंतोबिभृथातनूष्वातेनानोऽअधिवो चत । क्षमारपोमरुतऽआतुरस्यनऽइष्कर्ताविह्रुतंपुनः ॥ ४० ॥ इतिषष्ठाष्टकेप्रथमोऽध्यायः ॥ १ ॥ ॥

षष्ठाष्टकेसूक्तानि १२४ ऋचः १६५०

एकचत्वारिंशाध्यायेवर्गाः ४० सूक्तानि ९ ऋचः २०६ ॥ त्यागः ॥ इंद्राये.१२१ [ भे. प. इंद्राये.११९ वास्तोष्पतींद्राम्यामि. इंद्राये. ]आदित्येभ्य.३ अदित्याइ.१ आदित्येभ्य.१ अदित्या.२ अश्विभ्या. अग्निसूर्यानिलेभ्य. आदित्येभ्य.१३ अग्नय.३३ आदित्येभ्य.२ त्रसदस्यव.२ मरुद्ध्य.२६ ॥ इतिषष्ठेप्रथमः ॥

वयमुध्यूनाँत्येद्दूचेचित्रस्यदानस्तुतिंरोत्यमाश्विनंत्रिप्रगाथादिंबृहत्यनुष्टुबेकादश्याद्येककुम्मध्येज्योतिर्षींईळि ष्वत्रिंशद्दिंश्वमनावैयश्वंआग्नेयमौष्णिहंहंसखायस्तृचौंत्यंःसौषाम्णस्यवरोर्दानस्तुतिंरंत्यानुष्टुंसावांचतुर्विंशति मैत्रावरुणँदशम्याद्यास्तिस्रोवैश्वदेव्यंउपांत्योष्णिग्गर्भायुवोःपंचाधिकाव्यश्वोवांगिरसआश्विनँविंश्याद्यावाय व्यांस्तत्पूर्वाश्वतस्रोगायत्र्यौंत्यैकविंश्यौचविंश्यनुष्टुबंग्निरुक्थेव्य धिकांमनुर्वैवस्वतोंवैश्वदेवंहप्रगाथंयेत्रिंशतिपं चौंपांत्यापुरउष्णिग्बभ्रुर्दशकश्यपोवांमारीचोद्वैपदँनहिवश्चतुष्कँपुरउष्णिग्बृहत्यनुष्टुबंतँथोयजातिव्यूनांत्रेज्या स्तवोयजमानप्रशंसार्चयेत्यादिपंचदंपत्योंःशिष्टास्तदाशिषोनुष्टुप्चतुष्पंक्त्यंतंनवम्यनुष्टुंब्दशमीपादनिचृत्॥२॥

॥ हरिःओम् ॥ ( ८।४।१ ) वयमुत्वामंपूर्व्यस्थूरंनकच्चिद्भरंतोवस्यवंः । वाजेंचित्रंहंवामहे ॥ उपंत्वाकर्मंन्नूतये सनोयुवोग्रश्चंक्रामयोधृषत् । त्वामिद्ध्यंवितारंववृमहेसखायऽइंद्रसानसिं ॥ आयांहीमऽइंदवोश्वंपतेगोपंतऽउर्व रापते । सोमंसोमपतेपिब ॥ वयंहित्वाबंधुमंतमबंधवोविप्रांसऽइंद्रयेमिम । यातेधामांनिवृषभतेभिरागंहिविश्वेंभिः सोमंपीतये ॥ सीदंतस्तेवयोयथागोश्रीतेमधौमदिरेविवक्षणे । अभित्वामिंद्रनोनुमः ॥ १ ॥ अच्छांचत्वैनानमंसाव दांमसिकिंमुहुंश्चिद्विदींधयः । संतिकामांसोहरिवोददिष्ट्वंस्मोवयंसंतिंनोधियंः ॥ नूत्नाऽइदिंद्रतेवयमूतीऽअंभूमनहि



चतुर्थेनुवाकेदशसूक्तानि ( ८।४।१ ) वयमुत्वेत्यष्टादशर्चंस्यसूक्तस्यकाण्वःसोभरिर्बिंदोंसयोर्द्वयोश्चित्रःअयुजःककुभोयुजःसतोबृहत्यः ।

नूतेंऽअद्रिवः । विद्मापुरापरीणसः ॥ विद्मासंखित्वमुतशूरभोज्यं१मातेतावज्रिन्नीमहे । उतोसमस्मिन्नाशिशीहिनो
वसोवाजेसुशिप्रगोमति ॥ योनऽइदमिदंपुराप्रवस्यऽआनिनायतमुवःस्तुषे । सखायऽइंद्रमूतये ॥ हर्यश्वंसत्पतिंचर्ष
णीसहंसहिष्मायोऽअमंदत । आतुनःसवयतिगव्यमश्व्यंस्तोतृभ्योमघवाशतं ॥ २ ॥ त्वयाहस्विद्युजावयंप्रतिश्व
संतंवृषभब्रुवीमहि । संस्थेजनस्यगोमतः ॥ जयेमकारेपुरुहूतकारिणोभितिष्ठेमदूढ्यः । नृभिर्वृत्रंहन्यामशूशुयामचा
वेरिंद्रप्रणोधियः ॥ अभ्रातृव्योऽअनात्वमनापिरिंद्रजनुषासनादसि । युधेदापित्वमिच्छसे ॥ नकीरेवंतंसख्याय
विंदसेपीयंतितेसुराश्वः । यदाकृणोषिनदनुंसमूहस्यादित्पितेवहूयसे ॥ मातेऽअमाजुरोयथामूरासऽइंद्रसख्येत्वाव
तः । निषदामसचासुते ॥ ३ ॥ मातेगोदत्रनिरराममराधसऽइंद्रमातेगृहामहि । दृह्लाचिदर्यःप्रमृशाभ्याभरनतेदा
मानऽआदभे ॥ इंद्रोवाघेदियन्मघंसरस्वतीवासुभगाददिर्वसु । त्वंवाचित्रदाशुषे ॥ चित्रऽइद्राजाराजकाऽइदन्य
केयकेसरस्वतीमनु । पर्जन्यऽइवततनद्धिवृष्ट्यासहस्रमयुतादर्दत् ॥ ४ ॥ ( ८।४।२ ) ओत्यमह्वऽआरथमद्यादंसि
ष्ठमूतये । यमश्विनासुहवारुद्रवर्तनीऽआसूर्यायैतस्थथुः ॥ पूर्वापुषंसुहवंपुरुस्पृहंभुज्युंवाजेषुपूर्व्यं । सचनावंतंसुम

( ८।४।२ ) ओत्यमह्व इत्यष्टादशर्चस्यसूक्तस्य काण्वःसोभरिरश्विनौ प्रथमातृतीयापंचमीसप्तमीबृहत्यःद्वितीयाचतुर्थीषष्ठ्यःसतोबृहत्यः
अष्टम्यनुष्टुप् नवमीत्रयोदशीपंचदशीसप्तदश्यःककुभःदशमीचतुर्दशीषोडश्यष्टादश्यःसतोबृहत्यः एकादशीद्वादश्यौककुम्मध्येज्योतिषी ।

तिभिः॑ सोभरे वि॒द्वेष॑स॒मने॒हस॑म् ॥ इ॒ह त्या पु॑रु॒भूत॑मा दे॒वा नमो॑भिर॒श्विना॑ । अ॒र्वा॒ची॒ना स्वव॑से करामहे॒ गंता॑रा दा॒शुषो॑ गृ॒हम् ॥ यु॒वो रथ॑स्य॒ परि॑ च॒क्रमी॑यत ई॒र्मान्यद्वा॑मिषण्यति । अ॒स्माँ अच्छा॑ सुम॒तिर्वां॑ शुभस्पती॒ आ धे॒नुरि॑व धावतु ॥ रथो॒ यो वां॑ त्रिवं॒धुरो॒ हिर॑ण्याभीशुरश्विना । परि॒ द्यावा॑पृथि॒वी भूष॑ति श्रु॒तस्तेन॑ नासत्या॒ गत॑म् ॥ ५ ॥ द॒श॒स्यंता॒ मन॑वे पू॒र्व्यं दि॒वि यवं॒ वृके॑ण कर्षथः । ता वा॑म॒द्य सु॑म॒तिभिः॑ शुभस्पती॒ अश्वि॑ना॒ प्र स्तु॑वीमहि ॥ उप॑ नो वाजिनीवसू या॒तमृ॒तस्य॑ प॒थिभिः॑ । येभि॑स्तृ॒क्षिं वृ॑षणा त्रासदस्य॒वं म॒हे क्ष॒त्राय॒ जिन्व॑थः ॥ अ॒यं वा॒मद्रि॑भिः सु॒तः सोमो॑ नरा वृषण्वसू । आ या॑तं॒ सोम॑पीतये॒ पिब॑तं दा॒शुषो॑ गृ॒हे ॥ आ हि रु॒हत॑मश्विना॒ रथे॒ कोशे॑ हिर॒ण्यये॑ वृषण्वसू । यु॒ञ्जाथां॒ पीव॑री॒रिषः॑ ॥ याभिः॑ प॒क्थमव॑थो॒ याभि॒रध्रि॑गुं॒ याभि॑र्ब॒भ्रुं विजो॑षसम् । ताभि॑र्नो म॒क्षू तूय॑मश्वि॒ना ग॑तं भिष॒ज्यतं॒ यदातु॑रम् ॥ ६ ॥ यदध्रि॑गावो॒ अध्रि॑गू इ॒दा चि॒दह्नो॑ अ॒श्विना॒ हवा॑महे । व॒यं गी॒र्भिर्वि॑प॒न्यवः॑ ॥ ता॒भि॒रा या॑तं वृष॒णोप॑ मे॒ हवं॑ वि॒श्वप्सुं॑ वि॒श्ववा॑र्यम् । इ॒षा मंहि॑ष्ठा पुरु॒भूत॑मा नरा॒ याभिः॒ क्रिविं॑ वावृ॒धुस्ताभि॒रा ग॑तम् ॥ तावि॒दा चि॒दहा॑नां॒ ताव॒श्विना॒ वंद॑मान॒ उप॑ ब्रुवे । ता ऊ॒ नमो॑भिरीमहे ॥ ताविद्दो॒षा ता उ॒षसि॑ शु॒भस्पती॒ ता याम॑न्रु॒द्रव॑र्तनी । मा नो॒ मर्ता॑य रि॒पवे॑ वाजिनीवसू प॒रो रु॑द्रा॒वति॑ ख्यतम् ॥ आ सुग्म्या॑य॒ सुग्म्यं॑ प्रा॒ता रथे॑ना॒श्विना॑ वा स॒क्षणी॑ । हु॒वे पि॒तेव॒ सोभ॑री ॥ ७ ॥ मनो॑जवसा वृषणा मदच्युता मक्षुंग॒माभि॑रू॒तिभिः॑ । आ॒रात्ता॑च्चिद्भूतम॒स्मे अव॑से पू॒र्वीभिः॑ पुरुभोजसा ॥ आ नो॒ अश्वा॑वदश्विना व॒र्तिर्या॑सिष्टं मधुपातमा नरा । गो

मंदस्नाहिरंण्यवत् ॥ सुप्रावर्गंसुवीर्यंसुष्टुवार्यमनाधृष्टंरक्षस्विनां । अस्मिन्नावामायानेवाजिनीवसूविश्वांवामानिधीमहि ॥ ८ ॥ ( ८।४।३ ) ईळिष्वाहिप्रतीव्यं१यजंस्वजातवेदसं । चरिष्णुधूममगृंभीतशोचिषं ॥ दामानैविश्वचर्षणेग्निंविश्वमनोगिरा । उतस्तुषेविष्पर्धसोरथानां ॥ येषामाबाधऽऋग्मियऽइषःपृक्षश्चनिग्रभे । उपविदावह्निंविंदतेवसु ॥ उदस्यशोचिरस्थाद्दीदियुषोव्यं१जरं । तपुर्जंभस्यसुद्युतोगणश्रियः ॥ उदुतिष्ठस्वध्वरस्तवानोदेव्याकृपा । अभिख्याभासाबृहताशुशुक्वनिः ॥ ९ ॥ अग्नेयाहिसुशस्तिभिर्हव्याजुह्वानऽआनुषक् । यथादूतोबभूथहव्यवाहनः ॥ अग्निंवःपूर्व्यंहुवेहोतारंचर्षणीनां । तमयावाचागृणेतमुवःस्तुषे ॥ यज्ञेभिरद्भुतक्रतुंयंकृपासूदयंतऽइत् । मित्रंनजनेसुधितमृतावनि ॥ ऋतावानमृतायवोयज्ञस्यसाधनंगिरा । उपोऽएनंजुजुषुर्नमसस्पदे+ ॥ अच्छानोऽअंगिरस्तमंयज्ञासोयंतुसंयतः । होतायोऽअस्तिविक्ष्वायशस्तमः ॥ १० ॥ अग्नेतवत्येऽअजरेंधानासोबृहद्भाः । अश्वाऽइववृषणस्तविषीयवः ॥ सत्वंनऽऊर्जांपतेरयिंरास्वसुवीर्यं । प्रावनस्तोकेतनयेसमत्स्वा+ ॥ यद्वाऽउविश्पतिःशितःसुप्रीतोमनुषोविशि । विश्वेदग्निःप्रतिरक्षांसिसेधति ॥ श्रुष्ट्यग्नेनवस्यमेस्तोमस्यवीरविश्पते । निमायिनस्तपुषारक्षसोदह ॥ नतस्यमाययाचनरिपुरीशीतमर्त्यः । योऽअग्नयेददाशहव्यदातिभिः ॥ ११ ॥ व्यश्वस्त्वावसुविदमुक्षण्युरप्रीणादृ

( ८।४।३ ) ईळिष्वेतित्रिंशदृचस्यसूक्तस्यवैयश्वोविश्वमनाअग्निरुष्णिक् ।

षिः । महोरायेतमुत्वासमिंधीमहि ॥ उशनांकाव्यस्त्वानिहोतारमसादयत् । आयजिंत्वामनवेजातवेदसं ॥ विश्वेहि त्वासजोषसोदेवासोदूतमक्रत । श्रुष्टीदेवप्रथमोयज्ञियोभुवः ॥ इमंघावीरोऽअमृतंदूतंकृण्वीतमर्त्यः । पावकंकृष्ण वर्तनिंविहायसं ॥ तंहुवेमयतस्रुचःसुभासंशुक्रशोचिषं । विशामग्निमजरंप्रत्नमीड्यं ॥ १२ ॥ योऽअस्मैहव्यदाति भिराहुतिंमर्तोविधत् । भूरिपोषंसधत्तेवीरवद्यशः ॥ प्रथमंजातवेदसमग्निंयज्ञेषुपूर्व्यं । प्रतिस्रुगेतिनमसाहविष्मती ॥ आभिर्विधेमाग्नयेज्येष्ठाभिर्व्यश्ववत् । मंहिष्ठाभिर्मतिभिःशुक्रशोचिषे ॥ नूनमर्चविहायसेस्तोमेभिःस्थूरयूपवत् । ऋषेवैयश्वदम्यायाग्नये ॥ अतिथिंमानुषाणांसूनुंवनस्पतीनां । विप्राऽअग्निमवसेप्रत्नमीळते ॥ १३ ॥ महोविश्वाँऽअ भिषतो३ भिहव्यानिमानुषा । अग्नेनिषत्सिनमसाधिबर्हिषि ॥ वंस्वानोवार्यापुरुवंस्वरायःपुरुस्पृहः । सुवीर्यस्यप्रजा वतोयशस्वतः ॥ त्वंवरोसुषाम्णेऽग्नेजनायचोदय । सदावसोरातिंयविष्ठशश्वते ॥ त्वंहिसुप्रतूरसित्वंनोगोमतीरिषः । महोरायःसातिमग्नेऽअपावृधि ॥ अग्नेत्वंयशाऽअस्यामित्रावरुणावह । ऋतावानासम्राजापूतदक्षसा ॥ १४ ॥ ( ८।४।४ ) सखायऽआशिषामहिब्रह्मेंद्रायवज्रिणे । स्तुषऽऊषुवोनृतमायधृष्णवे ॥ शवसाह्यसिश्रुतोवृत्रहत्येनवृत्र हा । मघैर्मघोनोऽअतिशूरदाशसि ॥ सनःस्तवानऽआभररयिंचित्रश्रवस्तमं । निरेकेचिद्योहरिवोवसुर्ददिः+ ॥



---

( ८।४।४ ) सखायइतित्रिंशदृचस्यसूक्तस्यवैयश्वोविश्वमनाइंद्रोंत्यतृचस्यवरुरुष्णिगंत्यानुष्टुप् ( वरुःसौषाम्णोयंराजा ) ।

आनिरेकमुतप्रियमिंद्रदर्षिजनानां । धृषताधृष्णोस्तवंमानऽआभर ॥ नतेसव्यंनदक्षिणंहस्तंवरंतऽआमुरः । नपरिवा
धोहरिवोगविष्टिषु ॥ १५ ॥ आत्वागोभिरिवव्रजंगीर्भिर्ऋणोम्यद्रिवः । आस्माकामंजरितुरामनःपृण ॥ विश्वानि
विश्वमनसोधियानोवृत्रहंतम । उग्रप्रणेतरधिषूवसोगहि ॥ वयंतेऽअस्यवृत्रहन्विद्यामशूरनव्यसः । वसोःस्पार्हस्य
पुरुहूतराधसः ॥ इंद्रयथाह्यस्तितेपरीतंनृतोशवः । अमृक्तारातिःपुरुहूतदाशुषे ॥ आवृषस्वमहामहमहेनृतमराधसे ।
दृह्लश्चिदृह्यमघवन्मघत्तये ॥ १६ ॥ नूऽअन्यत्राचिदद्रिवस्त्वंनोजग्मुराशसः । मघवन्छग्धितवतन्नऽऊतिभिः ॥
नह्यं१गनृतोत्वदन्यंविंदामिराधसे । रायेद्युम्नायशवसेचगिर्वणः ॥ एंदुमिंद्रायसिंचतपिबातिसोम्यंमधु । प्रराधसा
चोदयातेमहित्वना ॥ उपोहरीणांपतिंदक्षंपृंचंतमब्रवं । नूनंश्रुधिस्तुवतोऽअश्व्यस्य ॥ नह्यं१गपुराचनजज्ञेवीरतर
स्त्वत् । नकीरायानैवथानभंदना ॥ १७ ॥ एदुमध्वोमदिन्तरंसिंचवाध्वर्योऽअंधसः । एवाहिवीरःस्तवतेसदावृ
धः ॥ इंद्रस्थातर्हरीणांनकिष्टेपूर्व्यस्तुतिं । उदानंशशवसानभंदना ॥ तंवोवाजानांपतिमहूमहिश्रवस्यवः । अप्रायु
भिर्यज्ञेभिर्वावृधेन्यं ॥ एतोन्विंद्रंस्तवामसखायःस्तोम्यंनरं । कृष्टीर्योविश्वाऽअभ्यस्त्येकऽइत् ॥ अगोरुधायगवि
षेद्युक्षायदस्म्यंवचः । घृतात्स्वादीयोमधुनश्चवोचत ॥ १८ ॥ यस्यामितानिवीर्या३नराधःपर्येतवे । ज्योतिर्नविश्व
मभ्यस्तिदक्षिणा ॥ स्तुहींद्रंव्यश्ववदनूर्मिंवाजिनंयमं । अर्योगयंमंहमानंविदाशुषे ॥ एवानूनमुपस्तुहिवैयश्वदशमं

नवं । सुविद्वांसंचर्कृत्यंचरणीनां ॥ वेत्थाहिनिर्ऋतीनांवज्रहस्तपरिवृजं । अहरहःशुंध्युःपरिपदामिव ॥ तदिंद्रावऽ
आभरयेनादंसिष्ठकृत्वने । द्विताकुत्सायशिश्नथोनिचोदय ॥ १९ ॥ तमुंत्वानूनमीमहेनव्यंदंसिष्ठसन्यसे । सत्वंनो
विश्वाऽअभिमातीःसक्षणिः ॥ यऽऋक्षादंहसोमुचद्योवार्यात्सप्तसिंधुषु । वधर्दासस्यतुविनृम्णनीनमः ॥ यथावरो
सुषाम्णेसनिभ्यऽआवहोरयिं । व्यश्वेभ्यःसुभगेवाजिनीवति ॥ आनार्यस्यदक्षिणाव्यश्वाँऽएतुसोमिनः । स्थूरंचरा
धःशतवत्सहस्रवत् ॥ यत्त्वापृच्छादीजानःकुहयाकुहयाकृते । एषोऽअपश्रितोवलोगोमतीमवतिष्ठति ॥ २० ॥
( ८।४।५ ) तावांविश्वस्यगोपादेवादेवेषुयज्ञिया । ऋतावानायजसेपूतदक्षसा ॥ मित्रातनानरथ्या३वरुणोयश्चसु
क्रतुः । सनात्सुजातातनयाधृतव्रता ॥ तामाताविश्ववेदसासुर्यायप्रमहसा । महीजजानादितिर्ऋतावरी ॥ महांता
मित्रावरुणासम्राजादेवावसुरा । ऋतावानावृतमाघोषतोबृहत् ॥ नपाताशवसोमहःसूनूदक्षस्यसुक्रतू । सृप्रदानूऽ
इषोवास्त्वधिक्षितः ॥ २१ ॥ संयादानूनियेमथुर्दिव्याःपार्थिवीरिषः । नभस्वतीरावांचरंतुवृष्टयः ॥ अधियाबृहतो
दिवो३भियूथेवपश्यतः । ऋतावानासम्राजानमसेहिता ॥ ऋतावानानिषेदतुःसाम्राज्यायसुक्रतू । धृतव्रताक्षत्रिया
क्षत्रमाशतुः ॥ अक्ष्णश्चिद्गातुवित्तरानुल्बणेनचक्षसा । निचिन्मिषंतानिचिरानिचिक्यतुः ॥ उतनोदेव्यदितिरुरुष्य



---

(८।४।५) तावांविश्वस्येतिचतुर्विंशत्यृचस्यसूक्तस्यवैयश्वोविश्वमनाआसित्रावरुणौद्वस्याददितिसृणांविश्वेदेवाउष्णिक्कुउपांत्योष्णिग्गर्भा ।

तांनासत्या । उरुष्यंतुमरुतोवृद्धशवसः ॥ २२ ॥ तेनोनावमुरुष्यतदिवानक्तंसुदानवः । अरिष्यंतोनिपायुभिःसचेमहि ॥ अघ्नंतेविष्णवेवयमरिष्यंतःसुदानवे । श्रुधिस्वयावन्त्सिंधोपूर्वचित्तये ॥ तद्वार्यंवृणीमहेवरिष्ठंगोपयत्यं । मित्रोयत्पांतिवरुणोयदर्यमा ॥ उतनःसिंधुरपांतन्मरुतस्तदश्विना । इंद्रोविष्णुर्मीढ्वांसःसजोषसः ॥ तेहिष्मावनुषोनरोभिमातिंकयस्यचित् । तिग्मंनक्षोदःप्रतिघ्नंतिभूर्णयः ॥ २३ ॥ अयमेकइत्थापुरूरुचष्टेविविश्पतिः । तस्यव्रतान्यनुवश्चरामसि ॥ अनुपूर्वाण्योक्यासाम्राज्यस्यसश्चिम । मित्रस्यव्रतावरुणस्यदीर्घश्रुत् ॥ परियोरश्मिनादिवोंतान्ममेपृथिव्याः । उभेआपप्रौरोदसीमहित्वा ॥ उदुष्यशरणेदिवोज्योतिरयंस्तसूर्यः । अग्निर्नशुक्रःसमिधानआहुतः ॥ वचोदीर्घप्रसद्मनीशेवाजस्यगोमतः । ईशेहिपित्वोविषस्यदावने ॥ २४ ॥ तत्सूर्यरोदसीउभेदोषावस्तोरुपब्रुवे । भोजेष्वस्माँअभ्युच्चरासदा ॥ ऋज्रमुक्षण्यायनेरजतंहरयाणे । रथंयुक्तमसनामसुषामणि ॥ तामेअश्व्यानांहरीणांनितोशना । उतोनुकृत्व्यानांनृवाहसा ॥ स्मदभीशूकशावंताविप्रानविष्ठयामती । महोवाजिनावर्वंतासचासनं ॥ २५ ॥ ( ८।४।६ ) युवोरुषूरथंहुवेसधस्तुत्यायसूरिषु । अतूर्तदक्षावृषणावृषण्वसू ॥ युवंवरोसुषा

---

(८।४।६) युवोरुष्विति पंचविंशत्यृचस्यसूक्तस्यांगिरसोव्यश्वोश्विनावंत्यषण्णांवायुरुष्णिक् वा हि ष्ठोवामित्यादिचतस्रोगायत्र्यःविंश्येकविंश्यंत्याअनुष्टुभः ( व्यश्वोवेतिसर्वानुक्रमोक्तावपिशौनकेनव्यश्वस्यैवमुख्यत्वद्योतनादत्रव्यश्वेमुख्यत्वमाद्दतंतेनपाक्षिकोविश्वमनाः ) ।

ण्णेमहेतनेनासत्या । अवोभिर्याथोवृषणावृषण्वसू ॥ तावांमद्यहंवामहेहव्येभिर्वाजिनीवसू । पूर्वीरिषऽइषयंताव
तिक्षपः ॥ आवांवाहिष्ठोऽअश्विनारथोयातुश्रुतोनरा । उपस्तोमान्तुरस्यदर्शथःश्रिये ॥ जुहुराणाचिदश्विनाम
न्येथांवृषणवसू । युवंहिरुद्रापर्षथोऽअतिद्विषः ॥ २६ ॥ दस्राहिविश्वमानुषङ्मक्षूभिःपरिदीयथः । धियंजिन्वाम
धुवर्णाशुभस्पती ॥ उपनोयातमश्विनारायाविश्वपुषासह । मघवानासुवीरावनपच्युता ॥ आमेऽअस्यप्रतीव्यमिं
द्रनासत्यागतं । देवादेवेभिरद्यसचनस्तमा ॥ वयंहिवांहवामहऽउक्षण्यंतोव्यश्ववत् । सुमतिभिरुपविप्राविहागतं ॥
अश्विनास्वृषेस्तुहिकुवित्तेश्रवतोहवं । नेदीयसःकूळयातःपणीँऽरुत ॥ २७ ॥ वैयश्वस्यश्रुतंनरोतोमेऽअस्यवेदथः ।
सजोषसावरुणोमित्रोऽअर्यमा ॥ युवादत्तस्यधिष्ण्यायुवानीतस्यसूरिभिः । अहरहर्वृषणामह्यंशिक्षतं ॥ योवांय
ज्ञेभिरावृतोधिवस्त्रावधूरिव । सपर्यंताशुभेचक्रातेऽअश्विना ॥ योवामुरुव्यचस्तमंचिकेततिनृपाय्यं । वर्तिरश्विनापरि
यातमस्मयू ॥ अस्मभ्यंसुवृषण्वसूयातंवर्तिर्नृपाय्यं । विषुद्रुहेवयज्ञमूहथुर्गिरा ॥२८॥ वाहिष्ठोवांहवानांस्तोमोदूतोहुव
न्नरा । युवाभ्यांभूत्वश्विना ॥ यद्दोदिवोऽअर्णवऽइषोवामदथोगृहे । श्रुतमिन्मेऽअमर्त्या ॥ उतस्याश्वेतयावरीवाहिष्ठा
वांनदीनां । सिंधुर्हिरण्यवर्तनिः ॥ स्मदेतयासुकीर्त्याश्विनाश्वेतयाधिया । वहेथेशुभ्रयावाना ॥ युक्ष्वाहित्वंरथासहायु
वस्वपोष्यावसो । आन्नोवायोमधुपिबास्माकंसवनागहि ॥ २९ ॥ तववायवृतस्पतेत्वष्टुर्जामातरद्भुत । अवांस्यावृणीमहे ॥

त्वष्टुर्जामातरंवयमीशानंरायऽईमहे । सुतावंतोवायुंद्युम्नाजनासः ॥ वायोयाहिशिवादिवोवहस्वासुस्वश्व्यं । वहस्व महःपृथुपक्षसारथे ॥ त्वांहिसुप्सरस्तमंनृषदनेषुहूमहे । ग्रावाणंनाश्वपृष्ठंमंहना ॥ सत्वंनोदेवमनसावायोमंदानोऽअग्रियः । कृधिवाजाँऽअपोधियः ॥३०॥ (८।४।७) अग्निरुक्थेपुरोहितोग्रावाणोबर्हिरध्वरे । ऋचायामिमरुतोब्रह्मणस्पतिंदेवाँऽअवोवरेण्यं ॥ आपशुंगासिपृथिवींवनस्पतींनुषासानक्तमोषधीः । विश्वेचनोवसवोविश्ववेदसोधीनांभूतप्राविताः ॥ प्रसूनंऽएत्वध्वरो३ग्नादेवेषुपूर्व्यः । आदित्येषुप्रवरुणेधृतव्रतेमरुत्सुविश्वभानुषु ॥ विश्वेहिष्मामनवेविश्ववेदसोभुवन्वृधेरिशादसः । अरिष्टेभिःपायुभिर्विश्ववेदसोयंतानोवृकंच्छर्दिः+ ॥ आनोऽअद्यसमनसोगंताविश्वेसजोषसः । ऋचागिरामरुतोदेव्यदितेसदनेपस्त्येमहि ॥ ३१ ॥ अभिप्रियामरुतोयावोऽअश्व्याहव्यामित्रप्रयाथन । आबर्हिरिंद्रोवरुणस्तुरानरऽआदित्यासःसदंतुनः ॥ वयंवोवृक्तबर्हिषोहितप्रयसऽआनुषक् । सुतसोमासोवरुणहवामहेमनुष्वदिद्धाग्नयः ॥ आप्रयातमरुतोविष्णोऽअश्विनापूषन्माकीनयाधिया । इंद्रऽआयातुप्रथमःसनिष्युभिर्वृषायोवृत्रहागृणे+ ॥ विनोदेवासोऽअद्रुहोच्छिद्रंशर्मयच्छत । नयद्दूराद्वसवोनूचिदंतितोवरूथमादधर्षति ॥ अस्तिहिवःसजात्यंरिशादसोदेवासोऽ

---

(८।४।७) अग्निरुक्थइतिद्वाविंशत्यृचस्यसूक्तस्यवैवस्वतोमनुर्विश्वेदेवाः अयुजोबृहत्योयुजःसतोबृहत्यः । ( अग्निरुक्थइत्यादिवैश्वदेवेषु चतुःसूक्तेषुआद्ययोरंत्येचसर्वेविश्वेदेवाएवनात्रभेदः )।

अस्त्याप्यं। प्रणः पूर्वस्मैसुवितायवोचतमक्षूसुम्नायनव्यसे॥ ३२॥ इदाहिवऽउपस्तुतिमिदावामस्यभक्तये। उपवोविश्ववेद
सोनमस्युराँऽअसृक्ष्यन्यामिव॥ उदुष्यवःसवितासुप्रणीतयोस्थादूर्ध्वोवरेण्यः। निद्विपाद्श्चतुष्पादोऽअर्थिनोविश्रन्पत
यिष्णवः॥ देवंदेवंवोवसेदेवंदेवमभिष्टये। देवंदेवंहुवेमवाजसातयेगृणंतोदेव्याधिया॥ देवासोहिष्मामनवेसमन्य
वोविश्वेसाकंसरातयः। तेनोऽअद्यतेऽअपरंतुचेतुनोभवंतुवरिवोविदः॥ प्रवःशंसाम्यद्रुहःसंस्थऽउपस्तुतीनां। नतं
धूर्तिर्वरुणमित्रमर्त्यंयोवोधामभ्योविधत्॥ प्रसक्षयंतिरतेविमहीरिषोयोवोवरायदाशति। प्रप्रजाभिर्जायतेधर्मणस्प
र्यरिष्टःसर्वऽएधते॥ ३३॥ ऋतेसविंदतेयुधःसुगेभिर्यात्यध्वनः। अर्यमामित्रोवरुणःसरातयोयंत्रायंतेसजोषसः॥
अज्रेचिदस्मैकृणुथान्यंचनंदुर्गेचिदासुसरणं। एषाचिदस्माद्शनिःपरोनुसास्रेधंतीविनश्यतु॥ यदद्यसूर्यऽउद्यतिप्रि
यक्षत्राऽऋतंदध। यन्निम्रुचिप्रबुधिविश्ववेदसोयद्वामध्यंदिनेदिवः॥ यद्वाभिपित्वेऽअसुराऽऋतंयतेछर्दिर्येमविदा
शुषे। वयंतद्वोवसवोविश्ववेदसऽउपस्थेयामसमध्यऽआ॥ यदद्यसूरऽउदितेयन्मध्यंदिनऽआतुचि। वामंधत्थमनं
वेविश्ववेदसोजुह्वानायप्रचेतसे॥ वयंतद्वःसम्राजऽआवृणीमहेपुत्रोनबहुपाय्यं। अश्यामतदादित्याजुह्वतोहविर्येन
वस्योनशामहै॥ ३४॥ (८।४।८) येत्रिंशतित्रयस्परोदेवासोबर्हिरासदन्। विदन्नहद्वितासनन्॥ वरुणोमित्रोऽ





(८।४।८) येत्रिंशतीतिपंचर्चस्यसूक्तस्यवैवस्वतोमनुर्विश्वेदेवागायत्रीचतुर्थीपुरउष्णिक्।

अर्य॒मास्म॒द्रा॑तिषाचो॑ऽअ॒ग्नयः॑ । पत्नी॑वंतो॒वष॑ट्कृताः ॥ तेनो॑गो॒पाऽअ॑पा॒च्यास्त॑ऽउ॒द॒क्त॑ऽइ॒त्थान्य॑क् । पु॒रस्ता॒त्सर्वं॑ याविशा+ ॥ यथा॒वशं॑तिदे॒वास्तथेद॑स॒त्तदे॑षां॒नकि॒रामि॑नत् । अरा॑वा॒चनमर्त्यः॑ ॥ स॒प्ता॒नां॑स॒प्तऽऋ॒ष्टयः॑स॒प्तद्यु॒म्नान्ये॑षां । स॒प्तोऽअधि॒श्रियो॑धिरे ॥ ३५ ॥ ( ८।४।९ ) ब॒भ्रुरेको॒विषु॑णः सू॒नरो॒युवा॒ञ्ज्य॑ङ्क्ते हि॒र॒ण्यय॑ं ॥ योनि॒मेक॒ऽआस॑सा॒द॒द्योत॑नो॒ऽंतर्दे॒वेषु॒मेधि॑रः ॥ वाशी॒मेको॑बिभर्ति॒हस्त॑ऽआय॒सीमं॒तर्दे॒वेषु॒निध्रु॑विः ॥ वज्र॒मेको॑बिभर्ति॒हस्त॒ऽआहि॑तं॒तेन॑वृ॒त्राणि॑जिघ्नते ॥ ति॒ग्ममेको॑विभर्ति॒हस्त॒ऽआयु॑धं॒शुचि॑रु॒ग्रोजला॑षभेषजः ॥ प॒थऽएकः॑पीपाय॒तस्क॑रोयथाँऽए॒षवे॑दनि॒धीनां+ ॥ त्रीण्येक॑ऽउरुगा॒यो विच॑क्रमे॒यत्र॑दे॒वासो॒मद॑ंति ॥ विभि॒र्द्वा च॑रत॒ऽएक॑यास॒हप्रप्र॑वा॒सेव॑वसतः ॥ सदो॒द्वा च॑क्राते॑ऽउप॒मादि॒विस॒म्राजा॑स॒र्पिरा॑सुती ॥ अर्च॑त॒ऽएके॒महि॒साम॑मन्वत॒तेन॒सूर्य॑मरोचयन् ॥ ३६ ॥ ( ८।४।१० ) न॒हि वो॒ऽअस्त्य॑र्भ॒को देवा॑सो॒नकु॑मार॒कः । विश्वे॑स॒तोम॑हा॑ंत॒ऽइत्+ ॥ इति॑स्तु॒तासो॑ऽअसथा रिशादसो॒येस्थत्रय॑श्चत्रि॒ंश॒च्च॑ । मनो॑र्देवायज्ञियासः ॥ तेन॑स्त्राध्वं॒तेव॑त॒त॑ऽउं॒नो॒ऽअधि॑वोचत । मान॑ःप॒थःपित्र्या॑न्मान॒वाद॑धिदू॒रंनै॑ष्टपरा॒वतः॑ ॥ येदे॑वा

---

( ८।४।९ ) बभ्रुरेकइतिदशर्चस्यसूक्तस्यवैवस्वतोमनुर्विश्वेदेवाद्विपदाविराट् । ( भेदपक्षे—सोमः १ अग्निः १ त्वष्टा १ इंद्रः १ रुद्रः १ पूषा १ विष्णुः १ अश्विनौ १ मित्रावरुणौ १ अश्विनौ १ एवंदश । अस्मिन्मारीचःकश्यपर्षिःपाक्षिकः ) । ( ८।४।१० ) नहिव इतिचतुर्ऋचस्यसूक्तस्यवैवस्वतोमनुर्विश्वेदेवाःपायत्र्युष्णिगनुष्टुब्बृहत्यनुष्टुभः ।

सऽइहस्थन॒विश्वेवैश्वान॒राऽउ॒त । अ॒स्मभ्यंशर्मस॒प्रथोगवेश्वायच्छत ॥ ३७ ॥ ( ८।५।१ ) योयजातियजातऽइ त्सुनवच्चपचातिच । ब्रह्मेदिंद्रस्यचाकनत् ॥ पु॒रो॒ळाशं॒योऽअस्मैसोमं॒ररतऽआ॒शिरं॑ । पादित्तंश॒क्रोऽअंहसः ॥ तस्य॑ द्युमाँऽअंस॒द्रथोदे॒वजू॑तः॒सशूशुवत् । विश्वावन्वन्नमि॒त्रिया ॥ अस्यप्र॒जावतीगृ॒हेसश्चंतीदि॒वेदिवे । इळाधेनुमती॑दु हे ॥ यादंप॒तीसमनसासुनु॒तऽआच॒धावतः । देवा॒सोनित्य॑या॒शिरा ॥ ३८ ॥ प्रति॒प्राश॒व्याँऽइतः॒सम्यंचाब॒र्हिरा॑शाते । नतावाजेषुवायतः ॥ नदे॒वाना॒मपि॑ह्नुतःसुम॒तिंनजुगुक्षतः । श्रवोबृ॒हद्विवासतः ॥ पु॒त्रिणा॒ताकु॒मारि॒णाविश्व॒मायुर्व्य॑ श्नुतः । उ॒भाहिरण्यपेशसा ॥ वीतिहोत्राकृ॒तद्व॑सूदश॒स्यंता॒मृताय॒कं । समूधोरोम॒शंहतोदे॒वेषु॑कृणु॒तोदुवः ॥ आशर्म॒ पर्वतानांवृणी॒महेन॒दीनां । आविष्णोःसचा॒भुवः ॥ ३९ ॥ ऐतुपू॒षार॒यिर्भगः॑स्व॒स्तिःसर्व॒धातमः । उ॒रुरध्वा॑स्व॒स्तये ॥ अ॒रम॑तिरन॒र्वणोविश्वोदे॒वस्य॒मनसा । आदि॒त्याना॒मने॒हऽइत् ॥ यथानोमि॒त्रोऽअर्य॒मावरुणः॒संतिगो॒पाः । सु॒गाऽऋ॒ तस्य॒पंथाः ॥ अ॒ग्निंवः॒पूर्व्यंगि॒रादे॒वमी॑ळेवसूनां । स॒प॒र्यंतः॑पुरुप्रि॒यंमि॒त्रंनक्षेत्र॒साधसं ॥ म॒क्षूदे॒ववतोरथः॒शूरोवापृ॒त्सु

---

पंचमेनुवाकेद्वादशसूक्तानि(८।५।१) योयजातीत्यष्टादशर्चस्यसूक्तस्यवैवस्वतोमनुः यज्ञोदेवतातृतीयादिद्वयोर्यजमानःपंचम्यादीनांदंपती दशम्यादिनवानांदंपत्याशिषोगायत्रीनवमीचतुर्दश्यावनुष्टुभौदशमीपादनिचृदंत्यास्त्रस्तिस्रःपंक्तयः(प्रथमयोर्द्वयोरिंद्रोदेवतेतिकेचित् दशम्या यजमानपत्न्याशीःततोद्वयोःपूषाततएकस्यामित्रार्यमवरुणाःततएकस्याअग्निःअंत्यचतसृणांयजमानइतिशौनकाचभिप्रायेणकेचिदाहुः ) ।

कासुंचित् । दे॒वाना॒ंयऽइन्मन॒ोयजंमान॒ऽइयंक्षत्य॒भीदयंज्वनोभुवत् ॥ नयंजमानरिष्यसि॒नसुंन्वान॒नदेंवयो । दे॒वा
न॒ांय० ॥ नकि॒ष्टंकर्मंणानश॒न्नप्रयोंष॒न्नयोंषति । दे॒वान॒ांय० ॥ अस॒दत्रंसु॒वीर्यंमु॒तत्यदा॒श्वश्व्यं । दे॒वन॒ांय० ॥ ४० ॥
इतिषष्ठाष्टकेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

द्विचत्वारिंशाध्यायेवर्गाः ४० सूक्तानि ११ ऋचः २०४ ॥ त्यागः ॥ इंद्राये.१६ चित्राये.२ अश्विभ्या.१८ अग्नय.३० इंद्राये.२७ वस्वइदं.३ मित्रावरुणाभ्या.९ विश्वेभ्योदेवेभ्य.३ मित्रावरुणाभ्या.१२ अश्विभ्या.१९ वायव.६ विश्वेभ्योदेवेभ्य.४१ [ भे. प. विश्वेभ्योदे.२७ सोमाये. अग्नय. त्वष्ट्र. इंद्राये. रुद्राय. पूष्ण. विष्णव. अश्विभ्या. मित्रावरुणाभ्या. अश्विभ्या. विश्वेभ्योदेवेभ्य.४ ] यज्ञाय.२ यजमानाय.२ दंपतीभ्या.५ दंपत्याशीर्भ्य.९ ॥ इतिषष्ठेद्वितीयः ॥

प्रकृतानित्रिंशन्मेधातिथिर्वयंघैकोनामेध्यातिथिर्बार्हतंत्रिगायत्र्यनुष्टुवंतमेंद्रयाहिद्व्यूनांनीपातिथिरानुष्टुभंतृचों
त्योगायत्रंस्तंसहस्रंवसुरोचिषोंगिरसोपश्यन्नग्निनाचतुर्विंशतिःश्यावाश्वआश्विनमुपरिष्टाज्ज्योतिषंपंक्तिमहा
बृहतीपंक्त्यंतमंवितासिसप्तशाक्वरंमहापंक्त्यंतंप्रेदंमहापांक्तमाद्यातिजगतींयज्ञस्यदशैंद्राग्नमंग्निमस्तोषिनाभा
कंआग्नेयंमहापांक्तंहींद्राग्नीद्वादशैंद्राग्नमैंत्यानिष्टुप्द्वितीयाप्रकर्यैस्साऽनुष्टुदशवारणंत्वंस्तभ्नात्षळर्चनानावात्रैष्टु

भंमंत्यंवातृचमाश्विनंमानुष्टुभमपश्यंदिमेत्रयस्त्रिंशंद्धिरूपआंगिरसआग्नेयंतुसमिधाग्निंत्रिंशंदाघद्धिचत्वारिंशं त्रिशोकआद्याग्नेंद्री ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥

हरिः ओम् ॥ ( ८।५।२ ) प्रकृतान्यृजीषिणःकण्वाऽइंद्रस्यगाथया । मदेसोमस्यवोचत ॥ यःसृबिंदुमनंर्शनिंपिप्रुंदासमहीशुवं । वधींदुग्रोरिणन्नपः ॥ न्यर्बुदस्यविष्टपंवर्ष्माणंबृहतस्तिर । कृषेतदिंद्रपौंस्यं ॥ प्रतिश्रुतायंवोधृषत्तूर्णाशंनगिरेरधि । हुवेसुशिप्रमूतये ॥ सगोरश्वस्यविव्रजंमंदानःसोम्येभ्यः । पुरंनशूरदर्षसि ॥ १ ॥ यदिमेरारणःसुतऽउक्थेवादधंसेचनः । आरादुपस्वधागहि ॥ वयंघातेऽअपिष्मसिस्तोतारऽइंद्रगिर्वणः । त्वंनोजिन्वसोमपाः ॥ उतनःपितुमाभरसंरराणोऽअविक्षितं । मघवन्भूरितेवसु ॥ उतनोगोमतस्कृधिहिरण्यवतोऽअश्विनः । इळाभिःसंरभेमहि ॥ बृहदुक्थंहवामहेसृप्रकरस्नमूतये । साधुकृण्वंतमवसे ॥ २ ॥ यःसंस्थेचिच्छतक्रतुरादींकृणोतिवृत्रहा । जरितृभ्यःपुरूवसुः ॥ सनःशक्रश्चिदाशकद्दानवाँऽअंतराभरः । इंद्रोविश्वाभिरूतिभिः ॥ योरायो३वनिर्महान्त्सुपारःसुन्वतःसखा । तमिंद्रमभिगायत ॥ आयंतारंमहिस्थिरंपृतनासुश्रवोजितं । भूरेरीशानमोजसा ॥ नकिरस्यशचीनांनियंतासूनृतानां । नकिर्वक्तानदादिति ॥ ३ ॥ ननूनंब्रह्मणामृणंप्राशूनामस्तिसुन्वतां । नसोमोऽअप्र



( ८।५।२ ) प्रकृतानीतित्रिंशदृचस्यसूक्तस्यकाण्वोमेधातिथिरिंद्रोगायत्री ।

तापपे ॥ पन्यऽइदुपगायतपन्यंऽउक्थानिशंसत । ब्रह्माकृणोतपन्यऽइत् ॥ पन्यऽआदर्दिरच्छतासहस्रावाज्यवृतः । इंद्रोयोयज्वनोवृधः ॥ विषूचरस्वधाऽअनुकृष्टीनामन्वाहुवः । इंद्रपिबसुतानां ॥ पिबस्वधैनवानामुतयस्तुग्र्येसचा । उतायमिंद्रयस्तव ॥ ४ ॥ अतीहिमन्युषाविणंसुषुवांसमुपारणे । इमंरातंसुतंपिब ॥ इहितिस्रःपरावतऽइहिपंचजनाँऽअति । धेनाऽइंद्रावचाकशत् ॥ सूर्योरश्मिंयथासृजात्वायच्छंतुमेगिरः । निम्नमापोनसध्र्यक् ॥ अध्वर्यवातुहिषिंचसोमंवीरायशिप्रिणे । भरासुतस्यपीतये ॥ यऽउद्रःफलिगंभिनन्न्यं १ क्सिंधूँऽरवासृजत् । योगोषुपक्वंधारयत् ॥ ५ ॥ अहन्वृत्रमृचीषमऽऔर्णवाभमहीशुवं । हिमेनाविध्यदर्बुदं ॥ प्रवऽउग्रायनिष्टुरेषाह्वायप्रसक्षिणे । देवत्तंब्रह्मगायत ॥ योविश्वान्यभिव्रतासोमस्यमदेऽअंधसः । इंद्रोदेवेषुचेतति ॥ इहत्यासधमाद्याहरीहिरण्यकेश्या । वोह्लामभिप्रयोहितं ॥ अर्वाचंत्वापुरुष्टुतप्रियमेधस्तुताहरी । सोमपेयायवक्षतः ॥ ६ ॥ ( ८।५।३ ) वयंघत्वासुतावंतऽआपोनवृक्तबर्हिषः । पवित्रस्यप्रस्रवणेषुवृत्रहन्परिस्तोतारऽआसते ॥ स्वरंतित्वासुतेनरोवसोनिरेकऽउक्थिनः । कदासुतंतृषाणऽओकऽआगमऽइंद्रस्वब्दीववंसगः ॥ कण्वेभिर्धृष्णवाधृषद्वाजंदर्षिसहस्रिणं । पिशंगरूपंमघवन्विचर्षणेमक्षूगोमंतमीमहे ॥ पाहिगायांधसोमदऽइंद्रायमेध्यातिथे । यःसंमिश्लोहर्योर्यःसुतेसचा

---

( ८।५।३ ) वयंघेत्येकोनविंशत्यृचस्यसूक्तस्यकाण्वोमेध्यातिथिरिंद्रोबृहतीवाऽद्यायास्तिस्रोगायत्र्योन्त्यानुष्टुप् ।

ऋक्सं. ०.६ अ. ३ ॥ १६ ॥

वज्रीरथोहिरण्ययः ॥ यःसुषव्यःसुदक्षिणऽइनोयःसुक्रतुर्गृणे । यऽआकरःसहस्रायःशतामघऽइंद्रोयःपूर्भिदारितः+ ॥ ७ ॥ योधृषितोयोवृतोयोऽअस्तिश्मश्रुषुश्रितः । विभूतद्युम्नयश्च्यवनःपुरुष्टुतःक्रत्वागौरिवशाकिनः+ ॥ कईंवेदसुतेसचापिबंतंकद्वयोदधे । अयंयःपुरोविभिनत्त्योजसामंदानःशिप्र्यंधसः ॥ दानामृगोनवारणःपुरुत्राचरथं दधे । नकिष्ट्वानियमदासुतेगमोमहांश्चरस्योजसा ॥ यऽउग्रःसन्ननिःष्टृतःस्थिरोरणायसंस्कृतः । यदिंस्तोतुर्मघवाशृणवद्धवंनेंद्रोयोषत्यागमत् ॥ सत्यमित्थावृषेदसिवृषजूतिर्नोवृतः । वृषाह्युग्रशृण्विषेपरावतिवृषोऽअर्वावतिश्रुतः ॥ ८ ॥ वृषणस्तेऽअभीशवोवृषाकशाहिरण्ययी । वृषारथोमघवन्वृषणाहरीवृषात्वंशतक्रतो ॥ वृषासोतासुनोतुते वृषन्नृजीपिन्नाभर । वृषादधन्वेवृषणंनदीष्वातुभ्यंस्थातर्हरीणां ॥ एंद्रयाहिपीतयेमधुंशविष्ठसोम्यं । नायमच्छा मघवाशृणवद्गिरोब्रह्मोक्थाचसुक्रतुः ॥ वहंतुत्वारथेष्ठामाहरयोरथयुजः । तिरश्चिदर्यसवनानिवृत्रहन्नन्येषांयाशतक्रतो ॥ अस्माकमद्यांतमंस्तोमंधिष्वमहामह । अस्माकंतेसवनासंतुशंतमामदायद्युक्षसोमपाः ॥ ९ ॥ नहिषस्तवनोम मशास्त्रेऽअन्यस्यरण्यति । योऽअस्मान्वीरऽआनयत् ॥ इंद्रश्चिद्घातदब्रवीत्स्त्रियाऽअशास्यंमनः । उतोऽअहक्रतुंरघुं+ ॥ सप्तीचिद्घामदच्युतामिथुनावहतोरथं । एवेद्धूर्वृष्णऽउत्तरा ॥ अधःपश्यस्वमोपरिसंतरांपादकौहर । मातेक



मंडलं ८ अनु. ५ ॥ १६ ॥

शप्तुकौहंशन्त्स्त्रीहिब्रह्माबभूविथ ॥ १० ॥ ( ८।५।४ ) एंद्रयाहिहरिभिरुपकण्वस्यसुष्टुतिं । दिवोऽअमुष्यशासं
तोदिवंययदिवावसो ॥ आत्वाग्रावावदन्निहसोमीघोषेणयच्छतु । दिवो० ॥ अत्राविनेमिरेषामुरांनधूनुतेवृकः ।
दिवो० ॥ आत्वाकण्वाऽइहावसेहवंतेवाजसातये । दिवो० ॥ दधामितेसुतानांवृष्णेनपूर्वपाय्यं । दिवो० ॥ ११ ॥
स्मत्पुरंधिर्नऽआगहिविश्वतोधीर्नऽऊतये । दिवो० ॥ आनोयाहिमहेमतेसहस्रोतेशतामघ । दिवो० ॥ आत्वाहो
तामनुर्हितोदेवत्रावक्षदीड्यः । दिवो० ॥ आत्वामदच्युताहरीश्येनंपक्षेववक्षतः । दिवो० ॥ आयाह्यर्यऽआपरिस्वा
हासोमस्यपीतये । दिवो० ॥ १२ ॥ आनोयाह्युपश्रुत्युक्थेषुरणयाऽइह । दिवो० ॥ सरूपैरासुनोगहिसंभृतैःसंभृ
ताश्वः । दिवो० ॥ आयाहिपर्वतेभ्यःसमुद्रस्याधिविष्टपः ॥ दिवो० ॥ आनोगव्यान्यश्व्यासहस्राशूरदर्दहि । दि
वो० ॥ आनःसहस्रशोभररायुतानिशतानिच । दिवो० ॥ आयदिंद्रश्चदद्वहेसहस्रंवसुरोचिषः । ओजिष्ठमश्व्यंपशुं ॥
यऽऋज्रावातरंहसोरुषासोरघुष्यदः । भ्राजंतेसूर्याऽइव ॥ पारावतस्यरातिषुद्रवच्चक्रेष्वाशुषु । तिष्ठंवनस्यमध्यऽ
आ ॥ १३ ॥ ( ८।५।५ ) अग्निनेंद्रेणवरुणेनविष्णुनादित्यैरुद्रैर्वसुभिःसचाभुवा । सजोषसाऽउषसासूर्येणचसोमं

(८।५।४) एंद्रयाहीत्यष्टादशर्चस्यसूक्तस्यकाण्वोनीपातिथिरिंद्रःआयदिंद्रइत्यादितिसृणामांगिरसाःसहस्रवसुरोचिषऋषयइंद्रोऽनुष्टुबंत्यास्ति
स्रोगायत्र्यः(८।५।५)अग्निनेंद्रेणेतिचतुर्विंशत्यृचस्यसूक्तस्यात्रेयःश्यावाश्वोऽश्विनावुपरिष्टाज्ज्योतिरंत्यास्तिस्रः क्रमेणपंक्तिमहाबृहतीपंक्तयः ।

पिबतमश्विना ॥ विश्वाभिर्धीभिर्भुवनेनवाजिनादिवापृथिव्याद्रिभिःसचाभुवा । सजोषसा० ॥ विश्वैर्देवैस्त्रिभिरे कादशैरिहाद्भिर्मरुद्भिर्भृगुभिःसचाभुवा । सजोषसा० ॥ जुषेथांयज्ञंबोधतंहवस्यमेविश्वेहदेवौसवनावगच्छतं । सजोषसाऽउषसासूर्येणचेषंनोवोह्ळमश्विना ॥ स्तोमंजुषेथांयुवशेवकन्यनांविश्वेहदेवौसवनावगच्छतं । सजोषसा० ॥ गिरोजुषेथामध्वरंजुषेथांविश्वेहदेवौसवनावगच्छतं । सजोषसा० ॥ १४ ॥ हारिद्रवेवपतथोवनेदुपसोमंसुतंमहिषे वावगच्छथः । सजोषसाऽउषसासूर्येणचत्रिर्वर्तिर्यातमश्विना ॥ हंसाविवपतथोऽअध्वगाविवसोमंसुतंमहिषेवावग च्छथः । सजोषसा० ॥ श्येनाविवपतथोहव्यदातयेसोमंसुतंमहिषेवावगच्छथः । सजोषसा० ॥ पिबतंचतृप्णुतंचा चगच्छतंप्रजांचधत्तंद्रविणंचधत्तं । सजोषसाऽउषसासूर्येणचोर्जंनोधत्तमश्विना ॥ जयतंचप्रस्तुतंचप्रचावतंप्रजांचध त्तंद्रविणंचधत्तं । सजोषसा० ॥ हतंचशत्रून्यततंचमित्रिणःप्रजांचधत्तंद्रविणंचधत्तं ॥ सजोषसा० ॥ १५ ॥ मि त्रावरुणवंताऽउतधर्मवंतामरुत्वंताजरितुर्गच्छथोहवं । सजोषसाऽउषसासूर्येणचादित्यैर्यातमश्विना ॥ अंगिरस्वंता ऽउतविष्णुवंतामरुत्वंताजरितुर्गच्छथोहवं । सजोषसा० ॥ ऋभुमंतावृषणावाजवंतामरुत्वंताजरितुर्गच्छथोहवं । सजोषसा० ॥ ब्रह्मजिन्वतमुतजिन्वतंधियोहतंरक्षांसिसेधतममीवाः । सजोषसाऽउषसासूर्येणचसोमंसुन्वतोऽअ श्विना ॥ क्षत्रंजिन्वतमुतजिन्वतंनॄन्हतंरक्षांसिसेधतममीवाः । सजोषसा० ॥ धेनूर्जिन्वतमुतजिन्वतंविशोहतंरक्षां

सिसेधतममीवाः । सजोषसा० ॥ १६ ॥ अत्रेरिवश्रृणुतंपूर्व्यस्तुतिंश्यावाश्वस्यसुन्वतोमदच्युता । सजोषसाऽउष
सासूर्येणचाश्विनातिरोऽअह्न्यं ॥ सर्गाँऽइवसृजतंसुष्टुतीरुपश्यावाश्वस्यसुन्वतोमदच्युता । सजोषसा० ॥ रश्मीँऽ
रिवयच्छतमध्वराँऽउपश्यावाश्वस्यसुन्वतोमदच्युता । सजोषसा० ॥ अर्वाग्रथंनियच्छतंपिबतंसोम्यंमधु । आया
तमश्विनागतमवस्युर्वामहंहुवेधत्तंरत्नानिदाशुषे ॥ नमोवाकेप्रस्थितेऽअध्वरेनराविवक्षणस्यपीतये । आयात० ॥
स्वाहाकृतस्यतृंपतंसुतस्यदेवावंधसः । आयात० ॥ १७ ॥ ( ८।५।६ ) अवितासिसुन्वतोवृक्तबर्हिषःपिबासोमंमदा
यकंशतक्रतो । यंतेभागमधारयन्विश्वाःसेहानःपृतनाऽउरुज्रयःसमप्सुजिन्मरुत्वाँऽइंद्रसत्पते ॥ प्रावस्तोतारंमघव
न्नवत्वांपिबासोमंमदायकंशतक्रतो । यंतेभाग० ॥ ऊर्जादेवाँऽअवस्योजसात्वांपिबासोमंमदायकंशतक्रतो । यंतेभा
ग० ॥ जनितादिवोजनितापृथिव्याःपिबासोमंमदायकंशतक्रतो । यंतेभाग० ॥ जनिताश्वानांजनितागवामसिपि
बासोमंमदायकंशतक्रतो । यंतेभाग० ॥ अत्रीणांस्तोममद्रिवोमहस्कृधिपिबासोमंमदायकंशतक्रतो । यंतेभाग० ॥
श्यावाश्वस्यसुन्वतस्तथाश्रृणुयथाश्रृणोरत्रेःकर्माणिकृण्वतः । प्रत्रसदस्युमाविथत्वमेकऽइन्नृषाह्यऽइंद्रब्रह्माणिवर्ध
यन् ॥ १८ ॥ ( ८।५।७ ) प्रेदंब्रह्मवृत्रतूर्येष्वाविथप्रसुन्वतःशचीपतऽइंद्रविश्वाभिरूतिभिः । माध्यंदिनस्यसवन

(८।५।६) अवितासीतिसप्तर्चस्यसूक्तस्यात्रेयःश्यावाश्वइंद्रःशक्वर्यत्यामहापंक्तिः। (८।५।७) प्रेदमितिसप्तर्चस्यसूक्तस्यात्रेयःश्यावाश्वइंद्रो-

ऋक्सं. ६ अ. ३ १८ ॥

स्यवृत्रंहन्ननेद्यपिबासोमंस्यवज्रिवः ॥ सेहानऽउग्रपृतनाऽअभिद्रुहंःशचीपतऽइंद्रविश्वाभिरूतिभिंः । माध्यँदिनस्य० ॥ एकुराळस्यभुवनस्यराजसिशचीपतऽइंद्रविश्वाभिरूतिभिंः । माध्यँदिनस्य० ॥ सस्थावानायवयसित्वमेकऽइच्छचीपतऽइंद्रविश्वाभिरूतिभिंः । माध्यँदिनस्य० ॥ क्षेमंस्यचप्रयुजंश्चत्वमीशिषेशचीपतऽइंद्रविश्वाभिरूतिभिंः । माध्यँदिनस्य० ॥ क्षत्रायंत्वमवंसिनत्वंमाविथशचीपतऽइंद्रविश्वाभिरूतिभिंः । माध्यँदिनस्य० ॥ श्यावाश्वंस्यरेभंतस्तथांशृणुयथाशृंणोरत्रेःकर्माणिकृण्वतः । प्रत्रसदंस्युमाविथत्वमेकऽइन्नृषाह्यऽइंद्रंक्षत्राणिवर्धयंन् ॥ १९ ॥ ( ८।५।८ )

यज्ञस्यहिस्थऽऋत्विजासस्नीवाजेषुकर्मसु । इंद्राग्नीतस्यंबोधतं ॥ तोशासारथयावानावृत्रहणापराजिता । इंद्राग्नी० ॥ इदंवांमदिरंमध्वधुंक्षन्नद्रिंभिर्नरः । इंद्राग्नी० ॥ जुषेथांयज्ञमिष्टयेसुतंसोमंसधस्तुती । इंद्राग्नीऽआगंतंनरा ॥ इमाजुषेथांसवनायेभिर्हव्यान्यूहथुः । इंद्राग्नी० ॥ इमांगायत्रवर्तनिंजुषेथांसुष्टुतिंमम । इंद्राग्नी० ॥ २० ॥ प्रातर्याबभिरागतंदेवेभिर्जेन्यावसू । इंद्राग्नीसोमंपीतये ॥ श्यावाश्वस्यसुन्वतोत्रीणांशृणुतंहवं । इंद्राग्नी० ॥ एवावांमह्वऽऊतयेयथाहुवंतमेधिराः । इंद्राग्नी० ॥ आहंसरंस्वतीवतोरिंद्राग्न्योरवोवृणे । याभ्यांगायत्रमृच्यतें ॥ २१ ॥ ( ८।५।९ )

अग्निमंस्तोष्यृग्मियमग्निमीळायजध्यै । अग्निर्देवाँऽअंनक्तुनऽउभेहिविदथेंकविरंतश्चरंतिदूत्यंनभंतामन्यकेसमे ॥

मंडलं ८ अनु. ५ ॥ १८ ॥

महापंक्तिराद्यातिजगती । (८।५।८) यज्ञस्येतिदशर्चस्यसूक्तस्यात्रेयःश्यावाश्वइंद्राग्नीगायत्री । (८।५।९) अग्निमितिदशर्चस्यसूक्तस्यकाण्वो

न्यग्नेनव्यंसावचस्तनूषुशंसमेषां । न्यरातीरराव्णांविश्वांऽअर्योऽअरातीरितोयुच्छंत्वामुरोनभंता० ॥ अग्नेमन्मानि
तुभ्यंकंघृतंनजुह्वऽआसनि । सदेवेषुप्रचिकिद्धित्वंह्यसिपूर्व्यःशिवोदूतोविवस्वतोनभंता० ॥ तत्तदग्निर्वयोदधेय थाय
थाकृपण्यति । ऊर्जाहुतिर्वसूनांशंचयोश्चमयोदधेविश्वस्यैदेवहूत्यैनभंता० ॥ सचिकेतसहीयसाग्निश्चित्रेणकर्मणा ।
सहोताशश्वतीनांदक्षिणाभिरभीवृतऽइनोतिचप्रतीव्यं१नभंता० ॥ २२ ॥ अग्निर्जातादेवानामग्निर्वेदमर्तानामपी
च्यं । अग्निःसद्रविणोदाऽअग्निर्द्वाराव्यूर्णुतेस्वाहुतोनवीयसानभंता० ॥ अग्निर्देवेषुसंवसुःसविक्षुयज्ञियास्वा । सम
दाकाव्यापुरुविश्वंभूमेवपुष्यतिदेवोदेवेषुयज्ञियोनभंता० ॥ योऽअग्निःसप्तमानुषःश्रितोविश्वेषुसिंधुषु । तमागन्मत्रि
पस्त्यंमंधातुर्दस्युहंतममग्निंयज्ञेषुपूर्व्यंनभंता० ॥ अग्निस्त्रीणित्रिधातून्याक्षेतिविदथाकविः । सत्रीँऽरेकादशाँऽइहय
क्षच्चपिप्रयच्चनोविप्रोदूतःपरिष्कृतोनभंता० ॥ त्वंनोऽअग्नऽआयुषुत्वंदेवेषुपूर्व्यवस्वऽएकऽइरज्यसि । त्वामापःपरिस्रु
तःपरियंतिस्वसेतवोनभंता०॥२३॥(८।५।१०)इंद्राग्नीयुवंसुनःसहंतादासथोरयिं । येनदृळ्हासमत्स्वावीळुचित्साहिषीम
ह्यग्निर्वनेववातऽइन्नभंता० ॥ नहिवांवव्रयामहेथेंद्रमिद्यजामहेशविष्ठंनृणांनरं । सनःकदाचिदर्वतागमदावाजसातयेगम
दामेधसातयेनभंता०॥ताहिमध्यंभराणामिंद्राग्नीऽअधिक्षितः । ताऽउकवित्वनाकवीपृच्छ्यमानासखीयतेसंधीतमश्नुतं

सं. ५१ नाभाकोग्निर्महापंक्तिः । (८।५।१०) इंद्राग्नी इति ... सूक्तस्य काण्वो नाभाक इंद्राग्नी महापंक्तिर्द्वितीयाशक्वर्यंत्यात्रिष्टुप् ।

नरानभंता०॥अभ्यर्चनभाकुवदिंद्राग्नीयजसागिरा॥ययोर्विश्वमिदंजगदियंद्यौः पृथिवीमह्युपस्थेबिभृतोवसुनभंता०॥ प्रब्रह्माणिनभाकुवदिंद्राग्निभ्यामिरज्यत । यासप्तबुध्नमर्णवंजिह्मबारमपोर्णुतऽइंद्रऽईशानऽओजसानभंता० ॥ अपिवृश्चपुराणवद्व्रततेरिवगुष्पितमोजोदासस्यदंभय । वयंतदस्यसंभृतंवस्विंद्रेणविभजेमहिनभंता० ॥ २४ ॥ यदिंद्राग्नीजनाऽइमेविह्वयंतेतनागिरा । अस्माकेभिर्नृभिर्वयंसासह्यामपृतन्यतोवनुयामवनुष्यतोनभंता० ॥ यानुश्वेतावबोदिवऽउच्चरातऽउपद्युभिः । इंद्राग्न्योरनुव्रतमुहानायंतिसिंधवोयान्त्सींबंधादमुंचतांनभंता० ॥ पूर्वीष्टऽइंद्रोपमातयः पूर्वीरुतप्रशस्तयःसूनोहिन्वस्यहरिवः । वस्वोवीरस्यापृचोयानुसाधंतनोधियोनभंता० ॥ तंशिशीतासुवृक्तिभिस्त्वेषंसत्वानमृग्मियं । उतोनुचिद्यऽओजसाशुष्णस्यांडानिभेदतिजेषत्स्वर्वतीरपोनभंता० ॥ तंशिशीतास्वध्वरंसत्यंसत्वानमृत्वियं । उतोनुचिद्यऽओहतऽआंडाशुष्णस्यभेदत्यजैःस्वर्वतीरपोनभंता० ॥ एवेंद्राग्निभ्यांपितृवन्नवीयोमंधातृवदंगिरस्वदवाचि । त्रिधातुनाशर्मणापातमस्मान्वयंस्यामपतयोरयीणां॥२५॥(८।५।११)अस्माऽऊषुप्रभूतयेवरुणायमरुद्भ्योर्चाविदुष्टरेभ्यः । योधीतामानुषाणांपश्वोगाऽइवरक्षतिनभंता० ॥ तमूषुसमनगिरापितॄणांचमन्मभिः । नाभाकस्यप्रशस्तिभिर्यःसिंधूनामुपोदयेसप्तस्वसासमध्यमोनभंता० ॥ सक्षपःपरिषस्वजेन्युस्रोमाययादधेसविश्वंपरिदर्श



( ८।५।११ ) अस्माऊष्वितिदशर्चस्यसूक्तस्यकाण्वोनाभाकोवरुणोमहापंक्तिः ।

तः । तस्यवेनीरनुव्रतमुषस्तिस्रोऽअवर्धयन्नभंता० ॥ यःककुभोनिधारयःपृथिव्यामधिदर्शतः । समातापूर्व्यंपदंतद्व
रुणस्यसस्त्यंसहिगोपाऽइवेर्योनभंता० ॥ योधर्ताभुवनानांयऽउस्राणामपीच्याइवेदनामानिगुह्या । सकविःकाव्या
पुरुरूपंद्यौरिवपुष्यतिनभंता० ॥ २६ ॥ यस्मिन्विश्वानिकाव्याचक्रेनाभिरिवश्रिता । त्रितंजूतीसपर्यतव्रजेगावोन
संयुजेयुजेऽअश्वाँऽअयुक्षतनभंता० ॥ यऽआस्वत्कऽआशयेविश्वाजातान्येषां । परिधामानिमर्मृशद्वरुणस्यपुरोगये
विश्वेदेवाऽअनुव्रतंनभंता० ॥ ससमुद्रोऽअपीच्यस्तुरोद्यामिवरोहतिनियदासुयजुर्दधे । समायाऽअर्चिनापदास्तृणा
न्नाकमारुहन्नभंता० ॥ यस्यश्वेताविचक्षणातिस्रोभूमीरधिक्षितः । त्रिरुत्तराणिपप्रतुर्वरुणस्यध्रुवंसदःससप्तानामिर
ज्यतिनभंता० ॥ यःश्वेताँऽअधिनिर्णिजश्चक्रेकृष्णाँऽअनुव्रता । सधामपूर्व्यंममेयःस्कंभेनविरोदसीऽअजोनद्यामधा
रयन्नभंता० ॥ २७ ॥ ( ८।५।१२ ) अस्तभ्नाद्द्यामसुरोविश्ववेदाऽअमिमीतवरिमाणंपृथिव्याः । आसीदद्विश्वाभु
वनानिसम्राड्विश्वेत्तानिवरुणस्यव्रतानि ॥ एवावंदस्ववरुणंबृहंतंनमस्याधीरममृतस्यगोपां । सनःशर्मत्रिवरूथंवियंस
त्पातंनोद्यावापृथिवीऽउपस्थे ॥ इमांधियंशिक्षमाणस्यदेवक्रतुंदक्षंवरुणसंशिशाधि । ययातिविश्वादुरितातरेमसुत
र्माणमधिनावंरुहेम ॥ आवांग्रावाणोऽअश्विनाधीभिर्विप्राऽअचुच्यवुः । नासत्यासोमपीतयेनभंता० ॥ यथावाम

( ८।५।१२ ) अस्तभ्नादितिषडृचस्यसूक्तस्यकाण्वोनाभाकऋषिरंत्यानांतिसृणामात्रेयार्चनानाऋषिराद्यानांतिसृणांवरुणोऽत्यानांति
सृणामश्विनौआद्यास्तिस्रस्त्रिष्टुभोंत्यास्तिस्रोनुष्टुभः ।

त्रिरश्विनागीर्भिर्विप्रोऽअजोहवीत् । नासत्यासोमपीतयेनभंता० ॥ एवावामह्वऽऊतयेयथाहुवंतमेधिराः । नासत्या सोमपीतयेनभंता० ॥ २८ ॥ ( ८।६।१ ) इमेविप्रस्यवेधसोग्नेरस्तृतयज्वनः । गिरःस्तोमासऽईरते ॥ अस्मैतेप्रतिह र्यतेजातवेदोविचर्षणे । अग्नेजनामिसुष्टुतिं ॥ आरोकाऽइवघेदहतिग्माऽअग्नेतवत्विषः । दद्भिर्वनानिबप्सति ॥ हरयोधूमकेतवोवातजूताऽउपद्यवि । यतंतेवृथगग्नयः ॥ एतेत्येवृथगग्नयऽइद्धासःसमदृक्षत । उषसामिवकेत वः ॥ २९ ॥ कृष्णारजांसिपत्सुतःप्रयाणेजातवेदसः । अग्निर्यद्रोधतिक्षमि ॥ धासिंकृण्वानऽओषधीर्बप्सदग्निर्नवा यति । पुनर्यंतरुणीरपि ॥ जिह्वाभिरहनंनमदर्चिषाजंजणाभवन् । अग्निर्वनेषुरोचते ॥ अप्स्वग्नेसधिष्टवसौषधीरनु रुध्यसे । गर्भेसंजायसेपुनः ॥ उदग्नेतवतद्धृतादर्चीरोचतऽआहुतं । निंसानंजुह्वोमुखे ॥ ३० ॥ उक्षान्नायवशान्नाय सोमपृष्ठायवेधसे । स्तोमैर्विधेमाग्नये ॥ उतत्वानमसावयंहोतर्वरेण्यक्रतो । अग्नेसमिद्भिरीमहे ॥ उतत्वाभृगुवच्छुचे मनुष्वदग्नऽआहुत । अंगिरस्वद्धवामहे ॥ त्वंह्यग्नेऽअग्निनाविप्रोविप्रेणसन्त्सता । सखासख्यासमिध्यसे ॥ सत्वं विप्रायदाशुषेरयिंदेहिसहस्रिणं । अग्नेवीरवतीमिषं ॥ ३१ ॥ अग्नेभ्रातःसहस्कृतरोहिदश्वशुचिव्रत । इमंस्तोमंजुष स्वमे ॥ उतत्वाग्नेमगस्तुतोवाश्रायप्रतिहर्यते । गोष्ठंगावऽइवाशत ॥ तुभ्यंताऽअंगिरस्तमविश्वाःसुक्षितयःपृथक् ।



षष्ठेनुवाकेषट्सूक्तानि ( ८।६।१ ) इमेविप्रस्येतित्रयस्त्रिंशदृचस्यसूक्तस्यांगिरसोविरूपोग्निर्गायत्री ।

अग्नेकामांयये॑मिरे ॥ अ॒ग्निंधी॒भिर्म॑नी॒षिणो॒मेधि॑रासोवि॒प॒श्चितः॑ । अ॒द्म॒सद्यां॑यहिन्विरे ॥ तंत्वाम॒ज्मे॑षु॒वाजि॑नंतन्वा॒नाऽ अंग्नेऽअध्व॒रं । वह्निं॒होता॑रमीळते ॥ ३२ ॥ पु॒रु॒त्राहिस॒दृङ्ङसि॒वि॒शो॒विश्वा॒ऽअनु॑प्र॒भुः । स॒मत्सु॑त्वाहवामहे ॥ तमीं॑ळिष्व॒ यऽआहु॑तो॒ग्निर्वि॒भ्राज॑तेघृ॒तैः । इ॒मंनः॑श्रृणव॒द्धवं॑ ॥ तंत्वां॑व॒यंहं॑वामहेशृ॒ण्वंतं॑ज॒ातवे॑दसं । अ॒ग्नेघ्नंत॒मप॒द्विषः॑ ॥ वि॒शांराजा॑ नम॒द्भुत॒मध्यं॑क्ष॒धर्म॑णामि॒मं । अ॒ग्निमी॑ळे॒सऽउं॑श्रवत् ॥ अ॒ग्निंवि॒श्वायु॑वेपसं॒मर्यं॒नवा॒जिनं॑हि॒तं । सप्तिं॒नवा॑जयामसि ॥ ३३ ॥ घ्नन्मृ॒ध्राण्यप॒द्वि॒षो॒दह॒न्रक्षां॑सिवि॒श्वहा॑ । अग्ने॑ति॒ग्मेन॑दीदिहि ॥ यंत्वा॒जना॑सऽइंध॒तेम॑नु॒ष्वदं॑गिरस्तम । अ॒ग्ने॒सबो॑धिमे॒ वचः॑ ॥ यदं॑ग्नेदिवि॒जाऽअस्यं॑प्सु॒जावां॑सहस्कृत । तंत्वां॑गी॒र्भिर्हं॑वामहे ॥ तुभ्यं॑घेत्तेजना॑ऽइ॒मेविश्वाः॑सुक्षि॒तय॒ःपृथं॑क् । धासिं॑हिन्व॒ंत्यत्त॑वे ॥ तेघेद॑ग्नेस्वा॒ध्यो॒हा॒विश्वां॑नृ॒चक्षसः । तरं॑तःस्यामदु॒र्गहा॑ ॥ ३४ ॥ अ॒ग्निंम॒न्द्रंपु॑रुप्रि॒यंशी॒रंपा॑व॒कशो॑चिषं । हृ॒द्भिर्म॒न्द्रेभि॑रीमहे ॥ सत्वमं॑ग्नेवि॒भाव॑सुःसृ॒जन्त्सूर्यो॒नर॒श्मिभिः॑ । शर्ध॒न्तमां॑सिजिघ्नसे ॥ तत्ते॑सहस्वऽईमहे दा॒त्रंयन्नोप॒दस्यं॑ति । त्वदं॑ग्ने॒वार्यं॑वसु॑ ॥ ३५ ॥ ( ८।६।२ ) स॒मि॒धा॒ग्निंदु॑वस्यतघृ॒तैर्बो॑धय॒तातिं॑थिं । आस्मि॑न्ह॒व्या जुं॑होतन ॥ अग्ने॒स्तोमं॑जुषस्वमे॒वर्ध॑स्वा॒नेन॒मन्मं॑ना । प्रति॑सू॒क्तानि॑हर्यनः ॥ अ॒ग्निंदू॒तंपु॒रोद॑धेहव्य॒वाह॒मुप॑ब्रुवे । दे॒वाँऽ आसा॑दयादि॒ह+ ॥ उत्ते॑बृ॒हंतोऽअ॒र्चयः॑समि॒धानस्यं॑दीदिवः । अग्ने॑शु॒क्रासं॑ऽईरते ॥ उप॑त्वाजु॒ह्वो॒३॒॑मम॑घृ॒ताचीं॑र्यंतुहर्य

---

( ८।६।२ ) समिधाग्निमिति त्रिंशदृचस्य सूक्तस्यांगिरसो विरूपोऽग्निर्गायत्री ।

त । अग्नेहव्याजुषस्वनः ॥ ३६ ॥ मंद्रंहोतारमृत्विजंचित्रभानुंविभावसुं । अग्निमीळेसउश्रवत् ॥ प्रत्नंहोतारमी
ड्यंजुष्टमग्निंकविक्रतुं । अध्वराणामभिश्रियं ॥ जुषाणोअंगिरस्तमेमाहव्यान्यानुषक् । अग्नेयज्ञंनयऋतुथा ॥
समिधानउसंत्यशुक्रशोचइहावह । चिकित्वान्दैव्यंजनं ॥ विप्रंहोतारमद्रुहंधूमकेतुंविभावसुं । यज्ञानांकेतुमीम
हे ॥ २७ ॥ अग्नेनिपाहिनस्त्वंप्रतिष्मदेवरीषतः । भिंधिद्वेषःसहस्कृत ॥ अग्निःप्रत्नेनमन्मनाशुंभानस्तन्वंस्वां । कु
विर्विप्रेणवावृधे ॥ ऊर्जोनपातमाहुवेग्निंपावकशोचिषं । अस्मिन्यज्ञेस्वध्वरे ॥ सनोमित्रमहस्त्वमग्नेशुक्रेणशोचि
षा । देवैरासत्सिबर्हिषि ॥ योअग्निंतन्वोदमेदेवंमर्तःसपर्यति । तस्माइद्दीदयद्वसु ॥ ३८ ॥ अग्निर्मूर्धादिवःकृकु
त्पतिःपृथिव्याअयं । अपांरेतांसिजिन्वति ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते । तवज्योतींष्यर्चयः ॥ ईशिषेवा
र्यस्यहिदात्रस्याग्नेस्वर्पतिः । स्तोतास्यांतवशर्मणि ॥ त्वामग्नेमनीषिणस्त्वांहिन्वंतिचित्तिभिः । त्वांवर्धंतुनोगिरः ॥
अदब्धस्यस्वधावतोदूतस्यरेभतःसदा । अग्नेःसख्यंवृणीमहे ॥ ३९ ॥ अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः ।
शुचीरोचतआहुतः ॥ उतत्वाधीतयोममगिरोवर्धंतुविश्वहा । अग्नेसख्यस्यबोधिनः ॥ यदग्नेस्यामहंत्वंत्वंवाघास्या
अहं । स्युष्टेसत्याइहाशिषः ॥ वसुर्वसुपतिर्हिकमस्यग्नेविभावसुः । स्यामतेसुमतावपि ॥ अग्नेधृतव्रतायतेसमुद्रायै
वसिंधवः । गिरोवाश्रासईरते ॥ ४० ॥ युवानंविश्पतिंकविंविश्वादंपुरुवेपसं । अग्निंशुंभामिमन्मभिः ॥ यज्ञानां

रथ्यैवयंतिग्मजंभायवीळवे । स्तोमैरिषेमाग्नये ॥ अयमग्नेत्वेऽअपिंजरिताभूतुसंत्य । तस्मैपावकमृळय ॥ धीरोह्यस्यं
द्मसद्विप्रोनजागृविः सदा । अग्नेदीदयसिद्यावि ॥ पुराग्नेदुरितेभ्यःपुरामृध्रेभ्यःकवे । प्रणऽआयुर्वसोतिर ॥ ४१ ॥
( ८।६।३ ) आघायेऽअग्निमिंधतेस्तृणंतिबर्हिरानुषक् । येषामिंद्रोयुवासखा ॥ बृहन्निदिध्मऽएषांभूरिशस्तंपृथुःस्व
रुः । येषामिंद्रोयुवासखा ॥ अयुद्धऽइद्युधावृतंशूरऽआजतिसत्वभिः । येषामिंद्रोयुवासखा ॥ आबुंदंवृत्रहाददेजा
तःपृच्छद्विमातरं । कऽउग्राःकेहश्शृण्विरे ॥ प्रतित्वाशवसीवदद्गिरावप्सोनयोधिषत् । यस्तेशत्रुत्वमाचके ॥ ४२ ॥
उतत्वंमघवञ्छृणुयस्तेवष्टिववक्षितत् । यद्वीळयासिवीळुतत् ॥ यदाजिंयात्याजिकृदिंद्रःस्वश्वयुरुप । रथीतमोर
थीनां ॥ विषुविश्वाऽअभियुजोवज्रिन्विष्वग्यथावृह । भवानःसुश्रवस्तमः ॥ अस्माकंसुरथंपुरऽइंद्रःकृणोतुसातये ।
नयंधूर्वंतिधूर्तयः ॥ वृज्यामतेपरिद्विषोरंतेशक्रदावने । गमेमेदिंद्रगोमतः ॥ ४३ ॥ शनैश्चिद्यंतोऽअद्रिवोश्वावंतः
शतग्विनः । विवक्षणाऽअनेहसः ॥ ऊर्ध्वाहितेदिवेदिवेसहस्रासूनृताशता । जरितृभ्योविमंहते ॥ विद्माहित्वाधनं
जयमिंद्रदृह्ळाचिदारुजं । आदारिणंयथागयं ॥ ककुहंचित्त्वाकवेमंदंतुधृष्णविंदवः । आत्वापणिंयदीमहे ॥ यस्तेरे
वाँऽअदाशुरिःप्रममर्षमघत्तये । तस्यनोवेदऽआभर ॥ ४४ ॥ इमऽउत्वाविचक्षतेसखायऽइंद्रसोमिनः । पुष्टावंतोय

( ८।६।३ ) आघायइतिद्विचत्वारिंशदृचस्यसूक्तस्यकाण्वस्त्रिशोकइंद्रआद्यायाअग्नींद्रागायत्री ।

थांपशुं+ ॥ उतत्वाबधिरंवयंश्रुत्कर्णंसंतमूतयें । दूरादिहहवामहे ॥ यच्छुश्रूयाऽइमंहवंदुर्मर्षंचक्रियाऽउत । भवें
रापिर्नोऽअंतमः ॥ यच्चिद्धितेऽअपिव्यथिर्जगन्वांसोऽअमन्महि । गोदाऽइदिंद्रबोधिनः ॥ आत्वारंभंनजिव्रयोरर
भ्माशवसस्पते । उश्मसित्वासधस्थऽआ+ ॥ ४५ ॥ स्तोत्रमिंद्रायगायतपुरुनृम्णायसत्वने । नकिर्यंवृण्वतेयुधि+ ॥
अभित्वावृषभासुतेसुतंसृजामिपीतयें । तृंपाव्यंश्नुहीमदं ॥ मात्वामूराऽअविष्यवोमोपहस्वानऽआदभन् । माकींब्र
ह्मद्विषोवनः ॥ इहत्वागोपरीणसामहेमंदंतुराधसे । सरोगौरोयथापिब ॥ यावृत्रहापरावतिसनानवाचचुच्युवे ।
तासंसत्सुप्रवोचत ॥ ४६ ॥ अपिबत्कद्रुवःसुतमिंद्रःसहस्रबाह्वे । अत्रादेदिष्टपौंस्यं ॥ सत्यंतत्तुर्वशेयदौविदानोऽ
अह्नवाय्यं । व्यानट्तुर्वणेशमिं ॥ तरणिंवोजनानांत्रदंवाजस्यगोमतः । समानमुप्रशंसिषं ॥ ऋभुक्षणंनवर्तवऽउक्थे
षुतुग्र्यावृधं । इंद्रंसोमेसचासुते+ ॥ यःकृंतदिद्वियोन्यंत्रिशोकायगिरिंपृथुं । गोभ्योगातुंनिरेतवे ॥ ४७ ॥ यद्दधि
षेमनस्यसिमंदानःप्रेदियक्षसि । मातत्करिंद्रमृळय ॥ दभ्रंचिद्धित्वावतःकृतंशृण्वेऽअधिक्षमि । जिगात्विंद्रतेमनः ॥
तवेदुताःसुकीर्तयोसन्नुतप्रशस्तयः । यदिंद्रमृळयासिनः ॥ मानऽएकस्मिन्नागसिमाद्वयोरुतत्रिषु । वधीर्माशूरभूरि
षु ॥ बिभयाहित्वावतऽउग्रादभिप्रभंगिणः । दस्मादहमृतीषहः ॥ ४८ ॥ मासख्युःशूनमाविदेमापुत्रस्यप्रभूवसो ।
आवृत्वद्भूतुतेमनः ॥ कोनुमर्याऽअमिथितःसखासखायमब्रवीत् । जहाकोऽअस्मदीषते ॥ एवारेवृषभासुतेसिन्व

न्भूर्यावयः । श्वघ्नीवंनिवताचरंन् ॥ आतंऽएतावंचोयुजाहरींगृभ्णेसुमद्रंथा । यदींब्रह्मभ्यऽइद्ददंः ॥ भिंधिविश्वाऽअपद्विषःपरिबाधोजहीमृधः । वसुंस्पार्हंतदाभंर ॥ यद्वीळाविंद्रयत्स्थिरेयत्पर्शानेपराभृतं । वसुं० ॥ यस्यंतेविश्वमांनुषोभूरेर्दुत्तस्यवेदंति । वसुं० ॥ ४९ ॥ इतिषष्ठाष्टकेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥

त्रिचत्वारिंशाध्यायेवर्गाः ४९ सूक्तानि १४ ऋचः २५८ ॥ त्यागः ॥ इंद्राये.६७ अश्विभ्या.२४ इंद्राये.१४ इंद्राग्निभ्यां.१० अग्नय. इंद्राग्निभ्या.१२ वरुणाये.१३ अश्विभ्या.३ अग्नय.६३ अग्नींद्राभ्या. इंद्राये.४१ ॥ इतिषष्ठेतृतीयः ॥

त्वावतस्त्रयस्त्रिंशद्वशोश्व्यंआसआदिकानीतस्यंपृथुश्रवसोदानस्तुतिंराद्यापादनिचृत्पंचम्यादिककुब्गायत्रीं बृहत्यनुष्टुप्सतोबृहतीगायत्रींविपरीतोत्तराप्रगाथोंद्विपदाचतुर्विंशिकांबृहतीपिपीलिकमध्यांककुन्न्यंकुशिरा विराड्जगत्युपरिष्टाद्बृहतीबृहत्योंविषमपदोत्तरापंक्तिःसंस्तारपंक्तिर्गायत्रीपंक्तिःप्रगाथौवायव्यौचंगायत्रीद्विपदोष्णिक्पंक्तिर्वायव्यागायत्रींमहिवोद्यूनांत्रितआप्त्यआदित्येभ्योंत्यादुःस्वप्नघ्नंयःपंचोषसेपिमहापांक्तंस्वादोः पंचोनाप्रगाथंःसौम्यंत्रैष्टुभंपंचमीजगत्यंभिप्रदशप्रस्कण्वःप्रागाथंतंप्रसुश्रुतंपुष्टिर्गुर्यथामनौश्रुष्टिर्गुर्यथामना वायुरुपमंत्वाष्टौमेध्यंएतत्तेमातरिश्वानोंविश्वइतिवैश्वदेवःप्रगाथोंभूरीत्पंचकृशःप्रस्कण्वस्यदानस्तुतिर्गायत्रं तुंतृतीयांत्येअनुष्टुभौप्रतितेपृषध्रोंत्याग्निसौरीपंक्तिर्युवंदेवाचतुष्कंमेध्यांआश्विनंत्रैष्टुभंयमृत्विजस्तृचंवैश्वदेवं

माद्यऋत्विक्स्तुतिर्वैमानिवांसप्तसुपर्णऐंद्रावरुणंजागतमंत्रआविंशतिर्भर्गःप्रागाथआग्नेयंप्रागाथंतूभयंद्यूनां प्रोअस्मैद्वादशप्रगाथःपांक्तंसप्तम्याद्यास्तिस्रोबृहत्यंःसपूर्व्योगायत्रमाद्याचतुर्थ्यादिद्वेसप्तमीचानुष्टुभोगायत्रें त्यादैवीत्रिष्टुबुंत्त्वायदिंद्रतरोभिःपंचोनाकलिःप्रागाथःप्रागाथंमंत्यानुष्टुप्त्यांनुसैकामत्स्यःसांमदोमैत्रावरुणि र्मान्योवांबहवोवामत्स्याजालनद्धाआदित्यानस्तुवन्दशम्याद्यास्तिस्रोप्यदितेः ॥ ४ ॥ ॥ ॥

॥ हरिःओम् ॥ (८।६।४) त्वावंतःपुरूवसोव॒यमिंद्रप्रणेतः । स्मसिंस्थातर्हरीणां ॥ त्वांहिस॒त्यमंद्रिवोवि॒द्मदा॒तारंमि॒षां । वि॒द्मदा॒तारंरयी॒णां+ ॥ आयस्यंतेमहि॒माननं॒शतंमूते॒शतंक्रतो । गी॒र्भिर्गृ॒णंतिंका॒रवंः ॥ सु॒नी॒थोघा॒समर्त्यो॒ यंम॒रुतो॒यमंर्य॒मा । मि॒त्रःपांत्य॒द्रुहंः ॥ दधानो॒गोम॒दश्वंवत्सु॒वीर्यमादि॒त्यजूंतऽएधते । सदांरा॒यापुंरु॒स्पृहां ॥ १ ॥ तमिंद्रंदानंमीमहेशवसा॒नमभीर्वं । ईशांनंरा॒यऽईमहे ॥ तस्मि॒न्हिसंत्यू॒तयो॒विश्वा॒ऽअभीरव॒ःसचां । तमावंहंतु॒स

(८।६।४) त्वावतइतित्रयस्त्रिंशदृचस्यसूक्तस्याश्व्योवशऋषिःपृथुश्रवादेवता आद्यानांविंशत्यृचामिंद्रोदेवताआनोवायवित्यादिचत सृणांशतंदासइत्यस्याश्ववायुर्देवता आद्यापादनिचृत्द्वितीयादितिस्रोगायत्र्यःपंचम्याद्याःक्रमेणककुब्गायत्रीबृहत्यनुष्टुप्सतोबृहतीगायत्री बृहतीविपरीताद्विपदागायत्रीबृहतीपिपीलिकमध्याककुब्न्यंकुशिराविराड्जगत्युपरिष्टाद्बृहतीबृहतीविषमपदाबृहतीपंक्तिसंस्तारपंक्तिगाय- त्रीपंक्तिबृहतीसतोबृहतीबृहतीसतोबृहतीगायत्रीद्विपदाविराडुष्णिक्पंक्तिगायत्र्यः । (पृथुश्रवाःकानीतोराजातस्यदानस्तुतिः) ।

सयःपुरूवसुंमदायहरयःसुतं॥ यस्तेमदोवरेण्योयऽइंद्रवृत्रहंतमः। यऽआददिःस्व१र्नृभिर्यःपृतनासुदुष्टरः॥
योदुष्टरोविश्ववारश्रवाय्योवाजेष्वस्तितरुता। सनःशविष्ठसवनावसोगहिगमेमगोमतिव्रजे॥ गव्योषुणोयथापुरा
श्वयोतरथया। वरिवस्यमहामह॥ २॥ नहितेशूरराधसोंतंविंदामिसत्रा। दशस्यानोमघवन्नूचिदद्रिवोधि
योवाजेभिराविथ॥ यऽऋष्वःश्रावयत्सखाविश्वेत्सवेदजनिमापुरुष्टुतः। तंविश्वेमानुषायुगेंद्रंहवंतेतविषंयतस्रुचः॥
सनोवाजेष्ववितापुरूवसुःपुरस्थातामघवावृत्रहाभुवत्॥ अभिवोवीरमंधसोमदेषुगायगिरामहाविचेतसं। इंद्रंनाम
श्रुत्यंशाकिनंवचोयथा॥ ददीरेक्णस्तन्वेददिर्वसुददिर्वाजेषुपुरुहूतवाजिनं। नूनमथ॥ ३॥ विश्वेषामिरज्यंतंवसू
नांसासह्वांसंचिदस्यवर्पसः। कृपयतोनूनमत्यथ॥ महःसुवोऽअरमिषेस्तवामहेमीळ्हुषेऽअरंगमायजग्मये। यज्ञेभि
र्गीर्भिर्विश्वमनुषांमरुतामियक्षसिगायेत्वानमसागिरा॥ येपातयंतेऽअज्मभिर्गिरीणांस्नुभिरेषां। यज्ञंमहिष्वणी
नांसुम्नंतुविष्वणीनांप्राध्वरे॥ प्रभंगंदुर्मतीनामिंद्रशविष्ठाभर। रयिमस्मभ्यंयुज्यंचोदयन्मतेज्येष्ठंचोदयन्मते॥
सनितःसुसनितरुग्रचित्रचेतिष्ठसूनृत। प्रासहासम्राट्सहुरिंसहंतंभुज्युंवाजेषुपूर्व्यं॥ ४॥ आसऽएतुयऽईवदाँऽअ
देवःपूर्तमाददे। यथाचिद्वशोऽअश्व्यःपृथुश्रवसिकानीते३स्याव्युष्याददे॥ षष्टिंसहस्राश्व्यस्यायुतासनमुष्ट्रानां
विंशतिंशता। दशश्यावीनांशतादशत्र्यरुषीणांदशगवांसहस्रा॥ दशश्यावाऽऋधद्रयोवीतवारासऽआशवः।

मध्यानेमिंनिवावृतुः ॥ दानासःपृथुश्रवसःकानीतस्यसुराधसः । रथंहिरण्ययंददन्मंहिष्ठःसूरिरभूद्वर्षिष्ठमकृतश्रवः ॥ आनोवायोमहेतनेयाहिमखायपाजसे । वयंहितेचकृमाभूरिदावनेसद्यश्चिन्महिदावने ॥ ५ ॥ योऽअश्वेभिर्वहतेव स्तंऽउस्रास्त्रिःसप्तसप्ततीनां । एभिःसोमेभिःसोमसुद्भिःसोमपादानायशुक्रपूतपाः ॥ योमऽइमंचिदुत्मनामंदच्चित्रंदाव ने । अरट्वेऽअक्षेनहुषेसुकृत्वनिसुकृत्तरायसुक्रतुः ॥ उचथ्ये३ वपुषियःस्वराळुतवायोघृतस्नाः । अश्वेषितंरजेषितंशुनेषितं प्राज्मतदिदन्नुतत्[+] ॥ अधप्रियमिषिरायषष्टिंसहस्रासनं । अश्वानामिन्नवृष्णां ॥ गावोनयूथमुपयंतिवध्रयऽउपमायंति वध्रयः ॥ अधयच्चारथेगणेशतमुष्ट्राँऽअचिक्रदत् । अधश्वित्नेषुविंशतिंशता[+] ॥ शतंदासेबल्बूथेविप्रस्तरुक्षऽआददे । तेते वायविमेजनामदंतींद्रगोपामदंतिदेवगोपाः ॥ अधस्यायोषणामहीप्रतीचीवशमश्व्यं । अधिरुक्माविनीयते ॥ ६ ॥ (८।६।५) महिवोमहतामवोवरुणमित्रदाशुषे । यमादित्याऽअभिद्रुहोरक्षथानेमघंनशदनेहसोवऽऊतयःसुऽऊतयोवऽऊतयः ॥ विदादेवाऽअघानामादित्यासोऽअपाकृतिं । पक्षावयोयथोपरिव्य१स्मेशर्मयच्छतानेहसो० ॥ व्य१स्मेऽअधिशर्मत त्पक्षावयोनयंतन । विश्वानिविश्ववेदसोवरूथ्यामनामहेनेहसो० ॥ यस्माऽअरासतक्षयंजीवातुंचप्रचेतसः । मनो विश्वस्यघेदिमऽआदित्याराय‌ऽईशतेनेहसो० ॥ परिणोवृणजन्नघादुर्गाणिरथ्योयथा । स्यामेदिंद्रस्यशर्मण्यादित्या



---

( ८।६।५ ) महिवइत्यष्टादशर्चस्यसूक्तस्य[illegible]आदित्या[illegible]दित्योमत्स्यो[illegible]महापंक्तिः । ( अंत्याःपंचदुःस्वप्नघ्न्यः ) ।

नांमुतावंस्यनेहसों० ॥ ७ ॥ परिहृतेदनाजनौयुष्मादत्तस्यवायति । देवाऽअदभ्रमाशवोयमादित्याऽअहेतनानेह सों० ॥ नतंतिग्मंचनत्यजोनद्रासदभितंगुरु । यस्माऽउशर्मसप्रथऽआदित्यासोऽअराध्वमनेहसों० ॥ युष्मेदेवाऽअ पिष्मसियुध्यंतऽइववर्मसु । यूयंमहोनऽएनसोयूयमर्भादुरुष्यतानेहसों० ॥ अदितिर्नऽउरुष्यत्वदितिःशर्मयच्छतु । मातामित्रस्यरेवतोर्यम्णोवरुणस्यचानेहसों० ॥ यद्देवाःशर्मशरणंयद्भद्रंयदनातुरं । त्रिधातुयद्वरूथ्यं१तदस्मासुवियं तनानेहसों० ॥ ८ ॥ आदित्याऽअवहिख्यताधिकूलादिवस्पशः । सुतीर्थमर्वतोयथानुनोनेषथासुगमनेहसों० ॥ नेहभद्रंरक्षस्विनेनावयैनोपयाऽउत । गवेचभद्रंधेनवेवीरायचश्रवस्यतेनेहसों० ॥ यदाविर्यदपीच्यं१देवासोऽअस्ति दुष्कृतं । त्रितेतद्विश्वमाप्त्यऽआरेऽअस्मदधातनानेहसों० ॥ यच्चगोषुदुःष्वप्न्यंयच्चास्मेदुहितर्दिवः । त्रितायतद्वि भावर्याप्त्यायपरावहानेहसों० ॥ निष्कंवाघाकृणवतेस्रजंवादुहितर्दिवः । त्रितेदुःष्वप्न्यंसर्वमाप्त्येपरिदद्मस्यनेहसों० ॥ ९ ॥ तदन्नायतदपसेतंभागमुपसेदुषे । त्रितायचद्वितायचोषोदुःष्वप्न्यंवहानेहसों० ॥ यथाकलांयथाशफंयथऽ ऋणंसंनयामसि । एवादुःष्वप्न्यंसर्वमाप्त्येसंनयामस्यनेहसों० ॥ अजैष्माद्यासनामचाभूमानागसोवयं । उषोयस्मा दुःष्वप्न्यादभैष्मापतदुच्छत्वनेहसों० ॥ १० ॥ ( ८।६।६ ) स्वादोरभक्षिवयसःसुमेधाःस्वाध्योवरिवोवित्तरस्य ।

( ८।६।६ ) स्वादोरितिपंचदशर्चस्यसूक्तस्यकाण्वःप्रगाथःसोमस्त्रिष्टुप्पंचमीजगती ।

विश्वेयंदेवाऽउतमर्त्यासोमधुंब्रुवंतोऽअभिसंचरंति ॥ अंतश्चप्रागाऽअदितिर्भवास्यवयाताहरंसोदैव्यस्य । इंदुविंद्रं
स्यसख्यंजुषाणःश्रौष्टीवधुरमनुरायऽऋध्याः ॥ अपामसोमममृताऽअभूमागन्मज्योतिरविंदामदेवान् । किंनूनम
स्मान्कृणवदरातिःकिमुधूर्तिरमृतमर्त्यस्य ॥ शंनोभवहृदऽआपीतऽइंदोपितेवसोमसूनवेसुशेवः । सखेवसख्यऽउरुशं
सधीरःप्रणऽआयुर्जीवसेसोमतारीः ॥ इमेमापीतायशसऽउरुष्यवोरथंनगावःसमनाहपर्वसु । तेमारक्षंतुविस्रसश्चरि
त्रादुतमास्रामाद्यवयंत्विंदवः ॥ ११ ॥ अग्निंनमामथितंसंदिदीपःप्रचक्षयकृणुहिवस्यसोनः । अथाहितेमदऽआसो
ममन्येरेवाँऽइवप्रचरापुष्टिमच्छ ॥ इषिरेणतेमनसासुतस्यभक्षीमहिपित्र्यस्येवरायः । सोमराजन्प्रणऽआयूंषितारीर
हानीवसूर्यावासराणि ॥ सोमराजन्मृळयानःस्वस्तितवस्मसिव्रत्याऽ३स्तस्यविद्धि । अलर्तिदक्षऽउतमन्युरिंदोमानोऽ
अर्योऽअनुकामंपरादाः ॥ त्वंहिनस्तन्वःसोमगोपागात्रेगात्रेनिषसत्थानृचक्षाः । यत्तेवयंप्रमिनामव्रतानिसनोमृळसु
षखादेववस्यः ॥ ऋदूदरेणसख्यासचेययोमानरिष्येद्धर्यश्वपीतः । अयंयःसोमोन्यधाय्यस्मेतस्माऽइंद्रंप्रतिरमेम्यायुः
॥ १२ ॥ अपत्याऽअस्थुरनिराऽअमीवानिरत्रसन्तमिषीचीरभैषुः । आसोमोऽअस्माँऽअरुहद्विहायाऽअगन्मयत्रप्र
तिरंतऽआयुः ॥ योनऽइंदुःपितरोहृत्सुपीतोमर्त्योमर्त्याँऽआविवेश । तस्मैसोमायहविषाविधेममृळीकेऽअस्यसुमतौ
स्याम ॥ त्वंसोमपितृभिःसंविदानोनुद्यावापृथिवीऽआततंथ । तस्मैतऽइंदोहविषाविधेमवयंस्यामपतयोरयीणां+ ॥

त्रातारोदेवाऽअधिवोचतानोमानोनिद्राऽईशतमोतजल्पिः । वयंसोमस्यविश्वहप्रियासःसुवीरासोविदथमावदेम ॥ त्वंनःसोमविश्वतोवयोधास्त्वंस्वर्विदाविशानृचक्षाः । त्वंनऽइंदऽऊतिभिःसजोषाःपाहिपश्चातादुतवापुरस्तात् ॥ १३ ॥ (अथवालखिल्यानि ॥ (१) अभिप्रवःसुराधसमिंद्रमर्चयथाविदे । योजरितृभ्योमघवापुरूवसुःसहस्रेणेवशिक्षति ॥ शतानीकेवप्रजिगातिधृष्णुयाहंतिवृत्राणिदाशुषे । गिरेरिवप्ररसाऽअस्यपिन्विरेदत्राणिपुरुभोजसः ॥ आत्वासुतासऽइंदवोमदायऽइंद्रगिर्वणः । आपोनवज्रिन्नन्वोक्यं१सरःपृणंतिशूरराधसे ॥ अनेहसंप्रतरणंविवक्षणंमध्वःस्वादिष्ठमींपिब । आयथामंदसानःकिरासिनःप्रक्षुद्रेवत्मनाधृषत् ॥ आनःस्तोममुपद्रवद्धियानोऽअश्वोनसोतृभिः । यंतेस्वधावन्त्स्वदयंतिधेनवऽइंद्रकण्वेषुरातयः ॥ १४ ॥ उग्रंनवीरंनमसोपसेदिमविभूतिमक्षितावसुं । उद्रीवबज्रि

१ अथैकादशसूक्तात्मकंवालखिल्याख्यंभागंपाठकाअस्मिन्नध्यायेपठंति सवेदपारायणादौनेष्यते खिलत्वात् ।—"सूक्तसहस्रंससप्तदशकमृग्वेदेपारायणपाठेशाकल्ये" इत्यत्रसिद्धान्तितायाःसप्तदशाधिकसहस्रसूक्तसंख्यायाःखिलरहितसंहितयेवपूर्तेश्च । यश्चसर्वानुक्रमण्यामेषामनुक्रमोदृश्यतेसविचारणीयोवैदिकधुरीणैः । सत्यप्येवमेषांपारायणादौनिषेधेऽध्ययनाध्यापनादावृष्यादिज्ञानंश्रेयोहेतुरित्यभिप्रेत्य दृष्टसर्वानुक्रमानुसारेणसूक्तप्रतीकाद्यंलिख्यते ।

(१) अभिप्रेतिदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वइंद्रःअयुजोबृहत्योयुजःसतोबृहत्यः ।

न्नवतोनसिंचतेक्षरंतींद्रधीतयः ॥ यद्धनूनंयद्वायज्ञेयद्वापृथिव्यामधि । अतोनोयज्ञमाशुभिर्महेमतऽउग्रऽउग्रेभिराग हि ॥ अजिरासोहरयोयेतऽआशवोवाताऽइवप्रसक्षिणः । येभिरपत्यंमनुषःपरीयसेयेभिर्विश्वंस्वर्दृशे ॥ एतावतस्तऽईमहऽइंद्रसुम्नस्यगोमतः । यथाप्रावोमघवन्मेध्यातिथिंयथानीपातिथिंधने ॥ यथाकण्वेमघवन्त्रसदस्यवियथापक्थे दशव्रजे । यथागोशर्येऽअसनोर्ऋजिश्वनींद्रगोमद्धिरण्यवत् ॥ १५ ॥ (२) प्रसुश्रुतंसुराधसमर्चाशक्रमभिष्टये । यःसुन्वतेस्तुवतेकाम्यंवसुसहस्रेणेवमंहते ॥ शतानीकाहेतयोऽअस्यदुष्टराऽइंद्रस्यसमिषोमहीः । गिरिर्नभुज्मामघवत्सुपिन्वतेयदींसुताऽअमंदिषुः ॥ यदींसुतासऽइंदवोभिप्रियममंदिषुः । आपोनधायिसवनंमऽआवसोदुघाऽइवोपदाशुषे ॥ अनेहसंवोहवमानमूतयेमध्वःक्षरंतिधीतयः । आत्वावसोहवमानासऽइंदवऽउपस्तोत्रेषुदधिरे ॥ आनःसोमेस्वध्वरऽइयानोऽअत्योनतोशते । यंतेस्वदावन्त्स्वदंतिगूर्तयःपौरेछंदयसेहवे ॥ १६ ॥ प्रवीरमुग्रंविविचिंधनस्पृतंविभूतिंराधसोमहः । उद्रीवंवज्रिन्नवतोवसुत्वनासदापीपेथदाशुषे ॥ यद्धनूनंपरावतियद्वापृथिव्यांदिवि । युजानऽइंद्रहरिभिर्महेमतऽऋष्वऽऋष्वेभिरागहि ॥ रथिरासोहरयोयेतेऽअस्रिधऽओजोवातस्यपिप्रति । येभिर्निदस्युंमनुषोनिघोषयोयेभिःस्वःपरीयसे ॥ एतावतस्तेवसोविद्यामशूरनव्यसः । यथाप्रावऽएतशंकृत्व्येधनेयथावशंदशव्रजे ॥

(२) प्रसुश्रुतमितिदशर्चस्यसूक्तस्यपुष्टिगुरिंद्रःअयुजोबृहत्योयुजःसतोबृहत्यः ।

यथाकण्वेमघवन्मेधेऽअध्वरेदीर्घनीथेदमूनसि । यथागोशर्येऽअसिषासोऽअद्रिवोमयिगोत्रंहरिश्रियं ॥ १७ ॥ (३) यथामनौसांवरणौसोममिंद्रापिबःसुतं । नीपातिथौमघवन्मेध्यातिथौपुष्टिगौश्रुष्टिगौसचा ॥ पार्षद्वाणःप्रस्कण्वंसमसादयच्छयानंजिव्रिमुद्धितं । सहस्राण्यसिषासद्गवामृषिस्त्वोतोदस्यवेवृकः ॥ यऽउक्थेभिर्नविंधतेचिकिद्यऽऋषिचोदनः । इंद्रंतमच्छावदनव्यस्यामत्यरिष्यंतंनभोजसे ॥ यस्माऽअर्कंसप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमेपदे । सत्विमाविश्वाभुवनानिचिक्रदद्दादिज्जनिष्टपौंस्यं ॥ योनोदातावसूनामिंद्रंतंहूमहेवयं । विद्माह्यस्यसुमतिंनवीयसींगमेमगोमतिव्रजे ॥ १८ ॥ यस्मैत्वंवसोदानायशिक्षसिसरायस्पोषमश्नुते । तंत्वावयंमघवन्निंद्रगिर्वणःसुतावंतोहवामहे ॥ कुदाचनस्तरीरसिनेंद्रसश्चसिदाशुषे । उपोपेन्नुमघवन्भूयऽइन्नुतेदानंदेवस्यपृच्यते ॥ प्रयोननक्षेऽअभ्योजसाक्रिविंवधैःशुष्णंनिघोषयन् । यदेदस्तंभीत्प्रथयन्नमूंदिवमादिज्जनिष्टपार्थिवः ॥ यस्यायंविश्वऽआर्योदासःशेवधिपाऽअरिः । तिरश्चिदर्येरुशमेपवीरवितुभ्येत्सोऽअज्यतेरयिः ॥ तुरण्यवोमधुमंतंघृतश्चुतंविप्रासोऽअर्कमानृचुः । अस्मेरयिःपप्रथेवृष्ण्यंशवोस्मेसुवानासऽइंदवः ॥ १९ ॥ (४) यथामनौविवस्वतिसोमंशक्रापिबःसुतं । यथात्रितेछंदऽइंद्रजुजो

(३) यथामनावितिदशर्चस्यसूक्तस्यश्रुष्टिगुरिंद्रःअयुजोबृहत्योयुजःसतोबृहत्यः । (४) यथामनावितिदशर्चस्यसूक्तस्यायुरिंद्रः अयुजोबृहत्योयुजःसतोबृहत्यः ।

षस्यायौमादयसेसचा ॥ पृषध्रेमेध्यैमातरिश्वनींद्रसुवानेऽअमंदथाः । यथासोमंदशशिप्रेदशौण्येस्यूमरश्मावृजूनसि ॥
यऽउक्थाकेवलादधेयःसोमंधृषितापिबत् । यस्मैविष्णुस्त्रीणिपदाविचक्रमऽउपमित्रस्यधर्मभिः ॥ यस्यत्वमिंद्रस्तोमे
षुचाकनोवाजेवाजिन्छतक्रतो । तंत्वावयंसुदुघामिवगोदुहोजुहूमसिश्रवस्यवः ॥ योनोदातासनःपितामहाँऽउग्रऽई
शानकृत् । अयामन्नुग्रोमघवापुरूवसुर्गोरश्वस्यप्रदातुनः ॥ २० ॥ यस्मैत्वंवसोदानायमंहसेसरायस्पोषमिन्वति ।
वसूयवोवसुपतिंशतक्रतुंस्तोमैरिंद्रंहवामहे ॥ कदाचनप्रयुच्छस्युभेनिपासिजन्मनी । तुरीयादित्यहवनंतऽइंद्रियमात
स्थावमृतंदिवि ॥ यस्मैत्वंमघवन्निंद्रगिर्वणःशिक्षोशिक्षसिदाशुषे । अस्माकंगिरऽउतसुष्टुतिंवसोकण्ववच्छृणुधीहवं ॥
अस्ताविमन्मपूर्व्यंब्रह्मेंद्रायवोचत । पूर्वीर्ऋतस्यबृहतीरनूषतस्तोतुर्मेधाऽअसृक्षत ॥ समिंद्रोरायोबृहतीरधूनुतसंक्षो
णीसमुसूर्यं । संशुक्रासःशुचयःसंगवाशिरःसोमाऽइंद्रममंदिषुः ॥ २१ ॥ ( ५ ) उपमंत्वामघोनांज्येष्ठंचवृषभाणां ।
पूर्भित्तमंमघवन्निंद्रगोविदमीशानंरायऽईमहे ॥ यऽआयुंकुत्समतिथिग्वमर्दयोवावृधानोदिवेदिवे । तंत्वावयंहर्यश्वं
शतक्रतुंवाजयंतोहवामहे ॥ आनोविश्वेषांरसंमध्वःसिंचंत्वद्रयः । येपरावतिसुन्विरेजनेष्वायेऽअर्वावतींदवः ॥ वि
श्वाद्वेषांसिजहिचावचाकृधिविश्वेसन्वंत्वावसु । शीष्टेषुचित्तेमदिरासोऽअंशवोयत्रासोमस्यतृंपसि ॥ २२ ॥ इंद्रने



( ५ ) उपमंत्वेत्यष्टर्चस्यसूक्तस्यमेध्यइंद्रःअयुजोबृहत्योयुजःसतोबृहत्यः ।

दीयऽएदेंहिमितमेंधाभिरूतिभिंः । आशंतमशंतंमाभिरभिष्टिभिरास्वापेस्वापिभिंः ॥ आजितुरंसत्पतिंविश्वचर्षणिं कृधिप्रजास्वाभंगं । प्रसूतिंराशचींभिर्येतंऽउक्थिनःक्रतुंपुनतऽआनुषक् ॥ यस्तेसाधिष्ठोवसेतेस्यामभरेंषुते । वयंहोत्राभिरुतदेवहूतिभिःससवांसोमनामहे ॥ अहंहितेंहरिवोब्रह्मवाजयुराजिंयामिसदोतिभिंः । त्वामिदेवतमस्सेसमश्वयुर्गव्युरग्रेमथीनां ॥ २३ ॥ ( ६ ) एतत्तंऽइंद्रवीर्यंगीभिंर्गृणंतिंकारवंः । तेस्तोभंतऽऊर्जमावन्घृतश्चुतंपौरासोनक्षन्धीतिभिंः ॥ नक्षंतऽइंद्रमवंसेसुकृत्ययायेषांसुतेषुमंदसे । यथांसंवर्तेऽअमंदोयथांकृशऽएवास्मेऽइंद्रमत्स्व ॥ आनोविश्वैंसजोषंसोदेवासोगंतनोपंनः । वसंवोरुद्राऽअवंसेनऽआगंमन्छृण्वंतुंमरुतोहवं ॥ पूषाविष्णुर्हवंनंमेसरंस्वत्यवंतुसप्तसिंधवः । आपोवातःपर्वतासोवनस्पतिंःश्रृणोतुंपृथिवीहवं ॥ २४ ॥ यदिंद्रराधोऽअस्तितेमाघोंनंमघवत्तम । तेनंनोबोधिसधमाद्योंवृधेभगोंदानायंवृत्रहन् ॥ आजिंपतेनृपतेत्वमिद्धिनोवाजऽआवंक्षिसुक्रतो । वीतीहोत्राभिरुतदेववींतिभिःससवांसोविशृंण्विरे ॥ संतिह्यं१र्यऽआशिषऽइंद्रऽआयुर्जनानां । अस्मान्नंक्षस्वमघवन्नुपावंसेधुक्षस्वंपिप्युषीमिषं ॥ वयंतंऽइंद्रस्तोमेंभिर्विधेमत्वमस्माकंशतक्रतो । महिंस्थूरंशंशयंराधोऽअह्रयंप्रस्कंण्वायनितोंशय ॥ २५ ॥

---

( ६ ) एतत्तइत्यष्टर्चस्यसूक्तस्यमातरिश्वा ... अयुजोबृहत्योयुजःसतोबृहत्यः ।

( ७ ) भूरीदिंद्रस्यवीर्यं१व्यख्यंमभ्यायति । राधस्तेदस्यवेवृक ॥ शतंश्वेतासऽउक्षणोदिवितारोनरोचंते । मह्नादिवंनतस्तभुः ॥ शतंवेणूञ्छतंशुनःशतंचर्माणिम्लातानि । शतंमेबल्बजस्तुकाऽअरुषीणांचतुःशतं ॥ सुदेवाःस्थकाण्वायनावयोवयोविचरंतः । अश्वासोनचंक्रमत ॥ आदित्साप्तस्यचर्किरन्नानूनस्यमहिश्रवः । श्यावीरतिध्वसन्पथश्चक्षुषाचनसंनशे ॥ २६ ॥ ( ८ ) प्रतितेदस्यवेवृकराधोऽअदर्श्यह्रयं । द्यौर्नप्रथिनाशवः ॥ दशमह्यंपौतक्रतःसहस्रादस्यवेवृकः । नित्याद्रायोऽअंमहत ॥ शतंमेगर्दभानांशतमूर्णावतीनां । शतंदासाँऽअतिस्रजः ॥ तत्रोऽअपिप्राणीयतपूतक्रतायैव्यक्ता । अश्वानामिन्नयूथ्यां* ॥ अचेत्यग्निश्चिकितुर्हव्यवाट्ससुमद्रथः । अग्निःशुक्रेणशोचिषाबृहत्सूरोऽअरोचतदिविसूर्योऽअरोचत ॥ २९ ॥ ( ९ ) युवंदेवाक्रतुनापूर्व्येणयुक्तारथेनतविषंयजत्रा । आगच्छतंनासत्याशचीभिरिदंतृतीयंसवनंपिबाथः ॥ युवांदेवास्त्रयऽएकादशासःसत्याःसत्यस्यदहशेपुरस्तात् । अस्माकंयज्ञंसवनंजुषाणापातंसोममश्विनादीद्यग्नी ॥ पनाय्यंतदश्विनाकृतंवांवृषभोदिवोरजसःपृथिव्याः । सहस्रंशंसाऽउतयेगविष्टौसर्वाँऽइत्ताँऽउपयातापिबध्यै ॥ अयंवांभागोनिहितोयजत्रेमागिरोनासत्योपयातं । पिबतंसोमंमधुमंतमस्मेप्रदा



---

( ७ ) भूरीदितिपंचर्चस्यसूक्तस्यकृशइंद्रोगायत्रीतृतीयापंचम्यावनुष्टुभौ । ( ८ ) प्रतितइतिपंचर्चस्यसूक्तस्यपृषध्रइंद्रोंत्यायाअग्निसूर्यौगायत्र्यंत्यापंक्तिः । ( ९ ) युवंदेवेतिचतुर्ऋचस्यसूक्तस्यमेध्योश्विनौत्रिष्टुप् ।

श्वांसंमवतंशचींभिः ॥ २८ ॥ ( १० ) यमृत्विजोंबहुधाकल्पयंतः सचेतसोयज्ञमिमंवहंति । योऽअंनूचानोब्राह्मणो युक्तऽआंसीत्कास्वित्तत्रयजंमानस्यसंवित् ॥ एकंऽएवाग्निर्बहुधासमिद्धऽएकः सूर्योविश्वमनुप्रभूतः । एकैवोषाः सर्वमिदंविभात्येकंवाऽइदंविबंभूवसर्वं ॥ ज्योतिष्मंतंकेतुमंतंत्रिचक्रंसुखंरथंसुषदंभूरिवारं । चित्रामघायस्ययोगेंधिजज्ञे तंवांहुवेऽअतिरिक्तंपिबंध्यै ॥ २९ ॥ ( ११ ) इमानिवांभागधेयांनिसिस्रतऽइंद्रावरुणाप्रमहेसुतेषुवां । यज्ञेयंज्ञेहसवंनाभुरण्यथोयत्सुन्वतेयजंमानायशिक्षंथः ॥ निःषिध्वरीरोषंधीरापंऽआस्तामिंद्रावरुणामहिमानंमाशत । यासिस्रतूरजंसः पारेऽअध्वंनोययोः शत्रुर्नकिरादेवऽओहंते ॥ सत्यंतदिंद्रावरुणाकृशस्यवांमध्वंऽऊर्मिंदुहतेसप्तवाणीः । ताभिर्दाश्वांसंमवतंशुभस्पतीयोवामदंब्धोऽअभिपातिचित्तिभिः ॥ घृतप्रुषः सौम्यांजीरदानवः सप्तस्वसांरः सदंनऽऋतस्यं । याहंवामिंद्रावरुणाघृतश्चुतस्ताभिर्धत्तंयजंमानायशिक्षतं ॥ ३० ॥ अवोचाममहतेसौभंगायसत्यंत्वेषाभ्यांमहिमानंमिंद्रियं । अस्मान्त्स्विंद्रावरुणाघृतश्चुतस्त्रिभिः साप्तेभिरवतंशुभस्पती ॥ इंद्रावरुणायदृषिभ्योमनीषांवाचोमतिंश्रुतमंदत्तमग्रें । यानिस्थानांन्यसृजंतधीरांयज्ञंतन्वानास्तपंसाभ्यंपश्यं ॥ इंद्रावरुणासौमनसमदृप्तंरायस्पोषंयजंमा

---

( १० ) यमृत्विजइतितृचस्यसूक्तस्यमेध्योविश्वेदेवास्त्रिष्टुप् ( आद्यायाऋत्विजोदेवतावा ) । ( ११ ) इमानिवामितिसप्तर्चस्यसूक्तस्यसुपर्णइंद्रावरुणौजगती ।

नेषुधत्तं । प्रजापुष्टिंभूतिमस्मासुधत्तंदीर्घायुत्वायप्रतिंरतंनऽआयुः ॥ ३१ ॥ इतिवालखिल्यानि ॥ ) ( ८।७।१ )
अग्नऽआयांह्यग्निभिर्होतांरंत्वावृणीमहे । आत्वामंनक्तुप्रयंताहविष्मंतीयजिष्ठंबर्हिरासदे ॥ अच्छाहित्वांसहसःसूनो
ऽअंगिरःस्रुचश्चरंत्यध्वरे । ऊर्जोनपांतंघृतकेशमीमहेग्निंयज्ञेषुपूर्व्यं+ ॥ अग्नेंकविर्वेधाऽअंसिहोतांपावकयक्ष्यः । मं
द्रोयजिष्ठोऽअध्वरेष्वीड्योविप्रेंभिःशुक्रमन्मंभिः ॥ अद्रोंघमावंहोशतोयंविष्ठ्यदेवाँऽअंजस्रवीतयें । अभिप्रयांसिसु
धितावसोगहिमंदस्वधीतिभिर्हितः+ ॥ त्वमित्सप्रथांऽअस्यग्नेत्रातर्ऋतस्कविः । त्वांविप्रांसःसमिधानदीदिवऽआविं
वासंतिवेधसः ॥ ३२ ॥ शोचांशोचिष्ठदीदिहिविशेमयोरास्वंस्तोत्रेमहाँऽअंसि । देवानांशर्मन्ममसंतुसूरयंःशत्रूषाहंः
स्वग्नयंः ॥ यथांचिद्वृद्धमंतसमग्नेसंजूर्वसिक्षमि । एवादंहमित्रमहोयोऽअस्मध्रुग्दुर्मन्माकश्चवेनंति ॥ मानोमर्तायरि
पवेरक्षस्विनेमाघशंसायरीरधः । अस्रेंधद्भिस्तरणिभिर्यविष्ठ्यशिवेभिःपाहिपायुभिः ॥ पाहिनोंऽअग्नऽएकंयापाह्युं१
तद्वितीयंया । पाहिगीर्भिस्तिसृभिरूर्जांपतेपाहिचंतसृभिर्वसो ॥ पाहिविश्वंस्माद्रक्षसोऽअराव्णःप्रस्मवाजेषुनोव ।
त्वामिद्धिनेदिष्ठंदेवतांतयऽआपिंनक्षांमहेवृधे+ ॥ ३३ ॥ आनोंऽअग्नेवयोवृधंरयिंपांवकशंस्यं । रास्वांचनऽउपमा
तेपुरुस्पृहंसुनीतीस्वयंशस्तरं ॥ येनवंसांमपृतंनासुशर्धतस्तरंतोऽअर्यऽआदिशंः । सत्वंनोवर्धप्रयंसाशचीवसोजिन्वा



---



सप्तमेनुवाकेदशसूक्तानि ( ८।७।१ ) अग्नआयाहीतिविंशत्यृचस्यसूक्तस्यप्रागाथोभर्गोग्निःअयुजोबृहत्योयुजःसतोबृहत्यः ।

धियोवसुविदः ॥ शिशानोवृषभोयथाग्निःश्रृंगेदविध्वत् । तिग्माऽअस्यहनवोनप्रतिधृषेसुजंभःसहसोयहुः ॥ नहि तेऽअग्नेवृषभप्रतिधृषेजंभासोयद्वितिष्ठसे । सत्वंनोहोतःसुहुतंहविष्कृधिवंस्वानोवार्यापुरु ॥ शेषेवनेषुमात्रोःसंत्वा मर्तासइंधते । अतंद्रोहव्यावहसिहविष्कृतऽआदिद्देवेषुराजसि ॥ २४ ॥ सप्तहोतारस्तमिदीळतेत्वाग्नेसुत्यजमह्रयं । भिनत्स्यद्रिंतपसाविशोचिषाप्राग्नेतिष्ठजनाँऽअति ॥ अग्निमग्निंवोऽअध्रिगुंहुवेमवृक्तबर्हिषः । अग्निंहितप्रयसःशश्वती ष्वाहोतारंचर्षणीनां ॥ केतेनशर्मन्त्सचतेसुषामण्यग्नेतुभ्यंचिकित्वना । इषण्ययानःपुरुरूपमाभरवाजंनेदिष्ठमूतये ॥ अग्नेजरितर्विश्पतिस्तेपानोदेवरक्षसः । अप्रोषिवान्गृहपतिर्महाँऽअसिदिवस्पायुर्दुरोणयुः ॥ मानोरक्षऽआवेशीदा घृणीवसोमायातुर्यातुमावतां । परोगव्यूत्यनिरामपक्षुधमग्नेसेधरक्षस्विनः ॥ २५ ॥ ( ८।७।२ ) उभयंशृणवच्चनऽइं द्रोऽअर्वागिदंवचः । सत्राच्यामघवासोमपीतयेधियाशविष्ठऽआगमत् ॥ तंहिस्वराजंवृषभंतमोजसेधिषणेनिष्टतक्ष तुः । उतोपमानांप्रथमोनिषीदसिसोमकामंहितेमनः ॥ आवृषस्वपुरूवसोसुतस्येंद्रांधसः । विद्माहित्वाहरिवःपृत्सुसा सहिमधृष्टंचिद्धृष्वणिं ॥ अप्रामिसत्यमघवन्तथेदसदिंद्रक्रत्वायथावशः । सनेमवाजंतवशिप्रिन्नवसामक्षूचिद्यंतोऽ अद्रिवः ॥ शग्ध्यूषुशचीपतऽइंद्रविश्वाभिरूतिभिः । भगंनहित्वायशसंवसुविदमनुशूरचरामसि ॥ २६ ॥ पौरोऽ



( ८।७।२ ) उभयमित्यष्टादशर्चस्यसूक्तस्यप्रागाथोभर्गइंद्रः अयुजोबृहत्योयुजःसतोबृहत्यः ।

अश्वस्यपुरुकृद्गवामस्युत्सोदेवहिरण्ययः । नकिर्हिदानंपरिमर्धिषत्त्वेयद्यद्यामितदाभर ॥ त्वंह्येहिचेरवेविदाभगंवसुत्तये । उद्वावृषस्वमघवन्गविष्टयउदिंद्राश्वमिष्टये ॥ त्वंपुरूसहस्राणिशतानिचयूथादानायमंहसे । आपुरंदरंचकृमविप्रवचसइंद्रंगायंतोवसे ॥ अविप्रोवायदविधद्विप्रोवेंद्रतेवचः । सप्रममंदत्त्वायाशतक्रतोप्राचामन्योअहंसन ॥ उग्रबाहुर्म्रक्षकृत्वापुरंदरोयदिमेशृणवद्धवं । वसूयवोवसुपतिंशतक्रतुंस्तोमैरिंद्रंहवामहे ॥ ३७ ॥ नपापासोमनामहेनारायासोनजल्हवः । यदिन्न्विंद्रंवृषणंसचासुतेसखायंकृणवामहै ॥ उग्रंयुयुज्मपृतनासुसासहिमृणकातिमदाभ्यं । वेदाभृमंचित्सनितारथीतमोवाजिनंयमिदूनशत् ॥ यतइंद्रभयामहेततोनोअभयंकृधि । मघवन्छग्धितवतन्नऊतिभिर्विद्विषोविमृधोजहि ॥ त्वंहिराधस्पतेराधसोमहःक्षयस्यासिविधतः । तंत्वावयंमघवन्निंद्रगिर्वणःसुतावंतोहवामहे ॥ इंद्रःस्पळुतवृत्रहापरस्पानोवरेण्यः । सनोरक्षिषच्चरमंसमध्यमंसपश्चात्पातुनःपुरः ॥ ३८ ॥ त्वंनःपश्चादधरादुत्तरात्पुरइंद्रनिपाहिविश्वतः । आरेअस्मत्कृणुहिदैव्यंभयमारेहेतीरदेवीः ॥ अद्याद्याश्वःश्वइंद्रत्रास्वपरेचनः । विश्वाचनोजरितृन्त्सत्पतेअहादिवानक्तंचरक्षिषः ॥ प्रभंगीशूरोमघवातुवीमघःसंमिश्लोवीर्यायकं । उभातेबाहूवृषणाशतक्रतोनियावज्रंमिमिक्षतुः ॥ ३९ ॥ ( ८।७।३ ) प्रोअस्माउपस्तुतिंभरतायज्जुजोषति । उक्थैरिंद्र



( ८।७।३ ) प्रोअस्माइतिद्वादशर्चस्यसूक्तस्यकाण्वःप्रगाथइंद्रःपंक्तिःसप्तम्याद्यास्तिस्रोबृहत्यः ।

स्यमाहिंनवयोवर्धतिसोमिनोभद्राऽइंद्रस्यरातयः ॥ अयुजोऽअसमोनृभिरेकः कृष्टीरयास्यः । पूर्वीरतिप्रवावृधेविश्वा
जातान्योजसाभद्रा० ॥ अहितेनचिदर्वताजीरदानुःसिषासति । प्रवाच्यमिंद्रतत्तववीर्याणिकरिष्यतोभद्रा० ॥
आयाहिकृणवामतऽइंद्रब्रह्माणिवर्धना । येभिःशविष्ठचाकनोभद्रमिहश्रवस्यतेभद्रा० ॥ धृषताश्चिद्धृषन्मनः कृणोषि
द्रयत्त्वं । तीव्रैःसोमैःसपर्यतोनमोभिःप्रतिभूषतोभद्रा० ॥ अवचष्टऽऋचीषमोवताँऽइवमानुषः । जुष्टीदक्षस्यसोमि
नःसखायंकृणुतेयुजंभद्रा० ॥ ४० ॥ विश्वेतऽइंद्रवीर्यंदेवाऽअनुक्रतुंददुः । भुवोविश्वस्यगोपतिःपुरुष्टुतभद्रा० ॥
गृणेतदिंद्रतेशवऽउपमंदेवतातये । यद्धंसिवृत्रमोजसाशचीपतेभद्रा० ॥ समनेववपुष्यतःकृणवन्मानुषायुगा । विदे
तदिंद्रश्चेतनमधश्रुतोभद्रा० ॥ उज्जातमिंद्रतेशवऽउत्त्वामुत्तवक्रतुं । भूरिगोभूरिवावृधुर्मघवन्तवशर्मणिभद्रा० ॥
अहंचत्वंचवृत्रहन्त्संयुज्यावसनिभ्यऽआ । अरातीवाचिदद्रिवोनुनौशूरमंसतेभद्रा० ॥ सत्यमिद्वाऽउतंवयमिंद्रंस्तवा
मनानृतं । महाँऽअसुन्वतोवधोभूरिज्योतींषिसुन्वतोभद्रा० ॥ ४१ ॥ ( ८।७।४ ) सपूर्व्योमहानांवेनःक्रतुभिरान
जे । यस्यद्वारामनुष्पितादेवेषुधियऽआनजे+ ॥ दिवोमानंनोत्सदन्त्सोमपृष्ठासोऽअद्रयः । उक्थाब्रह्मचशंस्या ॥
सविद्वाँऽअंगिरोभ्यऽइंद्रोगाऽअवृणोदप । स्तुषेतदस्यपौंस्यं ॥ सप्रत्नथाकविवृधऽइंद्रोवाकस्यवक्षणिः । शिवोऽअर्क

( ८।७।४ ) सपूर्व्यइतिद्वादशर्चस्यसूक्तस्यकाण्वःप्रगाथइंद्रोदेवतायाद्यागायत्रीआद्याचतुर्थीपंचमीसप्तम्योनुष्टुभःअंत्यात्रिष्टुप् ।

स्यहोमन्यस्मत्रागंस्त्ववंसे ॥ आदूनुतेऽअनुक्रतुंस्वाहावरंस्ययज्यंवः । श्वात्रमर्काऽअंनूषतेंद्रंगोत्रस्यंदावनें ॥ इंद्रेंवि श्वांनिवीर्यांकृतानिकर्त्वांनिच । यमर्काऽअंध्वरंविदुः+ ॥ ४२ ॥ यत्पांचजन्ययाविशेंद्रेघोषाऽअसृंक्षत । अस्तृंणाद्ब र्हणाविपोइयोंमानंस्यसक्षयंः ॥ इयमुंतेऽअनुंष्टुतिश्चकृषेतानिपौंस्यां । प्रावंश्चक्रस्यंवर्तनिं+ ॥ अस्यवृष्णोव्योदंनऽउ रुक्रमिष्टजीवसें । यवंनपश्वऽआदंदे ॥ तद्दधानाऽअवस्यवोंयुष्माभिर्दक्षपितरः । स्याममरुत्वंतोवृधे+ ॥ बळृत्वियां यधाम्नऽऋक्वंभिःशूरनोनुमः । जेषांमेंद्रत्वयांयुजा+ ॥ अस्मेरुद्रामेंहनापर्वतासोवृत्रहत्येभरंहूतौसजोषांः । यःशंसंते स्तुवतेधायिपज्रऽइंद्रज्येष्ठाऽअस्माँऽअंवंतुदेवाः+ ॥ ४३ ॥ ( ८।७।५ ) उत्त्वांमंदंतुस्तोमांःकृणुष्वराधोंऽअद्रिवः । अवंब्रह्मद्विषोंजहि ॥ पदापणीँऽरंराधसोनिबांधस्वमहाँऽअंसि । नहित्वाकश्चनप्रतिं ॥ त्वमींशिषेसुतानामिंद्रत्वमसुं तानां । त्वंराजाजनांनां ॥ एहिप्रेहिक्षयोंदिव्याइघोषंन्चर्षणीनां । ओभेपृंणासिरोदंसी ॥ त्यंचित्पर्वतंगिरिंशतवंतंस हस्रिणं । विस्तोतृभ्योंरुरोजिथ ॥ वयमुंत्वादिवासुतेवयंनक्तंहवामहे । अस्माकंकाममापृंण ॥ ४४ ॥ क्व१स्यवृंषभो युवांतुविग्रीवोऽअनांनतः । ब्रह्माकस्तंसंपर्यति ॥ कस्यंस्वित्सवनंवृषांजुजुष्वाँऽअवंगच्छति । इंद्रंकऽउंस्विदाचंके ॥ कंतेंदानाऽअंसक्षतवृत्रहन्कंसुवीर्या । उक्थेकऽउंस्विदंतमः ॥ अयंतेमानुंषेजनेसोमंःपूरुषुसूयते । तस्येहिप्रद्रंवापि

( ८।७।५ ) उत्त्वामंदंत्विति द्वादशर्चस्यसूक्तस्यकाण्वःप्रगाथइंद्रोगायत्री ।

र्बं ॥ अयंतेंशर्य्यणार्वतिसुषोमायामधिंप्रियः । आर्जीकीर्येमदिन्तंमः ॥ तमद्यराधंसेमहेचारुंमदायघृष्वंये । एहींमिंद्र द्रवापिबं ॥ ४५ ॥ ( ८।७।६ ) यदिंद्रप्रागपागुदङ्न्यंग्वाहूयसेनृभिंः । आयांहितूयंमाशुभिंः ॥ यद्वांप्रस्रवंणेदि वोमादयांसेस्वंर्णरे । यद्वांसमुद्रेऽअंधंसः ॥ आत्वांगीभिंर्महामुरुंहुवेगामिंवभोजंसे । इंद्रसोमंस्यपीतयें ॥ आतंऽइं द्रमहिमानंहरंयोदेवतेमहंः । रथेंवहंतुबिभ्रंतः ॥ इंद्रंगृणीषऽउंस्तुषेमहाँऽउग्रऽईशानकृत् । एहिंनःसुतंपिबं ॥ सुतावंतस्त्वावयंप्रयंस्वंतोहवामहे । इदंनोबर्हिरासदें ॥ ४६ ॥ यच्चिद्धिशश्वंतामसींद्रसाधारणस्त्वम् । तंत्वांवयंहं वामहे ॥ इदंतेंसोम्यंमध्वधुंक्षन्नद्रिंभिर्नरंः । जुषाणऽइंद्रतत्पिंब ॥ विश्वाँऽअर्योविपश्चितोतिंख्यस्तूयमागंहि । अ स्मेधेंहिश्रवोंबृहत्⁺ ॥ दातामेपृषंतीनांराजांहिरण्यवीनां । मादेवामघवांरिषत् ॥ सहस्रेपृषंतीनामधिंश्चंद्रंबृहत्पृथु । शुक्रंहिरंण्यमादंदे ॥ नपांतोदुर्गहंस्यमेसहस्रेंणसुराधंसः । श्रवोंदेवेष्वंक्रत ॥ ४७ ॥ ( ८।७।७ ) तरोंभिर्वोविदद्वं सुमिंद्रंसबाधऽऊतयें । बृहद्गायंतःसुतसोंमेऽअध्वरेहुवेभरंनकारिणं ॥ नयंदुध्रावरंतेनस्थिरामुरोमदेंसुशिप्रमंधंसः । यऽआदृत्यांशशमानायंसुन्वतेदाताजरित्रऽउक्थ्यं* ॥ यःशक्रोमृक्षोऽअश्व्योयोवाकीजोंहिरण्ययंः । सऽऊर्वस्यंरेज

---

( ८।७।६ ) यदिंद्रेतिद्वादशर्चस्यसूक्तस्यकाण्वःप्रगाथइंद्रोगायत्री । ( ८।७।६ ) तरोभिरितिपंचदशर्चस्यसूक्तस्यप्रागाथःकलिरिंद्रः प्रथमादित्रयोदश्यंताअयुजोबृहत्यःद्वितीयादियुजःसतोबृहत्योंत्यानुष्टुप् ।

यत्वपावृतिमिंद्रोगव्यंस्यवृत्रहा+ ॥ निखातंचिद्यःपुरुसंभृतंवसूदिद्वपतिदाशुषे । वज्रीसुशिप्रोहर्यश्वऽइत्करदिंद्रःक्र
त्वायथावशत् ॥ यद्वावंथपुरुष्टुतपुराचिच्छूरनृणां । वयंतत्तंऽइंद्रसंभरामसियज्ञमुक्थंतुरंवचः ॥ ४८ ॥ सचासोमे
षुपुरुहूतवज्रिवोमदायद्युक्षसोमपाः । त्वमिद्धिब्रह्मकृतेकाम्यंवसुदेष्ठःसुन्वतेभुवः ॥ वयमेनमिदाह्योपीपेमेहवज्रिणं ।
तस्माऽउऽअद्यसमनासुतंभरानूनंभूषतश्रुते+ ॥ वृकश्चिदस्यवारणऽउरामथिरावयुनेषुभूषति । सेमंनःस्तोमंजुजुषाणऽ
आगहींद्रप्रचित्रयाधिया+ ॥ कदून्व1स्याकृतमिंद्रस्यास्तिपौंस्यं । केनोनुकंश्रोमतेननशुश्रुवेजनुषःपरिवृत्रहा+ ॥
कदूमहीरधृष्टाऽअस्यतविषीःकदुवृत्रघ्नोऽअस्तृतं । इंद्रोविश्वान्वेकनाटाँऽअहर्दृशऽउतक्रत्वापणीँऽरभि+ ॥ ४९ ॥
वयंघातेऽअपूर्व्यंद्रब्रह्माणिवृत्रहन् । पुरूतमासःपुरुहूतवज्रिवोभृतिंनप्रभरामसि ॥ पूर्वीश्चिद्धित्वेतुविकूर्मिन्नाशसोह
वंतऽइंद्रोतयः । तिरश्चिदर्यःसवनावसोगहिशविष्ठश्रुधिमेहवं ॥ वयंघातेत्वेऽइद्विंद्रविप्राऽअपिष्मसि । नहित्वद
न्यःपुरुहूतकश्चनमघवन्नस्तिमर्डिता+ ॥ त्वंनोऽअस्याऽअमतेरुतक्षुधो३भिशस्तेरवस्पृधि । त्वंनऽऊतीतवचित्रयाधि
याशिक्षाशचिष्ठगातुवित्+ ॥ सोमऽइद्वःसुतोऽअस्तुकलयोमाबिभीतन । अपेदेषध्वस्मायतिस्वयंघैषोऽअपायति
॥ ५० ॥ ( ८।७।८ ) त्यान्नुक्षत्रियाँऽअवऽआदित्यान्याचिषामहे । सुमृळीकाँऽअभिष्टये ॥ मित्रोनोऽअत्यंहतिंवरु

(८।७।८)त्यान्नित्येकविंशत्यृ.सू.सांमदोमत्स्यआदित्यादशम्यादितिस्तृणामदितिर्गायत्री(मैत्रावरुणिर्मान्योबहवोवामत्स्याजालनद्धाऋष.)

णःपर्षदर्यमा । आदित्यासोयथाविदुः+ ॥ तेषांहिचित्रमुक्थ्यं१वरूथमस्तिदाशुषे । आदित्यानामरंकृते ॥ महिवो
महतामवोवरुणमित्रार्यमन् । अवांस्यावृणीमहे ॥ जीवान्नोऽअभिधेतनादित्यासःपुराहथात् । कद्धस्थहवनश्रुतः
॥ ५१ ॥ यद्वःश्रांतायसुन्वतेवरूथमस्तियच्छर्दिः । तेनानोऽअधिवोचत ॥ अस्तिदेवाऽअंहोरुर्वस्तिरत्नमनागसः ।
आदित्याऽअद्भुतैनसः ॥ मानःसेतुःसिषेदयंमहेवृणक्तुनस्परि । इंद्रऽइद्धिश्रुतोवशी+ ॥ मानोमृचारिपूणांवृजिना
नामविष्यवः । देवाऽअभिप्रमृक्षत ॥ उतत्वामदितेमह्यहंदेव्युपब्रुवे । सुमृळीकामभिष्टये ॥ ५२ ॥ पर्षिदीनेगभीर
ऽआँऽउग्रपुत्रेजिघांसतः । माकिस्तोकस्यनोरिषत् ॥ अनेहोनऽउरुव्रजऽउरूचिविप्रसर्तवे । कृधितोकायजीवसे ॥
येमूर्धानःक्षितीनामदब्धासःस्वयशसः । व्रतारक्षंतेऽअद्रुहः ॥ तेनऽआस्नोवृकाणामादित्यासोमुमोचत । स्तेनंबद्ध
मिवादिते ॥ अपोषुणऽइयंशरुरादित्याऽअपदुर्मतिः । अस्मदेत्वजघ्नुषी ॥ ५३ ॥ शश्वद्धिवःसुदानवऽआदित्याऽ
ऊतिभिर्वयं । पुरानूनंबुभुज्महे ॥ शश्वंतंहिप्रचेतसःप्रतियंतंचिदेनसः । देवाःकृणुथजीवसे ॥ तत्सुनोनव्यंसन्यसऽ
आदित्यायन्मुमोचति । बंधाद्बद्धमिवादिते ॥ नास्माकमस्तितत्तरऽआदित्यासोऽअतिष्कदे । यूयमस्मभ्यंमृळत ॥
मानोहेतिर्विवस्वतऽआदित्याःकृत्रिमाशरुः । पुरानुजरसोवधीत् ॥ विषुद्वेषोव्यंहतिमादित्यासोविसंहितं । विष्व
ग्विवृहतारपः ॥ ५४ ॥ ॥ इतिषष्ठाष्टकेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥

चतुश्चत्वारिंशाध्यायेवर्गाः ५४ सूक्तानि ११ ऋचः १८८ ॥ त्यागः ॥ इंद्राये.२० पृथुश्रवस.४ वायव.४ पृथुश्रवसे.३ वायव. पृथुश्रवसे. आदित्येभ्य.१३ आदित्योषोभ्य.५ सोमाये.१५ अग्नय.२० इंद्राये.४१ देवेभ्य. इंद्राये.३९ आदित्येभ्य.९ अदित्या.३ आदित्येभ्य.९ ॥ इतिषष्ठेचतुर्थः ॥

आत्वैकोनाप्रियमेधआदावनुष्टुम्मुखास्तृचाश्चत्वारोंत्याःषळृक्षाश्वमेधयोर्दानस्तुतिःप्रप्रद्यूनानुष्टुभंद्विबृहत्यंतं द्वितीयोष्णिक्चतुर्थ्याद्यास्तिस्रोगायत्र्यःषोळश्येकादश्यौपंक्तीअपाद्वैश्वदेवोर्धर्चस्त्र्ययोवारुणायोराजापंचोनां पुरुहन्मावार्हतंत्रिप्रगाथाद्युष्णिगनुष्टुप्पुरउष्णिगंतंत्वंनःसुदीतिपुरुमीह्लौतयोर्वान्यतरआग्नेयंतुत्रिप्रगाथांतंह विर्ह्यूनाहर्यतःप्रागाथौहविषांस्तुतिर्वोदीराथांगोपवनआत्रेयःसप्तवध्रिर्वाश्विनंविशोविशोवःपंचोनाग्नेयंत्र्यनुष्टु म्मुखास्तृचाश्चत्वारोंत्यास्तिस्रोनुष्टुभआर्क्षस्यश्रुतर्वणोदानस्तुतिर्युक्ष्वाहिषोळशत्रिरूपइमंनुद्वादशकुरुसुतिःका ण्वोजज्ञानएकादशप्रगाथांतंपुरोळाशंदशबृहत्यंतमयंकृत्नुर्नवकृत्नुर्भार्गवःसौम्यसंत्यानुष्टुम्नंह्यन्यंदशकद्यूनोध सोगायत्रंत्यादैवीत्रिष्टुंवातूनोनवकुसीदीकाण्वः ॥ ५ ॥ ॥ ॥ ॥



॥ हरिःओम् ॥ ( ८।७।९ ) आत्वारथंयथोतयेसुम्नायवर्तयामसि । तुविकूर्मिमृतीषहमिंद्रशविष्ठसत्पते ॥ तु

---

(८।७।९)आत्वेत्येकोनविंशत्यृचस्यसूक्तस्यांगिरसःप्रियमेधइंद्रश्चतुर्दश्यादिषण्णामृक्षाश्वमेधयोर्गायत्रीआद्याचतुर्थीसप्तमीदशम्योनुष्टुभः ।

विशुष्मतुर्विंक्रतोशचीवोविश्वयामते । आपप्राथमहित्वना+ ॥ यस्यतेमहिनामहःपरिज्मायंतमीयतुः । हस्तावज्रंहि रण्ययं ॥ विश्वानरस्यवस्पतिमनानतस्यशवसः । एवैश्चचर्षणीनामूतीहुवेरथानाम् ॥ अभिष्टयेसदावृधंस्वर्मीळ्हेषुयंन रः । नानाहवंतऽऊतये ॥ १ ॥ परोमात्रमृचीषममिंद्रमुग्रंसुराधसं । ईशानंचिद्वसूनां ॥ तंतमिद्राधसेमहऽइंद्रंचो दामिपीतये । यःपूर्व्यामनुष्टुतिमीशेकृष्टीनांनृतुः+ ॥ नयस्यतेशवसानसख्यमानंशमर्त्यः । नकिःशवांसितेनशत् ॥ त्वोतासस्त्वायुजाप्सुसूर्येमहद्धनं । जयेमपृत्सुवज्रिवः ॥ तंत्वायज्ञेभिरीमहेतंगीर्भिर्गिर्वणस्तम । इंद्रयथाचिदाविथ वाजेषुपुरुमाय्यं ॥ २ ॥ यस्यतेस्वादुसख्यंस्वाद्वीप्रणीतिरद्रिवः । यज्ञोवितंतसाय्यः ॥ उरुणस्तन्वे३तनऽउरुक्षयायन स्कृधि । उरुणोयंधिजीवसे ॥ उरुंनृभ्यऽउरुंगवऽउरुंरथायपंथां । देववीतिंमनामहे ॥ उपमापड्द्वाद्वानरःसोमस्यह र्ष्या । तिष्ठंतिस्वादुरातयः ॥ ऋज्राविंद्रोतऽआददेहरीऽऋक्षस्यसूनवि । आश्वमेधस्यरोहिता ॥ ३ ॥ सुरथाँऽआ तिथिग्वेस्वभीशूँरार्क्षे । आश्वमेधेसुपेशसः ॥ षळश्वाँऽआतिथिग्वऽइंद्रोतेवधूमंतः । सचापूतक्रतौसनं ॥ ऐषुचेतदृ षण्वत्यंतर्ऋज्रेष्वरुषी । स्वभीशुःकशावती ॥ नयुष्मेवाजबंधवोनिनित्सुश्चनमर्त्यः । अवद्यमधिदीधरत् ॥ ४ ॥ ( ८।७।१० ) प्रप्रवस्त्रिष्टुभमिषंमंदद्वीरायेंदवे । धियावोमेधसातयेपुरंध्याविवासति ॥ नदंवऽओदतीनांनदंयो

---

( ८।७।१० ) प्रप्रवइत्यष्टादशर्चस्यसूक्तस्यांगिरसःप्रियमेधइंद्रःअपादिंद्रइत्यस्याविश्वेदेववरुणादेवताःसुदेवइत्यस्यवरुणोनुष्टुप्द्वितीयो

युवतीनां । पतिर्वोऽअघ्न्यानांधेनूनामिषुध्यसि ॥ ताऽअस्यसूददोहसःसोमंश्रीणंतिपृश्नयः । जन्मन्देवानांविशस्त्रि
ष्वारोचनेदिवः ॥ अभिप्रगोपतिंगिरेंद्रमर्चयथाविदे । सूनुंसत्यस्यसत्पतिं ॥ आहरयःससृज्रिरेरुषीरधिबर्हिषि । य
त्राभिसंनवामहे ॥ ५ ॥ इंद्रायगावऽआशिरंदुदुह्रेवज्रिणेमधु । यत्सीमुपह्वरेविदत् ॥ उद्यद्ब्रध्नस्यविष्टपंगृहमिंद्र
श्चगन्वहि । मध्वःपीत्वासचेवहित्रिःसप्तसख्युःपदे ॥ अर्चतप्रार्चतप्रियमेधासोऽअर्चत । अर्चंतुपुत्रकाऽउतपुरंन
धृष्ण्वर्चत ॥ अवस्वरातिगर्गरोगोधापरिसनिष्वणत् । पिंगापरिचनिष्कददिंद्रायब्रह्मोद्यतं ॥ आयत्पतंत्येन्यःसुदु
घाऽअनपस्फुरः । अपस्फुरंगृभायतसोममिंद्रायपातवे ॥ ६ ॥ अपादिंद्रोऽअपादग्निर्विश्वेदेवाऽअमत्सत । वरुणऽ
इदिहक्षयत्तमापोऽअभ्यनूषतवत्संसंशिश्वरीरिव ॥ सुदेवोऽअसिवरुणयस्यतेसप्तसिंधवः । अनुक्षरंतिकाकुदंसूर्म्यंसु
षिरामिव ॥ योव्यतीँऽरफाणयत्सुयुक्ताँऽउपदाशुषे । तक्वोनेतातदिद्वपुरुपमायोऽअमुच्यत ॥ अतीदुशक्रऽओहत
ऽइंद्रोविश्वाऽअतिद्विषः । भिनत्कनीनऽओदनंपच्यमानंपरोगिरा ॥ अर्भकोनकुमारकोधितिष्ठन्नवंरथं । सपक्षन्म
हिषंमृगंपित्रेमात्रेविभुक्रतुं ॥ आतूसुशिप्रदंपतेरथंतिष्ठाहिरण्ययं । अधद्युक्षंसचेवहिसहस्रपादमरुषंस्वस्तिगामनेह
सं ॥ तंघेमित्थानमस्विनऽउपस्वराजमासते । अर्थंचिदस्यसुधितंयदेतवऽआवर्तयंतिदावने ॥ अनुप्रत्नस्यौकसःप्रि

षिणक्चतुर्थ्याद्यास्तिस्रोगायत्र्यःएकादशीषोळश्यौपंक्तीअंत्येद्वेबृहत्यौ ।

यमेधासऽएषां । पूर्वामनुप्रयतिंवृक्तबर्हिषोहितप्रयसऽआशत ॥ ७ ॥ ( ८।८।१ ) योराजाचर्षणीनांयातारथेभिरध्रिगुः। विश्वासांतरुतापृतनानांज्येष्ठोयोवृत्रहागृणे+ ॥ इंद्रंतंशुंभपुरुहन्मन्नवसेयस्यद्विताविधर्तरि । हस्तायवज्रःप्रतिधायिदर्शतोमहोदिवेनसूर्यः ॥ नकिष्टंकर्मणानशद्यश्चकारसदावृधं । इंद्रंनयज्ञैर्विश्वगूर्तमृभ्वसमधृष्टंधृष्णवोजसं ॥ अषाह्ळमुग्रंपृतनासुसासहिंयस्मिन्महीरुरुज्रयः । संधेनवोजायमानेऽअनोनवुर्द्यावःक्षामोऽअनोनवुः ॥ यद्द्यावऽइंद्रतेशतंशतंभूमीरुतस्युः । नत्वावज्रिन्त्सहस्रंसूर्याऽअनुनजातमष्टरोदसी ॥ ८ ॥ आपप्राथमहिनावृष्ण्यावृषन्विश्वाशविष्ठशवसा । अस्माँऽअवमघवन्गोमतिव्रजेवज्रिन्चित्राभिरूतिभिः ॥ नसीमदेवऽआपदिषंदीर्घायोमर्त्यः । एतग्वाचिद्यऽएतशायुयोजतेहरीऽइंद्रोयुयोजते ॥ तंवोमहोमहाय्यमिंद्रंदानायसक्षणिं । योगाधेषुयऽआरणेषुहव्योवाजेष्वस्तिहव्यः ॥ उदूषुणोवसोमहेमृशस्वशूरराधसे । उदूषुमह्यैमघवन्मघत्तयऽउदिंद्रश्रवसेमहे+ ॥ त्वंनऽइंद्रऽऋतयुस्त्वानिदोनितृंपसि । मध्येवसिष्वतुविनृम्णोर्वोर्निदासंशिश्नथोहथैः ॥ ९ ॥ अन्यव्रतममानुषमयज्वानमदेवयुं । अवस्वःसखादुधुवीतपर्वतःसुघ्नायदस्युंपर्वतः ॥ त्वंनऽइंद्रासांहस्तेशविष्ठदावने । धानानांनसंगृभायास्मयुर्द्विःसंगृभाय

---

अष्टमेनुवाकएकादशसूक्तानि ( ८।८।१ ) योराजेतिपंचदशर्चस्यसूक्तस्यांगिरसःपुरुहन्मेंद्रोबृहती द्वितीयाचतुर्थीषष्ठ्यःसतोबृहत्यःत्रयोदश्युष्णिक्चतुर्दश्यनुष्टुबंत्यापुरउष्णिक् ।

ऋक्सं.
अ. ६ अ. ५
॥ ३५ ॥

स्मयुः+ ॥ सखायःक्रतुमिच्छतकथाराधामशरस्य । उपस्तुतिंभोजःसूरियोऽअह्रयः ॥ भूरिभिःसमहऽऋषिभिर्बर्हिष्मद्भिःस्तविष्यसे । यदित्थमेकमेकमिच्छरवत्सान्पराददः ॥ कर्णगृह्यामघवाशौरदेव्योवत्संनस्त्रिभ्यऽआनयत् । अजांसूरिर्नधातवे ॥ १० ॥ ( ८।८।२ ) त्वंनोऽअग्नेमहोभिःपाहिविश्वस्याऽअरातेः । उतद्विषोमर्त्यस्य ॥ नहिमन्युःपौरुषेयऽईशेहिवःप्रियजात । त्वमिदसिक्षपावान् ॥ सनोविश्वेभिर्देवेभिरुर्जोनपाद्भद्रशोचे । रयिंदेहिविश्ववारं ॥ नतमग्नेऽअरातयोमर्तंयुवंतरायः । यंत्रायसेदाश्वांसं ॥ यंत्वंविप्रमेधसातावग्नेहिनोषिधनाय । सतवोतीगोषुगंता ॥ ११ ॥ त्वंरयिंपुरुवीरमग्नेदाशुषेमर्ताय । प्रणोनयवस्योऽअच्छ ॥ उरुष्याणोमापरादाऽअघायतेजातवेदः । दुराध्ये३मर्ताय ॥ अग्नेमाकिष्टेदेवस्यरातिमदेवोयुयोत । त्वमीशिषेवसूनां ॥ सनोत्रस्वऽउपमास्यूर्जोनपान्माहिनस्य । सखेवसोजरितृभ्यः ॥ अच्छानःशीरशोचिषंगिरोयंतुदर्शतम् । अच्छायज्ञासोनमसापुरूवसुंपुरुप्रशस्तमूतये ॥ १२ ॥ अग्निंसूनुंसहसोजातवेदसंदानायवार्याणां । द्वितायोभूदमृतोमर्त्येष्वाहोतामंद्रतमोविशि+ ॥ अग्निंवोदेवयज्ययाग्निंप्रयत्यध्वरे । अग्निंधीषुप्रथममग्निमर्वत्यग्निंक्षैत्रायसाधसे ॥ अग्निरिषांसख्येददातुनऽईशेयोवार्याणां । अग्निंतोके

मंडलं ८
अनु. ८
॥ ३५ ॥

---

( ८।८।२ ) त्वंनोअग्नइतिपंचदशर्चस्यसूक्तस्यसुदीतिपुरुमीह्लावग्निर्गायत्री दशमीद्वादशीचतुर्दश्योबृहत्यः एकादशीत्रयोदशीपंचदश्यःसतोबृहत्यः । ( अत्रसुदीतिपुरुमीह्लयोरन्यतरोवाऋषिः ) ।

तनयेशश्वंदीमहेवसुंसंतंतनूपां+ ॥ अग्निमीळिष्वावसेगाथाभिःशीरशोचिषं । अग्निंरायेपुरुमीह्ळश्रुतंनरोग्निंसुदीतये छर्दि+ः ॥ अग्निंद्वेषोयोतवैनोगृणीमस्यग्निंशंयोश्चदातवे । विश्वासुविक्ष्ववितेवहव्योभुवद्वस्तुर्ऋषूणां+ ॥ १३ ॥ ( ८।८।३ ) हविष्कृणुध्वमागमदध्वर्युर्वनतेपुनः । विद्वाँऽअस्यप्रशासनं ॥ निति्ग्ममभ्यं१शुंसीदद्धोतामनावधि । जुषाणोऽअस्यसख्यं+ ॥ अंतरिच्छंतितंजनेरुद्रंपरोमनीषया । गृभ्णंतिजिह्वयासस+ ॥ जाम्यतीतपेधनुर्वयोधाऽअं रुहद्वनं । दृषदंजिह्वयावधीत् ॥ चरन्वत्सोरुशन्निहनिदातारंनविंदते । वेतिस्तोतवऽअंब्यं* ॥ १४ ॥ उतोन्वस्यय न्महदश्वावद्योजनंबृहत् । दामारथस्यददृशे ॥ दुहंतिसप्तैकामुपद्वापंचसृजतः । तीर्थेसिंधोरधिस्वरे+ ॥ आदशाभि र्विवस्वतऽइंद्रःकोशमचुच्यवीत् । खेदयात्रिवृतादिवः+ ॥ परित्रिधातुरध्वरंजूर्णिरेतिनवीयसी । मध्वाहोतारोऽअं जते ॥ सिंचंतिनमसावतमुच्चाचक्रंपरिज्मानं । नीचीनबारमक्षितं ॥ १५ ॥ अभ्यारमिदद्रयोनिषिक्तंपुष्करेमधु । अवतस्यविसर्जने ॥ गावऽउपावतावतंमहीयज्ञस्यरप्सुदा । उभाकर्णाहिरण्यया ॥ आसुतेसिंचतश्रियंरोदस्योरभि श्रियं । रसादधीतवृषभं+ ॥ तेजानतस्वमोक्यं१संवत्सासोनमातृभिः । मिथोनसंतजामिभिः ॥ उपस्रक्वेषुवप्संतः कृण्वतेधरुणंदिवि । इंद्रेऽअग्नानमःस्वः* ॥ १६ ॥ अधुक्षत्पिप्युषीमिषमूर्जंसप्तपदीमरिः । सूर्यस्यसप्तरश्मिभिः ॥

( ८।८।३ ) हविरित्यष्टादशर्चस्यसूक्तस्यप्रगाथोहर्यतोभिर्गायत्री । ( हविर्पारस्तुतिर्वादेवता )

सोमस्यमित्रावरुणोदितासूरऽआददे । तदातुरस्यभेषजं ॥ उतोन्वस्ययत्पदंहर्यतस्यनिधान्यं । परिद्यांजिह्वयातनत् ॥ १७ ॥ ( ८।८।४ ) उदीराथामृतायतेयुंजाथामश्विनारथं । अंतिषद्भूतुवामवः ॥ निमिषश्चिज्जवीयसारथेनायातमश्विना । अंति० ॥ उपस्तृणीतमत्रयेहिमेनघर्ममश्विना । अंति० ॥ कुहस्थःकुहजग्मथुःकुहश्येनेवपेतथुः । अंति० ॥ यदद्यकर्हिकर्हिचिच्छुश्रूयातमिमंहवं । अंति० ॥ १८ ॥ अश्विनायामहूतमानेदिष्ठंयाम्याप्यं । अंति०॥ अवंतमत्रयेगृहंकृणुतंयुवमश्विना । अंति० ॥ वरेथेऽअग्निमातपोवदतेवल्ग्वत्रये । अंति० ॥ प्रसप्तवध्रिराशसाधारामग्नेरशायत । अंति० ॥ इहागतंवृषण्वसूशृणुतंमऽइमंहवं । अंति० ॥ १९ ॥ किमिदंवांपुराणवज्जरतोरिवशस्यत । अंति० ॥ समानंवांसजात्यंसमानोबंधुरश्विना । अंति० ॥ योवांरजांस्यश्विनारथोवियातिरोदसी । अंति० ॥ आनोगव्येभिरश्व्यैःसहस्रैरुपगच्छतं । अंति० ॥ मानोगव्येभिरश्व्यैःसहस्रेभिरतिख्यतं । अंति० ॥ अरुणप्सुरुषाऽअभूदकर्ज्योतिर्ऋतावरी । अंति० ॥ अश्विनासुविचाकशद्वृक्षंपरशुमाँऽइव । अंति० ॥ पुरंनधृष्णवारुजकृष्णयाबाधितोविशा । अंति० ॥ २० ॥ ( ८।८।५ ) विशोविशोवोऽअतिथिंवाजयंतःपुरुप्रियं । अग्निंवोदुर्यंवचःस्तुषेशूष



---

( ८।८।४ ) उदीराथामित्यष्टादशर्चस्यसूक्तस्यात्रेयोगोपवनोश्विनौगायत्री । ( सप्तवध्रिर्वाऋषिः ) ( ८।८।५ ) विशोविशइतिपंचदशर्चस्यसूक्तस्यात्रेयोगोपवनोग्निरंत्यतिसृणांश्रुतर्वागायत्री आद्याचतुर्थीसप्तमीदशम्यस्त्रयोदश्यादितिसृश्चानुष्टुभः ।

स्यमन्मभिः ॥ यंजनासोहविष्मंतोमित्रंनसर्पिरासुतिं । प्रशंसंतिप्रशस्तिभिः ॥ पन्यांसंजातवेदसंयोदेवतात्युद्यता । हव्यान्यैरयद्दिवि ॥ आगन्मवृत्रहंतमंज्येष्ठमग्निमानवं । यस्यश्रुतर्वाबृहन्नार्क्षोऽअनीकऽएधते ॥ अमृतंजातवेदसं तिरस्तमांसिदर्शतं । घृताहवनमीड्यं ॥ २१ ॥ सबाधोयंजनाऽइमेऽग्निंहव्येभिरीळते । जुह्वानासोयतस्रुचः ॥ इयंतेनव्यसीमतिरग्नेऽअधाय्यस्मदा । मंद्रसुजातसुक्रतोमूरदस्मातिथे ॥ सातेऽअग्नेशंतमाचनिष्ठाभवतुप्रिया । तयावर्धस्वसुष्टुतः ॥ साद्युम्नैर्द्युम्निनीबृहदुपोपश्रवसिश्रवः । दधीतवृत्रतूर्ये ॥ अश्वमिद्गांरथप्रांत्वेषमिंद्रंनसत्पतिं । यस्यश्रवांसितूर्वथपन्यंपन्यंचकृष्टयः ॥ २२ ॥ यंत्वांगोपवनोगिराचनिष्ठदग्नेऽअंगिरः । सपावकश्रुधीहवं ॥ यंत्वा जनासऽईळतेसबाधोवाजसातये । सबोधिवृत्रतूर्ये ॥ अहंहुवानऽआर्क्षेश्रुतर्वणिमदच्युति । शर्धांसीवस्तुकाविनामृक्षाशीर्षाचतुर्णां ॥ मांचत्वारऽआशवःशविष्ठस्यद्रवित्नवः । सुरथासोऽअभिप्रयोवक्षन्वयोनतुग्र्यं ॥ सत्यमित्त्वामहेनदिपरुष्ण्यवदेदिशं । नेमापोऽअश्वदातरःशविष्ठादस्तिमर्त्यः ॥ २३ ॥ ( ८।८।६ ) युक्ष्वाहिदेवहूतमाँऽअश्वाँऽअग्नेरथीरिव । निहोतापूर्व्यःसदः ॥ उतनोदेवदेवाँऽअच्छावोचोविदुष्टरः । श्रद्विश्वावार्याकृधि ॥ त्वंहयद्यविष्ठ्य सहसःसूनवाहुत । ऋतावायज्ञियोभुवः ॥ अयमग्निःसहस्रिणोवाजस्यशतिनस्पतिः । मूर्धाकवीरयीणां ॥ तंनेमि

( ८।८।६ ) युक्ष्वाहीतिषोळशर्चस्यसूक्तस्यांगिरसोविरूपोग्निर्गायत्री ।

ऋक्सं. अ. ६ अ. ५ ३७ ॥

मृभवौयथानमस्त्वसहूतिभिः । नेदीयोयज्ञमंगिरः ॥ २४ ॥ तस्मैनूनमभिद्यवेवाचाविरूपनित्यया । वृष्णेचोदस्वसु
ष्टुतिं+ ॥ कमुष्विदस्यसेनयाग्नेरपाकचक्षसः । पणिंगोषुस्तरामहे ॥ मानोदेवानांविशःप्रस्नातीरिवोस्राः । कृशंनहा
सुरघ्न्याः ॥ मानःसमस्यदूढ्य१ःपरिद्वेषसोऽअंहुतिः । ऊर्मिर्ननावमावधीत् ॥ नमस्तेऽअग्नऽओजसेगृणंतिदेवकृष्ट
यः । अमैरमित्रमर्दय ॥ २५ ॥ कुवित्सुनोगविष्टयेग्नेसंवेषिषोरयिं । उरुकृदुरुणस्कृधि ॥ मानोऽअस्मिन्महाधनेप
रावर्ग्भारभृद्यथा । संवर्गंसंरयिंजय ॥ अन्यमस्मद्भियाऽइयमग्नेसिषक्तुदुच्छुना । वर्धानोऽअमवच्छवः ॥ यस्याजु
षन्नमस्विनःशमीमदुर्मखस्यवा । तंघेदग्निर्वृधावति ॥ परस्याऽअधिसंवतोवराँऽअभ्यातर । यत्राहमस्मितांऽअव ॥
विद्माहितेपुरावयमग्नेपितुर्यथावसः । अधातेसुम्नमीमहे ॥ २६ ॥ (८।८।७) इमंनुमायिनंहुवऽइंद्रमीशानमोज
सा । मरुत्वंतंनवृंजसे ॥ अयमिंद्रोमरुत्सखाविवृत्रस्याभिनच्छिरः । वज्रेणशतपर्वणा ॥ वावृधानोमरुत्सखेंद्रोविवृ
त्रमैरयत् । सृजन्त्समुद्रियाऽअपः+ ॥ अयंहयेनवाऽइदंस्वर्मरुत्वताजितं । इंद्रेणसोमपीतये ॥ मरुत्वंतमृजीषिण
मोजस्वंतंविरप्शिनं । इंद्रंगीर्भिर्हवामहे ॥ इंद्रंप्रत्नेनमन्मनामरुत्वंतंहवामहे । अस्यसोमस्यपीतये ॥ २७ ॥ मरुत्वाँ
ऽइंद्रमीढ्वःपिबासोमंशतक्रतो । अस्मिन्यज्ञेपुरुष्टुत ॥ तुभ्येदिंद्रमरुत्वतेसुताःसोमासोऽअद्रिवः । हृदाहूयंतऽउक्थि

मंडलं ८ अनु. ८ ॥ ३७ ॥

(८।८।७) इमंन्वितिद्वादशर्चस्यसूक्तस्यकाण्वःकुरुसुतिरिंद्रोगायत्री ।

नः ॥ पिबेदिंद्रमरुत्सखासुतंसोमंदिविष्टिषु । वज्रंशिशानऽओजसा ॥ उत्तिष्ठन्नोजसासहपीत्वीशिप्रेऽअवेपयः । सोममिंद्रचमूसुतं ॥ अनुत्वारोदसीऽउभेक्रक्षमाणमकृपेतां । इंद्रयदस्युहाभवः ॥ वाचमष्टापदीमहंनवस्रक्तिमृतस्पृशं । इंद्रात्परितन्वंममे ॥ २२ ॥ ( ८।८।८ ) जज्ञानोनुशतक्रतुर्विपृच्छदितिमातरं । कऽउग्राःकेहंश्रृण्विरे ॥ आदींशवस्यब्रवीदौर्णवाभमहीशुवम् । तेपुत्रसंतुनिष्टुरः ॥ समित्तान्वृत्रहाखिदत्खेऽअराँऽइवखेदया । प्रवृद्धोदस्युहाभवत् ॥ एकयाप्रतिधापिबत्साकंसरांसित्रिंशतं । इंद्रःसोमस्यकाणुका ॥ अभिगंधर्वमतृणदबुध्नेषुरजःस्वा । इंद्रोब्रह्मभ्यऽइद्वृधे ॥ २९ ॥ निराविध्यद्गिरिभ्यऽआधारयत्पक्वमोदनं । इंद्रोबुंदंस्वाततं ॥ शतब्रध्नऽइषुस्तवसहस्रपर्णऽएकऽइत् । यमिंद्रचकृषेयुजं ॥ तेनस्तोतृभ्यऽआभरनृभ्योनारिभ्योऽअत्तवे । सद्योजातऽऋभुष्ठिर ॥ एताच्यौत्नानितेकृतावर्षिष्ठानिपरीणसा । हृदावीड्वधारयः ॥ विश्वेत्ताविष्णुराभरदुरुक्रमस्त्वेषितः । शतंमहिषान्क्षीरपाकमोदनंवराहमिंद्रऽएमुषं ॥ तुविक्षंतेसुकृतंसूमयंधनुःसाधुर्बुंदोहिरण्ययः । उभातेबाहूरण्यासुसंस्कृतऽऋदूपेचिद्दवृधा ॥ ३० ॥ ( ८।८।९ ) पुरोळाशंनोऽअंधसऽइंद्रसहस्रमाभर । शताचशूरगोनां ॥ आनोभरव्यंजनंगामश्व

( ८।८।८ ) जज्ञानइत्येकादशर्चस्यसूक्तस्यकाण्वःकुरुसुतिरिंद्रोगायत्रीअंत्येद्वेबृहतीसतोबृहत्यौ । ( ८।८।९ ) पुरोळाशमितिदशर्चस्यसूक्तस्यकाण्वःकुरुसुतिरिंद्रोगायत्र्यंत्याबृहती ।

ऋक्सं. अ. ६ अ. ५ ॥ ३८ ॥

मभ्यंजनं । सचामनाहिरण्ययां ॥ उतनः कर्णशोभनापुरूणिधृष्णवाभर । त्वंहिशृण्विषेवसो ॥ नकींवृधीकइंद्रते नसुषानसुदाउत । नान्यस्त्वच्छूरवाघतः ॥ नकीमिंद्रोनिकर्तवेनशक्रःपरिशक्तवे । विश्वंशृणोतिपश्यति ॥ ३१ ॥ समन्युंमर्त्यानामदब्धोनिचिकीषते । पुरानिदश्चिकीषते ॥ क्रत्वइत्पूर्णमुदरंतुरस्यास्तिविधतः । वृत्रघ्नःसोमपाव्नः ॥ त्वेवसूनिसंगताविश्वाचसोमसौभगा । सुदात्वपरिह्वृता ॥ त्वामिद्यवयुर्ममकामोगव्युर्हिरण्ययुः । त्वामश्वयुरेषते ॥ तवेदिंद्राहमाशसाहस्तेदात्रंचनाददे । दिनस्यवामघवन्त्संभृतस्यवापूर्धियवस्यकाशिना ॥ ३२ ॥ ( ८।८।१० ) अयंकृत्नुरगृभीतोविश्वजिदुद्भिदित्सोमः । ऋषिर्विप्रःकाव्येन ॥ अभ्यूर्णोतियन्नग्नंभिषक्तिविश्वंयत्तुरं । प्रेमंधःख्यन्निःश्रोणोभूत् ॥ त्वंसोमतनूकृद्भ्योद्वेषोभ्योन्यकृतेभ्यः । उरुयंतासिवरूथं ॥ त्वंचित्तीतवदक्षैर्दिवआपृथिव्याऋजीषिन् । यावीरघस्यचिद्द्वेषः ॥ अर्थिनोयंतिचेदर्थंगच्छानिद्दुषोरातिं । ववृज्युस्तृष्यतःकामं ॥ ३३ ॥ विदद्यत्पूर्व्यंनष्टमुदीमृतायुमीरयत् । प्रेमायुस्तारीदतीर्णं ॥ सुशेवोनोमृळयाकुरदृप्तक्रतुरवातः । भवानःसोमशंहृदे ॥ मानःसोमसंवीविजोमाविबीभिषथाराजन् । मानोहार्दित्विषावधीः ॥ अवयत्स्वेसधस्थेदेवानांदुर्मतीरीक्षे । राजन्न

मंडलं ८ अनु. ८ ॥ ३८ ॥

---

( ८।८।१० ) अयंकृत्नुरितिनवर्चस्यसूक्तस्यकृत्नुर्भार्गवःसोमोगायत्र्यंत्यानुष्टुप् ।

पृद्विषःसेधुमीढ्वोऽअपस्त्रिधःसेध ॥ ३४ ॥ ( ८।८।११ ) नुह्यं१न्यंबुळाकरंमर्डितारंशतक्रतो । त्वंनंऽइंद्रमृळय ॥ योनःशश्वत्पुराविथामृध्रोवाजसातये । सत्वंनंऽइंद्रमृळय ॥ किमुंगरध्रचोदंनःसुन्वानस्यावितेदंसि । कुविंत्स्विंद्रणः शकः ॥ इंद्रप्रणोरथमवपृश्चाच्चित्संतमद्रिवः । पुरस्तादेनंमेकृधि ॥ हंतोनुकिमांससेप्रथमंनोरथंकृधि । उपमंवाजयु श्रवः ॥ ३५ ॥ अवानोवाजयुंरथंसुकरंतेकिमित्परि । अस्मान्त्सुजिग्युषस्कृधि ॥ इंद्रद्दह्यस्वपूरसिभद्रातऽएतिनि ष्कृतं । इयंधीर्ऋत्वियावती ॥ मासीमवद्यऽआभागुर्वीकाष्ठाहितंधनं । अपावृक्ताऽअरत्नयः ॥ तुरीयंनामयुज्ञियंय दाकरस्तदुंश्मसि । आदित्पतिर्नऽओहसे ॥ अवीवृधद्वोऽअमृताऽअमंदीदेकद्यूर्देवाऽउतयाश्चदेवीः । तस्माऽउरा धःकृणुतप्रशस्तंप्रातर्मक्षूधियावसुर्जगम्यात् ॥ ३६ ॥ ( ८।९।१ ) आतूनंऽइंद्रक्षुमंतंचित्रंग्राभंसंगृभाय । महाह स्तीदक्षिणेन ॥ विद्माहित्वातुविकूर्मितुविदेष्णंतुवीमघं । तुविमात्रमवोभिः ॥ नहित्वाशूरदेवानमर्तासोदित्संतं । भीमंनगांवारयंते ॥ एतोन्विंद्रंस्तवामेशानंवस्वःस्वराजं । नराधंसामर्धिषन्नः ॥ प्रस्तोषदुपंगासिषच्छ्रवत्सामंगीयमा नं । अभिराधसाजुगुरत् ॥ ३७ ॥ आनोभरदक्षिणेनाभिसव्येनप्रमृश । इंद्रमानोवसोर्निर्भाक् ॥ उपक्रमस्वाभर

---

( ८।८।११ ) नह्यन्यमितिदशर्चस्यसूक्तस्यनौधसएकद्यूरिंद्रोंत्यायादेवागायत्र्यंत्यात्रिष्टुप् ॥ नवमेनुवाकेत्रयोदशसूक्तानि ( ८।९।१ ) आतूनइतिनवर्चस्यसूक्तस्यकाण्वःकुसीदींद्रोगायत्री ।

धृषताधृष्णोजनानाम् । अदाशूष्टरस्यवेदः ॥ इंद्रयऽउनुतेऽअस्तिवाजोविप्रेभिःसनित्वः । अस्माभिःसुतंसनुहि ॥ सद्योजुवस्तेवाजाऽअस्मभ्यंविश्वश्चंद्राः । वशैश्चमक्षूजरंते ॥ ३८ ॥ इतिषष्ठाष्टकेपंचमोऽध्यायः ॥ ५ ॥ ॥



पंचचत्वारिंशाध्यायेवर्गाः ३८ सूक्तानि १४ ऋचः १९५ ॥ त्यागः ॥ इंद्राये. १३ ऋक्षाश्वमेधाभ्या. ६ इंद्राये. १० विश्वदेववरुणेभ्य. वरुणाये. इंद्राये. २१ अग्नय. ३३ अश्विभ्या. १८ अग्नय. १२ श्रुतर्वणाये. ३ अग्नय. १६ इंद्राये. ३३ सोमाये. ९ इंद्राये. ९ देवेभ्य. इंद्राये. ९ ॥ इतिषष्ठेपंचमः ॥

आग्रदेवानांवैश्वदेवंप्रेष्ठंमुशनाकाव्यआग्नेयंमामेकृष्णआश्विनंद्युंशाहिपंचविश्वकोवाकार्ष्णिर्जागतंद्युम्नीषड्वा सिष्ठोवाद्युम्नीकःप्रियमेधोवाप्रागाथंहंतंवोदस्मंनोधाबृहदिंद्रायसप्तनृमेधपुरुमेधौंव्यनुष्टुब्बृहत्यंतंमानोविश्वा सुषट्कन्यावाःसप्तात्रेय्यपालेतिहासऐंद्रंआनुष्टुभंद्विपंक्त्यादिंपांतंत्रयस्त्रिंशच्छ्रुतकक्षःसुकक्षोवाद्यानुष्टुबुंद्वच तुस्त्रिंशंत्सुकक्षोत्यैंद्राभर्वीगोधयतिद्वादशाबिंदुःपूतदक्षोवामारुतंमात्वानवतिरश्चीरांगिरसआनुष्टुभंमस्मैसैका द्युतानोवांमारुतस्त्रैष्टुभंचतुर्थीविरांळिष्याममितिमारुतःपादःपरैंद्राबार्हस्पत्यायायाइंद्रपंचोनारेभःकाश्यपोत्वार्ह तमतिजगत्युंपरिष्टाद्बृहत्यावतिजगतींत्रिष्टुब्जगतीयंतत्तः ॥ १ ॥ ॥ ॥

॥ हरिः ओम् ॥ ( ८।९।२ ) आप्रद्रव परावतोऽर्वावतश्च वृत्रहन् । मध्वः प्रतिप्रभर्मणि ॥ तीव्राः सोमास आगहि सुतासोमादयिष्णवः । पिबादधृग्यथोचिषे ॥ इषामंदस्वादुतेऽरंवरायमन्यवे । भुवत्तइंद्रशंहृदे ॥ आत्वशत्रवागहि न्युक्थानिचहूयसे । उपमेरोचनेदिवः ॥ तुभ्यायमद्रिभिः सुतोगोभिः श्रीतोमदायकं । प्रसोमऽइंद्रहूयते ॥ १ ॥ इंद्रश्रुधिसुमेहवमस्मेसुतस्यगोमतः । विपीतिंतृप्तिमश्नुहि ॥ यऽइंद्रचमसेष्वासोमश्चमूषुतेसुतः । पिबेदस्य त्वमीशिषे ॥ योऽअप्सुचंद्रमाऽइवसोमश्चमूषुदद्दृशे । पिबे० ॥ यंतेश्येनः पदाभरत्तिरोरजांस्यस्पृतं । पिबे० ॥ २ ॥ ( ८।९।३ ) देवानामिदवोमहत्तदावृणीमहेवयं । वृष्णामस्मभ्यमूतये ॥ तेनःसंतुयुजःसदावरुणोमित्रोऽअर्यमा । वृधासश्चप्रचेतसः ॥ अतिनोविष्पितापुरुनौभिरपोनपर्षथ । यूयमृतस्यरथ्यः ॥ वामंनोऽअस्त्वर्यमन्वामंवरुणशंस्यं । वामंह्यावृणीमहे ॥ वामस्यहिप्रचेतसऽईशानासोरिशादसः । नेमादित्याऽअघस्ययत् ॥ ३ ॥ वयमिद्वः सुदानवः क्षियंतोयांतोऽअध्वन्ना । देवावृधायहूमहे ॥ अधिनऽइंद्रैषांविष्णोसजात्यानां । इतामरुतोऽअश्विना ॥ प्रभ्रातृत्वंसुदानवोधद्विितासमान्या । मातुर्गर्भेभरामहे ॥ यूयंहिष्ठासुदानवऽइंद्रज्येष्ठाऽअभिद्यवः । अधाचिद्वऽउतब्रुवे

---

( ८।९।२ ) आप्रद्रवइतिनवर्चस्यसूक्तस्यकाण्वःकुसीदींद्रोगायत्री । ( ८।९।३ ) देवानामितिनवर्चस्यसूक्तस्यकाण्वःकुसीदीविश्वेदेवा गायत्री । ( भेदपक्षे–विश्वेदेवाः ३ अर्यमवरुणौ १ विश्वेदेवाः ५ एवं ९ )

॥ ४ ॥ ( ८।९।४ ) प्रेष्ठंवोऽअतिथिंस्तुषेमित्रमिवप्रियं । अग्निंरथंनवेद्यं ॥ कविमिवप्रचेतसंयंदेवासोऽअधद्विता । निमर्त्येष्वादधुः ॥ त्वंयविष्ठदाशुषोनॄंःपाहिशृणुधीगिरः । रक्षातोकमुतत्मना ॥ कयातेऽअग्नेऽअंगिरऽऊर्जोनपादुपस्तुतिं । वरायदेवमन्यवे ॥ दाशेमकस्यमनसायज्ञस्यसहसोयहो । कदुवोचऽइदंनमः ॥ ५ ॥ अधात्वंहिनस्करोविश्वाऽअस्मभ्यंसुक्षितीः । वाजद्रविणसोगिरः ॥ कस्यनूनंपरीणसोधियोजिन्वसिदंपते । गोषातायस्यतेगिरः ॥ तंमर्जयंतसुक्रतुंपुरोयावानमाजिषु । स्वेषुक्षयेषुवाजिनं ॥ क्षेतिक्षेमेभिःसाधुभिर्नकिर्यंघ्नंतिहंतियः । अग्नेसुवीरऽएधते ॥ ६ ॥ ( ८।९।५ ) आमेहवंनासत्याश्विनागच्छतंयुवं । मध्वःसोमस्यपीतये ॥ इमंमेस्तोममश्विनेमंमेशृणुतंहवं । मध्वःसो० ॥ अयंवांकृष्णोऽअश्विनाहवतेवाजिनीवसू । मध्वःसो० ॥ शृणुतंजरितुर्हवंकृष्णस्यस्तुवतोनरा । मध्वःसो० ॥ छर्दिर्यंतमदाभ्यंविप्रायस्तुवतेनरा । मध्वःसो० ॥ ७ ॥ गच्छतंदाशुषोगृहमित्थास्तुवतोऽअश्विना । मध्वःसो० ॥ युंजाथांरासभंरथेवीड्वंगेवृषण्वसू । मध्वःसो० ॥ त्रिवंधुरेणत्रिवृतारथेनायातमश्विना । मध्वःसो० ॥ नूमेगिरोनासत्याश्विनाप्रावतंयुवं । मध्वःसो० ॥ ८ ॥ ( ८।९।६ ) उभाहिदस्राभिषजामयोभुवोभादक्षस्यवचसोबभूव



( ८।९।४ ) प्रेष्ठंवइतिनवर्चस्यसूक्तस्यकाव्यउशनाअग्निर्गायत्री । ( ८।९।५ ) आमेहवमितिनवर्चस्यसूक्तस्यांगिरसःकृष्णोश्विनौ-गायत्री । ( ८।९।६ ) उभाहीतिपंचर्चस्यसूक्तस्यांगिरसःकृष्णोश्विनौजगती । ( अत्रकार्ष्णिर्विश्वकऋषिःपाक्षिकः ) ।

थुः । तावांविश्वकोहवतेतनूकृथेमानोवियौष्टंसख्यामुमोचतं ॥ कथानूनंवांविमनाऽउपस्तवद्युवंधियंददथुर्वस्यऽइष्टये । तावांविश्वकोहवतेतनूकृथेमानो० ॥ युवंहिष्मापुरुभुजेममेधतुंविष्णाप्वेददथुर्वस्यऽइष्टये । तावांविश्वकोहवते तनूकृथेमानो० ॥ उतत्यंवीरंधनसामृजीषिणंदूरेचित्संतमवसेहवामहे । यस्यस्वादिष्ठासुमतिःपितुर्यथामानो० ॥ ऋतेनदेवःसवितार्शमायतऽऋतस्यशृंगमुर्वियाविपप्रथे । ऋतंसासाहमहिंचित्पृतन्यतोमानो० ॥ ९ ॥ (८।९।७) द्युम्नीवांस्तोमोऽअश्विनाक्रिविर्नसेकऽआगतं । मध्वःसुतस्यसदिविप्रियोनरापातंगौराविवेरिणे ॥ पिबतंघर्ममधुमंतमश्विनावर्हिःसीदतंनरा । तामंदसानामनुषोदुरोणऽआनिपातंवेदसावयः ॥ आवांविश्वाभिरूतिभिःप्रियमेधाऽअहूषत । तावर्तिर्यातमुपवृक्तबर्हिषोजुष्टंयज्ञंदिविष्टिषु ॥ पिबतंसोमंमधुमंतमश्विनाबर्हिःसीदतंसुमत् । तावावृधानाऽउपसुष्टुतिंदिवोगंतंगौराविवेरिणं ॥ आनूनंयातमश्विनाश्वेभिःप्रुषितप्सुभिः । दस्राहिरण्यवर्तनीशुभस्पतीपातंसोममृतावृधा ॥ वयंहिवांहवामहेविपन्यवोविप्रासोवाजसातये । तावल्गूदस्रापुरुदंससाधियाश्विनाश्रुष्ट्यागतं ॥ १० ॥ ( ८।९।८ ) तंवोदस्ममृतीषहंवसोर्मंदानमंधसः । अभिवत्संनस्वसरेषुधेनवऽइंद्रंगीभिर्नवामहे ॥ द्युक्षंसुदानुंतवि

---

( ८।९।७ ) द्युम्नीवामितिषड्टचस्यसूक्तस्यांगिरसःकृष्णोश्विनौअयुजोबृहत्योयुजःसतोबृहत्यः । ( अत्रवासिष्ठोद्युम्नीकआंगिरसः प्रियमेधश्चेत्युभावृषीवैकल्पिकौ ) । ( ८।९।८ ) तंवोदस्ममितिषड्टचस्यसूक्तस्यगौतमोनोधाइंद्रःअयुजोबृहत्योयुजःसतोबृहत्यः ।

षीभिरावृतंगिरिंनपुरुभोजसं । क्षुमंतंवाजंशतिनंसहस्रिणंमक्षूगोमंतमीमहे ॥ नत्वांबृहंतोऽअद्रयोवरंतऽइंद्रवीळवः । यद्दित्ससिस्तुवतेमावतेवसुनकिष्टदामिनातिते ॥ योद्धासिक्रत्वाशवसोतदंसनाविश्वांजाताभिमज्मना । आत्वायमर्कऽऊतयेववर्ततियंगोतमाऽअजीजनन् ॥ प्रहिरिरिक्षऽओजसादिवोऽअंतेभ्यस्परि । नत्वाविव्याचरजऽइंद्रपार्थिवमनुस्वधांववक्षिथ ॥ नकिःपरिष्टिर्मघवन्मघस्यतेयद्दाशुषेदशस्यसि । अस्माकंबोध्युचथस्यचोदितामंहिष्ठोवाजसातये ॥ ११ ॥ ( ८।९।९ ) बृहदिंद्रायगायतमरुतोवृत्रहंतमं । येनज्योतिरजनयन्नृतावृधोदेवंदेवायजागृवि ॥ अपाधमदभिशस्तीरशस्तिहाथेंद्रोद्युम्न्याभवत् । देवास्तऽइंद्रसख्यायंयेमिरेबृहद्भानोमरुद्गण ॥ प्रवऽइंद्रायबृहतेमरुतोब्रह्मार्चत । वृत्रंहनतिवृत्रहाशतक्रतुर्वज्रेणशतपर्वणा ॥ अभिप्रभरधृषताधृषन्मनःश्रवश्चित्तेऽअसद्बृहत् । अर्षंत्वापोजवसाविमातरोहनोवृत्रंजयास्वः* ॥ यज्जायथाऽअपूर्व्यमघवन्वृत्रहत्याय । तत्पृथिवीमप्रथयस्तदस्तभ्नाऽउतद्यां+ ॥ तत्तेयज्ञोऽअजायततदर्कऽउतहस्कृतिः । तद्विश्वमभिभूरसियज्जातंयच्चजंत्वं ॥ आमासुपक्वमैरयऽआसूर्यंरोहयोदिवि । घर्मंनसामन्तपतासुवृक्तिभिर्जुष्टंगिर्वणसेबृहत्+ ॥ १२ ॥ ( ८।९।१० ) आनोविश्वासुहव्यऽइंद्रःस



---

( ८।९।९ ) बृहदिंद्रायेतिसप्तर्चस्यसूक्तस्यांगिरसौनृमेधपुरुमेधावृषीइंद्रोबृहती द्वितीयाचतुर्थ्यौसतोबृहत्यौपंचमीषष्ठयावनुष्टुभौ । ( ८।९।१० ) आनोविश्वास्वितिषड्टचस्यसूक्तस्यांगिरसौनृमेधपुरुमेधावृषीइंद्रःअयुजोबृहत्योयुजःसतोबृहत्यः ।

मत्सुभूषतु । उपब्रह्माणिसवनानिवृत्रहापरमज्याऽऋचीषमः ॥ त्वंदाताप्रथमोराधसामस्यसिसत्यऽईशानकृत् । तुविद्युम्नस्ययुज्यावृणीमहेपुत्रस्यशवसोमहः+ ॥ ब्रह्मातऽइंद्रगिर्वणःक्रियंतेऽअनतिद्भुता । इमाजुषस्वहर्यश्वयोजनें द्रयातेऽअमन्महि ॥ त्वंहिसत्योमघवन्ननानतोवृत्राभूरिन्यृंजसे । सत्वंशविष्ठवज्रहस्तदाशुषेवाँचंरयिमाकृधि ॥ त्व मिंद्रयशाऽअस्यृजीषीशवसस्पते । त्वंवृत्राणिहंस्यप्रतीन्येकऽइदनुत्ताचर्षणीधृता ॥ तमुत्वानूनमसुरप्रचेतसंराधोभा गमिवेमहे । महीवकृत्तिःशरणातऽइंद्रप्रतेसुम्नानोऽअश्नवन् ॥ १३ ॥ (८।९।११) कन्या३ वारवायतीसोममपिस्रुता विंदत् । अस्तंभरंत्यब्रवीदिंद्रायसुनवैत्वाशक्रायसुनवैत्वा ॥ असौयऽएषिवीरकोगृहंगृहंविचाकशत् । इमंजंभसुतं पिबधानावंतंकरंभिणमपूपवंतमुक्थिनं ॥ आचनत्वाचिकित्सामोधिचनत्वानेमसि । शनैरिवशनकैरिवेंद्रायेंदोपरि स्रव ॥ कुविच्छकत्कुवित्करत्कुविन्नोवस्यसस्करत् । कुवित्पतिद्विषोयतीरिंद्रेणसंगमामहै ॥ इमानित्रीणिविष्टपातानीं द्रविरोहय । शिरस्ततस्योर्वरामादिदंमऽउपोदरे ॥ असौचयानऽउर्वरादिमांतन्वं१मम । अथोततस्ययच्छिरःसर्वाता रोमशाकृधि ॥ खेरथस्यखेनसःखेयुगस्यशतक्रतो । अपालामिंद्रत्रिष्पूत्व्यकृणोःसूर्यत्वचं ॥ १४ ॥ (८।९।१२) पांत

---

(८।९।११) कन्यावारितिसप्तर्चस्यसूक्तस्यात्रेय्यपालेंद्रोनुष्टुबाद्येद्वेपंक्ती । (८।९।१२) पांतमितित्रयस्त्रिंशदृचस्यसूक्तस्यांगिरसः श्रुतकक्षइंद्रोगायत्र्याद्यानुष्टुप् (सुकक्षोवाऋषिः) ।

ऋक्सं.
अ. ६ अ. ६
॥ ४२ ॥

मंडलं ८
अनु. ९

मावोऽअंधसऽइंद्रमभिप्रगायत । विश्वासाहंशतक्रतुंमंहिष्ठंचर्षणीनां ॥ पुरुहूतंपुरुष्टुतंगाथान्यं१सनश्रुतं । इंद्रऽइ
तिब्रवीतन ॥ इंद्रऽइन्नोमहानांदातावाजानांनृतुः । महाँऽअभिज्ञ्वायमत् ॥ अपादुशिप्र्यंधसःसुदक्षस्यप्रहोषिणः ।
इंदोरिंद्रोयवाशिरः ॥ तम्वभिप्रार्चतेंद्रंसोमस्यपीतये । तदिद्ध्यस्यवर्धनं ॥ १५ ॥ अस्यपीत्वामदानांदेवोदेवस्यौजसा । वि
श्वाभिभुवनाभुवत् ॥ त्यमुवःसत्रासाहंविश्वासुगीर्ष्वायतं । आच्यावयस्यूतये ॥ युध्मंसंतमनर्वाणंसोमपामनपच्युतं ।
नरमवार्यक्रतुं ॥ शिक्षाणऽइंद्ररायऽआपुरुविद्वाँऽऋचीषम । अवानःपार्येधने ॥ अतश्चिदिंद्रणऽउपायाहिशतवाजया ।
इषासहस्रवाजया ॥ १६ ॥ अयामधीवतोधियोर्वद्भिःशक्रगोदरे । जयेमपृत्सुवज्रिवः ॥ वयमुत्वाशतक्रतोगावोनय
वसेष्वा । उक्थेषुरणयामसि ॥ विश्वाहिमर्त्यत्वनानुकामाशतक्रतो । अगन्मवज्रिन्नाशसः ॥ त्वेसुपुत्रशवसोवृत्र
न्कामकातयः । नत्वामिंद्रातिरिच्यते ॥ सनोवृषन्त्सनिष्ठयासंघोरयाद्रवित्न्वा । धियाविड्ढिपुरंध्या ॥ १७ ॥ यस्ते
नूनंशतक्रतविंद्रद्युम्नितमोमदः । तेननूनंमदेमदेः ॥ यस्तेचित्रश्रवस्तमोयऽइंद्रवृत्रहन्तमः । यऽओजोदातमोमदः ॥
विद्माहियस्तेऽअद्रिवस्त्वादत्तःसत्यसोमपाः । विश्वासुदस्मकृष्टिषु ॥ इंद्रायमद्वनेसुतंपरिष्टोभंतुनोगिरः । अर्कम
र्चंतुकारवः ॥ यस्मिन्विश्वाऽअधिश्रियोरणंतिसप्तसंसदः । इंद्रंसुतेहवामहे ॥ १८ ॥ त्रिकद्रुकेषुचेतनंदेवासोयज्ञम
त्नत । तमिद्वर्धंतुनोगिरः ॥ आत्वाविशंत्विंदवःसमुद्रमिवसिंधवः । नत्वामिंद्रातिरिच्यते ॥ विव्यक्थमहिनावृष

॥ ४२ ॥

न्भक्षंसोमस्यजागृवे । यऽइंद्रजठरेषुते ॥ अरंतऽइंद्रकुक्षयेसोमोभवतुवृत्रहन् । अरंधामभ्यऽइंदवः ॥ अरमश्वाय गायतिश्रुतकक्षोऽअरंगवे । अरमिंद्रस्यधाम्ने ॥ अरंहिष्मासुतेषुणःसोमेष्विंद्रभूषसि । अरंतेशक्रदावने ॥ १९ ॥ पराकात्ताच्चिदद्रिवस्त्वांनक्षंतनोगिरः । अरंगमामतेवयं ॥ एवाह्यसिवीरयुरेवाशूरऽउतस्थिरः । एवातेराध्यंमनः ॥ एवारातिस्तुवीमघविश्वेभिर्धायिधातृभिः । अधाचिदिंद्रमेसचा ॥ मोषुब्रह्मेवतंद्रयुर्भुवोवाजानांपते । मत्स्वासुत स्यगोमतः ॥ मानंऽइंद्राभ्या३दिशःसूरोऽअक्तुष्वायमन् । त्वायुजावनेमतत् ॥ त्वयेदिंद्रयुजावयंप्रतिब्रुवीमहि स्पृधः । त्वमस्माकंतवस्मसि ॥ त्वामिद्धित्वायवोनुनोनुवतश्चरान् । सखायऽइंद्रकारवः ॥ २० ॥ ( ८।९।१३ ) उद्धेदभिश्रुतामघंवृषभंनर्यापसं । अस्तारमेषिसूर्य ॥ नवयोनवतिंपुरोबिभेदबाह्वोजसा । अहिंचवृत्रहावधीत् ॥ सनऽइंद्रःशिवःसखाश्वावद्गोमद्यवमत् । उरुधारेवदोहते ॥ यदद्यकच्चवृत्रहन्नुदगाऽअभिसूर्य । सर्वंतदिंद्रतेवशे ॥ यद्वाप्रवृद्धसत्पतेनमराऽइतिमन्यसे । उतोतत्सत्यमित्तव ॥ २१ ॥ येसोमासःपरावतियेऽअर्वावतिसुन्विरे । सर्वां स्ताँऽइंद्रगच्छसि ॥ तमिंद्रंवाजयामसिमहेवृत्रायहंतवे । सवृषावृषभोभुवत् ॥ इंद्रःसदामनेकृतऽओजिष्ठःसमदेहि तः । द्युम्नीश्लोकीससोम्यः ॥ गिरावज्रोनसंभृतःसबलोऽअनपच्युतः । ववक्षऽऋष्वोऽअस्तृतः ॥ दुर्गेचिन्नःसुगं

---

( ८।९।१३ ) उद्धेदभीतिचतुस्त्रिंशदृचस्यसूक्तस्यांगिरसःसुकक्षइंद्रोगायत्री ।

कृधिगृणानऽइंद्रगिर्वणः । त्वंचमघवन्वशः ॥ २२ ॥ यस्यतेनूचिदादिशंनमिनंतिस्वराज्यं । नदेवोनाध्रिगुर्जनः ॥
अधातेऽअप्रतिष्कुतंदेवीशुष्मंसपर्यतः । उभेसुशिप्ररोदसी ॥ त्वमेतदधारयःकृष्णासुरोहिणीषुच । परुष्णीषुरुशत्प
यः ॥ वियदहेरधत्विषोविश्वेदेवासोऽअक्रमुः । विदन्मृगस्यताँऽअमः ॥ आदुमेनिवरोभुवद्वृत्रहादिष्टपौंस्यं । अजा
तशत्रुरस्तृतः ॥ २३ ॥ श्रुतंवोवृत्रहन्तमंप्रशर्धंचर्षणीनां । आशुषेराधसेमहे+ ॥ अयाधियाचगव्ययापुरुणामन्पुरु
ष्टुत । यत्सोमेसोमऽआभवः ॥ बोधिन्मनाऽइदस्तुनोवृत्रहाभूर्यासुतिः । शृणोतुशक्रऽआशिषं ॥ कयात्वंनऽऊत्या
भिप्रमंदसेवृषन् । कयास्तोतृभ्यऽआभर ॥ कस्यवृषासुतेसचानियुत्वान्वृषभोरणत् । वृत्रहासोमपीतये ॥ २४ ॥
अभीषुणस्त्वंरयिंमंदसानःसहस्रिणं । प्रयंतावोधिदाशुषे ॥ पत्नीवंतःसुताऽइमऽउशंतोयंतिवीतये । अपांजग्मिर्नि
चुंपुणः+ ॥ इष्टाहोत्राऽअसृक्षतेंद्रंवृधासोऽअध्वरे । अच्छावभृथमोजसा ॥ इहत्यासधमाद्याहरीहिरण्यकेश्या । वो
ळ्हामभिप्रयोहितं+ ॥ तुभ्यंसोमाःसुताऽइमेस्तीर्णंबर्हिर्विभावसो । स्तोतृभ्यऽइंद्रमावह ॥ २५ ॥ आतेदक्षंविरोच
नादधद्रत्नाविदाशुषे । स्तोतृभ्यऽइंद्रमर्चत ॥ आतेदधामींद्रियमुक्थाविश्वाशतक्रतो । स्तोतृभ्यऽइंद्रमृळय ॥
भद्रंभद्रंनऽआभरेषमूर्जंशतक्रतो । यदिंद्रमृळयासिनः ॥ सनोविश्वान्याभरसुवितानिशतक्रतो । यदिंद्र०
॥ त्वामिद्वृत्रहन्तमसुतावंतोहवामहे । यदिंद्रमृळयासिनः ॥ २६ ॥ उपनोहरिभिःसुतंयाहिमदानांपते । उप

नोहरिंभिः सुतं+ ॥ द्वितायोवृत्रहन्तमोविदऽइंद्रः शतक्रतुः । उप० ॥ त्वंहिवृत्रहन्नेषांपातासोमानामसि । उप० ॥ इंद्रऽइषेददातुनऽऋभुक्षणमृभुंरयिं । वाजीददातुवाजिनं ॥ २७ ॥ ( ८।१०।१ ) गौर्धयतिमरुतांश्रवस्युर्माता मघोनां । युक्तावह्नीरथानां ॥ यस्यांदेवाऽउपस्थेव्रताविश्वेधारयंते । सूर्यामासांदृशेकं+ ॥ तत्सुनोविश्वेऽअर्य ऽआसदांगृणंतिकारवः । मरुतः सोमपीतये ॥ अस्तिसोमोऽअयंसुतः पिबंत्यस्यमरुतः । उतस्वराजोऽअश्विना ॥ पिबंतिमित्रोऽअर्यमातनापूतस्यवरुणः । त्रिषधस्थस्यजावतः ॥ उतोन्वस्यजोषमाँऽइंद्रः सुतस्यगोमतः । प्रातर्होतेव मत्सति ॥ २८ ॥ कदत्विषंतसूरयस्तिरऽआपऽइवस्रिधः । अर्षंतिपूतदक्षसः ॥ कद्वोऽअद्यमहानांदेवानामवोवृणे । त्मनांचदस्मवर्चसां ॥ आयेविश्वापार्थिवानिपप्रथन्नोचनादिवः । मरुतः सोमपीतये ॥ त्यान्नुपूतदक्षसोदिवोवो मरुतोहुवे । अस्यसोमस्यपीतये ॥ त्यान्नुयेविरोदसीतस्तभुर्मरुतोहुवे । अस्य० ॥ त्यंनुमारुतंगणंगिरिष्ठांवृषणंहुवे । अस्य० ॥ २९ ॥ ( ८।१०।२ ) आत्वागिरोरथीरिवास्थुः सुतेषुगिर्वणः । अभित्वासमनूषतेंद्रवत्संनमातरः ॥ आत्वाशुक्रा ऽअचुच्यवुः सुतासऽइंद्रगिर्वणः । पिबात्व१स्यांधसऽइंद्रविश्वासुतेहितं+ ॥ पिबासोमंमदायकमिंद्रश्येनाभृतंसु

---

दशमेनुवाकेदशसूक्तानि ( ८।१०।१ ) गौर्धयतीतिद्वादशर्चस्यसूक्तस्यांगिरसोबिंदुर्मरुतोगायत्री ( पूतदक्षोवाऋषिः ) । ( ८।१०।२ ) आत्वागिरइतिनवर्चस्यसूक्तस्यांगिरसस्तिरश्चीरिंद्रोनुष्टुप् ।

ऋक्सं.

अ. ६ अ. ६

॥ ४४ ॥

तं । त्वंहिशश्वंतीनांपतीराजांविशामसि ॥ श्रुधीहवंतिरश्च्याऽइंद्रयस्त्वांसपर्यति । सुवीर्यस्यगोमंतोरायस्पूर्धिमहाऽअसि ॥ इंद्रयस्तेनवीयसींगिरंमंद्रामजीजनत् । चिकित्विन्मनसंधियंप्रत्नामृतस्यंपिप्युषीं ॥ ३० ॥ तमुंष्टवामयंगिरऽइंद्रमुक्थानिवावृधुः । पुरूण्यस्यपौंस्यासिषांसंतोवनामहे ॥ एतोन्विंद्रंस्तवांमशुद्धंशुद्धेनसाम्ना । शुद्धैरुक्थैर्वावृध्वांसंशुद्धऽआशीर्वान्ममत्तु ॥ इंद्रंशुद्धोनऽआगंहिशुद्धःशुद्धाभिरूतिभिः । शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः+ ॥ इंद्रंशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे । शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि ॥ ३१ ॥ ( ८।१०।३ )

अस्माऽउषासऽआतिरंतयाममिंद्रायनक्तमूर्म्याःसुवाचः । अस्माऽआपोमातरःसप्ततस्थुर्नृभ्यस्तरायसिंधवःसुपाराः+ ॥ अतिविद्धाविथुरेणाचिदस्त्रात्रिःसप्तसानुसंहितागिरीणां । नतद्देवोनमर्त्यस्तुतुर्याद्यानिप्रवृद्धोवृषभश्चकार ॥ इंद्रस्यवज्रऽआयसोनिमिश्लऽइंद्रस्यबाह्वोर्भूयिष्ठमोजः । शीर्षन्निंद्रस्यक्रतवोनिरेकऽआसन्नेषंतश्रुत्याऽउपाके+ ॥ मन्येत्वायज्ञियंयज्ञियानांमन्येत्वाच्यवनमच्युतानां । मन्येत्वासत्वनामिंद्रकेतुंमन्येत्वावृषभंचर्षणीनां+ ॥ आयद्वज्रंबाह्वोरिंद्रधत्सेमदच्युतमहयेहंतवाऽउं । प्रपर्वताऽअनवंतप्रगावःप्रब्रह्माणोऽअभिनक्षंतऽइंद्रं ॥ ३२ ॥ तमुंष्टवामयऽइमाजजानविश्वाजातान्यवराण्यस्मात् । इंद्रेणमित्रंदिधिषेमगीर्भिरुपोनमोभिर्वृषभंविशेम ॥ वृत्रस्यत्वाश्वसथादी

मंडलं ८

अनु. १०

॥ ४४ ॥

(८।१०।३) अस्माइत्येकविंशत्यृचस्यसूक्तस्यांगिरसस्तिरश्चीरिंद्रश्चतुर्दश्याइंद्रामरुतःपंचदश्याइंद्राबृहस्पतीत्रिष्टुप्चतुर्थीविराट्(सुतानोवाऋ.)

षमाणाविश्वैदेवाऽअंजहुर्येसखायः । मरुद्भिरिंद्रसख्यंतेऽअस्त्वथेमाविश्वाःपृतनाजयासि ॥ त्रिःषष्टिस्त्वामरुतोवा
वृधानाऽउस्राऽइवराशयोयज्ञियासः । उपत्वेमःकृधिनोभागधेयंशुष्मंतऽएनाहविषाविधेम ॥ तिग्ममायुधंमरुताम
नीकंकस्तऽइंद्रप्रतिवज्रंदधर्ष । अनायुधासोऽअसुराऽअदेवाश्चक्रेणताँऽअपवपऽऋजीषिन् ॥ महऽउग्रायतवसेसुवृ
क्तिंप्रेरयशिवतमायपश्वः । गिर्वाहसेगिरऽइंद्रायपूर्वीर्धेहितन्वेकुविदंगवेदत् ॥ ३३ ॥ उक्थवाहसेविभ्वेमनीषांद्रु
णानपारमीरयानदीनां । निस्पृशधियातन्विश्रुतस्यजुष्टतरस्यकुवि० ॥ तद्विविड्ढियत्तऽइंद्रोजुजोषत्स्तुहिसुष्टुतिंनम
साविवास । उपभूषजरितर्मारुवण्यःश्रावयावाचंकुवि० ॥ अवद्रप्सोऽअंशुमतीमतिष्ठदियानःकृष्णोदशभिःसहस्रैः ।
आवत्तमिंद्रःशच्याधमंतमपस्नेहितीर्नृमणाऽअधत्त ॥ द्रप्समपश्यंविषुणेचरंतमुपह्वरेनद्योऽअंशुमत्याः । नभोनकृ
ष्णमवतस्थिवांसमिष्यामिवोवृषणोयुध्यंताजौ ॥ अधद्रप्सोऽअंशुमत्याऽउपस्थेधारयत्तन्वंतित्विषाणः । विशोऽ
अदेवीरभ्याचरंतीर्बृहस्पतिनायुजेंद्रःससाहे ॥ ३४ ॥ त्वंहत्यत्सप्तभ्योजायमानोशत्रुभ्योऽअभवःशत्रुरिंद्र । गूळ्हे
द्यावापृथिवीऽअन्वविंदोविभुमद्भ्योभुवनेभ्योरणंधाः ॥ त्वंहत्यदप्रतिमानमोजोवज्रेणवज्रिन्धृषितोजघंथ । त्वंशुष्ण
स्यावातिरोवधत्रैस्त्वंगाऽइंद्रशच्येदविंदः ॥ त्वंहत्यद्वृषभचर्षणीनांघनोवृत्राणांतविषोबभूथ । त्वंसिंधूँरसृजस्तस्त
भानान्त्वमपोऽअजयोदासपत्नीः ॥ ससुक्रतूरणितायःसुतेष्वनुत्तमन्युर्योऽअहेवरेवान् । यऽएकऽइन्नर्यपांसिकर्तास

ऋक्सं. अ. ६ अ. ६ ॥ ४५ ॥

मंडलं ८ अनु. १०

वृत्रहाप्रतीदन्यमाहुः ॥ सवृत्रहेंद्रश्चर्षणीधृत्तंसुष्टुत्याहव्यंहुवेम । सप्राविताम्घवानोधिवक्तासवाजस्यश्रवस्यस्यदा
ता ॥ सवृत्रहेंद्रऽऋभुक्षाःसद्योजज्ञानोहव्योबभूव । कृण्वन्नपांसिनर्यापुरूणिसोमोनपीतोहव्यःसखिभ्यः ॥ ३५ ॥
( ८।१०।४ ) याऽइंद्रभुजऽआभरःस्वर्वाँऽअसुरेभ्यः । स्तोतारमिन्मघवन्नस्यवर्धययेचत्वेवृक्तबर्हिषः ॥ यमिंद्रद
धिषेत्वमश्वंगांभागमव्ययं । यजमानेसुन्वतिदक्षिणावतितस्मिन्तंधेहिमापणौ ॥ यऽइंद्रसस्त्यव्रतोनुष्वापमदेवयुः ।
स्वैःषऽएवैर्मुमुरत्पोष्यंरयिंसनुतर्धेहितंततः ॥ यच्छक्रासिपरावतियदर्वावतिवृत्रहन् । अतस्त्वागीर्भिर्द्युगदिंद्रकेशि
भिःसुतावाँऽआविवासति ॥ यद्वासिरोचनेदिवःसमुद्रस्याधिविष्टपि । यत्पार्थिवेसदनेवृत्रहन्तमयदंतरिक्षऽआग
हि ॥ ३६ ॥ सनःसोमेषुसोमपाःसुतेषुशवसस्पते । मादयस्वराधसासूनृतावतेंद्ररायापरीणसा ॥ मानऽइंद्रपरावृ
णग्भवानःसधमाद्यः । त्वंनऽऊतीत्वमिन्नऽआप्यंमानऽइंद्रपरावृणक् ॥ अस्मेऽइंद्रसचासुतेनिषदापीतयेमधु । कृ
धीजरित्रेमघवन्नवोमहदस्मेऽइंद्रसचासुते ॥ नत्वादेवासऽआशतनमर्त्यासोऽअद्रिवः । विश्वाजातानिशवसाभिभू
रसिनत्वादेवासऽआशत ॥ विश्वाःपृतनाऽअभिभूतरंनरंसजूस्ततक्षुरिंद्रंजजनुश्चराजसे । क्रत्वावरिष्ठंवरऽआमुरिमु
तोग्रमोजिष्ठंतवसंतरस्विनं ॥ ३७ ॥ समींरेभासोऽअस्वरन्निंद्रंसोमस्यपीतये । स्वर्पतिंयदींवृधेधृतव्रतोह्योजसासमू

॥ ४५ ॥

---

( ८।१०।४ ) याइंद्रेतिपंचदशर्चस्यसूक्तस्यकाश्यपोरेभइंद्रोबृहतीदशम्याद्याः क्रमेणातिजगत्युपरिष्टाद्बृहत्यौजगतीत्रिष्टुप्जगत्यः ।

तिभिः ॥ नेमिंनमंतिचक्षसामेषंविप्राऽअभिस्वरा । सुदीतयोवोऽअद्रुहोपिकर्णेतरस्विनःसमृक्वभिः ॥ तमिंद्रंजोहवी
मिमघवांनमुग्रंसत्रादधानमप्रतिष्कुतंशवांसि । मंहिष्ठोगीर्भिराचयज्ञियोववर्तद्रायेनोविश्वासुपथाकृणोतुवज्री ॥
त्वंपुरऽइंद्रचिकिदेनाव्योजंसाशविष्ठशक्रनाशयध्यै । त्वद्विश्वानिभुवनानिवज्रिन्द्यावारेजेतेपृथिवीचभीषा ॥
तन्मऽऋतमिंद्रशूरचित्रपात्वपोनवज्रिन्दुरितातिपर्षिभूरि । कदानऽइंद्ररायऽआदशस्येर्विश्वप्स्न्यस्यस्पृहयाय्यस्यरा
जन् ॥ ३८ ॥ इतिषष्ठाष्टकेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥

षट्चत्वारिंशाध्यायेवर्गाः ३८ सूक्तानि १६ ऋचः १९७ ॥ त्यागः ॥ इंद्राये.९ विश्वेभ्योदेवेभ्य.९ [ भे. प. विश्वेभ्योदे.३ अर्यमवरुणाभ्यामि. विश्वेभ्योदेवेभ्य.५ ] अग्नय. ९ अश्विभ्यामि.२० इंद्राये.९२ इंद्रर्भुभ्य. मरुद्भ्य.१२ इंद्राये.२२ इंद्रामरुद्भ्य. इंद्राबृहस्पतिभ्या. इंद्रायेदं.२१ ॥ इतिषष्ठेषष्ठः ॥

इंद्रायद्वादशनृमेधऔष्णिहंसप्तम्युपांत्येचककुभौत्यानवम्यौपुरउष्णिहौत्वामिदाष्टौप्रागाथमयंतेद्वादशंनेमो
भार्गवस्त्रैष्टुभंषष्ठीजगतीपरास्तिस्रोनुष्टुभोयमितिद्वृचेनेंद्रआत्मानमस्तौदुपांत्येवाच्यावृधक्षोळशंजमदग्निर्भा
र्गवोमैत्रावरुणंप्रागाथंत्रित्रिष्टुबंततृतीयादिगायत्रीपरासतोबृहतीस्तोत्रंराजस्वृक्सपादादित्याश्विन्यौवायव्ये
सौर्यौबृहत्युषस्यांसूर्यप्रभास्तुतिर्वीपाव[illegible]र्गवःप्रयोगोबार्हस्पत्योवाग्निःपावकःसहस

स्तुतयोर्वाग्न्योर्गृहपतिर्यविष्ठयोर्वान्यतर आग्नेयंत्वदर्शिषळूर्नासोभरिर्बार्हतंपंचमीविराड्रूपासप्तम्याद्ययुजः
सतोबृहत्योष्टम्यादियुजःककुब्भसीयसीककुबनुष्टुबंत्याग्निमारुतीनवमंमंडलंपावमानंसौम्यंस्वादिष्ठयादशम
धुच्छंदाःपवस्वमेधातिथिरेषशुनःशेपःसनहिरण्यस्तूपःसमिद्धएकादशकाश्यपोसितोदेवलोवाविंशतिःसूक्ता
न्याद्यमाप्रियंश्चतुरनुष्टुबंतंमंद्रयानवासृग्रमेतेसोमाःपरिप्रियाप्रस्वानासउपास्मैसोमाअसृग्रं ॥ ७ ॥ ॥

हरिःओम् ॥ ( ८।१०।५ ) इंद्रायसामगायतविप्रायबृहतेबृहत् । धर्मकृतेविपश्चितेपनस्यवे ॥ त्वमिंद्राभिभूर सित्वंसूर्यमरोचयः । विश्वकर्माविश्वदेवोमहाँऽअसि ॥ विभ्राजन्ज्योतिषास्व१रगच्छोरोचनंदिवः । देवास्तऽइंद्रसख्यायंयेमिरे ॥ एंद्रनोगधिप्रियःसत्राजिदगोह्यः । गिरिर्नविश्वतस्पृथुःपतिर्दिवः+ ॥ अभिहिसत्यसोमपाऽउभेबभूथरोदसी । इंद्रासिसुन्वतोवृधःपति० ॥ त्वंहिशश्वतीनामिंद्रदर्तापुरामसि । हंतादस्योर्मनोर्वृधःपति० ॥ १ ॥ अधाहींद्रगिर्वणऽउपत्वाकामान्महःससृज्महे । उदेवयंतऽउदभिः ॥ वार्णत्वायव्याभिर्वर्धंतिशूरब्रह्माणि । वावृध्वांसंचिदद्रिवोदिवेदिवे॥ युंजंतिहरीऽइषिरस्यगाथयोरौरथऽउरुयुगे। इंद्रवाहावचोयुजा ॥ त्वंनऽइंद्राभरँऽओजोनृम्णंशतक्रतोविचर्षणे । आवीरंपृतनाषहं ॥ त्वंहिनःपितावसोत्वंमाताशतक्रतोबभूविथ । अधातेसुम्नमीमहे॥ त्वांशुष्मिन्पुरु



---

( ८।१०।५ ) इंद्रायसामेतिद्वादशर्चस्यसूक्तस्यांगिरसोनृमेधइंद्रउष्णिक्सप्तमीदशम्येकादश्यःककुभोनवम्यंत्येपुरउष्णिहौ ।

हूतवाजयंतमुपब्रुवेशतक्रतो । सनोरास्वसुवीर्यं ॥ २ ॥ ( ८।१०।६ ) त्वामिदाह्योनरोपींप्यन्वज्रिन्भूर्णयः । सऽइंद्रस्तोमवाहसामिहश्रुध्युपस्वसरमागहि ॥ मत्स्वासुशिप्रहरिवस्तदीमहेत्वेऽआभूषंतिवेधसः । तवश्रवांस्युपमान्युक्थ्यासुतेष्विंद्रगिर्वणः ॥ श्रायंतऽइवसूर्यंविश्वेदिंद्रस्यभक्षत । वसूनिजातेजनमानऽओजसाप्रतिभागंनदीधिम ॥ अनर्शरातिंवसुदामुपस्तुहिभद्राऽइंद्रस्यरातयः । सोऽअस्यकामंविधतोनरोषतिमनोदानायचोदयन् ॥ त्वामिंद्रप्रतूर्तिष्वभिविश्वाऽअसिस्पृधः । अशस्तिहाजनितार्विश्वतूरसित्वंतूर्यतरुष्यतः+ ॥ अनुतेशुष्मंतुरयंतमीयतुःक्षोणीशिशुंनमातरां । विश्वास्तेस्पृधःश्नथयंतमन्यवेवृत्रंयदिंद्रतूर्वसि ॥ इतऽऊतीवोऽअजरंप्रहेतारमप्रहितं । आशुंजेतारंहेतारंरथीतममतूर्तंतुग्र्यावृधं ॥ इष्कर्तारमनिष्कृतंसहस्कृतंशतमूतिंशतक्रतुं । समानमिंद्रमवसेहवामहेवसवानंवसूजुवं ॥ ३ ॥ ( ८।१०।७ ) अयंतऽएमितन्वापुरस्ताद्विश्वेदेवाऽअभिमायंतिपश्चात् । यदामह्यंदीधरोभागमिंद्रादिन्मयाकृणवोवीर्याणि ॥ दधामितेमधुनोभक्षमग्रेहितस्तेभागःसुतोऽअस्तुसोमः । असश्चत्वंदक्षिणतःसखामेधावृत्राणिजंघनाव

---

(८।१०।६) त्वामिदेत्यष्टर्चस्यसूक्तस्यांगिरसोनृमेधइंद्रःअयुजोबृहत्योयुजःसतोबृहत्यः । (८।१०।७) अयंतइतिद्वादशर्चस्यसूक्तस्यभार्गवोनेमऋषिःअयंतइतिद्वयोरिंद्रऋषिःइंद्रोदेवतामनोजवाइत्यस्याःसुपर्णोदेवतासमुद्रेइत्यस्यावज्रंयद्वाग्वदंतीतिद्वयोर्वाग्देवतात्रिष्टुप्षष्ठीजगतीसप्तम्याद्यास्तिस्रोनुष्टुभः ।

भूरिं ॥ प्रसुस्तोमंभरतवाजयंतऽइंद्रायसत्यंयदिसत्यमस्ति । नेंद्रोऽअस्तीतिनेमऽउत्वऽआहकईंददर्शकमभिष्टवाम ॥ अयमंस्मिजरितःपश्यमेहविश्वाजातान्यभ्यंस्मिमह्वा । ऋतस्यमाप्रदिशोवर्धयंत्यादर्दिरोभुवनादर्दरीमि ॥ आयन्मा वेनाऽअरुहन्नृतस्यँऽएकमासीनंहर्यतस्यपृष्ठे । मनंश्चिन्मेहृदऽआप्रत्यवोचदचिंक्रदन्छिशुमंतःसखायः ॥ विश्वेत्ताते सर्वनेषुप्रवाच्यायाचकर्थमघवन्निंद्रसुन्वते । पारावतंयत्पुरुसंभृतंवस्वपावृणोःशरभायऽऋषिबंधवे ॥ ४ ॥ प्रनूनंधा वतापृथङ्नेहयोवोऽअवावरीत् । निर्षीवृत्रस्यमर्मणिवज्रमिंद्रोऽअपीपतत् ॥ मनोंजवाऽअयमानऽआयसीमंतरत्पुरं । दिवंसुपर्णोगत्वायसोमंवज्रिणऽआभंरत् ॥ समुद्रेऽअंतःशयतऽउद्गावज्रोऽअभीवृतः । भरंत्यस्मैसंयतःपुरःप्रस्रवणा बलिं[+] ॥ यद्वाग्वदंत्यविचेतनानिराष्ट्रीदेवानांनिषसादमंद्रा । चतस्रऽऊर्जंदुदुहेपयांसिक्वंस्विदस्याःपरमंजगाम ॥ देवींवाचमजनयंतदेवास्तांविश्वरूपाःपशवोवदंति । सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ॥ सखेविष्णोवि तरंविक्रमस्वद्यौर्देहिलोकंवज्रायविष्कभे । हनावत्रंरिणचावसिंधूनिंद्रस्ययंतुप्रसवेविसृष्टाः ॥ ५ ॥ ( ८।१०।८ ) ऋध

---

( ८।१०।८ ) ऋधगित्थेतिषोळशर्चस्यसूक्तस्यभार्गवोजमदग्निर्ऋषिर्मित्रावरुणौदेवते पंचम्यामित्रावरुणादित्यादेवताःषष्ठ्याआदि त्याःसप्तम्यष्टम्योरश्विनौनवमीदशम्योर्वायुरेकादशीद्वादश्योःसूर्यस्त्रयोदश्याउषाश्चतुर्दश्याःपवमानस्ततोद्वयोर्गौर्बृहती द्वितीयाचतुर्थी- षष्ठयष्टम्यःसतोबृहत्यःतृतीयागायत्र्यंत्यास्तिस्रस्त्रिष्टुभः ।

गि॒त्थास॒मर्त्यः॑श॒शमे॑दे॒वता॑तये । योनू॒नंमि॒त्राव॑रुणाव॒भिष्ट॑यऽआच॒क्रेह॒व्यदा॑तये ॥ वर्षि॑ष्ठक्षत्राऽउरु॒चक्ष॑सा॒नरा॒

राजा॑नादीर्घ॒श्रुत्त॑मा । ताबा॒हुता॒नद॒ंसना॒रथर्य॑तः सा॒कंसूर्य॑स्यर॒श्मिभिः॑ ॥ प्रयोवां॑मि॒त्राव॑रुणाजि॒रोदू॒तोऽअद्र॑वत् ।

अयः॑शीर्षा॒मदे॑रघुः ॥ नयः॒संपृच्छे॒नपुन॒र्हवी॑तवे॒नसं॑वा॒दाय॒रम॑ते । तस्मा॑न्नोऽअ॒द्यसमृ॑तेरुरु॒ष्यतं॑बा॒हुभ्या॑न॒ऽउरुष्यतं ॥

प्रमि॒त्राय॒प्रार्य॒म्णेस॑च॒थ्य॑मृतावसो । व॒रू॒थ्यं१वरु॑णे॒छंद्यं॒वचः॑स्तो॒त्रंरा॑जसुगायत ॥ ६ ॥ तेहि॑न्वि॒रेऽअरु॒णंजेन्यं॒वस्वे

कंपु॒त्रंति॑सृ॒णां । तेधामा॒न्यमृ॒तामर्त्या॑ना॒मद॑ब्धाऽअ॒भिच॑क्षते ॥ आमे॒वचा॒स्युद्यताद्यु॒मत्त॑माणि॒कर्त्वा॑ । उ॒भाया॑तंना

सत्यास॒जोष॑सा॒प्रतिह॒व्यानि॑वी॒तये॑ ॥ रा॒तिंयद्वा॑मर॒क्षसं॒हवा॑महेयु॒वाभ्यां॑वाजिनीवसू । प्राचीं॒होत्रां॑प्रति॒रंता॑वितंनरा

गृ॒णानाज॒मद॑ग्निना ॥ आनो॑य॒ज्ञंदि॑वि॒स्पृशं॒वायो॑या॒हिसु॒मन्म॑भिः । अं॒तःप॒वित्र॒ऽउ॒परि॑श्री॒णा॒नो॒३॒॑यंशु॒क्रोऽअ॑यामि

ते ॥ वेत्य॑ध्व॒र्युःप॒थिभी॒रजि॑ष्ठैः॒प्रति॑ह॒व्यानि॑वी॒तये॑ । अधा॑नियुत्वऽउ॒भय॑स्यनःपिब॒शुचिं॒सोमं॒गवा॑शिरं ॥ ७ ॥ बण्म॒

हाँऽअसि॒सूर्य॒बळा॑दित्यम॒हाँऽअसि । म॒हस्ते॑स॒तोम॑हि॒माप॑नस्यते॒द्धादे॑वम॒हाँऽअसि ॥ बट्सू॑र्य॒श्रव॑सामहाँऽअसिस॒त्रा

दे॑वम॒हाँऽअसि । म॒ह्नादे॒वाना॑मसु॒र्यः॑पु॒रोहि॑तोवि॒भुज्योति॒रदा॑भ्यं ॥ इ॒यंया॒नीच्य॒र्कि॒णी॑रू॒पारोहि॑ण्याकृ॒ता । चि॒त्रेव

प्रत्य॑दर्श्या॒यत्य॑१॒न्तर्द॒शसु॑बा॒हुषु ॥ प्र॒जाह॑ति॒स्रोऽअ॒त्याय॑मीयु॒र्न्य१॒न्याऽअ॒र्कम॒भितो॑विविश्रे । बृ॒हद्ध॑तस्थौ॒भुव॑नेष्व॒न्तः

पव॑मानोह॒रित॒ऽआवि॑वेश ॥ मा॒ताॠ॒द्राणां॑दु॒हि॒तावसू॑नां॒स्वसा॑दि॒त्याना॑म॒मृत॑स्य॒नाभिः॑ । प्रनुवो॑चंचिकि॒तुषे॒जना॑य॒

ऋक्सं. अ. ६ अ. ७ ॥ ४८ ॥

मंडलं ८ अनु. १०

मागामनागामदितिंवधिष्ट ॥ वचोविदंवाचमुदीरयंतींविश्वाभिर्धीभिरुपतिष्ठमानां । देवींऽदेवेभ्यःपर्येयुषींगामामावृक्तमर्त्योदभ्रचेताः ॥ ८ ॥ ( ८।१०।९ ) त्वमग्नेबृहद्वयोदधासिदेवदाशुषे । कविर्गृहपतिर्युवा ॥ सनऽईळानयासहदेवाँऽअग्नेदुवस्युवा । चिकिद्विभानवावह ॥ त्वयाहस्विद्युजावयंचोदिष्ठेनयविष्ठ्य । अभिष्मोवाजसातये ॥ और्वभृगुवच्छुचिमप्नवानवदाहुवे । अग्निंसमुद्रवाससं ॥ हुवेवातस्वनंकविंपर्जन्यक्रंद्यंसहः । अग्निं० ॥ ९ ॥ आसवंसवितुर्यथाभगस्येवभुजिंहुवे । अग्निं० ॥ अग्निंवोवृधंतमध्वराणांपुरूतमं । अच्छानप्त्रेसहस्वते ॥ अयंयथानऽआभुवत्त्वष्टारूपेवतक्ष्या । अस्यक्रत्वायशस्वतः ॥ अयंविश्वाऽअभिश्रियोग्निर्देवेषुपत्यते । आवाजैरुपनोगमत् ॥ विश्वेषामिहस्तुहिहोतृणांयशस्तमं । अग्निंयज्ञेषुपूर्व्यं+ ॥ १० ॥ शीरंपावकशोचिषंज्येष्ठोयोदमेष्वा । दीदायदीर्घश्रुत्तमः ॥ तमर्वंतंनसानासिंगृणीहिविप्रशुष्मिणं । मित्रंनयातयज्जनं ॥ उपत्वाजामयोगिरोदेदिशतीर्हविष्कृतः । वायोरनीकेऽअस्थिरन् ॥ यस्यत्रिधात्ववृतंबर्हिस्तस्थावसंदिनं । आपश्चिन्निदधापदं+ ॥ पदंदेवस्यमीळ्हुषोनाधृष्टाभिरूतिभिः । भद्रासूर्यऽइवोपदृक्+ ॥ ११ ॥ अग्नेघृतस्यधीतिभिस्तेपानोदेवशोचिषा । आदेवान्वक्षियक्षिच ॥ तंत्वाजनं

॥ ४८ ॥

( ८।१०।९ ) त्वमग्नइतिद्वाविंशत्यृचस्यसूक्तस्यभार्गवःप्रयोगोग्निर्गायत्री । अस्मिन्सूक्तेएतत्ऋषयोविकल्प्यंते—बार्हस्पत्योग्निःपावकः यद्वासहसःपुत्रौगृहपतियविष्ठौअनयोरन्यतरोवा ) ।

तमातरः॑कुविं॑देवासो॑ऽअंगिरः । हव्यवाहममर्त्यं ॥ प्रचेतसंत्वाकवेग्नेदूतंवरेण्यं । हव्यवाहंनिषेदिरे ॥ नहिमेऽअ
स्त्यघ्न्यानस्वधितिर्वनन्वति । अथैताहग्भरामिते ॥ यदग्नेकानिकानिचिदातेदारूणिदध्मसि । ताजुषस्वयविष्ठ्य ॥
यदत्त्युपजिह्विकायद्वम्रोऽअतिसर्पति । सर्वंतदस्तुतेघृतं+ ॥ अग्निमिंधानोमनसाधियंसचेतमर्त्यः । अग्निमीधेवि
वस्वभिः ॥ १२ ॥ ( ८।१०।१० ) अदर्शिगातुवित्तमोयस्मिन्व्रतान्यादधुः । उपोषुजातमार्यस्यवर्धनमग्निंनक्षंतनो
गिरः ॥ प्रदैवोदासोऽअग्निर्देवाँऽअच्छानमज्मना । अनुमातरंपृथिवींविवावृतेतस्थौनाकस्यसानवि ॥ यस्माद्रेजंतकृ
ष्टयंश्चर्कृत्यानिकृण्वतः । सहस्रसांमेधसाताविवत्मनाग्निंधीभिःसपर्यत ॥ प्रयंरायेनिनीषसिमर्तोयस्तेवसोदाशत् ।
सवीरंधत्तेऽअग्नऽउक्थशंसिनंत्मनासहस्रपोषिणं ॥ सदृढेचिदभितृणत्तिवाजमर्वतासधत्तेऽअक्षितिश्रवः । त्वेदेवत्रा
सदापुरूवसोविश्वावामानिधीमहि ॥ १३ ॥ योविश्वादयतेवसुहोतामंद्रोजनानां । मधोर्नपात्राप्रथमान्यस्मैप्रस्तोमा
यंत्यग्नये ॥ अश्वंनगीर्भीरथ्यंसुदानवोमर्मृज्यंतेदेवयवः । उभेतोकेतनयेदस्मविश्पतेपर्षिराधोमघोनां ॥ प्रमंहिष्ठाय
गायतऽऋताव्नेबृहतेशुक्रशोचिषे । उपस्तुतासोऽअग्नये ॥ आवंसतेमघवावीरवद्यशःसमिद्धोद्युम्न्याहुतः । कुविन्नोऽ

---

( ८।१०।१० ) अदर्शीतिचतुर्दशर्चस्यसूक्तस्यकाण्वःसोभरिरग्निस्त्यायाअग्नामरुतोबृहतीपंचमीविराडूपासप्तम्याद्ययुजःसतोबृहत्यो
ऽष्टम्यादियुजःक्रमेणककुब्हसीयसीककुबनुष्टुभः ।

अस्यसुमतिर्नवीयस्यच्छावाजेभिरागमत् ॥ प्रेष्ठमुप्रियाणांस्तुह्यासावातिथिं । अग्निरथानांयमं ॥ १४ ॥ उदितायो निदितावेदितावस्वायज्ञियोववर्तति । दुष्टरायस्यप्रवणेनोर्मयोधियावाजंसिषासतः ॥ मानोहृणीतामतिथिर्वसुरग्निः पुरुप्रशस्तऽएषः । यःसुहोतास्वध्वरः+ ॥ मोतेरिषन्येऽअच्छोक्तिभिर्वसोग्नेकेभिश्चिदेवैः । कीरिश्चिद्धित्वामीट्टेदूत्या यरातहव्यःस्वध्वरः+ ॥ आग्नेयाहिमरुत्सखारुद्रेभिःसोमपीतये । सोभर्याऽउपसुष्टुतिंमादयस्वस्वर्णरे ॥ १५ ॥ ॥ ( इतिप्रागाथमष्टमंमंडलंअत्रसूक्तानि ९२ ) ॥ ( ९।१।१ ) स्वादिष्ठयामदिष्ठयापवस्वसोमधारया । इंद्रायपातवेसुतः+ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहतं । द्रुणासधस्थमासदत् ॥ वरिवोधातमोभवमंहिष्ठोवृत्रहन्तमः । पर्षिराधोमघोनाम् ॥ अभ्यर्षमहानांदेवानांवीतिमंधसा । अभिवाजमुतश्रवः ॥ त्वामच्छाचरामसितदिदर्थंदिवेदिवे । इंदोत्वेनऽआशसः ॥ १६ ॥ पुनातितेपरिस्रुतंसोमंसूर्यस्यदुहिता । वारेणशश्वतातना ॥ तमीमण्वीःसमर्यऽआगृभ्णंतियोषणोदश । स्वसारःपार्येदिवि+ ॥ तमींहिन्वंत्यग्रुवोधमंतिबाकुरंदृतिं । त्रिधातुवारणंमधु ॥ अभीऽमम घ्न्याऽउतश्रीणंतिधेनवःशिशुं । सोममिंद्रायपातवे ॥ अस्येदिंद्रोमदेष्वाविश्वावृत्राणिजिघ्नते । शूरोमघाचमंह



---

पावमानेनवमेमंडलेसप्तानुवाकाःतत्रप्रथमेनुवाकेसप्तदशसूक्तानि ( ९।१।१ ) स्वादिष्ठयेतिदशर्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदाः पवमानसोमोगायत्री ।

ते ॥ १७ ॥ ( ९।१।२ ) पवस्वदेववीरतिपवित्रंसोमरंह्या । इंद्रमिंदोवृषाविश ॥ आवच्यस्वमहिप्सरोवृषेंदोद्युम्नवत्तमः । आयोनिंधर्णसिःसदः ॥ अधुक्षतप्रियंमधुधारासुतस्यवेधसः । अपोवसिष्टसुक्रतुः ॥ महांतंत्वामहीरन्वापोऽअर्षतिसिंधवः । यद्गोभिर्वासयिष्यसे ॥ समुद्रोऽअप्सुमामृजेविष्टंभोधरुणोदिवः । सोमःपवित्रेऽअस्मयुः+ ॥ १८ ॥ अचिक्रदद्वृषाहरिर्महान्मित्रोनदर्शतः । संसूर्येणरोचते ॥ गिरस्तऽइंदऽओजसामर्मृज्यंतेऽअपस्युवः । याभिर्मदायशुंभसे ॥ तंत्वामदायघृष्वयऽउलोककृत्नुमीमहे । तवप्रशस्तयोमहीः+ ॥ अस्मभ्यमिंदविंद्रयुर्मध्वःपवस्वधारया । पर्जन्योवृष्टिमाँऽइव ॥ गोषाऽइंदोनृषाऽअस्यश्वसावाजसाऽउत । आत्मायज्ञस्यपूर्व्यः+ ॥ १९ ॥ ( ९।१।३ ) एषदेवोऽअमर्त्यःपर्णवीरिवदीयति । अभिद्रोणान्यासदं ॥ एषदेवोविपाकृतोतिह्वरांसिधावति । पवमानोऽअदाभ्यः ॥ एषदेवोविपन्युभिःपवमानऽऋतायुभिः । हरिर्वाजायमृज्यते ॥ एषविश्वानिवार्याशूरोयन्निवसत्वभिः । पवमानःसिषासति ॥ एषदेवोरथर्यतिपवमानोदशस्यति । आविष्कृणोतिवग्वनुं+ ॥ २० ॥ एषविप्रैरभिष्टुतोपोदेवोविगाहते । दधद्रत्नानिदाशुषे ॥ एषदिवंविधावतितिरोरजांसिधारया । पवमानःकनिक्रदत् ॥ एषदिवंव्यासरत्तिरोरजांस्यस्पृ

---

( ९।१।२ ) पवस्वेतिदशर्चस्यसूक्तस्यकाण्वोमेधातिथिःपवमानसोमोगायत्री । ( ९।१।३ ) एषदेवइतिदशर्चस्यसूक्तस्याजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोदेवरातःपवमानसोमोगायत्री ।

तः । पवमानः स्वध्वरः ॥ एषप्रत्नेनजन्मनादेवोदेवेभ्यःसुतः । हरिःपवित्रेऽअर्षति ॥ एषऽउस्यपुरुव्रतोजज्ञानोजनयन्निषः । धारयापवतेसुतः ॥ २१ ॥ (९।११४) सनाचसोमजेषिचपवमानमहिश्रवः । अथानोवस्यसस्कृधि ॥ सनाज्योतिःसनास्व१र्विश्वाचसोमसौभगा । अथा० ॥ सनादक्षमुतक्रतुमपसोममृधोजहि । अथा० ॥ पवीतारःपुनीतनसोममिंद्रायपातवे । अथा० ॥ त्वंसूर्येनऽआभजतवक्रत्वातवोतिभिः । अथा० ॥ २२ ॥ तवक्रत्वातवोतिभिर्ज्योक्पश्येमसूर्यं । अथा० ॥ अभ्यर्षस्वायुधसोमद्विबर्हसंरयिं । अथा० ॥ अभ्य१र्षानपच्युतोरयिंसमत्सुसासहिः । अथा० ॥ त्वांयज्ञैरवीवृधन्पवमानविधर्मणि । अथा० ॥ रयिंनश्चित्रमश्विनमिंदोविश्वायुमाभर । अथा० ॥ २३ ॥ (९।११५) समिद्धोविश्वतस्पतिःपवमानोविराजति । प्रीणन्वृषाकनिक्रदत् ॥ तनूनपात्पवमानःशृंगेशिशानोऽअर्षति । अंतरिक्षेणरारजत् ॥ ईळेन्यःपवमानोरयिर्विराजतिद्युमान् । मधोर्धाराभिरोजसा ॥ बर्हिःप्राचीनमोजसापवमानस्तृणन्हरिः । देवेषुदेवऽईयते ॥ उदातैर्जिहतेबृहद्द्वारोदेवीर्हिरण्ययीः । पवमानेनसुष्टु

---

(९।११४) सनाचेतिदशर्चस्यसूक्तस्यांगिरसोहिरण्यस्तूपःपवमानसोमोगायत्री । (९।११५) समिद्धइत्येकादशर्चस्यसूक्तस्यकाश्यपोसितःक्रमेणेध्मस्तनूनपादिळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौतिस्रोदेव्यःसरस्वतीळाभारत्यस्त्वष्टावनस्पतिःस्वाहाकृतयोगायत्री-अंत्याश्वतस्रोनुष्टुभः । (इतआरभ्यविंशतिसूक्तेषुकाश्यपोदेवलोऽसितेनसहविकल्पते) ।

ताः ॥ २४ ॥ सुशिल्पेबृहतीमहीपवमानोवृषण्यति । नक्तोषासानदर्शते+ ॥ उभादेवानृचक्षसाहोतारादैव्याहुवे । पवमानऽइंद्रोवृषा ॥ भारतीपवमानस्यसरस्वतीळामही । इमंनोयज्ञमागमन्तिस्रोदेवीःसुपेशसः ॥ त्वष्टारमग्रजांगोपांपुरोयावानमाहुवे । इंदुरिंद्रोवृषाहरिःपवमानःप्रजापतिः ॥ वनस्पतिंपवमानमध्वासमङ्ग्धिधारया । सहस्रवल्शंहरिंतंभ्राजमानंहिरण्ययं ॥ विश्वेदेवाःस्वाहाकृतिंपवमानस्यागत । वायुर्बृहस्पतिःसूर्योग्निरिंद्रःसजोषसः ॥ २५ ॥ ( ९।१।६ ) मंद्रयासोमधारयावृषापवस्वदेवयुः । अव्योवारेष्वस्मयुः+ ॥ अभित्यंमद्यंमदमिंदविंद्रऽइतिक्षर । अभिवाजिनोऽअर्वतः ॥ अभित्यंपूर्व्यंमदंसुवानोऽअर्षपवित्रऽआ । अभिवाजमुतश्रवः ॥ अनुद्रप्सासऽइंदवऽआपोनप्रवतासरन् । पुनानाऽइंद्रमाशत ॥ यमत्यमिववाजिनंमृजंतियोषणोदश । वनेक्रीळंतमत्यविं ॥ २६ ॥ तंगोभिर्वृषणंरसंमदायदेववीतये । सुतंभरायसंसृज ॥ देवोदेवायधारयेंद्रायपवतेसुतः । पयोयदस्यपीपयत् ॥ आत्मायज्ञस्यरंह्यासुष्वाणःपवतेसुतः । प्रत्नंनिपातिकाव्यं ॥ एवापुनानऽइंद्रयुर्मदंमदिष्ठवीतये । गुहाचिद्दधिषेगिरः ॥ २७ ॥ ( ९।१।७ ) असृग्रमिंदवःपथाधर्मन्नृतस्यसुश्रियः । विदानाऽअस्ययोजनं ॥ प्रधारामध्वोऽअग्रियोमहीरपोविगाह

---

( ९।१।६ ) मंद्रयेतिनवर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री । ( ९।१।७ ) असृग्रमितिनवर्चस्यसूक्तस्यकाश्यपोऽसितः पवमानसोमोगायत्री ।

ते । हविर्हविष्षुवंद्यः ॥ प्रयुजोवाचोऽअग्रियोवृषावचक्रदद्वने । सद्माभिसत्योऽअध्वरः+ ॥ परियत्काव्याकविर्नृम्णावसानोऽअर्षति । स्ववाजीसिषासति ॥ पवमानोऽअभिस्पृधोविशोराजेवसीदति । यदीमृण्वंतिवेधसः ॥ २८ ॥ अव्योवारेपरिप्रियोहरिर्वनेषुसीदति । रेभोवनुष्यतेमती+ ॥ सवायुमिंद्रमश्विनासाकंमदेनगच्छति । रणायोऽअस्यधर्मभिः ॥ आमित्रावरुणाभगंमध्वःपवंतऽऊर्मयः । विदानाऽअस्यशक्मभिः ॥ अस्मभ्यंरोदसीरयिंमध्वोवाजस्यसातये । श्रवोवसूनिसंजितं ॥ २९ ॥ ( ९।१।८ ) एतेसोमाऽअभिप्रियमिंद्रस्यकाममक्षरन् । वर्धंतोऽअस्यवीर्यं* ॥ पुनानासश्चमूषदोगच्छंतोवायुमश्विना । तेनोधांतुसुवीर्यं ॥ इंद्रस्यसोमराधसेपुनानोहार्दिचोदय । ऋतस्ययोनिमासदं ॥ मृजंतित्वादशक्षिपोहिन्वंतिसप्तधीतयः । अनुविप्राऽअमादिषुः ॥ देवेभ्यस्त्वामदायकंसृजानमतिमेष्यः । संगोभिर्वासयामसि ॥ ३० ॥ पुनानःकलशेष्वावस्त्राण्यरुषोहरिः । परिगव्यान्यव्यत ॥ मघोनऽआपवस्वनोजहिविश्वाऽअपद्विषः । इंदोसखायमाविश ॥ वृष्टिंदिवःपरिस्रवद्युम्नंपृथिव्याऽअधि । सहोनःसोमपृत्सुधाः ॥ नृचक्षसंत्वावयमिंद्रपीतंस्वर्विदं । भक्षीमहिप्रजामिषं ॥ ३१ ॥ ( ९।१।९ ) परिप्रियादिवःकविर्वयांसिनप्त्योर्हितः । सुवानोयातिकविक्रतुः ॥ प्रप्रक्षयायपन्यसेजनायजुष्टोऽअद्रुहे । वीत्यर्षचनिष्ठया ॥ ससूनुर्मातराशुचिर्जातो

---

(९।१।९) एतेसोमाइतिनवर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री । (९।१।९) परिप्रियेतिनवर्चस्यसूक्तस्यकाश्यपोसितःपवमान

ज्ञातेऽअरोचयत् । महान्महीऽऋतावृधा ॥ ससप्तधीतिभिर्हितोनद्योऽअजिन्वदद्रुहः । याऽएकमक्षिवावृधुः+ ॥ ताऽअभिसंतमस्तृतंमहेयुवानमादधुः । इंदुमिंद्रतवव्रते+ ॥ ३२ ॥ अभिवह्निरमर्त्यःसप्तपश्यतिवावहिः । क्रिविर्देवीरतर्पयत् ॥ अवाकल्पेषुनःपुमस्तमांसिसोमयोध्या । तानिपुनानजंघनः ॥ नूनव्यसेनवीयसेसूक्तायसाधयापथः । प्रत्नवद्रोचयारुचः ॥ पवमानमहिश्रवोगामश्वंरासिवीरवत् । सनामेधासनास्वः* ॥ ३३ ॥ ( ९।१।१० ॥ प्रस्वानासोरथाऽइवार्वंतोनश्रवस्यवः । सोमासोरायेऽअक्रमुः ॥ हिन्वानासोरथाऽइवदधन्विरेगभस्त्योः । भरासःकारिणामिव ॥ राजानोनप्रशस्तिभिःसोमासोगोभिरंजते । यज्ञोनसप्तधातृभिः ॥ परिसुवानासऽइंदवोमदायबर्हणागिरा । सुताऽअर्षतिधारया ॥ आपानासोविवस्वतोजनंतऽउषसोभगं । सूराऽअण्वंवितन्वते ॥ ३४ ॥ अपद्वारामतीनांप्रत्नाऽऋण्वंतिकारवः । वृष्णोहरसऽआयवः ॥ समीचीनासऽआसतेहोतारःसप्तजामयः । पदमेकस्यपिप्रतः ॥ नाभानाभिनऽआददेचक्षुश्चित्सूर्येसचा । कवेरपत्यमादुहे ॥ अभिप्रियादिवस्पदमध्वर्युभिर्गुहाहितं । सूरःपश्यतिचक्षसा ॥ ३५ ॥ ( ९।१।११ ) उपास्मैगायतानरःपवमानायेंदवे । अभिदेवाँऽइयक्षते ॥ अभितेमधुनापयोथर्वाणोऽअशि

---

सोमोगायत्री । ( ९।१।१० ) प्रस्वानासइतिषवर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री । ( ९।१।११ ) उपास्माइतिनवर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री ।

ऋक्सं. अ. ६ अ. ७ ॥ ५२ ॥

मंडलं ९ अनु. १

श्रयुः । देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशमर्वते । शंराजन्नोषधीभ्यः ॥ बभ्रवेनुस्वतवसेरुणायदिविस्पृशे । सोमायगाथमर्चत ॥ हस्तच्युतेभिरद्रिभिःसुतंसोमंपुनीतन । मधावाधावतामधु ॥ ३६ ॥ नमसेदुपसीदत दध्नेदभिश्रीणीतन । इंदुमिंद्रेदधातन ॥ अमित्रहाविचर्षणिःपवस्वसोमशंगवे । देवेभ्योऽअनुकामकृत ॥ इंद्राय सोमपातवेमदायपरिषिच्यसे । मनश्चिन्मनसस्पतिः ॥ पवमानसुवीर्यंरयिंसोमरिरीहिनः । इंदविंद्रेणनोयुजा ॥ ३७ ॥ ( ९।१।१२ ) सोमाऽअसृग्रमिंदवःसुताऽऋतस्यसादने । इंद्रायमधुमत्तमाः ॥ अभिविप्राऽअनूषतगावो वत्संनमातरः । इंद्रंसोमस्यपीतये ॥ मदच्युत्क्षेतिसादनेसिंधोरूर्मविपश्चित । सोमोगौरीऽअधिश्रितः ॥ दिवो नाभाविचक्षणोव्योवारेमहीयते । सोमोयःसुक्रतुःकविः ॥ यःसोमःकलशेष्वाँऽअंतःपवित्रऽआहितः । तमिंदुः परिषस्वजे ॥ ३८ ॥ प्रवाचमिंदुरिष्यतिसमुद्रस्याधिविष्टपि । जिन्वन्कोशंमधुश्चुतं ॥ नित्यस्तोत्रोवनस्पतिर्धीना मंतःसबर्दुघः । हिन्वानोमानुषायुगा ॥ अभिप्रियादिवस्पदासोमोहिन्वानोऽअर्षति । विप्रस्यधारयाकविः ॥ आपवमानधारयरयिंसहस्रवर्चसं । अस्मेऽइंदोस्वाभुवं ॥ ३९ ॥ इतिषष्ठाष्टकेसप्तमोऽध्यायः ॥ ७ ॥ ॥

॥ ५२ ॥

---

( ९।१।१२ ) सोमाअसृग्रमितिनवर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री ।

सप्तचत्वारिंशाध्यायेवर्गाः ३९ सूक्तानि १८ ऋचः १९८ ॥ त्यागः ॥ इंद्रायें.२७ सुपर्णाय.१ वज्राय.१ वाचे.२ इंद्राये. मित्रावरुणाभ्या.४ मित्रावरुणादित्येभ्य. आदित्येभ्य. अश्विभ्या.२ वायव.२ सूर्याये.२ उषस. पवमानाये. गवइ०२ अग्नय.३५ अग्नामरुद्भ्य. पवमानायसोमाये.४० समिद्धायाग्नय. तनूनपात. इळाये. बर्हिषइ. देवीभ्योद्वार्भ्य. उषासानक्ताभ्या. दैविभ्यांहोतृभ्यांप्रचेतोभ्या. सरस्वतीळाभारतीभ्य. त्वष्ट्र. वनस्पतय. स्वाहाकृतीभ्य. पवमानायसोमाये.६३ ॥ इतिषष्ठेसप्तमः ॥

सोमःपरिप्राष्टावेषधियांप्रतेप्रनिम्नेनेवंपरिसुवानःसप्तंयत्सोमप्रकविंरेतेधावन्त्येतेसोमासंःसोमाअसृग्रंप्रसोमासंःपवस्वषद्दृह्वच्युतंआगस्त्यस्तममृक्षंतेंध्मवाहोदार्ढच्युतंएषकविर्नृमेधंएषवाजीप्रियमेधंःप्रास्यन्नृमेधंःप्रधाराबिंदुंःप्रसोमासोगोतमंःप्रसोमासःश्यावाश्वंःप्रसोमासस्त्रितंःप्रसुवानआनंःपवस्वप्रभूवसुंरसार्जिसस्रुतोरहूगणंएषउस्यआशुरर्षबृहन्मातिंःपुनानःप्रयेगावोमेध्यातिथिर्जनयन्योअत्यइव ॥ ८ ॥ ॥ ॥

॥ हरिः ओम् ॥ ( ९।१।१३ ) सोमंःपुनानोऽर्षतिसहस्रंधारोऽअत्यंविः । वायोरिंद्रस्यनिष्कृतं॑ ॥ पवंमानमवस्यवोविप्रंमभिप्रगांयत । सुष्वाणंदेववींतये ॥ पवंतेवाजंसातयेसोमाःसहस्रंपाजसः । गृणानादेववींतये ॥ उतनोवाजंसातयेपवंस्वबृहतीरिषंः । द्युमदिंदोसुवीर्यं ॥ तेनंःसहस्रिणंरयिंपवंतामासुवीर्यं । सुवानादेवासऽइंदंवः ॥

( ९।१।१३ ) सोमःपुनानइतिनवर्चस्यसूक्तस्यकाश्यपोऽसितःपवमानसोमोगायत्री ।

॥ १ ॥ अत्याहियानानहेतृभिरसृग्रंवाजसातये । विवारमव्यमाशवः ॥ वाश्राऽअर्षंतींदवोभिवत्संनधेनवः । दुधन्विरेगभस्त्योः ॥ जुष्टऽइंद्रायमत्सरःपवमानकनिक्रदत् । विश्वाऽअपद्विषोजहि ॥ अपघ्नंतोऽअराव्णःपवमानाःस्वर्दृशः । योनावृतस्यसीदत ॥ २ ॥ ( ९।१।१४ ) परिप्रासिष्यदत्कविःसिंधोरूर्मावधिश्रितः । कारंबिभ्रत्पुरुस्पृहं ॥ गिरायदीसबंधवःपंचव्राताऽअपस्यवः । परिष्कृण्वंतिधर्णसिं ॥ आदस्यशुष्मिणोरसेविश्वेदेवाऽअमत्सत । यदीगोभिर्वसायते ॥ निरिणानोविधावतिजहच्छर्याणितान्वा । अत्रासंजिघ्रतेयुजा ॥ नप्तीभिर्योविवस्वतःशुभ्रोनमामृजेयुवा । गाःकृण्वानोननिर्णिजं ॥ ३ ॥ अतिश्रितीतिरश्चतागव्याजिगात्यण्व्या । वग्नुमियर्तियंविदे ॥ अभिक्षिपःसमग्मतमर्जयंतीरिषस्पतिं । पृष्ठागृभ्णतवाजिनः ॥ परिदिव्यानिमर्मृशद्विश्वानिसोमपार्थिवा । वसूनियाह्यस्मयुः ॥ ४ ॥ ( ९।१।१५ ) एषधियायात्यण्व्याशूरोरथेभिराशुभिः । गच्छन्निंद्रस्यनिष्कृतं ॥ एषपुरूधियायतेबृहतेदेवतातये । यत्रामृतासऽआसते ॥ एषहितोविनीयतेंतःशुभ्रावतापथा । यदीतुंजंतिभूर्णयः ॥ एषशृंगाणिदोधुवच्छिशीतेयूथ्योवृषा । नृम्णादधानऽओजसा ॥ एषरुक्मिभिरीयतेवाजीशुभ्रेभिरंशुभिः । पतिःसिंधूनांभवन् ॥ एषवसूनिपिब्दनापरुषाययिवाँऽअति । अवशादेषुगच्छति ॥ एतंमृजंतिमर्ज्यमुपद्रोणेष्वायवः । प्रच



( ९।१।१४ ) परिप्रेत्यष्टर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री । ( ९।१।१५ ) एषधियेत्यष्टर्चस्यसूक्तस्यकाश्यपोसितः

क्राणंमहीरिषः ॥ एतमुत्यंदशक्षिपोमृजंतिसप्तधीतयः । स्वायुधंमदिंतमं ॥ ५ ॥ ( ९।१।१६ ) प्रतेसोतारऽओ
ण्योॾरसंमदायघृष्वंये । सर्गोनतक्त्येतशः ॥ क्रत्वादक्षस्यरथ्यमपोवसानमंधसा । गोषामण्वेषुसश्चिम ॥ अनप्तम
प्सुदुष्टरंसोमंपवित्रऽआसृज । पुनीहींद्रायपातवे ॥ प्रपुनानस्यचेतसासोमःपवित्रेऽअर्षति । क्रत्वासधस्थमासदत्+॥
प्रत्वानमोभिरिंदवऽइंद्रसोमाऽअसृक्षत । महेभरायकारिणः ॥ पुनानोरूपेऽअव्ययेविश्वाऽअर्षन्नभिश्रियः । शूरोन
गोषुतिष्ठति ॥ दिवोनसानुपिप्युषीधारासुतस्यवेधसः । वृथापवित्रेऽअर्षति । त्वंसोमविपश्चितंतनापुनानऽआयु
षु । अव्योवारंविधावसि ॥ ६ ॥ ( ९।१।१७ ) प्रनिम्नेनेवसिंधवोघ्नंतोवृत्राणिभूर्णयः । सोमाऽअसृग्रमाशवः ॥
अभिसुवानासऽइंदवोवृष्टयःपृथिवीमिव । इंद्रंसोमासोऽअक्षरन् ॥ अत्यूर्मिर्मत्सरोमदःसोमःपवित्रेऽअर्षति । विघ्न
न्रक्षांसिदेवयुः+ ॥ आकलशेषुधावतिपवित्रेपरिषिच्यते । उक्थैर्यज्ञेषुवर्धते ॥ अतित्रीसोमरोचनारोहन्नभ्राजसेदि
वं । इष्णन्त्सूर्यंनचोदयः ॥ अभिविप्राऽअनूषतमूर्धन्यज्ञस्यकारवः । दधानाश्चक्षसिप्रियं+ ॥ तमुत्वावाजिनंनरो
धीभिर्विप्राऽअवस्यवः । मृजंतिदेवतातये ॥ मधोर्धारामनुक्षरतीव्रःसधस्थमासदः । चारुर्ऋतायपीतये ॥ ७ ॥

---

पवमानसोमोगायत्री । ( ९।१।१६ ) प्रतेसोतारइत्यष्टर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री । ( ९।१।१७ ) प्रनिम्नेनेवेत्य

ष्टर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री ।

ऋक्सं.

अ. ६ अ. ८

॥ ५४ ॥

( ९।१।१८ ) परिसुवानोगिरिष्ठाःपवित्रेसोमोऽअक्षाः । मदेषुसर्वधाऽअसि ॥ त्वंविप्रस्त्वंकविर्मधुप्रजातमंधसः । मदेषु० ॥ तवविश्वेसजोषसोदेवासःपीतिमाशत । मदेषु० ॥ आयोविश्वानिवार्यावसूनिहस्तयोर्दधे । मदेषु० ॥ यऽइमेरोदसीमहीसंमातरेवदोहते । मदेषु० ॥ परियोरोदसीऽउभेसद्योवाजेभिरर्षति । मदेषु० ॥ सशुष्मीकलशेष्वापुनानोऽअचिक्रदत् । मदेषु० ॥ ८ ॥ ( ९।१।१९ ) यत्सोमचित्रमुक्थ्यंदिव्यंपार्थिवंवसु । तन्नःपुनानऽआभर ॥ युवंहिस्थःस्वर्पतीऽइंद्रश्चसोमगोपती । ईशानापिप्यतंधियः ॥ वृषापुनानऽआयुषुस्तनयन्नधिबर्हिषि । हरिःसन्योनिमासदत् ॥ अवावशंतधीतयोवृषभस्याधिरेतसि । सूनोर्वत्सस्यमातरः ॥ कुविद्वृषण्यंतीभ्यःपुनानोगर्भमादधत् । याःशुक्रंदुहतेपयः ॥ उपशिक्षापतस्थुषोभियसमाधेहिशत्रुषु । पवमानविदारयिं+ ॥ निशत्रोःसोमवृष्ण्यंनिशुष्मंनिवयस्तिर । दूरेवासतोऽअंतिवा ॥ ९ ॥ ( ९।१।२० ) प्रकविर्देववीतयेव्योवारेभिरर्षति । साह्वान्विश्वाऽअभिस्पृधः ॥ सहिष्मांजरितृभ्यऽआवाजंगोमंतमिन्वति । पवमानःसहस्रिणं ॥ परिविश्वानिचेतसामृशसेपवसेमती । सनःसोमश्रवोविदः ॥ अभ्यर्षबृहद्यशोमघवद्भ्योध्रुवंरयिं । इषंस्तोतृभ्यऽआभर ॥ त्वंराजेवसुव्रतोगिरःसोमा

मंडलं ९

अनु. १

॥ ५४ ॥

---

( ९।१।१८ ) परिसुवानइतिसप्तर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री । ( ९।१।१९ ) यत्सोमेतिसप्तर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री । ( ९।१।२० ) प्रकविरितिसप्तर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री ।

विवेशिथ । पुनानोवंह्नेऽअद्भुत ॥ सवह्निरप्सुदुष्टरोमृज्यमानोगभस्त्योः । सोमश्चमूषुसीदति ॥ क्रीळुर्मखोनमंहयुःप
वित्रंसोमगच्छसि । दधत्स्तोत्रेसुवीर्यं ॥ १० ॥ ( ९।१।२१ ) एतेधावंतींदवःसोमाऽइंद्रायघृष्वयः । मत्सरासः
स्वर्विदः ॥ प्रवृण्वंतोऽअभियुजःसुष्वयेवरिवोविदः । स्वयंस्तोत्रेवयस्कृतः ॥ वृथाक्रीळंतऽइंदवःसधस्थमभ्येकमित् ।
सिंधोरूर्माव्यक्षरन् ॥ एतेविश्वानिवार्यापवमानासऽआशत । हितानसप्तयोरथे ॥ आस्मिन्पिशंगमिंदवोदधातावे
नमादिशे । योऽअस्मभ्यमरावा ॥ ऋभुर्नरथ्यंनवंदधाताकेतमादिशे । शुक्राःपवध्वमर्णसा ॥ एतऽउत्येऽअवीवश
न्काष्ठांवाजिनोऽअक्रत । सतःप्रासाविषुर्मतिं+ ॥ ११ ॥ ( ९।१।२२ ) एतेसोमासऽआशवोरथाऽइवप्रवाजिनः ।
सर्गाःसृष्टाऽअहेषत ॥ एतेवाताऽइवोरवःपर्जन्यस्येववृष्टयः । अग्नेरिवभ्रमावृथा ॥ एतेपूताविपश्चितःसोमासोद
ध्याशिरः । विपाव्यानशुर्धियः ॥ एतेमृष्टाऽअमर्त्याःससृवांसोनशश्रमुः । इयक्षंतःपथोरजः ॥ एतेपृष्ठानिरोदसोर्वि
प्रयंतोव्यानशुः । उतेदमुत्तमंरजः ॥ तंतुंतन्वानमुत्तममनुप्रवतऽआशत । उतेदमुत्तमाय्यं ॥ त्वंसोमपणिभ्यऽआ
वसुगव्यानिधारयः । ततंतंतुमचिक्रदः ॥ १२ ॥ ( ९।१।२३ ) सोमाऽअसृग्रमाशवोमधोर्मदस्यधारया । अभिवि

---

( ९।१।२१ ) एतेधावंतीतिसप्तर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री । ( ९।१।२२ ) एतेसोमासइतिसप्तर्चस्यसूक्तस्य
काश्यपोसितःपवमानसोमोगायत्री । ( ९।१।२३ ) सोमाअसृग्रमितिसप्तर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री ।

श्वानिकाव्या ॥ अनुप्रत्नासऽआयवंःपुदंनवीयोऽअक्रमुः । रुचेजनंतसूर्यं ॥ आपवमाननोभरार्योऽअदांशुषोगयं । कृधिप्रजावंतीरिषंः ॥ अभिसोमासऽआयवःपवंतेमद्यंमदं । अभिकोशंमधुश्चुतं ॥ सोमोऽअर्षतिधर्णसिर्दधानऽइंद्रियंरसं । सुवीरोऽअभिशस्तिपाः+ ॥ इंद्रायसोमपवसेदेवेभ्यःसधमाद्यः । इंदोवाजंसिषाससि ॥ अस्यपीत्वामदानामिंद्रोवृत्राण्यंप्रति । जघानंजघनंच्चनु+ ॥ १३ ॥ ( ९।१।२४ ) प्रसोमासोऽअधन्विषुःपवमानासऽइंदंवः । श्रीणानाऽअप्सुमृंजत ॥ अभिगावोंऽअधन्विषुरापोनप्रवतायतीः । पुनानाऽइंद्रमाशत ॥ प्रपवमानधन्वसिसोमेंद्रायपातंवे । नृभिर्यतोविनीयसे ॥ त्वंसोमनृमादनःपवस्वचर्षणीसहे । सस्निर्योऽअनुमाद्यः ॥ इंदोयदद्रिंभिःसुतःपवित्रंपरिधावसि । अरमिंद्रस्यधाम्ने ॥ पवंस्ववृत्रहन्तमोक्थेभिरनुमाद्यः । शुचिःपावकोऽअद्भुतः ॥ शुचिःपावकऽउच्यतेसोमःसुतस्यमध्वंः । देवावीरंघशंसहा+ ॥ १४ ॥ ( ९।२।१ ) पवस्वदक्षसाधनोदेवेभ्यःपीतयेहरे । मरुद्भ्योवायवेमदः ॥ पवमानधियाहितो३भियोनिंकनिंक्रदत् । धर्मणावायुमाविंश ॥ संदेवैःशोभतेवृषांकविर्योनावधिप्रियः । वृत्रहादेववीतंमः ॥ विश्वारूपाण्याविशन्पुनानोयातिहर्यतः । यत्रामृतासऽआसंते ॥ अरुषोजनयन्गिरःसोमःपव



---

( ९।१।२४ ) प्रसोमासइतिसप्तर्चस्यसूक्तस्यकाश्यपोसितःपवमानसोमोगायत्री ॥ द्वितीयेनुवाकेषट्त्रिंशत्सूक्तानि । ( ९।२।१ ) पवस्वेतिषड्टचस्यसूक्तस्यागस्त्योदृह्ळच्युतःपवमानसोमोगायत्री ।

तऽआयुषक् । इंद्रंगच्छंन्कुविक्रतुः ॥ आपवस्वमदिन्तमपवित्रंधारयाकवे । अर्कस्ययोनिमासदं ॥ १५ ॥ ( ९।२।२ )
तमंमृक्षंतवाजिनंमुपस्थेऽअदितेरधि । विप्रासोऽअण्व्याधिया+ ॥ तंगावोऽअभ्यंनूपतसहस्रंधारमक्षितं । इंदुंधर्ता
रमादिवः+ ॥ तंवेधांमेधयांह्यन्पवंमानमधिद्यवि । धर्णसिंभूरिधायसं ॥ तमंह्यन्भुरिजोर्धियासंवसांनंविवस्वतः ।
पतिंवाचोऽअदाभ्यं ॥ तंसानावधिजामयोहरिंहिन्वंत्यद्रिभिः । हर्यतंभूरिचक्षसं ॥ तंत्वांहिन्वंतिवेधसःपवंमानगि
रावृधं । इंदविंद्रायमत्सरं+ ॥ १६ ॥ ( ९।२।३ ) एषकविरभिष्टुतःपवित्रेऽअधितोशते । पुनानोघ्नन्नपस्रिधः ॥
एषऽइंद्रायवायवेस्वर्जित्परिषिच्यते । पवित्रेदक्षसाधनः ॥ एषनृभिर्विनीयतेदिवोमूर्धावृषासुतः । सोमोवनेषुविश्व
वित्+ ॥ एषगव्युरचिक्रदत्पवंमानोहिरण्ययुः । इंदुःसत्राजिदस्तृतः ॥ एषसूर्येणहासतेपवंमानोऽअधिद्यवि ।
पवित्रेमत्सरोमदः ॥ एषशुष्म्यंसिष्यददंतरिक्षेवृषाहरिः । पुनानऽइंदुरिंद्रमा+ ॥ १७ ॥ ( ९।२।४ ) एषवाजीहि
तोनृभिर्विश्वविन्मनसस्पतिः । अव्योवारंविधावति ॥ एषपवित्रेऽअक्षरत्सोमोदेवेभ्यःसुतः । विश्वाधामान्याविश
न्+ ॥ एषदेवःशुभायतेधियोनावमर्त्यः । वृत्रहादेववीतमः ॥ एषवृषाकनिक्रदद्दशभिर्जामिभिर्यतः । अभिद्रोणा

---

( ९।२।२ ) तममृक्षंतेतिषडृचस्यसूक्तस्यदार्ढच्युतइध्मवाहःपवमानसोमोगायत्री । ( ९।२।३ ) एषकविरितिषडृचस्यसूक्तस्यांगिरसो
नृमेधःपवमानसोमोगायत्री । ( ९।२।४ ) एषवाजीतिषडृचस्यसूक्तस्यांगिरसःप्रियमेधःपवमानसोमोगायत्री ।

निधावति ॥ एषसूर्यमरोचयत्पवमानोविचर्षणिः । विश्वाधामानिविश्ववित्+ ॥ एषशुष्म्यदाभ्यःसोमःपुनानोऽर्षति । देवावीरघशंसहा+ ॥ १८ ॥ ( ९।२।५ ) प्रास्यधाराऽअक्षरन्वृष्णःसुतस्यौजसा । देवाँऽअनुप्रभूषतः ॥ सप्तिंमृजंतिवेधसोगृणंतःकारवोगिरा । ज्योतिर्जज्ञानमुक्थ्यं* ॥ सुषहासोमतानितेपुनानायप्रभूवसो । वर्धासमुद्रमुक्थ्यं* ॥ विश्वावसूनिसंजयन्पवस्वसोमधारया । इनुद्वेषांसिसध्र्यक् ॥ रक्षासुनोऽअररुषःस्वनात्समस्यकस्यचित् । निदोयत्रमुमुच्महे ॥ एंदोपार्थिवंरयिंदिव्यंपवस्वधारया । द्युमंतंशुष्ममाभर ॥ १९ ॥ ( ९।२।६ ) प्रधाराऽअस्यशुष्मिणोवृथापवित्रेऽअक्षरन् । पुनानोवाचमिष्यति+ ॥ इंदुर्हियानःसोतृभिर्मृज्यमानःकनिक्रदत् । इयर्तिवग्नुमिंद्रियं+ ॥ आनःशुष्मंनृषाह्यंवीरवंतंपुरुस्पृहं । पवस्वसोमधारया ॥ प्रसोमोऽअतिधारयापवमानोऽअसिष्यदत् । अभिद्रोणान्यासदं ॥ अप्सुत्वामधुमत्तमंहरिंहिन्वंत्यद्रिभिः । इंदविंद्रायपीतये ॥ सुनोतामधुमत्तमंसोममिंद्रायवज्रिणे । चारुंशर्धायमत्सरं+ ॥ २० ॥ ( ९।२।७ ) प्रसोमासःस्वाध्यःपवमानासोऽअक्रमुः । रयिंकृण्वंतिचेतनं ॥ दिवस्पृथिव्याऽअधिभवेंदोद्युम्नवर्धनः । भवावाजानांपतिः ॥ तुभ्यंवाताऽअभिप्रियस्तुभ्यमर्षंतिसिंधवः ।



---

( ९।२।५ ) प्रास्यधाराइतिषड्टृचस्यसूक्तस्यांगिरसोनृमेधःपवमानसोमोगायत्री । ( ९।२।६ ) प्रधाराइतिषड्टृचस्यसूक्तस्यांगिरसोबिंदुःपवमानसोमोगायत्री । ( ९।२।७ ) प्रसोमासइतिषड्टृचस्यसूक्तस्यराहूगणोगोतमःपवमानसोमोगायत्री ।

सोमवर्धंतितेमहः ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं । भवावाजस्यसंगथे ॥ तुभ्यंगावोघृतंपयोबभ्रोदुदुह्रे ऽअक्षितं । वर्षिष्ठेऽअधिसानवि ॥ स्वायुधस्यतेसतोभुवनस्यपतेवयं । इंदोसखित्वमुश्मसि ॥ २१ ॥ ( ९।२।८ )
प्रसोमासोमदच्युतःश्रवसेनोमघोनः । सुताविदथेऽअक्रमुः ॥ आदींत्रितस्ययोषणोहरिंहिन्वंत्यद्रिभिः । इंदुमिंद्राय पीतये ॥ आदींहंसोयथागणंविश्वस्यावीवशन्मतिं । अत्योनगोभिरज्यते ॥ उभेसोमावचाकशन्मृगोनतक्तोऽअर्षसि । सीदन्नृतस्ययोनिमा ॥ अभिगावोऽअनूषतयोषाजारमिवप्रियं । अगन्नाजिंयथाहितं ॥ अस्मेधेहिद्युमद्यशो मघवद्भ्यश्चमह्यंच । सनिंमेधामुतश्रवः ॥ २२ ॥ ( ९।२।९ ) प्रसोमासोविपश्चितोपांनयंत्यूर्मयः । वनानिमहिषाऽइव ॥ अभिद्रोणानिबभ्रवःशुक्राऽऋतस्यधारया । वाजंगोमंतमक्षरन् ॥ सुताऽइंद्रायवायवेवरुणायमरुद्भ्यः । सोमाऽअर्षंतिविष्णवे ॥ तिस्रोवाचऽउदीरतेगावोमिमंतिधेनवः । हरिरेतिकनिक्रदत् ॥ अभिब्रह्मीरनूषतयह्वीर्ऋतस्य मातरः । मर्मृज्यंतेदिवःशिशुं ॥ रायःसमुद्रांश्चतुरोस्मभ्यंसोमविश्वतः । आपवस्वसहस्रिणः ॥ २३ ॥ ( ९।२।१० )
प्रसुवानोधारयातनेंदुर्हिन्वानोऽअर्षति । रुजदृह्ळाव्योजसा ॥ सुतऽइंद्रायवायवेवरुणायमरुद्भ्यः । सोमोऽअर्षति

---

( ९।२।८ ) प्रसोमासइतिषड्चस्यसूक्तस्यात्रेयःश्यावाश्वःपवमानसोमोगायत्री । ( ९।२।९ ) प्रसोमासइतिषड्चस्यसूक्तस्याद्यस्त्रितः- पवमानसोमोगायत्री । ( ९।२।१० ) प्रसुवानइतिषड्चस्यसूक्तस्याद्यस्त्रितःपवमानसोमोगायत्री ।

विष्णवे ॥ वृषाणंवृषंभिर्यतंसुन्वंतिसोममद्रिंभिः । दुहंतिशक्मनापयः ॥ भुवंत्रितस्यमर्ज्योभुवदिंद्रायमत्सरः । सं रूपैरंज्यतेहरिः ॥ अभीमृतस्यंविष्टपंदुहतेपृश्निमातरः । चारुप्रियतमंहुविः+ ॥ समेनमहुताऽइमागिरोऽअर्षतिस सुतः । धेनूर्वाश्रोऽअंवीवशत् ॥ २४ ॥ ( ९।२।११ ) आनःपवस्वधारयापवमानरयिंपृथुं । ययाज्योतिर्विदा सिनः ॥ इंदोसमुद्रमींखयपवस्वविश्वमेजय । रायोधर्ताऽनऽओजसा ॥ त्वयावीरेणवीरवोभिष्यामपृतन्यतः । क्षरा णोऽअभिवार्यं ॥ प्रवाजमिंदुरिष्यतिसिषासन्वाजसाऽऋषिः । व्रताविदानऽआयुधा ॥ तंगीर्भिर्वाचमींखयंपुनानं वासयामसि । सोमंजनस्यगोपतिं ॥ विश्वोयस्यव्रतेजनोदाधारधर्मणस्पतेः । पुनानस्यप्रभूवसोः ॥ २५ ॥ ( ९।२।१२ ) असर्जिरथ्योयथापवित्रेचम्वोःसुतः । कार्ष्मन्वाजीन्यक्रमीत् ॥ सवह्निःसोमजागृविःपवस्वदेववीरति । अभिकोशं मधुश्चुतं ॥ सनोज्योतींषिपूर्व्यपवमानविरोचय । क्रत्वेदक्षायनोहिनु ॥ शुंभमानऽऋतायुभिर्मृज्यमानोगभस्त्योः । पवतेवारेऽअव्यये ॥ सविश्वादाशुषेवसुसोमोदिव्यानिपार्थिवा । पवतामांतरिक्ष्या ॥ आदिवस्पृष्ठमश्वयुर्गव्ययुः सोमरोहसि । वीरयुःशवसस्पते ॥ २६ ॥ ( ९।२।१३ ) ससुतःपीतयेवृषासोमःपवित्रेऽअर्षति । विघ्नन्रक्षांसिदेवयुः+ ॥



---

(९।२।११) आनःपवस्वेतिषड्चस्यसूक्तस्यांगिरसःप्रभूवसुःपवमानसोमोगायत्री । (९।२।१२) असर्जीतिषड्चस्यसूक्तस्यांगिरसः प्रभूवसुःपवमानसोमोगायत्री । ( ९।२।१३ ) ससुतइतिषड्चस्यसूक्तस्यांगिरसोरहूगणःपवमानसोमोगायत्री ।

सपवित्रेविचक्षणोहरिरर्षतिधर्णसिः । अभियोनिंकनिंक्रदत् ॥ सवाजीरोचनादिवःपवमानोविधावति । रक्षोहावारम
व्ययँ ॥ सत्रितस्याधिसानंविपवमानोऽअरोचयत् । जामिभिःसूर्यंसह ॥ सवृत्रहावृषासुतोवरिवोविददाभ्यः । सोमो
वाजमिवासरत् ॥ सदेवःकविनैषितो३भिद्रोणानिधावति । इंदुरिंद्रायमंहना ॥ २७ ॥ ( ९।२।१४ ) एषऽउस्यवृषार
थोव्योवारेभिरर्षति । गच्छन्वाजंसहस्त्रिणं ॥ एतंत्रितस्ययोषणोहरिंहिन्वंत्यद्रिभिः । इंदुमिंद्रायपीतये ॥ एतंत्यं
हरितोदशमर्मृज्यंतेऽअपस्युवः । याभिर्मदायशुंभते ॥ एषस्यमानुषीष्वाश्येनोनविक्षुसीदति । गच्छंञ्जारोनयोषि
तं ॥ एषस्यमद्योरसोवचष्टेदिवःशिशुः । यऽइंदुर्वारमाविशत् ॥ एषस्यपीतयेसुतोहरिरर्षतिधर्णसिः । क्रंदन्योनिं
मभिप्रियं ॥ २८ ॥ ( ९।२।१५ ) आशुरर्षबृहन्मतेपरिप्रियेणधाम्ना । यत्रदेवाऽइतिब्रवन् ॥ परिष्कृण्वन्ननिं
ष्कृतंजनाययातयन्निषः । वृष्टिंदिवःपरिस्रव ॥ सुतऽएतिपवित्रऽआत्विषिंदधानऽओजसा । विचक्षाणोविरोचयं
न् ॥ अयंसयोदिवस्परिरघुयामापवित्रऽआ । सिंधोरूर्माव्यक्षरत् ॥ आविवासन्परावतोऽअथोऽअर्वावतःसुतः ।
इंद्रायसिच्यतेमधु ॥ समीचीनाऽअनूषतहरिंहिन्वंत्यद्रिभिः । योनावृतस्यसीदत ॥ २९ ॥ ( ९।२।१६ ) पुनानो

---

( ९।२।१४ ) एषउस्यइतिषड्चस्यसूक्तस्यांगिरसोरहूगणःपवमानसोमोगायत्री । ( ९।२।१५ ) आशुरर्षेतिषड्चस्यसूक्तस्यांगिरसो

बृहन्मतिःपवमानसोमोगायत्री । ( ९।२।१६ ) पुनानइतिषड्चस्यसूक्तस्यांगिरसोबृहन्मतिःपवमानसोमोगायत्री ।

ऽअक्रमीदभिविश्वामृधोविचर्षणिः । शुंभंतिविप्रंधीतिभिः ॥ आयोनिमरुणोरुहद्गमदिंद्रंवृषासुतः । ध्रुवेसदसिसीदति ॥ नूनोरयिंमहामिंदोस्मभ्यंसोमविश्वतः । आपवस्वसहस्रिणं ॥ विश्वासोमपवमानद्युम्नानींदवाभर । विदाःसहस्रिणीरिषः ॥ सनःपुनानऽआभररयिंस्तोत्रेसुवीर्यं । जरितुर्वर्धयागिरः ॥ पुनानऽइंदवाभरसोमद्विबर्हसंरयिं । वृषन्निंदोनऽउक्थ्यं* ॥ ३० ॥ ( ९।२।१७ ) प्रयेगावोनभूर्णयस्त्वेषाऽअयासोऽअक्रमुः । घ्नंतःकृष्णामपत्वचं ॥ सुवितस्यमनामहेतिसेतुंदुराव्यं । साह्वांसोदस्युमव्रतं+ ॥ शृण्वेवृष्टेरिवस्वनःपवमानस्यशुष्मिणः । चरंतिविद्युतोदिवि+ ॥ आपवस्वमहीमिषंगोमदिंदोहिरण्यवत् । अश्वावद्वाजवत्सुतः+ ॥ सपवस्वविचर्षणऽआमहीरोदसीपृण । उषाःसूर्योनरश्मिभिः ॥ परिणःशर्मयंत्याधारयासोमविश्वतः । सरारसेवविष्टपं ॥ ३१ ॥ ( ९।२।१८ ) जनयन्रोचनादिवोजनयन्नप्सुसूर्यं । वसानोगाऽअपोहरिः ॥ एषप्रत्नेनमन्मनादेवोदेवेभ्यस्परि । धारयापवतेसुतः+ ॥ वावृधानायतूर्वयेपवंतेवाजसातये । सोमाःसहस्रपाजसः ॥ दुहानःप्रत्नमित्पयःपवित्रेपरिषिच्यते । क्रंदन्देवाँऽअजीजनत् ॥ अभिविश्वानिवार्याभिदेवाँऽऋतावृधः । सोमःपुनानोऽअर्षति ॥ गोमन्नःसोमवीरवदश्वावद्वाजवत्सुतः



---

( ९।२।१७ ) प्रयेगावइतिषडृचस्यसूक्तस्यकाण्वोमेध्यातिथिःपवमानसोमोगायत्री । ( ९।२।१८ ) जनयन्नितिषडृचस्यसूक्तस्य काण्वोमेध्यातिथिःपवमानसोमोगायत्री ।

पवस्वबृहतीरिषः ॥ ३२ ॥ ( ९।२।१९ ) योऽअत्यऽइवमृज्यतेगोभिर्मदायहर्यतः । तंगीर्भिर्वासयामसि ॥ तंनो विश्वाऽअवस्युवोगिरःशुंभंतिपूर्वथा । इंदुमिंद्रायपीतये ॥ पुनानोयातिहर्यतःसोमोगीर्भिःपरिष्कृतः । विप्रस्यमेध्यातिथेः ॥ पवमानविदारयिमस्मभ्यंसोमसुश्रियं । इंदोसहस्रवर्चसं ॥ इंदुरत्योनवाजसृत्कनिक्रंतिपवित्रऽआ । यदक्षारतिदेवयुः+ ॥ पवस्ववाजसातयेविप्रस्यगृणतोवृधे । सोमरास्वसुवीर्यं ॥ ३३ ॥ इतिषष्ठाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥

अष्टचत्वारिंशाध्यायेवर्गाः ३३ सूक्तानि ३१ ऋचः २०४ ॥ त्यागः ॥ पवमानायसोमायेदं. २०४ ॥ इतिषष्ठेऽष्टमः ॥

---

( ९।२।१९ ) योअत्यइवेतिषड्चस्यसूक्तस्यकाण्वोमेध्यातिथिःपवमानसोमोगायत्री ।

ॐ प्रणोयास्यःसपवस्वांस्त्रग्नन्नयासोमःपंचकविर्भार्गवस्तंत्वापवस्वौत्तेशुष्मासउचथ्योध्वर्योपरिद्युक्षंउत्तेचतुष्कमवत्सारौस्यप्रत्नांयवंयवैंपरिसोमःप्रतेधारांस्तरत्सपवस्वप्रगायत्रेणोपांत्यापुरउष्णिगयावीतीत्रिंशदमहीयुरेतेऽअसृग्रंजमदग्निरापवस्वनिध्रुविःकाश्यपोवृषासोमकश्यपः ॥ १ ॥ ॥ ॥

हरिःओम् ॥ ( ९।२।२० ) प्रणंऽइंदोमहेतनंऽऊर्मिंनबिभ्रंदर्षसि । अभिदेवाँऽअयास्यः ॥ मतीजुष्टोधियाहितःसोमौहिन्वेपरावर्ति । विप्रस्यधारयाकविः+ ॥ अयंदेवेषुजागृविःसुतऽएतिपवित्रऽआ । सोमोयातिविचर्षणिः ॥ सनःपवस्ववाजयुश्चक्राणश्चारुमध्वरं । बर्हिष्माँऽआविवासति ॥ सनोभगायवायवेविप्रवीरःसदावृधः । सोमोदेवेष्वायमत् ॥ सनोऽअद्यवसुत्तयेक्रतुविद्गातुवित्तमः । वाजंजेषिश्रवोबृहत् ॥ १ ॥ ( ९।२।२१ ) सपवस्वमदायकंनृचक्षादेववीतये । इंदविंद्रायपीतये ॥ सनोऽअर्षाभिदूत्यं१त्वमिंद्रायतोशसे । देवान्त्सखिभ्यऽआवरं ॥ उतत्वामरुणंवयंगोभिरंज्मोमदायकं । विनोरायेदुरोवृधि ॥ अत्यूपवित्रमक्रमीद्वाजीधुरंनयामनि । इंदुर्देवेषुपत्यते ॥ समीसखायोऽअस्वरन्वनेक्रीळंतमत्यविं । इंदुंनावाऽअनूषत ॥ तयापवस्वधारयाययापीतोविचक्षसे । इंदोस्तोत्रेसु

( ९।२।२० ) प्रणइंदवितिषडृचस्यसूक्तस्यांगिरसोयास्यःपवमानसोमोगायत्री । ( ९।२।२१ ) सपवस्वेतिषडृचस्यसूक्तस्यांगिरसोयास्यःपवमानसोमोगायत्री ।

ऋक्सं.
अ. ७ अ. १
॥ २ ॥

वीर्यं ॥ २ ॥ ( ९।२।२२ ) असृग्रन्देववीतयेत्यासःकृत्व्याऽइव । क्षरंतःपर्वतावृधः ॥ परिष्कृतासऽइंदवोयोषेवपि
त्र्यावती । वायुंसोमाऽअसृक्षत ॥ एतेसोमासऽइंदवःप्रयस्वंतश्चमूसुताः । इंद्रंवर्धंतिकर्मभिः ॥ आधावतासुह
स्त्यःशुक्रागृभ्णीतमंथिना । गोभिःश्रीणीतमत्सरं+ ॥ सपवस्वधनंजयप्रयंताराधसोमहः । अस्मभ्यंसोमगातुवि
त्+ ॥ एतंमृजंतिमर्ज्यंपवमानंदशक्षिपः । इंद्रायमत्सरंमदं ॥ ३ ॥ ( ९।२।२३ ) अयासोमःसुकृत्ययामहश्चि
दभ्यवर्धत । मंदानऽउद्वृषायते ॥ कृतानीदस्यकर्त्वाचेतंतेदस्युतर्हणा । ऋणाचधृष्णुश्चयते ॥ आत्सोमऽइंद्रियोर
सोवज्रःसहस्रसाभुवत् । उक्थंयदस्यजायते ॥ स्वयंकविर्विधर्तरिविप्रायरत्नमिच्छति । यदीमर्मृज्यतेधियः ॥ सि
षासतूरयीणांवाजेष्वर्वतामिव । भरेषुजिग्युषामसि ॥ ४ ॥ ( ९।२।२४ ) तंत्वान्नृम्णानिबिभ्रतंसधस्थेषुमहोदि
वः । चारुंसुकृत्ययेमहे ॥ संवृक्तधृष्णुमुक्थ्यंमहामहिव्रतंमदं । शतंपुरोरुरुक्षणिं ॥ अतस्त्वारयिमभिराजानंसुक्रतो
दिवः । सुपर्णोऽअव्यथिर्भरत् ॥ विश्वस्माऽइत्स्वर्दृशेसाधारणंरजस्तुरं । गोपामृतस्यविर्भरत् ॥ अधाहिन्वानऽइं
द्रियंज्यायोमहित्वमानशे । अभिष्टिकृद्विचर्षणिः ॥ ५ ॥ ( ९।२।२५ ) पवस्ववृष्टिमासुनोपामूर्मिंदिवस्परि । अ

मंडलं ९
अनु. २
॥ २ ॥

---

( ९।२।२२ ) असृग्रमितिषड्चस्यसूक्तस्यांगिरसोयास्यःपवमानसोमोगायत्री ।(९।२।२३) अयासोमइतिपंचर्चस्यसूक्तस्यभार्गवःकविः
पवमानसोमोगायत्री । (९।२।२४)तंत्वेतिपंचर्चस्यसूक्तस्यभार्गवःकविःपवमानसोमोगायत्री । (९।२।२५ ) पवस्वेतिपंचर्चस्यसूक्तस्य

यक्ष्माबृहतीरिषः ॥ तयापवस्वधारयाययागावऽइहागमन् । जन्यासऽउपनोगृहं ॥ घृतंपवस्वधारयायज्ञेषुदेववीतमः ।
अस्मभ्यंवृष्टिमापव ॥ सनऽऊर्जेव्यं१व्ययंपवित्रंधावधारया । देवासःशृणवन्हिकं ॥ पवमानोऽअसिष्यदद्रक्षांस्यपजंघ
नत् । प्रत्नवद्रोचयन्नुचः ॥ ६ ॥ ( ९।२।२६ ) उत्तेशुष्मासऽईरतेसिंधोरूर्मेरिवस्वनः । वाणस्यचोदयापविं ॥ प्रसवेतऽ
उदीरतेतिस्रोवाचोमखस्युवः । यदव्यऽएषिसानवि ॥ अव्योवारेपरिप्रियंहरिंहिन्वंत्यद्रिभिः । पवमानंमधुश्चुतं ॥
आपवस्वमदिंतमपवित्रंधारयाकवे । अर्कस्ययोनिमासदं ॥ सपवस्वमदिंतमगोभिरंजानोऽअक्तुभिः । इंदविंद्रायपी
तये ॥ ७ ॥ ( ९।२।२७ ) अध्वर्योऽअद्रिभिःसुतंसोमंपवित्रऽआसृज । पुनीहींद्रायपातवे ॥ दिवःपीयूषमुत्तमंसो
ममिंद्रायवज्रिणे । सुनोतामधुमत्तमं ॥ तवत्यऽइंदोऽअंधसोदेवामधोर्व्यश्नते । पवमानस्यमरुतः ॥ त्वंहिसो
मवर्धयन्त्सुतोमदायभूर्णये । वृषन्त्स्तोतारमूतये ॥ अभ्यर्षविचक्षणपवित्रंधारयासुतः । अभिवाजमुतश्रवः ॥ ८ ॥
( ९।२।२८ ) परिद्युक्षःसनद्रयिर्भरद्वाजंनोऽअंधसा । सुवानोऽअर्षपवित्रऽआ ॥ तवप्रत्नेभिरध्वभिरव्योवारे
परिप्रियः । सहस्रधारोयात्तना ॥ चरुर्नयस्तमींखयेंदोनदानमींखय । वधैर्वधस्नवींखय ॥ निशुष्ममिंदवेषांपुरुहूत

---

भार्गवःकविःपवमानसोमोगायत्री।(९।२।२६) उत्तेशुष्मासइतिपंचर्चस्यसूक्तस्यांगिरसउचथ्यःपवमानसोमोगायत्री। (९।२।२७)अध्व

र्योइतिपंचर्चस्यसूक्तस्यांगिरसउचथ्यःपवमानसोमोगायत्री। (९।२।२८)परिद्युक्षइतिपंचर्चस्यसूक्तस्यांगिरसउचथ्यःपवमानसोमोगायत्री

जनानां । योऽअस्माँऽआदिदेशति ॥ शतंनऽइंदऊतिभिःसहस्रंवाशुचीनां । पवस्वमंहयद्रयिः ॥ ९ ॥ (९।२।२९) उत्तेशुष्मासोऽअस्थूरक्षोभिंदंतोऽअद्रिवः । नुदस्वयाःपरिस्पृधः ॥ अयानिजघ्निरोजसारथसंगेधनेहिते । स्तवाऽअबिभ्युपाहृदा ॥ अस्यव्रतानिनाधृषेपवमानस्यदूढ्या । रुजयस्त्वापृतन्यति ॥ तंहिन्वंतिमदच्युतंहरिंनदीषुवाजिनं । इंदुमिंद्रायमत्सरं ॥१०॥ (९।२।३०) अस्यप्रत्नामनुद्युतंशुक्रंदुदुह्रेऽअह्रयः । पयःसहस्रसामृषिं । अयंसूर्यऽइवोपदृगयंसरांसिधावति । सप्तप्रवतऽआदिवं ॥ अयंविश्वानितिष्ठतिपुनानोभुवनोपरि । सोमोदेवोनसूर्यः ॥ परिणोदेववीतयेवाजाँऽअर्षसिगोमतः । पुनानऽइंदविंद्रयुः ॥ ११ ॥ (९।२।३१) यवंयवंनोऽअंधसापुष्टंपुष्टंपरिस्रव । सोमविश्वाचसौभगा ॥ इंदोयथातवस्तवोयथातेजातमंधसः । निबर्हिषिप्रियेसदः ॥ उतनोगोविदश्वावित्पवस्वसोमांधसा । मक्षूतमेभिरहभिः ॥ योजिनातिनजीयतेहंतिशत्रुमभीत्य । सपवस्वसहस्रजित् ॥ १२ ॥ (९।२।३२) परिसोमऽऋतंबृहदाशुःपवित्रेऽअर्षति । विघ्नन्रक्षांसिदेवयुः ॥ यत्सोमोवाजमर्षतिशतंधाराऽअपस्युवः । इंद्रस्यसख्य

---

(९।२।२९) उत्तेशुष्मासइतिचतुर्ऋचस्यसूक्तस्यकाश्यपोवत्सारःपवमानसोमोगायत्री । (९।२।३०) अस्यप्रत्नामितिचतुर्ऋचस्यसूक्तस्यकाश्यपोवत्सारःपवमानसोमोगायत्री । (९।२।३१) यवंयवमितिचतुर्ऋचस्यसूक्तस्यकाश्यपोवत्सारःपवमानसोमोगायत्री । (९।२।३२) परिसोमइतिचतुर्ऋचस्यसूक्तस्यकाश्यपोवत्सारःपवमानसोमोगायत्री ।

मांविशन् ॥ अभित्वायोषणोदशंजारंनकन्यांनूषत । मृज्यसेसोमसातये ॥ त्वमिंद्रायविष्णवेस्वादुरिंदोपरिस्रव । नृन्त्स्तोतृन्पाह्यंहसः ॥ १३ ॥ ( ९।२।३३ ) प्रतेधाराऽअसश्चतोदिवोनयंतिवृष्टयः । अच्छावाजंसहस्रिणं ॥ अभिप्रियाणिकाव्याविश्वाचक्षाणोऽअर्षति । हरिस्तुंजानऽआयुधा ॥ समर्मृजानऽआयुभिरिभोराजेवसुव्रतः । श्येनोनवंसुषीदति ॥ सनोविश्वादिवोवसूतोपृथिव्याऽअधि । पुनानऽइंदवाभर ॥ १४ ॥ ( ९।२।३४ ) तरत्समंदीधावतिधारासुतस्यांधसः । तरत्समंदीधावति ॥ उस्रावेदवसूनांमर्तस्यदेव्यवसः । तरत्स० ॥ ध्वस्रयोःपुरुषंत्योरासहस्राणिदद्महे । तरत्स० ॥ आययोस्त्रिंशतंतनासहस्राणिचदद्महे । तरत्स० ॥ १५ ॥ ( ९।२।३५ ) पवस्वगोजिदश्वजिद्विश्वजित्सोमरण्यजित् । प्रजावद्रत्नमाभर ॥ पवस्वाद्भ्योऽअदाभ्यःपवस्वौषधीभ्यः । पवस्वधिषणाभ्यः ॥ त्वंसोमपवमानोविश्वानिदुरितातर । कविःसीदनिबर्हिषि ॥ पवमानःस्वर्विदोजायमानोभवोमहान् । इंदोविश्वाँऽअभीदसि ॥ १६ ॥ ( ९।२।३६ ) प्रगायत्रेणगायतपवमानंविचर्षणिं । इंदुंसहस्रचक्षसं ॥ तंत्वांसहस्रचक्ष

---

( ९।२।३३ ) प्रतेधाराइतिचतुर्ऋचस्यसूक्तस्यकाश्यपोवत्सारःपवमानसोमोगायत्री । (९।२।३४) तरत्समंदीतिचतुर्ऋचस्यसूक्तस्यकाश्यपोवत्सारःपवमानसोमोगायत्री। (९।२।३५) पवस्वेतिचतुर्ऋचस्यसूक्तस्यकाश्यपोवत्सारःपवमानसोमोगायत्री। (९।२।३६)प्रगायत्रेणेतिचतुर्ऋचस्यसूक्तस्यकाश्यपोवत्सारःपवमानसोमोगायत्रीतृतीयापुरउष्णिक् ।

समर्थोसहस्रंभर्णसं । अतिवारमपाविषुः ॥ अतिवारान्पवमानोऽअसिष्यदत्कलशाँऽअभिधावति । इंद्रस्यहार्द्यी
विशन्+ ॥ इंद्रस्यसोमराधसेशंपवस्वविचर्षणे । प्रजावद्रेतऽआभर ॥ १७ ॥ ( ९।३।१ ) अयावीतीपरिस्रवय
स्तऽइंदोमदेष्वा । अवाहन्नवतीर्नव ॥ पुरःसद्यऽइत्थाधियेदिवोदासायशंबरं । अधत्यंतुर्वशंयदुं ॥ परिणोऽअ
श्वमश्वविद्गोमदिंदोहिरण्यवत् । क्षरासहस्रिणीरिषः ॥ पवमानस्यतेवयंपवित्रमभ्युंदतः । सखित्वमावृणीमहे ॥
येतेपवित्रमूर्मयोभिक्षरंतिधारया । तेभिर्नःसोममृळय ॥ १८ ॥ सनःपुनानऽआभररयिंवीरवतीमिषं । ईशानःसो
मविश्वतः ॥ एतमुत्यंदशक्षिपोमृजंतिसिंधुमातरं । समादित्येभिरख्यत ॥ समिंद्रेणोतवायुनासुतऽएतिपवित्रऽआ ।
संसूर्यस्यरश्मिभिः ॥ सनोभगायवायवेपूष्णेपवस्वमधुमान् । चारुर्मित्रेवरुणेच ॥ उच्चातेजातमंधसोदिविषद्भूम्या
ददे । उग्रंशर्ममहिश्रवः ॥ १९ ॥ एनाविश्वान्यर्यऽआद्युम्नानिमानुषाणां । सिषासंतोवनामहे ॥ सनऽइंद्राययज्य
वेवरुणायमरुद्भ्यः । वरिवोवित्परिस्रव ॥ उपोषुजातमप्तुरंगोभिर्भंगंपरिष्कृतं । इंदुंदेवाऽअयासिषुः ॥ तमिद्वर्धंतु
नोगिरोवत्संसंशिश्वरीरिव । यऽइंद्रस्यहृदंसनिः ॥ अर्षाणःसोमशंगवेधुक्षस्वपिप्युषीमिषं । वर्धासमुद्रमुक्थ्यं* 
॥ २० ॥ पवमानोऽअजीजनद्दिवश्चित्रंनतन्यतुं । ज्योतिर्वैश्वानरंबृहत्+ ॥ पवमानस्यतेरसोमदोराजन्नदुच्छुनः ।

तृतीयेनुवाकेसप्तसूक्तानि ( ९।३।१ ) अयावीतीतित्रिंशदृचस्यसूक्तस्यांगिरसोऽमहीयुःपवमानसोमोगायत्री ।

विवारुमव्यंमर्षति ॥ पवंमानरसस्तवदक्षोविरांजतिद्युमान् । ज्योतिर्विश्वंस्वर्दृशे+ ॥ यस्तेमदोवरेण्यस्तेनापवस्वांधसा । देवावीरंघशंसहा+ ॥ जघ्निर्वृत्रममित्रियंसस्निर्वाजंदिवेदिवे । गोषाऽउऽअश्वसाऽअसि ॥ २१ ॥ संमिश्लोऽअरुषोभवसूपस्थाभिर्नधेनुभिः । सीदंञ्छ्येनोनयोनिमा+ ॥ सपवस्वयऽआविथेंद्रंवृत्रायहंतवे । वव्रिवांसंमहीरपः+ ॥ सुवीरासोवयंधनाजयेमसोममीढ्वः । पुनानोवर्धनोगिरः ॥ त्वोतासस्तवावसास्यामवन्वंतऽआमुरः । सोमव्रतेषुजागृहि ॥ अपघ्नन्पवतेमृधोपसोमोऽअराव्णः । गच्छन्निंद्रस्यनिष्कृतं+ ॥ २२ ॥ महोनोरायऽआभरपवमानजहीमृधः । रास्वेंदोवीरवद्यशः ॥ नत्वाशतंचनह्रुतोराधोदित्संतमामिनन् । यत्पुनानोमखस्यसे ॥ पवस्वेंदोवृषासुतःकृधीनोयशसोजने । विश्वाऽअपद्विषोजहि ॥ अस्यतेसख्येवयंतवेंदोद्युम्नऽउत्तमे । सासह्यामपृतन्यतः+ ॥ यातेभीमान्यायुधातिग्मानिसंतिधूर्वणे । रक्षासमस्यनोनिदः+ ॥ २३ ॥ ( ९।३।२ ) एतेऽअसृग्रमिंदवस्तिरःपवित्रमाशवः । विश्वान्यभिसौभगा ॥ विघ्नंतोदुरितापुरुसुगातोकायवाजिनः । तनाकृण्वंतोऽअर्वते ॥ कृण्वंतोवरिवोगवेभ्यर्षंतिसुष्टुतिं । इळामस्मभ्यंसंयतं ॥ असाव्यंशुर्मदायाप्सुदक्षोगिरिष्ठाः । श्येनोनयोनिमासदत् ॥ शुभ्रमंधोदेववातमप्सुधूतोनृभिःसुतः । स्वदंतिगावःपयोभिः ॥ २४ ॥ आदीमश्वंनहेतारोशूशुभन्नमृताय । मध्वोरसंसधमादे ॥ यास्ते

( ९।३।२ ) एतेअसृग्रमितित्रिंशदृचस्यसूक्तस्यभार्गवोजमदग्निःपवमानसोमोगायत्री ।

धारामधुश्चुतोसृग्रमिंदऽऊतयें । ताभिःपवित्रमासदः ॥ सोऽअर्षेंद्रायपीतयेंतिरोरोमाण्यव्यया । सीदन्योनावने ष्वा ॥ त्वमिंदोपरिस्रवस्वादिष्ठोऽअंगिरोभ्यः । वरिवोविद्घृतंपयः ॥ अयंविचर्षणिर्हितःपवमानःसचेतति । हिन्वानऽआप्यंबृहत् ॥ २५ ॥ एषवृषावृषव्रतःपवमानोऽअशस्तिहा । करद्वसूनिदाशुषे ॥ आपवस्वसहस्रिणंर यिंगोमंतमश्विनं । पुरुश्चंद्रंपुरुस्पृहं ॥ एषस्यपरिषिच्यतेमर्मृज्यमानऽआयुभिः । उरुगायःकविक्रतुः ॥ सहस्रोतिः शतामघोविमानोरजसःकविः । इंद्रायपवतेमदः ॥ गिराजातऽइहस्तुतऽइंदुरिंद्रायधीयते । वियोनावसताविव ॥ २६ ॥ पवमानःसुतोनृभिःसोमोवाजमिवासरत् । चमूषुशक्मनासदं ॥ तंत्रिपृष्ठेत्रिवंधुरेरथेयुंजंतियातवे । ऋषीं णांसप्तधीतिभिः ॥ तंसोतारोधनस्पृतमाशुंवाजाययातवे । हरिंहिनोतवाजिनं ॥ आविशन्कलशंसुतोविश्वाऽअर्षन्न भिश्रियः । शूरोनगोषुतिष्ठति ॥ आतऽइंदोमदायकंपयोदुहंत्यायवः । देवादेवेभ्योमधु ॥ २७ ॥ आनःसोमंपवि त्रऽआसृजतामधुमत्तमं । देवेभ्योदेवश्रुत्तमं ॥ एतेसोमाऽअसृक्षतगृणानाःश्रवसेमहे । मदिन्तमस्यधारया ॥ अभि गव्यानिवीतयेनृम्णापुनानोऽअर्षसि । सनद्वाजःपरिस्रव ॥ उतनोगोमतीरिषोविश्वाऽअर्षपरिष्टुभः । गृणानोजमद ग्निना ॥ पवस्ववाचोऽअग्रियःसोमचित्राभिरूतिभिः । अभिविश्वानिकाव्या ॥ २८॥ त्वंसमुद्रियाऽअपोग्रियोवाच ऽईरयन् । पवस्वविश्वमेजय ॥ तुभ्येमाभुवनाकवेमहिम्नेसोमतस्थिरे । तुभ्यमर्षंतिसिंधवः ॥ प्रतेदिवोनवृष्टयोधा

रायंत्यसश्चतः । अभिशुक्रामुपस्तिरं ॥ इंद्रायेंदुंपुनीतनोग्रंदक्षायसाधनं । ईशानंवीतिराधसं ॥ पवमानऽऋतःकविः सोमःपवित्रमासदत् । दधत्स्तोत्रेसुवीर्यं ॥ २९ ॥ ( ९।३।३ ) आपवस्वसहस्रिणंरयिंसोमसुवीर्यं । अस्मेश्रवांसि धारय ॥ इषमूर्जंचपिन्वसऽइंद्रायमत्सरिन्तमः । चमूष्वानिषीदसि ॥ सुतऽइंद्रायविष्णवेसोमःकलशेऽअक्षरत् । मधुमाँऽअस्तुवायवे ॥ एतेऽअसृग्रमाशवोतिह्वरांसिबभ्रवः । सोमाऽऋतस्यधारया ॥ इंद्रंवर्धंतोऽअप्तुरःकृण्वंतोवि श्वमार्यं । अपघ्नंतोऽअराव्णः ॥ ३० ॥ सुताऽअनुस्वमारजोभ्यर्षंतिबभ्रवः । इंद्रंगच्छंतऽइंदवः ॥ अयापवस्वधार यायायासूर्यमरोचयः । हिन्वानोमानुषीरपः+ ॥ अयुक्तसूरऽएतशंपवमानोमनावधि । अंतरिक्षेणयातवे ॥ उतत्या हरितोदशसूरोऽअयुक्तयातवे । इंदुरिंद्रऽइतिब्रुवन्+ ॥ परीतोवायवेसुतंगिरऽइंद्रायमत्सरं । अव्योवारेषुसिंचत ॥ ३१ ॥ पवमानविदारयिमस्मभ्यंसोमदुष्टरं । योदूणाशोवनुष्यता+ ॥ अभ्यर्षसहस्रिणंरयिंगोमंतमश्विनं । अभि वाजमुतश्रवः ॥ सोमोदेवोनसूर्योद्रिभिःपवतेसुतः । दधानःकलशेरसं ॥ एतेधामान्यार्याशुक्राऽऋतस्यधारया । वाजंगोमंतमक्षरन् ॥ सुताऽइंद्रायवज्रिणेसोमासोदध्याशिरः । पवित्रमत्यक्षरन् ॥ ३२ ॥ प्रसोममधुमत्तमोरायेऽ अर्षपवित्रऽआ । मदोयोदेववीतमः ॥ तमीमृजंत्यायवोहरिंनदीषुवाजिनं । इंदुमिंद्रायमत्सरं+ ॥ आपवस्वहिरण्य

---

( ९।३।३ ) आपवस्वेतित्रिंशदृचस्यसूक्तस्यकाश्यपोनिध्रुविःपवमानसोमोगायत्री ।

वदश्वांवत्सोमवीरवंत् । वाजंगोमंतमाभर ॥ परिवाजेनवांजयुमव्योवारेषुसिंचत । इंद्रायमधुमत्तमं ॥ कविंमृजंति मर्ज्यंधीभिर्विप्राऽअवस्यवः । वृषाकनिंक्रदर्षति ॥ ३३ ॥ वृषणंधीभिरप्तुरंसोममृतस्यधारया । मतीविप्राःसमस्वर न् ॥ पवस्वदेवायुषगिंद्रंगच्छतुतेमदः । वायुमारोहधर्मणा ॥ पवमाननितोशसेरयिंसोमश्रवाय्यं । प्रियःसमुद्रमा विंश ॥ अपघ्नन्पवसेमृधःक्रतुवित्सोममत्सरः । नुदस्वादेवयुंजनं ॥ पवमानाऽअसृक्षतसोमाःशुक्रासऽइंदवः । अभि विश्वांनिकाव्या ॥ ३४ ॥ पवमानासऽआशवःशुभ्राऽअसृग्रमिंदवः । घ्नंतोविश्वाऽअपद्विषः ॥ पवमानादिवस्पर्यं तरिक्षादसृक्षत । पृथिव्याऽअधिसानवि ॥ पुनानःसोमधारयेंदोविश्वाऽअपस्त्रिधः । जहिरक्षांसिसुक्रतो ॥ अपघ्न न्त्सोमरक्षसोभ्यर्षकनिंक्रदत् । द्युमंतंशुष्मंमुत्तमं॑ ॥ अस्मेवसूनिधारयसोमदिव्यानिपार्थिवा । इंदोविश्वांनिवार्या ॥ ३५ ॥ ( ९।३।४ ) वृषासोमद्युमाँऽअसिवृषादेववृषव्रतः । वृषाधर्माणिदधिषे ॥ वृष्णस्तेवृष्ण्यंशवोवृषावनंवृषा मदः । सत्यंवृषन्वृषेदंसि ॥ अश्वोनचक्रदोवृषासंगाऽइंदोसमर्वतः । विनोरायेदुरोवृधि ॥ असृक्षतप्रवाजिनोगव्या सोमासोऽअश्वया । शुक्रासोवीरयाशवः ॥ शुंभमानाऽऋतायुभिर्मृज्यमानागभस्त्योः । पवंतेवारेऽअव्यये ॥ ३६ ॥ तेविश्वादाशुषेवसुसोमादिव्यानिपार्थिवा । पवंतामांतरिक्ष्या ॥ पवमानस्यविश्ववित्प्रतेसर्गाऽअसृक्षत । सूर्यस्येवन

( ९।३।४ ) वृषासोमेतित्रिंशदृचस्यसूक्तस्यमारीचःकश्यपःपवमानसोमोगायत्री ।

रश्मयः ॥ केतुंकृण्वन्दिवस्परिविश्वारूपाभ्यर्षसि । समुद्रःसोमपिन्वसे ॥ हिन्वानोवाचमिष्यसिपवमानविधर्मणि ।
अक्रान्देवोनसूर्यः ॥ इंदुःपविष्टचेतनःप्रियःकवीनांमती । सृजदश्वंरथीरिव ॥ ३७ ॥ ऊर्मिर्यस्तेपवित्रऽआदेवावीः
पर्यक्षरत् । सीदन्नृतस्ययोनिमा+ ॥ सनोऽअर्षपवित्रऽआमदोयोदेववीतमः । इंदविंद्रायपीतये ॥ इषेपवस्वधारया
मृज्यमानोमनीषिभिः । इंदोरुचाभिगाऽइहि ॥ पुनानोवरिवस्कृध्यूर्जंजनायगिर्वणः । हरेसृजानऽआशिरं ॥ पुना
नोदेववीतयऽइंद्रस्ययाहिनिष्कृतं । द्युतानोवाजिभिर्यतः+ ॥ २८ ॥ प्रहिन्वानासऽइंदवोच्छासमुद्रमाशवः । धि
याजूताऽअसृक्षत ॥ मर्मृजानासऽआयवोवृथासमुद्रमिंदवः । अग्मन्नृतस्ययोनिमा+ ॥ परिणोयाह्यस्मयुर्विश्वावसू
न्योजसा । पाहिनःशर्मवीरवत् ॥ मिमातिवह्निरेतशःपदंयुजानऽऋक्वभिः । प्रयत्समुद्रऽआहितः ॥ आयद्योनिंहि
रण्ययमाशुर्ऋतस्यसीदति । जहात्यप्रचेतसः ॥ ३९ ॥ अभिवेनाऽअनूषतेयक्षंतिप्रचेतसः । मज्जंत्यविचेतसः ॥
इंद्रायेंदोमरुत्वतेपवस्वमधुमत्तमः । ऋतस्ययोनिमासदं ॥ तंत्वाविप्रावचोविदःपरिष्कृण्वंतिवेधसः । संत्वामृजंत्या
यवः ॥ रसंतेमित्रोऽअर्यमापिबंतिवरुणःकवे । पवमानस्यमरुतः ॥ त्वंसोमविपश्चितंपुनानोवाचमिष्यसि । इंदोस
हस्रभर्णसं ॥ ४० ॥ उतोसहस्रभर्णसंवाचंसोममखस्युवं । पुनानऽइंदवाभर ॥ पुनानऽइंदवेषांपुरुहूतजनानां ।
प्रियःसमुद्रमाविश ॥ दविद्युतत्यारुचापरिष्टोभंत्याकृपा । सोमाःशुक्रागवाशिरः ॥ हिन्वानोहेतृभिर्यतऽआवाजं

वाज्यंक्रमीत् । सीदंतोवनुषोयथा ॥ ऋधक्सोमस्वस्तयेसंजग्मानोदिवःकविः । पवस्वसूर्योदृशे ॥ ४१ ॥ इतिसप्तमाष्टकेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥ ॥ ॥

सप्तमाष्टकेसूक्तानि ११६ ऋचः १२६३

एकोनपंचाशाध्यायेवर्गाः ४१ सूक्तानि २१ ऋचः २०० ॥ त्यागः ॥ पवमानायसोमायेदं २०० ॥ इतिसप्तमेप्रथमः ॥

हिन्वंतिभृगुर्वारुणिर्जमदग्निर्वापवस्वंशतंवैखानसाअष्टादश्यनुष्टुप्परास्तिस्रआग्नेय्यस्त्वंसोमासिद्वात्रिंशद्भरद्वाजःकश्यपोगोतमोत्रिर्विश्वामित्रोजमदग्निर्वसिष्ठइतीहतृचाःसप्तर्षयःशेषेपवित्रोवसिष्ठोवोभौवापवस्वसोमतिस्रोनित्यद्विपदागायत्र्योऽवितानस्तिस्रःपौष्णयोवायत्तेपवित्रंपंचाग्नेय्यःसावित्र्यग्निसावित्रीवैश्वदेवीवासामंत्यास्त्रिंशीपुरउष्णिक्संसविंश्यनुष्टुवंत्येचतेपावमान्यध्येतृस्तुतीजागतमूर्ध्वंप्रागुशनसःप्रदेवंदशवत्सप्रिर्भालंदनस्त्रिष्टुवंतैहेषुर्नहिरण्यस्तूपोंत्येत्रिष्टुभौत्ररस्मैरेणुरादक्षिणानवऋषभस्तौवैश्वामित्रौहारिंहरिमंतःसक्केपवित्रःशिशुर्नकक्षीवांस्त्रिष्टुबष्टम्याभिप्रियाणिपंचकविः ॥ २ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ ( ९।३।५ ) हिन्वंतिसूरमुस्रयःस्वसारोजामयस्पतिं । महामिंदुंमहीयुवः ॥ पवमानरुचारुचा



---

( ९।३।५ ) हिन्वंतीतित्रिंशदृचस्यसूक्तस्यवारुणिर्भृगुःपवमानसोमोगायत्री । ( अत्रभार्गवोजमदग्निःपाक्षिकः ) ।

देवोदेवेभ्यस्परिं । विश्वाव्रसून्याविंश ॥ आपवमानसुष्टुतिंवृष्टिंदेवेभ्योदुवः । इषेपवस्वसंयतं ॥ वृषाह्यसिभानुना
द्युमंतंत्वाहवामहे । पवमानःस्वाध्यः* ॥ आपवस्वसुवीर्यंमंदमानःस्वायुध । इहोष्विंदवागहि ॥ १ ॥ यदद्भिःप
रिषिच्यसेमृज्यमानोगभस्त्योः । द्रुणासधस्थमश्नुषे ॥ प्रसोमायव्यश्ववत्पवमानायगायत । महेसहस्रचक्षसे ॥ य
स्यवर्णंमधुश्चुतंहरिंहिन्वंत्यद्रिभिः । इंदुमिंद्रायपीतये ॥ तस्यतेवाजिनोवयंविश्वाधनानिजिग्युषः । सखित्वमावृणी
महे ॥ वृषापवस्वधारयामरुत्वतेचमत्सरः । विश्वादधानऽओजसा ॥ २ ॥ तंत्वाधर्तारमोण्योः३ःपवमानस्वर्दृशं ।
हिन्वेवाजेषुवाजिनं ॥ अयाचित्तोविपानयाहरिःपवस्वधारया । युजंवाजेषुचोदय ॥ आनऽइंदोमहीमिषंपवस्वविश्वद
र्शतः । अस्मभ्यंसोमगातुवित् ॥ आकलशाऽअनूषतेंदोधाराभिरोजसा । एंद्रस्यपीतयेविश ॥ यस्यतेमद्यंरसंतीव्रं
दुहंत्यद्रिभिः । सपवस्वाभिमातिहा+ ॥ ३ ॥ राजामेधाभिरीयतेपवमानोमनावधि । अंतरिक्षेणयातवे ॥ आनऽ
इंदोशतग्विनंगवांपोषंस्वश्व्यं । वहाभगत्तिमूतये ॥ आनःसोमसहोजुवोरूपंनवर्चसेभर । सुष्वाणोदेववीतये ॥ अ
र्षासोमद्युमत्तमोभिद्रोणानिरोरुवत् । सीदन्छ्येनोनयोनिमा+ ॥ अप्साऽइंद्रायवायवेवरुणायमरुद्भ्यः । सोमोऽअ
र्षतिविष्णवे ॥ ४ ॥ इषंतोकायनोदधदस्मभ्यंसोमविश्वतः । आपवस्वसहस्रिणं ॥ येसोमासःपरावतियेऽर्वावतिं
सुन्विरे । येवादःशर्यणावति ॥ यऽआर्जीकेषुकृत्वसुयेमध्येपस्त्यानां । येवाजनेषुपंचसु ॥ तेनोवृष्टिंदिवस्परिपवंता

मासुवीर्यं । सुवानादेवासऽइंदंवः ॥ पवंतेहर्यतोहरिंर्गृणानोजमदग्निना । हिन्वानोगोरधित्वचि+ ॥ ५ ॥ प्रशुक्रा सोंवयोजुवोंहिन्वानासोनसप्तंयः । श्रीणानाऽअप्सुमृंजत ॥ तंत्वासुतेष्वाभुवोहिन्विरेदेवतांतये । सपंवस्वानयारुचा+ ॥ आतेदक्षंमयोभुवंवह्निमद्यावृणीमहे । पांतमापुंरुस्पृहं ॥ आमंद्रमावरेण्यमाविप्रमामनीषिणं । पांतमा० ॥ आरयिमासुचेतुनमासुंक्रतोतनूष्वा । पांतमा० ॥ ६ ॥ ( ९।३।६ ) पवंस्वविश्वचर्षणेभिविश्वानिकाव्यां । सखासखिभ्यऽईड्यंः ॥ ताभ्यांविश्वस्यराजसियेपंवमानधामंनी । प्रतीचीसोंमतस्थतुः ॥ परिधामांनियानिंतेत्वंसोंमासिविश्वतः । पवंमानऽऋतुभिःकवे ॥ पवंस्वजनयन्निषोभिविश्वानिवार्यां । सखासखिभ्यऽऊतये ॥ तवंशुक्रासोंऽअर्चयोदिवस्पृष्ठेवितंन्वते । पवित्रंसोमधामंभिः ॥ ७ ॥ तवेमेसप्तसिंधंवःप्रशिषंसोमसिस्रते । तुभ्यंधावंतिधेनवंः ॥ प्रसोंमयाहिधारंयासुतऽइंद्रांयमत्सरः । दधांनोऽअक्षितिश्रवंः ॥ समुंत्वाधीभिरंस्वरन्हिन्वतीःसप्तजामयः । विप्रमाजाविवस्वंतः ॥ मृजंतिंत्वासमग्रुवोव्येंजीरावधि वणि । रेभोयदज्यसेवनें ॥ पवंमानस्यतेकवेवाजिन्त्सर्गांऽअसृक्षत । अर्वंतोनश्रंवस्यवंः ॥ ८ ॥ अच्छाकोशंमधुश्चुतमसृंग्रंवारेंऽअव्ययें । अवांवशंतधीतयंः ॥ अच्छासमुद्रमिंदवोस्तंगावोन



---

( ९।३।६ ) पवस्वेतित्रिंशदृचस्यसूक्तस्यशतंवैखानसाःपवमानसोमएकोनविंश्यादितिसृणामग्निःपवमानोगायत्र्यष्टादश्यनुष्टुप् ( शतंवैखानसाएतेस्वायंभुवाःअतएषांगोत्रंनास्तिएवमग्रेपिनारायणादयऊह्याः ) ।

धेनवः । अग्मन्नृतस्ययोनिमा+ ॥ प्रणंऽइंदोमहेरणऽआपोऽअर्षंतिसिंधवः । यद्गोभिर्वासयिष्यसे ॥ अस्यतेसख्येवयमियक्षंतस्त्वोतयः । इंदोसखित्वमुश्मसि ॥ आपवस्वगविष्टयेमहेसोमनृचक्षसे । एंद्रस्यजठरेविश ॥ ९ ॥ महाँऽअसिसोमज्येष्ठऽउग्राणामिंदऽओजिष्ठः । युध्वासन्छश्वज्जिगेथ ॥ यऽउग्रेभ्यश्चिदोजीयान्छूरेभ्यश्चिच्छूरतरः । भूरिदाभ्यश्चिन्मंहीयान् ॥ त्वंसोमसूरऽएषस्तोकस्यसातातनूनाँ । वृणीमहेसख्यायवृणीमहेयुज्याय ॥ अग्नऽआयूँषिपवसऽआसुवोर्जमिषंचनः । आरेबाधस्वदुच्छुनाँ ॥ अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः । तमीमहेमहागयं+ ॥१०॥ अग्नेपवस्वस्वपाऽअस्मेवर्चःसुवीर्यं । दधद्रयिंमयिपोषं ॥ पवमानोऽअतितिस्रिधोभ्यर्षतिसुष्टुतिं । सूरोनविश्वदर्शतः ॥ समर्मृजानऽआयुभिःप्रयस्वान्प्रयसेहितः । इंदुरत्योविचक्षणः+ ॥ पवमानऽऋतंबृहच्छुक्रंज्योतिरजीजनत् । कृष्णातमाँसिजंघनत् ॥ पवमानस्यजंघ्नतोहरेश्चंद्राऽअसृक्षत । जीराऽअजिरशोचिषः ॥ ११ ॥ पवमानोरथीतमःशुभ्रेभिःशुभ्रशस्तमः । हरिश्चंद्रोमरुद्गणः ॥ पवमानोव्यश्नवद्रश्मिभिर्वाजसातमः । दधत्स्तोत्रेसुवीर्यं ॥ प्रसुवानऽइंदुरक्षाःपवित्रमत्यव्ययं । पुनानऽइंदुरिंद्रमा ॥ एषसोमोऽअधित्वचिगवांक्रीळत्यद्रिभिः । इंद्रंमदायजोहुवत् ॥ यस्यतेद्युम्नवत्पयःपवमानाभृतंदिवः । तेननोमृळजीवसे ॥ १२ ॥ ( ९।३।७ ) त्वंसोमासिधारयुर्मंद्रऽओजिष्ठोऽअध्व

---

(९।३।७) त्वंसोमासीतिद्वात्रिंशदृचस्यसूक्तस्याद्यानांसप्तानांतृचानांभरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठाऋषयःशिष्टाना

ऋक्सं.
अ. ७ अ. २
॥ ९ ॥

मंडलं ९
अनु. ३

रे । पवंस्वमंहृयद्द्रयिः ॥ त्वंसुतोनृमादंनोदधन्वान्मंत्सरिन्तंमः । इंद्रायसूरिरंधसा ॥ त्वंसुष्वाणोऽअद्रिभिरभ्य
र्षकनिक्रदत् । द्युमंतंशुष्ममुत्तमं ॥ इंदुर्हिन्वानोऽअर्षतितिरोवाराण्यव्यया । हरिर्वाजमचिक्रदत् ॥ इंदोव्यव्यम
र्षसिविश्रवांसिविश्वासौभगा । विवाजान्त्सोमगोमतः ॥ १३ ॥ आनऽइंदोशतग्विनंरयिंगोमंतमश्विनं । भरासोमस
हस्रिणं ॥ पवमानासऽइंदवस्तिरःपवित्रमाशवः । इंद्रयामेभिराशत ॥ ककुहःसोम्योरसऽइंदुरिंद्रायपूर्व्यः । आ
युःपवतऽआयवे ॥ हिन्वंतिसूरमुस्रयःपवमानंमधुश्चुतं । अभिगिरासमस्वरन् ॥ अवितानोऽअजाश्वःपूषायामनिया
मनि । आभक्षत्कन्यासुनः ॥ १४ ॥ अयंसोमःकपर्दिनेघृतंनपवतेमधु । आभ० ॥ अयंतऽआघृणेसुतोघृतंनपव
तेशुचि । आभ० ॥ वाचोजंतुःकवीनांपवस्वसोमधारया । देवेषुरत्नधाऽअसि ॥ आकलशेषुधावतिश्येनोवर्मविगा
हते । अभिद्रोणाकनिक्रदत् ॥ परिप्रसोमतेरसोऽसर्जिकलशेसुतः । श्येनोनतक्तोऽअर्षति ॥ १५ ॥ पवस्वसोममंदय
न्निंद्रायमधुमत्तमः । असृग्रन्देववीतयेवाजयंतोरथाऽइव ॥ तेसुतासोमदिन्तमाःशुक्रावायुमसृक्षत ॥ ग्राव्णातुन्नोऽ

---

मांगिरसःपवित्रऋषिः ( अत्रवसिष्ठोवापवित्रवसिष्ठौवेतिविपक्षौ ) पवमानसोमोदेवता दशम्यादितिसृणांपूषावा यत्तेपवित्रमित्या-
दिपंचानामग्निःअंत्ययोर्द्वयोःपावमान्यध्येतागायत्री षोडश्याद्यास्तिस्रोद्विपदागायत्र्यःत्रिंशीपुरउष्णिक्सप्तविंश्येकत्रिंशीद्वात्रिंश्योनुष्टुभः
( पंचविंश्यादितिसृणांक्रमात्सविताग्निसविताग्नीवादेवाइतिदेवताअग्निमासहविकल्पते ) ।

॥ ९ ॥

अभिष्टुतःपवित्रंसोमगच्छसि । दधत्स्तोत्रेसुवीर्यं ॥ एषतुन्नोऽअभिष्टुतःपवित्रमतिगाहते । रक्षोहावारमव्ययं ॥ १६ ॥
यदंतियच्चदूरकेभयंविंदतिमामिह । पवमानवितज्जहि ॥ पवमानःसोऽअद्यनःपवित्रेणविचर्षणिः । यःपोतासंपुनातु
नः ॥ यत्तेपवित्रमर्चिष्यग्नेविततमंतरा । ब्रह्मतेनपुनीहिनः ॥ यत्तेपवित्रमर्चिवदग्नेतेनपुनीहिनः । ब्रह्मसवैःपुनीहिनः ॥
उभाभ्यांदेवसवितःपवित्रेणसवेनच । मांपुनीहिविश्वतः ॥ १७ ॥ त्रिभिष्ट्वंदेवसवितर्वर्षिष्ठैःसोमधामभिः । अग्नेदक्षैःपु
नीहिनः ॥ पुनंतुमांदेवजनाःपुनंतुवसवोधिया । विश्वेदेवाःपुनीतमाजातवेदःपुनीहिमा ॥ प्रप्यायस्वप्रस्यंदस्वसोमवि
श्वेभिरंशुभिः । देवेभ्यऽउत्तमंहविः + ॥ उपप्रियंपनिप्नतंयुवानमाहुतीवृधं । अगन्मबिभ्रतोनमः ॥ अलाय्यस्यपरशुर्न
नाशतमापवस्वदेवसोम । आखुंचिदेवदेवसोम ॥ यःपावमानीरध्येत्यृषिभिःसंभृतंरसं । सर्वंसपूतमश्नातिस्वदितंमात
रिश्वना ॥ पावमानीर्योऽअध्येत्यृषिभिःसंभृतंरसं । तस्मैसरस्वतीदुहेक्षीरंसर्पिर्मधूदकं ॥ १८ ॥ ( परिशिष्टं ॥ पावमा
नीःस्वस्त्ययनीःसुदुघाहिघृतश्चुतः । ऋषिभिःसंभृतोरसोब्राह्मणेष्वमृतंहितं ॥ पावमानीर्दिशंतुनऽइमंलोकमथोऽअमुं ।
कामान्त्समर्धयंतुनोदेवीर्देवैःसमाहिताः ॥ येनदेवाःपवित्रेणात्मानंपुनतेसदा । तेनसहस्रधारेणपावमान्यःपुनंतुमां ॥
प्राजापत्यंपवित्रंशतोद्यामंहिरण्मयं । तेनब्रह्मविदोवयंपूतंब्रह्मपुनीमहे ॥ इंद्रःपुनीतीसहमापुनातुसोमःस्वस्त्यावरु
णःसमीच्या । यमोराजाप्रमृणाभिःपुनातुमाजातवेदामूर्जयंत्यापुनातु ॥ ऋषयस्तुतपस्तेपुःसर्वेस्वर्गजिगीषवः । तप

सस्तपसोऽयंतुपावमानीर्ऋचोब्रवीत् ॥ १ ॥ यन्मेगर्भेवसतःपापमुग्रंयज्जायमानस्यचकिंचिदन्यत् । जातस्यचयच्चा पिचवर्धतोमेतत्पावमानीभिरहंपुनामि ॥ मातापित्रोर्यन्नकृतंवचोमेयत्स्थावरंजंगममावभूव । विश्वस्यतत्प्रहृषितंव चोमेतत्पावमानीभिरहंपुनामि ॥ गोघ्नात्तस्कंरत्वात्स्त्रीवधाद्यच्चकिल्बिषं । पापकंचचरणेभ्यस्तत्पावमानीभिरहंपु नामि ॥ ब्रह्मवधात्सुरापानात्स्वर्णस्तेयाद्वृषलिगमनमैथुनसंगमात् । गुरोर्दाराधिगमनाच्चतत्पावमानीभिरहंपुनामि ॥ बालघ्नान्मातृपितृवधाद्भूमितस्करात्सर्ववर्णगमनमैथुनसंगमात् । पापेभ्यश्चप्रतिग्रहात्सद्यःप्रहरतिसर्वदुष्कृतंतत्पाव मानीभिरहंपुनामि ॥ क्रयविक्रयाद्योनिदोषाद्भक्षाद्भोज्यात्प्रतिग्रहात् । असंभोजनाच्चापिनृशंसंतत्पावमानीभिरहंपु नामि ॥ २ ॥ दुर्यष्टंदुरधीतंपापंयच्चाज्ञानतोकृतं । अयाजिताश्चासंयाज्यास्तत्पावमानीभिरहंपुनामि ॥ अमंत्रमन्नंय त्किंचिद्धूयतेचहुताशने । संवत्सरकृतंपापंतत्पावमानीभिरहंपुनामि ॥ ऋतस्ययोनयोमृतस्यधामविश्वादेवेभ्यःपुण्य गंधाः । तानऽआपःप्रवहंतुपापंशुद्धागच्छामिसुकृतामुलोकंतत्पावमानीभिरहंपुनामि ॥ पावमानीःस्वस्त्ययनीर्या भिर्गच्छतिनांदनं । पुण्यांश्चभक्षान्भक्षयत्यमृतत्वंचगच्छति ॥ पावमानीःपितृन्देवान्ध्यायेद्यश्चसरस्वतीं । पितृंस्त स्योपवर्तेतक्षीरंसर्पिर्मधूदकं ॥ पावमानंपरंब्रह्मशुक्रंज्योतिःसनातनं । ऋषींस्तस्योपतिष्ठेतत्क्षीरंसर्पिर्मधूदकं ॥ पाव मानंपरंब्रह्मयेपठंतिमनीषिणः । सप्तजन्मभवेद्विप्रोधनाढ्योवेदपारगाः ॥ दशोत्तराण्यृचांश्चैवपावमानीःशतानिषट् ।

एतज्जुह्वन्जपेन्मंत्रंघोरमृत्युभयंहरेत् ॥ ३ ॥ इतिपरि० ) ( ९।४।१ ) प्रदेवमच्छामधुमंतऽइंदवोसिष्यदंतगावऽआ नधेनवः । बर्हिषदोवचनावंतऽऊधभिःपरिस्रुतमुस्रियानिर्णिजंधिरे ॥ सरोरुवदभिपूर्वाऽअचिक्रददुपारुहःश्रथयं न्त्स्वादतेहरिः । तिरःपवित्रंपरियन्नुरुज्रयोनिशर्याणिदधतेदेवऽआवरं ॥ वियोममेयम्यासंयतीमदःसाकंवृधापयं सापिन्वदक्षिता । महीऽअपारेरजसीविवेविददभिव्रजन्नक्षितंपाजऽआददे ॥ समातरांविचरन्वाजयन्नपःप्रमेधिरः स्वधयापिन्वतेपदं । अंशुर्यवेनपिपिशेयतोनृभिःसंजामिभिर्नसंतेरक्षतेशिरः ॥ संदक्षेणमनसाजायतेकविर्ऋतस्यग र्भोनिहितोयमापरः । यूनाहसंताप्रथमंविजज्ञतुर्गुहाहितंजनिमनेममुद्यतं ॥ १९ ॥ मंद्रस्यरूपंविविदुर्मनीषिणः श्येनोयदंधोऽअभरत्परावतः । तंमर्जयंतसुवृधंनदीष्वाँऽउशंतमंशुंपरियंतमृग्मियं ॥ त्वांमृजंतिदशयोषणःसुतंसोम ऽऋषिभिर्मतिभिर्धीतिभिर्हितं । अव्योवारेभिरुतदेवहूतिभिर्नृभिर्यतोवाजमादर्षिसातये ॥ परिप्रयंतंवय्यंसुषंसदं सोमंमनीषाऽअभ्यनूषतस्तुभः । योधारयामधुमाँऽऊर्मिणादिवऽइयर्तिवाचंरयिषाळमर्त्यः ॥ अयंदिवऽइयर्तिविश्व मारजःसोमःपुनानःकलशेषुसीदति । अद्भिर्गोभिर्मृज्यतेऽअद्रिभिःसुतःपुनानऽइंदुर्वरिवोविदत्प्रियं+ ॥ एवानःसो

चतुर्थेनुवाकेऽष्टादशसूक्तानि ( ९।४।१ ) प्रदेवमितिदशर्चस्यसूक्तस्यभालंदनोवत्सप्रिःपवमानसोमोजगत्यंत्यात्रिष्टुप् ।

मपरिषिच्यमानोवयोदधच्चित्रतमंपवस्व । अद्वेषेद्यावापृथिवीहुवेमदेवाधत्तरयिमस्मेसुवीरं ॥ २० ॥ ( ९।४।२ ) इषुर्न
धन्वन्प्रतिधीयतेमतिर्वत्सोनमातुरुपसर्ज्यूधनि । उरुधारेवदुहेऽअग्रऽआयत्यस्यव्रतेष्वपिसोमऽइष्यते ॥ उपो
मतिःपृच्यतेसिच्यतेमधुमंद्राजनीचोदतेऽअंतरासनि । पवमानःसंतनिःप्रघ्नतामिवमधुमान्द्रप्सःपरिवारमर्षति ॥
अव्येवधूयुःपवतेपरित्वचिश्रश्नीतेनप्तीरदितेर्ऋतंयते । हरिरक्रान्यजतःसंयतोमदोनृम्णाशिशानोमहिषोनशोभते ॥
उक्षामिमातिप्रतियंतिधेनवोदेवस्यदेवीरुपयंतिनिष्कृतं । अत्यक्रमीदर्जुनंवारमव्ययमत्कंननिक्तंपरिसोमोऽअव्यत ॥
अमृक्तेनरुशतावाससाहरिरमर्त्योनिर्णिजानःपरिव्यत । दिवस्पृष्ठंबर्हणानिर्णिजेकृतोपस्तरणंचम्वोर्नभस्मयं ॥ २१ ॥
सूर्यस्येवरश्मयोद्रावयित्नवोमत्सरासःप्रसुपःसाकमीरते । तंतुंततंपरिसर्गासऽआशवोनेंद्रादृतेपवतेधामकिंचन+ ॥
सिंधोरिवप्रवणेनिम्नऽआशवोवृषच्युतामदासोगातुमाशत । शंनोनिवेशेद्विपदेचतुष्पदेस्मेवाजाःसोमतिष्ठंतुकृष्टयः ॥
आनःपवस्ववसुमद्धिरण्यवदश्वावद्गोमद्यवमत्सुवीर्यं । यूयंहिसोमपितरोममस्थनदिवोमूर्धानःप्रस्थितावयस्कृतः ॥
एतेसोमाःपवमानासऽइंद्रंरथाऽइवप्रययुःसातिमच्छ । सुताःपवित्रमतियंत्यव्यंहित्वीवव्रिंहरितोवृष्टिमच्छ ॥ इंदुर्विं



( ९।४।२ ) इषुर्नेतिदशर्चस्यसूक्तस्यांगिरसोहिरण्यस्तूपःपवमानसोमोजगत्यंत्येद्वेत्रिष्टुभौ ।

द्रांयबृहतेपवस्वसुमृळीकोऽअनवद्योरिशादाः । भराचंद्राणिगृणतेवसूनिदेवैर्द्यावापृथिवीप्रावतंनः ॥ २२ ॥ ( ९।४।३ )
त्रिरस्मैसप्तधेनवोदुदुह्रेसत्यामाशिरंपूर्व्येव्योमनि । चत्वार्यन्याभुवनानिनिर्णिजेचारूणिचक्रेयदृतैरवर्धत ॥ सभि
क्षमाणोऽअमृतस्यचारुणऽउभेद्यावाकाव्येनाविशश्रथे । तेजिष्ठाऽअपोमंहनापरिव्यतयदीदेवस्यश्रवसासदोविदुः+ ॥
तेऽअस्यसंतुकेतवोमृत्यवोदाभ्यासोजनुषीऽउभेऽअनु । येभिर्नृम्णाचदेव्याचपुनतऽआदिद्राजानंमननाऽअगृभ्णत ॥
समृज्यमानोदशभिःसुकर्मभिःप्रमध्यमासुमातृषुप्रमेसचा । व्रतानिपानोऽअमृतस्यचारुणऽउभेनृचक्षाऽअनुपश्यते
विशौ ॥ समर्मृजानऽइंद्रियायधायसऽओभेऽअंतारोदसीहर्षतेहितः । वृषाशुष्मेणबाधतेविदुर्मतीरादेदिशानःशर्य
हेवशुरुधः ॥ २३ ॥ समातरानददृशानऽउस्त्रियोनानंददेतिमरुतामिवस्वनः । जानन्नृतंप्रथमंयत्स्वर्णरंप्रशस्तयेकम
वृणीतसुक्रतुः ॥ रुवतिभीमोवृषभस्तविष्ययाशृंगेशिशानोहरिणीविचक्षणः । आयोनिंसोमःसुकृतंनिषीदतिगव्ययी
त्वग्भवतिनिर्णिगव्ययी ॥ शुचिःपुनानस्तन्वमरेपसमव्येहरिर्न्यधाविष्टसानवि । जुष्टोमित्रायवरुणायवायवेत्रिधा
तुमधुक्रियतेसुकर्मभिः ॥ पवस्वसोमदेववीतयेवृषेंद्रस्यहार्दिसोमधानमाविश । पुरानोबाधाद्दुरितातिपारयक्षेत्रविद्धि
दिशऽआहाविपृच्छते ॥ हितोनसप्तिरभिवाजमर्षेंद्रस्येंदोजठरमापवस्व । नावानसिंधुमतिपर्षिविद्वान्छूरोनयुध्यन्न

---

( ९।४।३ ) त्रिरस्माइतिदशर्चस्यक्तसूक्तस्यवैश्वामित्रोरेणःपवमानसोमोजगत्यंत्यात्रिष्टुप् ।

वनोनिदस्पः ॥ २४ ॥ ( ९।४।४ ) आदक्षिणासृज्यतेशुष्म्या३ सदंवेतिद्रुहोरक्षसःपातिजागृविः । हरिरोपशंकृणु
तेनभस्पयऽउपस्तिरेचम्वो३ ब्रह्मनिर्णिजे ॥ प्रकृष्टिहेवशूषऽएतिरोरुवदसुर्य१ वर्णनिरिणीतेऽअस्यतं । जहातिवव्रिंपि
तुरेतिनिष्कृतमुपप्रुतंकृणुतेनिर्णिजंतना ॥ अद्रिभिःसुतःपवतेगभस्त्योर्वृषायतेनभसावेपतेमती । समोदतेनसंतेसा
धतेगिरानेनिक्तेऽअप्सुयजतेपरीमणि ॥ परिद्युक्षंसहसःपर्वतावृधंमध्वःसिंचंतिहर्म्यस्यसक्षणिं । आयस्मिन्गावःसुहु
ताद्ऽऊधनिमूर्धन्छ्रीणंत्यग्रियंवरीमभिः ॥ समीरथंनभुरिजोरहेषतदशस्वसारोऽअदितेरुपस्थऽआ । जिगादुपज्रय
तिगोरपीच्यंपदंयदस्यमतुथाऽअजीजनन् ॥ २५ ॥ श्येनोनयोनिंसदनंधियाकृतंहिरण्ययमासदंदेवऽएषति । एरि
णंतिबर्हिषिप्रियंगिराश्वोनदेवाँऽअप्येतियज्ञियः ॥ पराव्यक्तोऽअरुषोदिवःकविर्वृषात्रिपृष्ठोऽअनविष्टगाऽअभि ।
सहस्रणीतिर्यतिःपरायतीरेभोनपूर्वीरुषसोविराजति ॥ त्वेषंरूपंकृणुतेवर्णोऽअस्यसयत्राशयत्समृतासेधतिस्रिधः ।
अप्सायातिस्वधयादैव्यंजनंसंसुष्टुतीनसंतेसंगोऽअग्रया ॥ उक्षेवयूथापरियन्नरावीदधित्विषीरधितसूर्यस्य । दिव्यः
सुपर्णोवचक्षतक्षांसोमःपरिक्रतुनापश्यतेजाः+ ॥ २६ ॥ ( ९।४।५ ) हरिंमृजंत्यरुषोनयुज्यतेसंधेनुभिःकलशेसोमो



---

( ९।४।४ ) आदक्षिणेतिनवर्चस्यसूक्तस्यवैश्वामित्रऋषभःपवमानसोमोजगत्यंत्यात्रिष्टुप् । (९।४।५) हरिंमृजंतीतिनवर्चस्यसूक्तस्यां
गिरसोहरिमंतःपवमानसोमोजगती ।

ऽअज्यते । उद्वाचमीरयतिहिन्वतेमतीपुरुष्टुतस्यकतिंचित्परिप्रियः ॥ साकंवदंतिबहवोमनीषिणऽइंद्रस्यसोमंजठरेय
दादुहुः । यदीमृजंतिसुगभस्तयोनरःसनीळाभिर्दशभिःकाम्यंमधु ॥ अरममाणोऽअत्येतिगाऽअभिसूर्यस्यप्रियंदुहि
तुस्तिरोरवं । अन्वस्मैजोषमभरद्विनंगृसःसंद्वयीभिःस्वसृभिःक्षेतिजामिभिः ॥ नृधूतोऽअद्रिषुतोबर्हिषिप्रियःपतिर्ग
वांप्रदिवऽइंदुर्ऋत्वियः । पुरंधिवान्मनुषोयज्ञसाधनःशुचिर्धियापवतेसोमऽइंद्रते ॥ नृबाहुभ्यांचोदितोधारयासुतो
नुष्वधंपवतेसोमऽइंद्रते । आप्राःक्रतून्त्समजैरध्वरेमतीर्वेर्नद्रुषच्चम्वो३रासदद्धरिः ॥ २७ ॥ अंशुंदुहंतिस्तनयंतम
क्षितंकविंकवयोपसोमनीषिणः । समीगावोमतयोयंतिसंयतऽऋतस्ययोनासदनेपुनर्भुवः ॥ नाभापृथिव्याधरुणोम
होदिवो३पामूर्मौसिंधुष्वंतरुक्षितः । इंद्रस्यवज्रोवृषभोविभूवसुःसोमोहृदेपवतेचारुमत्सरः+ ॥ सतूपवस्वपरिपार्थिवं
रजस्तोत्रेशिक्षन्नाधून्वतेचसुक्रतो । मानोनिर्भाग्वसुनःसादनस्पृशोरयिंपिशंगंबहुलंवसीमहि ॥ आतूनऽइंदोशतदा
त्वश्व्यंसहस्रदातुपशुमद्धिरण्यवत् । उपमास्वबृहतीरेवतीरिषोधिस्तोत्रस्यपवमाननोगहि ॥ २८ ॥ ( ९।४।६ ) स्रक्वे
द्रप्सस्यधमतःसमस्वरन्नृतस्ययोनासमरंतनाभयः । त्रीन्त्समूर्ध्नोऽअसुरश्चक्रऽआरभेसत्यस्यनावःसुकृतमपीपरन् ॥
सम्यक्सम्यंचोमहिषाऽअहेषतसिंधोरूर्मावधिवेनाऽअवीविपन् । मधोर्धाराभिर्जनयंतोऽअर्कमित्प्रियामिंद्रस्यतन्वं

---

( ९।४।६ ) स्रक्वेद्रप्सस्येतिनवर्चस्यसूक्तस्यांगिरसःपवित्रःपवमानसोमोजगती ।

सं. ६०

मवीवृधन् ॥ पवित्रवंतः परिवाचमासते पितैषां प्रत्नो अभिरक्षति व्रतं । महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणे ष्वारभं ॥ सहस्रधारे ऽवतेसमस्वरन्दिवोनाके मधुजिह्वा असश्चतः । अस्यस्पशोननिमिषंति भूर्णयः पदेपदेपाशिनः संतिसेतवः ॥ पितुर्मातुरध्यायेसमस्वरन्नृचाशोचंतः संदहंतो अव्रतान् । इंद्रद्विष्टामपधमंतिमायया त्वचमसिक्नींभूमनोदिवस्परि ॥ २९ ॥ प्रत्नान्मानादध्यायेसमस्वरन्छ्लोकयंत्रासोरभसस्यमंतवः । अपानक्षासोबधिरा अहासतऋतस्यपंथांनतरंतिदुष्कृतः ॥ सहस्रधारेविततेपवित्र आवाचंपुनंतिकवयोमनीषिणः । रुद्रासएषामिषिरासो अद्रुहः स्पशः स्वंचः सुदृशोनृचक्षसः ॥ ऋतस्यगोपानदभायसुक्रतुस्त्रीषपवित्राहृद्यं१तरादधे । विद्वान्त्सविश्वाभुवनाभिपश्यत्यवाजुष्टान्विध्यतिकर्तेअव्रतान्+ ॥ ऋतस्यतंतुर्विततः पवित्र आजिह्वाया अग्रेवरुणस्यमायया । धीराश्चित्तत्समिनक्षंत आशतात्राकर्तमवपदात्यप्रभुः ॥ ३० ॥ ( ९।४।७ ) शिशुर्नजातोवचक्रदद्वनेस्व१र्यद्वाज्यरुषः सिषासति । दिवोरेतसासचतेपयोवृधातमीमहेसुमतीशर्मसप्रथः ॥ दिवोयस्कंभोधरुणः स्वातत आपूर्णो अंशुः पर्येतिविश्वतः । सेमेमहीरोदसीयक्षदावृतासमीचीनेदाधारसमिषःकविः+ ॥ महिप्सरः सुकृतंसोम्यंमधूर्वीगव्यूतिरदितेर्ऋतंयते । ईशेयोवृष्टेरित उस्रियोवृषापांनेताय इतऊतिर्ऋग्मियः ॥ आत्मन्वन्नभोदुह्यतेघृतंपय ऋतस्यनाभिरमृतं



( ९।४।७ ) शिशुर्नेतिनवर्चस्यसूक्तस्यदैर्घतमसः कक्षीवान्पवमानसोमोजगत्यष्टमीत्रिष्टुप् ।

विजायते । समीचीनाःसुदानवःप्रीणंतितंनरोहितमवंमेहंतिपेरवः ॥ अरावीदंशुःसचमानऽऊर्मिणादेवाव्यं१मनुषेपि न्वतित्वचं । दधातिगर्भमदितेरुपस्थऽआयेनंतोकंचतनयंचधामहे ॥ ३१ ॥ सहस्रधारेवताऽअसश्चतस्तृतीयेसंतुर जंसिप्रजावतीः । चतस्रोनाभोनिहिताऽअवोदिवोहविर्भरंत्यमृतंघृतश्चुतः ॥ श्वेतंरूपंकृणुतेयत्सिषासतिसोमोमीढ्वाँऽ असुरोवेदभूमनः । धियाशमीसचतेसेमभिप्रवद्दिवस्कवंधमवदर्षदुद्रिणं ॥ अधश्वेतंकलशंगोभिरक्तंकार्ष्मन्नावाज्य क्रमीत्ससवान् । आहिंन्विरेमनसादेवयंतःकक्षीवतेशतहिमायगोनां ॥ अद्भिःसोमपपृचानस्यतेरसोव्योवारंविपव मानधावति । समृज्यमानःकविभिर्मदिन्तमस्वदस्वेंद्रायपवमानपीतये ॥ ३२ ॥ ( ९।४।८ ) अभिप्रियाणिपवतेच नोहितोनामानियह्वोऽअधियेषुवर्धते । आसूर्यस्यबृहतोबृहन्नधिरथंविष्वंचमरुहद्विचक्षणः+ ॥ ऋतस्यजिह्वापवतेम धुप्रियंवक्तापतिर्धियोऽअस्याऽअदाभ्यः । दधातिपुत्रःपित्रोरपीच्यं१नामतृतीयमधिरोचनेदिवः+ ॥ अवद्युतानःक लशाँऽअचिक्रदन्नृभिर्येमानःकोशऽआहिरण्यये । अभीमृतस्यदोहनाऽअनूषताधित्रिपृष्ठऽउषसोविराजति ॥ अद्रि भिःसुतोमतिभिश्चनोहितःप्ररोचयन्रोदसीमातराशुचिः । रोमाण्यव्यासमयाविधावतिमधोर्धारापिन्वमानादिवेदिवे

---

( ९।४।८ ) अभिप्रियाणीतिपंचर्चस्यसूक्तस्यभार्गवःकविःपवमानसोमोजगती ।

वे ॥ परिसोमप्रधन्वास्वस्तयेनृभिः पुनानोऽअभिवासयाशिरं । येतेमदाऽआहनसोविहायसस्तेभिरिंद्रंचोदयदातवे मघं ॥ ३३ ॥ इतिसप्तमःष्टकेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥

पंचाशाध्यायेवर्गाः ३३ सूक्तानि ११ ऋचः १६३ ॥ त्यागः ॥ पवमानायसोमाये.४८ अग्नयेपवमानाये.३ पवमानायसोमाये.३१ [ भे. प. पवमानायसो.१८ पूष्णेपवमानायसोमाये.३ पवमानायसोमाये.१० ] अग्नयेपवमानाये.५ [ भे. प. अग्नयेप.२ सवित्र. अग्निसवितृभ्या. विश्वेभ्योदेवेभ्य. ] पवमानायसोमाये.३ पावमान्यध्येतृभ्यइ.२ पवमानायसोमाये. ७१ ॥ इतिसप्तमेद्वितीयः ॥

धर्तैषप्रराजाचोदसःसोमस्यवसुर्भारद्वाजःप्रसोमस्यासावीतित्रिष्टुबंतंपवित्रंतेपवित्रःपवस्ववाच्यःप्रजापतिरिंद्रायद्वादशवेनोभार्गवोद्वित्रिष्टुबंतंप्रतेष्टाचत्वारिंशद्दृषिगणादशर्चाअकृष्टामाषाःप्रथमेसिकतानिवावरीद्वितीयेपृश्नियोजास्तृतीयेत्रयश्चतुर्थेत्रेःपंचांत्यागृत्समदःप्रतुनवोशनायंसोमोष्टौप्रोस्यसप्तप्रहिन्वानःषड्वसिष्ठः ॥ ३ ॥

॥ हरिः ओम् ॥ ( ९।४।९ ) धर्तादिवःपवतेकृत्व्योरसोदक्षोदेवानामनुमाद्योनृभिः । हरिःसृजानोऽअत्योनसत्वभिर्वृथापाजांसिकृणुतेनदीष्वा ॥ शूरोनधत्तऽआयुधागभस्त्योःस्व१ःसिषासन्रथिरोगविष्टिषु । इंद्रस्यशुष्ममीरयन्नपस्युभिरिंदुर्हिन्वानोऽअज्यतेमनीषिभिः ॥ इंद्रस्यसोमपवमानऽऊर्मिणातविष्यमाणोजठरेष्वाविश । प्रणःपि



---

( ९।४।९ ) धर्तेतिपंचर्चस्यसूक्तस्यभार्गवःकविःपवमानसोमोजगती ।

न्वविद्युदभ्रेवरोदसीधियानवाजाँऽउपमासिशश्वतः ॥ विश्वस्यराजापवतेस्वर्द्दशऽऋतस्यधीतिमृषिषाळवीवशत् । यःसूर्यस्यासिरेणमृज्यतेपितामतीनामसमष्टकाव्यः ॥ वृषेवयूथापरिकोशमर्षस्यपामुपस्थेवृषभःकनिक्रदत् । सइंद्राय पवसेमत्सरिन्तमोयथाजेषामसमिथेत्वोतयः ॥ १ ॥ (९।४।१०) एषप्रकोशेमधुमाँऽअचिक्रददिंद्रस्यवज्रोवपुषोवपुष्ट रः । अभीमृतस्यसुदुघाघृतश्चुतोवाश्राऽअर्षतिपयसेवधेनवः ॥ सपूर्व्यःपवतेयंदिवस्परिश्येनोमथायदिषितस्तिरोर जः । समध्वऽआयुवतेवेविजानऽइत्कृशानोरस्तुर्मनसाहबिभ्युषा ॥ तेनःपूर्वासऽउपरासऽइंदवोमहेवाजायधन्वंतुगो मते । ईक्षेण्यासोऽअह्योइनचारवोब्रह्मब्रह्मयेजुजुषुर्हविर्हविः ॥ अयंनोविद्वान्वनवद्वनुष्यतऽइंदुःसत्राचामनसापुरुष्टु तः । इनस्ययःसदनेगर्भमादधेगवामुरुब्जमभ्यर्षतिव्रजं ॥ चक्रिर्दिवःपवतेकृत्व्योरसोमहाँऽअदब्धोवरुणोहुरुग्य ते । असाविमित्रोवृजनेषुयज्ञियोत्योनयूथेवृषयुःकनिक्रदत् ॥ २ ॥ (९।४।११) प्रराजावाचंजनयन्नसिष्यददपो वसानोऽअभिगाऽइयक्षति । गृभ्णातिरिप्रमविरस्यतान्वाशुद्धोदेवानामुपयातिनिष्कृतं ॥ इंद्रायसोमपरिषिच्यसे नृभिर्नृचक्षाऽऊर्मिःकविरज्यसेवने । पूर्वीहितेस्रुतयःसंतियातवेसहस्रमश्वाहरयश्चमूषदः ॥ समुद्रियाऽअप्सरसोम नीषिणमासीनाऽअंतरभिसोममक्षरन् । ताऽईंहिन्वंतिहर्म्यस्यसक्षणिंयाचंतेसुम्नंपवमानमक्षितं ॥ गोजिन्नःसोमोर

---

(९।४।१०) एषइतिपंचर्चस्यसूक्तस्यभार्गवःकविःपवमानसोमोजगती। (९।४।११) प्रराजेतिपंचर्चस्यसूक्तस्यभार्गवःकविःपवमानसोमो

ऋक्सं. अ. ७ अ. ३ ॥ १५ ॥

थजिद्धिरण्यजित्स्वर्जिदब्जित्पर्वतेसहस्रजित् । यंदेवासश्चक्रिरेपीतयेमदंस्वादिष्ठंद्रप्समरुणंमयोभुवं ॥ एतानिसोम पवमानोऽअस्मयुःसत्यानिकृण्वन्द्रविणान्यर्षसि । जहिशत्रुमंतिकेदूरकेचयऽउर्वींगव्यूतिमभयंचनस्कृधि ॥ ३ ॥ ( ९।४।१२ ) अचोदसोनोधन्वंत्विंदवःप्रसुवानासोबृहद्दिवेषुहरयः । विचनशन्नऽइषोऽअरातयोर्योनशंतसनिषंत नोधियः ॥ प्रणोधन्वंत्विंदवोमदच्युतोधनावायेभिरर्वतोजुनीमसि । तिरोमर्तस्यकस्यचित्परिह्वृतिंवयंधनानिविश्व धाभरेमहि ॥ उतस्वस्याऽअरात्याऽअरिर्हिषऽउतान्यस्याऽअरात्यावृकोहिषः । धन्वन्नतृष्णासमरीततॉऽअभिसोम जहिपवमानदुराध्यः* ॥ दिवितेनाभापरमोयऽआददेपृथिव्यास्तेरुरुहुःसानविक्षिपः । अद्रयस्त्वाबप्सतिगोरधित्व च्य१प्सुत्वाहस्तैर्दुदुहुर्मनीषिणः ॥ एवातऽइंदोसुभ्वंसुपेशसंरसंतुंजंतिप्रथमाऽअभिश्रियः । निदंनिदंपवमाननितारि षऽआविस्तेशुष्मोभवतुप्रियोमदः ॥ ४ ॥ ( ९।४।१३ ) सोमस्यधारापवतेनृचक्षसऽऋतेनदेवान्हवतेदिवस्परि । बृहस्पतेरवथेनाविदिद्युतेसमुद्रासोनसवनानिविव्यचुः ॥ यंत्वावाजिन्नघ्न्याऽअभ्यनूषतायोहतंयोनिमारोहसिद्युमा न् । मघोनामायुःप्रतिरन्महिश्रवऽइंद्रायसोमपवसेवृषामदः ॥ एंद्रस्यकुक्षापवतेमदिन्तमऽऊर्जंवसानःश्रवसेसुमंग

मंडलं ९ अनु. ४ ॥ १५ ॥

---

जगती । ( ९।४।१२ ) अचोदसइतिपंचर्चस्यसूक्तस्यभार्गवःकविःपवमानसोमोजगती । ( ९।४।१३ ) सोमस्येतिपंचर्चस्यसूक्तस्य भारद्वाजोवसुःपवमानसोमोजगती ।

लंः । प्रत्यङ्सविश्वाभुवनाभिपप्रथेक्रीळन्हरिरत्यःस्यंदतेवृषा ॥ तंत्वादेवेभ्योमधुमत्तमंनरःसहस्रधारंदुहतेदशक्षिपंः । नृभिःसोमप्रच्युतोग्रावभिःसुतोविश्वान्देवाँऽआपवस्वासहस्रजित् ॥ तंत्वाहस्तिनोमधुमंतमाद्रिभिर्दुहंत्यप्सुवृषभंदशक्षिपंः । इंद्रंसोममादयन्दैव्यंजनंसिंधोरिवोर्मिःपवमानोऽअर्षसि ॥ ५ ॥ ( ९।४।१४ ) प्रसोमस्यपवमानस्योर्मयऽइंद्रस्ययंतिजठरंसुपेशसः । दध्नायदीमुन्नीतायशसागवांदानायशूरमुदमंदिषुःसुताः+ ॥ अच्छाहिसोमःकुलशाँऽअसिष्यदद्दत्योनवोह्वारघुवर्तनिर्वृषा । अथादेवानामुभयस्यजन्मनोविद्वाँऽअश्नोत्यमुतऽइतश्चयत्+ ॥ आनःसोमपवमानःकिरावस्विंदोभवमघवाराधसोमहः । शिक्षावयोधोवसुवेसुचेतुनामानोगयमारेऽअस्मत्परासिचः ॥ आनःपूषापवमानःसुरातयोमित्रोगच्छंतुवरुणःसजोषसः । बृहस्पतिर्मरुतोवायुरश्विनात्वष्टासवितासुयमासरस्वती ॥ उभेद्यावापृथिवीविश्वमिन्वेऽअर्यमादेवोऽअदितिर्विधाता । भगोनृशंसऽउर्वं१तरिक्षंविश्वेदेवाःपवमानंजुषंत ॥ ६ ॥ ( ९।४।१५ ) असाविसोमोऽअरुषोवृषाहरीराजेवदस्मोऽअभिगाऽअचिक्रदत् । पुनानोवारंपर्येत्यव्ययंश्येनोनयोनिंघृतवंतमासदं ॥ कविर्वेधस्यापर्येषिमाहिनमत्योनमृष्टोऽअभिवाजमर्षसि । अपसेधन्दुरितासोममृळयघृतंवसानः

---

( ९।४।१४ ) प्रसोमस्येतिपंचर्चस्यसूक्तस्यभारद्वाजोवसुःपवमानसोमोजगत्यंत्यात्रिष्टुप् । ( ९।४।१५ ) असावीतिपंचर्चस्यसूक्तस्यभारद्वाजोवसुःपवमानसोमोजगत्यंत्यात्रिष्टुप् ।

परियासिनिर्णिजं ॥ पर्जन्यःपितामहिषस्यपर्णिनोनाभापृथिव्यागिरिषुक्षयंदधे । स्वसारऽआपोऽअभिगाऽउतासर न्त्संग्रावभिर्नसतेवीतेऽअध्वरे+ ॥ जायेवपत्यावधिशेवमंहसेपज्रायागर्भश्शृणुहिब्रवीमिते । अंतर्वाणीषुप्रचरासुजी वसेनिंद्योवृजनेसोमजागृहि ॥ यथापूर्वेभ्यःशतसाऽअमृध्रःसहस्रसाःपर्ययावाजमिंदो । एवापवस्वसुवितायनव्यसेत वव्रतमन्वापःसचंते ॥ ७ ॥ ( ९।४।१६ ) पवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्राणिपर्येषिविश्वतः । अतप्ततनूर्नतदा मोऽअश्नुतेश्रृतासऽइद्वहंतस्तत्समाशत ॥ तपोष्पवित्रंविततंदिवस्पदेशोचंतोऽअस्यतंतवोव्यस्थिरन् । अवंत्यस्यपवी तारमाशवोदिवस्पृष्ठमधितिष्ठंतिचेतसा ॥ अरूरुचदुषसःपृश्निरग्रियऽउक्षाबिभर्तिभुवनानिवाजयुः । मायाविनोममिरे ऽअस्यमाययानृचक्षसःपितरोगर्भमादधुः ॥ गंधर्वऽइत्थापदमस्यरक्षतिपातिदेवानांजनिमान्यद्भुतः । गृभ्णातिरिपुं निधयानिधापतिःसुकृत्तमामधुनोभक्षमाशत ॥ हविर्हविष्मोमहिसद्मदैव्यंनभोवसानःपरियास्यध्वरं । राजापवित्रर थोवाजमारुहःसहस्रभृष्टिर्जयसिश्रवोबृहत्+ ॥ ८ ॥ ( ९।४।१७ ) पवस्वदेवमादनोविचर्षणिरप्साऽइंद्रायवरुणाय वायवे । कृधीनोऽअद्यवरिवःस्वस्तिमदुरुक्षितौगृणीहिदैव्यंजनं ॥ आयस्तस्थौभुवनान्यमर्त्योविश्वानिसोमःप



( ९।४।१६ ) पवित्रंतइतिपंचर्चस्यसूक्तस्यांगिरसःपवित्रःपवमानसोमोजगती । ( ९।४।१७ ) पवस्वेतिपंचर्चस्यसूक्तस्यवाच्यः प्रजापतिःपवमानसोमोजगती ।

रितान्यर्षति । कृण्वन्त्संचृतंविचृतमभिष्टयऽइंदुः सिषक्त्युषसंनसूर्यः ॥ आयोगोभिः सृज्यतऽओषधीष्वादेवानांसुम्नऽइषयन्नुपावसुः । आविद्युतापवतेधारयासुतऽइंद्रंसोमोमादयन्दैव्यंजनं ॥ एषस्यसोमः पवतेसहस्रजिद्धिन्वानोवाचमिषिरामुषर्बुधं । इंदुः समुद्रमुदियर्तिवायुभिरेंद्रस्यहार्दिकलशेषुसीदति ॥ अभित्यंगावः पयसापयोवृधंसोमंश्रीणंतिमतिभिः स्वर्विदं । धनंजयः पवतेकृत्व्योरसोविप्रः कविः काव्येनास्वर्चनाः ॥ ९ ॥ ( ९।४।१८ ) इंद्रायसोमसुषुतः परिस्रवापामीवाभवतुरक्षसासह । मातेरसस्यमत्सतद्वयाविनोद्रविणस्वंतऽइहसंत्विंदवः ॥ अस्मान्त्समर्येपवमानचोदयदक्षोदेवानामसिहिप्रियोमदः । जहिशत्रूंऽरभ्याभंदनायतः पिबेंद्रसोममवनोमृधोजहि ॥ अदब्धऽइंदोपवसेमदिन्तमऽआत्मेंद्रस्यभवसिधासिरुत्तमः । अभिस्वरंतिबहवोमनीषिणोराजानमस्यभुवनस्यनिंसते ॥ सहस्रणीथः शतधारोऽअद्भुतऽइंद्रायेंदुः पवतेकाम्यंमधु । जयन्क्षेत्रमभ्यर्षाजयन्नपऽउरुंनोगातुंकृणुसोममीढ्वः ॥ कनिक्रदत्कलशेगोभिरज्यसेव्यं१व्ययंसमयावारमर्षसि । मर्मृज्यमानोऽअत्योनसानसिरिंद्रस्यसोमजठरेसमक्षरः ॥ स्वादुः पवस्वदिव्यायजन्मनेस्वादुरिंद्रायसुहवीतुनाम्ने । स्वादुर्मित्रायवरुणायवायवेबृहस्पतयेमधुमाँऽअदाभ्यः ॥ १० ॥ अत्यंमृजंतिकलशेदशक्षिपः प्रविप्राणांमतयोवाचऽईरते । पवमानाऽअभ्यर्षंतिसुष्टुतिमेंद्रंविशंतिमदिरासऽइंदवः ॥

( ९।४।१८ ) इंद्रायेतिद्वादशर्चस्यसूक्तस्यभार्गवोवेनः पवमानसोमोजगत्यंत्येद्वेत्रिष्टुभौ ।

पवमानोऽअभ्यर्षासुवीर्यमुर्वींगव्यूतिंमहिशर्मसप्रथः । माकिर्नोऽअस्यपरिषूतिरीशतेंदोजयेमत्वयाधनंधनं ॥ अधिद्यामस्थाद्वृषभोविचक्षणोरूरुचद्विदिवोरोचनाकविः । राजापवित्रमत्येतिरोरुवद्दिवःपीयूषंदुहतेनृचक्षसः ॥ दिवोनाकेमधुजिह्वाऽअसश्चतोवेनादुहन्त्युक्षणंगिरिष्ठां । अप्सुद्रप्संवावृधानंसमुद्रऽआसिंधोरूर्मामधुमंतंपवित्रऽआ+ ॥ नाकेसुपर्णमुपपप्तिवांसंगिरोवेनानामकृपंतपूर्वीः । शिशुंरिहंतिमतयःपनिप्नतंहिरण्ययंशकुनंक्षामणिस्थां+ ॥ ऊर्ध्वोगंधर्वोऽअधिनाकेऽअस्थाद्विश्वारूपाप्रतिचक्षाणोऽअस्य । भानुःशुक्रेणशोचिषाव्यद्यौत्प्रारूरुचद्रोदसीमातराशुचिः ॥ ११ ॥ ( ९।५।१ ) प्रतऽआशवःपवमानधीजवोमदाऽअर्षतिरघुजाऽइवत्मना । दिव्याःसुपर्णामधुमंतऽइंदवोमदिन्तमासःपरिकोशमासते ॥ प्रतेमदासोमदिरासऽआशवोसृक्षतरथ्यासोयथापृथक् । धेनुर्नवत्संपयसाभिवज्रिणमिंद्रमिंदवोमधुमंतऽऊर्मयः ॥ अत्योनहियानोऽअभिवाजमर्षस्वर्वित्कोशंदिवोऽअद्रिमातरं । वृषापवित्रेऽअधिसानोऽअव्ययेसोमःपुनानऽइंद्रियायधायसे ॥ प्रतऽआश्विनीःपवमानधीजुवोदिव्याऽअसृग्रन्पयसाधरीमणि । प्रां

---

पंचमेनुवाकेएकादशसूक्तानि ( ९।५।१ ) प्रतआशवइत्यष्टाचत्वारिंशदृचस्यसूक्तस्यआद्यानांदशानामकृष्टामाषाऋषयःएकादश्यादिदशानांसिकतानिवावरीएकविंश्यादिदशानांपृश्नियोजाःएकत्रिंश्यादिदशानामत्रयःएकचत्वारिंश्यादिपंचानांभौमोत्रिःअंत्यानांतिसृणांशौनकोगृत्समदःपवमानसोमोजगती ।

तर्कषय॑ः स्थाविरीरसृक्षत॒ येत्वा॑मृ॒जंत्यृ॑षिषाणवे॒धसः॑ ॥ विश्वा॒ धामा॑नि विश्वचक्ष॒ ऽऋभ्व॑सः प्र॒भोस्ते॑ स॒तः परि॑यंति के॒तव॑ः । व्या॒न॒शिः पव॑से सोम॒ धर्म॑भिः॒ पति॒र्विश्व॑स्य॒ भुव॑नस्य राजसि ॥ १२ ॥ उ॒भ॒यत॒ः पव॑मानस्य र॒श्मयो॑ ध्रु॒वस्य॑ स॒तः परि॑यंति के॒तव॑ः । यदी॑ प॒वित्रे॒ ऽअधि॑ मृ॒ज्यते॒ हरि॒ः सत्ता॒ नियो॑ना॑ क॒लशे॑षु सीदति ॥ य॒ज्ञस्य॑ के॒तुः पव॑ते स्वध्व॒रः सोमो॑ दे॒वाना॒मुप॑याति निष्कृ॒तं । स॒हस्र॑धार॒ः परि॒कोश॑मर्षति॒ वृषा॑ प॒वित्र॒मत्ये॑ति॒ रोरु॑वत् ॥ राजा॑ समु॒द्रं न॒द्यो॒ ३ वि गा॑हते॒ पामू॒र्मिं स॑चते॒ सिंधु॑षु श्रि॒तः । अध्य॑स्थात्सानु॒ पव॑मानो ऽअ॒व्ययं॒ नाभा॑ पृथि॒व्या ध॒रुणो॑ म॒हो दि॒वः ॥ दि॒वो न सानु॑ स्त॒नयं॑न्नचिक्रद॒द्द्यौश्च॒ यस्य॑ पृ॒थि॒वी च॒ धर्म॑भिः । इंद्र॑स्य स॒ख्यं पव॑ते वि॒वेवि॑द॒त्सोम॑ः पु॒ना॒नः क॒लशे॑षु सीदति ॥ ज्योति॑र्य॒ज्ञस्य॑ पवते॒ मधु॑ प्रि॒यं पि॒ता दे॒वानां॑ जनि॒ता वि॒भूव॑सुः । दधा॑ति॒ रत्नं॑ स्व॒धयो॑रपी॒च्यं॑ म॒दिन्त॑मो मत्स॒र ऽइंद्रि॒यो रसः॑ ॥ १३ ॥ अ॒भि॒क्रंद॑न्क॒लशं॑ वा॒ज्य॑र्षति॒ पति॑र्दि॒वः श॒तधा॑रो विचक्ष॒णः । हरि॑र्मि॒त्रस्य॒ सद॑नेषु सीदति मर्मृ॒जानो॑ऽविभि॒ः सिंधु॑भि॒र्वृषा॑ ॥ अग्रे॒ सिंधू॑नां॒ पव॑मानो ऽअर्ष॒त्यग्रे॑ वा॒चो ऽअ॑ग्रि॒यो गोषु॑ गच्छति । अग्रे॒ वाज॑स्य भजते महा॒ध॒नं स्वा॑यु॒धः सो॒तृभि॑ः पूयते॒ वृषा॑ ॥ अ॒यं म॒तवा॑न्छकु॒नो यथा॑ हि॒तो व्ये॑ ससार॒ पव॑मान ऽऊ॒र्मिणा॑ । तव॒ क्रत्वा॒ रोद॑सी ऽअंत॒रा क॑वे॒ शुचि॑र्धि॒या प॑वते॒ सोम॑ ऽइंद्र ते ॥ द्रा॒पिं वसा॑नो यज॒तो दि॑वि॒स्पृश॑मंत॒रिक्ष॒प्रा भुव॑ने॒ष्वर्पि॑तः । स्व॒र्ज॑ज्ञा॒नो नभ॑सा॒भ्य॑क्रमीत्प्र॒त्नम॑स्य पि॒तर॒मा वि॑वासति ॥ सो ऽअ॑स्य वि॒शे महि॒ शर्म॑ यच्छति॒ यो ऽअ॑स्य॒ धाम॑ प्रथ॒मं व्या॑न॒शे । प॒दं यद॑स्य पर॒मे व्यो॑म॒न्यतो॒ विश्वा॑ ऽअ॒भि सं याति॒ संय॑तः ॥ १४ ॥ प्रो ऽअ॑

यासीदिंदुरिंद्रस्यनिष्कृतंसखासख्युर्नप्रमिनातिसंगिरं । मर्यइवयुवतिभिःसमर्षतिसोमःकलशेशतयाम्नापथा ॥ प्रवोधियोमंद्रयुवोविपन्युवःपनस्युवःसंवसनेष्वक्रमुः । सोमंमनीषाऽअभ्यनूषतस्तुभोभिधेनवःपयसेमशिश्रयुः ॥ आनःसोमसंयतंपिप्युषीमिषमिंदोपवस्वपवमानोऽअस्त्रिधं । यानोदोहतेत्रिरहन्नसश्चुषीक्षुमद्वाजवन्मधुमत्सुवीर्यं ॥ वृषामतीनांपवतेविचक्षणःसोमोऽअह्नःप्रतरीतोषसोदिवः । क्राणासिंधूनांकलशाँऽअवीवशदिंद्रस्यहार्द्याविशन्मनीषिभिः ॥ मनीषिभिःपवतेपूर्व्यःकविर्नृभिर्यतःपरिकोशाँऽअचिक्रदत् । त्रितस्यनामजनयन्मधुक्षरदिंद्रस्यवायोःसख्यायकर्तवे ॥ १५ ॥ अयंपुनानऽउषसोविरोचयदयंसिंधुभ्योऽअभवदुलोककृत् । अयंत्रिःसप्तदुदुहानऽआशिरंसोमोहृदेपवतेचारुमत्सरः ॥ पवस्वसोमदिव्येषुधामसुसृजानऽइंदोकलशेपवित्रऽआ । सीदन्निंद्रस्यजठरेकनिक्रदन्नृभिर्यतःसूर्यमारोहयोदिवि ॥ अद्रिभिःसुतःपवसेपवित्रऽआँऽइंदविंद्रस्यजठरेष्वाविशन् । त्वंनृचक्षाऽअभवोविचक्षणसोमगोत्रमंगिरोभ्योवृणोरप ॥ त्वांसोमपवमानंस्वाध्योनुविप्रासोऽअमदन्नवस्यवः । त्वांसुपर्णऽआभरद्दिवस्परींदोविश्वाभिर्मतिभिःपरिष्कृतं ॥ अव्येपुनानंपरिवारऽऊर्मिणाहरिंनवंतेऽअभिसप्तधेनवः । अपामुपस्थेऽअध्यायवःकविमृतस्ययोनामहिषाऽअहेषत ॥ १६ ॥ इंदुःपुनानोऽअतिगाहतेमृधोविश्वानिकृण्वन्त्सुपथानियज्यवे । गाःकृण्वानोनिर्णिजंहर्यतःकविरत्योनक्रीळन्परिवारमर्षति ॥ असश्चतःशतधाराऽअभिश्रियोहरिंनवंतेवताऽउंद

न्युर्वः । क्षिपोमृजंतिपरिगोभिरावृतंतृतीयेपृष्ठेऽअधिरोचनेदिवः+ ॥ तवेमाःप्रजादिव्यस्यरेतसस्त्वंविश्वस्यभुवन
स्यराजसि । अथेदंविश्वंपवमानतेवशेत्वमिंदोप्रथमोधामधाऽअसि ॥ त्वंसमुद्रोऽअसिविश्ववित्कवेतवेमाःपंचप्रदि
शोविधर्मणि । त्वंद्यांचपृथिवींचातिजभ्रिषेतवज्योतींषिपवमानसूर्यः ॥ त्वंपवित्रेरजसोविधर्मणिदेवेभ्यःसोमपव
मानपूयसे । त्वामुशिजःप्रथमाऽअगृभ्णततुभ्येमाविश्वाभुवनानियेमिरे ॥ १७ ॥ प्ररेभऽएत्यतिवारमव्ययंवृषाव
नेष्ववचक्रदद्धरिः । संधीतयोवावशानाऽअनूषतशिशुंरिहंतिमतयःपनिप्नतं ॥ ससूर्यस्यरश्मिभिःपरिव्यततंतुंत
न्वानस्त्रिवृतंयथाविदे । नयन्नृतस्यप्रशिषोनवीयसीःपतिर्जनीनामुपयातिनिष्कृतं+ ॥ राजासिंधूनांपवतेपतिर्दिवऽ
ऋतस्ययातिपथिभिःकनिक्रदत् । सहस्रधारःपरिषिच्यतेहरिःपुनानोवाचंजनयन्नुपावसुः ॥ पवमानमह्यर्णोविधावसि
सूरोनचित्रोऽअव्ययानिपव्यया । गभस्तिपूतोनृभिरद्रिभिःसुतोमहेवाजायधन्यायधन्वसि ॥ इषमूर्जंपवमानाभ्यर्ष
सिश्येनोनवंसुकलशेषुसीदसि । इंद्रायमद्वामद्योमदःसुतोदिवोविष्टंभऽउपमोविचक्षणः+ ॥ १८ ॥ सप्तस्वसारोऽअभि
मातरःशिशुंनवंजज्ञानंजेन्यंविपश्चितं । अपांगंधर्वंदिव्यंनृचक्षसंसोमंविश्वस्यभुवनस्यराजसे ॥ ईशानऽइमाभुवना
निवीयसेयुजानऽइंदोहरितःसुपर्ण्यः । तास्तेक्षरंतुमधुमद्धृतंपयस्तवव्रतेसोमतिष्ठंतुकृष्टयः ॥ त्वंनृचक्षाऽअसिसोमवि
श्वतःपवमानवृषभताविधावसि । सनःपवस्ववसुमद्धिरण्यवद्वयंस्यामभुवनेषुजीवसे ॥ गोवित्पवस्ववसुविद्धिरण्य

ऋक्सं. अ. ७ अ. ३ ॥ १९ ॥

विद्र्ंतोधाऽइंद्रोभुवनेष्वर्पितः । त्वंसुवीरोऽअसिसोमविश्ववित्तंत्वाविप्राऽउपगिरेमऽआसते ॥ उन्मध्वऽऊर्मिर्वनना ऽअतिष्ठिपदपोवसानोमहिषोविगाहते । राजापवित्ररथोवाजमारुहत्सहस्रभृष्टिर्जयतिश्रवोबृहत्[+] ॥ १९ ॥ सभं दनाऽउदियर्तिप्रजावतीर्विश्वायुर्विश्वाःसुभराऽअहर्दिवि । ब्रह्मप्रजावद्रयिमश्वपस्त्यंपीतऽइंदविंद्रमस्मभ्यंयाचता त् ॥ सोऽअग्रेऽअह्नांहरिर्हर्यतोमदःप्रचेतसाचेतयतेऽअनुद्युभिः । द्वाजनायातयन्नंतरीयतेनराचशंसंदैव्यंचधर्त रि ॥ अंजतेव्यंजतेसमंजतेक्रतुंरिहंतिमधुनाभ्यंजते । सिंधोरुच्छ्वासेपतयंतमुक्षणंहिरण्यपावाःपशुमासुगृभ्णते ॥ विपश्चितेपवमानायगायतमहीनधारात्यन्धोऽअर्षति । अहिर्नजूर्णामतिसर्पतित्वचमत्योनक्रीळन्नसरद्वृषाहरिः ॥ अग्रेगोराजाप्यस्तविष्यतेविमानोऽअह्नांभुवनेष्वर्पितः । हरिर्घृतस्नुःसुदृशीकोऽअर्णवोज्योतीरथःपवतेरायऽओक्यः* ॥ २० ॥ असर्जिस्कंभोदिवऽउद्यतोमदःपरित्रिधातुर्भुवनान्यर्षति । अंशुंरिहंतिमतयःपनिप्नतंगिरायदिनिर्णिजमृ ग्मिणोययुः[+] ॥ प्रतेधाराऽअत्यण्वानिमेष्यःपुनानस्यसंयतोयंतिरंहयः । यद्गोभिरिंदोचम्वोःसमज्यसऽआसुवानः सोमकलशेषुसीदसि ॥ पवस्वसोमक्रतुविन्नऽउक्थ्योव्योवारेपरिधावमधुप्रियं । जहिविश्वान्रक्षसऽइंदोऽअत्रिणोबृ हद्वदेमविदथेसुवीराः ॥ २१ ॥ ( ९।५।२ ) प्रतुद्रवपरिकोशंनिषीदनृभिःपुनानोऽअभिवाजमर्ष । अश्वंनत्वावा

मंडलं ९ अनु. ५ ॥ १९ ॥

---

( ९।५।२ ) प्रतुद्रवेतिनवर्चस्यसूक्तस्यकाव्यउशनापवमानसोमस्त्रिष्टुप् ।

जिनंमर्जयंतोच्छाबर्हीरशनाभिर्नयंति ॥ स्वायुधःपवतेदेवऽइंदुरशस्तिहावृजनंरक्षमाणः । पितादेवानांजनितासु दक्षोविष्टंभोदिवोधरुणःपृथिव्याः ॥ ऋषिर्विप्रःपुरऽएताजनानामृभुर्धीरऽउशनाकाव्येन । सचिद्विवेदनिहितंयदा सामपीच्यं१गुह्यंनामगोनां ॥ एषस्यतेमधुमाँऽइंद्रसोमोवृषावृष्णेपरिपवित्रेऽअक्षाः । सहस्रसाःशतसाभूरिदावाश श्वत्तमंबर्हिरावाज्यस्थात् ॥ एतेसोमाऽअभिगव्यासहस्रामहेवाजायामृतायश्रवांसि । पवित्रेभिःपवमानाऽअसृग्र न्छ्रवस्यवोनपृतनाजोऽअत्याः ॥ २२ ॥ परिहिष्मापुरुहूतोजनानांविश्वासरद्भोजनापूयमानः । अथाभरश्येनभृत प्रयांसिरयिंतुंजानोऽअभिवाजमर्ष ॥ एषसुवानःपरिसोमःपवित्रेसर्गोनसृष्टोऽअदधावदर्वा । तिग्मेशिशानोमहिषो नश्रृंगेगागव्यन्नभिशूरोनसत्वा ॥ एषाययौपरमादंतरद्रेःकूचित्सतीरूर्वेगाविवेद । दिवोनविद्युत्स्तनयंत्यभ्रैःसोम स्यतेपवतऽइंद्रधारा ॥ उतस्मराशिंपरियासिगोनामिंद्रेणसोमसरथंपुनानः । पूर्वीरिषोबृहतीर्जीरदानोशिक्षाशचीव स्तवताऽउपष्टुत्† ॥ २३ ॥ ( ९।५।३ ) अयंसोमऽइंद्रतुभ्यंसुन्वेतुभ्यंपवतेत्वमस्यपाहि । त्वंहयंचकृषेत्वंववृषऽइं दुंमदायुयुज्यायसोमं ॥ सऽईरथोनभुरिषाळयोजिमहःपुरूणिसातयेवसूनि । आदींविश्वानहुष्याणिजातास्वर्षाताव नऽऊर्ध्वानवंत ॥ वायुर्नयोनियुत्वाँऽइष्टयामानासत्येवहवऽआशंभविष्ठः । विश्ववारोद्रविणोदाऽइवत्मन्पूषेवधीज

---

( ९।५।३ ) अयंसोमइत्यष्टर्चस्यसूक्तस्यकाव्यउशनापवमानसोमस्त्रिष्टुप् ।

वंनोसिसोम ॥ इंद्रोनयोमहाकर्माणिचक्रिर्हंतावृत्राणामसिसोमपूर्भित् । पैद्वोनहित्वमहिनाम्नांहंताविश्वस्यासिसोम दस्योः ॥ अग्निर्नयोवनऽआसृज्यमानोवृथापाजांसिकृणुतेनदीषु । जनोनयुध्वामहतऽउपब्दिरियर्तिसोमःपवमानऽ ऊर्मिं+ ॥ एतेसोमाऽअतिवाराण्यव्यादिव्यानकोशासोऽअभ्रवर्षाः । वृथासमुद्रंसिंधवोननीचीःसुतासोऽअभिकलशाँऽअसृग्रन् ॥ शुष्मीशर्धोनमारुतंपवस्वानभिशस्तादिव्यायथाविट् । आपोनमक्षूसुमतिर्भवानःसहस्राप्साःपृतनाषाण्नयज्ञः+ ॥ राज्ञोनुतेवरुणस्यव्रतानिबृहद्गभीरंतवसोमधाम । शुचिष्ट्वमसिप्रियोनमित्रोदक्षाय्योऽअर्यमेवासिसोम ॥ २४ ॥ ( ९।५।४ ) प्रोस्यवह्निःपथ्याभिरस्यान्दिवोनवृष्टिःपवमानोऽअक्षाः । सहस्रधारोऽअसदन्न्य१स्मेमातुरुपस्थेवनऽआचसोमः ॥ राजासिंधूनामवसिष्टवासऽऋतस्यनावमारुहद्रजिष्ठां । अप्सुद्रप्सोवावृधेश्येनजूतोदुहऽ ईंपितादुहऽईंपितुर्जां+ ॥ सिंहंनसंतमध्वोऽअयासंहरिमरुषंदिवोऽअस्यपतिं । शूरोयुत्सुप्रथमःपृच्छतेगाऽअस्यचक्षसापरिपात्युक्षा+ ॥ मधुपृष्ठंघोरमयासमश्वंरथेयुंजंत्युरुचक्रऽऋष्वं । स्वसारऽईंजामयोमर्जयंतिसनाभयोवाजिनमूर्जयंति ॥ चतस्रऽईंघृतदुहःसचंतेसमानेऽअंतर्धरुणेनिषत्ताः । ताऽईमर्षंतिनमसापुनानास्ताऽईंविश्वतःपरिषंति पूर्वीः+ ॥ विष्टंभोदिवोधरुणःपृथिव्याविश्वाऽउतक्षितयोहस्तेऽअस्य । असत्तऽउत्सोगृणतेनियुत्वान्मध्वोऽअंशुःपं



( ९।५।४ ) प्रोस्यवह्निरितिसप्तर्चस्यसूक्तस्य [illegible] पवमानसोमस्त्रिष्टुप् ।

वतऽइंद्रियायं ॥ वन्वन्नवांतोऽअभिदेववीतिमिंद्रांयसोमवृत्रहापंवस्व । शग्धिमहःपुरुश्चंद्रस्यरायःसुवीर्यस्यपतंयः स्याम ॥ २५ ॥ ( ९।५।५ ) प्रहिन्वानोजंनितारोदंस्योरथोनवाजंसनिष्यन्नंयासीत् । इंद्रंगच्छन्नायुंधासंशिशांनो विश्वावसुहस्तंयोरादधांनः ॥ अभित्रिपृष्ठंवृषंणंवयोधामांगूषाणांमवावशंतवाणीः । वनावसांनोवरुणोनसिंधून्विरं त्नधादंयतेवार्याणि ॥ शूरंग्रामःसर्ववीरःसहांवान्जेतांपवस्वसनिंताधनांनि । तिग्मायुधःक्षिप्रधंन्वासमत्स्वषाह्लःसा ह्लान्पृतंनासुशत्रून् ॥ उरुगंव्यूतिरभंयानिकृण्वन्त्संमीचीनेऽआपंवस्वापुरंधी । अपःसिषांसन्नुषसःस्व१र्गाःसंचिक्र दोमहोऽअस्मभ्यंवाजांन् ॥ मत्सिसोमवरुणंमत्सिमित्रंमत्सींद्रंमिंदोपवमानविष्णुं । मत्सिशर्धोमारुंतंमत्सिदेवान्म त्सिमहामिंद्रमिंदोमदाय ॥ एवाराजैवक्रतुमाँऽअमेनविश्वाघनिंघ्नद्दुरितापंवस्व । इंदोसूक्तायवचंसेवयोंधायूयंपा तस्वस्तिभिःसदांनः ॥ २६ ॥ ॥ इतिसप्तमाष्टकेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥

एकपंचाशाध्यायेवर्गाः २६ सूक्तानि १५ ऋचः १३५ ॥ त्यागः ॥ पवमानायसोमायेदं १३५ ॥ इतिसप्तमेतृतीयः ॥

असर्जिकश्यपःपरिसुवानंःसाकमुक्षःपंचनोधांअधियत्कण्वंःकनिक्रंतिप्रस्कण्वंःप्रसेनानीश्चतुर्विंशतिर्दैवोदासिः प्रतर्दनोंस्यप्रेषाष्टापंचाशदांद्यंतृचंवसिष्ठोपश्यदुत्तरांनवपृथग्वासिष्ठांइंद्रप्रमतिर्वृषगणोंमन्युरुपमन्युर्व्याघ्रपा

---

( ९।५।५ ) प्रहिन्वानइतिषड्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठःपवमानसोमस्त्रिष्टुप् ।

च्छक्तिःकर्णश्रुन्मृळीकोवसुकइतिचतुर्दशपराशरोत्याःकुत्सोभिनोद्वादशांबरीषंऋजिश्वाचानुष्टुभंहंबृहत्युपां त्याहर्यतायाष्टौरेभसूनूकाश्यपौबृहत्याद्याभीनवंतेनव ॥ ४ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ ( ९।५।६ ) असर्जिवक्वारथ्येयथाजौधियामनोताप्रथमोमनीषी । दशस्वसारोऽअधिसानोऽअव्येजंतिवह्निंसदनान्यच्छ ॥ वीतीजनस्यदिव्यस्यकव्यैरधिसुवानोनहुष्येभिरिंदुः । प्रयोनृभिरमृतोमर्त्येभिर्मर्मृजानोविभिर्गोभिरद्भिः+ ॥ वृषावृष्णेरोरुवदंशुरस्मैपवमानोरुशदीर्तेपयोगोः । सहस्रमृक्वापथिभिर्वचोविदध्वस्मभिःसूरोऽअण्वंवियाति ॥ रुजादृह्वाचिद्रक्षसःसदांसिपुनानऽइंदऽऊर्णुहिविवाजान् । वृश्चोपरिष्टात्तुजतावधेनयेऽअंतिदूरादुपनायमेषां ॥ सप्रत्नवन्नव्यसेविश्ववारसूक्तायपथःकृणुहिप्राचः । येदुःषहासोवनुषाबृहंतस्तांस्तेऽअश्याम पुरुकृत्पुरुक्षो ॥ एवापुनानोऽअपःस्व१र्गाऽअस्मभ्यंतोकातनयानिभूरि । शंनःक्षेत्रमुरुज्योतींषिसोमज्योङ्नःसूर्यंदृशयेरिरीहि ॥ १ ॥ ( ९।५।७ ) परिसुवानोहरिरंशुःपवित्रेरथोनसर्जिसनयेहियानः । आपच्छ्लोकमिंद्रियंपूयमानःप्रतिदेवाँऽअजुषतप्रयोभिः ॥ अच्छानृचक्षाऽअसरत्पवित्रेनामदधानःकविरस्ययोनौ । सीदन्होतेवसदनेचमूषूपेमग्मन्नृषयःसप्तविप्राः ॥ प्रसुमेधागातुविद्विश्वदेवःसोमःपुनानःसदऽएतिनित्यं । भुवद्विश्वेषुकाव्येषुरंतानुजनान्यततेपं



(९।५।६) असर्जीतिषडृचस्यसूक्तस्यमारीचःकश्यपःपवमानसोमस्त्रिष्टुप्। (९।५।७)परिसुवानइतिषडृचस्यसूक्तस्यमारीचःकश्यपःपवमा

चधीरः ॥ तवत्येसोमपवमाननिण्येविश्वेदेवास्त्रयःएकादशासः । दशस्वधाभिरधिसानोऽअव्येमृजंतित्वानद्यःसप्त यह्वीः+ ॥ तन्नुसत्यंपवमानस्यास्तुयत्रविश्वेकारवःसंनसंत । ज्योतिर्यदह्नेऽअकृणोदुलोकंप्रावन्मनुंदस्यवेकरभीकं ॥ परिसद्मेवपशुमांतिहोताराजानसत्यःसमितीरियानः । सोमःपुनानःकलशाँऽअयासीत्सीदन्मृगोनमहिषोवनेषु ॥ २ ॥ ( ९।५।८ ) साकमुक्षोमर्जयंतस्वसारोदशधीरस्यधीतयोधनुत्रीः । हरिःपर्यद्रवज्जाःसूर्यस्यद्रोणंननक्षेऽअत्योनवा जी+ ॥ संमातृभिर्नशिशुर्वावशानोवृषादधन्वेपुरुवारोऽअद्भिः । मर्योनयोषामभिनिष्कृतंयन्त्संगच्छतेकलशऽउस्त्रि याभिः ॥ उतप्रपिप्यऽऊधरघ्न्यायाऽइंदुर्धाराभिःसचतेसुमेधाः । मूर्धानंगावःपयसाचमूष्वभिश्रीणंतिवसुभिर्ननि क्तैः+ ॥ सनोदेवेभिःपवमानरदेंदोरयिमश्विनंवावशानः । रथिरायतामुशतीपुरंधिरस्मद्र्यगादावनेवसूनां ॥ नू नोरयिमुपमास्वनृवंतंपुनानोवाताप्यंविश्वश्चंद्रं । प्रवंदितुरिंदोतार्यायुःप्रातर्मक्षूधियावसुर्जगम्यात् ॥ ३ ॥ ( ९।५।९ ) अधियदस्मिन्वाजिनीवशुभःस्पर्धंतेधियःसूर्येनविशः । अपोवृणानःपवतेकवीयन्व्रजंनपशुवर्धनायमन्म ॥ द्विता व्यूर्ण्वन्नमृतस्यधामस्वर्विदेभुवनानिप्रथंत । धियःपिन्वानाःस्वसरेनगावऽऋतायंतीरभिवावश्रऽइंदुं ॥ परियत्कविः

---

नसोमस्त्रिष्टुप् । (९।५।८) साकमुक्षइतिपंचर्चस्यसूक्तस्यगौतमोनोधाःपवमानसोमस्त्रिष्टुप् । ( ९।५।९ ) अधियदितिपंचर्चस्यसूक्तस्य घौरःकण्वःपवमानसोमस्त्रिष्टुप् ।

काव्याभर्तेशूरोनरथोभुवनानिविश्वा। देवेषुयशोमर्तायभूषन्दक्षायरायःपुरुभूषुनव्यः॥ श्रियेजातःश्रियऽआनिरियायश्रियंवयोजरितृभ्योदधाति। श्रियंवसानाऽअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ इषमूर्जमभ्यर्षाश्वंगामुरुज्योतिःकृणुहिमत्सिदेवान्। विश्वानिहिसुषहातानितुभ्यंपवमानबाधसेसोमशत्रून्॥ ४॥ (९।५।१०) कनिक्रंतिहरिरासृज्यमानःसीदन्वनस्यजठरेपुनानः। नृभिर्यतःकृणुतेनिर्णिजंगाऽअतोमतीर्जनयतस्वधाभिः॥ हरिःसृजानःपथ्यामृतस्येयर्तिवाचमरितेवनावं। देवोदेवानांगुह्यानिनामाविष्कृणोतिबर्हिषिप्रवाचे ॥ अपामिवेदूर्मयस्ततुराणाःप्रमनीषाऽईरतेसोममच्छ। नमस्यंतीरुपचयंतिसंचाचविशंत्युशतीरुशंतं॥ तंमर्मृजानंमहिषंनसानावंशुंदुहंत्युक्षणंगिरिष्ठां। तंवावशानंमतयःसचंतेत्रितोबिभर्तिवरुणंसमुद्रे+ ॥ इष्यन्वाचमुपवक्तेवहोतुःपुनानऽइंदोविष्यामनीषां। इंद्रश्चयत्क्षयथःसौभगायसुवीर्यस्यपतयःस्याम॥ ५॥ (९।५।११) प्रसेनानीःशूरोऽअग्रेरथानांगव्यन्नेतिहर्षतेऽअस्यसेना। भद्रान्कृण्वन्निंद्रहवान्त्सखिभ्यऽआसोमोवस्त्रारभसानिदत्ते ॥ समस्यहरिंहरयोमृजंत्यश्वहयैरनिशितंनमोभिः। आतिष्ठतिरथमिंद्रस्यसखाविद्वाँऽएनासुमतिंयात्यच्छ ॥ सनोदेवदेवतातेपवस्वमहेसोमप्सरसऽइंद्रपानः। कृण्वन्न



---

(९।५।१०) कनिक्रंतीतिपंचर्चस्यसूक्तस्यकण्वःप्रस्कण्वःपवमानसोमस्त्रिष्टुप्। (९।५।११) प्रसेनानीरितिचतुर्विंशत्यृचस्यसूक्तस्य दैवोदासिःप्रतर्दनःपवमानसोमस्त्रिष्टुप्।

पोवर्षयन्ध्यामुतेमामुरोरानोवरिवस्यापुनानः+ ॥ अजीतयेहतयेपवस्वस्वस्तयेसर्वतातयेबृहते । तदुशंतिविश्वऽइमेस
खायस्तदहंवश्मिपवमानसाम ॥ सोमःपवतेजनितामतीनांजनितादिवोजनितापृथिव्याः । जनिताग्नेर्जनितासूर्यस्य
जनितेंद्रस्यजनितोतविष्णोः ॥ ६ ॥ ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां । श्येनोगृध्राणांस्वधितिर्व
नानांसोमःपवित्रमत्येतिरेभन् ॥ प्रावीविपद्वाचऽऊर्मिनसिंधुर्गिरःसोमःपवमानोमनीषाः । अंतःपश्यन्वृजनेमावरा
ण्यातिष्ठतिवृषभोगोषुजानन्+ ॥ समत्सरःपृत्सुवन्वन्नवातःसहस्ररेताऽअभिवाजमर्ष । इंद्रायेंदोपवमानोमनीष्यं१
शोरूर्मिमीरयगाऽइषण्यन्+ ॥ परिप्रियःकलशेदेववातऽइंद्रायसोमोरण्योमदाय । सहस्रधारःशतवाजऽइंदुर्वाजीन
सप्तिःसमनाजिगाति ॥ सपूर्व्योवसुविज्जायमानोमृजानोऽअप्सुदुदुहानोऽअद्रौ । अभिशस्तिपाभुवनस्यराजाविद
द्गातुंब्रह्मणेपूयमानः ॥ ७ ॥ त्वयाहिनःपितरःसोमपूर्वेकर्माणिचक्रुःपवमानधीराः । वन्वन्नवातःपरिधीँऽरपोर्णुवीरे
भिरश्वैर्मघवाभवानः ॥ यथापवथामनवेवयोधाऽअमित्रहावरिवोविद्धविष्मान् । एवापवस्वद्रविणंदधानऽइंद्रेसंतिं
ष्ठजनयायुधानि ॥ पवस्वसोममधुमाँऽऋतावापोवसानोऽअधिसानोऽअव्ये । अवद्रोणानिघृतवांतिसीदमदिन्तमो
मत्सरऽइंद्रपानः ॥ वृष्टिंदिवःशतधारःपवस्वसहस्रसावाजयुर्देववीतौ । संसिंधुभिःकलशेवावशानःसमुस्रियाभिः
प्रतिरन्नऽआयुः ॥ एषस्यसोमोमतिभिःपुनानोऽत्योनवाजीतरतीदरातीः । पयोनदुग्धमदितेरिषिरमुर्विवगातुःसुयमो

नवोह्वा ॥ ८ ॥ स्वायुधः सोतृभिः पूयमानोभ्यर्षगुह्यंचारुनाम । अभिवाजंसप्तिरिवश्रवस्याभिवायुमभिगादेवसोम ॥ शिशुंजज्ञानंहर्यतंमृजंतिशुंभंतिवह्निंमरुतोगणेन । कविर्गीर्भिःकाव्येनाकविःसन्त्सोमःपवित्रमत्येतिरेभन् ॥ ऋषिमनायऽऋषिकृत्स्वर्षाःसहस्रणीथःपदवीःकवीनां । तृतीयंधाममहिषःसिषासन्त्सोमोविराजमनुराजतिष्टुप् ॥ चमूषच्छ्येनःशकुनोविभृत्वागोविंदुर्द्रप्सऽआयुधानिबिभ्रत् । अपामूर्मिसचमानःसमुद्रंतुरीयंधाममहिषोविवक्ति ॥ मर्योनशुभ्रस्तन्वंमृजानोत्योनसृत्वासनयेधनानां । वृषेवयूथापरिकोशमर्षन्कनिक्रदच्चम्वो३ राविवेश ॥ ९ ॥ पवस्वेंदोपवमानोमहोभिःकनिक्रदत्परिवाराण्यर्ष । क्रीळन्चम्वो३ राविशपूयमानऽइंद्रंतेरसोमदिरोममत्तु ॥ प्रास्यधाराबृहतीरसृग्रन्नक्तोगोभिःकलशाँऽआविवेश । सामकृण्वन्त्सामन्योविपश्चित्क्रंदन्नेत्यभिसख्युर्नजामिं ॥ अपघ्नन्नेषिपवमानशत्रून्प्रियांनजारोऽअभिगीतऽइंदुः । सीदन्वनेषुशकुनोनपत्वासोमःपुनानःकलशेषुसत्ता ॥ आतेरुचःपवमानस्यसोमयोषेवयंतिसुदुघाःसुधाराः । हरिरानीतःपुरुवारोऽअप्स्वचिक्रदत्कलशेदेवयूनां ॥ १० ॥ ( ९।६।१ ) अस्य

---

षष्ठेनुवाकेसप्तसूक्तानि ( ९।६।१ ) अस्यप्रेषेत्यष्टपंचाशदृचस्यसूक्तस्याद्यानांतिसृणांमैत्रावरुणिर्वसिष्ठश्चतुर्थ्यादितिसृणांवासिष्ठइंद्रप्रमतिः ततःद्वितीयादिनवतृचानांपवमानसोमस्त्रिष्टुप् सप्तम्यादितिसृणांवासिष्ठोवृषगणोदशम्यादितिसृणांवासिष्ठोमन्युस्त्रयोदश्यादितिसृणांवासिष्ठउपमन्युःषोडश्यादितिसृणांवासिष्ठोव्याघ्रपादेकोनविंश्यादितिसृणांवासिष्ठःशक्तिर्द्वाविंश्यादितिसृणांवासिष्ठःकर्णश्रुत्पंचविंश्यादि

प्रेषाहेमनापूयमानोदेवोदेवेभिःसमंपृक्तरसं । सुतःपवित्रंपर्येतिरेभन्मितेवसद्मपशुमांतिहोता ॥ भद्रावस्त्रासमन्याउ वसानोमहान्कविर्निवचनानिशंसन् । आवच्यस्वचम्वोःपूयमानोविचक्षणोजागृविर्देववीतौ ॥ समुप्रियोमृज्यते सानोऽअव्येयशस्तरोयशसांक्षैतोऽअस्मे । अभिस्वरधन्वापूयमानोयूयंपातस्वस्तिभिःसदानः ॥ प्रगायताभ्यर्चामदे वान्त्सोमंहिनोतमहतेधनाय । स्वादुःपवातेऽअतिपारमव्यमासीदातिकलशंदेवयुर्नः ॥ इंदुर्देवानामुपसख्यमाय न्त्सहस्रधारःपवतेमदाय । नृभिःस्तवानोऽअनुधामपूर्वमगन्निंद्रंमहतेसौभगाय ॥ ११ ॥ स्तोत्रेरायेहरिरर्षापुनानऽइंद्रं मदोगच्छतुतेभराय । देवैर्याहिसरथंराधोऽअच्छायूयंपातस्वस्तिभिःसदानः ॥ प्रकाव्यमुशनेवब्रुवाणोदेवोदेवानांज निमाविवक्ति । महिव्रतःशुचिवंधुःपावकःपदावराहोऽअभ्येतिरेभन् ॥ प्रहंसासस्तृपलंमन्युमच्छामादस्तंवृषगणाऽ अयासुः । आंगूष्यं१पवमानंसखायोदुर्मर्षंसाकंप्रवदंतिवाणं+ ॥ सरंहतऽउरुगायस्यजूतिंवृथाक्रीळंतंमिमतेनगावः । परीणसंकृणुतेतिग्मशृंगोदिवाहरिर्ददृशेनक्तमृज्रः+ ॥ इंदुर्वाजीपवतेगोन्योघाऽइंद्रेसोमःसहऽइन्वन्मदाय । हंतिर क्षोबाधतेपर्यरातीर्वरिवःकृण्वन्वृजनस्यराजा ॥ १२ ॥ अधधारयामध्वापृचानस्तिरोरोमपवतेऽअद्रिदुग्धः । इंदु

---

तिसृणांवासिष्ठोमृळीकोष्टविंश्यादितिसृणांवासिष्ठोवसुक्रएकत्रिंश्यादिचतुर्दशानांशाक्त्यःपराशरःपंचचत्वारिंश्यादिचतुर्दशानामांगिर सःकुत्सऋषयःपवमानसोमस्त्रिष्टुप् ।

रिंद्रस्यसख्यंजुषाणोदेवोदेवस्यमत्सरोमदाय ॥ अभिप्रियाणिपवतेपुनानोदेवोदेवान्त्स्वेनरसेनपृंचन् । इंदुर्धर्माण्यृतुथावसानोदशक्षिपोऽअव्यतसानोऽअव्ये ॥ वृषाशोणोऽअभिकनिक्रदद्गानदयन्नेतिपृथिवीमुतद्यां । इंद्रस्येववग्नुराशृण्वऽआजौप्रचेतयन्नर्षतिवाचमेमां ॥ रसाय्यःपयसापिन्वमानऽईरयन्नेषिमधुमंतमंशुं । पवमानःसंतनिमेषिकृण्वन्निंद्रायसोमपरिषिच्यमानः ॥ एवापवस्वमदिरोमदायोदग्राभस्यनमयन्वधस्नैः । परिवर्णंभरमाणोरुशंतंगव्युर्नोऽअर्षपरिसोमसिक्तः ॥ १३ ॥ जुष्टीनऽइंदोसुपथासुगान्युरौपवस्ववरिवांसिकृण्वन् । घनेवविष्वग्दुरितानिविघ्नन्नधिष्णुनाधन्वसानोऽअव्ये ॥ वृष्टिंनोऽअर्षदिव्यांजिगत्नुमिळावतींशंगयींजीरदानुं । स्तुकेववीताधन्वाविचिन्वन्वंधूँऽरिमाँऽअवराँऽइंदोवायून् ॥ ग्रंथिंनविष्यग्रथितंपुनानऽऋजुंचगातुंवृजिनंचसोम । अत्योनक्रदोहरिरासृजानोमर्योदेवधन्वपस्त्यावान् ॥ जुष्टोमदायदेवतातऽइंदोपरिष्णुनाधन्वसानोऽअव्ये । सहस्रधारःसुरभिरदब्धःपरिस्रववाजसातौनृषह्ये ॥ अरश्मानोयेरथाऽअयुक्ताऽअत्यासोनसस्रृजानासऽआजौ । एतेशुक्रासोधन्वंतिसोमादेवासस्ताँऽउपयाताभिवध्यै ॥ १४ ॥ एवानऽइंदोऽअभिदेववीतिंपरिस्रवनभोऽअर्णश्चमूषु । सोमोऽअस्मभ्यंकाम्यंबृहंतंरयिंददातुवीरवंतमुग्रं ॥ तक्षद्यदीमनसोवेनतोवाग्ज्येष्ठस्यवाधर्माणिक्षोरनीके । आदीमायन्वरमावावशानाजुष्टंपतिंकलशेगावऽइंदुं ॥ प्रदानुदोदिव्योदानुपिन्वऽऋतमृतायपवतेसुमेधाः । धर्माभुवद्वृजन्यस्यराजाप्ररश्मिभिर्दशभिर्भारिभूम ॥



॥ २४ ॥

पवित्रेभिःपवमानोनृचक्षाराजादेवानामुतमर्त्यानां । द्विताभुवद्रयिपतीरयीणामृतंभरत्सुभृतंचार्विंदुः ॥ अर्वांऽइवश्र वसेसातिमच्छेंद्रस्यवायोरभिवीतिमर्ष । सनःसहस्राबृहतीरिषोदाभवासोमद्रविणोवित्पुनानः+ ॥ १५ ॥ देवाव्यो नःपरिषिच्यमानाःक्षयंसुवीरंधन्वंतुसोमाः । आयज्यवःसुमतिंविश्ववाराहोतारोनदिविजोमंद्रतमाः ॥ एवादेवदे वतातेपवस्वमहेसोमप्सरसेदेवपानः । महश्चिद्धिष्मसिहिताःसमर्येकृधिसुष्ठानेरोदसीपुनानः+ ॥ अश्वोनक्रंदोवृष भिर्युजानःसिंहोनभीमोमनसोजवीयान् । अर्वाचीनैःपथिभिर्येरजिष्ठाऽआपवस्वसौमनसंनऽइंदो ॥ शतंधारादेवजा ताऽअसृग्रन्त्सहस्रमेनाःकवयोमृजंति । इंदोसनित्रंदिवऽआपवस्वपुरऽएतासिमहतोधनस्य ॥ दिवोनसर्गाऽअसस्र ग्रमह्नांराजानमित्रंप्रमिनातिधीरः । पितुर्नपुत्रःक्रतुभिर्यतानऽआपवस्वविशेऽअस्याऽअजीतिं ॥ १६ ॥ प्रतेधाराम धुमतीरसृग्रन्वारान्यत्पूतोऽअत्येष्यव्यान् । पवमानपवसेधामगोनांजज्ञानःसूर्यमपिन्वोऽअर्कैः+ ॥ कनिक्रददनुपंथा मृतस्यशुक्रोविभास्यमृतस्यधाम । सऽइंद्रायपवसेमत्सरवान्हिन्वानोवाचंमतिभिःकवीनां+ ॥ दिव्यःसुपर्णोवचक्षि सोमपिन्वन्धाराःकर्मणादेववीतौ । एंदोविशकलशंसोमधानंक्रंदन्निहिसूर्यस्योपरश्मिं+ ॥ तिस्रोवाचऽईरयतिप्रवह्नि र्ऋतस्यधीतिंब्रह्मणोमनीषां । गावोयंतिगोपतिंपृच्छमानाःसोमंयंतिमतयोवावशानाः+ ॥ सोमंगावोधेनवोवावशा नाःसोमंविप्रामतिभिःपृच्छमानाः । सोमःसुतःपूयतेऽअज्यमानःसोमेऽअर्कास्त्रिष्टुभःसंनवंते ॥ १७ ॥ एवानःसोम

ऋक्सं. परिषिच्यमानऽआपवस्वपूयमानःस्वस्ति । इंद्रमाविशबृहतारवेणवर्धयावाचंजनयापुरंधिं ॥ आजागृविर्विप्रऽऋता मंडलं ९
अ. ७ अ. ४ मतीनांसोमःपुनानोऽअसदच्चमूषु । सपंतियंमिथुनासोनिकामाऽअध्वर्यवोरथिरासःसुहस्ताः ॥ सपुनानऽउपसूरेन
धातोभेऽअप्रारोदसीविषऽआवः । प्रियाचिद्यस्यप्रियसासऽऊतीसतूधनंकारिणेनप्रयंसत् ॥ सवर्धितावर्धनःपूयमा अनु. ६
॥ २५ ॥ नःसोमोमीढ्वाँऽअभिनोज्योतिषावीत् । येनानःपूर्वेपितरःपदज्ञाःस्वर्विदोऽअभिगाऽअद्रिमुष्णन् ॥ अक्रान्त्समुद्रः
प्रथमेविधर्मन्जनयन्प्रजाभुवनस्यराजा । वृषापवित्रेऽअधिसानोऽअव्येबृहत्सोमोवावृधेसुवानऽइंदुः ॥ १८ ॥ मह
त्तत्सोमोमहिषश्चकारापांयद्गर्भोवृणीतदेवान् । अदधादिंद्रेपवमानऽओजोजनयत्सूर्येज्योतिरिंदुः ॥ मत्सिवायुमिष्ट
येराधसेचमत्सिमित्रावरुणापूयमानः । मत्सिशर्धोमारुतंमत्सिदेवान्मत्सिद्यावापृथिवीदेवसोम ॥ ऋजुःपवस्ववृजि
नस्यहंतापामीवांबाधमानोमृधश्च । अभिश्रीणन्पयःपयसाभिगोनामिंद्रस्यत्वंतववयंसखायः ॥ मध्वःसूदंपवस्वव
स्वऽउत्संवीरंचनऽआपवस्वाभगंच । स्वदस्वेंद्रायपवमानऽइंदोरयिंचनऽआपवस्वासमुद्रात् ॥ सोमःसुतोधारया
त्योनहित्वासिंधुर्ननिम्नमभिवाज्यक्षाः । आयोनिंवन्यमसदत्पुनानःसमिंदुर्गोभिरसरत्समद्भिः ॥ १९ ॥ एषस्यते ॥ २५ ॥
पवतऽइंद्रसोमश्चमूषुधीरऽउशतेतवस्वान् । स्वर्चक्षारथिरःसत्यशुष्मःकामोनयोदेवयतामसर्जि ॥ एषप्रत्नेनवयसापु
नानस्तिरोवर्पांसिदुहितुर्दधानः । वसानःशर्मत्रिवरूथमप्सुहोतेवयातिसमनेषुरेभन् ॥ नूनस्त्वंरथिरोदेवसोमपरिस्र

वचस्वौः पूयमानः । अप्सुस्वादिंष्ठोमधुमाँऽऋतावांदेवोनयःसंवितासत्यमंन्मा ॥ अभिवायुंवीत्यंर्षागृणानोउ३भिमि
त्रावरुंणापूयमानः । अभीनरंधीजवनंरथेष्ठामभींद्रंवृषणंवज्रबाहुं ॥ अभिवस्त्रांसुवसनान्यंर्षाभिधेनूःसुदुघाःपूयमा
नः । अभिचंद्राभर्तवेनोहिरंण्याभ्यश्वांन्रथिनोदेवसोम ॥ २० ॥ अभीनोऽअर्षदिव्यावसूंन्यभिविश्वापार्थिवापूय
मानः । अभियेनद्रविंणमश्नवामाभ्यार्षेयंजमदग्निवन्नः ॥ अयापवापवस्वैनावसूंनिमाँश्चत्वऽइंदोसरंसिप्रधंन्व । ब्र
ध्नश्चिदत्रवातोनजूतःपुरुमेधश्चित्तकंवेनरंदात् ॥ उतनंऽएनापवयापवस्वाधिंश्रुतेश्रवाय्यंस्यतीर्थे । षष्टिंसहस्रानैगुतो
वसूंनिवृक्षंनपक्वंधूनवद्रणांय ॥ महीमेऽअंस्यवृषनामंशूषेमाँश्चत्वेवापृशनेवावधंत्रे । अस्वांपयन्निगुतंस्नेहयच्चापामि
त्राँऽअपाचितोऽअचेतः+ ॥ संत्रीपवित्रावितंतान्येष्यन्वेकंधावसिपूयमानः । असिभगोऽअसिंदात्रस्यंदातासिंमघ
वांमघवंद्भ्यऽइंदो ॥ २१ ॥ एषविंश्वविंत्पवतेमनीषीसोमोविश्वंस्यभुवनस्यराजा । द्रप्साँऽईरयंन्विदथेष्विंदुर्विंवार
मव्यंसमयातिंयाति ॥ इंदुंरिहंतिमहिषाऽअदंब्धाःपदेरेभंतिकवयोनगृध्राः । हिन्वंतिधीरांदशभिःक्षिपाभिःसमंज
तेरूपमपांरसेंन ॥ त्वयांवयंपवमानेनसोमभरेकृतंविचिनुयामशश्वंत् । तन्नोमित्रो० ॥ २२ ॥ ( ९।६।२ ) अभि
नोवाजसातंमंरयिमंर्षपुरुस्पृहं । इंदोसहस्रंभर्णसंतुविद्युम्नंविंभ्वासहं ॥ परिंष्यसुवानोऽअव्ययंरथेनवर्मांव्यत ।



( ९।६।२ ) अभिनइतिद्वादशर्चस्यसूक्तस्यांबरीषऋजिश्वानौपवमानसोमोनुष्टुबेकादशीबृहती ।

इंदुरभिद्रुणाहितोहियानोधाराभिरक्षाः ॥ परिष्यसुवानोऽअक्षाऽइंदुरव्येमदच्युतः । धारायऽऊर्ध्वोऽअध्वरेभ्राजा नैतिगव्ययुः+ ॥ सहित्वंदेवशश्वंतेवसुमर्तायदाशुषे । इंदोसहस्रिणंरयिंशतात्मानंविवाससि ॥ वयंतेऽअस्यवृत्रह न्वसोवस्वः पुरुस्पृहः । निनेदिष्ठतमाऽइषःस्यामसुम्नस्याध्रिगो ॥ द्विर्यंपंचस्वयशसंस्वसारोऽअद्रिसंहतं । प्रियमिंद्र स्यकाम्यंप्रस्नापयंत्यूर्मिणं ॥ २३ ॥ परित्यंहर्यतंहरिंबभ्रुंपुनंतिवारेण । योदेवान्विश्वाँऽइत्परिमदेनसहगच्छति ॥ अस्यवोह्यवसापांतोदक्षसाधनं । यःसूरिषुश्रवोबृहद्दधेस्व१र्णहर्यतः+ ॥ सवायज्ञेषुमानवीऽइंदुर्जनिष्टरोदसी । देवो देवीगिरिष्ठाऽअस्रेधंतंतुविष्वणि ॥ इंद्रायसोमपातवेवृत्रघ्नेपरिषिच्यसे । नरेचदक्षिणावतेदेवायसदनासदे ॥ तेप्र त्नासोव्युष्टिषुसोमाःपवित्रेऽअक्षरन् । अपप्रोथंतःसनुतर्हुरश्चितःप्रातस्ताँऽअप्रचेतसः ॥ तंसखायःपुरोरुचंयूयंवयंच सूरयः । अश्यामवाजगंध्यंसनेमवाजपस्त्यं ॥ २४ ॥ ( ९।६।३ ) आहर्यतायधृष्णवेधनुस्तन्वंतिपौंस्यं । शुक्रांव यंत्यसुरायनिर्णिजंविपामग्रेमहीयुवः ॥ अधक्षपापरिष्कृतोवाजाँअभिप्रगाहते । यदीविवस्वतोधियोहरिंहिन्वंति यातवे ॥ तमस्यमर्जयामसिमदोयऽइंद्रपातमः । यंगावऽआसभिर्दधुःपुरानूनंचसूरयः ॥ तंगाथयापुराण्यापुनान मभ्यनूषत । उतोकृपंतधीतयोदेवानांनामबिभ्रतीः ॥ तमुक्षमाणमव्ययेवारेपुनंतिधर्णसिं । दूतंनपूर्वचित्तयऽआ



---

( ९।६।३ ) आहर्यतायेत्यष्टर्चस्यसूक्तस्यकाश्यपौरेभसूनूपवमानसोमोनुष्टुवाद्याबृहती ।

शासतेमनीषिणः ॥ २५ ॥ सपुनानोमदिन्तमः सोमश्चमूषुसीदति । पशौनरेतऽआदधत्पतिर्वचस्यतेधियः ॥ सम्मृ ज्यतेसुकर्मभिर्देवोदेवेभ्यः सुतः । विदेयदासुसंददिर्महीरपोविगाहते ॥ सुतऽइंदोपवित्रऽआनृभिर्यतोविनीयसे । इंद्रायमत्सरिन्तमश्चमूष्वानिषीदसि ॥ २६ ॥ ( ९।६।४ ) अभीनवंतेऽअद्रुहः प्रियमिंद्रस्यकाम्यं । वत्संनपूर्वऽआ युनिजातंरिहंतिमातरः ॥ पुनानऽइंदवाभरसोमद्विबर्हसंरयिं । त्वंवसूनिपुष्यसिविश्वानिदाशुषोगृहे ॥ त्वंधियंम नोयुजंसृजावृष्टिंनतन्यतुः । त्वंवसूनिपार्थिवादिव्याचसोमपुष्यसि ॥ परितेजिग्युषोयथाधारासुतस्यधावति । रंह माणाव्य१व्ययंवारंवाजीवसानसिः ॥ क्रत्वेदक्षायनः कवेपवस्वसोमधारया । इंद्रायपातवेसुतोमित्रायवरुणायच ॥ २७ ॥ पवस्ववाजसातमः पवित्रेधारयासुतः । इंद्रायसोमविष्णवेदेवेभ्योमधुमत्तमः ॥ त्वांरिहंतिमातरोहरिंपवि त्रेऽअद्रुहः । वत्संजातंनधेनवः पवमानविधर्मणि ॥ पवमानमहिश्रवश्चित्रेभिर्यासिरश्मिभिः । शर्धन्तमांसिजिघ्नसे विश्वानिदाशुषोगृहे ॥ त्वंद्यांचमहिव्रतपृथिवींचातिजभ्रिषे । प्रतिद्रापिममुंचथाः पवमानमहित्वना ॥ २८ ॥ इति सप्तमाष्टकेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥

द्विपंचाशाध्यायेवर्गाः २८ सूक्तानि १० ऋचः १३८ ॥ त्यागः ॥ पवमानायसोमायेदं. १३८ ॥ इतिसप्तमेचतुर्थः ॥

---

( ९।६।४ ) अभीनवंतइतिनवर्चस्यसूक्तस्यकाश्यपोरेभसूनपवमानसोमोनुष्टुप् ।

पुरोजितीषोळशांधीगुंःश्यावाश्विर्ययातिर्नाहुषोनहुषोमानवोमनुंःसांवरणइतितृचांःशेषेप्रजापतिरुपाद्येगाय
त्र्यौंक्राणाष्टौत्रितऔष्णिहंवैंप्रपुनानायषड्द्वितआप्त्यंःसखायःपर्वतनारदौंकाश्यपौंद्वेशिखंडिन्यौवाप्सरसौं
तंवइंद्रमच्छषळूनांग्निश्चाक्षुषश्चक्षुर्मानवोंमनुराप्सवइतितृचांःपंचाग्निःपरीतःषड्विंशतिंःसप्तऋषयःप्रागाथंतृ
तीयाषोळश्यौंद्विपदेंअष्टम्याद्येचबृहत्यौंपवस्वषोळशगौरिवीतिर्द्वेचंशक्तिरेकामूरुर्ऋजिश्वोध्र्वसद्मांकृतयशा
ऋणंचयंइत्यृषयोद्वृचास्तिस्रंःशक्तिःकाकुभाःप्रागाथांःससुन्वेगायत्रीयवमध्यांपरासतोबृहतींपरिद्व्यधिकाग्न
योंधिष्ण्याऐश्वरयोद्वैपदंपर्यूषुद्वादशंत्र्यरुणत्रसदस्यूराजानौंतिस्रोनुष्टुभःपिपीलिकमध्यांषळूर्ध्वबृहत्यस्तिस्र
श्वविराजोंयारुचातृचमनानतंःपारुच्छेपिरात्यष्टंनानानंचतुष्कंशिशुःपाङ्क्तंहिंशर्यणावत्येकादशकश्यपोंयइंदो
श्चतुष्कंदशमंमंडलमग्रेसप्तत्रिंतंःपिप्रीहीनःप्रतएकः ॥ ५ ॥ ॥ ॥ ॥

॥हरिःओम्॥(९।६।५) पुरोजितीवोऽअंधसःसुतायमादयित्नवें। अपश्वानंश्नथिष्टनसखांयोदीर्घजिह्व्यं*॥योधा
रंयापावकयांपरिप्रस्यंदंतेसुतः। इंदुरश्वोनकृत्व्यंः॥ तंदुरोषमभीनरःसोमंविश्वाच्यांधिया । यज्ञंहिन्वंत्यद्रिभिः॥



(९।६।५) पुरोजितीतिषोळशर्चस्यसूक्तस्याद्यानांतिसृणांश्यावाश्विरंधीगुश्चतुर्थ्यादितिसृणांनाहुषोययातिःसप्तम्यादितिसृणांमान
वोनहुषोदशम्यादितिसृणांसांवरणोमनुस्त्रयोदश्यादिचतसृणांवैश्वामित्रःप्रजापतिःपवमानसोमोनुष्टुप्द्वितीयातृतीयेगायत्र्यौ ।

सुतासोमधुमत्तमाः सोमाऽइंद्रायमंदिनः । पवित्रवंतोऽअक्षरन्देवान्गच्छंतुवोमदाः ॥ इंदुरिंद्रायपवतऽइतिदेवासोऽअब्रुवन् । वाचस्पतिर्मखस्यतेविश्वस्येशानऽओजसा ॥ १ ॥ सहस्रधारःपवतेसमुद्रोवाचमीखयः । सोमःपतीरयीणांसखेंद्रस्यदिवेदिवे ॥ अयंपूषारयिर्भगःसोमःपुनानोऽअर्षति । पतिर्विश्वस्यभूमनोव्यख्यद्रोदसीऽउभे ॥ समुप्रियाऽअनूषतगावोमदायघृष्वयः । सोमासःकृण्वतेपथःपवमानासऽइंदवः ॥ यऽओजिष्ठस्तमाभरपवमानश्रवाय्यं । यःपंचचर्षणीरभिरयिंयेनवनामहै ॥ सोमाःपवंतऽइंदवोस्मभ्यंगातुवित्तमाः । मित्राःसुवानाऽअरेपसःस्वाध्यःस्वर्विदः ॥ २ ॥ सुष्वाणासोव्यद्रिभिश्चितानागोरधित्वचि । इषमस्मभ्यमभितःसमस्वरन्वसुविदः ॥ एतेपूताविपश्चितःसोमासोदध्याशिरः । सूर्यासोनदर्शतासोजिगत्नवोध्रुवाघृते ॥ प्रसुन्वानस्यांधसोमर्तोनवृततद्वचः । अपश्वानमराधसंहतामखंनभृगवः ॥ आजामिरत्केऽअव्यतभुजेनपुत्रऽओण्योः । सरज्जारोनयोषणांवरोनयोनिमासदं ॥ सवीरोदक्षसाधनोवियस्तस्तंभरोदसी । हरिःपवित्रेऽअव्यतवेधानयोनिमासदं ॥ अव्योवारेभिःपवतेसोमोगव्येऽअधित्वचि । कनिक्रदद्वृषाहरिरिंद्रस्याभ्येतिनिष्कृतं ॥ ३ ॥ ( ९।६।६ ) क्राणाशिशुर्महीनांहिन्वन्नृतस्यदीधितिं । विश्वापरिप्रियाभुवदधद्विता ॥ उपत्रितस्यपाष्योरभक्तयद्गुहापदं । यज्ञस्यसप्तधामभिरधप्रियं ॥ त्री

( ९।६।६ ) क्राणाशिशुरित्यष्टर्चस्यसूक्तस्य...पवमानसोमदेवता... ।

णिंत्रितस्यधारयापृष्ठेष्वेरयारयिं । मिमीतेऽअस्ययोजनाविसुक्रतुः ॥ जज्ञानंसप्तमातरोवेधामशासतश्रिये । अयंध्रुवोरयीणांचिकेतयत् ॥ अस्यव्रतेसजोषसोविश्वेदेवासोऽअद्रुहः । स्पार्हाभवंतिरंतयोजुषंतयत् ॥ ४ ॥ यमीगर्भमृतावृधोदृशेचारुमजीजनन् । कविंमंहिष्ठमध्वरेपुरुस्पृहं ॥ समीचीनेऽअभितमनायह्वीऽऋतस्यमातरा । तन्वानायज्ञमानुषग्यदंजते ॥ ऋत्वाशुक्रेभिरक्षभिर्ऋणोरपव्रजंदिवः । हिन्वन्नृतस्यदीधितिंप्राध्वरे ॥ ५ ॥ ( ९।६।७ ) प्रपुनानायवेधसेसोमायवचऽउद्यतं । भृतिंनभरामतिभिर्जुजोषते ॥ परिवाराण्यव्ययागोभिरंजानोऽअर्षति । त्रीषधस्थापुनानःकृणुतेहरिः ॥ परिकोशंमधुश्चुतमव्ययेवारेऽअर्षति । अभिवाणीर्ऋषीणांसप्तनूषत ॥ परिणेतामतीनांविश्वदेवोऽअदाभ्यः । सोमःपुनानश्चम्वोर्विशद्धरिः ॥ परिदैवीरनुस्वधाऽइंद्रेणयाहिसरथं । पुनानोवाघद्वाघद्भिरमर्त्यः ॥ परिसप्तिर्नवाजयुर्देवोदेवेभ्यःसुतः । व्यानशिःपवमानोविधावति ॥ ६ ॥ ( ९।७।१ ) सखायऽआनिषीदतपुनानायप्रगायत । शिशुंनयज्ञैःपरिभूषतश्रिये ॥ समीवत्संनमातृभिःसृजतागयसाधनं । देवाव्यं१मदमभिद्विशवसं ॥ पुनातादक्षसाधनंयथाशर्धायवीतये । यथामित्रायवरुणायशंतमः ॥ अस्मभ्यंत्वावसुविदमभिवाणीरनूषत । गोभि



( ९।६।७ ) प्रपुनानायेतिषड्टचस्यसूक्तस्याप्त्योद्वितःपवमानसोमउष्णिक् ॥ सप्तमेनुवाकेएकादशसूक्तानि ( ९।७।१ ) सखायइतिषड्टचस्यसूक्तस्यकाश्यपौपर्वतनारदौपवमानसोमउष्णिक् ( शिखंडिन्यावप्सरसौऋषिकेत्रपाक्षिके किंचपर्वतनारदौकाण्वावपि )।

ष्टेवर्णमभिवासयामसि ॥ सनोमदानांपतऽइंदोदेवप्सराऽअसि । सखेवसख्येगातुवित्तमोभव ॥ सनेमिक्रुध्यस्म
दारक्षसंकंचिदत्रिणं । अपादेवंद्वयुमंहोयुयोधिनः ॥ ७ ॥ ( ९।७।२ ) तंवःसखायोमदायपुनानमभिगायत । शि
शुंनयज्ञैःस्वदयंतगूर्तिभिः ॥ संवत्सऽइवमातृभिरिंदुर्हिन्वानोऽज्यते । देवावीर्मदोमतिभिःपरिष्कृतः ॥ अयंदक्षा
यसाधनोयंशर्धायवीतये । अयंदेवेभ्योमधुमत्तमःसुतः ॥ गोमन्नऽइंदोऽअश्ववत्सुतःसुदक्षधन्व । शुचिंतेवर्णमधि
गोषुदीधरं ॥ सनोहरीणांपतऽइंदोदेवप्सरस्तमः । सखेवसख्येनर्योरुचेभव ॥ सनेमित्वमस्मदाँऽअदेवंकंचिदत्रिणं ।
साह्वाँऽइंदोपरिबाधोऽअपद्वयुं ॥ ८ ॥ ( ९।७।३ ) इंद्रमच्छसुताऽइमेवृषणंयंतुहरयः । श्रुष्टीजातासऽइंदवःस्व
र्विदः ॥ अयंभरायसानसिरिंद्रायपवतेसुतः । सोमोजैत्रस्यचेततियथाविदे ॥ अस्येदिंद्रोमदेष्वाग्राभंगृभ्णीतसा
नसिं । वज्रंचवृषणंभरत्समप्सुजित् ॥ प्रधन्वासोमजागृविरिंद्रायेंदोपरिस्रव । द्युमंतंशुष्ममाभरास्वर्विदं ॥ इंद्रा
यवृषणंमदंपवस्वविश्वदर्शतः । सहस्रयामापथिकृद्विचक्षणः ॥ ९ ॥ अस्मभ्यंगातुवित्तमोदेवेभ्योमधुमत्तमः ।
सहस्रंयाहिपथिभिःकनिक्रदत् ॥ पवस्वदेववीतयऽइंदोधाराभिरोजसा । आकलशंमधुमान्त्सोमनःसदः ॥ तवद्र

( ९।७।२ ) तंवइतिषड्टचस्यसूक्तस्यपर्वतनारदौपवमानसोमउष्णिक् । ( ९।७।३ ) इंद्रमच्छेतिचतुर्दशर्चस्यसूक्तस्याद्यानांतिसृणां
चाक्षुषोग्निश्चतुर्थ्यादितिसृणांमानवश्चक्षुःसप्तम्यादितिसृणामासवोमगुर्दृशयादिपंचानांचाक्षुषोग्निःपवमानसोमउष्णिक् ।

ऋक्सं.

अ. ७ अ. ५

॥ २९ ॥

ष्सा॑ऽउ॒द्गृ॒त॒ऽइंद्रं॒मदा॑यवावृधुः । त्वांदे॒वासो॑ऽअ॒मृता॑य॒कंप॑पुः ॥ आन॑ः सुता॒सऽइंदवः पुना॒नाधा॑वतार॒यिं । वृष्टिद्या॑वोरीत्यापः स्व॒र्विद॑ः ॥ सोम॑ः पुना॒नऽऊ॒र्मिणाव्यो॒वार॒विधा॑वति । अग्रे॑वा॒चः पव॑मान॒ः कनि॑क्रदत् ॥ १० ॥ धी॒भिर्हि॑न्वंतिवा॒जिन॒ंवने॒क्रीळ॑ंत॒मत्य॑विं । अ॒भित्रि॑पृ॒ष्ठंम॒तय॒ः सम॑स्वरन् ॥ अस॑र्जिक॒लशाँ॑ऽअ॒भिमी॒ह्ळेसप्ति॒र्नवा॑ज॒युः । पु॒नानो॒वाचं॑ज॒नयं॒न्नसिष्यदत् ॥ पव॑तेह॒र्य॑तोह॒रि॒रति॒ह्वरां॑सि॒रंह्या॑ । अ॒भ्यर्ष॑न्स्तो॒तृभ्यो॑वी॒रव॒द्यश॑ः ॥ अ॒याप॑वस्वदेव॒युर्मधो॒र्धारा॑ऽअसृक्षत । रेभ॒न्प॒वित्रं॒पर्ये॑षिवि॒श्वत॑ः ॥ ११ ॥ ( ९।७४ ) परी॒तोषि॑ंचतासु॒तंसोमो॒यऽउ॑त्त॒मंह॒विः । द॒ध॒न्वाँ॒योन॒र्यो॑ऽअ॒प्स्व॑१॒न्तरासु॒षाव॒सोम॒मद्रि॑भिः ॥ नू॒नंपुना॒नोवि॑भि॒ःपरि॑स्र॒वाद॑ब्धः सुर॒भिंत॑रः । सु॒तेचि॒त्त्वाप्सु॒मदा॒मोऽअंध॑सा श्री॒णंत॒ोगोभि॒रुत्त॑रं ॥ परि॑सुवा॒नश्चक्ष॑सेदेव॒माद॑न॒ः क्रतु॒रिंदु॒र्वि॑चक्ष॒णः ॥ पु॒नानः सो॑म॒धार॑याप॒ोवसा॑नोऽअर्षसि । आर॑त्न॒धायो॒नि॑मृ॒तस्य॑सीद॒स्युत्सो॑देवहि॒र॒ण्यय॑ः ॥ दु॒हा॒नऽऊध॑र्दि॒व्यंमधु॑प्रि॒यंप्र॒त्नंस॒धस्थ॒मास॑दत् । आ॒पृच्छ्यं॑ध॒रुणं॑वा॒ज्य॑र्षति॒नृभि॑र्धू॒तोवि॑चक्ष॒णः ॥ १२ ॥ पु॒नानः सो॑म॒जागृ॑वि॒रव्यो॒वारे॒परि॑प्रि॒यः । त्वंविप्रो॑ऽअभ॒वोऽङ्गि॑रस्तम॒मोमध्वा॑

मंडलं ९

अनु. ७

( ९।७४ ) परीतइतिषड्विंशत्यृचस्यसूक्तस्यबार्हस्पत्योभरद्वाजोमारीचः कश्यपोराहूगणोगोतमोभौमोत्रिर्गाथिनोविश्वामित्रोभार्गवोजमदग्निर्मैत्रावरुणिर्वसिष्ठऋषयः पवमानसोमोदेवता आद्याचतुर्थीषष्ठ्यष्टमीनवमीदशमीद्वादशीचतुर्दश्यः सप्तदश्याद्ययुजश्चबृहत्यः द्वितीयापंचमीसप्तम्येकादशीत्रयोदशीपंचदश्योष्टादश्यादियुजश्चसतोबृहत्यः तृतीयाषोडशीचद्विपदाविराट् ।

॥ २९ ॥

यज्ञंमिमिक्षनः ॥ सोमोमीढ्वान्पवतेगातुवित्तमऽऋषिर्विप्रोविचक्षणः ॥ त्वंकविरभवोदेववीतमऽआसूर्यंरोहयोदिवि+ ॥
सोमऽउषुवाणःसोतृभिरधिष्णुभिरवीनां । अश्वयेवहरितायातिधारयामंद्रयायातिधारया ॥ अनूपेगोमान्गोभिर
क्षाःसोमोदुग्धाभिरक्षाः । समुद्रंनसंवरणान्यग्मन्मंदीमदायतोशते ॥ आसोमसुवानोऽअद्रिभिस्तिरोवाराण्यव्य
या । जनोनपुरिचम्वोर्विशद्धरिःसदोवनेषुदधिषे ॥ १३ ॥ समामृजेतिरोऽअण्वानिमेष्योमीढ्वेसप्तिर्नवाजयुः । अ
नुमाद्यःपवमानोमनीषिभिःसोमोविप्रेभिर्ऋक्वभिः ॥ प्रसोमदेववीतयेसिंधुर्नपिप्येऽअर्णसा । अंशोःपयसामदिरोन
जागृविरच्छाकोशंमधुश्चुतं ॥ आहर्यतोऽअर्जुनेऽअत्केऽअव्यतप्रियःसूनुर्नमर्ज्यः । तमींहिन्वंत्यपसोयथारथंनदीष्वा
गभस्त्योः ॥ अभिसोमासऽआयवःपवंतेमद्यंमदं । समुद्रस्याधिविष्टपिमनीषिणोमत्सरासःस्वर्विदः ॥ तरत्समुद्रंपव
मानऽऊर्मिणाराजादेवऽऋतंबृहत् । अर्षन्मित्रस्यवरुणस्यधर्मणाप्रहिन्वानऽऋतंबृहत्+ ॥ १४ ॥ नृभिर्येमानोहर्य
तोविचक्षणोराजादेवःसमुद्रियः ॥ इंद्रायपवतेमदःसोमोमरुत्वतेसुतः । सहस्रधारोऽअत्यव्यमर्षतितमींमृजंत्याय
वः ॥ पुनानश्चमूजनयन्मतिंकविःसोमोदेवेषुरण्यति । अपोवसानःपरिगोभिरुत्तरःसीदन्वनेष्वव्यत ॥ तवाहंसोम
रारणसख्यऽइंदोदिवेदिवे । पुरूणिबभ्रोनिचरंतिमामवपरिधींऽरतिताँऽइहि ॥ उताहंनक्तमुतसोमतेदिवासख्याय
बभ्रऽऊधनि । घृणातपंतमतिसूर्यंपरःशकुनाऽइवपप्तिम ॥ १५ ॥ मृज्यमानःसुहस्त्यसमुद्रेवाचमिन्वसि । रयिंपि

शंगंबहुलंपुरुस्पृहंपवमानाभ्यर्षसि ॥ मृजानोवारेपवमानोऽअव्ययेवृषावचक्रदोवने । देवानांसोमपवमाननिष्कृतं गोभिरंजानोऽअर्षसि ॥ पवस्ववाजसातयेभिविश्वानिकाव्या । त्वंसमुद्रंप्रथमोविधारयोदेवेभ्यःसोममत्सरः+ ॥ सतूपवस्वपरिपार्थिवंरजोदिव्याचसोमधर्मभिः । त्वांविप्रासोमतिभिर्विचक्षणशुभ्रंहिन्वंतिधीतिभिः ॥ पवमानाऽअसृक्षतपवित्रमतिधारया । मरुत्वंतोमत्सराऽइंद्रियाहयामेधामभिप्रयांसिच ॥ अपोवसानःपरिकोशमर्षतीं दुर्हियानःसोतृभिः । जनयन्ज्योतिर्मंदनाऽअवीवशद्गाःकृण्वानोननिर्णिजं ॥ १६ ॥ ( ९।७।५ ) पवस्वमधुमत्तमऽइंद्रायसोमक्रतुवित्तमोमदः । महिद्युक्षतमोमदः ॥ यस्यतेपीत्वावृषभोवृषायतेस्यपीतास्वर्विदः । ससुप्रकेतोऽअभ्यक्रमीदिषोच्छावाजंनैतशः ॥ त्वंह्यं१गदैव्यापवमानजनिमानिद्युमत्तमः । अमृतत्वायघोषयः ॥ येनानवग्वोदध्यङ्ङपोर्णुतेयेनविप्रासऽआपिरे । देवानांसुम्नेऽअमृतस्यचारुणोयेनश्रवांस्यानशुः+ ॥ एषस्यधारयासुतोव्योवारेभिःपवतेमदिन्तमः । क्रीळन्नूर्मिरपामिव ॥ १७ ॥ यऽउस्रियाऽअप्याऽअंतरश्मनोनिर्गाऽअकृंतदोजसा ।

---

( ९।७।५ ) पवस्वेतिषोळशर्चस्यसूक्तस्याद्ययोर्द्वयोःशाक्त्योगौरिवीतिस्तृतीयायावसिष्ठःशक्तिश्चतुर्थ्यादिद्वयोरांगिरसउरुःपष्ठयादिद्वयोर्भारद्वाजऋजिश्वाष्टम्यादिद्वयोरांगिरसऊर्ध्वसद्मादशम्यादिद्वयोरांगिरसःकृतयशाद्वादश्यादिद्वयोर्ऋणंचयश्चतुर्दश्यादितिसृणांवासिष्ठःशक्तिरित्यृषयःपवमानसोमोदेवता अयुजःककुभोयुजःसतोवृहत्यःससुन्वेयइतियवमध्यागायत्री ।

अभिव्रजंतन्निषेगव्यमश्व्यंवमींवधृष्णवारुज ॥ आसौतापरिषिंचताश्वंनस्तोमम्प्सुरंरजस्तुरं । वनक्रक्षमुदप्रुतं ॥ सहस्रंधारंवृषभंपयोवृधंप्रियंदेवायजन्मने । ऋतेनयऽऋतजातोविवावृधेराजादेवऽऋतंबृहत्+ ॥ अभिद्युम्नंबृहद्य शऽइषस्पतेदिदीहिदेवदेवयुः । विकोशंमध्यमंयुव ॥ आवच्यस्वसुदक्षचम्वोःसुतोविशांवह्निर्नविश्पतिः । वृष्टिंदिवः पवस्वरीतिमपांजिन्वागविष्टयेधियः ॥ १८ ॥ एतमुत्यंमदच्युतंसहस्रंधारंवृषभंदिवोदुहु । विश्वावसूनिबिभ्रतं ॥ नृषाविजज्ञेजनयन्नमर्त्यःप्रतपन्ज्योतिषातमः ॥ ससुष्टुतःकविभिर्निर्णिजंदधेत्रिधात्वस्यदंसंसा ॥ ससुन्वेयोवसूनांयो रायामानेतायऽइळानां । सोमोयःसुक्षितीनां+ ॥ यस्यनऽइंद्रःपिबाद्यस्यमरुतोयस्यवार्यमणाभगः । आयेनमित्रावरु णाकरामहऽएंद्रमवसेमहे+ ॥ इद्रायसोमपातवेनृभिर्यतःस्वायुधोमदिन्तमः । पवस्वमधुमत्तमः ॥ इंद्रस्यहार्दि सोमधानमाविशसमुद्रमिवसिंधवः । जुष्टोमित्रायवरुणायवायवेदिवोविष्टंभऽउत्तमः+ ॥ १९ ॥ ( ९।७।६ ) परिप्रधन्वेंद्रायसोमस्वादुर्मित्रायपूष्णेभगाय ॥ इंद्रस्तेसोमसुतस्यपेयाःक्रत्वेदक्षायविश्वेचदेवाः+ ॥ एवामृतायम हेक्षयायसशुक्रोऽअर्षदिव्यःपीयूषः ॥ पवस्वसोममहान्त्समुद्रःपितादेवानांविश्वाभिधाम ॥ शुक्रःपवस्वदेवेभ्यःसोम दिवेपृथिव्यैशंचप्रजायै ॥ दिवोधर्तासिशुक्रःपीयूषःसत्येविधर्मन्वाजीपवस्व ॥ पवस्वसोमद्युम्नीसुधारोमहामवीनाम

( ९।७।६ ) परिप्रेतिद्वाविंशत्यृचस्यसूक्तस्यैश्वरयोधिष्ण्याग्नयःपवमानसोमोद्विपदाविराट् ।

ऋक्सं. अ. ७ अ. ५ ॥ ३१ ॥

नुपूर्व्यः ॥ नृभिर्येमानोजज्ञानःपूतःक्षरद्विश्वानिमंद्रःस्वर्वित् ॥ इंदुःपुनानःप्रजामुराणःकरद्विश्वानिद्रविणानि नः ॥ पवस्वसोमक्रत्वेदक्षायाश्वोननिक्तोवाजीधनाय ॥ २० ॥ तंतेसोतारोरसंमदायपुनंतिसोमंमहेद्युम्नाय ॥ शिशुं जज्ञानंहरिंमृजंतिपवित्रेसोमंदेवेभ्यइंदुं ॥ इंदुःपविष्टचारुर्मदायापामुपस्थेकविर्भगाय ॥ बिभर्तिचार्विंद्रस्यनाम येनविश्वानिवृत्राजघान ॥ पिबंत्यस्यविश्वेदेवासोगोभिःश्रीतस्यनृभिःसुतस्य ॥ प्रसुवानोअक्षाःसहस्रधारस्तिरःप वित्रंविवारमव्यम् ॥ सवाज्यक्षाःसहस्ररेताअद्भिर्मृजानोगोभिःश्रीणानः ॥ प्रसोमयाहींद्रस्यकुक्षानृभिर्येमानो अद्रिभिःसुतः ॥ असर्जिवाजीतिरःपवित्रमिंद्रायसोमःसहस्रधारः ॥ अंजंत्येनंमध्वोरसेनेंद्रायवृष्णइंदुंमदाय ॥ देवेभ्यस्त्वावृथापाजसेपोवसानंहरिंमृजंति ॥ इंदुरिंद्रायतोशतेनितोशतेश्रीणन्नुग्रोरिणन्नपः ॥ २१ ॥ ( ९।७।७ ) पर्यूषुप्रधन्ववाजसातयेपरिवृत्राणिसक्षणिः । द्विषस्तरध्याऋणयानईयसे ॥ अनुहित्वासुतंसोममदामसिमहेसम र्यराज्ये । वाजाँअभिपवमानप्रगाहसे ॥ अजीजनोहिपवमानसूर्यंविधारेशक्मनापयः । गोजीरयारंहमाणःपुरंध्या ॥ अजीजनोअमृतमर्त्येष्वाँऋतस्यधर्मन्नमृतस्यचारुणः । सदासरोवाजमच्छासनिष्यदत् ॥ अभ्यभिहिश्रवसाततं

मंडलं ९ अनु. ७ ॥ ३१ ॥

---

(९।७।७) पर्यूष्वितिद्वादशर्चस्यसूक्तस्यत्र्यरुणत्रसदस्यूराजानौपवमानसोमःआद्यास्तिस्रोनुष्टुभःपिपीलिकमध्याःचतुर्थ्यादिषळूर्ध्व- बृहत्योऽन्त्यास्तिस्रोविराजः ।

दिथोत्संनकंचिज्जनपानमक्षितं । शर्याभिर्नभरमाणोगभस्त्योः ॥ आदींकेचित्पश्यमानासऽआप्यंवसुरुचोदिव्याऽ अभ्यनूषत । वारंनदेवःसविताव्यूर्णुते ॥ २२ ॥ त्वेसोमप्रथमावृक्तबर्हिषोमहेवाजायश्रवसेधियंदधुः । सत्वंनोवीरवीर्यायचोदय ॥ दिवःपीयूषंपूर्व्यंयदुक्थ्यंमहोगाहाद्दिवऽआनिरधुक्षत । इंद्रमभिजायमानंसमस्वरन् ॥ अधयदिमेपवमानरोदसीऽइमाचविश्वाभुवनाभिमज्मना । यूथेननिःष्ठावृषभोवितिष्ठसे ॥ सोमःपुनानोऽअव्ययेवारेशिशुर्नक्रीळन्पवसानोऽअक्षाः । सहस्रधारःशतवाजऽइंदुः ॥ एषपुनानोमधुमाँऽऋतावेंद्रायेंदुःपवतेस्वादुरूर्मिः । वाजसनिर्वरिवोविद्वयोधाः+ ॥ सपवस्वसहमानःपृतन्यून्त्सेधन्रक्षांस्यपदुर्गहाणि । स्वायुधःसासह्वान्त्सोमशत्रून् ॥ २३ ॥

( ९।७८ ) अयारुचाहरिण्यापुनानोविश्वाद्वेषांसितरतिस्वयुग्वभिःसूरोनस्वयुग्वभिः । धारासुतस्यरोचतेपुनानोअरुषोहरिः । विश्वायद्रूपापरियात्यृक्वभिःसप्तास्येभिर्ऋक्वभिः ॥ त्वंत्यत्पणीनांविदोवसुसंमातृभिर्मर्जयसिस्वऽआदमऽऋतस्यधीतिभिर्दमे । परावतोनसामतद्यत्रारणंतिधीतयः । त्रिधातुभिररुषीभिर्वयोदधेरोचमानोवयोदधे ॥ पूर्वामनुप्रदिशंयातिचेकितत्संरश्मिभिर्यततेदर्शतोरथोदैव्योदर्शतोरथः । अग्मन्नुक्थानिपौंस्येंद्रंजैत्रायहर्षयन् ।

( ९।७८ ) अयारुचेतितृचस्यसूक्तस्य [illegible] ।

वज्रश्चयद्भवंथोऽअनपच्युतासमत्स्वनपच्युता ॥ २४ ॥ ( ९।७।९ ) नानानंवाऽउंनोधियोविव्रतानिजनानां । तक्षारिष्टंरुतंभिषग्ब्रह्मासुन्वंतमिच्छतींद्रायेंदोपरिस्रव ॥ जरतीभिरोषधीभिःपर्णेभिःशकुनानां । कार्मारोऽअश्मभिर्द्युभिर्हिरण्यवंतमिच्छतीं० ॥ कारुरहंततोभिषगुपलप्रक्षिणीनना । नानाधियोवसूयवोनुगाऽइंवतस्थिमेंद्रा० ॥ अश्वोवोह्लासुखंरथंहसनामुपमंत्रिणः । शेपोरोमण्वंतौभेदौवारिन्मंडूकऽइच्छतीं० ॥ २५ ॥ ( ९।७।१० ) शर्यणावतिसोममिंद्रःपिबतुवृत्रहा । बलंदधानऽआत्मनिकरिष्यन्वीर्यंमहदिंद्रा० ॥ आपवस्वदिशांपतऽआर्जीकात्सोममीढ्वः । ऋतवाकेनसत्येनश्रद्धयातपसासुतऽइंद्रा० ॥ पर्जन्यवृद्धंमहिषंतंसूर्यस्यदुहिताभरत् । तंगंधर्वाःप्रत्यगृभ्णन्तंसोमेरसमादधुरिंद्रा० ॥ ऋतंवदन्नृतद्युम्नसत्यंवदन्त्सत्यकर्मन् । श्रद्धांवदन्त्सोमराजन्धात्रासोमपरिष्कृतऽइंद्रा० ॥ सत्यमुग्रस्यबृहतःसंस्रवंतिसंस्रवाः । संयंतिरसिनोरसाःपुनानोब्रह्मणाहरऽइंद्रा० ॥ २६ ॥ यत्रब्रह्मापवमानछंदस्यां३वाचंवदन् । ग्राव्णासोमेमहीयतेसोमेनानंदंजनयन्निंद्रा० ॥ यत्रज्योतिरजस्रंयस्मिँल्लोकेस्वर्हितं । तस्मिन्मांधेहिपवमानामृतेलोकेऽअक्षितऽइंद्रा० ॥ यत्रराजावैवस्वतोयत्रावरोधनंदिवः । यत्रामूर्यह्वतीरापस्तत्रमाममृतंकृधींद्रा० ॥



---

( ९।७।९ ) नानानमितिचतुर्ऋचस्यसूक्तस्यांगिरसःशिशुःपवमानसोमःपंक्तिः । ( ९।७।१० ) शर्यणावतीत्येकादशर्चस्यसूक्तस्य मारीचःकश्यपःपवमानसोमःपंक्तिः ।

यत्रानुकामंचरणंत्रिनाकेत्रिदिवेदिवः । लोकायत्रज्योतिष्मंतस्तत्रमाममृतंकृधींद्रा० ॥ यत्रकामानिकामाश्चयत्रब्रध्न स्यविष्टपं । स्वधाचयत्रतृप्तिश्चतत्रमाममृतंकृधींद्रा० ॥ यत्रानंदाश्चमोदाश्चमुदःप्रमुदऽआसते । कामस्ययत्राप्ताःका मास्तत्रमाममृतंकृधींद्रा० ॥ २७ ॥ ( ९।७।११ ) यऽइंदोःपवमानस्यानुधामान्यक्रमीत् । तमाहुःसुप्रजाऽइतिय स्तेसोमाविधन्मनऽइंद्रा० ॥ ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धयन्गिरः । सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रा० ॥ सप्तदिशोनानासूर्याःसप्तहोतारऽऋत्विजः । देवाऽआदित्यायेसप्ततेभिःसोमाभिरक्षनऽइंद्रा० ॥ यत्तेराजन्छृतंहविस्ते नसोमाभिरक्षनः । अरातीवामानस्तारीन्मोचनःकिंचनाममदिंद्रा० ॥ २८ ॥ ( इतिपावमानंनवमंमंडलंसमाप्तं सूक्तानि ११४ ॥ ) ( ॥ परिशिष्टं ॥ यत्रतत्परमंपदंविष्णोर्लोकेमहीयते । देवैःसुकृतकर्मभिस्तत्रमाममृतंकृधीं द्रा० ॥ यत्रतत्परमाव्ययंभूतानामधिपतिं । भावभावीचयोगीश्चतत्रमाममृतंकृधींद्रा० ॥ यत्रलोकास्तनूत्यजः श्रद्धयातपसाजिताः । तेजश्चयत्रब्रह्मचतत्रमाममृतंकृधींद्रा० ॥ यत्रदेवामहात्मानःसेंद्राश्चमरुद्गणाः । ब्रह्मा चयत्रविष्णुश्चतत्रमाममृतंकृधींद्रा० ॥ यत्रगंगाचयमुनायत्रप्राचीसरस्वती । यत्रसोमेश्वरोदेवस्तत्रमाममृतं

---

( ९।७।११ ) यइंदोरितिचतुर्ऋचस्यसूक्तस्यमारीचःकश्यपःपवमानसोमःपंक्तिः ।

ऋक्सं. मंडलं १०

अ. ७ अ. ५ अनु. १

॥ ३३ ॥

कृधींद्रा० ॥ १ ॥ ) ( १०।१।१ ) अग्रेबृहन्नुषसामूर्ध्वोऽअस्थान्निर्जगन्वान्तमसोज्योतिषागात् । अग्निर्भानुनारुशतास्वंगऽआजातोविश्वासद्मान्यप्राः ॥ सजातोगर्भोऽअसिरोदस्योरग्नेचारुर्विभृतऽओषधीषु । चित्रःशिशुःपरितमांस्यक्तून्प्रमातृभ्योऽअधिकनिक्रदद्गाः ॥ विष्णुरित्थापरममस्यविद्वान्जातोबृहन्नभिपातितृतीयं । आसायदस्यपयोऽअक्रतस्वंसचेतसोऽअभ्यर्चंत्यत्र ॥ अतऽउत्वापितुभृतोजनित्रीरन्नावृधंप्रतिचरंत्यन्नैः । ताऽईंप्रत्यैषिपुनरन्यरूपाऽअसित्वंविक्षुमानुषीषुहोता ॥ होतारंचित्ररथमध्वरस्ययज्ञस्ययज्ञस्यकेतुंरुशंतं । प्रत्यर्धिदेवस्यदेवस्यमह्नाश्रियात्वग्निमतिथिंजनानां ॥ सतुवस्त्राण्यधपेशनानिवसानोऽअग्निर्नाभापृथिव्याः । अरुषोजातःपदऽइळायाःपुरोहितोराजन्यक्षीहदेवान्+ ॥ आहिद्यावापृथिवीऽअग्नऽउभेसदापुत्रोनमातराततंथ । प्रयाह्यच्छोशतोयविष्ठाथावहसहस्येहदेवान्+ ॥ २९ ॥ ( १०।१।२ ) पिप्रीहिदेवाँऽउशतोयविष्ठविद्वाँऽऋतूँऽऋतुपतेयजेह । येदैव्याऽऋत्विजस्तेभिरग्नेत्वंहोतॄणामस्यायजिष्ठः ॥ वेषिहोत्रमुतपोत्रंजनानांमंधातासिद्रविणोदाऽऋतावा । स्वाहावयंकृणवामाहवींषिदेवोदे

॥ ३३ ॥

---

दशमेमंडलेदशानुवाकाः । तत्रप्रथमेनुवाकेषोडससूक्तानि । ( १०।१।१ ) अग्रेबृहन्नितिसप्तर्चस्यसूक्तस्याप्त्यस्त्रितोग्निस्त्रिष्टुप् । ( १०।१।२ ) पिप्रीहीतिसप्तर्चस्यसूक्तस्याप्त्यस्त्रितोग्निस्त्रिष्टुप् ।

वान्यंजत्वग्निरर्हन् ॥ आदेवानामपिपंथांमगन्मयच्छक्नवांमतदनुप्रवोळ्हुं । अग्निर्विद्वान्त्सयंजात्सेदुहोतासोऽअध्वरा न्त्सऽऋतून्कल्पयाति ॥ यद्वोवयंप्रमिनामंव्रतानिंविदुषांदेवाऽअविंदुष्टरासः । अग्निष्टद्विश्वमापृंणातिविद्वान्येभिर्देवाँऽऋतुभिःकल्पयाति ॥ यत्पाकत्रामनंसादीनदक्षानयज्ञस्यंमन्वतेमर्त्यासः । अग्निष्टद्धोतांक्रतुविद्विजानन्यजिष्ठोदेवाँऽऋतुशोयंजाति ॥ विश्वेषांह्यध्वराणामनींकंचित्रंकेतुंजनितात्वाजजान । सऽआयंजस्वनृवतीरनुक्षाःस्पार्हाऽइषःक्षुमतींविश्वजंन्याः ॥ यंत्वाद्यावापृथिवीयंत्वापस्त्वष्टायंत्वासुजनिमाजजान । पंथामनुप्रविद्वान्पितृयाणंद्युमदग्नेसमिधानोविभांहि ॥ ३० ॥ ( १०।१।३ ) इनोराजन्नरतिःसमिद्धोरौद्रोदक्षायसुषुमाँऽअंदर्शि । चिकिद्विभातिभासाबृहतासिक्नीमेतिरुशंतीमपाजंन् ॥ कृष्णांयदेनींमभिवर्पसाभूज्जनयन्योषांबृहतःपितुर्जां । ऊर्ध्वंभानुंसूर्यस्य स्तभायन्दिवोवसुभिररतिर्विभांति ॥ भद्रोभद्रयासचंमानऽआग्गात्स्वसांरंजारोऽअभ्येतिपश्चात् । सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्नुशद्भिर्वर्णैरभिराममस्थात् ॥ अस्ययामांसोबृहतोनवग्नूनिंधानाऽअग्नेःसख्युःशिवस्य । ईड्यस्यवृष्णोबृहतःस्वासोभामासोयामन्नक्तवश्चिकित्रे ॥ स्वनानयस्यभामासःपवंतेरोचमानस्यबृहतःसुदिवंः । ज्येष्ठेभिर्यस्तेजिष्ठैःक्रीळुमद्भिर्वर्षिष्ठेभिर्भानुभिर्नक्षतिद्यां ॥ अस्यशुष्मासोददृशानपवेर्जेहमानस्यस्वनयन्नियुद्भिः । प्रत्नेभिर्योरुशद्भिर्देव

( १ नात्रस्वाहाकारःकिंतुमंत्रांतएवहविःप्रक्षेपः । ) ( १०।१।३ ) इनोराजन्नितिसप्तर्चस्यसूक्तस्यात्यत्रितोग्निस्त्रिष्टुप् ।

तमोविरेभद्भिररतिर्भातिविभ्वा ॥ सऽआवक्षिमहिनऽआचंसत्सिदिवस्पृथिव्योररतिर्युवत्योः । अग्निःसुतुकःसुतुकेभिरश्वैरभस्वद्भीरभस्वाँऽएहगम्याः ॥ २१ ॥ ( १०।११४ ) प्रतेयक्षिप्रतऽइयर्मिमन्मभुवोयथावंद्योनोहवेषु । धन्वन्निवप्रपाऽअसित्वमग्नऽइयक्षवेपूरवेप्रत्नराजन् ॥ यंत्वाजनासोऽअभिसंचरंतिगावऽउष्णमिवव्रजंयविष्ठ । दूतोदेवानामसिमर्त्यानामंतर्महाँश्चरसिरोचनेन ॥ शिशुंनत्वाजेन्यंवर्धयंतीमाताबिभर्तिसचनस्यमाना । धनोरधिप्रवतायासिहर्यन्जिगीषसेपशुरिवावसृष्टः ॥ मूराऽअमूरनवयाचिकित्वोमहित्वमग्नेत्वमंगवित्से । शयेवव्रिश्चरतिजिह्वयादन्रेरिह्यतेयुवतिंविश्पतिःसन्[+] ॥ कूचिज्जायतेसनयासुनव्योवनेतस्थौपलितोधूमकेतुः । अस्नातापोवृषभोनप्रवेतिसचेतसोयंप्रणयंतमर्ताः ॥ तनूत्यजेवतस्करावनर्गूरशनाभिर्दशभिरभ्यधीतां । इयंतेऽअग्नेनव्यसीमनीषायुक्ष्वारथंनशुचयद्भिरंगैः ॥ ब्रह्मचतेजातवेदोनमश्चेयंचगीःसदामिद्वर्धनीभूत् । रक्षाणोऽअग्नेतनयानितोकारक्षोतनस्तन्वोऽअप्रयुच्छन् ॥ २२ ॥ ( १०।११५ ) एकःसमुद्रोधरुणोरयीणामस्मद्धृदोभूरिजन्माविचष्टे । सिषक्त्यूधर्निण्योरुपस्थऽउत्सस्यमध्येनिहितंपदंवेः[+] ॥ समानंनीळंवृषणोवसानाःसंजग्मिरेमहिषाऽअर्वतीभिः । ऋतस्यपदंकवयोनिपांतिगुहानामानिदधिरेपराणि ॥ ऋतायिनीमायिनीसंदधातेमित्वाशिशुंजज्ञतुर्वर्धयंती । विश्वस्यनाभिंचरतोध्रुवस्यकवेश्चित्तं



---

( १०।११४ ) प्रतइतिसप्तर्चस्यसूक्तस्याप्त्यस्त्रितोग्निस्त्रिष्टुप् । ( १०।११५ ) एकःसमुद्रइतिसप्तर्चस्यसूक्तस्याप्त्यस्त्रितोग्निस्त्रिष्टुप् ।

तुंमनंसावियंतः ॥ ऋतस्यहिर्वर्तनयःसुजातमिषोवाजायप्रदिवःसचंते । अधीवासंरोदसीवावसानेघृतैरन्नैर्वावृधाते मधूनां ॥ सप्तस्वसॄररुषीर्वावशानोविद्वान्मध्वऽउज्जभारादृशेकं । अंतर्येमेऽअंतरिक्षेपुराजाऽइच्छन्वव्रिमविदत्पूषण स्य ॥ सप्तमर्यादाःकवयस्ततक्षुस्तासामेकामिदभ्यंहुरोगात् । आयोर्हस्कंभऽउपमस्यनीळेपथांविसर्गेधरुणेषुतस्थौ ॥ असच्चसच्चपरमेव्योमन्दक्षस्यजन्मन्नदितेरुपस्थे । अग्निर्हनःप्रथमजाऽऋतस्यपूर्वऽआयुनिवृषभश्चधेनुः+ ॥ २३ ॥ इतिसप्तमाष्टकेपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥

त्रिपंचाशाध्यायेवर्गाः २३ सूक्तानि १९ ऋचः १८९ ॥ त्यागः ॥ पवमानायसोमाये. १५४ अग्नयइदं. ३५ ॥ इतिसप्तमेपंचमः ॥

अयंस्वस्तिप्रकेतुनानवत्रिशिरास्त्वाष्ट्रस्तृचोंत्यऐंद्रआपोहिसिंधुद्वीपोवांवरीषआपंगायत्र्यनुष्टुबंतंपंचमीवर्ध मानासप्तमीप्रतिष्ठौचित्षळूनावैवस्वतयोर्यमयम्योःसंवादःषष्ठच्युग्भिर्यमीमिथुनार्थयमंप्रोवाचसतांनवमीयु ग्भिरनिच्छन्प्रत्याचष्टेवृषानवांगिर्हविर्धानआग्नेयंतुत्रित्रिष्टुबंतंद्यावायुजेपंचविवस्वान्वादित्योहाविर्धानंजग त्यंतंपरेयिवांसंषोळशयमोयामंषष्ठीलिंगोक्तदेवतापराश्चतिस्रःपित्र्यावातृचःश्वभ्यांपराऽअनुष्टुभौबृहत्युपां त्यायामायनाःपरेपंचोदीरतांषळूनाशंखःपित्र्यंजगत्येकादशीमैनंदमनऽआग्नेयंचतुरनुष्टुबंतंत्वष्टादेवश्रवाद्वे सरण्यूदेवतंपौष्ण्यश्चतस्रःसारस्वत्यस्तिस्रःपंचाप्योदप्सस्तिस्रःसौम्योवांत्येअनुष्टुभाउपांत्यापुरस्ताद्बृहतीवापरं

मृत्योःसंकुसुकश्चतस्रोमृत्युदेवताःपराधात्रीपरात्वाष्ट्रीपराःपितृमेधाएकादशीप्रस्तारपङ्क्तिर्जगत्युपांत्यांत्यानुष्टुप् प्राजापत्यावासानिरुक्ता ॥ ६ ॥

॥ हरिःॐम् ॥ ( १०।१।६ ) अयंसयस्यशर्मन्नवोभिरग्नेरेधतेजरिताभिष्टौ । ज्येष्ठेभिर्योभानुभिर्ऋषूणांपर्येतिपरिवीतोविभावा ॥ योभानुभिर्विभावाविभात्यग्निर्देवेभिर्ऋतावाजस्रः । आयोविवायसख्यासखिभ्योपरिह्वृतोऽअत्योनसप्तिः ॥ ईशेयोविश्वस्यादेववीतेरीशेविश्वायुरुषसोव्युष्टौ । आयस्मिन्मनाहवींष्यग्नावरिष्टरथःस्कभ्नातिशूषैः+ ॥ शूषेभिर्वृधोजुषाणोऽअर्कैर्देवाँऽअच्छारघुपत्वाजिगाति । मंद्रोहोतासजुह्वा३ यजिष्ठःसंमिश्लोऽअग्निराजिघर्तिदेवान्+ ॥ तमुस्रामिंद्रंनरेजमानमग्निंगीर्भिर्नमोभिराकृणुध्वं । आयंविप्रासोमतिभिर्गृणंतिजातवेदसंजुह्वंसहानां ॥ संयस्मिन्विश्वावसूनिजग्मुर्वाजेनाश्वाःसप्तीवंतऽएवैः । अस्मेऽऊतीरिंद्रवाततमाऽअर्वाचीनाऽअग्नऽआकृणुष्व ॥ अधाह्यग्नेमह्नानिषद्यासद्योजज्ञानोहव्योबभूथ । तंतेदेवासोऽअनुकेतमायन्नधावर्धतप्रथमासऽऊमाः ॥ १ ॥ ( १०।१।७ ) स्वस्तिनोदिवोऽअग्नेपृथिव्याविश्वायुर्धेहियजथायदेव । सचेमहितवदस्मप्रकेतैरुरुष्याणऽउरुभिर्देवशंसैः ॥ इमाऽअग्नेमतयस्तुभ्यंजातागोभिरश्वैरभिगृणंतिराधः । यदातेमर्तोऽअनुभोगमानड्वसोदधानोमतिभिःसुजात ॥ अग्नि



( १०।१।६ ) अयंसइतिसप्तर्चस्यसूक्तस्याप्त्यस्त्रितोग्निस्त्रिष्टुप् । ( १०।१।७ ) स्वस्तिनइतिसप्तर्चस्यसूक्तस्याप्त्यस्त्रितोग्निस्त्रिष्टुप् ।

मन्येपितरमग्निमापिमग्निंभ्रातरंसदमित्सखायं । अग्नेरनीकंबृहतःसंपर्यदिविशुक्रंयजतंसूर्यस्य ॥ सिध्राऽअग्नेधियो ऽअस्मेसनुत्रीर्यंत्रायसेदमऽआनित्यंहोता । ऋतावासरोहिदश्वःपुरुक्षुर्द्युभिरस्माऽअहभिर्वामस्तु ॥ द्युभिर्हितमित्र मिवप्रयोगंप्रत्नमृत्विजमध्वरस्यजारं । बाहुभ्यामग्निमायवोजनंतविक्षुहोतारंन्यसादयंत ॥ स्वयंयजस्वदिविदेवदे वान्किंतेपाकःकृणवदप्रचेताः । यथायजऽऋतुभिर्देवदेवानेवायजस्वतन्वंसुजात ॥ भवानोऽअग्नेवितोतगोपाभवावय स्कृदुतनोवयोधाः । रास्वाचनःसुमहोहव्यदातिंत्रास्वोतनस्तन्वो३ अप्रयुच्छन् ॥ २ ॥ ( १०।१।८ ) प्रकेतुनाबृह तायात्यग्निरारोदसीवृषभोरोरवीति । दिवश्चिदंताँऽउपमाँऽउदानळपामुपस्थेमहिषोववर्ध ॥ मुमोदगर्भोवृषभःककु द्मानस्रेमावत्सःशिमीवाँऽअरावीत् । सदेवतात्युद्यतानिकृण्वन्त्स्वेषुक्षयेषुप्रथमोजिगाति ॥ आयोमूर्धानंपित्रोररं ब्धन्यध्वरेदधिरेसूरोऽअर्णः । अस्यपत्मन्नरुषीरश्वबुध्नाऽऋतस्ययोनौतन्वोजुषंत ॥ उषऽउषोहिवसोऽअग्रमेषित्वंय मयोरभवोविभावा । ऋतायसप्तदधिषेपदानिजनयन्मित्रंतन्वे३ स्वायै ॥ भुवश्चक्षुर्महऽऋतस्यगोपाभुवोवरुणोयदृता यवेषि । भुवोऽअपांनपाज्जातवेदोभुवोदूतोयस्यहव्यंजुजोषः ॥ ३ ॥ भुवोयज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचसे शिवाभिः । दिविमूर्धानंदधिषेस्वर्षांजिह्वामग्नेचकृषेहव्यवाहं ॥ अस्यत्रितःक्रतुनावव्रेऽअंतरिच्छन्धीतिंपितुरेवैःपरं

---

( १०।१।८ ) प्रकेतुनेतिनवर्चस्यसूक्तस्यत्वाष्ट्रस्त्रिशिराअग्निःअंत्यतृचस्यद्रास्त्रिष्टुप् ।

स्य । सचस्यमानःपित्रोरुपस्थेंजामिब्रुवाणऽआयुधानिवेति ॥ सपित्र्याण्यायुधानिविद्वानिंद्रेषितऽआप्त्योऽअभ्ययुध्यत् । त्रिशीर्षाणंसप्तरश्मिंजघन्वान्त्वाष्ट्रस्यचिन्निःससृजेत्रितोगाः+ ॥ भूरीदिंद्रऽउदिनंक्षंतमोजोवाभिनत्सत्पतिर्मन्यमानं । त्वाष्ट्रस्यचिद्विश्वरूपस्यगोनामाचक्राणस्त्रीणिशीर्षापरावर्क् ॥ ४ ॥ ( १०।१।९ ) आपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन । महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः । उशतीरिवमातरः ॥ तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ । आपोजनयथाचनः ॥ शंनोदेवीरभिष्टयऽआपोभवंतुपीतये । शंयोरभिस्रवंतुनः ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनां । अपोयाचामिभेषजं+ ॥ अप्सुमेसोमोऽअब्रवीदंतर्विश्वानिभेषजा । अग्निंचविश्वशंभुवं ॥ आपःपृणीतभेषजंवरूथंतन्वे३ममं । ज्योक्चसूर्यंदृशे+ ॥ इदमापःप्रवहतयत्किंचदुरितंमयि । यद्वाहमभिदुद्रोहयद्वाशेपऽउतानृतं ॥ आपोऽअद्यान्वचारिषंरसेनसमगस्महि । पयस्वानग्नऽआगहितंमासंसृजवर्चसा ॥ ( परिशिष्टं ॥ ससुषीस्तदपसोदिवानक्तंचससुषीः । वरेण्यक्रतूरहमादेवीरवसेहुवे ) ॥ ५ ॥ ( १०।१।१० ) ओचि

---

(१०।१।९) आपोहिष्ठेतिनवर्चस्यसूक्तस्यांवरीषःसिंधुद्वीपआपोगायत्रीपंचमीवर्धमानासप्तमीप्रतिष्ठांत्येद्वेअनुष्टुभौ। आपोहिसिंधुद्वीपोवांवरीषइत्येवमनुक्रमण्यांसिंधुद्वीपस्यपाक्षिकत्वस्वीकारेपूर्वोक्तस्त्रिशिराःप्राप्नोतितथापिप्रयोक्तृभिःसिंधुद्वीपएवाद्रियते। (१०।१।१०)ओचिदितिचतुर्दशर्चस्यसूक्तस्यनवमीवर्ज्यानामयुजांषष्ठ्याश्चवैवस्वतीयमीऋषिकायमोदेवताषष्ठीवर्ज्यानांयुजांनवम्याश्चवैवस्वतोयमीत्रिष्टुप् ।

त्सखायंसख्यावंवृत्यांतिरःपुरूचिदर्णवंजगन्वान् । पितुर्नपातमादधीतवेधाऽअधिक्षमिप्रतरंदीध्यानः ॥ नतेसखास
ख्यंवष्ट्येतत्सलक्ष्मायद्विषुरूपाभवाति । महस्पुत्रासोऽअसुरस्यवीरादिवोधर्तारऽउर्वियापरिख्यन् ॥ उशंतिघातेऽ
अमृतासऽएतदेकस्यचित्त्यजसंमर्त्यस्य । नितेमनोमनसिधाय्यस्मेजन्युःपतिस्तन्व१माविविश्याः ॥ नयत्पुराचकृमा
कद्धंनूनमृतावदंतोऽअनृतंरपेम । गंधर्वोऽअप्स्वप्याचयोषासानोनाभिःपरमंजामितन्नौ ॥ गर्भेनुनौजनितादंप
तीकर्देवस्त्वष्टासविताविश्वरूपः । नकिरस्यप्रमिनंतिव्रतानिवेदनावस्यपृथिवीऽउतद्यौः+ ॥ ६ ॥ कोऽअस्यवेदप्र
थमस्याह्नःकऽईंददर्शकऽइहप्रवोचत् । बृहन्मित्रस्यवरुणस्यधामकदुब्रवऽआहनोवीच्यानॄन्+ ॥ यमस्यमायम्यं१
कामऽआगन्त्समानेयोनौसहशेय्याय । जायेवपत्येतन्वंरिरिच्यांविचिद्वृहेवरथ्येवचक्रा+ ॥ नतिष्ठंतिननिमिषं
त्येतेदेवानांस्पशऽइहयेचरंति । अन्येनमदाहनोयाहितूयंतेनविवृहरथ्येवचक्रा+ ॥ रात्रीभिरस्माऽअहभिर्दशस्येत्सू
र्यस्यचक्षुर्मुहुरुन्मिमीयात् । दिवापृथिव्यामिथुनासबंधूयमीर्यमस्यविभृयादजामि ॥ आघातागच्छानुत्तरायुगानि
यत्रजामयःकृणवन्नजामि । उपबर्बृहिवृषभायबाहुमन्यमिच्छस्वसुभगेपतिंमत्+ ॥ ७ ॥ किंभ्रातासद्यदनाथंभवा
तिकिमुस्वसायन्निर्ऋतिर्निगच्छात् । काममूताबह्वे३तद्रपामितन्वामेतन्व१संपिपृग्धि ॥ नवाऽउतेतन्वातन्व१संपपृ
च्यांपापमाहुर्यःस्वसारंनिगच्छात् । अन्येनमत्प्रमुदःकल्पयस्वनतेभ्रातासुभगेवष्ट्येतत्+ ॥ वतोवतासियमनैवतेम

नोहृदयंचाविदाम । अन्याकिलत्वांकक्ष्येवयुक्तंपरिष्वजातेलिबुजेववृक्षं+ ॥ अन्यमूषुत्वंयम्यन्यऽउत्वांपरिष्वजाते लिबुजेववृक्षं । तस्यंवात्वंमनंऽइच्छासवातवाधाकृणुष्वसंविदंसुभंद्रां ॥ ८ ॥ ( १०।११।११ ) वृषावृष्णेदुदुहेदोहं सादिवःपयांसियह्वोऽअदितेरदाभ्यः । विश्वंसवेदवरुणोयथाधियासयज्ञियोयजतुयज्ञियाँऽऋतून्+ ॥ रपंद्गंधर्वीर प्यांचयोषंणानदस्यनादेपरिपातुमेमनंः । इष्टस्यमध्येऽअदितिर्निधातुनोभ्रातानोज्येष्ठःप्रथमोविवोचति ॥ सोचि न्नुभद्राक्षुमतीयशंस्वत्युषाऽउवासमनवेस्वंर्वती । यदीमुशंतमुशतामनुक्रतुमग्निंहोतारंविदथायजीजनन् ॥ अधत्यंद्र प्संविभ्वंविचक्षणंविराभंरदिषितःश्येनोऽअध्वरे । यदीविशोवृणतेंदस्ममार्याऽअग्निंहोतारमधधीरजायत ॥ सदां सिरण्वोयवंसेवपुष्यंतेहोत्राभिरग्नेमनुषःस्वध्वरः । विप्रस्यवायच्छंशमानऽउक्थ्यं१वाजंससवाँऽउपयासिभूरिभिः ॥ ९ ॥ उदीरयपितराजारऽआभगमियंक्षतिहर्यतोहृत्तऽइष्यति । विवक्तिवह्निःस्वपस्यतेमखस्तविष्यतेऽअसुरोवेपं तेमती+ ॥ यस्तेऽअग्नेसुमतिंमर्तोऽअक्षत्सहंसःसूनोऽअतिसप्रशृंण्वे । इषंदधांनोवहंमानोऽअश्वैरासद्युमाँऽअमंवान्भू षतिद्यून्+ ॥ यदंग्नऽएषासमितिर्भवांतिदेवीदेवेषुयजतायंजत्र । रत्नांचयद्विभजासिस्वधावोभागंनोऽअत्रवसुमंतं वीतात् ॥ श्रुधीनोऽअग्नेसदनेसधस्थेयुक्ष्वारथंममृतंस्यद्रवित्नुं । आनोवहरोदंसीदेवपुत्रेमाकिर्देवानामपंभूरिहस्याः

---

( १०।११।११ ) वृषावृष्णइतिनवर्चस्यसूक्तस्यांगिर्हविर्धानोऽग्निर्जगतीअंत्यास्तिस्रस्त्रिष्टुभः ।

॥ १० ॥ ( १०।१।१२ ) द्यावा॑हृ॒क्षामा॑प्रथ॒मेऽऋ॒तेना॑भिश्रा॒वेभ॑वतः॒सत्यवा॑चा ।  दे॒वोयन्मर्ता॑न्य॒जथा॑यकृ॒ण्वन्त्सी द॒द्धोता॑प्र॒त्यङ्स्वमसु॒ंयन्+ ॥ दे॒वोदे॒वान्प॑रि॒भूर्ऋ॒तेन॒वहा॑नोह॒व्यंप्र॑थ॒मश्चि॑कि॒त्वान् । धूमके॑तुः॒स॒मि॒धाभाऽऋ॒जीको॑मं द्रोहो॒ता॒नित्यो॑वा॒चायजी॑यान् ॥ स्वावृ॑ग्दे॒वस्या॒मृतं॒यदी॒गोरतो॑जा॒तासो॑धारयं॒तऽउ॒र्वी । विश्वे॑दे॒वाऽअनु॒तत्ते॒यजु॑र्गु॒र्दु हेयदेनी॑दि॒व्यंघृ॒तंवाः+ ॥ अर्चा॑मिवां॒वर्धा॑यापो॑घृतस्नू॒द्यावा॑भूमीश्रृ॒णु॒तंरो॑दसीमे । अहा॒यद्द्यावो॑सु॑नीति॒मय॒न्मध्वा॑नो ऽअत्र॑पि॒तरा॑शिशी॒तां ॥ किंस्वि॒न्नोराजा॑जगृ॒हेकद॒स्याति॑व्र॒तंचकृ॒माकोविवे॑द । मि॒त्रश्चि॒द्धिष्मा॑जुहुरा॒णोदे॒वाञ्छ्लोको॒ नया॒ताम॑पि॒वाजो॒ऽअस्ति ॥ ११ ॥ दुर्मं॒त्वत्रा॒मृत॑स्य॒नाम॒सल॑क्ष्मा॒यद्विषु॑रूपा॒भवा॑ति । य॒मस्य॒योम॒नव॑ते॒सुमं॒त्वग्ने॒तमृ॒ ष्वपा॒ह्यप्र॑युच्छन् ॥ यस्मि॒न्दे॒वावि॒दथे॑मा॒दयं॒तेवि॒वस्व॑तः॒सद॑नेधा॒रयं॑ते । सूर्ये॒ज्योति॒रद॑धुर्मा॒स्य॑१क्तून्परि॑द्योत॒निं॑चर॒ तो॒ऽअज॑स्रा ॥ यस्मि॒न्दे॒वामन्म॑निसं॒चर॑न्त्यपी॒च्ये॒३॑नव॒यम॑स्यविद्म । मि॒त्रोनो॒ऽअत्रादि॑ति॒रना॑गान्त्सवि॒तादे॒वोवरु॑णा यवोचत् ॥ श्रु॒धीनो॑ऽअग्ने॒सद॑ने॒स॒धस्थे॑युक्ष्वा॒रथ॑म॒मृत॑स्यद्रवि॒त्नुं । आनो॑वह॒रोद॑सीदे॒वपु॑त्रे॒माकि॑र्दे॒वाना॒मप॑भूरि॒हस्याः ॥ १२ ॥ ( १०।१।१३ ) यु॒जेवां॒ब्रह्म॑पू॒र्व्यंनमो॑भि॒र्विश्लोक॑ऽएतु॒पथ्ये॑वसू॒रेः । श्रृ॒ण्वंतु॒विश्वे॑ऽअ॒मृत॑स्यपु॒त्राऽआयेधा

---

(१०।१।१२) द्यावाहेतिनवर्चस्यसूक्तस्यहविर्धानोग्निस्त्रिष्टुप् । (१०।१।१३) युजेवामितिपंचर्चस्यसूक्तस्यादित्योविवस्वान्हविर्धान-त्रिष्टुवंत्याजगती ।

मानिदिव्यानितस्थुः ॥ यमेऽइवयतमानेयदैतंप्रवांभरन्मानुषादेवयंतः । आसीदतंस्वमुलोकंविदानेस्वासस्थेभवत
मिंदवेनः ॥ पंचपदानिरुपोऽअन्वरोहंचतुष्पदीमन्वेमिव्रतेन । अक्षरेणप्रतिमिमऽएतामृतस्यनाभावधिसंपुनामि ॥
देवेभ्यःकमवृणीतमृत्युंप्रजायैकममृतंनावृणीत । बृहस्पतिंयज्ञमकृण्वतऽऋषिंप्रियांयमस्तन्वं१प्रारिरेचीत् ॥ सप्तक्ष
रंतिशिशवेमरुत्वतेपित्रेपुत्रासोऽअप्यवीवतन्नृतं । उभेऽइदस्योभयस्यराजतऽउभेयतेतेऽउभयस्यपुष्यतः ॥ १३ ॥
( १०।१।१४ ) परेयिवांसंप्रवतोमहीरनुवहुभ्यःपंथामनुपस्पशानं । वैवस्वतंसंगमनंजनानांयमंराजानंहविषादुव
स्य ॥ यमोनोगातुंप्रथमोविवेदनैषागव्यूतिरपभर्तवाऽउं । यत्रानःपूर्वेपितरःपरेयुरेनाजज्ञानाःपथ्या३अनुस्वाः+ ॥
मातलीकव्यैर्यमोऽअंगिरोभिर्बृहस्पतिर्ऋक्कभिर्वावृधानः । यांश्चदेवावावृधुर्येचदेवान्त्स्वाहान्येस्वधयान्येमदंति ॥
इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृभिःसंविदानः । आत्वामंत्राःकविशस्तावहंत्वेनाराजन्हविषामादयस्व ॥ अं
गिरोभिरागहियज्ञियेभिर्यमवैरूपैरिहमादयस्व । विवस्वंतंहुवेयःपितातेस्मिन्यज्ञेवर्हिष्यानिषद्य ॥ १४ ॥ अंगिरसो
नःपितरोनवग्वाऽअथर्वाणोभृगवःसोम्यासः । तेषांवयंसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥ प्रेहिप्रेहिपथिभिः



( १०।१।१४ ) परेयिवांसमितिषोळशर्चस्यसूक्तस्यवैवस्वतोयमऋषिःयमोदेवताषष्ठ्याअंगिरःपित्रथर्वभृगुसोमाःदशम्यादितिसृणां
श्वानौत्रिष्टुप्त्रयोदशीचतुर्दशीषोडश्योनुष्टुभःपंचदशीबृहती ( प्रेहिप्रेहीत्यादितिसृणांपितृदेवतावैकल्पिकी )।

पूर्व्येभिर्यत्रानः पूर्वेपितरःपरेयुः । उभाराजानास्वधयामदंतायमंपश्यासिवरुणंचदेवं+ ॥ संगच्छस्वपितृभिःसंयमेनेष्टापूर्तेनंपरमेव्योमन् । हित्वायावद्यंपुनरस्तमेहिसंगच्छस्वतन्वासुवर्चाः ॥ अपेतवीतविचसर्पवातोस्माऽएतंपितरोलोकमंक्रन् । अहोभिरद्भिरक्तुभिर्व्यक्तंयमोददात्यवसानंमस्मै ॥ अतिद्रवसारमेयौश्वानौचतुरक्षौशबलौसाधुनापथा । अथापितृन्त्सुविदत्राँऽउपेहियमेनयेसधमादंमदंति ॥ १५ ॥ यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ । ताभ्यामेनंपरिदेहिराजन्त्स्वस्तिचास्माऽअनमीवंचधेहि ॥ उरूणसावसुतृपाऽउदुंबलौयमस्यदूतौचरतोजनाँऽअनु । तावस्मभ्यंदृशयेसूर्यायपुनर्दातामसुमद्येहभद्रं+ ॥ यमायसोमंसुनुतयमायजुहुताहविः । यमंहयज्ञोगच्छत्यग्निदूतोऽअरंकृतः ॥ यमायघृतवद्धविर्जुहोतप्रचतिष्ठत । सनोदेवेष्वायमद्दीर्घमायुःप्रजीवसे ॥ यमायमधुमत्तमंराज्ञेहव्यंजुहोतन । इदंनमऽऋषिभ्यःपूर्वजेभ्यःपूर्वेभ्यःपथिकृद्भ्यः ॥ त्रिकद्रुकेभिःपततिषळुर्वीरेकमिद्बृहत् । त्रिष्टुब्गायत्रीछंदांसिसर्वातायमऽआहिता ॥ १६ ॥ ( १०।१।१५ ) उदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्यासः । असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ इदंपितृभ्योनमोऽअस्त्वद्ययेपूर्वासोयऽउपरासऽईयुः । येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ आहंपितृन्त्सुविदत्राँऽअवित्सिनपातंचविक्रमणंचविष्णोः । बर्हिषदोयेस्व

---

( १०।१।१५ ) उदीरतामितिचतुर्दशर्चस्य सूक्तस्य यामायनः शंखः पितरस्त्रिष्टुबेकादशीजगती ।

धयासुतस्यभजंतपित्वस्तऽइहागमिष्ठाः ॥ बर्हिषदःपितरऽऊत्य१र्वागिमावोहव्याचकृमाजुषध्वं । तऽआगतावसाशंतमेनाथानःशंयोररपोदधात ॥ उपहूताःपितरःसोम्यासोबर्हिष्येषुनिधिषुप्रियेषु । तऽआगमंतुतऽइहश्रुवंत्वधिब्रुवंतुतेवंत्वस्मान् ॥ १७ ॥ आच्याजानुदक्षिणतोनिषद्येमंयज्ञमभिगृणीतविश्वे । माहिंसिष्टपितरःकेनचिन्नोयद्वऽआगःपुरुषताकराम ॥ आसीनासोऽअरुणीनामुपस्थेरयिंधत्तदाशुषेमर्त्याय । पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छततऽइहोर्जंदधात ॥ येनःपूर्वेपितरःसोम्यासोनूहिरेसोमपीथंवसिष्ठाः । तेभिर्यमःसंरराणोहवींष्युशन्नुशद्भिःप्रतिकाममत्तु ॥ येतातृषुर्देवत्राजेहमानाहोत्राविदःस्तोमतष्टासोऽअर्कैः । आग्नेयाहिसुविदत्रेभिरर्वाङ्सत्यैःकव्यैःपितृभिर्घर्मसद्भिः ॥ येसत्यासोहविरदोहविष्पाऽइंद्रेणदेवैःसरथंदधानाः । आग्नेयाहिसहस्रंदेववंदैःपरैःपूर्वैःपितृभिर्घर्मसद्भिः ॥ १८ ॥ अग्निष्वात्ताःपितरऽएहगच्छतसदःसदःसदतसुप्रणीतयः । अत्ताहवींषिप्रयतानिबर्हिष्यथारयिंसर्ववीरंदधातन ॥ त्वमग्नऽईळितोजातवेदोवाड्ढव्यानिसुरभीणिकृत्वी । प्रादाःपितृभ्यःस्वधयातेऽअक्षन्नद्धित्वंदेवप्रयताहवींषि ॥ येचेहपितरोयेचनेहयाँश्चविद्मयाँऽउंचनप्रविद्म । त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुषस्व ॥ येऽअग्निदग्धायेऽअनग्निदग्धामध्येदिवःस्वधयामादयंते । तेभिःस्वराळसुनीतिमेतांयथावशंतन्वंकल्पयस्व ॥ १९ ॥ ( १०।१।१६ ) मैनं



( १०।१।१६ ) मैनमितिचतुर्दशर्चस्यसूक्तस्ययामायनोदमनोग्निस्त्रिष्टुबंत्याश्चतस्रोनुष्टुभः ।

मग्नेविदहोमाभिशोचोमास्यत्वचंचिक्षिपोमाशरीरं । यदाश्रृतंकृणवोजातवेदोथेमेनंप्रहिणुतात्पितृभ्यः ॥ श्रृतंय
दाकरंसिजातवेदोथेमेनंपरिदत्तात्पितृभ्यः । यदागच्छात्यसुनीतिमेतामथादेवानांवशनीर्भवाति ॥ सूर्यंचक्षुर्गच्छतु
वातमात्माद्यांचगच्छपृथिवींचधर्मणा । अपोवागच्छयदितत्रतेहितमोषधीषुप्रतितिष्ठाशरीरैः ॥ अजोभागस्तपसातं
तंपस्वतंतेशोचिस्तंपतुतंतेऽअर्चिः । यास्तेशिवास्तन्वोजातवेदस्ताभिर्वहैनंसुकृतामुलोकं+ ॥ अवसृजपुनरग्नेपितृभ्यो
यस्तऽआहुतश्चरतिस्वधाभिः । आयुर्वसानऽउपवेतुशेषःसंगच्छतांतन्वाजातवेदः ॥ २० ॥ यत्तेकृष्णःशकुनऽआतु
तोदपिपीलःसर्पऽउतवाश्वापदः । अग्निष्टद्विश्वादगदंकृणोतुसोमश्चयोब्राह्मणाँऽआविवेश ॥ अग्नेर्वर्मपरिगोभिर्व्यय
स्वसंप्रोर्णुष्वपीवसामेदसाच । नेत्त्वाधृष्णुर्हरसाजर्हृषाणोदधृग्विधक्ष्यन्पर्यंखयाते ॥ इममग्नेचमसंसाविजिह्वरःप्रियो
देवानामुतसोम्यानां । एषयश्चमसोदेवपानस्तस्मिन्देवाऽअमृतामादयंते ॥ क्रव्यादमग्निंप्रहिणोमिदूरंयमराज्ञोगच्छ
तुरिप्रवाहः । इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन्+ ॥ योऽअग्निःक्रव्यात्प्रविवेशवोगृहमिमंपश्यन्नि
तरंजातवेदसं । तंहरामिपितृयज्ञायदेवंसघर्ममिन्वात्परमेसधस्थे ॥ २१ ॥ योऽअग्निःक्रव्यवाहनःपितृन्यक्षदृतावृ
धः । प्रेदुहव्यानिवोचतिदेवेभ्यश्चपितृभ्यऽआ ॥ उशंतस्त्वानिधीमह्युशंतःसमिधीमहि । उशन्नुशतऽआवहपितॄन्ह
विषेऽअत्तवे ॥ यंत्वमग्नेसमदहस्तमुनिर्वापयापुनः । क्रियाम्ब्वत्ररोहतुपाकदूर्वाव्यल्कशा ॥ शीतिकेशीतिकावतिह्ला

दिकेह्लादिकावति । मंडूक्या३ सुसंगमऽइमंस्वग्निंहर्षय ॥ २२ ॥ ( १०।२।१ ) त्वष्टांदुहित्रेवंहतुंकृणोतीतीदं
विश्वंभुवनंसमेति । यमस्यमातापर्युह्यमानामहोजायाविवस्वतोननाश ॥ अपांगूहन्नमृतांमर्त्येभ्यःकृत्वीसवर्णामदद‍ु
र्विवस्वते । उताश्विनावभरद्यत्तदासीदजंहादुद्वामिथुनासरण्यूः ॥ पूषात्वेतश्च्यावयतुप्रविद्वाननंष्टपशुर्भुवनस्यगो
पाः । सत्वैतेभ्यःपरिंददत्पितृभ्योग्निर्देवेभ्यःसुविदत्रियेभ्यः ॥ आयुर्विश्वायुःपरिंपासतित्वापूषात्वांपातुप्रपंथेपुर
स्तात् । यत्रासंतेसुकृतोयत्रतेययुस्तत्रंत्वादेवःसविताद्दधातु ॥ पूषेमाऽआशाऽअनुवेदसर्वाःसोऽअस्मॉऽअभंयतमेन
नेषत् । स्वस्तिदाऽआघृणिःसर्ववीरोप्रयुच्छन्पुरऽएतुप्रजानन् ॥ २३ ॥ प्रपंथेपथामजनिष्टपूषाप्रपंथेदिवःप्रपंथेपृथि
व्याः । उभेऽअभिप्रियतमेसधस्थेऽआचपराचचरतिप्रजानन् ॥ सरस्वतींदेवयंतोहवंतेसरस्वतीमध्वरेतायमाने ।
सरस्वतींसुकृतोऽअह्वयंतसरस्वतीदाशुषेवार्यंदात् ॥ सरस्वतियासरथंययाथस्वधाभिर्देविपितृभिर्मदंती । आसद्या
स्मिन्बर्हिषिमादयस्वानमीवाऽइषऽआधेह्यस्मे ॥ सरस्वतींयांपितरोहवंतेदक्षिणायज्ञमभिनक्षमाणाः । सहस्रार्घमि
ळोऽअत्रभागंरायस्पोषंयजमानेषुधेहि ॥ आपोऽअस्मान्मातरःशुंधयंतुघृतेननोघृतप्वःपुनंतु । विश्वंहिरिप्रंप्रवहंतिदेवी



द्वितीयेनुवाकेत्रयोदशसूक्तानि (१०।२।१) त्वष्टादुहित्रइतिचतुर्दशर्चस्यसूक्तस्ययामायनोवेदश्रवाऋषिःआद्ययोर्द्वयोःसरण्यूदेवतातत‌श्चत
सृणांपूषाततस्तिसृणांसरस्वतीततःपंचानामापस्त्रिष्टुप् अंत्येद्वेअनुष्टुभौ(द्रप्सश्चस्कन्देतितिसृणांसोमोदेवतावाउपांत्यापुरस्ताद्बृहतीवेतिच)।

रुदिदांभ्युःशुचिरापूतऽएमि ॥ २४ ॥ द्रप्सश्चस्कंदप्रथमाँऽअनुद्यूनिमंचयोनिमनुयश्चपूर्वः । समानंयोनिमनुसं चरंतंद्रप्संजुहोम्यनुसप्तहोत्राः ॥ यस्तेद्रप्सःस्कंदतियस्तेऽअंशुर्बाहुच्युतोधिषणायाऽउपस्थात् । अध्वर्योर्वापरिवायःप वित्रात्तंतेजुहोमिमनसावषट्कृतं ॥ यस्तेद्रप्सःस्कन्नोयस्तेऽअंशुरवश्चयःपरःस्रुचा । अयंदेवोबृहस्पतिःसंतंसिंचतुराध से ॥ पयस्वतीरोषधयःपयस्वन्मामकंवचः । अपांपयस्वदित्पयस्तेनमासहशुंधत ॥ २५ ॥ ( १०।२।२ ) परंमृत्यो ऽअनुपरेहिपंथांयस्तेस्वऽइतरोदेवयानात् । चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान्[+] ॥ मृत्योःपदं योपयंतोयदैतद्राघीयऽआयुःप्रतरंदधानाः । आप्यायमानाःप्रजयाधनेनशुद्धाःपूताभवतयज्ञियासः ॥ इमेजीवावि मृतैरावबृत्रन्नभूद्भद्रादेवहूतिर्नोऽअद्य । प्रांचोऽअगामनृतयेहसायद्राघीयऽआयुःप्रतरंदधानाः ॥ इमंजीवेभ्यःपरि धिंदधामिमैषांनुगादपरोऽअर्थमेतं । शतंजीवंतुशरदःपुरूचीरंतर्मृत्युंदधतांपर्वतेन ॥ यथाहान्यनुपूर्वंभवंतियथर्तवऽ ऋतवऽऋतुभिर्यंतिसाधु । यथानपूर्वमपरोजहात्येवाधातरायूंषिकल्पयैषां[+] ॥ २६ ॥ आरोहतायुर्जरसंवृणानाऽअ नुपूर्वंयतमानायतिष्ठ । इहत्वष्टासुजनिमासजोषादीर्घमायुःकरतिजीवसेवः ॥ इमानारीरविधवाःसुपत्नीरांजनेनस

---

( १०।२।२ ) परंमृत्योइतिचतुर्दशर्चस्यसूक्तस्ययामायनःसंकुसुकःआद्यानांचतसृणांमृत्युःपंचम्याधाताषष्ठ्यास्त्वष्टाशिष्टानांपितृमेधा स्त्रिष्टुपएकादशीप्रस्तारपंक्तिःत्रयोदशीजगत्यंत्येद्वेअनुष्टुभौ ( अंत्यायाःप्रजापतिर्वादेवता ) ।

पिंषासंविंशंतु । अनुश्रवोनमीवाःसुरत्ताऽआरोहंतुजनंयोयोनिमग्रे ॥ उदीर्ष्वनार्यभिजीवलोकंगतासुमेतमुपंशेषऽएहि । हस्तग्राभस्यंदिधिषोस्तवेदंपत्युर्जनित्वमभिसंबंभूथ ॥ धनुर्हस्तांदाददानोमृतस्यास्मेक्षत्रायवर्चसेबलाय । अत्रैव त्वमिहवयंसुवीराविश्वाःस्पृधोऽअभिमातीर्जयेम ॥ उपसर्पमातरंभूमिमेतामुरुव्यचसंपृथिवींसुशेवां । ऊर्णम्रदायुवतिर्दक्षिणावतऽएषात्वांपातुनिर्ऋतेरुपस्थात् ॥ २७ ॥ उच्छ्वंचस्वपृथिविमानिबांधथाःसूपायनास्मैभवसूपवंचना । मातापुत्रंयथासिचाभ्येनंभूमऽऊर्णुहि ॥ उच्छ्वंचमानापृथिवीसुतिष्ठतुसहस्रंमितऽउपहिश्रयंतां । तेगृहासोघृतश्चुतोभवंतुविश्वाहास्मैशरणाःसंत्वत्र ॥ उत्तेस्तभ्नामिपृथिवींत्वत्परीमंलोगंनिदधन्मोऽअहंरिषं । एतांस्थूणांपितरोधारयंतुतेत्रायमःसादनातेमिनोतु ॥ प्रतीचीनेमामहनीष्वाःपर्णमिवादधुः । प्रतीचींजग्रभावाचमश्वंरशनयायथा ॥ २८ ॥ इतिसप्तमाष्टकेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥

चतुःपंचाशाध्यायेवर्गाः २८ सूक्तानि १३ ऋचः १४१ ॥ त्यागः ॥ अग्नय. २० इंद्राये. ३ अग्न्यइ. ९ यमाये. यम्याइ. यमाये. यम्याइ. यमाये. ३ यम्या. ३ यमाये. यम्या. यमाये. यम्या. अग्नय. १८ हविर्धानाये. ५ यमाये. ५ अंगिरःपित्रथर्वभृगुसोमेभ्यः. यमाये. ३ श्वानाभ्यामि. ३ यमाये. ४ पितृभ्य. १४ अग्नय. १४ सरण्यव. २ पूष्ण. ४ सरस्वत्या. ३ अद्भ्य. ५ मृत्यव. ४ धात्रइ. त्वष्ट्रइ. पितृमेधाये. ८ ॥ इतिसप्तमेषष्ठः ॥

निवर्तध्वमष्टौमथितोभृगुर्वा(वा)रुणिर्भार्गवश्च्यवनोवापंगव्यंवानुष्टुभंमग्नीषोमीयोद्वितीयोर्धर्चः षष्ठीगायत्रीस
प्तोत्तराण्यैंद्रोविमदःप्राजापत्योवावासुक्रोवसुकृद्वाभद्रंदशाग्नेयंतुगायत्रमाद्यैकपदापादएववाशांत्यर्थःपरानुष्टु
बंत्येविराट्त्रिष्टुभांवाग्निंनाष्टावास्तारपांक्तंकुहपंचोनापुरस्ताद्वार्हतंत्रिष्टुबंतंत्वंत्याचिदानस्त्वंनोनुष्टुभौयजाम
हेसप्ताद्यांत्येत्रिष्टुभौपंचम्यभिसारिण्यैंद्रसोमंषळास्तारपांक्तंत्वाश्विन्योंत्यास्तिस्रोनुष्टुभौभद्रमेकादशसौम्यंप्रहि
नवपौष्णमानुष्टुभंमाद्याचतुर्थ्याऽउष्णिहावसत्सुचतुर्विंशतिरैंद्रोवसुक्रोविश्वोहिद्वादशैंद्रवसुक्रयोःसंवादऐंद्रः
सूक्तस्यप्रथमयेंद्रस्यस्नुषापरोक्षवदिंद्रमाहैंद्रस्ययुजःशेषाऋषेश्चतुर्थीचंवनेनाष्टौप्रदेवत्रापंचोनाकवषऽऐलूषंआ
पमपोनप्त्रीयंवानएकादशवैश्वदेवंप्रसुग्मंतानवपंचाद्याजगत्यः ॥ ७ ॥ ॥ ॥

॥ हरिः ओम् ( १०।२।३ ) निर्वर्तध्वंमानुगातास्मान्त्सिषक्तरेवतीः । अग्नीषोमापुनर्वसूऽअस्मेधारयतंरयिं ॥
पुनरेनानिवर्तयपुनरेनान्याकुरु । इंद्रऽएणानियंच्छत्वग्निरेनाऽउपाजंतु ॥ पुनरेतानिवर्ततामस्मिन्पुष्यंतुगोपतौ ।
इहैवाग्नेनिधारयेहतिष्ठतुयारयिः ॥ यन्नियानंन्ययनंसंज्ञानंयत्परायणं । आवर्तनंनिवर्तनंयोगोपाऽअपितंहुवे ॥

---

( १०।२।३ ) निवर्तध्वमित्यष्टर्चस्यसूक्तस्ययामायनोमथितऋषिःआपोदेवताःआद्यायाअवग्नीषोमाअनुष्टुप्षष्ठीगायत्री । ( अत्रसूक्ते
वारुणिर्भृगुर्भार्गवश्च्यवनश्चेमौपाक्षिकावृषीगौर्वादेवता ) ।

यऽउदानड्व्ययनंयऽउदानट्परायणं । आवर्तनंनिवर्तनमपिगोपानिवर्ततां ॥ आनिवर्तनिवर्तयपुनर्नऽइंद्रगादेहि ।
जीवाभिर्भुनजामहै ॥ परिवोविश्वतोदधऽऊर्जाघृतेनपयसा । येदेवाःकेचयज्ञियास्तेरय्यासंसृजंतुनः ॥ आनिवर्त
नवर्तयनिनिवर्तनवर्तय । भूम्याश्चतस्रःप्रदिशस्ताभ्यऽएनानिवर्तय ॥ १ ॥ ( १०।२।४ ) भद्रंनोऽअपिवातयमनः ॥
अग्निमीळेभुजांयविष्ठंशासामित्रंदुर्धरीतुं । यस्यधर्मन्त्स्वरेनीःसपर्यंतिमातुरूधः ॥ यमासाकृपनीळंभासाकेतुंवर्ध
यंति । भ्राजतेश्रेणिदन् ॥ अर्योविशांगातुरेतिप्रयदानड्दिवोऽअंतान् । कविरभ्रंदीद्यानः ॥ जुषद्धव्यामानुषस्यो
र्ध्वस्तस्थावृभ्वायज्ञे । मिन्वन्त्सद्मपुरऽएति ॥ सहिक्षेमोहविर्यज्ञःश्रुष्टीदस्यगातुरेति । अग्निंदेवावाशीमंतं ॥ २ ॥
यज्ञासाहंदुवऽइषेग्निंपूर्वस्यशेवस्य । अद्रेःसूनुमायुमाहुः ॥ नरोयेकेचास्मदाविश्वेत्तेवामऽआस्युः । अग्निंहविषावर्ध
तः ॥ कृष्णःश्वेतोरुषोयामोऽअस्यब्रध्नऽऋज्रऽउतशोणोयशस्वान् । हिरण्यरूपंजनिताजजान ॥ एवातेऽअग्नेविम
दोमनीषामूर्जोनपादमृतेभिःसजोषाः । गिरऽआवक्षत्सुमतीरियानऽइषमूर्जंसुक्षितिंविश्वमाभाः ॥ ३ ॥ ( १०।२।५ )
आग्निंनस्ववृक्तिभिर्होतारंत्वावृणीमहे । यज्ञायस्तीर्णबर्हिषेविवोमदेशीरंपावकशोचिषंविवक्षसे ॥ त्वामुतेस्वाभुवः



---

( १०।२।४ ) भद्रमितिदशर्चस्यसूक्तस्यैंद्रोविमदोग्निर्गायत्रीआद्यैकपदाविराट्द्वितीयानुष्टुवंत्येविराट्त्रिष्टुभौ (भद्रंनःप्रभृतिसप्तसूक्तेषु यऐंद्रोविमदःसप्राजापत्योवैकल्पिकः किंचवासुक्रोवसुकृद्वा ) । ( १०।२।५ ) आग्निंनेत्यष्टर्चस्यसूक्तस्यैंद्रोविमदोग्निरास्तारपंक्तिः ।

शुंभंत्यश्वंराधसः । वेतित्वामुंपसेचंनीविवोमदऽऋजीतिरग्नऽआहुतिर्वि० ॥ त्वेधर्माणऽआसतेजुहूभिःसिंचतीरिव ।
कृष्णारूपाण्यर्जुनाविवोमदेविश्वाऽअधिश्रियोधिषेवि० ॥ यमंग्नेमन्यसेरयिंसहसावन्नमर्त्य । तमानोवाजसातयेवि
वोमदेयज्ञेषुचित्रमाभंराववि० ॥ अग्निर्जातोऽअथर्वणाविददिश्वानिकाव्या । भुवद्दूतोविवस्वतोविवोमदेप्रियोयमस्यका
म्योवि० ॥४॥ त्वांयज्ञेष्वीळतेग्नेप्रयत्यंध्वरे । त्वंवसूनिकाम्याविवोमदेविश्वादधासिदाशुषेवि० ॥ त्वांयज्ञेष्वृत्विजंचारु
मग्नेनिषेदिरे । घृतप्रतीकंमनुषोविवोमदेशुक्रंचेतिष्ठमक्षभिर्वि० ॥ अग्नेशुक्रेणशोचिषोरुप्रथयसेबृहत् । अभिक्रंदन्वृषा
यसेविवोमदेगर्भंदधासिजामिषुवि० ॥५॥ (१०।२।६) कुहश्रुतऽइंद्रःकस्मिन्नद्यजनेमित्रोनश्रूयते । ऋषीणां
वायःक्षयेगुहावाचर्कृषेगिरा ॥ इहश्रुतऽइंद्रोऽअस्मेऽअद्यस्तवेवज्र्यृचीषमः । मित्रोनयोजनेष्वायशश्चक्रेऽअसा
म्या ॥ महोयस्पतिःशवसोऽअसाम्यामहोनृम्णस्यतूतुजिः । भर्तावज्रस्यधृष्णोःपितापुत्रमिवप्रियं ॥ युजानोऽअ
श्वावातस्यधुनीदेवोदेवस्यवज्रिवः । स्यंतापथाविरुक्मतासृजानःस्तोष्यध्वनः ॥ त्वंत्याचिद्वातस्याश्वागाऽऋज्रात्म
नावहध्यै । ययोर्देवोनमर्त्योयंतानकिर्विदाय्यः ॥ ६ ॥ अधग्मंतोशनापृच्छतेवांकदर्थानऽआगृहं । आजंग्मथुःपरा
काद्दिवश्चग्मश्चमर्त्यं ॥ आनंऽइंद्रपृक्षसेस्माकंब्रह्मोद्यतं । तत्त्वांयाचामहेवःशुष्णंयद्धन्नमानुषं ॥ अकर्मादस्युरभि

(१०।२।६) कुहश्रुतइतिपंचदशर्चस्यसूक्तस्यैंद्रोविमदइंद्रःपुरस्ताद्बृहतीपंचमीसप्तमीनवम्योनुष्टुभोत्यात्रिष्टुप् ।

सं. ६५

नोऽअमंतुरन्यव्रतोऽअमानुषः । त्वंतस्यामित्रहन्वधर्दासस्यदंभय ॥ त्वंनऽइंद्रशूरशूरैरुतत्वोतासोबर्हणा । पुरुत्रा तेविपूर्तयोनवंतक्षोणयोयथा ॥ त्वंतान्वृत्रहत्येचोदयोनृन्कार्पाणेशूरवज्रिवः । गुहायदीकवीनांविशांनक्षत्रशवसा ॥ ७ ॥ मक्षूतातऽइंद्रदानाप्नसऽआक्षाणेशूरवज्रिवः । यद्धशुष्णस्यदंभयोजातंविश्वंसयावभिः ॥ माकुध्र्यगिंद्रशूरवस्वीरस्मेभूवन्नभिष्टयः । वयंवयंतऽआसांसुम्नेस्यामवज्रिवः ॥ अस्मेतातऽइंद्रसंतुसत्याहिंसंतीरुपस्पृशः । विद्याम यासांभुजोधेनूनांनवज्रिवः ॥ अहस्तायदपदीवर्धतक्षाःशचीभिर्वेद्यानां । शुष्णंपरिप्रदक्षिणिद्विश्वायवेनिशिश्नथः ॥ पिबापिबेदिंद्रशूरसोमंमारिषण्योवसवानवसुःसन् । उतत्रायस्वगृणतोमघोनोमहश्चरायोरेवतस्कृधीनः ॥ ८ ॥ ( १०।२।७ ) यजामहऽइंद्रंवज्रदक्षिणंहरीणांरथ्यं१विव्रतानां । प्रश्मश्रुदोधुवदूर्ध्वथाभूद्विसेनाभिर्दयमानोविराधसा ॥ हरीन्वस्ययावनेविदेवस्विंद्रोमघैर्मघवावृत्रहाभुवत् । ऋभुर्वाजऽऋभुक्षाःपत्यतेशवोवक्षणौमिदासस्यनामचित् ॥ यदावज्रंहिरण्यमिदथारथंहरीयमस्यवहतोविसूरिभिः । आतिष्ठतिमघवासनश्रुतऽइंद्रोवाजस्यदीर्घश्रवसस्पतिः ॥ सोचिन्नुवृष्टिर्यूथ्या३स्वासचाँऽइंद्रःश्मश्रूणिहरिताभिप्रुष्णुते । अववेतिसुक्षयंसुतेमधूदिद्धूनोतिवातोयथावनं ॥ योवाचाविवाचोमृध्रवाचःपुरूसहस्राशिवाजघान । तत्तदिदस्यपौंस्यंगृणीमसिपितेवयस्तविषींवावृधेशवः ॥



---

( १०।२।७ ) यजामहइतिसप्तर्चस्यसूक्तस्यैंद्रोविमदइंद्रोजगत्याद्यांतेत्रिष्टुभौपंचम्यभिसारिणी ।

स्तोमैंतऽइंद्रविमदाऽअंजीजनन्नपूर्व्यंपुरुतमैंसुदानवे । विद्माह्यस्यभोजनमिनस्ययदापशुंनगोपाःकरामहे ॥ माकिं र्नऽएनासख्याविर्योषुस्तवंचेंद्रविमदस्यच्ऽऋषेः । विद्माहितेंप्रमतिंदेवजामिवदुस्मेतेंसंतुसख्याशिवानिं ॥ ९ ॥ ( १०।२।८ ) इंद्रसोममिमंपिबमधुमंतंचमूसुतं । अस्मेरयिंनिधारयविवोमदेंसहस्रिणंपुरूवसोविवक्षसे ॥ त्वांयज्ञे भिरुक्थैरुपह्व्येभिरीमहे । शचींपतेशचीनांविवोमदेश्रेष्ठंनोधेहिवार्यंवि० ॥ यस्पतिर्वार्योणामसिरध्रस्यचोदिता । इंद्रस्तोतॄणामंविताविवोमदेंद्विषोनःपाह्यंहसोवि० ॥ युवंशक्रामायाविनासमीचीनिरमंथतं । विमदेनयदींळिताना संत्यानिरमंथतं ॥ विश्वेदेवाऽअंकृपंतसमीच्योर्निष्पतंत्योः । नासंत्यावब्रुवन्देवाःपुनरावंहतादितिं ॥ मधुमन्मेप रायणंमधुमत्पुनरायनं । तानोंदेवादेवतंयायुवंमधुमतस्कृतं ॥ १० ॥ ( १०।२।९ ) भद्रंनोऽअपिवातयमनोदक्षमु क्रतुं । अधातेसख्येऽअंधसोविवोमदेरणन्गावोनयवसेविवक्षसे ॥ हृदिस्पृशंस्तऽआसतेविश्वेषुसोमधामसु । अधा कामाऽइमेममविवोमदेविंतिष्ठंतेवसूयवोवि० ॥ उतव्रतानिसोमतेप्राहंमिनामिपाक्या । अधापितेवसूनवेविवोमदें मृळानोंऽअभिचिद्वधाद्वि० ॥ समुप्रयंतिधीतयःसर्गासोवताऽइव । क्रतुंनःसोमजीवसेविवोमदेंधारयाचमसाँऽइव

---

( १०।२।८ ) इंद्रसोममितिषड्चस्यसूक्तस्यैंद्रोविमदइंद्रोंत्यतिसृणामश्विनावास्तारपंक्तिरंत्यास्तिस्रोनुष्टुभः। ( १०।२।९ ) भद्रमित्ये कादशर्चस्यसूक्तस्यैंद्रोविमदःसोमआस्तारपंक्तिः ।

वि० ॥ तवत्येसोमशक्तिभिर्निकामासोव्यृण्विरे । गृत्संस्यधीरांस्तवसोविवोमदेव्रजंगोमंतमश्विनंविवक्षसे ॥ ११ ॥
पशुंनंःसोमरक्षसिपुरुत्राविष्ठितंजगंत् । समाकृणोषिजीवसेविवोमदेविश्वांसंपश्यन्भुवनावि० ॥ त्वंनंःसोमविश्वतो
गोपाऽअदाभ्योभव । सेधंराजन्नपस्त्रिधोविवोमदेमानोंदुःशंसंऽईशतावि० ॥ त्वंनंःसोमसुक्रतुर्वयोधेयायजागृहि ।
क्षेत्रवित्तंरोमनुषोविवोमदेंद्रुहोनंःपाह्यंहसोवि० ॥ त्वंनोंवृत्रहंतमेंद्रंस्येंदोशिवःसखां । यत्सींहवंतेसमिथेविवोमदेयु
ध्यमानास्तोकसांतौवि० ॥ अयंघसतुरोमदऽइंद्रस्यवर्धतप्रियः । अयंकक्षीवंतोमहोविवोमदेमतिंविप्रस्यवर्धयद्वि० ॥
अयंविप्रांयदाशुषेवाजाँऽइयर्तिगोमंतः । अयंसप्तभ्यऽआवरंविवोमदेप्रांधंश्रोणंचतारिषद्वि० ॥ १२ ॥ ( १०।२।१० )
प्रद्यच्छांमनीषाःस्पार्हायंतिंनियुतंः । प्रदस्रानियुद्रंथःपूषाऽअंविष्टुमाहिंनः ॥ यस्यत्यन्महित्वंवाताप्यंमयंजनंः ।
विप्रऽआवंसद्धीतिभिश्चिकेंतसुष्टुतीनां ॥ सवेदसुष्टुतीनामिंदुर्नपूषावृषां । अभिप्सुरंःप्रुषायतिव्रजंनऽआप्रुंषायति ॥
मंसीमहित्वावयमस्माकंदेवपूषन् । मतीनांचसाधंनंविप्राणांचाधवं+ ॥ प्रत्यर्धिर्यज्ञानांमश्वहयोरथानां । ऋषिःस
योमनुर्हितोविप्रस्ययावयत्सखः+ ॥ १३ ॥ आधीषमाणायाःपतिःशुचायाश्चशुचस्यच । वासोवायोवीनामावासां
सिमर्मृजत् ॥ इनोवाजानांपतिरिनःपुष्टीनांसखां । प्रश्मश्रुंहर्यतोदूधोद्विवृथायोऽअदाभ्यः ॥ आतेरथस्यपूषन्नजा



( १०।२।१० ) प्रद्यच्छेतिनवर्चस्यसूक्तस्यैंद्रोविमदःपूषानुष्टुप्आद्याचतुर्थ्यावुष्णिहौ ।

धुरंववृत्युः । विश्वस्यार्थिनःसखासनोजाऽअनपच्युतः ॥ अस्माकंमूर्जारथंपूषाऽअविष्टुमाहिनः । भुवद्वाजानांवृध
ऽइमंनःश्रृणवद्धवं ॥ १४ ॥ ( १०।२।११ ) असत्सुमेजरितःसाभिवेगोयत्सुन्वतेयजमानायशिक्षं । अनाशीर्दाम
हमस्मिप्रहंतासत्यध्वृतंवृजिनायंतमाभुं+ ॥ यदीदहंयुधयेसंनयान्यदेवयून्तन्वा३ शूशुजानान् । अमातेतुम्रंवृषभंप
चानितीव्रंसुतंपंचदशंनिषिंचं ॥ नाहंतंवेदयऽइतिब्रवीत्यदेवयून्त्समरणेजघन्वान् । यदावाख्यंत्समरणमृघावदादि
द्धमेवृषभाप्रब्रुवंति ॥ यदज्ञातेषुवृजनेष्वासंविश्वेसतोमघवानोमऽआसन् । जिनामिवेत्क्षेमऽआसंतमाभुंप्रतंक्षिणा
पर्वतेपादगृह्यं ॥ नवाऽउमांवृजनेवारयंतेनपर्वतासोयदहंमनस्ये । ममस्वनात्कृधुकर्णोभयातऽएवेदनुद्यून्किरणःस
मेजात् ॥ १५ ॥ दर्शन्त्वत्रश्रृतपाँऽअनिंद्रान्बाहुक्षदःशरवेपत्यमानान् । घृषुंवायेनिनिदुःसखायमध्यून्वेषुपवयोव
वृत्युः ॥ अभूर्वौक्षीर्व्युं१आयुरानड्दर्षन्नुपूर्वोऽअपरोनुदर्षत् । द्वेपवस्तेपरितंनभूतोयोऽअस्यापारेरजसोविवेषं ॥ गा
वोयवंप्रयुताऽअर्योऽअक्षन्ताऽअपश्यंसहगोपाश्चरंतीः । हवाऽइदर्योऽअभितःसमायन्कियदासुस्वपतिश्छंदयाते ॥
संयद्वयंयवसादोजनानामहंयवादऽउर्वज्रेऽअंतः । अत्रायुक्तोवसातारमिच्छादथोऽअयुक्तंयुनजद्ववन्वान्+ ॥ अत्रे
दुमेमंससेसत्यमुक्तंद्विपाच्चयच्चतुष्पात्संसृजानि । स्त्रीभिर्योऽअत्रवृषणंपृतन्यादयुद्धोऽअस्यविभजानिवेदः ॥ १६ ॥

---

( १०।२।११ ) असत्स्वितिचतुर्विंशत्यृचस्यसूक्तस्यैंद्रोवसुक्रऋषिःत्रिष्टुप् ।

ऋक्सं. अ. ७ अ. ७ ॥ ४५ ॥

मंडलं १० अनु. २

यस्यानक्षादुहिताजात्वासकस्तांविद्वाँऽअभिमन्यातेऽअंधां । कतरोमेनिंप्रतितंमुचातेयऽईंवहातेयऽईंवावरेयात् ॥ कियंतीयोषामर्यतोवधूयोःपरिंप्रीतापन्यसावार्येण । भद्रावधूर्भवतियत्सुपेशाःस्वयंसामित्रंवनुतेजनेचित् ॥ पत्तोजंगारप्रत्यंचमत्तिशीर्ष्णाशिरःप्रतिदधौवरूथं । आसीनऽऊर्ध्वामुपसिक्षिणातिन्यङ्ङुत्तानामन्वेतिभूमिं ॥ बृहन्नच्छायोऽअपलाशोऽअर्वातस्थौमाताविषितोऽअत्तिगर्भः । अन्यस्यावत्संरिहतीमिमायकयाभुवानिदधेधेनुरूधः ॥ सप्तवीरासोऽअधरादुदायन्नष्टोत्तरात्तात्समजग्मिरन्ते । नवपश्चातात्स्थिविमंतऽआयन्दशप्राक्सानुवितिरंत्यश्नः ॥ १७ ॥ दशानामेकंकपिलंसमानंतंहिन्वंतिक्रतवेपार्याय । गर्भंमातासुधितंवक्षणास्ववेनंतंतुषयंतीबिभर्ति ॥ पीवानंमेषमपचंतवीरान्युप्ताऽअक्षाऽअनुदीवऽआसन् । द्वाधनुंबृहतीमप्स्व१ंतःपवित्रवंताचरतःपुनंता ॥ विक्रोशनासोविष्वंचऽआयन्पचातिनेमोनहिपक्षदर्धः । अयंमेदेवःसवितातदाहद्र्वन्नऽइद्वनवत्सर्पिरन्नः ॥ अपश्यंग्राममंवहमानमारादचक्रयास्वधयावर्तमानं । सिषक्त्यर्यःप्रयुगाजनानांसद्यःशिश्नाप्रमिनानोनवीयान् ॥ एतौमेगावौप्रमरस्ययुक्तौमोषुप्रसेधीर्मुहुरिन्ममंधि । आपश्चिदस्यविनशंत्यर्थंसूरश्चमर्कऽउपरोबभूवान् ॥ १८ ॥ अयंयोवज्रःपुरुधाविवृत्तोवःसूर्यस्यबृहतःपुरीषात् । श्रवऽइदेनापरोऽअन्यदस्तितदव्यथीजरिमाणस्तरंति ॥ वृक्षेवृक्षेनियतामीमयद्गौस्ततोवयःप्रपतान्पूरुषादः । अथेदंविश्वंभुवनंभयातऽइंद्रायसुन्वदृषयेचशिक्षत ॥ देवानांमानेप्रथमाऽअतिष्ठन्कृंतत्रादेषामुपरा

॥ ४५ ॥

ऽउदायन् । त्रयंस्तपंतिपृथिवीमनूपाद्वावृबूकंवहतः पुरीषं ॥ सातेजीवातुरुततस्यविद्धिमास्मैतादृगपगूहः समर्यें । आविःस्वःकृणुतेगूहंतेवुसंसपादुरस्यनिर्णिजोनमुच्यते ॥ १९ ॥ ( १०।२।१२ ) विश्वोह्य१न्योऽअरिराजगाममममे दहश्वशुरोनाजगाम । जक्षीयाद्धानाऽउतसोमंपपीयात्स्वाशितः पुनरस्तंजगायात् ॥ सरोरुवद्धृषभस्तिग्मशृंगोवर्ष्मं न्तस्थौवरिमन्नापृथिव्याः । विश्वेष्वेनंवृजनेषुपामियोमेकुक्षीसुतसोमः पृणाति ॥ अद्रिणातेमंदिनऽइंद्रतूयान्त्सुन्वं तिसोमान्पिबसित्वमेषां । पचंतितेवृषभाँऽअत्सितेषांपृक्षेणयन्मंघवन्हूयमानः ॥ इदंसुमेजरितराचिकिद्धिप्रतीपंशा पंनद्योवहंति । लोपाशः सिंहंप्रत्यंचमत्साः क्रोष्टावराहंनिरतक्तकक्षात् ॥ कथातऽएतदहमाचिकेतंगृत्सस्यपाकस्तवसो मनीषां । त्वंनोविद्वाँऽऋतुथाविवोचोयमर्धंतेमघवन्क्षेम्याधूः+ ॥ एवाहिमांतवसंवर्धयंतिदिवश्चिन्मेबृहतऽउत्तरा धूः । पुरूसहस्रानिशिशामिसाकमशत्रुंहिमाजनिताजजान ॥ २० ॥ एवाहिमांतवसंजज्ञुरुग्रंकर्मन्कर्मन्वृषणामिंद्रदेवाः । वधींवृत्रंवज्रेणमंदसानोपव्रजंमहिनादाशुषेवं ॥ देवासऽआयन्परशूँरबिभ्रन्वनावृश्चंतोऽअभिविड्भिरायन् । निसुद्र्व१

( १०।२।१२ ) विश्वोहीतिद्वादशर्चस्यसूक्तस्यआद्यायाइंद्रस्नुषाऋषिकाद्वितीयादिचतुर्थीवर्जानांयुजामिंद्रऋपिः चतुर्थीसहितानाम युजांवसुक्रऋषिः चतुर्थीवर्ज्यानांयुजांवसुक्रोदेवताशिष्टानामिंद्रस्त्रिष्टुप् । ( अत्रसूक्तेप्रथमर्चिइंद्रस्नुषार्षत्वेविकल्पंशौनकोमन्यतेतत्पक्षेतत्र वसुक्रोविज्ञेयः ) ।

ऋक्सं. अ. ७ अ. ७ ४६ ॥

मंडलं १० अनु. २

दधंतोवक्षणांसुयत्राकृपीटमनुतदंहंति ॥ शशःक्षुरंप्रत्यंचंजगाराद्रिंलोगेनव्यंभेदमारात् । बृहंतंचिद्दहतेरंधयानिव यंद्वत्सोवृषभंशूशुवानः ॥ सुपर्णऽइत्थानखमासिंषायावरुद्धःपरिपदंनसिंहः । निरुद्धश्चिन्महिषस्तर्ष्यावान्गोधात स्माऽअयथंकर्षदेतत्+ ॥ तेभ्योगोधाऽअयथंकर्षदेतद्येब्रह्मणःप्रतिपीयंत्यन्नैः । सिमऽउक्ष्णोवसृष्टाँऽअंदंतिस्वयंबला नितन्वःशृणानाः+ ॥ एतेशमीभिःसुशमीऽअभूवन्येहिंन्विरेतन्व१ःसोमऽउक्थैः । नृवद्वदन्नुपनोमाहिवाजान्दि विश्ववोदधिषेनामवीरः+ ॥ २१ ॥ ( १०।२।१३ ) वनेनवायोन्यंधायिचाकन्छुचिर्वांस्तोमोभुरणावजीगः । यस्ये दिंद्रःपुरुदिनेषुहोतानृणांनर्योनृतमःक्षपावान् ॥ प्रतेऽअस्याऽउषसःप्रापरस्यानृतौस्यामनृतमस्यनृणां । अनुत्रिशो कःशतमावहन्नृन्कुत्सेनरथोयोऽअसत्ससवान्+ ॥ कस्तेमदऽइंद्ररंत्योभूद्दुरोगिरोऽअभ्यु१ग्रोविधाव । कद्वाहोऽअ र्वागुपमामनीषाऽआत्वाशक्यामुपमंराधोऽअन्नैः ॥ कदुद्युम्नमिंद्रत्वावतोनृन्कयाधियाकरसेकन्नऽआगन् । मित्रोन सत्यऽउरुगायभृत्याऽअन्नेसमस्ययदसन्मनीषाः+ ॥ प्रेरयसूरोऽअर्थंनपारंयेऽअस्यकामंजनिधाऽइवग्मन् । गिरश्चये तेतुविजातपूर्वीर्नरऽइंद्रप्रतिशिक्षंत्यन्नैः ॥ २२ ॥ मात्रेनुतेसुमितेऽइंद्रपूर्वीद्यौर्मज्मनापृथिवीकाव्येन । वरायतेघृ तवंतःसुतासःस्वाद्मन्भवंतुपीतयेमधूनि ॥ आमध्वोऽअस्माऽअसिचन्नमत्रमिंद्रायपूर्णंसहिसत्यराधाः । सवावृधेव

॥ ४६ ॥

( १०।२।१३ ) वनेनेत्यष्टर्चस्यसूक्तस्यैंद्रोवसुक्रइंद्रस्त्रिष्टुप् ।

रिंमन्नापृथिव्याऽअभिकृत्वानर्यःपौंस्यैश्च ॥ व्यांनळिंद्रःपृतनाःस्वोजाऽआस्मैयतंतेसख्यायपूर्वीः । आस्मारथंनपृतं
नासुतिष्ठयंभद्रयासुमत्याचोदयासे ॥ २३ ॥ ( १०।३।१ ) प्रदेवत्राब्रह्मणेगातुरेत्वपोऽअच्छामनसोनप्रयुक्ति ।
महींमित्रस्यवरुणस्यधासिंपृथुज्रयंसेरीरधासुवृक्तिं+ ॥ अध्वर्यवोहविष्मंतोहिभूताच्छापऽइंतोशतीरुशंतः । अवया
श्चष्टेऽअरुणःसुपर्णस्तमास्यध्वमूर्मिमद्यासुहस्ताः ॥ अध्वर्यवोपऽइतासमुद्रमपांनपातंहविषायजध्वं । सवोददूर्मिम
द्यासुपूतंतस्मैसोमंमधुमंतंसुनोत ॥ योऽअनिध्मोदीदयदप्स्वं१तर्यंविप्रासऽईळतेऽअध्वरेषु । अपांनपान्मधुमतीरपो
दायाभिरिंद्रोवावृधेवीर्याय ॥ याभिःसोमोमोदतेहर्षतेचकल्याणीभिर्युवतिभिर्नमर्यः । ताऽअध्वर्योऽअपोऽअच्छा
परेहियदासिंचाऽओषधीभिःपुनीतात् ॥ २४ ॥ एवेद्यूनेयुवतयोनमंतयदीमुशन्नुशतीरेत्यच्छ । संजानतेमनसासं
चिकित्रेध्वर्यवोधिषणापश्चदेवीः+ ॥ योवोवृताभ्योऽअकृणोदुलोकंयोवोमह्याऽअभिशस्तेरमुंचत् । तस्माऽइंद्रायम
धुमंतमूर्मिंदेवमादनंप्रहिणोतनापः ॥ प्रास्मैहिनोतमधुमंतमूर्मिंगर्भोयोवःसिंधवोमध्वऽउत्सः । घृतपृष्ठमीड्यमध्वरे
ष्वापोरेवतीःशृणुताहवंमे ॥ तंसिंधवोमत्सरमिंद्रपानमूर्मिंप्रहेतयऽउभेऽइयर्ति । मदच्युतमौशानंनभोजांपरित्रितंतु
विचरंतमुत्सं ॥ आववृततीरधनुद्विधारागोषुयुधोनानियवंचरंतीः । ऋषेजनित्रीर्भुवनस्यपत्नीरपोवंदस्वसवृधःसयो

तृतीयेनुवाकेत्रयोदशसूक्तानि ( १०।३।१ ) प्रदेवत्रेति पंचदशर्चस्य सूक्तस्यैलूषः कवष आपस्त्रिष्टुप् ।

नीः ॥ २५ ॥ हिनोतानोऽअध्वरंदेवयज्याहिनोतब्रह्मसनयेधनानां । ऋतस्ययोगेविष्यध्वमूधःश्रुष्टीवरीर्भूतनास्मभ्यंमापः ॥ आपोरेवतीःक्षयथाहिवस्वःक्रतुंचभद्रंबिभृथामृतंच । रायश्चस्थःस्वपत्यस्यपत्नीःसरस्वतीतद्गृणतेवयोधात् ॥ प्रतियदापोऽअदृश्रमायतीर्घृतंपयांसिबिभ्रतीर्मधूनि । अध्वर्युभिर्मनसासंविदानाऽइंद्रायसोमंसुषुतंभरंतीः ॥ एमाऽअग्मन्रेवतीर्जीवधन्याऽअध्वर्यवःसादयतासखायः । निबर्हिषिधत्तनसोम्यासोपांनप्त्रासंविदानासंऽएनाः ॥ आग्मन्नापऽउशतीर्बर्हिरेदंन्यध्वरेऽअसदन्देवयंतीः । अध्वर्यवःसुनुतेंद्रायसोममभूदुवःसुशकादेवयज्या ॥ २६ ॥ (१०।३।२) आनोदेवानामुपवेतुशंसोविश्वेभिस्तुरैरवसेयजत्रः । तेभिर्वयंसुषखायोभवेमतरंतोविश्वादुरितास्याम ॥ परिचिन्मर्तोद्रविणंममन्यादृतस्यपथानमसाविवासेत् । उतस्वेनक्रतुनासंवदेतश्रेयांसंदक्षंमनसाजगृभ्यात् ॥ अधायिधीतिरससृग्रमंशास्तीर्थेनदस्ममुपयंत्यूमाः । अभ्यानश्मसुवितस्यशूषंनवेदसोऽअमृतानामभूम ॥ नित्यश्चाकन्यात्स्वपतिर्दमूनायस्माऽउदेवःसविताजजान । भगोवागोभिरर्यमेमनज्यात्सोऽअस्मैचारुश्छदयदुतस्यात् ॥ इयंसाभूयाऽउषसामिवक्षायद्धक्षुमंतःशवसासमायन् । अस्यस्तुतिंजरितुर्भिक्षमाणाऽआनःशग्मासऽउपयंतुवाजाः ॥ २७ ॥ अस्येदेषासुमतिःपप्रथानाभवत्पूर्व्याभूमनागौः । अस्यसनीळाऽअसुरस्ययोनौसमानऽआभरणेबिभ्रमा



---

(१०।३।२)आनोदेवानामित्येकादशर्चस्यसूक्तस्यैलूषःकवषोविश्वेदेवास्त्रिष्टुप् (भेदपक्षे-विश्वेदेवाः ९अश्वत्थगर्भाशमी १उबोग्नी १एवं ११)।

णाः ॥ किंस्विद्वनंकऽउसवृक्षऽआसयतोद्यावापृथिवीनिष्टतक्षुः । संतस्थानेऽअजरेऽइतऽऊतीऽअहानिपूर्वीरुषसोज
रंत ॥ नैतावदेनापरोऽअन्यदस्त्युक्षासद्यावापृथिवीबिभर्ति । त्वचंपवित्रंकृणुतस्वधावान्यदींसूर्यंनहरितोवहंति ॥
स्तेगोनक्षामत्येतिपृथ्वींमिहंनवातोविहवातिभूम । मित्रोयत्रवरुणोऽअज्यमानोग्निर्वनेनव्यसृष्टशोकं ॥ स्तरीर्यत्सूत
सद्योऽअज्यमानाव्यथिरव्यथीःकृणुतस्वगोपा । पुत्रोयत्पूर्वःपित्रोर्जनिष्टशम्यांगौर्जगारयद्धपृच्छान्+ ॥ उतकण्वंनृ
षदःपुत्रमाहुरुतश्यावोधनमादत्तवाजी । प्रकृष्णायरुशदपिन्वतोधर्ऋतमत्रनकिरस्माऽअपीपेत् ॥ २८ ॥ ( १०।३।३ )
प्रसुग्मंताधियसानस्यसक्षणिवरेभिर्वराँऽअभिषुप्रसीदतः । अस्माकमिंद्रऽउभयंजुजोषतियत्सोम्यस्यांधसोबुबोधति ॥
वींद्रयासिदिव्यानिरोचनाविपार्थिवानिरजसापुरुष्टुत । येत्वावहंतिमुहुरध्वराँऽउपतेसुवन्वंतुवग्वनाँऽअराधसः ॥
तदिन्मेच्छन्त्सद्वपुषोवपुष्टरंपुत्रोयज्जानंपित्रोरधीयति । जायापतिंवहतिवग्नुनासुमत्पुंसऽइद्भद्रोवहतुःपरिष्कृतः ॥
तदित्सधस्थमभिचारुदीधयगावोयच्छासन्वहतुंनधेनवः । मातायन्मंतुर्यूथस्यपूर्व्याभिवाणस्यसप्तधातुरिज्जनः ॥
प्रवोच्छारिरिचेदेवयुष्पदमेकोरुद्रेभिर्यातितुर्वणिः । जरावायेष्वमृतेषुदावनेपरिवऽऊमेभ्यःसिंचतामधु ॥ २९ ॥
निधीयमानमपगूह्ळमप्सुप्रमेदेवानांव्रतपाऽउवाच । इंद्रोविद्वाँऽअनुहित्वाचचक्षतेनाहमग्नेऽअनुशिष्टऽआगां ॥ अक्षेत्र

---



( १०।३।३ ) प्रसुग्मंतेतिनवर्चस्यसूक्तस्यैलूषःकवषइंद्रोजगतीअंत्याश्चतस्रस्त्रिष्टुभः ।

वित्क्षेत्रविदंह्यप्राट्सप्रैतिक्षेत्रविदानुशिष्टः । एतद्वैभद्रमनुशासनस्योतस्तुतिंविंदत्यंजसीनां ॥ अद्येदुप्राणीदममन्निमा हापींवृतोऽअधयन्मातुरूधः । एमैनमापजरिमायुवानमहेळन्वसुःसुमनाबभूव ॥ एतानिभद्राकलशक्रियामकुरुश्रवण ददंतोमघानि । दानऽइद्वोमघवानःसोऽअस्त्वयंचसोमोहृदियंबिभर्मि ॥ ३० ॥ इतिसप्तमाष्टकेसप्तमोऽध्यायः ॥ ७ ॥

पंचपंचाशाध्यायेवर्गाः ३० सूक्तानि १४ ऋचः १५३ ॥ त्यागः ॥ अग्न्योग्नीषोमाभ्या. अग्न्य.७ अग्नय.१८ इंद्राये.२५ अश्वि-भ्या.३ सोमाये.११ पूषण.९ इंद्राये.२५ वसुक्राये. इंद्राये.३ वसुक्राये. इंद्राये. वसुक्राये. इंद्राये. वसुक्राये. इंद्राये. वसुक्राये. इंद्राये.८ अग्न्य.१५ विश्वेभ्योदेवेभ्य.११ [ भे. प. विश्वेभ्योदे.९ अश्वत्थगर्भायैशम्याइ. उपसेग्नय. ] इंद्राये.९ ॥ इतिसप्तमेसप्तमः ॥

प्रमाद्यावैश्वदेव्यैंद्रःप्रगाथःपरागायत्र्योद्वेकुरुश्रवणस्यत्रासदस्यवस्यदानस्तुतिःपराभिर्मृतेमित्रातिथौराज्ञित त्स्नेहादृषिरुपमश्रवसंपुत्रमस्यव्यशोकयत्प्रावेपाःषळूनांमौजवान्वाक्षोक्षकृषिप्रशंसाचाक्षकितवनिंदाचसप्तमी जगत्यंवुध्रंलुशोधानाकोवैश्वदेवंतुद्विस्त्रिष्टुवंतंतूषासानक्तानमोद्वादशसौर्योभितपाःसौर्यंजागतंवैत्रिष्टुव्दशम्य स्मिन्नःपंचमुष्कवानिंद्रोयोवांपळूनाकाक्षीवतीघोषाश्विनंहित्रिष्टुवंतंरथंयांतंसमानंतृचंसुहस्त्योघौषेयोस्तेवैका दशकृष्णोच्छासेद्विस्त्रिष्टुवंतंत्वायातुत्रित्रिष्टुब्बादिंदिवस्परिद्वादशवत्सप्रिराग्नेयंतु ॥ ८ ॥ ॥

॥ हरिः ओम् ॥ ( १०।३।४ ) प्रमायुयुञ्जेप्रयुजोजनानांवहामिस्मपूषणमंतरेण । विश्वेदेवासोऽअधमामरक्षन्दुःशासुरागादितिघोषऽआसीत् ॥ संमातपंत्यभितःसपत्नीरिवपर्शवः । निबाधतेऽअमतिर्नग्नताजसुर्वेर्नवेवीयतेमतिः ॥ मूषोनशिश्नाव्यंदंतिमाध्यःस्तोतारंतेशतक्रतो । सकृत्सुनोमघवन्निंद्रमृळयाधापितेवनोभव ॥ कुरुश्रवणमावृणिराजानंत्रासदस्यवं । मंहिष्ठंवाघतामृषिः ॥ यस्यमाहरितोरथेतिस्रोवहंतिसाधुया । स्तवैसहस्रदक्षिणे ॥ १ ॥ यस्यप्रस्वादसोगिरऽउपमश्रवसःपितुः । क्षेत्रंनरण्वमूचुषे ॥ अधिपुत्रोपमश्रवोनपान्मित्रातिथेरिहि । पितुष्टेऽअस्मिवंदिता ॥ यदीशीयामृतानामुतवामर्त्यानां । जीवेदिन्मघवाममं ॥ नदेवानामतिव्रतंशतात्माचनजीवति । तथायुजाविवावृते ॥ २ ॥ ( १०।३।५ ) प्रावेपामाबृहतोमादयंतिप्रवातेजाऽइरिणेववृताना: । सोमस्येवमौजवतस्यभक्षोविभीदकोजागृविर्मह्यमच्छान् ॥ नमामिमेथनजिहीळऽएषाशिवासखिभ्यऽउतमह्यमासीत् । अक्षस्याहमेकपरस्यहेतोरनुव्रतामपजायामरोधं ॥ द्वेष्टिश्वश्रूरपजायारुणद्धिननाथितोविंदतेमर्डितारं । अश्वस्येवजरतोवस्न्यस्यनाहं

---

(१०।३।४) प्रमायुयुञ्जइतिनवर्चस्यसूक्तस्यैलूषःकवषऋषिःआद्यायाविश्वेदेवाःततोद्वयोरिंद्रःचतुर्थीपंचम्योःकुरुश्रवणःषष्ठ्यादिचतसृणामुपश्रवा आद्यात्रिष्टुप्द्वितीयाबृहतीतृतीयासतोबृहतीशेषाःषड्गायत्र्यः । ( १०।३।५ ) प्रावेपाइतिचतुर्दशर्चस्यसूक्तस्यमौजवानक्षऋषिःआद्यासप्तमीनवमीद्वादशीनामक्षादेवताःत्रयोदश्याःकृषिःशिष्टानामक्षनिंदादेवता।त्रिष्टुप्सप्तमीजगती ।

ऋक्सं.
अ. ७ अ. ८
॥ ४९ ॥

मंडलं १०
अनु. ३

विंदामिकितवस्यभोगं ॥ अन्येजायांपरिमृशंत्यस्ययस्यागृधद्वेदनेवाज्य१क्षः । पितामाताभ्रातरऽएनमाहुर्नजानी
मोनयताबद्धमेतं+ ॥ यदादीध्येनदविषाण्येभिःपरायद्भ्योवहीयेसखिभ्यः । न्युप्ताश्चबभ्रवोवाचमक्रतँऽएमीदेषांनि
ष्कृतंजारिणींव ॥ ३ ॥ सभामेतिकितवःपृच्छमानोजेष्यामीतितन्वा३शूशुजानः । अक्षासोऽअस्यवितिरंतिकामंप्र
तिदीव्नेदधतऽआकृतानि ॥ अक्षासऽइदंकुशिनोनितोदिनोनिकृत्वानस्तपनास्तापयिष्णवः । कुमारदेष्णाजयतःपुन
र्हणोमध्वासंपृक्ताःकितवस्यबर्हणा ॥ त्रिपंचाशःक्रीळतिव्रातऽएषांदेवऽइवसवितासत्यधर्मा । उग्रस्यचिन्मन्यवेनाना
मंतेराजाचिदेभ्योनमऽइत्कृणोति ॥ नीचावर्ततऽउपरिस्फुरंत्यहस्तासोहस्तवंतंसहंते । दिव्याऽअंगाराऽइरिणेन्यु
प्ताःशीताःसंतोहृदयंनिर्दहंति ॥ जायातप्यतेकितवस्यहीनामातापुत्रस्यचरतःक्वस्वित् । ऋणावाबिभ्यद्धनमिच्छमा
नोन्येषामस्तमुपनक्तमेति ॥ ४ ॥ स्त्रियंदृष्ट्वायकितवंततापान्येषांजायांसुकृतंचयोनिं । पूर्वाह्णेऽअश्वान्युयुजेहिबभ्रू
न्त्सोऽअग्नेरंतेवृषलःपपाद ॥ योवःसेनानीर्महतोगणस्यराजाव्रातस्यप्रथमोबभूव । तस्मैकृणोमिनधनारुणध्मिदशा
हंप्राचीस्तदृतंवदामि ॥ अक्षैर्मादीव्यःकृषिमित्कृषस्ववित्तेरमस्वबहुमन्यमानः । तत्रगावःकितवतत्रजायातन्मेविच
ष्टेसवितायमर्यः+ ॥ मित्रंकृणुध्वंखलुमृळतानोमानोघोरेणचरताभिधृष्णु । निवोनुमन्युर्विशतामरातिरन्योबभ्रू

॥ ४९ ॥

णांप्रसितौन्वस्तु ॥ ५ ॥ ( १०।३।६ ) अबुध्रमुत्यऽइंद्रवंतोऽअग्नयोज्योतिर्भरंतऽउषसोव्युंष्टिषु । महीद्यावापृथिवीचेततामपोद्यादेवानामवऽआवृणीमहे ॥ दिवस्पृथिव्योरवऽआवृणीमहेमातॄन्त्सिधून्पर्वतान्छर्यणावतः । अनागास्त्वंसूर्यमुषासमीमहेभद्रंसोमःसुवानोऽअद्याकृणोतुनः ॥ द्यावानोऽअद्यपृथिवीऽअनागसोमहीत्रायेतांसुवितायमातरा । उषाऽउच्छंत्यपबाधतामघंस्वस्त्य१ग्निंसमिधानमीमहे ॥ इयंनऽउस्राप्रथमासुदेव्यंरेवत्सनिभ्योरेवतीव्युच्छतु । आरेमन्युंदुर्विदत्रस्यधीमहिस्वस्त्य१ग्निं० ॥ प्रयाःसिस्रतेसूर्यस्यरश्मिभिर्ज्योतिर्भरंतीरुषसोव्युंष्टिषु । भद्रानोऽअद्यश्रवसेव्युच्छतस्वस्त्य१ग्निं० ॥ ६ ॥ अनमीवाऽउषसऽआचरंतुनऽउदग्नयोजिहतांज्योतिषाबृहत् । आयुंक्षातामश्विनातूतुजिंरथंस्वस्त्य१ग्निं० ॥ श्रेष्ठंनोऽअद्यसवितर्वरेण्यंभागमासुवसहिरत्नधाऽअसि । रायोजनित्रींधिषणामुपब्रुवेस्वस्त्य१ग्निं० ॥ पिपर्तुमातदृतस्यप्रवाचनंदेवानांयन्मनुष्या३अमन्महि । विश्वाऽइदुस्राःस्पळुदेतिसूर्यःस्वस्त्य१ग्निं० ॥ अद्वेषोऽअद्यबर्हिषःस्तरीमणिग्राव्णांयोगेमन्मनःसाधऽईमहे । आदित्यानांशर्मणिस्थाभुरण्यसिस्वस्त्य१ग्निं० ॥ आनोबर्हिःसधमादेबृहद्दिविदेवाँऽईळेसादयासप्तहोतॄन् । इंद्रंमित्रंवरुणंसातयेभगंस्वस्त्य१ग्निं० ॥ ७ ॥ तऽआदित्याऽआगंतासर्वतातयेवृधेनोयज्ञमवतासजोषसः । बृहस्पतिंपूषणमश्विनाभगंस्वस्त्य१ग्निं० ॥ तन्नोदेवायच्छत

---

(१०।३।६) अबुध्रमितिचतुर्दशर्चस्यसूक्तस्यधानाकोलुशोविश्वेदेवाजगत्यंतेद्वेत्रिष्टुभौ(भेद-विश्वेदेवाः ३ उषसोग्निः २ विश्वेदेवाः ९ एवं १४)

ऋक्सं.
अ. ७ अ. ८
॥ ५० ॥

सुप्रवाचनंछर्दिरादित्याःसुभरंनृपाय्यं । पश्चैतोकायतनंयायजीवसेस्वस्त्यग्निं० ॥ विश्वेऽअद्यमरुतोविश्वऽऊती विश्वेभवंत्वग्नयःसमिद्धाः । विश्वेनोदेवाऽअवसागमंतुविश्वमस्तुद्रविणंवाजोऽअस्मे ॥ यंदेवासोवंथवाजसातौयं त्रायध्वेयंपिपृथात्यंहः । योवोगोपीथेनभयस्यवेदतेस्यामदेववीतयेतुरासः ॥ ८ ॥ ( १०।३।७ ) उषासानक्ताबृह तीसुपेशसाद्यावाक्षामावरुणोमित्रोऽअर्यमा । इंद्रंहुवेमरुतःपर्वताँऽअपऽआदित्यान्द्यावापृथिवीऽअपःस्वः* ॥ द्यौ श्चनःपृथिवीचप्रचेतसऽऋतावरीरक्षतामंहसोरिषः । मादुर्विदत्रानिर्ऋतिर्नऽईशततद्देवानामवोऽअद्यावृणीमहे ॥ विश्वस्मान्नोऽअदितिःपात्वंहसोमातामित्रस्यवरुणस्यरेवतः । स्वर्वज्ज्योतिरवृकंनशीमहितद्दे० ॥ ग्रावावदन्नपरक्षाँ सिसेधतुदुःष्वप्न्यंनिर्ऋतिंविश्वमत्रिणं । आदित्यंशर्ममरुतामशीमहितद्दे० ॥ एंद्रोबर्हिःसीदतुपिन्वतामिळाबृहस्पतिः सामभिर्ऋक्वोऽअर्चतु । सुप्रकेतंजीवसेमन्मधीमहितद्दे० ॥ ९ ॥ दिविस्पृशंयज्ञमस्माकमश्विनाजीराध्वरंकृणुतंसुम्नमिष्ट ये । प्राचीनरश्मिमाहुतंघृतेनतद्दे० ॥ उपह्वयेसुहवंमारुतंगणंपावकमृष्वंसख्यायशंभुवं । रायस्पोषंसौश्रवसायधीम हितद्दे० ॥ अपांपेरुंजीवधन्यंभरामहेदेवाव्यंसुहवमध्वरश्रियं । सुरश्मिंसोममिंद्रियंयमीमहितद्दे० ॥ सनेमतत्सुस नितासनित्वभिर्वयंजीवाजीवपुत्राऽअनागसः । ब्रह्मद्विषोविष्वगेनोभरेरततद्दे० ॥ येस्थामनोयज्ञियास्तेशृणोतनयद्वो

मंडलं १०
अनु. ३
॥ ५० ॥

( १०।३।७ ) उषासानक्तेतिचतुर्दशर्चस्यसूक्तस्यधानाकोलुशोविश्वेदेवाजगत्यंत्येद्वेत्रिष्टुभौ ( भेदपक्षे—विश्वेदेवाः १३ सविता १ एवं १४ ) ।

दे॒वा॑ऽई॒र्मंहे॑त॒दंदा॑तन । जै॒त्रं॑ऋतुं॑रयि॒मद्वी॑रव॒द्यशस्त॑द्दे॰ ॥ १० ॥ म॒हद॒द्यमं॑ह॒तामा॑वृ॑णीम॒हेवो॑दे॒वाना॑बृह॒तामं॑न॒र्वणा॑ । यथा॒वसुं॑वी॒रजा॑तं॒नशा॑महै॑तद्दे॒॰ ॥ म॒होऽअ॒ग्नेःसं॑मि॒धान॑स्य॒शर्म॑ण्यना॑गामि॒त्रेव॑रुणेस्व॒स्तये॑ । श्रेष्ठे॑स्यामसवि॒तुःसवी॑मनि॒तद्दे॒॰ ॥ येसं॑वि॒तुःस॒त्यसं॑वस्य॒विश्वे॑मि॒त्रस्य॑व्र॒तेव॑रुणस्य॒दे॒वाः । तेसौभ॑गंवी॒रव॒द्गोम॒दप्नो॒दधा॑तन॒द्रवि॑णंचि॒त्रम॒स्मे ॥ स॒वि॒ताप॒श्चाता॑त्सवि॒तापु॒रस्ता॑त्सवि॒तोत्त॒रात्ता॑त्सवि॒ताध॒रात्ता॑त् । स॒वि॒ता॒नः॑सुवतु॒सर्वता॑तिंसवि॒ता॒नो॑रासतां॒दी॒र्घमायुः॑ ॥ ११ ॥ ( १०।३।८ ) नमो॑मि॒त्रस्य॒वरु॑णस्य॒चक्ष॑सेम॒होदे॒वायत॒दृ॒तंस॑पर्यत । दू॒रे॒दृशे॑दे॒वजा॑तायके॒तवे॑दि॒वस्पु॒त्राय॒सूर्या॑यशंसत ॥ सामा॑स॒त्योक्तिः॒परि॑पातु॒विश्व॒तोद्यावा॒चयत्र॒तत॒नन्नहा॑निच । विश्व॑म॒न्यन्नि॒वि॑श॒ते॒यदे॒जं॑ति॒वि॒श्वाहापो॑वि॒श्वाहो॒दे॑ति॒सूर्यः॑ ॥ नते॒ऽअदे॑वःप्र॒दिवो॒निवा॑सतेयदे॑त॒शेभिः॑पत॒रैर॑थ॒र्यसि॑ । प्रा॒चीनं॑म॒न्यद॒नुं॑वर्तते॒रज॒ऽउद॒न्येन॒ज्योति॑षायासिसूर्य ॥ येनं॑सूर्य॒ज्योति॑षा॒बाध॑से॒तमो॒जग॑च्च॒विश्व॑मुदि॒यर्षि॑भा॒नुना॑ । तेना॒स्मद्विश्वा॒मा॑नि॑रा॒मना॑हुति॒मपा॒मीवा॒मप॑दु॒ःष्वप्न्यं॑सुव ॥ विश्व॑स्य॒हिप्रेषि॑तो॒रक्ष॑सिव्र॒तमहे॑ळयन्नु॒च्चर॑सिस्व॒धाऽअनुं॑ । यद॒द्यत्वा॑सूर्यो॒प॒ब्रवा॑महै॑तंनो॑दे॒वाऽअनुं॑मंसीरत॒क्रतुं॑ ॥ तंनो॒द्यावा॑पृथि॒वीतन्न॒ऽआप॒इंद्रः॑शृण्वंतु॒म॒रुतो॒हवं॒वचः॑ । माशूने॑भूम॒सूर्य॑स्यसं॒दृशि॑भ॒द्रंजीवं॑तोजर॒णाम॑शीमहि ॥ १२ ॥ वि॒श्वाहा॑त्वासु॒मन॑सः॒सु॒चक्ष॑सःप्र॒जाव॑न्तोऽअनमी॒वाऽअना॑गसः । उ॒द्यंतं॑त्वामित्रमहोदि॒वे

( १०।३।८ ) नमोमित्रस्येतिद्वादशर्चस्यसूक्तस्यसौर्योभितपाःसूर्योजगतीदशमीत्रिष्टुप् ।

दिवेज्योग्जीवाःप्रतिपश्येमसूर्य ॥ महिज्योतिर्बिभ्रतंत्वाविचक्षणभास्वंतंचक्षुषेचक्षुषेमयः । आरोहंतंबृहतःपाजस
स्परिवयंजीवाःप्रतिपश्येमसूर्य ॥ यस्यंतेविश्वाभुवनानिकेतुनाप्रचेरतेनिचविशंतेऽअक्तुभिः । अनागास्त्वेनहरिके
शसूर्याह्नाह्नानोवस्यसावस्यसोदिहि ॥ शंनोभवचक्षसाशंनोऽअह्नाशंभानुनाशंहिमाशंघृणेन । यथाशमध्वञ्छमसद्दु
रोणेतत्सूर्यद्रविणंधेहिचित्रं ॥ अस्माकंदेवाऽउभयायजन्मनेशर्मयच्छतद्विपदेचतुष्पदे । अदत्पिबदूर्जयमानमाशि
तंतदस्मेशंयोररपोदधातन ॥ यद्वोदेवाश्चकृमजिह्वयागुरुमनसोवाप्रयुतीदेवहेळनं । अरावायोनोऽअभिदुच्छुनायते
तस्मिन्तदेनोवसवोनिधेतन ॥ १३ ॥ ( १०।३।९ ) अस्मिन्नऽइंद्रपृत्सुतौयशस्वतिशिमीवतिक्रंदसिप्रावसातये ।
यत्रगोषाताधृषितेषुखादिषुविष्वक्पतंतिदिद्यवोनृषाह्ये ॥ सनःक्षुमंतंसदनेव्यूर्णुहिगोऽअर्णसंरयिमिंद्रश्रवाय्यं । स्या
मतेजयतःशक्रमेदिनोयथावयमुश्मसितद्वसोकृधि ॥ योनोदासऽआर्योवापुरुष्टुतादेवऽइंद्रयुधयेचिकेतति । अस्मा
भिष्टेसुषहाःसंतुशत्रवस्त्वयावयंतान्वनुयामसंगमे ॥ योदभ्रेभिर्हव्योयश्चभूरिभिर्योऽअभीकेवरिवोविन्नृषाह्ये । तं
विखादेसस्निमद्यश्रुतंनरमर्वाचमिंद्रमवसेकरामहे ॥ स्ववृजंहित्वामहमिंद्रशुश्रवानानुदंवृषभरध्रचोदनं । प्रमुंचस्व

( १०।३।९ ) अस्मिन्नइतिपंचर्चस्यसूक्तस्यमुष्कवानिंद्रइंद्रोजगती ।

परिकुत्सादिहागहिकिमुत्वावान्मुष्कयोर्बद्धऽआसते ॥ १४ ॥ ( १०।३।१० ) योवांपरिज्मासुवृदश्विनारथोदोषा
मुषासोहव्योहविष्मता । शश्वत्तमासस्तमुवामिदंवयंपितुर्ननामसुहवंहवामहे ॥ चोदयतंसूनृताःपिन्वतंधियऽउत्पुरं
धीरीरयतंतदुश्मसि । यशसंभागंकृणुतंनोऽअश्विनासोमंनचारुंमघवत्सुनस्कृतं ॥ अमाजुरश्चिद्भवथोयुवंभगोनाशो
श्चिदवितारापमस्यचित् । अंधस्यचिन्नासत्याकृशस्यचिद्युवामिदाहुर्भिषजारुतस्यचित् ॥ युवंच्यवानंसनयंयथारथं
पुनर्युवानंचरथायतक्षथुः । निष्टौग्र्यमूहथुरद्भ्यस्परिविश्वेत्तावांसवनेषुप्रवाच्या ॥ पुराणावांवीर्या३प्रब्रवाजनेथोहा
सथुर्भिषजामयोभुवा । तावांनुनव्यावसेकरामहेयंनासत्याश्रदरिर्यथादधत् ॥ १५ ॥ इयंवामह्वेशृणुतंमेऽअश्वि
नापुत्रायेवपितरामह्यंशिक्षतं । अनापिरज्ञाऽअसजात्यामतिःपुरातस्याऽअभिशस्तेरवस्पृतं ॥ युवंरथेनविमदायशुं
ध्युवंन्यूहथुःपुरुमित्रस्ययोषणां । युवंहवंवध्रिमत्याऽअगच्छतंयुवंसुषुतिंचक्रथुःपुरंधये ॥ युवंविप्रस्यजरणामुपेयुषःपु
नःकलेरकृणुतंयुवद्वयः । युवंवंदनमृश्यदादुदूपथुर्युवंसद्योविश्पलामेतवेकृथः ॥ युवंहरेभंवृषणागुहाहितमुदैरयतंम
मृवांसमश्विना । युवमृबीसमुततप्तमत्रयऽओमन्वंतंचक्रथुःसप्तवध्रये ॥ युवंश्वेतंपेदवेश्विनाश्वंनवभिर्वाजैर्नवतीचं
वाजिनं । चर्कृत्यंददथुर्द्रावयत्सखंभगंननृभ्योहव्यंमयोभुवं ॥ १६ ॥ नतंराजानावदितेकुतश्चननांहोऽअश्नोति

( १०।३।१० ) योवामितिचतुर्दशर्चस्यसूक्तस्यकाक्षीवतीघोषाऋषिःअश्विनौदेवतेजगतीछन्दःअन्त्यास्त्रिष्टुप् ।

दुरितंनकिर्भयं । यमश्विनासुहवारुद्रवर्तनीपुरोरथंकृणुथःपत्न्यासह ॥ आतेनयातंमनसोजवीयसारथंयंवामृभवश्च
क्रुरश्विना । यस्ययोगेदुहिताजायतेदिवऽउभेऽअहनीसुदिनेविवस्वतः ॥ तावर्तिर्यातंजयुषाविपर्वतमपिन्वतंशयवे
धेनुमश्विना । वृकस्यचिद्वर्तिकामंतरास्याद्युवंशचीभिर्ग्रसितामसुंचतं ॥ एतंवांस्तोममश्विनावकर्मातक्षामभृगवोन
रथं । न्यमृक्षामयोषणांनमर्येनित्यंनसूनुंतनयंदधानाः ॥ १७ ॥ ( १०।३।११ ) रथंयांतंकुहकोहवांनराप्रतिद्युमंतं
सुवितायभूषति । प्रातर्यावाणंविभ्वंविशेविशेवस्तोर्वस्तोर्वहमानंधियाशमि ॥ कुहस्विद्दोषाकुहवस्तोरश्विनाकुहाभि
पित्वंकरतःकुहोषतुः । कोवांशयुत्राविधवेवदेवरंमर्यंनयोषाकृणुतेसधस्थऽआ ॥ प्रातर्जरेथेजरणेवकापयावस्तोर्व
स्तोर्यजतागच्छथोगृहं । कस्यध्वस्राभवथःकस्यवानराराजपुत्रेवसवनावगच्छथः ॥ युवांमृगेववारणामृगण्यवोदोषा
वस्तोर्हविषानिह्वयामहे । युवंहोत्रामृतुथाजुह्वतेनरेषंजनायवहथःशुभस्पती ॥ युवांहघोषापर्यश्विनायतीराज्ञऽऊचे
दुहितापृच्छेवांनरा । भूतंमेऽअह्नऽउतभूतमक्तवेश्वावतेरथिनेशक्तमर्वते ॥ १८ ॥ युवंकवीष्ठःपर्यश्विनारथंविशोन
कुत्सोजरितुर्नशायथः । युवोर्हमक्षापर्यश्विनामध्वासाभरतनिष्कृतंनयोषणा ॥ युवंहभुज्युंयुवमश्विनावशंयुवंशिंजा
रमुशनामुपारथुः । युवोररावापरिसख्यमासतेयुवोरहमवसासुम्नमाचके ॥ युवंहकृशंयुवमश्विनाशयुंयुवंविधंतंविध



( १०।३।११ ) रथंयांतमितिचतुर्दशर्चस्यसूक्तस्यकाक्षीवतीघोषाश्विनौजगती ।

वांमुरुष्यथः । युवंसनिभ्र्यंःस्तनयंन्तमश्विनापंव्रजमूंर्णुथःसुप्तास्यं ॥ जनिष्टयोषापतयत्कनीनकोविचारुहन्वीरुधोदं सनाऽअनुं । आस्मैरीयंतेनिवनेवसिंधवोस्माऽअह्नेभवतितत्पतित्वनं ॥ जीवंरुदंतिविमंयंतेऽअध्वरेदीर्घामनुप्रसिं तिंदीधियुर्नरः । वामंपितृभ्योयऽइदंसमेरिरेमयःपतिभ्योजनयःपरिष्वजें ॥ १९ ॥ नतस्यंविद्मतदुषुप्रवोचतयुवाह यद्युंवत्याःक्षेतियोनिषु । प्रियोस्त्रियस्यवृषभस्यरेतिनोगृहंगंमेमाश्विनातदुश्मसि ॥ आवांमगन्त्सुमतिर्वाजिनीवसून्यं श्विनाहृत्सुकामांऽअयंसत । अभूतंगोपामिथुनाशुंभस्पतीप्रियाऽअर्यम्णोदुर्यांऽअशीमहि ॥ तामंदसानामनुंषोदुरो णऽआधत्तंरयिंसहवीरंवचस्यवें । कृतंतीर्थंसुप्रपाणंशुंभस्पतीस्थाणुंपथेष्ठामपदुर्मतिंहतं ॥ क्वंस्विदद्यकतमास्वश्विना विक्षुदस्त्रामादयेतेशुभस्पतीं । कऽईंनियेमेकतमस्यंजग्मतुर्विप्रस्यवायजमानस्यवागृहं ॥ २० ॥ ( १०।३।१२ ) समानमुत्यंपुरुहूतमुक्थ्यं१रथंत्रिचक्रंसवंनागनिग्मतं । परिज्मानंविदथ्यंसुवृक्तिभिर्वयंव्युंष्टाऽउषसोहवामहे ॥ प्रा तर्युजंनासत्याधितिष्ठथःप्रातर्यावाणंमधुवाहनंरथं । विशोयेनगच्छंथोयज्वरीर्नराकीरेश्चिद्यज्ञंहोतृमंतमश्विना ॥ अ ध्वर्युंवामधुपाणिंसुहस्त्यंमग्निधंवाधृतदक्षंदमूंनसं । विप्रस्यवायत्सवनानिगच्छथोतऽआयातंमधुपेयमश्विना॥ २१ ॥ ( १०।३।१३ ) अस्तेवसुप्रतरंलायमस्यन्भूषन्निवप्रभरास्तोममस्मै । वाचाविप्रास्तरतवाचंमर्योनिरामयजरितःसोम

(१०।३।१२) समानमितितृचस्यसूक्तस्यघोषेयःसुहस्त्योश्विनौजगती। (१०।३।१३)अस्तेवेत्येकादशर्चस्यसूक्तस्यांगिरसःकृष्णइंद्रस्त्रिष्टुप्।

ऽइंद्रं ॥ दोहेनगामुपशिक्षासखायंप्रबोधयजरितर्जारमिंद्रं । कोशंनपूर्णंवसुनान्यृष्टमाच्यावयमघदेयायशूरं ॥ किमंगत्वामघवन्भोजमाहुःशिशीहिमाशिशयंत्वाशृणोमि । अप्नस्वतीममधीरस्तुशक्रवसुविदंभगमिंद्राभरानः ॥ त्वांजनाममसत्येष्विंद्रसंतस्थानाविह्वयंतेसमीके । अत्रायुजंकृणुतेयोहविष्मान्नासुन्वतासख्यंवष्टिशूरः ॥ धनंनस्पंद्रंवहुलंयोऽअस्मैतीव्रान्त्सोमाँऽआसुनोतिप्रयस्वान् । तस्मैशत्रून्त्सुतुकान्प्रातरह्नोनिस्वष्ट्रान्युवतिहंतिवृत्रं ॥ २२ ॥ यस्मिन्वयंदधिमाशंसमिंद्रेयःशिश्रायमघवाकाममस्मे । आराच्चित्सन्भयतामस्यशत्रुर्न्यस्मैद्युम्नाजन्यानमंतां ॥ आराच्छत्रुमपवाधस्वदूरमुग्रोयःशंबःपुरुहूततेन । अस्मेधेहियवमद्गोमदिंद्रकृधीधियंजरित्रेवाजरत्नां ॥ प्रयमंतर्वृषसवासोऽअग्मन्तीव्राःसोमावहुलान्तासऽइंद्रं । नाहदामानंमघवानियंसन्निसुन्वतेवहतिभूरिवामं ॥ उतप्रहामतिदीव्याजयातिकृतंयच्छ्वघ्नीविचिनोतिकाले । योदेवकामोनधनारुणद्धिसमित्तंरायासृजतिस्वधावान् ॥ गोभिष्टरेमामतिंदुरेवांयवेनक्षुधंपुरुहूतविश्वां । वयंराजभिःप्रथमाधनान्यस्माकेनवृजनेनाजयेम ॥ बृहस्पतिर्नःपरिपातुपश्चादुतोत्तरस्मादधरादघायोः । इंद्रःपुरस्तादुतमध्यतोनःसखासखिभ्योवरिवःकृणोतु ॥ २३ ॥ ( १०।४।१ ) अच्छामऽइंद्रंमतयःस्वर्विदःसध्रीचीर्विश्वाऽउशतीरनूषत । परिष्वजंतेजनयोयथापतिंमर्यंनशुंध्युंमघवानमूतये ॥ नघात्वद्रिगपवेतिमेमन



---

चतुर्थेनुवाकेष्टादशसूक्तानि । ( १०।४।१ ) अच्छामइत्येकादशर्चस्यसूक्तस्यांगिरसःकृष्णइंद्रोजगत्यंत्येद्वेत्रिष्टुभौ ।

स्त्वेऽइत्कामंपुरुहूतशिश्रय । राजेवदस्मनिषदोधिबर्हिष्यस्मिन्त्सुसोमेवपानमस्तुते ॥ विषूवृदिंद्रोऽअमंतेरुतक्षुधःस
ऽइद्रायोमघवावस्वऽईशते । तस्येदिमेप्रवणेसप्तसिंधवोवयोवर्धतिवृषभस्यशुष्मिणः ॥ वयोनवृक्षंसुपलाशमासद
न्त्सोमासऽइंद्रंमंदिनश्चमूषदः । प्रैषामनीकंशवसादविद्युतद्विदत्स्व१र्मनवेज्योतिरार्यं ॥ कृतंनश्वघ्नीविचिनोतिदेव
नेसंवर्गंयन्मघवासूर्यंजयत् । नतत्तेऽअन्योऽअनुवीर्यंशकन्नपुराणोमघवन्नोतनूतनः ॥ २४ ॥ विशंविशंमघवापर्य
शायतजनानांधेनाऽअवचाकशद्वृषा । यस्याहशक्रःसवनेषुरण्यतिसतीव्रैःसोमैःसहतेपृतन्यतः+ ॥ आपोनसिंधुम
भियत्समक्षरन्त्सोमासऽइंद्रंकुल्याऽइवह्रदं । वर्धंतिविप्रामहोऽअस्यसादनेयवंनवृष्टिर्दिव्येनदानुना ॥ वृषानक्रु
द्धःपतयद्रजःस्वायोऽअर्यपत्नीरकृणोदिमाऽअपः । ससुन्वतेमघवाजीरदानवेविंदज्ज्योतिर्मनवेहविष्मते ॥ उज्जा
यतांपरशुर्ज्योतिषासहभूयाऽऋतस्यसुदुघापुराणवत् । विरोचतामरुषोभानुनाशुचिःस्व१र्णशुक्रंशुशुचीतसत्पतिः ॥
गोभिष्टरेमामतिंदुरेवांयवेनक्षुधंपुरुहूतविश्वां । वयंराजभिःप्रथमाधनान्यस्माकेनवृजनेनाजयेम ॥ बृहस्पतिर्नःप
रिपातुपश्चादुतोत्तरस्मादधरादघायोः । इंद्रःपुरस्तादुतमध्यतोनःसखासखिभ्योवरिवःकृणोतु ॥ २५ ॥ (१०।४।२)
आयात्विंद्रःस्वपतिर्मदाययोधर्मणातूतुजानस्तुविष्मान् । प्रत्वक्षाणोऽअतिविश्वासहांस्यपारेणमहतावृष्ण्येन ॥

---

(१०।४।२) आयात्वित्येकादशर्चस्यसूक्तस्यांगिरसःकृष्णऋषिःइंद्रोदेवताआद्याविराट्स्थानाऽत्यैकादश्येत्रिष्टुभः ।

सुष्ठामारथः सुयमाहरीतेमिम्यक्षवज्रोनृपतेगभस्तौ । शीभंराजन्सुपथायाह्यर्वाङ्वर्धामतेपपुषोवृष्ण्यानि ॥ एंद्रवाहोनृपतिंवज्रबाहुमुग्रमुग्रासंस्तविषासऽएनं । प्रत्वक्षसंवृषभंसत्यशुष्मुमेमस्मत्रासधमादोवहंतु ॥ एवापतिंद्रोणसाचंसचेतसमूर्जःस्कंभंधरुणऽआवृषायसे । ओजःकृष्वसंगृभायत्वेऽअप्यसोयथाकेनिपानामिनोवृधे ॥ गमन्नस्मेवसून्याहिशंसिषंस्वाशिषंभरमायाहिसोमिनः । त्वमीशिषेसास्मिन्नासत्सिबर्हिष्यनाधृष्यातवपात्राणिधर्मणा ॥ २६ ॥ पृथक्प्रायन्प्रथमादेवहूतयोकृण्वतश्रवस्यानिदुष्टरा । नयेशेकुर्यज्ञियांनावमारुहमीमैवतेन्यविशंतकेपयः ॥ एवैवापागपरेसंतुदूढ्योश्वायेषांदुर्युजऽआयुयुज्रे । इत्थायेप्रागुपरेसंतिदावनेपुरूणियत्रवयुनानिभोजना ॥ गिरीँऽरज्रान्रेजमानाँऽअधारयद्यौःक्रंददंतरिक्षाणिकोपयत् । समीचीनेधिषणेविष्कभायतिवृष्णःपीत्वामदऽउक्थानिशंसति ॥ इमंबिभर्मिसुकृतंतेऽअंकुशंयेनारुजासिमघवञ्छफारुजः । अस्मिन्त्सुतेसवनेऽअस्त्वोक्यंसुतऽइष्टौमघवन्बोध्याभगः ॥ गोभिष्टरेमामतिंदुरेवांयवेनक्षुधंपुरुहूतविश्वां । वयंराजभिःप्रथमाधनान्यस्माकेनवृजनेनाजयेम ॥ बृहस्पतिर्नःपरिपातुपश्चादुतोत्तरस्मादधरादघायोः । इंद्रःपुरस्तादुतमध्यतोनःसखासखिभ्योवरिवःकृणोतु ॥ २७ ॥ ( १०।४।३ ) दिवस्परिप्रथमंजज्ञेऽअग्निरस्मद्द्वितीयंपरिजातवेदाः ॥ तृतीयमप्सुनृमणाऽअजस्रमिंधान



( १०।४।३ ) दिवस्परीतिद्वादशर्चस्यसूक्तस्यभालंदनोवत्सप्रिरग्निस्त्रिष्टुप् ।

ऽएनंजरतेस्वाधीः+ ॥ विज्ञातेंऽअग्नेत्रेधात्रयाणिविज्ञातेधामविभृंतापुरुत्रा । विज्ञातेनामंपरमंगुहायद्विज्ञातमुत्संयतंऽआजगंथं ॥ समुद्रेत्वांनृमणांऽअप्स्वं१तर्नृचक्षांऽईधेदिवोऽअंग्नऽऊधंन् । तृतीयेत्वारजंसितस्थिवांसंमपामुपस्थेंमहिषाऽअंवर्धन् ॥ अक्रंददग्निःस्तनयंन्निवद्यौःक्षामारेरिंहद्वीरुधंःसमंजन् । सद्योजंज्ञानोविहीमिद्धोऽअख्यदारोदंसीभानुनांभात्यंतः+ ॥ श्रीणामुंदारोधरुणोंरयीणांमंनीषाणांप्रापंणःसोमंगोपाः । वसुंःसूनुःसहंसोऽअप्सुराजाविभात्यग्रंऽउषसांमिधानः+ ॥ विश्वंस्यकेतुर्भुवंनस्यगर्भऽआरोदंसीऽअपृणाज्जायंमानः । वीळुंचिदद्रिंमभिनत्परायन्जनायदग्निमयंजंतपंचं ॥ २८ ॥ उशिक्पांवकोऽअंरतिःसुंमेधामर्तेष्वग्निरमृतोनिधांयि । इयंर्तिधूममंरुषंभरिंभ्रदुच्छुक्रेणंशोचिषाद्यामिनंक्षन् ॥ दृशानोरुक्मऽउंर्व्वियाव्यंद्यौदुर्मर्षमायुंःश्रियेरुंचानः । अग्निरमृतोंऽअभवद्वयोंभिर्यदेंनंद्यौर्जनयंत्सुरेतांः ॥ यस्तेंऽअद्यकृणवंद्भद्रशोचेपूपंदेवघृतवंतमग्ने । प्रतंनंयप्रतरंवस्योऽअच्छाभिसुम्नंदेवभंक्तंयविष्ठ ॥ आतंभंजसौश्रवसेष्वंग्नऽउक्थऽउंक्थऽआभंजशस्यमांने । प्रियःसूर्येप्रियोऽअग्नाभंवात्युज्जातेनंभिनदुज्जनित्वैः ॥ त्वामंग्नेयजंमानाऽअनुद्यून्विश्वावसुंदधिरेवार्याणि । त्वयांसहद्रविंणमिच्छमांनाव्रजंगोमंतमुशिजोविवंव्रुः ॥ अस्तांव्यग्निर्नरांसुशेवोवैश्वानरऽऋषिभिःसोमंगोपाः । अद्वेषेद्यावांपृथिवीहुंवेमदेवांधत्तरयिमस्मेसुवीरं ॥ २९ ॥

॥ ॥ इतिसप्तमाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ ॥ ॥

षट्पंचाशाध्यायेवर्गाः २९ सूक्तानि १३ ऋचः १४४ || त्यागः || विश्वेभ्योदेवेभ्य. इंद्राये.२ कुरुश्रवणाये.२ उपमश्रवस.४ अक्षेभ्य. अक्षकितवाये.५ अक्षेभ्य. अक्षकितवाये. अक्षेभ्य. अक्षकितवाये.२ अक्षेभ्य. कृष्याइ. अक्षकितवाये. विश्वेभ्योदेवेभ्य.२८ [ मे. प. विश्वेभ्योदे.३ उषसेग्नय.२ विश्वेभ्योदेवेभ्य.२२ सवित्र. १ ] सूर्याये.१२ इंद्राये.५ अश्विभ्यामि.३१ इंद्राये.३३ अग्नय.१२ || इतिसप्तमेष्टमः ||

## || इतिसप्तमाष्टकःसमाप्तः ||

ॐ प्रहोतादशजगृभ्माष्टौसप्तगुर्वैकुंठमिंद्रंतुष्टावविकुंठानामासुरींद्रतुल्यंपुत्रमिच्छंतींमहत्तपस्तेपेतस्याःस्वयमे
वेंद्रःपुत्रोजज्ञेससप्तगुस्तुतिसंहृष्टआत्मानमुत्तरैस्त्रिभिस्तुष्टावाहंभुवमेकादशांत्येत्रिष्टुभौसप्तमीचाहंदामंत्यो
पाद्येचत्रिष्टुभौप्रवोमहेसप्तद्विजगत्याद्यंतकेतेभिसारिण्यौवषट्कारेणवृक्णेषुभ्रातृषुसौचीकोग्निरपःप्रविश्यदे
वैःसमवददुत्तरैस्त्रिभिर्महत्तन्नवात्रयुजोग्निवाक्यंविश्वइत्युत्तरंचषट्कमयुजोदेवानांयमैच्छामेत्युत्तरंचैकादश
कंतदद्येतितुष्टुचोग्नेस्तंतुमाद्याजगत्योष्टमीवर्जंतांसुषट्बृहदुक्थोवामदेव्योवादूरेष्टाविदंतेसप्तवैश्वदेवंतुचतु
र्थ्याद्यास्तिस्रोजगत्यःपराणिचत्वारिसूक्तान्युक्ताऋषयोद्विपदेत्वत्रिमंडलेथहैक्ष्वाकोराजासमातिर्गौपायनान्बं
ध्वादींन्पुरोहितांस्त्यक्त्वान्यौमायाविनौश्रेष्ठतमौमत्वापुरोदधेतमितरेक्रुद्धाअभिचेरुरथतौमायाविनौसुबंधोः
प्राणानाचिक्षिपतुरथास्यभ्रातरस्त्रयोमाप्रगामेतिषट्कंगायत्रंस्वस्त्ययनंजप्त्वायत्तइतिद्वादशर्चमानुष्टुभंमनआ
वर्तनंजेपुःप्रतारीतिदशर्चेचतस्रोनिर्ऋत्यपनोदार्थंजेपुश्चतुर्थ्यासोमंचास्तुवन्मृत्योरपगमायोत्तराभ्यांदेवीमसु
नीतिंसप्तम्यांलिंगोक्तदेवताःशिष्टाभिःपङ्क्तिमहापाङ्क्तिपङ्क्त्युत्तराभिर्द्यावापृथिव्यौसमिंद्रेतींद्रंचार्धर्चेनांजनमि
तिद्वादशर्चआनुष्टुभेचतसृभिरसमातिमस्तुवंस्पंचम्यैंद्रंषष्ठ्यागस्त्यस्यस्वसामातैषांराजानमस्तौत्पराभिःसुबं

धोर्जीवमाह्वयंस्तमंत्ययालब्धसंज्ञमस्पृशन्पंचाद्यागायत्र्यौष्टम्याद्येपङ्क्तीइदमित्थासप्ताधिकानाभानेदिष्ठोमा
नवोवैश्वदेवंतत् ॥ १ ॥ ॥ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ ( १०।४।४ ) प्रहोताजातोमहान्नभोविन्नृषद्वासीददपामुपस्थे । दधिर्योधायिसतेवयांसियंतावसू
निविधतेतनूपाः+ ॥ इमंविधंतोऽअपांसधस्थेपशुंननष्टंपदैरनुग्मन् । गुहाचतंतमुशिजोनमोभिरिच्छंतोधीराभृगवो
विंदन् ॥ इमंत्रितोभूर्यविंददिच्छन्वैभूवसोमूर्धन्यघ्न्यायाः । सशेवृधोजातऽआहर्म्येषुनाभिर्युवाभवतिरोचनस्य ॥
मंद्रंहोतारमुशिजोनमोभिःप्रांचंयज्ञंनेतारमध्वराणां । विशामकृण्वन्नरतिंपावकंहव्यवाहंदधतोमानुषेषु ॥ प्रभूर्जयं
तंमहांविपोधांमूराऽअमूरंपुरांदर्माणं । नयंतोगर्भंवनांधियंधुर्हिरिश्मश्रुंनार्वाणंधनर्चं ॥ १ ॥ निपस्त्यासुत्रितःस्तभू
यन्परिवीतोयोनौसीददंतः । अतःसंगृभ्याविशांदमूनाविधर्मणायंत्रैरीयतेनॄन्+ ॥ अस्याजरासोदमामरित्राऽअर्च
द्धूमासोऽअग्नयःपावकाः । श्वितीचयःश्वात्रासोभुरण्यवोवनर्षदोवायवोनसोमाः ॥ प्रजिह्वयाभरतेवेपोऽअग्निःप्रव
युनानिचेतसापृथिव्याः । तमायवःशुचयंतंपावकंमंद्रंहोतारंदधिरेयजिष्ठं ॥ द्यावायमग्निंपृथिवीजनिष्टामापस्त्वष्टा ॥ २ ॥
भृगवोयंसहोभिः । ईळेन्यंप्रथमंमातरिश्वादेवास्ततक्षुर्मनवेयजत्रं ॥ यंत्वादेवादधिरेहव्यवाहंपुरुस्पृहोमानुषासोय

( १०।४।४ ) प्रहोतेतिदशर्चस्यसूक्तस्यभालंदनोवत्सप्रिरग्निस्त्रिष्टुप् ।

जंत्रं । सयामंन्नग्नेस्तुवतेवयोधाःप्रदेवयन्यशसःसंहिपूर्वीः+ ॥ २ ॥ ( १०।४।५ ) जगृभ्मातेदक्षिणमिंद्रहस्तंवसूय वोवसुपतेवसूनां । विद्माहित्वागोपतिंशूरगोनामस्मभ्यंचित्रंवृषणंरयिंदाः ॥ स्वायुधंस्ववसंसुनीथंचतुःसमुद्रंधरुणं रयीणां । चर्कृत्यंशंस्यंभूरिवारमस्मभ्यं० ॥ सुब्रह्माणंदेववंतंबृहंतमुरुंगभीरंपृथुबुध्नमिंद्र । श्रुतऽऋषिमुग्रमभिमाति षाहमस्मभ्यं० ॥ सनद्वाजंविप्रवीरंतरुत्रंधनस्पृतंशूशुवांसंसुदक्षं । दस्युहनंपूर्भिदमिंद्रसत्यमस्मभ्यं० ॥ अश्वावंतंर थिनंवीरवंतंसहस्रिणंशतिनंवाजमिंद्र । भद्रव्रातंविप्रवीरंस्वर्षामस्मभ्यं० ॥ ३ ॥ प्रसप्तगुमृतधीतिंसुमेधांबृहस्पतिंम तिरच्छाजिगाति । यऽआंगिरसोनमसोपसद्योस्मभ्यं० ॥ वनीवानोममदूतासऽइंद्रंस्तोमाश्चरंतिसुमतीरियानाः । हृदिस्पृशोमनसावच्यमानाऽअस्मभ्यं० ॥ यत्त्वायामिंद्धितन्नऽइंद्रबृहंतंक्षयमसमंजनानां । अभितद्द्यावापृथिवी गृणीतामस्मभ्यं० ॥ ४ ॥ ( १०।४।६ ) अहंभुवंवसुनःपूर्व्यस्पतिरहंधनानिसंजयामिशश्वतः । मांहवंतेपितरंनजं तवोहंदाशुषेविभजामिभोजनं ॥ अहमिंद्रोरोधोवक्षोऽअथर्वणस्त्रितायगाऽअजनयमहेरधि । अहंदस्युभ्यःपरिनृम्ण माददेगोत्राशिक्षं दधीचेमातरिश्वने ॥ मह्यंत्वष्टावज्रमतक्षदायसंमयिदेवासोवृजन्नपिक्रतुं । ममानीकंसूर्यस्येवदुष्टरं

---

( १०।४।५ ) जगृभ्भेत्यष्टर्चस्यसूक्तस्यसप्तगुर्वैकुंठइंद्रस्त्रिष्टुप् । ( १०।४।६ ) अहंभुवमित्येकादशर्चस्यसूक्तस्यवैकुंठइंद्रोवैकुंठइंद्रो जगतीसप्तमीदशम्येकादश्यस्त्रिष्टुभः ।

ऋक्सं. अ १ ॥ ३ ॥

मामार्येतिकृतंनकर्त्वैनच ॥ अहमेतंगव्ययमश्व्यंपशुंपुरीषिणंसायकेनाहिरण्ययं । पुरूसहस्रानिशिशामिदाशुषेयन्मा
सोमासऽउक्थिनोऽअमंदिषुः ॥ अहमिंद्रोनपराजिग्यऽइद्धनंनमृत्यवेवतस्थेकदाचन । सोममिन्मासुन्वंतोयाचताव
सुनमेपूरवःसख्येरिषाथन ॥ ५ ॥ अहमेतान्छाश्वसतोद्वाद्वेंद्रंयेवज्रंयुधयेकृण्वत । आह्वयमानाँऽअवहन्मनाहनंदृ
ह्ळावदन्ननमस्युर्नमस्विनः ॥ अभी३दमेकमेकोऽअस्मिनिष्षाळभीद्वाकिमुत्रयःकरंति । खलेनपर्षान्प्रतिहन्मिभूरिकिं
मानिंदंतिशत्रवोनिंद्राः+ ॥ अहंगुंगुभ्योऽअतिथिग्वमिष्करमिषंनवृत्रतुरंविक्षुधारयं । यत्पर्णयघ्नऽउतवाकरंजहेप्रा
हंमहेवृत्रहत्येऽअशुश्रवि ॥ प्रमेनमीसाप्यऽइषेभुजेभूद्गवामेषेसख्याकृणुतद्विता । दिद्युंयदस्यसमिथेषुमंहयमादिदे
नंशंस्यमुक्थ्यंकरं ॥ प्रनेमस्मिन्ददृशेसोमोऽअंतर्गोपानेममाविरस्थाकृणोति । सतिग्मशृंगंवृषभंयुयुत्सन्द्रुहस्तस्थौ
वहुलेवद्धोऽअंतः+ ॥ आदित्यानांवसूनांरुद्रियाणांदेवोदेवानांनमिनामिधाम । तेमाभद्रायशवसेततक्षुरपराजितम
स्तृतमषाह्ळं ॥ ६ ॥ ( १०।४।७ ) अहंदांगृणतेपूर्व्यंवस्वहंब्रह्मकृणवंमह्यंवर्धनं । अहंभुवंयजमानस्यचोदितायज्व
नःसाक्षिविश्वस्मिन्भरे ॥ मांधुरिंद्रंनामदेवतादिवश्चग्मश्चापांचजंतवः । अहंहरीवृषणाविव्रतारघूऽअहंवज्रंशवसेधृ
ष्णवाददे ॥ अहमत्कंकवयेशिश्नथंहथैरहंकुत्समावमाभिरूतिभिः । अहंशुष्णस्यश्नथितावधर्यमंनयोररऽआर्यनामद

मंडलं. १० अनु. ४ ॥ ३ ॥

( १०।४।७ ) अहंदामित्येकादशर्चस्यसूक्तस्यवैकुंठइंद्रोवैकुंठइंद्रोजगतीद्वितीयांत्येत्रिष्टुभौ ।

स्यंवे ॥ अहंपितेवंवेतसूँरभिष्टयेतुग्रंकुत्सायस्मादिभंचरंधयं । अहंभुवंयजमानस्यराजनिप्रयद्भरेतुजयेनप्रियाधृषे ॥ अहंरंधयंमृगयंश्रुतर्वणेयन्माजिहीतवयुनाचनानुषक् । अहंवेशंनम्रमायवेकरमहंसव्यायपड्गृभिमरंधयं ॥ ७ ॥ अहंसयोनववास्त्वंबृहद्रथंसंवृत्रेवदासंवृत्रहारुजं । यद्वर्धयंतंप्रथयंतमानुषग्दूरेपारेरजसोरोचनाकरं ॥ अहंसूर्यस्यपरियाम्याशुभिःप्रैतशेभिर्वहमानऽओजसा । यन्मासावोमनुषऽआहनिर्णिजऽऋधक्कृषेदासंकृत्व्यंहथैः ॥ अहंसप्तहानहुषोनहुष्टरःप्राश्रावयंशवसातुर्वशंयदुं । अहंन्यन्यंसहसासहस्करंनवव्राधतोनवतिंचवक्षयं ॥ अहंसप्तस्रवतोधारयंवृषाद्रवित्वः पृथिव्यांसीराऽअधि । अहमर्णासिविर्तिरामिसुक्रतुर्युधाविदंमनवेगातुमिष्टये ॥ अहंतदासुधारयंयदासुनदेवश्चनत्वष्टाधारयद्रुशत् । स्पार्हंगवामूधःसुवक्षणास्वामधोर्मधुश्वात्र्यंसोममाशिरं ॥ एवादेवाँऽइंद्रोविव्येनृन्प्रच्यौत्नेनमघवासत्यराधाः । विश्वेत्तातेहरिवःशचीवोभितुरासःस्वयशोगृणंति ॥ ८ ॥ ( १०।४।८ ) प्रवोमहेमंदमानायांधसोर्चाविश्वानरायविश्वाभुवे । इंद्रस्ययस्यसुमखंसहोमहिश्रवोनृम्णंचरोदसीसपर्यतः ॥ सोचिन्नुसख्यानर्यऽइनस्तुतश्चर्कृत्यऽइंद्रोमावतेनरे । विश्वासुधूर्षुवाजकृत्येषुसत्पतेवृत्रेवाप्स्वभिशूरमंदसे ॥ केतेनरऽइंद्रयेतऽइषेयेतेसुम्नंसधन्यमियक्षान् । केतेवाजायासुर्यायहिन्विरेकेऽअप्सुस्वासूर्वरासुपौंस्ये ॥ भुवस्त्वमिंद्रब्रह्मणामहान्भुवोविश्वे

( १०।४।८ ) प्रवोमहइतिसप्तर्चस्यसूक्तस्यवैकुंठइंद्रोजगतीद्वितीयानुष्टुब्वाभिसारिण्यौपंचमीत्रिष्टुप् ।

षुसवनेषुयज्ञियः । भुवोनॄँश्च्यौत्नोविश्वस्मिन्भरेज्येष्ठश्चमंत्रोविश्वचर्षणे ॥ अवानुकंज्यायान्यज्ञवनसोमहींतऽओमा
त्रांकृष्टयोविदुः । असोनुकमजरोवर्धाश्चविश्वेदेतासवनातूतुमाकृषे ॥ एताविश्वासवनातूतुमाकृषेस्वयंसूनोसहसोया
निदधिषे । वरायतेपात्रंधर्मणेतनायज्ञोमंत्रोब्रह्मोद्यतंवचः ॥ येतेविप्रब्रह्मकृतःसुतेसचावसूनांचवसुनश्चदावने ।
प्रतेसुम्नस्यमनसापथाभुवन्मदेसुतस्यसोम्यस्यांधसः ॥ ९ ॥ ( १०।४।९ ) महत्तदुल्बंस्थविरंतदासीद्येनाविष्टितःप्र
विवेशिथापः । विश्वाऽअपश्यद्बहुधातेऽअग्नेजातवेदस्तन्वोदेवऽएकः ॥ कोमाददर्शकतमःसदेवोयोमेतन्वोबहुधाप
र्यपश्यत् । क्वाहमित्रावरुणाक्षियंत्यग्नेर्विश्वाःसमिधोदेवयानीः ॥ ऐच्छामत्वाबहुधाजातवेदःप्रविष्टमग्नेऽअप्स्वोष
धीषु । तंत्वायमोऽअचिकेच्चित्रभानोदशांतरुष्यादतिरोचमानं ॥ होत्रादहंवरुणबिभ्यदायन्नेदेवमायुनजन्नत्रदेवाः ।
तस्यमेतन्वोबहुधानिविष्टाऽएतमर्थंनचिकेताहमग्निः+ ॥ एहिमनुर्देवयुर्यज्ञकामोरंकृत्यातमसिक्षेष्यग्ने । सुगान्पथः
कृणुहिदेवयानान्वहहव्यानिसुमनस्यमानः ॥ १० ॥ अग्नेःपूर्वेभ्रातरोऽअर्थमेतंरथीवाध्वानमन्वावरीवुः । तस्मा
द्भियावरुणदूरमायंगौरोनक्षेप्नोरविजेज्यायाः ॥ कुर्मस्तऽआयुरजरंयदग्नेयथायुक्तोजातवेदोनरिष्याः । अथावहासि
सुमनस्यमानोभागंदेवेभ्योहविषःसुजात ॥ प्रयाजान्मेऽअनुयाजांश्चकेवलानूर्जस्वंतंहविषोदत्तभागं । घृतंचापांपुरु

( १०।४।९ ) महत्तदितिनवर्चस्यसूक्तस्यद्वितीयादियुगृचांसौचीकोग्निऋषिःअयुजांदेवाऋषयःयुजांदेवादेवताःअयुजामग्निर्देवतात्रिष्टुप् ।

षंचौषधीनामग्नेश्चंदीर्घमायुरस्तुदेवाः ॥ तवप्रयाजाऽअनुयाजाश्चकेवलऽऊर्जस्वंतोहविषःसंतुभागाः । तवाग्नेयज्ञो३ यमस्तुसर्वस्तुभ्यंनमंतांप्रदिशश्चतस्रः ॥ ११ ॥ ( १०।४।१० ) विश्वेदेवाःशास्तनमायथेहहोतावृतोमनवैयन्निषद्य । प्रमेब्रूतभागधेयंयथावोयेनपथाहव्यमावोवहानि ॥ अहंहोतान्यसीदंयजीयान्विश्वेदेवामरुतोमाजुनंति । अहरहरश्विनाध्वर्यवंवांब्रह्मासमिद्भवतिसाहुतिर्वां ॥ अयंयोहोताकिरुसयमस्यकमप्यूहेयत्समंजंतिदेवाः । अहरहर्जायतेमासिमास्यथादेवादधिरेहव्यवाहं ॥ मांदेवादधिरेहव्यवाहमपम्लुक्तंबहुकृच्छ्राचरंतं । अग्निर्विद्वान्यज्ञंनःकल्पयातिपंचयामंत्रिवृतंसप्ततंतुं ॥ आवोयक्ष्यमृतत्वंसुवीरंयथावोदेवावरिवःकराणि । आबाह्वोर्वज्रमिंद्रस्यधेयामथेमाविश्वाःपृतनाजयाति ॥ त्रीणिशतात्रीसहस्राण्यग्निंत्रिंशच्चदेवानवचासपर्यन् । औक्षन्घृतैरस्तृणन्बर्हिरस्माऽआदिद्धोतारंन्यसादयंत ॥ १२ ॥ ( १०।४।११ ) यमैच्छाममनसासो३यमागाद्यज्ञस्यविद्वान्परुषश्चिकित्वान् । सनोयक्षद्देवतातायजीयान्निहिषत्सदंतरःपूर्वोऽअस्मत् ॥ अराधिहोतानिषदायजीयानभिप्रयांसिसुधितानिहिख्यत् । यजामहैयज्ञियान्हंतदेवाँऽईळामहाऽईड्याँऽआज्येन ॥ साध्वीमकर्देववीतिंनोऽअद्ययज्ञस्यजिह्वामविदामगुह्यां । सऽआयुरागा

---

( १०।४।१० ) विश्वेदेवाइतिषड्चस्यसूक्तस्यसौचीकोग्निर्देवास्त्रिष्टुप्। ( १०।४।११ ) यमैच्छामेत्येकादशर्चस्यसूक्तस्यदेवाऋषयः चतुर्थीपंचम्योःसौचीकोग्निर्ऋषिःअग्निर्देवताचतुर्थीपंचम्योर्देवादेवताजगतीअष्टमनवमीरितित्रिष्टुप् ।

त्सुरभिर्वसानोभद्रामकर्देवहूतिंनोऽअद्य॥ तदद्यवाचःप्रथमंमसीययेनासुराँऽअभिदेवाऽअसाम । ऊर्जादऽउतयज्ञियासःपंचजनाममहोत्रंजुषध्वं॥ पंचजनाममहोत्रंजुषंतांगोजाताऽउतयेयज्ञियासः । पृथिवीनःपार्थिवात्पात्वंहसोंतरिक्षंदिव्यात्पात्वस्मान्॥ १३ ॥ तंतुंतन्वन्रजसोभानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् । अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनं ॥ अक्षानहोनह्यतनोतसोम्याऽइष्कृणुध्वंरशनाऽओतपिंशत । अष्टावंधुरंवहताभितोरथंयेनदेवासोऽअनयन्नभिप्रियं॥ अश्मन्वतीरीयतेसंरभध्वमुत्तिष्ठतप्रतरतासखायः । अत्राजहामयेऽअसन्नशेवाःशिवान्वयमुत्तरेमाभिवाजान् ॥ त्वष्टामायावेदपसामपस्तमोविभ्रत्पात्रादेवपानानिशंतमा । शिशीतेनूनंपरशुंस्वायसंयेनवृश्चादेतशोब्रह्मणस्पतिः ॥ सतोनूनंकवयःसंशिशीतवाशीभिर्याभिरमृतायतक्षथ । विद्वांसःपदागुह्यानिकर्तनयेनदेवासोऽअमृतत्वमानशुः॥ गर्भेयोषामदधुर्वत्समासन्यपीच्येनमनसोतजिह्वया । सविश्वाहासुमनायोग्याऽअभिसिषासनिर्वनतेकारऽइज्जितिं ॥ १४ ॥ ( १०।४।१२ ) तांसुतेकीर्तिंमघवन्महित्वायत्त्वाभीतेरोदसीऽअह्वयेतां । प्रावोदेवाँऽआतिरोदासमोजःप्रजायैत्वस्यैयदशिक्षऽइंद्र ॥ यदचरस्तन्वावावृधानोबलानींद्रप्रब्रुवाणोजनेषु । मायेत्साते यानियुद्धान्याहुर्नाद्यशत्रुंननुपुराविवित्से ॥ कऽउनुतेमहिमनःसमस्यास्मत्पूर्वऽऋषयोंतमापुः । यन्मातरंचपितरं



---

( १०।४।१२ ) तांसुतइतिषडृचस्यसूक्तस्यवामदेव्योबृहदुक्थइंद्रस्त्रिष्टुप् ।

चसाकमर्जनयथास्तन्वं१ःस्वार्याः ॥ चत्वारिंतेऽअसुर्याणिनामादाभ्यानिमहिषस्यसंति । त्वमंगतानिविश्वानिवि
त्सेयेभिःकर्माणिमघवन्चकर्थ ॥ त्वंविश्वादधिषेकेवलानियान्याविर्याचगुहावसूनि । काममिन्मेमघवन्मावितारी
स्त्वमाज्ञातात्वमिंद्रासिदाता+॥ योऽअदधाज्ज्योतिषिज्योतिरंतर्योऽअसृजन्मधुनासंमधूनि। अधप्रियंशूषमिंद्रायमन्म
ब्रह्मकृतोबृहदुक्थादवाचि ॥ १५ ॥ ( १०।४।१३ ) दूरेतन्नामगुह्यंपराचैर्यत्त्वाभीतेऽअह्वयेतांवयोधै । उदस्तभ्नाःपृ
थिवींद्यामभीकेभ्रातुःपुत्रान्मघवन्तित्विषाणः+ ॥ महत्तन्नामगुह्यंपुरुस्पृग्येनभूतंजनयोयेनभव्यं । प्रत्नंजातंज्योति
र्यदस्यप्रियंप्रियाःसमविशंतपंच ॥ आरोदसीऽअपृणादोतमध्यंपंचदेवाँऽऋतुशःसप्तसप्त । चतुस्त्रिंशतापुरुधाविचष्टे
सरूपेणज्योतिषाविव्रतेन ॥ यदुषऽऔच्छःप्रथमाविभानामजनयोयेनपुष्टस्यपुष्टं । यत्तेजामित्वमवरंपरस्यामहन्मह
त्याऽअसुरत्वमेकं ॥ विधुंदद्राणंसमनेबहूनांयुवानंसंतंपलितोजगार । देवस्यपश्यकाव्यंमहित्वाद्यामारसह्यःसमा
न ॥ १६ ॥ शाक्मनाशाकोऽअरुणःसुपर्णऽआयोमहःशूरःसनादनीळः । यच्चिकेतसत्यमित्तन्नमोघंवसुस्पार्हमुतजे
तोतदाता ॥ ऐभिर्ददेवृष्ण्यापौंस्यानियेभिरौक्षद्वृत्रहत्यायवज्री । येकर्मणःक्रियमाणस्यमह्नऽऋतेकर्ममुदजायंतदे
वाः+ ॥ युजाकर्माणिजनयन्विश्वौजाऽअशस्तिहाविश्वमनास्तुराषाट् । पीत्वीसोमस्यदिवऽआवृधानःशूरोनिर्युधाधम

( १०।४।१३ ) दूरेतदित्यष्टर्चस्यसूक्तस्यवामदेव्योबृहदुक्थइंद्रस्त्रिष्टुप् ।

ऋक्सं. अ. ८ अ. १ ॥ ६ ॥

मंडलं १० अनु. ४

हस्यून् ॥ १७ ॥ ( १०।४।१४ ) इदंतऽएकंपरऊंतऽएकंतृतीयेनज्योतिषासंविशस्व । संवेशनेतन्वश्चारुरेधिप्रियोदेवानांपरमेजनित्रे ॥ तनूष्टेवाजिन्तन्वंनयंतीवाममस्मभ्यंधातुशर्मतुभ्यं । अह्रुतोमहोधरुणायदेवान्दिवीवज्योतिःस्वमामिमीयाः ॥ वाज्यसिवाजिनेनासुवेनीःसुवितःस्तोमंसुवितोदिवंगाः । सुवितोधर्मंप्रथमानुसत्यासुवितोदेवान्सुवितोनुपत्म ॥ महिम्नऽएषांपितरश्चनेशिरेदेवादेवेष्वदधुरपिक्रतुं । समविव्यचुरुतयान्यत्विषुरैषांतनूषुनिविविशुःपुनः ॥ सहोभिर्विश्वंपरिचक्रमूरजःपूर्वाधामान्यमितामिमानाः । तनूषुविश्वाभुवनानियेमिरेप्रासारयंतपुरुधप्रजाऽअनु ॥ द्विधासूनवोसुरंस्वर्विदमास्थापयंततृतीयेनकर्मणा । स्वांप्रजांपितरःपित्र्यंसहऽआवरेष्वदधुस्तंतुमाततं ॥ नावानक्षोदःप्रदिशःपृथिव्याःस्वस्तिभिरतिदुर्गाणिविश्वा । स्वांप्रजांबृहदुक्थोमहित्वावरेष्वदधादापरेषु ॥ १८ ॥ ( १०।४।१५ ) माप्रगामपथोवयंमायज्ञादिंद्रसोमिनः । मांतस्थुर्नोऽअरातयः ॥ योयज्ञस्यप्रसाधनस्तंतुर्देवेष्वाततः । तमाहुतंनशीमहि ॥ मनोन्वाहुवामहेनाराशंसेनसोमेन । पितृणांचमन्मभिः ॥ आतऽएतुमनःपुनःक्रत्वेदक्षाय

॥ ६ ॥

( १०।४।१४ ) इदंतइतिसप्तर्चस्यसूक्तस्यवामदेव्योबृहदुक्थोविश्वेदेवास्त्रिष्टुपूचतुर्थ्यादितिस्रोजगत्यः । ( १०।४।१५ ) माप्रगामेतिषड्चस्यसूक्तस्यगौपायनाबंधुःश्रुतबंधुर्विप्रबंधुर्विश्वेदेवागायत्री । (भेदपक्षे—इंद्रः१ अग्निस्तंतुः१विश्वेदेवाः३सोमः१ एवं६ । माप्रगामेतिसूक्तानांबंध्वाद्याऋषयइत्यार्षानुक्रमण्यांशौनकः ) । अत्रैषांगौपायनत्वमेवनलौपायनत्वं तथासुबंधोर्लोपश्च सर्वा. भा. ) ।

जीवसे । ज्योक्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः । जीवंव्रातंसचेमहि ॥ वयंसोमव्रतेतवमनस्तनू
षुबिभ्रतः । प्रजावंतःसचेमहि ॥ १९ ॥ ( १०।४।१६ ) यत्तेयमंवैवस्वतंमनोजगामदूरकं । तत्तऽआवर्तयामसीह
क्षयायजीवसे ॥ यत्तेदिवंयत्पृथिवींमनोजगामदूरकं । तत्त० ॥ यत्तेभूमिंचतुर्भृष्टिंमनोजगामदूरकं । तत्त० ॥
यत्तेचतस्रःप्रदिशोमनोजगामदूरकं । तत्त० ॥ यत्तेसमुद्रमर्णवंमनोजगामदूरकं । तत्त० ॥ यत्तेमरीचीःप्रवतोमनो
जगामदूरकं । तत्त० ॥ २० ॥ यत्तेऽअपोयदोषधीर्मनोजगामदूरकं । तत्त० ॥ यत्तेसूर्यंयदुषसंमनोजगामदूरकं ।
तत्त० ॥ यत्तेपर्वतान्बृहतोमनोजगामदूरकं । तत्त० ॥ यत्तेविश्वमिदंजगन्मनोजगामदूरकं० । तत्त० ॥ यत्तेऽपराः
परावतोमनोजगामदूरकं । तत्त० ॥ यत्तेभूतंचभव्यंचमनोजगामदूरकं ॥ तत्त० ॥ २१ ॥ ( १०।४।१७ ) प्रता
र्यायुःप्रतरंनवीयःस्थातारेवक्रतुमतारथस्य । अधच्यवानऽउत्तवीत्यर्थंपरातरंसुनिर्ऋतिर्जिहीतां ॥ सामन्नुरायेनिधि
मन्त्वन्नंकरामहेसुपुरुधश्रवांसि । तानोविश्वानिजरितामत्तुपरा० ॥ अभीष्व१र्यःपौंस्यैर्भवेमद्यौर्नभूमिंगिरयोना

---

( १०।४।१६ ) यत्तेयममितिद्वादशर्चस्यसूक्तस्यगौपायनाबंधुःश्रुतबंधुर्विप्रबंधुर्मनोनुष्टुप् । ( १०।४।१७ ) प्रतार्यायुरितिदशर्चस्य
सूक्तस्यगौपायनाबंध्वादयऋषयःआद्यानांचतसृणांनिर्ऋतिर्देवताचतुर्थ्यानिर्ऋतिसोमौपंचमीषष्ठयोरसुनीतिर्देवीसप्तम्याःपृथिवीद्यावंतरि
क्षसोमपूषपथ्यास्वस्तयोदेवताःअंत्यानांतिसृणांद्यावापृथिव्यौत्रिष्टुप् अंत्यार्धर्चस्येंद्रः अंत्यास्तिस्रःक्रमेणपंक्तिमहापंक्तिपंक्त्युत्तराः ।

ऋक्सं.
अ. ८ अ. १
॥ ७ ॥

मंडलं १०
अनु. ६

त्रान् । तानोविश्वानिजरिताचिकेतपरा० ॥ मोषुणःसोममृत्यवेपरादाःपश्येमनुसूर्यमुच्चरंतं । द्युभिर्हितोजरिमासू
नोऽअस्तुपरा० ॥ असुनीतेमनोऽअस्मासुधारयजीवातवेसुप्रतिरानऽआयुः । रारंधिनःसूर्यस्यसंदृशिघृतेनत्वंतन्वंव
र्धयस्व ॥ २२ ॥ असुनीतेपुनरस्मासुचक्षुःपुनःप्राणमिहनोधेहिभोगं । ज्योक्पश्येमसूर्यमुच्चरंतमनुमतेमृळयानःस्व
स्ति+ ॥ पुनर्नोऽअसुंपृथिवीददातुपुनर्द्यौर्देवीपुनरंतरिक्षं । पुनर्नःसोमस्तन्वंददातुपुनःपूषापथ्यां३यास्वस्तिः+ ॥
शंरोदसीसुबंधवेयह्वीऽऋतस्यमातरा । भरतामपयद्रपोद्यौःपृथिविक्षमारपोमोषुतेकिंचनाममत् ॥ अवद्वकेऽअव
त्रिकादिवश्चरंतिभेषजा । क्षमाचरिष्ण्वेककंभरतामपयद्रपोद्यौःपृथिविक्षमारपोमोषुतेकिंचनाममत् ॥ समिंद्रेरय
गामनड्वाहंयऽआवहदुशीनराण्याऽअनः । भरतामपयद्रपोद्यौःपृथिविक्षमारपोमोषुतेकिंचनाममत् ॥ २३ ॥
( १०।४।१८ ) आजनंत्वेषसंदृशंमाहीनानामुपस्तुतं । अगन्मबिभ्रतोनमः ॥ असमातिंनितोशनंत्वेषंनियुयिनं
रथं । भजेरथस्यसत्पतिं ॥ योजनान्महिषाँऽइवातितस्थौपवीरवान् । उतापवीरवान्युधा+ ॥ यस्येक्ष्वाकुरुपव्रतेरे
वान्मराय्येधते । दिवीवपंचकृष्टयः ॥ इंद्रक्षत्रासमातिषुरथप्रोष्ठेषुधारय । दिवीवसूर्यंदृशे+ ॥ अगस्त्यस्यनद्भ्यःस

॥ ७ ॥

---

(१०।४।१८) आजनमितिद्वादशर्चस्यसूक्तस्यगौपायनाबंध्वादयऋषयःषष्ठ्याअगस्त्यस्वसाऋषिकाआद्यानांचतसृणांषष्ठ्याश्चासमाति
देवतापंचम्याइंद्रःसप्तम्यादिपंचानांजीवःद्वादश्याहस्तोऽनुष्टुप् आद्याःपंचगायत्र्यःअष्टमीनवम्यौपंक्ती ।

सीयुनक्षिरोहिता । पणीन्न्यक्रमीरभिविश्वान्राजन्नराधसः ॥ २४ ॥ अयंमातायंपितायंजीवातुरागमत् । इदंतवप्रसर्पणंसुबंधवेहिनिरिहि ॥ यथायुगंवरत्रयानह्यंतिधरुणायकं । एवादाधारतेमनोजीवातवेनमृत्यवेथोऽअरिष्टतातये ॥ यथेयंपृथिवीमहीदाधारेमान्वनस्पतीन् । एवादाधार० ॥ यमादहंवैवस्वतात्सुबंधोर्मनऽआभरं । जीवातवेनमृत्यवेथो० ॥ न्यग्वातोववातिन्यक्तपतिसूर्यः । नीचीनमघ्न्यादुहेन्यग्भवतुतेरपः ॥ अयंमेहस्तोभगवानयंमेभगवत्तरः । अयंमेविश्वभेषजोयंशिवाभिमर्शनः ॥ २५ ॥ ( १०।५।१ ) इदमित्थारौद्रंगूर्तवचाब्रह्मक्रत्वाशच्यामंतराजौ ॥ क्राणायदस्यपितरामंहनेष्ठाःपर्षत्पक्थेऽअहन्नासप्तहोतॄन् ॥ सऽइद्दानायदभ्यायवन्वन्च्यवानःसूदैरमिमीतवेदिं । तूर्वयाणोगूर्तवचस्तमःक्षोदोनरेतऽइतऽऊतिसिंचत् ॥ मनोनयेषुहवनेषुतिग्मंविपःशच्यावनुथोद्रवंता । आयःशर्याभिस्तुविनृम्णोऽअस्याश्रीणीतादिशंगभस्तौ ॥ कृष्णायद्गोष्वरुणीषुसीदद्दिवोनपाताश्विनाहुवेवां । वीतंमेयज्ञमागतंमेऽअन्नंववन्वांसानेषमस्मृतध्रू ॥ प्रथिष्टयस्यवीरकर्ममिष्णदनुष्ठितंनुनर्योऽअपौहत् । पुनस्तदावृहतियत्कना

---

पंचमेनुवाकेष्टसूक्तानि । ( १०।५।१ ) इदमित्थेतिसप्तविंशत्यृचस्यसूक्तस्यमानवोनाभानेदिष्टोविश्वेदेवास्त्रिष्टुप् ( भेदपक्षे—रुद्रः २ अश्विनौ २ रुद्रः २ विश्वेदेवाः १ वास्तोष्पतिरुद्रौ १ वास्तोष्पत्यग्नी १ अंगिरसः १ इंद्रः ३ अग्निः १ नासत्येंद्राः १ सोमः १ अग्निः १ आदित्यनाभानेदिष्टौ १ नाभानेदिष्टधेनू १ अग्निः १ इंद्राग्नी १ इंद्रः १ मित्रावरुणनाभानेदिष्टाः १ वरुणः १ मित्रावरुणौ १ वरुणः १ देवाः १ एवं २७ ) ।

यांदुहितुराऽअनुंभृतमनर्वा+ ॥ २६ ॥ मध्यायत्कर्त्वमभवदभीकेकामंकृण्वानेपितरिंयुवत्यां । मनानग्रेतोजहतुर्वि
यंतासानौनिषिक्तंसुकृतस्ययोनौ ॥ पितायत्स्वांदुहितरमधिष्कन्क्ष्मयारेतःसंजग्मानोनिषिंचत् । स्वाध्योंजनयन्ब्रह्म
देवावास्तोष्पतिंव्रतपांनिरंतक्षन् ॥ सऽईंवृषानफेनमस्यदाजौस्मदापरैदपंदभ्रचेताः । सरत्पदानदक्षिणापरावृङ्न
तानुमेपृशन्योजगृभ्रे ॥ मक्षूनवह्निःप्रजायाऽउपब्दिरग्निंननग्नऽउपसीददूधः । सनितेध्मंसनितोतवाजंसधर्ताजज्ञे
सहसायवीयुत्+ ॥ मक्षूकनायाःसख्यंनवग्वाऽऋतंवदंतऽऋतयुक्तिमग्मन् । द्विबर्हसोयऽउपगोपमागुरदक्षिणासोऽ
अच्युतादुदुक्षन् ॥ २७ ॥ मक्षूकनायाःसख्यंनवीयोराधोनरेतऽऋतमित्तुरण्यन् । शुचियत्तेरेक्णऽआयजंतसबर्दु
घायाःपयऽउस्रियायाः ॥ पश्वायत्पश्वावियुताबुधंतेतिब्रवीतिवक्तरीरराणः । वसोर्वसुत्वाकारवोनेहाविश्वंविवेष्टिद्र
विणमुपक्षु+ ॥ तदिन्न्वस्यपरिषद्वानोऽअग्मन्पुरूसदंतोनार्षदंबिभित्सन् । विशुष्णस्यसंग्रथितमनर्वाविदत्पुरुप्रजा
तस्यगुहायत्+ ॥ भर्गोहनामोतयस्यदेवाःस्वर्णयेत्रिषधस्थेनिषेदुः । अग्निर्हनामोतजातवेदाःश्रुधीनोहोतर्ऋतस्य
होताध्रुक् ॥ उतत्यामेरौद्रावर्चिमंतानासत्याविंद्रगूर्तयेयजध्यै । मनुष्वद्वृक्तबर्हिषेरराणामंदूहितप्रयसाविक्षुयज्यू
॥ २८ ॥ अयंस्तुतोराजावंदिवेधाऽअपश्चविप्रस्तरतिःस्वसेतुः । सकक्षीवंतंरेजयत्सोऽअग्निंनेमिंनचक्रमर्वतोरघुद्रु+ ॥
सद्बिबंधुर्वैतरणोयष्टासबर्धुंधेनुमस्वंदुहध्यै । संयन्मित्रावरुणावृंजऽउक्थैर्ज्येष्ठेभिरर्यमणंवरूथैः ॥ तद्बंधुःसूरिर्दिवि

॥ ८ ॥

तैंधियंधानाभानेदिष्ठोरपतिप्रवेनन् । सानोनाभिःपरमास्यवाघाहंतत्पश्चाकतिथश्चिदास ॥ इयंमेनाभिरिहमेसधस्थ मिमेमेदेवाऽअयमस्मिसर्वः । द्विजाऽअहप्रथमजाऽऋतस्येदंधेनुरदुहज्जायमाना ॥ अधासुमंद्रोऽअरतिर्विभावावस्य तिद्विवर्तनिर्वनेषाट् । ऊर्ध्वायचच्छ्रेणिर्नशिशुर्दन्मक्षूस्थिरंशेवृधंसूतमाता+ ॥ २९ ॥ अधागावऽउपमातिंकनायाऽअ नुश्वांतस्यकस्यचित्परेयुः । श्रुधित्वंसुद्रविणोनस्त्वंयाळाश्वघ्नस्यंवावृधेसूनृताभिः ॥ अधत्वमिंद्रविद्ध्य१स्मान्महोरा येनृपतेवज्रंवाहुः । रक्षाचनोमघोनःपाहिसूरीननेहसस्तेहरिवोऽअभिष्टौ ॥ अधयद्राजानागविष्टौसरत्सरण्युःकारवे जरण्युः । विप्रःप्रेष्ठःसह्येषांबभूवपराचवक्षदुतपर्षदेनान् ॥ अधान्वस्यजेन्यस्यपुष्टौवृथारेभंतऽईमहेतदूनु । सरण्युर स्यसूनुरश्वोविप्रश्चासिश्रवसश्चसातौ+ ॥ युवोर्यदिसख्यायास्मेशर्धायस्तोमंजुजुषेनमस्वान् । विश्वत्रयस्मिन्नागिरःस मीचीःपूर्वीवगातुर्दाशसूनृतायै ॥ सगृणानोऽअद्भिर्देववानितिसुबंधुर्नमसासूक्तैः । वर्धदुक्थैर्वचोभिराहिनूनंव्यध्वै तिपर्यसऽउस्रियायाः ॥ तऽऊषुणोमहोयंजत्राभूतदेवासऽऊतयेसजोषाः । येवाजाँऽअनयताविर्यंतोयेस्थानिचेता रोऽअमूराः ॥ ३० ॥ इत्यष्टमाकेप्रथमोऽध्यायः ॥ ॥ ॥ ॥ ॥

अष्टमाष्टकेसूक्तानि १४५ ऋचः १२९३

सप्तपंचाशाध्यायेवर्गाः ३० सूक्तानि १६ ऋचः १६१ ॥ त्यागः ॥ अग्नय.१० वैकुंठायेंद्राये.३७ अग्नय. देवेभ्य. अग्नय.

देवेभ्य. अग्नय. देवेभ्य. अग्नय. देवेभ्य. अग्नय. देवेभ्य.६ अग्नय.३ देवेभ्य.२ अग्नय.६ इंद्राये.१४ विश्वेभ्योदेवेभ्य.१३ [ भे. प. विश्वेभ्योदे.७ इंद्राये. अग्नयेतंतव. विश्वेभ्योदेवेभ्य.३ सोमाये. ] मनसइदं.१२ निर्ऋतय.३ निर्ऋतिसोमाभ्या. असुनीत्या.२ पृथिवीद्यंतरिक्षसोमपूषपथ्यास्वस्तिभ्य. द्यावापृथिवीभ्या.२ इंद्रद्यावापृथिवीभ्य. असमातय.४ इंद्राये. असमातय. जीवायेदं.५ हस्ताये. विश्वेभ्योदेवेभ्य.२७ [ भे. प. रुद्राये.२ अश्विभ्या.२ रुद्राये.२ विश्वेभ्योदेवेभ्य. वास्तोष्पतयेरुद्राये. वास्तोष्पत्यग्निभ्या. अंगिरोभ्य. इंद्राये.३ अग्नय. नासत्येंद्रेभ्य. सोमाये. अग्नय. आदित्यनाभानेदिष्ठेभ्य. नाभानेदिष्ठधेनुभ्या. अग्नय. इंद्राग्निभ्या. इंद्राये. मित्रावरुणनाभानेदिष्ठेभ्य. वरुणाये. मित्रावरुणाभ्या.२ देवेभ्य. ] ॥ इत्यष्टमेप्रथमः ॥

येयज्ञेनैकादशाद्याःषळंगिरसांस्तुतिर्वीत्यात्रिष्टुप्पंचम्यनुष्टुप्प्रगाथोनुष्टुभौगायत्रींचतस्रोंत्याःसावर्णेर्दानस्तुतिःपरावतरूयूनांगयःप्लातोद्विःत्रिष्टुबंतंतुस्वस्तिनस्त्रिष्टुब्वासासहोत्तरयापथ्यास्वस्तिदेवत्याकथायांमेत्रिष्टुब्बम्निरिंद्रःपंचोनांवसुकर्णोवासुक्रस्त्रिष्टुबंतंतुदेवान्हुवइमांधियंद्वादशायास्योवार्हस्पत्यंतूदप्लुतोभद्राःसुमित्रोवाध्र्यश्वऽआग्नेयंद्विजगत्यादींमांमएकादशाप्रैंबृहस्पतेबृहस्पतिर्ज्ञानंतुष्टावंनवमीजगती ॥ ३ ॥ ॥

॥ हरिःओम् ॥ ( १०।५।२ ) येयज्ञेनदक्षिणयासमक्ताऽइंद्रस्यसख्यममृतत्वमानश । तेभ्योभद्रमंगिरसोवोऽ

॥ ९ ॥

---

( १०।५।२ ) येयज्ञेनेत्येकादशर्चस्यसूक्तस्यमानवोनाभानेदिष्ठोविश्वेदेवाःप्रनूनमित्यादिचतसृणांसावर्णिर्जगतीपंचम्यष्टमीनवम्यो-

अस्तुप्रतिगृभ्णीतमानवंसुमेधसः ॥ यऽउदाजन्पितरोगोमयंवसृतेनाभिंदन्परिवत्सरेवलं । दीर्घायुत्वमंगिरसोवोऽ
अस्तुप्रति० ॥ यऽऋतेनसूर्यमारोहयन्दिव्यप्रथयन्पृथिवींमातरंवि । सुप्रजास्त्वमंगिरसोवोऽअस्तुप्रति० ॥ अयंना
भावदतिवल्गुवोगृहेदेवपुत्राऽऋषयस्तच्छृणोतन । सुब्रह्मण्यमंगिरसोवोऽअस्तुप्रति० ॥ विरूपासऽइदृषयस्तऽइद्गं
भीरवेपसः । तेऽअंगिरसःसूनवस्तेऽअग्नेःपरिजज्ञिरे ॥ १ ॥ येऽअग्नेःपरिजज्ञिरेविरूपासोदिवस्परि । नवग्वोनुद
शग्वोऽअंगिरस्तमःसचादेवेषुमंहते ॥ इंद्रेणयुजानिःसृजंतवाघतोव्रजंगोमंतमश्विनं । सहस्रंमेददतोऽअष्टकर्ण्यः
श्रवोदेवेष्वक्रत ॥ प्रनूनंजायतामयंमनुस्तोक्मेवरोहतु । यःसहस्रंशताश्वंसद्योदानायमंहते ॥ नतमश्नोतिकश्चनदि
वऽइवसान्वारभं । सावर्ण्यस्यदक्षिणाविसिंधुरिवपप्रथे ॥ उतदासापरिविषेस्मदिष्टीगोपरीणसा । यदुस्तुर्वश्चमाम
हे ॥ सहस्रदाग्रामणीर्मारिषन्मनुःसूर्येणास्ययतमानैतुदक्षिणा । सावर्णेर्देवाःप्रतिरंत्वायुर्यस्मिन्नश्रांताऽअसनामवा

---

नुष्टुभःषष्ठीबृहतीसप्तमीसतोबृहतीदशमीगायत्रीअंत्यात्रिष्टुप् ( भेदपक्षे—अंगिरसः६ विश्वेदेवाः १सावर्णिः ४ एवं ११ । अंगिरसोनुक्रम
ण्यांपाक्षिकाउक्ताः )। येयज्ञेनेतिचतसृणांत्रिष्टुप्छंदस्त्वंकश्चिद्ब्रूतेतद्बहुविरुद्धं । विरोधास्तु—षळंगिरसांस्तुतिर्वात्यात्रिष्टुबित्यनुक्रमाच्छेषा
जगत्यइतिपरिभाषाव्याघातएकः । तासांत्रिष्टुप्छंदस्त्वेनादेशपरिभाषयातासामंत्यायाश्चत्रिष्टुस्त्वेसिद्धेंत्यात्रिष्टुब्निितिसिद्धानुवादलक्षणदोषा
विष्करणंद्वितीयः । दशमीत्वस्यगायत्रीजगत्यन्याविनोत्तमामितिशौनकवचनाज्ज्ञातेनस्वेच्छयाव्याख्यानमितितृतीयश्चेति । )

जँ ॥ २ ॥ ( १०।५।३ ) परावतोयेदिधिषंतऽआप्यंमनुप्रीतासोजनिमाविवस्वतः । ययातेयेनहुष्यस्यबर्हिषिदेवा
ऽआसंतेतेऽअधिब्रुवंतुनः ॥ विश्वाहिवोनमस्यानिवंद्यानामानिदेवाऽउतयज्ञियानिवः । येस्थजाताऽअदितेरद्भ्यस्प
रियेपृथिव्यास्तेमऽइहश्रुताहवं ॥ येभ्योमातामधुमत्पिन्वतेपयःपीयूषंद्यौरदितिरद्रिबर्हाः । उक्थशुष्मान्वृषभरा
न्त्स्वप्नसस्ताँऽआदित्याँऽअनुमदास्वस्तये ॥ नृचक्षसोऽअनिमिषंतोऽअर्हणाबृहद्देवासोऽअमृतत्वमानशुः ॥ ज्योतीर
थाऽअहिमायाऽअनागसोदिवोवर्ष्माणंवसतेस्वस्तये ॥ सम्राजोयेसुवृधोयज्ञमाययुरपरिह्वृतादधिरेदिविक्षयं । ताँऽ
आविवासनमसासुवृक्तिभिर्महोऽआदित्याँऽअदितिंस्वस्तये ॥ ३ ॥ कोवःस्तोमंराधतियंजुजोषथविश्वेदेवासोमनुषो
यतिष्ठन । कोवोध्वरंतुविजाताऽअरंकरद्योनःपर्षदत्यंहःस्वस्तये ॥ येभ्योहोत्रांप्रथमामायेजेमनुःसमिद्धाग्निर्मनसास
प्तहोतृभिः । तऽआदित्याऽअभयंशर्मयच्छतसुगानःकर्तसुपथास्वस्तये ॥ यऽईशिरेभुवनस्यप्रचेतसोविश्वस्यस्थातुर्ज
गतश्चमंतवः । तेनःकृतादकृतादेनसस्पर्यद्याद्देवासःपिपृतास्वस्तये ॥ भरेष्विंद्रंसुहवंहवामहेंहोमुचंसुकृतंदैव्यंजनं ।
अग्निंमित्रंवरुणंसातयेभगंद्यावापृथिवीमरुतःस्वस्तये ॥ सुत्रामाणंपृथिवींद्यामनेहसंसुशर्माणमदितिंसुप्रणीतिं । दैवीं



( १०।५।३ ) परावतइतिसप्तदशर्चस्यसूक्तस्यगयःप्लातोविश्वेदेवाःपंचदशीषोडश्योःपथ्यास्वस्तिर्जगत्यंत्येद्वेत्रिष्टुभौस्वस्तिस्त्रिष्टुब्वा ।
( भेदपक्षे—विश्वेदेवाः९दिवः१विश्वेदेवाः४पथ्यास्वस्तिः२विश्वेदेवाः१एवं१७)।गयःप्लातइत्यत्रप्लातोगयोविश्वेदेवाइत्यपिकेचित्प्रयुंजते)।

नावंस्वरित्रामनागसमस्रवंतीमारुहेमास्वस्तये ॥ ४ ॥ विश्वेयजत्राऽअधिवोचतोतयेत्रायध्वंनोदुरेवायाऽअभिह्रुतः । सत्ययावोदेवहूत्याहुवेमश्रृण्वतोदेवाऽअवसेस्वस्तये ॥ अपामीवामपविश्वामनाहुतिमपारातिंदुर्विदत्रामघायतः । आरेदेवाद्वेषोऽअस्मद्युयोतनोरुणःशर्मयच्छतास्वस्तये ॥ अरिष्टःसमर्तोविश्वऽएधतेप्रप्रजाभिर्जायतेधर्मणस्परि । यमादित्यासोनयथासुनीतिभिरतिविश्वानिदुरितास्वस्तये ॥ यंदेवासोवथवाजसातौयंशूरसातामरुतोहितेधने । प्रातर्यावाणंरथमिंद्रसानसिमरिष्यंतमारुहेमास्वस्तये ॥ स्वस्तिनःपथ्यासुधन्वसुस्वस्त्य१प्सुवृजनेस्वर्वति । स्वस्तिनःपुत्रकृथेषुयोनिषुस्वस्तिरायेमरुतोदधातन ॥ स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावाममेति । सानोऽअमासोऽअरणेनिपातुस्वावेशाभवतुदेवगोपा ॥ एवाप्लुतेःसूनुरवीवृधद्वोविश्वऽआदित्याऽअदितेमनीषी । ईशानासोनरोऽअमर्त्येनास्ताविजनोदिव्योगयेन ॥ ५ ॥ ( १०।५।४ ) कथादेवानांकतमस्ययामनिसुमंतुनामश्रृण्वतांमनामहे । कोमृळातिकतमोनोमयस्करत्कतमऽऊतीऽअभ्यावववर्तति ॥ क्रतूयंतिक्रतवोहृत्सुधीतयोवेनंतिवेनाःपतयंत्यादिशः । नमर्डितावियतेऽअन्यऽएभ्योदेवेषुमेऽअधिकामाऽअयंसत ॥ नराशंसंपूषणमगोह्यमग्निंदेवेद्धमभ्यर्चसेगिरा ।

( १०।५।४ ) कथादेवानामितिसप्तदशर्चस्यसूक्तस्यगयःप्लातोविश्वेदेवाजगतीद्वादशीषोडशीसप्तदश्यस्त्रिष्टुभः ( भेदपक्षे—विश्वेदेवाः४ आदित्यार्यमणः१विश्वेदेवाः३नद्यः१विश्वेदेवाः४द्यावापृथिव्यौ१विश्वेदेवाः३एवं१७ ) ।

सूर्यामासाचंद्रमसायमंदिविचित्रंतंवातमुषसंमक्तुमश्विना ॥ कथाकविस्तुवीरवान्कयागिराबृहस्पतिर्वावृधतेसुवृक्ति
भिः । अजऽएकपात्सुहवेभिर्ऋक्वभिरहिःशृणोतुबुध्न्योऽहवीमनि ॥ दक्षस्यवादितेजन्मनिव्रतेराजानामित्रावरुणाविव
वासति । अतूर्तपंथाःपुरुरथोऽअर्यमासप्तहोताविषुरूपेषुजन्मसु ॥ ६ ॥ तेनोऽअर्वंतोहवनश्रुतोहवंविश्वेशृण्वंतुवा
जिनोमितद्रवः । सहस्रसामेधसाताविवत्मनामहोयेधनंसमिथेषुजभ्रिरे+ ॥ प्रवोवायुंरथयुजंपुरंधिंस्तोमैःकृणुध्वंस
ख्यायपूषणं । तेहिदेवस्यसवितुःसवीमनिक्रतुंसचंतेसचितःसचेतसः ॥ त्रिःसप्तसस्रानद्योमहीरपोवनस्पतीन्पर्वताँऽ
अग्निमूतये । कृशानुमस्तॄन्तिष्यंसधस्थऽआरुद्रंरुद्रेषुरुद्रियंहवामहे ॥ सरस्वतीसरयुःसिंधुरूर्मिभिर्महोमहीरवसायंतु
वक्षणीः । देवीरापोमातरःसूदयित्न्वोघृतवत्पयोमधुमन्नोऽअर्चत ॥ उतमाताबृहद्दिवाशृणोतुनस्त्वष्टादेवेभिर्जनि
भिःपितावचः । ऋभुक्षावाजोरथस्पतिर्भगोरण्वःशंसःशशमानस्यपातुनः ॥ ७ ॥ रण्वःसंदृष्टौपितुमाँऽइववक्षयोभद्रा
रुद्राणांमरुतामुपस्तुतिः । गोभिःष्यामयशसोजनेष्वासदादेवासऽइळयासचेमहि ॥ यांमेधियंमरुतऽइंद्रदेवाऽअद
दातवरुणमित्रयूयं । तांपीपयतपयसेवधेनुंकुविद्गिरोऽअधिरथेवहाथ ॥ कुविदंगप्रतियथाचिदस्यनःसजात्यस्यमरु
तोबुबोधथ । नाभायत्रप्रथमंसंनसामहेतत्रजामित्वमदितिर्दधातुनः ॥ तेहिद्यावापृथिवीमातरामहीदेवीदेवान्जन्म
नायज्ञियेऽइतः । उभेबिभृतऽउभयंभरीमभिःपुरूरेतांसिपितृभिश्चसिंचतः ॥ विषाहोत्राविश्वमश्नोतिवार्यंबृहस्पति

ररमंतिःपनीयसी । ग्रावायत्रंमधुषुदुच्यतेबृहदवींवशंतमतिभिर्मनीषिणः ॥ एवाकविस्तुवीरवाँऽऋतज्ञाद्रविणस्यु
द्रविणसश्चकानः । उक्थेभिरत्रमतिभिश्चविप्रोपीपयद्यौदिव्यानिजन्म ॥ एवाप्लुतेःसूनुरवीवृधद्वोविश्वऽआदित्याऽ
अदितेमनीषी । ईशानासोनरोऽअमर्त्येनास्ताविजनोदिव्योगयेन ॥ ८ ॥ ( १०।५।५ ) अग्निरिंद्रोवरुणोमित्रोऽअर्यमा
वायुःपूषासरस्वतीसजोषसः । आदित्याविष्णुर्मरुतःस्वर्बृहत्सोमोरुद्रोऽअदितिर्ब्रह्मणस्पतिः ॥ इंद्राग्नीवृत्रहत्येषुस
त्पतीमिथोहिन्वानातन्वा३समोकसा । अंतरिक्षंमह्यापप्रुरोजसासोमोघृतश्रीर्महिमानमीरयन् ॥ तेषांहिमह्नामहता
मनर्वणांस्तोमाँऽइयर्म्यृतज्ञाऽऋतावृधां । येऽअप्सवमर्णवंचित्रराधसस्तेनोरासंतांमहयेसुमित्र्याः+ ॥ स्वर्णरमंतरि
क्षाणिरोचनाद्यावाभूमीपृथिवींस्कंभुरोजसा । पृक्षाऽइवमहयंतःसुरातयोदेवाःस्तवंतेमनुषायसूरयः ॥ मित्रायशिक्ष
वरुणायदाशुषेयासम्राजामनसानप्रयुच्छतः । ययोर्धामधर्मणारोचतेबृहद्ययोरुभेरोदसीनाधसीवृतौ ॥ ९ ॥ यागौ
वर्तनिंपर्येतिनिष्कृतंपयोदुहानाव्रतनीरवारतः । साप्रब्रुवाणावरुणायदाशुषेदेवेभ्योदाशद्धविषाविवस्वते ॥ दिवक्ष
सोऽअग्निजिह्वाऽऋतावृधऽऋतस्ययोनिंविमृशंतऽआसते । द्यांस्कंभित्व्य१पऽआचक्रुरोजसायज्ञंजनित्वीतन्वी३नि

( १०।५।५ ) अग्निरिंद्रइतिपंचदशर्चस्यसूक्तस्यवासुक्रोवसुकर्णोविश्वेदेवाजगत्यंत्यात्रिष्टुप् । ( भेदपक्षे—विश्वेदेवाः ४मित्रावरुणौ१
गौः१विश्वेदेवाः१द्यावापृथिव्यौ१विश्वेदेवाः३अश्विनौ१विश्वेदेवाः३एवं१५ ) ।

मामृजुः ॥ परिक्षितापितरापूर्वजावरीऽऋतस्ययोनाक्षयतःसमोकसा । द्यावापृथिवीवरुणायसव्रतेघृतवत्पयोमहिषायपिन्वतः ॥ पर्जन्यावातावृषभापुरीषिणेंद्रवायूवरुणोमित्रोऽअर्यमा । देवाँऽआदित्याँऽअदितिंहवामहेयेपार्थिवासोदिव्यासोऽअप्सुये+ ॥ त्वष्टारंवायुमृभवोयऽओहतेदैव्याहोताराऽउषसंस्वस्तये । बृहस्पतिंवृत्रखादंसुमेधसमिंद्रियंसोमंधनसाऽउऽईमहे ॥ १० ॥ ब्रह्मगामश्वंजनयंतऽओषधीर्वनस्पतीन्पृथिवींपर्वताँऽअपः । सूर्यंदिविरोहयंतःसुदानवऽआर्याव्रताविसृजंतोऽअधिक्षमि ॥ भुज्युमंहसःपिपृथोनिरश्विनाश्यावंपुत्रंवध्रिमत्याऽअजिन्वतं । कमद्युवंविमदायोहथुर्युवंविष्णाप्वं१विश्वकायावसृजथः ॥ पावीरवीतन्यतुरेकपादजोदिवोधर्तासिंधुरापःसमुद्रियः । विश्वेदेवासःशृणवन्वचांसिमेसरस्वतीसहधीभिःपुरंध्या ॥ विश्वेदेवाःसहधीभिःपुरंध्यामनोर्यजत्राऽअमृताऽऋतज्ञाः । रातिषाचोऽअभिषाचःस्वर्विदःस्व१र्गिरोब्रह्मसूक्तंजुषेरत ॥ देवान्वसिष्ठोऽअमृतान्ववंदेयेविश्वाभुवनाभिप्रतस्थुः । तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ ११ ॥ ( १०।५।६ ) देवान्हुवेबृहच्छ्रवसःस्वस्तयेज्योतिष्कृतोऽअध्वरस्यप्रचेतसः । येवावृधुःप्रतरंविश्वेवेदसऽइंद्रज्येष्ठासोऽअमृताऽऋतावृधः ॥ इंद्रप्रसूतावरुणप्रशिष्टायेसूर्यस्यज्योतिषोभागमानशुः । मरुद्गणेवृजनेमन्मधीमहिमाघोनेयज्ञंजनयंतसूरयः ॥ इंद्रोवसुभिःपरिपातुनोगयं



(१०।५।६)देवान्हुवइतिपंचदशर्चस्यसूक्तस्यवासुक्रोवसुकर्णो [illegible] त्रिष्टुप्(षष्ठे [illegible] विश्वेदेवाः६अग्नीपोमौ१विश्वेदेवाः८एवं१५)।

मादित्यैर्नोऽअदितिः शर्मयच्छतु । रुद्रोरुद्रेभिर्देवोमृळयातिनस्त्वष्टानोग्नाभिः सुवितायजिन्वतु ॥ अदितिर्द्यावापृथिवीऽऋतंमहदिंद्राविष्णूमरुतः स्वर्बृहत् । देवाँऽआदित्याँऽअवसेहवामहेवसूंन्रुद्रान्त्संवितारंसुदंससं ॥ सरस्वान्धीभिर्वरुणोधृतव्रतः पूषाविष्णुर्महिमावायुरश्विना । ब्रह्मकृतोऽअमृताविश्ववेदसः शर्मनोयंसन्त्रिवरूथमंहसः ॥ १२ ॥ वृषायज्ञोवृषणः संतुयज्ञियावृषणोदेवावृषणोहविष्कृतः । वृषणाद्यावापृथिवीऽऋतावरीवृषापर्जन्योवृषणोवृषस्तुभः ॥ अग्नीषोमावृषणावाजसातयेपुरुप्रशस्तावृषणाऽउपब्रुवे । यावीजिरेवृषणोदेवयज्ययातानः शर्मत्रिवरूथंवियंसतः ॥ धृतव्रताः क्षत्रियायज्ञनिष्कृतोबृहद्दिवाऽअध्वराणामभिश्रियः । अग्निहोतारऽऋतसापोऽअद्रुहोपोऽअसृजन्ननुवृत्रतूर्ये ॥ द्यावापृथिवीजनयन्नभिव्रतापऽओषधीर्वनिनानियज्ञिया । अंतरिक्षंस्व१रापप्रुरूतयेवशंदेवासस्तन्वी३निमामृजुः ॥ धर्तारोदिवऽऋभवः सुहस्तावातापर्जन्यामहिषस्यतन्यतोः । आपऽओषधीः प्रतिरंतुनोगिरोभगोरातिर्वाजिनोयंतुमेहवं ॥ १३ ॥ समुद्रः सिंधूरजोऽअंतरिक्षमजऽएकपात्तनयित्नुरर्णवः । अहिर्बुध्न्यः श्रृणवद्वचांसिमेविश्वेदेवासऽउतसूरयोमम ॥ स्यामवोमनवोदेववीतयेप्रांचंनोयज्ञंप्रणयतसाधुया । आदित्यारुद्रावसवः सुदानवऽइमाब्रह्मशस्यमानानिजिन्वत ॥ दैव्याहोताराप्रथमापुरोहितऽऋतस्यपंथामन्वेमिसाधुया । क्षेत्रस्यपतिंप्रतिवेशमीमहेविश्वान्देवाँऽअमृताँऽअप्रयुच्छतः ॥ वसिष्ठासः पितृवद्वाचमक्रतदेवाँऽईळानाऽऋषिवत्स्वस्तये । प्रीताऽइवज्ञातयः काममेत्या

स्मेदेवासोवंधूनुतावसुं ॥ देवान्वसिंष्ठोऽअमृतान्ववंदेयेविश्वाभुवंनाभिप्रतस्थुः । तेनोंरासंतामुरुगायमद्ययूयंपात
स्वस्तिभिःसदानः ॥ १४ ॥ ( १०।५।७ ) इमांधियंसप्तशीर्ष्णींपितानऽऋतप्रंजातांबृहतीमविंदत् । तुरीयंस्विज्ज
नयद्विश्वजंन्योयास्यंऽउक्थमिंद्रांयशंसन् ॥ ऋतंशंसंतऽऋजुदीध्यानादिवस्पुत्रासोऽअसुरस्यवीराः । विप्रंपदमंगि
रसोदधानायज्ञस्यधामप्रथमंमनंत ॥ हंसैरिवसखिंभिर्वावंदद्भिरश्मन्मयानिनहंनाव्यस्यन् । बृहस्पतिरभिकनिक्र
दद्गाऽउतप्रास्तौदुच्चंविद्वाँऽअंगायत् ॥ अवोद्वाभ्यांपरऽएकयागागुहातिष्ठंतीरनृतस्यसेतौ । बृहस्पतिस्तमसिज्यो
तिरिच्छन्नुदुस्राऽआकर्विहितिस्रऽआवः ॥ विभिद्यापुरंशयथेमपाचींनिस्त्रीणिसाकमुदधेरकृंतत् । बृहस्पतिरुषसंसूर्यंगामर्कंविवेदस्तनयन्निवद्यौः ॥ इंद्रोवलंरक्षितारंदुघानांकरेणेवविचकर्तारवेण । स्वेदांजिभिराशिरमिच्छमानो
रोदयत्पणिमागाऽअंमुष्णात् ॥ १५ ॥ सऽईंसत्येभिःसखिंभिःशुचद्भिर्गोधायसंविधनसैरदर्दः । ब्रह्मणस्पतिर्वृषंभि
र्वराहैर्घर्मस्वेदेभिर्द्रविंणंव्यानट् ॥ तेसत्येनमनसागोपतिंगाऽइयानासंऽइषणयंतधीभिः । बृहस्पतिर्मिथोऽअंवद्यपे
भिरुदुस्रियाऽअसृजतस्वयुग्भिः ॥ तंवर्धयंतोमतिभिःशिवाभिःसिंहमिवनानंदतंसधस्थे । बृहस्पतिंवृषणंशूरसातौ
भरेभरेऽअनुंमदेमजिष्णुं ॥ यदावाजमसंनद्विश्वरूपमाद्यामरुक्षदुत्तराणिसद्म । बृहस्पतिंवृषणंवर्धयंतोनानासंतो



( १०।५।७ ) इमांधियमितिद्वादशर्चस्यसूक्तस्यांगिरसोऽयास्योबृहस्पतिस्त्रिष्टुप् ।

विभ्रंतोज्योतिरासा+ ॥ सत्यामाशिषंकृणुतावयोधैकीरिंचिद्ध्यवंथस्वेभिरेवैः । पश्चामृधोऽअपभवंतुविश्वास्तद्रोद
सीश्रृणुतंविश्वमिन्वे+ ॥ इंद्रोमह्नामहतोऽअर्णवस्यविमूर्धानमभिनदर्बुदस्य । अहन्नहिमरिणात्सप्तसिंधून्देवैर्द्यावा
पृथिवीप्रावतंनः ॥ १६ ॥ ( १०।५।८ ) उदप्रुतोनवयोरक्षमाणावावदतोऽअभ्रियस्येवघोषाः । गिरिभ्रजोनोर्म
योमदंतोबृहस्पतिमभ्यर्१काऽअनावन् ॥ संगोभिरांगिरसोनक्षमाणोभगऽइवेदर्यमणंनिनाय । जनेमित्रोनदंपतीऽ
अनक्तिबृहस्पतेवाजयाशूँरिवाजौ+ ॥ साध्वर्याऽअतिथिनीरिषिराःस्पार्हाःसुवर्णाऽअनवद्यरूपाः । बृहस्पतिःपर्वते
भ्योवितूर्यानिर्गाऽऊपेयवमिवस्थिविभ्यः ॥ आप्रुषायन्मधुनऽऋतस्ययोनिमवक्षिपन्नर्कऽउल्कामिवद्योः । बृहस्प
तिरुद्धरन्नश्मनोगाभूम्याऽउद्नेववित्वचंबिभेद ॥ अपज्योतिषातमोऽअंतरिक्षादुद्नःशीपालमिववातऽआजत् । बृह
स्पतिरनुमृश्यावलस्याभ्रमिववातऽआचक्रऽआगाः+ ॥ यदावलस्यपीयतोजसुंभेद्बृहस्पतिरग्नितपोभिरर्कैः । दद्भि
र्नजिह्वापरिविष्टमाददाविर्निधीँरकृणोदुस्रियाणां ॥ १७ ॥ बृहस्पतिरमतहित्यदासांनामस्वरीणांसदनेगुहायत् ।
आंडेवभित्त्वाशकुनस्यगर्भमुदुस्रियाःपर्वतस्यत्मनाजत् ॥ अश्नापिनद्धंमधुपर्यपश्यन्मत्स्यंनदीनऽउदनिक्षियंतं । नि
ष्टज्जभारचमसंनवृक्षाद्बृहस्पतिर्विरवेणाविकृत्य ॥ सोषाम्मविंदत्सःस्व१ःसोऽअग्निंसोऽअर्केणविबबाधेतमांसि । बृह

---

( १०।५।८ ) उदप्रुतइतिद्वादशर्चस्यसूक्तस्यांगिरसोयास्योबृहस्पतिस्त्रिष्टुप् ।

स्पतिर्गोवपुषोवलस्यनिर्मज्जानंनपर्वणोजभार ॥ हिमेवपर्णामुषितावनानिबृहस्पतिनाकृपयद्वलोगाः । अनानुकृत्य मपुनश्चकारयात्सूर्यामासामिथउच्चरातः ॥ अभिश्यावंनकृशनेभिरश्वंनक्षत्रेभिःपितरोद्यामपिंशन् । रात्र्यांतमोऽ अदधुर्ज्योतिरहन्बृहस्पतिर्भिनदद्रिंविदद्गाः ॥ इदमकर्मनमोऽअभ्रियाययःपूर्वीरन्वानोनवीति । बृहस्पतिःसहि गोभिःसोऽअश्वैःसवीरेभिःसनृभिर्नोवयोधात् ॥ १८ ॥ ( १०।६।१ ) भद्राऽअग्नेर्वध्र्यश्वस्यसंदृशोवामीप्रणीतिः सुरणाऽउपेतयः । यदींसुमित्राविशोऽअग्रऽइंधतेघृतेनाहुतोजरतेदविद्युतत् ॥ घृतमग्नेर्वध्र्यश्वस्यवर्धनंघृतमन्नंघृत स्वस्यमेदनं । घृतेनाहुतऽउर्वियाविपप्रथेसूर्यऽइवरोचतेसर्पिरासुतिः ॥ यत्तेमनुर्यदनीकंसुमित्रःसमीधेऽअग्नेतदिदं नवीयः । सरेवच्छोचसगिरोजुषस्वसवाजंदर्षिसऽइहश्रवोधाः ॥ यंत्वापूर्वमीळितोवध्र्यश्वःसमीधेऽअग्नेसऽइदंजुष स्व । सनःस्तिपाऽउतभवातनूपादात्रंरक्षस्वयदिदंतेऽअस्मे ॥ भवाद्युम्नीवाध्र्यश्वोतगोपामात्वातारीदभिमातिर्जना नां । शूरऽइवधृष्णुश्च्यवनःसुमित्रःप्रनुवोचंवाध्र्यश्वस्यनाम ॥ समज्र्यापर्वत्या३वसूनिदासावृत्राण्यार्याजिगेथ । शूरऽइवधृष्णुश्च्यवनोजनानांत्वमग्नेपृतनायूँरभिष्याः ॥ १९ ॥ दीर्घतंतुर्बृहदुक्षायमग्निःसहस्रस्तरीःशतनीथऽऋ भ्वा । द्युमान्द्युमत्सुनृभिर्मृज्यमानःसुमित्रेषुदीदयोदेवयत्सु ॥ त्वेधेनुःसुदुघाजातवेदोसश्चतेवसमनासबर्धुक् । त्वं



---

षष्ठेनुवाकेषोडशसूक्तानि ( १०।६।१ ) भद्राअग्नेरितिद्वादशर्चस्यसूक्तस्यवाध्र्यश्वःसुमित्रोग्निस्त्रिष्टुबाद्येद्वेजगत्यौ ।

नृभिर्दक्षिणावद्भिरग्नेसुमित्रेभिरिध्यसेदेवयद्भिः ॥ देवाश्चित्तेऽअमृताजातवेदोमहिमानंवाध्र्यश्वप्रवोचन् । यत्संपृ च्छंमानुषीर्विशऽआयन्त्वंनृभिरजयस्त्वावृधेभिः ॥ पितेवपुत्रमबिभरुपस्थेत्वामग्नेवध्र्यश्वःसपर्यन् । जुषाणोऽअस्य समिधंयविष्ठोतपूर्वाँऽअवनोर्व्राधतश्चित् ॥ शश्वदग्निर्वध्र्यश्वस्यशत्रून्नृभिर्जिगायसुतसोमवद्भिः । समनंचिददहश्चि त्रभानोवव्राधंतमभिनद्वृधश्चित् ॥ अयमग्निर्वध्र्यश्वस्यवृत्रहासनकात्प्रेद्धोनमसोपवाक्यः । सनोऽअजामीँरुतवावि जामीनभितिष्ठशर्धतोवाध्र्यश्व ॥ २० ॥ ( १०।६।२ ) इमांमेऽअग्नेसमिधंजुषस्वेळस्पदेप्रतिहर्याघृताचीं । वर्ष्म न्पृथिव्याःसुदिनत्वेऽअह्नामूर्ध्वोभवसुक्रतोदेवयज्या+ ॥ आदेवानामग्रयावेहयातुनराशंसोविश्वरूपेभिरश्वैः । ऋत स्यपथानमसामियेधोदेवेभ्योदेवतमःसुषूदत् ॥ शश्वत्तममीळतेदूत्यायहविष्मंतोमनुष्यासोऽअग्निं । वहिष्ठैरश्वैःसु वृतारथेनादेवान्वक्षिनिषदेहहोता ॥ विप्रथतांदेवजुष्टंतिरश्चादीर्घंद्राघ्मासुरभिभूत्वस्मे । अहेळतामनसादेवबर्हिरिं द्रज्येष्ठाँऽउशतोयक्षिदेवान् ॥ दिवोवासानुस्पृशतावरीयःपृथिव्यावामात्रयाविश्रयध्वं । उशतीर्द्वारोमहिनामह द्भिर्देवंरथंरथयुर्धारयध्वं ॥ २१ ॥ देवीदिवोदुहितरासुशिल्पेऽउषासानक्तासदतांनियोनौ । आवांदेवासऽउशती

---

( १०।६।२ ) इमांमइत्येकादशर्चस्यसूक्तस्यवाध्र्यश्वःसुमित्रइध्मोनराशंसइळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौप्रचेतसौसरस्व तीळाभारत्यस्त्वष्टावनस्पतिःस्वाहाकृतयस्त्रिष्टुप् ।

ऋक्सं.

अ. ८ अ. २

॥ १५ ॥

उशंतऽउरौसींदंतुसुभगेऽउपस्थें ॥ ऊर्ध्वोग्रावांबृहदुग्निःसमिद्धःप्रियाधामान्यदितेरुपस्थें । पुरोहिंतावृत्विजायुज्ञेऽ अस्मिन्विदुष्टंराद्रविंणमायंजेथां ॥ तिस्रोदेवीर्बर्हिरिदंवरींयऽआसींदतचकृमावंःस्योनं । मनुष्व द्युज्ञंसुधिताहवींषी ळांदेवीघृतपंदीजुषंत ॥ देवंत्वष्टर्यद्धंचारुत्वमानुज्यदंगिंरसामभंवःसचाभूः । सदेवानांपाथऽउपप्रविद्वानुशन्यंक्षि द्रविणोदःसुरत्नः ॥ वनंस्पतेरशुनयांनियूयांदेवानांपाथऽउपंवक्षिविद्वान् । स्वदातिदेवःकृणवंद्धवींष्यवंतांद्यावांपृ थिवीहवंमे ॥ आग्नेवहवरुंणमिष्टयेंनऽइंद्रंदिवोमुरुतोऽअंतरिंक्षात् । सीदंतुबर्हिर्विश्वऽआयजंत्राःस्वाहांदेवाऽअमृ तांमादयंतां ॥ २२ ॥ ( १०।६।३ ) बृहंस्पतेप्रथमंवाचोऽअग्रंयत्प्रैरंतनामधेयंदधांनाः । यदेंषांश्रेष्ठंयदंरिप्रमासीं त्प्रेणातदेंषांनिहिंतंगुहाविः+ ॥ सक्तुंमिवतितंउनापुनंतोयत्रधीरामनंसावाचमक्रंत । अत्रासखांयःसख्यानिंजान तेभद्रैषांलक्ष्मीर्निहिताधिंवाचि+ ॥ यज्ञेनंवाचःपंदवीयंमायन्तामन्वंविंदन्नृषिंषुप्रविष्टां । तामाभृत्याव्यंदधुःपुरुत्रा तांसप्तरेभाऽअभिसंनवंते ॥ उतत्वःपश्यन्नदंदर्शवाचंमुतत्वंःश्रृण्वन्नश्रृंणोत्येनां । उतोत्वंस्मैतन्वं१विसंस्रेजायेवपत्यं ऽउशतीसुवासाः ॥ उतत्वंसख्येस्थिरपीतमाहुर्नैनंहिन्वंत्यपिवाजिंनेषु । अन्धेन्वाचरतिमाययैषवाचंशुश्रुवाँऽअंफ लामंपुष्पां+ ॥ २३ ॥ यस्तित्याजंसचिविदंसखांयुंनतस्यंवाच्यपिंभागोऽअंस्ति । यदींश्रृणोत्यलंकंश्रृणोतिनहिप्रवेदं

मंडलं १०

अनु. ६

॥ १५ ॥

---

( १०।६।३ ) बृहस्पतइत्येकादशर्चस्यसूक्तस्यांगिरसोबृहस्पतिर्ज्ञानंत्रिष्टुपनवमीजगती ।

सुकृतस्यपंथां ॥ अक्षण्वंतः कर्णवंतः सखायोमनोजवेष्वसमावभूवुः । आदघ्नासऽउपकक्षासऽउत्वेहदाऽइवस्नात्वाऽउत्वेदद्दश्रे ॥ हृदातष्टेषुमनसोजवेषुयद्ब्राह्मणाःसंयजंतेसखायः । अत्राहत्वंविजहुर्वेद्याभिरोहब्रह्माणोविचरंत्युत्वे ॥ इमेयेनार्वाङ्नपरश्चरंतिनब्राह्मणासोनसुतेकरासः । तऽएतेवाचमभिपद्यपापयासिरीस्तंत्रंतन्वतेऽअप्रजज्ञयः ॥ सर्वेनंदंतियशसागतेनसभासाहेनसख्यासखायः । किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय ॥ ऋचांत्वःपोषमास्तेपुपुष्वान्गायत्रंत्वोगायतिशक्करीषु । ब्रह्मात्वोवदतिजातविद्यांयज्ञस्यमात्रांविमिमीतऽउत्वः ॥ २४ ॥ ॥ इत्यष्टमाष्टकेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

अष्टपंचाशाध्यायेवर्गाः २४ सूक्तानि १० ऋचः १३३ ॥ त्यागः ॥ विश्वेभ्योदेवेभ्य.७ [ भे. प. अंगिरोभ्य.६ विश्वेभ्योदेवेभ्य.१ ] सावर्णय.४ विश्वेभ्योदेवेभ्य.१४ [भे. प. विश्वेभ्योदे.९ दिवे. विश्वेभ्योदेवेभ्य.४] पथ्यायैस्वस्तय.२ विश्वेभ्योदे.४७ [ भे. प. विश्वेभ्योदे.४ अदित्यर्यमभ्या. विश्वेभ्योदेवेभ्य.३ नदीभ्य. विश्वेभ्योदे.४ द्यावापृथिवीभ्या. विश्वेभ्योदेवेभ्य.७ मित्रावरुणाभ्या. गवइ. विश्वेभ्योदेवेभ्य. द्यावापृथिवीभ्या. विश्वेभ्योदेवेभ्य.३ अश्विभ्या. विश्वेभ्योदेवेभ्य.९ अग्नीषोमाभ्या. विश्वेभ्योदेवेभ्य.८ ] बृहस्पतय.२४ अग्नय.१२ समिद्धायाग्नय. नराशंसाये. इळाये. बर्हिषइ. देवीभ्योद्वार्भ्यइ. उषासानक्ताभ्या. देवीभ्यांहोतृभ्यांप्रचेतोभ्या. सरस्वतीळाभारतीभ्य. त्वष्ट्रइ. वनस्पतय. स्वाहाकृतीभ्य. ज्ञानाये.११ ॥ इत्यष्टमेद्वितीयः ॥

देवानांनवलौक्योवाबृहस्पतिर्दाक्षायण्यदितिर्वादेवमानुष्टुभंजनिष्ठाएकादशगौरिवीतिर्वसूनांषट्प्रसुनवसिंधुक्षि
त्प्रैयमेधोनदीस्तुतिर्जागतंत्वावोष्टौसर्पऐरावतोजरत्कर्णोग्राव्णोस्तौदश्वप्रुषःस्यूमरश्मिर्भार्गवोमारुतंतुपंचमी
जगतीविप्रासोद्वितीयापंचम्याद्याश्चतिस्रोजगत्योपश्यंसप्तसौचीकोग्निर्वैश्वानरोवासप्तिर्वावाजंभरऽआग्नेयंत्वं
ग्निःसप्तियइमाविश्वाविश्वकर्माभौवनोवैश्वकर्माणंतुद्वितीयाविराड्रूपाचक्षुषोयस्तेमन्योमन्युस्तापसोमान्यवं
त्वाद्याजगतीत्वयामन्योचतुर्जगत्यंतंसत्येनसप्तचत्वारिंशत्सावित्रीसूर्यात्मदैवतमानुष्टुभंपंचभिःसोममस्तौत्प
राभिःस्वविवाहंसप्तदश्यादेवान्परयासोमार्कौपरयाचंद्रमसंपरानृणांविवाहमंत्राआशीःप्रायाःपरादेहीतिद्वेव
धूवासःसंस्पर्शनिंदार्थेपरायक्ष्मनाशिनीदंपत्योर्नवोनवस्तिस्रोनृक्षरागृभ्णामीतिद्वेद्वेयदश्विनापूषाघोरचक्षुरि
तित्रिष्टुभस्तृष्टमुरोबृहतीपूर्वापरमिहप्रियमानःप्रजांजगत्यः ॥ ३ ॥ ॥ ॥ ॥

॥ हरिःओम् ॥ ( १०।६।४ ) देवानांनुवयंजानाप्रवोचामविपन्यया । उक्थेषुशस्यमानेषुयःपश्यादुत्तरेयु
गे+ ॥ ब्रह्मणस्पतिरेतासंकर्मारऽइवाधमत् । देवानांपूर्व्येयुगेसतःसदजायत ॥ देवानांयुगेप्रथमेसतःसदजायत ।
तदाशाऽअन्वजायंततदुत्तानपदस्परि ॥ भूर्जज्ञऽउत्तानपदोभुवऽआशाऽअजायंत । अदितेर्दक्षोऽअजायतदक्षाद्व



( १०।६।४ ) देवानामितिनवर्चस्यसूक्तस्यलौक्योबृहस्पतिर्देवाअनुष्टुप् । ( आंगिरसोवाबृहस्पतिऋषिर्दाक्षायण्यदितिर्वाऋषिका ) ।

दितिःपरि ॥ अदितिर्ह्यजनिष्टदक्षयादुहितातव । तांदेवाऽअन्वजायंतभद्राऽअमृतबंधवः ॥ १ ॥ यद्देवाऽअदः संलिलेसुसंरब्धाऽअतिष्ठत । अत्रावोनृत्यंतामिवतीव्रोरेणुरपायत ॥ यद्देवायतयोयथाभुवनान्यपिन्वत । अत्रास मुद्रऽआगूह्ळमासूर्यमजभर्तन ॥ अष्टौपुत्रासोऽअदितेर्येजातास्तन्व१स्परि । देवाँऽउपप्रैत्सप्तभिःपरामार्ताण्डमास्य त् ॥ सप्तभिःपुत्रैरदितिरुपप्रैत्पूर्व्यंयुगं । प्रजायैमृत्यवेत्वत्पुनर्मार्ताण्डमाभरत् ॥ २ ॥ ( १०।६।५ ) जनिष्ठाऽउग्रः सहसेतुरायमंद्रऽओजिष्ठोबहुलाभिमानः । अवर्धन्निंद्रंमरुतश्चिदत्रमातायद्वीरंदधनद्धनिष्ठा ॥ द्रुहोनिषत्तापृशनी चिदेवैःपुरूशंसेनवावृधुष्टऽइंद्रं । अभीवृतेवतामहापदेनध्वांतात्प्रपित्वादुदरन्तगर्भाः ॥ ऋष्वातेपादाप्रयज्जिगास्यव र्धन्वाजाऽउतयेचिदत्र । त्वमिंद्रसालावृकान्सहस्रमासन्दधिषेऽअश्विनाववृत्याः ॥ समनातूर्णिरुपयासियज्ञमाना सत्यासख्यायवक्षि । वसाव्यामिंद्रधारयःसहस्राश्विनाशूरददतुर्मघानि ॥ मन्दमानऽऋतादधिप्रजायैसखिभिरिंद्र ऽइषिरेभिरर्थं । आभिर्हिमायाऽउपदस्युमागान्मिहःप्रतम्राऽअवपत्तमांसि ॥ ३ ॥ सनामानाचिद्ध्वसयोन्यस्माऽअ वाहन्निंद्रऽउषसोयथानः । ऋष्वैरगच्छःसखिभिर्निकामैःसाकंप्रतिष्ठाहृद्याजघंथ ॥ त्वंजघंथनमुचिंमखस्युंदासंकृ ण्वानऽऋषयेविमायं । त्वंचकर्थमनवेस्योनान्पथोदेवत्राञ्जसेवयानान् ॥ त्वमेतानिपप्रिषेविनामेशानऽइंद्रदधिषे

---

( १०।६।५ ) जनिष्ठाइत्येकादशर्चस्यसूक्तस्यशाक्त्योगौरिवीतिरिंद्रस्त्रिष्टुप् ।

गभस्तौ । अनुत्वादेवाःशवसामदंत्युपरिंबुध्नान्वनिनश्चकर्थ ॥ चक्रंयदस्याप्स्वानिषत्तमुतोतदस्मैमध्विच्चच्छद्यात् । पृथिव्यामतिंषितंयदूधःपयोगोष्वदधाऽओषधीषु ॥ अश्वादियायेतियद्वदंत्योजसोजातमुतमन्यऽएनं । मन्योरियायहर्म्येषुतस्थौयतःप्रजज्ञऽइंद्रोऽअस्यवेद ॥ वयःसुपर्णाऽउपसेदुरिंद्रंप्रियमेधाऽऋषयोनाधमानाः । अपध्वांतमूर्णुहिपूर्धिचक्षुर्मुमुग्ध्य१स्मान्निधयेवबद्धान्+ ॥ ४ ॥ ( १०।६।६ ) वसूनांवाचकृषऽइयंक्षन्धियावायज्ञैर्वारोदस्योः । अर्वंतोवायेरयिमंतःसातौवनुंवायेसुश्रुणंसुश्रुतोधुः+ ॥ हवऽएषामसुरोनक्षतद्यांश्रवस्यतामनसानिंसतक्षां । चक्षाणायत्रसुवितायदेवाद्यौर्नवारेभिःकृणवंतस्वैः+ ॥ इयमेषाममृतानांगीःसर्वतातायेकृपणंतरंतं । धियंचयज्ञंचसाधंतस्तेनोधांतुवसव्यं१मसामि ॥ आतत्तऽइंद्रायवःपनंताभियऽऊर्वंगोमंतंतितृत्सान् । सकृत्स्वं१येपुरुपुत्रांमहींसहस्रधारांबृहतींदुदुक्षन् ॥ शचीवऽइंद्रमवसेकृणुध्वमनानतंदमयंतंपृतन्यून् । ऋभुक्षणंमघवानंसुवृक्तिंभर्तायोवज्रंनर्यपुरुक्षुः+ ॥ यद्वावानंपुरुतमंपुराषाळावृत्रहेंद्रोनामान्यप्राः । अचेतिप्रासहस्पतिस्तुविष्मान्यदीमुश्मसिकर्तवेकरत्तत्+ ॥५॥ ( १०।६।७ ) प्रसुवऽआपोमहिमानमुत्तमंकारुर्वोचातिसदनेविवस्वतः । प्रसप्तसप्तत्रेधाहिचक्रमुःप्रसृत्वरीणामतिसिंधुरोजसा ॥ प्रतेरदद्वरुणोयातवेपथःसिंधोयद्वाजाँऽअभ्यद्रवस्त्वं । भूम्याऽअधिप्रवतायासिसानुनायदेषामग्रंजगतामिर





(१०।६।६) वसूनामितिषड्चस्यसूक्तस्यशात्त्योगौरिवीतिरिंद्रस्त्रिष्टुप् ।(१०।६।७)प्रसुवइतिनवर्चस्यसूक्तस्यप्रैयमेधःसिंधुक्षिन्नद्योजगती ।

ज्यासिं ॥ दि॒वि स्व॒नो य॑तते॒ भूम्यो॒पर्य॑न॒न्तं शुष्म॒मुदि॑यर्ति॒ भा॒नुना॑ । अ॒भ्रादि॑व॒ प्र स्त॑नयन्ति वृ॒ष्टयः॒ सिन्धु॒र्यदे॑ति वृष॒भो न रोरु॑वत् ॥ अ॒भि त्वा॑ सिन्धो॒ शिशु॒मिन्न मा॒तरो॑ वा॒श्रा अ॑र्षन्ति॒ पय॑सेव धे॒नवः॑ । राजे॑व यु॒ध्वा न॑यसि॒ त्वमित्सिचौ॒ यदा॑सा॒मग्रं॑ प्र॒वता॒मिन॑क्षसि ॥ इ॒मं मे॑ गङ्गे यमुने सरस्वति॒ शुतु॑द्रि॒ स्तोमं॑ सचता॒ परु॒ष्ण्या । अ॒सि॒क्न्या म॑रुद्वृधे वि॒तस्त॒यार्जी॑कीये शृणु॒ह्या सु॒षोम॑या ॥ ६ ॥ ( परिशिष्टं ॥ सि॒तासि॒ते स॒रिते॒ यत्र॑ संग॒थे तत्रा॑प्लु॒तासो॑ दि॒वमु॒त्पत॑न्ति । ये वै त॒न्वं॑ वि सृ॒जन्ति॒ धीरा॒स्ते जना॑सो अ॒मृत॒त्वं भ॑जन्ते ॥ १ ॥ ) तृ॒ष्टाम॑या प्रथ॒मं यात॑वे स॒जूः सु॒सर्त्वा॑ र॒सया॑ श्वे॒त्या त्या । त्वं सि॑न्धो॒ कुभ॑या गोम॒तीं क्रुमुं॑ मेह॒त्न्वा स॒रथं॒ याभि॒रीय॑से ॥ ऋ॒जी॒त्येनी॒ रुश॑ती महि॒त्वा परि॒ ज्रयां॑सि भरते॒ रजां॑सि । अद॑ब्धा॒ सिन्धु॑र॒पसा॑म॒पस्त॒माश्वा॒ न चि॒त्रा वपु॑षीव द॒र्शता॑ ॥ स्व॒श्वा सिन्धुः॑ सु॒रथा॑ सु॒वासा॑ हिर॒ण्ययी॒ सुकृ॑ता वा॒जिनी॑वती । ऊर्णा॑वती युव॒तिः सी॒लमा॑वत्यु॒ताधि॑ वस्ते सु॒भगा॑ मधु॒वृध॑म् ॥ सु॒खं रथं॑ युयुजे॒ सिन्धु॑र॒श्विनं॒ तेन॒ वाजं॑ सनिषद॒स्मिन्ना॒जौ । म॒हान्ह्य॑स्य महि॒मा प॑न॒स्यते॒ऽद॑ब्धस्य॒ स्वय॑शसो विर॒प्शिनः॑ ॥ ७ ॥ ( १०।६।८ ) आ व॒ ऋञ्ज॑स ऊ॒र्जां व्यु॑ष्टि॒ष्विन्द्रं॑ म॒रुतो॒ रोद॑सी अनक्तन । उ॒भे यथा॑ नो॒ अह॑नी सचा॒भुवा॒ सदः॑सदो वरि॒वस्या॑त उ॒द्भिदा॑ ॥ तदु॒ श्रेष्ठं॒ सव॑नं सुनोत॒नात्यो॒ न हस्त॑यतो॒ अद्रिः॑ सो॒तरि॑ । वि॒दद्ध्य॑र्यो अ॒भिभू॑ति॒ पौंस्यं॑ म॒हो रा॒ये चि॑त्तरुते॒ यदर्व॑तः ॥ तदिद्ध्य॑स्य॒ सव॑नं वि॒वेर॒पो यथा॑ पु॒रा मन॑वे गा॒तुमश्रे॑त् । गो अ॑र्णसि त्वा॒ष्ट्रे अ

( १०।६।८ ) आव ऋंजस इत्यष्टर्चस्य सूक्तस्य ऐरावतो जरत्कर्णः सर्पो ग्रावाणो जगती ।

श्वनिर्णिजिप्रेमध्वरेष्वध्वराँऽअशिश्रयुः ॥ अपहतरक्षसोभंगुरावंतःस्कभायतनिर्ऋतिंसेधतामतिं । आनोरयिंसर्ववी रंसुनोतनदेवाव्यंभरतश्लोकमद्रयः ॥ दिवश्चिदावोमवत्तरेभ्योविभ्वनाचिदाश्वपस्तरेभ्यः । वायोश्चिदासोमरभस्त रेभ्योग्नेश्चिदर्चपितुकृत्तरेभ्यः ॥ ८ ॥ भुरंतुनोयशसःसोत्वंधसोग्रावाणोवाचादिवितादिवित्मता । नरोयत्रदुहतेका म्यंमध्वाघोषयंतोऽअभितोमिथस्तुरः ॥ सुन्वंतिसोमंरथिरासोऽअद्रयोनिरस्यरसंगविषोदुहंतिते । दुहंत्यूधरुपसेचं नायकंनरोहव्यानमर्जयंतऽआसभिः ॥ एतेनरःस्वपसोऽअभूतनयऽइंद्रायसुनुथसोममद्रयः । वामंवामंवोदिव्या यधाम्नेवसुवसुवःपार्थिवायसुन्वते ॥ ९ ॥ ( १०।६।९ ) अभ्रप्रुषोनवाचाप्रुषावसुहविष्मंतोनयज्ञाविजानुषः । सुमारुं तंनब्रह्माणमर्हसेगणमस्तोष्येषांनशोभसे ॥ श्रियेमर्यासोऽअंजीँरकृण्वतसुमारुतंनपूर्वीरतिक्षपः । दिवस्पुत्रासऽ एतानयेतिरऽआदित्यासस्तेऽअक्रानवावृधुः ॥ प्रयेदिवःपृथिव्यानबर्हणात्मनारिरिच्रेऽअभ्रान्नसूर्यः । पाजस्वंतो नवीराःपनस्यवोरिशादसोनमर्याऽअभिद्यवः ॥ युष्माकंबुध्नेऽअपांनयामनिविथुर्यतिनमहीश्रथर्यति । विश्वप्सुर्यज्ञो ऽअर्वागयंसुवःप्रयस्वंतोनसत्राचऽआगत ॥ यूयंधूर्षुप्रयुजोनरश्मिभिर्ज्योतिष्मंतोनभासाव्युष्टिषु । श्येनासोनस्वय शसोरिशादसःप्रवासोनप्रसितासःपरिप्रुषः ॥ १० ॥ प्रयद्वहध्वेमरुतःपराकाद्यूयंमहःसंवरणस्यवस्वः । विदानासो



---

( १०।६।९ ) अभ्रप्रुषइत्यष्टर्चस्यसूक्तस्यभार्गवःस्यूमरश्मिर्मरुतस्त्रिष्टुप्पंचमीजगती ।

वसवोराध्वंस्याराच्चिद्द्वेषः सनुतर्युयोत ॥ यऽउद्दचियज्ञेऽअध्वरेष्ठामरुद्‌भ्योनमानुषोददाशत् । रेवत्सवयोंदधतेसुवीरंस देवानामपिगोपीथेऽअस्तु ॥ तेहियज्ञेषुयज्ञियासऽऊमाऽआदित्येननाम्नाशंभविष्ठाः । तेनोवंतुरथतूर्मनीषांमहश्चयामं न्नध्वरेचकानाः+ ॥ ११ ॥ ( १०।६।१० ) विप्रासोनमन्मभिःस्वाध्योदेवाव्योउनयज्ञैःस्वप्नसः । राजानोनचित्राः सुसंदृशःक्षितीनांनमर्याऽअरेपसः ॥ अग्निर्नयेभ्राजसारुक्मवक्षसोवातासोनस्वयुजःसद्यऽऊतयः । प्रज्ञातारोनज्ये ष्ठाःसुनीतयःसुशर्माणोनसोमाऽऋतंयते+ ॥ वातासोनयेधुनयोजिगत्नवोग्नीनांनजिह्वाविरोकिणः । वर्मण्वंतोनयो धाःशिमीवंतःपितॄणांनशंसाःसुरातयः ॥ रथानांनयेराःसनाभयोजिगीवांसोनशूराऽअभिद्यवः । वरेयवोनमर्याघृ तप्रुषोभिस्वर्तारोऽअर्कंनसुष्टुभः ॥ अश्वासोनयेज्येष्ठासऽआशवोदिधिषवोनरथ्यःसुदानवः । आपोननिम्नैरुदभिर्जि गत्नवोविश्वरूपाऽअंगिरसोऽनसामभिः ॥ १२ ॥ ग्रावाणोनसूरयःसिंधुमातरऽआदर्दिरासोऽअद्रयोनविश्वहा । शिशूलानक्रीळयःसुमातरोमहाग्रामोनयामन्नुतत्विषा+ ॥ उषसांनकेतवोध्वरश्रियःशुभंयवोनांजिभिर्व्यश्वितन् । सिंधवोनययियोभ्राजदृष्टयःपरावतोनयोजनानिममिरे ॥ सुभागान्नोदेवाःकृणुतासुरत्नानस्मान्स्तोतॄन्मरुतोवावृधा

( १०।६।१० ) विप्रासइत्यष्टर्चस्यसूक्तस्यभार्गवःस्यूमरश्मिर्मरुतस्त्रिष्टुप्द्वितीयापंचम्याद्याश्वतस्रश्चजगत्यः ।

नाः । अधिस्तोत्रस्यंसख्यस्यंगातसनाद्धिवौरत्नधेयांनिसंति ॥ १३ ॥ ( १०।६।११ ) अपंश्यमस्यमहतोमहित्वम मर्त्यस्यमर्त्यासुविक्षु । नानाहनूविभृतेसंभरेतेऽअसिन्वतीवप्संतीभूर्यत्तः ॥ गुहाशिरोनिहितमृधगक्षीऽअसिन्वन्न त्तिजिह्वयावनानि । अत्राण्यस्मैपड्भिःसंभरंत्युत्तानहस्तानमसाधिविक्षु+ ॥ प्रमातुःप्रतरंगुह्यमिच्छन्कुमारोनवीरुधः सर्पदुर्वीः । ससंनपक्वमविदच्छुचंतंरिरिह्वांसंरिपऽउपस्थेऽअंतः+ ॥ तद्वामृतंरोदसीप्रब्रवीमिजायमानोमातरागर्भो ऽअत्ति । नाहंदेवस्यमर्त्यश्चिकेताग्निरंगविचेताःसप्रचेताः ॥ योऽअस्माऽअन्नंतृष्वाऽदधात्याज्यैर्घृतैर्जुहोतिपुष्यति । तस्मैसहस्रमक्षभिर्विचक्षेग्नेविश्वतःप्रत्यङ्ङसित्वं+ ॥ किंदेवेषुत्यजऽएनश्चकर्थाग्नेपृच्छामिनुत्वामविद्वान् । अक्रीळन्क्रीळन्हरिरत्तवेदन्विपर्वशश्चकर्तगामिवासिः+ ॥ विषूचोऽअश्वान्युयुजेवनेजाऽऋजीतिभीरशनाभिर्गृभीतान् । चक्षदेमित्रोवसुभिःसुजातःसमानृधेपर्वभिर्वावृधानः+ ॥ १४ ॥ ( १०।६।१२ ) अग्निःसप्तिंवाजंभरंददात्यग्निर्वीरंश्रुत्यंकर्मनिःष्ठां । अग्नीरोदसीविचरत्समञ्जन्नग्निर्नारींवीरकुक्षिंपुरंधिं ॥ अग्नेरप्नसःसमिदस्तुभद्राग्निर्महीरोदसीऽआविवेश । अग्निरेकंचोदयत्समत्स्वग्निर्वृत्राणिदयतेपुरूणि ॥ अग्निर्हत्यंजरतःकर्णमावाग्निरद्भ्योनिरदहज्जरूथं । अग्निरत्रिं

( १०।६।११ ) अपश्यमितिसप्तर्चस्यसूक्तस्यसौचीकोग्निरग्निस्त्रिष्टुप् ( वैश्वानरोग्निर्वाजंभरःसप्तिरितीमाद्वृषीपाक्षिकौ ) । ( १०।६।१२ ) अग्निःसप्तिमितिसप्तर्चस्यसूक्तस्यसौचीकोग्निरग्निस्त्रिष्टुप् ( वैश्वानरोग्निर्वाजंभरःसप्तिरितीमाद्वृषीपाक्षिकौ ) ।

घर्मऽउरुष्यदन्तरग्निर्नृमेधंप्रजयासृजत्सं+ ॥ अग्निर्दाद्द्रविणंवीरपेशाऽअग्निॠषिंयः सहस्रासनोति । अग्निर्दिविहव्यमा
ततानाग्नेर्धामानिविभृतापुरुत्रा+ ॥ अग्निमुक्थैॠषयोविह्वयन्तेग्निंनरोयामनिबाधितासः । अग्निंवयोऽअन्तरिक्षेपतन्
तोग्निः सहस्रापरियातिगोनां ॥ अग्निंविशऽईळतेमानुषीर्याऽअग्निंमनुषोनहुषोविजाताः । अग्निर्गान्धर्वीम्पथ्यामृतस्याग्ने
र्गव्यूतिर्घृतऽआनिषत्ता ॥ अग्नयेब्रह्मऽऋभवस्ततक्षुरग्निंमहामवोचामासुवृक्तिं । अग्नेप्रावजरितारंयविष्ठाग्नेमहिद्रवि
णमायजस्व ॥ १५ ॥ ( १०।६।१३ ) यऽइमाविश्वाभुवनानिजुह्वदृषिर्होतान्यसीदत्पितानः । सऽआशिषाद्रविण
मिच्छमानः प्रथमच्छदवराँऽआविवेश ॥ किंस्विदासीदधिष्ठानमारम्भणंकतमत्स्वित्कथासीत् । यतोभूमिंजनयन्वि
श्वकर्माविद्यामौर्णोन्महिनाविश्वचक्षाः ॥ विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् । संबाहुभ्यांध
मतिसंपतत्रैर्द्यावाभूमीजनयन्देवएकः ॥ किंस्विद्वनंकऽउसवृक्षऽआसयतोद्यावापृथिवीनिष्टतक्षुः । मनीषिणोमन
सापृच्छतेदुतद्यदध्यतिष्ठद्भुवनानिधारयन् ॥ यातेधामानिपरमाणियावमायामध्यमाविश्वकर्मन्नुतेमा । शिक्षासखि
भ्योहविषिस्वधावः स्वयंयजस्वतन्वंवृधानः+ ॥ विश्वकर्मन्हविषावावृधानः स्वयंयजस्वपृथिवीमुतद्यां । मुह्यन्त्वन्येऽ
अभितोजनासऽइहास्माकंमघवासूरिरस्तु ॥ वाचस्पतिंविश्वकर्माणमूतयेमनोजुवंवाजेऽअद्याहुवेम । सनोविश्वानि



( १०।६।१३ ) यइमाविश्वेतिसप्तर्चस्यसूक्तस्यभौवनोविश्वकर्माविश्वकर्मात्रिष्टुप्द्वितीयाविराड्रूपा ।

हवनानिजोषद्विश्वशंभूरवसेसाधुकर्मा ॥ १६ ॥ ( १०।६।१४ ) चक्षुषःपितामनसाहिधीरोघृतमेनेऽअजनन्नम्नमाने । यदेदंताऽअदद्दहंतपूर्वऽआदिद्द्यावापृथिवीऽअप्रथेतां ॥ विश्वकर्माविमनाऽआद्विहायाधातावि॑धातापरमोतसंदृक् । तेषामिष्टानिसमिषामदंतियत्रासप्तऽऋषीन्परऽएकमाहुः+ ॥ योनःपिताजनितायोविधाताधामानिवेद्भुवनानिविश्वा । योदेवानांनामधाऽएकएवतंसंप्रश्नंभुवनायंत्यन्या+ ॥ तऽआयजंतद्रविणंसमस्माऽऋषयःपूर्वेजरितारोनभूना । असूर्तेसूर्तेरजसिनिषत्तेयेभूतानिसमकृण्वन्निमानि ॥ परोदिवापरऽएनापृथिव्यापरोदेवेभिरसुरैर्यदस्ति । कंस्विद्गर्भंप्रथमंदध्रऽआपोयत्रदेवाःसमपश्यंतविश्वे ॥ तमिद्गर्भंप्रथमंदध्रऽआपोयत्रदेवाःसमगच्छंतविश्वे । अजस्यनाभावध्येकमर्पितंयस्मिन्विश्वानिभुवनानितस्थुः+ ॥ नतंविदाथयऽइमाजजानान्यद्युष्माकमंतरंबभूव । नीहारेणप्रावृताजल्प्याचासुतृपऽउक्थशासश्चरंति ॥ १७ ॥ ( १०।६।१५ ) यस्तेमन्योविधद्वज्रसायकसहऽओजःपुष्यतिविश्वमानुषक् । साह्यामदासमार्यंत्वयायुजासहस्कृतेनसहसासहस्वता ॥ मन्युरिंद्रोमन्युरेवासदेवोमन्युर्होतावरुणोजातवेदाः । मन्युंविशऽईळतेमानुषीर्याःपाहिनोमन्योतपसासजोषाः ॥ अभीहिमन्योतवसस्तवीयान्तपसायुजाविजहिश



( १०।६।१४ ) चक्षुषइतिसप्तर्चस्यसूक्तस्यभौवनोविश्वकर्माविश्वकर्मात्रिष्टुप् । ( १०।६।१५ ) यस्तेमन्यवितिसप्तर्चस्यसूक्तस्यतापसोमन्युर्मन्युस्त्रिष्टुवाद्याजगती ।

त्रून् । अमित्रहावृत्रहादस्युहाचविश्वावसून्याभरात्वंनः ॥ त्वंहिमन्योऽअभिभूत्योजाःस्वयंभूर्भामोऽअभिमातिषाहः । विश्वचर्षणिःसहुरिःसहावानस्मास्वोजःपृतनासुधेहि ॥ अभागःसन्नपपरेतोऽअस्मितवक्रत्वातविषस्यप्रचेतः । तंत्वामन्योऽअक्रतुर्जिहीळाहंस्वातनूर्बलदेयायमेहि ॥ अयंतेऽअस्म्युपमेह्यर्वाङ्प्रतीचीनःसहुरेविश्वधायः । मन्योवज्रिन्नभिमामाववृत्स्वहनावदस्यूँरुतबोध्यापेः+ ॥ अभिप्रेहिदक्षिणतोभवामेधावृत्राणिजंघनावभूरि । जुहोमितेधरुणंमध्वोऽअग्रमुभाऽउपांशुप्रथमापिबाव ॥ १८ ॥ ( १०।६।१६ ) त्वयामन्योसरथमारुजंतोहर्षमाणासोधृषितामरुत्वः । तिग्मेषवऽआयुधासंशिशानाऽअभिप्रयन्तुनरोऽअग्निरूपाः ॥ अग्निरिवमन्योत्विषितःसहस्वसेनानीर्नःसहुरेहूतऽएधि । हत्वायशत्रून्विभजस्ववेदऽओजोमिमानोविमृधोनुदस्व ॥ सहस्वमन्योऽअभिमातिमस्मेरुजन्मृणन्प्रमृणन्प्रेहिशत्रून् । उग्रंतेपाजोनन्वारुरुध्रेवशीवशंनयसऽएकजत्वं+ ॥ एकोबहूनामसिमन्यवीळितोविशंविशंयुधयेसंशिशाधि । अकृत्तरुक्त्वयायुजावयंद्युमन्तंघोषंविजयायकृण्महे ॥ विजेषकृदिंद्रऽइवानवब्रवो३स्माकंमन्योऽअधिपाभवेह । प्रियंतेनामसहुरेगृणीमसिविद्मातमुत्संयतऽआबभूथ ॥ आभूत्यासहजावज्रसायकसहोबिभर्ष्यभिभूतऽउत्तरं । क्रत्वानोमन्योसहमेद्येधिमहाधनस्यपुरुहूतसंसृजि ॥ संसृष्टंधनमुभयंसमाकृतमस्मभ्यंदत्तांवरुणश्चमन्युः । भि

---

( १०।६।१६ ) त्वयामन्यवितिसप्तर्चस्यसूक्तस्यतापसोमन्युर्मन्युर्जगतीआद्यास्तिस्रस्त्रिष्टुभः ।

ऋक्सं. अ. ८ अ. ३ ॥ २१ ॥

मंडलं १० अनु. ७

यंद्धानाहृदयेषुशत्रवःपराजितासोऽअपनिलयंतां ॥ १९ ॥ ( १०।७।१ ) सत्येनोत्तभिताभूमिःसूर्येणोत्तभिताद्यौः। ऋतेनादित्यास्तिष्ठंतिदिविसोमोऽअधिश्रितः ॥ सोमेनादित्याबलिनःसोमेनपृथिवीमही । अथोनक्षत्राणामेषामुपस्थे सोमऽआहितः ॥ सोमंमन्यतेपपिवान्यत्संपिंषंत्योषधिं । सोमंयंब्रह्माणोविदुर्नतस्याश्नातिकश्चन ॥ आच्छद्विधा नैर्गुपितोबार्हतैःसोमरक्षितः । ग्राव्णामिच्छृण्वन्तिष्ठसिनतेऽअश्नातिपार्थिवः ॥ यत्त्वादेवप्रपिबंतिततऽआप्यायसे पुनः । वायुःसोमस्यरक्षितासमानांमासऽआकृतिः ॥ २० ॥ रैभ्यासीदनुदेयीनाराशंसीन्योचनी । सूर्यायाभद्रमि द्वासोगाथयैतिपरिष्कृतं ॥ चित्तिराऽउपबर्हणंचक्षुराऽअभ्यंजनं । द्यौर्भूमिःकोशऽआसीद्यदयात्सूर्यापतिं ॥ स्तोमा ऽआसन्प्रतिधयःकुरीरंछंदऽओपशः । सूर्यायाऽअश्विनावराग्निरासीत्पुरोगवः ॥ सोमोवधूयुरभवदश्विनास्तामुभा वरा । सूर्यायत्पत्येशंसंतींमनसासवितादात् ॥ मनोऽअस्याऽअनऽआसीद्द्यौरासीदुतच्छदिः । शुक्रावनड्वाहावास्तां

---

सप्तमेनुवाकेषट्सूक्तानि । (१०।७।१) सत्येनेतिसप्तचत्वारिंशदृचस्यसूक्तस्यसूर्यासावित्रीऋषिकापंचानांसोमोदेवताततएकादशानां सूर्याविवाहःसप्तदश्यादेवाःअष्टादश्याःसोमार्कौएकोनविंश्याश्चंद्रमाःततोनवानांनृणांविवाहमंत्राआशीःप्रायाः ततोद्वयोर्वधूर्वासोदेवता एकत्रिंश्यायक्ष्महाशिष्टानामृचांसूर्यासावित्री अनुष्टुप्चतुर्दशीएकोनविंश्यादितिस्रस्त्रयोविंशीचतुर्विंशीषड्विंशीषट्त्रिंशीसप्तत्रिंशीचतुश्च त्वारिंश्यश्चत्रिष्टुभःअष्टादशीसप्तविंशीत्रिचत्वारिंश्यश्चजगत्यःचतुस्त्रिंश्युरोबृहती ।

॥ २१ ॥

यदयात्सूर्यागृहं+ ॥ २१ ॥ ऋक्सामाभ्यामभिहितौगावौतिसामनावितः । श्रोत्रंतेचक्रेऽआस्तांदिविपंथाश्चराचरः+ ॥
शुचीतेचक्रेयात्याव्यानोऽअक्षऽआहतः । अनोमनस्मयंसूर्यारोहत्प्रयतीपतिं ॥ सूर्यायावहतुःप्रागात्सवितायमवा
सृजत् । अघासुहन्यंतेगावोर्जुन्योःपर्युह्यते ॥ यदश्विनापृच्छमानावयातंत्रिचक्रेणवहतुंसूर्यायाः । विश्वेदेवाऽअनु
तद्वामजानन्पुत्रःपितराववृणीतपूषा+ ॥ यदयातंशुभस्पतीवरेयंसूर्यामुप । क्वैकंचक्रंवामासीत्क्वदेष्ट्रायतस्थथुः ॥२२॥
द्वेतेचक्रेसूर्येब्रह्माणऽऋतुथाविदुः । अथैकंचक्रंयद्गुहातदद्धातयऽइद्विदुः ॥ सूर्यायैदेवेभ्योमित्रायवरुणायच । ये
भूतस्यप्रचेतसऽइदंतेभ्योकरंनमः ॥ पूर्वापरंचरतोमाययैतौशिशूक्रीळंतौपरियातोऽअध्वरं । विश्वान्यन्योभुवनाभि
चष्टऽऋतूंरन्योविदधज्जायतेपुनः ॥ नवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रं । भागंदेवेभ्योविदधात्यायन्प्रचं
द्रमास्तिरतेदीर्घमायुः ॥ सुकिंशुकंशल्मलिंविश्वरूपंहिरण्यवर्णंसुवृतंसुचक्रं । आरोहसूर्येऽअमृतस्यलोकंस्योनंपत्येव
हतुंकृणुष्व ॥ २३ ॥ उदीर्ष्वातःपतिवतीह्येषाविश्वावसुंनमसागीर्भिरीळे । अन्यामिच्छपितृषदंव्यक्तांसतेभागोज
नुषातस्यविद्धि ॥ उदीर्ष्वातोविश्वावसोनमसेळामहेत्वा । अन्यामिच्छप्रफर्व्यं१संजायांपत्यासृज ॥ अनृक्षराऽऋज
वःसंतुपंथायेभिःसखायोयंतिनोवरेयं । समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः ॥ प्रत्वामुंचामिवरुण
स्यपाशाद्येनत्वाबध्नात्सवितासुशेवः । ऋतस्ययोनौसुकृतस्यलोकेरिष्टांत्वासहपत्यादधामि ॥ प्रेतोमुंचामिनामुतःसुब

द्धाममुतस्करं । यथेयमिंद्रमीढ्वःसुपुत्रासुभगासति ॥ २४ ॥ पूषात्वेतोनयतुहस्तगृह्याश्विनात्वाप्रवहतांरथेन । गृहा
न्गच्छगृहपत्नीयथासोवशिनीत्वंविदथमावदासि ॥ इहप्रियंप्रजयातेसमृध्यतामस्मिन्गृहेगार्हपत्यायजागृहि । एना
पत्यातन्वं१संसृजस्वाधाजिव्रीविदथमावदाथः ॥ नीललोहितंभवतिकृत्यासक्तिर्व्यज्यते । एधंतेऽअस्याज्ञातयःपति
र्बंधेषुबध्यते ॥ परादेहिशामुल्यंब्रह्मभ्योविभजावसु । कृत्यैषापद्वतीभूत्व्याजायाविशतेपतिं ॥ अश्रीरातनूर्भवतिरु
शतीपापयामुया । पतिर्यद्वध्वो३वाससास्वमंगमभिधित्सते ॥ २५ ॥ येवध्वश्चंद्रंवहतुंयक्ष्मायंतिजनादनु । पुनस्ता
न्यज्ञियादेवानयंतुयतऽआगताः ॥ माविदन्परिपंथिनोयऽआसीदंतिदंपती । सुगेभिर्दुर्गमतीतामपद्रान्त्वरातयः ॥
सुमंगलीरियंवधूरिमांसमेतपश्यत । सौभाग्यमस्यैदत्वायाथास्तंविपरेतन ॥ तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतद
त्तवे । सूर्यांयोब्रह्माविद्यात्सऽइद्वाधूयमर्हति ॥ आशसनंविशसनमथोऽअधिविकर्तनं । सूर्यायाःपश्यरूपाणितानि
ब्रह्मातुशुंधति ॥ २६ ॥ गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः । भगोऽअर्यमासवितापुरंधिर्मह्यंत्वा
दुर्गार्हपत्यायदेवाः+ ॥ तांपूषञ्छिवतमामेरयस्वयस्यांबीजंमनुष्या३वपंति । यानऽऊरूऽउशतीविश्रयातेयस्यामुशंतः
प्रहरामशेपं ॥ तुभ्यमग्रेपर्यवहन्सूर्यांवहतुनासह । पुनःपतिभ्योजायांदाऽअग्नेप्रजयासह+ ॥ पुनःपत्नीमग्निरदादा
युषासहवर्चसा । दीर्घायुरस्यायःपतिर्जीवातिशरदःशतं+ ॥ सोमःप्रथमोविविदेगंधर्वोविविदऽउत्तरः । तृतीयोऽ

अग्निष्टेपतिस्तुरीयस्तेमनुष्यजाः+ ॥ २७ ॥ सोमोददद्गंधर्वायगंधर्वोददद्ग्नये । रयिंचपुत्रांश्चादादग्निर्मह्यमथोऽइ मां+ ॥ इहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतं । क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे+ ॥ आनःप्रजांजनयतुप्रजापतिरा जरसायसमनक्त्वर्यमा । अदुर्मंगलीःपतिलोकमाविशशंनोभवद्विपदेशंचतुष्पदे ॥ अघोरचक्षुरपतिघ्न्येधिशिवाप शुभ्यःसुमनाःसुवर्चाः । वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदे ॥ इमांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु । दशास्यांपुत्रानाधेहिपतिमेकादशंकृधि ॥ सम्राज्ञीश्वशुरेभवसम्राज्ञीश्वश्र्वांभव । ननांदरिसम्राज्ञीभवसम्राज्ञीऽअ धिदेवृषु ॥ समंजंतुविश्वेदेवाःसमापोहृदयानिनौ । संमातरिश्वासंधातासमुदेष्ट्रीदधातुनौ ॥ २८ ॥ ( ॥ परिशि ष्टं ॥ ॥ अविधवाभववर्षाणिशतंसाग्रंतुसुव्रता । तेजस्वीचयशस्वीचधर्मपत्नीपतिव्रता ॥ जनयद्बहुपुत्राणिमाच दुःखंलभेत्कचित् । भर्तातेसोमपानित्यंभवेद्धर्मपरायणः ॥ अष्टपुत्राभवत्वंचसुभगांचपतिव्रता । भर्तुश्चैवपितुर्भ्रातु र्हृदयानंदिनीसदा ॥ इंद्रस्यतुयथेंद्राणीश्रीधरस्ययथाश्रिया । शंकरस्ययथागौरीतद्वत्तुरपिभर्तरि ॥ अत्रेर्यथानुसू यास्याद्वसिष्ठस्याप्यरुंधती । कौशिकस्ययथासतीतथात्वमपिभर्तरि ॥ ध्रुवैधिपोष्यामयिमह्यंत्वादाद्बृहस्पतिः । मयापत्याप्रजावतीसंजीवशरदःशतं ॥ ) इत्यष्टमाष्टकेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥

एकोनषष्ठ्यध्यायेवर्गाः २८ सूक्तानि १४ ऋचः १४८॥ त्यागः॥ देवेभ्य.९ इंद्राये.१७ नदीभ्य.९ ग्रावभ्य.८ मरुद्भ्य.१६ अग्नय. १४ विश्वकर्मण.१४ मन्यव.१४ सोमाये.५ सूर्याविवाहाये.११ देवेभ्य. सोमार्काभ्या. चंद्रमस. सूर्यासावित्र्या.९ वधूवाससइ.२ दंपती- राजयक्ष्मघ्नइ. सूर्यासावित्र्या.१६ ॥ इत्यष्टमेतृतीयः ॥

विहित्र्यधिकैंद्रोवृषाकपिरिंद्राणींद्रश्चसमूदिरेपाङ्क्तंरक्षोहणंपंचाधिकापायुराग्नेयंराक्षोघ्नंचतुरनुष्टुबंतंहविरेको नांगिरसोमूर्धन्वान्वामदेव्योवासौर्यवैश्वानरीयमिंद्रंस्तवद्यूनारेणुःपंचम्यैंद्रासोमींसहस्रशीर्षाषोळशनारायणः पौरुषमानुष्टुभंत्रिष्टुबंतंतुसंजागृवद्भिःपंचोनारुणोवैतहव्यआग्नेयंयज्ञस्यशार्यातोमानवोवैश्वदेवंतुजागतमहि तान्वःपार्थ्यःप्रस्तारपाङ्क्तंपुरस्ताद्बृहत्यंतंत्रयोदश्युपाद्येचानुष्टुभौनवम्यक्षरैःपङ्क्तिरेकादशीन्यंकुसारिणीप्रेतेष लूनासर्पोर्बुदःकाद्रवेयोग्राव्णोस्तौत्सप्तम्यंत्येत्रिष्टुभौपंचमीच ॥ ४ ॥ ॥ ॥

॥ हरिः ॐम् ॥ ( १०।७।२ ) विहिसोतोरसृक्षतनेंद्रंदेवममंसत । यत्रामदद्वृषाकपिरर्यःपुष्टेषुमत्सखाविश्वस्मा

---

( १०।७।२ ) विहिसोतोरितित्रयोविंशत्यृचस्यसूक्तस्यआद्याष्टम्येकादशीद्वादशीचतुर्दशीनामेकोनविंश्यादिचतसृणांचेंद्रऋषिःसप्त मीत्रयोदशीत्रयोविंशीनामैंद्रोवृषाकपिऋषिःशिष्टानामेकादशर्चामिंद्राणीऋषिकाइंद्रःपंक्तिः । ( अन्वयस्यवाक्यमितिपरिभाषांस्वीकृत्य- इंद्रेंद्राणीवृषाकपीनांविभागशोदेवतात्वंकेचिन्मन्यंतेतद्भाष्यकारादिविरुद्धं ) ।

दिंद्रऽउत्तरः ॥ पराहींद्रधावसिवृषाकपेरतिव्यथिः । नोऽअहप्रविंदस्यन्यत्रसोमपीतयेविश्वं० ॥ किमयंत्वांवृषाकपिश्च
कारहरितोमृगः । यस्माऽइरस्यसीदुन्वर्यौवापुष्टिमद्वसुविश्वं० ॥ यमिमंत्वंवृषाकपिंप्रियमिंद्राभिरक्षसि । श्वान्वस्यजं
भिषदपिकर्णैवराहयुविश्वं० ॥ प्रियातष्टानिमेकपिर्व्यक्ताव्यदूदुषत् । शिरोन्वस्यराविषंनसुगंदुष्कृतेभुवंविश्वं० ॥ १ ॥
नमत्स्त्रीसुभसत्तरानसुयाशुतराभुवत् । नमत्प्रतिच्यवीयसीनसक्थ्युद्यमीयसीविश्वं० ॥ उवेऽअंबसुलाभिकेयथेवांगभ
विष्यति । भसन्मेऽअंबसक्थिमेशिरोमेवीवहृष्यतिविश्वं० ॥ किंसुबाहोस्वंगुरेपृथुष्टोपृथुजाघने । किंशूरपत्नि
नस्त्वमभ्यमीषिवृषाकपिंविश्वं० ॥ अवीरामिवमामयंशरारुरभिमन्यते । उताहमस्मिवीरिणींद्रपत्नीमरुत्सखाविश्वं० ॥ संहोत्रंस्मपुरानारीसमनंवावगच्छति । वेधाऽऋतस्यवीरिणींद्रपत्नीमहीयतेविश्वं० ॥ २ ॥ इंद्राणीमासु
नारिषुसुभगामहमश्रवं । नह्यस्याऽअपरंचनजरसामरतेपतिर्विश्वं० ॥ नाहमिंद्राणिरारणसख्युर्वृषाकपेर्ऋते । यस्ये
दमप्यंहविः प्रियंदेवेषुगच्छतिविश्वं० ॥ वृषाकपायिरेवतिसुपुत्रऽआदुसुस्नुषे । घसत्तऽइंद्रऽउक्षणः प्रियंकाचित्करंह
विर्विश्वं० ॥ उक्ष्णोहिमेपंचदशसाकंपचंतिविंशतिं । उताहमद्मिपीवऽइदुभाकुक्षीपृणंतिमेविश्वं० ॥ वृषभोनतिग्मशृं
गोंतर्यूथेषुरोरुवत् । मंथस्तऽइंद्रशंहृदेयंतेसुनोतिभावयुर्विश्वं० ॥ ३ ॥ नसेशेयस्यरंवतेंतरासक्थ्या३कपृत् । सेदीशे
यस्यरोमशंनिषेदुषोविजृंभतेविश्वं० ॥ नसेशेयस्यरोमशंनिषेदुषोविजृंभते । सेदीशेयस्यरंवतेंतरासक्थ्या३कपृद्विश्वं० ॥

अयमींद्रवृषाकपिःपरस्वंतंहतंविदत्। असिंसूनांनवँचरुमादेधस्यानऽआचितंविश्वं०॥ अयमेमिविचाकशद्विचिन्वन्दा
समार्यं। पिबामिपाकसुत्वनोभिधीरमचाकशंविश्वं०॥ धन्वंचयत्कृंतत्रंचकतिस्वित्तावियोजना। नेदीयसोवृषाकपे
स्तमेहिंगृहाँऽउपविश्वं०॥ पुनरेहिंवृषाकपेसुवितांकल्पयावहै। यऽएषःस्वप्नंनशनोस्तमेषिपथापुनर्विश्वं०॥ यदुदंचोवृ
षाकपेगृहमिंद्राजगंतन। क्व१स्यपुल्वघोमृगःकमंगन्जनयोपनोविश्वं०॥ पर्शुर्हनाममानवीसाकंससूवविंशतिं। भद्रंभ
लत्यस्याऽअभूद्यस्याऽउदरमामयद्विश्वं०॥४॥(१०।७।३) रक्षोहणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म। शिशा
नोऽअग्निःक्रतुभिःसमिद्धःसनोदिवासरिषःपातुनक्तं॥ अयोदंष्ट्रोऽअर्चिषायातुधानानुपस्पृशजातवेदःसमिद्धः। आजि
ह्वयामूरदेवान्रभस्वक्रव्यादोवृक्त्व्यपिधत्स्वासन्+॥ उभोभयाविन्नुपधेहिदंष्ट्राहिंस्रःशिशानोवरंपरंच। उतांतरिक्षेपरि
याहिराजन्जंभैःसंधेह्यभियातुधानान्॥ यज्ञैरिषूःसन्नममानोऽअग्नेवाचाशल्याँऽअशनिभिर्दिहानः। ताभिर्विध्यहृद
येयातुधानान्प्रतीचोबाहून्प्रतिभङ्ध्येषां॥ अग्नेत्वचंयातुधानस्यभिंधिहिंस्राशनिर्हरसाहंत्वेनं। प्रपर्वाणिजातवेदःशृ
णीहिक्रव्यात्क्रविष्णुर्विचिनोतुवृक्णं+॥५॥ यत्रेदानींपश्यसिजातवेदस्तिष्ठंतमग्नऽउतवाचरंतं। यद्वांतरिक्षेपथिभिःपतं
तंतमस्तांविध्यशर्वाशिशानः॥ उतालब्धंस्पृणुहिजातवेदऽआलेभानादृष्टिभिर्यातुधानात्। अग्नेपूर्वोनिजहिशोशुचानऽ



(१०।७।३) रक्षोहणमितिपंचविंशत्यृचस्यसूक्तस्यभारद्वाजःपायूरक्षोहाग्निस्त्रिष्टुपूअंत्याश्चतस्रोनुष्टुभः।

आमादःक्ष्विंकास्तमदंत्वेनीः ॥ इहप्रब्रूंहियतमःसोऽअंग्नेयोयातुधानोयऽइदंकृणोतिं । तमारंभस्वसमिधायविष्ठनृच
क्षसश्चक्षुषेरंधयैनं ॥ तीक्ष्णेनाग्नेचक्षुषारक्षयज्ञंप्रांचंवसुभ्यःप्रणयप्रचेतः । हिंस्रंरक्षांस्यभिशोशुंचानंमात्वादभन्यातुधा
नांनृचक्षः ॥ नृचक्षारक्षःपरिंपश्यविक्षुतस्यत्रीणिप्रतिंशृणीह्यग्रां । तस्यांग्नेपृष्टीर्हरंसाशृणीहित्रेधामूलंयातुधानंस्यवृ
श्च ॥ ६ ॥ त्रिर्यातुधानःप्रसितिंतऽएत्वृतंयोऽअंग्नेऽअनृतेनहंतिं । तमर्चिषास्फूर्जयंन्जातवेदःसमक्षमैनंगृणतेनिवृ
ङ्धि ॥ तदंग्नेचक्षुःप्रतिंधेहिरेभेशफारुजंयेनपश्यंसियातुधानं । अथर्ववज्ज्योतिषादैव्येनसत्यंधूर्वंतमचितंन्योष ॥ यद
ग्नेऽअद्यमिंथुनाशपातोयद्वाचस्तृष्टंजनयंतरेभाः । मन्योर्मनसःशरव्या जायंतेयातयांविध्यहृदंयेयातुधानान् ॥ पराशृ
णीहितपंसायातुधानान्परांग्नेरक्षोहरंसाशृणीहि । परार्चिषामूरंदेवाञ्छृणीहिपरांसुतृपोऽअभिशोशुंचानः ॥ परांद्य
देवावृजिनंशृणंतुप्रत्यगैनंशपथांयंतुतृष्टाः । वाचास्तेनंशरंवऽऋच्छंतुमर्मन्विश्वंस्यैतुप्रसितिंयातुधानंः ॥ ७ ॥ यःपौ
रुंषेयेणक्रविषांसमङ्क्तेयोऽअश्व्येनपशुनांयातुधानंः । योऽअघ्न्यायाभरंतिक्षीरमंग्नेतेषांशीर्षाणिहरसापिवृश्च ॥ संवत्स
रीणंपयंऽउस्रियांयास्तस्यमाशींद्यातुधानोंनृचक्षः । पीयूषंमग्नेयतमस्तितृंप्सात्तंप्रत्यंचंमर्चिषाविध्यमर्मंन् ॥ विषंगवां
यातुधानाःपिबंत्वावृश्च्यंतामदिंतयेदुरेवांः । परैनान्देवःसंवितादंदातुपरांभागमोषंधीनांजयंतां ॥ सनादंग्नेमृणसि
यातुधानान्नत्वारक्षांसिपृतंनासुजिग्युः । अनुंदहसहमूंरान्क्रव्यादोमातेंहेत्यामुक्षतदैव्यांयाः ॥ त्वंनोंऽअग्नेऽअध

रादुदक्तात्त्वंपश्चादुतरक्षापुरस्तात् । प्रतितेतेऽअजरासस्तपिष्ठाऽअघशंसंशोशुचतोदहंतु ॥ ८ ॥ पश्चात्पुरस्तादधरादुदक्तात्कविःकाव्येनपरिपाहिराजन् । सखेसखायमजरोजरिम्णेग्नेमर्ताँऽअमर्त्यस्त्वंनः ॥ परित्वाग्नेपुरंवयंविप्रंसहस्यधीमहि । धृषद्वर्णंदिवेदिवेहंतारंभंगुरावतां ॥ विषेणभंगुरावतःप्रतिष्मरक्षसोदह । अग्नेतिग्मेनशोचिषातपुरग्राभिर्ऋष्टिभिः ॥ प्रत्यग्नेमिथुनादहयातुधानाकिमीदिना । संत्वाशिशामिजागृह्यदब्धंविप्रमन्मभिः ॥ प्रत्यग्नेहरसाहरःशृणीहिविश्वतःप्रति । यातुधानस्यरक्षसोबलंविरुजवीर्यं ॥ ९ ॥ ( १०।७४ ) हविष्पांतमजरंस्वर्विदिदिविस्पृश्याहुतंजुष्टमग्नौ । तस्यभर्मणेभुवनायदेवाधर्मणेकंस्वधयापप्रथंत ॥ गीर्णंभुवनंतमसापगूह्ळमाविःस्वरभवज्जातेऽअग्नौ । तस्यदेवाःपृथिवीद्यौरुतापोरणयन्नोषधीःसख्येऽअस्य ॥ देवेभिर्न्विषितोयज्ञियेभिरग्निंस्तोषाण्यजरंबृहंतं । योभानुनापृथिवींद्यामुतेमामाततानरोदसीऽअंतरिक्षं ॥ योहोतासीत्प्रथमोदेवजुष्टोयंसमांजन्नाज्येनावृणानाः । सपतत्रीत्वरंस्थाजगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥ यज्जातवेदोभुवनस्यमूर्धन्नतिष्ठोऽअग्नेसहरोचनेन । तंत्वाहेममतिभिर्गीर्भिरुक्थैःसयज्ञियोऽअभवोरोदसिप्राः ॥ १० ॥ मूर्धाभुवोभवतिनक्तमग्निस्ततःसूर्योजायतेप्रातरुद्यन् । मा



---

( १०।७४ ) हविष्पांतमित्येकोनविंशत्यृचस्यसूक्तस्यांगिरसोमूर्धन्वान्सूर्यवैश्वानरौत्रिष्टुप् । ( मरीचिः—हविष्पांतंद्विदैवत्यंसौर्यवैश्वानरीयकमितिद्वेदेवतेअत्र । तेनसूर्यवैश्वानरइत्यग्नेर्गुणद्वन्द्वंतःपरस्ताः ) ।

यामूतुयज्ञियानामेतामपोयत्तूर्णिश्चरतिप्रजानन्+ ॥ दृशेन्योयोमहिनासमिद्धोरोचतदिवियोनिर्विभावा । तस्मिन्न
ग्नौसूक्तवाकेनदेवाहविर्विश्वऽआजुहवुस्तनूपाः+ ॥ सूक्तवाकंप्रथममादिदग्निमादिद्धविरजनयंतदेवाः । सऽएषांय
ज्ञोऽअभवत्तनूपास्तंद्यौवेदतंपृथिवीतमापः ॥ यंदेवासोजनयंताग्निंयस्मिन्नाजुहवुर्भुवनानिविश्वा । सोऽअर्चिषापृथिवीं
द्यामुतेमामृजूयमानोऽअतपन्महित्वा+ ॥ स्तोमेनहिदिविदेवासोऽअग्निमजीजनञ्छक्तिभीरोदसिप्रां । तमूऽअक्र
ण्वन्त्रेधाभुवेकंसऽओषधीःपचतिविश्वरूपाः ॥ ११ ॥ यदेदेनमदधुर्यज्ञियासोदिविदेवाःसूर्यमादितेयं । यदाच
रिष्णूमिथुनावभूतामादित्प्रापश्यन्भुवनानिविश्वा ॥ विश्वस्माऽअग्निंभुवनायदेवावैश्वानरंकेतुमह्नामकृण्वन् ।
आयस्ततानोषसोविभातीरपोऽऊर्णोतितमोऽअर्चिषायन्+ ॥ वैश्वानरंकवयोयज्ञियासोग्निंदेवाऽअजनयन्नजुर्यं ।
नक्षत्रंप्रत्नममिनच्चरिष्णुयक्षस्याध्यक्षंतविषंबृहंतं ॥ वैश्वानरंविश्वहादीदिवांसंमंत्रैरग्निंकविमच्छावदामः । योमहि
म्नापरिबभूवोर्वीऽउतावस्तादुतदेवःपरस्तात् ॥ द्वेस्रुतीऽअश्रृणवंपितृणामहंदेवानामुतमर्त्यानां । ताभ्यामिदंविश्व
मेजत्समेतियदंतरापितरंमातरंच ॥ १२ ॥ द्वेसमीचीबिभृतश्चरंतंशीर्षतोजातंमनसाविमृष्टं । सप्रत्यङ्विश्वाभुव
नानितस्थावप्रयुच्छन्तरणिर्भ्राजमानः ॥ यत्रावदेतेऽअवरःपरश्चयज्ञन्योःकतरोनौविवेद । आशेकुरित्सधमादंस
खायोनक्षंतयज्ञंकऽइदंविवोचत् ॥ कत्यग्नयःकतिसूर्यासःकत्युषासःकत्युस्विदापः । नोपस्पिजंवःपितरोवदामिपृ

ऋक्सं.
८ अ. ४
२६ ॥

मंडलं १०
अनु. ७

च्छामिंवः कवयोविद्मनेकं ॥ यावन्मात्रमुषसोनप्रतीकंसुपर्ण्यो३ वसंतेमातरिश्वः । तावद्दधात्युपयज्ञमायन्ब्राह्मणोहोतुरवरोनिषीदंन् ॥ १३ ॥ ( १०।७।५ ) इंद्रंस्तवानृतमंयस्यमह्नाविबबाधेरोचनाविज्मोऽअंतान् । आयःप्रौचर्षणीधृद्वरोभिःप्रसिंधुभ्योरिरिचानोमहित्वा ॥ ससूर्यःपर्युरूवरांस्येंद्रोववृत्याद्रथ्येवचक्रा । अतिष्ठंतमपस्यं१नसर्गंकृष्णातमांसित्विष्यांजघान ॥ समानमस्माऽअनपावृदर्चक्ष्मयादिवोऽअसंमंब्रह्मनव्यं । वियःपृष्ठेवजनिमान्यर्यऽइंद्रश्चिकायनसखायमीषे ॥ इंद्रायगिरोऽअनिशितसर्गाऽअपःप्रेरयंसगरस्यबुध्नात् । योऽअक्षेणेवचक्रियाशचीभिर्विष्वक्तस्तंभपृथिवीमुतद्यां ॥ आपांतमन्युस्तृपलप्रभर्माधुनिःशिमीवाञ्छरुमाँऽऋजीषी । सोमोविश्वान्यतसावनानिनार्वागिंद्रंप्रतिमानानिदेभुः ॥ १४ ॥ नयस्यद्यावापृथिवीनधन्वनांतरिंक्षंनाद्रयःसोमोऽअक्षाः । यदस्यमन्युरधिनीयमानःशृणातिवीळुरुजतिस्थिराणि ॥ जघानवृत्रंस्वधितिर्वनेवरुरोजपुरोऽअरदन्नसिंधून् । बिभेदगिरिंनवमिन्नकुंभमागाऽइंद्रोऽअकृणुतस्वयुग्भिः ॥ त्वंहत्यदृणयाऽइंद्रधीरोसिर्नपर्ववृजिनाशृणासि । प्रयेमित्रस्यवरुणस्यधामयुजंनजनामिनंतिमित्रं ॥ प्रयेमित्रंप्रार्यमणंदुरेवाःप्रसंगिरःप्रवरुणंमिनंति । न्य१मित्रेषुवधमिंद्रतुम्रंवृषन्वृषाणमरुषंशिशीहि ॥ इंद्रोदिवऽइंद्रऽईशेपृथिव्याऽइंद्रोऽअपामिंद्रऽइत्पर्वतानां । इंद्रोवृधामिंद्रऽइन्मेधिरा

॥ २६ ॥

( १०।७।५ ) इंद्रंस्तवेत्यष्टादशर्चस्यसूक्तस्यवैश्वामित्रोरेणुरिंद्रःपंचम्याइंद्रासोमौत्रिष्टुप् ।

णामिंद्रः क्षेमेयोगेहव्यऽइंद्रः ॥ १५ ॥ प्राक्तुभ्यऽइंद्रः प्रवृधोऽअहभ्यः प्रांतरिक्षात्प्रसमुद्रस्यधासेः । प्रवातस्यप्रथसः प्रज्मोऽअंतात्प्रसिंधुभ्योरिरिचेप्रक्षितिभ्यः ॥ प्रशोशुचत्याऽउपसोनकेतुरसिन्वातेवर्ततामिंद्रहेतिः । अश्मेवविध्य दिवऽआसृजानस्तपिष्ठेनहेषसाद्रोघमित्रान् ॥ अन्वहमासाऽअन्विद्वनान्यन्वोषधीरनुपर्वतासः । अन्विंद्रंरोदसी वावशानेऽअन्वापोऽअजिहतजायमानं ॥ कर्हिस्वित्सातऽइंद्रचेत्यासदघस्ययद्भिनदोरक्षऽएषत् । मित्रक्रुवोयच्छस नेनगावःपृथिव्याऽआपृगमुयाशयंते ॥ शत्रूयंतोऽअभियेनस्ततस्नेमहिव्राधंतऽओगणासऽइंद्र । अंधेनामि त्रास्तमसासचंतांसुज्योतिषोऽअक्तवस्ताँऽअभिष्युः ॥ पुरूणिहित्वासवनाजनानांब्रह्माणिमंदन्गृणतामृषीणां । इमामाघोषन्नवसासहूतिंतिरोविश्वाँऽअर्चतोयाह्यर्वाङ्+ ॥ एवातेवयमिंद्रभुंजतीनांविद्यामसुमतीनांनवानां । विद्यामवस्तोरवसागृणंतोविश्वामित्राऽउतंतऽइंद्रनूनं ॥ शुनंहुवेममघवानमिंद्रमस्मिन्भरेनृतमंवाजसातौ । शृण्वंत मुग्रमूतयेसमत्सुघ्नंतंवृत्राणिसंजितंधनानां ॥ १६ ॥ ( १०।७।६ ) सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् । सभूमिं विश्वतोवृत्वात्यतिष्ठद्दशांगुलं+ ॥ पुरुषऽएवेदंसर्वंयद्भूतंयच्चभव्यं । उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ एता वानस्यमहिमातोज्यायाँश्चपूरुषः । पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि+ ॥ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहा

---

( १०।७।६ ) सहस्रशीर्षेतिषोळशर्चस्यसूक्तस्यनारायणःपुरुषोनुष्टुबंत्यात्रिष्टुप् ।

भवत्पुनः । ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि+ ॥ तस्माद्विराळजायतविराजोऽअधिपूरुषः । सजातोऽअ
त्यरिच्यतपश्चाद्भूमिमथोपुरः+ ॥ १७ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत । वसंतोऽअस्यासीदाज्यंग्रीष्मऽइध्मः
शरद्धविः+ ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः । तेनदेवाऽअयजंतसाध्याऽऋषयश्चये+ ॥ तस्माद्यज्ञात्सर्वहुतःसं
भृतंपृषदाज्यं । पशून्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये+ ॥ तस्माद्यज्ञात्सर्वहुतऽऋचःसामानिजज्ञिरे । छंदांसिज
ज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ तस्मादश्वाऽअजायंतयेकेचोभयादतः । गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः
॥ १८ ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् । मुखंकिमस्यकौबाहूकाऽऊरूपादाऽउच्येते ॥ ब्राह्मणोस्यमुखमासी
द्बाहूराजन्यःकृतः । ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोऽअजायत ॥ चंद्रमामनसोजातश्चक्षोःसूर्योऽअजायत । मुखादिं
द्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ नाभ्याऽआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत । पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँऽ
अकल्पयन् ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः । देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंपशुं+ ॥ यज्ञेनयज्ञमय
जंतदेवास्तानिधर्माणिप्रथमान्यासन् । तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः+ ॥ १९ ॥ ( १०।८।१ )
संजागृवद्भिर्जरमाणऽइध्यतेदमेदमूनाऽइषयन्निळस्पदे । विश्वस्यहोताहविषोवरेण्योविभुर्विभावासुषखासखीयते+ ॥



---

अष्टमेनुवाकेनवसूक्तानि । ( १०।८।१ ) संजागृवद्भिरितिपंचदशर्चस्यसूक्तस्यवैतहव्योरुणोग्निर्जगत्यंत्यात्रिष्टुप् ।

सदर्शतश्रीरतिथिर्गृहेगृहेवनेवनेशिश्रियेतक्ववीरिव । जनंजनंजन्योनातिमन्यतेविशऽआक्षेतिविश्योऽ३ विशंविशं ॥
सुदक्षोदक्षैःक्रतुनासिसुक्रतुरग्नेकविःकाव्येनासिविश्ववित् । वसुर्वसूनांक्षयसित्वमेकऽइद्द्यावाचयानिपृथिवीचपुष्य
तः ॥ प्रजानन्नग्नेतवयोनिमृत्वियमिळायास्पदेघृतवंतमासदः । आतेचिकित्रऽउषसामिवेतयोरेपसःसूर्यस्येवरश्मयः ॥
तवश्रियोवर्ष्यस्येवविद्युतश्चित्राश्चिकित्रऽउषसांनकेतवः । यदोषधीरभिसृष्टोवनानिचपरिस्वयंचिनुषेऽअन्नमास्ये
॥ २० ॥ तमोषधीर्दधिरेगर्भमृत्वियंतमापोऽअग्निंजनयंतमातरः । तमित्समानंवनिनश्चवीरुधोंतर्वतीश्चसुवतेचवि
श्वहा ॥ वातोपधूतऽइषितोवशाँऽअनुतृषुयदन्नावेविषद्वितिष्ठसे । आतेयतंतेरथ्योऽ३ यथापृथक्शर्धांस्यग्नेऽअजरा
णिधक्षतः ॥ मेधाकारंविदथस्यप्रसाधनमग्निंहोतारंपरिभूतमंमतिं । तमिदर्भेहविष्यासमानमित्तमिन्महेवृणतेना
न्यंत्वत्+ ॥ त्वामिदत्रवृणतेत्वायवोहोतारमग्नेविदथेषुवेधसः । यद्देवयंतोदधतिप्रयांसितेहविष्मंतोमनवोवृक्तबर्हि
षः ॥ तवाग्नेहोत्रंतवपोत्रमृत्वियंतवनेष्ट्रंत्वमग्निदृतायतः । तवप्रशास्त्रंत्वमध्वरीयसिब्रह्माचासिगृहपतिश्चनोदमे
॥ २१ ॥ यस्तुभ्यमग्नेऽअमृतायमर्त्यःसमिधादाशदुतवाहविष्कृति । तस्यहोताभवसियासिदूत्य१मुपब्रूषेयजस्यध्व
रीयसि ॥ इमाऽअस्मैमतयोवाचोऽअस्मदाँऽऋचोगिरःसुष्टुतयःसमग्मत । वसूयवोवसवेजातवेदसेवृद्धासुचिद्वर्धनो
यासुचाकनत् ॥ इमांप्रत्नायसुष्टुतिंनवीयसींवोचेयमस्माऽउशतेशृणोतुनः । भूयाऽअंतराहृद्यस्यनिस्पृशेजायेवपत्यऽ

उशतीसुवासाः ॥ यस्मिन्नश्वासऽऋषभासऽउक्षणोवशामेषाऽअवसृष्टासऽआहुताः । कीलालपेसोमपृष्ठायवेधसेहृदा मतिंजनयेचारुमग्नये ॥ अहाव्यग्नेहविरास्येतेस्रुचीवघृतंचम्वीवसोमः । वाजसनिंरयिमस्मेसुवीरंप्रशस्तंधेहियशसंबृहंतं ॥ २२ ॥ ( १०।८।२ ) यज्ञस्यवोरथ्यंविश्पतिंविशांहोतारमक्तोरतिथिंविभावसुं । शोचन्छुष्कासुहरिणीषुजर्भुरद्वृषाकेतुर्यजतोद्यामशायत ॥ इममंजस्पामुभयेऽअकृण्वतधर्माणमग्निंविदथस्यसाधनं । अक्तुंनयह्वमुषसःपुरोहितंतनूनपातमरुषस्यनिंसते ॥ बळस्यनीथाविपणेश्चमन्महेवयाऽअस्यप्रहुताऽआसुरत्तवे । यदाघोरासोऽअमृतत्वमाशतादिज्जनस्यदैव्यस्यचर्किरन् ॥ ऋतस्यहिप्रसितिर्द्यौरुरुव्यचोनमोमह्य१रमतिःपनीयसी । इंद्रोमित्रोवरुणःसंचिकित्रिरेथोभगःसवितापूतदक्षसः ॥ प्ररुद्रेणययिनायंतिसिंधवस्तिरोमहीमरमतिंदधन्विरे । येभिःपरिज्मापरियन्नुरुज्रयोविरोरुवज्जठरेविश्वमुक्षते ॥ २३ ॥ क्राणारुद्रामरुतोविश्वकृष्टयोदिवःश्येनासोऽअसुरस्यनीळयः । तेभिश्चष्टेवरुणोमित्रोऽअर्यमेंद्रोदेवेभिरर्वशेभिरर्वशः ॥ इंद्रेभुजंशशमानासऽआशतसूरोदृशीकेवृषणश्चपौंस्ये । प्रयेन्वस्यार्हणाततक्षिरेयुजंवज्रंनृषदनेषुकारवः ॥ सूरश्चिदाहरितोऽअस्यरीरमदिंद्रादाकश्चिद्भयतेतवीयसः । भीमस्यवृष्णोजठरादभिश्वसोदिवेदिवेसहुरिस्तन्नबाधितः ॥ स्तोमंवोऽअद्यरुद्रायशिक्वसेक्षयद्वीरायनमसादिदिष्टन । येभिःशिवःस्ववाँऽएव



---

( १०।८।२ ) यज्ञस्येतिपंचदशर्चस्यसूक्तस्यमानवःशार्यातोविश्वेदेवाजगती ।

यावभिर्दिवःसिषक्तिस्वयशानिकामभिः ॥ तेहिप्रजायाऽअभरंतविश्रवोबृहस्पतिर्वृषभःसोमंजामयः । यज्ञैरथर्वाप्र थमोविधारयद्देवादक्षैर्भृगवःसंचिकित्रिरे ॥ २४ ॥ तेहिद्यावापृथिवीभूरिरेतसानराशंसश्चतुरंगोयमोदितिः । देव स्त्वष्टाद्रविणोदाऽऋभुक्षणःप्ररोदसीमरुतोविष्णुरर्हिरे ॥ उतस्यनऽउशिजामुर्विंयाकविरहिःशृणोतुबुध्न्यो३ हवीमनि । सूर्यामासाविचरंतादिविक्षिताधियाशमीनहुषीऽअस्यबोधतं ॥ प्रनःपूषाचरथंविश्वदेव्योपांनपादवतुवायुरिष्टये । आत्मानंवस्योऽअभिवातमर्चततदश्विनासुहवायामनिश्रुतं ॥ विशामासामभयानामधिक्षितंगीभिंरुस्वयशसंगृणी मसि । ग्नाभिर्विश्वाभिरदितिमनर्वणमक्तोर्युवानंनृमणाऽअधापतिं ॥ रेभदत्रजनुषापूर्वोऽअंगिराग्रावाणऽऊर्ध्वाऽ अभिचक्षुरध्वरं ॥ येभिर्विहायाऽअभवद्विचक्षणःपाथःसुमेकंस्वधितिर्वनन्वति ॥ २५ ॥ ( १०।८।३ ) महिद्यावा पृथिवीभूतमुर्वीनारीयह्वीनरोदसीसदंनः । तेभिर्नःपातंसह्यसऽएभिर्नःपातंशूषणि ॥ यज्ञेयज्ञेसमर्त्योदेवान्त्सपर्य ति । यःसुम्नैर्दीर्घश्रुत्तमऽआविवासात्येनान् ॥ विश्वेषामिरज्यवोदेवानांवार्महः । विश्वेहिविश्वमहसोविश्वेयज्ञेषु यज्ञियाः ॥ तेघाराजानोऽअमृतस्यमंद्राऽअर्यमामित्रोवरुणःपरिज्मा । कद्रुद्रोनृणांस्तुतोमरुतःपूषणोभगः ॥ उत

---

( १०।८।३ ) महीतिपंचदशर्चस्यसूक्तस्यपाथ्यस्तान्वोविश्वेदेवाःप्रस्तारपंक्तिर्द्वितीयात्रयोदश्यनुष्टुभौनवम्यक्षरैःपंक्तिरेकादशीन्यं कुसारिण्यंत्यापुरस्ताद्बृहती ।

ऋक्सं. अ. ८ अ. ४ ॥ २९ ॥

मंडलं १० अनु. ८

नोनक्तमपांवृषण्वसूसूर्यामासासदनायसधन्या । सचायत्साद्येषामहिर्बुध्नेषुबुध्न्यः* ॥ २६ ॥ उतनोदेवावश्विनाशुभस्पतीधामभिर्मित्रावरुणाऽउरुष्यतां । महःसरायऽएषतेतिधन्वेवदुरिता+ ॥ उतनोरुद्राचिन्मृळतामश्विनाविश्वेदेवासोरथस्पतिर्भगः । ऋभुर्वाजऽऋभुक्षणःपरिज्माविश्ववेदसः ॥ ऋभुर्ऋभुक्षाऽऋभुर्विधतोमदऽआतेहरीजूजुवानस्यवाजिना । दुष्टरंयस्यसामचिदृधग्यज्ञोनमानुषः ॥ कृधीनोऽअह्रयोदेवसवितःसचस्तुषेमघोनां । सहोनऽइंद्रोवह्निभिर्न्येषांचर्षणीनांचक्रंरश्मिनयोयुवे ॥ ऐषुद्यावापृथिवीधातंमहदस्मेवीरेषुविश्वचर्षणिश्रवः । पृक्षंवाजस्यसातयेपृक्षंरायोततुर्वणे ॥ २७ ॥ एतंशंसमिंद्रास्मयुष्ट्वंकूचित्संतंसहसावन्नभिष्टयेसदापाह्यभिष्टये । मेदतांवेदतावसो ॥ एतंमेस्तोमंतनानसूर्येद्युतद्यामानंवावृधंतनृणां । संवननंनाश्व्यंतष्टेवानपच्युतं ॥ वावर्तयेषांरायायुक्तैषांहिरण्ययी । नेमधितानपौंस्यावृथेवविष्टांता ॥ प्रतद्दुःशीमेपृथवानेवेनेप्ररामेवोचमसुरेमघवत्सु । येयुक्त्वायपंचशतास्मयुपथाविश्राव्येषां ॥ अधीन्वत्रसप्ततिंचसप्तच । सद्योदिदिष्टतान्वःसद्योदिदिष्टपार्थ्यःसद्योदिदिष्टमायवः+ ॥ २८ ॥ (१०।८।४)

प्रैतेवदंतुप्रवयंवदामग्रावभ्योवाचंवदतावदद्भ्यः । यदद्रयःपर्वताःसाकमाशवःश्लोकंघोषंभरथेंद्रायसोमिनः ॥ एतेवदंतिशतवत्सहस्रवदभिक्रंदंतिहरितेभिरासभिः । विष्ट्वीग्रावाणःसुकृतःसुकृत्ययाहोतुश्चित्पूर्वेहविरद्यमाशत ॥ एतेव

(१०।८।४) प्रैतइतिचतुर्दशर्चस्यसूक्तस्यकाद्रवेयोर्बुदःसर्पोग्रावाणोजगतीपंचमीसप्तमीचतुर्दश्यस्त्रिष्टुभः ।



मंडलं १० ॥ २९ ॥

दुंत्यविंदन्ननामधुन्यूंखयंतेऽअधिपक्कऽआमिषि । वृक्षस्यशाखांमरुणस्यबप्सतस्तेसूर्भर्वावृषभाःप्रेमराविषुः ॥ वृहद्वं दंतिमदिरेणमंदिनेंद्रंक्रोशंतोविदन्ननामधुं । संरभ्याधीराःस्वसृभिरनर्तिषुराघोषयंतःपृथिवीमुपब्दिभिंः ॥ सुपर्णा वाचंमक्रतोपद्यव्यांखरेकृष्णाऽइषिराऽअंनर्तिषुः । न्यं१ङ्नियंत्युपंरस्यनिष्कृतंपुरूरेतोदधिरेसूर्यश्वितंः ॥ २९ ॥ उग्राऽइंवप्रवहंतःसमायमुःसाकंयुक्तावृषणोबिभ्रंतोधुरंः । यच्छ्वसंतोंजग्रसानाऽअरांविषुःशृण्वऽएषांप्रोथथोऽअर्वंतामिव ॥ दशावनिभ्योदशकक्ष्येभ्योदशयोक्रेभ्योदशयोजनेभ्यः । दशाभीशुभ्योऽअर्चताजरेभ्योदशधुरोदशयुक्तावहंद्भ्यः ॥ तेऽअद्रंयोदशयंत्रासऽआशवस्तेषामाधानंपर्येतिहर्यतं । तऽऊंसुतस्यसोम्यस्यांधसोंशोःपीयूषंप्रथमस्यभेजिरे ॥ तेसोमादोहरीऽइंद्रस्यनिंसतेंशुंदुहंतोऽअध्यांसतेगवि । तेभिर्दुग्धंपपिवान्त्सोम्यंमध्विंद्रोवर्धतेप्रथतेवृषायते ॥ वृषावोऽअंशुर्नकिलांरिषाथनेळावंतःसदमित्स्थनाशिताः । रैवत्येवमहंसाचारंवःस्थनुयस्यंग्रावाणोऽअजुंषध्वमध्वरं ॥ ३० ॥ तृदिलाऽअतृंदिलासोऽअद्रंयोश्रमणाऽअशृंथिताऽअमृंत्यवः । अनतुराऽअजराःस्थामविष्णवःसुपीवसोऽअतृंषिताऽअतृंष्णजः ॥ ध्रुवाऽएववंःपितरोंयुगेयुंगेक्षेमंकामासःसदंसोनयुंजते । अजुर्यासोंहरिषाचोंहरिद्रंवऽआद्यांरवेंणपृथिवीमंशुश्रवुः ॥ तदिद्वदंत्यद्रंयोविमोचनेयामन्नंजस्पाऽइंवघेदुपब्दिभिंः । वपंतोबीजमिवधान्याकृतःपृं

चतिसोमंनमिनंतिविप्र्संतः ॥ सुतेऽअध्वरेऽअधिवाचमक्रताक्रीळयोनमातरंतुदंतः । विषूमुंचासुषुवुषोमनीषांविवर्तंतामद्रयश्चायमानाः ॥ ३१ ॥ इत्यष्टमाष्टकेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥

षष्ठ्यध्यायेवर्गाः ३१ सूक्तानि ९ ऋचः १६० ॥ त्यागः ॥ इंद्राये.२३ रक्षोघ्नेग्नय.२५ सूर्यवैश्वानराये.१९ इंद्राये.४ इंद्रासोमाभ्या. इंद्राये.१३ पुरुषाये.१६ अग्नय.१५ विश्वेभ्योदेवेभ्य.३० [ भे. प. विश्वेभ्योदे.१ अग्नय.३ विश्वेभ्योदेवेभ्य.३ इंद्राये. विश्वेभ्योदवेभ्य.७ द्यावापृथिवीभ्या. विश्वेभ्योदेवेभ्य.६ इंद्राये. विश्वेभ्योदेवेभ्य. द्यावापृथिवीभ्या. इंद्राये. विश्वेभ्योदेवेभ्य.४] ग्रावभ्यइदं१४॥ इत्यष्टमेचतुर्थः ॥

हयेब्रूनोर्वशीमैळःपुरूरवाःपूर्वोषितान्कामान्पुनरासाद्यावरोद्धुमैच्छंत्सातमनिच्छंतीप्रत्याचष्टैहयऽइषुर्याकदासुदेवोंतरिक्षप्रांसचेतिंतिस्रश्चैलवाक्यैंशिष्टाऽउर्वश्याःप्रतेसप्तोनावरुःसर्वहरिवैंद्रोहरिस्तुतिंर्द्धित्रिष्टुबंतंयाऽओषधीस्त्र्यधिकाथर्वणोभिषगोषधिस्तुतिरानुष्टुभंबृहस्पतेद्वादशार्ष्टिषेणोदेवापिर्वृष्टिकामोदेवांस्तुष्टावकंनोवम्रोवैखानसंइंद्रदुवस्युर्वांदनोवैश्वदेवंतुत्रिष्टुबंतंमुद्धुध्यध्वंबुधःसौम्यंऋत्विक्स्तुतिर्वानवम्यंत्येजगत्यौपंचमीबृहतीगायत्र्योर्मध्येप्रतेमुद्गलोभार्म्यश्वोद्रुघणेनऋषभेणचाजिंजिगायेतिद्रौघणंवाद्यातृतीयांत्याबृहत्यंऽआशुःसप्तोनैंद्रोप्रतिरथंश्चतुर्थीवार्हस्पत्योपांत्याप्वादेंव्यंत्यानुष्टुम्मारुतीवासाव्येकादशाष्टकौवैश्वामित्रःकदाकौत्सोदुर्मित्रोनाम्नासुमित्रोगुणतःसुमित्रोवानाम्नादुर्मित्रोगुणतऽऔष्णिहंहरीवज्रंपिपीलिकमध्येत्रिष्टुबंत्याद्यागायत्रीवा॥५॥

हरिः ओम् ॥ ( १०।८।५ ) हयेजायेमनसातिष्ठघोरेवचांसिमिश्राकृणवावहैनु । ननौमंत्राऽअनुदितासऽएतेम यस्करन्परतरेचनाहन् ॥ किमेतावाचाकृणवातवाहंप्राक्रमिषमुषसामग्रियेव । पुरूरवःपुनरस्तंपरेहिदुरापनावातऽ इवाहमस्मि ॥ इषुर्नश्रियऽइषुधेरसनागोषाःशतसानरंहिः । अवीरेक्रतौविदविद्युतन्नोरानमायुंचितयंतधुनयः ॥ सावसुदधतीश्वशुरायवयऽउषोयदिवष्ट्यंतिगृहात् । अस्तंननक्षेयस्मिन्चाकन्दिवानक्तंश्नथितावैतसेन ॥ त्रिःस्ममाह्नः श्नथयोवैतसेनोतस्ममेव्यत्यैपृणासि । पुरूरवोनुतेकेतमायंराजामेवीरतन्व१स्तदासीः ॥ १ ॥ यासुजूर्णिःश्रेणिःसु म्नऽआपिर्ह्रदेचक्षुर्नग्रंथिनीचरण्युः । ताऽअंजयोरुणयोनसंस्रुःश्रियेगावोनधेनवोनवंत ॥ समस्मिन्जायमानऽआसत ग्नाऽउतेमवर्धन्नद्य१ःस्वगूर्ताः । महेयत्त्वापुरूरवोरणायावर्धयन्दस्युहत्यायदेवाः ॥ सचायदासुजहतीष्वत्कममा नुषीषुमानुषोनिषेवे । अपस्ममत्तरसंतीनभुज्युस्ताऽअत्रसन्रथस्पृशोनाश्वाः ॥ यदासुमर्तोऽअमृतासुनिस्पृक्संक्षोणी भिःक्रतुभिर्नपृंक्ते । ताऽआतयोनतन्वःशुंभतस्वाऽअश्वासोनक्रीळयोदंदशानाः ॥ विद्युन्नयापतंतीदविद्योद्भरंतीमेऽ अप्याकाम्यानि । जनिष्टोऽअपोनर्यःसुजातःप्रोर्वशीतिरतदीर्घमायुः ॥ २ ॥ जज्ञिषऽइत्थागोपीथ्यायहिदधाथत

---

(१०।८।५) हयेजायेइत्यष्टादशर्चस्यसूक्तस्यआद्यातृतीयाषष्ठीनवम्यादिचतसृणांचतुर्दशीसप्तदशीत्येवंनवानामैलःपुरूरवाऋषिरुर्वशी देवता शिष्टानामुर्वशीऋषिकापुरूरवादेवतात्रिष्टुप् ।

त्पुरूरवोमऽओजः । अशासंत्वाविदुषीसस्मिन्नहन्नमऽआशृणोःकिमभुग्वदासि ॥ कदासूनुःपितरंजातऽइच्छाच्चक्रं
नाश्रुवर्तयद्विजानन् । कोदंपतीसमनसावियूयोदधयदग्निःश्वशुरेषुदीदयत् ॥ प्रतिब्रवाणिवर्तयतेऽअश्रुचक्रंनक्रंद
दाध्येशिवायै । प्रतत्तेहिनवायत्तेऽअस्मेपरेह्यस्तंनहिमूरमापः ॥ सुदेवोऽअद्यप्रपतेदनावृत्परावतंपरमांगंतवाऽउ ।
अधाशयीतनिर्ऋतेरुपस्थेधैनंवृकारभसासोऽअद्युः⁺ ॥ पुरूरवोमामृथामाप्रपप्तोमात्वावृकासोऽअशिवासऽउक्षन् ।
नवैस्त्रैणानिसख्यानिसंतिसालावृकाणांहृदयान्येता⁺ ॥ ३ ॥ यद्विरूपाचरंमर्त्येष्ववसंरात्रीःशरदश्चतस्रः । घृतस्य
स्तोकंसकृदह्नऽआश्नांतादेवेदंतातृपाणाचरामि ॥ अंतरिक्षप्रांरजसोविमानीमुपशिक्षाम्युर्वशींवसिष्ठः । उपत्वारा
तिःसुकृतस्यतिष्ठान्निवर्तस्वहृदयंतप्यतेमे ॥ इतित्वादेवाऽइमऽआहुरैळयथेमेतद्भवसिमृत्युबंधुः । प्रजातेदेवान्हवि
षायजातिस्वर्गऽउत्वमपिमादयासे ॥ ४ ॥ ( १०।८।६ ) प्रतेमहेविदथेशंसिषंहरीप्रतेवन्वेवनुषोहर्यतंमदं । घृतंन
योहरिभिश्चारुसेचतऽआत्वाविशंतुहरिवर्पसंगिरः ॥ हरिंहियोनिमभियेसमस्वरन्हिन्वंतोहरीदिव्यंयथासदः । आ
यंपृणंतिहरिभिर्नधेनवऽइंद्रायशूषंहरिवंतमर्चत ॥ सोऽअस्यवज्रोहरितोयऽआयसोहरिर्निकामोहरिरागभस्त्योः ।



---

( १०।८।६ ) प्रतइतित्रयोदशर्चस्यसूक्तस्यांगिरसोवरुर्हरिर्जगत्यंत्येद्वेत्रिष्टुभौ ( ऐंद्रःसर्वहरिर्वाऋषिरत्र । हरिरितींद्रनाम । शौनकस्तु
मुखतएवैतत्सूक्तमैंद्रमित्याह । हरिरितींद्राश्वनामेतिचकश्चित । एवंहरिशब्दार्थेविप्रतिपत्तावव्याकरोदितहरिशब्दोच्चारणंयुक्तमुत्पश्यामः)।

द्युम्नीसुशिप्रोहरिमन्युसायकऽइंद्रेनिरूपाहरितामिमिक्षिरे ॥ दिविनकेतुरधिधायिहर्यतोविव्यचद्वज्रोहरितोनरंह्या ।
तुददहिंहरिशिप्रोयऽआयसःसहस्रशोकाऽअभवद्धरिंभरः+ ॥ त्वंत्वमहर्यथाऽउपस्तुतःपूर्वेभिरिंद्रहरिकेशयज्वभिः ।
त्वंहर्यसितवविश्वमुक्थ्य१मसामिराधोहरिजातहर्यतं+ ॥ ५ ॥ तावज्रिणंमंदिनंस्तोम्यंमदऽइंद्रंरथेवहतोहर्यताहरी ।
पुरूण्यस्मैसवनानिहर्यतऽइंद्रायसोमाहरयोदधन्विरे ॥ अरंकामायहरयोदधन्विरेस्थिरायहिन्वन्हरयोहरीतुरा ।
अर्वद्भिर्योहरिभिर्जोषमीयतेसोऽअस्यकामंहरिवंतमानशे ॥ हरिश्मशारुर्हरिकेशऽआयसस्तुरस्पेयेयोहरिपाऽअवर्धत ।
अर्वद्भिर्योहरिभिर्वाजिनीवसुरतिविश्वादुरितापारिषद्धरी ॥ स्रुवेवयस्यहरिणीविपेततुःशिप्रेवाजायहरिणीदविध्वतः ।
प्रयत्कृतेचमसेमर्मृजद्धरीपीत्वामदस्यहर्यतस्यांधसः ॥ उतस्मसद्महर्यतस्यपस्त्यो३रत्योनवाजंहरिवाँऽअचिक्रदत् ।
महीचिद्धिधिषणाहर्यदोजसाबृहद्वयोदधिषेहर्यतश्चिदा+ ॥६॥ आरोदसीहर्यमाणोमहित्वानव्यंनव्यंहर्यसिमन्मनुप्रियं ।
प्रपस्त्यमसुरहर्यतंगोराविष्कृधिहरयेसूर्याय ॥ आत्वाहर्यंतंप्रयुजोजनानांरथेवहंतुहरिशिप्रमिंद्र । पिबायथाप्रतिभृत
स्यमध्वोहर्यन्यज्ञंसधमादेदशोणिं ॥ अपाःपूर्वेषांहरिवःसुतानामथोऽइदंसवनंकेवलंते । ममद्धिसोमंमधुमंतमिंद्रसत्रावृ
षन्जठरऽआवृषस्व ॥७॥ (१०।८।७) याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा । मनैनुबभ्रूणामहंशतंधामानिसप्तच॥

---

( १०।८।७ ) याओषधीरितित्रयोविंशत्यृचस्यसूक्तस्याथर्वणोभिषगोषधयोऽनुष्टुप् ।

शतंवोऽअंबधामानिसहस्रमुतवोरुहः । अधाशतक्रत्वोयूयमिमंमेऽअगदंकृत ॥ ओषधीःप्रतिमोदध्वंपुष्पवतीःप्रसूवरीः । अश्वाऽइवसजित्वरीर्वीरुधःपारयिष्ण्वः* ॥ ओषधीरितिमातरस्तद्वोदेवीरुपब्रुवे । सनेयमश्वंगांवासऽआत्मानंतवपूरुष ॥ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता । गोभाजऽइत्किलासथयत्सनवथपूरुषं ॥ ८ ॥ यत्रौषधीःसमग्मतराजानःसमिताविव । विप्रःसऽउच्यतेभिषग्रक्षोहामीवचातनः ॥ अश्वावतींसोमावतीमूर्जयंतीमुदोजसं । आवित्सिसर्वाऽओषधीरस्माऽअरिष्टतातये ॥ उच्छुष्माऽओषधीनांगावोगोष्ठादिवेरते । धनंसनिष्यंतीनामात्मानंतवपूरुष ॥ इष्कृतिर्नामवोमाताथोयूयंस्थनिष्कृतीः । सीराःपतत्रिणीस्थनयदामयतिनिष्कृथ ॥ अतिविश्वाःपरिष्ठाःस्तेनऽइवव्रजमक्रमुः । ओषधीःप्राचुच्यवुर्यत्किंचतन्वो३ रपः ॥ ९ ॥ यदिमावाजयन्नहमोषधीर्हस्तऽआदधे । आत्मायक्ष्मस्यनश्यतिपुराजीवगृभोयथा ॥ यस्यौषधीःप्रसर्पथांगमंगंपरुष्परुः । ततोयक्ष्मंविबाधध्वऽउग्रोमध्यमशीरिव ॥ साकंयक्ष्मप्रपतचाषेणकिकिदीविना । साकंवातस्यध्राज्यासाकंनश्यनिहाकया ॥ अन्यावोऽअन्यामवत्वन्यान्यस्याऽउपावत । ताःसर्वाःसंविदानाऽइदंमेप्रावताविचः ॥ याःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः ॥ १० ॥ मुंचंतुमाशपथ्या३ दथोवरुण्यादुत । अथोयमस्यपड्बीशात्सर्वस्माद्देवकिल्बिषात्+ ॥ अवपतंतीरवदन्दिवऽओषधयस्परि । यंजीवमश्नवामहैनसरिष्यातिपूरुषः ॥ याऽओषधीःसोमराज्ञीर्बह्वीःशतविच

क्षणाः । तासांत्वमस्युत्तमारंकामायशंहृदे+ ॥ याऽओषधीःसोमराज्ञीर्विष्ठिताःपृथिवीमनु । बृहस्पतिप्रसूताऽअस्यै संदत्तवीर्यं* ॥ मावोरिषत्खनितायस्मैचाहंखनामिवः । द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरं+ ॥ याश्चेदमुपशृण्वंति याश्चदूरंपरागताः । सर्वाःसंगत्यवीरुधोस्यैसंदत्तवीर्यं ॥ ओषधयःसंवदंतेसोमेनसहराज्ञा । यस्मैकृणोतिब्राह्मणस्तंरा जन्पारयामसि ॥ त्वमुत्तमास्यौषधेतववृक्षाऽउपस्तयः । उपस्तिरस्तुसो३स्माकंयोऽअस्माँऽअभिदासति ॥ ११ ॥

॥ ( १०।८।८ ) बृहस्पतेप्रतिमेदेवतामिहिमित्रोवायद्वरुणोवासिपूषा । आदित्यैर्वायद्वसुभिर्मरुत्वान्त्सपर्जन्यंशंतनवे वृषाय ॥ आदेवोदूतोऽअजिराश्चिकित्वान्त्वद्देवापेऽअभिमामगच्छत् । प्रतीचीनःप्रतिमामाववृत्स्वदधामितेद्युमतीं वाचमासन्+ ॥ अस्मेधेहिद्युमतींवाचमासन्बृहस्पतेऽअनमीवामिषिरां । ययावृष्टिंशंतनवेवनावदिवोद्रप्सोमधुमाँऽ आविवेश ॥ आनोद्रप्सामधुमंतोविशंत्विंद्रदेह्यधिरथंसहस्रं । निषीदहोत्रमृतुथायजस्वदेवान्देवापेहविषासपर्य ॥ आर्ष्टिषेणोहोत्रमृषिर्निषीदन्देवापिर्देवसुमतिंचिकित्वान् । सऽउत्तरस्मादधरंसमुद्रमपोदिव्याऽअसृजद्वर्ष्याऽअ भि+ ॥ अस्मिन्त्समुद्रेऽअध्युत्तरस्मिन्नापोदेवेभिर्निवृताऽअतिष्ठन् । ताऽअद्रवन्नार्ष्टिषेणेनसृष्टादेवापिनाप्रेषितामृक्षि

---

( १०।८।८ ) बृहस्पतइतिद्वादशर्चस्यसूक्तस्यार्ष्टिषेणोदेवापिर्देवास्त्रिष्टुप् । ( शौनकस्त्वस्मिन्सूक्तेआद्यानांचतसृणांबृहस्पतिस्ततश्चत- सृणांदेवास्ततःपंचानामग्निरित्येवंदेवताव्यवस्थामाह ) ।

ऋक्सं. अ. ८ अ. ५ ॥ २३ ॥

मंडलं १० अनु. ८

णींषु ॥ १२ ॥ यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् । देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥ यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यः समीधे । विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया वृष्टिमंतं ॥ त्वां पूर्व ऋषयो गीर्भिरायन्त्वामध्वरेषु पुरुहूत विश्वे । सहस्राण्यधिरथान्यस्मे आ नो यज्ञं रोहिदश्वोप याहि ॥ एतान्यग्ने नवतिर्नव त्वे आहुतान्यधिरथा सहस्रा । तेभिर्वर्धस्व तन्वः शूर पूर्वीर्दिवो नो वृष्टिमिषितो रिरीहि ॥ एतान्यग्ने नवतिं सहस्रा सं प्र यच्छ वृष्ण इंद्राय भागं । विद्वान्पथ ऋतुशो देवयानानप्यौलानं दिवि देवेषु धेहि ॥ अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षांसि सेध । अस्मात्समुद्राद्बृहतो दिवो नोपां भूमानमुप नः सृजेह ॥ १३ ॥ ( १०।८।९ ) कन्नश्चित्रमिषण्यसि चिकित्वान्पृथुग्मानं वाश्रं वावृधध्यै । कत्तस्य दातु शवसो व्युष्टौ तक्षद्वज्रं वृत्रतुरमपिन्वत् ॥ स हि द्युता विद्युता वेति साम पृथुं योनिमसुरत्वा ससाद । स सनीळेभिः प्रसहानो अस्य भ्रातुर्न ऋते सप्तथस्य मायाः ॥ स वाजं यातापदुष्पदा यन्त्स्वर्षाता परि षदत्सनिष्यन् । अनर्वा यच्छतदुरस्य वेदो घ्नञ्छिश्नदेवाँ अभि वर्पसा भूत् ॥ स यह्व्योऽवनीर्गोष्वर्वा जुहोति प्रधन्यासु सस्त्रिः । अपादो यत्र युज्यासोऽरथा द्रोण्यश्वास ईरते घृतं वाः ॥ स रुद्रेभिरशस्तवार ऋभ्वा हित्वी गयमारे अवद्य आगात् । वम्रस्य मन्ये मिथुना विवव्री अन्नमभीत्यारोदयन्मुषायन् ॥ स इद्दासं तुवी

॥ २३ ॥

( १०।८।९ ) कन्न इति द्वादशर्चस्य सूक्तस्य वैखानसो वम्र इंद्रस्त्रिष्टुप् ।

रवंपतिर्दन्षळक्षंत्रिशीर्षाणंदमन्यत् । अस्यत्रितोन्वोजसावृधानोविपावराहमयोऽअग्रयाहन् ॥ १४ ॥ सद्रुह्वणेमनु षऽऊर्ध्वसानऽआसाविषदर्शसानायशरुं । सनृतंमोनहुंषोस्मत्सुजातःपुरोभिनदहंन्दस्युहत्यै ॥ सोऽअभ्रियोनयवंस ऽउदन्यन्क्षयायगातुंविदन्नोऽअस्मे । उपयत्सीददिंदुंशरीरैः श्येनोयोपाष्टिहंतिदस्यून् ॥ सव्राधतःशवसानेभिरस्यकु त्सायशुष्णंकृपणेपरादात् । अयंकविमनयच्छस्यमानमत्कंयोऽअस्यसनितोतनृणां ॥ अयंदशस्यन्नर्येभिरस्यदस्मो देवेभिर्वरुणोनमायी । अयंकनीनऽऋतुपाऽअवेद्यमिमीतारंरुयश्चतुष्पात् ॥ अस्यस्तोमेभिरौशिजऽऋजिश्वाव्रजंदर यद्वृषभेणपिप्रोः । सुत्वायद्यजतोदीदयद्गीःपुरऽइयानोऽअभिवर्पसाभूत् ॥ एवामहोऽअसुरवक्षथायवम्रकःपड्भि रुपसर्पदिंद्रं । सऽइयानःकरतिस्वस्तिमस्माऽइषमूर्जंसुक्षितिंविश्वमाभाः ॥ १५ ॥ ( १०।९।१ ) इंद्रंदृह्यमघवन्त्वा वदिद्भुजऽइहस्तुतःसुतपाबोधिनोवृधे । देवेभिर्नःसविताप्रावतुश्रुतमासर्वतातिमदितिंवृणीमहे ॥ भरायसुभरतभा गमृत्वियंप्रवायवेशुचिपेक्रंददिष्टये । गौरस्ययःपयसःपीतिमानशऽआसर्व० ॥ आनोदेवःसवितासाविषद्वयऽऋजूय तेयजमानायसुन्वते । यथादेवान्प्रतिभूषेमपाकवदासर्व० ॥ इंद्रोऽअस्मेसुमनाऽअस्तुविश्वहाराजासोमःसुवितस्या

---

नवमेनुवाकेत्रयोदशसूक्तानि (१०।९।१) इंद्रदृह्येतिद्वादशर्चस्यसूक्तस्यवांदनोदुवस्युर्विश्वेदेवाजगत्यंत्यात्रिष्टुप्(भेदपक्षे–विश्वेदेवाः १० इंद्रादिती१ इंद्रः१ एवं१२) ।

ध्यैतुनः । यथायथामित्रधितानिसंदुधुरासर्व० ॥ इंद्रऽउक्थेनशवसापरुर्दधेबृहस्पतेप्रतरीतास्यायुषः । यज्ञोमनुः प्रमतिर्नःपिताहिकमासर्व० ॥ इंद्रस्यनुसुकृतंदैव्यंसहोग्निर्गृहेजरितामेधिरःकविः । यज्ञश्चभूद्विदथेचारुरंतमऽआसर्व० ॥ १६ ॥ नवोगुहाचकृमभूरिदुष्कृतंनाविष्ट्यंवसवोदेवहेळनं । मार्किर्नोदेवाऽअनृतस्यवर्पसऽआसर्व० ॥ अपामीवांसवितासाविषन्न्य१ग्वरीयऽइदपसेधन्त्वद्रयः । ग्रावायत्रमधुषुदुच्यतेबृहदासर्व० ॥ ऊर्ध्वोग्रावावसवोस्तुसोतरिविश्वाद्वेषांसिसनुतर्युयोत । सनोदेवःसवितापायुरीड्यऽआसर्व० ॥ ऊर्जंगावोयवसेपीवोऽअत्तनऽऋतस्ययाःसदनेकोशेऽअङ्ध्वे । तनूरेवतन्वोऽअस्तुभेषजमासर्व० ॥ क्रतुप्रावाजरिताशश्वतामवऽइंद्रऽइद्भद्राप्रमतिःसुतावतां । पूर्णमूधर्दिव्यंयस्यसिक्तयऽआसर्व० ॥ चित्रस्तेभानुःक्रतुप्राऽअभिष्टिःसंतिस्पृधोजरणिप्राऽअधृष्टाः । रजिष्ठयारज्यापश्वऽआगोस्तूतूर्षतिपर्यग्रंदुवस्युः+ ॥ १७ ॥ ( १०।९।२ ) उद्बुध्यध्वंसमनसःसखायःसमग्निमिंध्वंबहवःसनीळाः । दधिक्रामग्निमुषसंचदेवीमिंद्रावतोवसेनिह्वयेवः ॥ मंद्राकृणुध्वंधियऽआतनुध्वंनावमरित्रपरणींकृणुध्वं । इष्कृणुध्वमायुधारंकृणुध्वंप्रांचंयज्ञंप्रणयतासखायः ॥ युनक्तसीरावियुगातनुध्वंकृतेयोनौवपतेहबीजं । गिराचश्रुष्टिः



---

( १०।९।२ ) उद्बुध्यध्वमितिद्वादशर्चस्यसूक्तस्यसौम्योबुधोविश्वेदेवास्त्रिष्टुप्चतुर्थीषष्ठ्यौगायत्र्यौपंचमीबृहतीनवमीद्वादश्यौजगत्यौ ( ऋत्विजोदेवतावा ) ।

सभंराऽअसंन्नोनेदीयऽइत्सृण्यः पक्कमेयात् ॥ सीरायुंजंतिकवयोयुगावितन्वतेपृथक् । धीरादेवेषुसुम्नया+ ॥ निराहावान्कृणोतनसंवरत्रादधातन । सिंचामहाऽअवतमुद्रिणंवयंसुषेकमनुपक्षितं ॥ इष्कृताहावमवतंसुवरत्रंसुषेचनं । उद्रिणंसिंचेऽअक्षितं ॥ १८ ॥ प्रीणीताश्वान्हितंजयाथस्वस्तिवाहंरथमित्कृणुध्वं । द्रोणाहावमवतमश्मचक्रमंसत्रकोशंसिंचतानृपाणं ॥ व्रजंकृणुध्वंसहिवोनृपाणोवर्मसीव्यध्वंबहुलापृथूनि । पुरःकृणुध्वमायसीरधृष्टामावःसुस्रोच्चमसोदृंहतातं+ ॥ आवोधियंयज्ञियांवर्तऽऊतयेदेवादेवींयजतांयज्ञियामिह । सानोदुहीयद्यवसेवगत्वीसहस्रधारापयसामहीगौः+ ॥ आतूषिंचहरिमींद्रोरुपस्थेवाशीभिस्तक्षताश्मन्मयीभिः । परिष्वजध्वंदशकक्ष्याभिरुभेधुरौप्रतिवह्नियुनक्त ॥ उभेधुरौवह्निरापिब्दमानोंतर्योनेवचरतिद्विजानिः । वनस्पतिंवनऽआस्थापयध्वंनिषूदधिध्वमखनंतऽउत्सं ॥ कर्पृन्नरःकपृथमुद्दधातनचोदयतखुदतवाजसातये । निष्टिग्र्यःपुत्रमाच्यावयोतयऽइंद्रंसबाधऽइहसोमपीतये ॥ १९ ॥ ( १०।९।३ ) प्रतेरथंमिथूकृतमिंद्रोवतुधृष्णुया । अस्मिन्नाजौपुरुहूतश्रवाय्येधनभक्षेषुनोव ॥ उत्स्म

( १०।९।३ ) प्रतेरथमितिद्वादशर्चस्यसूक्तस्यभार्म्यश्वोमुद्गलोद्रुघणस्त्रिष्टुप्आद्यातृतीयांत्याबृहत्यः । ( प्रतेरथमितिसूक्तदेवतात्वेविप्रतिपत्तिःपरस्परमाचार्याणां । उक्तंचशौनकेन–प्रेतीतिहाससूक्तंतुमन्यतेशाकटायनः । यास्कोद्रौघणमैंद्रंवावैश्वदेवंतुशौनकः । आजानवेनंभार्म्यश्वइंद्रासोमौतुमुद्गलइति । )

वातोंवहतिवासोंऽअस्याऽअधिरथंयदजंयत्सहस्रं । रथीरंभून्मुद्गलानीगविष्टौभरेंकृतंव्यंचेदिंद्रसेना ॥ अंतर्यच्छ जिघांसतोवज्रमिंद्राभिदासंतः । दासस्यवामघवन्नार्यस्यवासनुतर्यवयावधं ॥ उद्नोह्रदमपिबज्जर्हृषाणःकूटंस्मतृंहद् भिमातिमेति । प्रमुष्कभारःश्रवंऽइच्छमानोजिरंबाहूऽअभरत्सिषासन् ॥ न्यक्रंदयन्नुपयंतंऽएनममेहयन्वृषभंमध्य ऽआजेः । तेनसूभर्वंशतवत्सहस्रंगवांमुद्गलःप्रधनेंजिगाय ॥ ककर्देवेवृषभोयुक्तऽआसीदवावचीत्सारथिरस्यकेशी । दुधेर्युक्तस्यद्रवतःसहानंसऽऋच्छंतिष्मानिष्पदोमुद्गलानीं ॥ २० ॥ उतप्रधिमुदहन्नस्यविद्वानुपायुनग्वंसगमत्रशि क्षन् । इंद्रऽउदावत्पतिमघ्न्यानामरंहतपद्याभिःककुद्मान् ॥ शुनमष्ट्राव्यंचरत्कपर्दीवरत्रायांदार्वानह्यमानः । नृम्णा निकृण्वन्बहवेजनायगाःपस्पशानस्तविषीरधत्त ॥ इमंतंपश्यवृषभस्ययुंजंकाष्ठायामध्येंद्रुघणंशयानं । येनंजिगायश तवत्सहस्रंगवांमुद्गलःपृतनाज्येषु ॥ आरेऽअघाकोन्वी१त्थाददर्शयंयुंजंतितम्वास्थापयंति । नास्मैतृणंनोदकमाभर न्त्युत्तरोधुरोवहतिप्रदेदिशत् ॥ परिवृक्तेवपतिविद्यमानट्पीप्यानाकूचक्रेणेवसिंचन् । एषैष्याचिद्रथ्याजयेमसुमंगलंसि नंवदस्तुसातं ॥ त्वंविश्वस्यजगतश्चक्षुरिंद्रासिचक्षुषः । वृषायदाजिंवृषणासिषाससिचोदयन्वध्रिणायुजा ॥ २१ ॥

( १०।९।४ ) आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनां । संक्रंदनोनिमिषऽएकवीरःशतंसेनाऽअज ॥ ३५ ॥

( १०।९।४ ) आशुःशिशानइतित्रयोदशर्चस्यसूक्तस्यैंद्रोप्रतिरथ [illegible] दृश्याअप्वादेव्यंत्यायामरुतस्त्रिष्टुबंत्यानुष्टुप् ।

यत्साकमिंद्रः ॥ सुंक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना । तदिंद्रेणजयततत्सहध्वंयुधोनरऽइषुहस्तेनवृष्णा ॥ सऽइषुहस्तैःसनिषंगिभिर्वशीसंस्रष्टासयुधऽइंद्रोगणेन । संसृष्टजित्सोमपाबाहुशर्ध्यूग्रधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राँऽअपबाधमानः । प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविता रथानां ॥ बलविज्ञायःस्थविरःप्रवीरःसहस्वान्वाजीसहमानऽउग्रः । अभिवीरोऽअभिसत्वासहोजाजैत्रमिंद्ररथमातिष्ठ गोवित् ॥ गोत्रभिदंगोविदंवज्रबाहुंजयंतमज्मप्रमृणंतमोजसा । इमंसजाताऽअनुवीरयध्वमिंद्रंसखायोऽअनुसंरभध्वं ॥ २२ ॥ अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिंद्रः । दुश्च्यवनःपृतनाषाळयुध्योऽस्माकंसेनाऽअवतुप्रयुत्सु ॥ इंद्रऽआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरऽएतुसोमः । देवसेनानामभिभंजतीनांजयंतीनांमरुतोयंत्वग्रं ॥ इंद्रस्यवृष्णोवरुणस्यराज्ञऽआदित्यानांमरुतांशर्धऽउग्रं । महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमनांसि । उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतांयंतुघोषाः ॥ अस्माकमिंद्रःसमृतेषुध्वजेष्वस्माकंयाऽइषवस्ताजयंतु । अस्माकंवीराऽउत्तरेभवंत्वस्माँऽउदेवाऽअवताहवेषु ॥ अमीषांचित्तंप्रतिलोभयंतीगृहाणांगान्यप्वेपरेहि । अभिप्रेहिनिर्दहहृत्सुशोकैरंधेनामित्रास्तमसासचंतां ॥ प्रेताजयतानर

(आशुःशिशानःसूक्तोपांत्यायाआप्वादेवीयनुक्रमणी वादेवीतिशौनकीये)

ऋक्सं. अ. ८ अ. ५ ॥ ३६ ॥

इंद्रो॑वः॒शर्म॑यच्छतु । उ॒ग्रावः॑संतुबा॒हवो॑नाधृ॒ष्यायथास॑थ ॥ ॥ (परिशिष्टं ॥ अ॒सौयासेनामरुतः॒परे॑षाम॒भ्यैति॑न॒ऽओज॑ सास्पर्ध॑माना । तांगू॑हत॒तम॒साप॑व्रतेन॒यथा॒मीषा॑ऽअ॒न्योऽअ॒न्यंनजानात् ॥ अं॒धाऽअ॒मित्रा॑भवताशी॒र्षाणाऽअहय॑ऽइव । तेषा॑वोऽअ॒ग्निदं॑ग्धानाम॒ग्निमू॑ळ्हाना॒मिंद्रो॑हंतुवरं॑वरं) ॥ २३ ॥ ( १०।९।५ ) असा॑वि॒सोमः॑पुरुहूत॒तुभ्यं॒हरि॑भ्यांय॒ज्ञ मुप॑याहि॒तूयं॑ । तुभ्यं॒गिरो॒विप्र॑वीराऽइ॒याना॑दधन्वि॒र ऽइंद्र॒पिबा॑सुतस्य॑ ॥ अ॒प्सुधूत॑स्यहरिवः॒पिबे॒हनृभिः॑सु॒तस्य॑ज॒ठरं॑ पृणस्व । मि॒मि॒क्षुर्यमद्र॑यऽइंद्र॒तुभ्यं॒तेभि॑र्वर्धस्व॒मद॑मुक्थवाहः ॥ प्रोग्रांपी॒तिंवृष्ण॑ऽइयर्मि॒स॒त्यांप्र॒यै॑सु॒तस्य॑हर्यश्व॒तुभ्यं॑ । इंद्र॒धेना॑भिरि॒हमा॑दयस्व॒धीभि॒र्विश्वा॑भिः॒शच्या॑गृणा॒नः + ॥ ऊ॒ती श॑चीव॒स्तव॑वी॒र्येण॒वयो॒दधा॑नाऽउ॒शिज॑ऽऋत॒ज्ञाः । प्र॒जाव॑दिंद्र॒मनु॑षोदु॒रोणे॒तस्थु॒र्गृणंतः॑सध॒माद्या॑सः ॥ प्रणी॑तिभिष्टेहर्यश्वसु॒ष्टोः॒सु॒षु॒म्नस्य॑पुरु॒रुचो॒जना॑सः । मंहि॑ष्ठामू॒तिं वि॒तिरे॒दधा॑नाः॒स्तो॒तार॑ऽइंद्र॒तव॑सू॒नृता॑भिः ॥ २४ ॥ उप॒ब्रह्मा॑णिहरिवो॒हरि॑भ्यां॒सोम॑स्ययाहि॒पी॒तये॑सु॒तस्य॑ । इंद्र॑त्वा य॒ज्ञः॒क्षम॑माणमानट्दा॒श्वाँऽअ॑स्यध्व॒रस्य॑प्रके॒तः + ॥ स॒हस्र॑वाजमभिमाति॒षाहं॑सु॒तेर॑णंम॒घवा॑नंसुवृ॒क्तिं । उप॑भूषंतिगि रो॒ऽअप्र॑तीत॒मिंद्रं॑नम॒स्याज॑रि॒तुः॒प॑नंत ॥ स॒प्तापो॑दे॒वीः॒सु॒रणा॒ऽअमृ॑क्ता॒याभिः॒सिंधु॒मत॑रऽइंद्र॒पूर्भि॒त् । न॒व॒तिंस्रो॒त्या॒न व॑च॒स्रवंतीर्दे॒वेभ्यो॑गा॒तुंमनु॑षेचविंदः ॥ अ॒पोम॒हीर॒भिश॑स्तेरमुं॒चोजा॑गरा॒स्वधि॑दे॒वऽएकः॑ । इंद्र॒यास्त्वंवृ॒त्र॒तूर्ये॑च॒कर्थ॑

मंडलं १० अनु. ९ ॥ ३६ ॥

( १०।९।५ ) असावीत्येकादशर्चस्यसूक्तस्यवैश्वामित्रोऽष्टकइंद्रस्त्रिष्टुप् ।

ताभिर्विश्वायुस्तन्वंपुपुष्याः ॥ वीरेण्यःक्रतुरिंद्रःसुशस्तिरुतापिधेनापुरुहूतमीट्टे । आर्दयद्वृत्रमकृणोदुलोकंससाहेशक्रःपृतनाऽअभिष्टिः+ ॥ शुनंहुवेममघवानमिंद्रमस्मिन्भरेनृतमंवाजसातौ । शृण्वंतमुग्रमूतयेसमत्सुघ्नंतंवृत्राणिसंजितंधनानां ॥ २५ ॥ ( १०।९।६ ) कुदावसोस्तोत्रंहर्यतऽआवश्मशारुधद्वाः । दीर्घंसुतंवाताप्याय ॥ हरीयस्यसुयुजाविव्रताावेरर्वंतानुशेपा । उभारजीनकेशिनापतिर्दन्+ ॥ अपयोरिंद्रःपापजऽआमर्तोनशश्रमाणोबिभीवान् । शुभेयद्युंयुजेतविषीवान् ॥ सचायोरिंद्रश्चर्कृषऽआँऽउपानसःसपर्यन् । नदयोर्विव्रतयोःशूरऽइंद्रः ॥ अधियस्तस्थौकेशवंताव्यचस्वंतानपुष्टै । वनोतिशिप्राभ्यांशिप्रिणीवान् ॥ २६ ॥ प्रास्तौदृष्वौजाऽऋष्वेभिस्ततक्षशूरःशवसा । ऋभुर्नक्रतुभिर्मातरिश्वा ॥ वज्रंयश्चक्रेसुहनायदस्यवेहिरीमशोहिरीमान् । अरुतहनुरद्भुतंनरजः ॥ अवनोवृजिनाशिशीह्यृचावनेमानृचः । नाब्रह्मायज्ञऽऋधग्जोषतित्वे+ ॥ ऊर्ध्वायत्तेत्रेतिनीभूद्यज्ञस्यधूर्षुसद्मन् । सजूर्नावंस्वयशसंसचायोः+ ॥ श्रियेतेपृश्निरुपसेचनीभूच्छ्रियेदर्विररेपाः । ययास्वेपात्रेसिंचसऽउत्+ ॥ शतंवायदसुर्यप्रतित्वासुमित्रऽइत्थास्तौदुर्मित्रऽइत्थास्तौत् । आवोयदस्युहत्येकुत्सपुत्रंप्रावोयदस्युहत्येकुत्सवत्सं+ ॥ २७ ॥ इत्यष्टमाष्टकेपंचमोऽध्यायः ॥ ५ ॥

---

( १०।५।६ ) कदेत्येकादशर्चस्यसूक्तस्यकौत्सोदुर्मित्रइंद्रउष्णिक्आद्यातृतीयाद्याविराड्द्वितीयासप्तम्यौपिपीलिकमध्येअंत्यात्रिष्टुप् ।

एकषष्ट्याध्यायेवर्गाः २७ सूक्तानि ११ ऋचः १४९ ॥ त्यागः ॥ उर्वश्या. पुरूरवस. उर्वश्या. पुरूरवस.२ उर्वश्या. पुरूरवस. उर्वश्या.३ पुरूरवस. उर्वश्या. पुरूरवस. उर्वश्या. पुरूरवस.२ उर्वश्या. पुरूरवस. इंद्राये.१३ ओषधीभ्य.२३ देवेभ्य. १२ [ भे. प. बृहस्पतय.३ देवेभ्य.४ अग्नय.५ ] इंद्राये.१२ विश्वेभ्योदेवेभ्य.२४ [ भे. प. विश्वेभ्योदे.१० इंद्रादितिभ्या. इंद्राये. ऋत्विज.१२ ] द्रुघणाये.१२ इंद्राये.३ बृहस्पतय. इंद्राये.७ अप्वायैदेव्याइ. मरुद्भ्य. इंद्राये.२२ ॥ इत्यष्टमेपंचमः ॥

उभौभूतांशःकाश्यपआश्विनमाविर्दिव्योदक्षिणावाप्राजापत्यादक्षिणांतद्दातृन्वास्तौच्चतुर्थीजगतींकिमिच्छंती पणिभिरसुरैर्निगूढ्वागाअन्वेष्टुंसरमांदेवशुनीमिंद्रेणप्रहितामयुग्भिःपणयोमित्रीयंतःप्रोचुःसातान्युग्मांत्याभि रनिच्छंतीप्रत्याचष्टेतेवदन्त्सप्तजुहूर्ब्रह्मजायाब्राह्मोवोर्ध्वनाभविश्वदेवंह्यनुष्टुबंतंसमिद्धऽएकादशजमदग्निस्त त्सुतोवारामआप्रियंःपरेचत्वारोवैरूपामनीषिणोदशाष्टादंष्ट्रइंद्रपिबनभःप्रभेदनस्तमस्यशतप्रभेदनोंत्यात्रिष्टुप् घर्मासधिस्तापसोवाघर्मोवैश्वदेवंचतुर्थीजगतींचित्रऽइन्नववार्ष्टिहव्यउपस्तुतआग्नेयंजागतंत्रिष्टुप्शक्र्यतंपिब स्थौरोग्निर्युतोग्निर्यूपोवानवाऽभिक्षुर्धनान्नदानप्रशंसाचाद्येजगत्यावग्नेहंस्युरुक्षयऽआमहीयवऽआग्नेयंराक्षोघ्नं गायत्रंत्विविविसप्तोनैंद्रोलवआत्मानंतुष्टाव ॥ ६ ॥ ॥ ॥ ॥

हरिःओम् ॥ ( १०।९।७ ) उभाऽउंनूनंतदिदर्थयेथेवितन्वाथेधियोवस्त्रापसेव । सध्रीचीनायातवेप्रेमजीगःसुदि
नेवपृक्षऽआतंसयेथे ॥ उष्टारेवफर्वरेषुश्रयेथेप्रायोगेवश्वात्र्याशासुरेथः । दूतेवहिष्ठोयशसाजनेषुमापस्थातंमहिषेवा
वपानात् ॥ साकंयुजाशकुनस्येवपक्षापश्वेवचित्रायजुरागमिष्टं । अग्निरिवदेवयोर्दीदिवांसापरिज्मानेवयजथःपुरु
त्रा+ ॥ आपीवोऽअस्मेपितरेवपुत्रोग्रेवरुचानृपतीवतुर्ये । इयेवपुष्ट्यैकिरणेवभुज्यैश्रुष्टीवानेवहवमागमिष्टं ॥ वंसगेव
पूषर्याशिंबातामित्रेवऽऋताशतराशातपंता । वाजेवोच्चावयसाघर्म्येष्ठामेषेवेषासपर्या३पुरीषा ॥ १ ॥ सृण्येवजर्भ
रीतुर्फरीतूनैतोशेवतुर्फरीपर्फरीका । उदन्यजेवजेमनामदेरूतामेजराय्वजरंमरायु ॥ पज्रेवचर्चरंजारंमरायुक्षद्मेवा
र्थेषुतर्तरीथऽउग्रा । ऋभूनापत्खरमज्राखरज्रुर्वायुर्नपर्फरत्क्षयद्रयीणां+ ॥ घर्मेवमधुजठरेसनेरूभगेवितातुर्फरीफा
रिवारं । पतरेवचचराचंद्रनिर्णिङ्मनऽऋंगामनन्या३नजग्मी ॥ बृहंतेवगंभरेषुप्रतिष्ठांपादेवगाधंतरतेविदाथः । क
र्णेवशासुरनुहिस्मराथोंशेवनोभजतंचित्रमप्नः ॥ आरंगरेवमध्वेरयेथेसारघेवगविनीचीनबारे । कीनारेवस्वेदमासि
ष्विदानाक्षामेवोर्जासूयवसात्संचेथे ॥ ऋध्यामस्तोमंसनुयामवाजमानोमंत्रंसरथेहोपयातं । यशोनपक्वंमधुगोष्वंतरा
भूतांशोऽअश्विनोःकाममप्राः ॥ ( परिशिष्टं ॥ हविर्भिरेकेस्वरितःसचंतेसुन्वंतऽएकेसवनेषुसोमान् । शचीर्मदंतऽउत

( १०।९।७ ) उभाउनूनमित्येकादशर्चस्यसूक्तस्यकाश्यपोभूतांशोश्विनौत्रिष्टुप ।

दक्षिणाभिर्नेज्जिह्मायंत्योनरकेपताम ) ॥ २ ॥ ( १०।९।८ ) आविरभून्महिमाघोनमेषांविश्वंजीवंतमसोनिरमोचि । महिज्योतिःपितृभिर्दत्तमागादुरुःपंथादक्षिणायाऽअदर्शि ॥ उच्चादिविदक्षिणावंतोऽअस्थुर्येऽअश्वदाःसहतेसूर्येण । हिरण्यदाऽअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतऽआयुः ॥ दैवीपूर्तिर्दक्षिणादेवयज्यानकवारिभ्योनहितेपृणंति । अथानरःप्रयतदक्षिणासोवद्यभियाबहवःपृणंति ॥ शतधारंवायुमर्कंस्वर्विदंनृचक्षसस्तेऽअभिचक्षतेहविः । येपृणंतिप्रचयच्छंतिसंगमेतेदक्षिणांदुहतेसप्तमातरं ॥ दक्षिणावान्प्रथमोहूतऽएतिदक्षिणावान्ग्रामणीरग्रमेति । तमेवमन्येनृपतिंजनानांयःप्रथमोदक्षिणामाविवाय ॥ ३ ॥ तमेवऽऋषिंतमुब्रह्माणमाहुर्यज्ञन्यंसामगामुक्थशासं । सशुक्रस्यतन्वोवेदतिस्रोयःप्रथमोदक्षिणयाराध ॥ दक्षिणाश्वंदक्षिणागांददातिदक्षिणाचंद्रमुतयद्धिरण्यं । दक्षिणान्नंवनुतेयोनऽआत्मादक्षिणांवर्मकृणुतेविजानन् ॥ नभोजाममुर्नन्यर्थमीयुर्नरिष्यंतिनव्यथंतेहभोजाः । इदंयद्विश्वंभुवनंस्वश्चैतत्सर्वंदक्षिणैभ्योददाति ॥ भोजाजिग्युःसुरभिंयोनिमग्रेभोजाजिग्युर्वध्वंयासुवासाः । भोजाजिग्युरंतःपेयंसुरायाभोजाजिग्युर्येऽअहूताःप्रयंति ॥ भोजायाश्वंसंमृजंत्याशुंभोजायास्तेकन्याशुंभमाना । भोजस्येदंपुष्करि

---

( १०।९।८ ) आविरित्येकादशर्चस्यसूक्तस्यांगिरसोदिव्योदक्षिणात्रिष्टुप्चतुर्थीजगती । ( प्राजापत्यादक्षिणानाम्नीऋषिकावादक्षिणा-
दातारोवादेवता ) ।

णीवेश्मपरिष्कृतंदेवमानेवचित्रं+ ॥ भोजमश्वाः सुष्ठुवाहोवहंतिसुवृद्रथोवर्ततेदक्षिणायाः । भोजंदेवासोवताभरेषु भोजः शत्रून्समनीकेषुजेता ॥ ४ ॥ ( १०।९।९ ) किमिच्छंतीसरमाप्रेदमानट्दूरेह्यध्वाजगुरिःपराचैः । कास्मेहितिःकापरितक्म्यासीत्कथंरसायाऽअतरःपयांसि ॥ इंद्रस्यदूतीरिषिताचरामिमहऽइच्छंतीपणयोनिधीन्वः । अतिष्कदोभियसातन्नऽआवत्तथारसायाऽअतरंपयांसि ॥ कीदृङ्ङिंद्रःसरमेकादृशीकायस्येदंदूतीरसरःपराकात् । आचगच्छान्मित्रमेनादधामाथागवांगोपतिर्नोभवाति ॥ नाहंतंवेददभ्यंदभत्सयस्येदंदूतीरसरंपराकात् । नतंगूहंतिस्रवतोगभीराहताऽइंद्रेणपणयःशयध्वे ॥ इमागावःसरमेयाऽऐच्छःपरिदिवोऽअंतान्त्सुभगेपतंती । कस्तऽएनाऽअवसृजादयुध्व्युतास्माकमायुधासंतितिग्मा+ ॥ ५ ॥ असेन्यावःपणयोवचांस्यनिषव्यास्तन्वःसंतुपापीः । अधृष्टोवऽएतवाऽअस्तुपंथाबृहस्पतिर्वऽउभयानमृळात् ॥ अयंनिधिःसरमेऽअद्रिबुध्नोगोभिरश्वेभिर्वसुभिन्यृष्टः । रक्षंतितंपणयोयेसुगोपारेकुपदमलकमाजगंथ ॥ एहगमन्नृषयःसोमशिताऽअयास्योऽअंगिरसोनवग्वाः । तऽएतमूर्वविभजंतगोनामथैतद्वचःपणयोवमन्नित्+ ॥ एवाचत्वंसरमऽआजगंथप्रबाधितासहसादैव्येन । स्वसारंत्वाकृणवैमापुनर्गाऽ

---

(१०।९।९) किमिच्छंतीत्येकादशर्चस्यसूक्तस्यायुजांपणिनामासुराऋषयःयुजामेकादश्याश्चसरमानाम्नीदेवशुनीऋषिकाअयुजांसरमादेवतायुजामेकादश्याश्चपणयस्त्रिष्टुप् ।

अपंतेगवांसुभगेभजाम ॥ नाहंवेदभ्रातृत्वंनोस्वसृत्वमिंद्रोविदुरंगिरसश्चघोराः । गोकामामेऽअच्छदयन्यदायमपा
तंऽइतपणयोवरीयः ॥ दूरमितपणयोवरीयऽउद्गावोयंतुमिनतीर्ऋतेनं । बृहस्पतिर्याऽअविंदन्निगूळ्हाःसोमोग्रावाण
ऽऋषयश्चविप्राः ॥ ६ ॥ ( १०।९।१० ) तेवदन्प्रथमाब्रह्मकिल्बिषेकूपारःसलिलोमातरिश्वा । वीळुहरास्तपऽउग्रो
मयोभूरापोदेवीःप्रथमजाऽऋतेनं ॥ सोमोराजाप्रथमोब्रह्मजायांपुनःप्रायच्छदहृणीयमानः । अन्वर्तितावरुणोमित्र
ऽआसीदग्निर्होताहस्तगृह्यानिनाय ॥ हस्तेनैवग्राह्यऽआधिरस्याब्रह्मजायेयमितिचेदवोचन् । नदूतायप्रह्येतस्थऽए
षातथाराष्ट्रंगुपितंक्षत्रियस्य ॥ देवाऽएतस्यामवदंतपूर्वेसप्तऽऋषयस्तपसेयेनिषेदुः । भीमाजायाब्राह्मणस्योपनीतादु
र्धांदधातिपरमेव्योमन् ॥ ब्रह्मचारीचरतिवेविषद्विषःसदेवानांभवत्येकमंगं । तेनजायामन्वविंदद्बृहस्पतिःसोमेन
नीतांजुह्वं१नदेवाः ॥ पुनर्वैदेवाऽअददुःपुनर्मनुष्याऽउत । राजानःसत्यंकृण्वानाब्रह्मजायांपुनर्ददुः ॥ पुनर्दायब्रह्म
जायांकृत्वीदेवैर्निकिल्बिषं । ऊर्जंपृथिव्याभक्त्वायोरुगायमुपासते ॥ ७ ॥ ( १०।९।११ ) समिद्धोऽअद्यमनुषो

---

( १०।९।१० ) तेवदन्निति सप्तर्चस्यसूक्तस्यब्रह्मजायाजुहूर्विश्वेदेवास्त्रिष्टुबंत्येद्वेअनुष्टुभौ । ( ब्राह्मोवोर्ध्वनाभऋषिः ) ( १०।९।११ ) समिद्धइत्येकादशर्चस्यसूक्तस्यभार्गवोजमदग्निरिध्मस्तनूनपादिळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौसरस्वतीळाभारत्यस्त्वष्टावनस्पति-स्वाहाकृतयस्त्रिष्टुप् । ( जामदग्निःपरशुरामोवा )

दुरोणेदेवोदेवान्यंजसिजातवेदः । आचवहमित्रमहाश्चिकित्वान्त्वंदूतःकविरसिप्रचेताः ॥ तनूनपात्पथऽऋतस्ययानान्मध्वांसमंजन्त्स्वंदयासुजिह्व । मन्मानिधीभिरुतयज्ञमृन्धन्देवत्राचकृणुह्यध्वरंनः ॥ आजुह्वानऽईड्योवंद्यश्चायाह्यग्नेवसुभिःसजोषाः । त्वंदेवानामसियह्वहोतासऽएनान्यक्षीषितोयजीयान् ॥ प्राचीनंबर्हिःप्रदिशापृथिव्यावस्तोरस्यावृज्यतेऽअग्रेऽअह्नाँ । व्युप्रथतेवितरंवरीयोदेवेभ्योऽअदितयेस्योनं+ ॥ व्यचस्वतीरुर्वियाविश्रयंतांपतिभ्योनजनयःशुंभमानाः । देवीर्द्वारोबृहतीर्विश्वमिन्वादेवेभ्योभवतसुप्रायणाः+ ॥ ८ ॥ आसुष्वयंतीयजतेऽउपाकेऽउषासानक्तासदतांनियोनौ । दिव्येयोषणेबृहतीसुरुक्मेऽअधिश्रियंशुक्रपिशंदधाने ॥ दैव्याहोताराप्रथमासुवाचामिमानायज्ञंमनुषोयजध्यै । प्रचोदयंताविदथेषुकारूप्राचीनंज्योतिःप्रदिशादिशंता ॥ आनोयज्ञंभारतीतूयमेत्विळामनुष्वदिहचेतयंती । तिस्रोदेवीर्बर्हिरेदंस्योनंसरस्वतीस्वपसःसदंतु ॥ यऽइमेद्यावापृथिवीजनित्रीरूपैरपिंशद्भुवनानिविश्वा । तमद्यहोतरिषितोयजीयान्देवंत्वष्टारमिहयक्षिविद्वान्+ ॥ उपावसृजत्मन्यासमंजन्देवानांपाथऽऋतुथाहवींषि । वनस्पतिःशमितादेवोऽअग्निःस्वदंतुहव्यंमधुनाघृतेन ॥ सद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः । अस्यहोतुःप्रदिश्यृतस्यवाचिस्वाहाकृतंहविरदंतुदेवाः+ ॥ ९ ॥ ( १०।९।१२ ) मनीषिणःप्रभरध्वंमनीषां

( १०।९।१२ ) मनीषिणइतिदशर्चस्यसूक्तस्यवैरूपोघ्नदंष्ट्रइंद्रस्त्रिष्टुप् ।

यथायथामतयः संतिनृणां । इंद्रस्तैरेरयामाकृतेभिः सहिवीरोगिर्वणस्युर्विदानः ॥ ऋतस्यहिसदसोधीतिरद्यौत्संगा
ष्टेयोवृषभोगोभिरानट् । उदतिष्ठत्तविषेणारवेणमहांतिचित्संविव्याचारजांसि ॥ इंद्रःकिलश्रुत्याऽअस्यवेदसहिजि
ष्णुःपथिकृत्सूर्याय । आन्मेनांकृण्वन्नच्युतोभुवद्गोःपतिर्दिवःसनजाऽअप्रतीतः ॥ इंद्रोमह्नामहतोऽअर्णवस्यव्रतामि
नादंगिरोभिर्गृणानः । पुरूणिचिन्निततानारजांसिदाधारयोधरुणंसत्यताता ॥ इंद्रोदिवःप्रतिमानंपृथिव्याविश्वावे
दसवनाहंतिशुष्णं । महींचिद्द्यामातनोत्सूर्येणचास्कंभचित्कंभनेनस्कभीयान् ॥ १० ॥ वज्रेणहिवृत्रहावृत्रमस्तरदेवस्यशू
शुवानस्यमायाः । विधृष्णोऽअत्रधृषताजघंथाथाभवोमघवन्बाह्वोजाः ॥ सचंतयदुषसःसूर्येणचित्रामस्यकेतवोरामविं
दन् । आयन्नक्षत्रंददृशेदिवोनपुनर्यतोनकिरद्धानुवेद ॥ दूरंकिलप्रथमाजग्मुरासामिंद्रस्ययाःप्रसवेसस्रुरापः । क्व
स्विदग्रंक्वबुध्नऽआसामापोमध्यंक्वोनूनमंतः ॥ सृजःसिंधूँरहिनाजग्रसानाँऽआदिदेताःप्रविविज्रेजवेन । मुमुक्षमा
णाऽउतयामुमुत्रेधेदेतानरमंतेनितिक्ताः ॥ सध्रीचीःसिंधुमुशतीरिवायन्त्सनाज्जारऽआरितःपूर्भिदासां । अस्तमा
तेपार्थिवावसून्यस्मेजग्मुःसूनृताऽइंद्रपूर्वीः+ ॥ ११ ॥ ( १०।९।१३ ) इंद्रपिबप्रतिकामंसुतस्यप्रातःसावस्तवहिपू
र्वपीतिः । हर्षस्वहंतवेशूरशत्रूनुक्थेभिष्टेवीर्या३प्रब्रवाम ॥ यस्तेरथोमनसोजवीयानेंद्रतेनसोमपेयाययाहि । तूयमाते



---

( १०।९।१३ ) इंद्रपिबेतिदशर्चस्यसूक्तस्यवैरूपोनभःप्रभेदनइंद्रस्त्रिष्टुप् ।

हर॑यः॒प्रद्र॑वंतु॒येभि॒र्या॑सि॒वृष॑भि॒र्मंद॑मानः ॥ हरि॑त्वता॒वर्च॑सा॒सूर्य॑स्य॒श्रेष्ठै॑रू॒पैस्त॒न्वं॑स्पर्शयस्व । अ॒स्माभि॑रिंद्र॒सखि॑भि
र्हु॒वानःस॑ध्रीची॒नोमा॑दयस्वा॒नि॒षद्य॑ ॥ यस्य॒त्यत्ते॑महि॒मानं॒मदे॑ष्वि॒मेम॒हीरोद॑सी॒नावि॑विक्तां । तदोक॒ऽआहरि॑भिरिंद्र॒यु
क्तैः॒प्रि॒येभि॒र्या॑हिप्रि॒यमन्न॒मच्छ॑ ॥ यस्य॒शश्व॑त्पपि॒वाँऽइंद्र॒शत्रू॑ननानुकृ॒त्यारण्या॑चकर्थ॑ । सते॒पुरं॑धिंतवि॑षीमियर्ति॑सत॒
मदा॑यसु॒तऽइंद्र॒सोमः॑ ॥ १२ ॥ इ॒दंते॒पात्रं॒सन॑वित्तमिंद्र॒पिबा॒सोम॑मे॒नाशं॑तक्रतो । पूर्ण॑ऽआहा॒वोम॑दि॒रस्य॒मध्वो॒यंवि
श्व॒ऽइद॑भि॒हर्य॑तिदे॒वाः+ ॥ विहित्वामिंद्रपुरु॒धाजना॑सोहि॒तप्र॑यसोवृषभ॒ह्वयं॑ते । अ॒स्माकं॑ते॒मधु॑मत्तमा॒नीमाभु॑व॒न्त्सव॑
ना॒तेषु॑हर्य ॥ प्रत॑ऽइंद्रपू॒र्व्याणि॒प्रनू॒नंवी॒र्या॑वोचंप्रथ॒माकृ॒तानि॑ । स॒ती॒नम॑न्युरश्रथा॒यो॒ऽअद्रिं॑सुवेद॒नाम॑कृणो॒र्ब्रह्म॑णे
गां+ ॥ निषुसीदगणपते॒ग॒णेषु॒त्वामा॑हु॒र्विप्र॑तमंकवी॒नां । नऽऋ॒तेत्वत्क्रि॑यते॒किं॒च॒नारे॒म॒हाम॒र्कंम॑घवन्चि॒त्रम॑र्च ॥ अ॒भि॒
ख्यानो॑मघव॒न्नाध॑मानान्त्सखे॑बो॒धिव॑सुपते॒सखी॑नां । रणं॑कृधिरणकृत्सत्यशु॒ष्माभ॑क्तेचि॒दाभ॑जारा॒येऽअ॒स्मान्+
॥ १३ ॥ ( १०।१०।१ ) तम॑स्य॒द्यावा॑पृथि॒वीसचे॑तसा॒विश्वे॑भि॒र्दे॒वैर॒नु॒शुष्म॑मावतां । यदैत्कृ॑ण्वा॒नोम॑हि॒मान॑मिंद्रि॒यं
पी॒त्वीसोम॑स्य॒क्रतु॑माँऽअवर्धत ॥ तम॑स्य॒विष्णु॑र्महि॒मान॒मोज॑सां॒शुंद॑ध॒न्वान्मधु॑नो॒विर॑प्शते । दे॒वेभि॒रिंद्रो॑म॒घवा॑स॒या
व॑भिर्वृ॒त्रंज॑घ॒न्वाँऽअ॑भव॒द्वरे॑ण्यः ॥ वृ॒त्रेण॒यदहि॑ना॒बिभ्र॒दायु॑धास॒मस्थि॑थायु॒धये॒शंस॑मा॒विदे॑ । विश्वे॑ते॒ऽअत्र॑म॒रुतः॑स॒

दशमेनुवाकेषोडशसूक्तानि ( १०।१०।१ ) तमस्येतिदशर्चस्यसूक्तस्यवैकुण्ठइंद्रऋषिः । इंद्रोदेवता अंत्यात्रिष्टुप् ।

हत्मनावर्धन्नुग्रमहिमानमिंद्रियं ॥ जज्ञानऽएवव्यबाधतस्पृधःप्रापश्यद्वीरोऽअभिपौंस्यंरणं । अवृश्चदद्रिमवसस्य दःसृजदस्तभ्नान्नाकंस्वपस्ययापृथुं ॥ आदिंद्रःसत्रातविंषीरपत्यतवरीयोद्यावापृथिवीऽअबाधत । अवाभरद्धृषितो वज्रमायसंशेवंमित्रायवरुणायदाशुषे ॥ १४ ॥ इंद्रस्यात्रतविंषीभ्योविरप्शिनऽऋघायतोऽअरंहयंतमन्यवे । वृत्रंय दुग्रोव्यवृश्चदोजसापोविभ्रंतंतमसापरीवृतं ॥ यावीर्याणिप्रथमानिकर्त्वामहित्वेभिर्यतमानौसमीयतुः । ध्वांतंतमो वदध्वसेहतऽइंद्रोमह्नापूर्वहूतावपत्यत ॥ विश्वेदेवासोऽअधवृष्ण्यानितेवर्धयन्त्सोमवत्यावचस्यया । रद्धंवृत्रमहि मिंद्रस्यहन्मनाग्निर्नजंभैस्तृष्वन्नमावयत् ॥ भूरिदक्षेभिर्वचनेभिऋक्कभिःसख्येभिःसख्यानिप्रवोचत । इंद्रोधुनिंचचु मुरिंचदंभयंछ्रद्धामनस्याशृणुतेदभीतये ॥ त्वंपुरूण्याभरास्वश्व्यायेभिर्मंसैनिवचनानिशंसन् । सुगेभिर्विश्वादुरि तातरेमविदोषुणंऽउर्वियागाधमद्य ॥ १५ ॥ ( १०।१०।२ ) घर्मासमंतात्रिवृतंव्यापतुस्तयोर्जुष्टिंमातरिश्वाजगा म । दिवस्पयोदिधिषाणाऽअवेषन्विदुर्देवाःसहसामानमर्कं ॥ तिस्रोदेष्ट्रायनिर्ऋतीरुपासतेदीर्घश्रुतोविहिजानंति वह्नयः । तासांनिचिक्युःकवयोनिदानंपरेषुयागुह्येषुव्रतेषु ॥ चतुष्कपर्दायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते । तस्यांसुपर्णावृषणानिषेदतुर्यत्रदेवादधिरेभागधेयं ॥ एकःसुपर्णःससमुद्रमाविवेशसऽइदंविश्वंभुवनंविचष्टे । तंपाके



( १०।१०।२ ) घर्मेतिदशर्चस्यसूक्तस्यवैरूपःसध्रिर्विश्वेदेवास्त्रिष्टुप्चतुर्थीजगती । ( तापसोघर्मोवाऋषिः )

नमनंसापश्यमंतितस्तंमातारेह्लिसऽउंरेह्लिमातरं ॥ सुपर्णंविप्राःकवयोवचोभिरेकंसंतंबहुधाकल्पयंति । छंदांसिचद धतोऽअध्वरेषुग्रहान्त्सोमस्यमिमतेद्वादश ॥ १६ ॥ षट्त्रिंशांश्चचतुरःकल्पयंतश्छंदांसिचदधतऽआद्वादशं । यज्ञंवि मायकवयोमनीषऽऋक्सामाभ्यांप्ररथंवर्तयंति ॥ चतुर्दशान्येमहिमानोऽअस्यतंधीरावाचाप्रणयंतिसप्त । आप्नानं तीर्थंकऽइहप्रवोचद्येनपथाप्रपिबंतेसुतस्य ॥ सहस्रधापंचदशान्युक्थायावद्द्यावापृथिवीतावदित्तत् । सहस्रधामहि मानःसहस्रंयावद्ब्रह्मविष्ठितंतावतीवाक्+ ॥ कश्छंदसांयोगमावेदधीरःकोधिष्ण्यांप्रतिवाचंपपाद । कमृत्विजामष्टमं शूरमाहुर्हरीऽइंद्रस्यनिचिकायकःस्वित् ॥ भूम्याऽअंतंपर्येकेचरंतिरथस्यधूर्षुयुक्तासोऽअस्थुः । श्रमस्यदायंविभजं त्येभ्योयदायमोभवतिहर्म्येहितः+ ॥ १७ ॥ ( १०।१०।३ ) चित्रऽइच्छिशोस्तरुणस्यवक्षथोनयोमातरावप्येतिधा तवे । अनूधायदिजीजनदधाचनुववक्षसद्योमहिदूत्यं१चरन् ॥ अग्निर्हनामधायिदन्नपस्तमःसंयोवनायुवतेभस्मना दता । अभिप्रमुराजुह्वास्वध्वरऽइनोनप्रोथमानोयवसेवृषा ॥ तंवोविंनद्रुषदंदेवमंधसऽइंदुंप्रोथंतंप्रवपंतमर्णवं । आ सावह्निंनशोचिषाविरप्शिनंमहिव्रतंनसरजंतमध्वनः ॥ वियस्यतेज्रयसानस्याजरधक्षोर्नवाताःपरिसंत्यच्युताः । आरण्वासोयुयुधयोनसत्वनंत्रितंनशंतप्रशिषंतऽइष्टये ॥ सऽइदग्निःकण्वतमःकण्वसखार्यःपरस्यांतरस्यतरुषः । अ

---

( १०।१०।३ ) चित्रइतिनवर्चस्यसूक्तस्यवार्ष्टिहव्यउपस्तुतोग्निर्जगतीअष्टमीनवम्यौत्रिष्टुप्शक्वर्यौ ।

ऋक्सं. अ. ८ अ. ६ ॥ ४२ ॥

ग्निः पातु गृणतो ऽ अग्निः सूरीनग्निर्ददातु तेषामवो नः ॥ १८ ॥ वाजिन्तमाय सह्यसे सुपित्र्य तृषु च्यवानो ऽ अनु जातवेदसे । अनुद्रे चिद्यो धृषता वरं सते महिन्तमाय धन्वनेदविष्यते ॥ एवाग्निर्मर्तैः सह सूरिभिर्वसुः ष्टवे सहसः सूनरो नृभिः । मित्रासो न ये सुधिता ऽ ऋतायवो द्यावो न द्युम्नैरभि संति मानुषान् ॥ ऊर्जो नपात्सहसावन्निति त्वोपस्तुतस्य वन्दते वृषा वाक् । त्वां स्तोषाम त्वया सुवीरा द्राघीय ऽ आयुः प्रतरं दधानाः ॥ इति त्वाग्ने वृष्टिहव्यस्य पुत्रा ऽ उपस्तुतास ऽ ऋषयो वोचन् । तांश्च पाहि गृणतश्च सूरीन्वषड्वषळित्यूर्ध्वासो ऽ अनक्षन्नमो नम ऽ इत्यूर्ध्वासो ऽ अनक्षन् ॥ १९ ॥ ( १०।१०४ ) पिबा सोमं महत ऽ इंद्रियाय पिबा वृत्राय हंतवे शविष्ठ । पिब राये शवसे हूयमानः पिब मध्वस्तृपदिंद्रा वृषस्व ॥ अस्य पिब क्षुमतः प्रस्थितस्येंद्र सोमस्य वरमा सुतस्य । स्वस्तिदा मनसा मादयस्वार्वाचीनो रेवते सौभगाय ॥ ममत्तु त्वा दिव्यः सोम ऽ इंद्र ममत्तु यः सूयते पार्थिवेषु । ममत्तु येन वरिवश्चकर्थ ममत्तु येन निरिणासि शत्रून् ॥ आ द्विबर्हा ऽ अमिनो यात्विंद्रो वृषा हरिभ्या परिषिक्तमंधः । गव्या सुतस्य प्रभृतस्य मध्वः सत्रा खेदामरुशहा वृषस्व ॥ नि तिग्मानि भ्राशयन्भ्राश्यान्यव स्थिरा तनुहि यातुजूनां । उग्राय ते सहो बलं ददामि प्रतीत्या शत्रून्विगदेषु वृश्च ॥ २० ॥ व्य१र्य ऽ इंद्र तनुहि श्रवांस्योजः स्थिरेव धन्वनोभिमातीः । अस्मद्र्यग्वावृधानः सहोभिरनिभृष्टस्तन्वं वावृधस्व ॥ इदं हविर्मघवन्तुभ्यं रातं प्रति सम्राळहृणानो गृ

मंडलं १० अनु. १० ॥ ४२ ॥

---

( १०।१०४ ) पिबेति नवर्चस्य सूक्तस्य औरो मीयुत इंद्रस्त्रिष्टुप् । ( अग्नियूपो वा ऋषिः )

भाय । तुभ्यंसुतोमघवन्तुभ्यंपक्वोऽद्धीन्द्रपिबचप्रस्थितस्य ॥ अद्धीदिंद्रप्रस्थितेमाहवींषिचनोंदधिष्वपचतोतसोमं । प्रयस्वंतःप्रतिहर्यामसित्वासत्याःसंतुयजमानस्यकामाः ॥ ऐंद्राग्निभ्यांसुवचस्यामियर्मिसिंधाविवप्रेरयंनावमर्कैः । अयाऽइवपरिचरंतिदेवायेऽअस्मभ्यंधनदाऽउद्भिदश्च ॥ २१ ॥ ( १०।१०।५ ) नवाऽउदेवाःक्षुधमिद्वधंददुरुताशितमुपगच्छंतिमृत्यवः । उतोरयिःपृणतोनोपदस्यत्युतापृणन्मर्डितारंनविंदते ॥ यऽआध्रायचकमानायपित्वोन्नवान्त्सन्रफितायोपजग्मुषे । स्थिरंमनःकृणुतेसेवतेपुरोतोचित्समर्डितारंनविंदते ॥ सऽइद्भोजोयोगृहवेददात्यन्नकामायचरतेकृशाय । अरमस्मैभवतियामहूताऽउतापरीषुकृणुतेसखायं ॥ नससखायोनददातिसख्येसचाभुवेसचमानायपित्वः । अपास्मात्प्रेयान्नतदोकोऽअस्तिपृणंतमन्यमरणंचिदिच्छेत् ॥ पृणीयादिन्नाधमानायतव्यान्द्राघीयांसमनुपश्येतपंथां । ओहिवर्ततेरथ्येवचक्रान्यमन्यमुपतिष्ठंतरायः ॥ २२ ॥ मोघमन्नंविंदतेऽअप्रचेताःसत्यंब्रवीमिवधऽइत्सतस्य । नार्यमणंपुष्यतिनोसखायंकेवलाघोभवतिकेवलादी ॥ कृषन्नित्फालऽआशितंकृणोतियन्नध्वानमपवृक्तेचरित्रैः । वदन्ब्रह्मावदतोवनीयान्पृणन्नापिरपृणंतमभिष्यात् ॥ एकपाद्भूयोद्विपदोविचक्रमेद्विपात्त्रिपादमभ्येतिपश्चात् । चतुष्पादेतिद्विपदामभिस्वरेसंपश्यन्पंक्तीरुपतिष्ठमानः ॥ समौचिद्धस्तौनसमंविविष्टःसंमातराचिन्नसमंदु

( १०।१०।५ ) नवाइतिनवर्चस्यसूक्तस्यांगिरसोभिक्षुर्धनान्नदानंत्रिष्टुबाद्येजगत्यौ ।

ऋक्सं. अ. ८ अ. ६ ॥ ४३ ॥

मंडलं १० अनु १०

हाते । युमयोश्चिन्नसमावीर्याणिज्ञातीचित्संतौनसमंपृणीतः ॥ २३ ॥ ( १०।१०।६ ) अग्नेहंसिन्यंत्रिणंदीद्यन्मर्त्ये ष्वा । स्वेक्षयेशुचिव्रत ॥ उत्तिष्ठसिस्वाहुतोघृतानिप्रतिमोदसे । यत्त्वास्रुचंःसमस्थिरन् ॥ सऽआहुतोविरोचतेग्निरी ळेन्योगिरा । स्रुचाप्रतीकमज्यते ॥ घृतेनाग्निःसमज्यतेमधुप्रतीकऽआहुतः । रोचमानोविभावसुः ॥ जरमाणःस मिध्यसेदेवेभ्योहव्यवाहन । तंत्वाहवंतमर्त्याः ॥ २४ ॥ तंमर्ताऽअमर्त्यघृतेनाग्निंसपर्यत । अदाभ्यंगृहपतिं ॥ अ दाभ्येनशोचिषाग्नेरक्षस्त्वंदह । गोपाऽऋतस्यदीदिहि ॥ सत्वमग्नेप्रतीकेनप्रत्योषयातुधान्यः । उरुक्षयेषुदीद्यत् ॥ तंत्वागीर्भिरुरुक्षयाहव्यवाहंसमीधिरे ॥ यजिष्ठंमानुषेजने ॥ २५ ॥ ( १०।१०।७ ) इतिवाऽइतिमेमनोगामश्वंस नुयामिति । कुवित्सोमस्यापामिति ॥ प्रवाताऽइवदोधतऽउन्मापीताऽअयंसत । कुवि० ॥ उन्मापीताऽअयंसतर थमश्वाऽइवाशवः । कुवि० ॥ उपमामतिरस्थितवाश्रापुत्रमिवप्रियं । कुवि० ॥ अहंतष्टेवबंधुरंपर्यचामिहृदामतिं । कुवि० ॥ नहिमेऽअक्षिपच्चनाच्छांत्सुःपंचकृष्टयः । कुवि० ॥ २६ ॥ नहिमेरोदसीऽउभेऽअन्यंपक्षंचनप्रति । कुवि० ॥ अभिद्यांमहिनाभुवमभीऽइमांपृथिवींमहीं । कुवि० ॥ हंताहंपृथिवीमिमांनिदधानीहवेहवा । कुवि० ॥

॥ ४३ ॥

( १०।१०।६ ) अग्नेहंसीतिनवर्चस्यसूक्तस्यामहीयवउरुक्षयोरक्षोहाग्निर्गायत्री । ( १०।१०।७ ) इतिवाइतित्रयोदशर्चस्यसूक्तस्यैंद्रो लबोगायत्री ।

ओषमित्पृथिवीमहंजंघनानीहवेहवा । कुवि० ॥ दिविमेऽअन्यःपक्षोऽधोऽअन्यमचीकृषं । कुवि० ॥ अहमस्मि महामहोभिनभ्यमुदीषितः । कुवि० ॥ गृहोयाम्यरंकृतोदेवेभ्योहव्यवाहनः । कुवि० ॥ २७ ॥ इत्यष्टमाष्टके षष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

द्विषष्ठ्यध्यायेवर्गाः २७ सूक्तानि १४ ऋचः १४० ॥ त्यागः ॥ अश्विभ्या. ११ दक्षिणाया. ११ सरमाया. पणिभ्य. सरमाया. पणिभ्य. सरमाया. पणिभ्य. सरमाया. पणिभ्य. सरमाया. पणिभ्य. २ विश्वेभ्योदेवेभ्य. ७ समिद्धायाग्नय. तनूनपात. इळाये. बर्हिष. देवीभ्योद्वार्भ्य. उषासानक्ताभ्या. देवीभ्यांहोतृभ्यांप्रचेतोभ्या. सरस्वतीळाभारतीभ्य. त्वष्ट्र. वनस्पतय. स्वाहाकृतीभ्य. इंद्राये. ३० विश्वेभ्योदेवेभ्य. १० [ भे. प. विश्वेभ्योदे. ३ परमात्मनइंद्राये. २ यज्ञायपरमात्मन. २ मध्यमायैवाच. गायत्र्यादिछंदोभ्य. विश्वेभ्योदेवेभ्य. ] अग्नय. ९ इंद्राये. ९ धनान्नाय. ९ रक्षोघ्नेग्नय. ९ ऐंद्रायलबाये. १३ ॥ इत्यष्टमेषष्ठः ॥

तदिन्नवाथर्वणोबृहद्दिवोहिरण्यगर्भोदशहिरण्यगर्भःप्राजापत्यःकायंवसुनाष्टौचित्रमहावासिष्ठआग्नेयंजागतं माद्यांपंचमींचतैयंवेनोवैन्यमिमंनोनवैंद्युत्तमानिहवोग्निवरुणसोमानामाद्याग्नेयींतिस्रश्चाग्नेरात्मस्तवःशिष्टाय थानिपातंसप्तमीजगत्यहमष्टौवागांभृण्यात्मानंतुष्टावद्वितीयाजगतींनतंशैलूषिःकुल्मलबर्हिषोवामदेव्योवांहो मुग्वैश्वदेवमुपरिष्टाद्बार्हतंमंत्यात्रिष्टुप्रात्रीकुशिकःसौभरोरात्रिर्वाभारद्वाजीरात्रिस्तवंगायत्रंममाग्नेनवविह

व्यौवैश्वदेवंजगत्यंतंनासत्सप्तप्रजापतिःपरमेष्ठीभाववृत्तंतुंयोयज्ञोयज्ञःप्राजापत्योंजगत्याद्यापप्राचःसुकीर्तिः
काक्षीवतोमध्येनुष्टुप्सोत्तराचाश्विन्यांवीजानंशकपूतोनार्मेधोमैत्रावरुणंन्यंकुसारिण्यांद्यालिंगोक्तदेवतांत्या
महासतोबृहत्युपाद्योपांत्येप्रस्तारपंक्तींशेषाविराड्रूपाःप्रोषुसुदाःपैजवनःशाक्करमहापांक्तांवाद्यौतृचौत्रिष्टुबंतंमु
भेयन्मांधातायौवनाश्वोमहापांक्तंपंक्तिरंत्यांतामध्यर्धांगोधापश्यद्यस्मिन्कुमारोयामायनोयाममानुष्टुभंहिंके
शीमुनयोवातरशनांजूतिर्वातजूतिर्विप्रजूतिर्वृषाणकःकरिक्रतएतशऋश्यश्रृंगश्चैकर्चाःकेशिनमुतदेवाःसप्तऋ
षयएकर्चावैश्वदेवंतवत्येषळंगऽऔरवोजागतंसूर्यरश्मिर्देवगंधर्वोविश्वावसुरात्मानमस्तौत्पूर्वांर्धंसवितारमग्ने
तवाग्निःपावकआग्नेयंविष्टारपंक्तीतिस्रःसतोबृहत्यउपरिष्टाज्ज्योतिरग्नेअच्छाग्निस्तापसोवैश्वदेवमानुष्टुभंह्यम
ष्टौद्वृचाःशार्ङ्गाजरिताद्रोणःसारिसृक्कःस्तंबमित्रश्चाग्नेयमाद्येजगत्यौचतस्रस्त्रिष्टुभः ॥ ७ ॥ ॥ ॥

हरिःओम् ( १०।१०।८ ) तदिदासभुवनेषुज्येष्ठंयतोजज्ञऽउग्रस्त्वेषनृम्णः । सद्योजज्ञानोनिरिणातिशत्रूननुयं
विश्वेमदंत्यूमाः ॥ वावृधानःशवसाभूर्योजाःशत्रुर्दासायभियसंदधाति । अव्यनच्चव्यनच्चसस्निसंतेनवंतप्रभृतामदे
षु ॥ त्वेक्रतुमपिवृंजंतिविश्वेद्विर्यदेतेत्रिर्भवंत्यूमाः । स्वादोःस्वादीयःस्वादुनासृजासमदःसुमधुमधुनाभियोधीः ॥

---

( १०।१०।८ ) तदिदितिनवर्चस्यसूक्तस्याथर्वणोबृहद्दिवइंद्रस्त्रिष्टुप् ।

इतिं चि॒द्धि त्वा॒ धना॒ जयं॑तं॒ मदे॑मदे ऽअनु॒मदं॑ति॒ विप्राः॑ । ओजी॑यो धृष्णो स्थि॒रमा त॑नुष्व॒ मा त्वा॑ दभन्यातु॒धाना॑ दु॒रेवाः॑ ॥ त्वया॑ व॒यं शा॑शद्महे॒ रणे॑षु प्र॒पश्यं॑तो यु॒धेन्या॑नि॒ भूरि॑ । चो॒दया॑मि त॒ ऽआयु॑धा॒ वचो॑भिः॒ सं ते॑ शिशामि॒ ब्रह्म॑णा॒ वयां॑सि ॥ १ ॥ स्तु॒षेय्यं॑ पुरु॒वर्प॑सं॒ ऋ॒भ्वमि॒नत॑ममा॒प्त्यमा॒प्त्याना॑म् । आ द॑र्षते॒ शव॑सा स॒प्त दानू॒न्प्र सा॑क्षते प्रति॒माना॑नि॒ भूरि॑ ॥ नि तद्द॑धि॒षेव॑रं॒ परं॑ च॒ यस्मि॒न्नावि॒थाव॑सा दु॒रोणे॑ । आ मा॒तरा॑ स्थापयसे जिग॒त्नू ऽअत॑ ऽइनोषि॒ कर्व॑रा पु॒रूणि॑ ॥ इ॒मा ब्रह्म॑ बृ॒हद्दि॑वो ऽविव॒क्तीं द्रा॑य शू॒षम॑ग्रि॒यः स्व॒र्षाः । म॒हो गो॒त्रस्य॑ क्षयति स्व॒राजो॒ दुर॑श्च॒ विश्वा॑ ऽअवृ॒णोदप॒ स्वाः+ ॥ ए॒वा म॒हान्बृ॒हद्दि॑वो॒ ऽअथ॒र्वावो॑च॒त्स्वां त॒न्वं१ मिं॒द्रमे॒व । स्वसा॑रो मात॒रिभ्व॑रीररि॒प्रा हि॒न्वंति॑ च॒ शव॑सा व॒र्धयं॑ति च ॥ २ ॥ ( १०।१०।९ ) हि॒र॒ण्य॒ग॒र्भः सम॑वर्त॒ताग्रे॑ भू॒तस्यं॑ जा॒तः पति॒रेकं॑ ऽआसीत् । स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ य ऽआ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्वं॑ ऽउ॒पास॑ते प्र॒शिषं॒ यस्यं॑ दे॒वाः । यस्यं॑ छा॒याऽमृतं॒ यस्यं॑ मृ॒त्युः कस्मै॑० ॥ यः प्रा॑ण॒तो नि॑मिष॒तो म॑हि॒त्वैक॒ ऽइद्राजा॒ जग॑तो ब॒भूव॑ । य ऽईशें॑ ऽअ॒स्य द्वि॒पद॒श्चतु॑ष्पद॒ः कस्मै॑० ॥ यस्ये॒मे हि॒मवं॑तो महि॒त्वा यस्यं॑ समु॒द्रं र॒सया॑ स॒हाहुः । यस्ये॒माः प्र॒दिशो॒ यस्यं॑ बा॒हू कस्मै॑० ॥ येन॒ द्यौरु॒ग्रा पृ॑थि॒वी च॑ दृ॒ह्ला येन॒ स्वः॑ स्तभि॒तं येन॒ नाकः॑ । यो ऽअं॒तरि॑क्षे॒ रज॑सो वि॒मान॒ः कस्मै॑० ॥ ३ ॥ यं क्रंद॑सी॒ ऽअव॑सा तस्तभा॒ने ऽअ॒भ्यैक्षे॑तां॒ मन॑सा॒ रेज॑माने । यत्राधि॒ सूर॒ ऽउदि॑तो वि॒भाति॒ कस्मै॑० ॥ आपो॑ ह॒ यद्बृ॒

( १०।१०।९ ) हिरण्यगर्भ इति दशर्चस्य सूक्तस्य प्राजापत्यो हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् ।

ऋक्सं. अ.८ अ.७ ॥ ४५ ॥ — मंडलं १० अनु. १०

हतीर्विश्वमायन्गर्भंदधानाजनयंतीरग्निं । ततोदेवानांसमवर्ततासुरेकःकस्मै० ॥ यश्चिदापोमहिनापर्यपश्यद्दक्षंदधा
नाजनयंतीर्यज्ञं । योदेवेष्वधिदेवऽएकऽआसीत्कस्मै० ॥ मानोहिंसीज्जनितायःपृथिव्यायोवादिवंसत्यधर्माजजान ।
यश्चापश्चंद्राबृहतीर्जजानकस्मै० ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोऽअ
स्तुवयंस्यामपतयोरयीणां+ ॥ ४ ॥ ( १०।१०।१० ) वसुंनचित्रमहसंगृणीषेवामंशेवमतिथिमद्विषेण्यं । सरासते
शुरुधोविश्वधायसोग्निर्होतागृहपतिःसुवीर्यं ॥ जुषाणोऽअग्नेप्रतिहर्यमेवचोविश्वानिविद्वान्वयुनानिसुक्रतो । घृतनि
र्णिग्ब्रह्मणेगातुमेरयतवदेवाऽअजनयन्ननुव्रतम्+ ॥ सप्तधामानिपरियन्नमर्त्योदाशद्दाशुषेसुकृतेमामहस्व । सुवीरेण
रयिणाग्नेस्वाभुवायस्तऽआनट्समिधातंजुषस्व ॥ यज्ञस्यकेतुंप्रथमंपुरोहितंहविष्मंतऽईळतेसप्तवाजिनं । शृण्वंतमग्निं
घृतपृष्ठमुक्षणंपृणंतंदेवंपृणतेसुवीर्यं ॥ त्वंदूतःप्रथमोवरेण्यःसहूयमानोऽअमृतायमत्स्व । त्वांमर्जयन्मरुतोदाशुषोगृ
हेत्वांस्तोमेभिर्भृगवोविरुरुचुः ॥ ५ ॥ इषंदुहन्सुदुघांविश्वधायसंयज्ञप्रियेयजमानायसुक्रतो । अग्नेघृतस्नुस्त्रिर्ऋता
निदीद्यद्वर्तिर्यज्ञंपरियन्त्सुक्रतूयसे ॥ त्वामिदस्याऽउषसोव्युष्टिषुदूतंकृण्वानाऽअयजंतमानुषाः । त्वांदेवामहया
य्यायवावृधुराज्यमग्नेनिमृजंतोऽअध्वरे+ ॥ नित्वावसिष्ठाऽअह्वंतवाजिनंगृणंतोऽअग्नेविदथेषुवेधसः । रायस्पोषंय

( १०।१०।१० ) वसुमित्यष्टर्चस्यसूक्तस्यवासिष्ठश्चित्रमहाअग्निर्जगतीआद्यापंचम्यौत्रिष्टुभौ ।



॥ ४५ ॥

जंमानेषुधारययूयं० ॥ ६ ॥ ( १०।१०।११ ) अयंवेनश्चोदयत्पृश्निगर्भाज्योतिर्जरायूरजसोविमाने । इममपांसंगमेसूर्यस्यशिशुन्नविप्रामतिभीरिहंति ॥ समुद्रादूर्मिमुदियर्तिवेनोनभोजाःपृष्ठंहर्यतस्यदर्शि । ऋतस्यसानावधिविष्टपिभ्राट्समानंयोनिमभ्यनूषतव्राः ॥ समानंपूर्वीरभिवावशानास्तिष्ठन्वत्सस्यमातरःसनीळाः । ऋतस्यसानावधिचक्रमाणारिहंतिमध्वोऽअमृतस्यवाणीः ॥ जानंतोरूपमकृपंतविप्रामृगस्यघोषंमहिषस्यहिग्मन् । ऋतेनयंतोऽअधिसिंधुमस्थुर्विदद्गंधर्वोऽअमृतानिनाम ॥ अप्सराजारमुपसिष्मियाणायोषाबिभर्तिपरमेव्योमन् । चरत्प्रियस्ययोनिषुप्रियःसन्सीदत्पक्षेहिरण्ययेसवेनः ॥ ७ ॥ नाकेसुपर्णमुपयत्पतंतंहृदावेनंतोऽअभ्यचक्षतत्वा । हिरण्यपक्षंवरुणस्यदूतंयमस्ययोनौशकुनंभुरण्युं ॥ ऊर्ध्वोगंधर्वोऽअधिनाकेऽअस्थात्प्रत्यङ्चित्राबिभ्रदस्यायुधानि । वसानोऽअत्कंसुरभिंदृशेकंस्व१र्णनामजनतप्रियाणि ॥ द्रप्सःसमुद्रमभियज्जिगातिपश्यन्गृध्रस्यचक्षसाविधर्मन् । भानुःशुक्रेणशोचिषाचकानस्तृतीयेचक्रेरजसिप्रियाणि ॥ ८ ॥ ( १०।१०।१२ ) इमंनोऽअग्नऽउपयज्ञमेहिपंचयामंत्रिवृतंसप्ततंतुं । असोहव्यवाळुतनःपुरोगाज्योगेवदीर्घंतमऽआशयिष्ठाः ॥ अदेवाद्देवःप्रचतागुहायन्प्रपश्यमानोऽअमृतत्वमेमि । शि

---

(१०।१०।११) अयमित्यष्टर्चस्यसूक्तस्यभार्गवोवेनोवेनस्त्रिष्टुप् । (१०।१०।१२) इमंनइतिनवर्चस्यसूक्तस्याद्यायाःपंचम्यादिचतसृणांचाग्निवरुणसोमाऋषयःद्वितीयादितिसृणामग्निर्ऋषिःआद्यानांचतसृणामग्निःपंचमीसप्तम्यष्टमीनांवरुणःषष्ठ्याःसोमोनवम्याःसोमेंद्रौत्रिष्टुप्-

ऋक्सं. अ. ८ अ. ७ ॥ ४६ ॥

वंयत्संतमग्निवोजहामिस्वात्सख्यादरणींनाभिमेमि ॥ पश्यन्नन्यस्याऽअतिथिंवयायाऽऋतस्यधामविमिमेपुरूणि । शंसामिपित्रेऽअसुरायशेवमयज्ञियाद्यज्ञियंभागमेमि ॥ बह्वीःसमाऽअकरमंतरस्मिन्निंद्रंवृणानःपितरंजहामि । अग्निःसोमोवरुणस्तेच्यवंतेपर्यावर्द्राष्ट्रंतदवाम्यायन्+ ॥ निर्मायाऽउत्येऽअसुराऽअभूवन्त्वंचमावरुणकामयासे । ऋतेनराजन्ननृतंविविंचन्ममराष्ट्रस्याधिपत्यमेहि ॥ ९ ॥ इदंस्वरिदमिदासवाममयंप्रकाशऽउर्वं१तरिक्षं । हनाववृत्रंनिरेहि सोमहविष्ट्वासंतंहविषायजाम ॥ कविःकवित्वादिविरूपमासजदप्रभूतीवरुणोनिरपःसृजत् । क्षेमंकृण्वानाजनयोनसिंधवस्ताऽअस्यवर्णंशुचयोभरिभ्रति ॥ ताऽअस्यज्येष्ठमिंद्रियंसचंतेताऽईमाक्षेतिस्वधयामदंतीः । ताऽईंविशोनराजानंवृणानाबीभत्सुवोऽअपवृत्रादतिष्ठन् ॥ बीभत्सूनांसयुजंहंसमाहुरपांदिव्यानांसख्येचरंतं । अनुष्टुभमनुचर्चूर्यमाणमिंद्रंनिचिक्युःकवयोमनीषा+ ॥ १० ॥ ( १०।१०।१२ ) अहंरुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः । अहंमित्रावरुणोभाविभर्म्यहमिंद्राग्नीऽअहमश्विनोभा+ ॥ अहंसोममाहनसंविभर्म्यहंत्वष्टारमुतपूषणंभगं । अहंदधामिद्रविणंहविष्मतेसुप्राव्ये३ यजमानायसुन्वते+ ॥ अहंराष्ट्रीसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानां । तांमादेवाव्यदधुःपुरुत्राभूरिस्थात्रांभूर्यावेशयंतीं ॥ मयासोऽअन्नमत्तियोविपश्यतियःप्राणितियऽईंशृणोत्युक्तं । अमंतवोमां

मंडलं १० अनु. १० ॥ ४६ ॥

सप्तमीजगती । ( १०।१०।१३ ) अहंरुद्रेभिरित्यष्टर्चस्यसूक्तस्याम्भृणिर्वागाम्भृणिर्वाकृत्रिष्टुप्द्वितीयाजगती ।

तऽउपक्षियंतिश्रुधिश्रुतश्रद्धिवंतेवदामि ॥ अहमेवस्वयमिदंवदामिजुष्टंदेवेभिरुतमानुषेभिः । यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधां ॥ ११ ॥ अहंरुद्रायधनुरातनोमिब्रह्मद्विषेशरवेहंतवाऽउ । अहंजनायसमदंकृणोम्यहंद्यावापृथिवीऽआविवेश ॥ अहंसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वंतःसमुद्रे । ततोवितिष्ठेभुवनानुविश्वोतामूंद्यांवर्ष्मणोपस्पृशामि ॥ अहमेववातऽइवप्रवाम्यारभमाणाभुवनानिविश्वा । परोदिवापरऽएनापृथिव्यैतावतीमहिनासंबभूव ॥ १२ ॥ ( १०।१०।१४ ) नतमंहोनदुरितंदेवासोऽअष्टमर्त्यं । सजोषसोयमर्यमामित्रोनयंतिवरुणोऽअतिद्विषः ॥ तद्धिवयंवृणीमहेवरुणमित्रार्यमन् । येनानिरंहसोयूयंपाथनेथाचमर्त्यमतिद्विषः ॥ तेनूनंनोयमूतयेवरुणोमित्रोऽअर्यमा । नयिष्ठाऽउनोनेषणिपर्षिष्ठाऽउनःपर्षण्यतिद्विषः ॥ यूयंविश्वंपरिपाथवरुणोमित्रोऽअर्यमा । युष्माकंशर्मणिप्रियेस्यामसुप्रणीतयोतिद्विषः ॥ आदित्यासोऽअतिस्रिधोवरुणोमित्रोऽअर्यमा । उग्रंमरुद्भीरुद्रंहुवेमेंद्रमग्निंस्वस्तयेतिद्विषः ॥ नेतारऽऊषुणस्तिरोवरुणोमित्रोऽअर्यमा । अतिविश्वानिदुरिताराजानश्चर्षणीनामतिद्विषः ॥ शुनमस्मभ्यमूतयेवरुणोमित्रोऽअर्यमा । शर्मयच्छंतुसप्रथऽआदित्यासोयदीमहेऽअतिद्विषः ॥ यथाहत्यद्वसवोगौर्यंचित्प

(१०।१०।१४) नतमित्यष्टर्चस्यसूक्तस्यशैलूषिःकुल्मलबर्हिषोविश्वेदेवाउपरिष्टाद्बृहत्यंत्यात्रिष्टुप् । (अत्रवामदेव्योंहोमुक्पाक्षिककऋषिः । कुल्मलबर्हिषइत्यदंतंप्रातिपदिकं ) ।

ऋक्सं. अ. ८ अ. ७ ॥ ४७ ॥

मंडलं १० अनु. १०

दिषितामम॑ुंचतायजत्राः । एवोष्व१स्मन्मुंचताव्यंहः प्रतार्यग्नेप्रतरन्नऽआयुः ॥ १३ ॥ ( १०।१०।१५ ) रात्रीव्य
ख्यदायतीपुरुत्रादेव्य१क्षभिः । विश्वाऽअधिश्रियोधित ॥ ओर्वप्राऽअमर्त्यानिवतोदेव्यु१द्वतः । ज्योतिषाबाधते
तमः ॥ निरुस्वसारमस्कृतोषसंदेव्यायती । अपेदुहासतेतमः ॥ सानोऽअद्ययस्यावयंनितेयामन्नविक्ष्महि । वृक्षेनव
सतिंवयः ॥ निग्रामासोऽअविक्षतनिपद्वंतोनिपक्षिणः । निश्येनासश्चिदर्थिनः ॥ यावयावृक्यं१वृकंयवयस्तेनमूर्म्ये ।
अथानःसुतराभव ॥ उपमापेपिशत्तमःकृष्णंव्यक्तमस्थित । उषऽऋणेवयातय ॥ उपतेगाऽइवाकरंवृणीष्वदुहितर्दिवः ।
रात्रिस्तोमंनजिग्युषे ॥१४॥ (परिशिष्टं ॥ आरात्रिपार्थिवंरजःपितरंप्रायुधामभिः । दिवःसदांसिबृहतीवितिष्ठसऽआ
त्वेषंवर्ततेतमः ॥ येतेरात्रीनृचक्षसोयुक्तासोनवतिर्नव । अशीतिःसंत्वष्टाऽउतोतेसप्तसप्ततीः ॥ रात्रींप्रपद्येजननींसर्वभू
तनिवेशनीं । भद्रांभगवतींकृष्णांविश्वस्यजगतोनिशां ॥ संवेशिनींसंयमिनींग्रहनक्षत्रमालिनीं । प्रपन्नोहंशिवांरात्रीं
भद्रेपारमशीमहिभद्रेपारमशीमह्योंनमः ॥ १ ॥ स्तोष्यामिप्रयतोदेवींशरण्यांबहवृचप्रियां । सहस्रसंमितांदुर्गांजातवेद
सेसुनवामसोमं ॥ शांत्यर्थंतद्विजातीनामृषिभिःसोमपाश्रिताः । ऋग्वेदेत्वंसमुत्पन्नारातीयतोनिदहातिवेदः ॥ येत्वां
देविप्रपद्यंतिब्राह्मणाहव्यवाहनीं । अविद्याबहुविद्यावासनःपर्षदतिदुर्गाणिविश्वा ॥ येऽअग्निवर्णांशुभांसौम्यकीर्त

॥ ४७ ॥

( १०।१०।१५ ) रात्रीत्यष्टर्चस्यसूक्तस्यसोभरःकुशिकोरात्रिर्गायत्री । ( अत्रभारद्वाजीरात्रिऋषिकापाक्षिकी ) ।

यिष्यंतियेद्विजाः । तान्तारयतिदुर्गाणिनावेवसिंधुंदुरितात्यग्निः ॥ २ ॥ दुर्गेषुविषमेघोरेसंग्रामेरिपुसंकटे । अग्निचो रनिपातेषुदुष्टग्रहनिवारणे ॥ दुर्गेषुविषमेषुत्वंसंग्रामेषुवनेषुच । मोहयित्वाप्रपद्यंतेतेषांमेऽभयंकुरुतेषांमेऽभयंकुरु ॥ केशिनींसर्वभूतानांपंचमीतिचनामच । सामांसमानिशादेवींसर्वतःपरिरक्षतुसर्वतःपरिरक्षत्वोन्नमः ॥ ३ ॥ तामग्निवर्णां तपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टां । दुर्गांदेवींशरणमहंप्रपद्येसुतरसितरसेनमःसुतरसितरसेनमः ॥ दुर्गांदुर्गेषुस्थाने षुशंनोदेवीरभिष्टये । यइमंदुर्गास्तवंपुण्यंरात्रौरात्रौसदापठेत् ॥ रात्रिःकुशिकसोभरोरात्रिर्वाभारद्वाजीरात्रिस्तवोगा यत्री । रात्रीसूक्तंजपेन्नित्यंतत्कालमुपपद्यते ॥ उलूकयातुंशुशुलूकयातुंजहिश्वयातुमुतकोकयातुं । सुपर्णयातुमृतगृ ध्रयातुंदृषदेवप्रमृणरक्षऽइंद्र ॥ पिशंगभृष्टिमंभृणंपिशाचिमिंद्रसंमृण । सर्वरक्षोनिर्वर्हय ॥ ४ ॥ हिमस्यत्वाजरायु णाशालेपरिव्ययामसि । उतहृदोहिनोधियोग्निर्ददातुभेषजं ॥ शिशीतहृदोहिनोधियोग्निर्ददातुभेषजं । अंतिकाम न्निमुजनयदूवीतःशिशुलागमत् ॥ अजातपुत्रपक्षायाहृदयंममदूयते । विपुलंवनंबह्वाकाशंचरंजातवेदःकामाय ॥ मांचरक्षपुत्रांश्चशरणमभूत्तवं । पिंगाक्षलोहितग्रीवकृष्णवर्णनमोस्तुते ॥ अस्मान्निबर्हरस्येनांसागरस्योर्मयोयथा । इंद्रःक्षत्रंददातुवरुणमभिषिंचतु ॥ शत्रवोनिधनंयांतुजयत्वंब्रह्मतेजसा ॥ ५ ॥ कपिलजटींसर्वभक्षंचाग्निंप्रत्यक्षदै वतं ॥ वरुणंचवशाम्यग्रेममपुत्रांश्चरक्षतुममपुत्रांश्चरक्षत्वोन्नमः ॥ सोग्रैवर्षशतंजीवपिबखादचमोदच ॥ दुःखितांश्चद्विं

ऋक्सं. मंडलं १०
अ. ८ अ. ७ अनु. १०
॥ ४८ ॥

जांश्चैवप्रजांचपशुपालय ॥ यावदादित्यस्तपतियावद्भ्राजतिचंद्रमाः । यावद्वायुःप्लवायतितावज्जीवजयाजय ॥ येनकेनप्रकारेणकोहिनामनुजीवति । परेषामुपकारार्थयज्जीवतिसजीवति । एतांवैश्वानरींसर्वदेवान्नमोस्तुते ॥ नचौरभयंनचसर्पभयंनचव्याघ्रभयंनचमृत्युभयं । यस्यापमृत्युर्नचमृत्युःसर्वलभतेसर्वजयते ॥ ६ ॥ इतिपरिशिष्टं ॥ ) ( १०।१०।१६ ) ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधानास्तन्वंपुषेम । मह्यंनमंतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेम ॥ ममदेवाविहवेसंतुसर्वऽइंद्रवंतोमरुतोविष्णुरग्निः । ममांतरिक्षमुरुलोकमस्तुमह्यंवातःपवतांकामेऽअस्मिन्+ ॥ मयिदेवाद्रविणमायजंतांमय्याशीरस्तुमयिदेवहूतिः । दैव्याहोतारोवनुषंतपूर्वेरिष्टाःस्यामतन्वासुवीराः ॥ मह्यंयजंतुममयानिहव्याकूतिःसत्यामनसोमेऽअस्तु । एनोमानिगांकतमच्चनाहंविश्वेदेवासोऽअधिवोचतानः ॥ देवीःषळुर्वीरुरुनःकृणोतविश्वेदेवासऽइहवीरयध्वं । माहास्महिप्रजयामातनूभिर्मारधामद्विषतेसोमराजन् ॥ १५ ॥ अग्नेमन्युंप्रतिनुदन्परेषामदब्धोगोपाःपरिपाहिनस्त्वं । प्रत्यंचोयंतुनिगुतःपुनस्तेऽमैषांचित्तंप्रबुधांविनेशत् ॥ धाताधातृणांभुवनस्ययस्पतिर्देवंत्रातारमभिमातिषाहं । इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपांतुयजमानंन्यर्थात्+ ॥ उरुव्यचानोमहिषःशर्मयंसदस्मिन्हवेपुरुहूतःपुरुक्षुः । सनःप्रजायैहर्यश्वमृळयेंद्रमानोरीरिषोमापरादाः ॥ येनःसपत्नाऽअपते

---

( १०।१०।१६ ) ममाग्नइतिनवर्चस्यसूक्तस्यांगिरसोविहव्योविश्वेदेवास्त्रिष्टुबंत्याजगती ।

भवंत्विंद्राग्निभ्यामवंबाधामहेतान् । वसवोरुद्राऽआदित्याऽउपरिस्पृशंमोग्रंचेत्तारमधिराजमक्रन् ॥ ( परिशिष्टं ॥
अर्वांचमिंद्रममुतोहवामहेयोगोजिद्धनजिदश्वजिद्यः । इमंनोयज्ञंविहवेजुषस्वास्यकुर्मोहरिवोमेदिनंत्वा ) ॥ १६ ॥
( परिशिष्टं ॥ आयुष्यंवर्चस्यंरायस्पोषमौद्भिदं । इदंहिरण्यंवर्चस्वजैत्रायाविशतादिमाम् ॥ उच्चैर्वाजीपृतनाषाट्सं
भासाहंधनंजयं । सर्वाःसमग्राऽऋद्धयोहिरण्येस्मिन्समाहिताः ॥ शुनमहंहिरण्यस्यपितुर्नामेवजग्रभ । तेनमांसूर्य
त्वचमकरंपूरुषुप्रियं ॥ सम्राजंचविराजंचाभिष्टिर्याचमेध्रुवा । लक्ष्मीराष्ट्रस्ययामुखेतयामामिंद्रसंसृज ॥ अग्नेःप्रजा
तंपरियद्धिरण्यममृतंयज्ञेऽअधिमर्त्येषु । यऽएनद्वेदसइदेनमर्हतिजरामृत्युर्भवतियोबिभर्ति ॥ १ ॥ यद्वेदराजावरु
णोयदुदेवीसरस्वती । इंद्रोयद्वृत्रहावेदतन्मेवर्चसऽआयुषे ॥ नतद्रक्षांसिनपिशाचास्तरंतिदेवानामोजःप्रथमजंह्ये१
तत् । योबिभर्तिदाक्षायणाहिरण्यंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ यदाबध्नन्दाक्षायणाहिरण्यंश
तानीकायसुमनस्यमाना । तन्नऽआबध्नामिशतशारदायायुष्मान्जरदष्टिर्यथासत् ॥ घृतादुल्लुप्तंमधुमत्सुवर्णंधनंजयंध
रुणंधारयिष्णु ॥ ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय ॥ प्रियंमाकुरुदेवेषुप्रियंराजसुमाकुरु । प्रियं
विश्वेषुगोप्त्रेषुमयिधेहिरुचारुचं ॥  अग्निर्येनविराजतिसूर्योयेनविराजति ॥ विराज्येनविराजतितेनास्मान्ब्रह्मणस्पते

विराजसमिधंकुरु ॥ २ ॥ इतिपरिशिष्टं ॥ ) ( १०।११।१ ) नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरो यत् । किमावरीवःकुहकस्यशर्मन्नंभःकिमासीद्गहनंगभीरं ॥ नमृत्युरासीदमृतंनतर्हिनरात्र्याऽअह्नऽआसीत्प्रकेतः । आनीदवातंस्वधयातदेकंतस्माद्धान्यन्नपरःकिंचनास ॥ तमऽआसीत्तमसागूळ्हमग्रेप्रकेतंसलिलंसर्वमाऽइदं । तुच्छ्येनाभ्वपिहितंयदासीत्तपसस्तन्महिनाजायतैकं ॥ कामस्तदग्रेसमवर्तताधिमनसोरेतःप्रथमंयदासीत् । सतोबंधुमसति निरविंदन्हृदिप्रतीष्याकवयोमनीषा ॥ तिरश्चीनोविततोरश्मिरेषामधःस्विदासी३दुपरिस्विदासी३त् । रेतोधाऽ आसन्महिमानऽआसन्स्वधाऽअवस्तात्प्रयतिःपरस्तात् ॥ कोऽअद्धावेदकऽइहप्रवोचत्कुतऽआजाताकुतऽइयंविसृष्टिः । अर्वाग्देवाऽअस्यविसर्जनेनाथाकोवेदयतऽआबभूव ॥ इयंविसृष्टिर्यतऽआबभूवयदिवादधेयदिवान । योऽअस्याध्यक्षःपरमेव्योमन्त्सोऽअंगवेदयदिवानवेद ॥ १७ ॥ ( १०।११।२ ) योयज्ञोविश्वतस्तंतुभिस्ततऽएकशतंदेवकर्मेभिरायतः । इमेवयंतिपितरोयऽआययुःप्रवयापवयेत्यासतेतते ॥ पुमाँऽएनंतनुतऽउत्कृणत्तिपुमान्वितत्नेऽअधि नाकेऽअस्मिन् । इमेमयूखाऽउपसेदुरूसदःसामानिचक्रुस्तसराण्योतवे ॥ कासीत्प्रमाप्रतिमाकिंनिदानमाज्यंकिमासी



---

एकादशेनुवाकेत्रयोविंशतिसूक्तानि (१०।११।१) नासदितिसप्तर्चस्यसूक्तस्यपरमेष्ठीप्रजापतिर्भाववृत्तिस्त्रिष्टुप् । (१०।११।२) योयज्ञ इतिसप्तर्चस्यसूक्तस्यप्राजापत्योयज्ञोभाववृत्तिस्त्रिष्टुबाद्याजगती ।

त्परिधिःकऽआसीत् । छंदःकिमासीत्प्रऽउंगंकिमुक्थंयद्देवादेवमयजंतविश्वे ॥ अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहयासवि
तासंबभूव । अनुष्टुभासोमऽउक्थैर्महस्वान्बृहस्पतेर्बृहतीवाचमावत् ॥ विराण्मित्रावरुणयोरभिश्रीरिंद्रस्यत्रिष्टुबिह
भागोऽअह्नः । विश्वान्देवान्जगत्याविवेशतेनचाक्लृप्रऽऋषयोमनुष्याः ॥ चाक्लृप्रेतेनऽऋषयोमनुष्यायज्ञेजातेपितरो
नःपुराणे । पश्यन्मन्येमनसाचक्षसातान्यऽइमंयज्ञमयजंतपूर्वे ॥ सहस्तोमाःसहछंदसऽआवृतःसहप्रमाऽऋषयःसप्त
दैव्याः । पूर्वेषांपंथामनुदृश्यधीराऽअन्वालेभिरेरथ्यो३नरश्मीन्+ ॥ १८ ॥ ( १०।११।२ ) अपप्राचऽइंद्रविश्वाँ
ऽअमित्रानपापाचोऽअभिभूतेनुदस्व । अपोदीचोऽअपशूराधराचऽउरौयथातववशर्मन्मदेम ॥ कुविदंगयवमंतोयवंचि
द्यथादांत्यनुपूर्वंवियूय । इहेहैषांकृणुहिभोजनानियेबर्हिषोनमोवृक्तिंनजग्मुः+ ॥ नहिस्थूर्यृतुथायातमस्तिनोतश्रवो
विविदेसंगमेषु । गव्यंतऽइंद्रंसख्यायविप्राऽअश्वायंतोवृषणंवाजयंतः ॥ युवंसुराममश्विनानमुचावासुरेसचा । वि
पिपानाशुभस्पतीऽइंद्रंकर्मस्वावतं ॥ पुत्रमिवपितरावश्विनोभेंद्रावथुःकाव्यैर्दंसनाभिः । यत्सुरामंव्यपिबःशचीभिः
सरस्वतीत्वामघवन्नभिष्णक् ॥ इंद्रःसुत्रामास्ववाँऽअवोभिःसुमृळीकोभवतुविश्ववेदाः । बाधतांद्वेषोऽअभयंकृणो
तुसुवीर्यस्यपतयःस्याम ॥ तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम । ससुत्रामास्ववाँऽइन्द्रोऽअस्मेऽआराच्चिद्द्वे

( १०।११।३ ) अपप्राचइतिसप्तर्चस्यसूक्तस्यकाक्षीवतःसुकीर्तिरिंद्रश्चतुर्थीपंचम्योरश्विनौत्रिष्टुप्चतुर्थ्यनुष्टुप् ।

ऋक्सं.

अ. ८ अ. ७

॥ ५० ॥

षः सनुतर्युयोतु ॥ १९ ॥ ( १०।११४ ) ई॒जा॒नमिद्द्यौर्गू॒र्तावसुरी॒जा॒नं भूमि॑र॒भि प्र॑भू॒षणि॑ । ई॒जा॒नं दे॒वाव॒श्वि॒नाव॒भि सु॒म्नैर॑वर्धतां ॥ तावा॑मित्रावरुणा धा॒रय॑त्क्षिती सुषु॒म्नेषि॑त॒त्वता॑यजामसि । युवोः क्राणाय स॒ख्यैर॒भि ष्या॑म र॒क्षसः ॥ अधा॑चि॒न्नु यद्दि॒धि॑षामहे वाम॒भि प्रि॒यं रेक्ण॒ः पत्य॑मानाः । द॒द्वाँ वा॒ यत्पुष्य॑ति॒ रेक्ण॒ः सम्वा॑र॒न्नकि॑रस्य म॒घानि॑ ॥ अ॒सावन्यो ऽअ॑सुर सूयत॒ द्यौस्त्वं विश्वे॑षां वरुणासि॒ राजा॑ । मू॒र्धा रथ॑स्य चाक॒न्नैताव॒तैन॑सांतक॒ध्रुक्‌ ॥ अ॒स्मिन्त्स्वे३॒तच्छ॑कपूत॒ ऽएनो॑ हि॒ते मि॒त्रे निग॑तान्हंति वी॒रान्‌ । अ॒वोर्वा॒ यद्धा॒त्तनूष्ववः प्रि॒यासु॑ य॒ज्ञिया॒स्ववा॑ ॥ यु॒वोर्हि॒ मा॒ता दिति॑र्विचेतसा॒ द्यौर्न भू॒मि॒ः पय॑सा पुपू॒तनि॑ । अव॑ प्रि॒या दि॑दिष्टन॒ सूरो॑ निनिक्त र॒श्मिभि॑ः ॥ यु॒वं ह्य॑प्न॒राजा॒वसी॑दतं॒ तिष्ठ॒द्रथं॒ न धू॒र्षदं॑ वन॒र्षदं॑ । ता नः॑ कणूकयं॒तीर्नृ॒मेध॑स्त॒त्रे ऽअंह॑सः सु॒मेध॑स्त॒त्रे ऽअंह॑सः ॥ २० ॥ ( १०।११५ ) प्रोष्व॑स्मै पुरोर॒थमिंद्रा॑य शू॒षम॑र्चत । अ॒भीके॑ चिदु लोक॒कृत्सं॒गे स॒मत्सु॑ वृत्र॒हास्माकं॑ बोधि चोदि॒ता नभं॑तामन्य॒केषां॑ ज्या॒का ऽअधि॒ धन्व॑सु ॥ त्वं सिंधूँ॒र्वासृ॑जोध॒राचो॒ ऽअह॒न्नहिं॑ । अ॒श॒त्रुरि॑द्र जज्ञिषे॒ विश्वं॑ पुष्यसि॒ वार्यं॒ तं त्वा॒ परि॑ष्वजामहे॒ नभं॑ता॰ ॥ वि षु विश्वा॒ ऽअरा॑तयो॒ऽर्यो न॑शंत नो॒ धियः॑ । अस्ता॑सि॒ शत्र॑वे व॒धं यो न॑ ऽइंद्र॒ जिघां॑सति॒ या ते॑ रा॒तिर्द॒दिर्वसु॒ नभं॑ता॰ ॥ यो न॑ ऽइंद्र॒भितो॒ जनो॑ वृ॒का

मंडलं १०

अनु॰ ११

॥ ५० ॥

---

( १०।११४ ) ईजानमिति सप्तर्चस्य सूक्तस्य नार्मेधः शकपूतो मित्रावरुणावाद्यायास्तु भूम्यश्विनो विराड्रूपाः आद्यान्यंकुसारिणी द्वितीयाषष्ठ्यौ प्रस्तारपंक्ती अंत्या महासतोबृहती । ( १०।११५ ) प्रोष्विति सप्तर्चस्य सूक्तस्य सुदाः पैजवन इंद्रः शक्वरी चतुर्थ्यादि तिस्रो महापंक्त्यर्योत्या त्रिष्टुप्‌ ।

युरादिदेशति । अधस्पदंतमींकृधिविबाधोऽअसिसासहिर्नभंता० ॥ योनऽइंद्राभिदासतिसनाभिर्यश्चनिष्ट्यः । अव तस्यबलंतिरमहीवद्यौरधत्मनानभंता० ॥ वयमिंद्रत्वायवःसखित्वमारभामहे । ऋतस्यनःपथानयातिविश्वानिदुरितानभंता० ॥ अस्मभ्यंसुत्वमिंद्रतांशिक्षयादोहतेप्रतिवरंजरित्रे । अच्छिद्रोध्नीपीपयद्यथानःसहस्रधारापयसामहीगौः+ ॥ २१ ॥ ( १०।१११६ ) उभेयदिंद्ररोदसीऽआपप्राथोषाऽइव । महांतंत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ अवस्मदुर्हणायतोमर्तस्यतनुहिस्थिरं । अधस्पदंतमींकृधियोऽअस्माँऽआदिदेशतिदेवी० ॥ अवत्याबृहतीरिषोविश्वश्चंद्राऽअमित्रहन् । शचीभिःशक्रधूनुहींद्रविश्वाभिरूतिभिर्देवी० ॥ अवयत्त्वंशतक्रतविंद्रविश्वानिधूनुषे । रयिंनसुन्वतेसचासहस्रिणीभिरूतिभिर्देवी० ॥ अवस्वेदाऽइवाभितोविष्वक्पतंतुदिद्यवः । दूर्वायाऽइवतंतवोव्य१स्मदेतुदुर्मतिर्देवी० ॥ दीर्घंह्यंकुशंयथाशक्तिंबिभर्षिमंतुमः । पूर्वेणमघवन्पदाजोवयांयथायमोदेवी० ॥ नर्किर्देवामिनीमसिनकिरायोपयामसिमंत्रश्रुत्यंचरामसि । पक्षेभिरपिकक्षेभिरत्राभिसंरभामहे ॥ २२ ॥ (१०।१११७) यस्मिन्वृक्षेसुपलाशेदेवैःसंपिबतेयमः । अत्रानोविश्पतिःपितापुराणाँऽअनुवेनति ॥ पुराणाँऽअनुवेनंतंचरंतंपापया

---

(१०।१११६) उभेयदितिसप्तर्चस्यसूक्तस्ययौवनाश्वोमांधातेंद्रःअंत्यानांतिसृणामर्धर्चागोधेंद्रोमहापंक्तिरंत्यापंक्तिः । (१०।१११७) यस्मिन्नितिसप्तर्चस्यसूक्तस्ययामायनःकुमारोयमोनुष्टुप् ।

मुया । असूयन्नभ्यचाकशंतस्मांऽअस्पृहयंपुनः ॥ यंकुमारनवंरथमचक्रंमनसाकृणोः । एकेषंविश्वतःप्रांचमपश्यन्नधितिष्ठसि ॥ यंकुमारप्रावर्तयोरथंविप्रेभ्यस्परि । तंसामानुप्रावर्ततसमितोनाव्याहितं ॥ कःकुमारमजनयद्रथंकोनिरवर्तयत् । कःस्वित्तदद्यनोब्रूयादनुदेयीयथाभवत् ॥ यथाभवदनुदेयीततोऽअग्रमजायत । पुरस्ताद्बुध्नऽआततःपश्चान्निरयणंकृतं+ ॥ इदंयमस्यसादनंदेवमानंयदुच्यते । इयमस्यधम्यतेनाळीरयंगीर्भिःपरिष्कृतः ॥ २३ ॥

( १०।११।८ ) केश्यग्निंकेशीविषंकेशीबिभर्तिरोदसी । केशीविश्वंस्वर्दृशेकेशीदंज्योतिरुच्यते ॥ मुनयोवातरशनाःपिशंगावसतेमला । वातस्यानुध्राजिंयंतियद्देवासोऽअविक्षत ॥ उन्मदितामौनेयेनवातांऽआतस्थिमावयं । शरीरेदस्माकंयूयंमर्तासोऽअभिपश्यथ ॥ अंतरिक्षेणपततिविश्वारूपावचाकशत् । मुनिर्देवस्यदेवस्यसौकृत्यायसखाहितः+ ॥ वातस्याश्वोवायोःसखाथोदेवेषितोमुनिः । उभौसमुद्रावाक्षेतियश्चपूर्वऽउतापरः ॥ अप्सरसांगंधर्वाणांमृगाणांचरणेचरन् । केशीकेतस्यविद्वान्सखास्वादुर्मदिन्तमः ॥ वायुरस्माऽउपामंथत्पिनष्टिस्माकुनन्नमा । केशीविषस्य

---

( १०।११।८ ) केशीतिसप्तर्चस्यसूक्तस्यवातरशनाजूतिर्वातजूतिर्विप्रजूतिर्वृषाणकःकरिक्रतएतशऋष्यश्रृंगइतिक्रमेणैकर्चाऋषयः केश्यग्निसूर्यवायवोदेवताअनुष्टुप् ।

पात्रैणयद्रुद्रेणापिबत्सह+ ॥ २४ ॥ ( १०।११।९ ) उतदेवाऽअवहितंदेवाऽउन्नयथापुनः । उतागश्चक्रुषंदेवादेवा
जीवयथापुनः ॥ द्वाविमौवातौवातऽआसिंधोरापरावतः । दक्षंतेऽअन्यऽआवातुपरान्यावातुयद्रपः ॥ आवातवा
हिभेषजंविवातवाहियद्रपः । त्वंहिविश्वभेषजोदेवानांदूतऽईयसे ॥ आत्वागमंशंतातिभिरथोऽअरिष्टतातिभिः ।
दक्षंतेभद्रमाभार्षंपरायक्ष्मंसुवामिते ॥ त्रायंतामिहदेवास्त्रायंतांमरुतांगणः । त्रायंतांविश्वाभूतानियथायमरपाऽअ
सत् ॥ आपऽइद्वाऽउभेषजीरापोऽअमीवचातनीः ॥ आपःसर्वस्यभेषजीस्तास्तेकृण्वन्तुभेषजं+ ॥ हस्ताभ्यांदशशाखा
भ्यांजिह्वावाचःपुरोगवी । अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ २५ ॥ ( १०।११।१० ) तवत्यऽइंद्रसख्ये
षुवह्नयऽऋतंमन्वानाव्यदर्दिरुर्वलं । यत्रादशस्यन्नुषसोरिणन्नपःकुत्सायमन्मन्नह्यश्चदंसयः ॥ अवासृजःप्रस्वःश्वंच
योगिरीनुदाजऽउस्राऽअपिबोमधुप्रियं । अवर्धयोवनिनोऽअस्यदंससाशुशोचसूर्यऽऋतजातयागिरा+ ॥ विसूर्योम
ध्येऽअमुचद्रथंदिवोविदद्दासायप्रतिमानमार्यः । दृह्लानिपिप्रोरसुरस्यमायिनऽइंद्रोव्यास्यच्चकृवाँऽऋजिश्वना ॥ अ
नाधृष्टानिधृषितोव्यास्यन्निधीँऽरदेवाँऽअमृणदयास्यः । मासेवसूर्योवसुपुर्यमाददेगृणानःशत्रूँऽरशृणाद्विरुक्मता ॥

---

(१०।११।९) उतेतिसप्तर्चस्यसूक्तस्यभरद्वाजःकश्यपोगौतमोत्रिर्विश्वामित्रोजमदग्निर्वसिष्ठइतिक्रमेणैकर्चाऋषयोविश्वेदेवाअनुष्टुप् । ( भेदपक्षे—देवाः १ वातः ३ विश्वेदेवाः १ आपः २ एवं ७ )। (१०।११।१०) तवत्यइतिषडृचस्यसूक्तस्यौरवोंगइंद्रोजगती ।

अयुद्धसेनोविभ्वाविभिंदताद्शद्वत्रहातुज्यानितेजते । इंद्रस्यवज्रादबिभेदभिश्नथःप्राक्रामच्छुंध्यूरजंहादुषाऽअनः ॥ एतात्यातेश्रुत्यानिकेवलायदेकऽएकमकृणोरयज्ञं । मासांविधानमदधाऽअधिद्यवित्वयाविभिन्नंभरतिप्रधिंपिता+ ॥ ॥ २६ ॥ ( १०।११।११ ) सूर्यरश्मिर्हरिकेशःपुरस्तात्सविताज्योतिरुदयाँऽअजस्रं । तस्यपूषाप्रसवेयातिविद्वान्संपश्यन्विश्वाभुवनानिगोपाः+ ॥ नृचक्षाऽएषदिवोमध्यऽआस्तऽआपप्रिवान्रोदसीऽअंतरिक्षं । सविश्वाचीरभिचष्टेघृताचीरंतरापूर्वमपरंचकेतुं+ ॥ रायोबुध्नःसंगमनोवसूनांविश्वारूपाभिचष्टेशचीभिः । देवऽइवसवितासत्यधर्मेंद्रोनतस्थौसमरेधनानां ॥ विश्वावसुंसोमगंधर्वमापोददृशुषीस्तदृतेनाव्यायन् । तदन्ववैदिंद्रोरारहाणऽआसांपरिसूर्यस्यपरिधीँऽरपश्यत् ॥ विश्वावसुरभितन्नोऽगृणातुदिव्योगंधर्वोरजसोविमानः । यद्वाघासत्यमुतयन्नविद्मधियोहिन्वानोधियऽइन्नोऽअव्याः ॥ सस्निमविंदच्चरणेनदीनामपावृणोद्दुरोऽअश्मव्रजानां । प्रासांगंधर्वोऽअमृतानिवोचदिंद्रोदक्षंपरिजानादहीनां ॥ २७ ॥ ( १०।११।१२ ) अग्नेतवश्रवोवयोमहिभ्राजंतेऽअर्चयोविभावसो । बृहद्भानोशवसावाजमुक्थ्यं१दधासिदाशुषेकवे ॥ पावकवर्चाःशुक्रवर्चाऽअनूनवर्चाऽउदियर्षिभानुना । पुत्रोमातराविचरन्नुपावसि



( १०।११।११ ) सूर्यरश्मिरितिषडृचस्यसूक्तस्यदेवगंधर्वोविश्वावसुःसवितांत्यतिसृणांदेवगंधर्वोविश्वावसुस्त्रिष्टुप् । ( १०।११।१२ ) अग्नेतवेतिषडृचस्यसूक्तस्यपावकोग्निरग्निःसतोबृहतीआद्येविष्टारपंक्तीअंत्योपरिष्टाज्ज्योतिः ।

पृणक्षिरोदसीऽउभे ॥ ऊर्जोनपाज्जातवेदःसुशस्तिभिर्मंदस्वधीतिभिर्हितः । त्वेऽइषःसंदधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ इरज्यन्नग्नेप्रथयस्वजंतुभिरस्मेरायोऽअमर्त्य । सदर्शतस्यवपुषोविराजसिपृणक्षिसानसिंक्रतुं ॥ इष्कर्तारमध्वरस्यप्रचेतसंक्षयंतंराधसोमहः । रातिंवामस्यसुभगांमहीमिषंदधासिसानसिंरयिं ॥ ऋतावानंमहिषंविश्वदर्शतमग्निंसुम्नायदधिरेपुरोजनाः । श्रुत्कर्णसप्रथस्तमंत्वागिरादैव्यंमानुषायुगा ॥ २८ ॥ ( १०।११।१३ ) अग्नेऽअच्छावदेहनःप्रत्यङ्नःसुमनाभव । प्रनोयच्छविशस्पतेधनदाऽअसिनस्त्वं ॥ प्रनोयच्छत्वर्यमाप्रभगःप्रबृहस्पतिः । प्रदेवाःप्रोतसूनृतारायोदेवीददातुनः ॥ सोमंराजानमवसेग्निंगीर्भिर्हवामहे । आदित्यान्विष्णुंसूर्यंब्रह्माणंचबृहस्पतिं ॥ इंद्रवायूबृहस्पतिंसुहवेहहवामहे । यथानःसर्वऽइज्जनःसंगत्यांसुमनाऽअसत् ॥ अर्यमणंबृहस्पतिमिंद्रंदानायचोदय । वातंविष्णुंसरस्वतींसवितारंचवाजिनं ॥ त्वंनोऽअग्नेऽअग्निभिर्ब्रह्मयज्ञंचवर्धय । त्वंनोदेवतातयेरायोदानायचोदय ॥ २९ ॥ ( १०।११।१४ ) अयमग्नेजरितात्वेऽअभूदपिसहसःसूनोनह्यन्यदस्त्याप्यं । भद्रंहिशर्मत्रिवरूथमस्तितऽआरेहिंसानामपदिद्युमाकृधि ॥ प्रवत्तेऽअग्नेजनिमापितूयतःसाचीवविश्वाभुवनान्यृंजसे । प्रस

---

( १०।११।१३ ) अग्नेअच्छेतिषडृचस्यसूक्तस्यतापसोग्निर्विश्वेदेवाअनुष्टुप् । ( १०।११।१४ ) अयमग्नइत्यष्टर्चस्यसूक्तस्यप्रथमयोःशार्ङ्गोजरितातृतीयाचतुर्थ्योःशार्ङ्गोद्रोणःपंचमीषष्ठ्योःशार्ङ्गःसारिसृक्वःसप्तम्यष्टम्योःशार्ङ्गस्तम्बमित्रोग्निस्त्रिष्टुपआद्येजगत्यावंत्येअनुष्टुभौ ।

प्रयः प्रसनिषंतनोधियंःपुरश्चरंतिपशुपाऽइवत्मना ॥ उतवाऽउपरिवृणक्षिवप्सद्बहोरग्नऽउलपस्यस्वधावः । उतखिल्याऽउर्वराणांभवंतिमातेहेतिंताविषींचुक्रुधाम ॥ यदुद्वतोनिवतोयासिवप्सत्पृथगेषिप्रगर्धिनीवसेना । यदातेवातोऽअनुवातिशोचिर्वप्तेवश्मश्रुवपसिप्रभूम ॥ प्रत्यस्यश्रेणयोददृश्रऽएकंनियानंबहवोरथासः । बाहूयदग्नेऽअनुमर्मृजानोन्यङ्ङुत्तानामन्वेषिभूमिं ॥ उत्तेशुष्माजिहतामुत्तेऽअर्चिरुत्तेऽअग्नेशशमानस्यवाजाः । उच्छ्वंचस्वनिनंमवर्धमानऽआत्वाद्यविश्वेवसवःसदंतु ॥ अपामिदंन्ययनंसमुद्रस्यनिवेशनं । अन्यंकृणुष्वेतःपंथांतेनयाहिवशाँऽअनु ॥ आयनेतेपरायणेदूर्वारोहंतुपुष्पिणीः । ह्रदाश्चपुंडरीकाणिसमुद्रस्यगृहाऽइमे ॥ ३० ॥ इत्यष्टमाष्टकेसप्तमोऽध्यायः ॥ ७ ॥

त्रिषष्ठ्यध्यायेवर्गाः ३० सूक्तानि २३ ऋचः १७२ ॥ त्यागः ॥ इंद्राये.९ प्रजापतय.१० अग्नय.८ वेनाये.८ अग्नय.४ वरुणाये. सोमाये. वरुणाये.२ सोमेंद्राभ्या. आंभृण्यैवाच.८ विश्वेभ्योदेवेभ्य.८ रात्र्या.८ विश्वेभ्योदेवेभ्य.९ [ भे. प. विश्वेभ्योदे. अग्नय. विश्वेभ्योदेवेभ्य.४ अग्नय. विश्वेभ्योदेवेभ्य. इंद्राये. विश्वेभ्योदेवेभ्य. ] भाववृत्तय.१४ इंद्राये.३ अश्विभ्यामि.२ इंद्राये.२ द्युभूम्यश्विभ्य. मित्रावरुणाभ्या.६ इंद्राये.११ गोधेंद्राये.३ यमाये.७ केश्यग्निसूर्यवायुभ्य.७ विश्वेभ्योदेवेभ्य.७ [ भे. प. देवेभ्य. वाताये.३ विश्वेभ्योदेवेभ्य.१ अग्न्य.२ ] इंद्राये.६ सवित्रइ.३ देवगंधर्वाय. विश्वावसव.३ अग्नय.७ विश्वेभ्योदेवेभ्य.५ अग्नय.८ ॥ इत्यष्टमेसप्तमः ॥

त्यंषट्‌सांख्योत्रिराश्विनंमयंहिताक्ष्यर्पुत्रःसुपर्णोयामायनोवोर्ध्वकृशनोगायत्रीबृहतीगायत्र्यौसतोबृहतीविष्टा
रपङ्क्तिरिमामिंद्राण्युपनिषत्सपत्नीबाधनंमानुष्टुभंतुपङ्क्त्यंतंमरण्यान्यैरंमदोदेवमुनिररण्यानींतुष्टावंश्रद्धेपंच
सुवेदाःशैरीषिस्त्रिष्टुबंतंसुष्वाणासःपृथुर्वैन्यःसवितार्चंतोहैरण्यस्तूपःसावित्रंसमिद्धोमृळीकोवासिष्ठंऽआग्नेयं
वार्हतंमंत्येऽउपरिष्टाज्ज्योतिषींजगत्युपांत्यावांश्रद्धयाश्रद्धाकामायनींश्राद्धमानुष्टुभंतुंशासःशासोभारद्वाजंई
खयंतींदेवजामयंइंद्रमातरोगायत्रंसोमोयमीभाववृत्तमानुष्टुभंत्वंरायिशिरिंबिठोभारद्वाजोऽलक्ष्मीघ्नंद्वितीयातृ
तीयाब्राह्मणस्पत्यैअंत्यावैश्वदेव्याग्निंकेतुराग्नेयंआग्नेयंगायत्रमिमानुकंभुवनऽआप्त्यःसाधनोवाभौवनोवैश्वदेवंद्वै
पदंत्रैष्टुभंसूर्योनश्चक्षुःसौर्यःसौर्यंगायत्रमुदसौषट्पौलोमींशच्यात्मानंतुष्टावानुष्टुभंतीव्रस्यपंचपूरणोवैश्वामित्रो
मुंचामित्वाप्राजापत्योयक्ष्मनाशनोराजयक्ष्मघ्नंमंत्यानुष्टुब्ब्रह्मणाषट्‌ब्राह्मोरक्षोहागर्भसंस्रावेप्रायश्चित्तमानुष्टुभं
ह्यक्षीभ्यांविवृहाकाश्यपोयक्ष्मघ्नमपेहिपंचप्रचेतादुःस्वप्नघ्नंपत्त्यंतंत्रिष्टुम्मध्यंदेवानैर्ऋतःकपोतःकपोतोपहतौ
प्रायश्चित्तंवैश्वदेवंमृषभमृषभोवैराजःशाक्वरोवासपत्नघ्नंमानुष्टुभंमहापंक्त्यंतंतुभ्येदंचतुष्कंविश्वामित्रजमदग्नी
जागतंतृतीयालिंगोक्तदेवतावातस्यानिलोवातायनोवायव्यंमयोभूःशंबरःकाक्षीवतोगव्यंविभ्राड्विभ्राट्सौ
र्यःसौर्यंजागतंमास्तारपंक्त्यंतंत्वंत्यमिटोभार्गवोगायत्रंमायाहिसंवर्तउषस्यंद्वैपदमात्वाषट्ध्रुवोराज्ञःस्तुतिस्त्वा

नुष्टुभंत्वंभीवर्तेनपंचाभीवर्तःप्रवश्चतुष्कंमूर्ध्वोग्रावासर्पोर्बुदिर्ग्राव्णोस्तौद्धायत्रंप्रसूनवःसूनुरार्भवंआग्नेयमानु
ष्टुभंद्वितीयागायत्र्याद्यार्भवींपतंगंतृचंपतंगःप्राजापत्योमायाभेदंजगत्यादित्यमूष्वरिष्टनेमिस्तार्क्ष्यंमुत्तिष्ठतैक
र्चाःशिविरौशीनरःकाशिराजःप्रतर्दनोरोहिदश्वोवसुमनाआद्यानुष्टुप्प्रससाहिषेजयेंद्रःप्रथश्चैकर्चाःप्रथोवासि
ष्ठःसप्रथोभारद्वाजोघर्मःसौर्योवैश्वदेवंबृहस्पतिस्तपुर्मूर्धावार्हस्पत्योवार्हस्पत्यमपश्यंप्रजावान्प्राजापत्योन्वृचं
यजमानपत्नीहोत्राशिषोविष्णुस्त्वष्टागर्भकर्ताविष्णुर्वाप्राजापत्योगर्भार्थाशीर्लिंगोक्तदैवतमानुष्टुभंमहिसत्यधृ
तिर्वारुणिरादित्यंस्वस्त्ययनंगायत्रंवैवातोवातायनउलोवायव्यंप्राग्नयेपंचाग्नेयोवत्सआग्नेयंतुंप्रनूनंतृचमाग्नेयः
श्येनोजातवेदस्यंमायंगौःसार्पराज्ञ्यात्मदैवतंसौर्यंवंऽऋतंचमाधुच्छंदसोऽघमर्षणोभाववृत्तमानुष्टुभंतुंसंसंचतु
ष्कंसंवननःसंज्ञानमाद्याग्नेयीतृतीयात्रिष्टुप्तृतीयात्रिष्टुप् ॥ ८ ॥ तदेतत्सूक्तसहस्रंससप्तदशकंसपादाधिकमृ
ग्वेदेपारायणपाठेशाकल्येशैशिरीयकेनमःशौनकायनमःशौनकाय ॥ १ ॥ ॥ ॥

हरिः ओम् ॥ ( १०।११।१५ ) त्यंचि॒द॒त्रिमृ॑त॒जुर॒मर्थ॒मश्वं॒नयात॑वे । क॒क्षीव॑न्तं॒यदी॒पुना॒रथं॒नकृ॒णुथो॒नवं॑ ॥ त्यं
चि॒दश्वं॒नवा॒जिन॑मरे॒णवो॒यमत्न॑त । दृ॒ह्लं ग्र॒न्थिं॑ न विष्य॑त॒मत्रिं॒यवि॑ष्ठ॒मारजः॑ ॥ नरा॒दंसि॑ष्ठा॒वत्र॑ये॒शुभ्रा॒सिषा॑सतं॒धियः॑ । 

( १०।११।१५ ) त्यंचिदितिषड्टचस्यसूक्तस्यसांख्योत्रिरश्विनावनुष्टुप् ।

अथाहिवांदिवोनरापुनस्तोमोनविशसे ॥ चितेतद्वांसुराधसारातिःसुमतिरश्विना । आयन्नःसदनेपृथौसमनेपर्षथोन रा ॥ युवंभुज्युंसमुद्रऽआरजसःपारऽईखितं । यातमच्छापतत्रिभिर्नासत्यासातयेकृतं ॥ आवांसुम्नैःशंयूऽइवमंहि ष्ठाविश्ववेदसा । समस्मेभूषतंनरोत्संनपिप्युषीरिषः ॥ १ ॥ ( १०।११।१६ ) अयंहितेऽअमर्त्यऽइंदुरत्योनपत्यते । दक्षोविश्वायुर्वेधसे ॥ अयमस्मासुकाव्यऽऋभुर्वज्रोदास्वते । अयंबिभर्त्यूर्ध्वकृशनंमदमृभुर्नकृत्व्यंमदं ॥ घृषुःश्येना यकृत्वनऽआसुस्वासुवंसगः । अवदीधेदहीशुवः ॥ यंसुपर्णःपरावतःश्येनस्यपुत्रऽआभरत् । शतचक्रंयोऽह्योवर्त निः+ ॥ यंतेश्येनश्चारुमवृकंपदाभरदरुणंमानमंधसः । एनावयोवितार्यायुर्जीवसऽएनाजागारबंधुता ॥ एवातदिं द्रऽइंदुनादेवेषुचिद्धारयातेमहित्यजः । क्रत्वावयोवितार्यायुःसुक्रतोक्रत्वायमस्मदासुतः+ ॥ २ ॥ ( १०।११।१७ ) इमांखनाम्योषधिंवीरुधंबलवत्तमां । ययासपत्नींबाधतेययासंविंदतेपतिं ॥ उत्तानपर्णेसुभगेदेवजूतेसहस्वति । सप त्नींमेपराधमपतिंमेकेवलंकुरु ॥ उत्तराहमुत्तरऽउत्तरेदुत्तराभ्यः । अथासपत्नीयाममाधरासाधराभ्यः ॥ नह्यस्याना मगृभ्णामिनोऽअस्मिन्रमतेजनै । परामेवपरावतंसपत्नींगमयामसि ॥ अहमस्मिसहमानाथत्वमसिसासहिः । उभेस

---

( १०।११।१६ ) अयंहीतिषड़ृचस्यसूक्तस्यताक्ष्र्यपुत्रःसुपर्णइंद्रोगायत्रीद्वितीयाबृहतीपंचमीसतोबृहतीषष्ठीविष्टारपंक्तिः ( यामायन ऊर्ध्वकृशनोवात्रऋषिः ) । ( १०।११।१७ ) इमामितिषड़ृचस्यसूक्तस्येंद्राणीसपत्नीनाशनमनुष्टुबंत्यापंक्तिः ।

ऋक्सं. अ. ८ अ. ८ ॥ ५५ ॥

मंडलं १० अनु. ११

हस्वतीभूत्वीसपत्नींमेसहावहै ॥ उपतेधांसहमानामभित्वांधांसहीयसा । मामनुप्रतेमनोवत्संगौरिवधावतुपथावारिवधावतु ॥ ३ ॥ (१०।११।१८) अरण्यान्यरण्यान्यसौयाप्रेवनश्यसि । कथाग्रामंनपृच्छसिनत्वाभीरिवविंदतीँ ॥ वृषारवायवदतेयदुपावतिचिच्चिकः । आघाटिभिरिवधावयन्नरण्यानिर्महीयते ॥ उतगावइवादंत्युतवेश्मेवदृश्यते । उतोअरण्यानिःसायंशकटीरिवसर्जति ॥ गामंगैषआह्वयतिदार्वंगैषोअपावधीत् । वसन्नरण्यान्यांसायमक्रुक्षदितिमन्यते ॥ नवाअरण्यानिर्हंत्यन्यश्चेन्नाभिगच्छति । स्वादोःफलस्यजग्ध्वायथाकामंनिपद्यते ॥ आंजनगंधिंसुरभिंबह्वन्नामकृषीवलां । प्राहंमृगाणांमातरमरण्यानिमशंसिषं ॥ ४ ॥ (१०।११।१९) श्रत्तेदधामिप्रथमायमन्यवेहन्यद्दस्युंनर्यंविवेरपः । उभेयत्वाभवतोरोदसीअनुरेजतेशुष्मात्पृथिवीचिदद्रिवः ॥ त्वंमायाभिरनवद्यमायिनंश्रवस्यतामनसावृत्रमर्दयः । त्वामिन्नरोवृणतेगविष्टिषुत्वांविश्वासुहव्यास्विष्टिषु ॥ ऐषुचाकंधिपुरुहूतसूरिषुवृधासोयेमघवन्नानशुर्मघं । अर्चंतितोकेतनयेपरिष्टिषुमेधसाताव्वाजिनमह्रयेधने ॥ सइन्नुरायःसुभृतस्यचाकनन्मदंयोअस्यरंह्यंचिकेतति । त्वावृधोमघवन्दाश्वध्वरोमक्षूसवाजंभरतेधनानृभिः ॥ त्वंशर्धायमहिनागृणानउरु

॥ ५५ ॥

---

(१०।११।१८) अरण्यानीतिषडृचस्यसूक्तस्यैरंमदोदेवमुनिररण्यान्यनुष्टुप् । (१०।११।१९) श्रत्तइतिपंचर्चस्यसूक्तस्यशैरीषिःसुवेदाइंद्रोजगत्यंत्यात्रिष्टुप् ।

कृधिमघवन्छुग्धिरायः । त्वंनोमित्रोवरुणोनमायीपित्वोनदस्मदयसेविभक्ता+ ॥ ५ ॥ ( १०।११।२० ) सुष्वाणा
सऽइंद्रस्तुमसित्वासस्वांसश्चतुविनृम्णवाजं । आनोभरसुवितंयस्यचाकन्त्मनातनासनुयामत्वोताः ॥ ऋष्वस्त्व
मिंद्रशूरजातोदासीर्विशःसूर्येणसह्याः । गुहाहितंगुह्यंगूळ्हमप्सुबिभृमसिप्रस्रवणेनसोमं ॥ अर्योवागिरोऽअभ्यर्चवि
द्वानृषीणांविप्रःसुमतिंचकानः । तेस्यामयेरणयंतसोमैरेनोततुभ्यंरथोळ्हभक्षैः+ ॥ इमाब्रह्मेंद्रतुभ्यंशंसिदानृभ्योनृणां
शूरशवः । तेभिर्भवसक्रतुर्येषुचाकन्नुतत्रायस्वगृणतऽउतस्तीन्+ ॥ श्रुधीहवमिंद्रशूरपृथ्याऽउतस्तवसेवेन्यस्यार्कैः ।
आयस्तेयोनिंघृतवंतमस्वारूर्मिर्ननिम्नैर्द्रवयंतवक्राः ॥ ६ ॥ ( १०।११।२१ ) सवितायंत्रैःपृथिवीमरम्णादस्कंभने
सविताद्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमंतरिक्षमतूर्तेबद्धंसवितासमुद्रं+ ॥ यत्रासमुद्रःस्कभितोव्यौनदपांनपात्स
वितातस्यवेद । अतोभूरतऽआऽउत्थितंरजोतोद्यावापृथिवीऽअप्रथेतां ॥ पश्चेदमन्यदभवद्यजत्रममर्त्यस्यभुवनस्य
भूना । सुपर्णोऽअंगसवितुर्गरुत्मान्पूर्वोजातःसऽउऽअस्यानुधर्म ॥ गावऽइवग्रामंयूयुधिरिवाश्वान्वाश्रेववत्संसुमना
दुहाना । पतिरिवजायामभिनोन्येतुधर्तादिवःसविताविश्ववारः ॥ हिरण्यस्तूपःसवितर्यथात्वांगिरसोजुह्वेवाजेऽ

---

( १०।११।२० ) सुष्वाणासइतिपंचर्चस्यसूक्तस्यवैन्यःपृथुरिंद्रस्त्रिष्टुप् । ( १०।११।२१ ) सवितेतिपंचर्चस्यसूक्तस्यहैरण्यस्तूपो
र्चन्सवितात्रिष्टुप् ।

ऋक्सं.
अ. ८ अ. ८
॥ ५६ ॥

मंडलं १०
अनु. ११

अस्मिन् । एवात्वार्चन्नवसेवंदमानःसोमस्येवांशुंप्रतिजागराहं ॥ ७ ॥ ( १०।११।२२ ) समिद्धश्चित्समिध्यसेदे
वेभ्योहव्यवाहन । आदित्यैरुद्रैर्वसुभिर्नऽआगहिमृळीकायनऽआगहि ॥ • इमंयज्ञमिदंवचोजुजुषाणऽउपागहि । म
र्तासस्त्वासमिधानहवामहेमृळीकायहवामहे ॥ त्वामुजातवेदसंविश्ववारंगृणेधिया । अग्नेदेवाँऽआवहनःप्रियव्रता
न्मृळीकायप्रियव्रतान् ॥ अग्निर्देवोदेवानामभवत्पुरोहितोग्निंमनुष्या३ऋषयःसमीधिरे । अग्निंमहोधनसातावहंहुवे
मृळीकंधनसातये ॥ अग्निरत्रिंभरद्वाजंगविष्ठिरंप्रावन्नःकण्वंत्रसदस्युमाहवे । अग्निंवसिष्ठोहवतेपुरोहितोमृळीकाय
पुरोहितः ॥ ८ ॥ ( १०।११।२३ ) श्रद्धयाग्निःसमिध्यतेश्रद्धयाहूयतेहविः । श्रद्धांभगस्यमूर्धनिवचसावेदयामसि ॥
प्रियंश्रद्धेददतःप्रियंश्रद्धेदिदासतः । प्रियंभोजेषुयज्वस्विदंमऽउदितंकृधि ॥ यथादेवाऽअसुरेषुश्रद्धामुग्रेषुचक्रिरे ।
एवंभोजेषुयज्वस्वस्माकमुदितंकृधि ॥ श्रद्धांदेवायजमानावायुगोपाऽउपासते । श्रद्धांहृदय्य१याकूत्याश्रद्धयाविंद
तेवसु ॥ श्रद्धांप्रातर्हवामहेश्रद्धांमध्यंदिनंपरि । श्रद्धांसूर्यस्यनिम्रुचिश्रद्धेश्रद्धापयेहनः ॥ ९ ॥ ( परिशिष्टं ॥ मे
धामह्यमंगिरसोमेधांसप्तऽऋषयोददुः । मेधामिंद्रश्चाग्निश्चमेधांधाताददातुते ॥ मेधांतेवरुणोराजामेधांदेवीसरस्व

॥ ५६ ॥

( १०।११।२२ ) समिद्धइतिपंचर्चस्यसूक्तस्यवासिष्ठोमृळीकोग्निर्बृहतीअंत्येद्वेउपरिष्टाज्ज्योतिषी (उपांत्याजगतीवा) (१०।११।२३) श्रद्धयेतिपंचर्चस्यसूक्तस्यश्रद्धाकामायनीश्रद्धानुष्टुप् ।

ती । मेधांतेऽअश्विनौदेवावाधत्तांपुष्करस्रजा ॥ यामेधाऽअप्सरस्सुगंधर्वेषुचयन्मनः । दैवीयामानुषीमेधासामामा विशतादिमां ॥ यन्मेनोक्तंतद्रंवतांशकेयंयदनुब्रुवे । निशामतंनिशामहैमयिव्रतंसहव्रतेषुभूयासंब्रह्मणासंगमेमहि ॥ शरीरंमेविचक्षणंवाङ्मेमधुमद्दुहां । अवृद्धमहमसौसूर्योब्रह्मणानीस्थःश्रुतंमेमाप्रहासीः ॥ मेधांदेवींमनसारेजमानांगं धर्वजुष्टांप्रतिनोजुषस्व । मह्यंमेधांवदमह्यंश्रियंवदमेधावीभूयासमजराजरिष्णु+ ॥ सदसस्पतिमद्भुतंप्रियमिंद्रस्य काम्यं । सनिंमेधामयासिषं ॥ यांमेधांदेवगणाःपितरश्चोपासते । तयामामेधयामेमेधाविनंकुरु ॥ मेधाव्य१हंसुमनाः सुप्रतीकःश्रद्धामना:सत्यमतिःसुशेवः । महायशाधारयिष्णुःप्रवक्ताभूयासमस्मैशरयाप्रयोगे ॥ १ ॥ इतिपरिशिष्टं॥) ( १०।१२।१ ) शासऽइत्थामहांऽअस्यमित्रखादोऽअद्भुतः । नयस्यहन्यतेसखानजीयतेकदाचन+ ॥ स्वस्तिदावि शस्पतिर्वृत्रहाविमृधोवशी । वृषेंद्रःपुरऽएतुनःसोमपाऽअभयंकरः+ ॥ विरक्षोविमृधोजहिविवृत्रस्यहनूरुज । विम न्युमिंद्रवृत्रहन्नमित्रस्याभिदासतः ॥ विनऽइंद्रमृधोजहिनीचायच्छपृतन्यतः । योऽअस्मांऽअभिदासत्यधरंगमया तमः ॥ अपेंद्रद्विषतोमनोपजिज्यासतोवधं । विमन्योःशर्मयच्छवरीयोयवयावधं+ ॥ १० ॥ ( १०।१२।२ ) ईंखयं

---

द्वादशेनुवाकेचत्वारिंशत्सूक्तानि ( १०।१२।१ ) शासइतिपंचर्चस्यसूक्तस्यभारद्वाजःशासइंद्रोनुष्टुप् । ( १०।१२।२ ) ईंखयंतीरिति पंचर्चस्यसूक्तस्यदेवजामयइंद्रमातरइंद्रोगायत्री ।

तीरपस्युवऽइंद्रंजातमुपासते । भेजानासःसुवीर्यं ॥ त्वमिंद्रबलादधिसहसोजातऽओजसः । त्वंवृषन्वृषेदसि ॥ त्वमिंद्रासिवृत्रहाव्यं१तरिक्षमतिरः । उद्द्यामस्तभ्नाऽओजसा ॥ त्वमिंद्रसजोषसमर्कंबिभर्षिबाह्वोः । वज्रंशिशानऽओजसा ॥ त्वमिंद्राभिभूरसिविश्वाजातान्योजसा । सविश्वाभुवऽआभवः ॥ ११ ॥ ( १०।१२।३ ) सोमऽएकेभ्यःपवतेघृतमेकऽउपासते । येभ्योमधुप्रधावतितांश्चिदेवापिगच्छतात् ॥ तपसायेऽअनाधृष्यास्तपसायेस्वर्ययुः । तपोयेचक्रिरेमहस्तांश्चि० ॥ येयुध्यंतेप्रधनेषुशूरासोयेतनूत्यजः । येवासहस्रदक्षिणास्तांश्चि० ॥ येचित्पूर्वऽऋतसापऽऋतावानऽऋतावृधः । पितॄन्तपस्वतोयमतांश्चि० ॥ सहस्रणीथाःकवयोयेगोपायंतिसूर्यं । ऋषीन्तपस्वतोयमतपोजाँऽअपिगच्छतात् ॥ १२ ॥ ( १०।१२।४ ) अरायिकाणेविकटेगिरिंगच्छसदान्वे । शिरिंबिठस्यसत्वभिस्तेभिष्ट्वाचातयामसि ॥ चत्तोऽइतश्चत्तामुतःसर्वाभ्रूणान्यारुषी । अराय्यंब्रह्मणस्पतेतीक्ष्णशृंगोदृषन्निहि ॥ अदोयद्दारुप्लवतेसिंधोःपारेऽअपूरुषं । तदारभस्वदुर्हणोतेनगच्छपरस्तरं+ ॥ यद्धप्राचीरजगंतोरोमंडूरधाणिकीः । हताऽइंद्रस्यशत्रवःसर्वेबुद्बुदयाशवः ॥ परीमेगामनेषतपर्यग्निमहृषत । देवेष्वक्रतश्रवःकऽइमाँऽआदधर्षति ॥ १३ ॥ (१०।१२।५)अग्निंहि



---

(१०।१२।३) सोमइतिपंचर्चस्यसूक्तस्यवैवस्वतीयमीभाववृत्तिरनुष्टुप्। (१०।१२।४) अरायीतिपंचर्चस्यसूक्तस्यभारद्वाजःशिरिंबिठोऽलक्ष्मीनाशनोद्वितीयातृतीययोर्ब्रह्मणस्पतिरंत्यायाविश्वेदेवाअनुष्टुप्। (१०।१२।५) अग्निमितिपंचर्चस्यसूक्तस्याग्नेयःकेतुरग्निर्गायत्री ।

न्वंतु॒नोधिय॒ःसप्तिमा॒शुमि॑वाजिषु॑ । तेन॑जेष्म॒धनं॑धनं ॥ य॒यागाऽआकरा॑महे॒सेन॑याग्ने॒तवो॒त्या । तांनो॑हिन्व म॒घत्त॑ये ॥ आग्ने॑स्थूरंर॒यिंभ॑रपृ॒थुंगोम॑तम॒श्विन॑ं । अ॒ङ्धिखंव॒र्तया॑प॒णिं+ ॥ अग्ने॒नक्ष॑त्रम॒जर॒मासूर्यं॑रोहयोदि॒वि । द॒धज्ज्योति॒र्जने॑भ्यः ॥ अग्ने॑के॒तुर्वि॒शाम॑सि॒प्रेष्ठ॒ःश्रेष्ठ॑ऽउपस्थ॒सत् । बोधा॑स्तो॒त्रेवयो॒दध॑त् ॥ १४ ॥ ( १०।१२।६ ) इ॒मानु॒कंभुव॑नासीषधा॒मेन्द्र॑श्च॒विश्वे॑चदे॒वाः+ ॥ य॒ज्ञंच॑नस्त॒न्वं॑चप्र॒जांचा॑दि॒त्यैरिन्द्र॑ःस॒हची॑क्लृपाति ॥ आ॒दि॒त्यैरिन्द्र॒ःसग॑णोम॒रुद्भि॑र॒स्माकं॑भूत्ववि॒तात॒नूनाम् ॥ ह॒त्वाय॑दे॒वाऽअसु॑रा॒न्यदाय॑न्दे॒वादे॑व॒त्वम॑भि॒रक्ष॑माणाः ॥ प्र॒त्यंच॑म॒र्कम॑नय॒ञ्छची॑भि॒रादित्स्व॒धामि॑षि॒रांपर्य॑पश्यन् ॥ १५ ॥ ( १०।१२।७ ) सूर्यो॑नोदि॒वस्पा॑तु॒वातो॑ऽअ॒न्तरि॑क्षात् । अ॒ग्निर्न॒ःपार्थि॑वेभ्यः ॥ जोषा॑सवित॒र्यस्य॑ते॒हर॑ःश॒तंस॒वाँ॑ऽअर्ह॑ति । पा॒हिनो॑दि॒द्युत॒ःपत॑न्त्याः ॥ चक्षु॑र्नोदे॒वःस॑वि॒ताचक्षु॑र्न॑ऽउ॒तपर्व॑तः । चक्षु॑र्धा॒तादधातुनः ॥ चक्षु॑र्नोधेहि॒चक्षु॑षे॒चक्षु॑र्वि॒ख्यैत॒नूभ्य॑ः । संचे॒दंवि॒चप॑श्येम ॥ सु॒सं॒दृशं॑त्वाव॒यंप्रति॑पश्येम सूर्य । विप॑श्येमनृ॒चक्ष॑सः ॥ १६ ॥ ( १०।१२।८ ) उद॒सौसूर्यो॑ऽअगा॒दुद॒यंमा॑म॒कोभग॑ः । अ॒हंतद्वि॑द्व॒लाप॑तिम॒भ्य॑साक्षिविषास॒हिः+ ॥ अ॒हंके॒तुर॒हंमू॒र्धाहमु॒ग्राववि॒वाच॑नी । ममे॒दनु॒क्रतुं॒पति॑ःसेहा॒नाया॑ऽउ॒पाच॑रेत् ॥ मम॑पु॒त्राःश॑त्रु

---

(१०।१२।६) इमान्वितिपंचर्चस्यसूक्तस्याद्योभुवनोविश्वेदेवाद्विपदात्रिष्टुप् । ( अत्रभौवनःसाधनोवैकल्पिकः )(१०।१२।७) सूर्योन इतिपंचर्चस्यसूक्तस्यसौर्यश्चक्षुर्मानवःसूर्योगायत्री । ( १०।१२।८ ) उदसावितिषडृचस्यसूक्तस्यपौलोमीशचीशच्यनुष्टुप् ।

हणोथौमेदुहिताविराट् । उताहमस्मिसंजयापत्यौमेश्लोकऽउत्तमः ॥ येनेंद्रौहविषाकृत्व्यभवद्द्युम्न्युत्तमः । इदंतद क्रिदेवाऽअसपत्नाकिलाभुवं ॥ असपत्नासंपत्नघ्नीजयंत्यभिभूवरी । आवृक्षमन्यासांवर्चोराधोऽअस्थेयसामिव ॥ समजैषमिमाऽअहंसपत्नीरभिभूवरी । यथाहमस्यवीरस्यविराजानिजनस्यच ॥ १७ ॥ ( १०।१२।९ ) तीव्रस्याभिवं यसोऽअस्यपाहिसर्वरथाविहरीऽइहमुंच । इंद्रमात्वायजमानासोऽअन्येनिरीरमन्तुभ्यमिमेसुतासः ॥ तुभ्यंसुतास्तु भ्यमुसोत्वासस्त्वांगिरःश्वात्र्याऽआह्वयंति । इंद्रेदमद्यसवनंजुषाणोविश्वस्यविद्वाँऽइहपाहिसोमं ॥ यऽउंशतामनसा सोमंमस्मैसर्वहृदादेवकामःसुनोति । नगाऽइंद्रस्तस्यपरादादातिप्रशस्तमिच्चारुमस्मैकृणोति ॥ अनुस्पष्टोभवत्येषोऽअ स्ययोऽअस्मैरेवान्नसुनोतिसोमं । निररत्नौमघवातंदधातिब्रह्मद्विषोहंत्यनानुदिष्टः ॥ अश्वायंतोगव्यंतोवाजयंतोहवा महेत्वोपगंतवाऽउं । आभूषंतस्तेसुमतौनवायांवयमिंद्रत्वाशुनंहुवेम ॥ १८ ॥ ( १०।१२।१० ) मुंचामित्वाहविषा

---

( १०।१२।९ ) तीव्रस्येतिपंचर्चस्यसूक्तस्यवैश्वामित्रःपूरणइंद्रस्त्रिष्टुप् । ( १०।१२।१० ) मुंचामित्वेतिपंचर्चस्यसूक्तस्यप्राजापत्योयक्ष्म नाशनइंद्राग्नीत्रिष्टुबंत्यानुष्टुप् (मुंचामीतिसूक्तेराजयक्ष्मघ्नमित्युक्तेराजयक्ष्मनाशनोदेवतेतिकेचित् अन्येप्रजापतिमाहुः इंद्राग्नीइतितुयास्कः इत्थंमतवैविध्येपि 'पळाहुतिश्चरुर्मुंचामित्वाहविषाजीवनायकमित्येतेनेति' गृह्यसूत्रानुसारिवृत्तिकृत्कारिकाकारादिभिरस्यसूक्तस्यैंद्राग्नि- देवतात्वनिर्देशात्तएवस्माभिरुक्ते ) ।

जीवंनायकमंज्ञातयक्ष्मादुतरांजयक्ष्मात् । ग्राहिर्जग्राहयदिवैतदैनंतस्याऽइंद्राग्नीप्रमुमुक्तमेनं ॥ यदिक्षितायुर्यदि वापरेतोयदिमृत्योरंतिकंनीतऽएव । तमाहरामिनिर्ऋतेरुपस्थादस्पार्षमेनंशतशारदाय ॥ सहस्राक्षेणशतशारदेनश तायुंषाहविषाहार्षमेनं । शतंयथेमंशरदोनयातींद्रोविश्वस्यदुरितस्यपारं+ ॥ शतंजीवशरदोवर्धमानःशतंहेमंतान्छ तमुंवसंतान् । शतमिंद्राग्नीसंविताबृहस्पतिःशतायुंषाहविषेमंपुनर्दुः ॥ आहार्षत्वाविदंत्वापुनरागाःपुनर्नव । सर्वा गसर्वंतेचक्षुःसर्वमायुंश्चतेविदं ॥ १९ ॥ ( १०।१२।११ ) ब्रह्मणाग्निःसंविदानोरक्षोहाबाधतामितः । अमीवायस्ते गर्भंदुर्णामायोनिमाशये ॥ यस्तेगर्भममीवादुर्णामायोनिमाशये । अग्निष्टंब्रह्मणासहनिष्क्रव्यादमनीनशत् ॥ यस्तेहं तिपतयंतंनिषत्स्नुंयःसरीसृपं । जातंयस्तेजिघांसतितमितोनाशयामसि ॥ यस्तऽऊरूविहरत्यंतरादंपतीशये । योनिं योऽअंतरारेह्लितमितोनाशयामसि ॥ यस्त्वाभ्रातापतिर्भूत्वाजारोभूत्वानिपद्यते । प्रजांयस्तेजिघांसतितमितोनाश

---

( १०।१२।११ ) ब्रह्मणाग्निरितिषड्चस्यसूक्तस्यब्राह्मोरक्षोहाप्रजापतिरनुष्टुप् । ( अत्रसूक्तेऽनुक्रमण्यवष्टंभेनदेवतानिर्णयोनभवति। यतस्तत्रगर्भस्रावेप्रायश्चित्तिरित्युक्तंतेनसूक्तस्यप्रभावमात्रंद्योत्यतेनतुदेवता । अतोत्रप्रजापतिर्देवताग्राह्या । तथाच शौनकः 'मंत्रेपुह्यनिरु क्तेषुदेवतांकर्मतोवदेत् । मंत्रतःकर्मणाचैवप्रजापतिरसंभवे' इति । भाष्यकारैरपिप्रजापतिरेवोक्तः । बृहद्देवतायांतुराक्षोघ्नाग्नेयमित्युक्तं तत्रयुक्तायुक्तंसद्भिर्विचारणीयम् ) ।

यामसि ॥ यस्त्वास्वप्नेनतमसामोहयित्वानिपद्यते । प्रजांयस्तेजिघांसतितमितोनाशयामसि ॥ २० ॥ ( १०।१२।१२ ) अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि । यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते ॥ ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् । यक्ष्मंदोषण्यमंसाभ्यांबाहुभ्यांवि० ॥ आंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि । यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योवि० ॥ ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां । यक्ष्मंश्रोणिभ्यांभासदाद्भंससोवि० ॥ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः । यक्ष्मंसर्वस्मादात्मनस्तमिदंवि० ॥ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि । यक्ष्मंसर्वस्मादात्मनस्तमिदंवि० ॥ २१ ॥ ( १०।१२।१३ ) अपेहिमनसस्पतेपक्रामपरश्चर । परोनिर्ऋत्याआचक्ष्वबहुधाजीवतोमनः ॥ भद्रंवैवरंवृणतेभद्रंयुंजंतिदक्षिणं । भद्रंवैवस्वतेचक्षुर्बहुत्राजीवतोमनः ॥ यदाशसानिःशसाभिशसोपारिमजाग्रतोयत्स्वपंतः । अग्निर्विश्वान्यपदुष्कृतान्यजुष्टान्यारेअस्मद्दधातु ॥ यदिंद्रब्रह्मणस्पतेभिद्रोहंचरामसि । प्रचेतानआंगिरसोद्विषतांपात्वंहसः ॥ अजैष्माद्यासनामचाभूमानागसोवयं । जाग्रत्स्वप्नःसंकल्पःपापोयंद्विष्मस्तंसऋच्छतुयोनोद्वेष्टितमृच्छतु ॥ २२ ॥ ( १०।१२।१४ ) देवाःकपोतइषितोयदिच्छन्दूतो



---

( १०।१२।१२ ) अक्षीभ्यामितिषड्चस्यसूक्तस्यकाश्यपोविवृहायक्ष्महानुष्टुप् । ( १०।१२।१३ ) अपेहीतिपंचर्चस्यसूक्तस्यांगिरसःप्रचेतादुःस्वप्नघ्नोनुष्टुप्तृतीयात्रिष्टुप्अंत्यापंक्तिः । ( १०।१२।१४ ) देवाइतिपंचर्चस्यसूक्तस्यनैर्ऋतःकपोतोविश्वेदेवास्त्रिष्टुप् ।

निर्ऋत्याऽइदमाजगाम । तस्माऽअर्चामकृणवामनिष्कृतिंशंनोऽअस्तुद्विपदेशंचतुष्पदे ॥ शिवःकपोतऽइषितोनोऽअस्त्वनागादेवाःशकुनोगृहेषु । अग्निर्हिविप्रोजुषताहविर्नःपरिहेतिःपक्षिणीनोवृणक्तु ॥ हेतिःपक्षिणीनदभात्यस्मानाष्ट्र्यांपदंकृणुतेऽअग्निधाने । शंनोगोभ्यश्चपुरुषेभ्यश्चास्तुमानोहिंसीदिहदेवाःकपोतः ॥ यदुलूकोवदतिमोघमेतद्यत्कपोतःपदमग्नौकृणोति । यस्यदूतःप्रहितऽएषऽएतत्तस्मैयमायनमोऽअस्तुमृत्यवे ॥ ऋचाकपोतंनुदतप्रणोदमिषंमदंतःपरिगांनयध्वं । संयोपयंतोदुरितानिविश्वाहित्वानऽऊर्जंप्रपतातपतिष्ठः ॥ २३ ॥ ( १०।१२।१५ ) ऋषभंमासमानानांसपत्नानांविषासहिं । हंतारंशत्रूणांकृधिविराजंगोपतिंगवां ॥ अहमस्मिसपत्नहेंद्रऽइवारिष्टोऽअक्षतः । अधःसपत्नामेपदोरिमेसर्वेऽअभिष्ठिताः ॥ अत्रैववोपिनह्याम्युभेऽआर्त्नीऽइवज्यया । वाचस्पतेनिषेधेमान्यथामदधरंवदान् ॥ अभिभूरहमागमंविश्वकर्मेणधाम्ना । आवश्चित्तमावोव्रतमावोहंसमितिंददे ॥ योगक्षेमंवऽआदायाहंभूयासमुत्तमऽआवोमूर्धानमक्रमीं । अधस्पदान्मऽउद्वदतमंडूकाऽइवोदकान्मंडूकाऽउदकादिव ॥२४॥ ( १०।१२।१६ ) तुभ्येदमिंद्रपरिषिच्यतेमधुत्वंसुतस्यकलशस्यराजसि । त्वंरयिंपुरुवीरामुनस्कृधित्वंतपःपरितप्याजयःस्वः* ॥ स्व

---

( १०।१२।१५ ) ऋषभमितिपंचर्चस्यसूक्तस्यवैराजऋषभःसपत्ननाशनोतुष्टुबंत्यामहापंक्तिः । ( शाकरोवाऋषिः ) । ( १०।१२।१६ ) तुभ्येदमितिचतुर्ऋचस्यसूक्तस्यगाथिभार्गवौविश्वामित्रजमदग्नीइंद्रस्तवीयायाःसोमवरुणबृहस्पत्यनुमतिधातृविधातारोजगती ।

ऋक्सं॰ अ. ८ अ. ८ ॥ ६० ॥

जिंतंमहिंमंदानमंधंसोहवामहेपरिंशक्रंसुताँऽउपं । इमंनोयज्ञमिहबोध्यागंहिस्पृधोजयंतंमघवानमीमहे ॥ सोमस्य राज्ञोवरुंणस्यधर्मंणिबृहस्पतेरनुंमत्याऽउशर्मंणि । तवाहमद्यमंघवन्नुपंस्तुतौधातर्विधातःकलशाँऽअभक्षयं ॥ प्रसूतो भक्षमंकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृंजे । सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमदग्नीदमें ॥ २५ ॥ ( १०।१२।१७ ) वातस्यनुमहिमानंरथस्यरुजन्नेतिस्तनयंन्नस्यघोषः । दिविस्पृग्यात्यरुणानिकृण्वन्नुतोऽएतिपृथि व्यारेणुमस्यंन् ॥ संप्रेरंतेऽअनुवातंस्यविष्ठाऽऐनंगच्छंतिसमंनंनयोषाः । ताभिःसयुक्सरथंदेवऽईयतेस्यविश्वंस्यभुवं नस्यराजा ॥ अंतरिंक्षेपथिभिरीयंमानोननिविंशतेकतमच्चनाहः । अपांसखाप्रथमजाऽऋतावाक्वंस्विज्जातःकुतऽआ वंभूव ॥ आत्मादेवानांभुवंनस्यगर्भोयथावशंचंरतिदेवऽएषः । घोषाऽइदंस्यशृण्विरेनरूपंतस्मैवातायहविषाविधेम ॥ २६ ॥ ( १०।१२।१८ ) मयोभूर्वातोऽअभिवांतूस्राऽऊर्जस्वतीरोषंधीरारिंशंतां । पीवंस्वतीर्जीवधन्याःपिबंत्ववं सायंपद्वतेरुद्रमृळ ॥ याःसरूंपाविरूंपाऽएकंरूपायासामग्निरिष्ट्यानामानिवेदं । याऽअंगिरसस्तपंसेहचक्रुस्ताभ्यःप र्जन्यमहिशर्मंयच्छ ॥ यादेवेषुतन्वं१मैरंयंतयासांसोमोविश्वारूपाणिवेदं । ताऽअस्मभ्यंपयंसापिन्वंमानाःप्रजावंती

मंडलं १० अनु. १२ ॥ ६० ॥

---

( १०।१२।१७ ) वातस्येतिचतुर्ऋचस्यसूक्तस्यवातायनोनिलोवायुस्त्रिष्टुप् । ( १०।१२।१८ ) मयोभूरितिचतुर्ऋचस्यसूक्तस्यकाक्षीवतः शंबरोगावस्त्रिष्टुप् ।

रिंद्रगोष्ठेरिंरीहि ॥ प्रजापतिर्मह्यमेताररांणोविश्वैर्दैवैः पितृभिःसंविदानः । शिवाःसतीरुपंनोगोष्ठमाकस्तासांवयंप्रजयासंसंदेम ॥ २७ ॥ ( १०।१२।१९ ) विभ्राड्बृहत्पिंबतुसोम्यंमध्वायुर्दधंद्यज्ञपंतावविंह्रुतं । वातंजूतोयोऽअंभिरक्षंतित्मनांप्रजाःपुंपोषपुरुधाविराजति ॥ विभ्राड्बृहत्सुभृंतंवाजसातंमंधर्मंन्दिवोधरुणेंसत्यमर्पितं । अमित्रहावृंत्रहादंस्युहंतंमंज्योतिंर्जज्ञेऽअसुरहासंपत्नहा+ ॥ इदंश्रेष्ठंज्योतिंषांज्योतिरुत्तमंविंश्वजिद्धंनजिदुच्यतेबृहत् । विश्वभ्राड्भ्राजोमहिसूर्योंदृशऽउरुपंप्रथेसहऽओजोऽअच्युतं ॥ विभ्राजंज्योतिंषास्वं१रगंच्छोरोचनंदिवः । येनेमाविश्वाभुवंनान्याभृंताविश्वकर्मणाविश्वदेव्यावता ॥ २८ ॥ ( १०।१२।२० ) त्वंत्यमिटतोरथमिंद्रप्रावंःसुतावंतः । अशृंणोःसोमिनोहवं ॥ त्वंमखस्यदोधंतःशिरोवंत्वचोभंरः । अगंच्छःसोमिनोंगृहं+ ॥ त्वंत्यमिंद्रमर्त्यमास्त्रबुध्नायंवेन्यं । मुहुंःश्रथ्नामनस्यवें ॥ त्वंत्यमिंद्रसूर्यंपश्चासंतंपुरस्कृधि । देवानांचित्तिरोवशं ॥ २९ ॥ ( १०।१२।२१ ) आयांहिवनंसासहगावंःसचंतवर्तनिंयदूधंभिः ॥ आयांहिवस्व्याधियामंहिंष्ठोजारयन्मंखःसुदानुभिः ॥ पितुभृतोनतं

---

( १०।१२।१९ ) विभ्राडितिचतुर्ऋचस्यसूक्तस्यसौर्योविभ्राड्सूर्योजगत्यंत्यास्तारपंक्तिः । ( १०।१२।२० ) त्वंत्यमितिचतुर्ऋचस्यसूक्तस्यभार्गवइटइंद्रोगायत्री । ( १०।१२।२१ ) आयाहीतिचतुर्ऋचस्यसूक्तस्यांगिरसःसंवर्तउषाद्विपदाविराट् ।

तुमित्सुदानवः प्रतिदध्मोयजामसि ॥ उषाऽअपस्वसुस्तमः संवर्तयतिवर्तनिंसुजातता ॥ ३० ॥ ( १०।१२।२२ ) आत्वा हार्षमंतरैधिध्रुवस्तिष्ठाविचाचलिः । विशस्त्वासर्वावांछंतुमात्वद्राष्ट्रमधिभ्रशत् ॥ इहैवैधिमापच्योष्ठाः पर्वतऽइवा विचाचलिः । इंद्रेऽइवेहध्रुवस्तिष्ठेहराष्ट्रमुधारय ॥ इममिंद्रोऽअदीधरद्ध्रुवंध्रुवेणहविषा । तस्मैसोमोऽअधिब्रवत्त स्माऽउब्रह्मणस्पतिः ॥ ध्रुवाद्यौर्ध्रुवापृथिवीध्रुवासः पर्वताऽइमे । ध्रुवंविश्वमिदंजगद्ध्रुवोराजाविशामयं ॥ ध्रुवंतेरा जावरुणोध्रुवंदेवोबृहस्पतिः । ध्रुवंतऽइंद्रश्चाग्निश्चराष्ट्रंधारयतांध्रुवं ॥ ध्रुवंध्रुवेणहविषाभिसोमंमृशामसि । अथोत ऽइंद्रः केवलीर्विशोबलिहृतस्करत् ॥ ३१ ॥ ( १०।१२।२३ ) अभीवर्तेनहविषायेनेंद्रोऽअभिवावृते । तेनास्मान्ब्र ह्मणस्पतेभिराष्ट्रायवर्तय ॥ अभिवृत्यसपत्नानभियानोऽअरातयः । अभिपृतन्यंतंतिष्ठाभियोनऽइरस्यति ॥ अभि त्वादेवः सविताभिसोमोऽअवीवृतत् । अभित्वाविश्वाभूतान्यभीवर्तोयथाससि ॥ येनेंद्रोहविषाकृत्व्यभवद्द्युम्न्युत्त मः । इदंतदक्रिदेवाऽअसपत्नः किलाभुवं ॥ असपत्नः सपत्नहाभिराष्ट्रोविषासहिः । यथाहमेषांभूतानांविराजानिज नस्यच ॥ ३२ ॥ ( १०।१२।२४ ) प्रवोग्रावाणः सवितादेवः सुवतुधर्मणा । धूर्षुयुज्यध्वंसुनुत ॥ ग्रावाणोऽअप



---

( १०।१२।२२ ) आत्वेतिषडृचस्यसूक्तस्यांगिरसोध्रुवोराजानुष्टुप् । ( १०।१२।२३ ) अभीवर्तेनेतिपंचर्चस्यसूक्तस्यांगिरसोभीवर्तो राजानुष्टुप् । ( १०।१२।२४ ) प्रवइतिचतुर्ऋचस्यसूक्तस्योर्ध्वग्रावार्बुदः सर्पऋषिपुत्रोग्रावाणोगायत्री ।

दुच्छुनामपसेधतदुर्मतिं । उस्राःकर्तनभेषजं ॥ ग्रावाणउपरेष्वामहीयंतेसजोषसः । वृष्णेदधंतोवृष्ण्यं ॥ ग्रावाणःसवितानुवोदेवःसुवक्तुधर्मणा । यजमानायसुन्वते ॥ ३३ ॥ ( १०।१२।२५ ) प्रसूनवऽऋभूणांबृहन्नवंतवृजनां । क्षामायेविश्वधायसोश्नन्धेनुंनमातरं ॥ प्रदेवंदेव्याधियाभरताजातवेदसं । हव्यानोवक्षदानुषक् ॥ अयमुष्यप्रदेवयुर्होतायज्ञायनीयते । रथोनयोरभीवृतोघृणीवान्चेततित्मना ॥ अयमग्निरुरुष्यत्यमृतादिवजन्मनः । सहसश्चित्सहीयान्देवोजीवातवेकृतः ॥ ३४ ॥ ( १०।१२।२६ ) पतंगमक्तमसुरस्यमाययाहृदापश्यंतिमनसाविपश्चितः । समुद्रेऽअंतःकवयोविचक्षतेमरीचीनांपदमिच्छंतिवेधसः ॥ पतंगोवाचंमनसाबिभर्तितांगंधर्वोवदद्गर्भेऽअंतः । तांद्योतमानांस्वर्यंमनीषामृतस्यपदेकवयोनिपांति ॥ अपश्यंगोपामनिपद्यमानमाचपराचपथिभिश्चरंतं । ससध्रीचीःसविषूचीर्वसानऽआवरीवर्तिभुवनेष्वंतः ॥ ३५ ॥ ( १०।१२।२७ ) त्यमूषुवाजिनंदेवजूतंसहावानंतरुतारंरथानां । अरिष्टनेमिंपृतनाजमाशुंस्वस्तयेतार्क्ष्यमिहाहुवेम ॥ इंद्रस्येवरातिमाजोहुवानाःस्वस्तयेनावमिवारुहेम । उर्वीनपृथ्वीबहुलेगभीरेमावामेतौमापरेतौरिषाम ॥ सद्यश्चिद्यःशवसापंचकृष्टीःसूर्यऽइवज्योतिषापस्ततान । सहस्रसाःश

---

(१०।१२।२५) प्रसूनवइतिचतुर्ऋचस्यसूक्तस्यार्भवःसूनुरग्निराद्यायाऋभवोनुष्टुप्द्वितीयागायत्री । (१०।१२।२६) पतंगमितितृचस्यसूक्तस्यप्राजापत्यःपतंगोमायाभेदस्त्रिष्टुपआद्याजगती । ( १०।१२।२७ ) त्यमूष्वितितृचस्यसूक्तस्यतार्क्ष्योरिष्टनेमिस्तार्क्ष्यस्त्रिष्टुप् ।

तसाऽअंस्यरंहिनस्मांवरंतेयुवतिंनशर्यां ॥ ३६ ॥ ( १०।१२।२८ ) उत्तिष्ठतावपश्यतेंद्रस्यभागमृत्वियं । यदिंश्रातोजुहोतंनयद्यश्रांतोममत्तनं ॥ श्रातंहविरोष्विंद्रप्रयांहिजगामसूरोऽअध्वनोविमंध्यं । परिंत्वासतेनिधिभिःसखायःकुलपानव्राजपंतिंचरंतं ॥ श्रातंमन्यऽऊधनिश्रातमग्नौसुश्रांतंमन्येतदृतंनवींयः । माध्यंदिनस्यसवनस्यदध्नःपिबंद्रवज्रिन्पुरुकृज्जुषाणः+ ॥ ३७ ॥ ( १०।१२।२९ ) प्रसंसाहिषेपुरुहूतशत्रूञ्ज्येष्ठस्तेशुष्मंऽइहरातिरस्तु । इंद्राभरदक्षिणेनावसूंनिपतिःसिंधूंनामसिरेवतीनां ॥ मृगोनभीमःकुंचरोगिंरिष्ठाःपरावतऽआजगंथापरस्याः । सृकंसंशायंपविमिंद्रतिग्मंविशत्रूंन्ताढ्हिविमृधोनुदस्व ॥ इंद्रंक्षत्रमभिवाममोजोजायथावृषभचर्षणीनां । अपानुदोजनंममित्रयंतमुरुंदेवेभ्योऽअकृणोरुलोकं+ ॥ ३८ ॥ ( १०।१२।३० ) प्रथश्चयस्यसप्रथश्चनामानुंष्टुभस्यहविषोहविर्यत् । धातुर्द्युतांनात्सवितुश्चविष्णोंरथंतरमाजंभारावसिष्ठः ॥ अविंदन्तेऽअतिंहितंयदासींद्यज्ञस्यधामंपरमंगुहायत् । धातुर्द्युतांनात्सवितुश्चविष्णोर्भरद्वांजोबृहदाचक्रेऽअग्नेः+ ॥ तेंविंदन्मनंसादीध्यांनायजुःष्कन्नंप्रथमंदेवयानं । धातुर्द्यु

---

( १०।१२।२८ ) उत्तिष्ठतेतितृचस्यसूक्तस्यौशीनरःशिबिः१ काशिराजःप्रतर्दनो२ रोहिदश्वोवसुमना३ इतिक्रमेणैकर्चाइंद्रस्त्रिष्टुबाद्यानुष्टुप् । ( १०।१२।२९ ) प्रससाहिषइतितृचस्यसूक्तस्यैंद्रिर्जयइंद्रस्त्रिष्टुप् । ( १०।१२।३० ) प्रथश्चेतितृचस्यसूक्तस्यवासिष्ठःप्रथो १ भारद्वाजःसप्रथ२ सौर्योघर्म३ श्चैकर्चातिश्वेदेवास्त्रिष्टुप् ।

तानात्सवितुश्चविष्णोरासूर्यादभरन्घर्ममेते ॥ ३९ ॥ ( १०।१२।३१ ) बृहस्पतिर्नयतुदुर्गहातिरःपुनर्नेषदघशंसा यमन्म । क्षिपदशस्तिमपदुर्मतिंहन्नथाकरद्यजमानायशंयोः ॥ नराशंसोनोवतुप्रयाजेशंनोऽअस्त्वनुयाजोहवेषु । क्षिपद० ॥ तपुर्मूर्धातपतुरक्षसोयेब्रह्मद्विषःशरवेहंतवाऽउं । क्षिपद० ॥ ४० ॥ ( १०।१२।३२ ) अपश्यंत्वामनसाचेकितानंतपसोजातंतपसोविभूतं । इहप्रजामिहरयिंरराणःप्रजायस्वप्रजयापुत्रकाम ॥ अपश्यंत्वामनसादीध्यानांस्वायांतनूऽऋत्व्येनाधमानां । उपमामुच्चायुवतिर्बभूयाःप्रजायस्वप्रजयापुत्रकामे ॥ अहंगर्भमदधामोषधीष्वहंविश्वेषुभुवनेष्वंतः । अहंप्रजाऽअजनयंपृथिव्यामहंजनिभ्योऽअपरीषुपुत्रान् ॥ ४१ ॥ ( १०।१२।३३ ) विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु । आसिंचतुप्रजापतिर्धातागर्भंदधातुते ॥ गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति । गर्भंतेऽअश्विनौदेवावाधत्तांपुष्करस्रजा ॥ हिरण्ययीऽअरणीयंनिर्मंथतोऽअश्विना । तंतेगर्भंहवामहेदशमेमासिसूतवे ॥ ४२ ॥ (अथपरिशिष्टं ॥ नेजमेषपरापतसुपुत्रःपुनरापत । अस्यैमेपुत्रकामायैगर्भमाधेहियःपुमान् ॥ यथेयंपृ

---

( १०।१२।३१ ) बृहस्पतिरितितृचस्यसूक्तस्यबार्हस्पत्यस्तपुर्मूर्धाबृहस्पतिस्त्रिष्टुप् । (१०।१२।३२) अपश्यमितितृचस्यसूक्तस्यप्राजापत्यःप्रजावानृषिःयजमानोयजमानपत्नीहोताइतिक्रमेणदेवतास्त्रिष्टुप् । (अपश्यंत्वेत्येतस्याद्ययायजमानमीक्षते द्वितीययापत्नींतृतीययात्मानंआ०श्रौ०)(१०।१२।३३) विष्णुरितितृचस्यसूक्तस्यगर्भकर्तात्वष्टाआद्यायाविष्णुत्वष्टृप्रजापतिधातारोद्वितीयायाःसिनीवालिसरस्वत्य

ऋक्सं. अ. ८ अ. ८ ॥ ६३ ॥

मंडलं १० अनु. १२

थिवीमह्युत्तानागर्भमादधे । एवंतंगर्भमाधेहिदशमेमासिसूतवे ॥ विष्णोःश्रेष्ठेनरूपेणास्यांनार्योगवीन्यां । पुमांसं पुत्रानाधेहिदशमेमासिसूतवे ॥ १ ॥ (१०।१२।३४) महित्रीणामवोस्तुद्युक्षंमित्रस्यार्यम्णः । दुराधर्षंवरुणस्य ॥ नहितेषांममाचननाध्वसुवारणेषु । ईशेरिपुरघशंसः ॥ यस्मैपुत्रासोऽअदितेःप्रजीवसेमर्त्याय । ज्योतिर्यच्छंत्यजस्रं ॥ ४३ ॥ (१०।१२।३५) वातऽआवातुभेषजंशंभुमयोभुनोहृदे । प्रणऽआयूंषितारिषत् ॥ उतवातपितासिनऽउ तभ्रातोतनःसखा । सनोजीवातवेकृधि ॥ यददोवाततेगृहे३ऽमृतस्यनिधिर्हितः । ततोनोदेहिजीवसे ॥ ४४ ॥ (१०।१२।३६) प्राग्नयेवाचमीरयवृषभायक्षितीनां । सनःपर्षदतिद्विषः ॥ यःपरस्याःपरावतस्तिरोधन्वातिरोच ते । सनः० ॥ योरक्षांसिनिजूर्वत्यग्निस्तिग्मेनशोचिषा । सनः० ॥ योविश्वाभिविपश्यतिभुवनासंचपश्यति । सनः० ॥ योऽअस्यपारेरजसःशुक्रोऽअग्निरजायत । सनः० ॥ ४५ ॥ ( परिशिष्टं ॥ अनीकवंतमूतयेग्निंगीर्भिर्हवा

---

श्विनस्तृतीयायाअश्विनावनुष्टुप् । (प्राजापत्योविष्णुर्वाऋषिः) । (१०।१२।३४) महीतितृचस्यसूक्तस्यवारुणिःसत्यधृतिरादित्या गायत्री । ( महिसत्यधृतिर्वारुणिरादित्यंस्वस्त्ययनमित्यनुक्रमण्याअदितिर्देवतायस्येत्यादित्यंआदित्योदेवतायस्येत्यादित्यमितिद्वैविध्येनप्राप्ता वप्यत्रादित्यानामेवदेवतात्वंनादितेः 'माहित्रयन्महित्रीणामादित्यानांस्तुतिंविदुः' इतिशौनकोक्तेः ) । (१०।१२।३५) वातइतितृचस्य सूक्तस्यवातायनउलोवायुर्गायत्री । (१०।१२।३६) प्राग्नयइतिपंचर्चस्यसूक्तस्यवात्सप्रिर्वत्सोग्निर्गायत्री ।

॥ ६३ ॥

महे । सन्नः० )॥ ( १०।१२।३७ ) प्रनूनंजातवेदसमश्वंहिनोतवाजिनं । इदंनोबर्हिरासदे ॥ अस्यप्रजातवेदसोविप्रंवी रस्यमीळ्हुषः । महीमियर्मिसुष्टुतिं ॥ यारुचोजातवेदसोदेवत्राहव्यवाहनीः । ताभिर्नोयज्ञमिन्वतु ॥४६॥ ( १०।१२।३८ ) आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः । पितरंचप्रयन्त्स्वः* ॥ अंतश्चरतिरोचनास्यप्राणादपानती । व्यख्यन्महिषो दिवं ॥ त्रिंशद्धामविराजतिवाक्पतंगायधीयते । प्रतिवस्तोरहद्युभिः ॥ ४७ ॥ ( १०।१२।३९ ) ऋतंचसत्यंचा भीद्धात्तपसोध्यजायत । ततोरात्र्यजायतततःसमुद्रोऽअर्णवः+ ॥ समुद्रादर्णवादधिसंवत्सरोऽअजायत । अहोरा त्राणिविदधद्विश्वस्यमिषतोवशी+ ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् । दिवंचपृथिवींचांतरिक्षमथोस्वः* ॥ ४८ ॥ ( १०।१२।४० ) संसमिद्युवसेवृषन्नग्नेविश्वान्यर्यऽआ । इळस्पदेसमिध्यसेसनोवसून्याभर ॥ संगच्छध्वं संवदध्वंसंवोमनांसिजानतां । देवाभागंयथापूर्वेसंजानानाऽउपासते ॥ समानोमंत्रःसमितिःसमानीसमानंमनःसह

---

( १०।१२।३७ ) प्रनूनमितितृचस्यसूक्तस्याग्नेयःश्येनोजातवेदाअग्निर्गायत्री । ( १०।१२।३८ ) आयंगौरितितृचस्यसूक्तस्यसार्पराज्ञी सूर्योगायत्री । ( अत्रयद्यपिसार्पराज्ञ्यात्मदैवतमित्यनेनप्रकृतासार्पराज्ञीदेवताप्राप्नोतितथापिप्रयोक्तृभिःसूर्यस्यग्रहणात्पाक्षिकोपिसूर्योसाभि रूपात्तः ) । ( १०।१२।३९ ) ऋतंचेतितृचस्यसूक्तस्यमाधुच्छंदसोघमर्षणोभाववृत्तिरनुष्टुप् । ( १०।१२।४० ) संसमितिचतुर्ऋचस्य सूक्तस्यांगिरसःसंवननःआद्यायाअग्निस्ततस्तिसृणांसंज्ञानमनुष्टुप्तृतीयात्रिष्टुप् ।

ऋक्सं. अ. ८ अ. ८ ॥ ६४ ॥

मंडलं १० अनु. १२

चित्तमेषां । समानंमंत्रमभिमंत्रयेवःसमानेनवोहविषाजुहोमि ॥ समानीवऽआकूतिःसमानाहृदयानिवः । समानम
स्तुवोमनोयथावःसुसहासति ॥ ४९ ॥ इत्यष्टमाष्टकेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ ( परिशिष्टं ॥ संज्ञानमुशनावदत्सं
ज्ञानंवरुणोवदत् । संज्ञानमिंद्रश्चाग्निश्चसंज्ञानंसवितावदत् ॥ संज्ञानंनश्वेभ्यःसंज्ञानमरणेभ्यः । संज्ञानमश्विनायुव
मिहास्मासुनियच्छतं ॥ यत्कक्षीवांसंवननंपुत्रोऽअंगिरसाभवेत् । तेननोद्यविश्वेदेवाःसंप्रियांसमजीजनन् ॥ संवो
मनांसिजानतांसमाकूतिर्मनामसि । असौयोविमनामनःसंसमावर्तयामसि ॥ १ ॥ नैर्हस्त्यंसेनादरणंपरिवर्त्मेतुयद्ध
विः । तेनामित्राणांबाहून्हविषाशोषयामसि ॥ परिवर्त्मान्येषामिंद्रःपूषाचसस्रतुः । तेषांवोऽअग्निदग्धानामग्निर्मू
ढानामिंद्रोहंतुवरंवरं ॥ ऐषुनह्यवृषाजिनंहरिणस्याधियंयथा । पराँऽअमित्राँऽऐषत्ववाचीगौरुपाजंतु ॥ प्राध्वराणां
पतेवसोहोतर्वरेण्यक्रतो । तुभ्यंगायत्रमृच्यते ॥ गोकामोऽअन्नकामःप्रजाकामऽउतकश्यपः । भूतंभविष्यत्प्रस्तौति
सहब्रह्मैकमक्षरंवहुब्रह्मैकमक्षरं ॥ २ ॥ यदक्षरंभूतकृतंविश्वेदेवाऽउपासते । महऽऋषिमस्यगोप्तारंजमदग्निरकुर्वत ॥
जमदग्निराप्यायतेछंदोभिश्चतुरुत्तरैः । राज्ञासोमस्यभक्षेणब्रह्मणावीर्यावता ॥ शिवानःप्रदिशोदिशःसत्यानःप्रदि
शोदिशः । अजोयत्तेजोददृश्रेशुक्रंज्योतिःपरोगुहा ॥ यदृषिःकश्यपःस्तौतिसत्यंब्रह्मचराचरंध्रुवंब्रह्मचराचरं । त्र्या
युषंजमदग्नेःकश्यपस्यत्र्यायुषमगस्त्यस्यत्र्यायुषं ॥ यद्देवानांत्र्यायुषंतन्मेऽअस्तुत्र्यायुषंसर्वमस्तुशतायुषंवलायुषं ॥

॥ ६४ ॥

तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतये । दैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः । ऊर्ध्वंजिगातुभेषजंशंनोऽअस्तु द्विपदेशंचतुष्पदे ॥ ३ ॥ ( इतिपरिशिष्टं ॥ ) ॥ ॥ ॥ ॥

चतुःषष्ट्यध्यायेवर्गाः ४९ सूक्तानि ४९ ऋचः २१८ ॥ त्यागः ॥ अश्विभ्या.६ इंद्राये.६ सपत्नीनाशनाये.६ अरण्यान्या.६ इंद्राये.१० सवित्र.५ अग्नय.५ श्रद्धाया.५ इंद्राये.१० भाववृत्तय.५ अलक्ष्मीनाशनाये. ब्रह्मणस्पतय.२ अलक्ष्मीनाशनाये. विश्वेभ्यो-देवेभ्य. अग्नय.५ विश्वेभ्योदेवेभ्य.५ सूर्याये.५ शच्याइ.६ इंद्राये.५ इंद्राग्निभ्या.५ प्रजापतय.६ यक्ष्मघ्नइ.६ दुःस्वप्ननाशनाये.५ विश्वे-भ्योदेवेभ्य.५ [ भे. प. विश्वेभ्योदे. ३ यमाये. विश्वेभ्योदेवेभ्य. ] सपत्ननाशनाये.५ इंद्राये.२ सोमवरुणबृहस्पत्यनुमतिधातृविधातृभ्य. इंद्राये. वायव.४ गोभ्य.४ सूर्याये.४ इंद्राये.४ उषस.४ राज्ञइदं.११ ग्रावभ्यइ.४ ऋभुभ्य. अग्नय.३ मायाभेदाये.३ तार्क्ष्याये.३ इंद्राये.६ विश्वेभ्योदेवेभ्य.३ बृहस्पतय.३ यजमानाय. यजमानपत्न्या. होत्रइदं. विष्णुत्वष्टृप्रजापतिधातृभ्य. सिनीवालिसरस्वत्यश्विभ्य. अश्विभ्या. आदित्येभ्य.३ वायव.३ अग्नय.५ जातवेदसेग्नय.३ सूर्याये.३ भाववृत्तय.३ अग्नय. संज्ञानायेदं. ३ ॥ इत्यष्टमेऽष्टमः ॥

श्रीगणेशायनमः ॥ अथनिविदध्यायः ॥ ओम् अग्निर्देवेद्धः ॥ अग्निर्मन्विद्धः ॥ अग्निःसुषमंत् ॥ होतादेववृतः ॥ होतामनुवृतः ॥ प्रणीर्यज्ञानां ॥ रथीरध्वराणाम् ॥ अतूर्तोहोता ॥ तूर्णिर्हव्यवाट् ॥ आदेवोदेवान्वक्षत् ॥ यक्षदग्निर्देवोदेवान् ॥ सोअध्वराकरतिजातवेदाः ॥ १२ ॥ १ ॥ इंद्रोमरुत्वान्सोमस्यपिवतु ॥ मरुत्स्तोत्रोमरुद्गणः ॥ मरुत्सखामरुद्वृधः ॥ घ्नन्वृत्रासृजदपः ॥ मरुतामोजसासह ॥ यईमेनंदेवाअन्वमदन् ॥ अप्सूर्यैवृत्रतूर्ये ॥ शंवरहत्येगविष्टौ ॥ अर्चंतंगुह्यापदा ॥ परमस्यांपरावति ॥ आदींब्रह्माणिवर्धयन् ॥ अनाधृष्टान्योजसा ॥ कृण्वन्देवेभ्योदुवः ॥ मरुद्भिःसखिभिःसह ॥ इंद्रोमरुत्वाँइहश्रवदिहसोमस्यपिवतु ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवतु ॥ चित्रश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसागमत् ॥ २० ॥ २ ॥ इंद्रोदेवःसोमंपिवतु ॥ एकजानांवीरतमः ॥ भूरिदानंतवस्तमः ॥ हर्योःस्थाता ॥ पृश्नेःप्रेता ॥ वज्रस्यभर्ता ॥ पुरांभेत्ता ॥ पुरांदर्मा ॥ अपांस्रष्टा ॥ अपांनेता ॥ सत्वानांनेता ॥ निजघ्निर्दूरेश्रवाः ॥ उपमातिकृद्दंसनावान् ॥ इहोशंदेवोवभूवान् ॥ इंद्रोदेवइहश्रवदिहसोमस्यपिवतु ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं । प्रेमंसुन्वंतंयजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागमत् ॥ २० ॥ ३ ॥ सवितादेवःसोमस्यपिवतु ॥ हिरण्यपाणिःसुजिह्वः ॥ सुवाहुःस्वंगुरिः ॥ त्रिरहन्त्सत्यसवनः ॥ यःप्रासुवद्वसुधीती ॥ उभेजोष्ट्रीसवीम

नि ॥ श्रेष्ठंसावित्रमासुवं ॥ दोग्ध्रींधेनुं ॥ वोह्लारमनड्वाहं ॥ आशुंसप्तिं ॥ पुरंधिंयोषां ॥ जिष्णुंरथेष्ठां ॥ सभेयं युवानं ॥ परामीवांसाविषतपशाघशंसं ॥ सवितादेवइहश्रवदिहसोमस्यमत्सत् ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया । प्रेदंब्रह्मप्रेदंक्षत्रं । प्रेमंसुन्वंतंयजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसागमत् ॥ २० ॥ ४ ॥ द्यावापृथिवीसोमस्यमत्सतां ॥ पिताचमाताच ॥ पुत्रश्चप्रजननंच ॥ धेनुश्चऋषभश्च ॥ धन्याचधिषणाच ॥ सुरेताश्चसुदुघाच ॥ शंभूश्चमयोभूश्च ॥ ऊर्जस्वतीचपयस्वतीच ॥ रेतोधाश्चरेतोभृच्च ॥ द्यावापृथिवीइहश्रुतामिहसोमस्यमत्सतां ॥ प्रेमांदेवीदेवहूतिमवतांदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवतां ॥ चित्रेचित्राभिरूतिभिः ॥ श्रुताब्रह्माण्यावसागमंतां ॥ १५ ॥ ५ ॥ ऋभवोदेवाःसोमस्यमत्सन् ॥ विष्ठीस्वपसः ॥ कर्मणासुहस्ताः ॥ धन्याधनिष्ठाः ॥ शम्याशमिष्ठाः ॥ शच्याशचिष्ठाः ॥ येधेनुंविश्वजुवंविश्वरूपामरक्षन् ॥ अरक्षन्धेनुमभवद्विश्वरूपी ॥ अयुंजतहरीअयुर्देवाँउप ॥ अबुध्नन्त्संकनीनामदंतः ॥ संवत्सरेस्वपसोयज्ञियंभागमायन् ॥ ऋभवोदेवाइहश्रवन्निहसोमस्यमत्सन् ॥ प्रेमांदेवादेवहूतिमवंतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवंतु ॥ चित्राश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसागमन् ॥ १७ ॥ ६ ॥ विश्वेदेवाःसोमस्यमत्सन् ॥ विश्वेवैश्वानराः ॥ विश्वेहिविश्वमहसः ॥ महिंमहांतः ॥ तक्वान्नानेमतिथीवानः ॥ अस्क्राःपचतवाहसः ॥ वातात्मानोअग्नि

दूताः ॥ येद्यांचपृथिवींचातस्थुः ॥ अपश्चस्वश्च ॥ ब्रह्मचक्षत्रंच ॥ बर्हिश्चवेदिंच ॥ यज्ञंचोरुचांतरिक्षं ॥. येस्थत्रय एकादशाः ॥ त्रयश्चत्रिंशच्च ॥ त्रयश्चत्रीचशता ॥ त्रयश्चत्रीचसहस्रा ॥ तावंतोभिषाचः ॥ तावंतोरातिषाचः ॥ तावतीःपत्नीः ॥ तावतीर्ग्नाः ॥ तावंतउदरणे ॥ तावंतोनिवेशने ॥ अतोवादेवाभूयांसःस्थ ॥ मावोदेवाअपिशसा मापरिशसावृक्षि ॥ विश्वेदेवाइहश्रवन्निहसोमस्यमत्सन् ॥ प्रेमांदेवादेवहूतिमवंतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवंतु ॥ चित्राश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसागमन् ॥ ३० ॥ ७ ॥ अग्निर्वैश्वानरःसो मस्यमत्सत् ॥ विश्वेषांदेवानांसमित् ॥ अजस्रंदैव्यंज्योतिः ॥ योविड्भ्योमानुषीभ्योअदीदेत् ॥ द्युषुपूर्वासुदिद्यु तानः ॥ अजरउषसामनीके ॥ आयोद्यांभात्यांपृथिवीम् ॥ ओर्वंतरिक्षं ॥ ज्योतिषायज्ञायशर्मयंसत् ॥ अग्निर्वैश्वा नरइहश्रवदिहसोमस्यमत्सत् ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवतु ॥ चित्रश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसागमत् ॥ १५ ॥ ८ ॥ मरुतोदेवाःसोमस्यमत्सन् ॥ सुष्टुभःस्वर्काः ॥ अर्कस्तुभोबृहद्वयसः ॥ शूराअनाधृष्टरथाः ॥ त्वेषासःपृश्निमातरः ॥ शुभ्राहिरण्यखादयः ॥ तवसोभंददिष्टयः ॥ नभस्यावर्षनिर्णिजः ॥ मरुतोदेवाइहश्रवन्निहसोमस्यमत्सन् ॥ प्रेमांदेवादेवहूतिमवंतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदंक्ष त्रं ॥ प्रेमंसुन्वंतंयजमानमवंतु ॥ चित्राश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसागमन् ॥ १४ ॥ ९ ॥ अग्निर्जा

तवेदाःसोमस्यमत्सत् ॥ स्वनीकश्चित्रभानुः ॥ अप्रोषिवान्गृहपतिः ॥ तिरस्तमांसिदर्शतः ॥ घृताहवनईड्यः ॥
बहुलवर्मास्तृतयज्वा ॥ प्रतीत्याशत्रून्जेतापराजितः ॥ अग्नेजातवेदोभिद्युम्नमभिसहआयच्छस्व ॥ तुशोअष्टुशः ॥
समेद्धारंस्तोतारमंहसस्पाहि ॥ अग्निर्जातवेदाइहश्रवदिहसोमस्यमत्सत् ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया ॥ प्रे
दंब्रह्मप्रेदंक्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवतु ॥ चित्रश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसागमत् ॥ १६ ॥ १० ॥
अस्यमदेजरितरिंद्रःसोमस्यमत्सत् ॥ अस्यमदेजरितरिंद्रोहिमहन् ॥ अस्यमदेजरितरिंद्रोवृत्रमहन् ॥ अस्यमदेज
रितरिंद्रोपांवेगमैरयत् ॥ अस्यमदेजरितरिंद्रोजिन्वदजुवोपिन्वदगितः ॥ अस्यमदेजरितरिंद्रउदार्यवर्णमतिरदव
दासीर्द्दिशोअस्तभ्नात् ॥ अस्यमदेजरितरिंद्रउद्यामस्तभ्नादप्रथयत्पृथिवीं ॥ अस्यमदेजरितरिंद्रोदिविसूर्यमैरयद्वंत
रिक्षमतिरत् ॥ अस्यमदेजरितरिंद्रःसमुद्रंप्रकुपितमरम्णात् ॥ अस्यमदेजरितरिंद्रऋष्याँइवपंफणतःपर्वतान्प्रकुपि
ताँअरम्णात् ॥ अस्यमदेजरितरिंद्रइहश्रवदिहसोमस्यमत्सत् ॥ प्रेमांदेवोदेवहूतिमवतुदेव्याधिया ॥ प्रेदंब्रह्मप्रेदं
क्षत्रं ॥ प्रेमंसुन्वंतंयजमानमवतु ॥ चित्रश्चित्राभिरूतिभिः ॥ श्रवद्ब्रह्माण्यावसागमत् ॥ १६ ॥ ११ ॥ अग्निर्द्वाद
श ॥ इंद्रोमरुत्वानिंद्रोदेवःसवितादेवःपृथग्विंशतिः ॥ द्यावापृथिवीपंचदश ॥ ऋभवोदेवाःसप्तदश ॥ विश्वेदेवास्त्रिं
शत् ॥ अग्निर्वैश्वानरःपंचदश ॥ मरुतोदेवाश्चतुर्दश ॥ अग्निर्जातवेदाअस्यमदेपृथक्षोळश ॥ ॥ इतिनिविदध्यायः ॥

अथकुंतापाध्यायः ॥ अथनाराशंस्यः ॥ ओम् ॥ इदंजनाउपश्रुतनराशंसस्तविष्यते ॥ षष्टिंसहस्रानवतिंचकौरम आरुशमेषुदद्महे ॥ उष्ट्रायस्यप्रवाहणोवधूमंतोद्विर्दश ॥ वर्ष्मारथस्यनिजिहीळतेदिवईषमाणाउपस्पृशः ॥ एषइया यमामहेशतंनिष्कान्दशस्रजः ॥ त्रीणिशतान्यर्वतांसहस्रादशगोनां ॥ ३ ॥ इतितिस्रोनाराशंस्यः ॥ ॥ अथरैभ्यः ॥ वच्यस्वरेभवच्यस्ववृक्षेनपक्केशकुनः ॥ नष्टेजिह्वाचर्चरीतिक्षुरोनभुरिजोरिव ॥ प्ररेभासोमनीषयावृथागावइवेरते ॥ अमोतपुत्रकाएषाममोतकाइवासते ॥ प्ररेभधियंभरस्वगोविदंवसुविदं ॥ देवत्रेमांवाचंश्रीणीहीषुर्नवीरमस्तारं ॥ ३ ॥ इतितिस्रोरैभ्यः ॥ ॥ अथपारिक्षित्यः ॥ राज्ञोविश्वजनीनस्ययोदेवोमर्त्याँअति ॥ वैश्वानरस्यसुष्टुतिमासुनोतापरिक्षितिः ॥ परिक्छिन्नः क्षेममकरत्तमासुनुमासरं ॥ मरायन्कुर्वन्कौरव्यः पतिर्वदतिजायया ॥ कतरत्तआहराणिदधिमंथां परिस्रुतां ॥ जायापतिंविपृच्छतिराष्ट्रेराज्ञः परिक्षितः ॥ अभीवर्ष्मप्रजिहातेयवः पक्कः पथोबिलं ॥ जनः सभद्रमेधत्त राष्ट्रेराज्ञः परिक्षितः ॥ इतिचतस्रः पारिक्षित्यः ॥ ॥ अथकारव्याः ॥ इंद्रः कारुमवूबुधदुत्तिष्ठविचराजनं ॥ ममेदुग्रस्यचर्कृधिसर्वाइत्तेपृणादुरिः ॥ इहगावः प्रजायध्वमिहाश्वाइहपूरुषाः ॥ इहोसहस्रदक्षिणोवीरस्त्रातानिषीदतु ॥ नेमाइंद्रगावोरिषन्मोआसांगोपतीरिषत् ॥ मासाममित्रयुर्जनइंद्रमास्तेनईशत ॥ उपवोनरएमसिसूक्तेनवचसावयं भद्रेणवचसावयं ॥ चनोदधिध्वंनोअंगिरोनरिष्येमकदाचन ॥ ४ ॥ इतिचतस्रः कारव्याः ॥ ॥ अथदिशांक्लृप्तयः ॥

यःसभेयोविदथ्यःसुत्वायज्वाचपूरुषः ॥ सूर्यंचाभूरिशादसंतंदेवाःप्रागकल्पयन् ॥ योजाम्याअप्रत्तदमद्यःसखाय न्निनित्सति ॥ ज्येष्ठोयदिप्रचेतास्तदाहुरधरागिति ॥ यद्भद्रस्यपुरुषस्यपुत्रोभवतिदाधृषिः ॥ तद्विप्रोअब्रवीदुदग्गं धर्वःकाव्यंवचः ॥ यश्चपणिरभुजिष्योयश्चरेवाँअदाशुरिः ॥ धीराणांशश्वतामहंतदपागितिशुश्रुम ॥ येचदेवाअय जंताथोयेचपरादददिः ॥ सूर्योदिवमिवगत्वामघवानोविरप्शते ॥ ५ ॥ इतिपंचदिशांक्लृप्तयः ॥ ॥ अथजनकल्पाः ॥ योनाक्ताक्षोअनभ्यक्तोमणिवोअहिरण्यवः ॥ अब्रह्माब्रह्मणस्पुत्रस्तोताकल्पेषुसंमितः ॥ यआक्ताक्षःस्वभ्यक्तःसुम णिःसुहिरण्यवः ॥ सुब्रह्माब्रह्मणस्पुत्रस्तोताकल्पेषुसंमितः ॥ अप्रपाणाचयेशंतारेवाँअप्रददिश्चयः ॥ सुयभ्राकन्या कल्याणीतोताकल्पेषुसंमितः ॥ सुप्रपाणाचयेशांतारेवान्सुप्रददिश्चयः ॥ सुयभ्राकन्याकल्याणीतोताकल्पेषुसंयि तः ॥ वावाताचमहिष्यंनस्ताचयुधिंगमः ॥ अनाशुरश्वआयामीतोताकल्पेषुसंमितः ॥ परिवृक्ताचमहिषीविश्व स्त्याचयुधिंगमः ॥ स्वाशुरश्वआयामीतोताकल्पेषुसंमितः ॥ इतिषड्जनकल्पाः ॥ ॥ अथेंद्रगाथाः ॥ यदिं द्रोदाशराज्ञेमानुषंव्यगाहथाः ॥ विरूपःसर्वस्माआसीत्सहयक्षायवंचते ॥ त्वंविषाक्षंमघवन्नम्रंपर्याकरोरभि ॥ त्वं रौहिणंव्यास्यस्त्वंवृत्रस्याभिनच्छिरः ॥ यःपर्वतान्व्यदधाद्योअपोव्यगाहथाः ॥ योवृत्रोवृत्रहन्नहंस्तस्माइंद्रनमोस्तु ते ॥ प्रष्टिंधावंतंहर्योरौच्चैःश्रवसमब्रवं ॥ स्वस्त्यश्वजैत्रायेंद्रमावहसुस्रजं ॥ यत्त्वाश्वेतोच्चैःश्रवसंहर्योयुंजंतिदक्षिणं ॥

मूर्धानमश्वंदेवानाबिभ्रदिंद्रंमहीयसे ॥ इतिपंचेंद्रगाथाः ॥ ॥ अथैतशप्रलापाः ॥ एताअश्वाआप्लवंते ॥ प्रतीपंप्राति सत्वनं ॥ तासामेकाहरिक्निका ॥ हरिक्निकेकिमिच्छसि ॥ साधुंपुत्रंहिरण्ययं ॥ क्वाहकंपरास्यः ॥ यत्रामूस्तिस्रः शिंशपाः ॥ परित्रयःपृदाकवः ॥ शृंगंधमंतआसते ॥ अयंमहांतेअवहि ॥ १० ॥ सइत्थकंसएवकं ॥ सघाघतेस घागमे ॥ गोमीघमोमिनीरभिः ॥ पुमान्भूम्नेनिनित्सति ॥ वद्धवथोइति ॥ वद्धवोअथोइति ॥ अजकोरकोविका ॥ अश्वस्यवालोगोशफः ॥ केशिनीश्येनीएनीवा ॥ अनामयोपजिह्विका ॥ २० ॥ कोअंबकुलिमायुंनि ॥ कोअर्जुन्याः पयः ॥ कोअसिक्न्याःपयः ॥ एतंपृच्छकुहंपृच्छ ॥ कुहाकंपक्वकंपृच्छ ॥ यआयंतिश्वभिष्कुभिः ॥ अकुभ्यंतःकुभा यवः ॥ आमणकोमणत्थकः ॥ देवत्तःप्रतिहूर्यः ॥ पिनष्टिपतिकाहविः ॥ ३० ॥ प्रवुद्धुदोमथायति ॥ शुंगउत्पत ॥ मात्वांविसखानाविदन् ॥ वशायाःपुत्रमायांतं ॥ इराचेंद्रममंदत ॥ इयंनियंनिति ॥ अथोइयंनिति ॥ अथोज्याय स्तरोभुवत् ॥ इयंयकाशलाकका ॥ आमिणोतिनिभज्यते ॥ ४० ॥ तस्याअनुनिभंजनं ॥ वरुणोयातिवभ्रुभिः ॥ शतंवभ्रोरभीशवः ॥ शतंकशाहिरण्ययीः ॥ शतंरथाहिरण्ययाः ॥ आहलकुःशवर्तकुः ॥ आयवनेनतेजनिः ॥ शफेनपीवओहति ॥ वनिष्ठुनोपनृत्यति ॥ इयंमह्यमदुरिति ॥ ५० ॥ तेवृक्षाःसहतिष्ठंति ॥ पाकवलिःशकवलिः ॥ अश्वत्थःखदुरोधवः ॥ अरदुःपरमःशये ॥ हतइवपापपूरुषः ॥ अदोहमितपीयूषकं ॥ द्वौचहस्तिनौदती ॥ अध्य

धंचपरस्वतः ॥ आदलाबुकमेककं ॥ अलाबुकंनिरवातकं ॥ ६० ॥ कर्करिकोनिरवातकः ॥ तद्वातउन्मथाइति ॥
कुलायंकरवाँइति ॥ उग्रंबलिशदाततं ॥ नवलिशनदाततं ॥ कएषांकर्करींरिखत् ॥ कएषांदुंदुभिंहनत् ॥ यदींहन
त्कथंहनत् ॥ दैलींहनत्कथंहनत् ॥ पर्याकारंपुनःपुनः ॥ ७० ॥ इतिसप्ततिपदान्यैतशप्रलापाः ॥ ॥ अथप्रवह्लिकाः ॥
विततौकिरणौद्वौतावापिनष्टिपूरुषः ॥ नवैकुमारितत्तथायथाकुमारिमन्यसे ॥ मातुष्टेकिरणौद्वौनीवीतःपुरुषादृते ॥
नवैकुमारितत्तथायथाकुमारिमन्यसे ॥ निगृह्यकर्तकौद्वौनिरायच्छसिमध्यमां ॥ नवैकुमारितत्तथायथाकुमारिम
न्यसे ॥ उत्तानायैशयानायैतिष्ठन्नेवावगूहसि ॥ नवैकुमारितत्तथायथाकुमारिमन्यसे ॥ श्लक्ष्णायाश्लक्ष्णिकायांश्ल
क्ष्णमेवावगूहसि ॥ नवैकुमारितत्तथायथाकुमारिमन्यसे ॥ अवश्लक्ष्णमवभ्रशदंतर्लोमवतिह्रदे ॥ नवैकुमारितत्त
थायथाकुमारिमन्यसे ॥ इतिषट्प्रवह्लिकाः ॥ ॥ अथाजिज्ञासेन्याः ॥ इहेत्थप्रागपागुदगधराक् ॥ अरालाउदभं
थते ॥ इहेत्थप्रागपागुदगधराक् ॥ वत्साःप्रुषंतआसते ॥ इहेत्थप्रागपागुदगधराक् ॥ सवीपुत्सीलिलीशये ॥ इहे
त्थप्रागपागुदगधराक् ॥ स्थालीपाकोविलीयते ॥ इतिचतस्रआजिज्ञासेन्याः ॥ ॥ अथप्रतिराध्यः ॥ भुगित्यभिगतः ॥
शरित्यभिष्ठितः ॥ फलित्यपक्रांतः ॥ इतितिस्रःप्रतिराध्यः ॥ ॥ अथातिवादः ॥ वीमेदेवाअक्रंसताध्वर्योक्षिप्रंप्रचर ॥
सुशस्तिरिद्गवामस्यतिप्राक्खिदसोमहँ ॥ इत्यतिवादः ॥ ॥ अथदेवनीथाः ॥ आदित्याहजरितरंगिरोभ्योदक्षिणामन

यन् ॥ तांहजरितर्नप्रत्यायन् ॥ तामुहजरितःप्रत्यायन् ॥ तांहजरितर्नप्रत्यगृभ्णन् ॥ तामुहजरितःप्रत्यगृभ्णन् ॥ अहानेतसंनविचेतनानि ॥ जज्ञानेतसन्नपुरोगवासः ॥ उतश्वेतआशुपत्वा ॥ उतोपद्याभिर्जविष्ठः ॥ उतेमाशुमानं पिपर्ति ॥ आदित्यारुद्रावसवस्त्वेळते ॥ इदंराधःप्रतिगृभ्णीह्यंगिरः ॥ इदंराधोबृहत्पृथु ॥ देवाददत्वावरं ॥ तद्वो अस्तुसुचेतनं ॥ युष्मेअस्तुदिवेदिवे ॥ प्रत्येवगृभायत ॥ इतिसप्तदशपदानिदेवनीथाः ॥ अथभूतेच्छदः ॥ त्वमिं द्रशर्मरिणाहव्यंपरावतेभ्यः ॥ विप्रायस्तुवतेवसूनिजुरश्रवसेमहे ॥ त्वमिंद्रकपोतायच्छिन्नपक्षायवंचते ॥ श्यामा कंपक्कंपीलुचवारस्माअकृणोर्बहु ॥ अरंगरोवावदीतित्रेधाबद्धोवरत्रया ॥ इरामुहप्रशंसत्यनिरामपवाधतां ॥ इतितिस्रो भूतेच्छदः ॥ ॥ अथाहनस्याः ॥ यदस्याअंहुभेद्याःपृथुस्थूरमुपातसत् ॥ मुष्काविदस्याएजतेगोशफेशकुलाविव ॥ य दास्थूरेणपससाअनूमुष्काउपावधीत् ॥ विष्वंचावस्याअर्दतेसिकतास्विवगर्दभः ॥ यदल्पिकास्वल्पिकाकर्कंधुकेवप च्यते ॥ वासंतिकमिवतेजनोयभ्यमानावितन्वते ॥ यद्देवासोललागमुंप्रपिष्टीपिनमाविषुः ॥ सक्थ्नादेदृश्यतेनरःस क्थ्यःसाक्षीवगोयथा ॥ महाणघ्न्युपब्रुतेअश्वस्यावेशितंपसः ॥ ईदृक्फलस्यवृक्षस्यशूर्पेशूर्पंभजेमहि ॥ महाणघ्न्यद्दृप्तं हिसोक्रंददस्तमासरत् ॥ शक्कुकाननाशकामशकंसकथ्ययमत ॥ महानग्नीकृकवालमतिक्रामंत्यब्रवीत् ॥ यथैवतेवनस्प

तेपिझंतितथैवमे ॥ महान्वैभद्रोबिल्वोमहान्पक्कउदुंबरः ॥ महाँअभिज्ञुबाधतेमहतःसाधुखोदनं ॥ इत्यष्टावाहनस्याः ॥ इतिकुंतापाध्यायःसमाप्तः ॥ ॥ ॥ ॥ ॥

अथपुरोरुक् ॥ वायुरग्रेगायज्ञप्रीःसाकंगन्मनसायज्ञं ॥ शिवोनियुद्भिःशिवाभिः ॥ १ ॥ हिरण्यवर्तनीनरादेवापतीअभिष्टये ॥ वायुश्चेंद्रश्चसुमुखः ॥ २ ॥ काव्याराजानाक्रत्वादक्षस्यदुरोणे ॥ रिशादसासधस्थआ ॥ ३ ॥ दैव्याअध्वर्यूआगतंरथेनसूर्यत्वचा ॥ मध्वायज्ञंसमंजाथे ॥ ४ ॥ इंद्रउक्थेभिर्मंदिष्ठोवाजानांचवाजपतिः ॥ हरिवांसुतानांसखा ॥ ५ ॥ विश्वान्देवान्हवामहेस्मिन्यज्ञेसुपेशसः ॥ तइमंयज्ञमागमंदेवासोदेव्याधिया ॥ ६ ॥ जुषाणाअध्वरेसदोयेयज्ञस्यतनूकृतः ॥ विश्वआसोमपीतये ॥ ७ ॥ वाचमहंदेवींवाचास्मिन्यज्ञेसुपेशसा ॥ सरस्वतींहवामहे ॥ ८ ॥ इत्यष्टौपुरोरुक् ॥ ॥ ॥ ॥ ॥ ॥

अथप्रैषाः ॥ होतायक्षदग्निंसमिधासुषमिधासमिद्धंनाभापृथिव्याःसंगथेवामस्य ॥ वर्ष्मन्दिवइळस्पदेवेत्वाज्यस्यहोतर्यज ॥ १ ॥ होतायक्षत्तनूनपातमदितेर्गर्भंभुवनस्यगोपां ॥ मध्वाद्यदेवोदेवेभ्योदेवयानान्पथोअनक्तुवेत्वाज्यस्यहोतर्यज ॥ २ ॥ होतायक्षन्नराशंसंनृशस्त्रंनॄंःप्रणेत्रं ॥ गोभिर्वपावान्त्स्याद्वीरैःशक्तीवान्रथैःप्रथमयावाहिरण्यैश्चंद्रीवेत्वाज्यस्यहोतर्यज ॥ ३ ॥ होतायक्षदग्निमीळईळितोदेवोदेवाँऽआवक्षद्दूतोहव्यवाळमूरः ॥ उपेमंयज्ञमुपेमां

देवोदेवहूतिमवतुवेत्वाज्यस्यहोतर्यज ॥ ४ ॥ होतायक्षद्बर्हिःसुष्टरीमोर्णम्रदाअस्मिन्यज्ञेविचप्रचप्रथतांस्वासस्थंदेवेभ्यः ॥ एमेनदद्यवसवोरुद्राआदित्याःसदंतुप्रियमिंद्रस्यास्तुवेत्वाज्यस्यहोतर्यज ॥ ५ ॥ होतायक्षद्दुरऋष्वाःकवष्योऽकोषधावनीरुद्रातामिर्जिहतांविपक्षोभिःश्रयतां ॥ सुप्रायणाअस्मिन्यज्ञेविश्रयंतामृतावृधोव्यंत्वाज्यस्यहोतर्यज ॥ ६ ॥ होतायक्षदुषासानक्ताबृहतीसुपेशसानॄँःपतिभ्योयोनिंकृण्वाने ॥ संस्मयमानेइंद्रेणदेवैरेदंबर्हिःसीदतांवीतामाज्यस्यहोतर्यज ॥ ७ ॥ होतायक्षदैव्याहोतारामंद्रापोताराकवीप्रचेतसा ॥ स्विष्टमद्यान्यःकरदिषास्वभिगूर्तमन्यऊर्जासतवसेमंयज्ञंदिविदेवेषुधत्तांवीतामाज्यस्यहोतर्यज ॥ ८ ॥ होतायक्षत्तिस्रोदेवीरपसामपस्तमाअच्छिद्रमद्येदमपस्तन्वतां ॥ देवेभ्योदेवीर्देवमपोव्यंत्वाज्यस्यहोतर्यज ॥ ९ ॥ होतायक्षत्त्वष्टारमचिष्टमपाकंरेतोधांविश्रवसंयशोधां ॥ पुरुरूपमकामकर्शनंसुपोषःपोषैःस्यात्सुवीरोवीरैर्वेत्वाज्यस्यहोतर्यज ॥ १० ॥ होतायक्षद्वनस्पतिमुपावस्रक्षद्धियोजोष्टारंशशमंनरः ॥ स्वदान्स्वधितिर्ऋतुथाद्यदेवोदेवेभ्योहव्यवाड्वेत्वाज्यस्यहोतर्यज ॥ ११ ॥ अजैदग्निरसनद्वाजंनिदेवोदेवेभ्योहव्यवाट्प्रांजोभिर्हिन्वानोधेनाभिःकल्पमानोयज्ञस्यायुःप्रतिरन्नुपप्रेष्यहोतर्हव्यादेवेभ्यः ॥ १२ ॥ होतायक्षदग्निंस्वाहाज्यस्यस्वाहामेदसःस्वाहास्तोकानांस्वाहास्वाहाकृतीनांस्वाहाहव्यसूक्तीनां ॥ स्वाहादेवाआज्यपाजुषाणाअग्नआज्यस्यव्यंतुहोतर्यज ॥ १३ ॥ इतिप्रयाजप्रैषः ॥ ॥ होतायक्षदग्निमाज्यस्यजुषतांहविर्होतर्यज

॥ १४ ॥ होतायक्षत्सोममाज्यस्यजुषतांहविर्होतर्यज ॥ १५ ॥ होतायक्षदग्नीषोमौछागस्यवपायामेदसोजुषेतांहविर्होतर्यज ॥ १६ ॥ होतायक्षदग्नीषोमौपुरोळाशस्यजुषेतांहविर्होतर्यज ॥ १७ ॥ होतायक्षदग्निंपुरोळाशस्यजुषतांहविर्होतर्यज ॥ १८ ॥ होतायक्षदग्नीषोमौछागस्यहविषआत्तामद्यमध्यतोमेदउद्भृतंपुराद्वेषोभ्यःपुरापौरुषेय्यागृभः ॥ घस्तान्नूनंघासेअज्राणांयवसप्रथमानांसुमत्क्षराणांशतरुद्रियाणामग्निष्वात्तानांपीवोपवसनानांपार्श्वतःश्रोणितःशितामतउत्सादतोंगादंगादवत्तानांकरतएवाग्नीषोमौजुषेतांहविर्होतर्यज ॥ १९ ॥ देवेभ्योवनस्पतेहवींषिहिरण्यपर्णप्रदिवस्तेअर्थं ॥ प्रदक्षिणिद्रशनयानियूयकृतस्यवक्षिपथिभीरजिष्ठैः ॥ होतायक्षद्वनस्पतिमभिहिपिष्टतमयारभिष्टयारशनयाधित ॥ यत्राग्नेराज्यस्यहविषःप्रियाधामानियत्रसोमस्याज्यस्यहविषःप्रियाधामानियत्राग्नीषोमयोश्छागस्यहविषःप्रियाधामानियत्रवनस्पतेःप्रियापाथांसियत्रदेवानामाज्यपानांप्रियाधामानियत्राग्नेर्होतुःप्रियाधामानितत्रैतंप्रस्तुत्येवोपस्तुत्येवोपावस्त्रक्षद्रभीयांसमिवकृत्वीकरदेवंदेवोवनस्पतिर्जुषतांहविर्होतर्यज ॥ २० ॥ वनस्पतेरशनयानियूयपिष्टतमयावयुनानिविद्वान् ॥ वहदेवत्रादिधिषोहवींषिप्रचदातामममृतेषुवोचः ॥ होतायक्षदग्निंस्विष्टकृतमयाळग्निरग्नेराज्यस्यहविषःप्रियाधामान्ययाट्सोमस्याज्यस्यहविषःप्रियाधामान्ययाळग्नीषोमयोश्छागस्यहविषःप्रियाधामान्ययाड्वनस्पतेःप्रियापाथांस्ययाड्देवानामाज्यपानांप्रियाधामानियक्षदग्नेर्होतुःप्रियाधामानियक्षत्स्वंमहिमानमायजतामेज्याइषःकृणोतुसोअध्वरा

जातवेदाजुषतांहविर्होतर्यज ॥ २१ ॥ इतिपाशुकप्रैषाः ॥ ॥ अथानुयाजप्रैषाः ॥ देवंबर्हिःसुदेवंदेवैःस्यात्सुवीरंवीरैर्वस्तोर्वृज्येताक्तोःप्रभ्रियेतात्यन्यान्रायावर्हिष्मतोमदेमवसुवनेवसुधेयस्यवेतुयज ॥२२॥ देवीर्द्वारःसंघातेविड्वीर्यामंछिथिराध्रुवादेवहूतौवत्सईमेनास्तरुणआमिमीयात्कुमारोवावनजातौमैनाअर्वारेणुककाटःपृणग्वसुवनेवसुधेयस्यव्यंतुयज ॥ २३ ॥ देवीउषासानक्ताद्यास्मिन्यज्ञेप्रयत्यह्वेतामपिनूनंदैवीर्विंशःप्रायासिष्टांसुप्रीतेसुधितेवसुवनेवसुधेयस्यवीतांयज ॥ २४ ॥ देवीजोष्ट्रीवसुधितीययोरन्याघाद्वेषांसियुयवदान्यावक्षद्वसुवार्याणियजमानायवसुवनेवसुधेयस्यवीतांयज ॥ २५ ॥ देवीऊर्जाहुतीइषमूर्जमन्यावक्षत्सग्धिंसपीतिमन्यानवेनपूर्वंदयमानास्यामपुराणेननवंतामूर्जमूर्जाहुतीऊर्जयमानेअधातांवसुवनेवसुधेयस्यवीतांयज ॥ २६ ॥ देवादैव्याहोतारापोतारानेष्टाराहताघशंतावाभरद्वसुवनेवसुधेयस्यवीतांयज ॥ २७ ॥ देवीस्तिस्रस्तिस्रोदेवीरिळासरस्वतीभारतीद्यांभारत्यादित्यैरस्पृक्षत्सरस्वतीमंरुद्रैर्यज्ञमावीदिहैवेळयावसुमत्यासधमादंमदेमवसुवनेवसुधेयस्यव्यंतुयज ॥ २८ ॥ देवोनराशंसस्त्रिशीर्षाषळक्षःशतमिदेनंशितिपृष्ठाआदधतिसहस्रमींप्रवहंतिमित्रावरुणेदस्युहोत्रमर्हतोबृहस्पतिस्तोत्रमश्विनाध्वर्यवंवसुवनेवसुधेयस्यवेतुयज ॥ २९ ॥ देवोवनस्पतिर्वर्षप्रावाघृतनिर्णिक्द्यामग्रेणास्पृक्षदांतरिक्षंमध्येनाप्राःपृथिवीमपरेणादृंहीद्वसुवनेवसुधेयस्यवेतुयज ॥ ३० ॥ देवंबर्हिर्वारितीनांनिधेधासिप्रच्युतीनामप्रच्युतंनिकामधरणंपुरुस्पार्हंयशस्वदेनांबर्हिन्याबर्हींष्यभिष्यामवसुवनेवसुधेयस्य

वेतुयज ॥ ३१ ॥ देवोअग्निःस्विष्टकृत्सुद्रविणामंद्रःकविःसत्यमन्मायजीहोताहोतुर्होतुरायजीयानग्नेयांदेवायनयाज्याँ अपिप्रेर्यैतेहोत्रेअमत्सततांससनुर्षीहोत्रांदेवंगमांदिविदेवेषुयज्ञमेरयेमंस्विष्टकृच्चाग्नेहोताभूर्वसुवनेवसुधेयस्यनमोवाकेवी हियज॥ ३२॥ ॥ अथसूक्तवाकप्रैषः॥ अग्निमद्यहोतारमवृणीतायंयजमानःपचन्पक्तीःपचन्पुरोळाशंगृह्णन्नग्नयआज्यं गृह्णन्त्सोमायाज्यंबध्नन्नग्नीषोमाभ्यांछागंसूपस्थाअद्यदेवोवनस्पतिरभवदग्नयआज्येनसोमायाज्येनाग्नीषोमाभ्यांछागेना घस्तंतंमेदस्तःप्रतिपचताग्रभीष्टामवीवृधेतांपुरोळाशेनत्वामद्यर्षआर्षेयऋषीणांनपादवृणीतायंयजमानोबहुभ्यआसंगथे भ्यः ॥ एषमेदेवेषुवार्यादक्ष्यतइतितायादेवादेवदानान्यदुस्तान्यस्माआचशास्वाचगुरस्वेषितश्चहोतरसिभद्रवाच्यायप्रे षितोमानुषःसूक्तवाकायसूक्ताब्रू ३ हि॥ ३३॥ ॥ अथसुत्यायांसवनीयप्रैषाः ॥ होतायक्षदग्निंछागस्यवपायामेदसो जुषतांहविर्होतर्यज ॥ ३४ ॥ होतायक्षदिंद्रंहरिवाँइंद्रोधानाअत्तुपूषण्वान्करंभंसरस्वतीवान्भारतीवान्परिवापइंद्रस्या पूपः ॥ मित्रावरुणयोःपयस्याप्रातःप्रातःसावस्यपुरोळाशाँइंद्रःप्रस्थितांजुषाणोवेतुहोतर्यज ॥ ३५ ॥ होतायक्षदग्निंपु रोळाशानांजुषतांहविर्होतर्यज ॥३६॥ होतायक्षद्वायुमग्रेगामग्रेयावाणमग्रेसोमस्यपातारंकरदेवंवायुरावसागमज्जुषतां वेतुपिबतुसोमंहोतर्यज ॥ ३७ ॥ होतायक्षदिंद्रवायूअर्हताहार्णांगव्याभिर्गोमंताश्रियंतांवीरयाशुक्रयाएनयोर्नियुतोगो अग्रावीरोपशाश्वपुरस्त्यास्तासामिहप्रयाणमस्त्विहविमोचनंकरतएवेंद्रवायूजुषेतांवीतांपिबतांसोमंहोतर्यज ॥ ३८ ॥

होतायक्षन्मित्रावरुणासुक्षत्रारिशादसानिचिन्मिषंतानिचिरानिचिर्यांसाक्ष्णश्चिद्गातुवित्तरानुल्वणेनचक्षसऋतमृतमि
तिदीध्यानाकरतएवंमित्रावरुणाजुषेतांवीतांपिबतांसोमंहोतर्यज ॥३९॥ होतायक्षदश्विनानासत्यादीद्यग्नीरुद्रवर्तिनी
न्यतरेणचक्रेणवामीरिषऽऊर्जांवहतंसुवीराः सन्नुतरेणाररुषोबाधेतांमधुकशयेमंयज्ञंयुवानामिमिक्षतांकरतएवाश्विना
जुषेतांपिबतांवीतांसोमंहोतर्यज ॥ ४० ॥ होतायक्षदिंद्रंप्रातःप्रातःसावस्यार्वावतोगमदापरावतओरोरंतरिक्षादास्वात्स
धस्थादिमेअस्मैशुक्रामधुश्चुतःप्रस्थिताइंद्रायसोमास्तांजुषतांवेतुपिबतुसोमंहोतर्यज ॥ ४१ ॥ होतायक्षदिंद्रंहोत्रात्सजूर्दि
वआपृथिव्याऋतुनासोमंपिबतुहोतर्यज ॥४२॥ होतायक्षन्मरुतःपोत्रात्सुष्टुभःस्वर्काऋतुनासोमंपिबतुपोतर्यज ॥४३॥
होतायक्षद्ग्रावोनेष्ट्रात्त्वष्टासुजनिमासजूर्देवानांपत्नीभिर्ऋतुनासोमंपिबतुनेष्टर्यज ॥ ४४ ॥ होतायक्षदग्निमाग्नीध्रादृतुना
सोमंपिबत्वग्नीद्यज ॥ ४५ ॥ होतायक्षदिंद्रोब्रह्माब्राह्मणादृतुनासोमंपिबतुब्रह्मन्यज ॥ ४६ ॥ होतायक्षन्मित्रावरुणौ
प्रशास्तारौप्रशास्त्रादृतुनासोमंपिबतांप्रशास्तर्यज ॥४७॥ होतायक्षद्देवंद्रविणोदांहोत्रादृतुभिःसोमंपिबतुहोतर्यज॥४८॥
होतायक्षद्देवंद्रविणोदांपोत्रादृतुभिःसोमंपिबतुपोतर्यज ॥ ४९ ॥ होतायक्षद्देवंद्रविणोदांनेष्ट्रादृतुभिःसोमंपिबतुनेष्टर्यज
॥ ५० ॥ होतायक्षद्देवंद्रविणोदामपाद्धोत्रादपात्पोत्रादपान्नेष्ट्रात्तुरीयंपात्रममृक्तममर्त्यमिंद्रपानंदेवोद्रविणोदाद्राविणो
दसःस्वयमायूयाःस्वयमभिगूर्याःस्वयमभिगूर्याहोत्रंयज्ञऋतुभिःसोमस्यपिबत्वच्छावाकयज ॥ ५१ ॥ होतायक्षदश्विना

ध्वर्यूआध्वर्यवाहतुनासोमंपिवतामध्वर्यूयजतं ॥ ५२ ॥ होतायक्षदग्निंगृहपतिंगार्हपत्यात्सुगृहपतिस्त्वयाग्नेयंसुन्वन्यज मानस्यात्सुगृहपतिस्त्वमनेनसुन्वतायजमानेनाग्निर्गृहपतिर्गार्हपत्याहतुनासोमंपिबतुगृहपतेयज ॥ ५३ ॥ होतायक्षद ग्निंपुरोळाशस्यजुषतांहविर्होतर्यज ॥ ५४ ॥ होतायक्षदिंद्रंहरिवाँइंद्रोधानाअत्तुपूषण्वान्करंभंसरस्वतीवान्भारतीवान्प रिवापइंद्रस्यापूपः ॥ माध्यंदिनस्यसवनस्यपुरोळाशाँइंद्रःप्रस्थितांजुषाणोवेतुहोतर्यज ॥ ५५ ॥ होतायक्षदग्निंपुरोळाशा नांजुषतांहविर्होतर्यज ॥ ५६ ॥ होतायक्षदिंद्रंमाध्यंदिनस्यसवनस्यनिष्केवल्यस्यभागस्यात्तारंपातारंश्रोतारंहवमागंता रमस्याधियोवितारंसुन्वतोयजमानस्यवृधं ॥ ओभाकुक्षीपृणतांवार्त्रघ्नंचमाघोनंचेमेअस्मैशुक्रामधुश्चुतःप्रस्थिताइंद्रायसो मास्तांजुषतांवेतुपिबतुसोमंहोतर्यज ॥ ५७ ॥ होतायक्षदिन्द्रंमरुत्वंतमिंद्रोमरुत्वान्जुषतांवेतुपिबतुसोमंहोतर्यज ॥ ५८ ॥ होतायक्षदादित्यान्प्रियान्प्रियधाम्नःप्रियव्रतान्महस्वसरस्यपतीनुरोरंतरिक्षस्याध्यक्षान्त्स्वादित्यानवोदधतस्मैसुन्वतेय जमानायकरन्नेवमादित्याजुषंतांमदंतांव्यंतुपिबंतुसोमंहोतर्यज ॥ ५९ ॥ होतायक्षदग्निंछागस्यहविषआददद्यमध्यतोमे दउद्भृतंपुराद्वेषोभ्यःपुरापौरुषेय्यागृभः ॥ घसन्नूनंघासेअज्राणांयवसप्रथमानांसुमत्क्षराणांशतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानांपार्श्वतःश्रोणितःशितामतउत्सादतोंगादंगादवत्तानांकरदेवाग्निर्जुषतांहविर्होतर्यज ॥ ६० ॥ (होताय क्षद्वनस्पतिमभिहिपिष्टतमयारभिष्टयारशनयाधित ॥ यत्राग्नेराज्यस्यहविषःप्रियाधामानियत्रसोमस्याज्यस्यहविषःप्रि

याधामानियत्राग्नेश्छागस्यहविषःप्रियाधामानियत्रवनस्पतेःप्रियापाथांसियत्रदेवानामाज्यपानांप्रियाधामानियत्राग्नेर्होतुःप्रियाधामानितत्रैतंप्रस्तुह्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिवकृत्वीकरदेवंदेवोवनस्पतिर्जुषतांहविर्होतर्यज ॥ होतायक्षदग्निंस्विष्टकृतमयाळग्निरग्नेराज्यस्यहविषःप्रियाधामान्ययाट्सोमस्याज्यस्यहविषःप्रियाधामान्ययाळग्नेश्छागस्यहविषःप्रियाधामान्ययाड्वनस्पतेःप्रियापाथांस्ययाट्देवानामाज्यपानांप्रियाधामानियक्षदग्नेर्होतुःप्रियाधामानियक्षत्स्वंमहिमानमायजतामेज्याऽइषकृणोतुसोऽअध्वराजातवेदाजुषतांहविर्होतर्यज) ॥ होतायक्षदिंद्रंहरिवांऽइंद्रोधानाअत्तुपूषण्वान्करंभंसरस्वतीवान्भारतीवान्परिवापइंद्रस्यापूपः ॥ तृतीयस्यसवनस्यपुरोळशाँइंद्रःप्रस्थितांजुषाणोवेतुहोतर्यज॥ ६१॥ होतायक्षदग्निंपुरोळाशानांजुषतांहविर्होतर्यज ॥ ६२ ॥ होतायक्षदिंद्रंतृतीयस्यसवनस्यऋभुमतोविभुमतोवाजवतोबृहस्पतिवतोविश्वदेव्यावतःसमस्यमदाःप्रातस्तनाअग्मतसंमाध्यंदिनाः समिदातनास्तेषांसमुक्षितानांगौरइवप्रगाह्यावृषायस्वायूयाबाहुभ्यामुपयाहिहरिभ्यांप्रप्रुथ्याशिप्रेनिष्पृथ्यऋजीषमिमेअस्मैतीव्राआशीर्वतःप्रस्थिताइंद्रायसोमास्तांजुषतांवेतुपिबतुसोमंहोतर्यज ॥ ६३ ॥ होतायक्षद्देवंसवितारंपराभीवांसाविषत्पराघशंसंसुसावित्रमासाविषदस्मैसुन्वतेयजमानायकरदेवंदेवःसविताजुषतांमदतांवेतुपिबतुसोमंहोतर्यज ॥ ६४ ॥ अग्निमद्यहोतारमवृणीतायंसुन्वन्यजमानःपचन्पक्तीःपचन्पुरोळाशान्गृह्णन्नग्नयऽआज्यंगृह्णन्त्सोमायाज्यंबध्नन्नग्नयेछागंसुन्वन्निंद्रायसोमंभृंजन्हरिभ्यांधानाःसूपस्था

वाशास्तैयातेधामानिहविषायजंतीत्यन्वाहंताते विश्वापरिभूरस्तुयज्ञं । गयस्फानःप्रतरणःसुवीरइतिंगवांनस्फावयि
तांप्रतारयितैधीत्येवतदाहांवीरहाप्रचरासोमदुर्यानितिंगृहावैदुर्याबिभ्यतिवैसोमाद्राज्ञआयतोयजमानस्यगृहाःसयदे
तामन्वाहंशांत्यैवैनंतच्छमयतिंसोस्यशांतोनप्रजांनपशून्हिनस्तींमांचिभ्यंशिक्षमाणस्यदेवेतिंवारुण्यापरिदधातिंवरुणदे
वत्योवाएषंतावद्यावदुपनद्धोयावत्परिश्रितानिप्रपद्यतेंस्वयैवैनंतदेवतयांस्वेनच्छंदसासमर्धयतिंशिक्षमाणस्यदेवेतिंशि
क्षतेवाएषयोयजतैंक्रतुंदक्षंवरुणसंशिशाधीतिंवीर्यंप्रज्ञानंवरुणसंशिशाधीत्येवतदाहंययातिविश्वादुरितातरेमसुतर्मा
णमधिनावंरुहेमेतिंयज्ञोवैसुतर्मानौःकृष्णाजिनंवैसुतर्मानौर्वाग्वैसुतर्मानौर्वाचमेवतदारुह्यतयास्वर्गंलोकमभिसंतरतिं
ताएताअष्टावन्वाहरूपसमृद्धांएतद्वैयज्ञस्यसमृद्धंयद्रूपसमृद्धंयत्कर्मक्रियमाणमृगभिवदतिंतासांत्रिःप्रथमामन्वाहत्रि
रुत्तमांताद्वादशसंपद्यंतेंद्वादशवैमासाःसंवत्सरःसंवत्सरःप्रजापतिःप्रजापत्यायतनाभिरेवाभीराध्नोतियएवंवेदंत्रिःप्रथ
मांत्रिरुत्तमामन्वाहंयज्ञस्यैवतद्बर्सौनह्यतिंस्थेम्नेबलायाविस्रंसाय ॥ १३ ॥ अन्यतरोनड्वान्युक्तःस्यादन्यतरोविमुक्तो
ऽथराजानमुपावहरेयुर्यदुभयोर्विमुक्तयोरुपावहरेयुःपितृदेवत्यंराजानंकुर्युर्यद्युक्तयोरयोगक्षेमःप्रजाविंदेत्ताःप्रजाःपरि
प्लवेरंन्योनड्वान्विमुक्तंस्तच्छालासदांप्रजानांरूपंयोयुक्तस्तच्चक्रियाणांतेयेयुक्तेन्येविमुक्तेऽन्यउपावहरंत्युभावेवतेक्षेमयो
गौकल्पयंतिंदेवासुरावाएषुलोकेषुसमयतंततएतस्यांप्राच्यांदिश्ययतंततांस्ततोसुराअजयंस्तेदक्षिणस्यांदिश्ययतंततां

स्ततोसुराअजयँस्तेप्रतीच्यांदिश्ययतंतंतांस्ततोसुराऽअजयँस्तउदीच्यांदिश्ययतंतंतांस्ततोसुराअजयँस्तउदीच्यांप्राच्यां
दिश्ययतंतंतेततोनपराजयंतंसैषादिगपराजितातस्मादेतस्यांदिशियतेतवायातयेद्वैश्वरोहानृणाकर्तौस्तेदेवाअब्रुवन्नरा
जतयावैनोजयंतिराजानंकरवामहाइतितथेतितेसोमंराजानमकुर्वँस्तेसोमेनराज्ञासर्वादिशोजयंन्नेषवैसोमराजायोयज
तेप्राचितिष्ठत्याद धतितेनप्राचींदिशंजयतितंदक्षिणापरिवहंतितेनदक्षिणांदिशंजयतितंप्रत्यंचसावर्तयंतितेनप्रतीचींदि
शंजयतितमुदीचस्तिष्ठतउपावहरंतितेनोदीचींदिशंजयतिसोमेनराज्ञासर्वादिशोंजयतियएवंवेद ॥ १४ ॥ हविराति
थ्यंनिरुप्यतेसोमेराजन्यागतेसोमोवैराजायजमानस्यगृहानागच्छतितस्माएतद्धविरातिथ्यंनिरुप्यतेतदातिथ्यस्याति
थ्यत्वंनवकपालोभवतिनववैप्राणाःप्राणानांक्लृप्त्यैप्रणानांप्रतिप्रज्ञात्यैवैष्णवोभवतिविष्णुर्वैयज्ञःस्वयैवैनंतद्देवतयांस्वे
नच्छंदसासमर्धयतिसर्वाणिवावच्छंदांसिचपृष्ठानिचंसोमंराजानंक्रीतमन्वायंतियावंतःखलुवैराजानमनुयंतितेभ्यःस
र्वेभ्यऽआतिथ्यंक्रियतेग्निंमंथंतिसोमेराजन्यागतेतद्यथैवादोमनुष्यराजऽआगतेन्यस्मिन्वार्हत्युक्षाणंवावेहतंवाक्षदंतंऽ
एवमेवास्माऽएतत्क्षदंतेयदग्निंमंथंत्यग्निर्हिदेवानांपशुः ॥ १५ ॥ अग्नयेमथ्यमानायानुब्रूहीत्याहाध्वर्युरभित्वादेवसवि
तरितिसावित्रीमन्वाहतदाहुर्यदग्नयेमथ्यमानायानुवाचाहाथकस्मात्सावित्रीमन्वाहेतिसविता वैप्रसवानामीशेसवितृप्र
सूताएवैनंतन्मंथंतितस्मात्सावित्रीमन्वाहमहीद्यौःपृथिवीचनइतिद्यावापृथिवीयामन्वाहतदाहुर्यदग्नयेमथ्यमानायानु

वाचाहांथकस्माद्द्यावापृथिवीयामन्वाहेतिंद्यावापृथिवीभ्यांवाएतंजातंदेवाःपर्यगृह्णंस्ताभ्यामेवाद्यापिपरिगृहीतंस्तस्मा
द्द्यावापृथिवीयामन्वाहंत्वामग्नेपुष्करादधीतिंतृचमाग्नेयंगायत्रमन्वाहांग्नौमथ्यमानेंस्वयैवैनंतद्देवतयांस्वेनच्छंदसासम
र्धयत्यंथर्वानिरमंथतेतिरूपसमृद्धंमेतद्वैयज्ञस्यसमृद्धंयद्रूपसमृद्धंयत्कर्मक्रियमाणमृगभिवदतिंसयदिनजायेतंयदिचिरं
जायेतंराक्षोघ्न्योगायत्र्योनूच्यांअग्नेहंसिन्यत्रिणमित्येतारक्षसामपहत्यैरक्षांसिवाएनंतर्ह्यालभंतेंयर्हिनजायतेयर्हिचिरं
जायतेंसयद्येकस्यामेवानूक्तायांजायेतंयदिद्वयोरथोतब्रुवंतुजंतवइतिंजातायजातवतीमभिरूपामनुब्रूयांद्यद्यज्ञेभिरूपंत
त्समृद्धंमायंहस्तेनखादिनमितिंहस्ताभ्यांह्येनंमंथंतिंशिशुंजातमितिंशिशुरिववाएषप्रथमजातोंयदग्निर्नबिभ्रतिंविशाम
ग्निंस्वध्वरमितियद्वैदेवानांनेतिंतदेषामो ३ मितिंप्रदेवंदेववीतयेंभरतावसुवित्तममितिंप्रह्रियमाणायाभिरूपांयद्यज्ञेभि
रूपंतत्समृद्धंमास्वेयोनौनिषीदत्वित्यैंषहवाऽअस्यस्वोयोनिर्यदग्निरग्नेराजातंजातवेदसीतिंजातइतरोजातवेदाइतरंःप्रि
यंशिशीतातिथिमित्यैंषहवाअस्यप्रियोतिथिर्यंदग्निरग्नेःस्योनआगृहपतिमितिंशांत्यामेवैनंतद्दधात्यंग्निनाग्निःसमिध्यतें
कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यइत्यभिरूपांयद्यज्ञेभिरूपंतत्समृद्धंत्वंह्यग्नेअग्निनांविप्रोविप्रेणसन्त्सतेतिंविप्रइत
रोविप्रइतरंःसन्नितरःसन्नितरंःसखासख्यासमिध्यसइत्यैंषहवाअस्यस्वःसखांयदग्निरग्नेस्तंमर्जयंतसुक्रतुंपुरोयावानमा
जिषु ॥ स्वेषुक्षयेषुवाजिनमित्यैंषहवाअस्यस्वःक्षयोंयदग्निरग्नेर्यज्ञेनयज्ञमयजंतदेवांइत्युत्तमयापरिदधातिंयज्ञेनवैतद्दे

वायज्ञमयजंतंयदग्निनाग्निमयजंतंतेस्वर्गंलोकमायँस्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतंयत्रपूर्वेसा
ध्याःसंतिदेवाइतिच्छंदांसिवैसाध्यादेवास्तेग्रेग्निनाग्निमयजंतंतेस्वर्गंलोकमायन्नादित्याश्चैवेहासन्नंगिरसश्चंतेग्रेग्निनाग्नि
मयजंतंतेस्वर्गंलोकमायंन्त्सैषास्वर्ग्याहुतिर्यदग्न्याहुतिर्यदिहवाअप्यब्राह्मणोक्तोयदिदुरुक्तोक्तोयजतेथहैषाहुतिर्गच्छत्ये
वदेवान्नपाप्मनासंसृज्यतेगच्छत्यस्याहुतिर्देवान्नास्याहुतिःपाप्मनासंसृज्यतेयएवंवेदंताएतास्त्रयोदशान्वाहरूपसमृद्धा
एतद्वैयज्ञस्यसमृद्धंयद्रूपसमृद्धंयत्कर्मक्रियमाणमृगभिवदतितासांत्रिःप्रथमामन्वाहत्रिरुत्तमांताःसप्तदशसंपद्यंतेसप्तद
शोवैप्रजापतिर्द्वादशमासाःपंचर्तवस्तावान्त्संवत्सरःसंवत्सरःप्रजापतिःप्रजापत्यायतनाभिरेवाभीराध्नोतियएवंवेदंत्रिः
प्रथमांत्रिरुत्तमामन्वाहयज्ञस्यैवतद्बर्सौनह्यातिस्थेम्नेबलायाविस्रंसाय ॥ १६ ॥ समिधाग्निंदुवस्यताप्यायस्वसमेतुतइ
त्याज्यभागयोःपुरोनुवाक्येभवतंआतिथ्यवत्यौरूपसमृद्धेएतद्वैयज्ञस्यसमृद्धंयद्रूपसमृद्धंयत्कर्मक्रियमाणमृगभिवदति
सैषाग्नेय्यतिथिमतीनसौम्यातिथिमत्यास्तियत्सौम्यातिथिमतीस्याच्छश्वत्सास्यादेतत्त्वेवैषातिथिमतीयदापीनवतीयदा
वाअतिथिंपरिवेविषत्यापीनइववैसतर्हिभवतितयोर्जुषाणेनैवयजतीदंविष्णुर्विचक्रमेतदस्यप्रियमभिपाथोअश्यामिति
वैष्णव्यौत्रिपदामनूच्यचतुष्पदयायजतिसप्तपदानिभवंतिशिरोवाएतद्यज्ञस्ययदातिथ्यंसप्तवैशीर्षन्प्राणाःशीर्षन्नेवत
त्प्राणान्दधातिहोतारंचित्ररथमध्वरस्यप्रप्रायमग्निर्भरतस्यशृण्वइतिस्विष्टकृतःसंयाज्येभवतंआतिथ्यवत्यौरूपसमृद्धेए

तद्धैयज्ञस्यसमृद्धंयद्रूपसमृद्धंयत्कर्मक्रियमाणमृगभिवदतित्रिष्टुभौभवतःसेंद्रियत्वायैळांतंभवतीळांतेनवांएतेनदेवाअ
राध्नुवन्यदातिथ्यँतस्मादिळांतमेवकर्तव्यँप्रयाजानेवात्रयजंतिनानुयाजांन्प्राणावैप्रयाजानुयाजास्तैंयइमेशीर्षन्प्राणा
स्तेप्रयाजांयेवांचस्तेनुयाजांःसयोत्रानुयाजान्यजेद्यथेमान्प्राणानालुप्यशीर्षंधित्सेत्ताद्दक्तदतिरिक्तंतत्समुवाइमेप्राणांवि
द्रेयेचेमेयेचेमेंतद्यदेवात्रप्रयाजान्यजंतिनानुयाजांस्तत्रसकामंउपाप्तोयोनुयाजेषुयोनुयाजेषु ॥ १७ ॥ ॥ इतिप्रथम
पंचिकायांतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥ ॥

यज्ञोवैदेवेभ्यउदक्रामंन्नवोहमन्नंभविष्यामीतिंनेतिदेवाअब्रुवंन्नन्नमेवनोभविष्यसीतितंदेवाविमेथिरेसहैभ्योविहृतो
नप्रबभूवंतेहोचुर्देवानवैनइत्थंविहृतोलंभविष्यतिहंतेमंयज्ञंसंभरामेतितथेतितंसंजभ्रुस्तंसंभृत्योचुरंश्विनाविमंभिषज्य
तमित्यंश्विनौवैदेवानांभिषजांवश्विनावध्वर्यूतस्मादध्वर्यूघर्मंसंभरतंस्तंसंभृत्याहतुर्ब्रह्मन्प्रवर्ग्येणप्रचरिष्यामोंहोतरभि
ष्टुहीति ॥ १८ ॥ ब्रह्मजज्ञानंप्रथमंपुरस्तादितिप्रतिपद्यतेंब्रह्मवैबृहस्पतिर्ब्रह्मणैवैनंतद्भिषज्यतींयंपित्रेराष्ट्र्येत्यग्रइति
वाग्वैराष्ट्रींवाचमेवास्मिंस्तद्दधातिंमहान्महीअस्तभायद्विजातंइतिब्राह्मणस्पत्यांब्रह्मवैबृहस्पतिर्ब्रह्मणैवैनंतद्भिषज्यत्यं
भित्यंदेवंसवितारमोण्योरितिसावित्रींप्राणोवैसवितांप्राणमेवास्मिंस्तद्दधातिंसंसीदस्वमहाँअसींत्येवैनंसमसादयन्नंजंति



१ ‘ब्रह्म३न्प्रवर्ग्येण’ इतिप्लुतोच्चारणमिष्टमत्रभाष्ये ।

यंप्रथयंतोनविप्राइत्यंज्यमानायाभिरूपांयद्यज्ञेभिरूपंतत्समृद्धंपतंगमक्तमसुरस्यमाययांयोनःसनुत्योअभिदासदन्नेभ
वानोअग्नेसुमनाउपेतावितिंद्वेद्वेअभिरूपेयद्यज्ञेभिरूपंतत्समृद्धंकृणुष्वपाजःप्रसितिंनपृथ्वीमितिंपंचराक्षोघ्न्यौरक्षसाम
पहत्यैपरित्वागिर्वणोगिरोधिद्वयोरदधाउक्थ्यंवचःशुक्रंतेअन्यद्यजतंतेअन्यंदपश्यंगोपामनिपद्यमानमितिंचतस्रएकपा
तिन्यंस्ताएकविंशतिर्भवंत्येकविंशोयंपुरुषोदशहस्त्याअंगुलयोदशपाद्याऽआत्मैकविंशस्तमिममात्मानमेकविंशंसंस्कुरु
ते ॥ १९ ॥ स्त्रक्केद्रप्सस्यधमतःसमस्वरन्निर्तिनवपावमान्योनववैप्राणाःप्राणानेवास्मिंस्तद्दधात्यंयंवेनश्चोदयत्पृश्निग
र्भाइत्यंयंवैवेनोस्माद्वाऊर्ध्वाअन्येप्राणांवेनंत्यवांचोन्येतस्माद्वेनःप्राणोवाअयंसंनाभेरितिंतस्मान्नाभिस्तन्नाभेर्नाभित्वं
प्राणमेवास्मिंस्तद्दधातिपवित्रंतेविततंब्रह्मणस्पतेतपोष्पवित्रंविततंदिवस्पदेवियत्पवित्रंधिषणाअतन्वतेतिंपूतवंतःप्रा
णास्तइमेवांचोरेतस्योमूत्र्यःपुरीष्यइत्येतानेवास्मिंस्तद्दधाति ॥ २० ॥ गणानांत्वागणपतिंहवामहइतिब्राह्मणस्पत्यंब्र
ह्मवैबृहस्पतिर्ब्रह्मणैवैनंतद्भिषज्यतिंप्रथश्चयस्यसप्रथश्चनामेतिघर्मंतन्वःसतनुमेवैनंतत्सरूपंकरोतिरथंतरमाजभाराव
सिष्ठः॥भरद्वाजोबृहदाचक्रेअग्नेरितिंबृहद्रथंतरवंतमेवैनंतत्करोत्यंपश्यंत्वामनसाचेकितानमितिंप्रजावान्प्राजापत्यंः
प्रजामेवास्मिंस्तद्दधातिंकाराधद्धोत्राश्विनावामितिंनवविच्छंदसंस्तदेतद्यज्ञस्यांतस्त्यंविक्षुद्रमिववाअंतस्त्यमंणीयइवच

---

१ यद्यप्यत्रभाष्ये'पुरीष्या'इतिदृश्यते तथापि पुरीषायहितःपुरीष्यइतिव्युत्पत्त्यामूलपाठएवसुवचः।

स्थवीयइवचंतस्मादेताविच्छंदसोभवँत्येताभिर्हाश्विनोःकक्षीवान्प्रियंधामोपागच्छंत्सपरमंलोकमजयंदुपाश्विनोःप्रियं
धामगच्छतिंजयतिपरमंलोकंयएवंवेदाभात्यग्निरुषसामनीकमितिसूक्तँपीपिवांसमश्विनाघर्ममच्छेत्यभिरूपँयद्यज्ञेभि
रूपंतत्समृद्धँतदुत्रैष्टुभंवीर्यंवैत्रिष्टुब्वीर्यमेवास्मिंस्तद्दधातिग्रावाणेवतदिदर्थंजरेथेइतिसूक्तंमक्षीइवकर्णाविवनासेवैत्यंग
समाख्यायमेवास्मिंस्तादिंद्रियाणिदधातितदुत्रैष्टुभंवीर्यंवैत्रिष्टुब्वीर्यमेवास्मिंस्तद्दधातीळेद्यावापृथिवीपूर्वचित्तयइतिसू
क्तंमग्निंघर्मंसुरुचंयामन्निष्टयइत्यभिरूपँयद्यज्ञेभिरूपंतत्समृद्धँतदुजागतंजागतावैपशवःपशूनेवास्मिंस्तद्दधातियाभिर
मुमावतंयाभिरमुमावतमित्येतावतोहात्राश्विनौकामान्ददृशतुंस्तानेवास्मिंस्तद्दधातितैरेवैनंतत्समर्धयत्यरूरुचदुषसः
पृश्निरग्रियइतिरुचितवतीरुचमेवास्मिंस्तद्दधातिद्युभिरक्तुभिःपरिपातमस्मानित्युत्तमयापरिदधात्यरिष्टेभिरश्विनासौ
भगेभिः ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौरित्येतैरेवैनंतत्कामैःसमर्धयतीतिनुपूर्वपटलं ॥२१॥
अथोत्तरमुपह्वयेसुदुघांधेनुमेतांहिङ्कृण्वतीवसुपत्नीवसूनामभित्वादेवसवितःसमीवत्संनमातृभिःसंवत्सइवमातृभिर्यस्ते
स्तनःशशयोयोमयोभूर्गौरमीमेदनुवत्संमिषंतंनमसेदुपसीदतंसंजानानाउपसीदन्नभिज्ञ्वादशभिर्विवस्वंतोदुहंतिसप्तै
कांसमिद्धोअग्निरश्विनासमिद्धोअग्निर्वृषणारतिर्दिवस्तदुप्रयक्षतममस्यकर्मातंमन्वन्नभोदुह्यतेघृतंपयंउत्तिष्ठब्रह्मणस्पते
ऽधुक्षत्पिप्युषीमिषमुपद्रवपयसागोधुगोषमासुतेसिंचतश्रियंमानूनमश्विनोर्ऋषिःसमुत्येमहतीरपऽइत्येकविंशतिरभि

रूपांयद्यज्ञेभिरूपंतत्समृद्धंमुदुष्यदेवःसविताहिरण्ययेत्यनूत्तिष्ठतिंप्रैतुब्रह्मणस्पतिरित्यनुप्रैतिंगंधर्वइत्थापदमस्यरक्षती
तिंखरमवेक्षतेंनाकेसुपर्णमुपयत्पतंतमित्युपविशतिंतप्तोवांघर्मोनक्षतिस्वहोतोंभापिबतमश्विनेतिपूर्वाह्णेयजत्यंग्नेवीही
त्यनुवषट्करोतिंस्विष्टकृद्भाजनंयदुस्त्रियांस्वाहुतंघृतंपयोंऽस्यपिबतमश्विनेत्यपराह्णेयजत्यंग्नेवीहीत्यनुवषट्करोतिस्विष्टकृ
द्भाजनंत्रयाणांहवैहविषांस्विष्टकृतेनसमवद्यंतिंसोमस्यघर्मस्यवाजिनस्येतिंसयदनुवषट्करोत्यंग्नेरेवस्विष्टकृतोनंतरित्यै
विश्वाआशादक्षिणसादितिब्रह्माजपतिंस्वाहाकृतःशुचिर्देवेषुघर्मःसमुद्रादूर्मिमुदियर्तिवेनोंद्रप्सःसमुद्रमभियजिगाति
सखेसखायमभ्याववृत्स्वोर्ध्वऊषुणऊतयंऊर्ध्वोनःपाह्यंहसस्तंघेमित्थानमस्विनइत्यभिरूपांयद्यज्ञेभिरूपंतत्समृद्धंपावक
शोचेतवहिक्षयंपरींतिभक्षमाकांक्षतेंहुतंहविर्मधुहविरिंद्रतमेग्नावश्यामतेदेवघर्म ॥ मधुमतःपितुमतोंवाजवतोंगिरस्व
तोंनमस्तेअस्तुमामाहिंसीरितिंघर्मस्यभक्षयतिंश्येनोनयोनिंसदनंधियाकृतंमायस्मिन्त्सप्तवासवाइतिंसंसाद्यमानाया
न्वाहंहविर्हविष्मोमहिसद्मदैव्यमितिंयदहरुत्सादयिष्यंतोभवंतिसूयवसाद्भगवतीहिभूयाइत्युत्तमयापरिदधातिंतदेतद्दे
वमिथुनंयद्धर्मःसंयोघर्मस्तच्छिश्नंयौशफौतौशफौयोपयमनीतेश्रोणिकपालेयत्पयस्तद्रेतंस्तदिदमग्नौदेवंयोन्यांप्रजननेरे
तःसिच्यतेंग्निर्वैदेवयोनिःसोग्नेर्देवयोन्याऽआहुतिभ्यःसंभवत्यृङ्मयोयजुर्मयःसाममयोवेदमयोंब्रह्ममयोमृतमयःसंभूय
देवताअप्येतियएवंवेदंयश्चैवंविद्वानेतेनयज्ञक्रतुनायजते ॥ २२ ॥ देवासुरावाएषुलोकेषुसमयतंतंतेवाअसुराइमाने

वलोकान्पुरोकुर्वतंयथौजीयासोबलीयासएवंतेवाअयस्मयीमेवेमामकुर्वतंरजतामंतरिक्षंहरिणींदिवंतेंतथेमाँल्लोकान्पुरो
कुर्वतंतेदेवाअब्रुवन्पुरोवाइमेसुराइमाँल्लोकानक्रतंपुरइमाँल्लोकान्प्रतिकरवामहाइतितथेतिंतेसदएवास्याःप्रत्यकुर्वतांग्नी
ध्रमंतरिक्षाद्धविर्धानेदिवस्तेतथेमाँल्लोकान्पुरःप्रत्यकुर्वतंतेदेवाअब्रुवन्नुपसदउपायामौपसदावैमहापुरंजयंतीतितथेतिंते
यामेवप्रथमामुपसदमुपायँस्तयैवैनानस्माँल्लोकादनुदंतंयांद्वितीयांतयांतरिक्षाद्यांतृतीयांतयादिवस्तांस्तथैभ्योलोकेभ्यो
नुदंतंतेवाएभ्योलोकेभ्योनुत्तांअसुराऋतूनश्रयंतंतेदेवाअब्रुवंन्नुपसदएवोपायामेतितथेतिंतइमास्तिस्रःसतीरुपसदौद्वि
र्द्विरेकैकामुपायँस्ताःषट्समपद्यंतंषड्वाऋतवस्तान्वाऋतुभ्योनुदंतंतेवाऋतुभ्योनुत्ताअसुरामासानश्रयंतंतेदवाअब्रुवंन्नु
पसदएवोपायामेतितथेतिंतइमाःषट्सतीरुपसदौद्विर्द्विरेकैकामुपायँस्ताद्वादशसमपद्यंतंद्वादशवैमासांस्तान्वैमासेभ्यो
नुदंतंतेवैमासेभ्योनुत्ताअसुरांअर्धमासानश्रयंतंतेदेवाअब्रुवन्नुंपसदएवोपायामेतितथेतिंतइमाद्वादशसतीरुपसदौद्वि
र्द्विरेकैकामुपायँस्ताश्चतुर्विंशतिःसमपद्यंतंचतुर्विंशतिर्वाअर्धमासांस्तान्वाअर्धमासेभ्योनुदंतंतेवाअर्धमासेभ्योनुत्ताअ
सुरांअहोरात्रेअश्रयंतंतेदेवाअब्रुवन्नुंपसदावेवोपायामेतितथेतिंतेयामेवपूर्वाह्णउपसदमुपायँस्तयैवैनानह्नोनुदंतंयामप
राह्णेतयारात्रैस्तांस्तथोभाभ्यामहोरात्राभ्यामंतरायँस्तस्मात्सुपूर्वाह्णएवंपूर्वयोपसदाप्रचरितव्यंस्वपराह्णेपरयांतावंतमे
वतद्विषतेलोकंपरिशिनष्टि ॥२३॥ जितयोवैनामैतायदुपसदौऽसपत्नांवाएताभिर्देवाविजितिंव्यजयंतांसपत्नांविजितिं

विजयतेयएवंवेदंयान्देवाएषुलोकेषुंयामृतुषुयांमासेषुंयामर्धमासेषुयामहोरात्रयोर्विंजितिंव्यजयंतंतांविजितिंविजयते
यएवंवेदंतेदेवाअबिभयुरस्माकंविप्रेमाणमन्विदमसुराआभविष्यंतीतिंतेव्युत्क्रम्यामंत्रयंतांग्निर्वसुभिरुदक्रामदिंद्रोरु
द्रैर्वरुणआदित्यैर्बृहस्पतिर्विश्वैर्देवैस्तेतथाव्युत्क्रम्यामंत्रयंतंतेब्रुवन्हंतयाएवनइमाः प्रियतमास्तन्वस्ताअस्यवरुणस्यरा
ज्ञोगृहेसंनिदधामहैताभिरेवनःसनसंगच्छातैयोनएतदतिक्रामांद्यआलुलोभयिषादितितथेतितेवरुणस्यराज्ञोगृहेंतनूः
संन्यदधतंतेयद्वरुणस्यराज्ञोगृहेतनूःसंन्यदधतंतत्तानूनप्त्रमभवंत्तत्तानूनप्त्रस्यतानूनप्त्रत्वंतस्मादाहुर्नसतानूनप्त्रिणे
द्रोग्धव्यमितितस्माद्विदंमसुरानान्वाभवंति॥२४॥शिरोवाएतद्यज्ञस्ययदातिथ्यंग्रीवाउपसदःसमानबर्हिषीभवतःसमा
नंहिशिरोग्रीवंमिषुंवाएतांदेवाःसमस्कुर्वतयदुपसदंस्तस्याअग्निरनीकमासींत्सोमःशल्योविष्णुस्तेजनंवरुणःपर्णानिता
माज्यधन्वानोव्यसृजंस्तयापुरोभिंदन्तआयंस्तस्मादेताआज्यहविषोभवंतिंचतुरोग्रेस्तनांन्व्रतमुपैत्युपसत्सुंचतुःसंधि
ह्यिषुरनीकंशल्यस्तेजनंपर्णानित्रीन्स्तनांन्व्रतमुपैत्युपसत्सुंत्रिषंधिर्ह्यिषुरनीकंशल्यस्तेजनं ॥ द्वौस्तनौव्रतमुपैत्युपसत्सु
द्विषंधिर्ह्यिषुःशल्यश्चह्येवतेजनंचैकंस्तनंव्रतमुपैत्युपसंत्स्वेकाह्येवेषुरित्याख्यायतंएकयावीर्यंक्रियतेंपरोवरीयांसोवाइमे
लोकाअर्वांगंहीयांसःपरस्तादर्वाचीरुपसदउपैत्येषामेवलोकानामभिजित्यांउपसद्यायमीह्लुषइमांमेअग्नेसमिधंमिमामुप

सदंवनेरितितिस्रंस्तिस्रःसामिधेन्योरूपसमृद्धाएतद्वैयज्ञस्यसमृद्धंयद्रूपसमृद्धंयत्कर्मक्रियमाणमृगभिवदतिंजघ्निवती

र्याज्यानुवाक्याः कुर्यादग्निर्वृत्राणिजंघनद्धंउग्रइवशर्यहात्वंसोमासिसत्पतिर्गयस्फानोअमीवहेदंविष्णुर्विचक्रमेत्रीणिप
दाविचक्रमइत्येताविपर्यस्ताभिरपराह्णेयजतिघ्नंतोवाएताभिर्देवाःपुरोभिंदंतआयन्यदुपसदःसच्छंदसःकर्तव्यानविच्छं
दसोंयद्विच्छंदसःकुर्याद्ग्रीवासुतद्गंडंदध्यादीश्वरोग्लावोजनितोस्तस्मात्सच्छंदसएवकर्तव्यानविच्छंदसस्तदुहस्माहोपा
विर्जानश्रुतेयंउपसदांकिलवैतद्ब्राह्मणंयस्मादप्यश्लीलस्यश्रोत्रियस्यमुखंव्येवज्ञायतेतृप्तमिवरेभतीवेत्याज्यहविषोह्युपस
दोग्रीवासुमुखमध्याहितंतस्माद्धस्मतदाह॥२५॥देववर्मवाएतद्यत्प्रयाजाश्चानुयाजाश्चाप्रयाजमननुयाजंभवतीष्वैसंशि
त्याअप्रतिशरायसकृदतिक्रम्याश्रावयतियज्ञस्याभिक्रांत्या अनपक्रमायतदाहुःक्रूरमिववाएतत्सोमस्यराज्ञोंतेचरंतियद
स्यघृतेनांतेचरंतिघृतेनहिवज्रेणेंद्रोवृत्रमहंस्तद्यदंशुरंशुष्टेदेवसोमाप्यायतामिंद्रायैकधनविद आतुभ्यमिंद्रःप्यायतामात्व
मिंद्रायप्यायस्वाप्यायययास्मान्त्सखीन् ॥ सन्यामेधयास्वस्तितेदेवसोमसुत्यामुदृचमशीयेतिराजानमाप्याययंतियदेवा
स्यतत्क्रूरमिवांतेचरंतितदेवास्यैतेनाप्याययंत्यथोएनंवर्धयंत्येवद्यावापृथिव्योर्वाएषगर्भोयत्सोमोराजातद्यदेष्टारायए
ष्टावामानिप्रेषेभगाय ॥ ऋतमृतवादिभ्योनमोदिवेनमःपृथिव्याइतिप्रस्तरेनिह्नवते[1]द्यावापृथिवीभ्यामेवतन्नमस्कुर्वंत्य
थोएनेवर्धयंत्येववर्धयंत्येव ॥ २६ ॥ इतिप्रथमपंचिकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥



---

१ भाष्ये 'तिह्नुवते संप्रीणयन्ति' इतिव्युत्पादनात्सएवतदीप्सितःपाठः ।

सोमोवैराजागंधर्वेष्वासीत्तंदेवाश्चऋषयश्चाभ्यध्यायंन्कथमयमस्मान्त्सोमोराजागच्छेदितिसावागब्रवीत्स्त्रीकामावै गंधर्वामयैवस्त्रियाभूतयापणध्वमितिनेतिदेवा अब्रुवन्कथंवयंत्वदृतेस्यामेतिसाब्रवीत्क्रीणीतैवयर्हिवावबोमयार्थोभवि तातर्ह्येववोहंपुनरागंतास्मीतितथेतितयामहानग्न्याभूतयासोमंराजानमक्रीणंस्तामनुकृतिमस्कन्नांवत्सतरीमाजंतिसोम क्रयणींतयासोमंराजानंक्रीणंतितांपुनर्निष्क्रीणीयात्पुनर्हिसातानागच्छत्तस्मादुपांशुवाचाचरितव्यंसोमेराजनिक्रीतेगं धर्वेषुहितर्हिवाग्भवतिसाग्नावेवप्रणीयमानेपुनरागच्छति ॥ २७ ॥ अग्नयेप्रणीयमानायानुब्रूहीत्याहाध्वर्युः प्रदेवंदे व्याधियाभरताजातवेदसं ॥ हव्यानोवक्षदानुषगितिगायत्रींब्राह्मणस्यानुब्रूयाद्गायत्रोवैब्राह्मणस्तेजोवैब्रह्मवर्चसंगाय त्रींतेजसैवैनंतद्ब्रह्मवर्चसेनसमर्धयतीमंमहेविदथ्यायशूषमितित्रिष्टुभंराजन्यस्यानुब्रूयात्त्रैष्टुभोवैराजन्यओजोवाइंद्रियं वीर्यंत्रिष्टुबोजसैवैनंतदिंद्रियेणवीर्येणसमर्धयतिशश्वत्कृत्वईड्यायप्रजभ्रुरितिस्वानामेवैनंतच्छ्रैष्ठ्यंगमयतिशृणोतुनोद म्यैभिरनीकैः शृणोत्वग्निर्दिव्यैरजस्रइत्यांजरसंहास्मिन्नजस्रोदीदाययएवंवेदायमिहप्रथमोधायिधातृभिरितिजगतींवै श्यस्यानुब्रूयाज्जागतोवैवैश्योजागताःपशवः पशुभिरेवैनंतत्समर्धयतिवनेषुचित्रंविभ्वंविशेविशइत्यभिरूपायद्यज्ञेभिरू पंतत्समृद्धंमयमुष्यप्रदेवयुरित्यनुष्टुभिवाचंविसृजतेवाग्वाअनुष्टुब्वाच्येवतद्वाचंविसृजतेऽयमुष्यइतियदाहायमुस्याग

१ 'महानग्न्या' महतीचासौनग्नीचेतिमाध्यपाठः । नग्नीकुमारी ।

मयापुरागंधर्वेष्ववात्क्समित्येवतद्वाक्प्रब्रूतेयमग्निरुरुष्यतीत्ययंवाअग्निरुरुष्यत्यमृतादिवजन्मनइत्यमृतत्वमेवास्मिंस्त
द्दधातिसहसश्चित्सहीयान्देवोजीवातवेकृतइतिदेवोह्येषएतज्जीवातवेकृतोयदग्निरिळायास्त्वापदेवयंनाभापृथिव्याअ
धीत्येतद्वाइळायास्पदंयदुत्तरवेदीनाभिर्जातवेदोनिधीमहीतिनिधास्यंतोह्येनंभवंत्यग्नेहव्यायवोढवइतिहव्यंहिवक्ष्यन्भ
वत्यग्नेविश्वेभिःस्वनीकदेवैरूर्णावंतंप्रथमःसीदयोनिमितिविश्वैरेवैनंतद्देवैःसहासादयतिकुलायिनंघृतवंतंसवित्रइतिकु
लायमिवह्येतद्यज्ञेक्रियतेयत्पैतुदारवाःपरिधयोगुग्गुलूर्णास्तुकाःसुगंधितेजनानीतियज्ञंनययजमानायसाध्वितियज्ञमे
वतदृजुधाप्रतिष्ठापयतिसीदहोतःस्वउलोकेचिकित्वानित्यग्निर्वैदेवानांहोतातस्यैषस्वोलोकोयदुत्तरवेदीनाभिःसादयाय
ज्ञंसुकृतस्ययोनावितियजमानोवैयज्ञोयजमानायैवैतामाशिषमाशास्तेदेवावीर्देवान्हविषायजास्यग्नेबृहद्यजमानेवयो
धाइतिप्राणोवैवयःप्राणमेवतद्यजमानेदधातिनिहोताहोतृषदनेविदानइत्यग्निर्वैदेवानांहोतातस्यैतद्धोतृषदनंयदुत्तरवे
दीनाभिस्त्वेषोदीदिवाँअसदत्सुदक्षइत्यासन्नोहिसतर्हिभवत्यदब्धव्रतप्रमतिर्वसिष्ठइत्यग्निर्वैदेवानांवसिष्ठःसहस्रंभरःशु
चिजिह्वोअग्निरित्यैषाहवाअस्यसहस्रंभरतायदेनमेकंसंतंबहुधाविहरंतिप्रहवैसाहस्रंपोषमाप्नोतियएवंवेदत्वंदूतस्त्वमुनः
परस्पाइत्युत्तमयापरिदधातित्वंवस्यआवृषभप्रणेता ॥ अग्नेतोकस्यनस्तनेतनूनामप्रयुच्छन्दीद्यद्बोधिगोपाइत्यग्निर्वैदे



---

१ 'अवात्समित्येव' इतिभाष्यपाठः । गंधर्वेष्वयाहंवावात्संश्रितास्मीत्यर्थस्तत्र ।

वानांगोपांअग्निमेवतत्सर्वतोगोप्तारंपरिदत्तंआत्मनेचयजमानायचयत्रैवंविद्वानेतयापरिदधात्यथोसंवत्सरीणामेवैतां
स्वस्तिंकुरुतेंताएताअष्टावन्वाहरूपसमृद्धांएतद्वैयज्ञस्यसमृद्धंयद्रूपसमृद्धंयत्कर्मक्रियमाणमृगभिवदतिंतासांत्रिःप्रथ
मामन्वाहत्रिरुत्तमांताद्वादशसंपद्यंतेंद्वादशवैमासाःसंवत्सरःसंवत्सरःप्रजापतिःप्रजापत्यायतनाभिरेवाभीराध्नोतियए
वंवेदंत्रिःप्रथमांत्रिरुत्तमामन्वाहयज्ञस्यैवतद्बर्सौनह्यतिंस्थेम्नेबलायाविस्रंसाय ॥ २८ ॥ हविर्धानाभ्यांप्रोह्यमाणाभ्यां
मनुब्रूहीत्याहाध्वर्युर्युजेवांब्रह्मपूर्व्यंनमोभिरित्यन्वाहंब्रह्मणावाएतेदेवांअयुंजतयद्धविर्धानेंब्रह्मणैवैनेएतद्युंक्तेंनवैब्रह्म
ण्वद्रिष्यतिंप्रेतांयज्ञस्यशंभुवेतितृचंद्यावापृथिवीयमन्वाहंतदाहुर्यद्धविर्धानाभ्यांप्रोह्यमाणाभ्यामनुवाचाहाथकस्मात्तृ
चंद्यावापृथिवीयमन्वाहेतिंद्यावापृथिवीवैदेवानांहविर्धानेआस्तांतेउएवाद्यापिहविर्धानेंतेहीदमंतरेणसर्वंहविर्यदिदंकिं
चंतस्मात्तृचंद्यावापृथिवीयमन्वाहंयमेइवयतमानेयदैतमितिंयमेइवह्येतेयतमानेप्रबाहुगितंःप्रवांभरन्मानुषादेवयंतइ
तिंदेवयंतोह्येनेमानुषाःप्रभरंत्यासीदतंस्वमुलोकंविदाने ॥ स्वासस्थेभवतमिंदवेनइतिंसोमोवैराजेंदुःसोमायैवैनेएतद्रा
ज्ञआसदेचीक्लृपंदधिद्वयोरदधाउक्थ्यंवचइतिंद्वयोर्ह्येतत्तृतीयंछदिरधिनिधीयतंउक्थ्यंवचइतियदाहंयज्ञियंवैकर्मो
क्थ्यंवचोयज्ञमेवैतेनसमर्धयतिंयतस्रुचामिथुनायासपर्यतः ॥ असंयत्तोव्रतेतेक्षेतिपुष्यतीतिंयदेवादःपूर्वंयत्तवत्पदमा
हतदेवैतेनशांत्याशमयतिंभद्राशक्तिंयजमानायसुन्वतइत्याशिषमाशास्तेविश्वारूपाणिप्रतिमुंचतेकविरितिंविश्वरूपाम

न्वाहंसररराट्यामीक्षमाणोनुब्रूयाद्विश्वमिवहिरूपंरराट्याः शुक्लमिवचकृष्णमिवचंविश्वंरूपमवरुंधआत्मनेचयजमानाय
चंयत्रैवंविद्वानेतांरराट्यामीक्षमाणोन्वाहंपरित्वागिर्वणोगिरइत्युत्तमयापरिदधातिंसयदेवहविर्धानेंसंपरिश्रितेमन्येतां
थपरिदध्यादनग्नंभावुकाहंहोतुश्चयजमानस्यचभार्याभवंतिंयत्रैवंविद्वानेतयाहविर्धानयोंःसंपरिश्रितयोःपरिदधातिंय
जुषावाएतेसंपरिश्रियेतेयद्धविर्धानेंयजुषैवैनेएतत्परिश्रयंतिंतौयदेवाध्वर्युश्चप्रतिप्रस्थाताचोंभयतोमेथ्यौनिहन्यातांम
थपरिदध्यांदत्रहितेसंपरिश्रितेभवतंस्ताएताअष्टावन्वाहरूपसमृद्धांएतद्वैयज्ञस्यसमृद्धंयद्रूपसमृद्धंयत्कर्मक्रियमाणमृग
भिवदतिंतासांत्रिःप्रथमामन्वाहत्रिरुत्तमांताद्वादशसंपद्यंतेंद्वादशवैमासाःसंवत्सरंःसंवत्सरःप्रजापतिंःप्रजापत्यायत
नाभिरेवाभीराध्नोतियएवंवेदंत्रिःप्रथमांत्रिरुत्तमामन्वाहंयज्ञस्यैवतद्बसौंनह्यतिंस्थेम्नेबलायाविस्रंसाय ॥२९॥ अग्नीषो
माभ्यांप्रणीयमानाभ्यांमनुब्रूहीत्याहाध्वर्युंःसावीर्हिंदेवप्रथमायपित्रइतिंसावित्रीमन्वाहंतदाहुर्यदग्नीषोमाभ्यांप्रणीयमा
नाभ्यामनुवाचाहांथकस्मात्सावित्रीमन्वाहेतिंसवितावैप्रसवानामीशेंसवितृप्रसूताएवैनौतत्प्रणयंतिंतस्मात्सावित्रीम
न्वाहंप्रैतुब्रह्मणस्पतिरितिंब्राह्मणस्पत्यामन्वाहंतदाहुर्यदग्नीषोमाभ्यांप्रणीयमानाभ्यामनुवाचाहांथकस्माद्ब्राह्मणस्पत्या
मन्वाहेतिंब्रह्मवैबृहस्पतिंर्ब्रह्मैवाभ्यामेतत्पुरोगवंमकर्णवैब्रह्मण्वद्रिष्यतिंप्रदेव्येतुसूनृतेतिंससूनृतमेवतद्यज्ञंकरोतिंतस्मा
द्ब्राह्मणस्पत्यामन्वाहंहोतादेवोअमर्त्यइतितृचमाग्नेयंगायत्रमन्वाहंसोमेराजनिप्रणीयमानेंसोमंवैराजानंप्रणीयमानंमंत

रेणैवसदोहविर्धानान्यसुरारक्षांस्यजिघांसँस्तमग्निर्मायययात्यनयत्पुरस्तादेतिमाययेतिमाययाहिसतमत्यनयत्तस्माद्धस्या
ग्निंपुरस्ताद्धरँत्युपत्वाग्नेदिवेदिवउपप्रियंपनिघ्नतमितितिस्रश्चैकांचान्वाहेश्वरौहवाएतौसंयंतौयजमानंहिंसितोर्यश्चासौ
पूर्वउद्धृतोभवतियमुचैनमपरंप्रणयंतितद्यत्तिस्रश्चैकांचान्वाहसंजानानावेवैनौतत्संगमयतिप्रतिष्ठायामेवैनौतत्प्रतिष्ठा
पयत्यात्मनश्चयजमानस्यचाहिंसायाअग्नेजुषस्वप्रतिहर्यतद्वचइत्याहुत्याहूयमानायामन्वाहाग्नयएवतज्जुष्टिमाहुतिंगम
यतिसोमोजिगातिगातुविदितितृचंसौम्यंगायत्रमन्वाहसोमेराजनिप्रणीयमानेस्वयैवैनंतद्देवतयास्वेनच्छंदसासमर्धय
तिसोमःसधस्थमासददित्यासत्स्यन्हिसताहिभवतितदतिक्रम्यैवानुब्रूयात्पृष्ठतइवा[१]ग्नीध्रंकृत्वातमस्यराजावरुणस्तमश्वि
नेतिवैष्णवीमन्वाहक्रतुंसचंतमारुतस्यवेधसः ॥ दाधारदक्षमुत्तममहर्विदँव्रजंचविष्णुःसखिवाँअपोर्णुतइतिविष्णुर्वैदे
वानांद्वारपःसएवास्माएतद्वारंविवृणोत्यंतश्चप्रागाअदितिर्भवासीतिप्रपाद्यमानेन्वाहश्येनोनयोनिंसदनंधियाकृतमि
त्यासन्नेहिरण्ययमासदँदेवएषतीतिहिरण्मयमिवहवाएषएतद्देवेभ्यच्छदयतियत्कृष्णाजिनंतस्मादेतामन्वाहास्तभ्ना
द्द्यामसुरोविश्ववेदाइतिवारुण्यापरिदधातिवरुणदेवत्योवाएषतावद्यावदुपनद्धोयावत्परिश्रितानिप्रपद्यतेस्वयैवैनंतद्दे
वतयास्वेनच्छंदसासमर्धयतितंयद्युपवाधावेयुरभयंवेच्छेरन्नेवावंदस्ववरुणंबृहंतमित्येतयापरिदध्याद्यावद्योहाभयमि



१ 'पृष्ठतएवाग्नीध्रंकृत्वा' इतिभाष्यपाठः ।

च्छतिंयावद्ध्योहाभयंध्यायतिंतावद्ध्योहाभयंभवतिंयत्रैवंविद्वानेतयापरिंदधातिंतस्मादेवंविद्वानेतयैवपरिंदध्यांत्ताए
ताःसप्तदशान्वाहरूपसमृद्धाएतद्वैयज्ञस्यसमृद्धंयद्रूपसमृद्धँयत्कर्मक्रियमाणमृगभिवदतिंतासांत्रिःप्रथमामन्वाहत्रिरु
त्तमाँताएकविंशतिःसंपद्यंतंएकविंशोवैप्रजापतिर्द्वादशमासाःपंचर्तवंस्त्रयइमेलोकाअसावादित्यएकविंशंउत्तमाप्रतिष्ठा
तद्दैवंक्षत्रँसाश्रीस्तदाधिपत्यँतद्ब्रध्नस्यविष्टपँतत्प्रजापतेरायतनँतत्स्वाराज्यमृध्नौत्येतमेवैताभिरेकविंशत्यैकविंशत्या॥२०
इतिप्रथमपंचिकायांपंचमोऽध्यायः ॥ ५ ॥

॥ इतिप्रथमपंचिकासमाप्ता ॥

श्रीगणेशायनमः ॥ हरिः ॐ ॥ यज्ञेनवैदेवाऊर्ध्वाःस्वर्गंलोकमायँस्तेबिभयुरिमंनोदृष्ट्वामनुष्याश्चऋषयश्चानुप्रज्ञा
स्यंतीतितंवैयूपेनैवायोपयँस्तंयद्यूपेनैवायोपयंस्तद्यूपस्ययूपत्वंतमवाचीनाग्रंनिमित्योर्ध्वाउदायँस्ततोवैमनुष्याश्चऋषयश्च
देवानांयज्ञवास्त्वभ्यायंन्यज्ञस्यकिंचिदेषिष्यामःप्रज्ञात्याइतितेवैयूपमेवाविंदन्नवाचीनाग्रंनिमितंतेविदुरनेनवैदेवायज्ञ
मयूयुपन्निर्तितमुत्खायोर्ध्वंन्यमिन्वंस्ततोवैतेप्रयज्ञमजानन्प्रस्वर्गंलोकंतद्यद्यूपऊर्ध्वोनिमीयतेज्ञस्यप्रज्ञात्यैस्वर्गस्यलोक
स्यानुख्यात्यैवज्रोवाएषयद्यूपःसोष्टाश्रिःकर्तव्योऽष्टाश्रिर्वैवज्रस्तंतंप्रहरतिद्विषतेभ्रातृव्यायवधंयोस्यस्तृत्यस्तस्मैस्तर्तवै
वज्रोवैयूपःसएषद्विषतोवधउद्यतस्तिष्ठतितस्माद्धाप्येतर्हियोद्वेष्टितस्याप्रियंभवत्यमुष्यायंयूपोमुष्यायंयूपइतिदृष्ट्वाखा
दिरंयूपंकुर्वीतस्वर्गकामःखादिरेणवैयूपेनदेवाःस्वर्गंलोकमजयँस्तथैवैतद्यजमानःखादिरेणयूपेनस्वर्गंलोकंजयतिबैल्वंयू
पंकुर्वीतान्नाद्यकामःपुष्टिकामःसमांसमांवैबिल्वोगृभीतस्तदन्नाद्यस्यरूपमामूलाच्छाखाभिरनुचितस्तत्पुष्टेःपुष्यतिप्रजां
चपशूंश्चयएवंविद्वान्बैल्वंयूपंकुरुतेयदेवबैल्वां २ ॥ बिल्वंज्योतिरितिवाआचक्षतेज्योतिःस्वेषुभवतिश्रेष्ठःस्वानांभवति
यएवंवेदपालाशंयूपंकुर्वीततेजस्कामोब्रह्मवर्चसकामस्तेजोवैब्रह्मवर्चसंवनस्पतीनांपलाशस्तेजस्वीब्रह्मवर्चसीभवतियए
वंविद्वान्पालाशंयूपंकुरुतेयदेवपालाशां २ ॥ सर्वेषांवाएषवनस्पतीनांयोनिर्यत्पलाशस्तस्मात्पलाशस्यैवपलाशेनाचक्ष
तेऽमुष्यपलाशममुष्यपलाशमितिसर्वेषांहास्यवनस्पतीनांकाममुपाप्तोभवतियएवंवेद ॥ १ ॥ अञ्ज्मोयूपमनुब्रूहीत्याहा

॥ १४ ॥

ध्वर्युरंजंतित्वामध्वरेदेवयंतइत्यन्वाहाध्वरेह्येनंदेवयंतोंजंतिवनस्पतेमधुनादैव्येनेत्येतद्वैमधुदैव्यंयदाज्यंयदूर्ध्वस्तिष्ठा
द्रविणेहधत्तांद्यद्वाक्षयोमातुरस्याउपस्थइतियदिचतिष्ठासियदिचशयासैद्रविणमेवास्मासुधत्तादित्येवतदाहोच्छ्रयस्वव
नस्पतइत्युच्छ्रीयमाणायाभिरूपायद्यज्ञेभिरूपंतत्समृद्धंवर्ष्मन्पृथिव्याअधीत्येतद्वैवर्ष्मपृथिव्यैयत्रयूपमुन्मिन्वंतिसुमि
तीमीयमानोवर्चोधायज्ञवाहसइत्याशिषमाशास्तेसमिद्धस्यश्रयमाणःपुरस्तादितिसमिद्धस्यह्येषएतत्पुरस्ताच्छ्रयतेब्रह्म
वन्वानोअजरंसुवीरमित्याशिषमेवाशास्तेआरेअस्मदमतिंबाधमानइत्यशनायावैपाप्मामतिस्तामेवतदाराम्नुदतेयज्ञाच्च
यजमानाच्चोच्छ्रयस्वमहतेसौभगायेत्याशिषमेवाशास्तेऊर्ध्वऊषुणऊतयेतिष्ठादेवोनसवितेतियद्वैदेवानांनेतितदेषांमो
३ मितितिष्ठदेवइवसवितेत्येवतदाहोर्ध्वोवाजस्यसनितेतिवाजसनिमेवैनंतद्धनसांसनोतियदंजिभिर्वाघद्भिर्विह्वयामह
इतिच्छंदांसिवाअंजयोवाघतस्तैरेतद्देवान्यजमानाविह्वयंतेममयज्ञमागच्छतममयज्ञमितियदिहवाअपित्रहवइवयजंतेऽ
थहास्यदेवायज्ञमैवगच्छंतियत्रैवंविद्वानेतामन्वाहोर्ध्वोनःपाह्यंहसोनिकेतुनाविश्वंसमत्रिणंदहेतिरक्षांसिवैपाप्मात्रिणो
रक्षांसिपाप्मानंदहेत्येवतदाहकृधीनऊर्ध्वांचरथायजीवसइतियदाहकृधीनऊर्ध्वांचरणायजीवसइत्येवतदाहयदिहवा
अपिनीतइवयजमानोभवतिपरिहैवैनंतत्संवत्सरायददातिविदादेवेषुनोदुवइत्याशिषमेवाशास्तेजातोजायतेसुदिनत्वे

---

१ भाष्येनात्रप्लुतोगृहीतः । २ यज्ञमेवइतिमाध्येपाठः ।

अह्नामितिंजातोह्येषएतज्जायतेंसमर्यआविदथेवर्धमानइतिंवर्धयंत्येवैनंतंत्पुनंतिधीराअपसोमनीषेतिंपुनंत्येवैनंतदेव
याविप्रउदियर्तिंवाचमितिंदेवेभ्यएवैनंतन्निवेदयतिंयुवासुवासाःपरिवीतआगादित्युत्तमयापरिदधातिंप्राणोवैयुवासु
वासाःसोयंशरीरैःपरिवृतःसउश्रेयान्भवतिजायमानइतिंश्रेयाच्छ्रेयान्ह्येषएतद्भवतिजायमानंस्तंधीरासःकवयउन्नयंतिं
स्वाध्योमनसादेवयंतइतिंयेवाअनूचानास्तेकवयंस्तएवैनंतदुन्नयंतिंताएताःसप्तान्वाहरूपसमृद्धाएतद्वैयज्ञस्यसमृद्धंय
द्रूपसमृद्धंयत्कर्मक्रियमाणमृगभिवदतिंतासांत्रिःप्रथमामन्वाहत्रिरुत्तमांताएकादशसंपद्यंतंएकादशाक्षरावैत्रिष्टुंप्त्रिष्टु
विंद्रस्यवज्रंइंद्रायतनाभिरेवाभीराध्नोतियएवंवेदंत्रिःप्रथमांत्रिरुत्तमामन्वाहंयज्ञस्यैवतद्ब्रसौनह्यतिंस्थेम्नेबलायाविस्रं
साय ॥ २ ॥ तिष्ठेद्यूपा ३ः ॥ अनुप्रहरे ३ त् इत्याहुंस्तिष्ठेत्पशुकामस्यंदेवेभ्योवैपशवोन्नाद्यायालंभायनातिष्ठंतंतेप
क्रम्यप्रतिवावदतोतिष्ठन्नास्मानालप्स्यध्वेनास्मानितिंततोवैदेवाएतंयूपंवज्रमपश्यंस्तमेभ्यउदश्रयंस्तस्माद्बिभ्यतउपाव
र्तंतंतमेवाद्याप्युपावृत्तास्ततोवैदेवेभ्यःपशवोन्नाद्यायालंभायातिष्ठंतंतिष्ठंतेस्मैपशवोन्नाद्यायालंभाययएवंवेदंयस्यचैवं
विदुषोयूपस्तिष्ठत्यनुप्रहरेत्स्वर्गकामस्यंतमुहस्मैतंपूर्वेन्वेवप्रहरंतिंयजमानोवैयूपोयजमानःप्रस्तरोग्निर्वैदेवयोनिःसोग्नेर्देव
योन्याआहुतिभ्यःसंभूयहिरण्यशरीरऊर्ध्वःस्वर्गंलोकमेष्यतींत्यथयेतेभ्योवरआसंस्तएतंस्वरुमपश्यन्यूपशकलंतंतस्मि
न्कालेनुप्रहरेत्तत्रसकामउपाप्तोयोनुप्रहरणेतत्रसकामउपाप्तोयःस्थानेसर्वाभ्योवाएषदेवताभ्यआत्मानमालभतेयोदीक्ष

तेग्निःसर्वादेवताःसोमःसर्वादेवताःसयदग्नीषोमीयंपशुमालभतेसर्वाभ्यएवतद्देवताभ्योयजमानआत्मानंनिष्क्रीणीतेत
दाहुर्द्विरूपोग्नीषोमीयःकर्तव्योद्विदेवत्योहीतितत्तन्नाद्दत्यंपीवइवकर्तव्यःपीवोरूपावैपशवःकृशितइवखलुवैयजमानोभ
वतितद्यत्पीवापशुर्भवतियजमानमेवतत्स्वेनमेधेनसमर्धयतितदाहुर्नाग्नीषोमीयस्यपशोरश्नीयात्पुरुषस्यवाएषोश्नातियो
ग्नीषोमीयस्यपशोरश्नातियजमानोह्येतेनात्मानंनिष्क्रीणीतइतितत्तन्नाद्दत्यंवार्त्रघ्नंवाएतद्धविर्यदग्नीषोमीयोग्नीषोमाभ्यां
वाइंद्रोवृत्रमहंस्तावेनमब्रूतामावाभ्यांवैवृत्रमवधीर्वरंतेवृणावहाइतिवृणाथामितितावेतमेववरमवृणातांश्वःसुत्यायांप
शुंसएनयोरेषोच्युतोवरवृतोह्येनयोस्तस्मात्तस्याशितव्यंचैवलीप्सितव्यंच ॥ ३ ॥ आप्रीभिराप्रीणातितेजोवैब्रह्मवर्च
समाप्रियस्तेजसैवैनंतद्ब्रह्मवर्चसेनसमर्धयतिसमिधोयजतिप्राणावैसमिधःप्राणाहीदंसर्वंसमिंधतेयदिदंकिंचप्राणानेव
तत्प्रीणातिप्राणान्यजमानेदधातितनूनपातंयजतिप्राणोवैतनूनपात्सहितन्वःपातिप्राणमेवतत्प्रीणातिप्राणंयजमानेद
धातिनराशंसंयजतिप्रजावैनरोवाक्शंसःप्रजांचैवतद्वाचंचप्रीणातिप्रजांचवाचंचयजमानेदधातीळोयजत्यन्नंवाइळोन्न
मेवतत्प्रीणात्यन्नंयजमानेदधातिबर्हिर्यजतिपशवोवैबर्हिःपशूनेवतत्प्रीणातिपशून्यजमानेदधातिदुरोयजतिवृष्टिर्वैदुरो
वृष्टिमेवतत्प्रीणातिवृष्टिमन्नाद्यंयजमानेदधात्युषासानक्तायजत्यहोरात्रेवाउषासानक्ताहोरात्रेएवतत्प्रीणात्यहोरात्रयो
र्यजमानंदधातिदैव्याहोतारायजतिप्राणापानौवैदैव्याहोताराप्राणापानावेवतत्प्रीणातिप्राणापानौयजमानेदधातिति

स्रोदेवीर्यजतिप्राणोवाअपानोव्यानस्तिस्रोदेव्यस्ताएवतत्प्रीणातितायजमानेदधातित्वष्टारंयजतिवाग्वैत्वष्टावाग्घीदं
सर्वंताष्टीवंवाचमेवतत्प्रीणातिवाचंयजमानेदधातिवनस्पतिंयजतिप्राणोवैवनस्पतिःप्राणमेवतत्प्रीणातिप्राणंयजमानेद
धातिस्वाहाकृतीर्यजतिप्रतिष्ठावैस्वाहाकृतयःप्रतिष्ठायामेवतद्यज्ञमंततःप्रतिष्ठापयतिताभिर्यथऋष्याप्रीणीयाद्यद्यथऋ
ष्याप्रीणातियजमानमेवतद्बंधुतायानोत्सृजति ॥४॥ पर्यग्नयेक्रियमाणायानुब्रूहीत्याहाध्वर्युरग्निर्होतानोअध्वरइतितृच
माग्नेयंगायत्रमन्वाहपर्यग्निक्रियमाणेस्वयैवैनंतद्देवतयास्वेनच्छंदसासमर्धयतिवाजीसन्परिणीयतइतिवाजिनमिवह्येनं
संतंपरिणयंतिपरित्रिविष्ट्यध्वरंयात्यग्नीरथीरिवेत्येषहिरथीरिवाध्वरंपरियातिपरिवाजपतिःकविरित्येषहिवाजानांपतिर
तउपप्रेष्यहोतर्हव्यादेवेभ्यइत्याहाध्वर्युरजैदग्निरसनद्वाजमितिमैत्रावरुणउपप्रैषंप्रतिपद्यतेतदाहुर्यदध्वर्युर्होतारमुपप्रे
ष्यत्यथकस्मान्मैत्रावरुणउपप्रैषंप्रतिपद्यतइतिमनोवैयज्ञस्यमैत्रावरुणोवाग्यज्ञस्यहोतामनसावाइषितावाग्वदतियाह्य
न्यमनावाचंवदत्यसुर्यावैसावागदेवजुष्टातद्यन्मैत्रावरुणउपप्रैषंप्रतिपद्यतेमनसैवतद्वाचमीरयतितन्मनसेरितयावाचा
देवेभ्योहव्यंसंपादयति ॥५॥ दैव्याःशमितारआरभध्वमुतमनुष्याइत्याहयेचैवदेवानांशमितारोयेचमनुष्याणांतानेव
तत्संशास्त्युपनयतमेध्यादुरआशासानामेधपतिभ्यांमेधमितिपशुर्वैमेधोयजमानोमेधपतिर्यजमानमेवतत्स्वेनमेधेनस
मर्धयत्यथोखल्वाहुर्यस्यैवावकस्यैचदेवतायैपशुरालभ्यतेसैवमेधपतिरितिसयद्येकदेवत्यःपशुःस्यान्मेधपतयइतिब्रूयाद्य

दिद्विदेवत्योमेधपतिभ्यामितिंयदिवहुदेवत्योमेधपतिभ्यइंत्येतदेवस्थितंप्रास्मा अग्निंभरतेतिंपशुर्वैनीयमानंःसमृत्युंप्राप
श्यंत्सदेवान्नान्वकामयतैतुंतंदेवाअब्रुवन्नेहिंस्वर्गंवैत्वालोकंगमयिष्यामइतिंसतथेत्यब्रवींत्तस्यवैमेयुष्माकमेकःपुरस्तादै
त्विवितितथेतिंतस्याग्निःपुरस्तादैंत्सोग्निमनुप्राच्यवतंतस्मादाहुराग्नेयोवावसर्वःपशुरग्निंहिसोनुप्राच्यवतेतिंतस्माद्वस्याग्निं
पुरस्ताद्धरंतिंस्तृणीतबर्हिरिंत्योषध्यात्मावैपशुंःपशुमेवतत्सर्वात्मानंकरोंत्यन्वेनंमातामन्यतांमनुपितानुभ्रातांसगर्भ्यो
नुसखासयूथ्यइतिंजनित्रैरेवैनंतंत्समनुमतमालभंतंउदीचीनाँअस्यपदोनिधत्तांत्सूर्यंचक्षुर्गमयतांद्वातंप्राणमन्ववसृजता
दैंतरिक्षमसुंदिशःश्रोत्रंपृथिवींशरीरमिंत्येष्वेवैनंतल्लोकेष्वादधांत्येकधास्यत्वचमाच्छयतांत्पुरानाभ्याअपिशसोवपामु
त्खिदतांदंतरेवोष्माणंवारयध्वादितिंपशुष्वेवतत्प्राणान्दधातिंश्येनमस्यवक्षःकृणुतांत्प्रशसावाहूशलादोषणींकश्यपेवां
साच्छिद्रेश्रोणींकवषोरूस्रेकपर्णाष्ठीवंतांषड्विंशतिरस्यवंक्रयस्तांअनुष्ठ्योच्यावयतांद्गात्रंगात्रमस्यानूनंकृणुतादिंत्यंगान्ये
वास्यतद्गात्राणिप्रीणांत्यूवध्यगोहंपार्थिवंखनतादित्याहौंषधंवाऊवध्यंमियंवाऽओषधीनांप्रतिष्ठांतदेनत्स्वायामेवप्रतिष्ठा
यामंततःप्रतिष्ठापयति ॥ ६ ॥ अस्नारक्षःसंसृजतादित्याहंतुषैर्वैफलीकरणैर्देवाहविर्यज्ञेभ्योरक्षांसिनिरभजन्नंस्नामहाय
ज्ञांत्सयदस्नारक्षःसंसृजतादित्याहंरक्षांस्येवतत्स्वेनभागधेयेनंयज्ञान्निरवदयतैंतदाहुर्नयज्ञेरक्षसांकीर्तयेंत्कानिरक्षांस्यृते
रक्षांवैयज्ञइतितदुवाआहुःकीर्तयेदेवयोवै[illegible]स्यद्विवैनंनचयतेऽथपुत्रमथपौत्रंचयतेत्वेवैनमि

तिंसयदिकीर्तयेदुपांशुकीर्तयेत्तिरइववाएतद्वाचोयदुपांशुतिरइवैतद्यद्रक्षास्यथयदुच्चैःकीर्तयेदीश्वरोहास्यवाचोरक्षो
भाषोजनितोर्योयंराक्षसींवाचंवदतिंसयांवैदृप्तोवदतियामुन्मत्तःसावैराक्षसीवाङ्नात्मनादृप्यतिंनास्यप्रजायाँदृप्तआ
जायतेयएवंवेदवनिष्ठुमस्यमाराविष्टोरूकंमन्यमानानेद्वस्तोकेतनयैरवितारवच्छमितारइतिंयेचैवदेवानांशमितारोयेच
मनुष्याणांतेभ्यएवैनंतत्परिददात्यध्रिगोशमीध्वंसुशमिशमीध्वंशमीध्वमध्रिगा ३ उइतित्रिर्ब्रूयादपापेतिचाध्रिगुर्वै
देवानांशमितापापोनिग्रभीतांशमितृभ्यश्चैवैनंतन्निग्रभीतृभ्यश्चसंप्रयच्छतिशमितारोयदत्रसुकृतंकृणवथास्मासुतद्यदु
ष्कृतमन्यत्रतदित्याहाग्निर्वैदेवानांहोतासीत्सएनंवाचाव्यशाद्वाचावाएनंहोताविशास्तितद्यदर्वाग्यत्परःकृंतंतियदुल्बणं
यद्विथुरंक्रियतेशमितृभ्यश्चैवैनंत्तन्निग्रभीतृभ्यश्चसमनुदिशतिस्वस्त्येवहोतोन्मुच्यतेसर्वायुःसर्वायुत्वायसर्वमायुरेतिय
वंवेद ॥ ७ ॥ पुरुषंवैदेवाःपशुमालभंततस्मादालब्धान्मेधउदक्रामत्सोश्वंप्राविशत्तस्मादश्वोमेध्योभवदथैनमुत्क्रांतमे
धमत्यार्जंतंसकिंपुरुषोभवत्तेश्वमालभंतसोश्वादालब्धादुदक्रामत्सगांप्राविशत्तस्माद्गौर्मेध्योभवदथैनमुत्क्रांतमेधमत्या
र्जंतसगौरमृगोभवत्तेगामालभंतसगोरालब्धादुदक्रामत्सोविंप्राविशत्तस्मादविर्मेध्योभवदथैनमुत्क्रांतमेधमत्यार्जंतंसग
वयोभवत्तेऽविमालभंतसोऽवेरालब्धादुदक्रामत्सोजंप्राविशत्तस्मादजोमेध्योभवदथैनमुत्क्रांतमेधमत्यार्जंतंसउष्ट्रोभवं
त्सोजेज्योक्तमामिवारमतंतस्मादेषएतेषांपशूनांप्रयुक्ततमोयदजंस्तेऽजमालभंतसोजादालब्धादुदक्रामत्सइमांप्राविशत्तं

स्मादियंमेध्याभवंदथैनमुत्क्रातमेधमत्याजंतसशरभोभवंत्तएतउत्क्रांतमेधाअमेध्याःपशवंस्तस्मादेतेषांनाश्नीयांत्तमस्य
मन्वगच्छंन्त्सोनुगतोव्रीहिरभवंत्तद्यत्पशौपुरोळाशमनुनिर्वपंतिंसमेधेननःपशुनेष्टमसंत्केवलेननःपशुनेष्टमसदितिंसमेधे
नहास्यपशुनेष्टंभवतिंकेवलेनहास्यपशुनेष्टंभवतियएवंवेद ॥ ८ ॥ सवाएषपशुरेवालभ्यतेयत्पुरोळाशंस्तस्ययानिकिंशा
रूणितानिरोमाणिंयेतुषाःसात्वंग्येफलीकरणास्तदसृंग्यत्पिष्टंकिक्कसास्तन्मांसंयत्किंचित्कंसारंतदस्थिसर्वेषांवाएषपशूनां
मेधेनयजतेंयःपुरोळाशेनयजतेंतस्मादाहुःपुरोळाशसत्रंलोक्यमितिंयुवमेतानिदिविरोचनांन्यग्निश्चसोमसक्रतूअधत्तं ॥
युवंसिंधूँरभिशस्तेरवद्यांदग्नीषोमावमुंचतंगृभीतानितिंवपायैयजतिंसर्वाभिर्वाएषदेवताभिरालब्धोभवतिंयोदीक्षितो
भवतिंतस्मादाहुर्नदीक्षितस्याश्नीयादितिंसयदग्नीषोमावमुंचतंगृभीतानितिंवपायैयजतिंसर्वाभ्यएवतद्देवताभ्योयजमा
नंप्रमुंचतिंतस्मादाहुरशितव्यंवपायांहुतायांयजमानोहिसतर्हिंभवतींत्यान्यंदिवोमातरिश्वाजभारेतिंपुरोळाशस्ययजं
त्यमश्नादन्यंपरिश्येनोअद्रेरितींतइवचह्येषइतइवचमेधःसमाहृतोभवतिंस्वदस्वहव्यासमिषोदिदीहीतिंपुरोळाशःस्विष्ट
कृतोयजतिंहविरेवास्माएतत्स्वदयतींषमूर्जमात्मन्धत्तंइळामुपह्वयतेपशवोवाइळांपशूनेवतदुपह्वयतेंपशून्यजमानेदधा
ति ॥९॥ मनोतायैहविषोवदीयमानस्यानुब्रूहीत्याहाध्वर्युस्त्वंह्यग्नेप्रथमोमनोतेतिसूक्तमन्वाहंतदाहुर्यदन्यदेवत्यउतप

शुर्भवंत्यथकस्मादाग्नेयीरेवमनोतायैहविषोऽवदीयमानस्यान्वाहेतितिस्रोवैदेवानांमनोतांस्तासुहितेषांमनांस्यैतानिंवा

ग्वैदेवानांमनोतातस्यांहितेषांमनांस्योतानिगौर्वैदेवानांमनोतातस्यांहितेषांमनांस्योतान्यग्निर्वैदेवानांमनोतातस्मिन्हि
तेषांमनांस्योतान्यग्निःसर्वामनोताअग्नौमनोताःसंगच्छंतेतस्मादाग्नेयीरेवमनोतायैहविषोवदीयमानस्यान्वाहाग्नीषोमा
हविषःप्रस्थितस्येतिहविषोयजातिहविषइतिरूपसमृद्धाप्रस्थितस्येतिरूपसमृद्धासर्वाभिर्हास्यसमृद्धिभिःसमृद्धंहव्यंदेवा
नप्येतियएवंवेदवनस्पतिंयजतिप्राणोवैवनस्पतिर्जीवंहास्यहव्यंदेवानप्येतियत्रैवंविद्वान्वनस्पतिंयजतिस्विष्टकृतंयज
तिप्रतिष्ठावैस्विष्टकृत्प्रतिष्ठायामेवतद्यज्ञमंततःप्रतिष्ठापयतीळामुपह्वयतेपशवोवाइळापशूनेवतदुपह्वयतेपशून्यजमाने
दधातिदधाति ॥ १० ॥ इतिद्वितीयपंचिकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥

देवावैयज्ञमतन्वतंतांस्तन्वानानसुराअभ्यायन्यज्ञवेशसमेषांकरिष्यामइतितानाप्रीतेपशौपुरइवपर्यग्नेर्यूपंप्रतिपुरस्ता
दुपायंस्तेदेवाःप्रतिवुध्याग्निमयीःपुरस्त्रिपुरंपर्यास्यंतयज्ञस्यचात्मनश्चगुप्त्यैताएषामिमाअग्निमय्यःपुरोदीप्यमानाभ्राज
मानाअतिष्ठंस्ताअसुराअनपधृष्यैवापाद्रवंस्तेग्निनैवपुरस्तादसुररक्षांस्यपाघ्नताग्निनापश्चात्तथैवैतद्यजमानायत्पर्यग्निकुर्वं
त्यग्निमयीरेवतत्पुरस्त्रिपुरंपर्यस्यंतेयज्ञस्यचात्मनश्चगुप्त्यैतस्मात्पर्यग्निकुर्वंतितस्मात्पर्यग्नयेन्वाहतंवाएतंपशुमाप्रीतंसंतं
पर्यग्निकृतमुदंचंनयंतितस्योल्मुकंपुरस्ताद्धरंतियजमानोवाएषनिदानेनयत्पशुरनेनज्योतिषायजमानःपुरोज्योतिःस्वर्गं
लोकमेष्यतीतितेनज्योतिषायजमानःपुरोज्योतिःस्वर्गंलोकमेतितंयत्र निहनिष्यंतोभवंतितदध्वर्युर्बर्हिरधस्तादुपास्यति

यदेवैनमद आप्रीतंसंतंपर्यग्निकृतंबहिर्वेदिनयंतिबर्हिषदमेवैनंतत्कुर्वंतितस्योवध्यगोहंखनंत्यौषधंवाऊवध्यंमियंवाओष
धीनांप्रतिष्ठांतदेनत्स्वायामेवप्रतिष्ठायामंततःप्रतिष्ठापयंतितदाहुर्यदेषहविरेवयत्पशुरथास्यवह्वपैतिलोमानित्वगसृक्कु
ष्ठिकाःशफाविषाणेस्कंदतिपिशितंकेनास्यतदापूर्यतइतियदेवैतत्पशौपुरोळाशमनुनिर्वपंतितेनैवास्यतदापूर्यतेपशुभ्योवै
मेधाउदक्रामंस्तौव्रीहिश्चैवयवश्चभूतावजायेतांतद्यत्पशौपुरोळाशमनुनिर्वपंतिसमेधेननःपशुनेष्टमसत्केवलेननःपशुनेष्ट
मसदितिसमेधेनहास्यपशुनेष्टंभवतिकेवलेनहास्यपशुनेष्टंभवतियएवंवेद ॥ ११ ॥ तस्यवपामुत्खिद्याहरंतितामध्वर्युःस्रु
वेणाभिघारयन्नाहस्तोकेभ्योनुब्रूहीतितद्यत्स्तोकाश्चोतंतिसर्वदेवत्यावैस्तोकानेन्मइमेनभिप्रीतादेवान्गच्छानितिजुषस्व
सप्रथस्तममित्यन्वाहवचोदेवप्सरस्तमं । हव्याजुह्वानआसनीत्यग्नेरेवैनांदास्येजुहोतीमंनोयज्ञममृतेषुधेहीतिसूक्तम
न्वाहेमाहव्याजातवेदोजुषस्वेतिहव्यजुष्टिमाशास्तेस्तोकानामग्नेमेदसोघृतस्येतिमेदसश्चहिघृतस्यचभवंतिहोतःप्राशान
प्रथमोनिषद्येत्यग्निर्वैदेवानांहोताग्नेप्राशानप्रथमोनिषद्येत्येवतदाहघृतवंतःपावकतेस्तोकाश्चोतंतिमेदसइतिमेदसश्चह्येव
हिघृतस्यचभवंतिस्वधर्मदेववीतयेश्रेष्ठंनोधेहिवार्यमित्याशिषमाशास्तेतुभ्यंस्तोकाघृतश्चुतोग्नेविप्रायसंत्येतिघृतश्चुतोहि
भवंत्यृषिःश्रेष्ठःसमिध्यसेयज्ञस्यप्राविताभवेतियज्ञसमृद्धिमाशास्तेतुभ्यंश्चोतंत्यध्रिगोशचीवःस्तोकासोअग्नेमेदसोघृत

स्येतिमेदसश्चह्येवहिघृतस्यचभवंतिकाविशस्तोबृहताभानुनागाहव्याजुषस्वमेधिरेतिहव्यजुष्टिमेवाशास्तेओजिष्ठंतेमध्य

तोमेदउद्धृतँप्रतेवयंददामहे। श्चोतंतितेवसोस्तोकाअधित्वचिप्रतितान्देवशोविहीत्यभ्येवैनांस्तद्वषट्करोतियथासोमस्या
ग्नेवीहीतितद्यत्स्तोकाश्चोतंतिसर्वदेवत्यावैस्तोकास्तस्मादियंस्तोकशोवृष्टिर्विभक्तोपाचरति॥१२॥तदाहुःकास्वाहाकृतीनां
पुरोनुवाक्याःकःप्रैषःकायाज्येतियाएवैताअन्वाहैताःपुरोनुवाक्यायःप्रैषःसप्रैषोयायाज्यासायाज्यातदाहुःकादेवताः
स्वाहाकृतयइतिविश्वेदेवाइतिब्रूयात्तस्मात्स्वाहाकृतंहविरदंतुदेवाइतियजंतीतिदेवावैयज्ञेनश्रमेणतपसाहुतिभिःस्वर्गं
लोकमजयंस्तेषांवपायामेवहुतायांस्वर्गोलोकःप्राख्यायतंतेवपामेवहुत्वाऽनादृत्येतराणिकर्माण्यूर्ध्वाःस्वर्गंलोकमायंस्त
तोवैमनुष्याश्चऋषयश्चदेवानांयज्ञवास्त्वभ्यायंन्यज्ञस्यकिंचिदेषिष्यामःप्रज्ञात्याइतितेभितःपरिचरंतएतंपशुमेवनिरांत्रं
शयानंतेविदुरियान्वावकिलपशुर्यावतीवपेतिसएतावानेवपशुर्यावतीवपाथयदेनंतृतीयसवनेश्रपयित्वाजुह्वतिभूयसी
भिर्नआहुतिभिरिष्टमसत्केवलेननःपशुनेष्टमसदितिभूयसीभिर्हास्याहुतिभिरिष्टंभवतिकेवलेनहास्यपशुनेष्टंभवतियए
वंवेद॥१३॥सावाएषामृताहुतिरेवयद्वपाहुतिरमृताहुतिरग्न्याहुतिरमृताहुतिराज्याहुतिरमृताहुतिःसोमाहुतिरेतावाअ
शरीराऽआहुतयोयावैकाश्चाशरीराआहुतयोऽमृतत्वमेवताभिर्यजमानोजयतिसावाऽएषारेतएवयद्वपाप्रेववैरेतोली
यतेप्रेववपालीयतेशुक्लंवैरेतःशुक्लावपाशरीरंवैरेतोशरीरावपायद्वैलोहितंयन्मांसंतच्छरीरंतस्माद्ब्रूयाद्यावदलोहितंताव
त्परिवासयेतिसापंचावत्ताभवतियद्यपिचतुरवत्तीयजमानःस्यादथपंचावत्तैववपाज्यस्योपस्तृणातिहिरण्यशल्कोवपा

हिरण्यशल्कआज्यस्योंपरिष्टादभिघारयतिंतदाहुर्यद्धिरण्यंनविद्येतकथंस्यादितिंद्धिराज्यस्योपस्तीर्यवपामवदायद्धिरुप
रिष्टादभिघारयंत्यमृतंवाआज्यममृतंहिरण्यंतत्रसकामउपाप्तोयआज्येतत्रसकामउपाप्तोयोहिरण्येतत्पंचसंपद्यंतेंपांक्तो
यंपुरुषःपंचधाविहितोंलोमानित्वङ्मांसमस्थिमज्जांसयावानेवपुरुषस्तावंतंयजमानंसंस्कृत्यांग्नौदेवयोन्यांजुहोत्यग्निर्वैदे
वयोर्निःसोग्नेर्देवयोन्याआहुतिभ्यःसंभूयंहिरण्यशरीरऊर्ध्वःस्वर्गलोकमेति॥१४॥देवेभ्यःप्रातर्यावभ्योंहोतरनुब्रूहीत्या
हाध्वर्युरेतेवावदेवाःप्रातर्यावाणोंयदग्निरुषाअश्विनौतएतेसप्तभिःसप्तभिश्छंदोभिरागच्छंत्यास्यदेवाःप्रातर्यावाणोहवं
गच्छंतियएवंवेदप्रजापतौवैस्वयंहोतरिप्रातरनुवाकमनुवक्ष्यंत्युभयेदेवासुरायज्ञमुपावसंन्नस्मभ्यमनुवक्ष्यत्यस्मभ्यमि
तिसवैदेवेभ्यएवान्वब्रवींत्ततोवैदेवाअभवन्परासुराभवत्यात्मनापरास्यद्विषन्पाप्माभ्रातृव्योभवतियएवंवेदप्रातर्वैसतं
देवेभ्योन्वब्रवींद्यत्प्रातरन्वब्रवींत्तत्प्रातरनुवाकस्यप्रातरनुवाकत्वंमहतिरात्र्याअनूच्यःसर्वस्यैवाचःसर्वस्यब्रह्मणःपरि
गृहीत्यैयोवैभवतियःश्रेष्ठतामश्नुतेंतस्यवाचंप्रोदितामनुप्रवदंतिंतस्मान्महतिरात्र्याअनूच्यःपुरावाचःप्रवदितोरनूच्यो
यद्वाचिप्रोदितायामनुब्रूयादन्यस्यैवैनमुदितानुवादिनंकुर्यात्तस्मान्महतिरात्र्याअनूच्यःपुराशकुनिवादादनुब्रूयान्निर्ऋ
तेर्वाएतन्मुखंयद्वयांसियच्छकुनयस्तद्यत्पुराशकुनिवादादनुब्रूयान्मायज्ञियांवाचंप्रोदितामनुप्रवदिष्मेतिंतस्मान्महति
रात्र्याअनूच्योऽथोखलुयदैवाध्वर्युरुपाकुर्यादथानुब्रूयाद्यदावाअध्वर्युरुपाकरोतिंवाचैवोपाकरोतिंवाचाहोतान्वाह

वाग्घिब्रह्मंतत्रसकामउपाप्तौयोवाचिचब्रह्मणिच ॥ १५ ॥ प्रजापतौवैस्वयंहोतरिंप्रातरनुवाकमनुवक्ष्यतिंसर्वादेव
ताआशंसंतंमामभिप्रतिपत्स्यतिमामभीतिंसप्रजापतिरैक्षतंयद्येकांदेवतामादिष्टांमभिप्रतिपत्स्यामीतरामेकेनदेवताउ
पाप्ताभविष्यंतीतिंसएतामृचमपश्यंदापोरेवतीरित्यापोवैसर्वादेवतारेवत्यःसर्वादेवताःसएतयर्चाप्रातरनुवाकंप्रत्यपद्य
तंताःसर्वादेवताःप्रामोदंतंमामभिप्रत्यपादिमामभीतिंसर्वाहास्मिन्देवताःप्रातरनुवाकमनुब्रुवतिंप्रमोदंतेसर्वाभिर्हास्य
देवताभिःप्रातरनुवाकःप्रतिपन्नोभवतियएवंवेदंतेदेवाअबिभयुरादातारोवैनइमंप्रातर्यज्ञमसुरायथौजीयांसोत्रलीयां
संएवमितितानब्रवीदिंद्रोमाविभीतंत्रिषमृद्धमेभ्योहंप्रातर्वज्रंप्रहर्तास्मीत्येतांवावतदृचमब्रवीद्वज्रस्तेनयदपोनप्त्रीयांव
ज्रस्तेनयत्रिष्टुब्वज्रस्तेनयद्वाक्तमेभ्यःप्राहरत्तेनैनानहंस्ततोवैदेवाअभवन्परासुराभवत्यात्मनापरास्यद्विषन्पाप्मांभ्रातृ
व्योभवतियएवंवेदंतदाहुःसवैहोतास्याद्यएतस्यामृचिसर्वाणिच्छंदांसिप्रजनयेदित्येषावावत्रिरनूक्तासर्वाणिच्छंदांसि
भवंत्येषाछंदसांप्रजातिः॥१६॥शतमनूच्यमायुष्कामस्यंशतायुर्वैपुरुषःशतवीर्यःशतेंद्रियंआयुष्येवैनंतद्वीर्यइंद्रियेदधा
तिंत्रीणिचशतानिषष्टिश्चानूच्यानियज्ञकामस्यंत्रीणिचवैशतानिषष्टिश्चसंवत्सरस्याहानितावान्त्संवत्सरःसंवत्सरःप्रजा
पतिःप्रजापतिर्यज्ञंउपैनंयज्ञोनमतियस्यैवंविद्वांस्त्रीणिचशतानिषष्टिंचान्वाहंसप्तचशतानिविंशतिश्चानूच्यानिप्रजापशु
कामस्यंसप्तचवैशतानिविंशतिश्चसंवत्सरस्याहोरात्रास्तावान्त्संवत्सरःसंवत्सरःप्रजापतिर्यंप्रजायमानंविश्वंरूपमिदमनु

प्रजायतेँप्रजापतिमेवतत्प्रजायमानँप्रजयापशुभिरनुप्रजायतेँप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदाष्टौशतान्यनूच्या
न्यत्राह्मणोक्तस्यंयोवादुरुक्तोक्तःशमलगृहीतोयजेताष्टाक्षरावैगायत्रींगायत्र्यावैदेवाःपाप्मानंशमलमपाघ्नतंगायत्र्यैवा
स्यतत्पाप्मानंशमलमपहँत्यपपाप्मानंहतेयएवंवेदंसहस्रमनूच्यंस्वर्गकामस्यंसहस्राश्वीनेवाइतःस्वर्गोलोकःस्वर्गस्यलोक
स्यसमष्ट्यैसंपत्त्यैसंगत्यांअपरिमितमनूच्यंमपरिमितोवैप्रजापतिःप्रजापतेर्वाएतदुक्थंयत्प्रातरनुवाकंस्तस्मिन्त्सर्वेकामा
अवरुध्यंतेंसयदपरिमितमन्वाहंसर्वेषांकामानामवरुध्यैसर्वान्कामानवरुंधेयएवंवेदंतस्मादपरिमितमेवानूच्यँसप्ताग्नेया
निच्छंदांस्यन्वाहंसप्तवैदेवलोकाःसर्वेषुदेवलोकेषुराध्नोतियएवंवेदंसप्तोषस्यानिच्छंदांस्यन्वाहंसप्तवैग्राम्याःपशवोऽव
ग्राम्यान्पशून्रुंधेयएवंवेदंसप्ताश्विनानिच्छंदांस्यन्वाहंसप्तधावैवागवदत्तावद्वैवागवदंत्सर्वस्यैवाचःसर्वस्यब्रह्मणःपरिगृ
हीत्यैतिस्रोदेवताअन्वाहंत्रयोवाइमेत्रिवृतोलोकाएषामेवलोकानामभिजित्यै ॥ १७॥ तदाहुःकथमनूच्यःप्रातरनुवाकइ
तियथाछंदसमनूच्यःप्रातरनुवाकःप्रजापतेर्वाएतान्यंगानियच्छंदांस्येषउएवप्रजापतिर्योयजतेंतद्यजमानायहितंपच्छो
नूच्यःप्रातरनुवाकंश्चतुष्पादावैपशवःपशूनामवरुध्याअर्धर्चशएवानूच्योयथैवैनमेतदन्वाहप्रतिष्ठायाएवंद्विप्रतिष्ठोवैपु
रुषंश्चतुष्पादाःपशवोयजंमानमेवतद्विप्रतिष्ठँचतुष्पात्सुपशुषुप्रतिष्ठापयतितस्मादर्धर्चशएवानूच्यंस्तदाहुर्यद्यूहंःप्रातंर



१ अत्रप्रातरनुवाकशब्दोनभाष्यकारेष्टः किंतुतत्रप्रातरनुवाकक्रममाक्षिप्यसमाधत्तेइत्यवतरणंदृश्यते ।

नुवाकःकथमव्यूळ्होभवतीतिंयदेवास्यबृहतींमध्यान्नैतीतिब्रूयात्तेनेत्याहुतिभागावाअन्यादेवताअन्याःस्तोमभागाश्छं
दोभागांस्तायाअग्नावाहुतयोहूयंतेताभिराहुतिभागाःप्रीणात्यथयत्स्तुवंतिचशंसंतिचतेनस्तोमभागाश्छंदोभागाउभ
य्योहास्यैतादेवताःप्रीताअभीष्टाभवंतियएवंवेदत्रयस्त्रिंशद्वैदेवाःसोमपास्त्रयस्त्रिंशदसोमपाअष्टौवसवएकादशरुद्रा
द्वादशादित्याःप्रजापतिश्चवषट्कारश्चैतेदेवाःसोमपाएकादशप्रयाजाएकादशानुयाजाएकादशोपयाजाएतेसोमपाः
पशुभाजनाःसोमेनसोमपान्प्रीणातिपशुनासोमपानुभय्योहास्यैतादेवताःप्रीताअभीष्टाभवंतियएवंवेदाभूदुषारुश
त्पशुरित्युत्तमयापरिदधातितदाहुर्यत्रीन्कतूनन्वाहाग्नेयमुषस्यमाश्विनंकथमस्यैकयर्चापरिदधतःसर्वेत्रयःऋतवःपरि
हिताभवंतीत्यभूदुषारुशत्पशुरित्युषसोरूपमाग्निरधाय्यृत्वियइत्यग्नेरयोजिविवांवृषणवसूरथोदस्रावमर्त्यांमाध्वीममश्रुतं
हवमित्यश्विनोरेवमुहास्यैकयर्चापरिदधतःसर्वेत्रयःऋतवःपरिहिताभवंतिभवंति ॥ १८ ॥ इतिद्वितीयोऽध्यायः ॥२॥

ऋषयोवैसरस्वत्यांसत्रमासतंतेकवषमैलूषंसोमादनयन्दास्याःपुत्रःकितवोब्राह्मणःकथंनोमध्येदीक्षिष्टेतितंबहिर्ध
न्वोदवहन्नत्रैनंपिपासाहंतुंसरस्वत्याउदकंमापादितिसबहिर्धन्वोदूळ्हःपिपासयाविर्त्तएतदपोनप्त्रीयमपश्यत्प्रदेवत्राब्र
ह्मणेगातुरेत्वितितेनापांप्रियंधामोपागच्छंत्तमापोनूदायंस्तंसरस्वतीसमंतंपर्यधावत्तस्माद्धाप्येतर्हिपरिसारकमित्याच
क्षतेयदेनंसरस्वतीसमंतंपरिससारतेवाऋषयोब्रुवन्विदुर्वाइमंदेवाउपेमंह्वयामहाइतितथेतितमुपाह्वयंततमुपहूयैतदपो

नप्त्रीयमकुर्वंतंप्रदेवत्राब्रह्मणेगातुरेत्वितिंतेनापांप्रियंधामोपागच्छंन्नुपदेवानामुपापांप्रियंधामगच्छंत्युपदेवानांजयति परमंलोकंयएवंवेदंयश्चैवंविद्वानेतदपोनप्त्रीयंकुरुतेतत्संततमनुब्रूयात्संततवर्षीहप्रजाभ्यःपर्जन्योभवतियत्रैवंविद्वाने तत्संततमन्वाहंयदवग्राहमनुब्रूयाज्जीमूतवर्षीहप्रजाभ्यःपर्जन्यःस्यात्तस्मात्तत्संततमेवानूच्यैतस्यत्रिःप्रथमांसंततम न्वाहंतेनैवतत्सर्वंसंततमनूक्तंभवति ॥१९॥ताएतानवांनंतरायमन्वाहंहिनोतानोऽअध्वरंदेवयज्येतिदशमीमावर्वृतती रधनुद्विधाराइत्यावृत्तास्वेकधनासुप्रतियदापोअदृश्रमायतीरितिंप्रतिदृश्यमानास्वाधेनवःपयसातूर्ण्यर्थाइत्युंपायंतीषु समन्यायंत्युपयंत्यन्याइतिंसमायतीष्वापोवाअस्पर्धंतवयंपूर्वंयज्ञंवक्ष्यामोवयमितियाश्चेमाःपूर्वेद्युर्वसतीवर्योगृह्यंतेया श्चप्रातरेकधनास्ताभृगुरपश्यंदापोवैस्पर्धंतइतिताएतयर्चासमज्ञपयंत्समन्यायंत्युपयंत्यन्याइतिताःसमजानतंसंजाना नाहास्यापोयज्ञंवहंतियएवंवेदापोनदेवीरुपयंतिहोत्रियमितिहोतृचमसेसमवनीयमानास्वन्वाहंवसतीवरीष्वेकधनासु चावेरपोध्वर्या३उइतिहोताध्वर्युंपृच्छंत्यापोवैयज्ञोविदौयज्ञा३म् इत्येवतदाहोतेमनन्नमुरित्यध्वर्युःप्रत्याहोतेमाःपश्ये त्येवतदाहंतास्वध्वर्योइंद्रायसोमंसोतामधुमंतं[1] ॥ वृष्टिवनितीव्रांतंबहुरमध्यंवसुमतेरुद्रवतआदित्यवतंऋभुमतेविभु मतेवाजवतेबृहस्पतिवंतेविश्वदेव्यावते ॥ यस्येंद्रःपीत्वावृत्राणिजंघनंत्प्रसजन्यानितारिषो३मितिप्रत्युत्तिष्ठति

१ भाष्येत्रनावसानंकृतं ।

प्रत्युत्थेयावाआपः प्रतिवैश्रेयांसमायंतमुत्तिष्ठंतितस्मात्प्रत्युत्थेया अनुपर्यावृत्यांअनुवैश्रेयांसंपर्यावर्ततेतस्मादनुपर्यावृ
त्याअनुव्रुवंतैवानुप्रपत्तव्यमीश्वरोहयद्यप्यन्योयजेतांथहोतारंयशोतें[1]स्तस्मादनुब्रुवंतैवानुप्रपत्तव्यमंवयोयंत्यध्वभिरिं
त्येतामनुब्रुवन्ननुप्रपद्येतंजामयोअध्वरीयतां ॥ पृंचतीर्मधुनापयइतियोमधव्योयशोतोंव्रुभूषेदमूर्याउपसूर्यैयाभिर्वासूर्यः
सहेतितेजस्कामोब्रह्मवर्चसकामोंपोदेवीरुपह्वयेयत्रगावःपिवंतिनइतिपशुकामस्ताएताःसर्वाएवानुब्रुवन्ननुप्रपद्येतैतेषां
कामानामवरुध्यांएतान्कामानवरुंधेयएवंवेदेमाअग्मन्रेवतीजींवधन्याइतिसाद्यमानास्वन्वाहंवसतीवरीष्वेकधनासु
चांग्मन्नापउशतीर्वर्हिरेदमितिसन्नासुसएतयापरिदधाति ॥ २० ॥ शिरोवाएतद्यज्ञस्ययत्प्रातरनुवाकःप्राणापानाऽउपां
श्वंतर्यामौवज्रएववाङ्नाहुतयोरुपांश्वंतर्यामयोंर्होतावाचंविसृजेतंयदहुतयोरुपांश्वंतर्यामयोंर्होतावाचंविसृजेतंवाचाव
ज्रेणयजमानस्यप्राणान्वीयांद्यएनंतत्रब्रूयांद्वाचावज्रेणयजमानस्यप्राणान्व्यगांत्प्राणएनंहास्यतीतिशश्वत्तथास्यांत्तस्मा
न्नाहुतयोरुपांश्वंतर्यामयोंर्होतावाचंविसृजेतंप्राणंयच्छस्वाहांत्वासुहवसूर्यायेत्युपांशुमनुमंत्रयेतंतमभिप्राणेत्प्राणप्राणंमे
यच्छेत्यपानंयच्छस्वाहांत्वासुहवसूर्यायैत्यंतर्याममनुमंत्रयेतंतमभ्यपानेदपानापानंमेयच्छेतिंव्यानायत्वेत्युपांशुसवनं



ग्रावाणमभिमृश्यवाचंविसृजतंआत्मावाउपांशुसवनंआत्मन्येवतद्धोतांप्राणान्प्रतिधायवाचंविसृजतेसर्वायुःसर्वायु

---

१ 'यशोर्तोंर्बुभूषेत्' इतिभाष्यपाठः । यशोर्त्तोःसोमयागनिमित्तांकीर्तिंप्राप्तुंसमर्थइतितत्रार्थः ।

त्वायंसर्वमायुरेतियेएवंवेद ॥ २१ ॥ तदाहुःसर्पे३त् ॥ नसर्पे३त् इति ॥ सर्पेदितिहैकआहुरुभयेषांवाएषदेवमनुष्याणांभ
क्षोयद्बहिष्पवमानंस्तस्मादेनमभिसंगच्छंतंइतिवदंतस्तत्तन्नादृत्यंयत्सर्पेद्दचमेवंतत्साम्नोनुवर्त्मानंकुर्याद्यएनंतत्रब्रूयाद
नुवर्त्मान्वाअयंहोतासामगस्याभूदुद्गातारंयशोधादच्योष्टायतनाच्चोष्यतंआयतनादितिशश्वत्तथास्यात्तस्मात्तत्रैवासी
नोनुमंत्रयेतंयोदेवानामिहसोमपीथोयज्ञेबर्हिषिवेद्यां ३ ॥ तस्यापिभक्षयामसीत्येवमुहास्यात्मासोमपीथादनंतरितोभ
वंत्यथोब्रूयान्मुखमसिमुखंभूयासमितिमुखंवाएतद्यज्ञस्ययद्बहिष्पवमानोमुखंस्वेषुभवतिश्रेष्ठःस्वानांभवतियएवंवेद ॥सु
रीवैदीर्घजिह्वीदेवानांप्रातःसवनंमवालेटद्व्यमाद्यंत्तेदेवाःप्राजिज्ञासंतंतेमित्रावरुणावब्रुवंन्युवमिदंनिष्कुरुतमितितौत
थेत्यब्रूतांतौवैवोवरंवृणावहाइतिवृणाथामितितावेतमेववरमवृणातांप्रातःसवनेप्रयस्यांसैनयोरेषाच्युतावरवृताह्येनयो
स्तद्यदस्यैविमत्तमिवतदस्यैसमृद्धंविमत्तमिवहितौतयानिरकुरुतां ॥ २२ ॥ देवानांवैसवनानिनाध्रियंतंतएतान्पुरोळा
शानपश्यंस्तानन्सवनंनिरवपंन्त्सवनानांधृत्यैततोवैतानितेषामध्रियंतंतद्यदनुसवनंपुरोळाशानिरुप्यंतेसवनानामेवधृ
त्यैतथाहितानितेषामध्रियंतंपुरोवाएतान्देवाअक्रतयत्पुरोळाशांस्तत्पुरोळाशानांपुरोळाशत्वंतदाहुरनुसवनंपुरोळाशा
न्निर्वपेदष्टाकपालंप्रातःसवनंएकादशकपालंमाध्यंदिनेसवनेद्वादशकपालंतृतीयसवनेतथाहिसवनानांरूपंतथाछंदसा
मितितत्तन्नादृत्यंमैंद्रावाएतेसर्वेनि [illegible] कादशकपालानेवनिर्वपेत्तदाहुर्यतोघृतेनान

त्कंस्यांत्ततःपुरोळाशस्यप्राश्नीयात्सोमपीथस्यगुप्त्यैघृतेनहिवज्रेणेंद्रोवृत्रमहंन्नितितत्तन्नाद्दत्यैंहविर्वाएतद्यदुत्पूतंसोमपी
थोवाएषयदुत्पूतंतस्मात्तस्ययतएवकुतश्चप्राश्नीयात्सर्वतोवाएताःस्वधायजमानमुपक्षरंतियदेतानिहवींष्याज्यंधानाःक
रंभंःपरिवापःपुरोळाशःपयस्येतिंसर्वतएवैनंस्वधाउपक्षरंतियएवंवेद ॥ २३ ॥ योवैयज्ञंहविष्पंक्तिंवेदंहविष्पंक्तिनायज्ञेन
राध्नोतिंधानाःकरंभःपरिवापःपुरोळाशःपयस्येत्येषवैयज्ञोहविष्पंक्तिर्हविष्पंक्तिनायज्ञेनराध्नोतियएवंवेदंयोवैयज्ञमक्षर
पंक्तिंवेदांक्षरपंक्तिनायज्ञेनराध्नोतिंसुमत्पद्वग्दइत्येषवैयज्ञोक्षरपंक्तिरक्षरपंक्तिनायज्ञेनराध्नोतियएवंवेदंयोवैयज्ञंनराशं
सपंक्तिंवेदंनराशंसपंक्तिनायज्ञेनराध्नोतिंद्विनाराशंसंप्रातःसवनंद्विनाराशंसंमाध्यंदिनंसवनंसकृन्नाराशंसंतृतीयसवनं
मेषवैयज्ञोनराशंसपंक्तिर्नराशंसपंक्तिनायज्ञेनराध्नोतियएवंवेदंयोवैयज्ञंसवनपंक्तिंवेदंसवनपंक्तिनायज्ञेनराध्नोतिंपशुरु
पवसथेत्रीणिसवनानिंपशुरनूबंध्यइंत्येषवैयज्ञःसवनपंक्तिःसवनपंक्तिनायज्ञेनराध्नोतियएवंवेदंहरिवाँइंद्रोधानाअत्तुंपूष
ण्वान्करंभंसरस्वतीवान्भारतीवान्परिवापंइंद्रस्यापूपइतिहविष्पंक्त्यायजंत्यृक्सामेवाइंद्रस्यहरींपशवःपूषान्नंकरंभंःसर
स्वतीवान्भारतीवानितिंवागेवसरस्वतीप्राणोभरतंःपरिवापइंद्रस्यापूपइत्यंन्नमेवपरिवापइंद्रियमपूपंएतासामेवतद्देवता
नांयजमानंसायुज्यंसरूपतांसलोकतांगमयतिंगच्छतिश्रेयसःसायुज्यंगच्छतिश्रेष्ठतांयएवंवेदंहविरग्नेवीहीत्यनुसवनंपु
रोळाशःस्विष्टकृतोयजंत्ययवत्सारोवांएतेनाग्नेःप्रियंधामोपागच्छंत्सपरमंलोकमजयंदुपाग्नेःप्रियंधामगच्छांतिंजयतिपरमं

॥ २३ ॥

लोकंयएवंवेदंयश्चैवंविद्वानेतयाहविष्पंक्त्यायजतेंयजतीतिचयजतीतिच ॥ २४ ॥ ॥ इतितृतीयोऽध्यायः ॥ ३ ॥ ॥

देवावेसोमस्यराज्ञोग्रपेयेनसमपादयंन्नहंप्रथमः पिबेयमहंप्रथमः पिबेयंमित्येवाकामयंतंतेसंपादयंतोब्रुवंन्हंताजिमया मसयोनउज्जेष्यतिसप्रथमःसोमस्यपास्यतीतितथेतिंतआजिमयुंस्तेषामाजिंयतामभिसृष्टानांवायुर्मुखंप्रथमःप्रत्यपद्य तांथेंद्रोथमित्रावरुणावथाश्विनौंसोवेदिंद्रोवायुमुद्वैजयतीतिंतमनुपरापतंत्सहनावथोज्जयावेतिंसनेत्यब्रवींदहमेवोज्जे ष्यामीतिंतृतीयंमेथोज्जयावेतिंनेतिहैवाब्रवींदहमेवोज्जेष्यामीतिंतुरीयंमेथोज्जयावेतितथेतिंतंतुरीयेत्याजंततत्तुरीयभा गिंद्रोभवत्रिभाग्वायुंस्तौसहैवेंद्रवायूउदजयतांसहमित्रावरुणौसहाश्विनौंतएषामेतेयथोज्जितंभक्षांइंद्रवाय्वोःप्रथमोंथ मित्रावरुणयोरथाश्विनोंःसएषइंद्रतुरीयोग्रहोंगृह्यतेयदैंद्रवायवंस्तदेतदृषिःपश्यन्नभ्यनूवाचंनियुत्वाँइंद्रसारथिरितिंत स्माद्धाप्येतर्हिभरताःसत्वनांवित्तिंप्रयंतिंतुरीयेहैवसंग्रहीतारोवदंतेंमुनैवानूकाशेनंयददइंद्रःसारथिरिवभूत्वोदजयत् ॥ २५ ॥ तेवाएतेप्राणाएवयद्विदेवत्यांवाक्चप्राणश्चैंद्रवायवंश्चक्षुश्चमनश्चमैत्रावरुणंःश्रोत्रंचात्माचाश्विनंस्तस्यहैतस्यैं द्रवायवस्याप्येकेंनुष्टुभौपुरोनुवाक्येकुर्वंतिंगायत्र्यौयाज्यैवाक्चवाएषप्राणश्चग्रहोयदैंद्रवायवंस्तदपिच्छंदोभ्यांयथायथं क्लृप्स्येतेइतिंतत्तन्नादृत्यंव्यृद्धंवाएतद्यज्ञेक्रियतेंयत्रपुरोनुवाक्याज्यायसीयाज्यायैंयत्रवैयाज्याज्यायसीतत्समृद्धंमथोय



१ 'यथायथंकल्प्स्येते' इतिभाष्यपाठः ।

समेयस्यौतत्कामायतथाकुर्यात्प्राणस्यचवाचश्चात्रैवतदुपाप्तंवायव्यापूर्वापुरोनुवाक्यैंद्रवायव्युत्तरैवंयाज्ययोःसायावा
यव्यातयाप्राणंकल्पयतिवायुर्हिप्राणोथयैंद्रवायवीतस्यैयदैंद्रंपदंतेनवाचंकल्पयतिवाग्घ्यैंद्र्युपोतंकाममाप्नोतियःप्राणे
चवाचिचंनयज्ञेविषमंकरोति ॥ २६ ॥ प्राणावैद्विदेवत्याएकपात्रागृह्यंतेतस्मात्प्राणाएकनामानोद्विपात्राहूयंतेतस्मा
त्प्राणाद्वंद्वंयेनैवाध्वर्युर्यजुषाप्रयच्छतितेनहोताप्रतिगृह्णात्येषवसुःपुरूवसुरिहवसुःपुरूवसुर्मयिवसुःपुरूवसुर्वाक्पावा
चंमेपाहीत्यैंद्रवायवंभक्षयंत्युपहूतावाक्सहप्राणेनोपमांवाक्सहप्राणेनह्वयतामुपहूताऋषयोदैव्यासस्तनूपावानस्तन्वस्त
पोजाउपमामृषयोदैव्यासोह्वयंतांतनूपावानस्तन्वस्तपोजाइतिप्राणावाऋषयोदैव्यासस्तनूपावानस्तन्वस्तपोजास्तनेवत
दुपह्वयतंएषवसुर्विदद्वसुरिहवसुर्विदद्वसुर्मयिवसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मेपाहीतिमैत्रावरुणंभक्षयंत्युपहूतंचक्षुःसहमन
सोपमांचक्षुःसहमनसाह्वयतामुपहूताऋषयोदैव्यासस्तनूपावानस्तन्वस्तपोजाउपमामृषयोदैव्यासोह्वयंतांतनूपावानस्त
न्वस्तपोजाइतिप्राणावाऋषयोदैव्यासस्तनूपावानस्तन्वस्तपोजास्तानेवतदुपह्वयतंएषवसुःसंयद्वसुरिहवसुःसंयद्वसुर्मयि
वसुःसंयद्वसुःश्रोत्रपाःश्रोत्रंमेपाहीत्याश्विनंभक्षयंत्युपहूतंश्रोत्रंसहात्मनोपमांश्रोत्रंसहात्मनाह्वयतामुपहूताऋषयोदैव्या
सस्तनूपावानस्तन्वस्तपोजाउपमामृषयोदैव्यासोह्वयंतांतनूपावानस्तन्वस्तपोजाइतिप्राणावाऋषयोदैव्यासस्तनूपावान
स्तन्वस्तपोजास्तानेवतदुपह्वयतेपुरस्तात्प्रत्यंचंमैंद्रवायवंभक्षयतितस्मात्पुरस्तात्प्राणापानौपुरस्तात्प्रत्यंचंमैत्रावरुणंभक्ष

यतितस्मात्पुरस्ताच्चक्षुषींसर्वतः परिहारमाश्विनंभक्षयतितस्मान्मनुष्याश्चपशवश्चसर्वतोवाचंवदंतींशृण्वंति ॥२७॥ प्रा
णावैद्विदेवत्यां अनवानंद्विदेवत्यान्यजेत्प्राणानांसंतत्यैप्राणानामव्यवच्छेदायप्राणावैद्विदेवत्यानद्विदेवत्यानामनुवषट्
कुर्यांद्यद्विदेवत्यानामनुवषट्कुर्यांदसंस्थितान्प्राणान्त्संस्थापयेत्संस्थावाऽएषायदनुवषट्कारोयएनंतत्रब्रूयांदसंस्थिता
न्प्राणान्समतिष्ठिपत्प्राणएनंहास्यतीतिशश्वत्तथास्यात्तस्मान्नद्विदेवत्यानामनुवषट्कुर्यात्तदाहुर्द्विरागूर्यमैत्रावरुणोद्विः
प्रेष्यतिसकृदागूर्यहोताद्विर्वषट्करोतिकाहोतुरागूरितिप्राणावैद्विदेवत्याऽआगूर्वज्रस्तद्यदत्रहोतांतरेणागुरेतागुरावज्रे
णयजमानस्यप्राणान्वीयाद्यएनंतत्रब्रूयादागुरावज्रेणयजमानस्यप्राणान्व्यगात्प्राणएनंहास्यतीतिशश्वत्तथास्यात्तस्मा
त्तत्रहोतातरेणनागुरेतांथोमनोवैयज्ञस्यमैत्रावरुणोवाग्यज्ञस्यहोतामनसावाइषितावाग्वदतियांह्यन्यमनावाचंवदत्य
सुर्यावैसावागदेवजुष्टातद्यदेवात्रमैत्रावरुणोद्विरागुरतेसैवहोतुरागूः ॥ २८ ॥ प्राणावाऋतुयाजास्तद्यदृतुयाजैश्चरं
तिप्राणानेवतद्यजमानेदधातिषळृतुनेतियजंतिप्राणमेवतद्यजमानेदधातिचत्वारऋतुभिरितियजंत्यपानमेवतद्यजमानेद
धातिद्विर्ऋतुनेत्युपरिष्टाद्व्यानमेवतद्यजमानेदधातिसवाअयंप्राणस्त्रेधाविहितःप्राणोपानोव्यानइतितद्यदृतुनऋतुभिर्ऋतु
नेतियजंतिप्राणानांसंतत्यैप्राणानामव्यवच्छेदायप्राणावाऋतुयाजानर्तुयाजानामनुवषट्कुर्यादसंस्थितावाऋतवएकैक
एवंयदृतुयाजानामनुवषट्कुर्यादसंस्थितानृतून्त्संस्थापयेत्संस्थावाएषायदनुवषट्कारोयएनंतत्रब्रूयादसंस्थितानृतून्त्स

मतिष्ठिपंहुष्षमंभविष्यतीतिशश्वत्तथास्यात्तस्मान्नर्तुयाजानामनुवषट्कुर्यात् ॥ २९ ॥ प्राणावैद्विदेवत्याःपशवइळा
द्विदेवत्यान्भक्षयित्वैळामुपह्वयतेपशवोवाइळांपशूनेवतदुपह्वयतेपशून्यजमानेदधातितदाहुरवांतरेळांपूर्वांप्राश्नीया३
त् ॥ होतृचमसंभक्षये ३ त्३इति ॥ अवांतरेळामेवपूर्वांप्राश्नीयादथहोतृचमसंभक्षयेद्यद्वावद्विदेवत्यान्पूर्वान्भक्षयति
तेनास्यसोमपीथःपूर्वोभक्षितोभवतितस्मादवांतरेळामेवपूर्वांप्राश्नीयादथहोतृचमसंभक्षयेत्तदुभयतोऽन्नाद्यंपरिगृह्णाति
सोमपीथाभ्यामन्नाद्यस्यपरिगृहीत्यैप्राणावैद्विदेवत्याआत्माहोतृचमसोद्विदेवत्यानांसंस्रवान्होतृचमसेसमवनयत्यात्म
न्येवतद्धोताप्राणान्त्समवनयतेसर्वायुःसर्वायुत्वायसर्वमायुरेतियएवंवेद ॥ ३० ॥ देवावैयदेवयज्ञेकुर्वंस्तदसुराअकुर्वं
स्तेसमावद्वीर्याएवासन्नव्यावर्तंततततोवैदेवाएतंतूष्णींशंसमपश्यंस्तमेषामसुरानान्ववायंस्तूष्णींसारोवाएषयत्तूष्णींशंसो
देवावैयंयमेववज्रमसुरेभ्यउदयच्छंस्तंतमेषामसुराःप्रत्यबुध्यंतततोवैदेवाएतंतूष्णींशंसंवज्रमपश्यंस्तमेभ्यउदयच्छंस्तमे
षामसुरानप्रत्यबुध्यंततमेभ्यःप्राहरंस्तेनैनानप्रतिबुद्धेनाघ्नंस्ततोवैदेवाअभवन्पराऽसुराभवत्यात्मनापरास्यद्विषन्पाप्मा
भ्रातृव्योभवतियएवंवेदतेवैदेवाविजितिनोमन्यमानायज्ञमतन्वततमेषामसुराअभ्यायंन्यज्ञवेशसमेषांकरिष्यामइति
तान्त्समंतमेवोदारान्परियत्तानुदपश्यंस्तेब्रुवन्त्संस्थापयामेमंयज्ञंयज्ञंनोसुरामावधिषुरितितथेतितंतूष्णींशंसेसंस्थापयं
न्भूरग्निर्ज्योतिर्ज्योतिरग्निरित्याज्यप्रउगेसंस्थापयन्निंद्रोज्योतिर्भुवोज्योतिरिंद्रइतिनिष्केवल्यमरुत्वतीयेसंस्थापयन्त्सू

यौंज्योतिर्ज्योतिःस्वःसूर्यइतिंवैश्वदेवाग्निमारुतेसंस्थापयँस्तमेवंतूष्णींशंसेसंस्थापयँस्तमेवंतूष्णींशंसेसंस्थाप्यंतेनारिष्टे
नोदृचमाश्नुवतंसतदावावयज्ञःसंतिष्ठतेंयदाहोतातूष्णींशंसंशंसतिंसयएनंशस्तेतूष्णींशंसंउपवावदेदनुवाव्याहरेत्तंब्रूया
देषएवैतामार्तिंमारिष्यतिंप्रातर्वावयमद्येमंशस्तैंतूष्णींशंसेसंस्थापयामंस्तंयथागृहानितंकर्मणानुसमियादेवमेवैनमिद
मनुसमिमऽइतिंसहवावतामार्तिंमृच्छतिंयएवंविद्वान्त्संशस्तेतूष्णींशंसंउपवावदत्यनुवाव्याहरतिंतस्मादेवंविद्वान्त्संश
स्तेतूष्णींशंसेंनोपवदेन्नानुव्याहरेत् ॥ ३१ ॥ चक्षूंषिवाएतानिसवनानांयत्तूष्णींशंसोंभूरग्निर्ज्योतिर्ज्योतिरग्निरितिंप्रात
सवनस्यचक्षुषींइंद्रोज्योतिर्भुवोज्योतिरिंद्रइतिंमाध्यंदिनस्यसवनस्यचक्षुषींसूर्योज्योतिर्ज्योतिःस्वःसूर्यइतिंतृतीयसव
नस्यचक्षुषींचक्षुष्मद्भिःसवनैराध्नोतिंचक्षुष्मद्भिःसवनैःस्वर्गंलोकमेतियएवंवेदंचक्षुर्वाएतद्यज्ञस्ययत्तूष्णींशंसंएकासती
व्याहृतिर्द्वेधोच्यतेंतस्मादेकंसच्चक्षुर्द्वेधामूलंवाएतद्यज्ञस्ययत्तूष्णींशंसोंयंकामयेतानायतनवान्त्स्यादितिंनास्ययज्ञेतूष्णीं
शंसंशंसेदुन्मूलमेवतद्यज्ञंपराभवंतमनुपराभवतिंतदुवाआहुःशंसेदेवांपिवैतद्दत्विजेहितंयद्धोतातूष्णींशंसंनशंसंत्यृत्वि
जिहिसर्वोयज्ञःप्रतिष्ठितोंयज्ञेयजमानस्तस्माच्छंस्तव्यःशंस्तव्यः ॥ ३२ ॥ इतिचतुर्थोऽध्यायः ॥ ४ ॥ ॥

ब्रह्मवाआहावःक्षत्रंनिविद्विट्सूक्तंमाह्वयतेथनिविदंदधातिंब्रह्मण्येवतत्क्षत्रमनुनियुनक्तिंनिविदंशस्त्वासूक्तंशंसतिंक्ष
त्रंवैनिविद्विट्सूक्तंक्षत्रएवतद्विशमनुनियुनक्तियंकामयेतक्षत्रेणैनंव्यर्धयामीतिमध्यएतस्यैनिविदःसूक्तंशंसेत्क्षत्रंवैनिवि

द्विट्सूक्तंक्षत्रेणैवैनंतद्व्यर्धयतियंकामयेतविशैनंव्यर्धयानीतिमध्यएतस्यसूक्तस्यनिविदंशंसेत्क्षत्रंवैनिविद्विट्सूक्तंविशैवै
नंतद्व्यर्धयतियमुकामयेतसर्वमेवास्ययथापूर्वमृजुक्लृप्तंस्यादित्याह्वयेताथनिविदंदध्यादथसूक्तंशंसेत्सोऽसर्वस्यक्लृप्तिःप्र
जापतिर्वाइदमेकएवाग्रआसंसोकामयतप्रजायेयभूयान्त्स्यामितिंसतपोतप्यतसवाचमयच्छंत्ससंवत्सरस्यपरस्ताद्व्याह
रद्द्वादशकृत्वोद्वादशपदावाएषानिविदेतांवावतांनिविदंव्याहरंत्तांसर्वाणिभूतान्यन्वसृज्यंततदेतदृषिःपश्यन्नभ्यनूवाचं
सपूर्वयानिविदाकव्यतायोरिमाःप्रजाअजनयन्मनूनामितितद्यदेतांपुरस्तात्सूक्तस्यनिविदंदधातिंप्रजात्यैप्रजायतेप्रज
यापशुभिर्यएवंवेद ॥२३॥ अग्निर्देवेद्धइतिशंसंत्यसौवाअग्निर्देवेद्धंएतंहिदेवाइंधतंएतमेवतदेतस्मिँल्लोकआयातयंत्यग्नि
र्मन्विद्धइतिशंसंत्ययंवाअग्निर्मन्विद्धंइमंहिमनुष्याइंधतेंऽग्निमेवतदस्मिँल्लोकआयातयंत्यग्निःसुषमिदितिशंसतिवायुर्वा
अग्निःसुषमिद्वायुर्हिस्वयमात्मानंसमिंधेस्वयमिदंसर्वंयदिदंकिंचंवायुमेवतदंतरिक्षलोकआयातयतिंहोतादेववृतऽइति
शंसंत्यसौवैहोतादेववृतंएषहिसर्वतोदेवैर्वृतंएतमेवतदेतस्मिँल्लोकआयातयतिंहोतामनुवृतइतिशंसंत्ययंवाअग्निर्होताम
नुवृतोयंहिसर्वतोमनुष्यैर्वृतोग्निमेवतदस्मिँल्लोकआयातयातिंप्रणीर्यज्ञानामितिशंसतिंवायुर्वैप्रणीर्यज्ञानांयदाहिप्राणित्यं
थयज्ञोथाग्निहोत्रंवायुमेवतदंतरिक्षलोकआयातयतिंरथीरध्वराणामितिशंसत्यंसौवैरथीरध्वराणामेषहियथैतच्चरतिंरथी
रिवैतमेवतदेतस्मिँल्लोकआयातयंत्यतूर्तोहोतेतिशंसंत्ययंवाअग्निरतूर्तोहोतेमंहनकश्चनतिर्यंचंतरंत्यग्निमेवतदस्मिँल्लोक



॥ २६ ॥

आयातयतिंतूर्णिर्हव्यवाळितिशंसतिंवायुर्वैतूर्णिर्हव्यवाड्वायुर्हीदंसर्वंसद्यस्तरतियदिदंकिंचवायुर्देवेभ्योहव्यंवहतिंवायु
मेवतदंतरिक्षलोकआयातयंत्यादेवोदेवान्वक्षदितिशंसंत्यसौवैदेवोदेवानावहंत्येतमेवतदेतस्मिँल्लोकआयातयतिंयक्षद
ग्निर्देवोदेवानितिशंसंत्ययंवाअग्निर्देवोदेवान्यजंत्यग्निमेवतदस्मिँल्लोकआयातयतिंसोअध्वराकरतिजातवेदाइतिशंसतिं
वायुर्वैजातवेदांवायुर्हीदंसर्वंकरोतियदिदंकिंचवायुमेवतदंतरिक्षलोकआयातयति ॥ ३४ ॥ प्रवोदेवायाग्नयइत्यंनुष्टुभः
प्रथमेपदेविहरतिंतस्मात्स्त्र्यूरूविहरतिंसमस्यत्युत्तरेपदेंतस्मात्पुमानूरूसमस्यतितन्मिथुनंमिथुनमेवतदुक्थमुखेकरोतिं
प्रजात्यैप्रजयातेप्रजयापशुभिर्यएवंवेदंप्रवोदेवायाग्नयइत्येवानुष्टुभंःप्रथमेपदेविहरतिंवज्रमेवतत्परोवरीयांसंकरोतिंस
मस्यत्येवोत्तरेपदेंआरंभणतोवैवज्रस्याणिमांथोदंडस्याथोपरशोंर्वज्रमेवतत्प्रहरतिंद्विषतेभ्रातृव्यायवधंयोस्यस्तृत्यस्त
स्मैस्तर्तवै ॥ ३५ ॥ देवासुरावाएषुलोकेषुसमयतंतंतेवैदेवाःसदएवायतनमकुर्वततंतान्त्सदसोजयंस्तआग्नीध्रंसंप्रापद्यंतंते
ततोनपराजयंततस्मादाग्नीध्रउपवसंतिंनसदस्याग्नीध्रेह्यधारयंतयदाग्नीध्रेधारयंततदाग्नीध्रस्याग्नीध्रत्वंतेषांवैदेवानामसु
रांःसदस्यानग्नीन्निर्वापयांचक्रुंस्तेदेवाआग्नीध्रादेवंसदस्यानग्नीन्विहरंततैरसुररक्षांस्यपाघ्नंततथैवैतद्यजमानांआग्नीध्रादे
वसदस्यानग्नीन्विहरंत्यसुररक्षांस्येवतदपघ्नतेंतेवैप्रातराज्यैरेवाजयंतआयंन्यदाज्यैरेवाजयंतआयंस्तदाज्यानामाज्यत्वं
तासांवैहोत्राणांमायतीनामाजयंतीनां[illegible]आग्नीध्रीयाहीयतंतस्यामिंद्राग्नीअध्यास्तांमिंद्राग्नीवैदेवानामोजिष्ठौबलिष्ठौस

हिष्ठौसत्तमौपारयिष्णुतमौंतस्मादैंद्राग्नमच्छावाकःप्रातःसवनेशंसतींद्राग्नीहितस्यामध्यास्ताँतस्मादुपुरस्तादन्येहोत्रकाः
सदःप्रसर्पंतिपश्चाच्छावाकःपश्चेवहिहीनोनुसंजिगमिषतिंतस्माद्योब्राह्मणोंवहृचोवीर्यवान्स्यात्सोस्याच्छावाकीयांकु
र्यात्तेनैवसाहीनाभवति ॥ ३६ ॥ देवरथोवाएषयद्यज्ञस्तस्यैतावंतरौरश्मीयदाज्यप्रउगेतद्यदाज्येनपवमानमनुशंसतिंप्र
उगेणाज्यंदेवरथस्यैवतदंतरौरश्मीविहरंत्यलोभायतामनुकृतिंमनुष्यरथस्यैवांतरौरश्मीविहरंत्यलोभायनास्यदेवरथो
लुभ्यतिंनमनुष्यरथोयएवंवेदंतदाहुर्यथावावस्तोत्रमेवंशस्त्रंपावमानीषुसामगाःस्तुवतआग्नेयंहोताज्यंशंसतिकथमस्य
पावमान्योनुशस्ताभवंतीतिंयोवाअग्निःसपवमानस्तदप्येतदृषिणोक्तमग्निर्ऋषिःपवमानइत्येवमुहास्याग्नेयीभिरेवप्रति
पद्यमानस्यंपावमान्योनुशस्ताभवंतिंतदाहुर्यथावावस्तोत्रमेवंशस्त्रंगायत्रीषुसामगाःस्तुवतआनुष्टुभंहोताज्यंशंसतिंकथ
मस्यगायत्र्योनुशस्ताभवंतीतिंसंपदेतिब्रूयात्सप्तैताअनुष्टुभस्तास्त्रिःप्रथमयांत्रिरुत्तमयैकादशभवंतिंविराड्याज्याद्वाद
शींनवाएकेनाक्षरेणच्छंदांसिवियंतिनद्वाभ्यांताःषोळशगायत्र्योभवंत्येवमुहास्यानुष्टुब्भिरेवप्रतिपद्यमानस्यंगायत्र्यो
नुशस्ताभवंत्यग्नइंद्रश्चदाशुषोदुरोणइत्याग्नेंद्र्यायजतिंनवाएताविंद्राग्नीसंतौव्यजयेतांमाग्नेंद्रौवाएतौसंतौव्यजयेतांतद्य
दाग्नेंद्र्यायजतिविजित्याएवंसाविराट्त्रयस्त्रिंशदक्षराभवतिंत्रयस्त्रिंशद्वैदेवांअष्टौवसवएकादशरुद्राद्वादशादित्याःप्रजा
पतिश्चवषट्कारश्चंतत्प्रथमउक्थमुखेदेवतांअक्षरभाजःकरोत्यक्षरमक्षरमेवतद्देवताअनुप्रपिबंतिंदेवपात्रेणैवतद्देवतास्तृ

ध्यंतितदाहुर्यथावावशस्त्रमेवंयाज्याऽग्नेयंहोताज्यंशंसं त्यथकस्मादाग्नेंद्यायजतीतियावाआग्नेंद्यैंद्राग्नीवैसासैंद्राग्नमेतदु
क्थंग्रहेणचतूष्णींशंसेनचैंद्राग्नीआगतंसुतंगीर्भिर्नभोवरेण्यं॥ अस्यपातंधियेषितेत्यैंद्राग्नमध्वर्युर्ग्रहंगृह्णातिभूरग्निर्ज्योति
र्ज्योतिरग्निरिंद्रोज्योतिर्भुवोज्योतिरिंद्रः सूर्योज्योतिर्ज्योतिः स्वः सूर्यऽइतिहोतातूष्णींशंसंशंसतितद्यथैवशस्त्रमेवंयाज्या
॥३७॥ होतृजपंजपतिरेतस्तत्सिंचत्युपांशुजपत्युपांश्विववैरेतसः सिक्तिः पुराहावाज्जपतियद्वैकिंचोर्ध्वमाहावाच्छस्त्रस्यै
वतत्परांचंचतुष्पद्यासीनमभ्याह्वयतेतस्मात्परांचोभूत्वाचतुष्पादोरेतः सिंचंतिसम्यङ्द्विपाद्भवतितस्मात्सम्यंचोभूत्वा
द्विपादोरेतः सिंचंतिपितामातरिश्वेत्याहप्राणोवैपिताप्राणोमातरिश्वाप्राणोरेतोरेतस्तत्सिंचत्यच्छिद्रापदाधाइतिरेतो
वाअच्छिद्रमतोह्यच्छिद्रः संभवत्यच्छिद्रोक्थाकवयः शंसन्नितियेवाअनूचानास्तेकवयस्तइदमच्छिद्रंरेतः प्रजनयन्नित्येव
तदाहसोमोविश्वविन्नीथानिनेषद्बृहस्पतिरुक्थामदानिशंसिषदितिब्रह्मवैबृहस्पतिः क्षत्रंसोमः स्तुतशस्त्राणिनीथानिचो
क्थामदानिचदैवेनचैवैतद्ब्रह्मणाप्रसूतोदैवेनचक्षत्रेणोक्थानिशंसत्येतौहवाअस्यसर्वस्यप्रसवस्येशातेयदिदंकिंचतद्यदे
ताभ्यामप्रसूतः करोत्यकृतंतदकृतमकरितिवैनिंदंतिकृतमस्यकृतंभवतिनास्याकृतंकृतंभवतियएवंवेदवागायुर्विश्वायु
र्विश्वमायुरित्याहप्राणोवाआयुःप्राणोरेतोवाग्योनिर्योनितदुपसंधायरेतः सिंचतिकइदंशंसिष्यतिसइदंशंसिष्यतीत्या



१ 'पदाधादिति' भाष्यपाठः। रेतः अधात् गर्भस्थापितवान्।

हंप्रजापतिर्वैकःप्रजापतिःप्रजनयिष्यतीत्येवतदाह ॥ ३८ ॥ आहूयतूष्णींशंसंशंसतिरेतस्तत्सिक्तंविकरोतिसिक्तिर्वाअ
ग्रेथविकृतिंरुपांशुतूष्णींशंसंशंसत्युपांश्विववैरेतसःसिक्तिस्तिरइवतूष्णींशंसंशंसतितिरइववैरेतांसिविक्रियंतेषट्पदंतू
ष्णींशंसंशंसतिषड्विधोवैपुरुषःषळंगआत्मानमेवतत्षड्विधंषळंगंविकरोतितूष्णींशंसंशस्त्वापुरोरुचंशंसतिरेतस्तद्विकृतंप्र
जनयतिविकृतिर्वाअग्रेथजातिरुच्चैःपुरोरुचंशंसत्युच्चैरेवैनंतत्प्रजनयतिद्वादशपदांपुरोरुचंशंसतिद्वादशवैमासाःसंवत्स
रःसंवत्सरःप्रजापतिःसोस्यसर्वस्यप्रजनयितासयोस्यसर्वस्यप्रजनयितासएवैनंतत्प्रजयापशुभिःप्रजनयतिप्रजात्यैप्रजा
यतेप्रजयापशुभिर्यएवंवेदजातवेदस्यांपुरोरुचंशंसतिजातवेदोन्यंगांतदाहुर्यत्तृतीयसवनमेवंजातवेदसआयतनमथक
स्मात्प्रातःसवनेजातवेदस्यांपुरोरुचंशंसतीतिप्राणोवैजातवेदाःसहिजातानांवेदयावतांवैसजातानांवेदतेभवंतियेषामु
नवेदकिमुतेस्युर्योवाआज्यआत्मसंस्कृतिंवेदतत्सुविदितं ॥ ३९ ॥ प्रवोदेवायाग्नयइतिशंसतिप्राणोवैप्रप्राणंहीमानिसर्वा
णिभूतान्यनुप्रयंतिप्राणमेवतत्संभावयतिप्राणंसंस्कुरुतेदीदिवांसमपूर्व्यमितिशंसतिमनोवैदीदायमनसोहिनकिंचनपू
र्वमस्तिमनएवतत्संभावयतिमनःसंस्कुरुतेसनःशर्माणिवीतयइतिशंसतिवाग्वैशर्मतस्माद्वाचानुवदंतमाहशर्मवदास्मा
अयांसीतिवाचमेवतत्संभावयतिवाचंसंस्कुरुतेउतनोब्रह्मन्नविषइतिशंसतिश्रोत्रंवैब्रह्मश्रोत्रेणहिब्रह्मशृणोतिश्रोत्रेब्रह्म ॥ २८ ॥

---

१ ‘ दास्माआयांसीति ’ भाष्यपाठः । आङ्पूर्वस्ययसउपरमेइत्यस्यछांदसंरूपम् ।

प्रतिष्ठितंश्रोत्रमेवतत्संभावयतिश्रोत्रंसंस्कुरुतेंसयंताविप्रएषामितिशंसंत्यपानोवैयंतापानेनह्ययंयतःप्राणोनपराङ्भव
त्यपानमेवतत्संभावयत्यपानंसंस्कुरुतंऋतावायस्यरोदसीइतिशंसतिचक्षुर्वाऋतंतस्माद्यतरोविवदमानयोराहाहमनु
ष्ठ्याचक्षुषादर्शमितितस्यश्रद्दधतिचक्षुरेवतत्संभावयतिचक्षुःसंस्कुरुतेंनूनोरास्वसहस्रवंत्तोकवत्पुष्टिमद्वस्वित्युत्तमयाप
रिदधात्यात्मावैसमस्तःसहस्रवांस्तोकवान्पुष्टिमानात्मानमेवतत्समस्तंसंभावयत्यात्मानंसमस्तंसंस्कुरुतेयाज्ययायज
तिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपुण्यामेवतल्लक्ष्मींसंभावयतिपुण्यांलक्ष्मींसंस्कुरुतेंसएवंविद्वांश्छंदोमयोदेवतामयोब्रह्म
मयोमृतमयःसंभूयदेवताअप्येतियएवंवेदयोवैतद्वेदयथाछंदोमयोदेवतामयोब्रह्ममयोमृतमयःसंभूयदेवताअप्येतित
त्सुविदितमित्यध्यात्ममथाधिदैवतं ॥४०॥ षट्पदंतूष्णींशंसंशंसतिषड्वाऋतवऽऋतूनेवतत्कल्पयत्यृतूनप्येतिद्वादशप
दांपुरोरुचंशंसतिद्वादशवैमासामासानेवतत्कल्पयतिमासानप्येतिप्रवोदेवायाग्नयइतिशंसत्यंतरिक्षंवैप्रांतरिक्षंहीमानि
सर्वाणिभूतान्यनुप्रयंत्यंतरिक्षमेवतत्कल्पयत्यंतरिक्षमप्येतिदीदिवांसमपूर्व्यमितिशंसत्यसौवैदीदाययोसौतपत्येतस्मा
द्धिनकिंचनपूर्वमस्त्येतमेवतत्कल्पयत्येतमप्येतिसनःशर्माणिवीतयइतिशंसत्यग्निर्वैशर्माण्यन्नाद्यानियच्छत्यग्निमेवत
त्कल्पयत्यग्निमप्येत्युतनोब्रह्मन्नविषइतिशंसतिचंद्रमावैब्रह्मचंद्रमसमेवतत्कल्पयतिचंद्रमसमप्येतिसयंताविप्रएषामि
तिशंसतिवायुर्वैयंतावायुनाहीदंयतमंतरिक्षनसमृच्छातिवायुमेवतत्कल्पयतिवायुमप्येत्यृतावायस्यरोदसीइतिशंसति

द्यावापृथिवीवैरोदसींद्यावापृथिवीएवतत्कल्पयतिंद्यावापृथिवीअप्येतिंनूनोरास्वसहस्रवंत्तोकवत्पुष्टिमद्वस्वित्युंत्तमया परिदधातिंसंवत्सरोवैसमस्तंःसहस्रवांस्तोकवान्पुष्टिमांन्त्संवत्सरमेवतत्समस्तंकल्पयतिंसंवत्सरंसमस्तमप्येतिंयाज्यया यजतिवृष्टिवैंयाज्याविद्युदेवंविद्युद्धीदंवृष्टिमन्नाद्यंसंप्रयच्छतिंविद्युतमेवतत्कल्पयतिंविद्युतमप्येतिंसएवंविद्वानेतन्म योंदेवतामयोभवतिभवति ॥ ४१ ॥ इतिपंचमोऽध्यायः ॥ ॥ ॥ ॥ ॥

॥ इतिद्वितीयपंचिकासमाप्ता ॥

श्रीगणेशायनमः॥हरिः ॐ॥ग्रहोक्थंवाएतद्यत्प्रउगँनवप्रातर्ग्रहागृह्यंतेंनवभिर्बहिष्पवमानेस्तुवतेंस्तुतेस्तोमेदशमंगृ
ह्णातिंहिंकारइतरासांदशमः सोसासंमावायव्यंशंसतिंतेनवायव्यउक्थवान्नैंद्रवायवंशंसतिंतेनैंद्रवायवउक्थवान्मैत्राव
रुणंशंसतिंतेनमैत्रावरुणउक्थवानाश्विनंशंसतिंतेनाश्विनउक्थवानैंद्रंशंसतिंतेनशुक्रामंथिनाउक्थवंतौवैश्वदेवंशंस
तिंतेनाग्रयणउक्थवान्त्सारस्वतंशंसतिंनसारस्वतोग्रहोस्तिंवाक्तुसरस्वतींयेतुकेचवाचाग्रहागृह्यंतेंतेस्यसर्वेशस्तोक्थाउ
क्थिनोभवंतियएवंवेद ॥ १ ॥ अन्नाद्यंवाएतेनावरुंधेयत्प्रउगंमन्यान्यादेवताप्रउगेशस्यतेंऽन्यदन्यदुक्थंप्रउगेक्रियतेंऽ
न्यदन्यदस्यान्नाद्यं[1]ग्रहेषुध्रियतेयएवंवेदैंतद्धवैयजमानस्याध्यात्मतममिवोक्थंयत्प्रउगँतस्मादेनेनैतदुपेक्ष्यतममिवेत्या
हुरेतेनह्येनंहोतासंस्करोतीतिंवायव्यंशंसतिंतस्मादाहुर्वायुःप्राणःप्राणोरेतोरेतःपुरुषस्यंप्रथमंसंभवतःसंभवतीतिंयद्वा
यव्यंशंसतिंप्राणमेवास्यतत्संस्करोत्यैंद्रवायवंशंसतिंयत्रवावप्राणस्तदपानोयदैंद्रवायवंशंसतिंप्राणापानावेवास्यतत्सं
स्करोतिंमैत्रावरुणंशंसतिंतस्मादाहुश्चक्षुःपुरुषस्यंप्रथमंसंभवतःसंभवतीतिंयन्मैत्रावरुणंशंसतिंचक्षुरेवास्यतत्संस्करो
त्याश्विनंशंसतिंतस्मात्कुमारंजातंसंवदंतंउपवैशुश्रूषतेनिवैध्यायतीतिंयदाश्विनंशंसतिंश्रोत्रमेवास्यतत्संस्करोत्यैंद्रंशंस
तिंतस्मात्कुमारंजातंसंवदंतैंप्रतिधारयतिवैग्रीवाअथोशिरइतिंयदैंद्रंशंसतिंवीर्यमेवास्यतत्संस्करोतिंवैश्वदेवंशंसतिंत

॥ ३० ॥

---

[1] ' गृहेषु ' इतिभाष्यपाठः ।

स्मात्कुमारोजातःपश्चेवप्रचरतिवैश्वदेवानिह्यंगानियद्वैश्वदेवंशंसत्यंगान्येवास्यतत्संस्करोतिसारस्वतंशंसतितस्मात्कु
मारंजातंजघन्यावागाविशतिवाग्घिसरस्वतीयत्सारस्वतंशंसतिवाचमेवास्यतत्संस्करोत्येषवैजातोजायतेसर्वाभ्यएता
भ्योदेवताभ्यःसर्वेभ्यउक्थेभ्यःसर्वेभ्यश्छंदोभ्यःसर्वेभ्यःप्रउगेभ्यःसर्वेभ्यःसवनेभ्योयएवंवेदयस्यचैवंविदुषएतच्छंसं
ति ॥२॥ प्राणानांवाएतदुक्थंयत्प्रउगंसप्तदेवताःशंसतिसप्तवैशीर्षन्प्राणाःशीर्षन्नेवतत्प्राणान्दधातिकिंसयजमानस्यपा
पंभद्रमाद्रियेतेतिहस्माहयोस्यहोतास्यादित्यत्रैवैनंयथाकामयेततथाकुर्याद्यंकामयेतप्राणेनैनंव्यर्धयानीतिवायव्यमस्य
लुब्धंशंसेदृचंवापदंवातीयात्तेनैवतल्लुब्धंप्राणेनैवैनंतद्व्यर्धयतियंकामयेतप्राणापानाभ्यामेनंव्यर्धयानीत्यैंद्रवायवमस्य
लुब्धंशंसेदृचंवापदंवातीयात्तेनैवतल्लुब्धंप्राणापानाभ्यामेवैनंतद्व्यर्धयतियंकामयेतचक्षुषैनंव्यर्धयानीतिमैत्रावरुणमस्य
लुब्धंशंसेदृचंवापदंवातीयात्तेनैवतल्लुब्धंचक्षुषैवैनंतद्व्यर्धयतियंकामयेतश्रोत्रेणैनंव्यर्धयानीत्याश्विनमस्यलुब्धंशंसेदृचं
वापदंवातीयात्तेनैवतल्लुब्धंश्रोत्रेणैवैनंतद्व्यर्धयतियंकामयेतवीर्येणैनंव्यर्धयानीत्यैंद्रमस्यलुब्धंशंसेदृचंवापदंवातीयात्ते
नैवतल्लुब्धंवीर्येणैवैनंतद्व्यर्धयतियंकामयेतांगैरेनंव्यर्धयानीतिवैश्वदेवमस्यलुब्धंशंसेदृचंवापदंवातीयात्तेनैवतल्लुब्धमं
गैरेवैनंतद्व्यर्धयतियंकामयेतवाचैनंव्यर्धयानीतिसारस्वतमस्यलुब्धंशंसेदृचंवापदंवातीयात्तेनैवतल्लुब्धंवाचैवैनंतद्व्यर्ध

यतियमुकामयेतसर्वैरेनमंगैःसर्वेणात्मनासमर्धयानीत्येतदेवास्ययथापूर्वमृजुक्लृप्तंशंसेत्सर्वैरेवैनंतदंगैःसर्वे[illegible]त्मनासमर्ध

यतिसर्वैरंगैःसर्वेणात्मनासमृध्यतेयएवंवेद ॥ ३ ॥ तदाहुर्यथावावस्तोत्रमेवंशस्त्रंमाग्नेयीषुसामगाःस्तुवतेवायव्ययाहो
ताप्रतिपद्यतेंकथमस्याग्नेय्योनुशस्ताभवंतीत्यग्नेर्वाएताःसर्वास्तन्वोयदेतादेवताःसयदग्निःप्रवानिवदहतितदस्यवाय
व्यंरूपंतदस्यतेनानुशंसंत्यथयद्द्वैधमिवकृत्वादहतिद्वौवाइंद्रवायूतदस्यैंद्रवायवंरूपंतदस्यतेनानुशंसंत्यथयदुच्चहृष्यति
निचहृष्यतितदस्यमैत्रावरुणंरूपंतदस्यतेनानुशंसंतिसयदग्निर्घोरसंस्पर्शस्तदस्यवारुणंरूपंतंयद्धोरसंस्पर्शंसंतंमित्रकृत्ये
वोपासतेतदस्यमैत्रंरूपंतदस्यतेनानुशंसंत्यथयदेनंद्वाभ्यांबाहुभ्यांद्वाभ्यामरणीभ्यांमंथंतिद्वौवाअश्विनौतदस्याश्वि
नंरूपंतदस्यतेनानुशंसंत्यथयदुच्चैर्घोषस्तनयन्बबवाकुर्वन्निवदहतियस्माद्भूतानिविजंतेतदस्यैंद्रंरूपंतदस्यतेनानुशंसंत्य
थयदेनमेकंसंतंबहुधाविहरंतितदस्यवैश्वदेवंरूपंतदस्यतेनानुशंसंत्यथयत्स्फूर्जयन्वाचमिववदन्दहतितदस्यसारस्वतं
रूपंतदस्यतेनानुशंसंत्येवमुहास्यवायव्ययैवप्रतिपद्यमानस्यंतृचेनतृचेनैवैताभिर्देवताभिःस्तोत्रियोनुशस्तोभवतिविश्वे
भिःसोम्यंमध्वग्नइंद्रेणवायुना ॥ पिबामित्रस्यधामभिरितिवैश्वदेवमुक्थंशस्त्वावैश्वदेव्यायजतियथाभागंतद्देवताः
प्रीणाति ॥ ४ ॥ देवपात्रंवाएतंद्यद्वषट्कारोवषट्करोतिदेवपात्रेणैवतद्देवतास्तर्पयंत्यनुवषट्करोतितद्यथादोश्वान्वागावांपु
नरभ्याकारंतर्पयंत्येवमेवैतद्देवताःपुनरभ्याकारंतर्पयंतियदनुवषट्करोतीमानेवाग्नीनुपासतइत्याहुर्धिष्ण्यानथकस्मात्पू
र्वस्मिन्नेवजुह्वतिपूर्वस्मिन्वषट्कुर्वंतीतियदेवसोमस्याग्नेवीहीत्यनुवषट्करोतितेनधिष्ण्यान्प्रीणात्यसंस्थितान्सोमान्भक्षयं

तीत्याहुर्येषानानुवषट्करोतिकोनुसोमस्यस्विष्टकृद्भागइतियद्वावसोमस्याग्नेवीहीत्यनुवषट्करोतितेनैवसंस्थितान्त्सोमा
न्भक्षयंतिसउएवसोमस्यंस्विष्टकृद्भागोवषट्करोति ॥५॥ वज्रोवाएषयद्वषट्कारोयंद्विष्यात्तंध्यायेद्वषट्करिष्यंस्तस्मिन्नेवतं
वज्रमास्थापयतिषळितिवषट्करोतिषड्वाऋतवंऋतूनेवतत्कल्पयंत्यृतून्प्रतिष्ठापयंत्यृतून्वैप्रतितिष्ठतंइदंसर्वमनुप्रतितिष्ठ
तियदिदंकिंचप्रतितिष्ठतियएवंवेदंतदुहस्माहहिरण्यदन्वैदंएतानिवाएतेनषट्प्रतिष्ठापयातिद्यौरंतरिक्षेप्रतिष्ठितांतरिक्षं
पृथिव्यांपृथिव्यप्स्वापःसत्येसत्यंब्रह्मणिब्रह्मतपसीत्येताएवतत्प्रतिष्ठाःप्रतितिष्ठंतीरिदंसर्वमनुप्रतितिष्ठतियदिदंकिंचप्र
तितिष्ठतियएवंवेदंवौषळितिवषट्करोत्यसौवावववावृतवर्षळेतमेवतदृतुष्वादधात्यृतुषुप्रतिष्ठापयतियादृगिववैदेवेभ्यः
करोतितादृगिवास्मैदेवाःकुर्वंति ॥६॥ त्रयोवैवषट्कारांवज्रोधामच्छद्रिक्तःसयमेवोच्चैर्बलिवषट्करोतिसवज्रस्तंतंप्रहरति
द्विषतेभ्रातृव्यायवधंयोस्यस्तृत्यस्तस्मैस्तर्तवैतस्मात्सभ्रातृव्यवतावषट्कृत्योऽथयःसमःसंततोनिर्हाणर्चःसधामच्छंत्तं
तंप्रजाश्चपशवश्चानूपतिष्ठंतेतस्मात्सप्रजाकामेनंपशुकामेनवषट्कृत्योऽथयेनैवषळवराध्नोतिसरिक्तोरिणक्त्यात्मानंरि
णक्तियजमानंपापीयान्वषट्कर्ताभवतिपापीयान्यस्मैवषट्करोतितस्मात्तस्याशांनेयातिंकसयजमानस्यंपापभद्रमाद्रियेते
तिहस्माहंयोस्यहोतास्यादित्यंत्रैवैनंयथाकामयेतंतथाकुर्याद्यंकामयेतंयथैवानीजानोभूंत्तथैवेजानःस्यादितियथैवास्य
ऋचंब्रूयात्तथैवास्यवषट्कुर्यात्सहृदममेवैनंतत्करोतियंकामयेतपापीयान्स्या॥दित्युच्चैस्तरामस्यऽऋचमुक्त्वाशनैस्तरांव

षट्कुर्यात्पापीयांसमेवैनंतत्करोतियंकामयेतश्रेयान्त्स्यादितिशनैस्तरामस्यर्चमुक्त्वोच्चैस्तरांवषट्कुर्याच्छ्रियऽएवैनं
तच्छ्रियामादधातिसंततमृचावषट्कृत्यसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ ७ ॥ यस्यैदेवतायैहविर्गृहीतंस्यात्तां
ध्यायेद्वषट्करिष्यन्त्साक्षादेवतद्देवतांप्रीणातिप्रत्यक्षाद्देवतांयजतिवज्रोवैवषट्कारःसएषप्रहृतोशांतोदीदायतस्य
हैतस्यनसर्वऽइवशांतिंवेदनप्रतिष्ठांतस्माद्धाप्येतर्हिभूयानिवमृत्युस्तस्यहैषैवशांतिरेषाप्रतिष्ठावागित्येवतस्माद्वषट्कृ
त्यवषट्कृत्यवागित्यनुमंत्रयेतसएनंशांतोनहिनस्तिवषट्कारमामांप्रमृक्षोमाहंत्वांप्रमृक्षंबृहतामनऽउपह्वयेव्यानेनशरी
रंप्रतिष्ठासिप्रतिष्ठांगच्छंप्रतिष्ठांमागमयेतिवषट्कारमनुमंत्रयेततदुहस्माहदीर्घमेतत्सदप्रभ्वोजःसहऽओजइत्येववषट्का
रमनुमंत्रयेतौजश्चहवैसहश्चवषट्कारस्यप्रियतमेतन्वौप्रियेणैवैनंतद्धाम्नासमर्धयतिप्रियेणधाम्नासमृध्यतेयएवंवेदवा
क्वैप्राणापानौचवषट्कारस्तएतेवषट्कृतेवषट्कृतेव्युत्क्रामंतितानन्नुमंत्रयेतवागोजःसहओजोमयिप्राणापानाविं
त्यात्मन्येवतद्धोतावाचंचप्राणापानौचप्रतिष्ठापयतिसर्वायुःसर्वायुत्वायसर्वमायुरेतियएवंवेद ॥ ८ ॥ यज्ञोवैदेवेभ्य
उदक्रामत्तंप्रैषैःप्रैषमैच्छंन्यत्प्रैषैःप्रैषमैच्छंस्तत्प्रैषाणांप्रैषत्वंतंपुरोरुग्भिःप्रारोचयंन्यत्पुरोरुग्भिःप्रारोचयंस्तत्पुरोरुचांपु
रोरुक्त्वंतंवेद्यामन्वविंदन्यद्वेद्यामन्वविंदंस्तद्वेदेर्वेदित्वंतंवित्तंग्रहैर्व्यगृह्णतयद्वित्तंग्रहैर्व्यगृह्णततद्ग्रहाणांग्रहत्वंतंवित्त्वा
निविद्भिर्न्यवेदयंन्यद्वित्त्वानिविद्भिर्न्यवेदयंस्तन्निविदांनिवित्त्वंमहद्वावनष्टैष्यभ्यल्पंवेच्छतियतरोवावतयोर्ज्यायइ

त्राभीच्छतिसएवतयोःसाधीयइच्छतियउएवप्रैषान्वर्षीयसोवर्षीयसोवेदंसउएवतान्साधीयोवेदंनष्टैष्यंह्येतद्यत्प्रैषांस्त
स्मात्प्रह्वस्तिष्ठन्प्रेष्यति ॥९॥ गर्भावाएतउक्थानांयन्निविदंस्तद्यत्पुरस्तादुक्थानांप्रातःसवनेधीयंतेतस्मात्परांचोगर्भाधी
यंतेपरांचःसंभवंतियन्मध्यतोमध्यंदिनेधीयंतेतस्मान्मध्येगर्भाधृतायदंततस्तृतीयसवनेधीयंतेतस्मादमुतोर्वांचोगर्भाः
प्रजायंतेप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदपेशावाएतउक्थानांयन्निविदंस्तद्यत्पुरस्तादुक्थानांप्रातःसवनेधीयंतेय
थैवप्रवयणतःपेशःकुर्यात्तादृक्तंद्यन्मध्यतोमध्यंदिनेधीयंतेयथैवमध्यतःपेशःकुर्यात्तादृक्तंयदंततस्तृतीयसवनेधीयंते
यथैवान्वप्रज्जनतःपेशःकुर्यात्तादृक्तंतसर्वतोयज्ञस्यपेशसाशोभतेयएवंवेद ॥ १० ॥ सौर्यावाएतादेवतायन्निविदंस्तद्य
त्पुरस्तादुक्थानांप्रातःसवनेधीयंतेमध्यतोमध्यंदिनेततस्तृतीयसवनंआदित्यस्यैवतद्व्रतमनुपर्यावर्ततेपच्छोवैदेवायज्ञं
समभरंस्तस्मात्पच्छोनिविदःशस्यंतेयद्वैतद्देवायज्ञंसमभरंस्तस्मादश्वःसमभवंत्तस्मादाहुरश्वंनिविदांशंस्त्रेदद्यादितितदु
खलुवरमेवददातिननिविदःपदमतीयाद्यन्निविदःपदमतीयाद्यज्ञस्यतच्छिद्रंकुर्याद्यज्ञस्यवैछिद्रंस्रवद्यजमानोनुपापीया
न्भवतितस्मान्ननिविदःपदमतीयान्ननिविदःपदेविपरिहरेद्यन्निविदःपदेविपरिहरेन्मोहयेद्यज्ञंमुग्धोयजमानःस्यात्त
स्मान्ननिविदःपदेविपरिहरेन्ननिविदःपदेसमस्येद्यन्निविदःपदेसमस्येद्यज्ञस्यतदायुःसंहरेत्प्रमायुकोयजमानःस्यात्तस्मा
न्ननिविदःपदेसमस्येत्प्रेदंब्रह्मप्रेदंक्षत्रमित्येतेएवसमस्येद्ब्रह्मक्षत्रयोःसंश्रित्यैतस्माद्ब्रह्मचक्षत्रंचसंश्रितेनतृचंनचतुर्ऋचम

तिमन्येतनिविद्धानंमेकैकंवैनिविदःपदमृचंसूक्तंप्रतितस्मान्नतृचंनचतुर्ऋचमतिमन्येतनिविद्धानंनिविदाह्येवस्तोत्रमति
शस्तंभवत्येकांपरिशिष्यंतृतीयसवनेनिविदंदध्यांद्यद्द्वेपरिशिष्यदध्यात्प्रजननंतदुपहन्यांद्गर्भैस्तत्प्रजाव्यर्धयेत्तस्मादेका
मेवपरिशिष्यंतृतीयसवनेनिविदंदध्यान्नसूक्तेननिविदमतिपद्येतयेनसूक्तेननिविदमतिपद्येतंनतत्पुनरुपनिवर्तेतंवास्तु
हमेवतदन्यत्तद्दैवतंतच्छंदसंसूक्तमाहृत्यंतस्मिन्निविदंदध्यान्माप्रगामपथोवयमितिंपुरस्तात्सूक्तस्यशंसतिंपथोवाएषप्रै
तियोयज्ञेमुह्यतिमायज्ञादिंद्रसोमिनइतिंयज्ञादेवतंनप्रच्यवतैमांतस्थुर्नोअरातयइत्यरातीयतएवतदपहंतियोयज्ञस्यप्र
साधनंस्तंतुर्देवेष्वाततः ॥ तमाहुतंनशीमहीतिंप्रजावैतंतुःप्रजामेवास्माऽएतत्संतनोतिंमनोन्वाहुवामहेनाराशंसेनसो
मेनेतिंमनसावैयज्ञस्तायतेंमनसाक्रियतेंसैवतत्रप्रायश्चित्तिःप्रायश्चित्तिः ॥ ११ ॥ इतिप्रथमोऽध्यायः ॥ १ ॥ ॥

देवविशःकल्पयितव्याऽइत्याहुंश्छंदश्छंदसिप्रतिष्ठाप्यमितिंशोंसावोमित्याह्वयतेंप्रातःसवनेत्र्यक्षरेणंशंसामोदैवो
मित्यध्वर्युःप्रतिगृणातिपंचाक्षरेणंतदष्टाक्षरंसंपद्यतेंऽष्टाक्षरावैगायत्रींगायत्रीमेवतत्पुरस्तात्प्रातःसवनेचीक्लृपतांमुक्थं
वाचीत्याहंशस्त्वाचतुरक्षंरमोमुक्थशाइत्यध्वर्युश्चतुरक्षरंतदष्टाक्षरंसंपद्यतेंऽष्टाक्षरावैगायत्रींगायत्रीमेवतदुभयतंःप्रा
तःसवनेचीक्लृपतांमध्वर्योशोंसावोमित्याह्वयतेंमध्यंदिनेषळक्षरेणंशंसामोदैवोमित्यध्वर्युःप्रतिगृणातिपंचाक्षरेणंतदेका
दशाक्षरंसंपद्यतंऽएकादशाक्षरावैत्रिष्टुंप्त्रिष्टुभमेवतत्पुरस्तान्मध्यंदिनेचीक्लृपतांमुक्थंवाचींद्रायेत्याहंशस्त्वासप्ताक्षरं

मोमुक्थशाइत्यध्वर्युश्चतुरक्षरँतदेकादशाक्षरंसंपद्यतएकादशाक्षरावैत्रिष्टुप्त्रिष्टुभमेवतदुभयतोमध्यंदिनेचीक्लृपतामध्व
र्योशोशोंसावोमित्याह्वयतेतृतीयसवनेसप्ताक्षरेणंशंसामोदैवोमित्यध्वर्युः प्रतिगृणातिपंचाक्षरेणतद्वादशाक्षरंसंपद्यतेद्वा
दशाक्षरावैजगतीजगतीमेवतत्पुरस्तात्तृतीयसवनेचीक्लृपतामुक्थंवाचींद्रायदेवेभ्यइत्याहंशस्त्वैकादशाक्षरंमोमित्यध्व
र्युरेकाक्षरँतद्वादशाक्षरंसंपद्यतेद्वादशाक्षरावैजगतीजगतीमेवतदुभयतस्तृतीयसवनेचीक्लृपतातदेतदृषिःपश्यन्नभ्यनूवा
चयद्गायत्रेअधिगायत्रमाहितंत्रैष्टुभाद्वात्रैष्टुभंनिरतक्षत। यद्वाजगज्जगत्याहितँपदँयइत्तद्विदुस्तेअमृतत्वमानशुरित्येत
द्वैतच्छंदश्छंदसिप्रतिष्ठापयतिकल्पयतिदेवविशोयएवंवेद॥१२॥प्रजापतिर्वैयज्ञंछंदांसिदेवेभ्योभागधेयानिव्यभजत्स
गायत्रीमेवाग्नयेवसुभ्यःप्रातःसवनेभजत्त्रिष्टुभमिंद्रायरुद्रेभ्योमध्यंदिनेजगतींविश्वेभ्योदेवेभ्यआदित्येभ्यस्तृतीयस
वनेऽथास्ययत्स्वंछंदआसीदनुष्टुप्तामुदंतमभ्युदौहदच्छावाकीयामभिसैनमब्रवीदनुष्टुप्त्वंन्वेवदेवानांपापिष्ठोसियस्यते
हंस्वंछंदोस्मियांमोदंतमभ्युदौहीरच्छावाकीयामभीतितदजानात्सस्वंसोममाहरत्सस्वेसोमेग्रंमुखमभिपर्याहरदनुष्टुभं
तस्माद्वनुष्टुबग्रियामुख्यायुज्यतेसर्वेषांसवनानामग्रियोमुख्योभवतिश्रेष्ठतामश्नुतेयएवंवेदस्वेवैसतत्सोमेकल्पयंत्तस्मा
द्यत्रक्कचयजमानवशोभवतिकल्पतएवयज्ञोपितस्यैजनतायैकल्पतेयत्रैवंविद्वान्यजमानोवशीयजते ॥१३॥ अग्निर्वैदे

१ 'बग्र्यामुख्या' इतिभाष्यपाठः।

वानाहोतासींत्तंमृत्युर्बहिष्पवमानेसीदंत्सोनुष्टुभाज्यंप्रत्यपद्यतंमृत्युमेवतत्पर्यक्रामंत्तमाज्येसीदंत्सप्रउगेणप्रत्यपद्यतंमृ
त्युमेवतत्पर्यक्रामंत्तंमाध्यंदिनेपवमानेसीदंत्सोनुष्टुभामरुत्वतीयंप्रत्यपद्यतंमृत्युमेवतत्पर्यक्रामंत्तंमाध्यंदिनेबृहतीषुना
शक्नोत्सत्तुंप्राणावैबृहत्यंःप्राणानेवतन्नाशक्नोद्व्यवैतुंतस्मान्मध्यंदिनेहोताबृहतीषुस्तोत्रियेणैवप्रतिपद्यतेंप्राणावैबृहत्यंः
प्राणानेवतदभिप्रतिपद्यतेंतंतृतीयपवमानेसीदंत्सोनुष्टुभावैश्वदेवंप्रत्यपद्यतमृत्युमेवतत्पर्यक्रामंत्तंयज्ञायज्ञीयेसीदंत्स
वैश्वानरीयेणाग्निमारुतंप्रत्यपद्यतंमृत्युमेवतत्पर्यक्रामंद्व ज्रोवैवैश्वानरीयंप्रतिष्ठायज्ञायज्ञीयंवज्रेणैवतत्प्रतिष्ठायामृत्युं
नुदतेंससर्वान्पाशान्त्सर्वान्त्स्थाणून्मृत्योरतिमुच्यंस्वस्त्येवोदमुच्यतंस्वस्त्येवहोतोन्मुच्यतेंसर्वायुःसर्वायुत्वायंसर्वमा
युरेतियऽएवंवेद ॥ १४ ॥ इंद्रोवैवृत्रंहत्वानास्तृषीतिमन्यमानंःपराःपरावतोगच्छंत्सपरमामेवपरावतमगच्छंदनुष्टुब्वै
परमापरावंद्वाग्वाअनुष्टुंप्सवाचंप्रविश्याशयंत्तंसर्वाणिभूतानिविभज्यान्वैच्छंस्तंपूर्वेद्युःपितरोविंदंन्नुत्तरमहर्देवांस्तस्मा
त्पूर्वेद्युःपितृभ्यःक्रियतंउत्तरमहर्देवान्यजंतेंतेब्रुवन्नभिषुणवामैवंतथाबावनआशिष्ठमागमिष्यतीतिंतथेतितेभ्यषुण्वं
स्तआत्वारथंयथोतयंइत्येवैनमावर्तयंन्निदंवसोसुतमंधंइत्येवैभ्यःसुतकीर्त्यामाविरभवंदिंद्रनेदीयएदिहींत्येवैनंमध्यं
प्रापादयंतांगतेंद्रेणयज्ञेनयजतेंसेंद्रेणयज्ञेनराध्नोतियऽएवंवेद ॥ १५ ॥ इंद्रंवैवृत्रंजघ्निवांसंनास्तृतेतिमन्यमानाःसर्वा
देवताअजहुंस्तंमरुतएवस्वापयोनाजहुंःप्राणावैमरुतःस्वापयंःप्राणाहैवैनंतंनाजहुंस्तस्मादेषोच्युतःस्वापिमान्प्रगाथः

शस्यतंआस्वापेस्वापिभिरित्यपिहयद्यैंद्रमेवांतऊर्ध्वंछंदःशस्यतेतद्धसर्वंमरुत्वतीयंभवंत्येषचंदच्युतःस्वापिमान्प्रगाथः
शस्यतंआस्वापेस्वापिभिरिति ॥ १६ ॥ ब्राह्मणस्पत्यंप्रगाथंशंसतिबृहस्पतिपुरोहितावैदेवाअजयन्स्वर्गंलोकंव्यस्मिँल्लो
केजयंतंतथैवैतद्यजमानोबृहस्पतिपुरोहितएवजयतिस्वर्गंलोकंव्यस्मिँल्लोकेजयतेतौवाएतौप्रगाथावस्तुतौसंतौपुनरादा
यंशस्येतेतदाहुर्यन्नकिंचनास्तुतंसत्पुनरादायंशस्यतेऽथकस्मादेतौप्रगाथावस्तुतौसंतौपुनरादायंशस्येतेइतिपवमानो
वाएतद्यन्मरुत्वतीयंषट्सुवाअत्रगायत्रीषुस्तुवतेषट्सुबृहतीषुतिसृषुत्रिष्टुप्सुसवाएषत्रिच्छंदाःपंचदशोमाध्यंदिनः
पवमानस्तदाहुःकथंतएषत्रिच्छंदाःपंचदशोमाध्यंदिनःपवमानोनुशस्तोभवतीतियेएवगायत्र्याउत्तरेप्रतिपदोयोगाय
त्रोनुचरस्ताभिरेवास्यगायत्र्योनुशस्ताभवंत्येताभ्यामेवास्यप्रगाथाभ्यांबृहत्योनुशस्ताभवंतितासुवाएतासुबृहतीषुसाम
गारौरवयौधाजयाभ्यांपुनरादायंस्तुवतेतस्मादेतौप्रगाथावस्तुतौसंतौपुनरादायंशस्येतेतच्छस्त्रेणस्तोत्रमन्वैतियेएवत्रि
ष्टुभौधाय्यैयत्रैष्टुभंनिविद्धानंताभिरेवास्यत्रिष्टुभोनुशस्ताभवंत्येवमुहास्यैषत्रिच्छंदाःपंचदशोमाध्यंदिनःपवमानोनुश
स्तोभवतिएवंवेद ॥१७॥ धाय्याःशंसतिधाय्याभिर्वैप्रजापतिरिमाँल्लोकानधयद्यंयंकाममकामयततंतथैवैतद्यजमानोधा
य्याभिरेवेमाँल्लोकान्धयतियंयंकामंकामयतेयएवंवेदयदेवधाय्या३ः ॥ यत्रयत्रवैदेवायज्ञस्यच्छिद्रंनिरजानंस्तद्धाय्या
भिरपिदधुस्तद्धाय्यानांधाय्यात्वमच्छिद्रेणहास्ययज्ञेनेष्टंभवतियएवंवेदयद्वेवधाय्या३ः ॥ स्यूमहैतद्यज्ञस्ययद्धाय्यांस्त

द्यथासूच्यावासःसंदधदियांदेवमेवैताभिर्यज्ञस्यच्छिद्रंसंदधदेतिंयएवंवेदयद्वेवधाय्या३ः॥तान्युवाएतान्युपसदामेवो
क्थानियद्धाय्यांअग्निर्नेतेत्याग्नेयीप्रथमोपसंत्तस्याएतदुक्थंत्वंसोमक्रतुभिरितिंसौम्याद्वितीयोपसंत्तस्याएतदुक्थंपिन्वं
त्यपइतिवैष्णवीतृतीयोपसंत्तस्याएतदुक्थंयावंतंहवैसौम्येनाध्वरेणेष्ट्वालोकंजयतिंतमतएकैकयोपसदाजयतियएवंवेदं
यश्चैवंविद्वान्धाय्याःशंसतिंतद्धैकआहुस्तान्वोमहइतिशंसेदेतांवाववयंभरतेषुशस्यमानांमभिव्यजानीमइतिवदंतस्तत्त
न्नादृत्यंयदेतांशंसेदीश्वरःपर्जन्योव्र्वर्ष्टोः[1]पिन्वंत्यपइत्येवशंसेद्वृष्टिवनिपदंमरुतइतिमारुतंमत्यंनसिहेविनयंतीतिविनीत
वंद्यंद्विनीतवत्तद्विक्रांतवंद्यद्विक्रांतवत्तद्वैष्णवंवाजिनमितींद्रोवैवाजींतस्यांवाएतस्यांचत्वारिपदानिंवृष्टिवनिमारुतंवै
ष्णवमैंद्रंसावाएषातृतीयसवनभाजनासतींमध्यंदिनेशस्यतेंतस्माद्धेदंभरतानांपशवंःसायंगोष्ठाःसंतोमध्यंदिनेंसंगविनी
मायंतिसोजगतींजागताहिपशवंआत्मायजमानस्यमध्यंदिनंस्तद्यजमानेपशून्दधाति ॥ १८ ॥ मरुत्वतीयंप्रगाथंशंसतिं
पशवोवैमरुतःपशवःप्रगाथंःपशूनामवरुध्यैंजनिष्ठाउग्रःसहसेतुरायेतिसूक्तंशंसतिंतद्वाएतद्यजमानजननमेवसूक्तंयज
मानंहवाएतेनंयज्ञाद्देवयोन्यैप्रजनयतिंतत्संजयंभवतिंसंचजयतिविचजयतंएतद्धौरिवीतंगौरिवीतिर्हवैशाक्त्योनेदिष्ठं
स्वर्गस्यलोकस्यागच्छंत्सएतत्सूक्तमपश्यंत्तेनस्वर्गंलोकमजयंत्तथैवैतद्यजमानंएतेनसूक्तेनस्वर्गंलोकंजयतिंतस्यार्धाःश



१ 'न्योवर्ष्टोः' इतिभाष्यपाठः । वर्ष्टोः वृष्टेः ईश्वरो मेघ इति तत्रार्थः ।

स्त्वार्धाःपरिशिष्यंमध्येनिविदंदधातिस्वर्गस्यहैषलोकस्यरोहोयन्निवित्स्वर्गस्यहैतल्लोकस्याक्रमणंयन्निवित्ताआक्रममा
णइवशंसेदुपैवयजमानंनिगृह्णीतयोस्यप्रियःस्यादितिनुस्वर्गकामस्याथाभिचरतोयःकामयेतक्षत्रेणविशंहन्यामितितिंत्रि
स्तर्हिंनिविदासूक्तंविशंसेत्क्षत्रंवैनिविद्विट्सूक्तंक्षत्रेणैवतद्विशंहंतियःकामयेतविशाक्षत्रंहन्यामितितिंत्रिस्तर्हिंसूक्तेननिविदं
विशंसेत्क्षत्रंनिविद्विट्सूक्तंविशैवतत्क्षत्रंहंतियउकामयेतोभयतंएनंविशःपर्यवच्छिनदानींत्युभयतस्तर्हिंनिविदंव्याह्व
यीतोभयतएवैनंतद्विशःपर्यवच्छिनत्तीतिन्वभिचरतंइतरथात्वेवस्वर्गकामस्यंवयःसुपर्णाउपसेदुरिंद्रमित्युत्तमयापरि
दधातिप्रियमेधाऋषयोनाधमानाः॥ अपध्वांतमूर्णुहीतियेनतमसाप्रावृतोमन्येतंतन्मनसागच्छेदपहैवास्मात्तल्लुप्यतेपू
र्धिचक्षुरितिचक्षुषीमरीमृज्येतांजरसंहचक्षुष्मान्भवतियएवंवेदमुमुग्ध्यस्मान्निधयेवबद्धानितिपाशावैनिधामुमुग्ध्य
स्मान्पाशादिवबद्धानित्येवतदाह॥१९॥ इंद्रोवैवृत्रंहनिष्यन्सर्वादेवताअब्रवीदनुमोपतिष्ठध्वमुपमाह्वयध्वमितितथेति
तंहनिष्यंतआद्रवंन्त्सोवेन्मांवैहनिष्यंतआद्रवंतिहंतेमान्भीषयाइतितानभिप्राश्वसीत्तस्यश्वसथादीषमाणाविश्वेदेवा
अद्रवंन्मरुतोहैनंनाजहुःप्रहरभगवोजहिवीरयस्वेत्येवैनमेतांवाचंवदंतउपातिष्ठंतंतदेतदृषिःपश्यन्नभ्यनूवाचवृत्रस्य
त्वाश्वसथादीषमाणाविश्वेदेवाअजहुर्येसखायः॥ मरुद्भिरिंद्रसख्यंतेअस्त्वथेमाविश्वाःपृतनाजयासीतिसोवेदिमेवैकि
लमेसचिवांइमेमाकामयंतंहंतेमानस्मिन्नुक्थआभजाइतितानेतस्मिन्नुक्थआभजंदथहैतेतर्ह्युभेएवंनिष्केवल्येउक्थेआस

तुंर्मरुत्वतीयंग्रहंगृह्णातिंमरुत्वतीयंप्रगाथंशंसतिंमरुत्वतीयंसूक्तंशंसतिंमरुत्वतीयांनिविदंदधातिमरुतासाभक्तिंर्मरुत्व
तीयमुक्थंशस्त्वांमरुत्वतीययायजातिंयथाभागंतदेवताःप्रीणातिंयेत्वाहिहत्येमघवन्नवर्धंन्येशाबरेहरिवोयेगविष्टौ ॥
येत्वानूनमनुमदंतिविप्राःपिवेंद्रसोमंसगणोमरुद्भिरितिंयत्रयत्रैवैभिर्व्यजयतंयत्रयत्रवीर्यमकरोत्तदेवैतत्समनुवेद्येंद्रेणै
नान्त्ससोमपीथान्करोति ॥ २० ॥ इंद्रोवैवृत्रंहत्वांसर्वाविजितीर्विजित्यांब्रवीत्प्रजापतिमहमेतदसानिंयत्त्वमहंमहान
सानीतिंसप्रजापतिरब्रवीदथकोहमितिंयदेवैतदवोचइत्यब्रवींत्ततोवैकोनामप्रजापतिरभवंत्कोवैनामप्रजापतिर्यन्म
हानिंद्रोभवंत्तन्महेंद्रस्यमहेंद्रत्वंसमहान्भूत्वादेवताऽअब्रवींदुद्धारंमउद्धरतेतिंयथाप्येतर्हींच्छातिंयोवैभवतियःश्रेष्ठ
तामश्नुतेसमहान्भवतिंतंदेवाअब्रुवन्त्स्वयमेवब्रूष्वंयत्तेभविष्यतीतिंसएतंमाहेंद्रंग्रहमब्रूतंमाध्यंदिनंसवनानांनिष्केव
ल्यमुक्थानांत्रिष्टुभंछंदसांपृष्ठंसाम्नांतमस्माउद्धारमुदहरंन्नुदस्माउद्धारंहरंतियएवंवेदंतंदेवाअब्रुवन्त्संर्वंवाअवोचथा
अपिनोत्रास्त्वितिंसनेत्यब्रवीत्कथंवोपिस्यादितिंतमब्रुवन्नप्येवनोस्तुमघवन्नितितानीक्षतैव ॥ २१ ॥ तेदेवाअब्रुवंन्नियं
वाइंद्रस्यप्रियाजायांवावाताप्रासहानामास्यामेवेच्छामहाइतिंतथेतितस्यामैच्छंतंसैनानब्रवीत्प्रातर्वःप्रतिवक्तास्मीतिं ॥ ३६ ॥
तस्मात्स्त्रियःपत्याविच्छंतेतस्माउक्त्यनुरात्रंपत्याविच्छतेतांप्रातरुपायन्त्सैतदेवप्रत्यपद्यतंयद्वावानपुरुतमंपुरापाळाव्रृ
त्रहेंद्रोनामान्यप्राः॥ अचेतिप्रासहस्पतिस्तुविष्मांनितींद्रोवैप्रासहस्पतिस्तुविष्मांन्यदीमुश्मसिकर्तवेकरत्तदितिंयदेवै

तदवोचामांकरत्तदित्येवैनांस्तदब्रवींत्तेदेवा अब्रुवन्नप्यस्याइहास्तुंयानोस्मिन्नवैकमविददितितथेतिंतस्याअप्यत्राकुर्वं
स्तंस्मादेषात्रापिशस्यतेंयद्वावानपुरुतमंपुराषाळितिंसेनावाइंद्रस्यप्रियाजायांवावाताप्रासहांनामंकोनामप्रजापतिःश्व
शुरंस्तद्यास्यकामेसेनाजयेत्तस्याअर्धात्तिष्ठंस्तृणमुभयतःपरिच्छिद्येतरांसेनामभ्यस्यैत्प्रासहेकस्त्वापश्यतीतिंतद्यथैवा
दःस्नुषांश्वशुराल्लज्जमानानिलीयमानैत्येवमेवसासेनांभज्यमानानिलीयमानैंतिंयत्रैवंविद्वांस्तृणमुभयतःपरिच्छिद्येत
रांसेनामभ्यस्यातिंप्रासहेकस्त्वापश्यतीतिंतानिंद्रउवाचापिवोत्रास्त्विंतिंतेदेवाअब्रुवन्विराड्याज्यास्तुंनिष्केवल्यस्य
यात्रयस्त्रिंशदक्षरा ॥ त्रयस्त्रिंशद्वैदेवाअष्टौवसवंएकादशरुद्राद्वादशादित्यांःप्रजापतिश्चवषट्कारश्चंदेवताअक्षरभा
जःकरोत्यक्षरमक्षरमेवंतद्देवताअनुप्रपिबंतिंदेवपात्रेणैवतद्देवास्तृप्यंतिंयंकामयेतानायतनवान्त्स्यादित्यविराजास्यय
जेद्गायत्र्यावात्रिष्टुभावांन्येनवाछंदसावषट्कुर्यांदनायतनवंतमेवैनंतत्करोतिंयंकामयेतायतनवान्त्स्यादितिविराजा
स्ययजेत्पिबासोममिंद्रमंदतुत्वेत्येतयांयतनवंतमेवैनंतत्करोति ॥२२॥ ऋक्चवाइदमग्रेसामचास्तांसैवनामर्गासीद
मोनामसामंसावाऋक्सामोपावदंन्मिथुनंसंभवावप्रजात्याइतिंनेत्यब्रवीत्सामंज्यायान्वाअतोममसहिमेतिंतेद्वेभूत्वोपा
वदतांतेनप्रतिचनसमवदतंतास्तिस्रोभूत्वोपावदंस्तत्तिसृभिःसमभवद्यत्तिसृभिःसमभवंत्तस्मात्तिसृभिःस्तुवंतिंतिसृ
भिरुद्गायंतिंतिसृभिर्हिंसामसंमितंतस्मादेकस्यबह्व्योजायाभवंतिनैकस्यबहवःसहपतयोंयद्वैतत्साचामश्चसमभवतां

तत्सामाभवत्तत्साम्नः सामत्वंसामन्भवतियएवंवेदयोवैभवतियःश्रेष्ठतामश्नुतेंससामन्भवत्यसामन्यइतिहिनिंदंतितेवैपंचान्यद्भूत्वापंचान्यद्भूत्वाकल्पेतामाहावश्चहिंकारश्चप्रस्तावश्चप्रथमाचर्ऋगुद्गीथश्चमध्यमाचप्रतिहारश्चोत्तमाचनिधनंचवषट्कारश्चतेयत्पंचान्यद्भूत्वापंचान्यद्भूत्वाकल्पेतांतस्मादाहुःपांक्तोयज्ञःपांक्ताःपशवइतियदुविराजंदशिनीमभिसमपद्येतांतस्मादाहुर्विराजियज्ञोदशिन्यांप्रतिष्ठितइत्यात्मावैस्तोत्रियःप्रजानुरूपःपत्नीधाय्यापशवःप्रगाथोगृहाःसूक्तंसवाअस्मिंश्चलोकेमुष्मिंश्चप्रजयाचपशुभिश्चगृहेषुवसतियएवंवेद ॥ २३ ॥ स्तोत्रियंशंसत्यात्मावैस्तोत्रियस्तंमध्यमयावाचाशंसत्यात्मानमेवतत्संस्कुरुतेंनुरूपंशंसतिप्रजावाअनुरूपःसउच्चैस्तरामिवानुरूपःशंस्तव्यःप्रजामेवतच्छ्रेयसीमात्मनःकुरुतेंधाय्यांशंसतिपत्नीवैधाय्यासानीचैस्तरामिवधाय्याशंस्तव्याऽप्रतिवादिनीहास्यगृहेषुपत्नीभवतियत्रैवंविद्वान्नीचैस्तरांधाय्यांशंसतिप्रगाथंशंसतिसःस्वरवत्यावाचाशंस्तव्यःपशवोवैस्वरःपशवःप्रगाथःपशूनामवरुध्याइंद्रस्यनुवीर्याणिप्रवोचमितिसूक्तंशंसतितद्वाएतत्प्रियमिंद्रस्यसूक्तंनिष्केवल्यंहैरण्यस्तूपमेतेनवैसूक्तेनहिरण्यस्तूपआंगिरसइंद्रस्यप्रियंधामोपागच्छंत्सपरमंलोकमजयदुपेंद्रस्यप्रियंधामगच्छतिजयतिपरमंलोकंयएवंवेदगृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेंगृहानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा ॥ २४ ॥

इतिद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

सोमोवैराजामुष्मिंल्लोकआसीत्तंदेवाश्चऽऋषयश्चाभ्यध्यायन्कथमयमस्मान्त्सोमोराजागच्छेदितितेब्रुवंश्छंदांसियू
यंनइमंसोमंराजानमाहरतेतितथेतितेसुपर्णाभूत्वोदपतँस्तेयत्सुपर्णाभूत्वोदपतँस्तदेतत्सौपर्णमित्याख्यानविदआचक्ष
तेछंदांसिवैतत्सोमंराजानमच्छाचरँस्तानिहतर्हिचतुरक्षराणिचतुरक्षराण्येवच्छंदांस्यासंन्त्साजगतीचतुरक्षराप्रथमोदप
तत्सापतित्वार्धमध्वनोगत्वाश्राम्यत्सापरास्यत्रीण्यक्षराण्येकाक्षराभूत्वादीक्षांचतपश्चहरंतीपुनरभ्यवापतत्तस्मात्तस्यं
वित्तादीक्षावित्तंतपोयस्यपशवःसंतिजागताहिपशवोजगतीहितानाहरदथत्रिष्टुबुदपतत्सापतित्वाभूयोर्धादध्वनोगत्वा
श्राम्यत्सापरास्यैकमक्षरंत्र्यक्षराभूत्वादक्षिणाहरंतीपुनरभ्यवापतत्तस्मान्मध्यंदिनेदक्षिणानीयंतेत्रिष्टुभोलोकेत्रिष्टुब्भि
ताआहरत्॥२५॥तेदेवाअब्रुवन्गायत्रींत्वंनइमंसोमंराजानमाहरेतिसातथेत्यब्रवीत्तांवैमासर्वेणस्वस्त्ययनेनानुमंत्रयध्व
मितितथेतिसोदपतत्तांदेवाःसर्वेणस्वस्त्ययनेनान्वमंत्रयंतप्रेतिचेत्येतद्वैसर्वंस्वस्त्ययनंयत्प्रेतिचेतिचेतितद्योस्यप्रियः
स्यात्तमेतेनानुमंत्रयेतप्रेतिचेति चेतिस्वस्त्येवगच्छातिस्वस्तिपुनरागच्छतिसापतित्वासोमपालान्भीषयित्वापद्भ्यांचमुखे
नचसोमंराजानंसमगृभ्णाद्यानिचेतरेछंदसीअक्षराण्यजहितांतानिचोपसमगृभ्णात्तस्याअनुविसृज्यकृशानुःसोमपालः
सव्यस्यपदोनखमच्छिदत्तच्छल्यकोभवत्तस्मात्सनखमिवयद्धश्रमस्रवत्सावशाभवत्तस्मात्साहविरिवाऽथयःशल्योयद
नीकमासीत्ससर्पोनिर्दंश्यभवत्सहस्वजोयानिपर्णानितेमंथावलायानिस्नावानितेगंडूपदायत्तेजनंसोंधाहिःसोसातथे

षुरभवत्॥२६॥सायद्दक्षिणेनपदासमगृभ्णांत्तत्प्रातःसवनमभवंत्तद्गायत्रीस्वमायतनमकुरुतंतस्मात्तत्समृद्धतमंमन्यंते
सर्वेषांसवनानामग्रियोमुख्योभवतिंश्रेष्ठतामश्नुतेयएवंवेदाऽथयत्सव्येनपदासमगृभ्णांत्तन्माध्यंदिनंसवनमभवंत्तद्धि
स्त्रंसततद्धिस्रस्तंनान्वाप्नोत्पूर्वंसवनंतेदेवाःप्राजिज्ञासंतंतस्मिंस्त्रिष्टुभंछंदसामदधुंरिंद्रंदेवतानांतेनतत्समावद्वीर्यमभवं
तपूर्वेणसवनेनोंभाभ्यासवनाभ्यांसमावद्वीर्याभ्यांसमावज्जामीभ्यांराप्नोतियएवंवेदाऽथयन्मुखेनसमगृभ्णांत्तत्तृतीयस
वनमभवंत्तस्यपतंतीरसमधयंत्तद्धीतरसंनान्वाप्नोत्पूर्वेसवनेतेदेवाःप्राजिज्ञासंतंतत्पशुष्वपश्यंस्तद्यदाशिरमवनयंत्या
ज्येनपशुनाचरंतिंतेनतत्समावद्वीर्यमभवंत्पूर्वाभ्यांसवनाभ्यांसर्वैःसवनैःसमावद्वीर्यैःसमावज्जामिभीराप्नोतियएवंवेद
॥२७॥तेवाइमेइतरेछंदसींगायत्रीमभ्यवदेतांवित्तंनावक्षराण्यनुपर्यागुरितिंनेत्यब्रवीद्गायत्रींयथावित्तमेवनइतिंतेदेवेषु
प्रश्नमैतांतेदेवाअब्रुवन्यथावित्तमेववइतिंतस्माद्धाप्येतर्हिवित्याव्याहुर्यथावित्तमेवनइतिंततोवाअष्टाक्षरागायत्र्यभवं
त्र्यक्षरात्रिष्टुंवेकाक्षराजगतींसाष्टाक्षरागायत्रींप्रातःसवनमुदयच्छंन्नाशक्नोत्रिष्टुप्त्र्यक्षरांमाध्यंदिनंसवनमुद्यंतुंतागाय
त्र्यब्रवीदायान्यपिमेत्रास्त्विवतिंसातथेत्यब्रवीत्रिष्टुंप्तांवैमैतैरष्टाभिरक्षरैरुपसंधेहीतिंतथेतितामुपसमदधांदेतद्वैतद्गायत्र्यै
मध्यंदिनेयन्मरुत्वतीयस्योत्तरेंप्रतिपदोयश्चानुचरःसैकादशाक्षराभूत्वांमाध्यंदिनंसवनमुदयच्छंन्नाशक्नोज्जगत्येकाक्षरां
तृतीयसवनमुद्यंतुंतांगायत्र्यब्रवींदायान्यपिमेत्रास्त्विवतिंसातथेत्यब्रवीज्जगतींतांवैमैतैरेकादशभिरक्षरैरुपसंधेहीतिंतथे

॥ ३८ ॥

तितामुपसमदधांदेतद्वैतद्गायत्र्यैतृतीयसवनैयद्वैश्वदेवस्योत्तरंप्रतिपदोयश्चानुचरंःसाद्वादशाक्षराभूत्वातृतीयसवनमु
दयच्छंत्ततोवाअष्टाक्षरागायत्र्यभवंदेकादशाक्षरात्रिष्टुब्द्वादशाक्षराजगतींसर्वैश्छंदोभिःसमावद्वीर्यैःसमावज्जामिभी
राप्नोतियएवंवेदैकंवैसत्त्रेधाभवत्तंस्मादाहुर्दातव्यमेवंविदुषइंत्येकंहिसत्तत्त्रेधाभवत् ॥२८॥ तेदेवाअब्रुवन्नादित्यां
न्युष्माभिरिदंसवनमुद्यच्छामेतिंतथेतितस्मादादित्यारंभणंतृतीयसवनंमादित्यग्रहःपुरस्तात्तस्ययजंत्यादित्यासोअदि
तिर्मादयंतामितिंमद्वत्यारूपसमृद्धयांमद्वद्वैतृतीयसवनस्यरूपंनानुवषट्करोतिनभक्षयतिंसंस्थावाऽएषायदनुवषट्कारंःसं
स्थाभक्षःप्राणाऽआदित्यांनेत्प्राणान्त्संस्थापयानीतिंतआदित्याअब्रुवन्त्सवितारंत्वयेदंसहसवनमुद्यच्छामेतिंतथेतित
स्मात्सावित्रीप्रतिपद्भवतिंवैश्वदेवस्यसावित्रग्रहंःपुरस्तात्तस्ययजतिंदमूनादेवःसवितावरेण्यइतिंमद्वत्यारूपसमृद्धयां
मद्वद्वैतृतीयसवनस्यरूपंनानुवषट्करोतिनभक्षयतिंसंस्थावाएषायदनुवषट्कारंःसंस्थाभक्षःप्राणःसवितांनेत्प्राणंसंस्थाप
यानींत्युभेवाएषएतेसवनेविपिबतियत्सवितांप्रातःसवनंचतृतीयसवनंचंतद्यत्पिबवत्सावित्र्यैनिविदःपदंपुरस्ताद्भव
तिमद्वदुपरिष्टांदुभयोरेवैनंतत्सवनयोराभजतिंप्रातःसवनेचतृतीयसवनेचंबह्व्यःप्रातर्वायव्याःशस्यंतंएकातृतीयसव
नेंतस्मादूर्ध्वाःपुरुषस्यभूयांसःप्राणांयच्चावांचोद्यावापृथिवीयंशंसतिंद्यावापृथिवीवैप्रतिष्ठेंइयमेवेहप्रतिष्ठासावमुत्रंतद्य
द्द्यावापृथिवीयंशंसतिंप्रतिष्ठयोरेवैनंतत्प्रतिष्ठापयति॥२९॥आर्भवंशंसत्यृभवोवैदेवेषुतपसासोमपीथमभ्यजयंस्तेभ्यः

प्रातःसवनेवाचिकल्पयिषँस्तानग्निर्वसुभिःप्रातःसवनादनुदतंतेभ्योमाध्यंदिनेसवनेवाचिकल्पयिषँस्तानिंद्रोरुद्रैर्माध्यं
दिनात्सवनादनुदतंतेभ्यस्तृतीयसवनेवाचिकल्पयिषँस्तान्विश्वेदेवाअनोनुद्यंतंनेहपास्यंतिनेहेतिंसप्रजापतिरब्रवीत्स
वितारंतववाइमेंतेवासास्त्वमेवैभिःसंपिवस्वेतिंसतथेत्यब्रवीत्सवितांतान्वैत्वमुभयतःपरिपिबेतिंतान्प्रजापतिरुभयतः
पर्यपिबंत्तेएतेधाय्येअनिरुक्तेप्राजापत्येशस्येतेअभितआर्भवंसुरूपकृत्नुमूतयेऽयंवेनश्चोदयत्पृश्निगर्भाइतिंप्रजापतिरेवै
नांस्तदुभयतःपरिपिबतिंतस्मादुश्रेष्ठीपात्रेरोचयत्येवंयंकामयतेतंतेभ्योवैदेवाअपैवाबीभत्संतमनुष्यगंधांत्तएतेधाय्येअं
तरदधतंयेभ्योमातैवापित्रइति॥३०॥वैश्वदेवंशंसतिंयथावैप्रजाएवंवैश्वदेवंतद्यथांतरंजनताएवंसूक्तानिंयथारण्यान्ये
वंधाय्यास्तदुभयतोधाय्यांपर्याह्वयतेंतस्मात्तान्यरण्यानिसंत्यनरण्यानिमृगैश्चवयोभिश्चेतिहस्माहयथावैपुरुषएवंवैश्व
देवंतस्ययथावांतरमंगान्येवंसूक्तानिंयथापर्वाण्येवंधाय्यास्तदुभयतोधाय्यांपर्याह्वयतेंतस्मात्पुरुषस्यपर्वाणिंशिथिराणि
संतिदृह्वानिंब्रह्मणाहितानिधृतानिंमूलंवाएतद्यज्ञस्यंयद्धाय्याश्चयाज्याश्चतद्यदन्याअन्याधाय्याश्चयाज्याश्चकुर्युरुन्मू
लमेवतद्यज्ञंकुर्युस्तस्मात्ताःसमान्यएवस्युःपांचजन्यंवाएतदुक्थंयद्वैश्वदेवंसर्वेषांवाएतत्पंचजनानामुक्थंदेवमनुष्या
णांगंधर्वाप्सरसांसर्पाणांचपितृणांचैतेषांवाएतत्पंचजनानामुक्थंसर्वएनंपंचजनाविदुरेनंपंचिन्यैजनतायैहविनोगच्छं
तियएवंवेदसर्वदेवत्योवाएषहोतायोवैश्वदेवंशंसतिंसर्वादिशोध्यायेच्छंसिष्यंन्त्सर्वास्वेवतद्दिक्षुरसंदधातिंयस्यामस्य

दिशिद्वेष्यःस्यान्नतांध्यायेंदनुहायैवास्यतद्वीर्यमादत्तेंऽदितिर्द्यौरदितिरंतरिक्षमित्युत्तमयापरिदधातीयंवाअदितिरियं
द्यौरियमंतरिक्षमंदितिर्मातासपितासपुत्रइतीयंवैमातेयंपितेयंपुत्रोविश्वेदेवाअदितिःपंचजनाइत्यस्यांवैविश्वेदेवाअ
स्यांपंचजनाअदितिर्जातमदितिर्जनित्वमितीयंवैजातमियंजनित्वंद्विःपच्छःपरिदधातिंचतुष्पादावैपशवःपशूनामवरु
ध्यैसकृदर्धर्चशःप्रतिष्ठायाएवंद्विप्रतिष्ठोवैपुरुषश्चतुष्पादाःपशवोयजमानमेवतद्विप्रतिष्ठंचतुष्पात्सुपशुषुप्रतिष्ठापयतिं
सदैवपंचजनीययापरिदध्यात्तदुपस्पृशन्भूमिंपरिदध्यात्तद्यस्यामेवयज्ञंसंभरतितस्यामेवैनंतदंततःप्रतिष्ठापयतिंविश्वे
देवाःशृणुतेमंहवंमइतिवैश्वदेवमुक्थंशस्त्वावैश्वदेव्यायजतियथाभागंतद्देवताःप्रीणाति॥ ३१॥आग्नेयीप्रथमाघृतया
ज्यांसौमीसौम्ययाज्यावैष्णवीघृतयाज्यात्वंसोमपितृभिःसंविदानइतिसौम्यस्यपितृमत्यायजतिघ्नंतिवाऽएतत्सोमंयद
भिषुण्वंतितस्यैतामनुस्तरणींकुर्वंतियत्सौम्यःपितृभ्योवाअनुस्तरणीतस्मात्सौम्यस्यपितृमत्यायजंत्यवधिपुर्वाएतत्सोमं
यदभ्यसुषवुंस्तदेनंपुनःसंभावयंतिपुनराप्याययंत्युपसदांरूपेणोपसदांकिलवैतद्रूपंयदेतादेवताअग्निःसोमोविष्णुरिति
प्रतिगृह्यसौम्यंहोतापूर्वश्छंदोगेभ्योवेक्षेतंतंहैकेपूर्वंछंदोगेभ्योहरंतितत्तथानकुर्याद्वषट्कर्ताप्रथमःसर्वभक्षान्भक्षयती
तिहस्माहतेनैवरूपेणतस्माद्वषट्कर्तैवपूर्वोवेक्षेताथैनंछंदोगेभ्योहरंति॥ ३२॥प्रजापतिर्वैस्वांदुहितरमभ्यध्यायद्दिवमि
त्यन्यआहुरुषसमित्यन्येतामृश्योभूत्वारोहितंभूतामभ्यैत्तंदेवाअपश्यन्नकृतंवैप्रजापतिःकरोतीतितेतमैच्छन्यएनमा

रिष्यंत्येतमन्योन्यस्मिन्नाविंदँस्तेषांयाएवघोरतमास्तन्वआसँस्ताएकधासमभरँस्ताःसंभृताएषदेवोभवंत्तदस्यैतद्भूतव
न्नामभवतिवैँसयोस्यैतदेवंनामवेदंतंदेवाअब्रुवन्नयंवैप्रजापतिरकृतमकरिमंविध्येतिंसतथेत्यब्रवीत्सवैवोवरंवृणाइतिवृ
णीष्वेतिंसएतमेववरमवृणीतपशूनामाधिपत्यँतदस्यैतत्पशुमन्नामंपशुमान्भवतियोस्यैतदेवंनामवेदंतमभ्यायत्यावि
ध्यंत्सविद्धऊर्ध्वउदप्रपतंत्तमेतंमृगइत्याचक्षतेयउएवमृगव्याधःसउएवसयारोहित्सारोहिणीयोएवेषुस्त्रिकांडासोएवेषु
स्त्रिकांडातद्वाइदंप्रजापतेरेतःसिक्तमधावत्तत्सरोभवंत्तेदेवाअब्रुवन्मेदंप्रजापतेरेतोदुषदितिंयदब्रुवन्मेदंप्रजापतेरेतो
दुषदितिंतन्मादुषमभवंत्तन्मादुषस्यमादुषत्वंमादुषंहवैनामैतद्यन्मानुषंतन्मादुषंसन्मानुषमित्याचक्षतेपरोक्षेणंपरोक्ष
प्रियाइवहिदेवाः॥३३॥तदग्निनापर्यादधुस्तन्मरुतोधून्वँस्तदग्निर्नप्राच्यावयंत्तदग्निनावैश्वानरेणपर्यादधुस्तन्मरुतोधू
न्वँस्तदग्निर्वैश्वानरःप्राच्यावयंत्तस्ययद्रेतसःप्रथममुददीप्यतंतदसावादित्योभवंद्यद्द्वितीयमासीत्तद्भृगुरभवंत्तंवरुणो
न्यगृह्णीतंतस्मात्सभृगुर्वारुणिरथयत्तृतीयमदीदेदिवंतआदित्याअभवंन्येंगाराआसंस्तेंगिरसोभवंन्यदंगाराःपुनरवशां
ताउददीप्यंतंतद्बृहस्पतिरभवंद्यानिपरिक्षाणान्यासंस्तेकृष्णाःपशवोभवंन्यालोहिनीमृत्तिकातेरोहिताअथयद्भस्मासी
त्तत्परुष्यंव्यसर्पद्गौरोगवयऋश्यउष्ट्रोगर्दभइतिंयेचैतेरुणाःपशवस्तेचंतान्वाएषदेवोभ्यवदंतममवाइदंममवैवास्तुहमि
तिंतमेतयर्चानिरवादयंतंयैषारौद्रीशस्यतंआतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयोथाः ॥ त्वंनोवीरोअर्वतिक्षमे

थाइतिब्रूयान्नाभिनइत्यंनभिमानुकोहैषदेवःप्रजाभवतिंप्रजायेमहिरुद्रियप्रजाभिरितिब्रूयान्नरुद्रेत्येतस्यैवनाम्नःपरि
हृत्यैतदुखलुशंनःकरतीत्येवशंसेच्छमितिप्रतिपद्यतेंसर्वस्माएवशांत्यैंनृभ्योनारिभ्योगवइतिंपुमांसोवैनरःस्त्रियोनार्यः
सर्वस्माएवशांत्यैंसोनिरुक्तारौद्रीशांतांसर्वायुःसर्वायुत्वायंसर्वमायुरेतियएवंवेदंसोगायत्रीब्रह्मवैगायत्रींब्रह्मणैवैनंतन्न
मस्यति॥३४॥वैश्वानरीयेणाग्निमारुतंप्रतिपद्यतेंवैश्वानरोवाएतद्रेतःसिक्तंप्राच्यावयंत्तस्माद्वैश्वानरीयेणाग्निमारुतंप्रति
पद्यतेंऽनवानंप्रथमऋक्शंस्तव्यांग्नीन्वाऽएषोर्चींष्यशांतान्प्रसीदन्नेतिंयआग्निमारुतंशंसतिंप्राणेनैवतदग्नींस्तरत्यंधीय
न्नुपहन्यादंन्यंविवक्तारमिच्छेंत्तमेवतत्सेतुंकृत्वातरतिंतस्मादाग्निमारुतेनऽयुच्यमेष्टव्योंविवक्तामारुतंशंसतिंमरुतोह
वाएतद्रेतःसिक्तंधून्वंतःप्राच्यावयंस्तस्मान्मारुतंशंसतिंयज्ञायज्ञावोअग्नयेंदेवोवोद्रविणोदाइतिंमध्येयोनिंचानुरूपंच
शंसतिंतद्यन्मध्येयोनिंचानुरूपंचशंसतिंतस्मान्मध्येयोनिर्धृतांयदुद्वेसूक्तेशस्त्वाशंसतिप्रतिष्ठयोरेवंतदुपरिष्टात्प्रजननं
दधातिंप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेद॥३५॥जातवेदस्यंशंसतिप्रजापतिःप्रजाअसृजतंताःसृष्टाःपराच्यएवाय
न्नव्यावर्ततंताअग्निनापर्यगच्छंत्ताअग्निमुपावर्ततंतमेवाद्याप्युपावृत्तांःसोब्रवीज्जातावैप्रजांअनेनाविदमितिंयदब्रवीज्जा
तावैप्रजांअनेनाविदमितिंतज्जातवेदस्यमभवंत्तज्जातवेदसोजातवेदस्त्वंताअग्निनापरि गतानिरुद्धांःशोचत्योदीध्यत्यो
तिष्ठँस्ताअद्भिरभ्यषिंचंत्तस्मादुपरिष्टाज्जातवेदस्यस्यापोहिष्ठीयंशंसतितस्मात्तच्छमयतेवशंस्तव्यंता अद्भिरभिषिच्यंनि

जास्यैवामन्यतंतासुवाअह्निनाबुध्न्येनपरोक्षात्तेजोदधांदेषहवाअहिर्बुध्न्योयदग्निर्गार्हपत्योऽग्निनैवासुतद्गार्हपत्येनंपरो
क्षात्तेजोदधातितंतस्मादाहुर्जुह्वदेवांजुह्वतोवसीयानिति ॥३६॥ देवानांपत्नीःशंसंत्यनूचीरग्निंगृहपतिंतस्मादनूचीपत्नी
गार्हपत्यमास्तेतदाहूराकांपूर्वांशंसेंज्जाम्यैवैपूर्वपेयमितितत्तन्नाद्दत्यंदेवानामेवपत्नीःपूर्वाःशंसेदेषहवाएतत्पत्नीषुरेतोद
धातियदग्निर्गार्हपत्योऽग्निनैवासुतद्गार्हपत्येनंपत्नीषुप्रत्यक्षाद्रेतोदधातिप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदंतस्मा
त्समानोदर्यास्वसान्योदर्यायैजायायाअनुजीविनीजीवतिराकांशंसतिराकाहवाएतांपुरुषस्यसेवनींसीव्यतियैषाशिश्ने
धिपुमांसोस्यपुत्राजायंतेयएवंवेदंपावीरवींशंसतिवाग्वैसरस्वतीपावीरवींवाच्येवतद्वाचंदधातितदाहुर्यामींपूर्वांशंसे३
त् ॥ पित्र्याँ३इति ॥ यामीमेवपूर्वांशंसेदिमंयमप्रस्तरमाहिसीदेतिराज्ञोवैपूर्वपेयंतस्माद्यामीमेवपूर्वांशंसेन्मातलीकव्यै
र्यमोअंगिरोभिरितिकाव्यानामनूचींशंसंत्यवरेणैववैदेवान्काव्याःपरेणैवपितृँस्तस्मात्काव्यानामनूचींशंसंत्युदीरताम
वरउत्परासइतिपित्र्याःशंसंत्युन्मध्यमाःपितरःसोम्यासइतियेचैवावमायेचपरमायेचमध्यमास्तान्त्सर्वाननंतरायंप्री
णात्याहंपितृन्त्सुविदत्राँअवित्सीतिद्वितीयांशंसतिबर्हिषदोयेस्वधयासुतस्यैत्येतद्धवाएषांप्रियंधामयद्बर्हिषदइतिप्रिये



१ भाष्ये ' शिश्नेधि ' इतिपाठः । शिश्नेऽधि शिश्नस्योपरीतितदर्थः । २ भाष्ये ' पित्र्य३मिति ' इतिपाठः ।

णैवैनंस्तद्धाम्नासमर्धयतिप्रियेणधाम्नासमृध्यतेयएवंवेदैदंपितृभ्योनमोअस्त्वद्येतिनमस्कारवतीमंततःशंसतितस्मादं ततःपितृभ्योनमस्क्रियतेतदाहुर्व्याहावंपित्र्याःशंसे३त्॥अव्याहावाँ३इति ॥ व्याहावमेवशंसेदसंस्थितंवैपितृयज्ञस्य साध्वसंस्थितंवाएषपितृयज्ञंसंस्थापयतियोव्याहावंशंसतितस्माद्व्याहावमेवशंस्तव्यं ॥३७॥ स्वादुष्किलायंमधुमाँउता यमितींद्रस्यैंद्रीरनुपानीयाःशंसत्येताभिर्वाइंद्रस्तृतीयसवनमन्वपिबत्तदनुपानीयानामनुपानीयात्वंमाद्यंतीववैतर्हिदे वतायदेताहोताशंसतितस्मादेतासुमद्वत्प्रतिगीर्यंययोरोजसास्कभितारजांसीतिवैष्णुवारुणीमृचंशंसतिविष्णुर्वैयज्ञ स्यदुरिष्टंपातिवरुणःस्विष्टंतयोरुभयोरेवशांत्यैविष्णोर्नुकंवीर्याणिप्रवोचमितिवैष्णवींशंसतियथावैमत्यमेवंयज्ञस्यवि ष्णुंस्तद्यथादुष्कृष्टंदुर्मतीकृतंसुकृष्टंसुमतीकृतंकुर्वन्नियादेवमेवैतद्यज्ञस्यदुःष्टुतंदुःशस्तंसुष्टुतंसुशस्तंकुर्वन्नेतियदेतांहो ताशंसतितंतुंतन्वन्रजसोभानुमन्विहीतिप्राजापत्यांशंसतिप्रजावैतंतुःप्रजामेवास्माएतत्संतनोतिज्योतिष्मतःपथोरक्ष धियाकृतानितिदेवयानावैज्योतिष्मंतःपंथानस्तानेवास्माएतद्वितनोत्यनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यं जनमित्येवैनंतन्मनोःप्रजयासंतनोतिप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदैवानइंद्रोमघवाविरप्शीत्युत्तमयापरिदधा तीयंवाइंद्रोमघवाविरप्शीकरत्सत्याचर्षणीधृदनर्वेतीयंवैसत्याचर्षणीधृदनर्वा ॥ त्वंराजाजनुषांधेह्यस्मेइतीयंवैराजा



१ 'एनांस्तद्धा म्ना' इतिभाष्यपाठः। एनान्पितृनितितदर्थः। एनानित्यर्थे एनस्तदितिछांदसं। २ भाष्ये 'अव्याहावा३तिमि' पाठः।

जनुषामधिश्रवौमाहिनंयज्जरित्रइतींयंवैमाहिनंयज्ञश्रवौयजमानोजरितायजमानायैवैतामाशिषमाशास्तेतदुपस्पृशन्भूमिंपरिदध्यात्तद्यस्यामेवयज्ञंसंभरतितस्यामेवैनंतदंततःप्रतिष्ठापयंत्यग्नेमरुद्भिःशुभयद्भिर्ऋक्वभिरित्याग्निमारुतमुक्थंशस्त्वाग्निमारुत्यायजतियथाभागंतदेवताःप्रीणातिप्रीणाति ॥३८॥ इतितृतीयोऽध्यायः ॥ ३ ॥ ॥

देवावाअसुरैर्युद्धमुपप्रायन्विजयायतानग्निर्नान्वकामयतैतुंतंदेवाअब्रुवन्नपित्वमेह्यस्माकंवैत्वमेकोसीतिसनास्तुतोन्वेष्यामीत्यब्रवीत्स्तुतनुमेति तथेतितंतेसमुत्क्रम्योपनिवृत्त्यास्तुवंस्तान्त्स्तुतोनुप्रैत्सत्रिःश्रेणिर्भूत्वात्र्यनीकोऽसुरान्युद्धमुपप्रायद्विजयायत्रिःश्रेणिरितिच्छंदांस्येवश्रेणीरकुरुतत्र्यनीकइतिसवनान्येवानीकानितानसंभाव्यंपराभावयत्ततोवैदेवाअभवन्परासुराभवत्यात्मनापरास्यद्विषन्पाप्माभ्रातृव्योभवतियएवंवेदसावाएषागायत्र्येवयदग्निष्टोमश्चतुर्विंशत्यक्षरावैगायत्रीचतुर्विंशतिरग्निष्टोमस्यस्तुतशस्त्राणितद्वैयदिदमाहुःसुधायांहवैवाजीसुहितोदधातीतिगायत्रीवैतन्नहवैगायत्रीक्षमारमतंऊर्ध्वाहवाएषायजमानमादायस्वरेतीत्यग्निष्टोमोवैतंनहवाऽअग्निष्टोमःक्षमारमतंऊर्ध्वोहवाएषयजमानमादायस्वरेतिसवाएषसंवत्सरएवयदग्निष्टोमश्चतुर्विंशत्यर्धमासोवैसंवत्सरश्चतुर्विंशतिरग्निष्टोमस्यस्तुतशस्त्राणितंयथासमुद्रंस्त्रोत्याएवंसर्वेयज्ञक्रतवोपियंति ॥३९॥ दीक्षणीयेष्टिस्तायतेतामेवानुयाःकाश्चेष्टयस्ताःसर्वाअग्निष्टोममपियंतीळामुपह्वयतइळाविधावैपाकयज्ञाइळामेवानुयेकेचपाकयज्ञास्तेसर्वेग्निष्टोममपियंतिसायंप्रातरग्निहोत्रंजुहतिसायं

प्रातर्व्रतंप्रयच्छंतिस्वाहाकारेणाग्निहोत्रंजुह्वतिस्वाहाकारेणव्रतंप्रयच्छंतिस्वाहाकारमेवान्वग्निहोत्रमग्निष्टोममप्येतिपंच
दशप्रायणीयेसामिधेनीरन्वाहपंचदशदर्शपूर्णमासयोःप्रायणीयमेवानुदर्शपूर्णमासावग्निष्टोममपीतःसोमंराजानंक्रीणं
त्यौषधोवैसोमोराजौषधिभिस्तंभिषज्यंतियंभिषज्यंतिसोममेवराजानंक्रीयमाणमनुयानिकानिचभेषजानितानिसर्वा
ण्यग्निष्टोममपियंत्यग्निमातिथ्येमंथंत्यग्निंचातुर्मास्येष्वातिथ्यमेवानुचातुर्मास्यान्यग्निष्टोममपियंतिपयसाप्रवर्ग्येचरंति
पयसादाक्षायणयज्ञेप्रवर्ग्यमेवानुदाक्षायणयज्ञोग्निष्टोममप्येतिपशुरुपवसथेभवतितमेवानुयेकेचपशुबंधास्तेसर्वेग्निष्टो
ममपियंतीळादधोनामयज्ञक्रतुस्तंदध्नाचरंतिदध्नादधिघर्मेदधिघर्ममेवान्विळादधोग्निष्टोममप्येति ॥ ४० ॥ इतिनुपुर
स्तादथोपरिष्टात्पंचदशोक्थ्यस्यस्तोत्राणिपंचदशशस्त्राणिसमासोमासधासंवत्सरोविहितःसंवत्सरोग्निर्वैश्वानरोग्निरग्नि
ष्टोमःसंवत्सरमेवानूक्थ्योग्निष्टोममप्येत्युक्थ्यमपियंतमनुवाजपेयोप्येत्यत्युक्थ्योहिसभवतिद्वादशरात्रेःपर्यायाःसर्वेपं
चदशास्तेद्वौद्वौसंपद्यात्रिंशदेकाविंशंषोळशिसामत्रिवृत्संधिःसात्रिंशत्समासस्त्रिंशन्मासस्यरात्रयोमासधासंवत्सरोविहि
तःसंवत्सरोग्निर्वैश्वानरोग्निरग्निष्टोमःसंवत्सरमेवान्वतिरात्रोग्निष्टोममप्येत्यतिरात्रमपियंतमन्वप्तोर्यामोप्येत्यत्यतिरा
त्रोहिसभवत्येतद्वैयेचपुरस्ताद्येचोपरिष्टाद्यज्ञक्रतवस्तेसर्वेग्निष्टोममपियंतितस्यसंस्तुतस्यनवतिशतंस्तोत्रियाःसायानव
तिस्तेदशत्रिवृतोऽथयानवतिस्तेदशोऽथयादशतासामेकास्तोत्रियोदेतात्रिवृत्परिशिष्यतेसोसावेकविंशोध्याहितस्तप

तिविषुवान्वाएषस्तोमानांदशवाएतस्मादवाचस्त्रिवृतोदशपरांचोमध्यएषएकविंशउभयतोध्याहितस्तपतितद्वासौस्तो
त्रियोदेतिसैतस्मिन्नध्यूढ्वांसयजमानस्तद्दैवंक्षत्रंसहोबलमश्नुतेहवैदैवंक्षत्रंसहोबलमेतस्यहसायुज्यंसरूपतांसलोकताम
श्नुतेयएवंवेद॥४१॥देवावाअसुरैर्विजिग्यानाऊर्ध्वाःस्वर्गंलोकमायंन्त्सोग्निर्दिविस्पृगूर्ध्वउदश्रयतंसःस्वर्गस्यलोकस्यद्वा
रमवृणोदग्निर्वैस्वर्गस्यलोकस्याधिपतिस्तंवसवःप्रथमाआगच्छंस्तएनमब्रुवन्नतिनोर्जस्याकाशंनःकुर्वितिसनास्तुतोतिस्र
क्ष्यइत्यब्रवीत्स्तुतनुमेतितथेतितंतेत्रिवृतास्तोमेनास्तुवंस्तान्स्तुतोत्यार्जततंयथालोकमगच्छंस्तंरुद्राआगच्छंस्तएनमब्रुव
न्नतिनोर्जस्याकाशंनःकुर्वितिसनास्तुतोतिस्रक्ष्यइत्यब्रवीत्स्तुतनुमेतितथेतितंतेपंचदशेनस्तोमेनास्तुवंस्तान्स्तुतोत्यार्ज
तंतेयथालोकमगच्छंस्तमादित्याआगच्छंस्तएनमब्रुवन्नतिनोर्जस्याकाशंनःकुर्वितिसनास्तुतोतिस्रक्ष्यइत्यब्रवीत्स्तुतनु
मेतितथेतितंतेसप्तदशेनस्तोमेनास्तुवंस्तान्स्तुतोत्यार्जततंयथालोकमगच्छंस्तंविश्वेदेवाआगच्छंस्तएनमब्रुवन्नतिनोर्ज
स्याकाशंनःकुर्वितिसनास्तुतोतिस्रक्ष्यइत्यब्रवीत्स्तुतनुमेतितथेतितंतएकविंशेनस्तोमेनास्तुवंस्तान्स्तुतोत्यार्जततंयथा
लोकमगच्छंन्नेकैकेनवैतंदेवाःस्तोमेनास्तुवंस्तान्स्तुतोत्यार्जततंयथालोकमगच्छंन्नथहैनमेषएतैःसर्वैःस्तोमैःस्तौतियोय ॥ ४३ ॥
जतेयश्चैनमेवंवेदातीतुतमर्जांताअतिहवाएनमर्जतेस्वर्गंलोकमभियएवंवेद॥४२॥सवाएषोग्निरेवयदग्निष्टोमस्तंयदस्तुवं

१ भाष्ये 'मर्जते' इतिपाठः मर्जतएव प्राप्नुयेवेतितदर्थः।

स्तस्मादग्निस्तोमंस्तमग्निस्तोमंसंतंमग्निष्टोमइत्याचक्षतेपरोक्षेणंपरोक्षप्रियाइवहिदेवांस्तंयच्चतुंष्टयादेवांश्चतुर्भिःस्तोमैरस्तु
वंस्तस्माच्चतुःस्तोमंस्तंचतुःस्तोमंसंतंचतुःष्टोमइत्याचक्षतेपरोक्षेणंपरोक्षप्रियाइवहिदेवांअथयदेनमूर्ध्वंसंतंज्योतिर्भूतम
स्तुवंस्तस्माज्ज्योतिस्तोमस्तंज्योतिस्तोमंसंतंज्योतिष्टोमइत्याचक्षतेपरोक्षेणंपरोक्षप्रियाइवहिदेवांःसवाएषोपूर्वोनपरोय
ज्ञक्रतुंर्यथारथचक्रमनंतमेवंयदग्निष्टोमंस्तस्ययथैवप्रायणंतथोदयनंतदेषाभियज्ञगाथागीयते ॥ यदस्यपूर्वमपरंतदस्यंय
द्वस्यापरंतद्वस्यपूर्वं॥अहेरिवसर्पणंशाकलस्यंनविजानंतियतरत्परस्तादितिंयथाह्येवास्यप्रायणमेवंमुदयनमसदितितदा
हुर्यत्त्रिवृत्प्रायणमेकविंशमुदयनंकेनतेसमेइतिंयोवाएकविंशस्त्रिवृद्वैसोंऽथोयदुभौतृचौतृचिनावितिब्रूयात्तेनेति॥४३॥
योवाएषतपत्येषोग्निष्टोमएषसाह्नस्तंसहैवाह्नासंस्थापयेयुःसाह्नोवैनामंतेनासंत्वरंमाणाश्चरेयुंर्यथैवप्रातःसवनंएवंमाध्यं
दिनएवंतृतीयसवनंएवमुहयजमानोप्रमायुकोभवतिंयद्धवाइदंपूर्वयोःसवनयोरसंत्वरमाणाश्चरंतितस्माद्धेदंप्राच्योग्रा
मताबहुलाविष्टांअथयद्धेदंतृतीयसवनेसंत्वरमाणाश्चरंतितस्माद्धेदंप्रत्यंचिदीर्घारण्यानिभवंतितथाहयजमानःप्रमायु
कोभवतिंतेनासंत्वरमाणाश्चरेयुंर्यथैवप्रातःसवनएवंमाध्यंदिनंएवंतृतीयसवनंएवमुहयजमानोप्रमायुकोभवतिंसएतमे
वशस्त्रेणानुपर्यावर्तेतंयदावाएषप्रातरुदेत्यथमंद्रंतपतितस्मान्मंद्रयावाचाप्रातःसवनेशंसेंदथयदाभ्येत्यथबलीयस्तपति
तस्माद्बलीयस्यावाचामध्यंदिनेशंसेंदथयदाभितरामेत्यथबलिष्ठतमंतपतितस्माद्बलिष्ठतमयावाचातृतीयसवनेशंसेंदेवं

शंसेद्यदिवाचईशीतंवाग्घिशस्त्रंयंयातुवाचोत्तरोत्तरिण्योत्सहेतंसमापनायतयाप्रतिपद्येतैतत्सुशस्ततममिवभवतिसवा
ऽएषनकदाचनास्तमेतिनोदेतितंयदस्तमेतीतिमन्यंतेह्नएवतदंतमित्वाऽथात्मानंविपर्यस्यतेरात्रीमेवावस्तात्कुरुतेहःपर
स्तादथयदेनंप्रातरुदेतीतिमन्यंतेरात्रेरेवतदंतमित्वाथात्मानंविपर्यस्यतेहरेवावस्तात्कुरुतेरात्रींपरस्तात्सवाएषनकदाच
ननिम्रोचतिनहवैकदाचननिम्रोचत्येतस्यहसायुज्यंसरूपतांसलोकतामश्नुतेयएवंवेदयएवंवेद।४४।इतिचतुर्थोध्यायः४

यज्ञोवैदेवेभ्योन्नाद्यमुदक्रामत्तेदेवाअब्रुवंन्यज्ञोवैनोन्नाद्यमुदक्रमीदन्विमंयज्ञमन्नमन्विच्छामेतितेब्रुवन्कथमन्विच्छा
मेतिब्राह्मणेनचच्छंदोभिश्चेत्यब्रुवंस्तेब्राह्मणंछंदोभिरदीक्षयंस्तस्यांतंयज्ञमतन्वतापिपत्नीःसमयाजयंस्तस्माद्धाप्येतर्हिदी
क्षणीयायामिष्टावांतमेवयज्ञंतन्वतेऽपिपत्नीःसंयाजयंतितमनुन्यायमन्ववायंस्तेप्रायणीयमतन्वतंतंप्रायणीयेननेदीयो
न्वागच्छंस्तेकर्मभिःसमत्वरंतंतच्छंय्वंतमकुर्वंस्तस्माद्धाप्येतर्हिप्रायणीयंशंय्वंतमेवभवतितमनुन्यायमन्ववायंस्तआति
थ्यमतन्वतंतमातिथ्येननेदीयोन्वागच्छंस्तेकर्मभिःसमत्वरंतंतदिळांतमकुर्वंस्तस्माद्धाप्येतर्ह्यातिथ्यमिळांतमेवभवतित
मनुन्यायमन्ववायंस्तउपसदोतन्वतंतमुपसद्भिर्नेदीयोन्वागच्छंस्तेकर्मभिःसमत्वरंतंतेतिस्रःसामिधेनीरनूच्यतिस्रोदेव
ताऽअयजंस्तस्माद्धाप्येतर्ह्युपसत्सुतिस्रऽएवसामिधेनीरनूच्यतिस्रोदेवताथजंतितमनुन्यायमन्ववायंस्तउपवसथमतन्व

॥ ४४ ॥

१ 'रात्रिंपरस्तात्' इति भाष्ये ।

तंतमुपवसथ्येहन्याम्रुवँस्तमाश्वातंयज्ञमतन्वतांपिपत्लीःसमयाजयँस्तस्माद्धाप्येतर्ह्युपवसथआतमेवयज्ञंतन्वतेंपिपत्लीःसं
याजयंतितस्मादेतेषुपूर्वेषुकर्मसुंशनैस्तरांशनैस्तरामिवानुब्रूयादनूत्सारमिवहितेतमायँस्तस्मादुपवसथेयावत्यावाचांका
मयीततावत्यानुब्रूयादाप्तोहिसतर्हिभवतीतितमाश्वाब्रुवँस्तिष्ठस्वनोन्नाद्यायेतिसनेत्यब्रवीत्कथंवस्तिष्ठेयेतितानीक्षतैवत
सब्रुवंन्ब्राह्मणेनचनश्छंदोभिश्चसयुग्भूत्वान्नाद्यायतिष्ठस्वेतितथेतितस्माद्धाप्येतर्हियज्ञःसयुग्भूत्वादेवेभ्योहव्यंवहतिब्रा
ह्मणेनचच्छंदोभिश्च॥४५॥त्रीणिहवैयज्ञेक्रियंतेजग्धंगीर्णंवांतंतद्धैतदेवजग्धंयदाशंसमानमार्त्विज्यंकारयतंउतवामेद
द्यादुतवामावृणीतेतितद्धतत्पराङेवयथाजग्धंनहैवतद्यजमानंभुनक्त्यथहैतदेवगीर्णंयद्विभ्यदार्त्विज्यंकारयतंउतवा
मानबाधेतोतवामेनयज्ञवेशसंकुर्यादितितद्धतत्पराङेवयथागीर्णंनहैवतद्यजमानंभुनक्त्यथहैतदेववांतंयदभिशस्यमा
नमार्त्विज्यंकारयतेयथाहवाइदंवांतान्मनुष्याबीभत्संतएवंतस्माद्देवास्तद्धतत्पराङेवयथावांतंनहैवतद्यजमानंभुनक्ति
सएतेषांत्रयाणामाशांनेयात्तंयद्येतेषांत्रयाणामेकंचिदकाममभ्याभवेत्तस्यास्तिवामदेव्यस्यस्तोत्रेप्रायश्चित्तिरिदं[1]वाइदंवा
मदेव्यंयजमानलोकोमृतलोकःस्वर्गोलोकस्तत्त्रिभिरक्षरैर्न्यूनंतस्यस्तोत्रउपसृप्यत्रेधात्मानंविगृह्णीयात्पुरुषइतिसएतेषु
लोकेष्वात्मानंदधात्यस्मिन्यजमानलोकेस्मिन्नमृतलोकेस्मिन्त्स्वर्गेलोकेसस्सर्वांदुरिष्टिमत्येत्यपियदिसमृद्धाइवऋत्विजः

१ भाष्ये ‘ रिदंवामदेवां ’ इत्येवपाठः द्वितीयमिदंवतिनास्ति ।

स्युरितिहस्माहाथहैतज्जपेदेवेति ॥ ४६ ॥ छंदांसिवैदेवेभ्योहव्यमूढ्वाश्रांतानिजघनार्धेयज्ञस्यतिष्ठंतियथाश्वोवाश्वतरो
वोहिवांस्तिष्ठेदेवंतेभ्यएतंमैत्रावरुणंपशुपुरोळाशमनुदेविकाहवींषिनिर्वपेद्धात्रेपुरोळाशंद्वादशकपालंयोधातासवषट्का
रोनुमत्यैचरुंयानुमतिःसागायत्रीराकायैचरुंयाराकासात्रिष्टुप्सिनीवाल्यैचरुंयासिनीवालीसाजगतीकुह्वैचरुंयाकुहूःसा
नुष्टुब्वेतानिवावसर्वाणिच्छंदांसिगायत्रंत्रैष्टुभंजागतमानुष्टुभमन्वन्यान्येतानिहियज्ञेप्रतमामिवक्रियंतंएतैर्हवाअस्यच्छं
दोभिर्यजतःसर्वैश्छंदोभिरिष्टंभवतियएवंवेदंतद्वैयदिदमाहुःसुधायांहवैवाजीसुहितोदधातीतिच्छंदांसिवैतत्सुधायांह
वाएनंछंदांसिदधत्यननुध्यायिनंलोकंजयतियएवंवेदंतद्धैकआहुर्धातारमेवसर्वासांपुरस्तात्पुरस्तादाज्येनपरियजेत्तदा
सुसर्वासुमिथुनंदधातीतितदुवा आहुर्जामिवाएतद्यज्ञेक्रियतेयत्रसमानीभ्यामृग्भ्यांसमानेहन्यजतीतियदिहवाअपिब
ह्वयइवजायाःपतिर्वावतासांमिथुनंतद्यदासांधातारंपुरस्ताद्यजातितदासुसर्वासुमिथुनंदधातीतिनुदेविकानां॥४७॥ अ
थदेवीनांसूर्यायपुरोळाशमेककपालंयःसूर्यःसधातासउएववषट्कारोदिवेचरुंयाद्यौःसानुमतिःसोऽएवगायत्र्युषसेचरुंयो
षाःसाराकासोएवत्रिष्टुब्गवेचरुंयागौःसासिनीवालीसोएवजगतीपृथिव्यैचरुंयापृथिवीसाकुहूःसोएवानुष्टुब्वेतानिवावस
र्वाणिच्छंदांसिगायत्रंत्रैष्टुभंजागतमानुष्टुभमन्वन्यान्येतानिहियज्ञेप्रतमामिवक्रियंतंएतैर्हवाअस्यच्छंदोभिर्यजतःसर्वै
श्छंदोभिरिष्टंभवतियएवंवेदंतद्वैयदिदमाहुःसुधायांहवैवाजीसुहितोदधातीतिच्छंदांसिवैतत्सुधायांहवाएनंछंदांसिदध

॥ ४५ ॥

त्यंननुध्यायिनंलोकंजयतियएवंवेदंतद्धैकआहुःसूर्यमेवसर्वासांपुरस्तात्पुरस्तादाज्येनपरियजेत्तदासुसर्वासुमिथुनंदधा
तीतितदुवाआहुर्जामिवाएतद्यज्ञेक्रियतेयत्रसमानीभ्यामृग्भ्यांसमानेहन्यजतीतियदिहवाअपिबह्व्यइवजायाःपतिर्वा
वतासांमिथुनंतद्यदासांसूर्यंपुरस्ताद्यजतितदासुसर्वासुमिथुनंदधातितायाइमास्ताअमूर्याअमूस्ताइमाअन्यतराभिर्वा
वतंकाममाप्नोतियएतासूभयीषुंताउभयीर्गतःश्रियंःप्रजातिकामस्यसंनिर्वपेन्नेत्वेषिष्यमाणस्यंयदेनाएषिष्यमाणस्यसं
निर्वपेदीश्वरोहास्यवित्तेदेवाअरंतोर्यद्वाअयमात्मनेलममंस्तेतिताहशुचिवृक्षोगौपालायनोवृद्धद्युम्नस्याभिप्रतारिणस्यो
भयीर्यज्ञेसंनिरुवापंतस्यहरथगृत्संगाहमानंदृष्ट्वोवाचेत्थमहमस्यराजन्यस्यंदेविकाश्चदेवीश्चोभयीर्यज्ञेसममादयंयदस्ये
त्थंरथगृत्सोगाहतइतिचतुःषष्टिंकवचिनंःशश्वद्धास्यतेपुत्रनप्तारआसुः ॥ ४८ ॥ अग्निष्टोमंवैदेवाअश्रयंतोक्थान्यसुरा
स्तेसमावद्वीर्याएवासन्नव्यावर्तंततान्भरद्वाजऋषीणामपश्यंदिमेवाअसुराउक्थेषुश्रितास्तानेषांनकश्चनपश्यतीतिसोग्नि
मुदह्वयंतेह्यूषुब्रवाणितेंग्नइत्थेतरागिरइत्यसुर्याहवाइतरागिरंःसोग्निरुपोत्तिष्ठन्नब्रवीत्किंस्विदेवमह्यंकृशोदीर्घःपलितो
वक्ष्यतीतिभरद्वाजोहवैकृशोदीर्घःपलितआसंसोब्रवीदिमेवाअसुराउक्थेषुश्रितास्तान्वोनकश्चनपश्यतीतितानग्निरश्वो
भूत्वाभ्यत्यद्रवंद्यदग्निरश्वोभूत्वाभ्यत्यद्रवंत्तत्साकमश्वंसामाभवंत्तत्साकमश्वस्यसाकमश्वत्वंतदाहुःसाकमश्वेनोक्था
निप्रणयेदप्रणीतानिवावतान्युक्थानियान्यन्यत्रसाकमश्वादितिप्रमंहिष्ठीयेनप्रणयेदित्याहुःप्रमंहिष्ठीयेनवैदेवाअसुरानु

क्थेभ्यः प्राणुदंतंतत्प्राहैवप्रमंहिष्ठीयेननयेत्प्रसाकमश्वेन ॥ ४९ ॥ तेवाअसुरामैत्रावरुणस्योक्थमश्रयंतंसोब्रवीदिंद्रःक श्चाहंचेमांनितोऽसुरान्नोत्स्यावहाइत्यहंचेत्यब्रवीद्वरुणंस्तस्मादैंद्रावरुणंमैत्रामरुणस्तृतीयसवनेशंसतींद्रश्चहितान्वरुण श्चततोनुदेतांतेवैततोपहताअसुरांब्राह्मणाच्छंसिनउक्थमश्रयंतंसोब्रवीदिंद्रःकश्चाहंचेमांनितोसुरान्नोत्स्यावहाइत्यहंचे त्यब्रवीद्बृहस्पतिस्तस्मादैंद्राबार्हस्पत्यंब्राह्मणाच्छंसींतृतीयसवनेशंसतींद्रश्चहितान्बृहस्पतिश्चततोनुदेतांतेवैततोपहता असुराअच्छावाकस्योक्थमश्रयंतंसोब्रवीदिंद्रःकश्चाहंचेमांनितोसुरान्नोत्स्यावहाइत्यहंचेत्यब्रवीद्विष्णुंस्तस्मादैंद्रावैष्णव मच्छावाकंस्तृतीयसवनेशंसतींद्रश्चहितान्विष्णुश्चततोनुदेतांद्वंद्वमिंद्रेणदेवताःशस्यंतेद्वंद्वंवैमिथुनंतस्माद्वंद्वान्मिथुनंप्र जायतेंप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदाथहैतेपोत्रीयाश्चनेष्ट्रीयाश्चंचत्वारऋतुयाजाःषळृचःसाविराड्दशिनींत द्विराजियज्ञंदशिन्यांप्रतिष्ठापयंतिप्रतिष्ठापयंति ॥ ५० ॥ इतिपंचमोऽध्यायः ॥ ५॥ इतितृतीयपंचिकासमाप्ता ॥३॥

॥ इतितृतीयपंचिकासमाप्ता ॥

श्रीगणेशायनमः ॥ हरिः ॐ ॥ देवावैप्रथमेनाहेंद्रायवज्रंसमभरंस्तंद्वितीयेनाह्नासिंचंस्तंतृतीयेनाह्नाप्रायच्छंस्तंच
तुर्थेहन्प्राहरंत्तस्माच्चतुर्थेहन्षोळशिनंशंसतिवज्रोवाएषयत्षोळशींतद्यच्चतुर्थेहन्षोळशिनंशंसतिवज्रमेवतत्प्रहरतिद्विष
तेभ्रातृव्यायवधंयोस्यस्तृत्यस्तस्मैस्तर्तवैवज्रोवैषोळशीपशवउक्थानितंपरस्तादुक्थानांपर्यस्यशंसतितंयत्परस्तादुक्था
नांपर्यस्यशंसतिवज्रेणैवतत्षोळशिनापशून्परिगच्छतितस्मात्पशवोवज्रेणैवषोळशिनापरिगतामनुष्यानभ्युपावर्तंतेतं
स्मादश्वोवापुरुषोवागौर्वाहस्तीवापरिगतएवंस्वयमात्मनेतएवंवाचाभिषिद्धउपावर्ततेवज्रमेवषोळशिनंपश्यन्वज्रेणैव
षोळशिनापरिगतोवाग्घिवज्रोवाक्षोळशींतदाहुःकिंषोळशिनःषोळशित्वमितिषोळशःस्तोत्राणांषोळशःशस्त्राणांषोळ
शभिरक्षरैरादत्तेषोळशभिःप्रणौतिषोळशपदांनिविदंदधातितत्षोळशिनःषोळशित्वंद्वेवाअक्षरेअतिरिच्येतेषोळशिनो
नुष्टुभमभिसंपन्नस्यवाचोवावतौस्तनौसत्यानृतेवावतेअवत्येनंसत्यंनैनमनृतंहिनस्तियएवंवेद। १।गौरिवीतंषोळशिसा
मकुर्वीततेजस्कामोब्रह्मवर्चसकामस्तेजोवैब्रह्मवर्चसंगौरिवीतंतेजस्वीब्रह्मवर्चसीभवतियएवंविद्वान्गौरिवीतंषोळशिसा
मकुरुतेनानदंषोळशिसामकर्तव्यमित्याहुरिंद्रोवैवृत्रायवज्रमुदयच्छंत्तमस्मैप्राहरत्तमभ्यहनंत्सोभिहतोव्यनदंद्यद्व्यनद
त्तन्नानदंसामाभवंत्तन्नानदस्यनानदत्वंमभ्रातृव्यंवाएतद्भ्रातृव्यहासामयन्नानदमभ्रातृव्योभ्रातृव्यहाभवतियएवंवि
द्वान्नानदंषोळशिसामकुरुतेतद्यदिनानदंकुर्युरविहृतःषोळशीशंस्तव्योऽविहृतासुहितासुस्तुवतेयदिगौरिवीतंविहृतःषो

ळशीशंस्तव्यौंविहृतासुहितासुस्तुवते॥२॥अथातश्छंदांस्येवव्यतिषजंत्यात्वावहंतुहरयंउपोषुश्रृणुहीगिरइतिंगायत्रीश्च
पंक्तीश्चव्यतिषजतिंगायत्रोवैपुरुषःपांक्ताःपशवंःपुरुषमेवतत्पशुभिर्व्यतिषजतिंपशुषुप्रतिष्ठापयतिंयदुगायत्रीचपंक्ति
श्चंतेद्वेअनुष्टुभौंतेनोवाचोरूपांदनुष्टुभोरूपाद्वज्ररूपान्नैतिंयदिंद्रपृतनाज्येऽयंतेअस्तुहर्यतइत्युष्णिहश्चबृहतीश्चव्यतिष
जंत्यौष्णिहोवैपुरुषोबाहर्ताःपशवंःपुरुषमेवतत्पशुभिर्व्यतिषजतिंपशुषुप्रतिष्ठापयतिंयदुष्णिक्चबृहतीचंतेद्वेअनुष्टुभौ
तेनोवाचोरूपांदनुष्टुभोरूपाद्वज्ररूपान्नैत्याधूर्ष्वस्मैब्रह्मन्वीरब्रह्मकृतिंजुषाणइतिंद्विपदांचत्रिष्टुभंचव्यतिषजतिंद्विपाद्वै
पुरुषोवीर्यंत्रिष्टुप्पुरुषमेवतद्वीर्येणव्यतिषजतिंवीर्येप्रतिष्ठापयतिंतस्मात्पुरुषोवीर्येप्रतिष्ठितंःसर्वेषांपशूनांवीर्यवत्तमोंयदु
द्विपदाचविंशत्यक्षरात्रिष्टुप्चंतेद्वेअनुष्टुभौंतेनोवाचोरूपांदनुष्टुभोरूपाद्वज्ररूपान्नैत्येषब्रह्माप्रतेमहेविदथेशंसिषंहरीइ
तिंद्विपदाश्चजगतीश्चव्यतिषजतिंद्विपाद्वैपुरुषोजागताःपशवंःपुरुषमेवतत्पशुभिर्व्यतिषजतिंपशुषुप्रतिष्ठापयतिंतस्मा
त्पुरुषःपशुषुप्रतिष्ठितोंत्तिचैनानधिचतिष्ठतिवशेचास्यंयदुद्विपदाचषोळशाक्षराजगतीचंतेद्वेऽअनुष्टुभौंतेनोवाचोरूपा
दनुष्टुभोरूपाद्वज्ररूपान्नैतिंत्रिकद्रुकेषुमहिषोयवाशिरं॥ प्रोष्वस्मैपुरोरथमित्यतिच्छंदसःशंसतिंच्छंदसांवैयोरसोत्यक्ष
रंत्सोतिच्छंदसमभ्यत्यक्षरंत्तदतिच्छंदसोतिच्छंदस्त्वंसर्वेभ्योवाएषच्छंदोभ्यःसंनिर्मितोयत्षोळशीतद्यदतिच्छंदसःशंस
तिंसर्वेभ्यएवैनंतच्छंदोभ्यःसंनिर्मिमीतेसर्वेभ्यश्छंदोभ्यःसंनिर्मितेनंषोळशिनाराध्नोतियएवंवेद ॥ ३ ॥ महानाम्नीना

नुपसर्गानुपसृजंत्ययंवैलोकःप्रथमामहानाम्न्यंतरिक्षलोकोद्वितीयासौलोकस्तृतीयासर्वेभ्योवाएषलोकेभ्यःसंनिर्मितोय
त्षोळशीतद्यन्महानाम्नीनामुपसर्गानुपसृजतिसर्वेभ्यएवैनंतल्लोकेभ्यःसंनिर्मिमीतेसर्वेभ्योलोकेभ्यःसंनिर्मितेनंषोळशि
नाराध्नोतियएवंवेदप्रप्रवस्त्रिष्टुभमिषंमर्चतप्रार्चत॥योऽयतीरफाणयदितिप्रज्ञाताअनुष्टुभःशंसतितद्यथेहचेहचापथेन
चरित्वापंथानंपर्यवेयात्ताहक्तद्यत्प्रज्ञाताअनुष्टुभःशंसतिसयोऽव्याप्तोगतश्रीरिवमन्येतविहृतंषोळशिनंशंसयेन्नेच्छंदसां
कृच्छ्रादवपद्याइत्यथयःपाप्मानमपजिघांसुःस्याद्विहृतंषोळशिनंशंसयेद्व्यतिषक्तइववैपुरुषःपाप्मनाव्यतिषक्तमेवास्मैत
त्पाप्मानंशमलमपहंत्यपपाप्मानंहतेयएवंवेदोद्यद्ब्रध्नस्यविष्टपमित्युत्तमयापरिदधातिस्वर्गोवैलोकोब्रध्नस्यविष्टपंस्वर्गमेव
तल्लोकंयजमानंगमयंत्यपाःपूर्वेषांहरिवःसुतानामितियजतिसर्वेभ्योवाएषसवनेभ्यःसंनिर्मितोयत्षोळशीतद्यदपाःपूर्वे
षांहरिवःसुतानामितियजतिपीतवद्वैप्रातःसवनंप्रातःसवनादेवैनंतत्संनिर्मिमीतेऽथोइदंसवनंकेवलंतइतिमाध्यंदिनंवै
सवनंकेवलंमाध्यंदिनादेवैनंतत्सवनात्संनिर्मिमीतेममद्धिसोमंमधुमंतमिंद्रेतिमद्वद्वैतृतीयसवनंतृतीयसवनादेवैनंतत्सं
निर्मिमीतेसत्रावृषंजठरआवृषस्वेतिवृषण्वद्वैषोळशिनोरूपंसर्वेभ्योवाएषसवनेभ्यःसंनिर्मितोयत्षोळशीतद्यदपाःपूर्वेषां
हरिवःसुतानामितियजतिसर्वेभ्यएवैनंतत्सवनेभ्यःसंनिर्मिमीतेसर्वेभ्यःसवनेभ्यःसंनिर्मितेनषोळशिनाराध्नोतियएवंवे
दंमहानाम्नीनांपंचाक्षरानुपसर्गानुपसृजंत्येकादशाक्षरेषुपादेषुसर्वेभ्योवाएषच्छंदोभ्यःसंनिर्मितोयत्षोळशीतद्यन्महाना

म्नीनांपंचाक्षरानुपसर्गानुपसृजंत्येकादशाक्षरेषुपादेषुंसर्वेभ्यऽएवैनंतच्छंदोभ्यःसंनिर्मिमीतेसर्वेभ्यइछंदोभ्यःसंनिर्मिते
नंषोळशिनाराध्नोतियएवंवेद ॥ ४ ॥ अहवैदेवाअश्रयंतरात्रीमसुरास्तेसमावद्वीर्याएवासन्नव्यावर्तंतमोब्रवीदिंद्रःकश्चा
हंचेमांनितोसुरान्रात्रीमन्ववेष्यावइतिसदेवेषुनप्रत्यविंदंदबिभयूरात्रेस्तमसोमृत्योस्तस्माद्धाप्येतर्हिनक्तंयावन्मात्रमि
वैवापक्रम्यबिभेतितमइवहिरात्रिर्मृत्युरिव ॥ तंवैछंदांस्येवान्ववायंस्तंयच्छंदांस्येवान्ववायंस्तस्मादिंद्रश्चैवच्छंदांसिच
रात्रींवहंतिननिविच्छस्यतेनपुरोरुड्नधाय्यानान्यादेवतेंद्रश्चह्येवंच्छंदांसिचरात्रींवहंतितान्वैपर्यायैरेपर्यायमनुदंतंय
त्पर्यायैःपर्यायमनुदंततत्पर्यायाणांपर्यायत्वंतान्वैप्रथमेनैवपर्यायेणपूर्वरात्रादनुदंतमध्यमेनमध्यरात्रादुत्तमेनापररात्रा
दपिशर्वर्याअनुस्मसीत्यब्रुवंस्तापिशर्वराणिखलुवाएतानिच्छंदांसीतिहस्माहैतानिहींद्रंरात्रेस्तमसोमृत्योर्बिभ्यतमत्यपार
यंस्तदपिशर्वराणामपिशर्वरत्वं ॥ ५ ॥ पांतमावोअंधसइत्यंधस्वत्यानुष्टुभारात्रींप्रतिपद्यतआनुष्टुभीवैरात्रिरेतद्रात्रिरू
पंमंधस्वत्यःपीतवत्योमद्वत्यंस्त्रिष्टुभोयाज्याभवंत्यभिरूपायद्यज्ञेभिरूपंतत्समृद्धंप्रथमेनपर्यायेणस्तुवतेप्रथमान्येवपदा
निपुनराददतेयदेवैषामश्वागावआसंस्तदेवैषांतेनाददतेमध्यमेनपर्यायेणस्तुवतेमध्यमान्येवपदानिपुनराददतेयदेवैषा
मनोरथाआसंस्तदेवैषांतेनाददतउत्तमेनपर्यायेणस्तुवतउत्तमान्येवपदानिपुनराददतेयदेवैषांवासोहिरण्यंमणिरध्यात्म
मासींत्तदेवैषांतेनाददतआद्विषतोवसुदत्तेनिरेनमेभ्यःसर्वेभ्योलोकेभ्योनुदतेयएवंवेदपवमानवदहरित्याहुर्नरात्रिःपव

मानवतींकथमुभेपवमानवतीभवतः केनतेसमावद्भाजौभवतइतियदेवेंद्रायमद्वनेसुतमिदंवसोसुतमंधइदंह्यन्वोजसासुतमितिंस्तुवंतिचशंसंतिचंतेनरात्रिःपवमानवतींतेनोभेपवमानवतीभवतस्तेनतेसमावद्भाजौभवतः पंचदशस्तोत्रमहरित्याहुर्नरात्रिःपंचदशस्तोत्रांकथमुभेपंचदशस्तोत्रेभवतः केनतेसमावद्भाजौभवतइतिद्वादशस्तोत्राण्यपिशर्वराणितिसृभिर्देवताभिःसंधिनाराथंतरेणस्तुवतेतेनरात्रिःपंचदशस्तोत्रांतेनोभेपंचदशस्तोत्रेभवतस्तेनतेसमावद्भाजौभवतः परिमितंस्तुवंत्यपरिमितमनुशंसतिपरिमितंवैभूतमपरिमितंभव्यमपरिमितस्यावरुद्ध्याइत्यतिशंसंतिस्तोत्रमतिवैप्रजात्मानमतिपशवस्तद्यत्स्तोत्रमतिशंसतियदेवास्यात्यात्मानंतदेवास्यैतेनावरुंधेवरुंधे ॥ ६ ॥ इतिप्रथमोऽध्यायः ॥ १ ॥

प्रजापतिर्वैसोमायराज्ञेदुहितरंप्रायच्छत्सूर्यांसावित्रींतस्यैसर्वेदेवावराआगच्छंस्तस्याएतत्सहस्रंवहतुमन्वाकरोद्यदेतदाश्विनमित्याचक्षतेनाश्विनंहैवतद्यदर्वाक्सहस्रंतस्मात्तत्सहस्रंवैवशंसेद्भूयोवाप्राश्यघृतंशंसेद्यथाहवाइदमनोवारथोवात्कोवर्ततएवंहैवात्कोवर्ततेशकुनिरिवोत्पतिष्यन्नाह्वयीततस्मिन्देवानसमजानतममेदमस्तुममेदमस्त्वितितेसंजानानाअब्रुवन्नाजिमस्यायामहैसयोनउज्जेष्यतितस्येदंभविष्यतीतितेग्नेरेवाधिगृहपतेरादित्यंकाष्ठामकुर्वततस्मादाग्नेयीप्रतिपद्भवत्याश्विनस्याग्निर्होतागृहपतिःसराजेतितद्धैकआहुरग्निंमन्येपितरमग्निमापिमित्येतयाप्रतिपद्येतदिविशुक्रंयजतंसूर्यस्येतिप्रथमयैवऋचाकाष्ठामाप्नोतीतितत्तन्नादृत्यंयएनंतत्रब्रूयादग्निमग्निमितिवैप्रत्यपाद्यग्निमापत्स्यतीतिशश्वत्तथा

स्यात्तस्मादग्निर्होतागृहपतिःसराजैत्येतयैवप्रतिपद्येतंगृहपतिवतीप्रजातिमतीशांतांसर्वायुःसर्वायुत्वायंसर्वमायुरेतिय
एवंवेद ॥ ७ ॥ तासांवैदेवतानांमाजिंधावंतीनामभिसृष्टानामग्निर्मुखंप्रथमःप्रत्यपद्यतंतमश्विनावन्वागच्छतांतमब्रू
तामपोदिह्यावांवाइदंजेष्यावइतिंसतथेत्यब्रवीत्तस्यवैममेहाप्यस्त्विर्तितथेतितस्माअप्यत्राकुरुतांतस्मादाग्नेयमाश्विने
शस्यतेंताउषसमन्वागच्छतांतामब्रूतामपोदिह्यावांवाइदंजेष्यावइतिंसातथेत्यब्रवीत्तस्यैवैममेहाप्यस्त्वितितथेतिंतस्या
अप्यत्राकुरुतांतस्मादुषस्यमाश्विनेशस्यतेंताविंद्रमन्वागच्छतांतमब्रूतामावांवाइदंमघवन्जेष्यावइतिंनहतंदधृषतुरपो
दिहीतिवक्तुंसतथेत्यब्रवीत्तस्यवैममेहाप्यस्त्वितितथेतिंतस्माअप्यत्राकुरुतांतस्मादैंद्रमाश्विनेशस्यतेंतदश्विनाउदजय
तामश्विनावाश्नुवातांयदश्विनाउदजयतामश्विनावाश्नुवातांतस्मादेतदाश्विनमित्याचक्षतेऽश्नुतेयद्यत्कामयतेयएवंवे
दंतदाहुर्यच्छस्यतंआग्नेयंशस्यतउषस्यंशस्यतऐंद्रंमथकस्मादेतदाश्विनमित्याचक्षतइत्यश्विनौहितदुदजयतामश्विना
वाश्नुवातांयदश्विनाउदजयतामश्विनावाश्नुवातांतस्मादेतदाश्विनमित्याचक्षतेऽश्नुतेयद्यत्कामयतेयएवंवेद॥ ८॥अश्व
तरीरथेनाग्निराजिमधावंत्तासांप्राजमानोयोनिमकूलयंत्तस्मात्तानविजायंतेंगोभिररुणैरुषाआजिमधावंत्तस्मादुषस्याग
तायामरुणमिवैवप्रभात्युषसोरूपंमश्वरथेनेंद्रआजिमधावंत्तस्मात्सउच्चैर्घोषउपब्दिमान्क्षत्रस्यरूपंमैंद्रोहिसगर्दभरथेना
श्विनाउदजयतामश्विनावाश्नुवातांयदश्विनाउदजयतामश्विनावाश्नुवातांतस्मात्सस्रुतजवोदुग्धदोहःसर्वेषामेतर्हिवा

हनानामनाशिष्ठोरेतसंस्त्वस्यवीर्यंनाहरतांतस्मात्सद्धिरेतावाजीतदाहुःसप्तसौर्याणिच्छंदांसिशंसेद्यथैवाग्नेयंयथोषस्यं
यथाश्विनंसप्तवैदेवलोकाःसर्वेषुदेवलोकेषुराध्नोतीतितत्तन्नाद्दत्यंत्रीण्येवशंसेत्त्रयोवाऽइमेत्रिवृतोलोकाऽएषामेवलोका
नामभिजित्यैतदाहुरुदुत्यंजातवेदसमितिसौर्याणिप्रतिपद्येतेतितत्तन्नाद्दत्यंयथैवगत्वाकाष्ठामपराध्नुयात्ताद्दक्तत्सूर्योनो
दिवस्पात्वित्येतेनैवप्रतिपद्येतयथैवगत्वाकाष्ठामभिपद्येतताद्दक्तदुदुत्यंजातवेदसमितिद्वितीयंशंसतिचित्रंदेवानामुद
गादनीकमितित्रैष्टुभंमसौवावचित्रंदेवानामुदेतितस्मादेतच्छंसतिनमोमित्रस्यवरुणस्यचक्षसऽइतिजागतंतद्वाशीःपद
माशिषमेवैतेनाशास्तऽआत्मनेचयजमानायच ॥ ९ ॥ तदाहुःसूर्योनातिशस्योबृहतीनातिशस्यायत्सूर्यमतिशंसेद्ब्रह्मव
र्चसमतिपद्येतयद्बृहतीमतिशंसेत्प्राणानतिपद्येतेतींद्रक्रतुंनऽआभरेत्यैंद्रंप्रगाथंशंसतिशिक्षाणोअस्मिन्पुरुहूतयामनि
जीवाज्योतिरशीमहींत्यसौवावज्योतिस्तेनसूर्यंनातिशंसतियदुबार्हतःप्रगाथस्तेनबृहतींनातिशंसत्यभित्वाशूरनोनुम
ऽइतिराथंतरींयोनिंशंसतिराथंतरेणवैसंधिनाश्विनायःस्तुवतेतद्यद्राथंतरींयोनिंशंसतिरथंतरस्यैवसयोनित्वायेशानम
स्यजगतःस्वर्दृशमित्यसौवावस्वर्दृक्तेनसूर्यंनातिशंसतियदुबार्हतःप्रगाथस्तेनबृहतींनातिशंसतिबहवःसूरचक्षसऽइतिमै
त्रावरुणंप्रगाथंशंसत्यहवैमित्रोरात्रिर्वरुणऽउभेवाऽएषोहोरात्रेऽआरभतेयोतिरात्रमुपैतितद्यन्मैत्रावरुणंप्रगाथंशंसत्य
होरात्रयोरेवैनंतत्प्रतिष्ठापयतिसूरचक्षसऽइतितेनसूर्यंनातिशंसतियदुबार्हतःप्रगाथस्तेनबृहतींनातिशंसतिमहीद्यौःपृ

॥ ५० ॥

थिवीचनस्तेहिद्यावापृथिवीविश्वशंभुवेतिंद्यावापृथिवीयेशंसतिंद्यावापृथिवीवैप्रतिष्ठेऽइयमेवेहप्रतिष्ठासावमुत्रतद्यद्द्या
वापृथिवीयेशंसतिंप्रतिष्ठयोरेवैनंतत्प्रतिष्ठापयतिंदेवोदेवीधर्मणासूर्यःशुचिरितितेनसूर्यंनातिशंसतियदुगायत्रीचजग
तीचतेद्वेबृहत्यौतेनबृहतींनातिशंसतिंविश्वस्यदेवीमृचयस्यजन्मनोंनयारोषातिनग्रभदितिंद्विपदांशंसतिंचितैधमुक्थ
मितिहस्मवाऽएतदाचक्षतेयदेतदाश्विनंनिर्ऋतिर्हस्मपाशिन्युपास्तेयदेवहोतापरिधास्यत्यथपाशान्प्रतिमोक्ष्यामीतिंत
तोवाएतांबृहस्पतिर्द्विपदामपश्यंन्नयारोषातिनग्रभदितितयानिर्ऋत्याःपाशिन्याऽअधराचःपाशानपास्यत्तद्यदेतांद्विप
दांहोताशंसतिनिर्ऋत्याऽएवतत्पाशिन्याऽअधराचःपाशानपास्यतिंस्वस्त्येवहोतोन्मुच्यतेसर्वायुःसर्वायुत्वायसर्वमायुरे
तियऽएवंवेदंमृचयस्यजन्मनऽइत्यसौवावमर्चयतीवतेनसूर्यंनातिशंसतियदुद्विपदापुरुषच्छंदसंसासर्वाणिच्छंदांस्य
भ्याप्तांतेनबृहतींनातिशंसति॥१०॥ब्राह्मणस्पत्ययापरिदधातिंब्रह्मवैबृहस्पतिर्ब्रह्मण्येवैनंतदंततःप्रतिष्ठापयत्येवापित्रे
विश्वदेवायवृष्णइत्येतयापरिदध्यात्प्रजाकामःपशुकामोबृहस्पतेसुप्रजावीरवंतइतिंप्रजयावैसुप्रजावीरवान्वयंस्यामपत
योरयीणामितिंप्रजावान्पशुमान्रयिमान्वीरवान्भवतियत्रैवंविद्वानेतयापरिदधातिंबृहस्पतेअतियदर्योअर्हादित्येतया
परिदध्यात्तेजस्कामोब्रह्मवर्चसकामोतीववान्यान्ब्रह्मवर्चसमर्हतिद्युमदितिंद्युमदिववैब्रह्मवर्चसंविभातीतिंवीववैब्रह्मव
र्चसंभातियदीदयच्छवसऋतप्रजातेतिंदीदायेववैब्रह्मवर्चसंतदस्मासुद्रविणंधेहिचित्रमितिंचित्रमिवैवब्रह्मवर्चसंब्रह्मव

र्चसीब्रह्मयशसीभवतिंयत्रैवंविद्वानेतयापरिदधातिंतस्मादेवंविद्वानेतयैवपरिदध्यांद्ब्राह्मणस्पत्यांतेनसूर्यंनातिशंसतिंय
दुत्रिष्टुभंत्रिःशंसतिंसासर्वाणिच्छंदांस्यभ्याप्तांतेनबृहतींनातिशंसतिंगायत्र्याचत्रिष्टुभाचवषट्कुर्यांद्ब्रह्मवैगायत्रीवीर्यं
त्रिष्टुंव्ब्रह्मणैवतद्वीर्यंसंदधातिंब्रह्मवर्चसीब्रह्मयशसीवीर्यवान्भवतिंयत्रैवंविद्वान्गायत्र्याचत्रिष्टुभाचवषट्करोंत्यश्विनावा
युनायुवंसुदक्षौंभापिबतमश्विनेतिंगायत्र्याचविराजाचवषट्कुर्यांद्ब्रह्मवैगायत्र्यन्नंविराड्ब्रह्मणैवतदन्नाद्यंसंदधातिंब्रह्म
वर्चसीब्रह्मयशसीभवतिंब्रह्माद्यमन्नमत्तिंयत्रैवंविद्वान्गायत्र्याचविराजाचवषट्करोतिंतस्मादेवंविद्वान्गायत्र्याचैवविरा
जाचवषट्कुर्यांत्प्रवामंधांसिमद्यान्यस्थुंरुभापिबतमश्विनेत्येताभ्यां ॥ ११॥ चतुर्विंशमेतदहरुपयंत्यारंभणीयंमेतेनवैसंव
त्सरमारभंतंएतेनस्तोमांश्चच्छंदांसिचैतेनसर्वादेवतांअनारब्धंवैतच्छंदोंऽनारब्धासादेवतांयदेतस्मिन्नहन्निनारभंतेंत
दारंभणीयस्यारंभणीयत्वंचतुर्विंशस्तोमोभवतिंतच्चतुर्विंशस्यचतुर्विंशत्वंचतुर्विंशतिर्वांअर्धमासांअर्धमासशएवतत्संव
त्सरमारभंतंउक्थ्योभवतिंपशवोवाउक्थानिंपशूनामवरुध्यैंतस्यपंचदशस्तोत्राणिभवंतिंपंचदशशस्त्राणिसमासोमास
शएवंतत्संवत्सरमारभंतेंतस्यषष्टिश्चत्रीणिचशतानिस्तोत्रियांस्तावंतिसंवत्सरस्याहांन्यहःशएवतत्संवत्सरमारभंतेंग्निष्टो
मएतदहःस्यादित्याहुंरग्निष्टोमोवैसंवत्सरोंनवाएतदन्योग्निष्टोमांदहर्दांधारनविव्याचेतिंसयद्यग्निष्टोमःस्यादंष्टाचत्वारिं
शास्त्रयःपवमानाःस्युंश्चतुर्विंशानीतराणिस्तोत्राणिंतदुषष्टिश्चैवत्रीणिचशतानिस्तोत्रियांस्तावंतिसंवत्सरस्याहांन्यहःश

॥ ५१ ॥

एवतत्संवत्सरमारभंतउक्थ्यएवस्यात्पशुसमृद्धोयज्ञः पशुसमृद्धंसत्रंसर्वाणिचतुर्विंशानिस्तोत्राणिप्रत्यक्षाद्ध्येतदहश्चतु र्विंशंतस्मादुक्थ्यएवस्यात् ॥ १२॥ बृहद्रथंतरेसामनीभवतंएतेवैयज्ञस्यनावौसंपारिण्यौयद्बृहद्रथंतरेताभ्यामेवतत्संवत्स रंतरंतिपादौवैबृहद्रथंतरेशिरएतदहः पादाभ्यामेवतच्छ्रियंशिरोभ्यायंतिपक्षौवैबृहद्रथंतरेशिरएतदहः पक्षाभ्यामेवत च्छ्रियंशिरोभ्यायुवतेतेउभेनसमवसृज्येयउभेसमवसृजेयुर्यथैवच्छिन्नानौर्वंधनात्तीरंतीरमृच्छंतीप्लवेतैवमेवतेसत्रिण स्तीरंतीरमृच्छंतःप्लवेरन्यउभेसमवसृजेयुस्तद्यदिरथंतरमवसृजेयुर्बृहतैवोभेअनवसृष्टेअथयदिबृहदवसृजेयूरथंतरेणैवो भेअनवसृष्टेयद्वैरथंतरंतद्वैरूपंयद्बृहत्तद्वैराजंयद्रथंतरंतच्छाक्वरंयद्बृहत्तद्रैवतंमेवमेतेउभेअनवसृष्टेभवतोयेवाएवंविद्वां सएतदहरुपयंत्याप्त्वावैतेहः शः संवत्सरंमाप्त्वार्धमासशआप्त्वामासशआप्त्वास्तोमांश्चच्छंदांसिचाप्त्वासर्वादेवतास्तपए वतप्यमानाः सोमपीथंभक्षयंतः संवत्सरमभिषुण्वंतआसतेयेवाअतऊर्ध्वंसंवत्सरमुपयंतिगुरुंवैतेभारमभिनिदधते संवैगु रुर्भारः शृणात्यथयएनंपरस्तात्कर्मभिराप्त्वाऽवस्तादुपैतिसवैस्वस्तिसंवत्सरस्यपारमश्नुते ॥१३॥ यद्वैचतुर्विंशंतन्महाव्रतं बृहद्दिवेनात्रहोतारेतःसिंचतितददोमहाव्रतीयेनाह्नाप्रजनयतिसंवत्सरेसंवत्सरेवैरेतःसिक्तंजायतेतस्मात्समानंबृहद्दिवो निष्केवल्यंभवत्येषहवाएनंपरस्तात्कर्मभिराप्त्वाऽवस्तादुपैतियएवंविद्वानेतदहरुपैतिस्वस्तिसंवत्सरस्यपारमश्नुतेयएवंवे

१ 'सवैगुरुः' इतिभाष्यपाठः।

दंयोवैसंवत्सरस्यावारंचपारंचवेदंसवैस्वस्तिसंवत्सरस्यपारमश्नुतेंऽतिरात्रोवाअस्यप्रायणीयोऽवारंमुदयनीयःपारंस्व
स्तिसंवत्सरस्यपारमश्नुतेयएवंवेदंयोवैसंवत्सरस्यावरोधनंचोद्रोधनंचवेदंसवैस्वस्तिसंवत्सरस्यपारमश्नुतेंऽतिरात्रोवाअ
स्यप्रायणीयोवरोधनंमुदयनीयउद्रोधनंस्वस्तिसंवत्सरस्यपारमश्नुतेयएवंवेदंयोवैसंवत्सरस्यप्राणोदानौवेदंसवैस्वस्तिसं
वत्सरस्यपारमश्नुतेंऽतिरात्रोवाअस्यप्रायणीयःप्राणंऽउदानउदयनीयंःस्वस्तिसंवत्सरस्यपारमश्नुतेंयएवंवेदयएवंवेद
॥ १४ ॥ इतिद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥ ॥

ज्योतिर्गौरायुरितिस्तोमेभिर्यंत्यंयंवैलोकोज्योतिरंतरिक्षंगौरसौलोकआयुंःसएवैषउत्तरस्त्र्यहोंज्योतिर्गौरायुरितित्री
ण्यहानिगौरायुर्ज्योतिरितित्रींण्ययंवैलोकोज्योतिरसौलोकोज्योतिस्तेएतेज्योतिषीउभयतःसंल्लोकेतेंतेनैतेनोभयतोज्यो
तिषाषळहेनयंतितद्यदेतेनोभयतोज्योतिषाषळहेनयंत्यनयोरेवतल्लोकयोंरुभयतःप्रतितिष्ठंतोयंत्यंस्मिंश्चलोकेमुष्मिंश्चो
भयोःपरिग्रहाएतद्देवचक्रंयदभिप्लवःषळहस्तस्ययावभितोग्निष्टोमौतौप्रधीयेंचत्वारोमध्यउक्थ्यास्तन्नभ्यंगच्छतिवैवर्त
मानेनयत्रकामयतेतत्स्वस्तिसंवत्सरस्यपारमश्नुतेयएवंवेदंयोवैतद्वेदयत्प्रथमःषळहःसवैस्वस्तिसंवत्सरस्यपारमश्नुतेंय
स्तद्वेदयद्द्वितीयोंयस्तद्वेदयत्तृतीयोंयस्तद्वेदयच्चतुर्थोंयस्तद्वेदयत्पंचमः ॥१५॥ प्रथमंषळहमुपयंतिषळहानिभवंतिषड्वा
ऋतवंऋतुशएवतत्संवत्सरमाप्नुवंत्यृंतुशःसंवत्सरेप्रतितिष्ठंतोयंतिद्वितीयंषळहमुपयंतिद्वादशाहानिभवंतिद्वादशवैमासा

मासश्शएवतत्संवत्सरमाप्नुवंतिमासश्शःसंवत्सरेप्रतितिष्ठंतोयंतितृतीयंषळहमुपयंत्यष्टादशाहानिभवंतितानिद्वेधानवा
न्यानिनवान्यानिनववैप्राणानवस्वर्गालोकाःप्राणांश्चैवतत्स्वर्गांश्चलोकानाप्नुवंतिप्राणेषुचैवतत्स्वर्गेषुचलोकेषुप्रतितिष्ठं
तोयंतिचतुर्थंषळहमुपयंतिचतुर्विंशतिरहानिभवंतिचतुर्विंशतिर्वाअर्धमासाअर्धमासश्शएवतत्संवत्सरमाप्नुवंत्यर्धमास
शःसंवत्सरेप्रतितिष्ठंतोयंतिपंचमंषळहमुपयंतित्रिंशदहानिभवंतित्रिंशदक्षरावैविराड्विराळन्नाद्यंविराजमेवतन्मासिमा
स्यभिसंपादयंतोयंत्यन्नाद्यकामाःखलुवैसत्रमासतेतद्यद्विराजंमासिमास्यभिसंपादयंतोयंत्यन्नाद्यमेवतन्मासिमास्यवरुं
धानायंत्यस्मैचलोकायामुष्मैचोभाभ्यां ॥१६॥ गवामयनेनयंतिगावोवाआदित्याआदित्यानामेवतदयनेनयंतिगावो
वैसत्रमासतंशफान्छृंगाणिसिषासत्यंस्तासांदशमेमासिशफाःशृंगाण्यजायंततअब्रुवन्यस्मैकामायादीक्षामह्यापामतमु
त्तिष्ठामेतितायाउदतिष्ठंस्ताएताःशृंगिण्योऽथयाःसमापयिष्यामःसंवत्सरमित्यासततासामश्रद्धयाशृंगाणिप्रावर्तंतता
एतास्तूपराऊर्जंत्वसुन्वंस्तस्मादुताःसर्वानृतून्प्राप्त्वोत्तरमुत्तिष्ठंत्यूर्जंह्यसुन्वन्तसर्वस्यवैगावःप्रेमाणंसर्वस्यचारुतांगताः
सर्वस्यप्रेमाणंसर्वस्यचारुतांगच्छतियएवंवेदादित्याश्चहवाअंगिरसश्चस्वर्गेलोकेऽस्पर्धंतवयंपूर्वएष्यामोवयमितितेहादि
त्याःपूर्वेस्वर्गंलोकंजग्मुःपश्चेवांगिरसःषष्ट्यांवावर्षेषुयथावाप्रायणीयोतिरात्रश्चतुर्विंशउकथ्यःसर्वेभिप्लवाःषळहाआक्ष्यं
त्यन्यान्यहानितदादित्यानामयनंप्रायणीयोतिरात्रश्चतुर्विंशउकथ्यःसर्वेपृष्ठ्याःषळहाआक्ष्यंत्यन्यान्यहानितदंगिरसाम

यन्नँसायथास्रुतिरंजसायन्त्येवमभिप्लवःषळहःस्वर्गस्यलोकस्यांथयथामहापथःपर्याणएवंपृष्ठ्यःषळहःस्वर्गस्यलोकस्यंतद्य
दुभाभ्यांयँत्युभाभ्यांवैयन्नरिष्यंत्युभयोःकामयोरुपाप्त्यैयश्चाभिप्लवेषळहेयश्चपृष्ठ्ये ॥ १७ ॥ एकविंशमेतदहरुपयंतिं
विषुवंतंमध्येसंवत्सरस्यैतेनवैदेवाएकविंशेनादित्यंस्वर्गायलोकायोदयच्छंन्त्सएषइतएकविंशस्तस्यदशावस्तादहानिदि
वाकीर्त्यस्यभवंतिदशपरस्तान्मध्यऽएषऽएकविंशउभयतोविराजिप्रतिष्ठितंउभयतोहिवाएषविराजिप्रतिष्ठितंस्तस्मादे
षोंतरेमाँल्लोकान्यन्नव्यथतेंतस्यवैदेवाआदित्यस्यंस्वर्गाल्लोकादवपातादबिभयुस्तंत्रिभिःस्वर्गैर्लोकैरवस्तात्प्रत्युत्तभ्नुवं
न्त्स्तोमावैत्रयःस्वर्गालोकांस्तस्यपराचोतिपातादबिभयुस्तंत्रिभिःस्वर्गैर्लोकैःपरस्तात्प्रत्यस्तभ्नुवंन्त्स्तोमावैत्रयःस्वर्गालो
कांस्तत्रयोऽवस्तात्सप्तदशाभवंतिंत्रयःपरस्तान्मध्यएषएकविंशउभयतःस्वरसामभिर्धृतंउभयतोहिवाएषःस्वरसामभि
र्धृतंस्तस्मादेषोंतरेमाँल्लोकान्यन्नव्यथतेंतस्यवैदेवाआदित्यस्यंस्वर्गाल्लोकादवपातादबिभयुस्तंपरमैःस्वर्गैर्लोकैरवस्तात्प्र
त्युत्तभ्नुवंन्त्स्तोमावैपरमाःस्वर्गालोकांस्तस्यपराचोतिपातादबिभयुस्तंपरमैःस्वर्गैर्लोकैःपरस्तात्प्रत्यस्तभ्नुवंन्त्स्तोमावैप
रमाःस्वर्गालोकांस्तत्रयोवस्तात्सप्तदशाभवंतित्रयःपरस्तांत्तेद्वौद्वौसंपद्यत्रयश्चतुस्त्रिंशाभवंतिंचतुस्त्रिंशोवैस्तोमानामुत्त
मंस्तेषुवाएषएतदध्याहितस्तपतिंतेषुहिवाएषएतदध्याहितस्तपतिंसवाएषउत्तरोस्मात्सर्वस्माद्भूताद्भविष्यतंःसर्वमेवेद
मतिरोचतेंयदिदंकिंचोत्तरोभवतिंयस्मादुत्तरोबुभूषतिंतस्मादुत्तरोभवतियएवंवेद॥१८॥स्वरसाम्नउपयंतींमेवैलोकाःस्व

रसामानंइमान्वैलोकान्त्स्वरसामभिरस्पृण्वंस्तत्स्वरसाम्नांस्वरसामत्वंतद्यत्स्वरसाम्नउपयंत्येष्वेवैनंतल्लोकेष्वाभजंतिंते षांवैदेवाःसप्तदशानांप्रव्लयादविभयुःसमाइववैस्तोमांअविगूढ्हाऽइवेमेहनप्रव्लियेरन्निति तान्त्सवैंःस्तोमैरवस्तात्पर्याषं न्त्सवैंःपृष्ठैःपरस्तात्तद्यदभिजित्सर्वस्तोमोवस्ताद्भवतिविश्वजित्सर्वपृष्ठःपरस्तात्तत्सप्तदशानुभयतःपर्यृषंतिधृत्याअप्र व्लयायंतस्यवैदेवाआदित्यस्यंस्वर्गाल्लोकादवपातादविभयुस्तंपंचभीरश्मिभिरुदवंयन्॥रश्मयोवैदिवाकीर्त्यानिमहादि वाकीर्त्यंपृष्ठंभवतिविकर्णंब्रह्मसामभासमग्निष्टोमसामोभैबृहद्रथंतरेपवमानयोर्भवतंस्तदादित्यंपंचभीरश्मिभिरुद्वयंतिं धृत्याअनवपातायोंदितआदित्येप्रातरनुवाकमनुब्रूयांत्सर्वंह्येवैतदहर्दिवाकीर्त्यंभवतिसौर्यंपशुमन्यंगश्वेतंसवनीयस्योपा लंभ्यमालभेरंन्त्सूर्यदेवत्यंह्येतदहंरेकविंशतिंसामिधेनीरनुब्रूयांत्प्रत्यक्षाद्धेतदहरेकविंशमेकपंचाशतंद्विपंचाशतंवाश स्त्वांमध्येनिविदंदधातितावतीरुत्तराःशंसातिशतायुर्वैपुरुषःशतवीर्यःशतेंद्रियंआयुष्येवैनंतद्वीर्यइंद्रियेदधाति ॥ १९ ॥ दूरोहणंरोहतिंस्वर्गोवैलोकोदूरोहणंस्वर्गमेवतल्लोकंरोहतिंयएवंवेदयदेवदूरोहणां २ ॥ असौवैदूरोहोयोसौतपतिंक श्चिद्वाअत्रगच्छतिंसयद्दूरोहणंरोहत्येतमेवतद्रोहतिंहंसवत्यारोहतिहंसःशुचिषदित्येषवैहंसःशुचिषद्वसुरंतरिक्षसदित्ये षवैवसुरंतरिक्षसद्धोतावेदिषदित्येषवैहोतावेदिषंदतिथिर्दुरोणसदित्येषवाअतिथिर्दुरोणसन्नृषदित्येषवैनृषद्वरसदित्ये

१ अत्र ' रुदवयन्‌रश्मयो ' इत्यत्रावसानाभावोभाष्ये ।

षवैवरसंह्वरंवाएतत्सद्मनांयस्मिन्नेषआसन्नस्तपंत्यृतसदित्येषवैसत्यसंद्व्योमसदित्येषवैव्योमसंद्व्योमवाएतत्सद्मनांयस्मि
न्नेषआसन्नस्तपंत्यब्जाइत्येषवाअब्जांअद्भ्योवाएषप्रातरुदेत्यपःसायंप्रविशतिंगोजाइत्येषवैगोजांऋतजाइत्येषवैसत्यजां
अद्रिजाइत्येषवाअद्रिजांऋतमित्येषवैसत्यंमेषएतानिसर्वाण्येंषाहवाअस्यच्छंदःसुप्रत्यक्षतमादिवरूपंतस्माद्यत्रक्वचदूरो
हणंरोहेंद्वंसवत्येवरोहेंत्ताक्ष्येंस्वर्गकामस्यरोहेंत्ताक्ष्योंहवाएतंपूर्वोध्वानमैंद्यत्रादोगायत्रींसुपर्णोभूत्वासोममाहरंत्तद्यथा
क्षेत्रज्ञमध्वनःपुरएतारंकुर्वीतंतादृक्तद्यदेवताक्ष्येंयंवैताक्ष्योंयोयंपवतंएषःस्वर्गस्यलोकस्याभिवोढांत्यमूषुवाजिनंदेवजू
तमित्येषवैवाजीदेवजूतंःसहावानंतरुतारंरथानामित्येषवैसहावांस्तरुतैंषहीमांल्लोकान्त्सद्यस्तरंत्यरिष्टनेमिंपृतनाजमाशु
मित्येषवाअरिष्टनेमिःपृतनाजिदाशुंःस्वस्तयइतिस्वस्तिंतामाशास्तेंताक्ष्यंमिहाहुवेमेतिंह्वयत्येवैनमेतंदिंद्रस्येवरातिमा
जोहुवानांःस्वस्तयइतिस्वस्तिंतामेवाशास्तेंनावमिवारुहेमेतिंसमेवैनमेतदधिरोहतिंस्वर्गस्यलोकस्यसमष्ट्यैसंपत्त्यैसंग
त्यांउर्वींनपृथ्वीबहुलेगभीरेंमावामेतौमापरेतौरिपामेतींमेएवैतदनुमंत्रयतंआचपराचमेष्यंन्त्सद्यश्चिद्यःशवसापंचकृष्टींः
सूर्यइवज्योतिषापस्ततानेतिंप्रत्यक्षंसूर्यमभिवदतिंसहस्रसाःशतसाअस्यरंहिंर्नस्मावरंतेयुवतिंनशर्यामित्याशिषमेवैतेना
शास्तंआत्मनेचयजमानेभ्यश्च ॥ २० ॥ आहूयदूरोहणंरोहतिंस्वर्गोवैलोकोदूरोहणंवाग्गाहावोब्रह्मवैवाक्तंयदाह्वयेतत
द्ब्रह्मणाऽऽहावेनस्वर्गंलोकंरोहतिंसपच्छःप्रथमंरोहतींमंतंलोकमाप्नोत्यथार्धर्चशोंतरिक्षंतदाप्नोत्यथत्रिपद्यमुंतल्लोकमा

मोत्यथकेवल्यातदेतस्मिन्प्रतितिष्ठतियएषतपातंत्रिपद्याप्रत्यवरोहतियथाशाखाधारयमाणस्तदमुष्मिँल्लोकेप्रतितिष्ठंत्य
र्धर्चशोंतरिक्षेपच्छोस्मिँल्लोकआत्वैवतंतस्वर्गंलोकंयजमानाअस्मिँल्लोकेप्रतितिष्ठंत्यथयएककामाःस्युःस्वर्गकामाःपरांच
मेवतेषांरोहेत्तेजयेयुर्हैवस्वर्गंलोकंनेत्वेवास्मिँल्लोकेज्योगिववसेयुर्मिथुनानिसूक्तानिशस्यंतेत्रैष्टुभानिचजागतानिचमिथु
नंवैपशवःपशवश्छंदांसिपशूनामवरुध्यै ।२१।यथावैपुरुषएवंविषुवांस्तस्ययथादक्षिणोर्धएवंपूर्वोर्धोविषुवतोयथोत्तरोर्ध
एवमुत्तरोर्धोविषुवतस्तस्मादुत्तरइत्याचक्षतेप्रबाहुक्सतःशिरएवविषुवान्[1]विदलसंहितइववैपुरुषस्तस्माद्धापिस्यूमेवंमध्येशी
र्ष्णोविज्ञायतेतदाहुर्विषुवत्येवैतदहःशंसेद्विषुवान्वाएतदुक्थानामुक्थंविषुवान्विषुवानितिहविषुवंतोभवंतिश्रेष्ठताम
श्नुवतइतितत्तन्नादृत्यंसंवत्सरएवशंसेद्रेतोवाएतत्संवत्सरंदधतोयंतियानिवैपुरासंवत्सराद्रेतांसिजायंतेयानिपंचमास्या
नियानिषण्मास्यानिस्त्रीव्यंतिवैतानिनवैतैर्भुंजतेऽथयान्येवदशमास्यानिजायंतेयानिसांवत्सरिकाणितैर्भुंजतेतस्मात्संव
त्सरएवैतदहःशंसेत्संवत्सरोह्येतदहराप्नोतिसंवत्सरंह्येतदहराप्नुवंत्येषहवैसंवत्सरेणपाप्मानमपहतएषविषुवतांगेभ्योहैव
मासैःपाप्मानमपहतेशीर्ष्णोविषुवतापसंवत्सरेणपाप्मानंहतेपविषुवतायएवंवेदवैश्वकर्मणमृषभंसवनीयस्योपालंभ्यमा
लभेरन्द्विरूपमुभयतएतंमहाव्रतीयेहनींद्रोवैवृत्रंहत्वाविश्वकर्माभवत्प्रजापतिःप्रजाःसृष्ट्वाविश्वकर्माभवत्संवत्सरोवि

---

१ ' न्विदल ' इतिभाष्यपाठः ।

श्वकर्मैंद्रमेवंतदात्मानंप्रजाःप्रतिसंवत्सरंविश्वकर्माणमाप्नुवंतींद्रएवतदात्मनिप्रजापतौसंवत्सरेविश्वकर्मण्यंततःप्रतिति
ष्ठंतिप्रतितिष्ठतियएवंवेदयएवंवेद ॥ २२ ॥ इतितृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥



प्रजापतिरकामयतंप्रजायेयभूयान्त्स्यामितिसतपोतप्यतसतपस्तप्त्वैमंद्वादशाहमपश्यंदात्मनएवांगेषुचप्राणेषुचंत
मात्मनएवांगेभ्यश्चप्राणेभ्यश्चंद्वादशधानिरमिमीतंतमाहरत्तेनायजतंततोवैसोभवदात्मनांप्रप्रजयापशुभिरजायतभव
त्यात्मनांप्रप्रजयापशुभिर्जायतेयएवंवेदंसोकामयतकथंनुगायत्र्यांसर्वतोद्वादशाहंपरिभूयंसर्वामृद्धिमृध्नुयामितितंवैते
जसैवपुरस्तात्पर्यभवंच्छंदोभिर्मध्यतोक्षरैरुपरिष्टांद्गायत्र्यासर्वतोद्वादशाहंपरिभूयंसर्वामृद्धिमाध्नौंत्सर्वामृद्धिमृध्नोति
यएवंवेदंयोवैगायत्रींपक्षिणींचक्षुष्मतींज्योतिष्मतींभास्वतींवेदंगायत्र्यापक्षिण्याचक्षुष्मत्यांज्योतिष्मत्याभास्वत्यास्व
र्गंलोकमेत्यैषावैगायत्रीपक्षिणीचक्षुष्मतींज्योतिष्मतीभास्वतीयद्वादशाहंस्तस्ययावभितोतिरात्रौतौपक्षौयावंतराग्निष्टो
मौतेचक्षुषींयेष्टौमध्यउकथ्याःसआत्मांगायत्र्यापक्षिण्याचक्षुष्मत्यांज्योतिष्मत्याभास्वत्यांस्वर्गंलोकमेतियएवंवेद।२३।
त्रयश्चवाएतेत्र्यहाआदशममहंराद्वावतिरात्रौयद्वादशाहोंद्वादशाहानिदीक्षितोभवतिंयज्ञियएवतैर्भवतिंद्वादशरात्रीरु
पसदउपैतिंशरीरमेवताभिर्धूनुतेंद्वादशाहंप्रसुतोभूत्वाशरीरंधूत्वांशुद्धःपूतोदेवताअप्येतियऽएवंवेदंषट्त्रिंशदहोत्राएष
यद्वादशाहंःषट्त्रिंशदक्षरावैबृहतींबृहत्यावाएतदयनंयद्वादशाहोंबृहत्यावैदेवाइमाँल्लोकानाश्नुवतंतेवैदशभिरेवाक्षरैरि

मंलोकमाश्नुवतंदशभिरंतरिक्षंदशभिर्दिवँचतुर्भिश्चतस्रोदिशोंद्वाभ्यामेवास्मिँल्लोकेप्रत्यतिष्ठंन्प्रतितिष्ठतियएवंवेदंतदा
हुर्यदन्यानिच्छंदांसिवर्षीयांसिभूयोक्षरतराण्यथकस्मादेतांबृहतीत्याचक्षतइंत्येतयाहिदेवाइमाँल्लोकानाश्नुवतंतेवैदश
भिरेवाक्षरैरिमंलोकमाश्नुवतंदशभिरंतरिक्षंदशभिर्दिवँचतुर्भिश्चतस्रोदिशोंद्वाभ्यामेवास्मिँल्लोकेप्रत्यतिष्ठँस्तस्मादेतांबृह
तीत्याचक्षतेंऽश्नुतेयद्यत्कामयतेयएवंवेद ॥२४॥ प्रजापतियज्ञोवाएषयद्द्वादशाहंःप्रजापतिर्वाएतेनाग्रेयजतंद्वादशाहे
नसोब्रवीदृतूंश्चमासांश्चयाजयतंमाद्वादशाहेनेतितंदीक्षयित्वांनपक्रमंगमयित्वाब्रुवंन्देहिनुनोथत्वायाजयिष्यामइ
तिंतेभ्यइषमूर्जंप्रायच्छंत्सैषोर्गृतुषुचमासेषुचंनिहितादद तंवैतेतमयाजयँस्तस्माद्ददद्याज्यंःप्रतिगृह्णंतोवैतेतमयाजयँ
स्तस्मात्प्रतिगृह्णतायाज्यंमुभयेराध्नुवंतिंयएवंविद्वांसोयजंतेचयाजयंतिचंतेवाइमऋतवश्चमासाश्चंगुरवइवामन्यंतद्वा
दशाहेंप्रतिगृह्यतेब्रुवन्प्रजापतिंयाजयनोद्वादशाहेनेतिंसतथेत्यब्रवीत्तेवैदीक्षध्वमितिंतेपूर्वपक्षाःपूर्वेदीक्षंतंतेपाप्मानम
पाहततस्मांत्तेदिवेवदिवेवह्यपहतपाप्मानौपरपक्षाअपरेदीक्षंतंतेनतरांपाप्मानमपाहतंतस्मात्तेतमइवतमइवंह्यनपहत
पाप्मानस्तंस्मादेवंविद्वान्दीक्षमाणेषुंपूर्वःपूर्वएवदिदीक्षिषेतांपपाप्मानंहतेयएवंवेदंसवाअयंप्रजापतिःसंवत्सरंऋतुषुच
मासेषुचप्रत्यतिष्ठंत्तेवाइमऋतवश्चमासाश्चंप्रजापतावेवसंवत्सरेप्रत्यतिष्ठँस्तएतेन्योन्यस्मिन्प्रतिष्ठितांएवंहवावसऋत्वि
जिप्रतितिष्ठतिंयोद्वादशाहेनयजतैंस्तस्मादाहुर्नपापःपुरुषोयाज्योद्वादशाहेनंनेदयंमयिप्रतितिष्ठादितिंज्येष्ठयज्ञोवाएष

यद्द्वादशाहंः सवैदेवानांज्येष्ठो।यएतेनाग्नेयजतंश्रेष्ठयज्ञोवाएषयद्द्वादशाहंः सवैदेवानांश्रेष्ठोयएतेनाग्नेयजतंज्येष्ठःश्रेष्ठोय
जेतकल्याणीहसमाभवतिंनपापःपुरुषोयाज्योद्द्वादशाहेनंनेदयंमयिप्रतितिष्ठादिंतींद्रायवैदेवाज्यैष्ठ्यायश्रैष्ठ्यायनाति
ष्ठंतंसोब्रवीद्बृहस्पतिंयाजयमाद्द्वादशाहेनेतिंतमयाजयत्तंतोवैतस्मैदेवाज्यैष्ठ्यायश्रैष्ठ्यायातिष्ठंतंतिष्ठंतेस्मैस्वाज्यैष्ठ्याय
श्रैष्ठ्यायंसमस्मिन्त्स्वाश्रेष्ठतायांजानतेयएवंवेदोर्ध्वोवैप्रथमस्त्र्यहस्तिर्यङ्मध्यमोर्वाङुत्तमंःसयदूर्ध्वःप्रथमस्त्र्यहंस्तस्माद
यमग्निरूर्ध्वउद्दीप्यतंऊर्ध्वाह्येतस्यदिग्यत्तिर्यङ्मध्यमंस्तस्मादयंवायुस्तिर्यङ्पवतेंतिरश्चीरापोवहंतिंतिरश्चीह्येतस्यदिग्य
दर्वाङुत्तमंस्तस्मादसाववर्वाङ्तपत्यंर्वाङ्वर्षत्यर्वांचिनक्षत्राण्यर्वाचीह्येतस्यदिंक्सम्यंचोवाइमेलोकांःसम्यंचएतेत्र्यहांः
सम्यंचोस्माइमेलोकाःश्रियैदीद्यतियएवंवेद ॥ २५ ॥ दीक्षावैदेवेभ्योपाक्रामंत्तांवासंतिकाभ्यांमासाभ्यामन्वयुंजतंतां
वासंतिकाभ्यांमासाभ्यांनोदाप्नुवंस्तांग्रैष्माभ्यांतांवार्षिकाभ्यांतांशारदाभ्यांतांहैमंतिकाभ्यांमासाभ्यामन्वयुंजतंतां
हैमंतिकाभ्यांमासाभ्यांनोदाप्नुवंस्तांशैशिराभ्यांमासाभ्यामन्वयुंजतंतांशैशिराभ्यांमासाभ्यामाप्नुवंन्नाप्नोतियमीप्स
तिंनैनंद्विषन्नाप्नोतियएवंवेदंतस्माद्यंसत्रियादीक्षोपनमेंदेतयोरेवशैशिरयोर्मासयोरागतयोर्दीक्षेतंसाक्षादेवतद्दीक्षाया



मागतायांदीक्षतेप्रत्यक्षाद्दीक्षांपरिगृह्णातिंतस्मादेतयोरेवशैशिरयोर्मासयोरागतयोर्येचैवग्राम्याःपशवोयेचारण्यांअणि

१ 'आणिमानं' इति भाष्येपाठःकृशत्वंतदर्थः।

माणंमेवतत्पुरुषिमाणंनियंतिदीक्षारूपमेवतदुपनिष्लवंतेसपुरस्ताद्दीक्षायाःप्राजापत्यंपशुमालभतेतस्यसप्तदशसामिधे
नीरनुब्रूयात्सप्तदशोवैप्रजापतिःप्रजापतेराप्त्यैतस्याप्रियोजामदग्न्योभवंतितदाहुर्यदन्येषुपशुषुयथऋष्याप्रियोभवंत्य
थकस्मादस्मिन्त्सर्वेषांजामदग्न्यएवेतिसर्वरूपावैजामदग्न्यःसर्वसमृद्धाःसर्वरूपएषपशुःसर्वसमृद्धस्तद्यज्जामदग्न्योभवं
तिसर्वरूपतायैसर्वसमृद्ध्यैतस्यवायव्यःपशुपुरोळाशोभवतितदाहुर्यदन्यदेवत्यउतपशुर्भवत्यथकस्माद्वायव्यःपशुपुरो
ळाशःक्रियतइतिप्रजापतिर्वैयज्ञोयज्ञस्यायातयामतायाइतिब्रूयाद्यद्वैवायव्यस्तेनप्रजापतेर्नैतिवायुर्ह्येवप्रजापतिस्तदु
क्तमृषिणापवमानःप्रजापतिरितिसत्रमुचेत्सन्युष्याग्नीन्यजेरन्त्सर्वेदीक्षेरन्त्सर्वेसुनुयुर्वसंतमभ्युदवस्येत्यूर्ग्वैवसंतइषमे
वतदूर्जमभ्युदवस्यति॥२६॥छंदांसिवाअन्योन्यस्यायतनमभ्यध्यायंन्गायत्रीत्रिष्टुभश्चजगत्यैचायतनमभ्यध्यायंन्त्रि
ष्टुब्गायत्र्यैचजगत्यैचजगतीगायत्र्यैचत्रिष्टुभश्चततोवाएतंप्रजापतिर्व्यूढच्छंदसंद्वादशाहमपश्यत्तमाहरत्तेनायजततं
नससर्वान्कामांश्छंदांस्यगमयत्सर्वान्कामान्गच्छतियएवंवेदच्छंदांसिव्यूहत्ययातयामतायैछंदांस्येवव्यूहतितद्यथादो
श्वैर्वानडुद्भिर्वान्यैरन्यैरश्रांततरैरश्रांततरैरुपविमोकंयात्येवमेवैतच्छंदोभिरन्यैरन्यैरश्रांततरैरश्रांततरैरुपविमोकं
स्वर्गंलोकंयंतियच्छंदांसिव्यूहतीमौवैलोकौसहास्तांतौव्यैतांनावर्षन्नसमतपत्तेपंचजनानसमजानततौदेवाःसमनयं
स्तौसंयंतावेतंदेवविवाहंव्यवहेतांरथंतरेणैवेयममूंजिन्वतिबृहतासाविमांनौधसेनैवेयममूंजिन्वतिश्यैतेनासाविमांधूमे

नैवेयममूंजिन्वतिवृष्ट्यासाविमांदेवयजनमेवेयममुष्यामदधात्पशूनसावस्यामेतद्वाइयममुष्यांदेवयजनमदधाद्यदेत
च्चंद्रमसिकृष्णमिव ॥ तस्मादापूर्यमाणपक्षेषुयजंतएतदेवोपेप्संतऊषानसावस्यांतद्धापितुरःकावषेयउवाचोषःपोषो
जनमेजयकेतितस्माद्धाप्येतर्हिगव्यंमीमांसमानाःपृच्छंतिसंतितत्रोषा३ःइति ॥ ऊषोहिपोषोसौवैलोकइमंलोकमभि
पर्यावर्ततंततोवैद्यावापृथिवीअभवतांनद्यावांतरिक्षान्नांतरिक्षाद्भूमिः ॥ २७॥ बृहच्चवाइदमग्रेरथंतरंचास्तांवाक्चवैत
न्मनश्चास्तांवाग्वैरथंतरंमनोबृहत्तद्बृहत्पूर्वंससृजानंरथंतरमत्यमन्यततद्रथंतरंगर्भमधत्ततद्वैरूपमसृजततेद्वेभूत्वारथं
तरंचवैरूपंचबृहदत्यमन्येतांतद्बृहद्गर्भमधत्ततद्वैराजमसृजततेद्वेभूत्वाबृहच्चवैराजंचरथंतरंचवैरूपंचात्यमन्येतांतद्रथं
तरंगर्भमधत्ततच्छाक्वरमसृजततानित्रीणिभूत्वारथंतरंचवैरूपंचशाक्वरंचबृहच्चवैराजंचात्यमन्यंततद्बृहद्गर्भमधत्तत
द्रैवतमसृजततानित्रीण्यन्यानित्रीण्यन्यानिषट्पृष्ठान्यासंस्तानिहतर्हित्रीणिच्छंदांसिषट्पृष्ठानिनोदाप्नुवंन्त्सागायत्री
गर्भमधत्तसानुष्टुभमसृजतत्रिष्टुब्गर्भमधत्तसापंक्तिमसृजतजगतीगर्भमधत्तसातिच्छंदसमसृजततानित्रीण्यन्यानित्री
ण्यन्यानिषट्छंदांस्यासन्षट्पृष्ठानितानितथाकल्पंतकल्पतेयज्ञोपितस्यैजनतायैकल्पतेयत्रैवमेतांछंदसांचपृष्ठानांच
क्लृप्तिंविद्वान्दीक्षतेदीक्षते ॥ २८ ॥ इतिचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥



अग्निर्वैदेवताप्रथममहर्वहतित्रिवृत्स्तोमोरथंतरंसामगायत्रीछंदोयथादेवतमेनेनंयथास्तोमंयथासामंयथाछंदसंराध्नो

तियएवंवेदंयद्वाएतिचप्रेतिचंतत्प्रथमस्याह्नोरूपंयद्युक्तवद्यद्रथवंद्यदाशुमद्यत्पिबवंद्यत्प्रथमेपदेदेवतानिरुच्यतेंयदयं
लोकोभ्युदितोंयद्राथंतरंयद्गायत्रंयत्करिष्यंदेतानिवैप्रथमस्याह्नोरूपाण्युपप्रयंतोअध्वरमितिंप्रथमस्याह्न आज्यंभवतिं
प्रेतिप्रथमेहनिप्रथमस्याह्नोरूपंवायवायाहिदर्शतेतिप्रउगमेतिंप्रथमेहनिप्रथमस्याह्नोरूपंमात्वारथंयथोतयंइदंवसोसुत
मंधइतिंमरुत्वतीयस्यप्रतिपदनुचरौरथवच्चपिबवच्चंप्रथमेहनिप्रथमस्याह्नोरूपंमिंद्रनेदीयएदिहीतींद्रनिहवःप्रगाथंःप्र
थमेपदेदेवतानिरुच्यतेंप्रथमेहनिप्रथमस्याह्नोरूपंप्रैतुब्रह्मणस्पतिरितिब्राह्मणस्पत्यंःप्रेतिप्रथमेहनिप्रथमस्याह्नोरूपंम
ग्निर्नेतात्वंसोमक्रतुभिंःपिन्वंत्यपइतिधाय्यांःप्रथमेषुपदेषुदेवतानिरुच्यंतेंप्रथमेहनिप्रथमस्याह्नोरूपंप्रवइंद्रायबृहतइ
तिंमरुत्वतीयःप्रगाथंःप्रेतिप्रथमेहनिप्रथमस्याह्नोरूपंमायात्विंद्रोवसउपनइतिसूक्तमेतिंप्रथमेहनिप्रथमस्याह्नोरूपंम
भित्वाशूरनोनुमोंभित्वापूर्वपीतयइतिंरथंतरंपृष्ठंभवतिराथंतरेहनिंप्रथमेहनिप्रथमस्याह्नोरूपंयद्वावानपुरुतमंपुराषा
ळितिधाय्यांवृत्रहेंद्रोनामान्यप्राइत्येतिंप्रथमेहनिप्रथमस्याह्नोरूपंपिबासुतस्यरसिनइतिसामप्रगाथःपिबवान्प्रथमेह
निप्रथमस्याह्नोरूपंत्यमूषुवाजिनंदेवजूतमितिताक्ष्यंपुरस्तात्सूक्तस्यशंसतिंस्वस्त्ययनंवैताक्ष्यंःस्वस्तितायैस्वस्त्ययनमे
वतत्कुरुतेंस्वस्तिसंवत्सरस्यपारमश्नुतेयएवंवेद ॥ २९ ॥ आनइंद्रोदूरादानआसादितिसूक्तमेतिप्रथमेहनिप्रथमस्या
ह्नोरूपंसंपातौभवतोंनिष्केवल्यमरुत्वतीययोनिविद्वानवामदेवोवाइमाल्लोकानपश्यंत्तान्त्संपातैःसमपतंद्यत्संपातैःस

मपतंत्तत्संपातानांसंपातत्वंतद्यत्संपातौप्रथमेहनिशंसतिस्वर्गस्यलोकस्यसमष्ट्यैसंपत्त्यैसंगत्यैतत्सवितुर्वृणीमहेऽद्या
नोदेवसवितरितिवैश्वदेवस्यप्रतिपदनुचरौराथंतरेहनिप्रथमेहनिप्रथमस्याह्नोरूपंयुंजतेमनउतयुंजतेधियइतिसावित्रंयु
क्वत्प्रथमेहनिप्रथमस्याह्नोरूपंप्रद्यावायज्ञैःपृथिवीऋतावृधेतिद्यावापृथिवीयंप्रेतिप्रथमेहनिप्रथमस्याह्नोरूपमिहेहवो
मनसाबंधुतानरइत्यार्भवंयद्वाएतिचप्रेतिचतत्प्रथमस्याह्नोरूपंतद्यत्प्रेतिसर्वमभविष्यत्प्रैष्यंन्नेवास्माल्लोकाद्यजमानाइ
तितद्यदिहेहवोमनसाबंधुतानरइत्यार्भवंप्रथमेहनिशंसत्ययंवैलोकइहेहास्मिन्नेवैनांस्तल्लोकेरमयतिदेवान्हुवेबृहच्छ्रवसः
स्वस्तयइतिवैश्वदेवंप्रथमेपदेदेवतानिरुच्यंतेप्रथमेहनिप्रथमस्याह्नोरूपंमहांतंवाएतेध्वानमेष्यंतोभवंतियेसंवत्सरंवा
द्वादशाहंवासतेतद्यद्देवान्हुवेबृहच्छ्रवसःस्वस्तयइतिवैश्वदेवंप्रथमेहनिशंसतिस्वस्तितायैस्वस्त्ययनमेवतत्कुरुतेस्वस्ति
संवत्सरस्यपारमश्नुतेयएवंवेदयेषांचैवंविद्वानेतद्धोतादेवान्हुवेबृहच्छ्रवसःस्वस्तयइतिवैश्वदेवंप्रथमेहनिशंसतिवैश्वा
नरायपृथुपाजसेविपइत्याग्निमारुतस्यप्रतिपत्प्रथमेपदेदेवतानिरुच्यतेप्रथमेहनिप्रथमस्याह्नोरूपंप्रत्वक्षसःप्रतवसोवि
रप्शिनइतिमारुतंप्रेतिप्रथमेहनिप्रथमस्याह्नोरूपंजातवेदसेसुनवामसोममितिजातवेदस्यांपुरस्तात्सूक्तस्यशंसतिस्वस्त्य
यनंवैजातवेदस्यांस्वस्तितायैस्वस्त्ययनमेवतत्कुरुतेस्वस्तिसंवत्सरस्यपारमश्नुतेयएवंवेदप्रतव्यसींनव्यसींधीतिमग्नयइ
तिजातवेदस्यंप्रेतिप्रथमेहनिप्रथमस्याह्नोरूपंसमानमाग्निमारुतंभवतियच्चाग्निष्टोमेयद्वैयज्ञेसमानंक्रियतेतत्प्रजाअनुस

मनंतितस्मात्समानमाग्निमारुतंभवति ॥ ३० ॥ इंद्रोवैदेवताद्वितीयमहर्वहतिपंचदशःस्तोमोबृहत्सामत्रिष्टुप्छंदोय
थादेवतमेनेनंयथास्तोमंयथासामंयथाछंदसंराध्नोतियएवंवेदयद्वैनेतिनप्रेतियत्स्थितंतद्द्वितीयस्याह्नोरूपंयदूर्ध्ववद्यत्प्र
तिवद्यदंतर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमेपदेदेवतानिरुच्यतेयदंतरिक्षमभ्युदितंयद्बार्हतंयत्त्रैष्टुभंयत्कुर्वदेतानिवैद्विती
यस्याह्नोरूपाण्यग्निंदूतंवृणीमहइतिद्वितीयस्याह्नआज्यंभवतिकुर्वद्द्वितीयेहनिद्वितीयस्याह्नोरूपंवायोयेतेसहस्रिणइति
प्रउगंसुतःसोमऋतावृधेतिवृधन्वद्द्वितीयेहनिद्वितीयस्याह्नोरूपंविश्वानरस्यवस्पतिमिंद्रइत्सोमपाएकइतिमरुत्वतीय
स्यप्रतिपदनुचरौवृधन्वच्चांतर्वच्चद्द्वितीयेहनिद्वितीयस्याह्नोरूपमिंद्रनेदीयएदिहीत्यच्युतःप्रगाथउत्तिष्ठब्रह्मणस्पतइ
तिब्राह्मणस्पत्यंऊर्ध्ववान्द्वितीयेहनिद्वितीयस्याह्नोरूपमग्निर्नेतात्वंसोमक्रतुभिःपिन्वंत्यपइतिधाय्याअच्युताबृहदिं
द्रायगायतेतिमरुत्वतीयःप्रगाथोयेनज्योतिरजनयन्नृतावृधइतिवृधन्वान्द्वितीयेहनिद्वितीयस्याह्नोरूपमिंद्रसोमंसोम
पतेपिबेममितिसूक्तंसजोषारुद्रैस्तृपदावृषस्वेतिवृषण्वद्द्वितीयेहनिद्वितीयस्याह्नोरूपंत्वामिद्धिहवामहेत्वंह्येहिचेरवइति
बृहत्पृष्ठंभवतिबार्हतेहनिद्वितीयेहनिद्वितीयस्याह्नोरूपंयद्वावानेतिधाय्याच्युतोभयंशृणवच्चनइतिसामप्रगाथोयच्चेदम
घयदुचह्यआसीदितिबार्हतेहनिद्वितीयेहनिद्वितीयस्याह्नोरूपंत्यमूषुवाजिनंदेवजूतमितिताक्ष्योच्युतः ॥ ३१ ॥ या
तऊतिरवमायापरमेतिसूक्तंजहिवृष्ण्यानिकृणुहीपराचइतिवृषण्वद्द्वितीयेहनिद्वितीयस्याह्नोरूपंविश्वोदेवस्यनेतुस्तत्स

वितुर्वरेण्यंमाविश्वदेवंसत्पतिमितिंवैश्वदेवस्यप्रतिपदनुचरौवार्हतेहनिंद्वितीयेहनिद्वितीयस्याह्नोरूपंमुदुष्यदेवःसवि
ताहिरण्ययेतिसावित्रंमूर्ध्ववद्वितीयेहनिद्वितीयस्याह्नोरूपंतेहिद्यावापृथिवीविश्वशंभुवेतिद्यावापृथिवीयंसुजन्मनीधि
षणेअंतरीयतइत्यंतर्वद्वितीयेहनिद्वितीयस्याह्नोरूपंतक्षन्रथंसुवृतंविद्मनापसइत्यार्भवंतक्षन्हरीइंद्रवाहावृषण्वसूइतिंवृ
षण्वद्वितीयेहनिद्वितीयस्याह्नोरूपंयज्ञस्यवोरथ्यंविश्पतिंविशामितिवैश्वदेवंवृषाकेतुर्यजतोद्यामशायतेतिंवृषण्वद्विती
येहनिद्वितीयस्याह्नोरूपंतदुशार्यातमंगिरसोवैस्वर्गायलोकायसत्रमासततेहस्मद्वितीयंद्वितीयमेवाहरागत्यमुह्यंतिता
न्वाएतच्छार्यातोमानवोद्वितीयेहनिसूक्तमशंसयंत्ततोवैतेप्रयज्ञमजानन्प्रस्वर्गंलोकंतद्यदेतत्सूक्तंद्वितीयेहनिशंसतियि
ज्ञस्यप्रज्ञात्यैस्वर्गस्यलोकस्यानुख्यात्यैपृक्षस्यवृष्णोअरुषस्यनूसहइत्याग्निमारुतस्यप्रतिपद्वृषण्वद्वितीयेहनिद्वितीय
स्याह्नोरूपंवृष्णेशर्धायसुमखायवेधसइतिमारुतंवृषण्वद्वितीयेहनिद्वितीयस्याह्नोरूपंजातवेदसेसुनवामसोममितिंजात
वेदस्याच्युतायज्ञेनवर्धतंजातवेदसमितिजातवेदस्यंवृधन्वद्वितीयेहनिद्वितीयस्याह्नोरूपमह्नोरूपं ॥ ३२ ॥ पंच
मोऽध्यायः ॥ ५ ॥ इतिचतुर्थपंचिकासमाप्ता ॥ ४ ॥ ॥ ॥ ॥ ॥



॥ इतिचतुर्थपंचिकासमाप्ता ॥

श्रीगणेशायनमः ॥ हरिःॐ॥ विश्वेवैदेवादेवतास्तृतीयमहर्वहंतिसप्तदशस्तोमोवैरूपंसामजगतीछंदोयथादेवतमेनेनं
यथास्तोमंयथासामंयथाछंदसंराध्नोतियएवंवेदंयद्वैसमानोदर्कंतत्तृतीयस्याह्नोरूपंयदश्ववद्यदंतवद्यत्पुनरावृत्तंयत्पुन
र्निनृत्तंयद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदंतरूपंयदुत्तमेपदेदेवतानिरुच्यतेयदसौलोकोऽभ्युदितोयद्वैरूपंयज्जागतंयत्कृतमेता
निवैतृतीयस्याह्नोरूपाणियुक्ष्वाहिदेवहूतमाँऽअश्वाँऽअग्नेरथीरिवेतितृतीयस्याह्नआज्यंभवतिदेवावैतृतीयेनाह्नास्वर्गं
लोकमायंस्तानसुरारक्षांस्यन्ववारयंतंतेविरूपाभवतविरूपाभवतेतिभवंतआयंस्तेयद्विरूपाभवतविरूपाभवतेतिभवंत
आयंस्तद्वैरूपंसामाभवंस्तद्वैरूपस्यवैरूपत्वंविरूपःपाप्मनाभूत्वापाप्मानमपहतेयएवंवेदंतान्हस्मान्वेवागच्छंतिसमेवसृ
ज्यंतेतानश्वाभूत्वापद्भिरपाघ्नतंयदश्वाभूत्वापद्भिरपाघ्नततदश्वानामश्वत्वमश्नुतेयद्यत्कामयतेयएवंवेदतस्मादश्वःपशू
नांजविष्ठस्तस्माद्वश्वःप्रत्यङ्पदाहिनस्त्यपपाप्मानंहतेयएवंवेदंतस्मादेतदश्ववदाज्यंभवतितृतीयेहनितृतीयस्याह्नोरूपं
वायवायाहिवीतयेवायोयाहिशिवादिवंइंद्रश्चवायवेषांसुतानांमासिन्त्रेवरुणेवयंमश्विनावेहगच्छतंमायाह्यद्रिभिःसुतंस
जूर्विश्वेभिर्देवेभिरुतनःप्रियाप्रियास्वित्यौष्णिहंप्रउगंसमानोदर्कंतृतीयेहनितृतीयस्याह्नोरूपंतंतमिद्राधसेमहेत्रयइंद्र
स्यसोमाइतिमरुत्वतीयस्यप्रतिपदनुचरौनिनृत्तवत्त्रिवत्तृतीयेहनितृतीयस्याह्नोरूपमिंद्रनेदीयएदिहीत्यच्युतःप्रगाथः
प्रनूनंब्रह्मणस्पतिरितिब्राह्मणस्पत्योनिनृत्तवास्तृतीयेहनितृतीयस्याह्नोरूपमग्निर्नेतात्वंसोमक्रतुभिःपिन्वंत्यपइतिधा

य्या अच्युतां न किः सुदासो रथं पर्यास न रीरमदिति मरुत्वतीयः प्रगाथः पर्यस्तवांस्तृतीयेहनि तृतीयस्याह्नो रूपं त्र्यर्यमा मनु
षो देवतातेति सूक्तं त्रिवत्तृतीयेहनि तृतीयस्याह्नो रूपं यद्द्यावइंद्र ते शतं यदिंद्र यावतस्त्वमिति वैरूपं पृष्ठं भवति राथंतरेहनि
तृतीयेहनि तृतीयस्याह्नो रूपं यद्वावानेति धाय्याच्युताऽभित्वा शूर नोनुम इति रथंतरस्य योनिमनु निवर्तयति राथंतरं ह्येतद
हरायतनेनेंद्र त्रिधातु शरणमिति साम प्रगाथस्त्रिवांस्तृतीयेहनि तृतीयस्याह्नो रूपं त्यमूषु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः
॥ १ ॥ यो जात एव प्रथमो मनस्वानिति सूक्तं समानोदर्कं तृतीयेहनि तृतीयस्याह्नो रूपं तदु सजनीयमेतद्वा इंद्रस्येंद्रियं यत्स
जनीयमेतस्मिन्वै शस्यमान इंद्रा मिंद्रियमाविशतीति तद्धाप्याहुश्छंदोगास्तृतीयेहनि बह्वृचा इंद्रस्येंद्रियं शंसंतीति तदु गार्त्समं
दमेतेन वै गृत्समद इंद्रस्य प्रियं धामोपागच्छंत्स परमं लोकमजयं दुपेंद्रस्य प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद तत्स
वितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेहनि तृतीयेहनि तृतीयस्याह्नो रूपं तद्देवस्य सवितुर्वा
र्यं महदिति सावित्रं मंतो वै महदंतस्तृतीयमहस्तृतीयेहनि तृतीयस्याह्नो रूपं घृतेन द्यावापृथिवी अभीवृते इति द्यावापृथिवीयं
घृतश्रिया घृतपृचा घृतावृधेति पुनरावृत्तं पुनर्निनृत्तं तृतीयेहनि तृतीयस्याह्नो रूपमनश्वो जातो अनभीशुरुक्थ्य इत्यार्भवं र
थस्त्रिचक्र इति त्रिवत्तृतीयेहनि तृतीयस्याह्नो रूपं परावतो ये दिधिषंत आप्यमिति वैश्वदेवमंतो वै परावतोंतस्तृतीयमहस्तृ
तीयेहनि तृतीयस्याह्नो रूपं तदु गायमेतेन वै गयः प्लातो विश्वेषां देवानां प्रियं धामोपागच्छंत्स परमं लोकमजयं दुप विश्वेषां देवा

नांप्रियंधामगच्छतिंजयतिपरंमलोकंयएवंवेदंवैश्वानरायधिषणामृतावृधइंत्याग्निमारुतस्यप्रतिपदंतोवैधिषणांतस्तृती
यमहंस्तृतीयेहनितृतीयस्याह्नोरूपंधारावरामरुतोधृष्णवोजसइतिमारुतंबह्वभिव्याहृत्यमंतोवैबह्वंतस्तृतीयमहंस्तृतीये
हनितृतीयस्याह्नोरूपंजातवेदसेसुनवामसोममितिंजातवेदस्याच्युतांत्वमग्नेप्रथमोअंगिराऋषिरितिंजातवेदस्यंपुरस्ता
दुदर्कंतृतीयेहनितृतीयस्याह्नोरूपंत्वंत्वमित्युत्तरंत्र्यहमभिवदतिंसंतत्यैसंततैस्त्र्यहैरव्यवच्छिन्नैर्यंतिंयएवंविद्वांसोयंति
॥ २ ॥ आप्यंतेवैस्तोमांआप्यंतेछंदांसितृतीयेहंन्येतदेवततउच्छिष्यतेंवागित्येवतदेतदक्षरंत्र्यक्षरंवागित्येकमक्षरमं
क्षरमितित्र्यक्षरंसएवैषउत्तरस्त्र्यहोंवागेकंगौरेकंद्यौरेकंततोवैवागेवचतुर्थमहर्वहतिंतद्यच्चतुर्थमहन्न्यूंखयंत्येतदेवतदक्ष
रमभ्यायच्छंत्येतद्व्यर्धयंत्येतत्प्रविभावयिषंतिंचतुर्थस्याह्नउद्यत्यांअन्नंवैन्यूंखोयदेलवा[1]अभिगेष्णाश्वरेंत्यथान्नाद्यंप्रजाय
तेंतद्यच्चतुर्थमहन्न्यूंखयंत्यन्नमेवतत्प्रजनयंत्यन्नाद्यस्यप्रजात्यैतस्माच्चतुर्थमहर्जातवद्भवतिंचतुरक्षरेणन्यूंखयेदित्याहुंश्च
तुष्पादावैपशवःपशूनामवरुध्यैत्र्यक्षरेणन्यूंखयेदित्याहुंस्त्रयोवाइमेत्रिवृतोलोकांएषामेवलोकानामभिजित्यांएकाक्षरे
णन्यूंखयेदितिहस्माहंलांगलायनोब्रह्मामौद्गल्यंएकाक्षरावैवांगेषवावसंप्रतिन्यूंखंन्यूंखयतिंयएकाक्षरेणन्यूंखयतीतिंद्व्य
क्षरेणैवन्यूंखयेत्प्रतिष्ठायाएवंद्विप्रतिष्ठोवैपुरुषश्चतुष्पादाःपशवोंयजमानमेवतद्द्विप्रतिष्ठंचतुष्पात्सुपशुषुप्रतिष्ठापयतिं



१ ‘ यदेलवा ’ इतिभाष्यपाठः । इलाशब्दोन्नवाचीतद्येषांकर्षकाणामस्तितेइलवाइतितत्रव्याख्या ।

तस्माद्व्यक्षरेणैवन्यूंखयेन्मुखतःप्रातरनुवाकेन्यूंखयतिंमुखतोवैप्रजाअन्नमदंतिंमुखतएवतदन्नाद्यस्ययजमानदधाति
मध्यतआज्येन्यूंखयतिंमध्यतोवैप्रजाअन्नंधिनोतिंमध्यतएवतदन्नाद्यस्ययजमानंदधातिंमुखतोमध्यंदिनेन्यूंखयतिंमु
खतोवैप्रजाअन्नमदंतिंमुखतएवतदन्नाद्यस्ययजमानंदधातिंतदुभयतोन्यूंखंपरिगृह्णातिंसवनाभ्यामन्नाद्यस्यपरिगृही
त्यै॥३॥ वाग्वैदेवताचतुर्थमहर्वहंत्येकविंशःस्तोमोवैराजंसामानुष्टुपूछंदोयथादेवतमेनेनंयथास्तोमंयथासामंयथाछंदसं
राध्नोतियएवंवेदंयद्वाएतिचप्रेतिचंतच्चतुर्थस्याह्नोरूपंयद्ध्येवप्रथममहंस्तदेतत्पुनर्यच्चतुर्थंयद्युक्तवद्यद्रथवंद्यदाशुमद्यत्पि
ववंद्यत्प्रथमेपदेदेवतानिरुच्यतेंयदयंलोकोभ्युदितोंयज्जातवद्यद्धववंद्यच्छुक्रवद्यद्वाचोरूपंयद्वैमदंयद्विरिफितंयद्विच्छं
दायदूनारितिक्तंयद्वैराजंयदानुष्टुभंयत्करिष्यंद्यत्प्रथमस्याह्नोरूपंमेतानिवैचतुर्थस्याह्नोरूपाण्याग्निनस्ववृक्तिभिरितिंच
तुर्थस्याह्नआज्यंभवतिवैमदंविरिफितंविरिफितस्यऋपैश्चतुर्थेहनिचतुर्थस्याह्नोरूपंमष्टचंपाक्तंपांक्तोयज्ञःपांक्ताःपशवः
पशूनामवरुध्यैताउदशजगत्योजगत्प्रातःसवनएपत्र्यहंस्तेनचतुर्थस्याह्नोरूपंताउपंचदशानुष्टुभआनुष्टुभंह्येतदहंस्तेन
चतुर्थस्याह्नोरूपंताउविंशतिर्गायत्र्यःपुनःप्रायणीयंह्येतदहंस्तेनचतुर्थस्याह्नोरूपंतदेतदस्तुतमशस्तंमयातयामसूक्तंयज्ञ
एवसाक्षात्तद्यदेतच्चतुर्थस्याह्नआज्यंभवतियज्ञादेवतद्यज्ञंतन्वतेवाचमेवतत्पुनरुपयंतिसंतत्यैसंततैस्त्र्यहैरव्यवच्छिन्नैर्यं
तियएवंविद्वांसोयंतिवायोशुक्रोअयामितेविहिहोत्राअवीतांवायोशतंहरीणामिंद्रश्चवायवेषांसोमानामाचिकितानसुक्र

तूं आनोविश्वाभिरूतिभिंस्त्यमुवोअप्रहणमंपत्यंवृजिनंरिपुंमंबितमेनदीतमइत्यानुष्टुभंप्रउगंमेतिचप्रेतिचशुक्रवच्चंचतु
र्थेहनिचतुर्थस्याह्नोरूपंतंत्वायज्ञेभिरीमहइतिंमरुत्वतीयस्यप्रतिपदीमहंइत्यभ्यायाम्यभिवैतदहंस्तेनचतुर्थस्याह्नोरूपं
मिदंवसोसुतमंधंइंद्रनेदीयएदिहिंप्रैतुब्रह्मणस्पतिरग्निर्नेतात्वंसोमक्रतुभिंःपिन्वंत्यपःप्रवइंद्रायबृहतइतिंप्रथमेनाह्नास
मानआतानंश्चतुर्थेहनिचतुर्थस्याह्नोरूपंश्रुधीहवमिंद्रमारिषण्यइतिसूक्तंहववच्चतुर्थेहनिचतुर्थस्याह्नोरूपंमरुत्वाँइंद्रवृष
भोरणायेतिसूक्तंमुग्रंसहोदामिहतंहुवेमेतिं हववच्चतुर्थेहनिचतुर्थस्याह्नोरूपंतदुत्रैष्टुभंतेनप्रतिष्ठितपदेनंसवनंदाधाराय
तनांदेवैतेननप्रच्यवतंइमंनुमायिनंहुवइतिपर्यासोहववांश्चतुर्थेहनिचतुर्थस्याह्नोरूपंताउगायत्र्योगायत्र्योवाएतस्यत्र्य
हस्यमध्यंदिनंवहंतिंतद्वैतच्छंदोवहतिंयस्मिन्निविद्धीयतेंतस्माद्गायत्रीषुनिविदंदधातिंपिबासोममिंद्रमंदतुत्वांश्रुधीहवं
विपिपानस्याद्रेरितिंवैराजंपृष्ठंभवतिबार्हतेहनिंचतुर्थेहनिचतुर्थस्याह्नोरूपंयद्वावानेतिधाय्याच्युतांत्वामिद्धिहवामहइ
तिंबृहतोयोनिमनुनिवर्तयतिबार्हतंह्येतदरायतनेनंत्वमिंद्रप्रतूर्तिष्वितिसामप्रगाथोंशस्तिहाजनितेतिजातवांश्चतुर्थेह
निचतुर्थस्याह्नोरूपंत्यमूषुवाजिनंदेवजूतमितिताक्ष्योंच्युतः ॥ ४ ॥ कुहश्रुतइद्रंःकस्मिन्नद्येतिसूक्तंवैमदंविरिफितं
विरिफितस्यऋषेश्चतुर्थेहनिचतुर्थस्याह्नोरूपंयुध्मस्यतेवृषभस्यस्वराजइतिसूक्तंमुरुंगभीरंजनुषाभ्युग्रमितिजातवच्चतुर्थे
हनिचतुर्थस्याह्नोरूपंतदुत्रैष्टुभंतेनप्रतिष्ठितपदेनंसवनंदाधारायतनांदेवैतेननप्रच्यवतेंत्यमुवःसत्रासाहमितिपर्यासों

त्रिश्वासुगोष्वायतमित्यभ्यायाम्यंमिवैतदहस्तेनचतुर्थस्याह्नोरूपंताउगायत्र्योगायत्र्योवाएतस्यत्र्यहस्यमध्यंदिनंवहं
तितद्वैतच्छंदोवहतियस्मिन्निविद्धीयतेतस्माद्गायत्रीषुनिविदंदधातिविश्वोदेवस्यनेतुस्तत्सवितुर्वरेण्यमाविश्वदेवंस
त्पतिमितिवैश्वदेवस्यप्रतिपदनुचरौत्राहंतेहनिचतुर्थेहनिचतुर्थस्याह्नोरूपंमादेवोयातुसवितासुरत्नइतिसावित्रंमेतिच
तुर्थेहनिचतुर्थस्याह्नोरूपंप्रद्यावायज्ञैःपृथिवीनमोभिरितिद्यावापृथिवीयंप्रेतिचतुर्थेहनिचतुर्थस्याह्नोरूपंप्रऋभुभ्योदूत
मिववाचमिष्यइत्यार्भवंप्रेतिचवाचमिष्यइतिचंचतुर्थेहनिचतुर्थस्याह्नोरूपंप्रशुक्रैतुदेवीमनीषेतिवैश्वदेवंप्रेतिचशुक्रव
च्चंचतुर्थेहनिचतुर्थस्याह्नोरूपंताउविच्छंदसःसंतिद्विपदाःसंतिचतुष्पदास्तेनचतुर्थस्याह्नोरूपंवैश्वानरस्यसुमतौस्यामे
त्याग्निमारुतस्यप्रतिपदितोजातइतिजातवंच्चतुर्थेहनिचतुर्थस्याह्नोरूपंकईंव्यक्तानरःसनीळाइतिमारुतंनकिर्ह्येषांजनूं
षिवेदेतिजातवंच्चतुर्थेहनिचतुर्थस्याह्नोरूपंताउविच्छंदसःसंतिद्विपदाःसंतिचतुष्पदास्तेनचतुर्थस्याह्नोरूपंजातवेदसे
सुनवामसोममितिजातवेदस्याच्युताग्निंनरोदीधितिभिररण्योरितिजातवेदस्यंहस्तच्युतीजनयंतेतिजातवंच्चतुर्थेहनि
चतुर्थस्याह्नोरूपंताउविच्छंदसःसंतिविराजःसंतित्रिष्टुभस्तेनचतुर्थस्याह्नोरूपमह्नोरूपं ॥ ५ ॥ इतिप्रथमोऽध्यायः॥ १॥

गौर्वैदेवतापंचममहर्वहतित्रिणवःस्तोमःशाक्वरंसामपंक्तिश्छंदोयथादेवतमेनेनंयथास्तोमंयथासामंयथाछंदसंराध्नो
तियएवंवेदयद्वैनेतिनप्रेतियत्स्थितंतत्पंचमस्याह्नोरूपंयद्ध्येवद्वितीयमहस्तदेतत्पुनर्यत्पंचमंयदूर्ध्ववद्यत्प्रतिवद्यदंतर्वद्

द्वृषण्वद्यद्वृधन्वद्यन्मध्यमेपदेदेवतानिरुच्यतेयदंतरिक्षमभ्युदितंयद्दुग्धवद्यदूधवद्यद्धेनुमद्यत्पृश्निमद्यन्मद्वद्यत्पशुरूपंय
दध्यासवद्विक्षुद्राइवहिपशवोयज्जागतंजागताहिपशवोयद्बार्हतंबार्हताहिपशवोयत्पांक्तंपांक्ताहिपशवोयद्वामंवामंहिप
शवोयद्धविष्मद्धविर्हिपशवोयद्वपुष्मद्वपुर्हिपशवोयच्छाक्वरंयत्पांक्तंयत्कुर्वद्यद्वितीयस्याह्नोरूपंमेतानिवैपंचमस्याह्नोरूपा
णीममूषुवोअतिथिमुषर्बुधमितिपंचमस्याह्नआज्यंभवतिजागतमध्यासवत्पशुरूपंपंचमेहनिपंचमस्याह्नोरूपंमानोयज्ञं
दिविस्पृशंमानोवायोमहेतनेरथेनपृथुपाजसावहवःसूरचक्षसंइमाउवांदिविष्टयःपिबासुतस्यरसिनोदेवंदेवंवोवसेदेवंदेवं
बृहदुगायिषेवचइतिबार्हतंप्रउगंपंचमेहनिपंचमस्याह्नोरूपंयत्पांचजन्ययाविशेतिमरुत्वतीयस्यप्रतिपत्पांचजन्ययेति
पंचमेहनिपंचमस्याह्नोरूपमिंद्रइत्सोमपाएकइंद्रनेदीयएदिह्युत्तिष्ठब्रह्मणस्पतेऽग्निर्नेतात्वंसोमक्रतुभिःपिन्वंत्यपोबृहदिं
द्रायगायतेतिद्वितीयेनाह्नासमानआतानःपंचमेहनिपंचमस्याह्नोरूपमवितासिसुन्वतोवृक्तबर्हिषइतिसूक्तंमद्वत्पांक्तंपं
चपदंपंचमेहनिपंचमस्याह्नोरूपमित्थाहिसोमइन्मदइतिसूक्तंमद्वत्पांक्तंपंचपदंपंचमेहनिपंचमस्याह्नोरूपमिंद्रपिबतुभ्यं
सुतोमदायेतिसूक्तंमद्वत्त्रैष्टुभंतेनप्रतिष्ठितपदेनसवनंदाधारायतनाद्देवैतेननप्रच्यवतेमरुत्वाँइंद्रमीढ्वइतिपर्यासोनेतिन
प्रेतिपंचमेहनिपंचमस्याह्नोरूपंताउगायत्र्योगायत्र्योवाएतस्यत्र्यहस्यमध्यंदिनंवहंतितद्वैतच्छंदोवहतियस्मिन्निविद्धी
यतेतस्माद्गायत्रीषुनिविदंदधाति ॥ ६ ॥ महानाम्नीष्वत्रस्तुवतेशाक्वरेणसाम्नाराथंतरेहनिपंचमेहनिपंचमस्याह्नोरूपं

॥ ६३ ॥

मिंद्रोवाएताभिर्महानात्मानंनिरमिमीतंतस्मान्महानाम्न्योऽथोइमेवैलोकामहानाम्न्यऽइमेमहांतंइमान्वैलोकान्प्रजाप
तिःसृष्ट्वेदंसर्वमशक्नोद्यदिदंकिंचयदिमाँल्लोकान्प्रजापतिःसृष्ट्वेदंसर्वमशक्नोद्यदिदंकिंचतच्छक्वर्योभवंस्तच्छक्वरीणांशक्व
रीत्वंताऊर्ध्वाःसीम्नोभ्यसृजतंयदूर्ध्वाःसीम्नोभ्यसृजतंतत्सिमाअभवंस्तत्सिमानांसिमात्वंस्वादोरित्थाविषूवतंउपनो
हरिभिःसुतंमिंद्रंविश्वाअवीवृधन्नित्यनुरूपोवृषण्वान्पृश्निमान्मद्वान्वृधन्वान्पंचमेहनिपंचमस्याह्नोरूपंयद्वावानेतिधा
य्याच्युतांऽभित्वाशूरनोनुमइतिरथंतरस्ययोनिमनुनिवर्तयतिराथंतरंह्येतदहरायतनेनंमोषुत्वावाघतश्चनेतिसामप्र
गाथोंऽध्यासवान्पशुरूपंपंचमेहनिपंचमस्याह्नोरूपंत्यमूषुवाजिनंदेवजूतमितिताक्ष्योच्युतः ॥ ७ ॥ प्रेदंब्रह्मवृत्रतूर्ये
ष्वाविथेतिसूक्तंपांक्तंपंचपदंपंचमेहनिपंचमस्याह्नोरूपंमिंद्रोमदायवावृधइतिसूक्तंमद्वत्पांक्तंपंचपदंपंचमेहनिपंचमस्या
ह्नोरूपंसत्रामदासस्तवविश्वजन्याइतिसूक्तंमद्वत्त्रैष्टुभंतेनप्रतिष्ठितपदेनंसवनंदाधारायतनादेवैतेननप्रच्यवतेतामिंद्रंवा
जयामसीतिपर्यासःसवृषावृषभोवदितिपशुरूपंपंचमेहनिपंचमस्याह्नोरूपंताउगायत्र्योगायत्र्योवाएतस्यत्र्यहस्यमध्यंदि
नंवहंतितद्वैतच्छंदोवहतियस्मिन्निविद्धीयतेतस्माद्गायत्रीषुनिविदंदधातितत्सवितुर्वृणीमहेऽद्यानोदेवसवितरितिवैश्व
देवस्यप्रतिपदनुचरौराथंतरेहनिपंचमेहनिपंचमस्याह्नोरूपंमुदुष्यदेवःसवितादमूनाइतिसावित्रंमादाशुषेसुवतिभूरिवा
ममितिवामंपशुरूपंपंचमेहनिपंचमस्याह्नोरूपंमहीद्यावापृथिवीइहज्येष्ठेइतिद्यावापृथिवीयंरुवद्धोक्षेतिपशुरूपंपंचमेहनि

पंचमस्याह्नोरूपंमृभुर्विभ्वावाजइंद्रोनोअच्छेत्यार्भवंवाजोवैपशवःपशुरूपंपंचमेहनिपंचमस्याह्नोरूपंस्तुषेजनंसुव्रतंनव्य
सीभिरितिवैश्वदेवंमध्यासवत्पशुरूपंपंचमेहनिपंचमस्याह्नोरूपंहविष्पांतमजरंस्वर्विदीत्याग्निमारुतस्यप्रतिपद्धविष्मत्पं
चमेहनिपंचमस्याह्नोरूपंवपुर्नुतच्चिकितुषेचिदस्त्वितिमारुतंत्रपुष्मत्पंचमेहनिपंचमस्याह्नोरूपंजातवेदसेसुनवामसोम
मितिजातवेदस्याच्युतांऽग्निर्होताग्रहपतिःसराजेतिजातवेदस्यंमध्यासवत्पशुरूपंपंचमेहनिपंचमस्याह्नोरूपं ॥ ८ ॥
देवक्षेत्रंवाएतद्यत्षष्ठमहर्देवक्षेत्रंवाएतआगच्छंतियेषष्ठमहरागच्छंतिनवैदेवाअन्योन्यस्यगृहेवसंतिनर्तुर्ऋतोर्गृहेवसती
त्याहुंस्तद्यथायथमृत्विजंऋतुयाजान्यजंत्यसंप्रदायंतद्यथर्तूनृतून्कल्पयंतियथायथंजनतास्तदाहुर्नर्तुप्रैषैःप्रेषितव्यंनर्तुप्रैषै
र्वषट्कृत्यंवाग्वाऋतुप्रैषांऽआप्यतेवैवाक्षष्ठेहनीतियद्दतुप्रैषैःप्रेष्येयुर्यद्दतुप्रैषैर्वषट्कुर्युर्वाचमेवतदाप्तांश्रांतांमृकणवहींवह
राविणीमृच्छेयुर्यद्धेभिर्नप्रेष्येयुर्यद्धेभिर्नवषट्कुर्युरच्युताद्यज्ञस्यच्यवेरन्यज्ञात्प्राणात्प्रजापतेःपशुभ्योजिह्माईयुस्तस्मा
दृग्मेभ्यएवाधिप्रेषितव्यमृग्मेभ्योधिवषट्कृत्यंतन्नवाचमाप्तांश्रांतांमृकणवहींवहराविणीमृच्छंतिनाच्युताद्यज्ञस्यच्य
वंतेनयज्ञात्प्राणात्प्रजापतेःपशुभ्योजिह्मायंति॥९॥पारुच्छेपीरुपदधतिपूर्वयोःसवनयोःपुरस्तात्प्रस्थितयाज्यानांरोहि
तंवैनामैतच्छंदोयत्पारुच्छेपमेतेनवाइंद्रःसप्तस्वर्गांल्लोकानरोहंद्रोहतिसप्तस्वर्गांल्लोकान्यएवंवेदंतदाहुर्यत्पंचपदाएवंपंच

मस्याह्नो रूपं षट्पदाः षष्ठस्याथ कस्मात्सप्तपदाः षष्ठेहन्छस्यंतइतिषड्भिरेवपदैः षष्ठमहराप्नुवंत्यपच्छिद्यैवैतदहर्यत्सप्तमं
तदेवसप्तमेनपदेनाभ्यारभ्यवसंतिवाचमेवतत्पुनरुपयंतिसंतत्यैसंततैर्ह्यहैरव्यवच्छिन्नैर्यंतियएवंविद्वांसोयंति॥१०॥
देवासुरावाएषुलोकेषुसमयतंतंतेवैदेवाः षष्ठेनैवाह्नैभ्योलोकेभ्योसुरान्प्राणुदंतंतेषांयान्यंतर्हस्तीनानिवसून्यासंस्तान्या
दायसमुद्रंप्रौप्यंतंतएतेनैवच्छंदसानुहायांतर्हस्तीनानिवसून्याददतंतद्यदेतत्पदंपुनः पदंसएवांकुशआसंजनायाद्विषतो
वसुदत्तेनिरेनंमेभ्यः सर्वेभ्योलोकेभ्योनुदतेयएवंवेद ॥ ११ ॥ द्यौर्वैदेवताषष्ठमहर्वहतित्रयस्त्रिंशस्तोमोरैवतंसामाति
च्छंदाश्छंदोयथादेवतमेनेनंयथास्तोमंयथासामंयथाछंदसंराध्नोतियएवंवेदंयद्वैसमानोदर्कंतत्षष्ठस्याह्नो रूपंयद्ध्येवतृती
यमहस्तदेतत्पुनर्यत्षष्ठंयदश्ववद्यदंतवद्यत्पुनरावृत्तंयत्पुनर्निनृत्तंयद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदंतरूपंयदुत्तमेपदेदेवतानि
रुच्यतेयदसौलोकोभ्युदितोयत्पारुच्छेपंयत्सप्तपदंयन्नाराशंसंयन्नाभानेदिष्ठंयद्रैवतंयदतिच्छंदायत्कृतंयत्तृतीयस्याह्नो
रूपंमेतानिवैषष्ठस्याह्नोरूपाण्ययंजायतमनुषोधरीमणीतिषष्ठस्याह्नआज्यंभवतिपारुच्छेपमतिच्छंदाः सप्तपदंषष्ठेहनिषष्ठ
स्याह्नोरूपंस्तीर्णंबर्हिरुपनोयाहिवीतयंआवांरथोनियुत्वान्वक्षदवसेसुषुमायातमद्रिभिर्युवांस्तोमेभिर्देवयंतोऽअश्विनाव
र्भहइंद्रवृषन्निंद्रास्तुश्रौषंळोषूणोअग्नेश्रृणुहित्वमीळितोयेदेवासोदिव्येकादशस्थयमददाद्रभसमृणच्युतमितिप्रउगंपारु

१ ‘ अपच्छिद्यैव ’ इतिभाष्यपाठः । अपच्छिद्यैवपृथक्त्वेनतस्यविच्छेदंकृत्वैवइतितदर्थः ।

च्छेपमतिच्छेदाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपं सपूर्व्यो महानामितिं मरुत्वतीयस्य प्रतिपदं तो वै महदंतः षष्ठमहः षष्ठेऽहनि षष्ठ
स्याह्नो रूपं त्रय इंद्रस्य सोमा इद्र नेदीय एदिहिं प्रनूनं ब्रह्मणस्पतिरग्निर्नेता त्वं सोम क्रतुभिः पिन्वंत्यपो न किः सुदासो रथमितिं
तृतीयेनाह्ना समान आतानः षष्ठेऽहनि षष्ठस्याह्नो रूपं यं त्वं रथमिंद्र मेधसातय इति सूक्तं पारुच्छेपमतिच्छंदाः सप्तपदं षष्ठेऽहनि ष
ष्ठस्याह्नो रूपं स यो वृषा वृष्ण्येभिः समोका इति सूक्तं समानोदर्कं षष्ठेऽहनि षष्ठस्याह्नो रूपमिंद्र मरुत्व इह पाहि सोममिति सूक्तं ते
भिः साकं पिबतु वृत्रखाद इत्यंतो वै खादोंतः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनां
देवैतेनन प्रच्यवते यं हयेनवा इदमिति पर्यासः स्वर्मरुत्वता जितमित्यंतो वै जितमंतः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपं ता उगा
यत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहंतिं तद्वै तच्छंदो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति रेवती
र्नः सधमाद इंद्रे रेवा इंद्रेवतः स्तोतेतिं रैवतं पृष्ठं भवति बार्हतेऽहनि षष्ठेऽहनि षष्ठस्याह्नो रूपं यद्वावानेति धाय्याच्युता त्वामिद्धि हवा
मह इतिं बृहतो योनिमनु निवर्तयतिं बार्हतं ह्येतदहरायतनेनैंद्र मिदेवताल य इति साम प्रगाथो निनृत्तवान्षष्ठेऽहनि षष्ठस्याह्नो
रूपं त्यमू षु वाजिनं देवजूतमिति ताक्ष्यो च्युतः ॥ १२ ॥ ऐंद्र याह्युप नः परावत इति सूक्तं पारुच्छेपमतिच्छंदाः सप्तपदं षष्ठेऽह
नि षष्ठस्याह्नो रूपं प्र घान्वस्य महतो महानीति सूक्तं समानोदर्कं षष्ठेऽहनि षष्ठस्याह्नो रूपमभूरेको रयिपते रयीणामिति सूक्तं रथ
मा तिष्ठ तुविनृम्ण भीममित्यंतो वै स्थितमंतः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायत

नांदेवैतेननप्रच्यवतंउपनोहरिभिःसुतमितिपर्यासःसमानोदर्कःषष्ठेहनिषष्ठस्याह्नोरूपंताउगायत्र्योगायत्र्योवांएतस्यत्र्य
हस्यमध्यंदिनंवहंतिंतद्वैतच्छंदोवहतिंयस्मिन्निविद्धीयतेंतस्माद्गायत्रीषुनिविदंदधात्यभित्यंदेवंसवितारमोण्योरितिंवै
श्वदेवस्यप्रतिपदतिच्छंदाःषष्ठेहनिषष्ठस्याह्नोरूपंतत्सवितुर्वरेण्यंदोषोआगादित्यनुचरोंतोवैगतमंतःषष्ठमहःषष्ठेहनिषष्ठ
स्याह्नोरूपंमुदुष्यदेवःसवितासवायेतिसावित्रंशश्वत्तमंतदपावह्निरस्थादित्यंतोवैस्थितमंतःषष्ठमहःषष्ठेहनिषष्ठस्याह्नोरू
पंकतरापूर्वाकतरापरायोरितिंद्यावापृथिवीयंसमानोदर्कंषष्ठेहनिषष्ठस्याह्नोरूपंकिमुश्रेष्ठःकिंयविष्ठोनआजगन्नुपनोवा
जाअध्वरमृभुक्षाइत्यार्भवंनाराशंसंत्रिवंतषष्ठेहनिषष्ठस्याह्नोरूपमिदमित्थारौद्रंगूर्तवचायेयज्ञेनदक्षिणयासमक्ताइतिवै
श्वदेवं ॥ १३ ॥ नाभानेदिष्ठंशंसतिंनाभानेदिष्ठंवैमानवंब्रह्मचर्यंवसन्तंभ्रातरोनिरभजंन्त्सोब्रवीदेत्याकिंमह्यमभा
क्तैत्येतमेवनिष्ठावमववदितारमित्यब्रुवंस्तस्माद्धाप्येतर्हिपितरंपुत्रानिष्ठावोववदितेत्येवाचक्षतेंसपितरमेत्याब्रवीत्त्वांह
वावमह्यंतताभाक्षुरितिंतंपिताब्रवीन्मापुत्रकतदादृथांअंगिरसोवाइमेस्वर्गायलोकायसत्रमासतेंतेषष्ठंषष्ठमेवाहरागत्य
मुह्यंतितानेतेसूक्तेषष्ठेहनिशंसयंतेषांयत्सहस्रंसत्रपरिवेषणंतत्तेस्वर्यंतोदास्यंतीतिंतथेतितानुपैत्प्रतिगृभ्णीतमानवंसुमे
धसइतिंतमब्रुवन्किंकामोवदसीतींदमेववःषष्ठमहःप्रज्ञापयानीत्यब्रवींदथयद्वएतत्सहस्रसंत्रपरिवेषणंतन्मेस्वर्यंतोदत्ते

---

१ ‘ताताभाक्षुः’ इतिभाष्येदृश्यतेतथापितत‌शब्दस्यैवतातवाचित्वात्तताभाक्षुरितिवैदिकपाठ एवसुवचः ।

तितथेतिंतानेतेसूक्तेषष्ठेहन्यशंसयंत्ततोवैतेप्रयज्ञमजानन्प्रस्वर्गंलोकंतद्यदेतेसूक्तेषष्ठेहनिशंसतियज्ञस्यप्रज्ञात्यैस्वर्गस्य
लोकस्यानुख्यात्यैतंस्वयंतोब्रुवंन्नेतत्तेब्राह्मणसहस्रमितितदेनंसमाकुर्वाणंपुरुषःकृष्णशवांस्युत्तरतउपोत्थायाब्रवीन्मम
वाइदंममवैवास्तुहमितिंसोब्रवीन्मह्यंवाइदमदुरितितमब्रवीत्तद्वैनौतवैवपितरिप्रश्नइतिंसपितरमैत्तंपिताब्रवीन्ननुतेपु
त्रकादू३रित्यदुरेवमइत्यब्रवीत्तत्तुमेपुरुषःकृष्णशवांस्युत्तरतउपोदतिष्ठन्ममवाइदंममवैवास्तुहमित्यादितेतितंपिताब्र
वीत्तस्यैवपुत्रकतंतत्तुसतुभ्यंदास्यतीतिंसपुनरेत्याब्रवीत्तवहवावकिलभगवंइदमितिमेपिताहेतिंसोब्रवीत्तदहंतुभ्यमे
वददामियएवसत्यमवादीरितितस्मादेवंविदुषासत्यमेववदितव्यंसएषसहस्रसनिर्मंत्रोयन्नाभानेदिष्ठउपैनंसहस्रंनमति
प्रपष्ठेनाह्नास्वर्गंलोकंजानातियऽएवंवेद ॥ १४ ॥ तान्येतानिसहचराणीत्याचक्षतेनाभानेदिष्ठंवालखिल्यांवृषाकपि
मेवयामरुतंतानिसहैवशंसेद्यदेषामतरियात्तद्यजमानस्यांतरियाद्यदिनाभानेदिष्ठंरेतोस्यांतरियाद्यदिवालखिल्याःप्रा
णानस्यांतरियाद्यदिवृषाकपिमात्मानमस्यांतरियाद्यद्येवयामरुतंप्रतिष्ठायाएनंच्यावयेद्दैव्यैचमानुष्यैचनाभानेदिष्ठेनै
वरेतोसिंचत्तद्वालखिल्याभिर्व्यकरोत्सुकीर्तिनाकाक्षीवतेनंयोनिंव्यहापयदुरौयथातवशर्मन्मदेमेतितस्माज्ज्यायान्तस
न्गर्भःकनीयांसंसंतंयोनिंनहिनस्तिब्रह्मणाहिसक्लृप्तएवयामरुतैतवैकरोतितेनेदंसर्वमेतवैकृतमेतियदिदंकिंचांहश्चकृष्ण
महरर्जुनंचैत्याग्निमारुतस्यप्रतिपदहश्चाहश्चेतिपुनरावृत्तंपुनर्निनृत्तंषष्ठेहनिषष्ठस्याह्नोरूपंमध्वोवोनाममारुतंयजत्राइति

॥ ६६ ॥

मारुतँवह्वभिव्याहृत्यमंतोवैवह्वंतःषष्ठमहःषष्ठेहनिषष्ठस्याह्नोरूपँजातवेदसेसुनवामसोममितिजातवेदस्याच्युतांसप्रत्न थासहसाजायमानइतिजातवेदस्यँसमानोदर्कँषष्ठेहनिषष्ठस्याह्नोरूपँधारयन्धारयन्नितिशंसतिप्रस्रंसाद्वाअंतस्यविभार्यं तद्यथापुनराग्रंथँपुनर्निग्रंथमंतंवध्नीयान्मयूखंवांततोधारणायनिहन्यात्ताद्दक्तद्यद्धारयन्धारयन्नितिशंसतिसंतत्यैसंत तैरूयहैरव्यवच्छिन्नैर्यंतियएवंविद्वांसोयंतियंति ॥ १५ ॥ इतिद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥

यद्वाएतिचप्रेतिचतत्सप्तमस्याह्नोरूपँयद्ध्येवप्रथममहस्तदेवैतत्पुनर्यत्सप्तमँयद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथ मेपदेदेवतानिरुच्यतेयदयंलोकोभ्युदितोयज्जातवद्यदनिरुक्तँयत्करिष्यद्यत्प्रथमस्याह्नोरूपमेतानिवैसप्तमस्याह्नोरूपाणि समुद्रादूर्मिर्मधुमाँउदारदितिसप्तमस्याह्नआज्यंभवत्यनिरुक्तँसप्तमेहनिसप्तमस्याह्नोरूपँवाग्वैसमुद्रोनवैवाक्क्षीयतेनस मुद्रःक्षीयतेतद्यदेतत्सप्तमस्याह्नआज्यंभवतियज्ञादेवतद्यज्ञंतन्वतेवाचमेवतत्पुनरुपयंतिसंतत्यैसंततैस्र्यहैरव्यवच्छिन्नै र्यंतियएवंविद्वांसोयँत्याप्यंतेवैस्तोमाआप्यंतेछंदांसिषष्ठेहनितद्यथैवादआज्येनावदानानिपुनःप्रत्यभिघारयंत्ययातया मतायाएवमेवैतत्स्तोमांश्चच्छंदांसिचपुनःप्रत्युपयंत्ययातयामतायैयदेतत्सप्तमस्याह्नआज्यंभवतितदुत्रैष्टुभंत्रिष्टुप्प्रातः सवनएषत्र्यहआवायोभूषशुचिपाउपनःप्रयाभिर्यासिदाश्वांसमच्छाऽनोनियुद्भिःशतिनीभिरध्वरँप्रसोताजीरोअध्वरे ष्वस्थांद्येवायवइंद्रमादनासोयावांशतंनियुतोयाःसहस्रिणःप्रयद्वांमित्रावरुणास्पूर्धन्नागोमतानासत्यारथेनानोदेवशवसा

याहिशुष्मिन्प्रवोयज्ञेषुदेवयंतोअर्चन्प्रक्षोदसाधायसासस्रएषेतिप्रउगंमेतिचप्रेतिचसप्तमेहनिसप्तमस्याह्नोरूपंतदुत्रैष्टु
भंत्रिष्टुप्प्रातःसवनऽएषत्र्यहंआत्वारथंयथोतयइदंवसोसुतमंधइंद्रनेदीयएदिहिप्रैतुब्रह्मणस्पतिरग्निर्नेतात्वंसोमक्रतु
भिःपिन्वंत्यपःप्रवइंद्रायबृहतइतिप्रथमेनाह्नासमानआतानःसप्तमेहनिसप्तमस्याह्नोरूपंकयाशुभासवयसःसनीळाइति
सूक्तंनजायमानोनशतेनजातइतिजातवत्सप्तमेहनिसप्तमस्याह्नोरूपंतदुकयाशुभीयमेतद्वैसंज्ञानंसंतनिसूक्तंयत्कयाशु
भीयमेतेनहवाइंद्रोगस्त्योमरुतस्तेसमजानततद्यत्कयाशुभीयंशंसतिसंज्ञात्याएवतद्वायुष्यंतद्योस्यप्रियःस्यात्कुर्यादेवा
स्यकयाशुभीयंतदुत्रैष्टुभंतेनप्रतिष्ठितपदेनसवनंदाधारायतनादेवैतेननप्रच्यवतेत्यंसुमेषंमहयास्वर्विदमितिसूक्तमत्यंन
वाजंहवनस्यदंरथमितिरथवत्सप्तमेहनिसप्तमस्याह्नोरूपंतदुजागतंजगत्योवाएतस्यत्र्यहस्यमध्यंदिनंवहंतितद्वैतच्छंदो
वहतियस्मिन्निविद्धीयतेतस्माज्जगतीषुनिविदंदधातिमिथुनानिसूक्तानिशस्यंतेत्रैष्टुभानिचजागतानिचमिथुनंवैपशवः
पशवश्छंदोमाःपशूनामवरुद्धैत्वामिद्धिहवामहेत्वंह्येहिचेरवइतिबृहत्पृष्ठंभवतिसप्तमेहनियदेवषष्ठस्याह्नस्तद्यद्वैरथंतरं
तद्वैरूपंयद्बृहत्तद्वैराजंयद्रथंतरंतच्छाक्वरंयद्बृहत्तद्रैवतंतद्यद्बृहत्पृष्ठंभवतिबृहतैवतद्बृहत्प्रत्युत्तभ्नुवंत्यस्तोमकृंतत्रायद्रथं
तरंस्यात्कृंतत्रंस्यात्तस्माद्बृहदेवकर्तव्यंयद्वावानेतिधाय्याच्युताऽभित्वाशूरनोनुमइतिरथंतरस्ययोनिमनुनिवर्तयतिरा
थंतरंह्येतदहरायतनेनपिबासुतस्यरसिनइतिसामप्रगाथःपिबवान्सप्तमेहनिसप्तमस्याह्नोरूपंत्यमूषुवाजिनंदेवजूतमि

तिताक्ष्योच्युतः।१६।इंद्रस्यनुवीर्याणिप्रवोचमितिसूक्तंप्रेतिसप्तमेहनिसप्तमस्याह्नोरूपंतदुत्रैष्टुभंतेनप्रतिष्ठितपदेनंसवनं
दाधारायतनांदेवैतेननप्रच्यवतेऽभित्यंमेषंपुरुहूतमृग्मियमितिसूक्तंयद्वावप्रेतितदभीतिंसप्तमेहनिसप्तमस्याह्नोरूपंतदु
जागतंजगत्योवाएतस्यत्र्यहस्यमध्यंदिनंवहंतितद्वैतच्छंदोवहतियस्मिन्निविद्धीयतेतस्माज्जगतीषुनिविदंदधातिमिथुना
निसूक्तानिशस्यंतेत्रैष्टुभानिचजागतानिचमिथुनंवैपशवःपशवश्छंदोमाःपशूनामवरुद्ध्यैतत्सवितुर्वृणीमहेऽद्यानोदेव
सवितरितिवैश्वदेवस्यप्रतिपदनुचरौराथंतरेहनिसप्तमेहनिसप्तमस्याह्नोरूपंमभित्वादेवसवितरितिसावित्रंयद्वावप्रेतित
दभीतिसप्तमेहनिसप्तमस्याह्नोरूपंप्रेतांयज्ञस्यशंभुवेतिद्यावापृथिवीयंप्रेतिसप्तमेहनिसप्तमस्याह्नोरूपंमयंदेवायजन्मन
इत्यार्भवंजातवत्सप्तमेहनिसप्तमस्याह्नोरूपंमायाहिंवनसासहेतिद्विपदाःशंसतिद्विपाद्वैपुरुषश्चतुष्पादाःपशवःपशवश्छं
दोमाःपशूनामवरुद्ध्यैतद्यद्विपदाःशंसतियजमानमेवतद्विप्रतिष्ठंचतुष्पात्सुपशुषुप्रतिष्ठापयंत्यैभिरग्नेदुवोगिरइतिवै
श्वदेवंमेतिसप्तमेहनिसप्तमस्याह्नोरूपंतान्युगायत्राणिगायत्रतृतीयसवनएषत्र्यहोवैश्वानरोअजीजनदित्याग्निमारुतस्य
प्रतिपज्जातवत्सप्तमेहनिसप्तमस्याह्नोरूपंप्रयद्वस्त्रिष्टुभमिषमितिमारुतंप्रेतिसप्तमेहनिसप्तमस्याह्नोरूपंजातवेदसेसुनवा
मसोममितिजातवेदस्याच्युतांदूतंवोविश्ववेदसमितिजातवेदस्यमनिरुक्तंसप्तमेहनिसप्तमस्याह्नोरूपंतान्युगायत्राणिगा
यत्रतृतीयसवनएषत्र्यहः।१७।यद्वैनेतिमन्नेतियात्स्यितेतदष्टमस्याह्नोरूपंयद्ध्यवद्वितीयमहस्तदेवैतत्पुनर्यदष्टमंयदूर्ध्वव

यत्प्रतिवद्यदंतर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदंतरिक्षमभ्युदितं यद्धव्यग्नियन्महद्वद्यद्धिहूतवद्यत्पुन
र्वद्यत्कुर्वद्यद्द्वितीयस्याह्नो रूपमेतानि वा अष्टमस्याह्नो रूपाण्यग्निं वो देवमग्निभिः सजोषा इत्यष्टमस्याह्न आज्यं भवति द्व्यध्य
ष्टमेहन्यष्टमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः कुविदंग नमसा ये वृधासः पीवोऽअन्नाँ रयिवृधः सुमेधा उच्छन्नु
षसः सुदिना अरिप्रा उशंता दूता न दभाय गोपा याव त्तरस्तन्वो यावदोजः प्रति वां सूर उदिते सूक्तैर्धेनुः प्रत्नस्य काम्यं दुहाना ब्र
ह्मणइंद्रोप याहि विद्वानूर्ध्वो अग्निः सुमतिं वस्वो अश्रेदुत स्या नः सरस्वती जुषाणेति प्रउगं प्रतिवदंतर्वद्धिहूतवदूर्ध्ववदष्टमेह
न्यष्टमस्याह्नो रूपं तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहो विश्वानरस्य वस्पतिमिंद्र इत्सोमपा एक ऽइंद्र नेदीय एदिहि उत्तिष्ठन्ब्र
ह्मणस्पते ऽग्निर्नेता त्वं सोम क्रतुभिः पिन्वंत्यपो बृहदिंद्राय गायतेति द्वितीयेनाह्ना समान आतानो ऽष्टमेहन्यष्टमस्याह्नो रूपं
शंसा महामिंद्रं यस्मिन्विश्वा इति सूक्तं महद्वदष्टमेहन्यष्टमस्याह्नो रूपं महश्चित्त्वमिंद्र यत एतानिति सूक्तं महद्वदष्टमेहन्यष्ट
मस्याह्नो रूपं पिबा सोममभि यमुग्र तर्द इति सूक्तमूर्वं गव्यं महि गृणान इंद्रेति महद्वदष्टमेहन्यष्टमस्याह्नो रूपं महाँ इंद्रो नृवदा च
र्षणिप्रा इति सूक्तं महद्वदष्टमेहन्यष्टमस्याह्नो रूपं तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनाद्देवै तेन न प्रच्यवते तमस्य
द्यावापृथिवी सचेतसेति सूक्तं यदैत्कृण्वानो महिमानमिंद्रियमिति महद्वदष्टमेहन्यष्टमस्याह्नो रूपं तदु जागतं जगत्यो वा एत
स्य त्र्यहस्य मध्यंदिनं वहंति तद्वै तच्छंदो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति मिथुनानि सूक्तानि शस्यंते

त्रैष्टुभानिचजागतानिचमिथुनंवैपशवःपशवश्छंदोमाःपशूनामवरुद्ध्यैमहद्वंतिसूक्तानिशस्यंतेमहद्वाअंतरिक्षंस्याद्ध्यैपं
चसूक्तानिशस्यंतेपंचपदापंक्तिःपांक्तोयज्ञःपांक्ताःपशवःपशवश्छंदोमाःपशूनामवरुद्ध्याअभित्वाशूरनोनुमोऽभित्वा
पूर्वपीतयइतिरथंतरंपृष्ठंभवत्यष्टमेहनियद्वावानेतिधाय्याच्युतांत्वामिद्धिहवामहइतिबृहतोयोनिमनुनिवर्तयतिबार्हतं
ह्येतदहरायतनेनोभयंश्रृणवच्चनइतिसामप्रगाथोयच्चेदमद्ययदुचह्यआसीदितिबार्हतेहन्यष्टमेहन्यष्टमस्याह्नोरूपंत्यमू
षुवाजिनंदेवजूतमितिताक्ष्योच्युतः ॥१८॥ अपूर्व्यापुरुतमान्यस्माइतिसूक्तंमहेवीरायतवसेतुरायेतिमहद्वदष्टमेहन्यष्ट
स्याह्नोरूपंतांसुतेकीर्तिंमघवन्महित्वेतिसूक्तंमहद्वदष्टमेहन्यष्टमस्याह्नोरूपंत्वंमहाँइंद्रयोहशुष्मैरितिसूक्तंमहद्वष्टमेहन्य
ष्टमस्याह्नोरूपंत्वंमहाँइंद्रतुभ्यंहक्षाइतिसूक्तंमहद्वदष्टमेहन्यष्टमस्याह्नोरूपंतदुत्रैष्टुभंतेनप्रतिष्ठितपदेनसवनंदाधाराय
तनाद्देवैतेननप्रच्यवतेदिवश्चिदस्यवरिमाविपप्रथइतिसूक्तमिंद्रंनमहेतिमहद्वंदष्टमेहन्यष्टमस्याह्नोरूपंतदुजागतंजग
त्योवाएतस्यत्र्यहस्यमध्यंदिनंवहंतितद्वैतच्छंदोवहतियस्मिन्निविद्धीयतेतस्माज्जगतीषुनिविदंदधातिमिथुनानिसूक्ता
निशस्यंतेत्रैष्टुभानिचजागतानिचमिथुनंवैपशवःपशवश्छंदोमाःपशूनामवरुद्ध्यैमहद्वंतिसूक्तानिशस्यंतेमहद्वाअंत
रिक्षमंतरिक्षस्याद्ध्यैपंचपंचसूक्तानिशस्यंतेपंचपदापंक्तिःपांक्तोयज्ञःपांक्ताःपशवःपशवश्छंदोमाःपशूनामवरुद्ध्यैतानि
द्वेधापंचान्यानिपंचान्यानिदशसंपद्यंतेसाद्[illegible]विराळन्नंपशवःपशवश्छंदोमाःपशूनामवरुद्ध्यैविश्वोदेव

स्यनेतुंस्तत्सवितुर्वरेण्यमाविश्वदेवंसत्पतिमितिंवैश्वदेवस्यप्रतिपदनुचरौबार्हतेहन्यष्टमेहन्यष्टमस्याह्नोरूपंहिरण्यपा
णिमूतयइतिसावित्रंमूर्ध्ववदष्टमेहन्यष्टमस्याह्नोरूपंमहीद्यौःपृथिवीचनइतिद्यावापृथिवीयंमहद्वदष्टमेहन्यष्टमस्याह्नो
रूपंयुवानापितरापुनरित्यार्भवंपुनर्वदष्टमेहन्यष्टमस्याह्नोरूपंमिमानुकंभुवनासीषधामेतिंद्विपदाःशंसतिंद्विपाद्वैपुरु
षश्चतुष्पादाःपशवःपशवश्छंदोमाःपशूनामवरुद्ध्यैतद्यद्विपदाःशंसतिंयजमानमेवतद्विप्रतिष्ठंचतुष्पात्सुपशुषुप्रतिष्ठाप
यतिंदेवानामिदवोमहदितिवैश्वदेवंमहद्वदष्टमेहन्यष्टमस्याह्नोरूपंतान्युगायत्राणिंगायत्रतृतीयसवनएषत्र्यहंऋतावानं
वैश्वानरमित्याग्निमारुतस्यप्रतिपंदग्निवैश्वानरोमहानितिंमहद्वदष्टमेहन्यष्टमस्याह्नोरूपंक्रीळंवःशर्धोमारुतमितिमारुतं
जंभेरसस्यवावृधइतिवृधन्वंदष्टमेहन्यष्टमस्याह्नोरूपंजातवेदसेसुनवामसोममितिंजातवेदस्याच्युतांग्नेमृळमहाँअसीति
जातवेदस्यंमहद्वदष्टमेहन्यष्टमस्याह्नोरूपंतान्युगायत्राणिंगायत्रतृतीयसवनएषत्र्यहः॥ १९॥इतितृतीयोऽध्यायः॥३॥

यद्वैसमानोदर्कंतन्नवमस्याह्नोरूपंयद्ध्येवतृतीयमहस्तदेवैतत्पुनर्यन्नवमंयदश्ववद्यदंतवंद्यत्पुनरावृत्तंयत्पुनर्निनृत्तंय
द्रतवद्यत्पर्यस्तवंद्यत्त्रिवद्यदंतरूपंयदुत्तमेपदेदेवतानिरुच्यतेयदसौलोकोभ्युदितौयच्छुचिवद्[illegible]सत्यवंद्यत्क्षेतिवद्यद्गतव
द्यदोकवंद्यत्कृतंयत्तृतीयस्याह्नोरूपंमेतानिवैनवमस्याह्नोरूपाण्यगन्ममहानमसायविष्ठमितिंनवमस्याह्नआज्यंभवतिंग
तवन्नवमेहनिनवमस्याह्नोरूपंतदुत्रैष्टुभंत्रिष्टुंप्रातःसवनएषत्र्यहंःप्रवीरयाशुचयोदद्रिरेतेतेसत्येनमनसादीध्यानांदिवि

क्षयंतारजसःपृथिव्यांमाविश्ववाराश्विनागतंनोयंसोमइंद्रतुभ्यंसुन्वेआतुप्रब्रह्माणोअंगिरसोनक्षंतसरस्वतींदेवयंतोहवं
तंआनोदिवोबृहतःपर्वतादासरस्वत्यभिनोनेषिवस्यइतिप्रउगंशुचिवत्सत्यवत्क्षेतिवद्गतवद्दोकवन्नवमेहनिनवमस्याह्नो
रूपंतदुत्रैष्टुभंत्रिष्टुप्प्रातःसवनएषत्र्यहस्तंतमिंद्राधसेमहेत्रयइंद्रस्यसोमाइंद्रनेदीयएदिहिप्रनूनंब्रह्मणस्पतिरग्निर्नेतात्वं
सोमक्रतुभिःपिन्वंत्यपोनकिःसुदासोरथमितितृतीयेनाह्नासमानआतानोनवमेहनिनवमस्याह्नोरूपमिंद्रःस्वाहापिबतुय
स्यसोमइतिसूक्तमंतोवैस्वाहाकारोंतोनवममहर्नवमेहनिनवमस्याह्नोरूपंगायत्साममनभन्यंयथावेरितिसूक्तमर्चामतद्वा
वृधानंस्वर्वदित्यंतोवैस्वरंतोनवममहर्नवमेहनिनवमस्याह्नोरूपंतिष्ठाहरीरथआयुज्यमानेतिसूक्तमंतोवैस्थितमंतोनवम
महर्नवमेहनिनवमस्याह्नोरूपमिमाउत्वापुरुतमस्यकारोरितिसूक्तंधियोरथेष्ठामित्यंतोवैस्थितमंतोनवममहर्नवमेहनि
नवमस्याह्नोरूपंतदुत्रैष्टुभंतेनप्रतिष्ठितपदेनसवनंदाधारायतनादेवैतेननप्रच्यवतेप्रमंदिनेपितुमदर्चतावचइतिसूक्तंस
मानोदर्कंनवमेहनिनवमस्याह्नोरूपंतदुजागतंजगत्योवाएतस्यत्र्यहस्यमध्यंदिनंवहंतितद्धैतच्छंदोवहतियस्मिन्निविद्धी
यतेतस्माज्जगतीषुनिविदंदधातिमिथुनानिसूक्तानिशस्यंतेत्रैष्टुभानिचजागतानिचमिथुनंवैपशवःपशवश्छंदोमाःपशूना
मवरुद्ध्यैपंचसूक्तानिशस्यंतेपंचपदापंक्तिःपांक्तोयज्ञःपांक्ताःवशवःपशवश्छंदोमाःपशूनामवरुद्ध्यैत्वामिद्धिहवामहेत्वं
ह्येहिचेरवइतिबृहत्पृष्ठंभवतिनवमेहानियद्वावानेतिधाय्याच्युताअभित्वाशूरनोनुमइतिरथंतरस्ययोनिमनुनिवर्तयति

राथंतरंह्येतदहरायतनेनैंद्रत्रिधातुशरणमितिसामप्रगाथंस्त्रियान्नवमेहनिनवमस्याह्नोरूपंत्यमूषुवाजिनंदेवजूतमितिता
क्ष्योंच्युतः॥२०॥संचत्वेजग्मुर्गिरइंद्रपूर्वीरितिसूक्तंगतवन्नवमेहनिनवमस्याह्नोरूपंकदाभुवन्रथक्षयाणिब्रह्मेतिसूक्तंक्षेति
वदंतरूपंक्षेतीववाअंतंगत्वानवमेहनिनवमस्याह्नोरूपंमासत्योयातुमघवांऋजीषीतिसूक्तंसत्यवन्नवमेहनिनवमस्याह्नोरू
पंतत्तइंद्रियंपरमंपराचैरितिसूक्तंमंतोवैपरमंतोनवममहर्नवमेहनिनवमस्याह्नोरूपंतदुत्रैष्टुभंतेनप्रतिष्ठितपदेनंसवनंदा
धारायतनांदेवैतेननप्रच्यवतेऽहंभुवंवसुनःपूर्व्यस्पतिरितिसूक्तमहंधनानिसंजयामिशश्वतइत्यंतोवैजितमंतोनवममह
र्नवमेहनिनवमस्याह्नोरूपंतदुजागतंजगत्योवाएतस्यत्र्यहस्यमध्यंदिनंवहंतितद्वैतच्छंदोवहतियस्मिन्निविद्धीयतेतस्मा
ज्जगतीषुनिविदंदधातिमिथुनानिसूक्तानिशस्यंतेत्रैष्टुभानिचजागतानिचमिथुनंवैपशवःपशवश्छंदोमाःपशूनामवरुद्ध्यै
पंचपंचसूक्तानिशस्यंतेपंचपदापंक्तिःपांक्तोयज्ञःपांक्ताःपशवःपशवश्छंदोमाःपशूनामवरुद्ध्यैतानिद्वेधापंचान्यानिपंचा
न्यानिदशसंपद्यंतेसादशिनीविराळन्नंविराळन्नंपशवःपशवच्छंदोमाःपशूनावरुद्ध्यैतत्सवितुर्वृणीमहेऽद्यानोदेवसवित
रितिवैश्वदेवस्यप्रतिपदनुचरौराथंतरेहनिनवमेहनिनवमस्याह्नोरूपंदोषोआगादितिसावित्रंमंतोवैगतमंतोनवममहर्न
वमेहनिनवमस्याह्नोरूपंप्रवांमहिद्यवीअभीतिद्यावापृथिवीयंशुचीउपप्रशस्तयइतिशुचिवन्नवमेहनिनवमस्याह्नोरूपंभिं
द्रइषेददातुनस्तेनोरत्नानिधत्तनेत्यार्भवंत्रिरासाप्तानिसुन्वतइतित्रिवन्नवमेहनिनवमस्याह्नोरूपंबभ्रुरेकोविषुणःसूनरो

॥ ७० ॥

युवेतिद्विपदाःशंसतिद्विपाद्वैपुरुषश्चतुष्पादाःपशवःपशवश्छंदो माःपशूनामवरुद्ध्यैतद्यद्विपदाःशंसतियजमानमेवतद्वि
प्रतिष्ठंचतुष्पात्सुपशुषुप्रतिष्ठापयतियेत्रिंशतित्रयस्परइतिवैश्वदेवंत्रिवन्नवमेहनिनवमस्याह्नोरूपंतान्युगायत्राणिगायत्र
तृतीयसवनएषत्र्यहोवैश्वानरोनऊतयइत्याग्निमारुतस्यप्रतिपदाप्रयातुपरावतइत्यंतोवैपरावतोंतोनवममहर्नवमेहनिन
वमस्याह्नोरूपंमरुतोयस्यहिक्षयइतिमारुतंक्षेतिवदंतरूपंक्षेतीववाअंतंगत्वानवमेहनिनवमस्याह्नोरूपंजातवेदसेसुनवा
मसोममितिजातवेदस्याच्युताप्राग्नयेवाचमीरयेतिजातवेदस्यंसमानोदर्कंनवमेहनि नवमस्याह्नोरूपंसनःपर्षदतिद्विषः
सनःपर्षदतिद्विषइतिशंसतिवहुवाएतस्मिन्नवरात्रेकिंचकिंचवारणंक्रियतेशांत्याएवतद्यत्सनःपर्षदतिद्विषःसनःपर्षद
द्विषइतिशंसतिसर्वस्मादेवैनांस्तदेनसःप्रमुंचतितान्युगायत्राणिगायत्रतृतीयसवनएषत्र्यहः ॥२१॥ पृष्ठ्यंषळहमुपयंति
यथावैमुखमेवंपृष्ठ्यःषळहस्तद्यथांतरंमुखस्यंजिह्वातालुदंताएवंछंदोमाअथयेनैववाचंव्याकरोतियेनस्वादुचास्वादुचवि
जानातितद्दशममहर्यथावैनासिकेएवंपृष्ठ्यःषळहस्तद्यथांतरंनासिकयोरेवंछंदोमाअथयेनैवगंधान्विजानातितद्दशमम
हर्यथावाअक्ष्येवंपृष्ठ्यःषळहस्तद्यथांतरमक्ष्णःकृष्णमेवंछंदोमाअथयैवकनीनिकायेनपश्यतितद्दशममहर्यथावैकर्णएवंपृ
ष्ठ्यःषळहस्तद्यथांतरंकर्णस्यैवंछंदोमाअथयेनैवश्रृणोतितद्दशममहःश्रीर्वैदशममहःश्रियंवाएतआगच्छंतियेदशममहरा
गच्छंतितस्माद्दशममहर विवाक्यंभवतिमाश्रियोववादिष्मेतिदुरववदंहिश्रेयसस्तेततःसर्पंतितेमार्जयंतेतेपत्नीशालां

संप्रपद्यंतेंतेषांयएतामाहुतिंविद्वांत्सब्रूयात्समन्वारभध्वमितिंसजुहुयादिहरमेहरमध्वमिहधृतिरिहस्वधृतिंरग्नेवाट्स्वा
हावाळितिंसयदिहरमेत्याहांस्मिन्नेवैनांस्तल्लोकेरमयतींहरमध्वमितियदाहंप्रजामेवैषुतद्रमयतींहधृतिरिहस्वधृतिरिति
यदाहंप्रजांचैवतद्वाचंचयजमानेषुदधांत्यग्नेवाळितिरथंतरंस्वाहावाळितिबृहंद्देवानांवाएतन्मिथुनंयद्बृहद्रथंतरेंदेवाना
मेवतन्मिथुनेनमिथुनमवरुंधतेंदेवानांमिथुनेनमिथुनंप्रजायंतेंप्रजात्यैप्रजायतेंप्रजयापशुभिर्यएवंवेदं तेततःसर्पंतितेमा
र्जयंतेंतआग्नीध्रंसंप्रपद्यंतेंतेषांयएतामाहुतिंविद्वांत्सब्रूयात्समन्वारभध्वमितिसजुहुयांदुपसृजंधरुणंमातरंधरुणोधयन्
रायस्पोषमिषमूर्जमस्मासुदीधरत्स्वाहेतिंरायस्पोषमिषमूर्जमवरुंधंआत्मनेचयजमानेभ्यश्चयंत्रैवंविद्वानेतामाहुतिंजुहो
ति ॥ २२॥ तेततःसर्पंतितेसदःसंप्रपद्यंतेंयथायथमन्यऋत्विजोव्युत्सर्पंतिंसंसर्पत्युद्गातारस्तेसर्पराज्ञाऋक्षुस्तुवतेंइयंवै
सर्पराज्ञीयंहिसर्पतोराज्ञींयंवाअलोमिकेवाग्रआसींत्सैतंमंत्रमपश्यंदायंगौःपृश्निरक्रमीदितिंतामयंपृश्निर्वर्णआविशंन्ना
नारूपोयंयंकाममकामयतंयदिदंकिंचौषधयोवनस्पतयंःसर्वाणिरूपाणिंपृश्निरेनंवर्णआविशतिंनानारूपोथंयंकामंकाम
यतेयएवंवेदंमनसाप्रस्तौतिमनसोद्गायतिंमनसाप्रतिहरतिवाचाशंसतिंवाक्चवैमनश्चदेवानांमिथुनंदेवानामेवतन्मिथु
नेनमिथुनमवरुंधतेंदेवानांमिथुनेनमिथुनंप्रजायंतेंप्रजात्यैप्रजायतेंप्रजयापशुभिर्यएवंवेदांथचतुर्होतॄन्होताव्याचष्टेंत
देवतत्स्तुतमनुशंसतिंदेवानांवाएतद्यज्ञियंगुह्यंनामयच्चतुर्होतारस्तद्यच्चतुर्होतॄन्होताव्याचष्टेंदेवानामेवतद्यज्ञियंगुह्यंना

मप्रकाशंगमयतिंतदेनंप्रकाशंगतंप्रकाशंगमयतिंगच्छतिप्रकाशंयएवंवेदंयंब्राह्मणमनूचानंयशोनच्छेंदितिहस्माहारण्यं
परेत्यदर्भस्तंबानुद्ग्रथ्यंदक्षिणतोब्रह्माणमुपवेश्यंचतुर्होतॄन्व्याचक्षीतंदेवानांवाएतद्यज्ञियंगुह्यंनामंयच्चतुर्होतारस्तद्यच्च
तुर्होतॄन्व्याचक्षीतंदेवानामेवतद्यज्ञियंगुह्यंनामप्रकाशंगमयतितदेनंप्रकाशंगतंप्रकाशंगमयतिंगच्छतिप्रकाशंयएवंवेद

॥ २३ ॥ अथौदुंबरींसमन्वारभंतंइषमूर्जमन्वारभइंत्यूर्ग्वाअन्नाद्यमुदुंबरोंयद्वैतद्देवाइषमूर्जंव्यभजंतंततउदुंबरःसम
भवंत्तस्मात्सत्रिःसंवत्सरस्यपच्यतेंतद्यदौदुंबरींसमन्वारभंतंइषमेवतदूर्जमन्नाद्यंसमन्वारभंतेंवाचंयच्छंतिवाग्वैयज्ञोंय
ज्ञमेवतद्यच्छंत्यहर्नियच्छंत्यहर्वैस्वर्गोंलोकंःस्वर्गमेवतल्लोकंनियच्छंतिंनदिवावाचंविसृजेरंन्यद्दिवावाचंविसृजेरन्नहर्भ्रा
तृव्यायपरिशिंष्युर्नंनक्तंवाचंविसृजेरंन्यन्नक्तंवाचंविसृजेरंन्रात्रींभ्रातृव्यायपरिशिंष्युःसमयाविषितःसूर्यःस्यादथवाचं
विसृजेरंस्तावंतमेवतद्द्विषतेलोकंपरिशिंषंत्यथोखल्वस्तमितएववाचंविसृजेरंस्तमोभाजमेवतद्द्विषंतंभ्रातृव्यंकुर्वंत्याहव
नीयंपरीत्यवाचंविसृजेरंन्यज्ञोवाआवहनीयंःस्वर्गोलोकआहवनीयोंयज्ञेनैवतत्स्वर्गेणलोकेनंस्वर्गंल्लोकंयंतियदिहोनम
कर्मंयदत्यरीरिचाम॥ प्रजापतिंततपितरमप्यैत्वितिवाचंविसृजंतेंप्रजापतिंवैप्रजाअनुप्रजायंतेंप्रजापतिरूनातिरिक्तयोः



प्रतिष्ठांनैनानूनंनातिरिक्तंहिन स्तिंप्रजापतिमेवोनातिरिक्तान्यभ्यत्यजंतियएवंविद्वांसएतेनवाचंविसृजंतेंतस्मादेवंवि

द्वांसएतेनैववाचंविसृजेरन् ॥२४॥ अध्वर्यो॑इत्याह्वयतै॑चतुर्हो॑तृषुव॑दिष्यमाणं॑स्तदाहावस्य॑रूपं॑मों॑होतस्तथाहोतरि॑त्यध्व र्युः॑प्रतिगृणात्यवसितेवसितैं॑दशसुपदेषुतेषां॑चित्तिःस्रुगासी३त् ॥ चित्तमाज्यमासी३त् ॥ वाग्वेदिरासी३त् ॥ आधी तंव॑र्हि॑रासी३त् ॥ केतोऽअग्निरासीत् ॥ विज्ञातमग्नीदासी३त् ॥ प्राणोहविरासीत् ॥ सामाध्व॑र्युरासी३त् ॥ वाच स्पतिर्हो॑तासी३त् ॥ मनउपवक्तासी३त् ॥ तेवाएतंग्रहणमगृह्णत ॥ वाचस्पतेविधेनामन् ॥ विधेमतं॑नाम ॥ विधेस्त्व मस्माकं॑नाम्नाद्यांगच्छ ॥ यांदेवाःप्रजापतिगृहपतयं॑ऋद्धिमराध्नुवं॑स्तामृद्धिं॑रात्स्यामोऽथप्रजापतेस्तनूरनुद्रवतिब्रह्मोद्यं चान्नादाचान्नपत्नीचा॑न्नादातदग्निरन्नपत्नीतदादित्यो॑भद्राचकल्याणीच॑भद्रातत्सोमःकल्याणीतत्पशवो॑निलयाचापभ याचानिलया॑तद्वायुर्न॑ह्येषकदाचनेलयं॑त्यपभयातन्मृत्युःसर्वं॑ह्येतस्माद्बीभाया॑नाप्ताचानाप्याचा॑नाप्तातत्पृथिव्यनाप्या तद्द्यौ॑रनाधृष्याचाप्रतिधृष्याचा॑नाधृष्यातदग्नि॑रप्रतिधृष्यातदादित्योपूर्वा॑चाभ्रातृव्याचा॑पूर्वा॑तन्मनोभ्रातृव्यातत्संव त्सरं॑एतावावद्वादशप्रजापतेस्तन्वं॑एषकृत्स्नःप्रजापति॑स्तत्कृत्स्नंप्रजापतिमाप्नोतिदशममहं॑रथब्रह्मोद्यंवदं॑त्यग्निर्गृहपति रितिहैकआहुःसोस्यलोकस्यगृहपति॑र्वा॑युर्गृहपतिरितिहैकआहुःसों॑तरिक्षलोकस्यगृहपति॑रसौ॑वैगृहपतिर्यो॑सौतपं॑त्येषप तिर्ऋतवोगृहाः ॥ येषांवैगृहपतिंदेवंविद्वान्गृहपतिर्भ॑वति॑राध्नोतिसगृहपती॑राध्नुवंतितेयजमानाः ॥ येषांवाअपहतपा

१ ‘ अध्वर्यवित्याह्वयते ’ इतिससंधिपाठोभाष्ये ।

प्मानंदेवंविद्वान्गृहपतिर्भवत्यपसगृहपतिःपाप्मानंहतेऽपतेयजमानाःपाप्मानंघ्नतेऽध्वर्यो अरात्स्मारात्स्म ॥ २५ ॥
इतिचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥

उद्धराहवनीयमित्यपराह्णआहयदेवाह्वासाधुकरोतितिदेवतत्प्राङुद्धृत्यतदभयेनिधत्तउद्धराहवनीयमितिप्रातराहय देवरात्र्यासाधुकरोतितिदेवतत्प्राङुद्धृत्यतदभयेनिधत्तेयज्ञोवाआहवनीयःस्वर्गोलोकआहवनीयोयज्ञएवतत्स्वर्गेलोके स्वर्गलोकंनिधत्तेयएवंवेदयोवाअग्निहोत्रंवैश्वदेवंषोळशकलंपशुषुप्रतिष्ठितंवेदवैश्वदेवेनाग्निहोत्रेणषोळशकलेनपशुषुप्र तिष्ठितेनराध्नोतिरौद्रंगविसद्वायव्यमुपावसृष्टमाश्विनंदुह्यमानंसौम्यंदुग्धंवारुणमधिश्रितंपौष्णंसमुदयंतंमारुतंविष्य दमानंवैश्वदेवंबिंदुमन्मैत्रंशरोगृहीतंद्यावापृथिवीयमुद्वासितंसावित्रंप्रक्रांतंवैष्णवंह्रियमाणंबार्हस्पत्यमुपसन्नमग्नेःपूर्वा हुतिःप्रजापतेरुत्तरैंद्रंहुतमेतद्वाअग्निहोत्रंवैश्वदेवंषोळशकलंपशुषुप्रतिष्ठितंवैश्वदेवेनाग्निहोत्रेणषोळशकलेनपशुषुप्रति ष्ठितेनराध्नोतियएवंवेद॥२६॥यस्याग्निहोत्र्युपावसृष्टादुह्यमानोपविशेत्कातत्रप्रायश्चित्तिरितितामभिमंत्रयेतयस्माद्भी षानिषीदसिततोनोअभयंकृधि॥ पशून्नःसर्वान्गोपायनमोरुद्रायमीढुषइतितामुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपताव धात्॥ इंद्रायकृण्वतीभागंमित्रायवरुणायचेत्यथास्याउदपात्रमूधसिचमुखेचोपगृह्णीयादथैनांब्राह्मणायदद्यात्सातत्र प्रायश्चित्तिर्यस्याग्निहोत्र्युपावसृष्टादुह्यमानावाश्येतकातत्रप्रायश्चित्तिरित्यशनायांहवाएषायजमानस्यप्रतिख्यायवा

श्यतैतामन्नमप्यादयेच्छांत्यैशांतेर्वाअन्नँसूयवसाद्भगवती हिभूयाइतिंसातत्रप्रायश्चित्तिर्यस्याग्निहोत्र्युपावसृष्टादुह्यमा
नास्पंदेतंकातत्रप्रायश्चित्तिरितिंसायत्तत्रस्कंदयेत्तदभिमृश्यजपेद्यदद्यदुग्धंपृथिवीमसृप्तंयदोषधीरत्यसृपद्यदापः ॥ प
योगृहेषुपयोअघ्न्यायाँपयोवत्सेषुपयोअस्तुतन्मयीतितंतत्रयत्परिशिष्टंस्यात्तेनजुहुयाद्यद्यलंहोमायस्याद्यद्युवैसर्वंसिक्तं
स्यादथान्यामाहूयतांदुग्ध्वातेनजुहुयादात्वेवश्रद्धायैहोतव्यँसातत्रप्रायश्चित्तिःसर्वंवाअस्यबर्हिष्यंसर्वंपरिगृहीतंयएवं
विद्वानग्निहोत्रंजुहोति॥२७॥असौवाअस्यादित्योयूपःपृथिवीवेदिरोषधयोबर्हिर्वनस्पतयइध्मांआपःप्रोक्षण्योदिशःपरि
धयोंयद्धवाअस्यकिंचनश्यतिंयन्म्रियतेयदपाजंतिंसर्वंहैवैनंतदमुष्मिँल्लोकेयथाबर्हिषिदत्तमागच्छेदेवमागच्छतिंयएवं
विद्वानग्निहोत्रंजुहोत्युभयान्वाएषदेवमनुष्यान्विपर्यासंदक्षिणानयतिंसर्वंचेदंयदिदंकिंचमनुष्यान्वाएषसायमाहुत्यां
देवेभ्योदक्षिणानयतिंसर्वंचेदंयदिदंकिंचंतएतेप्रलीनान्योकसइवशेरेमनुष्यादेवेभ्योदक्षिणानीतांदेवान्वाएषप्रातरा
हुत्यांमनुष्येभ्योदक्षिणानयतिंसर्वंचेदंयदिदंकिंचंतएतेविविदानाइवोत्पतंत्यदोहंकरिष्येदोहंगमिष्यामीतिवदंतोयावं
तंहवैसर्वमिदंदत्त्वालोकंजयतिंतावंतंहलोकंजयतिंयएवंविद्वानग्निहोत्रंजुहोत्यग्नयेवाएषसायमाहुत्याश्विनमुपाकरो
तिंतद्वाक्प्रतिगृणातिवाग्वागित्यग्निनाहास्यरात्र्याश्विनंशस्तंभवतिंयएवंविद्वानग्निहोत्रंजुहोत्यादित्यायवाएषप्रातराहु
त्यांमहाव्रतमुपाकरोतिंतत्प्राणःप्रतिगृणात्यन्नमन्नमित्यादित्येनहास्याह्नांमहाव्रतंशस्तंभवतिंयएवंविद्वानग्निहोत्रंजुहो

तिंतस्यवाएतस्याग्निहोत्रस्यसप्तचशतानिविंशतिश्चसंवत्सरेसायमाहुतयः सप्तचोएवशतानिविंशतिश्चसंवत्सरेप्रातराहु
तयस्तावत्योग्नेर्यजुष्मत्यइष्टकाःसंवत्सरेणहास्याग्निनाचित्येनेष्टंभवतियएवंविद्वानग्निहोत्रंजुहोति॥२८॥वृषशुष्मोहवा
तावतउवाचजातूकर्ण्योवक्तास्मोवाइदंदेवेभ्योयद्वैतदग्निहोत्रमुभयेद्युरहूयताऽन्येद्युर्वावतदेतर्हिहूयतइत्येतदुहैवोवा
चकुमारीगंधर्वगृहीतावक्तास्मोवाइदंपितृभ्योयद्वैतदग्निहोत्रमुभयेद्युरहूयतान्येद्युर्वावतदेतर्हिहूयतइत्येतद्वाअग्निहोत्र
मन्येद्युर्हूयतेयदस्तमितेसायंजुहोत्यनुदितेप्रातरथैतदग्निहोत्रमुभयेद्युर्हूयतेयदस्तमितेसायंजुहोत्युदितेप्रातस्तस्मादुदिते
होतव्यंचतुर्विंशेहवैसंवत्सरेऽनुदितहोमीगायत्रीलोकमाप्नोतिद्वादशउदितहोमीसयदाद्वौसंवत्सरावनुदितेजुहोत्यथहा
स्यैकोहुतोभवत्यथयउदितेजुहोतिसंवत्सरेणैवसंवत्सरमाप्नोतियएवंविद्वानुदितेजुहोतितस्मादुदितेहोतव्यमेषहवाअ
होरात्रयोस्तेजसिजुहोतियोस्तमितेसायंजुहोत्युदितेप्रातरग्निनावैतेजसारात्रिस्तेजस्वत्यादित्येनतेजसाहस्तेजस्वदहोरात्र
योर्हास्यतेजसिहुतंभवतियएवंविद्वानुदितेजुहोतितस्मादुदितेहोतव्यं॥ २९॥ एतेहवैसंवत्सरस्यचक्रेयदहोरात्रेताभ्या
मेवतत्संवत्सरमेतिसयोनुदितेजुहोतियथैकतश्चक्रेणयायात्ताहक्तदथयउदितेजुहोतियथोभयतश्चक्रेणयायान्क्षिप्रमध्वा
नंसमश्नुवीततताहक्तत्तदेषाभियज्ञगाथागीयते ॥ बृहद्रथंतराभ्यामिदमेतियुक्तैयद्भूतंभविष्यच्चापिसर्वं ॥ ताभ्यामि
यादग्नीनाधायधीरोदिवैवान्यज्जुहुयान्नक्तमन्यदितिराथंतरीवैरात्र्यहर्बार्हतमग्निर्वैरथंतरमादित्योबृहदेतेहवाएनं

देवतेब्रभ्रस्यविष्टपंस्वर्गंलोकंगमयतींयएवंविद्वानुदितेजुहोतिंतस्मादुदितेहोतव्यंतदेषाभियज्ञगाथागीयते ॥ यथाहवा
स्थूरिणैकेनयायांदकृत्वान्यदुपथोजनाय॥एवंयंतितेवहवोजनासंःपुरोदयाज्जुह्वतियेग्निहोत्रमितिंतांवाएतांदेवतांप्रय
तींसर्वमिदमनुप्रैतियदिदंकिंचैतस्यैहीदंदेवतायांअनुचरंसर्वंयदिदंकिंचंसैषानुचरवतीदेवतांविंदतेहवाअनुचरंभवंत्य
स्यानुचरोयएवंवेदंसवाएषएकातिथिंःसएषजुह्वत्सुवसतिंतद्यददोगाथाभवंत्यनेनसमेनसासोभिशस्तांदेनस्वतोवापह
रादेनः ॥ एकातिथिमपसायंरुणद्धिंविसानिस्तेनोअपसोजहारैंत्येषहवैसएकातिथिंःसएषजुह्वत्सुवसंत्येतांवावसदेवता
मपरुणद्धिंयोलमग्निहोत्रायसन्नाग्निहोत्रंजुहोतिंतमेषादेवतापरुद्धांपरुणद्ध्यस्माच्चलोकादमुष्माच्चोभाभ्यांयोलमग्निहो
त्रायसन्नाग्निहोत्रंजुहोतिंतस्माद्योलमग्निहोत्रायस्याज्जुहुयांत्तस्मादाहुर्नसायमतिथिरपरुद्ध्यइंत्येतद्धस्मवैतद्विद्वान्नगरी
जानश्रुतेयंऽउदितहोमिनमैकादशाक्षंमानुतंतव्यमुवाचंप्रजायामेनंविज्ञातास्मौंयदिविद्वान्वाजुहोत्यविद्वान्वेतिंतस्यो
हैकादशाक्षैराष्ट्रमिवप्रजावभूवंराष्ट्रमिवहवाअस्यप्रजाभवतिंयएवंविद्वानुदितेजुहोतिंतस्मादुदितेहोतव्यं ॥ ३० ॥ उ
द्यन्नुखलुवाआदित्यंआहवनीयेनरश्मीन्त्संदधातिंसयोनुदितेजुहोतिंयथाकुमारायवावत्सायवांजातायस्तनंप्रतिदध्या
त्तादृक्कंदथयउदितेजुहोतिंयथाकुमारायवावत्सायवांजातायस्तनंप्रतिदध्यात्तादृक्कंत्तमस्मैप्रतिधीयमानंमुभयोर्लोक
योरन्नाद्यमनुप्रतिधीयतेंऽस्माच्चलोकादमुष्माच्चोभाभ्यांसयोनुदितेजुहोतिंयथापुरुषायवाहस्तिनेवांप्रयतेहस्तआदध्या

त्ताद्दत्कं दथयउदितेजुहोतिंयथापुरुषायवाहस्तिनेवांप्रयतेहस्तआदध्यात्ताद्दक्तंत्तमेषएतेनैवहस्तेनोर्ध्वंहृत्वांस्वर्गेलोक
आदधांतिंयएवंविद्वानुदितेजुहोतितस्मादुदितेहोतव्यंमुद्यन्नुखलुवाआदित्यःसर्वांणिभूतानिप्रणयतिंतस्मादेनंप्राणइ
त्याचक्षतेंप्राणेहास्यसंप्रतिहुतंभवतिंयएवंविद्वानुदितेजुहोतितस्मादुदितेहोतव्यमेषहवैसत्यंवदन्त्सत्येजुहोतिंयोस्तमि
तेसायंजुहोत्युदितेप्रातंर्भूर्भुवःस्वरो३मग्निर्ज्योतिर्ज्योतिरग्निरितिसायंजुहोतिंभूर्भुवःस्वरों३सूर्योज्योतिर्ज्योतिःसूर्यइ
तिप्रातःसत्यंहास्यवदतःसत्येहुतंभवतिंयएवंविद्वानुदितेजुहोतितस्मादुदितेहोतव्यंतदेषाभियज्ञगाथागीयते ॥ प्रातः
प्रातरनृतंतेवदंतिंपुरोदयाज्जुह्वतियेग्निहोत्रं॥ दिवाकीर्त्यमदिवाकीर्तयंतःसूर्योज्योतिर्नतदाज्योतिरेषामिति॥३१॥प्रजा
पतिरकाम यतंप्रजायेयभूयान्त्स्यामितिंसतपोतप्यतसतपस्तप्त्वैमाँल्लोकानसृजतंपृथिवीमंतरिक्षंदिवंताँल्लोकानभ्यतपत्ते
भ्योभितप्तेभ्यस्त्रीणिज्योतींष्यजायंतांग्निरेवपृथिव्याअजायतवायुरंतरिक्षादादित्योदिवस्तानिज्योतींष्यभ्यतपत्तेभ्यो
भितप्तेभ्यस्त्रयोवेदाअजायंतंऋग्वेदएवाग्नेरजायतंयजुर्वेदोवायोःसामवेदऽआदित्यांत्तान्वेदानभ्यतपत्तेभ्योभितप्तेभ्य
स्त्रीणिशुक्राण्यजायंतंभूरित्येवऋग्वेदादजायतंभुवइतियजुर्वेदांत्स्वरितिसामवेदांत्तानिशुक्राण्यभ्यतपत्तेभ्योभितप्ते
भ्यस्त्रयोवर्णाअजायंतांकारउकारोमकारइतितानेकधासमभरत्तदेतदो३मितितस्मादोमोमितिप्रणौत्योमितिवैस्वर्गो
लोकंओमित्यसौयोसौतपतिंसप्रजापतिर्यज्ञमतनुतंतमाहरत्तेनायजतंसऋचैवहौत्रमकरोद्य जुषाध्वर्यवंसाम्नोद्गीथंयदेत

त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकरोत्स प्रजापतिर्यज्ञं देवेभ्यः संप्रायच्छत्ते देवा यज्ञमतन्वत तमाहरंत तेनायजंत त ऋचैव हौ
त्रमकुर्वन्यजुषाध्वर्यवं साम्नोद्गीथं यदेवैतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकुर्वंस्ते देवा अब्रुवन्प्रजापतिं यदि नो यज्ञ ऋक्त आ
र्तिः स्यात्केन भिषज्येम यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा का प्रायश्चित्तिरिति स प्रजापतिरब्रवीद्देवान्यदि वो यज्ञ ऋक्त आर्ति
र्भवति भूरिति गार्हपत्ये जुहवाथ यदि यजुष्टो भुव इत्याग्नीध्रीये ऽन्वाहार्यपचने वा हविर्यज्ञेषु यदि सामतः स्वरित्याहवनीये य
द्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याहवनीय एव जुहवाथेत्येतानि ह वै वेदानामंतः श्लेषणानि यदेता व्याहृ
तयस्तद्यथात्मनात्मानं संदध्याद्यथा पर्वणा पर्व यथा श्लेष्मणा चर्मण्यं वान्यद्वा विश्लिष्टं संश्लेषयेदेवमेवैताभिर्यज्ञस्य विश्लि
ष्टं संदधाति सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्तव्या ॥ ३२ ॥ तदाहुर्महावदा ३ः ॥ यदृचैव हौ
त्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयादयं वै यज्ञो यो
ऽयं पवते तस्य वाक्च मनश्च वर्तन्यौ वाचा च हि मनसा च यज्ञो वर्तत इयं वै वागदो मनस्तद्वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वंति मन
सैव ब्रह्मा संस्करोति ते है के ब्रह्माण उपाकृते प्रातरनुवाके स्तोमभागान्जपित्वा भाषमाणा उपासते तद्धैतदुवाच ब्राह्मण उपा
कृते प्रातरनुवाके ब्रह्माणं भाषमाणं दृष्ट्वार्धमस्य यज्ञस्यांतरगुरिति तद्यथैकपात्पुरुषो यन्नेकतश्चक्रो वा रथो वर्तमानो भ्रेषन्न्ये
त्येवमेव स यज्ञो भ्रेषन्न्येति यज्ञस्य भ्रेषमनु यजमानो भ्रेषन्न्येति तस्माद्ब्रह्मोपाकृते प्रातरनुवाके वाचंयमः स्यादोपांश्वंतर्याम

यो॑र्हो॒मा॒द्दुपाकृतेषुपवमानेष्वोद्दचोऽथयानिस्तोत्राणिसशस्त्राण्यातेषांवषट्काराद्धाचंयमएवस्यात्तद्यथोभयतःपात्पुरुषो यन्नुंभयतश्चक्रोवारथोवर्तमानोनरिष्यत्येवमेवसयज्ञोनरिष्यतियज्ञस्यारिष्टिमनुयजमानोनरिष्यति॥३३॥तदाहुर्यद्ब्र हान्मेग्रहींत्प्रावारीन्मआहुतीर्मेहौषीदित्यध्वर्यवेदक्षिणानीयंतंउदगासीन्मइत्युद्गात्रेऽन्ववोचन्मेशंसीन्मेयाक्षीन्मइति होत्रेकिंस्विदेवचक्रुषेब्रह्मणेदक्षिणानीयंतेंकृत्वाहोस्विदेवहरताइतियज्ञस्यहैषभिषग्यद्ब्रह्मायज्ञायैवतद्भेषजंकृत्वाहरत्य थोयद्भूयिष्ठेनैवब्रह्मणांछंदसांरसेनार्त्विज्यंकरोतियद्ब्रह्मातस्माद्ब्रह्मार्धभाग्घवाएषइतरेषामृत्विजामग्रआसयद्ब्रह्मार्ध मेवब्रह्मणआसार्धमितरेषामृत्विजांतस्माद्यदियज्ञऋक्तआर्तिःस्याद्यदियजुष्टोयदिसामतोयद्यविज्ञातासर्वव्यापद्वाब्रह्म णएवनिवेदयंतेतस्माद्यदियज्ञऋक्तआर्तिर्भवतिभूरितिब्रह्मागार्हपत्येजुहुयाद्यदियजुष्टोभुवइत्याग्नीध्रीयेऽन्वाहार्यपच नेवाहविर्यज्ञेषुयदिसामतःस्वरित्याहवनीयेयद्यविज्ञातासर्वव्यापद्वाभूर्भुवःस्वरितिसर्वाअनुद्रुत्याहवनीयएवजुहुयात्स प्रस्तोतोपाकृतेस्तोत्रआहब्रह्मन्त्स्तोष्यामःप्रशास्तरितिसभूरितिब्रह्माप्रातःसवनेब्रूयादिंद्रवंतःस्तुध्वमितिभुवइतिमाध्यं दिनेसवनेब्रूयादिंद्रवंतःस्तुध्वमितिस्वरितितृतीयसवनेब्रूयादिंद्रवंतःस्तुध्वमितिभूर्भुवःस्वरित्युक्थ्येवातिरात्रेवाब्रूया दिंद्रवंतःस्तुध्वमितिसयदाहेंद्रवंतःस्तुध्वमित्यैंद्रोवैयज्ञइंद्रोयज्ञस्यदेवतासेंद्रमेवतदुद्गीथंकरोतींद्रान्मागादिंद्रवंतःस्तु ध्वमित्येवैनांस्तदाहतदाह ॥ ३४ ॥ इतिपंचमोऽध्यायः ॥ ५ ॥ इतिपंचमपंचिकासमाप्ता ॥ ५ ॥ ॥ ॥

श्रीवेदपुरुषायनमः ॥ हरिःॐ ॥ देवाहवैसंवत्सरैसत्रंनिषेदुस्तेहपाप्मानंनापजघ्निरेतान्होवाचार्बुदःकाद्रवेयःसर्प
ऋषिर्मंत्रकृदेकावैवोहोत्राकृतातांवोहंकरवाण्यथपाप्मानमपहनिष्यध्वइतितेहतथेत्यूचुस्तेषांहस्मसमध्यंदिनेमध्यंदिन
एवोपोदासर्पैद्ग्राव्णोभिष्टौतितस्मान्मध्यंदिनेमध्यंदिनएवंग्राव्णोभिष्टुवंतितदनुकृतिसहस्मयेनोपोदासर्पैत्तद्धाप्येतदर्बु
र्बुदोदासर्पणीनामप्रपदस्तितान्हराजामदयांचकारतेहोचुराशीविषोवैनोराजानमवेक्षतेहंतास्योष्णीषेणाक्ष्यावपिनह्या
मेतितथेतितस्यहोष्णीषेणाक्ष्यावपिनह्युस्तस्मादुष्णीषमेवपर्यस्यग्राव्णोभिष्टुवंतितदनुकृतितान्हराजामदयामेवचका
रतेहोचुःस्वेनवैनोमंत्रेणग्राव्णोभिष्टौतिहंतास्यान्याभिर्ऋग्भिर्मंत्रमापृणचामेतितथेतितस्यहान्याभिर्ऋग्भिर्मंत्रमाप
पृचुस्ततोहैनान्नमदयांचकारतद्यदस्यान्याभिर्ऋग्भिर्मंत्रमापृंचंतिशांत्याएवंतेहपाप्मानमपजघ्निरेतेषामन्वपहतिंसर्पाः
पाप्मानमपजघ्निरेतएतेपहतपाप्मानोहित्वापूर्वांजीर्णांत्वचंनवयैवप्रयंत्यपपाप्मानंहतेयएवंवेद ॥ १ ॥ तदाहुःकिय
तीभिरभिष्टुयादितिशतेनेत्याहुःशतायुर्वैपुरुषःशतवीर्यःशतेंद्रियआयुष्येवैनंतद्वीर्यइंद्रियेदधातित्रयस्त्रिंशत्यावेत्याहु
स्त्रयस्त्रिंशतोवैसदेवानांपाप्मनोपाहंस्त्रयस्त्रिंशद्धैतस्यदेवाइत्यपरिमिताभिरभिष्टुयादपरिमितोवैप्रजापतिःप्रजापतेर्वा
एषाहोत्रायद्ग्रावस्तोत्रीयातस्यांसर्वेकामाअवरुध्यंतेसयदपरिमिताभिरभिष्टौतिसर्वेषांकामानामवरुध्यैसर्वान्कामानव
रुंधेयएवंवेदतस्मादपरिमिताभिरेवाभिष्टुयात्तदाहुःकथमभिष्टुयादित्यक्षरशा३ः ॥ चतुरक्षरशा३ः ॥ पच्छा३ः ॥ अ

र्धर्चशा२ः॥ऋक्शा२ः इति॥तद्यदृक्शोनतदवकल्पतेऽथयत्पच्छोनो एवतदवकल्पतेऽथयदक्षरशश्चतुरक्षरशोवितथाछं
दांसिलुप्येरन्बहूनितथाक्षराणिहीयेरन्नर्धर्चशएवाभिष्टुयात्प्रतिष्ठायाएवंद्विप्रतिष्ठोवैपुरुषश्चतुष्पादाःपशवोयजमानमे
वतद्द्विप्रतिष्ठंचतुष्पात्सुपशुषुप्रतिष्ठापयतितस्मादर्धर्चशएवाभिष्टुयात्तदाहुर्यन्मध्यंदिनेमध्यंदिनएवग्रावणोभिष्टौतिक
थमस्येतरयोःसवनयोरभिष्टुतंभवतीतियदेवगायत्रीभिरभिष्टौतिगायत्रंवैप्रातःसवनंतेनप्रातःसवनेऽथयज्जगतीभिर
भिष्टौतिजागतंवैतृतीयसवनंतेनतृतीयसवनंएवमुहास्यमध्यंदिनेमध्यंदिनएवग्रावणोभिष्टुवतःसर्वेषुसवनेष्वभिष्टुतंभ
वतियएवंवेदतदाहुर्यदध्वर्युरेवान्यानृत्विजःसंप्रेष्यत्यथकस्मादेषएतामसंप्रेषितःप्रतिपद्यतइतिमनोवैग्रावःस्तोत्रीयासं
प्रेषितंवाइदंमनस्तस्मादेषएतामसंप्रेषितःप्रतिपद्यते॥ २ ॥ वाग्वैसुब्रह्मण्यातस्यैसोमोराजावत्सःसोमेराजनिक्रीतेसुब्रह्म
ण्यामाह्वयंतियथाधेनुमुपह्वयेत्तेनवत्सेनयजमानायसर्वान्कामान्दुहेसर्वान्हास्मैकामान्वाग्दुहेयएवंवेदतदाहुःकिंसुब्रह्म
ण्यायैसुब्रह्मण्यात्वमितिवागेवेतिब्रूयाद्वाग्वैब्रह्मचसुब्रह्मचेतितदाहुरथकस्मादेनंपुमांसंसंतंस्त्रीमिवाचक्षतइतिवाग्घिसु
ब्रह्मण्येतिब्रूयात्तेनेतितदाहुर्यदंतर्वेदीतरऋत्विजआर्त्विज्यंकुर्वंतिबहिर्वेदिसुब्रह्मण्याकथमस्यांतर्वेद्यार्त्विज्यंकृतंभवती
तिवेदेर्वाउत्करमुत्किरंतियदेवोत्करेतिष्ठन्नाह्वयतीतिब्रूयात्तेनेतितदाहुरथकस्मादुत्करेतिष्ठन्त्सुब्रह्मण्यामाह्वयतीत्यृष
योवैसत्रमासतंतेषांयोवर्षिष्ठआसीत्तमब्रुवन्त्सुब्रह्मण्यामाह्वयत्वंनोनेदिष्ठाद्देवान्ह्वयिष्यसीतिवर्षिष्ठमेवैनंतत्कुर्वंत्यथोवे

दिमेवतत्सर्वांप्रीणातितदाहुःकस्मादस्मादृषभंदक्षिणामभ्याजंतीतिवृषावाऋषभोयोषासुब्रह्मण्यातन्मिथुनंतस्यमिथुन
स्यप्रजात्याइत्युपांशुपात्नीवतस्याग्नीध्रोयजतिरेतोवैपात्नीवतंउपांश्विववैरेतसःसिक्तिर्नानुवषट्करोतिसंस्थावाएषायदनु
वषट्कारोनेद्रेतःसंस्थापयानीत्यसंस्थितंवैरेतसःसमृद्धंतस्मान्नानुवषट्करोतिनेष्टुरुपस्थआसीनोभक्षयतिपत्नीभाजनंवैने
ष्टाऽग्निःपत्नीषुरेतोदधातिप्रजात्याअग्निनैवतत्पत्नीषुरेतोदधातिप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेददक्षिणाअनुसु
ब्रह्मण्यासंतिष्ठतेवाग्वैसुब्रह्मण्यान्नंदक्षिणान्नाद्यएवतद्वाचियज्ञमंततःप्रतिष्ठापयंतिप्रतिष्ठापयंति३ इतिप्रथमोऽध्या० १

देवावैयज्ञमतन्वततांस्तन्वानानसुराअभ्यायन्यज्ञवेशसमेषांकरिष्यामइतितान्दक्षिणतउपायन्यतएषांयज्ञस्यतनि
ष्ठममन्यंततेदेवाःप्रतिबुध्यमित्रावरुणौदक्षिणतःपर्यौहंस्तेमित्रावरुणाभ्यामेवदक्षिणतःप्रातःसवनेऽसुररक्षांस्यपाघ्नत
तथैवैतद्यजमानामित्रावरुणाभ्यामेवदक्षिणतःप्रातःसवनेऽसुररक्षांस्यपाघ्नतेतस्मान्मैत्रावरुणंमैत्रावरुणःप्रातःसवनेशं
सतिमित्रावरुणाभ्यांहिदेवादक्षिणतःप्रातःसवनेऽसुररक्षांस्यपाघ्नततेवैदक्षिणतोपहताअसुरामध्यतोयज्ञंप्राविशंस्तेदे
वाःप्रतिबुध्येंद्रंमध्यतोदधुस्तइंद्रेणैवमध्यतःप्रातःसवनेऽसुररक्षांस्यपाघ्नततथैवैतद्यजमानाइंद्रेणैवमध्यतःप्रातःसवनेऽ
सुररक्षांस्यपघ्नतेतस्मादैंद्रंब्राह्मणाच्छंसीप्रातःसवनेशंसतींद्रेणहिदेवामध्यतःप्रातःसवनेऽसुररक्षांस्यपाघ्नततेवैमध्यतोप
हताअसुराउत्तरतोयज्ञंप्राविशंस्तेदेवाःप्रतिबुध्येंद्राग्नीउत्तरतःपर्यौहंस्तइंद्राग्निभ्यामेवोत्तरतःप्रातःसवनेऽसुररक्षांस्यपा

घ्नतंतथैवैतद्यजमानाइंद्राग्निभ्यामेवोत्तरतःप्रातःसवनेऽसुररक्षांस्यपघ्नतेतस्मादैंद्राग्नमच्छावाकःप्रातःसवनेशंसतींद्रा
ग्निभ्यांहिदेवाउत्तरतःप्रातःसवनेऽसुररक्षांस्यपाघ्नतंतेवाउत्तरतोपहताअसुराःपुरस्तात्पर्यद्रवन्त्समनीकतस्तेदेवाःप्रति
बुध्याग्निंपुरस्तात्प्रातःसवनेपर्यौहँस्तेऽग्निनैवपुरस्तात्प्रातःसवनेऽसुररक्षांस्यपाघ्नतंतथैवैतद्यजमानाअग्निनैवपुरस्तात्प्रातः
सवनेऽसुररक्षांस्यपघ्नतेतस्मादाग्नेयंप्रातःसवनंमपपाप्मानंहतेयएवंवेदतेवैपुरस्तादपहताअसुराःपश्चात्परीत्यप्राविशंस्ते
देवाःप्रतिबुध्यविश्वान्देवानात्मानंपश्चात्तृतीयसवनेपर्यौहँस्तेविश्वैरेवदेवैरात्मभिःपश्चात्तृतीयसवनेऽसुरक्षांस्यपाघ्नतंत
थैवैतद्यजमानाविश्वैरेवदेवैरात्मभिःपश्चात्तृतीयसवनेऽसुररक्षांस्यपघ्नतेतस्माद्वैश्वदेवंतृतीयसवनंमपपाप्मानंहतेयएवं
वेदतेवैदेवाअसुरानेवमपाघ्नतसर्वस्मादेवयज्ञात्ततोवैदेवाअभवन्परासुराभवत्यात्मनापरास्यद्विषन्पाप्माभ्रातृव्योभव
तियएवंवेदतेदवाएवंक्लृप्तेनयज्ञेनाऽपासुरान्पाप्मानमघ्नताजयन्त्स्वर्गंलोकमपहवैद्विषंतंपाप्मानंभ्रातृव्यंहतेजयतिस्व
र्गंलोकंयएवंवेदयश्चैवंविद्वान्त्सवनानिकल्पयति॥४॥ स्तोत्रियंस्तोत्रियस्यानुरूपंकुर्वंतिप्रातःसवनेऽहरेवतदह्नोनुरूपंकु
र्वंत्यवरेणैवतदह्नापरमहरभ्यारभंतेऽथतथानमध्यंदिनेश्रीवैपृष्ठानितानितस्मैनतत्स्थानानियत्स्तोत्रियंस्तोत्रियस्यानुरू
पंकुर्युस्तयैवविभक्त्यातृतीयसवनेनस्तोत्रियंस्तोत्रियस्यानुरूपंकुर्वंति॥५॥अथातआरंभणीयाएवंऋजुनीतीनोवरुणइति
मैत्रावरुणस्यमित्रोनयतुविद्वानितिप्रणेतावाएषहोत्रकाणांयन्मैत्रावरुणस्तस्मादेषाप्रणेतृमतीभवतींद्रंवोविश्वतस्परी

तिब्राह्मणाच्छंसिनोंहवामहेजनेभ्यइतींद्रमेवैतयाहरहर्निंह्वयंतेनहैषांविहवेन्यइंद्रंवृंक्तेयत्रैवंविद्वान्ब्राह्मणाच्छंस्येतामह
रहःशंसतियत्सोमआसुतेनरइत्यच्छावाकस्यैंद्राग्नीअजोहवुरितींद्राग्नीएवैतयाहरहर्निंह्वयंतेनहैषांविहवेन्यइंद्राग्नीवृंक्ते
यत्रैवंविद्वानच्छावाकएतामहरहःशंसतिताावाएताःस्वर्गस्यलोकस्यनावःसंपारिण्यःस्वर्गमेवैताभिर्लोकमभिसंतरंति६।
अथातःपरिधानीयाएवंतेस्यामदेववरुणेतिमैत्रावरुणस्येषंस्वश्चधीमहीत्ययंवैलोकइषमित्यसौलोकःस्वरित्युभावेवैतया
लोकावारभंतेव्यंतरिक्षमतिरदितिब्राह्मणाच्छंसिनोविवत्तृचंस्वर्गमेवैभ्यएतयालोकंविवृणोतिमदेसोमस्यरोचना॥इंद्रो
यदभिनद्बलमितिसिषासवोवाएतेयद्दीक्षितास्तस्मादेषाबलवतीभवंत्युद्गाआजदंगिरोभ्यआविष्कृण्वन्गुहासतीः ॥ अ
र्वांचंनुनुदेवलमितिसनिमेवैभ्यएतयावरुंधइंद्रेणरोचनादिवइतिस्वर्गोवैलोकइंद्रेणरोचनादिवोदृढानिदंहितानिच ॥
स्थिराणिनपराणुदइतिस्वर्गएवैतयालोकेऽहरहःप्रतितिष्ठंतोयंत्याहंसरस्वतीवतोरित्यच्छावाकस्यवाग्वैसरस्वतीवाग्व
तोरितिहैतदाहैंद्राग्न्योरवोवृणइत्येतद्धवाइंद्राग्न्योःप्रियंधामयद्वागितिप्रियेणैवैनौतद्धाम्नासमर्धयतिप्रियेणधाम्नासमृ
द्ध्यतेयएवंवेद ॥ ७ ॥ उभय्यःपरिधानीयाभवंतिहोत्रकाणांप्रातःसवनेचमाध्यंदिनेचाहीनाश्चैकाहिकाश्चतत एकाहिका
भिरेवमैत्रावरुणःपरिदधातितेनास्माल्लोकान्नप्रच्यवतेऽहीनाभिरच्छावाकःस्वर्गस्यलोकस्याप्त्याउभयीभिर्ब्राह्मणाच्छं
सीतेनोसउभौव्यन्वारभमाणऽएतींमंचामुंचलोकमथोमैत्रावरुणंचाच्छावाकंचाथोअहीनंचैकाहंचाथोसंवत्सरंचाग्नि

ष्टोमंचैवमुसङभौव्यन्वारभमाणएत्यथततऐकाहिकाएवंतृतीयसवनेहोत्रकाणांपरिधानीयाभवंतिप्रतिष्ठावाएकाहः प्र
तिष्ठायामेवतद्यज्ञमंततःप्रतिष्ठापयंत्यमवानंप्रातःसवनेयजैदेकाह्नेनस्तोममतिशंसैत्तद्यथाभिहेषतेपिपासतेक्षिप्रंप्रयच्छे
त्ताहक्कंदथोक्षिप्रंदेवेभ्योऽन्नाद्यंसोमपीथंप्रयच्छानीतिक्षिप्रंहास्मिंल्लोकेप्रतितिष्ठत्यपरिमिताभिरुत्तरयोःसवनयोरपरि
मितोवैस्वर्गोलोकःस्वर्गस्यलोकस्याप्त्यैकामंतद्धोताशंसेद्यद्धोत्रकाःपूर्वेद्युःशंसेयुर्यद्वाहोतातद्धोत्रकाःप्राणोवैहोतांगानि
होत्रकाःसमानोवाअयंप्राणोंगान्यनुसंचरतितस्मात्तत्कामंहोताशंसेद्यद्धोत्रकाःपूर्वेद्युःशंसेयुर्यद्वाहोतातद्धोत्रकाःसूक्तां
तैर्होतापरिदधदेत्यथसमान्यएवतृतीयसवनेहोत्रकाणांपरिधानीयाभवंत्यात्मावैहोतांगानिहोत्रकाःसमानावाइमेंगाना
मंतास्तस्मात्समान्यएवंतृतीयसवनेहोत्रकाणांपरिधानीयाभवंतिभवंति ॥ ८ ॥ इतिद्वितीयोऽध्यायः ॥ २ ॥ ॥

आत्वावहंतुहरयइतिप्रातःसवनउन्नीयमानेभ्योन्वाहवृषण्वतीःपीतवतीःसुतवतीर्मद्वतीरूपसमृद्धाऐंद्रीरन्वाहैंद्रोवै
यज्ञोगायत्रीरन्वाहगायत्रंवैप्रातःसवनंनवन्यूनाःप्रातःसवनेन्वाहन्यूनेवैरेतःसिच्यतेदशमध्यंदिनेन्वाहन्यूनेवैरेतःसि
क्तंमध्यंस्त्रियैप्राप्यस्थविष्ठंभवतिनवन्यूनास्तृतीयसवनेन्वाहन्यूनाद्वैप्रजाःप्रजायंतेतद्यदेतानिकेवलसूक्तान्यन्वाहयज
मानमेवतद्गर्भंभूतंप्रजनयतियज्ञाद्देवयोन्यैतेहैकेसप्तसप्तान्वाहुःसप्तप्रातःसवनेसप्तमाध्यंदिनेसप्ततृतीयसवनेयावत्योवै
पुरोनुवाक्यास्तावत्योयाज्याःसप्तवैप्रांचोयजंतिसप्तवषट्कुर्वंतितासामेताःपुरोनुवाक्याइतिवदंतस्तथानकुर्याद्यजमा

नस्यहतेरेतोविलुंपैत्यथोयजमानमेवंयजमानोहिसूक्तंनवभिर्वाएतंमैत्रावरुणोऽस्माल्लोकादंतरिक्षलोकमभिप्रवहतिदश
भिरंतरिक्षलोकादमुंलोकमंभ्यंतरिक्षलोकोहिज्येष्ठोनवभिरमुष्माल्लोकात्स्वर्गंलोकमभिनहवंतेयजमानंस्वर्गंलोकमभि
वोढुमर्हतिर्येसप्तसप्तान्वाहुस्तस्मात्केवलशऽएवसूक्तान्यनुब्रूयात् ॥ ९ ॥ अथाहयदैंद्रोवैयज्ञोऽथकस्माद्द्वावेवप्रातःस
वनेप्रस्थितानांप्रत्यक्षांदैंद्रीभ्यांयजतोहोताचैवब्राह्मणाच्छंसीचेदंतेसोम्यंमध्विवतिहोतायजतींद्रत्वावृषभंवयमितिब्राह्म
णाच्छंसीनानादेवत्याभिरितरेकथंतेषामैंद्योभवंतीतिमित्रंवयंहवामहइतिमैत्रावरुणोयजतिवरुणंसोमपीतयइतियद्वै
किंचपीतवत्पदंतदैंद्रंरूपंतेनेंद्रंप्रीणातिमरुतोयस्यहिक्षयइतिपोतायजतिससुगोपातमोजनइतींद्रोवैगोपास्तदैंद्रंरूपंतेनें
द्रंप्रीणात्यग्नेपत्नीरिहावहेतिनेष्टायजतित्वष्टारंसोमपीतयइतींद्रोवैत्वष्टातदैंद्रंरूपंतेनेंद्रंप्रीणात्युक्षान्नायवशान्नायेत्याग्नी
ध्रोयजतिसोमपृष्ठायवेधसइतींद्रोवैवेधास्तदैंद्रंरूपंतेनेंद्रंप्रीणातिप्रातर्यावभिरागतंदेवेभिर्जेन्यावसू ॥ इंद्राग्नीसोमपीत
यइतिस्वयंसमृद्धाच्छावाकस्यैवमुहैताऐंद्र्योभवंतियन्नानादेवत्यास्तेनान्यादेवताःप्रीणातियदुगायत्र्यस्तेनाग्नेय्यंएतदुहै
ताभिस्त्रयमुपाप्नोति ॥ १० ॥ असाविदेवंगोऋजीकमंधइतिमध्यंदिनउन्नीयमानेभ्योन्वाहवृषण्वतीःपीतवतीःसुतवतीर्म
द्वतीरूपसमृद्धाऐंद्रीरन्वाहैंद्रोवैयज्ञस्त्रिष्टुभोन्वाहत्रैष्टुभंवैमाध्यंदिनंसवनंतदाहुर्यत्तृतीयसवनस्यैवरूपंमद्वदथकस्मा
न्मध्यंदिनेमद्वतीरनुचाहयजंतिचाभिरितिमाद्यंतीववैमध्यंदिनेदेवताःसमेवतृतीयसवनेमादयंतेतस्मान्मध्यंदिनेमद्व

तीरनुचाहयजंतिचाभिस्तेवैखलुसर्वएवमाध्यंदिनेप्रस्थितानांप्रत्यक्षादैंद्रीभिर्यजंत्यभितृण्णवतीभिरेकैंपिबासोममभि यमुग्रतर्द इतिहोतायजतिसईंपाहियऋजीषीतरुत्रइतिमैत्रावरुणोयजत्येवापाहिप्रत्नथामंदतुत्वेतिब्राह्मणाच्छंसीयजत्य र्वाङेहिसोमकामंत्वाहुरितिपोतायजतितवायंसोमस्त्वमेह्यर्वाङितिनेष्टायजतींद्रायसोमाःप्रदिवोविदानाइत्यच्छावा कोयजत्यापूर्णोअस्यकलशःस्वाहेत्याग्नीध्रोयजतितासामेताअभितृण्णवत्योभवंतींद्रोवैप्रातःसवनेनव्यजयतंसएताभि रेवमाध्यंदिनंसवनमभ्यतृणंद्यदभ्यतृणत्तस्मादेताअभितृण्णवत्योभवंति॥ ११॥इहोपयातशवसोनपातइतितृतीयसव नउन्नीयमानेभ्योन्वाहवृषण्वतीःपीतवतीःसुतवतीर्मद्वतीरूपसमृद्धास्ताऐंद्रार्भव्योभवंतितदाहुर्यन्नार्भवीषुस्तुवतेऽथ कस्मादार्भवःपवमानइत्याचक्षतइतिप्रजापतिर्वैपितऋभून्मर्त्यान्त्सतोमर्त्यान्कृत्वातृतीयसवनआभजंत्तस्मान्नार्भवीषु स्तुवतेऽथार्भवःपवमानइत्याचक्षतेऽथाहयद्यथाछंदसंपूर्वयोःसवनयोरन्वाहगायत्रीःप्रातःसवनेत्रिष्टुभोमाध्यंदिनेऽथ कस्माज्जागतेसतितृतीयसवनेत्रिष्टुभोन्वाहेतिधीतरसंवैतृतीयसवनमथैतदधीतरसंशुक्रियंछंदोयत्रिष्टुप्सवनस्यसरस तायाऽइतिब्रूयादथोइंद्रमेवैतत्सवनेन्वाभजतीत्यथाहयदैंद्रार्भवंवैतृतीयसवनमथकस्मादेषएवतृतीयसवनेप्रस्थितानां प्रत्यक्षादैंद्रार्भव्यायजतींद्रऋभुभिर्वाजवद्भिःसमुक्षितमितिहोतैवंनानादेवत्याभिरितरेकथंतेषामैंद्रार्भव्योभवंतीतीं द्रावरुणासुतपाविमंसुतमितिमैत्रावरुणोयजतियुवोरथोअध्वरंदेववीतयइतिबहूनिवाहतदृभूणांरूपमिंद्रश्चसोमंपिबतं

बृहस्पतइतिब्राह्मणाच्छंसीयजंत्यावांविशांविदवःस्वाभुवइतिचहूनिवाहतद्भूणांरूपंमावोवहंतुसप्तयोरघुप्यदइतिपोता
यजतिरघुपत्वानःप्रजिगातबाहुभिरितिबहूनिवाहतद्भूणांरूपंममेवनःसुहवाआहिगंतनेतिनेष्टायजतिगंतनेतिबहूनि
वाहतद्भूणांरूपमिंद्राविष्णूपिबतंमध्वोऽअस्यैत्यच्छावाकोयजंत्यावामंधांसिमदिराण्यग्मन्नितिबहूनिवाहतद्भूणांरू
पमिमंस्तोममर्हतेजातवेदसइत्याग्नीध्रोयजतिरथमिवसंमहेमामनीषयेतिबहूनिवाहतद्भूणांरूपमेवमुहैताऐंद्रार्भव्योभवं
तियन्नानादेवत्यास्तेनान्यादेवताःप्रीणातियदुजगत्प्रासाहाजागतंवैतृतीयसवनंतृतीयसवनस्यैवसमृद्ध्यै ॥१२॥अथाह
यदुक्थिन्योन्याहोत्राअनुक्थाअन्याःकथमस्यैताउक्थिन्यःसर्वाःसमाःसमृद्धाभवंतीतियदेवैनाःसंप्रगीर्यहोत्राइत्याच
क्षतेतेनसमायदुक्थिन्योन्याहोत्राअनुक्थाअन्यास्तेनोविषमाएवमुहास्यैताउक्थिन्यःसर्वाःसमाःसमृद्धाभवंत्यथाहशं
संतिप्रातःसवनेशंसंतिमाध्यंदिनेहोत्रकाःकथमेषांतृतीयसवनेशस्तंभवतीतियदेवमाध्यंदिनेद्वेद्वेसूक्तेशंसंतीतिब्रूयात्तेनै
त्यथाहयब्युक्थोहोताकथंहोत्रकाब्युक्थाभवंतीतियदेवद्विदेवत्याभिर्यजंतीतिब्रूयात्तेनेति ॥१३॥ अथाहयदेतास्तिस्रउ
क्थिन्योहोत्राःकथमितराउक्थिन्योभवंतीत्याज्यमेवाग्नीध्रीयायाउक्थंमरुत्वतीयंपोत्रीयायैवैश्वदेवंनेष्ट्रीयायैतावाएता
होत्राएवंन्यंगाएवभवंत्यथाहयदेकप्रैषाअन्येहोत्रकाअथकस्माद्द्विप्रैषःपोताद्विप्रैषोनेष्टेतियत्रादोगायत्रीसुपर्णोभूत्वा
सोममाहरत्तदेतासांहोत्राणामिंद्रउक्थानिपरिलुप्यहोत्रेप्रददौयूयंमाभ्यह्वयध्वंयूयमस्यावेदिष्टेतितेहोचुर्देवावाचेमेहो

त्रेप्रभावयामेतितस्मात्तेद्विप्रैषेभवतंऋचाग्नीध्रीयांप्रभावयांचक्रुस्तस्मात्तस्यैकयर्चाभूयस्योयाज्याभवंत्यथाहयद्धोताय
क्षद्धोतायक्षदितिमैत्रावरुणोहोत्रेप्रेष्यंत्यथकस्मादहोतृभ्यःसन्ध्योहोत्राशंसिभ्योहोतायक्षद्धोतायक्षदितिप्रेष्यतीतिप्रा
णोवैहोताप्राणःसर्वऋत्विर्जःप्राणोयक्षत्प्राणोयक्षदित्येवतदाहाथाहास्त्युद्गातॄणांप्रैषणा३ःनाँ३इति। अस्तीतिब्रूयाद्यदेवै
तत्प्रशास्ताजपंजपित्वास्तुध्वमित्याहसऽएषांप्रैषोऽथाहास्त्यच्छावाकस्यप्रवरा३ः॥नाँ३इति॥अस्तीतिब्रूयाद्यदेवैनंमध्व
र्युराहाच्छावाकवदस्वंयत्तेवाद्यमित्येषोस्यप्रवरोऽथाहयदैंद्रावरुणंमैत्रावरुणस्तृतीयसवनेशंसत्यथकस्मादस्याग्नेयौस्तो
त्रियानुरूपौभवतइत्यग्निनावैमुखेनदेवाअसुरानुक्थेभ्योनिर्जघ्नुस्तस्मादस्याग्नेयौस्तोत्रियानुरूपौभवतोऽथाहयदैंद्राबा
र्हस्पत्यंब्राह्मणाच्छंसीतृतीयसवनेशंसत्यैंद्रावैष्णवमच्छावाकःकथमेनयोरैंद्राःस्तोत्रियानुरूपाभवंतीतींद्रोहस्मवाअसु
रानुक्थेभ्यःप्रजिगायसोब्रवीत्कश्चाहंचेत्यहंचाहंचेतिहस्मदेवताऽअन्ववयंतिसयदिंद्रःपूर्वःप्रजिगायतस्मादेनयोरैंद्राः
स्तोत्रियानुरूपाभवंतियद्वहंचाहंचेतिहस्मदेवताऽअन्ववयुस्तस्मान्नानादेवत्यानिशंसतः॥१४॥अथाहयद्वैश्वदेवंवैतृती
यसवनंमथकस्मादेतान्यैंद्राणिजागतानिसूक्तानितृतीयसवनआरंभणीयानिशस्यंतइतींद्रमेवैतैरारभ्ययंतीतिब्रूयाद
थोयज्जागतंवैतृतीयसवनंतज्जगत्काम्यैवतद्यात्किंचातऊर्ध्वंछंदःशस्यतेतद्धसर्वंजागतंभवत्येतानिचेदैंद्राणिजागतानिसू

क्तानितृतीयसवनआरंभणीयानिशस्यंतेऽथैतत्रैष्टुभमच्छावाकोततःशंसतिसंवांकर्मणेतियदेवपनाय्यंकर्मतदेतदभिव

दतिंसमिषेत्यन्नंवाइषोऽन्नाद्यस्यावरुद्ध्यांअरिष्टैर्नःपथिभिःपारयंतेतिंस्वस्तितायाएवैतदहरहःशंसंत्यथाहयज्जागतंवैतृ
तीयसवनंमथकस्मादेषांत्रिष्टुभंःपरिधानीयाभंवतीतिंवीर्यंवैत्रिष्टुंब्वीर्यंएवतदंततःप्रतितिष्ठंतोयंतींयमिंद्रंवरुणमष्टमे
गीरितिंमैत्रावरुणस्यंबृहस्पतिर्नःपरिपातुपश्चादितिब्राह्मणाच्छंसिनंउभाजिग्यथुरित्यच्छावाकस्योंभौहितौजिग्यतुर्नप
राजयेथेनपराजिग्यइतिंनहितयोःकतरश्चनपराजिग्यंइंद्रश्चविष्णोयदपस्पृधेथांत्रेधासहस्रंवितदैरयेथामितींद्रश्चहवैवि
ष्णुश्चासुरैर्युयुधातेंतान्हस्मजित्वोचतुःकल्पामहाइतिंतेहतथेत्यसुराऊचुःसोब्रवीदिंद्रोयावदेवायंविष्णुस्त्रिर्विक्रमतेता
वदस्माकंमथयुष्माकमितरदितिंसइमांल्लोकान्विचक्रमेंऽथोवेदानथोवाचंतदाहुःकिंतत्सहस्रमितींमेलोकाइमेवेदांअ
थोवागितिब्रूयादैरयेथामैरयेथामित्यच्छावाकउक्थ्येभ्यस्यतिंसहितत्रांत्योभवंत्यग्निष्टोमेहोतातिरात्रेचंसहितत्रांत्योभ
वत्यभ्यस्येत्षोळशिनी३॥नाभ्यस्ये३त्इति॥अभ्यस्येदित्याहुंःकथमन्येष्वहःस्वभ्यस्यतिंकथमत्रनाभ्यस्येदितिंतस्माद
भ्यस्येत्॥१५॥अथाहयन्नाराशंसंवैतृतीयसवनंमथकस्मादच्छावाकोंततःशिल्पेंष्वनाराशंसीःशंसतीतिंविकृतिर्वैनारा
शंसंकिमिवचवैकिमिवचरेतोविक्रियतेंतत्तदाविकृतंप्रजातंभवंत्यथैतन्मृद्धिवच्छंदःशिथिरंयन्नाराशंसंमथैषोंत्योयद
च्छावाकंस्तदृढतायैदृढेप्रतिष्ठास्यामइतिंतस्मादच्छावाकोंततःशिल्पेष्वनाराशंसीःशंसतिंदृढतायैदृढेप्रतिष्ठास्यामइ
तिंदृढेप्रतिष्ठास्यामइति ॥ १६ ॥ इतितृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥

यः श्वः स्तोत्रियस्तमनुरूपंकुर्वंतिप्रातःसवनेहीनसंतत्यैयथावाएकाहःसुतएवमहीनंसयथैकाहस्यसुतस्यसवनानिसं
तिष्ठमानानियंत्येवमेवाहीनस्याहानिसंतिष्ठमानानियंतितद्यच्छ्वःस्तोत्रियमनुरूपंकुर्वंतिप्रातःसवनेहीनसंतत्याअहीन
मेवतत्संतन्वंतितेवैदेवाश्चऋषयश्चाद्रियंतसमानेनयज्ञंसंतनवामेतितएतत्समानंयज्ञस्यापश्यन्त्समानान्प्रगाथान्त्समा
नीःप्रतिपदःसमानानिसूक्तान्योकःसारीवाइंद्रोयत्रवाइंद्रःपूर्वंगच्छंत्यैवतत्रापरंगच्छंतियज्ञस्यैवसंद्रतायै॥ १७॥तान्वाए
तान्त्संपातान्विश्वामित्रःप्रथमसपश्यत्तान्विश्वामित्रेणदृष्टान्वामदेवोसृजतैवात्वामिंद्रवज्रिन्नत्रंयन्नइंद्रोजुजुषेयच्चव
ष्टिकथामहामवृधत्कस्यहोतुरितितान्क्षिप्रंसमपतद्यत्क्षिप्रंसमपतत्तत्संपातानांसंपातत्वंसहेक्षांचक्रेविश्वामित्रोयान्वाअ
हंसंपातानपश्यन्तान्वामदेवोसृष्टकानिन्वहंसूक्तानिसंपातांस्तत्प्रतिमान्त्सृजेयेतिसएतानिसूक्तानिसंपातांस्तत्प्रतिमान
सृजतंसद्योहजातोवृषभःकनीनंइंद्रःपूर्भिदातिरद्दासमर्कैरिमासूषुप्रभृतिंसातयेधांइच्छंतित्वासोम्यासःसखायःशासद्व
ह्निर्दुहितुर्नप्त्यंगांदभितष्टेवदीधयामनीषामितियएकइद्धव्यश्चर्षणीनामितिभरद्वाजोयस्तिग्मशृंगोवृषभोनभीमउदुब्र
ह्माण्यैरतश्रवस्येतिवसिष्ठोऽस्माइदुप्रतवसेतुरायेतिनोधास्तएतेप्रातःसवनेषळहःस्तोत्रियान्छस्त्वामाध्यंदिनेहीनसूक्ता
निशंसंतितान्येतान्यहीनसूक्तान्यासत्योयातुमघवाँऋजीषीतिसत्यवरुणावरुणोऽस्माइदुप्रतवसेतुरायैंद्रायब्रह्माणिरा
ततमा ॥ इंद्रब्रह्माणिगोतमासोअक्रन्नितिब्रह्मण्वद्व्राह्मणाच्छंसीशासद्वह्निर्जनयंतवह्निमितिवह्निवदच्छावाकःस्तदाहुः

कस्मादच्छावाकोवह्निवदेतत्सूक्तमुभयत्रशंसतिपराचिषुचैवाहस्स्वभ्यावर्तिषुचेतिवीर्यवान्वाएषबह्वृचोवह्निवदेतत्सू
क्तंवहतिहवैवाह्निर्धुरोयासुयुज्यतेतस्मादच्छावाकोवह्निवदेतत्सूक्तमुभयत्रशंसतिपरांचिषुचैवाहस्स्वभ्यावर्तिषुचेता
निपंस्वहस्सुभवंतिचतुर्विंशेभिजितिविषुवतिविश्वजितिमहाव्रतेऽहीनानिहवाएतान्यहानिनह्येषुकिंचनहीयतेपरांची
निहवाएतान्यहान्यभ्यावर्तीनितस्मादेनान्येतेष्वहस्सुशंसंतियदेनानिशंसंत्यहीनान्त्स्वर्गाल्लोकान्त्सर्वरूपान्त्सर्वसमृ
द्धानवाप्नवामेतियदेवैनानिशंसंतींद्रमेवैतैर्निह्वयंतेयथऽऋषभंवाशितायैयद्वेवैनानिशंसंत्यहीनस्यसंतत्याअहीनमेवत
त्संतन्वंति ॥१८॥ ततोवाएतांस्त्रीन्त्संपातान्मैत्रावरुणोविपर्यासमेकैकमहरहःशंसत्येवात्वामिंद्रवज्रिन्नत्रेतिप्रथमेह
निंयन्नइंद्रोजुजुषेयच्चवष्टीतिद्वितीयेकथामहामवृधत्कस्यहोतुरितितृतीयेत्रीनेवसंपातान्ब्राह्मणाच्छंसीविपर्यासमेकैकम
हरहःशसंतींद्रःपूर्भिदातिरद्दासमर्कैरितिप्रथमेहनिंयएकइद्धव्यश्चर्षणीनामितिद्वितीयेयस्तिग्मशृंगोवृषभोनभीमइति
तृतीयेत्रीनेवसंपातानच्छावाकोविपर्यासमेकैकमहरहःशंसतीमामूषुप्रभृतिंसातयेधाइतिप्रथमेहनीच्छंतित्वासोम्यासः
सखायइतिद्वितीयेशासद्वह्निर्दुहितुर्नप्त्यंगादितितृतीयेतानिवाएतानिनवत्रीणिचाहरहःशस्यानितानिद्वादशसंपद्यंते
द्वादशवैमासाःसंवत्सरःसंवत्सरः प्रजापतिःप्रजापतिर्यज्ञस्तत्संवत्सरंप्रजापतिंयज्ञमाप्नुवंतितत्संवत्सरेप्रजापतौयज्ञेऽ
हरहःप्रतितिष्ठंतोयंतितान्यंतरेणावापमावपेरन्नन्यूंख्या विराजोवैमदीश्चचतुर्थेहनिपंक्तीःपंचमेपारुच्छेपीःषष्ठेऽथयान्य

हानिमहास्तोमानिस्युंःकोद्यनर्योदेवकामइतिमैत्रावरुणआवपेतेवनेनवायोन्यधायिचाकन्निति ब्राह्मणाच्छंस्यायाह्यर्वा
ङुपबंधुरेष्ठाइत्यच्छावाकएतानिवाआवपनान्येतैर्वाआवपनैर्देवाःस्वर्गंलोकमजयन्नेतैर्ऋषयस्तथैवैतद्यजमानाएतैराव
पनैःस्वर्गंलोकंजयंति ॥१९॥ सद्योहजातोवृषभःकनीनइतिमैत्रावरुणःपुरस्तात्सूक्तानामहरहःशंसतितदेतत्सूक्तंस्वर्ग्यं
मेतेनवैसूक्तेनदेवाःस्वर्गंलोकमजयन्नेतेनऋषयस्तथैवैतद्यजमानाएतेनसूक्तेनस्वर्गंलोकंजयंतितदुवैश्वामित्रंविश्वस्यहवै
मित्रंविश्वामित्रआसविश्वंहास्मैमित्रंभवतियएवंवेदयेषांचैवंविद्वानेतन्मैत्रावरुणःपुरस्तात्सूक्तानामहरहःशंसतितद्वृष
भवत्पशुमद्भवतिपशूनामवरुद्ध्यैतत्पंचर्चंभवतिपंचपदापंक्तिःपंक्तिर्वाअन्नमन्नाद्यस्यावरुद्ध्याउदुब्रह्माण्यैरतश्रवस्येति
ब्राह्मणाच्छंसीब्रह्मण्वत्समृद्धंसूक्तमहरहःशंसतितदेतत्सूक्तंस्वर्ग्यमेतेनवैसूक्तेनदेवाःस्वर्गंलोकमजयन्नेतेनऋषयस्तथैवैत
द्यजमानाएतेनसूक्तेनस्वर्गंलोकंजयंतितदुवासिष्ठमेतेनवैवसिष्ठइंद्रस्यप्रियंधामोपागच्छंत्सपरमंलोकमजयदुपेंद्रस्यप्रियं
धामगच्छतिजयतिपरमंलोकंयएवंवेदतद्वैषळृचंषड्वाऋतवऋतूनामाप्त्यैतदुपरिष्टात्संपातानांशंसंत्यास्वैवतत्स्वर्गंलोकंय
जमानाऽअस्मिंल्लोकेप्रतितिष्ठंत्यभितष्टेवदीधयामनीषामित्यच्छावाकोहरहःशंसत्यभिवत्तत्यैरूपमभिप्रियाणिमर्मृशत्प
राणीतियान्येवपराण्यहानितानिप्रियाणितान्येवतदभिमर्मृशतोयंत्यभ्यारभमाणाःपरोवाअस्माल्लोकात्स्वर्गोलोकस्तमे
वतदभिवदतिकवीँऽरिच्छामिसंदृशेसुमेधाइतियेवैतेनऋषयःपूर्वेप्रेतास्तेवैकवयस्तानेवतदभ्यतिवदतितदुवैश्वामित्रं

विश्वस्यहवैमित्रंविश्वामित्रआसविश्वंहास्मैमित्रंभवतिएवंवेदंतदनिरुक्तंप्राजापत्यंशंसत्यनिरुक्तोवैप्रजापतिःप्रजापते
राप्यैसक्त्वादिंद्रंनिराहंतेनैंद्राद्रूपान्नप्रच्यवतेंतद्वैदशर्चंदशाक्षराविराळन्नंविराळन्नाद्यस्यावरुद्ध्यैयदेवदशर्चा३॥ दशवैप्रा
णाःप्राणानेवतदाप्नुवंतिप्राणानात्मन्दधतेंतदुपरिष्टात्संपातानांशंसत्याप्त्वैवतत्स्वर्गंलोकंयजमानाअस्मिँल्लोकेप्रतितिष्ठं
ति॥२०॥कस्तमिंद्रत्वावसुंकन्नव्योऽअतसीनां॥कदून्वस्याकृतमितिकद्वंतःप्रगाथाआरंभणीयाअहरहःशस्यंतेकोवैप्रजा
पतिःप्रजापतेराप्त्यैयदेवकद्वंता३ः॥ अन्नंवैकमन्नाद्यस्यावरुद्ध्यैयद्वेवकद्वंता३ः॥ अहरहर्वाएतेशांतान्यहीनसूक्तान्युपप्र
युंजानायंतितानिकद्वद्भिःप्रगाथैःशमयंतितान्येभ्यःशांतानिकंभवंतितान्येनान्छांतानिस्वर्गंलोकमभिवहंतित्रिष्टुभःसू
क्तप्रतिपदःशंसेयुस्ताहैकेपुरस्तात्प्रगाथानांशंसंतिधाय्याइतिवदंतस्तात्तथानकुर्यात्क्षत्रंवैहोताविशोहोत्राशंसिनःक्षत्रा
यैवतद्विशंप्रत्युद्यामिनींकुर्युःपापवस्यसंत्रिष्टुभोमइमाःसूक्ताप्रतिपदइत्येवविद्यात्तद्यथासमुद्रंप्रप्लवेरन्नेवंहैवतेप्रप्लवंतेये
संवत्सरंवाद्वादशाहंवासतेंतद्यथासैरावतींनावंपारकामाःसमारोहेयुरेवमेवैतास्त्रिष्टुभःसमारोहंतिनहवाएतच्छंदोगम
यित्वास्वर्गंलोकमुपावर्ततेवीर्यवत्तमंहिताभ्यौनव्याह्वयीतसमानंहिच्छंदोऽथोनेद्धाय्याःकरवाणीतियदेनाःशंसंतिप्रज्ञा
ताभिःसूक्तंप्रतिपद्भिःसूक्तानिसमारोहामेतियदेवैनाःशंसंतींद्रमेवैताभिर्निह्वयंतेयथऽऋषभंवाशितायैयद्वेवैनाःशंसंत्य
हीनस्यसंतत्याअहीनमेवतत्संतन्वंति ॥२१॥ अपप्राचइंद्रविश्वाँअमित्रान्नितिमैत्रावरुणःपुरस्तात्सूक्तानामहरहःशंस

त्यपापाचोअभिभूतेनुदस्व ॥ अपोदीचोअपशूराधराचंउरौयथातवशर्मन्मदेमेत्यभयस्यरूपंमभयमिवहियन्निच्छति
ब्रह्मणातेब्रह्मयुजायुनज्मीतिंब्राह्मणाच्छंस्यहरहःशंसतिंयुनज्मीतियुक्तवतींयुक्तइवह्यहीनोहीनस्यरूपंमुरुंनोलोकमनु
नेषिविद्वान्नित्यच्छावाकोहरहःशंसत्यनुनेषुत्येतीवह्यहीनोहीनस्यरूपंनेषीतिसत्रायणरूपंतावाएताअहरहःशस्यंतेंसमा
नीभिःपरिदध्युरोकःसारीहैषामिंद्रोयज्ञंभवतीइँ॥ यथऋषभोवाशितांयथावागौःप्रज्ञातंगोष्ठमेवंहैषामिंद्रोयज्ञमैवग
च्छतिंनशुनंहुवीययाहीनस्यपरिदध्यात्क्षत्रियोहराष्ट्राच्च्यवतेंयोहैवपरोभवतितमभिह्वयति ॥२२॥ अथातोऽहीनस्ययु
क्तिश्चविमुक्तिश्चंव्यंतरिक्षमतिरदित्यहीनंयुंक्तएवेदिंद्रमितिविमुंचंत्याहंसरस्वतीवतोर्नूनंसातइत्यहीनंयुंक्तेंतेस्यामदेव
वरुणनूष्टुतइतिविमुंचंत्येषहवाअहीनंतंतुमर्हतिंयएनंयोक्तुंचविमोक्तुंचवेदंतद्यच्चतुर्विंशेहन्युज्यंतेसायुक्तिरथयत्पुरस्ता
दुदयनीयस्यांतिरात्रस्यविमुच्यंतेसाविमुक्तिस्तद्यच्चतुर्विंशेहन्नैकाहिकाभिःपरिदध्युरत्राहैवयज्ञंसंस्थापयेयुर्नाहीनकर्म
कुर्युरथयदहीनपरिधानीयाभिःपरिदध्युर्यथाश्रांतोविमुच्यमानउत्कृत्येतैवंयजमानाउत्कृत्येरन्नुभयीभिःपरिदध्युस्त
द्यथादीर्घाध्वउपविमोकंयायात्ताहक्तत्संततोहैषांयज्ञोभवतीँ ३॥ व्यूमुंचंतएकांद्वेंनद्वयोःसवनयोःस्तोममतिशंसेद्दी
र्घारण्यानिहवैभवंतिंयत्रवह्वीभिःस्तोमोतिशस्यतेंऽपरिमिताभिस्तृतीयसवनेंऽपरिमितोवैस्वर्गोलोकःस्वर्गस्यलोकस्या
प्त्यैसंततोहास्याभ्यारब्धोविस्रस्तोऽहीनोभवतिंयएवंविद्वानहीनंतनुते॥२३॥देवावैवलेगाःपर्यपश्यंस्तायज्ञेनैवेप्सं

स्ताःषष्ठेनाह्नाप्नुवँस्तेप्रातःसवनेनभाकेनंवलमनभयंस्तंयदनभयाइन् ॥ अथयन्नेवैनंतत्तउतृतीयसवनेंवज्रेणवालखि
ल्याभिर्वाचःकूटेनैकपदयांवलंविरुज्यगाउदाजँस्तथैवैतद्यजमानाःप्रातःसवनेनभाकेनंवलंनभयंतितंयंनभयंतीँ३॥ अ
थयंत्येवैनंतंत्तस्माद्धोत्रकाःप्रातःसवनैनाभाकांस्तृचान्छंसंतिंयःककुभोनिधारयइतिमैत्रावरुणःपूर्वीष्टइंद्रोपमातयइ
तिब्राह्मणाच्छंसींताहिमध्यंभराणामित्यच्छावाकस्तउतृतीयसवनेंवज्रेणवालखिल्याभिर्वाचःकूटेनैकपदयांवलंविरुज्य
गाआप्नुवंतिंपच्छःप्रथमंषड्वालखिल्यानांसूक्तानिविहरंत्यर्धर्चशोद्वितीयमृक्शस्तृतीयँसपच्छोविहरन्प्रगाथेप्रगाथएवैं
कपदादध्यात्सवाचःकूटंस्ताएताःपंचैकपदाश्चतस्रोंदशमादह्नएकामहाव्रतांदथाष्टाक्षराणिमाहानामनानिपदानिंतेषां
यावद्भिःसंपद्येतंतावंतिशंसेन्नेतराण्याद्रियेतांथार्धर्चशोविहरँस्ताश्चैवैकपदाःशंसैत्तानिचैवाष्टाक्षराणिंमाहानामनानि
पदांन्यथऋक्शोविहरँस्ताश्चैवैकपदाःशंसैत्तानिचैवाष्टाक्षराणिंमाहानामनानिपदानिंसयत्प्रथमंषड्वालखिल्यानांसूक्ता
निविहरतिंप्राणंचतद्वाचंचविहरतिंयद्वितीयंचक्षुश्चतन्मनश्चविहरतिंयत्तृतीयंश्रोत्रंचतदात्मानंचविहरतिंतदुपाप्तोवि
हारेकामंउपाप्तोवज्रेवालखिल्यासुंपाप्तोवाचःकूटंएकपदायामुपाप्तंःप्राणक्लृप्स्यामविहृतानेवंचतुर्थंप्रगाथान्छंसतिंपश
वोवैप्रगाथाःपशूनामवरुध्यैनात्रैकपदांव्यवदध्यांद्यदत्रैकपदांव्यवदध्यांद्वाचःकूटेनयजमानात्पशून्निर्हण्याद्यएनंतत्रब्रू

यांद्वाचः कूटेनयजमानात्पशून्निरवधीरपशुमेनमकरितिशश्वत्तथास्यात्तस्मात्तत्रैकपदंनव्यवदध्याद्वेवोत्तमेसूक्तेपर्यस्य
तिसएवतयोर्विहारस्तदेतत्सौवलायसर्पिर्वात्सिःशशंससहोवाचभूयिष्ठानहंयजमानेपशून्पर्यग्रहैषमकनिष्ठाउमामाग
मिष्यंतीतितस्मैहयथामहज्जंकृत्विग्भ्यएवंनिनायतदेतत्पशव्यंचस्वर्ग्यंचशस्त्रंतस्मादेतच्छंसति॥२४॥दूरोहणंरोहतित
स्योक्तंब्राह्मणंमैंद्रेपशुकामस्यरोहेदैंद्रावैपशवस्तज्जागतंस्याज्जागतावैपशवस्तन्महासूक्तंस्याद्भूयिष्ठेष्वेवतत्पशुषुयजमा
नंप्रतिष्ठापयतिवरौरोहेत्तन्महासूक्तंचजागतंचैंद्रावरुणेप्रतिष्ठाकामस्यरोहेदेतद्वेवतावाएषाहोत्रैतत्प्रतिष्ठायदैंद्रावरु
णातदेनत्स्वायामेवप्रतिष्ठायामंततःप्रतिष्ठापयतियदेवैंद्रावरुणा३इ॥ एषाह्वाअत्रनिर्विन्निविदावैकामाआप्यंतेसय
द्यैंद्रावरुणेरोहेत्सौपर्णेरोहेत्तदुपाप्तऐंद्रावरुणेकामउपाप्तःसौपर्णे ॥२५॥ तदाहुःसंशंसेत्षष्ठेहा३न्॥ नसंशंसे३त्इति ॥
संशंसेदित्याहुःकथमन्येष्वहःसुसंशंसतिकथमत्रनसंशंसेदित्यथोखल्वाहुर्नैवसंशंसेत्स्वर्गोवैलोकःषष्ठमहरसमायीवैस्व
र्गोलोकःकश्चिद्धैस्वर्गेलोकेसमेतीतिसयत्संशंसेत्समानंतत्कुर्यादथयन्नसंशंसतीँ३ ॥ तत्स्वर्गस्यलोकस्यरूपंतस्मान्नसंशंसे
द्यदेवनसंशंसतीँ३ ॥ आत्मावैस्तोत्रियःप्राणावालखिल्याःसयत्संशंसेदेताभ्यांदेवताभ्यांयजमानस्यप्राणान्वीयाद्यए
नंतत्रब्रूयादेताभ्यांदेवताभ्यांयजमानस्यप्राणान्व्यगात्प्राणएनंहास्यतीतिशश्वत्तथास्यात्तस्मान्नसंशंसेत्सयदीक्षेतांशंसि

---

१ 'द्वेएवोत्तमे' इतिभाष्यपाठः ।

षंवालखिल्याहंतपुरस्ताद्दूरोहणस्यसंशंसानीतिंनोएवतस्याशामियात्तंयदिदर्पएवविंदेदुपरिष्टाद्दूरोहणस्यापिवहूनिश
तानिशंसेद्यस्योतत्कामायतथाकुर्यादत्रैवतदुपाप्तमैंद्र्योवालखिल्यास्तासांद्वादशाक्षराणिपदानितत्रसकामउपाप्तोयऐंद्रे
जागतेऽथेदमैंद्रावरुणंसूक्तमैंद्रावरुणीपरिधानीयातस्मान्नसंशंसेत्तदाहुर्यथावावस्तोत्रमेवंशस्त्रंविहृतावालखिल्याःश
स्यंतेंविहृतांस्तोत्रां ३ ॥ अविहृताँ३इति ॥ विहृतमितिब्रूयादष्टाक्षरेणद्वादशाक्षरमितितदाहुर्यथावावशस्त्रमेवंयाज्या
तिस्रोदेवताःशस्यंतेऽग्निरिंद्रोवरुणइत्यथैंद्रावरुण्यायजतिकथमग्निरनंतरितइतियोवाअग्निःसवरुणस्तदप्येतदृषिणोक्तं
त्वमग्नेवरुणोजायसेयदितितद्यदेवैंद्रावरुण्यायजतितेनाग्निरनंतरितोनंतरितः ॥ २६ ॥ इतिचतुर्थोऽध्यायः ॥ ४ ॥

शिल्पानिशंसंतिदेवशिल्पान्येतेषांवैशिल्पानामनुकृतीहशिल्पमधिगम्यतेहस्तीकंसोवासोहिरण्यमश्वतरीरथःशिल्पं
शिल्पंहास्मिन्नधिगम्यतेयएवंवेदवदेवशिल्पानीइँ ॥ आत्मसंस्कृतिर्वावशिल्पानिच्छंदोमयंवाएतैर्यजमानआत्मानंसं
स्कुरुतेनाभानेदिष्ठंशंसतिरेतोवैनाभानेदिष्ठोरेतस्तत्सिंचतितमनिरुक्तंशंसत्यनिरुक्तंवैरेतोगुहायोन्यांसिच्यतेसरेतोमि
श्रोभवतिक्ष्मयारेतःसंजग्मानोनिषिंचदितिरेतःसमृद्ध्याएवंतंसनाराशंसंशंसतिप्रजावैनरोवाक्शंसःप्रजास्वेवतद्वाचंद
धातितस्मादिमाःप्रजावदत्योजायंतेतंहैकेपुरस्ताच्छंसंतिपुरस्तादायतनावागितिवदंतउपरिष्टादेकउपरिष्टादायतनावा

१ 'विहृतंस्तोत्रां३' इतिभाष्यपाठः । विहृतमविहृतंचस्तोत्रभेदः ।

गितिवदंतोमध्यएवशंसेन्मध्यायतनावाइयंवागुपरिष्टान्नेदीयसीवोपरिष्टान्नेदीयसीववाइयंवाक्कंहोतारेतोभूतंसिक्त्वा मैत्रावरुणायसंप्रयच्छत्यैतस्यत्वंप्राणान्कल्पयेति ॥ २७॥ वालखिल्याःशंसतिप्राणावैवालखिल्याःप्राणानेवास्यतत्क ल्पयतितांविहृताःशंसतिविहृतावाइमेप्राणाःप्राणेनापानोपानेनव्यानःसपच्छःप्रथमेसूक्तेविहरत्यर्धर्चशोद्वितीयेऋक्श स्तृतीयेसयत्प्रथमेसूक्तेविहरतिप्राणंचतद्वाचंचविहरतियद्वितीयेचक्षुश्चमनश्चविहरतियत्तृतीयेश्रोत्रंचतदात्मानंचवि हरतितेहैकसहबृहत्यौसहसतोबृहत्यौविहरंतितदुपाप्तोविहारेकामोनेत्तुप्रगाथाःकल्पंतेऽतिमर्शमेवविहरेत्तथावैप्रगाथाः कल्पंतेप्रगाथावैवालखिल्यास्तस्मादतिमर्शमेवविहरेद्यदेवातिमर्शा३ ॥ आत्मावैबृहतीप्राणाःसतोबृहतीसबृहतीमशं सीत्सआत्माऽथसतोबृहतींतेप्राणाअथबृहतीमथसतोबृहतींतदात्मानंप्राणैःपरिबृहन्नेतितस्मादतिमर्शमेवविहरेद्यद्वेवा तिमर्शा३ ॥ आत्मावैबृहतीपशवःसतोबृहतीसबृहतीमशंसीत्सआत्माऽथसतोबृहतींतेपशवोऽथबृहतीमथसतोबृहतीं तदात्मानंपशुभिःपरिबृहन्नेतितस्मादतिमर्शमेवविहरेद्ध्येवोत्तमेसूक्तेपर्यस्यतिसएवतयोर्विहारस्तस्यमैत्रावरुणःप्राणा न्कल्पयित्वांब्राह्मणाच्छंसिनेसंप्रयच्छत्येतंत्वंप्रजनयेति ॥ २८ ॥ सुकीर्तिंशंसतिदेवयोनिर्वैसुकीर्तिस्तद्यज्ञाद्देवयोन्यै यजमानंप्रजनयतिवृषाकपिंशंसत्यात्मावैवृषाकपिरात्मानमेवास्यतत्कल्पयतितन्न्यूंखयत्यन्नंवैन्यूंखस्तदस्मैजातायान्ना

१ 'द्वेएवोत्तमे' इतिभाष्यपाठः ।

द्यंप्रतिदधातिंयथाकुमारायस्तनंसपाक्तोभवतिंपाक्तोयंपुरुषः पंचधाविहितोंलोमानित्वङ्मांसमस्थिमज्जांसयावानेवपुरु
षस्तावंतंयजमानंसंस्करोतितंब्राह्मणाच्छंसीजनयित्वांऽच्छावाकायसंप्रयच्छंत्येतस्यत्वंप्रतिष्ठांकल्पयेति ॥ २९ ॥
एवयामरुतंशंसतिंप्रतिष्ठावाएवयामरुंत्प्रतिष्ठामेवास्यतत्कल्पयतितन्त्र्यूंखयत्यन्नंवैन्यूंखोंऽन्नाद्यमेवास्मिंस्तद्दधातिंस
जागतोवातिजागतोवांसर्वंवाइदंजागतंवातिंजागतंवासउमारुतंआपोवैमरुतआपोन्नंमभिपूर्वमेवास्मिंस्तदन्नाद्यंदधातिं
तान्येतानिसहचराणीत्याचक्षतेंनाभानेदिष्ठंवालखिल्यांवृषाकपिमेवयामरुतंतानिसहवाशंसेत्सहवानशंसैद्यदेनानिना
नाशंसेंद्यथापुरुषंवारेतोवाविच्छिंद्यात्तादृक्तंत्तस्मादेतानिसहवाशंसेत्सहवानशंसैंत्सहबुलिलआश्वतरंआश्विवैंश्वजितो
होतासन्नीक्षांचक्रंएषांवाएषांशिल्पानांविश्वजितिसांवत्सरिकेद्वेंमध्यंदिनमभिप्रत्येतोहंताहंमित्थमेवयामरुतंशंसया
नीतिंतद्धतथाशंसयांचकारंतद्धतथाशस्यमानेंगौश्लआजगामसहोवाचंहोतःकथातेशस्त्रंविचक्रंप्लवतइतिंकिंह्यभूदित्ये
वयामरुदंयमुत्तरतःशस्यतइतिंसहोवाचैंद्रोवैमध्यंदिनंःकथेंद्रंमध्यंदिनान्निनीषसीतिंनेंद्रंमध्यंदिनान्निनीषामीतिहोवा
चंच्छंदस्त्विदममध्यंदिनसांच्ययंजागतोवातिजागतोवांसर्वंवाइदंजागतंवातिजागतंवांसउमारुतोमैवशंसिष्टेतिंसहोवा
चारमाच्छावाकेंत्यथहास्मिन्ननुशासनमीषेंसहोवाचैंद्रमेषविष्णुंन्यंगंशंसंत्वथत्वमेतंहोतरुपरिष्टाद्रौद्र्यैधाय्यायैपुरस्तां
न्मारुतस्याप्यस्याथाइतिंतद्धतथाशंसयांचकारंतदिदमप्येतर्हिंतथैवशस्यते॥ ३० ॥ तदाहुर्यदस्मिन्विश्वजित्यतिरा

त्रएवंषष्ठेहनिकल्पतेयज्ञःकल्पतेयजमानस्यप्रजातिःकथमत्राशस्तएवंनाभानेदिष्ठोभवंत्यथमैत्रावरुणोवालखिल्याःशं
सतितेप्राणारेतोवाअग्रेथप्राणांएवंब्राह्मणाच्छंस्यशस्तएवंनाभानेदिष्ठोभवंत्यथवृषाकपिंशंसतिसआत्मारेतोवाअग्रेथा
त्मांकथमत्रयजमानस्यप्रजातिःकथंप्राणाअविक्लृप्ताभवंतीतियजमानंहवाएतेनसर्वेणयज्ञक्रतुनासंस्कुर्वंतिसयथागर्भो
योन्यामंतरेवंसंभवञ्छेतेनवैसकृदेवाग्रेसर्वःसंभवंत्येकैकंवाअंगंसंभवतःसंभवतीतिसर्वाणिचेत्समानेहन्क्रियेरन्कल्पत
एवयज्ञःकल्पतेयजमानस्यप्रजातिरथैतंहोतैवयामरुतंतृतीयसवनेशंसतितद्यास्यप्रतिष्ठातस्यामेवैनंतदंततःप्रतिष्ठाप
यति ॥ २१ ॥ छंदसांवैषष्ठेनाह्नाप्तानांरसोत्यनेदत्सप्रजापतिरबिभेत्पराङयंछंदसांरसोलोकानत्येष्यतीतितंपरस्ता
च्छंदोभिःपर्यगृह्णान्नाराशंस्यागायत्र्यारैभ्यात्रिष्टुभःपारिक्षित्याजगत्याःकारव्ययानुष्टुभस्तत्पुनश्छंदःसुरसमदधात्सर
सैर्हास्यच्छंदोभिरिष्टंभवतिसरसैश्छंदोभिर्यज्ञंतनुतेयऽएवंवेदनाराशंसीःशंसतिप्रजावैनरोवाक्शंसःप्रजास्वेवतद्वाचंद
धातितस्मादिमाःप्रजावदत्योजायंतेयएवंवेदयदेवनाराशंसी३ः ॥ शंसंतोवैदेवाश्चऋषयश्चस्वर्गंलोकमायंस्तथैवैतद्यज
मानाःशंसंतएवस्वर्गंलोकंयंतिताःप्रग्राहंशंसतियथावृषाकपिंवार्षाकपांहिवृषाकपेस्तन्न्यायमेतितासुनन्यूंखयेन्नीवीवनदें
त्सहितासांन्यूंखोरैभीःशंसतिरेभंतोवैदेवाश्चऋषयश्चस्वर्गंलोकमायंस्तथैवैतद्यजमानारेभंतएवस्वर्गंलोकंयंतिताःप्रग्राहं



शंसतियथावृषाकपिंवार्षाकपांहिवृषाकपेस्तन्न्यायमेतितासुनन्यूंखयेन्नीवीवनदेंत्सहितासांन्यूंखःपारिक्षितीःशंसत्यग्नि

वैंपरिक्षिंदग्निर्हीमाःप्रजाःपरिक्षैत्यग्निंहीमाःप्रजाःपरिक्षियंत्यग्नेरेवसायुज्यंसरूपतांसलोकतामश्नुतेयएवंवेदयदेवपारि
क्षितीः ॥ संवत्सरोवैपरिक्षित्संवत्सरोहीमाःप्रजाःपरिक्षेतिसंवत्सरंहीमाःप्रजाःपरिक्षियंतिसंवत्सरस्यैवसायुज्यंसरूप
तांसलोकतामश्नुतेयएवंवेदंताःप्रग्राहंशंसतियथावृषाकपिंवार्षाकपंहिवृषाकपेस्तद्व्यायमेतितासुनन्यूंखयेन्नीवीवनर्देत्स
हितासांन्यूंखंःकारव्याःशंसतिदेवावैयत्किंचकल्याणंकर्माकुर्वंस्तत्कारव्याभिरवाप्नुवंस्तथैवैतद्यजमानायत्किंचकल्याणं
कर्मकुर्वंतितत्कारव्याभिराप्नुवंतिताःप्रग्राहंशंसतियथावृषाकपिंवार्षाकपंहिवृषाकपेस्तद्व्यायमेतितासुनन्यूंखयेन्नीवीव
नर्देत्सहितासांन्यूंखोदिशांक्लृप्तीःशंसतिदिशएवतत्कल्पयंतिताःपंचशंसतिपंचवाइमादिशश्चतस्रस्तिरश्च्यएकोर्ध्वातासु
नन्यूंखयेन्नैवचनिनर्देन्नेदिमादिशोन्यूंखयानीतिताअर्धर्चशःशंसतिप्रतिष्ठायाएवंजनकल्पाःशंसतिप्रजावैजनकल्पादि
शएवतत्कल्पयित्वातासुप्रजाःप्रतिष्ठापयतितासुनन्यूंखयेन्नैवैवचनिनर्देन्नेदिमाःप्रजान्यूंखयानीतिताअर्धर्चशःशंसति
प्रतिष्ठायावैंद्रगाथाःशंसतींद्रगाथाभिर्वैदेवाअसुरानभिगायाथैनानत्यायंस्तथैवैतद्यजमानाइंद्रगाथाभिरेवाप्रियंभ्रातृ
व्यमभिगायाथैनमतियंतिताअर्धर्चशः शंसतिप्रतिष्ठायाएव॥ ३२॥ ऐतशप्रलापंशंसत्यैतशोहवैमुनिरग्नेरायुर्ददर्शयज्ञ
स्यायातयाममितिहैकआहुःसोब्रवीत्पुत्रान्पुत्रकाअग्नेरायुरदर्शंतदभिलपिष्यामियत्किंचवदामितन्मेमापरिगातेतिस
प्रत्यपद्यतैताअश्वाआप्लवंतेंप्रतीपंप्रातिसत्वनमितितस्याभ्यग्निरैतशायनंएत्याकालेभिहायमुखमप्यगृह्णाददृपन्नःपिते

तितंहोवाचापेह्यलसोभूर्योमेवाचमवधीः शतायुंगामकरिष्यंसहस्रायुंपुरुषंपापिष्ठांतेप्रजांकरोमियोमेत्थमसक्थाइतित
स्मादाहुरभ्यग्नयऐतशायनाऔर्वाणांपापिष्ठाइतितंहैकेभूयांसंशंसंतिसननिषेधेद्यावत्कामंशंसेत्येवब्रूयादायुर्वाऐतशप्र
लापआयुरेवतद्यजमानस्यप्रतारयतियएवंवेदंयदेवैतशप्रलापा३ः ॥ छंदसांहैषरसोयदैतशप्रलापश्छंदस्स्वेवतद्रसं
दधातिसरसैर्हास्यच्छंदोभिरिष्टंभवतिसरसैश्छंदोभिर्यज्ञंतनुतेयएववंवेदयद्वेवैतशप्रलापा३ः ॥ अयातयामावाअक्षिति
रैतशप्रलापोयातयामामेयज्ञेसदक्षितिर्मेयज्ञेसदितितंवाएतमैतशप्रलापंशंसतिपदावग्राहंयथानिविदंतस्योत्तमेनपदेन
प्रणौतियथानिविदःप्रवह्लिकाःशंसतिप्रवह्लिकाभिर्वैदेवाअसुरान्प्रवह्लचाथैनानत्यायंस्तथैवैतद्यजमानाःप्रवह्लिकाभिरे
वाप्रियंभ्रातृव्यंप्रवह्ल्याथैनमतियंतितिताअर्धर्चशःशंसतिप्रतिष्ठायाएवाऽजिज्ञासेन्याःशंसत्याजिज्ञासेन्याभिर्वैदेवाअ
सुरानाज्ञायांऽथैनानत्यायंस्तथैवैतद्यज माना आजिज्ञासेन्याभिरेवाप्रियंभ्रातृव्यमाज्ञायाथैनमतियंतिताअर्धर्चशःशंस
तिप्रतिष्ठायाएवंप्रतिराधंशंसतिप्रतिराधेनवैदेवाऽअसुरान्प्रतिराध्याथैनानत्यायंस्तथैवैतद्यजमानाःप्रतिराधेनैवाप्रि
यंभ्रातृव्यंप्रतिराध्याथैनमतियंत्यतिवादंशंसत्यतिवादेनवैदेवाअसुरानत्युद्याथैनानत्यायंस्तथैवैतद्यजमानाअतिवादे
नैवाप्रियंभ्रातृव्यमत्युद्याथैनमतियंतितमर्धर्चशःशंसतिप्रतिष्ठायाएव ॥ ३२ ॥ देवनीथंशंसत्यादित्याश्चहवाअंगि
रसश्चस्वर्गेलोकेस्पर्धंतवयंपूर्वएष्यामोवयमितितेहांगिरसःपूर्वेश्वःसुत्यांस्वर्गस्यलोकस्यददृशुस्तेऽग्निंप्रजिघ्युरंगिरसांवा

॥ १३ ॥

एकोऽग्निः परेह्यादित्येभ्यः श्वः सुत्यां स्वर्गस्य लोकस्य प्रब्रूहीति ते हादित्या अग्निमेव दद्दशुः स द्यः सुत्यां स्वर्गस्य लोकस्य ददृशुस्ता
नेत्याब्रवीच्छ्वः सुत्यां वः स्वर्गस्य लोकस्य प्रब्रूम इति ते होचुरथ वयं तुभ्यं सद्यः सुत्यां स्वर्गस्य लोकस्य प्रब्रूमस्त्वयैव वयं होत्राः स्व
र्गं लोकमेष्याम इति स तथेत्युक्त्वा प्रत्युक्तः पुनराजगाम ते होचुः प्रावोचा३ः ईति[1] ॥ प्रावोचमिति होवाचाथो मे प्रतिप्रावो
चन्निति नो हि न प्रत्यज्ञास्था३ः इति ॥ प्रति वा अज्ञासमिति होवाच यशसा वा एषोऽभ्यैति य आर्त्विज्येन तं यः प्रतिरुंधे यशः
स प्रतिरुंधे तस्मान्न प्रत्यरौत्सीति यदि त्वस्मादपोज्जिगांसेद्यज्ञेनास्मादपोदियात् ॥ यदि त्वयाज्यः स्वयमपोदितं तस्मात्
॥ ३४ ॥ ते हादित्यानंगिरसो याजयंस्तेभ्यो याजयद्भ्य इमां पृथिवीं पूर्णां दक्षिणानामददुस्तानियं प्रतिगृहीतातपत्तान्यवृं
जन्त्सा सिंही भूत्वा विजृंभंती जनानचरत्तस्याः शोचत्या इमे प्रदराः प्रादीर्यंत ये स्या इमे प्रदराः समेव हैव ततः पुरा तस्मादा
हुर्न निवृत्तदक्षिणां प्रतिगृह्णीयान्नेन्मा शुचा विद्धा शुचा विध्यादिति यदि त्वेनां प्रतिगृह्णीयाद् प्रियायैनां भ्रातृव्याय दद्यात्प
राहैव भवत्यथ यो सौ तपतीँ३ ॥ एषोऽश्वः श्वेतो रूपं कृत्वाऽश्वाभिधान्यपिहितेनात्मना प्रतिचक्रमं इमं वो नयाम इति स एष
देवनीथो नूच्यतं आदित्या ह जरितरंगिरोभ्यो दक्षिणामनयन् ॥ तां ह जरितर्न प्रत्यायन्निति न हि त इमां प्रत्यायँस्तामु ह
जरितः प्रत्यायन्निति प्रति हि ते मुमायँस्तां ह जरितर्न प्रत्यगृभ्णन्निति न हि त इमां प्रत्यगृभ्णँस्तामु ह जरितः प्रत्यगृभ्णन्निति प्र

॥ ८९ ॥

---

१ 'इतिप्रोवाचमिति' अत्रावसानंनभाष्यकाराभिसतं ।

तिहितेमुसगृभ्णंन्नहानेतसंनविचेतनानींत्येषहवाअह्वांविचेतायितांजज्ञानेतसन्नपुरोगवासइतिंदक्षिणावैयज्ञानांपुरोग
वींयथाहवाइदमनोपुरोगवंरिष्यंत्येवंहैंवयज्ञोदक्षिणोरिष्यंतिंतस्मादाहुर्दातव्यैवयज्ञेदक्षिणाभवंत्यप्यल्पिकाप्युतश्वेत
आशुपत्वा ॥ उतोपद्याभिर्जविष्ठः ॥ उतेमाशुमानंपिपर्ति ॥ आदित्यारुद्रावसवस्त्वेळते ॥ इदंराधःप्रतिगृभ्णीह्यं
गिरइतिंप्रतिग्रहमेवतद्राधसऐच्छंन्निदंराधोबृहत्पृथु ॥ देवाददत्वावरं ॥ तद्वोअस्तुसुचेतनं ॥ युष्मेअस्तुदिवेदिवे ॥
प्रत्येवगृभायतेतिंप्रत्येवैनमेतदजग्रभैषंतंवाएतंदेवनीथंशंसतिंपदावग्राहंयथानिविदंतस्योत्तमेनपदेनप्रणौतियथानिवि
दः ॥ ३५ ॥ भूतेच्छदःशंसतिंभूतेच्छद्भिर्वैदेवाअसुरानुपासचंतोंतेवयुद्धेनोतेवमायया तेषांवैदेवाअसुराणांभूतेच्छ
द्भिरेवभूतंछादयित्वांथैनानत्यायंस्तथैवैतद्यजमानांभूतेच्छद्भिरेवाप्रियस्यभ्रातृव्यस्यंभूतंछादयित्वाथैनमतियंतिंता
अर्धर्चशःशंसतिप्रतिष्ठायाएवांऽहनस्याःशंसंत्याहनस्याद्धैरेतःसिच्यतेंरेतसःप्रजाःप्रजायंतेंप्रजातिमेवतद्दधातिंतादश
शंसतिंदशाक्षराविराळंन्नंविराळन्नाद्रेतःसिच्यतेंरेतस ःप्रजाःप्रजायंतेंप्रजातिमेवतद्दधातिंतान्यूंखयत्यन्नंवैन्यूंखोंन्नाद्रे
तःसिच्यतेंरेतसःप्रजाःप्रजायंतेंप्रजातिमेवतद्दधातिंदधिक्राव्णोअकारिषमितिदाधिक्रींशंसतिंदेवपवित्रंवैदधिक्रांइदं
वाइदंव्याहनस्यांवाचमवादींत्तद्देवपवित्रेणवाचंपुनीतेंसानुष्टुब्भवतिंवाग्वाअनुष्टुंप्स्वेनच्छंदसावाचंपुनीतेंसुतासोम
धुमत्तमाइतिंपावमानीःशंसतिंदेवपवित्रंवैपावमान्यंइदंवाइदंव्याहनस्यांवाचमवादींत्तद्देवपवित्रेणैववाचंपुनीतेंताअ

नुष्टुभोभवंतिवाग्वा अनुष्टुप्सर्वस्वेनैवच्छंदसावाचंपुनीतेऽवद्रप्सोअंशुमतीमतिष्ठदित्यैंद्राबार्हस्पत्यंतृचंशंसतिविशोअदे
वीरभ्याचरंतीर्बृहस्पतिनायुजेंद्रः ससाहइत्यसुरविशंहवैदेवानभ्युदाचार्यआसीत्सइंद्रोबृहस्पतिनैवयुजाऽसुर्यंवर्णमभि
दासंतमपाहंस्तथैवैतद्यजमानाइंद्राबृहस्पतिभ्यामेवयुजाऽसुर्यंवर्णमभिदासंतमपघ्नतेतदाहुःसंशंसेत्षष्ठेहा ३ न् ॥ नसं
शंसे ३ त् इति ॥ संशंसेदित्याहुःकथमन्येष्वहःसुसंशंसतिकथमत्रनसंशंसेदित्यथोखल्वाहुर्नैवसंशंसेत्स्वर्गोवैलोकःषष्ठम
हःसमायीवैस्वर्गोलोकःकश्चिद्वैस्वर्गेलोकेसमेतीतिसयत्संशंसेत्समानंतत्कुर्यादथयन्नसंशंसती ३ ॥ तत्स्वर्गस्यलोकस्यरू
पंतस्मान्नसंशंसेद्यदेवनसंशंसती ३ ॥ एतानिवाअत्रोक्थानिनाभानेदिष्ठोवालखिल्यावृषाकपिरेवयामरुत्सयत्संशंसेद
पैवसएतेषुकामंराध्नुयादैंद्रोवृषाकपिःसर्वाणिच्छंदांस्यैतशप्रलापस्तत्रसकाममुपाप्नोयऐंद्रेजागतेऽथेदमैंद्राबार्हस्पत्यंसूक्त
मैंद्राबार्हस्पत्यापरिधानीयातस्मान्नसंशंसेन्नसंशंसेत् ॥ ३६ ॥ इतिपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥

॥ इतिषष्ठपंचिकासमाप्ता ॥

श्रीगणेशायनमः ॥ हरिःॐ ॥ अथातःपशोर्विभक्तिस्तस्यविभागंवक्ष्यामोहनूसजिह्वेप्रस्तोतुःश्येनंवक्षउद्गातुः
कंठःकाकुद्रःप्रतिहर्तुर्दक्षिणाश्रोणिर्होतुःसव्याब्रह्मणोदक्षिणंसक्थिमैत्रावरुणस्यसव्यंब्राह्मणाच्छंसिनोदक्षिणंपार्श्वंसांस
मध्वर्योःसव्यमुपगातॄणांसव्योंसःपतिप्रस्थातुर्दक्षिणंदोर्नेष्टुःसव्यंपोतुर्दक्षिणऊरुरच्छावाकस्यसव्यआग्नीध्रस्यदक्षिणो
बाहुरात्रेयस्यसव्यःसदस्यस्यसदंचानूकंचगृहपतेर्दक्षिणौपादौगृहपतेर्व्रतप्रदस्यसव्यौपादौगृहपतेर्भार्यायैव्रतप्रदस्यौष्ठ
एनयोःसाधारणोभवतितंगृहपतिरेवप्रशिंष्याज्जाघनींपत्नीभ्योहरंतितांब्राह्मणायदद्युःस्कंध्याश्चमणिकास्तिस्रश्चकीक
साग्रावस्तुतस्तिस्रश्चैवकीकसाअर्धंचवैकर्तस्योन्नेतुरर्धंचैववैकर्तस्यक्लोमाचशमितुस्तद्ब्राह्मणायदद्याद्यद्यब्राह्मणःस्याच्छि
रःसुब्रह्मण्यायैयःश्वःसुत्यांप्राहतस्याजिनमिळासर्वेषांहोतुर्वातावाएताःषट्त्रिंशतमेकपदायज्ञंवहंतिषट्त्रिंशदक्षरावैबृह
तीबार्हताःस्वर्गालोकाःप्राणांश्चैवतत्स्वर्गांश्चलोकानाप्नुवंतिप्राणेषुचैवतत्स्वर्गेषुचलोकेषुप्रतितिष्ठंतोयंतिसएषःस्वर्ग्यः
पशुर्यएनमेवंविभजंत्यथयेतोन्यथातद्यथासेलगावा[1]पापकृतोवापशुंविमथ्नीरंस्तादृक्तत्तांवाएतांपशोर्विभक्तिंश्रौतऋषिर्दे
वभागोविदांचकारतामुहाप्रोच्यैवास्माल्लोकादुच्चक्रामत्तामुहगिरिजायबाभ्रव्यायामनुष्यःप्रोवाचततोहैनामेतदर्वा
ङ्मनुष्याअधीयतेधीयते ॥ १ ॥ इतिप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥



---

१ ‘सेलगावा’ इतिभाष्ये । इलाशब्देनान्नं सेलमत्रबहुलोदेशस्तंगच्छतीतिसेलगाइतितत्रार्थः ।

तदाहुर्यआहिताग्निरुपवसथेम्रियेतंकथमस्ययज्ञःस्यादितिंनैनंयाजयेदित्याहुरंनभिप्राप्तोहियज्ञंभवतीतितदाहुर्य
आहिताग्निरधिश्रितेग्निहोत्रेंसान्नाय्येवाहविःषुवाम्रियेतंकातत्रप्रायश्चित्तिरिंत्यत्रैवैनान्यनुपर्यादध्यांद्यथासर्वाणिसंद
ह्येरंन्त्सातत्रप्रायश्चित्तिंस्तदाहुर्यआहिताग्निंरासन्नेषुहविःषुम्रियेतंकातत्रप्रायश्चित्तिरितिंयाभ्यएवतानिदेवताभ्योंहवीं
षिगृहीतानिभवंतिंताभ्यःस्वाहेंत्येवैनान्याहवनीयेंसर्वहुंतिजुहुयांत्सातत्रप्रायश्चित्तिंस्तदाहुर्यआहिताग्निःप्रवसन्म्रियेत
कथमस्याग्निहोत्रंस्यादिंत्यभिवान्यवत्सायाःपयसाजुहुयादंन्यदिवैतत्पयोंयदभिवान्यवत्सायांअन्यदिवैतदग्निहोत्रंय
त्प्रेतस्यापिवायतएवंकुतश्चपयसाजुहुयुंरथाप्याहुरेवमेवैनानजस्रानजुहृतंइंधीरन्नाशरीराणामाहर्तोरितिंयदिशरीराणि
नविद्येरंन्पर्णशरःषष्टिस्त्रीणिचशतान्याहृत्यंतेषांपुरुषरूपकमिवकृत्वांतास्मिंस्तामावृतंकुर्युंरथैनान्छरीरैराहृतैःसंस्पर्श्यो
द्वासयेयुंरध्यर्धशतंकायेंसक्थिनीद्विपंचाशेचंविंशेचोरूद्विपंचविंशेंशेषंतुशिरस्युपरिदध्यांत्सातत्रप्रायश्चित्तिः ॥ २ ॥
तदाहुर्यस्याग्निहोत्र्युपावसृष्टांदुह्यमानोपविशेंत्कातत्रप्रायश्चित्तिरितिंतामभिमंत्रयेतंयस्माद्भीषानिषीदसिंततोनोअभ
यंकृधि ॥ पशून्नःसर्वान्गोपायंनमोरुद्रायमीढुषइतिंतामुत्थापयेंदुदस्थाद्देव्यदितिंरायुर्यज्ञपतावधात् ॥ इंद्रायकृण्व
तीभागंमित्रायवरुणायचेत्यथास्याउदपात्रंमूधसिचमुखेचोपगृह्णीयांदथैनांब्राह्मणायदद्यांत्सातत्रप्रायश्चित्तिंस्तदाहुर्य
स्याग्निहोत्र्युपावसृष्टांदुह्यमानावाश्येतंकातत्रप्रायश्चित्तिरिंत्यशनायाहिवाएषांयजमानस्यप्रतिख्यायवाश्यतेंतामन्नम

प्यादयेच्छांत्यैशांतिर्वाऽअन्नंसूयवसाद्भगवतीहिभूयाइतिंसातत्रप्रायश्चित्तिंस्तदाहुर्यस्याग्निहोत्र्युपावसृष्टांदुह्यमाना
स्पंदेतंकातत्रप्रायश्चित्तिरितिंसायत्तत्रस्कंदयेत्तदभिमृश्यजपेद्यदद्यदुग्धंपृथिवीमसृप्तंयदोषधीरत्यसृपद्यदापः ॥ पयो
गृहेषुपयोअघ्न्यायांपयोवत्सेषुपयोअस्तुतन्मयीतिंतत्रयत्परिशिष्टंस्यात्तेनजुहुयांद्यद्यलंहोमायस्यांद्यद्युवैसर्वंसिक्तंस्यांद
थान्यामाहूयतांदुग्ध्वातेनजुहुयांदात्वेवश्रद्धायैहोतव्यंसातत्रप्रायश्चित्तिः ॥३॥ तदाहुर्यस्यसायंदुग्धंसान्नाय्यंदुष्येद्वा
पहरेद्वांकातत्रप्रायश्चित्तिरितिंप्रातर्दुग्धंद्वैधंकृत्वांतस्यान्यतरांभक्तिमातच्यतेनयजेतंसातत्रप्रायश्चित्तिंस्तदाहुर्यस्यप्रा
तर्दुग्धंसान्नाय्यंदुष्येद्वापहरेद्वांकातत्रप्रायश्चित्तिरिंत्यैंद्रंवामाहेंद्रंवापुरोळाशंतस्यस्थानेनिरुप्यतेनयजेतंसातत्रप्रायश्चि
त्तिंस्तदाहुर्यस्यसर्वमेवंसान्नाय्यंदुष्येद्वापहरेद्वांकातत्रप्रायश्चित्तिरिंत्यैंद्रंवामाहेंद्रंवेतिसमानंसातत्रप्रायश्चित्तिंस्तदाहुर्य
स्यसर्वाण्येवहवींषिंदुष्येयुर्वापहरेयुर्वांकातत्रप्रायश्चित्तिरिंत्याज्यस्यैनानियथादेवतंपरिकल्प्यंतयाज्यहविषेष्ट्यायजेतां
तोन्यामिष्टिमनुल्बणांतन्वीतंयज्ञोयज्ञस्यप्रायश्चित्तिः ॥ ४ ॥ तदाहुर्यस्याग्निहोत्रमधिश्रितंममेध्यमापद्येतंकातत्रप्रा
यश्चित्तिरितिंसर्वमेवैनत्स्रुच्यभिपर्यासिच्यंप्राङुदेत्याहवनीयैहैतांसमिधमभ्यादधांत्यथोत्तरतआहवनीयस्यौष्णंभस्म
निरूह्यजुहुयांन्मनसावाप्राजापत्ययावर्चांतद्भुतंचाहुतंचंसयद्येकस्मिन्नुन्नीतेंयदिद्वयोरेषएवकल्पंस्तच्चेद्व्यपनयितुंशक्नुयां
न्निष्षिच्यैतद्दुष्टंमदुष्टमभिपर्यासिच्यंतस्ययथोन्नीतीस्यात्तथाजुहुयांत्सातत्रप्रायश्चित्तिंस्तदाहुर्यस्याग्निहोत्रमधिश्रितं

स्कंदतिवाविष्यंदतेवाकातत्रप्रायश्चित्तिरितिंतदद्भिरुपनिनयेच्छांत्यैशांतिर्वाआपोऽथैनद्दक्षिणेनपाणिनाभिमृश्यजप
तिंदिवंतृतीयंदेवान्यज्ञोगांत्ततोमाद्रविणमाष्टांतरिक्षंतृतीयंपितृन्यज्ञोगांत्ततोमाद्रविणमाष्टंपृथिवींतृतीयंमनुष्यान्य
ज्ञोगांत्ततोमाद्रविणमाष्टंययोरोजसास्कभितारजांसीतिंवैष्णुवारुणीमृचंजपतिंविष्णुर्वैयज्ञस्यदुरिष्टंपातिवरुणःस्विष्टंत
योरुभयोरेवशांत्यैसातत्रप्रायश्चित्तिंस्तदाहुर्यस्याग्निहोत्रमधिश्रितंप्राङुदायन्स्खलतेवापिवाभ्रंशतेंकातत्रप्रायश्चित्तिरि
तिंसयद्युपनिवर्तयेंत्स्वर्गाल्लोकाद्यजमानमावर्तयेंदत्रैवास्माउपविष्टायैंतमग्निहोत्रपरीशेषमाहरेयुंस्तस्ययथोन्नीतीस्यात्त
थाजुहुयांत्सातत्रप्रायश्चित्तिंस्तदाहुरथयदिस्रुग्भिद्येतंकातत्रप्रायश्चित्तिरिंत्यन्यांस्रुचमाहृत्यजुहुयार्दथैनांस्रुचंभिन्नांमा
हवनीयेभ्यादध्यांत्प्राग्दंडांप्रत्यक्पुष्करांसातत्रप्रायश्चित्तिंस्तदाहुर्यस्याहवनीयेहाग्निर्विद्येतांथगार्हपत्यउपशाम्येंत्कात
त्रप्रायश्चित्तिरितिंसयदिप्रांचमुद्धरेंत्प्रायतनाच्च्यवेतंयत्प्रत्यंचमसुरवद्यज्ञंतन्वीतंयन्मंथेंद्भ्रातृव्यंयजमानस्यजनयेंद्यद
नुगमयेत्प्राणोयजमानंजह्यांत्सर्वमेवैनंसहभस्मानंसमोप्यंगार्हपत्यायतनेनिधायांऽथप्रांचमाहवनीयमुद्धरेंत्सातत्रप्राय
श्चित्तिः ॥ ५ ॥ तदाहुर्यस्याग्नावग्निमुद्धरेयुःकातत्रप्रायश्चित्तिरितिंसयद्यनुपश्येदुदूह्यंपूर्वमपरंनिदध्यांद्यद्यनानुपश्यें
त्सोग्नयेग्निवतेष्टाकपालंपुरोळाशंनिर्वपेंत्तस्ययाज्यानुवाक्येंअग्निनाग्निःसमिध्यतेंत्वंह्यग्नेअग्निनेत्याहुतिंवाहवनीयेजुहु



यांदग्नयेग्निवतेस्वाहेतिंसातत्रप्रायश्चित्तिंस्तदाहुर्यस्यगार्हपत्याहवनीयौमिथःसंसृज्येयातांकातत्रप्रायश्चित्तिरितिंसोग्नये

वीतयेऽष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येअग्नआयाहिवीतयेयोअग्निंदेववीतयइत्याहुतिंवाहवनीयेजुहुयाद
ग्नयेवीतयेस्वाहेतिसातत्रप्रायश्चित्तिस्तदाहुर्यस्यसर्वएवाग्नयोमिथःसंसृज्येरन्कातत्रप्रायश्चित्तिरितिसोग्नयेविविचयेऽ
ष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येस्वर्णवस्तोरुषसामरोचित्वामग्नेमानुषीरीळतेविशइत्याहुतिंवाहवनीयेजुहु
यांदग्नयेविविचयेस्वाहेतिसातत्रप्रायश्चित्तिस्तदाहुर्यस्याग्नयोन्यैरग्निभिःसंसृज्येरन्कातत्रप्रायश्चित्तिरितिसोग्नयेक्षामव
तेष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येअक्रंददग्निःस्तनयन्निवद्यौरधायथानःपितरःपरासइत्याहुतिंवाहवनीये
जुहुयांदग्नयेक्षामवतेस्वाहेतिसातत्रप्रायश्चित्तिः ॥६॥ तदाहुर्यस्याग्नयोग्राम्येणाग्निनासंदह्येरन्कातत्रप्रायश्चित्तिरिति
सोग्नयेसंवर्गायाष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येकुवित्सुनोगविष्टयेमानोअस्मिन्महाधनेइत्याहुतिंवाहव
नीयेजुहुयांदग्नयेसंवर्गायस्वाहेतिसातत्रप्रायश्चित्तिस्तदाहुर्यस्याग्नयोदिव्येनाग्निनासंसृज्येरन्कातत्रप्रायश्चित्तिरितिसो
ग्नयेप्सुमतेऽष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येअप्स्वग्नेसधिष्टवमयोदधेमेधिरःपूतदक्षइत्याहुतिंवाहवनीये
जुहुयांदग्नयेप्सुमतेस्वाहेतिसातत्रप्रायश्चित्तिस्तदाहुर्यस्याग्नयःशवाग्निनासंसृज्येरन्कातत्रप्रायश्चित्तिरितिसोग्नयेशुचये
ऽष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येअग्निःशुचिव्रततमउदग्नेशुचयस्तवेत्याहुतिंवाहनीयेजुहुयांदग्नयेशुचये
स्वाहेतिसातत्रप्रायश्चित्तिस्तदाहुर्यस्याग्नयआरण्येनाग्निनासंदह्येरन्कातत्रप्रायश्चित्तिरितिसमेवारोपयेदरणीवोल्मुकं

वामोक्षयैद्यद्याहवनीयाद्यदिगार्हपत्याद्यदिनशक्नुयात्सोऽग्नयेसंवर्गायाष्टाकपालंपुरोळाशंनिर्वपेत्तस्योक्तेयाज्यानुवाक्यै
आहुतिंवाहवनीयेजुहुयादग्नयेसंवर्गायस्वाहेतिंसातत्रप्रायश्चित्तिः ॥ ७ ॥ तदाहुर्यआहिताग्निरुपवसथेश्रुकुर्वीतंकातत्र
प्रायश्चित्तिरितिंसोऽग्नयेव्रतभृतेऽष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येत्वमग्नेव्रतभृच्छुचिर्व्रतानिबिभ्रद्व्रतपाअ
दब्धंइत्याहुतिंवाहवनीयेजुहुयादग्नयेव्रतभृतेस्वाहेतिंसातत्रप्रायश्चित्तिस्तदाहुर्यआहिताग्निरुपवसथेव्रत्यमापद्येतंकात
त्रप्रायश्चित्तिरितिंसोऽग्नयेव्रतपतयेऽष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येत्वमग्नेव्रतपाअसियद्वोवयंप्रमिनामव्रता
नीत्याहुतिंवाहवनीयेजुहुयादग्नयेव्रतपतयेस्वाहेतिंसातत्रप्रायश्चित्तिस्तदाहुर्यआहिताग्निरमावास्यांपौर्णमासींवातीया
त्कातत्रप्रायश्चित्तिरितिंसोऽग्नयेपथिकृतेऽष्टाकपालंपुरो ळाशंनिर्वपेत्तस्ययाज्यानुवाक्येवेत्थाहिवेधोअध्वनंआदेवानाम
पिपंथामगन्मेत्याहुतिंवाहवनीयेजुहुयादग्नयेपथिकृतेस्वाहेतिंसातत्रप्रायश्चित्तिस्तदाहुर्यस्यसर्वएवाग्नयउपशाम्येरन्का
तत्रप्रायश्चित्तिरितिंसोऽग्नयेतपस्वतेजनद्वतेपावकवतेऽष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येआयाहितपसाजनै
ष्वानोयाहितपसाजनेष्वित्याहुतिंवाहवनीयेजुहुयादग्नयेतपस्वतेजनद्वतेपावकतेस्वाहेतिंसातत्रप्रायश्चित्तिः ॥ ८ ॥
तदाहुर्यआहिताग्निराग्रयणेनानिष्ट्वानवान्नंप्राश्नीयात्कातत्रप्रायश्चित्तिरितिंसोऽग्नयेवैश्वानरायद्वादशकपालंपुरोळाशं
निर्वपेत्तस्ययाज्यानुवाक्येवैश्वानरोअजीजनत्पृष्टोदिविपृष्टोअग्निःपृथिव्यामित्याहुतिंवाहवनीयेजुहुयादग्नयेवैश्वान

रायस्वाहेतिंसातत्रप्रायश्चित्तिंस्तदाहुर्यआहिताग्निर्यदिकपालंनश्येत्कातत्रप्रायश्चित्तिरितिंसोश्विभ्यांद्विकपालंपुरोळा
शंनिर्वपेत्तस्ययाज्यानुवाक्येअश्विनावर्तिरस्मदागोमतानासत्यारथेनेत्याहुतिंवाहवनीयेजुहुयादश्विभ्यांस्वाहेतिंसात
त्रप्रायश्चित्तिंस्तदाहुर्यआहिताग्निर्यदिपवित्रंनश्येत्कातत्रप्रायश्चित्तिरितिंसोग्नयेपवित्रवतेष्टाकपालंपुरोळाशंनिर्वपेत्तस्य
याज्यानुवाक्येपवित्रंतेविततंब्रह्मणस्पतेतपोष्पवित्रंविततंदिवस्पदइत्याहुतिंवाहवनीयेजुहुयादग्नयेपवित्रवतेस्वाहेतिं
सातत्रप्रायश्चित्तिंस्तदाहुर्यआहिताग्निर्यदिहिरण्यंनश्येत्कातत्रप्रायश्चित्तिरितिंसोग्नयेहिरण्यवतेष्टाकपालंपुरोळाशंनि
र्वपेत्तस्ययाज्यानुवाक्येहिरण्यकेशोरजसोविसारेआतेसुपर्णाअमिनंतँएवैरित्याहुतिंवाहवनीयेजुहुयादग्नयेहिरण्यवते
स्वाहेतिसातत्रप्रायश्चित्तिंस्तदाहुर्यआहिताग्निर्यदिप्रातरस्नातोग्निहोत्रंजुहुयात्कातत्रप्रायश्चित्तिरितिंसोग्नयेवरुणायाष्टा
पालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येत्वंनोअग्नेवरुणस्यविद्वान्त्सत्वंनोअग्नेवमोभवोतीत्याहुतिंवाहवनीयेजुहुयादग्न
येवरुणायस्वाहेतिंसातत्रप्रायश्चित्तिंस्तदाहुर्यआहिताग्निर्यदिसूतकान्नंप्राश्नीयात्कातत्रप्रायश्चित्तिरितिंसोग्नयेतंतुमते
ष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येतंतुंतन्वन्रजसोभानुमन्विह्यक्षानहोनह्यतनोतसोम्याइत्याहुतिंवाहवनीये
जुहुयादग्नयेतंतुमतेस्वाहेतिंसातत्रप्रायश्चित्तिंस्तदाहुर्यआहिताग्निर्जीवेमृतशब्दंश्रुत्वाकातत्रप्रायश्चित्तिरितिंसोग्नयेसु
रभिमतेष्टाकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येअग्निर्होतान्यसीदद्यजीयान्त्साध्वीमकर्देववीतिंनोअद्येत्याहुतिंवा

हवनीयेजुहुयाद्दग्नयेसुरभिमतेस्वाहेतिंसातत्रप्रायश्चित्तिस्तदाहुर्यआहिताग्निर्यस्यभार्यागौर्वायमौजनयेत्कातत्रप्रायश्चि
त्तिरितिंसोग्नयेमरुत्वतेत्रयोदशकपालंपुरोळाशंनिर्वपेत्तस्ययाज्यानुवाक्येमरुतोयस्यहिक्षयेंऽराइवेदचरमाअहेवेत्याहु
तिंवाहवनीयेजुहुयाद्दग्नयेमरुत्वतेस्वाहेतिंसातत्रप्रायश्चित्तिस्तदाहुरपत्नीकोप्यग्निहोत्रमाहरे३त्॥ नाहरे३त्इति ॥ आ
हरेदित्याहुर्यदिनाहरेदनद्धापुरुषःकोनद्धापुरुषइतिंनदेवान्नपितॄन्नमंनुष्याइतितस्मादपत्नीकोप्यग्निहोत्रमाहरेत्तदेषा
भियज्ञगाथागीयते॥ यजेत्सौत्रामण्यामपत्नीकोप्यसोमपः॥ मातापितृभ्यामनृणार्थाद्यजेतिवचनाच्छ्रुतिरितितस्मात्सौ
म्यंयाजयेत् ॥ ९ ॥ तदाहुर्वाचापत्नीकोग्निहोत्रंकथमेवजुहोतिंनिविष्टेमृतापत्नीनष्टावाग्निहोत्रंकथमग्निहोत्रंजुहोतिं
पुत्रान्पौत्रान्नप्तॄनित्याहुरस्मिंश्चलोकेमुष्मिंश्चास्मिंल्लोकेयंस्वर्गोस्वर्गेणस्वर्गंलोकमारुरोहेत्यमुष्यैवलोकस्यसंततिंधारय
तियस्यैषांपत्नीनेच्छेत्तस्मादपत्नीकस्याधानंकुर्वीत्यपत्नीकोग्निहोत्रंकथमग्निहोत्रंजुहोतिंश्रद्धापत्नीसत्यंयजमानःश्रद्धास
त्यंतदित्युत्तमंमिथुनंश्रद्धयासत्येनमिथुनेनंस्वर्गांल्लोकान्जयतीति ॥ १० ॥ तदाहुर्यद्दर्शपूर्णमासयोरुपवसतिंनहवा
अन्नतस्यदेवाहविरश्नंतितस्मादुपवसत्युतमेदेवाहविरश्नीयुरितिंपूर्वांपौर्णमासीमुपवसेदितिपैङ्ग्यमुत्तरामितिकौषीतकं
यापूर्वापौर्णमासीसानुमतिर्योत्तरासाराकायापूर्वामावास्यासासिनीवालीयोत्तरासाकुहूर्यापयस्तमियादभ्युदियादिति



१ 'नमनुष्यानिति' इतिभाष्ये । मनुष्यान्अतिथीनपीतितदर्थः ।

सातिथिंःपूर्वांपौर्णमासीमुपवसेदनिर्ज्ञायपुरस्तादमावास्यायांचंद्रमसंयदुपैतियद्यजतेतेनसोमंक्रीणंतितेनोत्तरामुत्तरार
मुपवसेंदुत्तराणिहवैसोमोयजतेसोममनुदैवतंमेतद्धैदेवसोमंयच्चंद्रमास्तस्मादुत्तरामुपवसेत् ॥ ११ ॥ तदाहुर्यस्याग्निम
नुद्धृतंमादित्योभ्युदियाद्वाभ्यस्तमियाद्वांप्रणीतोवाप्राग्घोमादुपशाम्येत्कातत्रप्रायश्चित्तिरितिंहिरण्यंपुरस्कृत्यसायमु
द्धरेंज्ज्योतिर्वैशुक्रंहिरण्यंज्योतिःशुक्रमसौतदेवंतज्ज्योतिःशुक्रंपश्यन्नुद्धरतिरजतमंतर्धायप्रातरुद्धरेदेतद्वात्रिरूपंपुरासं
भेदाच्छायानांमाहवनीयमुद्धरेन्मृत्युर्वैतमश्छायांतेनैवतज्ज्योतिषांमृत्युंतमश्छायांतरतिसातत्रप्रायश्चित्तिस्तदाहुर्य
स्यगार्हपत्याहवनीयावंतरेणांऽनोवारथोवाश्वावाप्रतिपद्येतकातत्रप्रायश्चित्तिरितिंनैनन्मनसिकुर्यादित्याहुरात्मन्यस्य
हिताभवंतीतितच्चेन्मनसिकुर्वीतंगार्हपत्यादविच्छिन्नामुदकधारांहरेत्तंतुंतन्वन्रजसोभानुमन्विहीत्याहवनीयांत्सातत्र
प्रायश्चित्तिस्तदाहुःकथमग्नीनन्वादधानोन्वाहार्यपचनमाहारये३त् ॥ नाहारये३त्इति ॥ आहारयेदित्याहुःप्राणा
न्वाएषोभ्यात्मन्धत्तेयोग्नीनाधत्तेतेषामेषोन्नादतमोभवतियदन्वाहार्यपचनंस्तस्मिन्नेतामाहुतिंजुहोत्यग्नयेन्नादायान्नप
तयेस्वाहेत्यन्नादोहान्नपतिर्भवत्यश्नुतेप्रजयान्नाद्यंयएवंवेदांतरेणगार्हपत्याहवनीयौहोष्यन्त्संचरेत्तैतेनहवाएनंसंचरमा
णमग्नयोविदुरयमस्मासुहोष्यतीत्येतेनहवाअस्यसंचरमाणस्यगार्हपत्याहवनीयौपाप्मानमपहतःसोपहतपाप्मोर्ध्वःस्व
र्गंलोकमेतीतिवैब्राह्मणमुदाहरंतितदाहुःकथमग्नीन्प्रवत्स्यन्नुपतिष्ठेतप्रोष्यवाप्रत्येत्याहरहर्वेतितूष्णीमित्याहुस्तूष्णींवैश्रे

यसआकांक्षंतेऽथाप्याहुरहरहर्वाएतेयजमानस्याश्रद्धयोद्वासनात्प्रप्लावनाद्विभ्यतितानुपतिष्ठेतैवाऽभयंवोभयंमेस्त्विव
त्यभयंहैवास्मैभवत्यभयंहैवास्मैभवति ॥ १२ ॥ ॥ इतिद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥

हरिश्चंद्रोहवैधर्सऐक्ष्वाकोराजापुत्रआसंतस्यहशतंजायाबभूवुस्तासुपुत्रंनलेभेतस्यहपर्वतनारदौगृहऊषतुःसहनारदं
पप्रच्छ यन्विमंपुत्रमिच्छंतियेविजानंतियेचन ॥ किंस्वित्पुत्रेणविंदतेतन्मआचक्ष्वनारदेतिसएकयापृष्टोदशभिःप्रत्यु
वाच ॥ ऋणमस्मिन्त्संनयत्यमृतत्वंचगच्छति ॥ पितापुत्रस्यजातस्यपश्येच्चेज्जीवतोमुखं ॥ यावंतःपृथिव्यांभोगायाया
वंतोजातवेदसि ॥ यावंतोअप्सुप्राणिनांभूयान्पुत्रेपितुस्ततः ॥ शश्वत्पुत्रेणपितरोऽत्यायन्बहुलंतमः ॥ आत्माहिज
ज्ञआत्मनःसइरावत्यतितारिणी ॥ किंनुमलंकिमजिनंकिमुश्मश्रूणिकिंतपः ॥ पुत्रंब्रह्माणइच्छध्वंसवैलोकोवदावदः॥
अन्नंहप्राणःशरणंहवासोरूपंहिरण्यंपशवोविवाहाः ॥ सखाहजायाकृपणंहदुहिताज्योतिर्हपुत्रःपरमेव्योमन् ॥ पति
र्जायांप्रविशतिगर्भोभूत्वासमातरं ॥ तस्यांपुनर्नवोभूत्वादशमेमासिजायते ॥ तज्जायाजायाभवतियदस्यांजायतेपु
नः ॥ आभूतिरेषाभूतिर्बीजमेतन्निधीयते ॥ देवाश्चैतामृषयश्चतेजःसमभरन्महत् ॥ देवामनुष्यानब्रुवन्नेपावोजन

नीपुनः॥नापुत्रस्यलोकोस्तीतितत्सर्वेपशवोविदुः॥तस्मात्तुपुत्रोमातरंस्वसारंचाधिरोहति ॥ एषपंथाउरुगायःसुशेवो

यंपुत्रिणआक्रमंतेविशोकाः ॥ तंपश्यंतिपशवोवयांसिचंतस्मात्तेमात्रापिमिथुनीभवंतीतिहस्माआख्याय ॥ १३ ॥ अथैनमुवाचंवरुणंराजानमुपधावंपुत्रोमेजायतांतेनत्वायजाइतितथेतिंसवरुणंराजानमुपससारंपुत्रोमेजायतांतेनत्वायजाइतितथेतिंतस्यहपुत्रोजज्ञेरोहितोनामतंहोवाचांऽजनिवैतेपुत्रोंयजस्वमानेनेतिसहोवाचंयदावैपशुर्निर्दशोभवंत्यथसमेध्योभवतिंनिर्दशोन्वस्त्वथत्वायजाइतितथेतिंसहनिर्दशआसतंहोवाचंनिर्दशोन्वभूंद्यजस्वमानेनेतिसहोवाचंयदावैपशोर्दंताजायंतेंथसमेध्योभवंतिंदंतान्वस्यजायंतांमथत्वायजाइतितथेतिंतस्यहदंताजज्ञिरेतंहोवाचांऽज्ञतवाअस्यदंतांयजस्वमानेनेतिसहोवाचंयदावैपशोर्दंताःपद्यंतेंथसमेध्योभवतिंदंतान्वस्यपद्यंतांमथत्वायजाइतितथेतिंतस्यहदंताःपेदिरेतंहोवाचांपत्सतवाअस्यदंतांयजस्वमानेनेतिसहोवाचंयदावैपशोर्दंताःपुनर्जायंतेंथसमेध्योभवतिंदंतान्वस्यपुनर्जायंतांमथत्वायजाइतितथेतिंतस्यहदंताःपुनर्जज्ञिरेतंहोवाचांऽज्ञतवाअस्यपुनर्दंतांयजस्वमानेनेतिसहोवाचंयदावैक्षत्रियःसान्नाहुकोभवंत्यथसमेध्योभवतिंसन्नाहंनुप्राप्नोंत्वथत्वायजाइतितथेतिंसहसन्नाहंप्रापत्तंहोवाचंसन्नाहंनुप्राप्नोंद्यजस्वमानेनेतिसतथेत्युक्त्वांपुत्रमामंत्रयामासंततायंवैमह्यंत्वामददांद्धंतत्वयाहमिमंयजाइतिंसहनेत्युक्त्वांधनुरादायारण्यं[2]मपातस्थौंससंवत्सरमरण्येचचार ॥ १४ ॥ अथहैक्ष्वाकंवरुणोजग्राहंतस्यहोदरंजज्ञेंतदुहरोहितःशुश्रावंसो



---

१ 'तीतिहास्मा' इतिभाष्यपाठः । २ 'रण्यमुपातस्थौ' इतिभाष्यपाठः ।

रण्याद्ग्राममेयायंतमिंद्रः पुरुषरूपेणपर्येत्योवाच ॥ नानाश्रांतायश्रीरस्तीतिरोहितशुश्रुम ॥ पापोनृषद्वरोजनइंद्रइच्चरतःसखांचरैवेतिचरैवेतिवैमाब्राह्मणोवोचदितिह ॥ द्वितीयंसंवत्सरमरण्येचचारसोरण्याद्ग्राममेयायंतमिंद्रः पुरुषरूपेणपर्येत्योवाच ॥ पुष्पिण्यौचरतोजंघेभूष्णुरात्माफलग्रहिः ॥ शेरेस्यसर्वेपाप्मानःश्रमेणप्रपथेहतांश्चरैवेतिचरैवेतिवैमाब्राह्मणोवोचदितिह ॥ तृतीयंसंवत्सरमरण्येचचारसोरण्याद्ग्राममेयायंतमिंद्रः पुरुषरूपेणपर्येत्योवाच ॥ आस्तेभगआसीनस्योर्ध्वस्तिष्ठतितिष्ठतः ॥ शेतेनिपद्यमानस्यंचरातिचरतोभगश्चरैवेतिचरैवेतिवैमाब्राह्मणोवोचदितिह ॥ चतुर्थंसंवत्सरमरण्येचचारसोरण्याद्ग्राममेयायंतमिंद्रः पुरुषरूपेणपर्येत्योवाच ॥ कलिः शयानोभवतिसंजिहानस्तुद्वापरः ॥ उत्तिष्ठंस्त्रेताभवतिकृतंसंपद्यतेचरंश्चरैवेतिचरैवेतिवैमाब्राह्मणोवोचदितिह ॥ पंचमंसंवत्सरमरण्येचचारसोरण्याद्ग्राममेयायंतमिंद्रः पुरुषरूपेणपर्येत्योवाच ॥ चरन्वैमधुविंदतिचरन्त्स्वादुमुदुंबरं ॥ सूर्यस्यपश्यश्रेमाणंयोनतंद्रयतेचरंश्चरैवेतिचरैवेतिवैमाब्राह्मणोवोचदितिह ॥ षष्ठंसंवत्सरमरण्येचचारसोजीगर्तंसौयवसिमृषिमशनयापरीतमरण्यउपेयायंतस्यहत्रयः पुत्राआसुःशुनःपुच्छःशुनःशेपःशुनोलांगूलइतितंहोवाचऋषेहंतेशतंददाम्यहमेषामेकेनात्मानंनिष्क्रीणाइतिसज्येष्ठंपुत्रंनिगृह्णानउवाचंनन्विममितिनोएवेममितिकनिष्ठंमातातौहमध्यमेसंपादयांचक्रतुःशुनःशेपेतस्यहशतंदत्त्वासतमादायसोरण्याद्ग्राममेयायसपितरमेत्योवाचततहताहमनेनात्मानंनिष्क्रीणाइतिसवरुणंराजानमुपससारानेनत्वाय

जाइतितथेतिंभूयान्वैब्राह्मणःक्षत्रियांदितिवरुणउवाचंतस्माएतंराजसूयंयज्ञक्रतुंप्रोवाचंतमेतमभिषेचनीयेंपुरुषंपशु
मालेभे॥१५॥तस्यहविश्वामित्रोहोतासींज्जमदग्निरध्वर्युर्वसिष्ठोब्रह्मांयास्यउद्गातातस्माउपाकृतायंनियोक्तारंनविविदुः
सहोवाचाजीगर्तःसौयवसिर्मह्यमपरंशतंदत्तांऽहमेनंनियोक्ष्यामीतितस्माअपरंशतंददुस्तंसनिनियोजंतस्माउपाकृताय
नियुक्तायाप्रीतायपर्यग्निकृतायंविशसितारंनविविदुःसहोवाचाजीगर्तःसौयवसिर्मह्यमपरंशतंदत्तांऽहमेनंविशसिष्या
मीतितस्माअपरंशतंददुःसोसिंनिःशानएयायांऽथहशुनःशेपईक्षांचक्रेमानुषमिववैमाविशसिष्यंतिहंताहंदेवताउपधा
वामीतिसप्रजापतिमेवप्रथमंदेवतानामुपससारंकस्यनूनंकतमस्यामृतानामित्येतयर्चांतंप्रजापतिरुवाचांग्निर्वैदेवानांने
दिष्ठस्तमेवोपधावेतिसोग्निमुपससारांग्नेर्वयंप्रथमस्यामृतानामित्येतयर्चांतमग्निरुवाचंसवितावैप्रसवानामीशेंतमेवोपधा
वेतिससवितारमुपससारांभित्वादेवसवितरित्येतेनतृचेनंतंसवितोवाचंवरुणायवैराज्ञेनियुक्तोसितमेवोपधावेतिसवरु
णंराजानमुपससारांतउत्तराभिरेकत्रिंशतांतंवरुणउवाचांग्निर्वैदेवानांमुखंसुहृदयतमस्तंनुस्तुह्यथत्वोत्स्रक्ष्यामइतिसो
ग्निंतुष्टावांतउत्तराभिर्द्वाविंशत्यांतमग्निरुवाचंविश्वान्नुदेवान्स्तुह्यथत्वोत्स्रक्ष्यामइतिसविश्वान्देवांस्तुष्टावंनमोमहद्भ्यो
नमोअर्भकेभ्यइत्येतयर्चांतंविश्वेदेवाऊचुरिंद्रोवैदेवानामोजिष्ठोबलिष्ठःसहिष्ठःसत्तमःपारयिष्णुतमस्तंनुस्तुह्यथत्वोत्स्र
क्ष्यामइतिसइंद्रंतुष्टावंयच्चिद्धिसत्यसोमपाइतिचैतेनसूक्तेनोत्तरस्यचपंचदशभिस्तस्माइंद्रःस्तूयमानःप्रीतोंमनसाहिर

ण्यरथंददौतमेतयाप्रतीयायश्चश्वदिंद्रइतितमिंद्रउवाचाश्विनौनुस्तुह्यथत्वोत्स्रक्ष्यामइतिसोश्विनौतुष्टावातउत्तरेणतृ
चेनतमश्विनाऊचतुरुषसंनुस्तुह्यथत्वोत्स्रक्ष्यामइतिसउषसंतुष्टावातउत्तरेणतृचेनतस्यहस्मर्च्यृच्युक्तायांविपाशोमुमुचे
कनीयऐक्ष्वाकस्योदरंभवत्युत्तमस्यामेवर्च्युक्तायांविपाशोमुमुचेऽगदऐक्ष्वाकआस ॥ १६॥ तमृत्विजऊचुस्त्वमेवनोस्या
ह्नःसंस्थामधिगच्छेत्यथहैतंशुनःशेपोंजःसवंददर्शतमेताभिश्चतसृभिरभिसुषावयच्चिद्धित्वंगृहेगृहइत्यथैनंद्रोणकलश
मभ्यवनिनायोच्छिष्टंचम्वोर्भरेत्येतयर्चाथहास्मिन्नन्वारब्धेपूर्वाभिश्चतसृभिःसस्वाहाकाराभिर्जुवहांचकाराथैनमवभृ
थमभ्यवनिनायत्वंनोअग्नेवरुणस्यविद्वानित्येताभ्यामथैनमतऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकारशुनश्चिच्छेपंनिदि
तंसहस्रादित्यथहशुनःशेपोविश्वामित्रस्यांकमाससादसहोवाचाजीगर्तःसौयवसिर्ऋषेपुनर्मेपुत्रंदेहीतिनेतिहोवाचविश्वा
मित्रोदेवावाइमंमह्यमरासतेतिसहदेवरातोवैश्वामित्रआसतस्यैतेकापिलेयबाभ्रवाःसहोवाचाजीगर्तःसौयवसिस्त्वंवे
हिविह्वयावहाइतिसहोवाचाजीगर्तःसौयवसिरांगिरसोजन्मनास्याजीगर्तिःश्रुतःकविः ॥ ऋषेपैतामहात्तंतोमापगाःपुन
रेहिमामितिसहोवाचशुनःशेपोऽदर्शुस्त्वाशासहस्तंनयच्छूद्रेष्वलप्सत ॥ गवांत्रीणिशतानित्वमवृणीथामदंगिरइतिस
होवाचाजीगर्तःसौयवसिस्तद्वैमातातातपतिपापंकर्ममयाकृतं ॥ तदहंनिह्नवेतुभ्यंप्रतियंतुशतागवामितिसहोवाचशुनः
शेपोयःसकृत्पापकंकुर्यात्कुर्यादेनत्ततोपरं ॥ नापागाःशौद्रान्यायादसंधेयंत्वयाकृतमित्यसंधेयमितिहविश्वामित्रउपप

पार्दंसहोवाचविश्वामित्रोंभीमएवसौयवसिंःशासेनविशिशासिषुः ॥ अस्थान्मैतस्यपुत्रोभूर्ममैवोपेहिपुत्रतामितिंसहोवा
चशुनःशेपंःसवैयथानोज्ञपयाराजपुत्रतथावद ॥ यथैवांगिरसःसन्नुपेयांतवपुत्रतामितिंसहोवाचविश्वामित्रोंज्येष्ठोमेत्वं
पुत्राणांस्यांस्तवश्रेष्ठाप्रजास्यात् ॥ उपेयादैवंमेदायंतेनवैत्वोपमंत्रयइतिंसहोवाचशुनःशेपंःसंज्ञानानेषुवैब्रूयांत्सौहार्द्या
यमेश्रियै ॥ यथाहंभरतऋषभोंपेयांतवपुत्रतामित्यथहविश्वामित्रंःपुत्रानामंत्रयामासंमधुच्छंदाःशृणोतनंऋषभोरेणुरष्ट
कः ॥ येकेचभ्रातरस्थनांस्मैज्यैष्ठ्यायकल्पध्वमिति ॥१७॥ तस्यहविश्वामित्रस्यैकशतंपुत्राआसुंःपंचाशदेवज्यायांसोंमधु
च्छंदसःपंचाशत्कनीयांसंस्तद्येज्यायांसोनतेकुशलंमेनिरेंतानन्नुव्याजहारांन्तान्वःप्रजाभक्षीष्टेतिंतएतेंध्राःपुंड्राःशबराः
पुलिंदांमूतिबाइत्युदंत्यान्हवोभवंतिंवैश्वामित्रादस्यूनांभूयिष्ठांःसहोवाचमधुच्छंदाःपंचाशतासार्धंयन्नःपितासंजा
नीतेंतस्मिंस्तिष्ठामहेवयं ॥ पुरस्त्वासर्वेकुर्महेत्वामन्वंचोवयंस्मसींत्यथहविश्वामित्रःप्रतीतःपुत्रांस्तुष्टावंतेवैपुत्राःपशुमं
तोंवीरवंतोभविष्यथ ॥ येमानंमेनुगृह्णंतोवीरवंतमकर्तमा ॥ पुरएत्रावीरवंतोंदेवरातेनगाथिनाः ॥ सर्वेराध्यास्थपुत्रांए
षवःसद्विवाचनं ॥ एषवःकुशिकावीरोंदेवरातस्तमन्वित ॥ युष्मांश्चदायंमउपेतांविद्यांयामुचविद्मसि ॥ तेसम्यंचोवैश्वा
मित्रांःसर्वेसाकंसरातयः ॥ देवरातायतस्थिरेधृत्यैश्रैष्ठ्यायगाथिनाः ॥ अधीयतदेवरातोंरिक्थयोरुभयोर्ऋषिः ॥ जह्नू
नांचाधिपत्येंदैवेवेदेचगाथिनां ॥ तदेतत्परऋक्शतगाथंशौनःशेपमाख्यानंतद्धोताराज्ञेभिषिक्तायाचष्टेहिरण्यकशिपा

रण्याद्ग्राममेयायंतमिंद्रः पुरुषरूपेणपर्येत्योवाच ॥ नानाश्रांतायश्रीरस्तीतिरोहितशुश्रुम ॥ पापोनृषद्वरोजनइंद्रइच्चर तःसखांचरैवेतिचरैवेतिवैमाब्राह्मणोवोचदितिह ॥ द्वितीयंसंवत्सरमरण्येचचारसोरण्याद्ग्राममेयायंतमिंद्रः पुरुषरूपे णपर्येत्योवाच ॥ पुष्पिण्यौचरतोजंघेभूष्णुरात्माफलग्रहिः ॥ शेरेस्यसर्वेपाप्मानः श्रमेणप्रपथेहतांश्चरैवेतिचरैवेतिवैमा ब्राह्मणोवोचदितिह ॥ तृतीयंसंवत्सरमरण्येचचारसोरण्याद्ग्राममेयायंतमिंद्रः पुरुषरूपेणपर्येत्योवाच ॥ आस्तेभगआ सीनस्योर्ध्वस्तिष्ठतितिष्ठतः ॥ शेतेनिपद्यमानस्यंचरातिचरतोभगश्चरैवेतिचरैवेतिवैमाब्राह्मणोवोचदितिह ॥ चतुर्थंसंव त्सरमरण्येचचारसोरण्याद्ग्राममेयायंतमिंद्रः पुरुषरूपेणपर्येत्योवाच ॥ कलिः शयानोभवतिसंजिहानस्तुद्वापरः ॥ उत्ति ष्ठंस्त्रेताभवतिकृतंसंपद्यतेचरंश्चरैवेतिचरैवेतिवैमाब्राह्मणोवोचदितिह ॥ पंचमंसंवत्सरमरण्येचचारसोरण्याद्ग्राममेया यंतमिंद्रः पुरुषरूपेणपर्येत्योवाच ॥ चरन्वैमधुविंदतिचरन्त्स्वादुमुदुंबरं ॥ सूर्यस्यपश्यश्रेमाणंयोनतंद्रयतेचरंश्चरैवेति चरैवेतिवैमाब्राह्मणोवोचदितिह ॥ षष्ठंसंवत्सरमरण्येचचारसोजीगर्तंसौयवसिमृषिमशनयापरीतमरण्यउपेयायंतस्य हत्रयः पुत्राआसुः शुनः पुच्छः शुनः शेपः शुनोलांगूलइतितंहोवाचऋषेहंतेशतंददाम्यहमेषामेकेनात्मानंनिष्क्रीणाइतिस ज्येष्ठंपुत्रंनिगृह्णानउवाचंनन्विममितिनोएवेममितिकनिष्ठंमातातौहमध्यमेसंपादयांचक्रतुः शुनःशेपेतस्यहशतंदत्त्वास तमादायसोरण्याद्ग्राममेयायसपितरमेत्योवाचंततहंताहमनेनात्मानंनिष्क्रीणाइतिसवरुणंराजानमुपससारानेनत्वाय

जाइतितथेतिंभूयान्वैब्राह्मणःक्षत्रियादितिवरुणउवाचंतस्माएतंराजसूयंयज्ञक्रतुंप्रोवाचंतमेतमभिषेचनीयेंपुरुषंपशु
मालेभे॥१५॥तस्यहविश्वामित्रोहोतासीज्जमदग्निरध्वर्युर्वसिष्ठोब्रह्मायास्यउद्गातातस्माउपाकृतायंनियोक्तारंनविविदुः
सहोवाचाजीगर्तःसौयवसिर्मह्यमपरंशतंदत्ताऽहमेनंनियोक्ष्यामीतितस्माअपरंशतंददुस्तंसनिनियोजंतस्माउपाकृताय
नियुक्तायाप्रीतायपर्यग्निकृतायंविशसितारंनविविदुःसहोवाचाजीगर्तःसौयवसिर्मह्यमपरंशतंदत्ताऽहमेनंविशसिष्या
मीतितस्माअपरंशतंददुःसोसिंनिःशानएयायाऽथहशुनःशेपईक्षांचक्रेमानुषमिववैमाविशसिष्यंतिइंताहंदेवताउपधा
वामीतिसप्रजापतिमेवप्रथमंदेवतानामुपससारकस्यनूनंकतमस्यामृतानामित्येतयर्चातंप्रजापतिरुवाचाग्निर्वैदेवानांने
दिष्ठस्तमेवोपधावेतिसोग्निमुपससाराग्नेर्वयंप्रथमस्यामृतानामित्येतयर्चातमग्निरुवाचंसवितावैप्रसवानामीशेतमेवोपधा
वेतिससवितारमुपससाराभित्वादेवसवितरित्येतेनतृचेनंतंसवितोवाचंवरुणायवैराज्ञेनियुक्तोसितमेवोपधावेतिसवरु
णंराजानमुपससारातउत्तराभिरेकत्रिंशतातंवरुणउवाचाग्निर्वैदेवानांमुखंसुहृदयतमस्तंनुस्तुह्यथत्वोत्स्रक्ष्यामइतिसो
ग्निंतुष्टावातउत्तराभिर्द्वाविंशत्यातमग्निरुवाचंविश्वान्नुदेवान्स्तुह्यथत्वोत्स्रक्ष्यामइतिसविश्वान्देवांस्तुष्टावंनमोमहद्भ्यो
नमोअर्भकेभ्यइत्येतयर्चातंविश्वेदेवाऊचुरिंद्रोवैदेवानामोजिष्ठोबलिष्ठःसहिष्ठःसत्तमःपारयिष्णुतमस्तंनुस्तुह्यथत्वोत्स्र
क्ष्यामइतिसइंद्रंतुष्टावंयच्चिद्धिसत्यसोमपाइतिचैतेनसूक्तेनोत्तरस्यचपंचदशभिस्तस्माइंद्रःस्तूयमानःप्रीतोमनसाहिर

॥ ९७ ॥

ण्यरथंददौतमेतयाप्रतीयायश्चश्वदिंद्रइतिंतामिंद्रउवाचाश्विनौनुस्तुह्यथत्वोत्स्रक्ष्यामइतिंसोश्विनौतुष्टावातउत्तरेणतृ
चेनंतमश्विनाऊचतुरुषसंनुस्तुह्यथत्वोत्स्रक्ष्यामइतिंसउषसंतुष्टावातउत्तरेणतृचेनंतस्यहस्मर्च्यृच्युक्तायांविपाशोमुमुचे
कनीयऐक्ष्वाकस्योदरंभवंत्युत्तमस्यामेवर्च्युक्तायांविपाशोमुमुचेऽगदऐक्ष्वाकआस ॥१६॥ तमृत्विजऊचुस्त्वमेवनोस्या
ह्नःसंस्थामधिगच्छेत्यथहैतंशुनःशेपोंजःसवंददर्शंतमेताभिश्चतसृभिरभिसुषावंयच्चिद्धित्वंगृहेगृहइत्यथैनंद्रोणकलश
मभ्यवनिनायोच्छिष्टंचम्वोर्भरेत्येतयर्चाथहास्मिन्नन्वारब्धेपूर्वाभिश्चतसृभिःसस्वाहाकाराभिर्जुवहांचकाराथैनमवभृ
थमभ्यवनिनायंत्वंनोअग्नेवरुणस्यविद्वानित्येताभ्यामथैनमतऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकारंशुनश्चिच्छेपंनिदि
तंसहस्रादित्यथहशुनःशेपोविश्वामित्रस्यांकमाससादंसहोवाचाजीगर्तःसौयवसिर्ऋषेपुनर्मेपुत्रंदेहीतिंनेतिहोवाचविश्वा
मित्रोदेवावाइमंमह्यमरासतेतिंसहदेवरातोवैश्वामित्रआसंतस्यैतेकापिलेयबाभ्रवाःसहोवाचाजीगर्तःसौयवसिस्त्वंवे
हिविह्वयावहाइतिंसहोवाचाजीगर्तःसौयवसिरांगिरसोजन्मनास्याजीगर्तिःश्रुतःकविः ॥ ऋषेपैतामहात्तंतोर्मापगाःपुन
रेहिमामितिंसहोवाचशुनःशेपोऽदर्शुस्त्वाशासहस्तंनयच्छूद्रेष्वलप्सत ॥ गवांत्रीणिशतानित्वमवृणीथामदंगिरइतिंस
होवाचाजीगर्तःसौयवसिस्तद्वैमातातततपतिंपापंकर्ममयाकृतं ॥ तदहंनिह्नवेतुभ्यंप्रतियंतुशतागवामितिंसहोवाचशुनः
शेपोयःसकृत्पापकंकुर्यात्कुर्यादेनत्ततोपरं ॥ नापागाःशौद्रान्न्यायांदसंधेयंत्वयाकृतमित्यसंधेयमितिहंविश्वामित्रउपप

ऐ. ब्रा.

॥ ८ ॥

पादंसहोवाचविश्वामित्रोंभीमएवसौयवसिंःशासेनविशिशासिषुः ॥ अस्थान्मैतस्यपुत्रोभूर्ममैवोपेहिपुत्रतामितिंसहोवा
चशुनःशेपंःसवैयथानोज्ञपयाराजपुत्रतथावद ॥ यथैवांगिरसःसन्नुपेयांतवपुत्रतामितिंसहोवाचविश्वामित्रोंज्येष्ठोमेत्वं
पुत्राणांस्यास्तवश्रेष्ठाप्रजास्यात् ॥ उपेयादैवंमेदायंतेनवैत्वोपमंत्रयइतिंसहोवाचशुनःशेपंःसंज्ञानानेषुवैब्रूयात्सौहार्द्या
यमेश्रियै ॥ यथाहंभरतऋषभोंपेयांतवपुत्रतामित्यथहविश्वामित्रंःपुत्रानामंत्रयामासंमधुच्छंदाःश्रृणोतनंऋषभोरेणुरष्ट
कः ॥ येकेचभ्रातरस्थनांस्मैज्यैष्ठ्यायकल्पध्वमिति ॥१७॥ तस्यहविश्वामित्रस्यैकशतंपुत्राआसुंःपंचाशदेवज्यायांसोंमधु
च्छंदसःपंचाशत्कनीयांसंस्तद्येज्यायांसोनतेकुशलंमेनिरेंतान्ननुव्याजहारान्तान्वःप्रजाभक्षीष्टेतिंतएतेंध्राःपुंड्राःशबराः
पुलिंदांमूतिबाइत्युदंत्याब्रहवोभवंतिंवैश्वामित्रादस्यूनांभूयिष्ठांःसहोवाचमधुच्छंदाःपंचाशतासार्धंयन्नःपितासंज्ञा
नीतेंतस्मिंस्तिष्ठामहेवयं ॥ पुरस्त्वासर्वेकुर्महेत्वामन्वंचोवयंस्मसीत्यथहविश्वामित्रःप्रतीतःपुत्रांस्तुष्टावंतेवैपुत्राःपशुमं
तोंवीरवंतोभविष्यथ ॥ येमानंमेनुगृह्णंतोवीरवंतमकर्तमा ॥ पुरएत्रावीरवंतोंदेवरातेनगाथिनाः ॥ सर्वेराध्यास्थपुत्रांए
षवःसद्विवाचनं ॥ एषवःकुशिकावीरोंदेवरातस्तमन्वित ॥ युष्मांश्चदायंमउपेतांविद्यांयामुचविद्मसि ॥ तेसम्यंचोवैश्वा
मित्रांःसर्वेसाकंसरातयः ॥ देवरातायतस्थिरेंधृत्यैश्रैष्ठ्यायगाथिनाः ॥ अधीयतदेवरातोंरिक्थयोरुभयोर्ऋषिः ॥ जह्नू
नांचाधिपत्येंदैवेवेदेचगाथिनां ॥ तदेतत्परऋक्शतगाथंशौनःशेपमाख्यानंतद्धोताराज्ञेभिषिक्तायाचष्टेहिरण्यकशिपा

स. पं.

अ. ३

॥ ९८ ॥

सब्रह्मणेपरिहृत्यंःपुरोहितायतनंवाएतत्क्षत्रियस्यंयद्ब्रह्मार्धात्मोहवाएषक्षत्रियस्यंयत्पुरोहितउपाहपरोक्षेणैवंप्राशितरू
पमाप्नोतिंनास्यप्रत्यक्षंभक्षितोभवतियज्ञउहवाएषप्रत्यक्षंयद्ब्रह्मांब्रह्मणिहिसर्वोंयज्ञःप्रतिष्ठितोंयज्ञेयजमानोंयज्ञएवतद्य
ज्ञमप्यत्यर्जतिंयथाऽप्स्वापोयथाग्नावग्निंतद्धैनातिरिच्यतेतदनंनहिनस्तितस्मात्सब्रह्मणेपरिहृत्योग्नौहैकेजुह्वतिप्रजापतेर्वि
भान्नामलोकंस्तास्मिंस्त्वादधामिसहयजमानेनस्वाहेतितत्तथानकुर्याद्यजमानोवैयजमानभागोयजमानंहसोग्नौप्रवृणक्ति
यएनंतत्रब्रूयाद्यजमानमग्नौप्रावार्क्षीःप्रास्याग्निःप्राणान्धक्ष्यतिमरिष्यतियजमानइतिशश्वत्तथास्यात्तस्मात्तस्याशांनेया
दाशांनेयात् ॥ २६ ॥ इतिचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥ ॥

विश्वंतरोहसौषद्मनंःश्यापर्णान्परिचक्षाणोविश्यापर्णंयज्ञमाजह्रेतद्धानुबुध्यश्यापर्णास्तंयज्ञमाजग्मुस्तेहतदंतर्वेद्या
सांचक्रिरेतान्हदृष्ट्वोवाचपापस्यवाइमेकर्मणःकर्तारआसतेपूतायैवाचोवदितारोयच्छ्यापर्णाइमानुत्थापयतेमेमेंतर्वेदि
मासिषतेतितथेतितानुत्थापयांचक्रुस्तेहोत्थाप्यमानारुरुविरेयेतेभ्योभूतवीरेभ्योसितमृगाःकश्यपानांसोमपीथमभिजि
ग्युःपारिक्षितस्यजनमेजयस्यंविकश्यपेयज्ञेतैस्तेतत्रवीरवंतआसुःकःस्वित्सोस्माकास्तिवीरोयइमंसोमपीथमभिजेष्यतीं
त्ययमहमस्मिवोवीरइतिहोवाचरामोमार्गवेयोरामोहासमार्गवेयोनूचानःश्यापर्णीयंस्तेषांहोत्तिष्ठतामुवाचापिनुराजन्नि

१ 'त्सोस्माकमस्ति' इतिभाष्यपाठः । अस्माकंराज्ञातिरस्कृतानांमध्येइतितत्रार्थः ।

त्थंविदंवेदेरुत्थापयंतीर्तियस्त्वंकथंवेत्थब्रह्मबंधविति ॥ २७ ॥ यत्रेंद्रंदेवताःपर्यवृंजन्विश्वरूपंत्वाष्ट्रमभ्यमंस्तंवृत्रमस्तृ
तयतीन्त्सालावृकेभ्यःप्रादांदरुर्मघानवधींद्बृहस्पतेःप्रत्यवधीदितिंतत्रेंद्रःसोमपीथेनव्यार्ध्यतैंद्रस्यानुव्यृद्धिंक्षत्रैंसोमपी
थेनव्यार्ध्यतांपींद्रःसोमपीथेभवंत्त्वष्टुरामुष्यसोमैंतद्व्यृद्धमेवाद्यापिक्षत्रंसोमपीथेर्नसयस्तंभक्षंविद्यांद्यःक्षत्रस्यसोमपीथेन
व्यृद्धस्यंयेनक्षत्रंसमृध्यतेंकथंतंवेदेरुत्थापयंतीतिंवेत्थब्राह्मणत्वंतंभक्षां३ ॥ वेदहीतितंवैनोब्राह्मणब्रूहीतितस्मैवैतेराज
न्नितिहोवाच ॥ २८॥ त्रयाणांभक्षाणामेकमाहरिष्यंतिंसोमंवादधिवापोवांसयदिसोमंब्राह्मणानांसभक्षोंब्राह्मणांस्तेनभ
क्षेणजिन्विष्यसिंब्राह्मणकल्पस्तेप्रजायामाजनिष्यतंआदाय्यापाय्यावसायींयथाकामप्रयाप्योंयदावैक्षत्रियायपापंभव
तिंब्राह्मणकल्पोस्यप्रजायामाजायतंईश्वरोहास्माद्द्वितीयोवातृतीयोवांब्राह्मणतामभ्युपैतोंःसब्रह्मबंधवेनजिज्यूषितोंऽ
थयदिदधिवैश्यानांसभक्षोंवैश्यांस्तेनभक्षेणजिन्विष्यसिंवैश्यकल्पस्तेप्रजायामाजनिष्यतेंन्यस्यबलिकृदन्यस्याद्योय
थाकामज्येयोंयदावैक्षत्रियायपापंभवतिंवैश्यकल्पोस्यप्रजायामाजायर्तईश्वरोहास्माद्द्वितीयोवांतृतीयोवावैश्यतामभ्यु
पैतोंःसवैश्यतयाजिज्यूषितोंथयद्यपःशूद्राणांसभक्षंःशूद्रांस्तेनभक्षेणजिन्विष्यसिंशूद्रकल्पस्तेप्रजायामाजनिष्यतेंन्य
स्यप्रेष्यःकामोत्थाप्योंयथाकामवध्योंयदावैक्षत्रियायपापंभवतिंशूद्रकल्पोस्यप्रजायामाजायर्तईश्वरोहास्माद्द्वितीयोवा
तृतीयोवांशूद्रतामभ्युपैतोंःसशूद्रतयाजिज्यूषितः ॥२९॥ एतेवैतेत्रयोभक्षांराजन्नितिहोवाचंयेषामाशांनेयांत्क्षत्रियोय

जमानोथास्यैषस्वोभक्षोन्यग्रोधस्यावरोधांश्चफलानिचौदुंबराण्याश्वत्थानिप्लाक्षाण्यभिषुणुयात्तानिभक्षयेत्सोस्यस्वोभ
क्षोयतोवाअधिदेवायज्ञेनेष्ट्वास्वर्गंलोकमायंस्तत्रैतांश्चमसान्युब्जंस्तेन्यग्रोधाअभवन्न्युब्जाइतिहाप्येनानेतर्ह्याचक्षतेकुरु
क्षेत्रेतेहप्रथमजान्यग्रोधानांतेभ्योहान्येधिजातास्तेयन्न्यंचोरोहंस्तस्मान्न्यङ्रोहतिन्यग्रोहोन्यग्रोहोवैनामतंन्यग्रोहंसंतं
न्यग्रोधइत्याचक्षतेपरोक्षेणपरोक्षप्रियाइवहिदेवाः ॥ ३० ॥ तेषांयश्चमसानांरसोवाडैन्तेवरोधाअभवन्नथयऊर्ध्वस्तानि
फलान्येषहवावक्षत्रियःस्वाद्भक्षान्नैतियोन्यग्रोधस्यावरोधांश्चफलानिचभक्षयत्युपाहपरोक्षेणैवसोमपीथमाप्नोतिनास्यप्र
त्यक्षंभक्षितोभवतिपरोक्षमिवहवाएषसोमोराजायन्न्यग्रोधःपरोक्षमिवैषब्रह्मणोरूपमुपनिगच्छतियत्क्षत्रियःपुरोधयैवं
दीक्षयैवप्रवरेणैवंक्षत्रंवाएतद्वनस्पतीनांयन्न्यग्रोधःक्षत्रंराजन्योनिततइवहीहक्षत्रियोराष्ट्रेवसन्भवतिप्रतिष्ठितइवनित
तइवन्यग्रोधोवरोधैर्भूम्यांप्रतिष्ठितइवंतद्यत्क्षत्रियोयजमानोन्यग्रोधस्यावरोधांश्चफलानिचभक्षयत्यात्मन्येवतरक्षत्रंव
नस्पतीनांप्रतिष्ठापयतिक्षत्रआत्मानंक्षत्रेहवैसआत्मनिक्षत्रंवनस्पतीनांप्रतिष्ठापयतिन्यग्रोधइवावरोधैर्भूम्यांप्रतिराष्ट्रे
तिष्ठत्युग्रंहास्यराष्ट्रमव्यथ्यंभवतियएवमेतंभक्षंभक्षयतिक्षत्रियोयजमानः ॥ ३१ ॥ अथयदौदुंबराण्यूर्जोवाएषोन्ना
द्याद्वनस्पतिरजायतयदुदुंबरोभौज्यंवाएतद्वनस्पतीनांमूर्जमेवास्मिंस्तदन्नाद्यंभौज्यंचवनस्पतीनांक्षत्रेदधात्यथयदाश्व

त्थानिंतेजसोवाएषवनस्पतिरजायतयदश्वत्थःसाम्राज्यंवाएतद्वनस्पतीनांतेजएवास्मिंस्तत्साम्राज्यंचवनस्पतीनांक्षत्रे
दधात्यथयत्प्लाक्षाणियशसोवाएषवनस्पतिरजायतयत्प्लक्षःस्वाराज्यंचहवाएतद्वैराज्यंचवनस्पतीनांयशएवास्मिंस्तत्स्वा
राज्यवैराज्येचवनस्पतीनांक्षत्रेदधात्येतान्यस्यपुरस्तादुपक्लृप्तानिभवंत्यथसोमंराजानंक्रीणंतितेराज्ञएवांवृतोपवसथात्प्र
तिवेशैश्चरंत्यथौपवसथ्यमहरेतान्यध्वर्युःपुरस्तादुपकल्पयेताधिषवणंचर्माधिषवणेफलकेद्रोणकलशंदशापवित्रमद्रीन्पू
तभृतंचाधवनीयंचस्थालीमुदंचनंचमसंचनद्यदेतद्राजानंप्रातरभिषुण्वंतितदेनानिद्वेधाविगृह्णीयादभ्यन्यानिसुनुया
न्माध्यंदिनायान्यानिपरिशिंष्यात् ॥ ३२ ॥ तद्यत्रैतांश्चमसानुन्नयेयुस्तदेतंयजमानचमसमुन्नयेत्तस्मिन्द्वेदर्भतरुणकेप्रा
स्तेस्यातांतयोर्वषट्कृतेंतःपरिधिपूर्वंप्रास्येद्दधिक्राव्णोअकारिषमित्येतयर्चासस्वाहाकारयानुवषट्कृतेपरमादधिक्राःश्वय
सापंचकृष्टीरितितद्यत्रैतांश्चमसानाहरेयुस्तदेतंयजमानचमसमाहरेत्तान्यत्रोद्गृह्णीयुस्तदेनमुपोद्गृह्णीयात्तद्यदेळांहोतोपह्व
येतंयदाचमसंभक्षयेदथैनमेतयाभक्षयेद्यदत्रशिष्टंरसिनःसुतस्ययदिंद्रोअपिबच्छचीभिः ॥ इदंतदस्यमनसाशिवेनसोमं
राजानमिहभक्षयामीतिशिवोहवाअस्माएषवानस्पत्यःशिवेनमनसाभक्षितोभवत्युग्रंहास्यराष्ट्रमव्यथ्यंभवतियएवमेतं



१ 'वृत्तौपवसथा' इतिभाष्यपाठः । औपवसथाद्दिनात्पूर्वमितितदर्थः ।

भक्षंभक्षयतिक्षत्रियोयजमानंःशंनएधिहृदेपीतंःप्रणआयुर्जीवसेसोमतारीरित्यात्मनःप्रत्यभिमर्शईश्वरोहवाएषोप्रत्य
भिमृष्टोमनुष्यस्यायुःप्रत्यवहर्तोरनर्हन्माभक्षयतीतितद्यदेतेनात्मानमभिमृशत्यायुरेवतत्प्रतिरतआप्यायस्वसमेतुतेसं
तेपयांसिसमुयंतुवाजाइतिचमसमाप्यायय त्यभिरूपाभ्यांयद्यज्ञेभिरूपंतत्समृद्धम् ॥ ३२ ॥ तद्यत्रैतांश्चमसान्त्सादये
युस्तदेतंयजमानचमसंसादयेत्तान्यत्रप्रकंपयेयुस्तदेनमनुप्रकंपयेदथैनमाहृतंभक्षयेन्नराशंसपीतस्यदेवसोमतेमतिविदंऊ
मैःपितृभिर्भक्षितस्यभक्षयामीतिप्रातःसवनेनाराशंसोभक्षंऊवैरितिमाध्यंदिनेकाव्यैरितितृतीयसवनेऊमावैपितरःप्रा
तःसवनंऊर्वामाध्यंदिनेकाव्यास्तृतीयसवनेतदेतत्पितृनेवामृतान्त्सवनभाजःकरोतिसर्वोहैवसोमृतइतिहस्माहप्रियव्र
तःसोमापीयःकश्चसवनभागित्यमृताहवाअस्यपितरःसवनभाजोभवंत्युग्रंहास्यराष्ट्रमव्यथ्यंभवतियएवमेतंभक्षंभक्षय
तिक्षत्रियोयजमानंःसमानआत्मनःप्रत्यभिमर्शःसमानमाप्यायनंचमसस्यप्रातःसवनस्यैवावृताप्रातःसवनेचरेयुर्माध्यं
दिनस्यमाध्यंदिनेतृतीयसवनस्यतृतीयसवनेतमेवमेतंभक्षंप्रोवाचरामोमार्गवेयोविश्वंतरायसौषद्मनायतस्मिन्होवाच
प्रोक्तेसहस्रमुहब्राह्मणतुभ्यंदद्मःसश्यापर्णउमेयज्ञइत्येतमुहैवप्रोवाचतुरःकावषेयोजनमेजयायपारिक्षितायैतमुहैवप्रो
चतुःपर्वतनारदौसोमकायसाहदेव्यायसहदेवायसाञ्जयायबभ्रवेदैवावृधायभीमायवैदर्भायनग्नजितेगांधारायैतमुहैव
प्रोवाचाग्निःसनश्रुतायारिंदमायक्रतुविदेजानकयएतमुहैवप्रोवाचवसिष्ठःसुदासेपैजवनायतेहतेसर्वएवमहज्जग्मुरेतंभ

क्षंभक्षयित्वासर्वैहैवमहाराजाआसुरांदित्यइवहस्मैश्रियाँप्रतिष्ठितास्तपंतिसर्वाभ्योदिग्भ्योबलिमावहंतंआदित्यइवहवै श्रियांप्रतिष्ठितस्तपतिसर्वाभ्योदिग्भ्योबलिमावहंत्युग्रंहास्यराष्ट्रमव्यथ्यंभवतियएवमेतंभक्षंभक्षयतिक्षत्रियोयजमानोयजमानः ॥ ३४ ॥ इतिपंचमोऽध्यायः ॥ ५ ॥ इतिसप्तमपंचिकासमाप्ता ॥ ७ ॥ ॥ ॥ ॥

॥ इतिसप्तमपंचिकासमाप्ता ॥

श्रीगणेशायनमः ॥ हरिः ॐ ॥ अथातःस्तुतशस्त्रयोरेवैकाहिकंप्रातःसवनंमैकाहिकंतृतीयसवनंमेतेवैशांतेक्लृप्तेप्रति
ष्ठितेसवनेयदैकाहिकेशांत्यैक्लृप्त्यैप्रतिष्ठित्याअप्रच्युत्यांउक्तोमाध्यंदिनःपवमानोयउभयसाम्नोबृहत्पृष्ठस्योभेहिसामनी
क्रियेतेआत्वारथंयथोतयंइदंवसोसुतमंधइतिराथंतरीप्रतिपद्राथंतरोनुचरःपवमानोक्थंवाएतद्यन्मरुत्वतीयंपवमाने
वाअत्ररथंतरंकुर्वंतिबृहत्पृष्ठंसवीवधतायैतदिदंरथंतरंस्तुतमाभ्यांप्रतिपदनुचराभ्यामनुशंसत्यथोब्रह्मवैरथंतरंक्षत्रंबृह
द्ब्रह्मखलुवैक्षत्रात्पूर्वंब्रह्मपुरस्तान्मउग्रंराष्ट्रमव्यथ्यमसदित्यथान्नंवैरथंतरमन्नमेवास्मैतत्पुरस्तात्कल्पयंत्यथेयंवैपृथिवीर
थंतरमियंखलुवैप्रतिष्ठाप्रतिष्ठामेवास्मैतत्पुरस्तात्कल्पयतिसमानइंद्रनिहवोविभक्तःसोहासुद्धान्ब्राह्मणस्पत्यंउभयसा
म्नोरूपमुभेहिसामनीक्रियेतेसमान्योधाय्याअविभक्तांस्ताअह्नामैकाहिकोमरुत्वतीयःप्रगाथः ॥ १ ॥ जनिष्ठाउग्रःसहसे
तुरायेतिसूक्तमुग्रवत्सहस्वत्तत्क्षत्रस्यरूपंमंद्रओजिष्ठइत्योजस्वत्तत्क्षत्रस्यरूपंबहुलाभिमानइत्यभिवदभिभूत्यैरूपंतदेका
दशचभवंत्येकादशाक्षरावैत्रिष्टुप्त्रैष्टुभोवैराजन्यंओजोवाइंद्रियंवीर्यंत्रिष्टुबोजःक्षत्रंवीर्यंराजन्यस्तदेनमोजसाक्षत्रेणवी
र्येणसमर्धयातितद्गौरिवीतंभवंत्येतद्वैमरुत्वतीयंसमृद्धंयद्गौरिवीतंतस्योक्तंब्राह्मणंत्वामिद्धिहवामहइतिबृहत्पृष्ठंभवतिक्ष
त्रंवैबृहत्क्षत्रेणैवतत्क्षत्रंसमर्धयंत्यथोक्षत्रंवैबृहदात्मायजमानस्यनिष्केवल्यंतद्यद्बृहत्पृष्ठंभवातिक्षत्रंवैबृहत्क्षत्रेणैवैनंतत्सम
र्धयंत्यथोज्यैष्ठ्यंवैबृहज्ज्यैष्ठ्येनैवैनंतत्समर्धयंत्यथोश्रैष्ठ्यंवैबृहच्छ्रैष्ठ्येनैवैनंतत्समर्धयंत्यभित्वाशूरनोनुमइतिरथंतरमनुरू

पंकुर्वंत्ययंवैलोकोरथंतरंमसौलोकोबृहदस्यवैलोकस्यासौलोकोनुरूपोमुष्यलोकस्यायंलोकोनुरूपस्तद्यद्रथंतरमनुरूपंकु
र्वंत्युभावेवतल्लोकौयजमानायसंभोगिनौकुर्वंत्यथोब्रह्मवैरथंतरंक्षत्रंबृहद्ब्रह्मणिखलुवैक्षत्रंप्रतिष्ठितंक्षत्रेब्रह्माथोसाम्नएव
सयोनिताथैयद्वावानेतिधाय्यातस्याउक्तंब्राह्मणंमुभयंशृणवच्चनइतिसामप्रगाथंउभयसाम्नोरूपमुभेहिसामनीक्रियेते
॥ २ ॥ तमुष्टुहियोअभिभूत्योजाइतिसूक्तमभिवदभिभूत्यैरूपमषाढमुग्रंसहमानमाभिरित्युग्रवत्सहमानवत्तत्क्षत्रस्य
रूपंतत्पंचदशर्चंभवत्योजोवाइंद्रियंवीर्यंपंचदशओजःक्षत्रंवीर्यंराजन्यस्तदेनमोजसाक्षत्रेणवीर्येणसमर्धयतितद्भारद्वाजं
भवतिभारद्वाजंवैबृहदार्षेयेणसलोमैषहवावक्षत्रियज्ञःसमृद्धोयोबृहत्पृष्ठस्तस्माद्यत्रक्वचक्षत्रियोयजेतंबृहदेवतत्रपृष्ठं
स्यात्तत्समृद्धं ॥ ३ ॥ ऐकाहिकाहोत्राएतावैशांताःक्लृप्ताःप्रतिष्ठिताहोत्रायदैकाहिकाःशांत्यैक्लृप्त्यैप्रतिष्ठित्याअप्रच्युत्यै
ताःसर्वरूपाभवंतिसर्वसमृद्धाःसर्वरूपतायैसर्वसमृद्ध्यैसर्वरूपाभिर्होत्राभिःसर्वसमृद्धाभिःसर्वान्कामानवाप्नवामेतित
स्माद्यत्रक्वचैकाहाअसर्वस्तोमाअसर्वपृष्ठाऐकाहिकाएवतत्रहोत्राःस्युस्तत्समृद्धमुक्थएवायंपंचदशःस्यादित्याहुरोजोवा
इंद्रियंवीर्यंपंचदशओजःक्षत्रंवीर्यंराजन्यस्तदेनमोजसाक्षत्रेणवीर्येणसमर्धयतितस्यात्रिंशत्स्तुतशस्त्राणिभवंतित्रिंशदक्ष
रावैविराड्विराळन्नाद्यंविराज्येवैनंतदन्नाद्येप्रतिष्ठापयतितस्मात्तदुक्थ्यःपंचदशःस्यादित्याहुर्ज्योतिःष्टोमएवाग्निष्टोमः
स्याद्ब्रह्मवैस्तोमानांत्रिवृत्क्षत्रंपंचदशोब्रह्मखलुवैक्षत्रात्पूर्वंब्रह्मपुरस्तान्मउग्रंराष्ट्रमव्यथ्यमसदितिविशःसप्तदशःशौद्रोव

णएकविंशोविंशंचैवास्मैतच्छौद्रंचवर्णमनुवर्त्मानौकुर्वंत्यथोतेजोवैस्तोमानांत्रिवृद्वीर्यंपंचदशःप्रजातिःसप्तदशःप्रतिष्ठै
कविंशस्तदेनंतेजसावीर्येणप्रजात्याप्रतिष्ठयांततःसमर्धयतिंतस्माज्ज्योतिःष्टोमःस्यात्तस्यचतुर्विंशतिःस्तुतशस्त्राणिभवं
तिचतुर्विंशत्यर्धमासोवैसंवत्सरःसंवत्सरेकृत्स्नमन्नाद्यंकृत्स्नएवैनंतदन्नाद्येप्रतिष्ठापयंतितस्माज्ज्योतिःष्टोमएवाग्निष्टोमः
स्यादग्निष्टोमःस्यात् ॥ ४ ॥ इतिप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥

अथातःपुनरभिषेकस्यैवंसूयतेहवाअस्यक्षत्रंयोदीक्षतेक्षत्रियःसन्त्सयदावभृथादुदेत्यानूबंध्ययेष्ट्वोदवस्यंत्यथैनमुदव
सानीयायांसंस्थितायांपुनरभिषिंचंतितस्यैतेपुरस्तादेवसंभाराउपक्लृप्ताभवंत्यौदुंबर्यासंदीतस्यैप्रादेशमात्राःपादाःस्युर
त्निमात्राणिशीर्षण्यानूच्यानिमौंजंविवयनंव्याघ्रचर्मास्तरणमौदुंबरश्चमसउदुंबरशाखातस्मिन्नेतस्मिंश्चमसेष्टातयानि
निषुतानिभवंतिदधिमधुसर्पिरातपवर्ष्याआपःशष्पाणिचतोक्मानि वसुरादूर्वांतद्यैषादक्षिणास्फ्यवर्तनिर्वेदेर्भवतितत्रै
तांप्राचीमासंदींप्रतिष्ठापयंतितस्याअंतर्वेदिद्वौपादौभवतोबहिर्वेदिद्वावियंवैश्रीस्तस्याएतत्परिमितंरूपंयदंतर्वेद्यथैषभू
मापरिमितोयोबहिर्वेदितद्यदस्याअंतर्वेदिद्वौपादौभवतोबहिर्वेदिद्वाउभयोःकामयोरुपाप्त्यैयश्चांतर्वेदियश्चबहिर्वेदि
॥ ५ ॥ व्याघ्रचर्मणास्तृणात्युत्तरलोम्नाप्राचीनग्रीवेणक्षत्रंवाएतदारण्यानांपशूनांयद्व्याघ्रःक्षत्रंराजन्यःक्षत्रेणैवतत्क्षत्रं
समर्धयतितांपश्चात्प्राङुपविश्यांच्यजानुदक्षिणमभिमंत्रयतउभाभ्यांपाणिभ्यामालभ्याग्निष्टागायत्र्यासयुक्छंदसारोह

तुसवितोष्णिहासोमोनुष्टुभाबृहस्पतिर्बृहत्यामित्रावरुणौपंक्त्यैंद्रस्त्रिष्टुभाविश्वेदेवाजगत्यातानहमनुराज्यायसाम्राज्या
यभौज्यायस्वाराज्यायवैराज्यायपारमेष्ठ्यायराज्यायमाहाराज्यायाधिपत्यायस्वावश्यायातिष्ठायारोहामीत्येतामासंदी
मारोहेद्दक्षिणेनाग्रेजानुनाथसव्येनतत्तदिति ॥ ३ ॥ चतुरुत्तरैर्वैदेवाश्छंदोभिःसयुग्भूत्वैतांश्रियमारोहन्यस्यामेतएतर्हि
प्रतिष्ठिताअग्निर्गायत्र्यासवितोष्णिहासोमोनुष्टुभाबृहस्पतिर्बृहत्यामित्रावरुणौपंक्त्यैंद्रस्त्रिष्टुभाविश्वेदेवाजगत्यातेएते
अभ्यनूच्येतेअग्नेर्गायत्र्यभवत्सयुग्वेतिकल्पतेहवाअस्मैयोगक्षेमउत्तरोत्तरिणींहश्रियमश्नुतेश्नुतेहप्रजानामैश्वर्यमाधिप
त्यंयएवमेताअनुदेवताएतामासंदीमारोहतिक्षत्रियःसंन्नथैनमभिषेक्ष्यन्नपांशांतिंवाचयतिशिवेनमाचक्षुषापश्यतापः
शिवयातन्वोपस्पृशतत्वचंमे ॥ सर्वाँअग्नीँरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्तेतिनैतस्याभिषिषिचानस्याशांता
आपोवीर्यंनिर्हणन्निति ॥ ६ ॥ अथैनमुदुंबरशाखामंतर्धायाभिषिंचतीमाआपःशिवतमाइमाःसर्वस्यभेषजीः ॥ इमा
राष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं ॥ ताभिरद्भिरभिषिंचा
मित्वामहंराज्ञांत्वमधिराजोभवेह ॥ महांतंत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनंदेवस्य
त्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ बलायश्रियैयशसे
न्नाद्यायभूरितियइच्छेदिममेवप्रत्यन्नमद्यादित्यथयइच्छेद्विपुरुषंभुर्भुवइत्यथयइच्छेत्रिपुरुषंवाप्रतिमंवाभूर्भुवःस्वरितित

द्धैकआहुंःसर्वाप्तिर्वाऽएषायदेताव्याहृतयोंतिसर्वेणहास्यपरस्मैकृतंभवतीतितमेतेनाभिषिंचेद्देवस्यत्वासवितुःप्रसवेश्वि
नोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ वलायश्रियैयशसेन्नाद्यायेतितदुपुनःपरि
चक्षतेयदसर्वेणवाचोभिषिक्तोभवतीश्वरोहतुपुरायुषःप्रैतोरितिहस्माहसत्यकामोजाबलोयमेताभिर्व्याहृतिभिर्नाभि
षिंचंतीतीश्वरोहसर्वमायुरैतोःसर्वमाप्नोद्विजयेनेत्युहस्माहोद्दालकआरुणिर्यमेताभिर्व्याहृतिभिरभिषिंचंतीतितमेदेनै
वाभिषिंचेद्देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ ब
लायश्रियैयशसेन्नाद्यायभूर्भुवःस्वरित्यथैतानिहवैक्षत्रियादीजानाद्व्युत्क्रांतानिभवंतिब्रह्मक्षत्रेऊर्गन्नाद्यमपामोषधीनांर
सोब्रह्मवर्चसमिरापुष्टिःप्रजातिःक्षत्ररूपंतदथोअन्नस्यरसओषधीनांक्षत्रंप्रतिष्ठांतद्यदेवामूपुरस्तादाहुतीजुहोतितदस्मि
न्ब्रह्मक्षत्रेदधाति ॥ ७ ॥ अथयदौदुंबर्यासंदीभवत्यौदुंबरश्चमसउदुंबरशाखोर्ग्वाअन्नाद्यमुदुंबरऊर्जमेवास्मिंस्तदन्नाद्यं
दधात्यथयद्दधिमधुघृतंभवत्यपांसओषधीनांरसोपामेवास्मिंस्तदोषधीनांरसंदधात्यथयदातपवर्ष्याआपोभवंतितेजश्च
हवैब्रह्मवर्चसंचातपवर्ष्याआपस्तेजएवास्मिंस्तद्ब्रह्मवर्चसंचदधात्यथयच्छष्पाणिचतोक्मानिचभवंतीरायैतत्पुष्ट्यैरूपंम
थोप्रजात्याइरामेवास्मिंस्तत्पुष्टिंदधात्यथोप्रजातिमथयत्सुराभवतिक्षत्ररूपंतदथोअन्नस्यरसःक्षत्ररूपमेवास्मिंस्तद्दधात्य
थोअन्नस्यरसमथयद्दूर्वाभवतिक्षत्रंवाएतदोषधीनांयद्दूर्वाक्षत्रंराजन्योनिततइवहीहंक्षत्रियोराष्ट्रेवसन्भवतिप्रतिष्ठितइव

नितते वंदूर्वावरोधैर्भूम्यां प्रतिष्ठितेवंतद्यद्दूर्वा भवंत्योषधीनामेवास्मिंस्तत्क्षत्रं दधात्यथो प्रतिष्ठामेतानिहवैयान्यस्मादीजा
नांद्युत्क्रांतानिभवंतितान्येवास्मिंस्तद्दधातितैरेवैनंतत्समर्धयंत्यथास्मैसुराकंसंहस्तआदधातिस्वादिष्ठयामदिष्ठयापवस्व
सोमधारया ॥ इंद्रायपातवेसुतइत्याधायशांतिंवाचयतिनानाहिवांदेवहितंसदस्कृतंमासंसृक्षाथांपरमेव्योमनि ॥ सुरा
त्वमसिशुष्मिणींसोमएषराजामैनंहिंसिष्टंस्वांयोनिमाविशंतावितिसोमपीथस्य चैषासुरापीथस्य चव्यावृत्तिःपीत्वायंरातिं
मन्येतंतस्माएनांप्रयच्छेत्तद्धिमित्रस्यरूपंमित्रएवैनांतदंततःप्रतिष्ठापयंतितथाहिमित्रेप्रतितिष्ठतिप्रतितिष्ठतियएवंवेद
॥ ८ ॥ अथोदुंबरशाखामभिप्रत्यवरोहंत्यूर्ग्वाअन्नाद्यमुदुंबरऊर्जमेवतदन्नाद्यमभिप्रत्यवरोहंत्युपर्येवासीनोभूमौपादौ
प्रतिष्ठाप्यप्रत्यवरोहमाहप्रतितिष्ठामिद्यावापृथिव्योःप्रतितिष्ठामिप्राणापानयोःप्रतितिष्ठाम्यहोरात्रयोःप्रतितिष्ठाम्य
न्नपानयोःप्रतिब्रह्मन्प्रतिक्षत्रेप्रत्येषुत्रिषुलोकेषुतिष्ठामीत्यंततःसर्वेणात्मनाप्रतितिष्ठतिसर्वस्मिन्हवाएतस्मिन्प्रतितिष्ठं
त्युत्तरोत्तरिणींहश्रियमश्नुतेश्नुतेहप्रजानामैश्वर्यमाधिपत्यंयएवमेतेनपुनरभिषेकेणाभिषिक्तःक्षत्रियःप्रत्यवरोहत्येतेनप्र
त्यवरोहेणप्रत्यवरूह्योपस्थंकृत्वाप्राङासीनोनमोब्रह्मणेनमोब्रह्मणेनमोब्रह्मणइतित्रिष्कृत्वोब्रह्मणेनमस्कृत्यवरंददामि
जित्याअभिजित्यैविजित्यैसंजित्याइतिवाचंनिसृजतेसयन्नमोब्रह्मणेनमोब्रह्मणेनमोब्रह्मणइतित्रिष्कृत्वोब्रह्मणेनमस्क
रोतिब्रह्मणएवतत्क्षत्रंवशमेतितद्यत्रवैब्रह्मणःक्षत्रंवशमेतितद्राष्ट्रंसमृद्धंतद्वीरवदाहास्मिन्वीरोजायतेथयद्वरंददामिजि

त्याअभिजित्यैविजित्यैसंजित्याइतिवाचंविसृजतंएतद्वैवाचोजितंयद्दामीत्याहंयदेववाचोजितां३॥तन्मइदमनुकर्मसं
तिष्ठाताइतिंविसृज्यवाचमुपोत्थायांहवनीयेसमिधमभ्यादधातिंसमिदसिसम्वेंक्ष्वेंद्रियेणग्नीर्येणस्वाहेतींद्रियेणैवतद्वी
र्येणात्मानमंततःसमर्धयंत्याधायसमिधंत्रीणिपदानिंप्राङुदङ्ङभ्युत्क्रामतिंक्रूप्तिरसिदिशांमयिदेवेभ्यःकल्पत॥ कल्पतां
मेयोगक्षेमोभयंमेस्त्वित्यंपराजितांदिशमुपतिष्ठतेंजितस्यैवापुनःपराजयायतत्तदितीं ३ ॥९॥ देवासुरावाएषुलोकेषुसंये
तिरेंतएतस्यांप्राच्यांदिशियेतिरेंतांस्ततोसुराऽअजयंस्तेदक्षिणस्यांदिशियेतिरेंतांस्ततोसुराअजयंस्तेप्रतीच्यांदिशियेतिरें
तांस्ततोसुराऽअजयंस्तउदीच्यांदिशियेतिरेंतांस्ततोसुराऽअजयंस्तएतस्मिन्नवांतरदेशेयेतिरेंयएषप्राङुदङ्हततोजिग्युं
स्तंयदिक्षत्रियउपधावेंत्सेनयोःसमायत्योस्तथामेकुरुंयथाहमिमांसेनांजयानीतिंसयदितथेतिब्रूयाद्वनस्पतेवीड्वंगोहिभू
याइंत्यस्यरथोपस्थमभिमृश्याथैनंब्रूयादातिष्ठस्वैतांतेदिशमभिमुखःसन्नद्धोरथोभिप्रवर्ततांसउदङ्सप्रत्यङ्सदक्षिणास
प्राङ्सोभ्यमित्रमित्यभीवर्तेनहविषेत्यैवैनमावर्तयेंदथैनमन्वीक्षेताप्रतिरथेनंशासेनसौपर्णेनेतिंजयतिहतांसेनांयद्युवाए
नमुपधावेंत्संग्रामंसंयतिष्यमाणस्तथामेकुरुंयथाहमिमंसंग्रामंसंजयानींत्येतस्यामेवैनंदिशियातयेंज्जयतिहतंसंग्रामंयद्यु
वाएनमुपधावेंद्राष्ट्रादपरुध्यमानस्तथामेकुरुंयथाहमिदंराष्ट्रंपुनरवगच्छानींत्येतस्यामेवैनंदिशमुपनिष्क्रमयेंत्तथाहराष्ट्रं
पुनरवगच्छेंत्युपस्थायामित्राणांव्यपनुत्तिंब्रुवन्गृहानभ्यैंत्यपप्राचइंद्रविश्वाँअमित्रानितिंसर्वतोहास्माअनमित्रमभयंभ

र्वत्युत्तरोत्तरिणींहश्रियमश्नुतेश्नुतेहप्रजानामैश्वर्यमाधिपत्यँयएवमेतामभित्राणांव्यपनुत्तिंब्रुवन्गृहानभ्येत्येत्यगृहान्प्रश्चाद्गृह्यस्याग्नेरुपविष्टायान्वारब्धायंऋत्विगंततःकंसेनचतुर्गृहीतास्तिस्रआज्याहुतीरैंद्रीःप्रपदंजुहोत्यनार्त्याअरिष्ट्याअज्यान्याअभयाय ॥ १० ॥ पर्यूषुप्रधन्ववाजसातयेपरिवृत्राभूर्ब्रह्मप्राणममृतंप्रपद्यतेयमसौशर्मवर्माभयंस्वस्तये ॥ सहप्रजयासहपशुभिर्णिसक्षणिर्द्विषस्तरध्याऋणयानईयसेस्वाहा ॥ अनुहित्वासुतंसोममदामसिंमहेसमभुवोब्रह्मप्राणममृतंप्रपद्यतेयमसौशर्मवर्माभयंस्वस्तये ॥ सहप्रजयासहपशुभिर्यराज्येवाजांअभिपवमानप्रगाहसेस्वाहा ॥ अजीजनोहिपवमानसूर्यविधारेशक्मनब्रह्मप्राणममृतंप्रपद्यतेयमसौशर्मवर्माभयंस्वस्तये ॥ सहप्रजयासहपशुभिःक्मनापयोगोजीरयारंहमाणःपुरंध्यास्वाहेत्यनार्तोहवाअरिष्टोजीर्तःसर्वतोगुप्तस्त्रय्यैविद्यायैरूपेणंसर्वादिशोनुसंचरत्यैंद्रेलोकेप्रतिष्ठितोयस्माएताऋत्विगंततःकंसेनचतुर्गृहीतास्तिस्रआज्याहुतीरैंद्रीःप्रपदंजुहोत्यथांततःप्रजातिमाशास्तेगवामश्वानांपुरुषाणांमिहगावःप्रजायध्वंमिहाश्वाइहपूरुषाः ॥ इहोसहस्रदक्षिणोवीरस्त्रातानिषीदत्विति[२]बहुरहवैप्रजयापशुभिर्भवतियएवमेतामंततःप्रजातिमाशास्तेगवामश्वानांपुरुषाणामेषहवावक्षत्रियोविकृष्टोयमेवंविदोयाजयंत्यथहतंव्येवकर्षतेयथाहवाइदंनिषादावांसेलगावापापकृतोवांवित्तवंतंपुरुषमरण्येगृहीत्वांकर्तमन्वस्यवित्तमादायद्रवंत्येवमेवतऋ

१ 'पशुभीराज्ये' इतिभाष्येपाठः । २ 'बहुहवै' इतिभाष्येपाठः । ३ 'सेळगावा' इतिभाष्येपाठः ।

त्विजोयजमानँकर्तमन्वस्य वित्तमादायद्रवंतिंयमनेवंविदोयाजयँत्येतद्धस्मवैतद्विद्वानाहंजनमेजयःपारिक्षितंएवंविदं हिवैमामेवंविदोयाजयंतिंतस्मादहंजयाम्यंभीत्वरींसेनांजयाम्यभीत्वर्यासेनयांनमादिव्यानमानुष्यंइषवऋच्छंत्येष्यामिं सर्वमायुःसर्वंभूमिर्भविष्यामीतिंनहवाएनंदिव्यानमानुष्यंइषवऋच्छंत्येतिंसर्वमायुःसर्वभूमिर्भवतिंयमेवंविदोयाजयंति याजयंति ॥ ११ ॥ इतिद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥ ॥

अथातऐंद्रोमहाभिषेकंस्तेदेवाअब्रुवंन्तसप्रजापतिकांअयंवैदेवानामोजिष्ठोवलिष्ठंःसहिष्ठःसत्तमःपारयिष्णुतमंइममे वाभिषिंचामहाइतितथेतिंतद्धैतादिंद्रमेवंतस्माएतामासंदींसमभरन्नृचंनामतस्यैबृहच्चरथंतरंचंपूर्वौपादावकुर्वंन्वैरूपंचवै राजंचापरौंशाक्वररैवतेशीर्षण्येंनौधसंचकालेयंचानूच्येंऋचःप्राचीनातानांन्तसामानितिरश्चीनवायान्यजूंष्यतीकाशां न्यशआस्तरणंश्रियमुपवर्हणंतस्यैसविताचबृहस्पतिश्चंपूर्वौपादावधारयतांवायुश्चपूषाचापरौंमित्रावरुणौंशीर्षण्येंअश्वि नावनूच्येंसएतामासंदीमारोहंद्वसवस्त्वागायत्रेणच्छंदसांत्रिवृतास्तोमेनंरथंतरेणसाम्नारोहंतुंतानन्वारोहामिसाम्रा ज्यायंरुद्रास्त्वात्रैष्टुभेनच्छंदसांपंचदशेनस्तोमेनंबृहतासाम्नारोहंतुंतानन्वारोहामिभौज्यायांदित्यास्त्वाजागतेनच्छंद सांसप्तदशेनस्तोमेनंवैरूपेणसाम्नारोहंतुंतानन्वारोहामिस्वाराज्यायंविश्वेत्वादेवाआनुष्टुभेनच्छंदसैकविंशेनस्तोमेनंवै राजेनसाम्नारोहंतुंतानन्वारोहामिवैराज्यायंसाध्याश्चत्वाप्त्याश्चदेवांःपांक्तेनच्छंदसात्रिणवेनस्तोमेनंशाक्वरेणसाम्नारोहं

तुंतानन्वारोहामिराज्यायंमरुतश्चत्वांगिरसश्चदेवाअतिच्छंदसाछंदसात्रयस्त्रिंशेनस्तोमेनरैवतेनसाम्नारोहंतुंतानन्वारो
हामिपारमेष्ठ्यायंमाहाराज्यायाधिपत्यायंस्वावश्यायातिष्ठायारोहामीत्येतामासंदीमारोहेत्तमेतस्यामासंद्यामासीनंवि
श्वेदेवाअब्रुवंन्नवाअनभ्युत्क्रुष्टइंद्रोवीर्यंकर्तुमर्हत्यभ्येनमुत्क्रोशामेतितथेतितंविश्वेदेवाअभ्युदक्रोशन्निमंदेवाअभ्युत्क्रो
शतंसम्राजंसाम्राज्यंभोजंभोजपितरंस्वराजंस्वाराज्यंविराजंवैराज्यंराजानंराजपितरंपरमेष्ठिनंपारमेष्ठ्यंक्षत्रमजनिक्षत्रि
योजनिविश्वस्यभूतस्याधिपतिरजनिविशामत्ताजनिपुरांभेत्ताजन्यसुराणांहंताजनिब्रह्मणोगोप्ताजनिधर्मस्यगोप्ताजनी
तितमभ्युत्क्रुष्टंप्रजापतिरभिषेक्ष्यन्नेतयर्चाभ्यमंत्रयत ॥ १२ ॥ निषसादधृतव्रतोवरुणःपस्त्यास्वा ॥ साम्राज्यायभौज्या
यंस्वाराज्यायवैराज्यायंपारमेष्ठ्यायराज्यायंमाहाराज्यायाधिपत्यायंस्वावश्यायातिष्ठायसुक्रतुरितितमेतस्यामासंद्यामा
सीनंप्रजापतिःपुरस्तात्तिष्ठन्प्रत्यङ्मुखंऔदुंबर्यार्द्रयाशाखयासपलाशयाजातरूपमयेनचपवित्रेणांतर्धायाभ्यषिंचदिमा
आपःशिवतमाइत्येतेनतृचेनदेवस्यत्वेतिचयजुषाभूर्भुवःस्वरित्येताभिश्चव्याहृतिभिः ॥ १३ ॥ अथैनंप्राच्यांदिशिव
सवोदेवाःषड्भिश्चैवपंचविंशैरहोभिरभ्यषिंचन्नेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभिःसाम्राज्यायतस्मादेतस्यांप्रा
च्यांदिशियेकेचप्राच्यानांराजानःसाम्राज्यायैवतेभिषिच्यंतेसम्राळित्येनानभिषिक्तानाचक्षतएतामेवदेवानांविहितिम
न्वथैनंदक्षिणस्यांदिशिरुद्रादेवाःषड्भिश्चैवपंचविंशैरहोभिरभ्यषिंचन्नेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभिर्भौज्या

यंतस्मादेतस्यांदक्षिणस्यांदिशिंयेकेचसत्वतांराजानोभौज्यायैवतेभिषिच्यंतेभोजेत्येनानभिषिक्तानाचक्षतऽएतामेवदे
वानांविहितिमन्वथैनंप्रतीच्यांदिश्यादित्यादेवाःषड्भिश्चैवपंचविंशैरहोभिरभ्यषिंचन्नेतेनचतृचेनैतेनचयजुषैताभिश्च
व्याहृतिभिःस्वाराज्यायंतस्मादेतस्यांप्रतीच्यांदिशियेकेचनीच्यानांराजानोयेपाच्यानांस्वाराज्यायैवतेभिषिच्यंतेस्वरा
ळित्येनानभिषिक्तानाचक्षतएतामेवदेवानांविहितिमन्वथैनमुदीच्यांदिशिविश्वेदेवाःषड्भिश्चैवपंचविंशैरहोभिरभ्यषिं
चन्नेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभिर्वैराज्यायंतस्मादेतस्यामुदीच्यां दिशियेकेचपरेणहिमवंतंजनपदाउत्तर
कुरवउत्तरमद्राइतिवैराज्यायैवतेभिषिच्यंतेविराळित्येनानभिषिक्तानाचक्षतएतामेवदेवानांविहितिमन्वथैनमस्यांध्रु
वायांमध्यमायांप्रतिष्ठायांदिशिसाध्याश्चाप्त्याश्चदेवाःषड्भिश्चैवपंचविंशैरहोभिरभ्यषिंचन्नेतेनचतृचेनैतेनचयजुषैताभि
श्चव्याहृतिभीराज्यायंतस्मादस्यांध्रुवायांमध्यमायांप्रतिष्ठायांदिशियेकेचकुरुपंचालानांराजानःसवशोशीनराणांराज्या
यैवतेभिषिच्यंतेराजेत्येनानभिषिक्तानाचक्षतएतामेवदेवानांविहितिमन्वथैनमूर्ध्वायांदिशिमरुतश्चांगिरसश्चदेवाःष
ड्भिश्चैवपंचविंशैरहोभिरभ्यषिंचन्नेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभिःपारमेष्ठ्यायमाहाराज्यायाधिपत्यायस्वाव
श्यायातिष्ठायेतिसपरमेष्ठीप्राजापत्योभवंत्सएतेनमहाभिषेकेणाभिषिक्तइंद्रःसर्वाजितीरजयंत्सर्वान्लोकानविंदत्सर्वेषां
देवानांश्रैष्ठ्यमतिष्ठांपरमतामगच्छंत्साम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमाहाराज्यमाधिपत्यंजित्वास्मिन्लोके

स्वयंभूः स्वराळमृतोऽमुष्मिन्त्स्वर्गेलोकेसर्वान्कामानाप्त्वामृतःसमभवत्समभवत् ॥ १४ ॥ इतितृतीयोऽध्यायः ॥ ३ ॥

सयइच्छेदेवंवित्क्षत्रियमयँसर्वाजितीर्जयेतायंसर्वान्लोकान्विंदेतायंसर्वेषांराज्ञांश्रैष्ठ्यमतिष्ठाँपरमतांगच्छेतसाम्राज्यँ भौज्यँस्वाराज्यंवैराज्यँपारमेष्ठ्यंराज्यँमाहाराज्यमाधिपत्यमयँसमंतपर्यायीस्यात्सार्वभौमःसार्वायुषआंतादापरार्धात्पृथिव्यैसमुद्रपर्यंतायाएकराळितितमेतेनैंद्रेणमहाभिषेकेणक्षत्रियंशापयित्वाभिषिंचेद्यांचरात्रीमजायेथायांचप्रेतासितदुभयमंतरेणेष्टापूर्तंतेलोकँसुकृतमायुःप्रजांवृंजीयँयदिमेद्रुह्येरितिसयइच्छेदेवंवित्क्षत्रियोहंसर्वाजितीर्जयेयमहँसर्वान्लोकान्विंदेयमहँसर्वेषांराज्ञांश्रैष्ठ्यमतिष्ठाँपरमतांगच्छेयँसाम्राज्यंभौज्यँस्वाराज्यँवैराज्यँपारमेष्ठ्यंराज्यँमाहाराज्यमाधिपत्यमहँसमंतपर्यायीस्याँसार्वभौमःसार्वायुषआंतादापरार्धात्पृथिव्यैसमुद्रपर्यंतायाएकराळितिसनविचिकित्सेत्सब्रूयात्सहश्रद्धयायांचरात्रीमजायेहंयांचप्रेतास्मितदुभयमंतरेणेष्टापूर्तंमेलोकँसुकृतमायुःप्रजांवृंजीथायदितेद्रुह्येयमिति ॥ ॥ १५ ॥ अथततोब्रूयाच्चतुष्टयानिवानस्पत्यानिसंभरतनैयग्रोधान्यौदुंबराण्याश्वत्थानिप्लाक्षाणीतिक्षत्रंवाएतद्वनस्पतीनांयन्न्यग्रोधोयन्नैयग्रोधानिसंभरंतिक्षत्रमेवास्मिंस्तद्दधातिभौज्यंवाएतद्वनस्पतीनांयदुदुंबरोयदौदुंबराणिसंभरंतिभौज्यमेवास्मिंस्तद्दधातिसाम्राज्यंवाएतद्वनस्पतीनांयदश्वत्थोयदाश्वत्थानिसंभरंतिसाम्राज्यमेवास्मिंस्तद्दधातिस्वाराज्यंचहवाएतद्वैराज्यंचवनस्पतीनांयत्प्लक्षोयत्प्लाक्षाणिसंभरंतिस्वाराज्यवैराज्येएवास्मिंस्तद्दधात्यथततोब्रूयाच्चतुष्टया

न्यौषधानिसंभरततोक्मकृतानिंव्रीहीणांमहाव्रीहीणांप्रियंगूनांयवानामितिंक्षत्रंवाएतदोषधीनायद्व्रीहयोयद्व्रीहीणांतो
क्मसंभरंतिक्षत्रमेवास्मिंस्तद्दधातिंसाम्राज्यंवाएतदोषधीनांयन्महाव्रीहयोयन्महाव्रीहीणांतोक्मसंभरंतिंसाम्राज्यमेवा
स्मिंस्तद्दधातिंभौज्यंवाएतदोषधीनांयत्प्रियंगवोयत्प्रियंगूनांतोक्मसंभरंतिभौज्यमेवास्मिंस्तद्दधातिंसैनान्यंवाएतदोष
धीनांयद्यवांयद्यवानांतोक्मसंभरंतिंसैनान्यमेवास्मिंस्तद्दधाति ॥ १६ ॥ अथास्माऔदुंबरीमासंदींसंभरंतितस्याउक्तं
ब्राह्मणंमौदुंबरश्चमसोवापात्रीवोदुंबरशाखांनेतान्त्संभारान्त्संभृत्यौदुंबर्यांपात्र्यांवाचमसेवासमावपेयुस्तेषुसमाप्तेषुं
दधिमधुसर्पिरातपवर्ष्याआपोभ्यानीयप्रतिष्ठाप्यैतामासंदीमभिमंत्रयेतंबृहच्चतेरथंतरंचपूर्वौपादौभवतांवैरूपंचवैराजं
चापरौंशाक्वररैवतेशीर्षण्येंनौधसंचकालेयंचानूच्येंऋचःप्राचीनातानाःसामानिंतिरश्चीनवायायजूंष्यतीकाशांयशआ
स्तरणंश्रीरुपबर्हणंसविताचतेबृहस्पतिश्चपूर्वौपादौधारयतांवायुश्चपूषाचापरौमित्रावरुणौशीर्षण्येंअश्विनावनूच्येइत्य
थैनमेतामासंदीमारोहयेद्वसवस्त्वागायत्रेणच्छंदसांत्रिवृतास्तोमेनंरथंतरेणसाम्नारोहंतुंतानन्वारोहसाम्राज्यायंरुद्रा
स्त्वात्रैष्टुभेनच्छंदसांपंचदशेनस्तोमेनंबृहतासाम्नारोहंतुंतानन्वारोहभौज्यायांदित्यास्त्वाजागतेनच्छंदसांसप्तदशेनस्तो
मेनंवैरूपेणसाम्नारोहंतुंतानन्वारोहस्वाराज्यायंविश्वेत्वादेवाआनुष्टुभेनच्छंदसैकविंशेनस्तोमेनंवैराजेनसाम्नारोहंतुंता
नन्वारोहवैराज्यायंमरुतश्चत्वांगिरसश्चदेवांअतिच्छंदसाछंदसात्रयस्त्रिंशेनस्तोमेनंरैवतेनसाम्नारोहंतुंतानन्वारोहपारं

मेष्ठ्यायसाध्याश्चत्वाप्त्याश्चदेवाःपांक्तेनच्छंदसात्रिणवेनस्तोमेनशाक्करेणसाम्नारोहंतुतानन्वारोहराज्यायमाहाराज्याया
धिपत्यायस्वावश्यायातिष्ठायारोहेत्येतामासंदीमारोहयेत्तमेतस्यामासंद्यामासीनंराजकर्तारोब्रूयुर्नवाअनभ्युत्क्रुष्टःक्षत्रि
योवीर्यंकर्तुमर्हत्यभ्येनमुत्क्रोशामेतितथेतितंराजकर्तारोभ्युत्क्रोशंतीमंजनाअभ्युत्क्रोशतसम्राजंसाम्राज्यंभोजंभोजपि
तरंस्वराजंस्वाराज्यंविराजंवैराज्यंपरमेष्ठिनंपारमेष्ठ्यंराजानंराजपितरंक्षत्रमजनिक्षत्रियोजनिविश्वस्यभूतस्याधिपतिर
जनिविशामत्ताजन्यमित्राणांहंताजनिब्राह्मणानांगोप्ताजनिधर्मस्यगोप्ताजनीतितमभ्युत्क्रुष्टमेवंविदभिषेक्ष्यन्नेतयर्चा
भिमंत्रयेत ॥ १७ ॥ निषसादधृतव्रतोवरुणःपस्त्यास्वा ॥ साम्राज्यायभौज्यायस्वाराज्यायवैराज्यायपारमेष्ठ्या
यराज्यायमाहाराज्यायाधिपत्यायस्वावश्यायातिष्ठायसुक्रतुरितितमेतस्यामासंद्यामासीनमेवंवित्पुरस्तात्तिष्ठन्प्रत्यङ्मु
खऔदुंबर्यार्द्रयाशाखयासपलाशयाजातरूपमयेनचपवित्रेणांतर्धायाभिषिंचतीमाआपःशिवतमाइत्येतेनतृचेनदेवस्य
त्वेतिचयजुषाभूर्भुवःस्वरित्येताभिश्चव्याहृतिभिः ॥ १८ ॥ प्राच्यांत्वादिशिवसवोदेवाःषड्भिश्चैवपंचविंशैरहोभिरभि
षिंचंत्वेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभिःसाम्राज्यायदक्षिणस्यांत्वादिशिरुद्रादेवाःषड्भिश्चैवपंचविंशैरहोभिर
भिषिंचंत्वेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभिर्भौज्यायप्रतीच्यांत्वादिश्यादित्यादेवाःषड्भिश्चैवपंचविंशैरहोभि
रभिषिंचंत्वेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभिःस्वाराज्यायोदीच्यांत्वादिशिविश्वेदेवाःषड्भिश्चैवपंचविंशैरहोभि

रभिषिंचंत्वेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभिर्वैराज्यायोर्ध्वायांत्वादिशिमरुतश्चांगिरसश्चदेवाःषड्भिश्चैवपंच
विंशैरहोभिरभिषिंचंत्वेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभिःपारमेष्ठ्यायास्यांत्वाध्रुवायांमध्यमायांप्रतिष्ठायांदि
शिसाध्याश्चाप्त्याश्चदेवाःषड्भिश्चैवपंचविंशैरहोभिरभिषिंचंत्वेतेनचतृचेनैतेनचयजुषैताभिश्चव्याहृतिभीराज्यायमाहा
राज्यायाधिपत्यायस्वावश्यायातिष्ठायेतिसपरमेष्ठीप्राजापत्योभवतिसएतेनैंद्रेणमहाभिषेकेणाभिषिक्तःक्षत्रियःसर्वा
जितीर्जयतिसर्वान्लोकान्विंदतिसर्वेषांराज्ञांश्रैष्ठ्यमतिष्ठांपरमतांगच्छतिसाम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यं
माहाराज्यमाधिपत्यंजित्वास्मिन्लोकेस्वयंभूःस्वराळमृतोमुष्मिन्त्स्वर्गेलोकेसर्वान्कामानाप्त्वामृतःसंभवतियमेतेनैंद्रेण
महाभिषेकेणंक्षत्रियंशापयित्वाभिषिंचति ॥ १९ ॥ इंद्रियंवाऽएतदस्मिंल्लोकेयद्दधियद्दध्नाभिषिंचतींद्रियमेवास्मिंस्त
द्दधातिरसोवाएषओषधिवनस्पतिषुयन्मधुयन्मध्वाभिषिंचतिरसमेवास्मिंस्तद्दधातितेजोवाएतत्पशूनांयद्घृतंयद्घृतेना
भिषिंचतितेजएवास्मिंस्तद्दधात्यमृतंवाएतदस्मिंल्लोकेयदापोयदद्भिरभिषिंचत्यमृतत्वमेवास्मिंस्तद्दधातिसोभिषिक्तो
भिषेक्त्रेब्राह्मणायहिरण्यंदद्यात्सहस्रंदद्यात्क्षेत्रंचतुष्पाद्दद्यादथाप्याहुरसंख्यातमेवापरिमितंदद्यादपरिमितोवैक्षत्रियोप
रिमितस्यावरुद्ध्याइत्यथास्मैसुराकंसंहस्तआदधातिस्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इंद्रायपातवेसुतइतितां
पिबेद्यदत्रशिष्टंरसिनःसुतस्ययदिंद्रोअपिबच्छचीभिः ॥ इदंतदस्यमनसाशिवेनसोमंराजानमिहभक्षयामि ॥ अभि

त्वावृषभासुतेंसुतंसृजामिपीतये ॥ तृंपाव्यश्नुहीमदमितिंयोहवावसोमपीथःसुरायांप्रविष्टःसहैवैतेनैन्द्रेणमहाभिषेके
णांभिषिक्तस्यक्षत्रियस्यभक्षितोभवतिनसुरांतांपीत्वाभिमंत्रयेतांपामसोमंशंनोभवेतिंतद्यथैवादःप्रियःपुत्रःपितरंप्रिया
वाजायापतिंसुखंशिवमुपस्पृशत्याविस्रसंएवंहैवैतेनैंद्रेणमहाभिषेकेणांभिषिक्तस्यक्षत्रियस्यंसुरावासोमोवान्यद्वान्नाद्यं
सुखंशिवमुपस्पृशत्याविस्रसः ॥ २० ॥ एतेनहवाऽऐंद्रेणंमहाभिषेकेणतुरःकावषेयोंजनमेजयंपारिक्षितमभिषिषेचं
तस्मादुजनमेजयःपारिक्षितंःसमंतंसर्वतःपृथिवींजयंन्परीयायाश्वेनचमेध्येनेजेंतदेषाभियज्ञगाथागीयते ॥ आसंदीव
तिधान्यादंरुक्मिणंहरितस्रजं ॥ अश्वंबबंधसारंगंदेवेभ्योजनमेजयइत्येतेनहवाऐंद्रेणमहाभिषेकेणंच्यवनोभार्गवः
शार्यातंमानवमभिषिषेचंतस्मादुशार्यातोमानवंःसमंतंसर्वतःपृथिवींजयंन्परीयायाश्वेनचमेध्येनेजेंदेवानांहापिसत्रेगृह
पतिरासैतेनहवाऐंद्रेणमहाभिषेकेणंसोमशुष्मावाजरत्नायनंःशतानीकंसात्राजितमभिषिषेचंतस्मादुशतानीकःसात्रा
जितंःसमंतंसर्वतःपृथिवींजयन्परीयायांश्वेनचमेध्येनेजंएतेनहवाऐंद्रेणंमहाभिषेकेणपर्वतनारदांवांबाष्ठ्यमभिषिषिच
तुंस्तस्माद्वांबाष्ठ्यंःसमंतंसर्वतःपृथिवींजयंन्परीयायाश्वेनचमेध्येनेजंएतेनहवाऐंद्रेणंमहाभिषेकेणपर्वतनारदौयुधांश्रौ
ष्टिमौग्रसैन्यमभिषिषिचतुंस्तस्मादुयुधांश्रौष्टिरौग्रसैन्यंःसमंतंसर्वतःपृथिवींजयंन्परीयायाश्वेनचमेध्येनेजंएतेनहवाऐं
द्रेणंमहाभिषेकेणकश्यपोविश्वकर्माणंभौवनमभिषिषेचतस्मादुविश्वकर्माभौवनंःसमंतंसर्वतःपृथिवींजयंन्परीयायाश्वे

नचमेध्येनेजैभूमिर्हंजगावित्युदाहरंतिनमामर्त्यःकश्चनदातुमर्हतिविश्वकर्मन्भौवनमांदिदासिथ ॥ निमंक्ष्येहंसलिलस्यस
ध्येमोघंस्तएषकश्यपायाससंगरइत्येतेनहवाऐंद्रेणमहाभिषेकेणवसिष्ठःसुदासंपैजवनमभिषिषेचतस्मादुसुदाःपैजवनःस
मंतंसर्वतःपृथिवींजयन्परीयायाश्वेनचमेध्येनेजेएतेनहवाऐंद्रेणमहाभिषेकेणसंवर्तआंगिरसोमरुत्तमाविक्षितमभिषिषे
चतस्मादुमरुत्तआविक्षितःसमंतंसर्वतःपृथिवींजयन्परीयायाश्वेनचमेध्येनेजेतदप्येषश्लोकोभिगीतोमरुतःपरिवेष्टारो
मरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ २१ ॥ एतेनहवाऐंद्रेणमहाभिषेकेणोदमयआत्रे
योंगमभिषिषेचतस्मादंगःसमंतंसर्वतःपृथिवींजयन्परीयायाश्वेनचमेध्येनेजेसहोवाचालोपांगोदशनागसहस्राणिदश
दासीसहस्राणिददामितेब्राह्मणोपमास्मिन्यज्ञेह्वयस्वेतितदप्येतेश्लोकाअभिगीताः ॥ याभिर्गोभिरुदमयंप्रैय्यमेधाअ
याजयन् ॥ द्वेद्वेसहस्रेबद्धानांमात्रेयोमध्यतोददात् ॥ अष्टाशीतिःसहस्राणिश्वेतान्वैरोचनोहयान् ॥ प्रष्टींनिश्चृत्य
प्रायच्छंद्यजमानेपुरोहिते ॥ देशादेशात्समोढ्हानांसर्वासामाढ्यदुहितॄणां ॥ दशाददात्सहस्राण्यात्रेयोनिष्ककंठ्यः ॥
दशनागसहस्राणिदत्त्वात्रेयोवचत्नुके ॥ श्रांतःपारिकुटान्प्रैप्संद्वानेनांगस्यब्राह्मणः ॥ शतंतुभ्यंशतंतुभ्यमितिस्मैवप्र
ताम्यति ॥ सहस्रंतुभ्यमित्युक्त्वाप्राणान्त्समप्रतिपद्यतइति ॥ २२ ॥ एतेनहवाऽऐंद्रेणमहाभिषेकेणदीर्घतमामास
तेनोभरतंदौष्यंतिमभिषिषेचतस्मादुभरतोदौष्यंतिःसमंतंसर्वतःपृथिवींजयन्परीयायाश्वैरुचमेध्यैरीजेतदप्येतेश्लोका

ऽअभिगीताः ॥ हिरण्येनपरीवृतान्कृष्णान्छुक्लदतोमृगान् ॥ मष्णारेभरतोददाच्छतंबद्धानिसप्त च ॥ भरतस्यैषदौ
ष्यंतैरग्निःसाचीगुणेचितः ॥ यस्मिन्त्सहस्रंब्राह्मणाबद्धशोगाविभेजिरे ॥ अष्टासप्ततिंभरतोदौष्यंतिर्यमुनामनु ॥
गंगायांवृत्रघ्नेबध्नात्पंचपंचाशतंहयान् ॥ त्रयस्त्रिंशच्छतंराजाश्वान्बंध्वायमेध्यान् ॥ दौष्यंतिरत्यगाद्राज्ञोमायांमाय
वत्तरः ॥ महाकर्मभरतस्यनपूर्वेनापरेजनाः ॥ दिवंमर्त्यऽइवहस्ताभ्यांनोदापुःपंचमानवाइत्येतंहवाऽऐंद्रंमहाभिषेकं
बृहदुक्थऋषिर्दुर्मुखायपांचालायप्रोवाचतस्मादुदुर्मुखःपांचालोराजासन्विद्ययासमंतंसर्वतःपृथिवींजयन्परीयायैतंह
वाऐंद्रंमहाभिषेकंवासिष्ठःसात्यहव्योत्यरातयेजानंतपयेप्रोवाचतस्माद्वत्यरातिर्जानंतपिरराजासन्विद्ययासमंतंसर्वतः
पृथिवींजयन्परीयायसहोवाचवासिष्ठःसात्यहव्योजैषीर्वैसमंतंसर्वतःपृथिवींमहन्मागमयेतिसहोवाचात्यरातिर्जानंतपि
र्यदाब्राह्मणोत्तरकुरून्जयेयमथत्वमुहवैपृथिव्यैराजास्याःसेनापतिरेवतेहंस्यामितिसहोवाचवासिष्ठःसात्यहव्योदेवक्षे
त्रंवैतंनवैतन्मर्त्योजेतुमर्हत्यद्रुक्षोवैमआतइदंददइतिततोहात्यरातिंजानंतपिमात्तवीर्यंनिःशुक्रममित्रतपनःशुष्मिणः
शैब्योराजाजघानतस्मादेवंविदुषेब्राह्मणायैवंचक्रुषेनक्षत्रियोद्रुह्येन्नेद्राष्ट्रादवपद्येयंनेद्वामाप्राणोजहदितिजहदिति
॥ २३ ॥ इतिचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥

---

१ 'वद्ध्वायमेध्यान्' इति भाष्यं सोयंराजादौष्यंतिः।

अथातःपुरोधायाएवंनहवाअपुरोहितस्यराज्ञोदेवाअन्नमदंतितस्माद्राजायक्ष्यमाणोब्राह्मणंपुरोदधीतदेवामेन्नमद
न्नित्यग्नीन्वाएषःस्वर्ग्यान्राजोद्धरतेयत्पुरोहितंतस्यपुरोहितएवाहवनीयोभवतिजायागार्हपत्यःपुत्रोन्वाहार्यपचनःसय
त्पुरोहितायकरोत्याहवनीयएवतज्जुहोत्यथयज्जायायैकरोतिगार्हपत्यएवतज्जुहोत्यथयत्पुत्रायकरोत्यन्वाहार्यपचनएव
तज्जुहोतितएनंशांततनवोभिहुताअभिप्रीताःस्वर्गंलोकमभिवहंतिक्षत्रंचबलंचराष्ट्रंचविशंचतंएवैनमशांततनवोनभिहु
ताअनभिप्रीताःस्वर्गाल्लोकान्नुदंतेक्षत्राच्चबलाच्चराष्ट्राच्चविशश्चाग्निर्वाएषवैश्वानरःपंचमेनिर्यत्पुरोहितस्तस्यवाच्येवैका
मेनिर्भवतिपादयोरेकात्वच्येकाहृदयऽएकोपस्थएकातामिज्वलंतीभिर्दीप्यमानाभिरुपोदेतिराजानंसयदाहक्कभगवो
वात्सीस्तृणान्यस्माआहरतेतितेनास्यतांशमयतियास्यवाचिमेनिर्भवत्यथयदस्माउदकमानयंतिपाद्यंतेनास्यतांशमय
तियास्यपादयोर्मेनिर्भवत्यथयदेनमलंकुर्वंतितेनास्यतांशमयतियास्यत्वचिमेनिर्भवत्यथयदेनंतर्पयंतितेनास्यतांशमय
तियास्यहृदयेमेनिर्भवत्यथयदस्यानारुद्धोवेश्मसुवसतितेनास्यतांशमयतियास्योपस्थेमेनिर्भवतिसएनंशांततनुरभिहुतो
भिप्रीतःस्वर्गंलोकमभिवहतिक्षत्रंचबलंचराष्ट्रंचविशंचंसऽएवैनमशांततनुरनभिहुतोनभिप्रीतःस्वर्गाल्लोकान्नुदतेक्षत्रा
च्चबलाच्चराष्ट्राच्चविशश्च ॥ २४ ॥ अग्निर्वाऽएषवैश्वानरःपंचमेनिर्यत्पुरोहितस्ताभीराजानंपरिगृह्यतिष्ठतिसमुद्रइवभू
मिंमयुवमार्यस्यराष्ट्रंभवतिनैनंपुरायुषःप्राणोजहात्याजरसंजीवतिसर्वमायुरेतिनपुनर्म्रियतेयस्यैवंविद्वान्ब्राह्मणोराष्ट्र

गोपः पुरोहितः क्षत्रेण क्षत्रं जयति बलेन बलमश्नुते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितस्तस्मै विशः संजानते संमुखा एक
मनसो यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥ २५ ॥ तदप्येतदृषिणोक्तं स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण त
स्थावभि वीर्येणेति सपत्ना वै द्विषंतो भ्रातृव्या जन्यानि तानेव तच्छुष्मेण वीर्येणाधितिष्ठति बृहस्पतिं यः सुभृतं बिभर्तीति बृ
हस्पतिर्ह वै देवानां पुरोहितस्तमन्वन्ये मनुष्यराज्ञां पुरोहिता बृहस्पतिं यः सुभृतं बिभर्तीति यदाह पुरोहितं यः सुभृतं बिभर्ती
त्येव तदाह वल्गूयति वंदते पूर्वभाजमित्यपचितिमेवास्मा एतदाह स इत्क्षेति सुधित ओकसि स्व इति गृहा वा ओकः स्वेष्वेव तद्गृ
हेषु सुहितो वसति तस्मा इळा पिन्वते विश्वदानीमित्यन्नं वा इळान्नमेवास्मा एतदूर्जस्वच्छश्वद्भवति तस्मै विशः स्वयमेवा नमंत
इति राष्ट्राणि वै विशो राष्ट्राण्येवैनं तत्स्वयमुपनमंति यस्मिन्ब्रह्मा राजनि पूर्व एतीति पुरोहितमेवैतदाहाप्रतीतो जयति संधना
नीति राष्ट्राणि वै धनानि तान्यप्रतीतो जयति प्रतिजन्यान्युत या सजन्येति सपत्ना वै द्विषंतो भ्रातृव्या जन्यानि तानप्रतीतो
जयत्यवस्यवे यो वरिवः कृणोतीति यदाहावसीयसे यो वसीयः करोतीत्येव तदाह ब्रह्मणे राजा तमवंति देवा इति पुरोहितमेवैत
दभिवदति ॥ २६ ॥ यो ह वै त्रीन्पुरोहितांस्त्रीन्पुरोधातॄन्वेद स ब्राह्मणः पुरोहितः स वदेत पुरोधाया अग्निर्वाव पुरोहितः पृ
थिवी पुरोधाता वायुर्वाव पुरोहितोऽन्तरिक्षं पुरोधाताऽऽदित्यो वाव पुरोहितो द्यौः पुरोधातैष ह वै पुरोहितो य एवं वेदाथ स तिरोहि

यो य एवं न वेद तस्य राजा मित्रं भवति द्विषंतमपबाधते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः क्षत्रेण क्षत्रं जयति बलेन बल

मश्नुतेयस्यैवंविद्वान्ब्राह्मणोराष्ट्रगोपःपुरोहितस्तस्मैविशःसंजानतेसंमुखाऽएकमनसोयस्यैवंविद्वान्ब्राह्मणोराष्ट्रगोपःपु
रोहितोभूर्भुवःस्वरोममोहसस्मिसत्वंसत्वमस्यमोहंद्यौरहंपृथिवीत्वंसामाहमृक्त्वंतावेहसंवहावहै ॥ पुराण्यस्मान्महाभ
यात् ॥ तनूरसितन्वंमेपाहि ॥ याओषधीःसोमराज्ञीर्बह्वीःशतविचक्षणाः ॥ तामह्यमस्मिन्नासनेच्छिद्रंशर्मयच्छत ॥
याओषधीःसोमराज्ञीर्विष्ठिताःपृथिवीमनु ॥ तामह्यमस्मिन्नासनेच्छिद्रंशर्मयच्छत ॥ अस्मिन्राष्ट्रेश्रियमावेशयाम्यतो
देवीःप्रतिपश्याम्यापः ॥ दक्षिणंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंदधामि ॥ सव्यंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंवर्धया
मि ॥ पूर्वमन्यमपरमन्यंपादावववनेनिजे ॥ देवाराष्ट्रस्यगुप्त्याअभयस्यावरुद्ध्यै ॥ आपःपादावनेजनीर्द्विषंतंनिर्दहंतुमे
॥ २७ ॥ अथातोब्रह्मणःपरिमरोयोहवैब्रह्मणःपरिमरंवेदपर्येनंद्विषंतोभ्रातृव्याःपरिसपत्नाम्रियंतेयंवैब्रह्मयोयंपवतेत
मेताःपंचदेवताःपरिम्रियंतेविद्युद्वृष्टिश्चंद्रमाआदित्योग्निर्विद्युद्वैविद्युत्यवृष्टिमनुप्रविशतिसांतर्धीयतेतांननिर्जानंतिय
दावैम्रियतेथांतर्धीयतेथैनंननिर्जानंतिसब्रूयाद्विद्युतोमरणेद्विषन्मेम्रियतांसोंतर्धीयतांतंमानिर्ज्ञासिषुरितिक्षिप्रंहैवैनंन
निर्जानंतिवृष्टिर्वैवृष्ट्वाचंद्रमसमनुप्रविशतिसांतर्धीयतेतांननिर्जानंतियदावैम्रियतेथांतर्धीयतेथैनंननिर्जानंतिसब्रूयाद्वृ
ष्टेर्मरणेद्विषन्मेम्रियतांसोंतर्धीयतांतंमानिर्ज्ञासिषुरितिक्षिप्रंहैवैनंननिर्जानंतिचंद्रमावाअमावास्यायामादित्यमनुप्रवि

शतिंसोंतर्धीयतेतंननिर्जानंतियदावैम्रियतेथातर्धीयतेथैनंननिर्जानंतिसब्रूयाच्चंद्रमसोमरणेंद्विषन्मेम्रियतांसोंतर्धीय
तांतंमानिर्ज्ञासिषुरितिंक्षिप्रंहैवैनंननिर्जानंत्यादित्योवाअस्तंयन्नग्निमनुप्रविशतिंसोंतर्धीयतेतंननिर्जानंतियदावैम्रियते
थांतर्धीयतेथैनंननिर्जानंतिंसब्रूयादादित्यस्यमरणेंद्विषन्मेम्रियतांसोंतर्धीयतांतंमानिर्ज्ञासिषुरितिंक्षिप्रंहैवैनंननिर्जानंत्य
ग्निर्वाउद्वान्वायुमनुप्रविशतिंसोंतर्धीयतेतंननिर्जानंतियदावैम्रियतेथांतर्धीयतेथैनंननिर्जानंतिसब्रूयादग्नेर्मरणेंद्विषन्मे
म्रियतांसोंतर्धीयतांतंमानिर्ज्ञासिषुरितिंक्षिप्रंहैवैनंननिर्जानंतितावाएतादेवताऽअतएवपुनर्जायंतेवायोरग्निर्जायतेप्रा
णाद्धिवलान्मथ्यमानोधिजायतेतंदृष्ट्वाब्रूयादग्निर्जायतांमामेद्विषंजन्यतएवपराङ्प्रजिघ्यत्वित्यतोहैवपराङ्प्रजिघ्यं
त्यग्नेर्वाआदित्योजायतेतंदृष्ट्वाब्रूयादादित्योजायतांमानेद्विषंजन्यतऽएवपराङ्प्रजिघ्यत्वित्यंतोहैवपराङ्प्रजिघ्यत्यादि
त्याद्वैचंद्रमाजायतेतंदृष्ट्वाब्रूयाच्चंद्रमाजायतांमामेद्विषंजन्यतएवपराङ्प्रजिघ्यत्वित्यंतोहैवपराङ्प्रजिघ्यतिंचंद्रमसोवै
वृष्टिर्जायतेतांदृष्ट्वाब्रूयाद्वृष्टिर्जायतांमामेद्विषंजन्यतऽएवपराङ्प्रजिघ्यत्वित्यतोहैवपराङ्प्रजिघ्यतिंवृष्टेर्वैविद्युज्जायते
तांदृष्ट्वाब्रूयाद्विद्युज्जायतांमामेद्विषंजन्यतएवपराङ्प्रजिघ्यत्वित्यतोहैवपराङ्प्रजिघ्यतिंसएषब्रह्मणःपरिमरस्तमेतंब्रह्म
णःपरिमरंमैत्रेयःकौषारवःसुत्वनेकैरिशयेभार्गायणायराज्ञेप्रोवाचतंहपंचराजानःपरिमम्रुस्ततःसुत्वामहज्जगामतस्यव्र
तंनद्विषतःपूर्वउपविशेद्यदितिष्ठंतंमन्येततिष्ठेतैवनद्विषतःपूर्वःसंविशेद्यद्यासीनंमन्येतासीतैवनद्विषतःपूर्वःप्रस्वप्यांद्य

दिजाग्रतंमन्येतंजाग्रियादेवापिहंयद्यस्याश्ममूर्धाद्द्विषन्भवतिक्षिप्रंहैवैनंस्तृणुतेस्तृणुते ॥२८॥ इतिपंचमोऽध्यायः ॥५॥
इत्यष्टमपंचिकासमाप्ता ॥ ८ ॥ इत्यैतरेयब्राह्मणं समाप्तं ॥ ॥ ॥ ॥

इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा
स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् ।

शके १९०७, सन १९८६

ॐनमःश्रीवेदपुरुषाय ॥ हरिःॐ३म् ॥ भूमिमुपस्पृशेदग्नइळानमऽइळांनमऽऋषिभ्योमंत्रकृद्भ्योमंत्रपतिभ्योनमो वोऽअस्तुदेवेभ्यःशिवानःशंतमाभवंसुमृळीकासरस्वतिमातेव्योमसंदृशि ॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमा क्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ १ ॥ शंनऽइंद्राग्नीभवतामवोभिःशंनऽइंद्रावरु णारातहव्या ॥ शमिंद्रासोमासुवितायशंयोःशंनऽइंद्रापूषणावाजसातौ ॥ २ ॥ स्तुषेजनंसुव्रतंनव्यसीभिर्गीर्भिर्मि त्रावरुणासुम्नयंता ॥ तऽआगमंतुतऽइहश्रुवंतुसुक्षत्रासोवरुणोमित्रोऽअग्निः ॥ ३ ॥ कयानश्चित्रऽआभुवदूतीसदावृ धःसखा ॥ कयाशचिष्ठयावृता ॥ ४ ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः ॥ दृढाचिदारुजेवसु ॥ ५ ॥ अभीषुणःसखीनामविताजरितॄणां ॥ शतंभवास्यूतिभिः ॥ ६ ॥ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानः शर्मसप्रथः ॥ ७ ॥ शंनोमित्रःशंवरुणःशंनोभवत्वर्यमा ॥ शंनऽइंद्रोबृहस्पतिःशंनोविष्णुरुरुक्रमः ॥ ८ ॥ ओष्ठा पिधानानकुलीदंतैःपरिवृतापविः ॥ सर्वस्यैवाचऽईशानाचारुमामिहवादयेदितिवाग्रसः ॥ ९ ॥ आवदंस्त्वं शकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराः ॥ उदि तःशुक्रियंदधे ॥ तमहमात्मनिदधे ॥ अनुमामैत्विंद्रियं ॥ मयिश्रीर्मयियशः ॥ सर्वःसप्राणःसबलः ॥ उत्तिष्ठाम्यनुमा श्रीः ॥ उत्तिष्ठत्वनुमायंतुदेवताः ॥ अदब्धंचक्षुरिषितंमनः ॥ सूर्योज्योतिषांश्रेष्ठोदीक्षेमामाहिंसीः ॥ तच्चक्षुर्देव

हितंशुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतं ॥ त्वमग्नेरुद्रोऽअसुरोमहोदिवस्त्वंशर्धोमारुतंपृक्षऽईशिषे ॥
त्वंवातैररुणैर्यासिशंगयस्त्वंपूषाविधतःपासिनुत्मना ॥ भद्रंनोअपिवातयमनः ॥ ॥ वाङ्मेमनसिप्रतिष्ठितामनोमेवा
चिप्रतिष्ठितमाविरावीर्मएधि ॥ वेदस्यमऽआणीस्थःश्रुतंमेमाप्रहासीरनेनाधीतेनाहोरात्रान्त्संदधाम्यृतंवदिष्यामिस
त्यंवदिष्यामितन्मामवतुतद्वक्तारमवत्ववतुमामवतुवक्तारमवतुवक्तारं ॥ ॐ शांतिःशांतिःशांतिः ॥ ॥

हरिःॐ३म्॥ अथमहाव्रतमिंद्रोवैवृत्रंहत्वामहानभवद्यन्महानभवत्तन्महाव्रतमभवत्तन्महाव्रतस्यमहाव्रतत्वंद्वेएतस्या
ह्नआज्येकुर्यादितिहैकऽआहुरेकमितित्वेवस्थितंप्रवोदेवायाग्नयइतिराद्धिकामोविशोविशोवोअतिथिमितिपुष्टिकामः
पुष्टिर्वैविशःपुष्टिमान्भवतीत्यतिथिमितिपदंभवतिनैतत्कुर्यादित्याहुरीश्वरोऽतिथिरेवचरितोस्तदुहस्माऽहकुर्यादेवयो
वैभवतियःश्रेष्ठतामश्नुतेसवाअतिथिर्भवतिनवाअसंतमातिथ्यायाद्रियंतेतस्मादुकाममेवैतत्कुर्यात्संयद्येतत्कुर्यादाग
न्मवृत्रहंतममित्येतंतृचंप्रथमंकुर्यादेतद्वाअहरीप्संतःसंवत्सरमासतेतआगच्छंतितएतेनुष्टुप्शीर्षाणस्त्रयस्तृचाभवंति
ब्रह्मवैगायत्रीवागनुष्टुप्ब्रह्मणैवतद्वाचंसंदधात्यबोध्यग्निःसमिधाजनानामितिकीर्तिकामोहोताजनिष्टचेतनइतिप्रजा
पशुकामः ॥ १ ॥ अग्निंनरोदीधितिभिररण्योरित्यन्नाद्यकामोग्निर्वाअन्नादश्चिरतरमिववाइतरेष्वाज्येष्वग्निमागच्छं
त्यथेहमुखतएवाग्निमागच्छंतिमुखतोन्नाद्यमश्नुतेमुखतःपाप्मानमपघ्नतेहस्तच्युतीजनयंतेतिजातवदेतस्माद्वाअह्नोय

जमानोजायतेंतस्माज्जातवत्तानिंचत्वारिंछंदांसिभवंतिंचतुष्पादावैपशवंःपशूनामवरुध्यैतानित्रीणिच्छंदांसिभवंतिं
त्रयोवाइमेत्रिवृतोलोकाएषामेवलोकानामभिजित्यैतेंद्वेछंदसीभवतंःप्रतिष्ठायाएवंद्विप्रतिष्ठोवैपुरुषश्चतुष्पादाःपश
वोंयजमानमेवतद्विप्रतिष्ठंचतुष्पात्सुपशुषुप्रतिष्ठापयतिंताःपराग्वचनेनंपंचविंशतिर्भवंतिंपंचविंशोयंपुरुषोंदशहस्त्या
अंगुलयोंदशपाद्याद्वाऊरूद्वौबाहूंआत्मैवपंचविंशस्तमिममात्मानंपंचविंशंसंस्कुरुतेंथोपंचविंशंवाएतदहःपंचविंशएत
स्याह्नस्तोमंस्तत्समेनसमंप्रतिपद्यतेंतस्माद्वेएवपंचविंशतिर्भवंतिंतास्त्रिःप्रथमयात्रिरुत्तमयैकयानत्रिंशन्न्यूनाक्षराविरां
ण्न्यूनेवैरेतःसिच्यतेंन्यूनेप्राणान्न्यूनेन्नाद्यंप्रतिष्ठितंमेतेषांकामानामवरुध्याएतान्कामानवरुंधेयएवंवेदंताअभिसंपद्यं
तेंबृहतींचविराजंचच्छंदोयैतस्याह्नःसंपत्तामथोअनुष्टुभंमनुष्टुवायतनानिह्याज्यानिं ॥ २ ॥ गायत्रंप्रउगंकुर्यादित्या
हुंस्तेजोवैब्रह्मवर्चसंगायत्रींतेजस्वीब्रह्मवर्चसीभवतींत्यौष्णिहंप्रउगंकुर्यादित्याहुंरायुर्वाऽउष्णिगायुष्मान्भवतीत्यांनु
ष्टुभंप्रउगंकुर्यादित्याहुंःक्षत्रंवाअनुष्टुप्क्षत्रस्याप्त्याइतिंबार्हतंप्रउगंकुर्यादित्याहुंःश्रीर्वैबृहतींश्रीमान्भवतीतिंपांक्तंप्रउगं
कुर्यादित्याहुंरन्नंवैपंक्तिरन्नवान्भवतीतिंत्रैष्टुभंप्रउगंकुर्यादित्याहुंर्वीर्यंवैत्रिष्टुप्वीर्यवान्भवतीतिंजागतंप्रउगंकुर्यादि
त्याहुंर्जागतावैपशवंःपशुमान्भवतीतिंतदुगायत्रमेवकुर्याद्ब्रह्मवैगायत्रीब्रह्मैतदहंर्ब्रह्मणैवतद्ब्रह्मप्रतिपद्यतेंतदुमाधुच्छं

दसंमधुहस्मवाऋषिभ्योंमधुच्छंदाश्छंदातिंतन्मधुच्छदसोमधुच्छंदस्त्वंमथोऽअन्नंवैमधुसर्वंवैमधुसर्वेवैकामामधुतद्य

न्माधुच्छंदसंशंसतिंसर्वेषांकामानामवरुध्यैसर्वान्कामानवरुंधेयएवंवेदंतद्धैकाहिकंरूपसमृद्धंवहुवाएतस्मिन्नहनिंकिं
चकिंचवारणंक्रियतेंशांत्याएवशांतिर्वैप्रतिष्ठैकाहंःशांत्यामेवतंत्प्रतिष्ठायामंततःप्रतितिष्ठंतिंप्रतितिष्ठतियएवंवेदंयेषां
चैवंविद्वानेतद्धोताशंसतिं ॥ ३ ॥ वायवायाहिदर्शतेमेसोमाअरंकृतांइत्येतद्वाअहररंयजमानायचंदेवेभ्यश्चारंहा
स्मांएतदहर्भवतिंयएवंवेदंयेषांचैवंविद्वानेतद्धोताशंसतींद्रवायूइमेसुतांआयातमुपनिष्कृतंमितियद्वैनिष्कृतंतत्संस्कृ
तमाहास्यैंद्रवायूसंस्कृतंगच्छतोयएवंवेदंयेषांचैवंविद्वानेतद्धोताशंसतिंमित्रंहुवेपूतदक्षंधियंघृताचींसाधंतेतिंवाग्वैधी
र्घृताचींवाचमेवास्मिंस्तद्दधातियएवंवेदंयेषांचैवंविद्वानेतद्धोताशंसंत्यश्विनायज्वरीरिषंइत्यन्नंवाऽइषोऽन्नाद्यस्यावरु
ध्यांआयातंरुद्रवर्तनीइत्याहास्याश्विनौयज्ञंगच्छतोयएवंवेदंयेषांचैवंविद्वानेतद्धोताशंसतींद्रायाहिचित्रभानंविंद्राया
हिधियेषितंइंद्रायाहितूतुजानंइत्यायाह्यायाहीतिशंसंत्याहास्यैंद्रोयज्ञंगच्छतियएवंवेदंयेषांचैवंविद्वानेतद्धोताशंसंत्यो
मासश्चर्षणीधृतोंविश्वेदेवासआगतेंत्याहास्यविश्वेदेवाहवंगच्छंतियएवंवेदंयेषांचैवंविद्वानेतद्धोताशंसतिंदाश्वांसोदा
शुषःसुतमितियदाहंददुषोददुषःसुतमित्येवतदाहंददतिहास्मैतंकामंदेवायत्कामएतच्छंसतियएवंवेदंयेषांचैवंविद्वाने
तद्धोताशंसतिंपावकानःसरस्वतींयज्ञंवष्टुधियावसुरितिंवाग्वैधियावसुर्वाचमेवास्मिंस्तद्दधातियएवंवेदंयेषांचैवंविद्वा
नेतद्धोताशंसतिंयज्ञंवष्ट्विितियदाहंयज्ञंवहत्वित्येवतदाहंताःपराग्वचनेनैकविंशतिर्भवंत्येकविंशोऽयंपुरुषोंदशहस्त्याअं

गुलयोंदशपाद्याआत्मैकविंशंस्तमिममात्मानंमेकविंशंसंस्कुरुतेंताश्रि:प्रथमयांत्रिरुत्तमयापंचविंशतिर्भवंतिंपंचविंश
आत्मापंचविंश:प्रजापतिर्दशहस्त्याअंगुलयोंदशपाद्याद्वाऊरूद्वौबाहूआत्मैवपंचविंशंस्तमिममात्मानंपंचविंशंसंस्कुरु
तेंथोपंचविंशंवाएतदहं:पंचविंशएतस्याह्न:स्तोमंस्तत्समेनसमंप्रतिपद्यतेंतस्माद्वेएवपंचविंशतिर्भवंतिभवंतिं ॥४॥ इति
प्रथमारण्यकेप्रथमोऽध्याय: ॥ १ ॥ ॥ आत्वारथंयथोतयंइदंवसोसुतमंधइतिंमरुत्वतीयस्यप्रतिपदनुचरांवैकाहि
कौरूपसमृद्धौबहुवाएतस्मिन्नहनिंकिंचकिंचवारुणंक्रियतेंशांत्याएवशांतिर्वैप्रतिष्ठैकाहं:शांत्यामेवतत्प्रतिष्ठायामंततः
प्रतितिष्ठंतिप्रतितिष्ठतियएवंवेदंयेषांचैवंविद्वानेतद्धोताशंसतींद्रनेदीयएदिहिंप्रसूतिराशचीभिर्येतउक्थिनईत्युक्थं
वाएतदहंरुक्थवद्रूपसमृद्धंमेतस्याह्नोरूपंप्रैतुब्रह्मणस्पतिंरच्छावीरमितिवीरवद्रूपसमृद्धमेतस्याह्नोरूपंमुत्तिष्ठब्रह्मण
स्पतेंसुवीर्यमितिवीर्यवद्रूपसमृद्धमेतस्याह्नोरूपंप्रनूनंब्रह्मणस्पतिंर्मंत्रंवदत्युक्थ्यमित्युक्थंवाएतदहंरुक्थवद्रूपसमृद्धं
मेतस्याह्नोरूपंमग्निर्नेतासवृत्रहेतिंवार्त्रघ्नमिंद्ररूपमैंद्रमेतंदहरेतस्याह्नोरूपंत्वंसोमक्रतुभि:सुक्रतुर्भूस्त्वंवृषावृषत्वेभि
र्महित्वेतिंवृषण्वद्वाइंद्रस्यरूपंमैंद्रमेतदहरेतस्याह्नोरूपंपिन्वंत्यपोत्यन्नमिहेविनयंतिवाजिनमितिंवाजिमद्वाइंद्रस्यरूपं
मैंद्रमेतदहरेतस्याह्नोरूपंमथोउत्संदुहंतिस्तनयंतमक्षितमितिंस्तनयद्वाइंद्रस्यरूपंमैंद्रमेतदहरेतस्याह्नोरूपंप्रवइंद्रायबृह

तइतिंयद्वैबृहत्तन्महन्महद्वद्रूपसमृद्धंमेतस्याह्नोरूपंबृहदिंद्रायगायतेतिंयद्वैबृहत्तन्महन्महद्वद्रूपसमृद्धंमेतस्याह्नोरूपं

नकिःसुदासोरथंपर्यासनरीरमदितिपर्यस्तवद्रांतिमद्रूपसमृद्धंमेतस्याह्नोरूपंसर्वान्प्रगाथान्छंसतिसर्वेषामह्नामास्यैस
र्वेषामुक्थानांसर्वेषांपृष्ठानांसर्वेषांशस्त्राणांसर्वेषांप्रउगाणांसर्वेषांसवनानां ॥ ५ ॥ असत्सुमेजरितःसाभिवेगः
सत्यध्वृतमितिशंसतिसत्यंवाएतदहःसत्यवद्रूपसमृद्धंमेतस्याह्नोरूपंतदुवासुक्रंब्रह्मवैवसुक्रोब्रह्मैतदहर्ब्रह्मणैवतद्ब्रह्मप्र
तिपद्यतेतदाहुरथकस्माद्वासुक्रेणैतन्मरुत्वतीयंप्रतिपद्यतइतिनहवाएतदन्योवसुक्रान्मरुत्वतीयमुदयच्छन्नविव्याचे
तितस्माद्वासुक्रेणैवैतन्मरुत्वतीयंप्रतिपद्यतेतदनिरुक्तंप्राजापत्यंशंसत्यनिरुक्तोवैप्रजापतिःप्रजापतेराप्त्यैसकृदिंद्रंनि
राहंतेनैंद्राद्रूपान्नप्रच्यवतेपिबासोममभियमुग्रतर्दइतिशंसत्यूर्वंगव्यंमहिगृणानइंद्रेतिमहद्वद्रूपसमृद्धमेतस्याह्नोरूपंत
दुभारद्वाजंभरद्वाजोहवाऋषीणामनूचानतमोदीर्घजीवितमस्तपस्वितमआससएतेनसूक्तेनपाप्मानमपाहततद्यद्भार
द्वाजंशंसतिपाप्मनोपहत्याअनूचानोदीर्घजीवीतपस्व्यसानीतितस्माद्भारद्वाजंशंसतिकयाशुभासवयसःसनीळाइति
शंसत्याशासतेप्रतिहर्यत्युक्थेत्युक्थंवाएतदहरुक्थवद्रूपसमृद्धंमेतस्याह्नोरूपंतदुकयाशुभीयमेतद्वैसंज्ञानंसंतनिसूक्तं
यत्कयाशुभीयमेतेनहवाइंद्रोगस्त्योमरुतस्तेसमजानततंयत्कयाशुभीयंशंसतिसंज्ञात्याएवतद्वायुष्यंतद्योस्यप्रियःस्या
त्कुर्यादेवास्यकयाशुभीयंमरुत्वाँइंद्रवृषभोरणायेतिशंसतींद्रवृषभइतिवृषण्वद्वाइंद्रस्यरूपमैंद्रमेतदहरेतस्याह्नोरूपंतदु ॥ २ ॥
वैश्वामित्रंविश्वस्यहवैमित्रंविश्वामित्रआसविश्वंहास्मैमित्रंभवतियएवंवेदयेषांचैवंविद्वानेतद्धोताशंसतिजनिष्ठाउग्रः

सहसेतुरायेतिंनिविद्धानमैकाहिकंरूपसमृद्धंवहुवाएतस्मिन्नहर्निकिंचकिंचवारणंक्रियतेंशांत्याएवशांतिर्वैप्रतिष्ठैकाहं:
शांत्यामेवतत्प्रतिष्ठायामंतत:प्रतितिष्ठंतिंप्रतितिष्ठतियएवंवेदंयेषांचैवंविद्वानेतद्धोताशंसतिंता:पराग्वचनेनंसप्तनव
तिर्भवंतिंसायानवतिस्तिस्त्रस्तांस्त्रिंशिन्योविराजोथया:सप्तातियंतिंयैवैषाप्रशंसासाध्यस्यंतस्याएवतास्त्रि:प्रथमयांत्रि
रुत्तमयैकशतंभवंतिंपंचांगुलयश्चतुष्पर्वाद्वेकक्षसीदोश्चाक्षश्चांसफलकंचंसापंचाविंशतिं:पंचविंशानीतराणिह्यंगानिंत
च्छतमात्मैकशततमौंयच्छतंतदायुरिंद्रियंवीर्यंतेजोंयजमानएकशततमंआयुषींद्रियेवीर्येंतेजसिप्रतिष्ठितंस्तास्त्रिष्टुभम
भिसंपद्यंतेंत्रैष्टुभोहिमध्यंदिनं: ॥ ६ ॥ तदाहु:किंप्रेंखस्यप्रेंखत्वमित्ययंवैप्रेंखोयोयंपवतंएषह्येषुलोकेषुप्रेंखतइतिंतत्प्रें
खस्यप्रेंखत्वंमेकंफलकंस्यादित्याहुंरेकधाह्येवायंवायु:पवतेंस्यरूपेणेतितत्तन्नाद्दत्यंत्रीणिफलकानिस्युरित्याहुंस्त्रयोवाऽ
इमेत्रिवृतोलोकांएषांरूपेणेतितत्तन्नाद्दत्यंद्वेएवस्यातांद्वौवाइमौलोकांवद्धातमाविवदृश्येतेंयउएनेअंतरेणाकाशं:सोंत
रिक्षलोकंस्तस्माद्वेएवस्यातांमौदुंवरेस्यातांमूर्ग्वाअन्नाद्यमुदुंबरंऊर्जोंन्नाद्यस्यावरुध्यैंमध्यतउद्धृतेस्यातांमध्यतोवैप्रजा
अन्नंधिनोतिंमध्यतएवतदन्नाद्यस्ययजमानंदधांत्युभय्योरज्जवोभवंतिंदक्षिणाश्चसव्याश्चदक्षिणावाएकेषांपशूनांरज्ज
व:सव्याएकेषांतद्यदुभय्योरज्जवोभवंत्युभयेषांपशूनामाप्त्यैदार्भ्य:स्युंर्दर्भोवाऽओषधीनामपहतपाप्मातस्माद्दार्भ्य:
स्युं:॥७॥अरत्निमात्रउपरिभूमें:प्रेंख:स्यादित्याहुंरेतावतावैस्वर्गालोका:संमिताइतितत्तन्नाद्दत्यंप्रादेशमात्रेस्यादित्याहुं

रेतावतावैप्राणाःसंमिताइतिंतत्तन्नादृत्यंमुष्टिमात्रेस्यादेतावतावैसर्वमन्नाद्यंक्रियतंएतावतासर्वमन्नाद्यमभिपन्नंतस्मा
न्मुष्टिमात्रएवस्यांत्पुरस्तात्प्रत्यंचंप्रेंखंमधिरोहेदित्याहुरेतस्यरूपेणयएषतपतिपुरस्ताद्ध्येषइमाँल्लोकान्प्रत्यङ्ङधिरोहती
तितत्तन्नादृत्यंतिर्यंचमधिरोहेदित्याहुंस्तिर्यंचंवाअश्वमधिरोहंतिंतेनोसर्वान्कामानवाप्नवामेतितत्तन्नादृत्यंमन्वंचमधि
रोहेदित्याहुरनूचींवैनावमधिरोहंतिंनौर्वैषास्वर्गयाणीयत्प्रेंखइतितस्मादन्वंचमेवाधिरोहेच्छुबुकेनोपस्पृशेच्छुबुकोहै
वंवृक्षमधिरोहतिंसउवयसामन्नादतमइतिंतस्माच्छुबुकेनोपस्पृशेद्बाहुभ्यामधिरोहेदेवंश्येनोवयांस्यभिनिविशतंएवंवृ
क्षंसउवयसांवीर्यवत्तमइतितस्माद्बाहुभ्यामधिरोहेदस्यैपादंनोच्छिंद्यान्नेदस्यैप्रतिष्ठायाऽउच्छिद्याइतिंप्रेंखंहोताधिरो
हंत्यौदुंबरीमासंदीमुद्गातांवृषावैप्रेंखोयोषासंदीतन्मिथुनंमिथुनमेवतंदुक्थमुखेकरोतिंप्रजात्यैप्रजायतैंप्रजयापशुभिर्य
एवंवेदांथान्नंवैप्रेंखःश्रीरासंद्यन्नंचैवतंच्छ्रियंचान्वधिरोहतौंबृसीर्होत्रकाःसमधिरोहंतिंसब्रह्मकाःसमुत्सृप्यवांओषधि
वनस्पतयःफलंगृह्णंतिंतद्यदेतस्मिन्नहनिसर्वशःसमधिरोहंतीषमेवतदूर्जमन्नाद्यमधिरोहंत्यूर्जोऽन्नाद्यस्यावरुध्यैवषट्कृ
त्यावरोहेदित्याहुंस्तत्तन्नादृत्यंमकृतावैसापचितिर्यामपश्यतेकरोतिंनिगृह्यभक्षमवरोहेदित्याहुंस्तत्तन्नादृत्यंमकृतावैसा
पचितिर्यामध्यृष्टायकरोतिंप्रतिख्यायभक्षमवरोहेदेषावाअपचितिर्यांपश्यतेकरोतितस्मात्प्रतिख्यायैवभक्षमवरोहेत्प्रा
ङ्वरोहेत्प्राग्वैदेवरेतंःसंप्रजायतैंतस्मात्प्राङ्वरोहेदवरोहेत् ॥८॥ इतिद्वितीयोऽध्यायः ॥ २ ॥ ॥ हिंकारेणैतदहःप्रति



---

१ रेतसमितिपाठः ।

पद्येतेत्याहुर्ब्रह्मवैहिंकारोब्रह्मैवतदहर्ब्रह्मणैवतद्ब्रह्मप्रतिपद्यतेयएवंवेदयदेवहिंकारेणप्रतिपद्यता ३ ई ॥ वृषावैहिंकारो
योषर्क्तन्मिथुनंमिथुनमेवतदुक्थमुखेकरोतिप्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदयद्वेवहिंकारेणप्रतिपद्यता ३ ई ॥
यथावाऽअश्विरेवंब्रह्मणोहिंकारोयद्वैकिंचाश्विंयाऽभितिंतृत्सत्यभ्येवैनत्तृणत्त्येवंयंकाममंकामयतेहिंकारेणाभ्येवैनंतृण
त्तियएवंवेदयद्वेवहिंकारेणप्रतिपद्यता ३ ई ॥ वाचोवाऽएषाव्यावृत्तिर्दैव्यैचमानुष्यैचयद्धिंकारःसयद्धिंकृत्यप्रतिप
द्यतेवाचमेवतद्व्यावर्तयतिदैवींचमानुषींच ॥ ९ ॥ तदाहुःकैतस्याह्नःप्रतिपदितिमनश्चवाक्चेतिब्रूयात्सर्वेन्यस्मिन्कामाः
श्रिताःसर्वानन्यान्कामान्दुहेमनसिवैसर्वेकामाःश्रितामनसाहिसर्वान्कामान्ध्यायतिसर्वेहास्मिन्कामाःश्रयंतेयएवं
वेदवाग्वैसर्वान्कामान्दुहेवाचाहिसर्वान्कामान्वदतिसर्वान्हास्मैकामान्वाग्दुहेयएवंवेदतदाहुर्नैतदहर्ऋचानयजुषान
साम्नाप्रत्यक्षात्प्रतिपद्येतनर्चोनयजुषोनसाम्नइयादितितदेताएवव्याहृतीःपुरस्ताज्जपेद्भूर्भुवःस्वरित्येतावावव्याहृतय
इमेत्रयोवेदाभूरित्येवऋग्वेदोभुवइतियजुर्वेदःस्वरितिसामवेदस्तन्नर्चानयजुषानसाम्नाप्रत्यक्षात्प्रतिपद्यतेनर्चोनयजु
षोनसाम्नएति ॥ १० ॥ तदितिप्रतिपद्यतेतत्तदितिवाअन्नमन्नमेवतदभिप्रतिपद्यतएतांवावप्रजापतिःप्रथमांवाचं
व्याहरदेकाक्षरद्व्यक्षरांततेतितातेतितथैवतत्कुमारःप्रथमवादीवाचंव्याहरत्येकाक्षरद्व्यक्षरांततेतितातेतितयैवतत्तत
वत्यावाचाप्रतिपद्यतेतदुक्तमृषिणाबृहस्पतेप्रथमंवाचोअग्रमित्येतद्ध्येवप्रथमंवाचोअग्रंयत्प्रैरतनामधेयंदधानाइति

वाचाहिनामधेयानिधीयंतेयदेषांश्रेष्ठंयदरिप्रमासीदित्येतद्ध्येवश्रेष्ठमेतदरिप्रंप्रेणातदेषांनिहितंगुहाविरितीदमुहगुहा
ध्यात्ममिमादेवताअदउआविरधिदैवतमित्येतत्तदुक्तंभवति ॥ ११ ॥ तदिदासभुवनेषुज्येष्ठमितिप्रतिपद्यतंएतद्धाव
भुवनेषुज्येष्ठंयतोजज्ञउग्रस्त्वेषनृम्णइत्यतोह्येषजातउग्रस्त्वेषनृम्णः सद्योजज्ञानोनिरिणातिशत्रूनितिसंद्योह्येषजातः पा
प्मानमपाहतानुयंविश्वेमदंत्यूमाइतिभूतानिवैविश्वऊमास्तएनमनुमदंत्युदगादुदगादितिवावृधानःशवसाभूर्योजा
इत्येषवैवावृधानःशवसाभूर्योजाइतिशत्रुर्दासायभियसंदधातीतिसर्वंह्येतस्माद्बीभायाव्यनच्चव्यनच्चसस्त्रीतियच्चप्रा
णियच्चाप्राणकमित्येवतदाहसंतेनवंतप्रभृतामदेष्वितितवसर्वंवशइत्येवतदाहत्वेक्रतुमपिवृंजंतिविश्वइतित्वयीमानि
सर्वाणिभूतानिसर्वाणिमनांसिसर्वेक्रतवोपिवृंजंतीत्येवतदाहद्विर्यदेतेत्रिर्भवंत्यूमाइतिद्वौवैसंतौमिथुनौप्रजायेतेप्रजा
त्यैप्रजायतेप्रजयापशुभिर्यएवंवेदस्वादोःस्वादीयःस्वादुनासृजासमितिमिथुनंवैस्वादुप्रजास्वादुंमिथुनेनैवतत्प्रजांसं
सृजत्यदःसुमधुमधुनाभियोधीरितिमिथुनंवैमधुप्रजामधुमिथुनेनैवतत्प्रजामभियुध्यतितदुक्तमृषिणास्वांयत्तनूंतन्वा
मैरयतेत्यस्यांशारीर्यामिमांछंदोमयीमित्येवतदाहाथोतनूरेवतन्वोअस्तुभेषजमित्यस्यैशारीर्याइयंछंदोमयीत्येवतदाह
तस्यैयान्यष्टावक्षराणिसागायत्रीयान्येकादशसात्रिष्टुप्यानिद्वादशसाजगत्यथयानिदशसाविराट्दशिन्येषुत्रिषुछंदः-
सुप्रतिष्ठितापुरुषइतित्र्यक्षरंसउविराज्येतान्येवासर्वाणिच्छंदांसियान्येतानिविराट्चतुर्थान्येवमुहैवैवंविदुषएतदहः

सर्वैश्छंदोभिः प्रतिपन्नंभवति ॥१२॥ तानदेनविहरतिपुरुषोवैनदस्तस्मात्पुरुषोतदंन्त्सर्वः सन्नदतीवंनदंवओदतीनामि
तीँ३ आपोवाओदत्योंयादिव्यास्ताहीदंसर्वमुदंत्यापोवाओदत्योंयामुख्यास्ताहीदंसर्वमन्नाद्यमुंदंतिनदंयोयुवतीनामि
तीँ३ आपोवावयोयुवत्योंयाअंतरिक्ष्यास्ताहिपोप्लूयंतइवापोवावयोयुवत्योंयाः स्वेदतेताहिंसरीसृप्यंतइवपतिंवोअघ्न्या
नामितीँ३ आपोवाअघ्न्यायांअग्नेर्धूमाज्जायंतआपोवाअघ्न्यायाः शिश्नात्प्रसृज्यंतेधेनूनामिषुध्यसीतीँ३ आपोवावधेनवं
स्ताहीदंसर्वंधिन्वंतीषुध्यसीतियदाहपतीयसीत्येवतदाहत्रिष्टुभंचानुष्टुभंचविहरतिवृषावैत्रिष्टुब्योषाऽनुष्टुप्तन्मिथुनं
तस्मादपिपुरुषोजायांवित्वाकृत्स्नतरमिवाऽत्मानंमन्यतेतास्त्रिःप्रथमयापंचविंशतिर्भवंतिपंचविंशआत्मापंचविंशःप्र
जापतिर्दशहस्त्याअंगुलयोदशपाद्याद्वाऊरूद्वौबाहूआत्मैवपंचविंशस्तमिममात्मानंपंचविंशंसंस्कुरुतेथोपंचविंशंवाएत
दहःपंचविंशएतस्याह्नःस्तोमस्तत्समेनसमंप्रतिपद्यतेतस्माद्वेएवपंचविंशतिर्भवंति ॥१३॥ तदितिप्रतिपद्यतेतत्तदितिवा
अन्नमन्नमेवंतदभिप्रतिपद्यतंएतांवावप्रजापतिःप्रथमांवाचंव्याहरदेकाक्षरद्व्यक्षरांततेतितातेतितथैवैतत्कुमारःप्रथम
वादीवाचंव्याहरत्येकाक्षरद्व्यक्षरांततेतितातेतितयैवतत्ततवत्यावाचाप्रतिपद्यतेतदुक्तमृषिणाबृहस्पतेप्रथमंवाचोअग्र
मित्येतद्ध्येवप्रथमंवाचोअग्रंयत्प्रैरतनामधेयंदधानाइतिवाचाहिनामधेयानिधीयतेयदेषांश्रेष्ठंयदरिप्रमासीदित्येतद्ध्ये
वश्रेष्ठमेतदरिप्रंप्रेणातदेषांनिहितंगुहाविरितीदमुहगुहाध्यात्ममिमादेवताअदद्उआविरधिदैवतमित्येतत्तदुक्तंभवति

॥ १४ ॥ तदिदासभुवनेषुज्येष्ठमितिंप्रतिपद्यंतेयद्वैज्येष्ठँतन्महन्महद्धद्रूपसमृद्धंमेतस्याह्नोरूपँतांसुतेकीर्तिंमघवन्म
हित्वेर्तिमहद्धद्रूपसमृद्धमेतस्याह्नोरूपँभूयइद्धावृधेवीर्यायेतिंवीर्यवद्रूपसमृद्धंमेतस्याह्नोरूपँनृणामुत्वानृतमंगीर्भिरु
क्थैरित्युक्थंवाएतदहंरुक्थवद्रूपसमृद्धंमेतस्याह्नोरूपँन्यूनाक्षरेप्रथमेपदेविहरतिंन्यूनेवैरेतःसिच्यतेंन्यूनेप्राणान्यूनेऽ
न्नाद्यंप्रतिष्ठितंमेतेषांकामानामवरुध्यांएतान्कामानवरुंधेयएवंवेदंद्वेदशाक्षरेभवतउभयोरन्नाद्ययोरुपाप्त्यैयच्चपद्वद्य
च्चापादकंमित्यष्टादशाष्टादशाक्षराणिभवंतिंयानिदशनवप्राणांआत्मैवदशमंःसात्मनःसंस्कृतिरष्टावष्टाउद्यंतेंश्नुतेयद्य
त्कामयतेयएवंवेदं ॥१५॥ तानदेनविहरतिंप्राणोवैनदंस्तस्मात्प्राणोनदंन्त्सर्वःसन्नदतीवंनदंवओदतीनामितीँ३उष्णि
गक्षरैर्भवंत्यनुष्टुप्पादैरायुर्वाउष्णिग्वागनुष्टुप्तदस्मिन्नायुश्चवाचंचदधातिंतास्त्रिःप्रथमयापंचविंशतिर्भवंतिंपंचविंश
आत्मापंचविंशंःप्रजापतिर्दशहस्त्याअंगुलयोंदशपाद्याद्वाऊरूद्वौबाहूआत्मैवपंचविंशस्तमिममात्मानंपंचविंशंसंस्कुरु
तेंथोपंचविंशंवाएतदहंःपंचविंशएतस्याह्नःस्तोमंस्तत्समेनसमंप्रतिपद्यतेंतस्माद्वेएवपंचविंशतिर्भवंतीत्यध्यात्मंपंचविं
शोऽथाधिदैवतंचक्षुःश्रोत्रंमनोवाक्प्राणंस्ताएताःपंचदेवतांइमंविष्टाःपुरुषंपंचोहैवैतादेवताअयंविष्टःपुरुषःसोत्रालोम
भ्यआनखेभ्यंःसर्वःसांगआप्यतेंतस्मात्सर्वाणिभूतांन्यापिपीलिकाभ्यंआप्तान्येवजायंतेंतदुक्तमृषिणांसहस्रधापंचद
शान्युक्थेतिंपंचहिदशतोभवंतिंयावद्द्यावापृथिवीतावदित्तदितिंयावतीवैद्यावापृथिवींतावानात्मांसहस्रधामहिमानः

॥ ६ ॥

सहस्रमित्युक्थान्येवतदनुमदतिमहयतिंयावद्ब्रह्मविष्ठितंतावतीवागितिंयत्रहक्कचब्रह्मतद्वांग्यत्रवावाक्तद्वाब्रह्मेत्येत
त्तदुक्तंभवंत्येषांवाएषांसूक्तानांनवर्च्चंप्रथमंनववैप्राणाः प्राणानांक्लृप्त्यैषळृचंभवंतिंषड्वाऋतवऋतूनामाप्त्यैपंचर्चंभवतिं
पंचपदापंक्तिः पंक्तिर्वाअन्नमन्नाद्यस्यावरुध्यैतृचोभवंतित्रयोवाइमेत्रिवृतोलोकाएषामेवलोकानामभिजित्यैताअभिसं
पद्यंतेबृहतींछंदोमृतंदेवलोकंमेषआत्मैवमुहैवैवंविदेंतयैवसंपदामृतमेवात्मानमभिसंभवतिसंभवति ॥ १६ ॥ इतिप्रथ
मारण्यकेतृतीयोध्यायः ॥३॥ ॥ अथसूददोहाः प्राणोवैसूददोहाः प्राणेनपर्वाणिसंदधात्यथातोग्रीवास्ताआचक्षतेंयथा
छंदसमुष्णिहइत्यथसूददोहाः प्राणोवैसूददोहाः प्राणेनपर्वाणिसंदधात्यथातः शिरस्तद्गायत्रीषुभवंत्यग्रंवैछंदसांगायत्र्यं
ग्रमंगानांशिरस्तदर्कवतीषुभवंत्यग्निर्वाअर्कस्तानवभवंतिंनवकपालंवैशिरोंदशमींशंसतिंत्वक्केशाइत्येवसाभवंत्यथोस्तो
मातिशंसनायाएवंतौत्रिवृच्चस्तोमौभवतोंगायत्रंचच्छंदंएतयोर्वैस्तोमच्छंदसोः प्रजातिमनुसर्वमिदंप्रजायतेयदिदंकिंचं
प्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदाथसूददोहाः प्राणोवैसूददोहाः प्राणेनपर्वाणिसंदधात्यथातोविजवस्ताविराजोभ
वंतितस्मात्पुरुषः पुरुषमाहंविवाअस्मासुराजसि ॥ ग्रीवावैधारयसीतिंस्तभमानंवायद्वादुताः संबाह्वतमाः सत्योन्नतमां
प्रत्यच्यंतेंऽन्नंहिविराळन्नमुवीर्यंमथसूददोहाः प्राणोवैसूददोहाः प्राणेनपर्वाणिसंदधाति ॥ १७ ॥ अथातोदक्षिणः पक्षः
सोयंलोकः सोयमग्निः सावाक्तद्रथंतरंस [illegible] निषद्वीर्याणिभवंतिंसंपातएवकामानामभ्याप्त्यैप्रतिष्ठित्याअ

न्नाद्यायपंक्तिर'थसूददोहाः प्राणोवैसूददोहाः प्राणेनपर्वाणिसंदधात्य'थातउत्तरःपक्षःसोसौलोकःसोसावादित्यस्तन्मन
स्तद्बृहत्सभरद्वाजस्तच्छतंतानिषड्वीर्याणिभवंतिसंपातएवकामानामभ्याप्त्यैप्रतिष्ठित्याअन्नाद्यायपंक्तिस्ताऊनातिरि
क्तौभवतोवृषावैबृहद्योषारथंतरंमतिरिक्तंवैपुंसोन्यूनंस्त्रियैतस्मादूनातिरिक्तौभवतोथोऽएकेनहवैपत्रेणसुपर्णस्योत्तरः
पक्षोज्यायांस्तस्मादेकयर्चोत्तरःपक्षोभूयान्भवत्यथसूददोहाःप्राणोवैसूददोहाःप्राणेनपर्वाणिसंदधात्यथातःपुच्छंताए
कविंशतिर्द्विपदाभवंत्यैकविंशतिर्हीमानिप्रत्यंचिसुपर्णस्यपत्राणिभवंत्यथोएकविंशोवैस्तोमानांप्रतिष्ठाप्रतिष्ठापुच्छंवय
सांद्वाविंशींशंसतिप्रतिष्ठयोरेवतद्रूपंक्रियतेतस्मात्सर्वाणिवयांसिपुच्छेनप्रतितिष्ठंतिपुच्छेनैवप्रतिष्ठायोत्पतंतिप्रतिष्ठा
हिपुच्छंसएषद्वाभ्यांदशिनीभ्यांविराड्भ्यामनयोर्द्वाविंश्योर्द्विपदयोरयंपुरुषःप्रतिष्ठितस्तस्ययत्सुपर्णरूपंतदस्यकामा
नामभ्याप्त्याअथयत्पुरुषरूपंतदस्यश्रियैयशसेन्नाद्यायापचित्याअथसूददोहाअथधाय्याथसूददोहावृषावैसूददोहा
योषाधाय्यातदुभयतःसूददोहसाधाय्यांपरिशंसतितस्माद्द्वयोरेतःसिक्तंसदेकतामेवाप्येतियोषामेवाभ्यतआजानाहिं
योषातःप्रजानातस्मादेनामत्रशंसति ॥ १८ ॥ गायत्रींतृचाशीतिंशंसत्ययंवैलोकोगायत्रीतृचाशीतिर्यदेवास्मिँल्लोकेयशो
यन्महोयन्मिथुनंयदन्नाद्यंयापचितिस्तदश्नवैतदाप्नवानि ॥ तदवरुणधैतन्मेसदित्यथसूददोहाःप्राणोवैसूददोहाःप्राणे



१ अत्रैतादृक्चिह्नगर्भितोभागोनभाष्यकाराभिमतः ।

नेमंलोकंसंतनोतिंबार्हतींतृचाशीतिंशंसत्यंतरिक्षलोकोवैबार्हतीतृचाशीतिर्यदेवांतरिक्षलोकेयशोयन्महोयन्मिथुनंय
दन्नाद्यंयापचितिस्तदश्नवैतदाप्नवानि ॥ तदवरुणधैतन्मेसर्दित्यथसूददोहाःप्राणोवैसूददोहाःप्राणेनांतरिक्षलोकंसंत
नोत्यौष्णिहींतृचाशीतिंशंसत्यसौवैलोकोद्यौरौष्णिहीतृचाशीतिर्यदेवामुष्मिँल्लोकेयशोयन्महोयन्मिथुनंयदन्नाद्यंयाप
चितिर्यद्देवानांदेवंतदश्नवैतदाप्नवानि ॥ तदवरुणधैतन्मेसर्दित्यथसूददोहाःप्राणोवैसूददोहाःप्राणेनामुंलोकंसंतनोति
संतनोति॥ १९॥इतिप्रथमारण्यकेचतुर्थोध्यायः ॥४॥ ॥ वशंशंसतिवशेमइदंसर्वमसदितिताएकविंशतिर्भवंत्येकविंश
तिर्हिताअंतरुदरेविकृतयोथोएकविंशोवैस्तोमानांप्रतिष्ठाप्रतिष्ठोदरमन्नाद्यानांताविच्छंदसोभवंतिविक्षुद्रमिववाअंत
स्त्यमणीयइवचस्थवीयइवचंताःप्रणावंच्छंदस्कार्यंयथोपपादंशंसतियथोपपादमिववाअंतस्त्यंह्सीयइवचद्राघीयइव
चांथसूददोहाःप्राणोवैसूददोहाःप्राणेनपर्वाणिसंदधातिंतामत्रोत्सृजतिद्वादशकृत्वःशस्त्वाद्वादशविधावाइमेप्राणाः
सप्तशीर्षण्याद्वौस्तन्यौत्रयोवांचोऽत्रवैप्राणाआप्यंतेत्रसंस्क्रियंतेतस्मादेनामत्रोत्सृजतींद्राग्नीयुवंसुनईत्यैंद्राग्नाऊरूउर्व
ष्ठीवेप्रतिष्ठैताःषट्पदाभवंतिप्रतिष्ठायाएवद्विप्रतिष्ठोवैपुरुषश्चतुष्पादाःपशवोयजमानमेवतद्विप्रतिष्ठंचतुष्पात्सुपशुषु
प्रतिष्ठापयतिंद्वितीयासप्तपदाभवतितांगायत्रींचानुष्टुभंचकरोतिब्रह्मवैगायत्रीवागनुष्टुप्ब्रह्मणैवतद्वाचंसंदधातित्रि
ष्टुभमंततःशंसतिवीर्यंवैत्रिष्टुब्वीर्येणैवतत्पशून्परिगृह्णातितस्मात्पशवोवीर्यमनुप्रतिष्ठंतंईर्यतांचैवाभ्युत्थानंच ॥ २० ॥

प्रवोमहेमंदमानायांधसइंत्यैंद्रेनिष्केवल्येनिविदंदधातिंप्रत्यक्षाद्ध्येवतदात्मन्वीर्यंधत्तेंतास्त्रिष्टुब्जगत्योभवंतिंतदाहुर
थकस्मात्रिष्टुप्जगतीषुनिविदंदधातीतिंनहवाएतस्याह्नएकंछंदोनिविदंदाधारनविव्याचेतिंतस्मात्रिष्टुप्जगतीषुनिवि
दंदधातिंतदेतदहस्त्रिनिवित्कंविद्यांद्धशोनिविद्वालखिल्यानिर्विंन्निविदेवनिविदेवमेनंत्रिनिवित्कंविद्यांदथसूक्तेवनेन
वायोन्यधायिचार्कन्योजातएवप्रथमोमनस्वानितिंतयोरस्त्यन्नेसमस्ययदसन्मनीषाइंत्यन्नाद्यस्यावरुध्यांअथावपनमे
तेंअंतरेणैन्द्रीणांदशतीनांत्रिष्टुब्जगतीनां[1]'बृहती'संपन्नानांयावतीरावपंतेंतावंत्यूर्ध्वमायुषोवर्षाणिजीवंत्येतेनहैवावप
नेनायुराप्यतेंप्रजांमेपशवोर्जयन्नित्येवंसजनीयमनुशंसतिंताक्ष्यंशंसतिंस्वस्त्ययनंवैताक्ष्यः स्वस्तितायैस्वस्त्ययनमेवत
त्कुरुतंएकपदांशंसंत्येकधेदंसर्वमसानींत्यथोसर्वाच्छंदस्कृतिमाप्नवानीतींद्रंविश्वाअवीवृधन्नितिपदानुषंगांस्ताःसप्ता
नुषजतिंसप्तवैशीर्षन्प्राणाः शीर्षन्नेवतत्प्राणान्दधात्यष्टमींनानुषजतिंवागष्टमीनेन्मेवाक्प्राणैरनुषक्तासदितिंतस्मादु
सावाक्समानायतनाप्राणैः सत्यननुषक्तांविराजःशंसत्यन्नंवैविराजोंन्नाद्यस्यावरुध्यैवासिष्ठेनपरिदधातिवसिष्ठोसानीं
त्येषस्तोमोमहउग्रायवाहइतिंमहद्वत्यारूपसमृद्धयांधुरीवात्योनवाजयन्नधायींत्यंतोवैधूरंतएतदहरेतस्याह्नोरूपंमिंद्र
त्वायमर्कईट्टेवसूनामित्यर्कवत्यारूपसमृद्धयांदिवीवद्यामधिनःश्रोमतंधाइतिंयत्रहक्वचब्रह्मण्यावागुद्यतेंतद्धास्यकी



---

१ अत्रबृहतीशब्दपाठोनभाष्यकारेष्टः ।

र्तिभवतिंयत्रैवंविद्वानेतयापरिदधातितस्मादेवंविद्वानेतयैवपरिदध्यात् ॥२१॥ तत्सवितुर्वृणीमहेऽद्यानोदेवसवितरि
तिवैश्वदेवस्यंप्रतिपदनुचरावैकाहिकौरूपसमृद्धौबहुवाएतस्मिन्नहनिंकिंचकिंचवारणंक्रियतेशांत्याएवशांतिर्वैप्रतिष्ठै
काहःशांत्यामेवतत्प्रतिष्ठायामंततःप्रतितिष्ठंतिप्रतितिष्ठतियएवंवेदयेषांचैवंविद्वानेतद्धोताशंसतितद्देवस्यसवितुर्वार्यं
महदितिसावित्रंमंतोवैमहदंतएतदहरेतस्याह्नोरूपंकतरापूर्वाकतरापरायोरितिद्यावापृथिवीयंसमानोदर्कंसमानोदर्कं
वाएतदहरेतस्याह्नोरूपंमनश्वोजातोअनभीशुरुक्थ्यइत्यार्भवंरथस्त्रिचक्रइतिंय(प)देतत्त्रिवत्तदंतोवैत्रिवदंतएतदहरे
तस्याह्नोरूपंमस्यवामस्यपलितस्यहोतुरितिवैश्वदेवंबहुरूपंवाएतदहरेतस्याह्नोरूपंगौरीर्मिमायसलिलानितक्षतीत्येतदं
तंमानोभद्राःक्रतवोयंतुविश्वतइतिवैश्वदेवंनिविद्धानमैकाहिकंरूपसमृद्धंबहुवाएतस्मिन्नहनिंकिंचकिंचवारणंक्रियते
शांत्याएवशांतिर्वैप्रतिष्ठैकाहःशांत्यामेवतत्प्रतिष्ठायामंततःप्रतितिष्ठंतिप्रतितिष्ठतियएवंवेदयेषांचैवंविद्वानेतद्धोताशं
सतिंवैश्वानरायधिषणामृतावृधइत्याग्निमारुतस्यप्रतिपदंतोवैधिषणांतएतदहरेतस्याह्नोरूपंप्रयज्यवोमरुतोभ्राजदृष्ट
यइतिमारुतंसमानोदर्कंसमानोदर्कंवाएतदहरेतस्याह्नोरूपंजातवेदसेसुनवामसोममितिजातवेदस्यांपुरस्तात्सूक्तस्यशं
सतिंस्वस्त्ययनंवैजातवेदस्याःस्वस्तितायैस्वस्त्ययनमेवतत्कुरुतइमंस्तोममर्हतेजातवेदसइतिजातवेदस्यंसमानोदर्कंस
मानोदर्कंवाएतदहरेतस्याह्नोरूपमह्नोरूपं॥२२॥ इतिप्रथमारण्यकेपंचमोध्यायः ॥५॥ इतिऐतरेयकेप्रथमारण्यकंस०१

हरिः॑ॐम् ॥ एषपंथाएतत्कर्मैतद्ब्रह्मैतत्सत्यंतस्मान्नप्रमाद्येत्तन्नातीयान्नह्यत्यायन्पूर्वेयेत्यायंस्तेपराबभूवुस्तदुक्तमृ
षिणांप्रजाहतिस्रोअत्यायमीयुर्न्यं१ न्याअर्कमभितोविविश्रे ॥ बृहद्धतस्थौभुवनेष्वंतःपवमानोहरितआविवेशेतिंप्र
जाहतिस्रोअत्यायमीयुरितियावैताइमाःप्रजास्तिस्रोंअत्यायमायंस्तानीमानिवयांसिवंगावगधाश्चेरपादान्य१ न्याअर्क
मभितोविविश्रइतिंताइमाःप्रजाअर्कमभितोनिविष्टाइममेवाग्निंबृहद्धतस्थौभुवनेष्वंतरित्यदउएवबृहद्भुवनेष्वंतरसा
वादित्यःपवमानोहरितआविवेशेतिंवायुरेवपवमानोदिशोहरितआविष्टः ॥ १ ॥ उक्थमुक्थमितिवैप्रजावदंति
तदिदमेवोक्थमियमेवपृथिवीतोहीदंसर्वमुत्तिष्ठतियदिदंकिंचतस्याग्निरर्कोन्नमशीतयोन्नेनहीदंसर्वमश्नुतेंन्तरिक्षमेवो
क्थमंतरिक्षंवाअनुपतंत्यंतरिक्षमनुधावयंतिंतस्यवायुरर्कोन्नमशीतयोन्नेनहीदंसर्वमश्नुतेंसावेवद्यौरुक्थममुतःप्रदाना
द्धीदंसर्वमुत्तिष्ठतियदिदंकिंचतस्यासावादित्योर्कोन्नमशीतयोन्नेनहीदंसर्वमश्नुतइत्यधिदैवतमथाध्यात्मंपुरुषएवोक्थं
मयमेवमहान्प्रजापतिरहमुक्थमस्मीतिविद्यात्तस्यमुखमेवोक्थंयथापृथिवीतथातस्यंवागर्कोन्नमशीतयोन्नेनहीदंसर्वम
श्नुतेंनासिकेएवोक्थंयथांतरिक्षंतथातस्यप्राणोर्कोन्नमशीतयोन्नेनहीदंसर्वमश्नुतेंतदेतद्ब्रध्नस्यविष्टपंयदेतन्नासिकायैवि
नतमिवललाटमेवोक्थंयथाद्यौस्तथातस्यचक्षुरर्कोन्नमशीतयोन्नेनहीदंसर्वमश्नुतेंसमानमशीतयोध्यात्मंचाधिदैवतंचा
न्नमेवांन्नेनहीमानिसर्वाणिभूतानिसमनंतीं२ ॥ अन्नेनेमंलोकंजयत्यन्नेनामुंतस्मात्समानमशीतयोध्यात्मंचाधिदैवतं

चान्नमेवतदिदमन्नमन्नादमियमेवंपृथिवीतोहीदंसर्वमुत्तिष्ठतियदिदंकिंचयद्धकिंचेदंप्रेर्ता३इ ॥ तदसौसर्वमत्तियदु किंचात्रःप्रैर्ती३ ॥ तदियंसर्वमत्तिसेयमित्याद्यांत्र्यत्ताहवाआद्योभवतिंनतस्येशेयंनाद्याद्यद्वैनंनाद्युः ॥ २ ॥ अथा तोरेतसःसृष्टिःप्रजापतेरेरेतोदेवादेवानांरेतोवर्षंवर्षस्यरेतओषधयओषधीनांरेतोन्नंमन्नस्यरेतोरेतोरेतसोरेतःप्रजाःप्रजा नांरेतोहृदयंहृदयस्यरेतोमनोमनसोरेतोवाग्वाचोरेतःकर्म ॥ तदिदंकर्मकृतमयंपुरुषोब्रह्मणोलोकःसइरामयोयद्धीराम यस्तस्माद्धिरणमयोहिरणमयोहवाअमुष्मिँल्लोकेसंभवतिहिरण्मयःसर्वेभ्योभूतेभ्योदद्दशेयएवंवेद ॥ ३ ॥ तंप्रपदाभ्यां प्रापद्यतब्रह्मेमंपुरुषंयत्प्रपदाभ्यांप्रापद्यतब्रह्मेमंपुरुषंतस्मात्प्रपदेतस्मात्प्रपदेइत्याचक्षतेशफाःखुराइत्यन्येषांपशूनांत दूर्ध्वमुदसर्पत्ताऊरूअभवतामुरुगृणीहीत्यब्रवीत्तदुदरमभवदुर्वेवमेकुर्वित्यब्रवीत्तदुरोभवदुदरंब्रह्मेतिशार्कराक्ष्याउपा सतेहृदयंब्रह्मेत्यारुणयोब्रह्माहैवता३ई ॥ ऊर्ध्वंत्वेवोदसर्पत्तच्छिरोश्रयतंयच्छिरोश्रयततच्छिरोभवत्तच्छिरसःशिर स्त्वंताएताःशीर्षञ्छ्रियःश्रिताश्चक्षुःश्रोत्रंमनोवाक्प्राणःश्रयंतेस्मिञ्छ्रियोयएवमेतच्छिरसःशिरस्त्वंवेदताअहिंसंताहमु क्थमस्म्यहमुक्थमस्मीतितिताअब्रुवन्हंतास्माच्छरीरादुत्क्रामामंतद्यस्मिन्नउत्क्रांतइदंशरीरंपत्स्यतितदुक्थंभविष्यती तिवागुदक्रामदवदन्नश्नन्पिबन्नास्तैवंचक्षुरुदक्रामदपश्यन्नश्नन्पिबन्नास्तैवंश्रोत्रमुदक्रामदशृण्वन्नश्नन्पिबन्नास्तैवंमनउं



१ मनउत्क्रामन्नितिभाष्याद्दतःपाठः ।

दक्रामन्मीलितइंवाश्नन्पिबन्नास्तैवप्राणंउदक्रामत्तत्प्राणंउत्क्रांतेपद्यतंतदशीर्यताशारीर्तौं३ ॥ तच्छरीरमभवत्तच्छ
रीरस्यशरीरत्वंशीर्यतेहवाअस्यद्विषन्पाप्माभ्रातृव्यंःपरास्यद्विषन्पाप्माभ्रातृव्योभवतियएवंवेदंताअहिंसंतैवाहंमुक्थ
मस्म्यहमुक्थमस्मीतिंताअब्रुवन्हंतेदंपुनःशरीरंप्रविशामंतद्यस्मिन्नःप्रपन्नइदंशरीरमुत्थास्यतिंतदुक्थंभविष्यतीतिंवा
क्प्राविशदशयदेवचक्षुःप्राविशंदशयदेवश्रोत्रंप्राविशंदशयदेवमनःप्राविशंदशयदेवप्राणःप्राविशंत्तत्प्राणेप्रपन्नउदति
ष्ठत्तदुक्थमभवत्तदेतदुक्थाँ३ ॥ प्राणएवप्राणउक्थमित्येवविद्यांत्तंदेवाअब्रुवनं्त्वमुक्थमसित्वमिदंसर्वमसिंतवव
यंस्मस्त्वमस्माकमसीतिंतदप्येतदृषिणोक्तंत्वमस्माकंतवस्मसीति ॥ ४ ॥ तंदेवाःप्राणयंतंसप्रणीतःप्रातायतप्राता
यीतीँ ३ ॥ तत्प्रातरभवत्समागादितीँ ३ ॥ तत्सायमभवदहरेवप्राणोरात्रिरपानौंवागग्निश्चक्षुरसावादित्यंश्चंद्र
मामनोदिशंःश्रोत्रंसएषप्रहितांसंयोगोध्यात्मंमिमादेवताअदउआविरधिदैवतंमित्येतत्तदुक्तंभवंत्येतद्धस्मवैतद्विद्वा
नाहंहिरण्यदन्वैदौंनतस्येशेयंमह्यंनदद्युंरितिप्रहितांवाअहमध्यात्मंसंयोगंनिविष्टंवेदैतद्धतदनीशानानिहवांअस्मैभू
तानिबलिंहरंतियएवंवेदंतत्सत्यंसदितिप्राणस्तीत्यन्नंयमित्यसावादित्यंस्तदेतत्त्रिवृत्त्रिवृदिववैचक्षुंःशुक्लंकृष्णंकनीनिके
तिंसयदिहवाअपिमृषावदतिंसत्यंहैवास्योदितंभवतिंयएवमेतत्सत्यस्यसत्यत्वंवेद ॥ ५ ॥ तस्यवाक्तंतिर्नामा
निदामानिंतदस्येदंवाचातंत्यानामभिर्दामभिंःसर्वंसितंसर्वंहीदंनामनीं ३ ॥ सर्वंवाचाभिवदतिंवहंतिहवाएनं

तंतिसंवद्धायएवंवेदंतस्योष्णिग्लोमानिंत्वग्गायत्रीत्रिष्टुम्मांसंमनुष्टुप्स्नावान्यस्थिजगतीपंक्तिर्मज्जाप्राणोबृहतींसच्छं
दोभिश्छन्नोयच्छंदोभिश्छन्नंस्तस्माच्छंदांसीत्याचक्षतेंच्छादयंतिहवाएनंच्छंदांसिंपापात्कर्मणोंयस्यांकस्यांचिद्दिशि
कामयतेंयएवमेतच्छंदसांच्छंदस्त्ववंवेदंतदुक्तमृषिणांपश्यंगोपामित्येषवैगोपांएषहीदंसर्वंगोपायंत्यनिपद्यमानमितिंन
ह्येषकदाचनसंविशंत्याचपराचपथिभिश्चरंतमित्याचह्येषपराचपथिभिश्चरतिंससध्रीचीःसविषूचीर्वसानइतिंसध्रीची
श्चह्येषविषूचीश्चवस्तइमाएवदिशंआवरीवर्तिभुवनेष्वंतरित्येषह्यंतर्भुवनेष्वावरीवर्त्यथोआवृतासोवतासोनकर्तृभिरि
तिंसर्वंहीदंप्राणेनावृतंसोयमाकाशःप्राणेनबृहत्याविष्टब्धस्तद्यथायमाकाशंःप्राणेनबृहत्याविष्टब्धंएवंसर्वाणिभूतान्या
पिपीलिकाभ्यंःप्राणेनबृहत्याविष्टब्धानीत्येवंविद्यात् ॥ ६ ॥ अथातोविभूतयोस्यपुरुषस्यंतस्यवाचासृष्टौपृथिवीचा
ग्निश्चांस्यामोषधयोजायंतेंग्निरेनास्वदयतींदमाहरतेदमाहरतेत्येवमेतौवाचंपितरंपरिचरतंःपृथिवीचाग्निश्चंयावदनुपृ
थिवीयावदन्वग्निस्तावानस्यलोकोभवतिंनास्यतावल्लोकोजीर्यतेंयावदेतयोर्नजीर्यतेंपृथिव्याश्चाग्नेश्चंयएवमेतांवाचोवि
भूतिंवेदंप्राणेनसृष्टावंतरिक्षंचवायुश्चांतरिक्षंवाअनुचरंत्यंतरिक्षमनुशृण्वंतिंवायुरस्मैपुण्यंगंधमावहंत्येवमेतौप्राणंपित
रंपरिचरतोंतरिक्षंचवायुश्चंयावदन्वंतरिक्षंयावदनुवायुंस्तावानस्यलोकोभवतिंनास्यतावल्लोकोजीर्यतेंयावदेतयोर्नजी
र्यतेंतरिक्षस्यचवायोश्चंयएवमेतांप्राणस्यविभूतिंवेदचक्षुषासृष्टौद्यौश्चादित्यश्चंद्यौर्हास्मैवृष्टिमन्नाद्यंसंप्रयच्छंत्यादित्यो

स्यज्योतिःप्रकाशंकरौत्येवमेतौचक्षुःपितरंपरिचरतौद्यौश्चादित्यश्चयावदनुद्यौर्यावदन्वादित्यस्तावानस्यलोकोभवति नास्यतावल्लोकोजीर्यतेयावदेतयोर्नजीर्यतेदिवश्चादित्यस्यचयएवमेतांचक्षुषोविभूतिंवेदश्रोत्रेणसृष्टादिशश्चचंद्रमाश्च दिग्भ्योहैनमायतीँ३॥ दिग्भ्योविशृणोतिचंद्रमाअस्मैपूर्वपक्षापरपक्षान्विचिनोतिपुण्यायकर्मणएवमेतेश्रोत्रंपितरंपरि चरंतिदिशश्चचंद्रमाश्चयावदनुदिशोयावदनुचंद्रमास्तावानस्यलोकोभवतिनास्यतावल्लोकोजीर्यतेयावदेतेषांनजीर्यते दिशांचचंद्रमसश्चयएवमेतांश्रोत्रस्यविभूतिंवेदमनसासृष्टाआपश्चवरुणश्चापोहास्मैश्रद्धांसंनमंतेपुण्यायकर्मणेवरुणो स्यप्रजांधर्मेणदाधारैवमेतेमनःपितरंपरिचरँत्यापश्चवरुणश्चयावदन्वापोयावदनुवरुणस्तावानस्यलोकोभवतिनास्य तावल्लोकोजीर्यतेयावदेतेषांनजीर्यतेऽपांचवरुणस्यचयएवमेतांमनसोविभूतिंवेद ॥ ७ ॥ आपा३इत्यापइति ॥ तदि दमापएवेदंवैमूलमदस्तूलमयंपितैतेपुत्रायत्रहक्वचपुत्रस्यतत्पितुर्यत्रवापितुस्तद्वापुत्रस्येत्येतत्तदुक्तंभवत्येतद्धस्मवैत द्विद्वानाहमहिदासऐतरेयआहमांदेवेभ्योवेदा३ओमद्देवान्वेदेतःप्रदानाह्येतइतःसंभृताइतिसएषगिरिश्चक्षुःश्रोत्रंम नोवाक्प्राणस्तंब्रह्मगिरिरित्याचक्षतेगिरतिहवैद्विषंतंपाप्मानंभ्रातृव्यंपरास्यद्विषन्पाप्माभ्रातृव्योभवतियएवंवेदसए षोसुःसएषप्राणःसएषभूतिश्चाभूतिश्चतंभूतिरितिदेवाउपासांचक्रिरेतेवभूवुस्तस्माद्धाप्येतर्हिसुप्तोभूर्भूरित्येवप्रश्वसि



१ वेदओमदितिभाष्यपाठः ।

त्यभूतिरित्यसुरास्ते 'ह' पराबभूवुर्भवत्यात्मनापरास्यद्विषन्पाप्माभ्रातृव्योभवतियएवंवेदसएषमृत्युश्चैवामृतंचतदुक्त
मृषिणापाङ्प्राङेतिस्वधयागृभीतइत्यपानेनह्ययंयतःप्राणोनपराङ्भवत्यमर्त्योमर्त्येनासयोनिरित्येतेनहीदंसर्वंसयो
निर्मर्त्यानिहीमानिशरीराणी३॥अमृतैषादेवतातांशश्वंताविषूचीनावियंतान्य[1]न्यंचिक्युर्ननिचिक्युरन्यमितिनिचि
न्वंतिहैवेमानिशरीराणी ३ ॥ अमृतैवैषादेवताऽमृतोहवामुष्मिंल्लोकेसंभवत्यमृतःसर्वेभ्योभूतेभ्योदद्दशेयएवंवेदयए
वंवेद ॥८॥ इतिद्वितीयारण्यकेप्रथमोध्यायः ॥१॥ ॥ एषइमंलोकमभ्यार्चत्पुरुषरूपेणयएषतपतिप्राणोवावतदभ्या
र्चत्प्राणोह्येषयएषतपतितंशतंवर्षाण्यभ्यार्चत्तस्माच्छतंवर्षाणिपुरुषायुषोभवंतितंयच्छतंवर्षाण्यभ्यार्चत्तस्माच्छतर्चि
नस्तस्माच्छतर्चिनइत्याचक्षतएतमेवसंतंसइदंसर्वमध्यतोदधेयदिदंकिंचसयदिदंसर्वमध्यतोदधेयदिदंकिंचतस्मान्मा
ध्यमास्तस्मान्माध्यमाइत्याचक्षतएतमेवसंतंप्राणोवैगृत्सोऽपानोमदःसयत्प्राणोगृत्सोपानोमदस्तस्माद्गृत्समदस्तस्माद्गृ
त्समदइत्याचक्षतएतमेवसंतंतस्येदंविश्वंमित्रमासीद्यदिदंकिंचतद्यदस्येदंविश्वंमित्रमासीद्यदिदंकिंचतस्माद्विश्वामि
त्रस्तस्माद्विश्वामित्रइत्याचक्षतएतमेवसंतंतंदेवाअब्रुवन्नयंवैनःसर्वेषांवामइतितंयद्देवाअब्रुवन्नयंवैनःसर्वेषांवामइति
तस्माद्वामदेवस्तस्माद्वामदेवइत्याचक्षतएतमेवसंतंसइदंसर्वंपाप्मनोत्रायतयदिदंकिंचसयदिदंसर्वंपाप्मनोत्रायतय



१ तेपराबभूवुरितिभाष्यपाठः ।

दिदंकिंचंतस्मादत्रयस्तस्मादत्रयइत्याचक्षतएतमेवसंतं ॥ ९ ॥ एषउएवबिभ्रद्वाजंःप्रजावैवाजस्ताएषबिभर्तियद्बिभ र्तितस्माद्भरद्वाजंस्तस्माद्भरद्वाजइत्याचक्षतंएतमेवसंतंतंदेवाअब्रुवंन्नयंवैनःसर्वेषांवसिष्ठइतितंयद्देवाअब्रुवंन्नयंवैनःस र्वेषांवसिष्ठइतितस्माद्वसिष्ठस्तस्माद्वसिष्ठइत्याचक्षतंएतमेवसंतंसइदंसर्वमभिप्रागाद्यदिदंकिंचंसयदिदंसर्वमभिप्रागा द्यदिदंकिंचंतस्मात्प्रगाथांस्तस्मात्प्रगाथाइत्याचक्षतंएतमेवसंतंसइदंसर्वमभ्यपवयतयदिदंकिंचंसयदिदंसर्वमभ्यपव यतयदिदंकिंचंतस्मात्पावमान्यंस्तस्मात्पावमान्यइत्याचक्षतंएतमेवसंतंसोऽब्रवींदहमिदंसर्वमसानियच्चक्षुद्रंयच्चमहदि तितेक्षुद्रसूक्ताश्चाभवन्महासूक्तांश्चंतस्मात्क्षुद्रसूक्तास्तस्मात्क्षुद्रसूक्ताइत्याचक्षतंएतमेवसंतंसूक्तंवतावोचतेतितत्सूक्तम भवंत्तस्मात्सूक्तंतस्मात्सूक्तमित्याचक्षतंएतमेवसंतमेषवाऋगेषह्येभ्यःसर्वेभ्योभूतेभ्योर्चतंसयदेभ्यःसर्वेभ्योभूतेभ्योर्च तंतस्मादृक्तस्मादृगित्याचक्षतंएतमेवसंतमेषवाअर्धर्चंएषह्येभ्यःसर्वेभ्योर्धेभ्योर्चतंसयदेभ्यःसर्वेभ्योर्धेभ्योर्चतंतस्मा दर्धर्चस्तस्मादर्धर्चइत्याचक्षतंएतमेवसंतमेषवैपदंमेषहीमानिसर्वाणिभूतानिपादिंसयदिमानिसर्वाणिभूतानिपादित स्मात्पदंतस्मात्पदमित्याचक्षतंएतमेवसंतमेषवाअक्षरंमेषह्येभ्यःसर्वेभ्योभूतेभ्यःक्षरतिंनचैनमतिक्षरंतिंसयदेभ्यःसर्वे भ्योभूतेभ्यःक्षरतिंनचैनमतिक्षरंतितस्मादक्षरंतस्मादक्षरमित्याचक्षतंएतमेवसंतंतावाएताःसर्वाऋचंःसर्वेवेदाःसर्वेघो षाएकैवव्याहृतिंःप्राणएवप्राणऋचइत्येवविद्यात्॥१०॥ विश्वामित्रंह्येतदहःशंसिष्यंतमिंद्रउपनिषससादंसहान्नमित्य

भिव्याहृत्यंबृहतीसहस्रंशशंसंतेनेंद्रस्यप्रियंधामोपेयायंतमिंद्रउवाचंऋषेप्रियंवैमेधामोपागाः सवाऋषेद्वितीयंशंसेतिंस
हान्नमित्येवाभिव्याहृत्यंबृहतीसहस्रंशशंसंतेनेंद्रस्यप्रियंधामोपेयायंतमिंद्रउवाचंऋषेप्रियंवैमेधामोपागाः सवाऋषेतृती
यंशंसेतिंसहान्नमित्येवाभिव्याहृत्यंबृहतीसहस्रंशशंसंतेनेंद्रस्यप्रियंधामोपेयायंतमिंद्रउवाचंऋषेप्रियंवैमेधामोपागांव
रंतेददामीतिसहोवाचंत्वामेवजानीयामितिंतमिंद्रउवाचंप्राणोवाअहमस्म्यृषेप्राणस्त्वंप्राणः सर्वाणिभूतानिंप्राणोह्येष
यएषतपतिंसएतेनरूपेणसर्वादिशोविष्टोस्मितस्यमेऽन्नंमित्रंदक्षिणंतद्वैश्वामित्रमेषतपन्नेवास्मीतिहोवाच ॥११॥ तद्वा
इदंबृहतीसहस्रंसंपन्नंतस्ययानिव्यंजनानितच्छरीरंयोघोषः सआत्मांयऊष्माणः सप्राणंएतद्धस्मवैतद्विद्वान्वसिष्ठोव
सिष्ठोबभूवंततएतन्नामधेयंलेभंएतदुहैवेंद्रोविश्वामित्रायप्रोवाचैतदुहैवेंद्रोभरद्वाजायप्रोवाचंतस्मात्सतेनबंधुनायज्ञे
षुहूयतेंतद्वाइदंबृहतीसहस्रंसंपन्नंतस्यवाएतस्यबृहतीसहस्रस्यसंपन्नस्यंषट्त्रिंशतमक्षराणांसहस्राणिभवंतिंतावंतिशत
संवत्सरस्याह्नांसहस्राणिभवंतिंव्यंजनैरेवरात्रीराप्नुवंतिस्वरैरहानिंतद्वाइदंबृहतीसहस्रंसंपन्नंतस्यवाएतस्यबृहतीसह
स्रस्यसंपन्नस्यंपरस्तात्प्रज्ञामयोंदेवतामयोब्रह्ममयोंमृतमयः संभूयंदेवताअप्येतियएवंवेदंतद्योहंसोसौयोसौसोहंतदुक्त
मृषिणांसूर्यआत्माजगतस्तस्थुषश्चेत्येतदुहैवोपेक्षेतोपेक्षेत ॥ १२ ॥ इतिद्वितीयारण्यकेद्वितीयोध्यायः ॥ २ ॥ ॥
योहवाआत्मानंपंचविधमुक्थंवेदंयस्मादिदंसर्वमुत्तिष्ठतिससंप्रतिविंत्पृथिवीवायुराकाशंआपोज्योतींषींत्येषवाआत्मो

कथंपंचविधमेतस्माद्धीदंसर्वमुत्तिष्ठत्येतमेवाप्येत्ययनंहवैसमानानांभवतियएवंवेदतस्मिन्योन्नंचान्नादंचवेदाहास्मिन्न
न्नादोजायतेभवत्यस्यान्नमापश्चपृथिवीचान्नमेतन्मयानिह्यन्नानिभवंतिज्योतिश्चवायुश्चान्नादमेताभ्यांहीदंसर्वमन्नम
त्यावपनमाकाशआकाशेहीदंसर्वंसमोप्यतआवपनंहवैसमानानांभवतियएवंवेदतस्मिन्योन्नंचान्नादंचवेदाहास्मिन्नन्ना
दोजायतेभवत्यस्यान्नमोषधिवनस्पतयोन्नंप्राणभृतोन्नादमोषधिवनस्पतीन्हिप्राणभृतोदंतितेषांयउभयतोदंताःपुरुष
स्यानुविधाविहितास्तेन्नादाअन्नमितरेपशवस्तस्मात्तइतरान्पशूनधीवचरंत्यधीवह्यन्नेन्नादोभवत्यधीवहसमानानांजा
यतेयएवंवेद ॥ १३ ॥ तस्ययआत्मानमाविस्तरांवेदाश्नुतेहाविर्भूयओषधिवनस्पतयोयच्चकिंचप्राणभृत्सआत्मान
माविस्तरांवेदौषधिवनस्पतिषुहिरसोदृश्यतेचित्तंप्राणभृत्सुप्राणभृत्सुत्वेवाविस्तरामात्मातेषुहिरसोपिदृश्यतेन चित्त
मितरेषुपुरुषेत्वेवाविस्तरामात्मासहिप्रज्ञानेनसंपन्नतमोविज्ञातंवदतिविज्ञातंपश्यतिवेदश्वस्तनंवेदलोकालोकौमर्त्ये
नामृतमीप्सत्येवंसंपन्नोऽथेतरेषांपशूनामशनापिपासेएवाभिविज्ञानंनविज्ञातंवदंतिनविज्ञातंपश्यंतिनविदुःश्वस्तनंन
लोकालोकौतएतावंतोभवंतियथाप्रज्ञंहिसंभवाः ॥ १४ ॥ सएषपुरुषःसमुद्रःसर्वंलोकमतियद्धाकिंचाश्नुतेत्येनंमन्य
तेयद्यंतरिक्षलोकमश्नुतेत्येनंमन्यतेयद्यमुंलोकमश्नुवीतात्येवैनंमन्येतसएषपुरुषःपंचविधस्तस्ययदुष्णंतज्ज्योतिर्यानि
खानिसआकाशोऽथयल्लोहितंश्लेष्मारेतस्ताआपोयच्छरीरंसापृथिवीयःप्राणःसवायुःसएषवायुःपंचविधःप्राणोपानो

व्यानउदानःसमान॑स्ताएतादेवताःप्राणापानयोरेवनिविष्टा॑श्चक्षुःश्रोत्रंमनोवागिति॑प्राणस्यह्यन्वपायमेताअपियंति॑स
एषवाचश्चित्तस्योत्तरोत्तरिक्रमोयद्यज्ञ॑ःसएषयज्ञःपंचविधो॑ऽग्निहोत्रंदर्शपूर्णमासौ॑चातुर्मास्यानिपशुःसोम॑ःसएषयज्ञा
नांसंपन्नतमोयत्सोम॑एतस्मिन्ह्येताःपंचविधाअधिगम्यंते॑यत्प्राक्सवनेभ्यःसैकाविधा॑त्रीणिसवनानियदूर्ध्वंसापंचमी
॥ १५ ॥ योहवैयज्ञेयज्ञंवेदा॑हन्यहर्दे॑वेषुदेवमध्यूढँससंप्रतिविदे॑षवैयज्ञेयज्ञोहन्यहर्दे॑वेषुदेवोध्यूढो॑यदेतन्महदुक्थंतदे
तत्पंचविधंत्रिवृत्पंचदशंसप्तदश॑मेकविंशंपंचविंशमिति॑स्तोमतोगायत्रंरथंतरंबृहद्भद्रंराजनमिति॑सामतोगायत्र्युष्णिक्
बृहतीत्रिष्टुप्द्विपदेति॑च्छंदस्तःशिरोदक्षिणःपक्ष॑उत्तरःपक्षःपुच्छमात्मेत्याख्यानं॑पंचकृत्वःप्रस्तौ॑तिपंचकृत्वउद्गायति॑पं
चकृत्वःप्रतिहरति॑पंचकृत्वउपद्रवति॑पंचकृत्वोनिधनमुपयंति॑तत्स्तोभसहस्रंभवत्येवंह्येताःपंचविधाअनुशस्यंते॑यत्प्राक्
तृचाशीतिभ्यःसैकाविधा॑तिस्रःस्तृचाशीतयो॑यदूर्ध्वंसापंचमी॑तदेतत्सहस्रं॑तत्सर्वं॑तानिदशदशेति॑वैसर्वमेतावतीहिसं
ख्या॑दशदशतस्तच्छतं॑दशशतानितत्सहस्रं॑तत्सर्वं॑तानित्रीणिच्छंदांसिभवंति॑त्रेधाविहितंवाइदमन्नमशनंपानं॑खादस्तदे
तैराप्नोति ॥१६॥ तद्वाइदंबृहतीसहस्रंसंपन्नं॑तद्धैतदेकेनानाच्छंदसांसहस्रंप्रतिजानते॑किमन्यत्सदन्यद्ब्रूयामेति॑त्रिष्टुप्
सहस्रमेकं॑जगतीसहस्रमेकं॑नुष्टुप्सहस्रमेकं॑तदुक्तमृषिणा॑ऽनुष्टुभमनुचंचूर्यमाणमिंद्रंनिचिक्युःकवयोमनीषेति॑वाचिवै

१ चञ्चूर्यमाणमितिभाष्यपाठः ।

तदैंद्रंप्राणंन्यचार्यन्नित्येतत्तदुक्तंभवतिंसहेश्वरोयशस्वीकल्याणकीर्तिर्भवितोरीश्वरोहतुपुरायुषःप्रैतोरितिहस्माहांकृ
तस्नोह्येषआत्मांयद्वागभिहिप्राणेनंमनसेस्यमानोवाचानानुभवतिंबृहतीमभिसंपादयेंदेषवैकृतस्नआत्मायद्बृहतींसोय
मात्मासर्वतःशरीरैःपरिवृतंस्तद्यथायमात्मासर्वतःशरीरैःपरिवृतंएवमेवबृहतीसर्वतश्छंदोभिःपरिवृतांमध्यंह्येषामंगा
नामात्मांमध्यंच्छंदसांबृहतींसहेश्वरोयशस्वीकल्याणकीर्तिर्भवितोरीश्वरोहतुपुरायुषःप्रैतोरितिहस्माहंकृतस्नोह्येषआ
त्मायद्बृहतींतस्माद्बृहतीमेवाभिसंपादयेत् ॥ १७ ॥ तद्वाइदंबृहतीसहस्रंसंपन्नंतस्यवाएतस्यबृहतीसहस्रस्यसंपन्नस्यैं
कादशानुष्टुभांशतानिभवंतिंपंचविंशतिश्चानुष्टुभंआत्तंवैभूयसाकनीयंस्तदुक्तमृषिणांवाचमष्टापदीमहमित्यष्टौहिचतु
रक्षराणिभवंतिंनवस्रक्तिमितिबृहतीसंपद्यमानांनवस्रक्त्यृतस्पृशमितिंसत्यंवैवागृचास्पृष्टैंद्रात्परितन्वंममइतिंतद्यदे
वैतद्बृहतीसहस्रमनुष्टुप्संपन्नंभवतिंतस्मात्तदैंद्रात्प्राणाद्बृहत्यैवाचमनुष्टुभंतन्वंसंनिर्मिमीतेंसवाएषवाचःपरमोविका
रोंयदेतन्महदुक्थंतदेतत्पंचविधंमितममितंस्वरःसत्यानृतेइत्यृंग्गाथाकुंब्यातन्मितंयजुर्निगदोंवृथावाक्तदमितंसामां
थोयःकश्चगेष्णःसःस्वरंओमितिसत्यंनेत्यनृतंतदेतत्पुष्पंफलंवाचोयत्सत्यंसहेश्वरोयशस्वीकल्याणकीर्तिर्भवितोःपुष्पं
हिफलंवाचःसत्यंवदंत्यथैतन्मूलंवाचोयदनृतंतद्यथावृक्षआविर्मूलःशुष्यतिसउद्वर्ततेएवमेवानृतंवदन्नाविर्मूलमात्मा
नंकरोतिंसशुष्यतिसउद्वर्ततेतस्मादनृतंनवदेद्दयेतत्वेनेनंपरागवाएतद्रिक्तमक्षरंयदेतदो३मितिंतद्यत्किंचोमित्याहांत्रै

वास्मैतद्रिच्यतेंसयत्सर्वमोंकुर्यांद्रिंच्यादात्मानंसकामेभ्योनालंस्यांदथैतत्पूर्णमभ्यात्मंयन्नेतिंसयत्सर्वंनेतिब्रूयात्पापि
कास्यकीर्तिर्जायेतंसैनंतत्रैवहन्यांत्तस्मात्कालएवदद्यात्कालेनदद्यांत्तत्सत्यानृतेमिथुनीकरोतिंतयोर्मिथुनात्प्रजायतें
भूयान्भवर्तियोवैतांवाचंवेदंयस्याएषविकारःससंप्रतिविदंकारोवैसर्वावाक्सैषास्पर्शोष्मभिर्व्यंज्यमानांबह्वीनानारू
पाभर्वातितस्यैयदुपांशुसप्राणोंऽथयदुच्चैस्तच्छरीरंतस्मात्तत्तिरइवतिरइवह्यशरीरंमशरीरोहिप्राणोंऽथयदुच्चैस्तच्छरी
रंतस्मात्तदाविराविर्हिशरीरं ॥ १८ ॥ तद्वाइदंबृहतीसहस्रंसंपन्नंतद्यशःसइंद्रःसभूतानामधिपतिःसयएवमेतामिंद्रं
भूतानामधिपतिंवेदंविस्रसाहैवास्माल्लोकात्प्रैतीतिहस्माहमहिदासऐतरेयःप्रेत्येंद्रोभूत्वैषुलोकेषुराजतिंतदाहुर्यदनेनरू
पेणामुंलोकमभिसंभवतीं३अथकेनरूपेणेमंलोकमाभवतीं३ ॥ तद्यदेतत्स्त्रियांलोहितंभवत्यग्नेस्तद्रूपंतस्मात्तस्मान्नबी
भत्सेतांथयदेतत्पुरुषेरेतोभवत्यांदित्यस्यतद्रूपंतस्मात्तस्मान्नबीभत्सेतंसोयमात्मेममात्मानंममुष्माआत्मनेसंप्रयच्छत्यं
सावात्मामुमात्मानंमिमस्माआत्मनेसंप्रयच्छतिंतावन्योन्यमभिसंभवतोंऽनेनाहरूपेणामुंलोकमभिसंभवत्यमुनोरूपे
णेमंलोकमाभवति ॥१९॥ तत्रैतेश्लोकाः३ ॥ यदक्षरंपंचविधंसमेतिंयुजोयुक्ताअभियत्संवहंति ॥ सत्यस्यसत्यमनुय
त्रयुज्यतेंतत्रदेवाःसर्वएकंभवंति ॥ यदक्षरादक्षरमेतियुक्तंयुजोयुक्ताअभियत्संवहंति ॥ सत्यस्यसत्यमनुयत्रयुज्यतें
तत्रदेवाःसर्वएकंभवंति ॥ यद्वाचओमितियच्चनेतियच्चास्याःक्रूरंयदुपल्बिष्णु ॥ तद्वियूयाकवयोअन्वविंदन्नामा

यस्तासमतृप्यञ्छृतेधि ॥ यस्मिन्नामासमतृप्यञ्छृतेधितत्रदेवाःसर्वयुजोभवंति ॥ तेनपाप्मानमपहत्यब्रह्मणास्वर्गं लोकमप्येतिविद्वान् ॥ नैनंवाचास्त्रियंब्रुवन्नैनमस्त्रीपुमान्ब्रुवन् ॥ पुमांसंनब्रुवन्नेनंवदन्वदतिकश्चन ॥ अःइतिब्रह्म तत्रागतमहमितिंतद्वाइदंबृहतीसहस्रंसंपन्नंतस्यवाएतस्यबृहतीसहस्रस्यसंपन्नस्यंषट्त्रिंशतमक्षराणांसहस्राणिभवंतिं तावंतिपुरुषायुषोह्नांसहस्राणिभवंतिंजीवाक्षरेणैवजीवाहराप्नोतिंजीवाह्नाजीवाक्षरमित्यनकाममारोऽथदेवरथस्तस्य वागुद्धिःश्रोत्रेपक्षसीचक्षुषीयुक्तेमनःसंग्रहीतातदयंप्राणोधितिष्ठतिंतदुक्तमृषिणाऽऽतेनयातंमनसोजवीयसानिमिष श्चिज्जवीयसेतिजवीयसेति ॥२०॥ इत्यैतरेयद्वितीयारण्यकेतृतीयोध्यायः ॥ ३ ॥ ॥ आत्मावाइदमेकएवाग्रआसी न्नान्यत्किंचनमिषंत्सईक्षतलोकान्नुसृजाइतिंसइमाँल्लोकानसृजतांभोमरीचीर्मरमापोदोंभःपरेणदिवंद्यौःप्रतिष्ठांतरिक्षं मरीचयःपृथिवीमरोयाअधस्तात्ताआपःसईक्षतेमे'नु'लोकालोकपालान्नुसृजाइतिंसोद्भ्यएवपुरुषंसमुद्धृत्यामूर्च्छयत्तम भ्यतपत्तस्याभितप्तस्यमुखंनिरभिद्यतंयथांडंमुखाद्वाग्वाचोग्निर्नासिकेनिरभिद्येतांनासिकाभ्यांप्राणःप्राणाद्वायुरक्षि णीनिरभिद्येतामक्षीभ्यांचक्षुश्चक्षुषआदित्यःकर्णौनिरभिद्येतांकर्णाभ्यांश्रोत्रंश्रोत्राद्दिशस्त्वङ्निरभिद्यतत्वचोलोमा निलोमभ्यओषधिवनस्पतयोहृदयंनिरभिद्यतंहृदयान्मनोमनसश्चंद्रमानाभिर्निरभिद्यतंनाभ्याअपानोऽपानान्मृत्युः



१ मेलोकाइतिभाष्यपाठः ।

शिश्नंनिरभिद्यतशिश्नाद्रेतोरेतसआपः ॥ २१ ॥ ताएतादेवताःसृष्टाअस्मिन्महत्यर्णवेप्रापतंस्तमशनापिपासाभ्याम
न्ववार्जत्ताएनमब्रुवन्नायतनंनःप्रजानीहियस्मिन्प्रतिष्ठिताअन्नमदामेतिताभ्योगामानयत्ताअब्रुवन्नवैनोयमलमिति
ताभ्योश्वमानयत्ताअब्रुवन्नवैनोयमलमितिताभ्यःपुरुषमानयत्ताअब्रुवन्त्सुकृतंवतेतिपुरुषोवावसुकृतंताअब्रवीद्यथा
यतनंप्रविशतेत्यग्निर्वाग्भूत्वामुखंप्राविशद्वायुःप्राणोभूत्वानासिकेप्राविशदादित्यश्चक्षुर्भूत्वाक्षिणीप्राविशद्दिशःश्रो
त्रंभूत्वाकर्णौप्राविशन्नोषधिवनस्पतयोलोमानिभूत्वात्वचंप्राविशंश्चंद्रमामनोभूत्वाहृदयंप्राविशन्मृत्युरपानोभूत्वा
नाभिंप्राविशदापोरेतोभूत्वाशिश्नंप्राविशंस्तमशनापिपासेअब्रूतामावाभ्यामभिप्रजानीहीतितेअब्रवीदेतास्वेववांदेव
तास्वाभजाम्येतासुभागिन्यौकरोमीतितस्माद्यस्यैकस्यैचदेवतायैहविर्गृह्यतेभागिन्यावेवास्यामशनापिपासेभवतः
॥ २२ ॥ सईक्षतेमेनुलोकाश्चलोकपालाश्चान्नमेभ्यःसृजाइतिसोपोभ्यतपत्ताभ्योभितप्ताभ्योमूर्तिरजायतयावैसामू
र्तिरजायतान्नंवैतत्तदेनत्सृष्टंपाराङत्यजिघांसत्तद्वाचाजिघृक्षत्तन्नाशक्नोद्वाचाग्रहीतुंसयद्धैनद्वाचाग्रहैष्यंदभिव्याहृत्य
हैवान्नमत्रप्स्यंत्तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेनग्रहीतुंसयद्धैनत्प्राणेनाग्रहैष्यंदभिप्राण्यहैवान्नमत्रप्स्यंत्तच्चक्षुषाजि
घृक्षत्तन्नाशक्नोच्चक्षुषाग्रहीतुंसयद्धैनच्चक्षुषाग्रहैष्यंदृष्ट्वाहैवान्नमत्रप्स्यंत्तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेणग्रहीतुंसय
द्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वाहैवान्नमत्रप्स्यंत्तत्त्वचाजिघृक्षत्तन्नाशक्नोत्त्वचाग्रहीतुंसयद्धैनत्त्वचाग्रहैष्यंत्स्पृष्ट्वाहैवान्नमत्र

ष्स्यंत्तन्मनसाजिघृक्षंत्तन्नाशक्नोन्मनसाग्रहीतुंसयद्धैनन्मनसाग्रहैष्यंद्ध्यात्वाहैवान्नमत्रप्स्यंत्तच्छिश्नेनाजिघृक्षंत्तन्ना
शक्नोच्छिश्नेनग्रहीतुंसयद्धैनच्छिश्नेनाग्रहैष्यंद्विसृज्यहैवान्नमत्रप्स्यंत्तदपानेनाजिघृक्षंत्तदावयत्सैषोन्नस्यग्रहोयद्वायुर
न्नायुर्वाएषयद्वायुंःसईक्षतकथंन्विदंमदृतेस्यादितिंसईक्षतकतरेणप्रपद्याइतिंसईक्षतयदिवाचाभिव्याहृतंयदिप्राणेना
भिप्राणितंयदिचक्षुषादृष्टंयदिश्रोत्रेणश्रुतंयदित्वचास्पृष्टंयदिमनसाध्यातंयद्यपानेनाभ्यपानितंयदिशिश्नेनविसृष्टंम
थकोहमितिंसएतमेवसीमानंविदार्यैतयाद्वाराप्रापद्यतंसैषाविदृतिर्नामद्वांस्तदेतन्नान्दनंतस्यत्रयआवसथास्त्रयःस्वप्नां
अयमावसथोयमावसथोयमावसथइतिंसजातोभूतान्यभिव्यैख्यंत्किमिहान्यंवावदिषदितिंसएतमेवपुरुषंब्रह्मंततम
मपश्यदिदमदर्शमितीँ३ ॥ तस्मादिदंद्रोनामेदंद्रोहवैनामंतमिदंद्रंसंतमिंद्रइत्याचक्षतेपरोक्षेणंपरोक्षप्रियाइवहिदेवाः
परोक्षप्रियाइवहिदेवाः ॥ २३ ॥ इत्यैतरेयद्वितीयारण्यकेचतुर्थोध्यायः ॥ ४ ॥ ॥ अपक्रामंतुगार्भिण्यः ॥ पुरु
षेहवाअयमादितोगर्भोभवतियदेतद्रेतंस्तदेतत्सर्वेभ्योंगेभ्यस्तेजःसंभूतंमात्मन्येवात्मानंबिभर्तितद्यदास्त्रियांसिंचत्य
थैनज्जनयतिंतदस्यप्रथमंजन्मंतत्स्त्रियाआत्मभूयंगच्छतिंयथास्वमंगंतथांतस्मादेनांनहिनस्तिंसास्यैतमात्मानमत्रगतं
भावयतिंसाभावयित्रीभावयितव्याभवतिंतंस्त्रीगर्भंबिभर्तिंसोग्रएवकुमारंजन्मनोग्रेधिभावयतिंसयत्कुमारंजन्मनो
ग्रेधिभावयंत्यात्मानमेवतद्भावयंत्येषांलोकानांसंतत्याएवंसंतताहीमेलोकांस्तदस्यद्वितीयंजन्मंसोस्यायमात्मांपुण्ये

भ्यः कर्मभ्यः प्रतिधीयतेऽथास्यायमितरआत्माकृतकृत्योवयोगतःप्रैतिसइतःप्रयन्नेवपुनर्जायतेतदस्यतृतीयंजन्मंतदु
क्तमृषिणागर्भेनुसन्नन्वेषामवेदमहंदेवानांजनिमानिविश्वा ॥ शतंमापुरआयसीररक्षन्नधःश्येनोजवसानिरदीयमिति
गर्भएवैतच्छयानोवामदेवएवमुवाचसएवंविद्वानस्माच्छरीरभेदादूर्ध्वउत्क्रम्यामुष्मिन्स्वर्गेलोकेसर्वान्कामानाप्त्वा
मृतःसमभवत्समभवत् ॥ २४ ॥ यथास्थानंतुगर्भिण्यः ॥ इत्यैतरेयद्वितीयारण्यकेपंचमोध्यायः ॥५॥ ॥ कोय
मात्मेतिवयमुपास्महेकतरःसआत्मायेनवापश्यतियेनवाशृणोतियेनवागंधानाजिघ्रतियेनवावाचंव्याकरोतियेनवा
स्वादुचास्वादुचविजानातियदेतद्धृदयंमनश्चैतत्संज्ञानमाज्ञानंविज्ञानंप्रज्ञानंमेधादृष्टिर्धृतिर्मतिर्मनीषाजूतिःस्मृतिः
संकल्पःक्रतुरसुःकामोवशइतिसर्वाण्येवैतानिप्रज्ञानस्यनामधेयानिभवंत्येषब्रह्मैषइंद्रएषप्रजापतिरेतेसर्वेदेवाइमा
निचपंचमहाभूतानिपृथिवीवायुराकाशआपोज्योतींषीत्येतानीमानिचक्षुद्रमिश्राणीवबीजानीतराणिचेतराणिचांड
जानिचजारुजानिचस्वेदजानिचोद्भिजानिचाश्वागावःपुरुषाहस्तिनोयत्किंचेदंप्राणिजंगमंचपतत्रिचयच्चस्थावरंसर्वं
तत्प्रज्ञानेत्रंप्रज्ञानेप्रतिष्ठितंप्रज्ञानेत्रोलोकःप्रज्ञाप्रतिष्ठाप्रज्ञानंब्रह्मसएतेनप्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे
लोकेसर्वान्कामानाप्त्वामृतःसमभवत्समभवत् ॥ २५ ॥ इत्यैतरेयद्वितीयारण्यकेषष्ठोध्यायः ॥ ६ ॥ ॥ वाङ्मेमन

१ इदंवाक्यंनभाष्यसंमतम् ।

सिप्रतिष्ठितांमनोमेवाचिप्रतिष्ठितमाविरावीर्मएधि ॥ वेदस्यमआणीस्थःश्रुतंमेमाप्रहासीरनेनाधीतेनाहोरात्रान्संद
धाम्यृतंवदिष्यामिसत्यंवदिष्यामितन्मामवतुतद्वक्तारमवत्ववतुमामवतुवक्तारमवतुवक्तारं ॥ २६ ॥ इत्यैतरेयद्वि
तीयारण्यकेसप्तमोध्यायः ॥ ७ ॥ ॥ द्वितीयारण्यकंसमाप्तं ॥ ॥ ॥ ॥

हरिः ॐ ॥ अथातःसंहितायाउपनिषत्पृथिवीपूर्वरूपंद्यौरुत्तररूपंवायुःसंहितेतिमांडूकेयआकाशःसंहितेत्यस्य
माक्षव्योवेदयांचक्रेसहाविपरिहृतोमेनेनमेस्यपुत्रेणसमगादितिसमानेनैवैतत्परिहृतोमेनइत्यागस्त्यःसमानंह्येतद्भवति
वायुश्चाकाशश्चेत्यधिदैवतमथाध्यात्मंवाक्पूर्वरूपंमनउत्तररूपंप्राणःसंहितेतिशूरवीरोमांडूकेयोथहास्यपुत्रआहज्येष्ठो
मनःपूर्वरूपंवागुत्तररूपंमनसावाअग्रेसंकल्पयत्यथवाचाव्याहरतितस्मान्मनएवपूर्वरूपंवागुत्तररूपंप्राणस्त्वेवसंहिते
तिसमानमेनयोरत्रपितुश्चपुत्रस्यचसएषोश्वरथःप्रष्टिवाहनोमनोवाक्प्राणसंहतःसयएवमेतांसंहितांवेदसंधीयतेप्रज
यापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेतीतिनुमांडूकेयानां ॥ १ ॥ अथशाकल्यस्यपृथिवीपूर्वरूपंद्यौ
रुत्तररूपंवृष्टिःसंधिःपर्जन्यःसंधातातदुतापियत्रैतद्बलवदनूद्गृह्णन्त्संदधदहोरात्रेवर्षतिद्यावापृथिव्यौसमधातामित्यु
ताप्याहुरितीन्वधिदैवतमथाध्यात्मंपुरुषोहवाअयंसर्वआंदन्द्वैविदलेभवतइत्याहुस्तस्येदमेवपृथिव्यारूपमिदंदिवस्त
त्रायमंतरेणाकाशोयथासौद्यावापृथिव्यावंतरेणाकाशस्तस्मिन्हस्मिन्नाकाशेप्राणआयत्तोयथामुष्मिन्नाकाशेवायुराय

त्तौयथामूनित्रीणिज्योतींष्येवमिमानिपुरुषेत्रीणिज्योतींषियथासौदिव्यादित्यएवमिदंशिरसिचक्षुर्यथासावंतरिक्षे
विद्युदेवमिदमात्मनिहृदयंयथायमग्निःपृथिव्यामेवमिदमुपस्थेरेतएवमुहस्मसर्वलोकमात्मानमनुविधायाहेदमेवपृ
थिव्यारूपमिदंदिवःसयएवमेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेति ॥
॥ २ ॥ अथातोनिर्भुजप्रवादाःपृथिव्यायतनंनिर्भुजंदिव्यायतनंप्रतृण्णमंतरिक्षायतनमुभयमंतरेणाथयद्येनंनिर्भुजं
ब्रुवंतमुपवदेदच्योष्टावराभ्यांस्थानाभ्यामित्येनंब्रूयादथयद्येनंप्रतृण्णंब्रुवंतमुपवदेदच्योष्टाउत्तराभ्यांस्थानाभ्यामित्ये
नंब्रूयाद्यस्त्वेवोभयमंतरेणाहतस्यनास्त्युपवादोयद्धिसंधिंविवर्तयतितन्निर्भुजस्यरूपमथयच्छुद्धेअक्षरेअभिव्याहरति
तत्प्रतृण्णस्याग्रउएवोभयमंतरेणोभयंव्याप्तंभवत्यन्नाद्यकामोनिर्भुजंब्रूयात्स्वर्गकामःप्रतृण्णमुभयकामउभयमंतरेणा
थयद्येनंनिर्भुजंब्रुवंतंपरउपवदेत्पृथिवींदेवतामारःपृथिवीत्वादेवतारिष्यतीत्येनंब्रूयादथयद्येनंप्रतृण्णंब्रुवंतंपरउपवदे
द्दिवंदेवतामारोद्यौस्त्वादेवतारिष्यतीत्येनंब्रूयादथयद्येनमुभयमंतरेणब्रुवंतंपरउपवदेदंतरिक्षंदेवतामारोंतरिक्षंत्वादे
वतारिष्यतीत्येनंब्रूयाद्यथातुकथाचब्रुवन्वाब्रुवंतंवाब्रूयादभ्याशमेवयत्तथास्यान्नत्वेवान्यत्कुशलाद्ब्राह्मणंब्रूयादतिद्यु
म्नएवब्राह्मणंब्रूयान्नातिद्युम्नेचनब्राह्मणंब्रूयान्नमोअस्तुब्राह्मणेभ्यइतिहस्माहशूरवीरोमांडूकेयः ॥ ३ ॥ अथातोनु
व्याहाराःप्राणोवंशइतिविद्यात्सयएनंप्राणवंशमुपवदेच्छक्नुवन्चेन्मन्येतप्राणवंशंसमधाँ ३ ॥ प्राणंमावंशंसंदधतंनश

क्रोषीत्याहंप्राणस्त्वावंशोहास्यतीत्येनंब्रूयादथचेदशक्नुवंतंमन्येतंप्राणंवंशंसमधित्सिषंतंनाशकःसंधातुंप्राणस्त्वावंशो
हास्यतीत्येनंब्रूयाद्यथातुकथाचब्रुवन्वाब्रुवंतंवाब्रूयादभ्याशमेवयत्तथास्यान्नत्वेवान्यत्कुशलाद्ब्राह्मणंब्रूयादतिद्युम्नए
वब्राह्मणंब्रूयान्नातिद्युम्नेचनब्राह्मणंब्रूयान्नमोअस्तुब्राह्मणेभ्यइतिहस्माहशूरवीरोमांडूकेयः ॥ ४ ॥ अथखल्वाहुर्निर्भु
जवक्रां:पूर्वमक्षरंपूर्वरूपमुत्तरमुत्तररूपंयोवकाशःपूर्वरूपोत्तररूपेअंतरेणंसासंहितेतिंसयएवमेतांसंहितांवेदंसंधीयते
प्रजयापशुभिर्यशसाब्रह्मवर्चसेनंस्वर्गेणलोकेनसर्वमायुरेत्यथवयंब्रूमोनिर्भुजवक्राइतिहस्माहह्रस्वोमांडूकेयःपूर्वमेवा
क्षरंपूर्वरूपंमुत्तरमुत्तररूपंयोवकाशःपूर्वरूपोत्तररूपेअंतरेणंयेनसंधिंविवर्तयतिंयेनस्वरास्वरंविजानातिंयेनमात्रामात्रां
विभजतेसासंहितेतिंसयएवमेतांसंहितांवेदंसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनंस्वर्गेणलोकेनसर्वमायुरेत्यथहा
स्यपुत्रआहंमध्यमःप्रातीबोधीपुत्रोक्षरेखल्विमेअविकर्षन्ननेकीकुर्वन्यथावर्णमाहंतद्यासौमात्रांपूर्वरूपोत्तररूपेअंतरेण
संधिविज्ञपनींसामतद्भवतिंसामैवाहंसंहितांमन्यइतिंतदप्येतदृषिणोक्तंबृहस्पतेनपरःसाम्नोविदुरितिंसयएवमेतांसं
हितांवेदंसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनंस्वर्गेणलोकेनसर्वमायुरेति ॥ ५ ॥ बृहद्रथंतरयोरूपेणसंहितासं
धीयतइतिताक्ष्योंवाग्वैरथंतरस्यरूपंप्राणोबृहतंउभाभ्यामुखलुसंहितासंधीयतेंवाचाचप्राणेनचैतस्यांहस्मोपनिषदिंसं
वत्सरंगारक्षयतेताक्ष्यंएतस्यांहस्ममात्रायांसंवत्सरंगारक्षयतेताक्ष्यंस्तदप्येतदृषिणोक्तंरथंतरमाजभारावसिष्ठः ॥ भ

रद्धाजोबृहदाचक्रेअग्नेरितिंसयएवमेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेति
वाक्प्राणेनसंहितेतिकौंठरव्यःप्राणःपवमानेनपवमानोविश्वैर्देवैर्विश्वेदेवाःस्वर्गेणलोकेनस्वर्गोलोकोब्रह्मणासैषाऽवरप
रासंहितासयोहैतामवरपरांसंहितांवेदैवंहैवसप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसंधीयतेयथैषासंहितास
यदिपरेणवोपसृतःस्वेनवार्थेनाभिव्याहरेदभिव्याहार्षन्नेवविद्यांदिवंसंहितागमद्विदुषांदेवानामेवंभविष्यतीतिशश्व
त्तथास्यात्सयएवमेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेतिवाक्संहितेतिपं
चालचंडोवाचावैवेदाःसंधीयंतेवाचाछंदांसिवाचामित्राणिसंदधतिवाचासर्वाणिभूतान्यथोवागेवेदंसर्वमितितद्यत्रै
तदधीतेवाभाषतेवावाचितदाप्राणोभवतिवाक्तदाप्राणंरेढ्ढ्ययथयत्रतूष्णींवाभवतिस्वपितिवाप्राणेतदावाग्भवतिप्रा
णस्तदावाचंरेढ्ढितावन्योन्यंरीढौवाग्वैमाताप्राणःपुत्रस्तदप्येतदृषिणोक्तमेकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुव
नंविचष्टे ॥ तंपाकेनमनसापश्यमंतितस्तंमातारेढ्ढिसउरेढ्ढिमातरमितिसयएवमेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्य
शसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेत्यथातःप्रजापतिसंहिताजायापूर्वरूपंपतिरुत्तररूपंपुत्रःसंधिःप्रजननंसंधानं
सैषादितिःसंहितादितिर्हीदंसर्वंयदिदंकिंचपिताचमाताचपुत्रश्चप्रजननंचतदप्येतदृषिणोक्तमदितिर्मातासपितासपु
त्रइतिसयएवमेतांसंहितांवेदसंधीयतेप्रजयापशुभिर्यशसाब्रह्मवर्चसेनस्वर्गेणलोकेनसर्वमायुरेतिसर्वमायुरेति ॥ ६ ॥

इत्यैतरेयतृतीयारण्यकेप्रथमोध्यायः ॥ १ ॥ ॥ प्राणोवंशइतिस्थविरःशाकल्यस्तद्यथाशालावंशेसर्वेन्येवंशाःसमा
हिताःस्युरेवमस्मिन्प्राणेचक्षुःश्रोत्रंमनोवागिंद्रियाणिशरीरंसर्वआत्मासमाहितंस्तस्यैतस्यात्मनःप्राणऊष्मरूपमस्थीनि
स्पर्शरूपंमज्जानःस्वररूपंमांसंलोहितमित्येतदन्यच्चतुर्थंमंतस्यारूपमितिहस्माहह्रस्वोमांडूकेयस्त्रयंत्वेवनएतत्प्रोक्तंत
स्यैतस्यत्रयस्यास्थ्नांमज्ज्ञांपर्वणामितित्रीणीतःषष्टिशतानित्रीणीतस्तानिसप्तविंशतिशतानिभवंतिसप्तचवैशतानित्रिं
शतिश्चसंवत्सरस्याहोरात्राःसएषोहःसंमानश्चक्षुर्मयःश्रोत्रमयश्छंदोमयोमनोमयोवाङ्मयआत्मासयएवमेतमहःसंमा
नंचक्षुर्मयंश्रोत्रमयंछंदोमयंमनोमयंवाङ्मयमात्मानंवेदाह्नांसायुज्यंसरूपतांसलोकतामश्नुतेपुत्रीपशुमान्भवतिसर्वमा
युरेति ॥ ७ ॥ अथकौंठरव्यस्त्रीणिषष्टिशतान्यक्षराणांत्रीणिषष्टिशतान्यूष्मणांत्रीणिषष्टिशतानिसंधीनांयान्यक्षरा
ण्यवोचामाहानितानियानूष्मणोवोचामरात्रयस्तायान्त्संधीनवोचामाहोरात्राणांतेसंधयइत्यधिदैवतमथाध्यात्मंया
न्यक्षराण्यधिदैवतमवोचामास्थीनितान्यध्यात्मंयानूष्मणोधिदैवतमवोचाममज्जानस्तेध्यात्मंमेषहवैसंप्रतिप्राणोय
न्मज्जैतद्रेतोनहवाऋतेप्राणाद्रेतःसिच्यतेयद्धाऋतेप्राणाद्रेतःसिच्येतपूयेन्नसंभवेद्यान्त्संधीनधिदैवतमवोचामपर्वाणि
तान्यध्यात्मंतस्यैतस्यत्रयस्यास्थ्नांमज्ज्ञांपर्वणामितिपंचेतश्चत्वारिंशच्छतानिपंचेतस्तदशीतिसहस्रंभवत्यशीतिसहस्रं
वाअर्कलिनोबृहतीरहरभिसंपादयंतिसएषोक्षरसंमानश्चक्षुर्मयःश्रोत्रमयश्छंदोमयोमनोमयोवा ङ्मयआत्मासयएवमे·

तमक्षरसंमानँचक्षुर्मयंश्रोत्रमयँछंदोमयंमनोमयँवाङ्मयमात्मानंवेदाक्षराणांसायुज्यँसरूपतांसलोकतामश्नुतेपुत्रीपशु
मान्भवतिसर्वमायुरेति ॥८॥ चत्वारःपुरुषाइतिबाध्वःशरीरपुरुषश्छंदःपुरुषोवेदपुरुषोमहापुरुषइतिशरीरपुरुषइतिय
मवोचामंसयएवायंदैहिकआत्मातस्ययोयमशरीरःप्रज्ञात्मासरसंश्छंदःपुरुषइतियमवोचामाक्षरसमाम्नायएवंतस्यैत
स्याकारोरसोवेदपुरुषइतियमवोचामंयेनवेदान्वेदंऋग्वेदंयजुर्वेदंसामवेदंतस्यैतस्यब्रह्मारसंस्तस्माद्ब्रह्माणंब्रह्मिष्ठंकुर्वी
तंयोयज्ञस्योल्वणंपश्येन्महापुरुषइतियमवोचामंसंवत्सरएवप्रध्वंसयन्नन्यानिभूतान्यैक्याभावयन्नन्यानितस्यैतस्या
सावादित्योरसःसयश्चायमशरीरःप्रज्ञात्मायश्चासावादित्यएकमेतदितिविद्यात्तस्मात्पुरुषंपुरुषंप्रत्यादित्योभवतितद
प्येतदृषिणोक्तंचित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः॥ आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्मा जगतस्तस्थु
षश्चेत्येतामनुविधंसंहितांसंधीयमानांमन्यइतिहस्माहबाध्वएतंह्येवबह्वृचामहत्युक्थेमीमांसंतएतमग्नावध्वर्यवएतंम
हाव्रतेछंदोगाएतमस्यामेतंदिव्येतंवायावेतमाकाशएतमप्स्वेतमोषधीष्वेतंवनस्पतिष्वेतंचंद्रमस्येतंनक्षत्रेष्वेतंसर्वेषुभू
तेष्वेतमेवब्रह्मेत्याचक्षतेसएषसंवत्सरसंमानश्चक्षुर्मयःश्रोत्रमयश्छंदोमयोमनोमयोवाङ्मयआत्मासयएवमेतंसंवत्सर
संमानँचक्षुर्मयंश्रोत्रमयँछंदोमयंमनोमयँवाङ्मयमात्मानंपरस्मैशंसति ॥९॥ दुग्धदोहाअस्यवेदाभवंतिनतस्यानूक्तेभा
गोस्तिनवेदसुकृतस्यपंथानमितितदप्येतदृषिणोक्तंयस्तित्याजसचिविदंसखायंनतस्यवाच्यपिभागोअस्ति॥ यदींशृणो

त्यलंकंशृणोतिनुहिप्रवेदंसुकृतस्यपंथामितिंनतस्यानूक्तेभागोस्तिनवेदसुकृतस्यपंथानमिंत्येतत्तदुक्तंभवतिंतस्मादेवंवि
द्वांन्नपरस्माअग्निंचिनुयांन्नपरस्मैमहाव्रतेनस्तुवीतंनपरस्माएतदहःशंसैत्कामंपित्रेवाचार्यायवाशंसेंदात्मनएवास्यत
त्कृतंभवतिंसयश्चायमशरीरःप्रज्ञात्मांयश्चासावादित्यंएकमेतदित्यवोचामंतौयत्रविहीयेतेंचंद्रमाइवादित्योदृश्यतेंनर
श्मयःप्रादुर्भवंतिंलोहिनीद्यौर्भवतिंयथामंजिष्ठाव्यस्तःपायुःकाककुलायगंधिकंमस्यशिरोवायतिंसंपरेतोस्यात्मांनचिर
मिवजीविष्यतीतिविद्यांत्सयत्करणीयंमन्येततत्कुर्वीतंयदंतियच्चदूरकइतिसप्तजपेंदादित्प्रत्नस्यरेतसइत्येकांयत्रब्रह्मा
पवमानेतिषळुद्वयंतमसस्परीत्येकांथापियत्रच्छिद्रइवादित्योदृश्यतेंरथनाभिरिवाभिख्यायेतंच्छिद्रांवाछायांपश्येत्तद
प्येवमेवविद्यांदथाप्यादर्शेवोदकेवांजिह्मशिरसंवाशिरसंवात्मानंपश्येंद्विपर्यस्तेवाकन्याकेजिह्मंनवादृश्येयातांतदप्ये
वमेवविद्यांदथा[1]‘प्य’पिधायाक्षिणीउपेक्षेततद्यथावटरकाणिसंपतंतीवदृश्यंतेंतानियदानपश्येत्तदप्येवमेवविद्यांदथा
प्यपिधायकर्णाउपशृणुयात्सएषोग्नेरिवप्रज्वलतोरथस्येवोपब्दिस्तंयदानशृणुयात्तदप्येवमेवविद्यांदथापियत्रनीलइ
वाग्निर्दृश्यतेंयथामयूरग्रीवामेघेवाविद्युतंपश्येन्मेघेवाविद्युतंनपश्येन्महामेघेवामरीचीरिवपश्येततदप्येवमेवविद्यांद
थापियत्रभूमिंज्वलंतीमिवपश्येततदप्येवमेवविद्यादितिप्रत्यक्षदर्शनान्यथस्वप्नाःपुरुषंकृष्णंकृष्णदंतंपश्यतिंसएनंहं



१ दथापिधायेतिभाष्यपाठः ।

तिवराहएनंहंतिमर्कटएनमास्कंदयंत्याशुवायुरेनंप्रवहतिसुवर्णखादित्वापगिरतिमध्वश्नातिबिसानिभक्षयंत्येकपुंडरी
कंधारयतिखरैर्वराहैर्युक्तैर्यातिकृष्णांधेनुंकृष्णवत्सांनलदमालीदक्षिणामुखोव्राजयतिसयद्येतेषांकिंचित्पश्येदुपोष्य
पायसंस्थालीपाकंश्रपयित्वारात्रीसूक्तेनप्रत्यृचंहुत्वान्येनान्नेनब्राह्मणान्भोजयित्वाचरुंस्वयंप्राश्नीयात्सयोतोश्रुतोगतो
मतोनतोदृष्टोविज्ञातोनादिष्टःश्रोतामंताद्रष्टादेष्टाघोष्टाविज्ञाताप्रज्ञातासर्वेषांभूतानामंतरपुरुषःसमआत्मेतिविद्यात्
॥१०॥ अथखल्वियंसर्वस्यैवाचउपनिषत्सर्वाह्येवेमाःसर्वस्यैवाचउपनिषदइमांत्वेवाचक्षतेपृथिव्यारूपंस्पर्शाअंतरिक्ष
स्योष्माणोदिवःस्वराअग्नेरूपंस्पर्शावायोरूष्माणआदित्यस्यस्वराऋग्वेदस्यरूपंस्पर्शायजुर्वेदस्योष्माणःसामवेदस्यस्व
राश्चक्षुषोरूपंस्पर्शाःश्रोत्रस्योष्माणोमनसःस्वराःप्राणस्यरूपंस्पर्शाअपानस्योष्माणोव्यानस्यस्वराअथखल्वियंदैवीवी
णाभवतितदनुकृतिरसौमानुषीवीणाभवतियथास्याःशिरएवममुष्याःशिरोयथास्याउदरमेवममुष्याअंभणंयथास्यैजि
ह्वैवममुष्यैवादनंयथास्यास्तंत्रयएवममुष्याअंगुलयोयथास्याःस्वराएवममुष्याःस्वरायथास्याःस्पर्शाएवममुष्याःस्प
र्शायथाह्येवेयंशब्दवतीतर्द्मवत्येवमसौशब्दवतीतर्द्मवतीयथाह्येवेयंलोमशेनचर्मणापिहिताभवत्येवमसौलोमशेनचर्म
णापिहितालोमशेनहस्मवैचर्मणापुरावीणाअपिदधतिसयोहैतांदैवींवीणांवेदश्रुतवदनोभवतिभूमिप्रास्यकीर्तिर्भवति
यत्रक्वचार्यावाचोभाषंतेविदुरेनंतत्राथातोवाग्रसोयस्यांसंसद्यधीयानोवाभाषमाणोवानविरुरुचुषेतंतत्रैतामृचंजपेदो

ष्ठापिधानानकुलीदंतैःपरिवृतापविः ॥ सर्वस्यैवाचईशानाचारुमामिहवादयेदितिवाग्रसः ॥११॥ अथहास्माएतत्कृष्णहारितोवाग्ब्राह्मणमिवोपोदाहरतिप्रजापतिःप्रजाःसृष्ट्वाव्यस्रंसतसंवत्सरःसच्छंदोभिरात्मानंसमदधाद्यच्छंदोभिरात्मानंसमदधात्तस्मात्संहितांतस्यैवाएतस्यैसंहितायैणकारोबलंषकारःप्राणआत्मासयोर्हैतौणकारषकारावनुसंहितमृचोवेदसबलांसप्राणांसंहितांवेदायुष्यमितिविद्यात्सयदिविचिकित्सेत्सणकारंब्रवाणी३ँ ॥ अणकारा३ँ ॥ इति ॥ सणकारमेवब्रूयात्सषकारंब्रवाणी३ँ ॥ अषकारा३ँ इति ॥ सषकारमेवब्रूयात्तेयद्वयमनुसंहितमृचोधीमहेयच्चमांडूकेयीयमध्यायंप्रब्रूमस्तेननोणकारषकारौउपाप्ता[1]वितिहस्माहह्रस्वोमांडूकेयोथयद्वयमनुसंहितमृचोधीमहेयच्चमांडूकेयीयमध्यायंप्रब्रूमस्तेननोणकारषकारौउपाप्तावितिहस्माहस्थविरःशाकल्यएतद्धस्मवैतद्विद्वांसआहुर्ऋषयःकावषेयाःकिमर्थावयमध्येष्यामहेकिमर्थावयंयक्ष्यामहेवाचिहिप्राणंजुहुमःप्राणेवावाचंयोह्येवप्रभवःसएवाप्ययस्ताएताःसंहितानानंतेवासिनेप्रब्रूयान्नासंवत्सरवासिनेनाप्रवक्त्रइत्याचार्याआचार्याः ॥१२॥ इत्यैतरेयतृतीयारण्यकेद्वितीयोऽध्यायः ॥ ॥ २ ॥ ॥ इतितृतीयारण्यकंसमाप्तं ॥ ॥ ॥

ॐ३म् ॥ विदामघवन्विदागातुमनुशंसिषोदिशः ॥ शिक्षाशचीनांपतेपूर्वीणांपुरूवसो ॥ आभिष्ट्वमभिष्टिभिःप्रचेत



---

१ कारावुपाप्तावितिभाष्यपाठः ।

नप्रचेतय ॥ इंद्रद्युम्नायनइषएवाहिशक्रः ॥ रायेवाजायवज्रिर्वःशविष्ठवज्रिन्नृंजसे ॥ मंहिष्ठवज्रिन्नृंजसंआयाहिपिबमत्स्व ॥ विदारायःसुवीर्यंभुवोवाजानांपतिर्वशाँऽअनु ॥ मंहिष्ठवज्रिन्नृंजसैयःशविष्ठःशूराणां ॥ योमंहिष्ठोमघोनांचिकित्वोअभिनोनय ॥ इंद्रोविदेतमुस्तुषेवशीहिशक्रः ॥ तमूतयेहवामहेंजेतारमपराजितं ॥ सनःपर्षदतिद्विषंःक्रतुश्छंदऋतंबृहत् ॥ इंद्रंधनस्यसातयेहवामहेंजेतारमपराजितं ॥ सन्नःपर्षदतिद्विषंःसनःपर्षदतिस्रिधः ॥ पूर्वस्ययत्तेअद्रिवंःसुम्नआधेहिनोवसो ॥ पूर्तिःशविष्ठशस्यतईशेहिशक्रः ॥ नूनंतंनव्यंसन्यसैप्रभोजनस्यवृत्रहन् ॥ समन्येषुब्रवावहैंशूरोयोगोषुगच्छतिंसखासुशेवोअद्वयाः ॥ एवाह्येवैवाह्यग्ना३इ ॥ एवाह्येवैवाहीं३द्रं ॥ एवाह्येवैवाहिविष्णा३उ ॥ एवाह्येवैवाहिपूष३न् ॥ एवाह्येवैवाहिदेवा३ः ॥ एवाहिशक्रोवशीहिशक्रोवशाँऽअनु ॥ आयोमन्यायमन्यवंउपोमन्यायमन्यवे ॥ उपेहिविश्वध ॥ विदामघवन्विदो३म् ॥ १ ॥ इत्यैतरेयचतुर्थारण्यकेप्रथमोऽध्यायः ॥ १ ॥

॥ इत्यैतरेयकेचतुर्थारण्यकंसमाप्तं ॥ ॥ ॥

ॐ३म् ॥ महाव्रतस्यपंचविंशतिंसामिधेन्यंएकविंशतौप्रागुपोत्तमायाःसमिधाग्निमितिचतस्रोवैश्वकर्मणऋषभंउपालंभनीयउपांश्वाज्यप्रउगेंविश्वजितोहोत्राश्चतुर्विंशादींखयंतीरपस्युवइतिचंब्राह्मणाच्छंस्यावपेतप्रातःसवनेंतीव्रस्याभिवयसोअस्यपाहीतिमाध्यंदिनेंत्रिकद्रुकेषुमहिषोयवाशिरमितिस्तोत्रियंपंद्रयाहुमनःपरावर्तंइंद्रायहिद्यौरसुरोअनम्नत ॥

प्रोष्वस्मैपुरोरथमित्यतोनुरूपश्चतुर्विंशान्मरुत्वतीयस्यातानौऽसत्सुमेजरितःसाभिवेगःपिबासोममभियमुग्रतर्दःकया शुभासवयसःसनीळामरुत्वाँइंद्रवृषभोरणाय॥ जनिष्ठाउग्रःसहसेतुरायेतिंमरुत्वतीयंसंस्थितेंमरुत्वतीयेहोताविसंस्थितःसंचरेणनिष्क्रम्याग्नीध्रीयेंतिस्रआज्याहुतीर्जुहोत्यौदुंबरेणस्रुवेणानुमामिंद्रोअनुमांबृहस्पतिरनुसोमोअनुवाग्देव्यावीत् ॥ अनुमांमित्रावरुणाविहावतामनुद्यावापृथिवीपूर्वहूतौ ॥ आदित्यामाविश्वेअवंतुदेवाःसप्तराजानोयऽउदाभिषिक्ताः॥ वायुःपूषावरुणःसोमोअग्निःसूर्योनक्षत्रैरवत्विहमानु ॥ पितरोमाविश्वमिदंचभूतंपृश्निमातरोमरुतःस्वर्काः॥ येअग्निजिह्वाउतवायजत्रास्तेनोदेवाःसुहवाःशर्मयच्छतेतिंदक्षिणेमार्जालीयेदर्शस्रुच्युत्तमांचतुर्गृहीतंपूर्वमवदायोत्तरतोग्नेरुपनिधायविहरणप्रभृतिमध्यंदिनेमार्जालीयोजागरितोभवतितस्मिन्परिवृतेजुहोतिंप्राग्द्वारेवोदग्द्वारेवाप्रागुदग्द्वारेवाग्निरिवानाधृष्यःपृथिवीवसुषदाभूयासमंतरिक्षमिवानाप्यंद्यौरिवानाधृष्योभूयासंसूर्यइवाप्रतिधृष्यश्चंद्रमाइवपुनर्भूर्भूयासंमनइवापूर्ववायुरिवश्लोकभूर्भूयासमहरिवस्वंरात्रिरिवप्रियोभूयासंगावइवपुनर्भुवोमिथुनमिवमरीचयोभूयासमापइवरसओषधयइवरूपंभूयासमन्नमिवविभुयज्ञइवप्रभूर्भूयासंब्रह्मेवलोकेक्षत्रमिवश्रियांभूयासंयदग्नएषासमितिर्भवातीत्यत्रविभजाथवीथेतित्रीण्यनन्वृचमंत्रतिष्ठन्नादित्यमुपतिष्ठतेंपर्यावृत्तेप्रदक्षिणमावृत्यैतैश्चैवास्वाहाकारैरेह्येवा३ इदंमधू३ इदंमधु ॥ इमंतीव्रसुतंपिबा३ ॥ इदंमधू३ इदंमध्वितिचप्रेष्याःसंशास्तिपूर्णकुंभास्तिस्रोव

माःषळुत्तमांइमंधिष्ण्यमुदकुंभंचत्रिःप्रदक्षिणंपरिव्रजाथदक्षिणैःपाणिभिर्दक्षिणानूरूनाघ्नानाएह्येवा३इदंमधू३इदंम
ध्वितिवदत्यः ॥ १ ॥ उपाकृतेस्तोत्रेत्रैधंनिनयाथात्रोत्तरेचमार्जालीयेशेषमंतर्वे'दीति'प्रदक्षिणमग्निंनिष्क्रम्याग्रेणयू
पंपुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नग्नेःशिरउपतिष्ठतेनमस्तेगायत्राययत्तेशिरइतितेनैवयथेतंप्रत्येत्यदक्षिणमुदङ्मुखःपक्षंनमस्ते
राथंतरायंयस्तेदक्षिणःपक्षइत्यपरेणाग्निपुच्छमतिक्रम्यप्राङ्मुखउत्तरंनमस्तेबृहतेयस्तउत्तरःपक्षइतिपश्चात्प्राङ्पुच्छंनम
स्तेभद्रायंयत्तेपुच्छंयातेप्रतिष्ठेतिदक्षिणतःपुच्छस्यात्मानंनमस्तेराजनाययस्तआत्मेति ॥ २ ॥ यथेतंसदःप्रसर्पतिपुर
स्तात्प्रेंखउपक्लृप्तोभवतिस्थूणेरज्जूवीवधइत्येतत्प्रक्षाल्यतीर्थेनप्रपाद्योत्तरेणाग्नीध्रीयंपरिव्रज्यपूर्वयाद्वारासदःसर्वान्धि
ष्ण्यानुत्तरेणौदुंबराणिकाष्ठानिप्रेंखस्यभवंतिपालाशानिमिश्राणिवात्रीणिफलकान्युभयतस्तष्टानिद्वेवासूच्यश्चताव
त्यइषुमात्रःप्राङ्प्रेङ्खोनिमुष्टिकंस्तिर्यङुदगग्रःप्रागग्राभ्यांसूचीभ्यांसमुतौदक्षिणोत्तरेस्थूणेनिखायाभितोहोतृषदनं
वीवधमत्यादधात्यास्यसंमितंकर्तुंःकुष्ठासुच्छिद्राणिप्रेंखस्यभवंतिरज्जूभ्यामूर्ध्वमुद्वयतिदक्षिणतोदक्षिणयोत्तरतःसव्य
यादाभ्र्यैत्रिगुणेस्यातांसव्यदक्षिणेपंचव्यायामेद्विगुणेवीवधेत्रिःप्रदक्षिणंपर्यस्योर्ध्वग्रंथिंनिष्टर्क्यबध्नातिशाखाभिर्बृसी
भिर्वापर्यृषंत्यप्रकंपिचतुरंगुलेनैषविभूमःप्रेंखःस्यान्मुष्टिमात्रेणवादक्षिणतउदाहिततरःसमोवापदमात्रेधिष्ण्यात्॥३॥

१ वेदिप्रदक्षिणमितिभाष्येपाठः ।

निष्ठितेप्रेंखेहोतावाणमौदुंबरंशततंतुंमुभाभ्यांपरिगृह्योत्तरतउपोहतेयथावीणांसप्तभिश्छंदोभिश्चतुरुत्तरैः स्थानान्य
स्योर्ध्वमुदृह्णीयादशभिर्वांगायत्रेणत्वाछंदसोदूहाम्यौष्णिहेनत्वानुष्टुभेनत्वाबार्हतेनत्वापांक्तेनत्वात्रैष्टुभेनत्वाजागते
नत्वावैराजेनत्वाद्वैपदेनत्वातिच्छंदसात्वेतिछंदांस्यनुक्रम्यैस्थानानामनुपरिक्रमणमौदुंबर्याद्रयाशाखयासपलाशया
मूलदेशेनवाणंत्रिरूर्ध्वमुल्लिखतिप्राणायत्वापानायत्वाव्यानायत्वोल्लिखामीत्यन्येभ्योपिकामेभ्यः पुनरपिनतूल्लिखामी
तिब्रूयादथैनंसशाखंछंदोगेभ्यः प्रयच्छतिभूतेभ्यस्त्वेतिपश्चार्धेफलकेपाणीप्रतिष्ठापयतिप्राणमनुप्रेंखस्वेतिप्रांचंप्रेंखंप्र
णयतिव्यानमन्वींखस्वेतितिर्यंचमपानमन्वींखस्वेत्यभ्यात्मंभूर्भुवः स्वरितिजपतिप्राणायत्वेतिप्रांचमेवव्यानायत्वेति
तिर्यंचमपानायत्वेत्यभ्यात्मैवसवस्त्वागायत्रेणछंदसारोहंतुतानन्वारोहामीतिपश्चार्धेफलकेरत्नीप्रतिष्ठापयत्यथपूर्वंफ
लकंनानापाणिभ्यामभिपद्येतयथाहिस्रप्स्यन्मध्यमंछुबुकेनोपस्पृशेद्दुयोर्वासंधिंरुद्रास्त्वात्रैष्टुभेनच्छंदसारोहंतुतान
न्वारोहामीतिदक्षिणंसक्थ्यंतिहरत्यादित्यास्त्वाजागतेनच्छंदसारोहंतुतानन्वारोहामीतिसव्यंविश्वेत्वादेवाआनुष्टुभे
नच्छंदसारोहंतुतानन्वारोहामीतिसमारोहतिपश्चात्स्वस्यधिष्ण्यस्यंदक्षिणंपादंप्रांचंप्रतिष्ठापयत्यथसव्यंयदेतरः श्वा
स्येदथेतरंयदेतरोथेतरंनोभौविभूमौकुर्यात्कूर्चान्होत्रकाः समारोहंतिब्रह्माचौदुंबरीमासंदीमुद्गातायदिकस्मैचिदवश्य
कर्मिणोजिगमिषेदादिश्यपालंप्राङवरुह्यचरित्वातमर्थमेवमेवाऽजपयावृतारोहेत् ॥ ४ ॥ प्रस्तोतारंसंशास्तिपंचविंश

स्यस्तोमस्यंतिसृष्वर्धंतृतीयास्वंर्धंत्रयोदशासुवापरिशिष्टासुंप्रथमंप्रतिहारंप्रब्रूतादित्यर्धंत्रयोदशासुप्रवाचयतेतिंजातू
कर्ण्यःप्रोक्तेजपतिंसुपर्णोसिगरुत्मांन्प्रेमांवाचंवदिष्यामिंवहुवदिष्यंतींबहुपतिष्यंतींबहुकरिष्यंतींवहुसनिष्यंतींब्रहो
भूयःकरिष्यंतींस्वर्गच्छंतींस्वर्वदिष्यंतींस्वःपतिष्यंतींस्वःकरिष्यंतींस्वःसनिष्यंतींस्वरिमंयज्ञंवक्ष्यंतींस्वर्मांयजमानंव
क्ष्यंतीमितिंदीक्षितेयजमानशब्दोनादीक्षितेंस्वरमुमितिंयोस्यप्रियःस्यान्नतुवक्ष्यंतीमितिब्रूयांदुक्थवीर्याणिचंसंप्राणो
वाचासमहंवाचांसंचक्षुर्मनसासमहंमनसांसंश्रोत्रमात्मनासमहमात्मनांमयिमहान्मयिभर्गोंमयिभगोमयिभुजोंमयि
स्तोभोमयिस्तोमोंमयिश्लोकोमयिघोषोंमयियशोमयिश्रींर्मयिकीर्तिर्मयिभुक्तिरिंत्याहूयवागितिजपतिंत्रयआहावाःश
स्त्रादेंनिंविदःपरिधानीयायाइतिंशब्दानध्वर्यवःकारयंत्येतस्मिन्नहनिप्रभूतमन्नंदद्यांद्राजपुत्रेणचर्मव्याधयंत्यांघ्नंतिभू
मिदुंदुभिंपत्यश्चकांडवीणांभूतानांचमैथुनंब्रह्मचारिपुंश्चल्योःसंप्रवादोंऽनेकेनसाम्नानिष्केवल्यायस्तुवतेराजनस्तो
त्रियेणप्रतिपद्यते ॥ ५ ॥ तदिदासभुवनेषुज्येष्ठंतांसुतेकीर्तिंमघवन्महित्वांभूयइद्वावृधेवीर्यायंनृणामुत्वानृतमंगी
भिंरुक्थैरितितिस्रोंत्रहैकेस्वादोःस्वादीयःस्वादुनासृजासंमदःसुमधुमधुनाभियोधीरिंत्यात्मनएतेपदेउद्धृत्यंपक्षपदेप्र
त्यवदधांत्यश्वायंतोमघवन्निंद्रवाजिनोंगामश्वंरथ्यमिंद्रसंकिरैंत्येतयोश्चस्थानइतरैंश्रियमहगोरश्वमात्मन्धत्तेंसंपक्षयोः
पतनायंनदंवओदतीनामित्येतयैतानिव्यतिषजांतिंपादैःपादान्बृहतीकारंनदवंत्युत्तराणिंप्रथमायांचपुरुषाक्षराण्यु

पदधार्तिपादेष्वेकैकमवसानेतृतीयवर्जंसखलुविहरत्यपिनिदर्शनायोदाहरिष्यामः ॥ तदिदासभुवनेषुज्येष्ठंपु ॥ नदं वओदतीनां ॥ यतोजज्ञउग्रस्त्वेषनृम्णोरु ॥ नदंयोयुवतीनॉ३॥ सद्योजज्ञानोनिरिणातिशत्रूंनपतिंवोअघ्न्यानां ॥ अनुयंविश्वेमदंत्यूमाःशोंधेनूनामिषुध्यसोमित्येवमेतांत्रिरन्यासुचेत्समाम्नातासुराजनेनसाम्नास्तुवीरन्यथास्थानंताइहैवेमाअसमाम्नातासुचेत्स्तुवीरंन्तसमाम्नातस्यतावतीरुद्धृत्यंतत्रताःशंसेदिहोएवेमांअन्यासुचेत्प्राक्सूददोहसस्तांस्तदिदासेत्येतदादिशस्त्रमविहृतश्चात्रप्रतिगरस्ताअस्यसूददोहसंइत्येतदादिःसूददोहाःसूददोहाः ॥ ६ ॥ इत्यैतरेयपंचमारण्यकेप्रथमोध्यायः ॥ १ ॥ ॥ ग्रीवाः२ ॥ यस्येदमारजस्तुजोयुजोवनंसहः ॥ इंद्रस्यरंत्यंबृहत् ॥ नाधृषआदधर्षंदाधृषाणंधृषितंशवः ॥ पुरायदीमतिव्यथिरिंद्रस्यधृषितंसहः ॥ सनोददातुतंरयिंरयिंपिशंगसंदृशं ॥ इंद्रःपतिस्तवस्तमोजनेष्वासूददोहाः ॥ शिरोगायत्रमिंद्रमिद्गाथिनोबृहदित्यन्यासुचेत्समाम्नातासुस्तुवीरन्नुभयासंस्थानविपर्ययोऽसमाम्नातासुचेत्स्तुवीरन्मिश्रासुचसूक्तस्योत्तमांसूददोहाविजवः ॥ सुतस्तेसोमउपयाहियज्ञंमत्स्वामदंपुरुवारंमघाय ॥ मंहिष्ठइंद्रविजुरोगृणध्यै ॥ ससाहतुर्वृत्रहत्येषुशत्रूंनृभुर्विगाहएषः ॥ सनोनेतारंमहयामइंद्रं ॥ इनोवसुःसमजःपर्वतेष्ठांःप्रतिवामृजीषी ॥ इंद्रःशश्वद्भिर्जोहूत्रएवैः ॥ सूददोहाइत्येतत्रयंग्रीवांःशिरोविजवःसर्वमर्धमर्च्यं

१ ष्यामस्तदिदासइतिसंहितापाठोभाष्ये ।

॥ ७ ॥ राथंतरोदक्षिणःपक्षोंऽभित्वाशूरनोनुमोंऽभित्वापूर्वपीतयइतिरथंतरस्यस्तोत्रियानुरूपौप्रगाथौचतस्रःस
तीःषड्बृहतीःकरोतींद्रस्यनुवीर्याणिप्रवोचंत्वेहयत्पितरश्चिन्नइंद्रेतिपंचदशंयस्तिग्मशृंगोवृषभोनभीमंउग्रोजज्ञेवीर्या
यस्वधावानुदुब्रह्माण्यैरतश्रवस्यांतेमहइंद्रोत्युग्रेतिपंचसूक्तान्यानइंद्रोदूरादानआसादितिसंपातंइत्थाहिसोमइन्मद
इतिपंक्तिःसूददोहावार्हतउत्तरंस्त्वामिद्धिहवामहेत्वंह्येहिचेरवइतिबृहतःस्तोत्रियानुरूपौप्रगाथौचतस्रःसतीःषड्बृह
तीःकरोतिंतमुष्टुहियोअभिभूत्योजाःसुतइत्त्वंनिमिश्लइंद्रसोमइतित्रीण्यभूरेकोरयिपतेरयीणामित्यष्टौसूक्तानिकथा
महामवृधत्कस्यहोतुरितिसंपातंइंद्रोमदायवावृधइतिपंक्तिःसूददोहाराथंतरोदक्षिणःपक्षःपंचदशःस्तोमंएकशतंवसि
ष्ठप्रासाहोंवार्हतउत्तरःसप्तदशःस्तोमोंद्विशतंभरद्वाजप्रासाहोंभद्रंपुच्छंद्विपदास्विमानुकंभुवनासीषधामायाहिवनसा
सहेतिंनवसमाम्नाताअथासमाम्नाताःप्रवइंद्रायवृत्रहंतमायविप्रागाथंगायतयज्जुजोषत्॥ अर्चंत्यर्कंदेवतास्वर्कांआस्तो
भतिश्रुतोयुवासइंद्रः ॥ उपप्रक्षेमधुमतिक्षियंतःपुष्यंतोरयिंधीमहेतमिंद्र ॥ विश्वतोदावन्विश्वतोनआभरंयंत्वाश
विष्ठमीमहे ॥ ससुप्रणीतेनृतमःस्वराळसिमंहिष्ठोवाजसातये ॥ त्वंह्येकईशिषेसनादमृक्तओजसा ॥ विश्वस्यप्रस्तोभवि
द्वान्पुरावायदिवेहासनूनं ॥ इषंनोमित्रावरुणाकर्तनेळांपीवरीमिषंकृणुहीनइंद्र ॥ शंपदंमघंरयिषणिनसोमोंअव्रतंहिनो
तिनस्पृशद्रयिः ॥ एषब्रह्मेतितिस्रआधूर्ष्वस्माइत्येकासूददोहायद्यावानेतिधाय्यासूददोहाः ॥८॥ गायत्रीतृचाशीतिंर्मि

हाँइंद्रोयओजसेतिंतिस्रउत्तमाउद्धरतिंपुरोळाशंनोअंधसइतितिस्रइंद्रइत्सोमपाएकइत्येतत्प्रभृतीनांतिस्रउत्तमाउद्ध र
तिंतासांस्वादवःसोमांआयाहीत्येतामुद्धृत्यनह्य१न्यंबळाकरमित्येतांप्रत्यवदधातिंजज्ञानोनुशतक्रतुरित्येकांपुरुहूतं
पुरुष्टुतमितिशेषंउद्धेदभिश्रुतामघमित्युत्तमामुद्धरतिंप्रकृतान्यृजीषिणंआघायेअग्निमिंधतंआतूनइंद्रक्षुमंतमितिसू
क्तेसूददोहाः ॥ ९ ॥ बार्हतीतृचाशीतिर्माचिदन्यद्विशंसतेत्येकयानात्रिंशंत्पिबासुतस्यरसिनइतिविंशतेःसप्तमींचाष्ट
मींचोद्धरतिंयदिंद्रप्रागपागुदगितिचतुर्दशंवयंघत्वासुतावंतइतिपंचदशंमोषुत्वावाघतश्चनेत्येतस्यद्विपदांचोद्धरतिं
राथंतरंचप्रगाथंमथहास्यनकिःसुदासोरथमित्येतंप्रगाथमुद्धृत्यत्वामिदाह्योनरइत्येतंप्रगाथंप्रत्यवदधात्यभिप्रवःसुरा
धसमितिंषड्वालखिल्यानांसूक्तानिंयःसत्राहाविचर्षणिरितिशेषोऽयंतेअस्तुहर्यतइतिसूक्तेंउभयंशृणवच्चनइतिंसप्तमीं
चाष्टमींचोद्धरतिंतरोभिर्वोविदद्वसुमित्युत्तमामुद्धरतिंयोराजाचर्षणीनामित्येकादशंतंवोदस्ममृतीषहंमानोविश्वासु
हव्योयाइंद्रभुजआभरइतिनवसूददोहाः ॥ १० ॥ औष्णिहीतृचाशीतिंर्यइंद्रसोमपातमइतिसूक्तेंतम्वभिप्रगाय ते
त्युत्तमामुद्धरतींद्रायसामगायतंसखायआशिषामहीतितिस्रउत्तमाउद्धरतिंयएकइद्विदयतंआयाह्यद्रिभिःसुतंयस्य
त्यच्छंबरंमदंइतित्रयस्तृचागायत्र्यःसंपदोष्णिहःसप्तसप्तगायत्र्यःषट्षळुष्णिहोभवंतिंयदिंद्राहंयथात्वंप्रसम्राजंचर्ष
णीनामितिसूक्तेउत्तरस्योत्तमेउद्धरतिंवार्त्रहत्यायशवसइत्युत्तमामुद्धरतिंसुरूपकृत्नुमूतयइ तित्रीण्येंद्रसानसिंरयिमि

तिसूक्तंयआनयत्परावतइतितिस्रंउत्तमाउद्धरतिरेवतीर्नःसधमादइतितिस्रःसूददोहाइत्येतास्तिस्रस्तृचाशीतयःसर्वा
अर्धर्च्याअन्नमशीतयउदरंवर्शस्त्वावतःपुरूवसवितिवर्शःसनितःसुसनितरित्येतदंतोददीरेक्णइतिद्विपदानूनमथेत्ये
कपदाताअस्यसूददोहसइत्येतदंतःसूददोहाःसूददोहाः ॥११॥ इत्यैतरेयपंचमारण्यकेद्वितीयोध्यायः॥२॥ ॥ ऊरू॥
इंद्राग्नीयुवंसुनइत्येतस्यार्धर्चान्गायत्रीकारंमुत्तरमुत्तरस्यानुष्टुप्कारंप्रागुत्तमायाःप्रत्रोमहेमंदमानायांधसइतिनिविद्धा
नंवनेनत्रायोन्यधायिचार्कंन्योजातएवप्रथमोमनस्वानितितेअंतरेणायाह्यर्वाङुपवंधुरेष्ठाविधुंदद्राणंसमनेबहूनामिं
त्येतदावपनंदशतीनांमैंद्रीणांत्रिष्टुब्जगतीनांबृहतीसंपन्नानांयावतीरावपेरंस्तावंत्यूर्ध्वमायुषोवर्षाणिजिजीविषेत्संव
त्सरात्संवत्सराद्दशतोनवात्यमूषुवाजिनंदेवजूतमिंद्रोविश्वंविराजतीत्येकपदेंद्रंविश्वाअवीवृधन्नित्यानुष्टुभंतस्यप्रथमा
याःपूर्वमर्धर्चंशस्त्वोत्तरेणार्धर्चेनोत्तरस्याःपूर्वमर्धर्चंव्यतिषजतिपादैःपादाननुष्टुप्कारंप्रागुत्तमायाःपूर्वस्मात्पूर्वस्माद
र्धर्चादुत्तरमुत्तरमर्धर्चंव्यतिषजतिप्रकृत्याशेपंःपिबासोममिंद्रमंदतुत्वेतिषड्योनिष्टइंद्रसदनेअकारीत्येतस्यचतस्रःश
स्त्वोत्तमामुपसंतत्योपोत्तमयापरिदधातिपरिहितउक्थउक्थसंपदंजपत्युक्थवीर्यस्यस्थानउक्थदोहः ॥१२॥ मूर्धालो
कानामसिवाचोरसस्तेजःप्राणस्यायतनंमनसःसंवेशश्चक्षुषःसंभवःश्रोत्रस्यप्रतिष्ठाहृदयस्यसर्वं॥इंद्रःकर्माक्षितममृतंव्यो
म॥ ऋतंसत्यंविजिग्यानंविवाचनमंतोवाचोविभुःसर्वस्मादुत्तरंज्योतिरूधरप्रतिवादःपूर्वसर्ववाक्परागर्वाक्सप्रसलित

धेनुपिन्वति ॥ चक्षुःश्रोत्रंप्राणःसत्यसंमितँवाक्प्रभूतंमनसोविभूतँहृदयोग्रंब्राह्मणभर्तृमंब्रशुभेवर्षपवित्रँगोभगंपृथिव्यु
परँवरुणवं[1]य्वितमँतपस्तन्विंद्रज्येष्ठँसहस्रधारमयुताक्षरममृतंदुहानं ॥ एतास्तउक्थभूतयंएतावाचोविभूतयः ॥ ता
भिर्मइहधुक्ष्वांमृतस्यश्रियंमहीं ॥ प्रजापतिरिदंब्रह्मंवेदानांससृजेरसं ॥ तेनाहंविश्वमाप्यासँसर्वान्कामान्दुहांमहत् ॥
भूर्भुवःस्वस्त्रयोवेदोसि ॥ ब्रह्मप्रजांमेधुक्ष्व ॥ आयुःप्राणंमेधुक्ष्व ॥ पशून्विशंमेधुक्ष्व ॥ श्रियंयशोमेधुक्ष्व ॥ लोकंब्र
ह्मवर्चसमभयँयज्ञसमृद्धिंमेधुक्ष्वेतिंवाचयत्यध्वर्युंमवुद्धंचेदस्यभवत्यौंमुक्थशायजसोमस्येतींज्यायैसंप्रेषितोंये३यजा
महइत्यागूर्यँनित्ययैवयजतिंव्यवान्येवानुवषट्करौंत्युक्तंवषट्कारानुमंत्रणंमाहरत्यध्वर्युँरुक्थपात्रमतिग्राह्यांश्चमसांश्चंभ
क्षंप्रतिख्यायंहोताप्राङ्प्रेंखादवरोहरत्यंथैतंप्रेंखंप्रत्यंचमवबध्नंतिंयथाशंसितारंभक्षयिष्यंतँनोपहनिष्यसीतिंप्रेंखस्यह्या
[2]यतंनआसीनोहोताभक्षयंत्यथैतदुक्थपात्रँहोतोपसृष्टेनजपेनभक्षयति ॥ वाग्देवीसोमस्यतृप्यतु ॥ सोमोमेराजायुःप्रा
णायवर्षतु ॥ समेप्राणःसर्वमायुर्दुहां[3]मँहादिंत्युत्तमादाभिप्लविकांत्तृतीयसवनमन्यंद्वैश्वदेवान्निविद्धानांदस्यवामस्यप
लितस्यहोतुरितिंसलिलस्यदैर्घतमसंएकचत्वारिंशतंमानोभद्रीयंचतस्यस्थानंऐकाहिकौवैश्वदेवस्यंप्रतिपदनुचरौंच्यवे
तचेद्यज्ञायज्ञीयंमग्नेतवश्रवोवयइतिंषट्स्तोत्रियानुरूपौंयदीळान्दंभूयसीषुचेत्स्तुवीरंन्नाग्निंनस्ववृक्तिभिरितिंतावतीर

१ वाय्वितेति क्वचित्पाठः । २ तनमासीनइतिभाष्यपाठः । ३ महदुत्तमादितिभाष्यपाठः ।

नुरूपंःसंपन्नंमहाव्रतंसंतिष्ठतंइदमहरग्निष्टोमोयथाकालमवभृथंप्रेंखंहरेयुःसंदहेयुर्बृसीः ॥ १३ ॥ ( कुशासनानि विसर्जयेत् )॥ नादीक्षितोमहाव्रतंशंसेन्नानग्नौनपरस्मैनासंवत्सरइत्येकेंकामंपित्रेवाचार्यायवाशंसेदात्मनोहैवास्यत च्छस्तंभवतिंहोतृशस्त्रेषूक्थशायजंसोमस्येत्येकप्रैषंःसनाराशंसेष्वनाराशंसेषुवाहोत्रकाणां 'मुक्थंशायजसोमानामिति' तदिदमहर्नानंतेवासिनेप्रब्रूयान्नासंवत्सरवासिनेंनोएवासंवत्सरवासिनेंनाब्रह्मचारिणेंनासब्रह्मचारिणेंनोएवासब्रह्म चारिणेंनानभिप्राप्तायैतंदेशंनभूयंःसकृद्वदनाद्धिर्गदनाद्वाद्वय्येवंएकएकस्मैप्रब्रूयादितिहस्माहजातूकर्ण्योंनवत्सेचन तृतीयइतिंनतिष्ठंस्तिष्ठतेनव्रजन्व्रजतेंनशयानःशयानायंनोपर्यासीनउपर्यासीनायांधएवासीनोधआसीनायंनावष्टब्धो नप्रतिस्तब्धोंनातिवीतोनांकंकृत्वोर्ध्वज्ञुरनपश्रितोधीयीतंनमांसंभुक्त्वानलोहितंदृष्ट्वानगतासुंनाव्रत्यमाक्रम्यंनाङ्क्त्वा नाभ्यज्यंनोन्मर्दनंकारयित्वांननापितेनकारयित्वांनस्नात्वानवर्णकेनानुलिप्यनस्रजमपिनह्यंनस्त्रियमुपगम्यंनोलि ख्यनावलिख्यंनेदमेकस्मिन्नहनिसमापयेंदितिहस्माहजातूकर्ण्यःसमापयेदितिगालवोयदन्यत्प्राक्तृचाशीतिभ्यंःसमा पयेदेवेत्याग्निवेश्यायनोंन्यमन्यस्मिन्देशेशमयमानइतिंयत्रेदमधीयीतंनतत्रान्यदधीयीतंयत्रत्वन्यदधीयीतंकाममिदं तत्राधीयीतंनेदमनधीयन्स्नातकोभवतिंयद्यप्यन्यद्बह्वधीयान्नैवेदमनधीयन्स्नातकोभवतिंनास्मादधीतात्प्रमाद्येद्यद्य

१ अत्रचिह्नांतर्गतोभागोनभाष्यकृदिष्टः ।

प्यन्यस्मात्प्रमाद्येंन्नैवास्मात्प्रमाद्येंन्नोएवास्मात्प्रमाद्येंदस्माच्चेन्नप्रमाद्येदलमात्मनइतिविद्यादलंसत्यंविद्यान्नेदंविदनिदं
विदासमुद्दिशेंन्नसहभुंजीतंनसधमादीस्यांदथातःस्वाध्यायधर्मंव्याख्यास्यामंउपपुराणेनापीतैंकक्षोदकेपूर्वाह्लेंनसंभि
न्नासुछायास्वपराह्लेंनाध्यूह्लेमेघेपतौंवर्षेत्रिरात्रंवैंदिकेनाध्यायेनांतरियान्नास्मिन्कथांवदेतंनास्यरात्रौंचनचकीर्तयिषेत्त
दितिर्वाएतस्यमहतोभूतस्यनामभवतिंयोस्यैतदेवंनामवेदंब्रह्मभवतिब्रह्मभवति ॥ १४ ॥ इत्यैतरेयपंचमारण्यके
तृतीयोध्यायः ॥ ३ ॥ ॥ ॥ ॥

॥ इत्यैतरेयारण्यकंसंपूर्णं ॥

## ॥ अथांतेपुनःशांतिः ॥

ॐ उदितःशुक्रियंदधे ॥ तमहमात्मनिंदधे ॥ अनुमामैंत्विंद्रियं ॥ मयिश्रीमयियशः ॥ सर्वःसप्राणःसंबलः ॥ उत्तिष्ठाम्यनुमांश्रीः ॥ उत्तिष्ठत्वनुमायैतुदेवताः ॥ अदब्धंचक्षुरिषितंमनः ॥ सूर्योज्योतिषांश्रेष्ठोदीक्षेमामाहिंसीः ॥ तच्चक्षुर्देवहितंशुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतं ॥ त्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा ॥ त्वंयज्ञेष्वी ड्यः ॥ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसु वीराः ॥ शतधारमुत्समक्षीयमाणंविपश्चितंपितरंवक्त्वानां ॥ मेळिमदंतंपित्रोरुपस्थेतंरोदसीपिपृतंसत्यवाचं ॥ वा ङ्मेमनसिप्रतिष्ठितामनोमेवाचिप्रतिष्ठितमाविरावीर्मएधि ॥ वेदस्यमआणीस्थःश्रुतंमेमाप्रहासीरनेनाधीतेनाहोरात्रा न्संदधाम्यृतंवदिष्यामिसत्यंवदिष्यामितन्मामवतुतद्वक्तारमवत्ववतुमामवतुवक्तारमवतुवक्तारं ॥ भद्रंनोअपिवा तयमनः ॥ ॐ शांतिःशांतिःशांतिः ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ ॥

१ म्यनुश्रीःइतिक्वचित्पाठः ।

इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा
स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् ।

शके १९०७, सन १९८६

## ॥ ऐतरेयारण्यकंसंपूर्णम् ॥

इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् । शके १९०७

# अथाश्वलायनश्रौतसूत्रप्रारंभः ॥

॥ पूर्वषट्कः ॥

श्रीगणेशायनमः ॥ श्रीवेदपुरुषायनमः ॥ हरिः ॐम् ॥ ॥ अथैतस्यसमाम्नायस्यवितानेयोगापत्तिंवक्ष्यामोग्न्याधे
यप्रभृतीन्याहवैतानिकानिदर्शपूर्णमासौतुपूर्वंव्याख्यास्यामस्तंत्रस्यतत्राम्नातत्वाद्दर्शपूर्णमासयोर्हविःष्वासन्नेषुहोता
मंत्रितःप्रागुदगाहवनीयादवस्थायप्राङ्मुखोयज्ञोपवीत्याचम्यदक्षिणावृद्विहारंप्रपद्यतेपूर्वेणोत्करमपरेणप्रणीताइध्मम
परेणाप्रणीतैचात्वालंचात्वालवत्स्वैतत्तीर्थमित्याचक्षतैतस्यनित्याःप्रांचश्चेष्टांअंकधारणाचंयज्ञोपवीतशौचेचविहाराद
व्यावृत्तिश्चतत्रचेत्कर्भैकांगवचनैदक्षिणंप्रतीयादनादेशेकर्मचोदनायांहोतारंददातीतियजमानंजुहोतिजपतीतिप्राय
श्चित्तेब्रह्माणमृचंपादग्रहणेसूक्तंसूक्तादौहीनेपादेऽधिकेतृचंसर्वत्रजपानुमंत्रणाप्यायनोपस्थानान्युपांशुमंत्राश्चकर्मकर
णाःप्रसंगादपवादोबलीयान्प्रपद्याभिहृततरेणपादेनवेदिःश्रोण्योत्तरयापार्ष्णीसमांनिधायप्रपदेनबर्हिराक्रम्यसंहितौ
पाणीधारयन्नाकाशवत्यंगुलीहृदयसंमितावंकसंमितौवाद्यावापृथिव्योःसंधिमीक्षमाणएतद्धोतुःस्थानमासनंवासर्वत्रैवं
भूतोवचनादन्यत्प्रेषितोजपति ॥१॥ नमःप्रवक्रेनमउपद्रष्ट्रेनमोनुख्यात्रेकइदमनुवक्ष्यतिसइदमनुवक्ष्यतिषण्मोर्वीरंह
सस्पांतुद्यौश्चपृथिवीचाहश्चरात्रिश्चापश्चौषधयश्चवाक्समस्थितयज्ञःसाधुच्छंदांसिप्रपद्येहमेवमाममुमितिस्वंनामादिशे
तभूतेभविष्यतिजातेजनिष्यमाणआभजाम्यपाव्यैवाचोअशांतिंवहेत्यंगुल्यग्राण्यवकृष्यजातवेदोरमयापशून्मयीतिप्र
तिसंदध्याद्धर्ममेद्यावापृथिवीवर्माग्निर्वर्मसूर्योवर्ममेसंतुतिरश्चिकाः ॥ तदप्युवाचःप्रथमंमसीयेतिसमाप्यसामिधेनीरन्वा

हंहिँ ३ इतिर्हिंकृत्यभूर्भुवःस्वरो ३ मितिजपत्येषोभिहिंकारोभूर्भुवःस्वरित्येवजपित्वाकौत्सोहिंकरोतिनचपूर्वंजपंजपत्यथ
सामिधेन्यःप्रवोवाजाअभिद्यवोऽग्नआयाहिवीतयेगृणानईळेन्योनमस्यस्तिरोग्निंदूतंवृणीमहेसमिध्यमानोअध्वरेसमि
द्धोअग्नआहुतेतिद्वैताएकश्रुतिसंततमनुब्रूयादुदात्तानुदात्तस्वरितानांपरःसन्निकर्षऐकश्रुत्यंस्वरादिमृगंतमोंकारंत्रि
मात्रंमकारांतंकृत्वोत्तरस्याअर्धर्चेवस्येत्तत्संततमेतदवसानंमुत्तरादानमविप्रमोहेसमाप्तौप्रणवेनावसानंचतुर्मात्रोवसा
नेतस्यांतापत्तिस्पर्शेषुस्ववर्ग्यमुत्तमंमंतस्थासुतांतामनुनासिकांरेफोष्मस्वनुस्वारंत्रिःप्रथमोत्तमेअन्वाहार्ध्यर्धकारमध्य
र्धामुक्त्वावस्येदथद्वेद्वेप्रथममुत्तमस्यामथाध्यर्धांताःपंचदशाभ्यस्ताभिरेतेनशस्त्रयाज्यानिगदानुवचनाभिष्टवनसंस्त
वनानिनत्वन्यत्राध्यर्धकारंनजपःप्रागभिहिंकारान्नाभिहिंकाराभ्यासावबहुषुप्रकृत्यानावच्छेदादौशस्त्रेष्वेवहोत्रकाणा
मभिहिंकारःसामिधेनीनामुत्तमेनप्रणवेनांग्नेमहाँऽअसिब्राह्मणभारतेतिनिगदेवसाय ॥ २ ॥ यजमानस्यार्षेयान्प्र
वृणीतेयावंतःस्युःपरंपरंप्रथमंपौरोहित्यान्राजविशांराजर्षीन्वाराज्ञांसर्वेषांमानवेतिसंशयेदेवेद्धोमन्विद्धऋषिष्टुतोवि
प्रानुमदितःकविशस्तोब्रह्मसंशितोघृताहवनःप्रणीर्यज्ञानांरथीरध्वराणामतूर्तोहोतातूर्णिर्हव्यवाळित्यवसायास्पात्रंजु
हूर्देवानांचमसोदेवपानोराँइवाग्नेनेमिर्देवांस्त्वंपरिभूरस्यावहदेवान्यजमानायेतिप्रतिपद्यदेवताद्वितीययाविभक्त्यादे
शमादेशमावहेत्यावाहयत्यादिंप्लावयंन्नग्नआवहेतितुप्रथमदेवतांसाग्निंसोममित्याज्यभागावग्निमग्नीषोमावितिपौर्णमा

स्यांमग्नीषोमयोःस्थानंइंद्राग्नीअमावास्यायामसन्नयतंइंद्रंमहेंद्रंवासंनयतौंतरेणहविषीविष्णुमुपाश्वैतरेयिणोंग्नीषोमीयं
पौर्णमास्यांवैष्णवममावास्यायांमेकेनैकेकंचनांन्येषामप्युपांशूनांमावहस्वाहायाट्प्रियाधामानींदंहविर्महोज्यायइत्यु
च्चैर्येऽन्येतद्वचनाःपरोक्षांस्तानुपांशूच्चैर्वांप्रत्यक्षमुपांशुंप्रतिचोदनमावाहनंसर्वांआदिश्यसकृदेकप्रदानांस्तथोत्तरेषुनिग
मेष्वेकामिवसंस्तुयांत्समानांदेवतांसमानार्थांमव्यवहितांसकृन्निगमैष्वोह्यास्वावापिकासुंदेवाँऽआज्यपांआवहांग्निंहो
त्रायावहस्वंमहिमानमावहांवहजातवेदःसुयजायजेत्यावाह्यंयथास्थितमूर्ध्वजानुरुपविश्योंदग्वेदेर्व्युह्यतृणानिंभूमौप्रा
देशंकुर्यांददितिर्मातास्यांतरिक्षान्माच्छेत्सींरिदमहमग्निनादेवेनदेवतयांत्रिवृतास्तोमेनरथंतरेणसाम्नांगायत्रेणछंदसा
ग्निष्टोमेनयज्ञेनंवषट्कारेणवज्रेणंयोस्मान्द्वेष्टियंचवयंद्विष्मस्तंहन्मींत्याश्रावयिष्यंतमनुमंत्रयेतांश्रावययज्ञंदेवेंष्वाश्रा
वयमांमनुष्येषुंकीर्त्यैयशसेब्रह्मवर्चसायेतिप्रवृणानंदेवसवितरेतंत्वावृणतेंग्निंहोत्रायसहपित्रावैश्वानरेणंद्यावापृथिवी
मांपातांमग्निर्होंताहंमानुषइतिंमानुषइत्यध्वर्योंःश्रुत्वौंदायुषास्वायुषोदोषधीनांरसेनौंत्पर्जन्यस्यधामभिरुदस्थांममृताँ
अन्वित्युत्तिष्ठेत्षष्टिश्चाध्वर्योंनवतिश्चपाशांअग्निंहोतारमंतराविंचृत्ताः ॥ सिनंतिपाकमतिधीरएतीत्युत्थायंऋतस्यपंथा
मन्वेमिहोतेंत्यभिक्रम्यांसेध्वर्युमन्वारभेतंपार्श्वस्थेनपाणिनांग्नीध्रमंकदेशेनसव्येनवैंद्रमन्वारभामहेहोतृवूर्येपुरोहितम् ।
येनायंनुत्तमंस्वर्देवाअंगिरसोदिवमितिंसंमार्गतृणैस्त्रिरभ्यात्मंमुखंसंमृजीतंसंमार्गोंऽसिसंमाप्रजयापशुभिर्मृड्ढीतिंसकृ

न्मंत्रेणाद्भिस्तूष्णींसर्वत्रैवंकर्मावृत्तौस्पृष्ट्वोदकंहोतृषदनमभिमंत्रयेतांहेदैधिषव्योदतस्तिष्ठान्यस्यसदनेसीदयोस्मत्पाकत
रइत्यंगुष्ठोपकनिष्ठिकाभ्यांहोतृषदनात्तृणंप्रत्यग्दक्षिणानिरसेन्निरस्तःपरावसुरितींदमहमर्वावसोःसदनेसीदामीत्युपवि
शेद्दक्षिणोत्तरिणोपस्थेनैतेनिरसनोपवेशनेसर्वासनेषुसर्वेषामहरहःप्रथमोपवेशनेपिसमानेद्धिरितिगौतमः ॥३॥ ब्रह्मोद
नेप्राशिष्यमाणेध्याधेयेब्रह्मांबहिष्पवमानात्प्रत्येत्यसोमेप्रसृप्यहोतास्रुगादापनेपशौनपत्नीसांयाजिकेनान्यत्रहोतुरिति
कौत्सउपविश्यदेवबर्हिःस्वासस्थंत्वाध्यासदेयमित्यभिहिषहोतःप्रतरांबर्हिषद्धवेतिजानुशिरसाबर्हिरुपस्पृश्यातऊर्ध्वंज
पेद्भूपतयेनमोभुवनपतयेनमोभूतानांपतयेनमोभूतयेनमःप्राणंप्रपद्येपानंप्रपद्येव्यानंप्रपद्येवाचंप्रपद्येचक्षुःप्रपद्येश्रोत्रंप्र
पद्येमनःप्रपद्यआत्मानंप्रपद्येगायत्रींप्रपद्येत्रिष्टुभंप्रपद्येजगतींप्रपद्येनुष्टुभंप्रपद्येछंदांसिप्रपद्येसूर्योनोदिवस्पातुनमोमह
द्भ्योनमोअर्भकेभ्योविश्वेदेवाःशास्तनमायथेहांराधिहोतानिषदायजीयांस्तदद्यवाचःप्रथमंमसीयेतिसमाप्यप्रदीप्तइध्मे
स्रुचावादापयेन्निगदेनाग्निर्होतावेत्वग्नेहोत्रंवेतुंप्रावित्रंसाधुतेयजमानदेवतांयोअग्निमित्यवसायहोतारमवृथाइतिजपे
दथसमापयेद्धृतवतीमध्वर्योस्रुचमास्यस्वदेवयुवंविश्ववारेईळामहेदेवाँईळेन्यांन्नमस्यामनस्यान्यजामयज्ञियानितिस
माप्तेस्मिन्निगदेध्वर्युराश्रावयतिप्रत्याश्रावयेदाग्नीध्रउत्करदेशेतिष्ठन्स्फ्यमिध्मसन्नहनानीत्यादायदक्षिणामुखइतिशा
ठ्यायनकंमस्तुश्रौ३षळित्यौकारंप्लावयन् ॥ ४ ॥ प्रयाजैश्चरंतिपंचैतेभवंत्येकैकंप्रेषितोयजंत्यागूर्याज्यादिरनुयाजव

जैंये ३ यजामहइत्यागूर्वषट्कारौंत्यः सर्वत्रोंच्चैस्तरांबलीयान्याज्यायांस्तयोरादीप्लावयैद्याज्यांतंचविविच्यसंध्यक्षराणाम
कारैंनचेद्वैवचनोव्यंजनांतोवांविसर्जनीयोनत्यक्षरोपधौंरिफ्यतइतश्चरेफीलुप्यतैंरेफीप्रथमःस्वंतृतीयंनित्यंमकारैंये ३
यजामहेसमिधंःसमिधोअग्नआज्यस्यव्यंतूं ३ वौ ३ षळितिवषट्कारइतिप्रथमोंवागोजःसहओजोमयिप्राणापानावितिंवष
ट्कारमुक्त्वोक्त्वानुमंत्रयतैंदिवाकीर्त्योंवषट्कारंस्तथानुमंत्रणंमेतद्याज्यानिदर्शनैंतनूनपादग्नआज्यस्यवेत्विवितिद्वितीयों
न्यत्रवसिष्ठशुनकांत्रिवध्र्यश्वराजन्येभ्यौंनराशंसोअग्नआज्यस्यवेत्विवितितेषांमिळोअग्नऽआज्यस्यव्यंत्विवितितृतीयौंबर्हि
रग्नआज्यस्यवेत्विवितिचतुर्थैंआगूर्यपंचमैंस्वाहाग्निंस्वाहामुमितिंयथावाहितमनुद्रुत्यदेवतांयथाचोदितमनावाहितांस्वा
हादेवाआज्यपाजुषाणांअग्नआज्यस्यव्यंत्विवित्यातोमंद्रेणोर्ध्वंचशंयुवाकांन्मध्यमेनहवींष्यास्विष्टकृतंउत्तमेनशेषोग्निर्वृ
त्राणिजंघनदितिंपूर्वस्याज्यभागस्यानुवाक्यांत्वंसोमासिसत्पतिरित्युत्तरस्यंजुषाणोअग्निराज्यस्यवेत्विवितिंपूर्वस्ययाज्या
जुषाणंःसोमआज्यस्यहविषोवेत्विवित्युत्तरस्यंतावागूर्यादेशंयजतिंसर्वाश्चानुवाक्यावत्योप्रैषांअन्याअन्वायात्याभ्यंःसौ
मिकीभ्यश्चंयाअंतरेणवैश्वानरीयैंपत्नीसंयाजांश्चैतौवार्त्रघ्नौंपौर्णमास्यामनुवाक्यांलिंगविशेषान्नामधेयान्यत्वैंततोविचा
रोनित्येयाज्यैंवृधन्वंतावमावास्यायांमग्निःप्रत्नेनमन्मनांसोमगीर्भिंष्ट्वावयमित्यातोवाग्यमनंमंतराचयाज्यानुवाक्यैनि
गदानुवचनांभिष्टवनशस्त्रजपानांचारभ्यासमाप्तैरन्यद्यज्ञस्यसाधनादापद्यांतोदेवाअवंतुनइतिजपैंदपिवान्यांवैष्णवीं

॥५॥ उक्तादेवतास्तासांयाज्यानुवाक्यांअग्निर्मूर्धाभुवोयज्ञस्यायमग्निःसहस्त्रिणइतिवैदंविष्णुर्विचक्रमेत्रिर्देवःपृथिवीमे
षएतांमग्नीषोमासवेदसांयुवमेतानिदिविरोचनानींद्राग्नीअवसागतंगीर्भिर्विप्रःप्रमतिमिच्छमानंएंद्रसानसिंरयिंप्रससा
हिषेपुरुहूतशत्रूंन्महाँऽइंद्रोयओजसांभुवस्त्वमिंद्रब्रह्मणामहानितिं यद्यग्नीषोमीयउपांशुयाजोंऽग्नीषोमायोऽअद्यवांमा
न्यंदिवोमातरिश्वाजभारेंत्यथस्विष्टकृतंःपिप्रीहिदेवांउशतोयविष्ठेत्यनुवाक्यांये३यजामहेग्निंस्विष्टकृतंमयाळग्निरित्यु
क्त्वाषष्ठ्याविभक्त्यादेवतामादिश्यंप्रियाधामान्ययाळित्युपसंतनुयांदेवमुत्तराअयाळयाळितिरवेवंतासांपुरस्तादाज्य
पांतमनुक्रम्यंदेवानामाज्यपानांप्रियाधामानियक्षदग्नेर्होतुःप्रियाधामानियक्षत्स्वंमहिमानमायजतांमेज्याइषःकृणोतु
सोअध्वराजातवेदाजुषतांहविरग्नेयदद्यविशोअध्वरस्यहोतरित्यनवानंयजतिप्रकृत्यावा ॥ ६ ॥ प्रदेशिन्याःपर्वणीउत्तमे
अंजयित्वौंष्ठयोरभ्यात्मंनिमार्ष्टिवाचस्पतिनातेहुतस्येषेंप्राणायप्राश्नामीत्युत्तरमुत्तरेंमनसस्पतिनातेहुतस्योजेंऽपानाय
प्राश्नामींत्यधरमधरेस्पृष्टोदकंमंजलिनेळांप्रतिगृह्यसव्येपाणौकृत्वांपश्चादस्याउदगंगुलिंपाणिमुपधायांवांतरेळामवदाप
यीतांतरेणांगुष्ठमंगुलीश्चंस्वयंद्वितीयमाददीतंप्रत्यालब्धामंगुष्ठेनाभिसंगृह्यप्रत्याहृत्यांगुलीरमुष्टिंकृत्वांदक्षिणतइळांप
रिगृह्यांस्यसंमितामुपह्वयतेंप्राणसंमितांवा ॥ इळोपहूतासहदिवाबृहतादित्येनोंपास्मांइळाह्वयतांसहदिवाबृहतादित्ये
नेळोपहूतांसहांतरिक्षेणवामदेव्येनवायुनोंपास्माँइळाह्वयताँसहांतरिक्षेणवामदेव्येनवायुनेळोपहूतांसहपृथिव्यारथंतरे

णाग्निनौंपास्माँइळाह्वयतांसहपृथिव्यारथंतरेणाग्निना ॥ उपहूतागावःसहाशिरंउपमांगावःसहाशिराह्वयंतांमुपहूता
धेनुःसहऋषभोपमांधेनुंःसहऋषभाह्वयतांमुपहूतागौर्घृतपद्युपमांगौर्घृतपदीह्वयतांमुपहूतादिव्याःसप्तहोतारंउपमांदि
व्याःसप्तहोतारोह्वयंतांमुपहूतःसखाभक्षउपमांसखाभक्षोह्वयतांमुपहूतेळावृष्टिरुपमामिळावृष्टिर्ह्वयतामित्युपांश्वथो
च्चैः । इळोपहूतोपहूतेळौंपास्माँइळाह्वयतामिळोपहूता । मानवीघृतपदीमैत्रावरुणींब्रह्मदेवकृतमुपहूतंदैव्याअध्वर्य
वंउपहूताउपहूतामनुष्याः । यइमंयज्ञमवान्येचयज्ञपतिंवर्धांनुपहूतेद्यावापृथिवींपूर्वजेऋतावरीदेवीदेवपुत्रे ॥ उपहू
तोयंयजमानंउत्तरस्यांदेवयज्यायांमुपहूतोभूयसिहविष्करणंइदंमेदेवाहविर्जुषंतामितिंतस्मिन्नुपहूतइत्युपहूयांवांतरेळां
प्राश्नीयांदिळेभागंजुषस्वनंःपिन्वगाजिन्वार्वतौंरायस्पोषस्येशिषे तस्यनोरास्वतस्यनोदांस्तस्यास्तेभागमशीमहि ॥
सर्वात्मानःसर्वतनवःसर्ववीराःसर्वपूरुषाःसर्वपुरुषाइतिवा ॥ ७ ॥ मार्जयित्वानुयाजैश्चरंतिंपरिस्तरणैरंजलिमंतर्धा
यांपआसेचयतेतन्मार्जनंदेवादयोनुयाजावीतवत्पदांतांस्त्रयएकैकंप्रेषितोयजति ॥ देवंबर्हिर्वसुवनेवसुधेयस्यवेतु । देवो
नराशंसोवसुवनेवसुधेयस्यवेतु । देवोअग्निःस्विष्टकृत्सुद्रविणामंद्रःकविंःसत्यमन्मायजीहोतांहोतुर्होतुरायजीयांनग्ने
यांदेवानयाड्ढ्याँअपिप्रेर्येतेहोत्रेअमत्सतंतांससनुर्षींहोत्रांदेवंगमाँदिविदेवेषुयज्ञमेरयेमंस्विष्टकृच्चाग्नेहोताभूर्वसुवनेव
सुधेयस्यंनमोवाकेवीहीत्यनवानंवा ॥ ८ ॥ सूक्तवाकायसंप्रेषितंइदंद्यावापृथिवीभद्रमभूंदार्ध्मसूक्तवाकंमुतनमोवाकं

मृध्यास्मसूक्तोच्यंमग्नेत्वंसूक्तवागसि । उपश्रुतीदिवस्पृथिव्यौरोमन्वतीतेस्मिन्यज्ञेयजमानंद्यावापृथिवीस्तां । शंगयी
जीरदानूंअत्रस्नूअप्रवेदेंउरुगव्यूतीअभयंकृतौ । वृष्टिद्यावारीत्यापोशंभुवौमयोभुवांऊर्जस्वतीपयस्वतींसूपचरणाचस्व
धिचरणाचंतयोराविदीत्यवसायंप्रथमयाविभक्त्यादिश्यदेवतामिदंहविरजुषतावीवृधतंमहोज्यायोकृतेत्युपसंतनुयांदे
वमुत्तराअक्रातामकतेतिंयथार्थमुक्तमुपांशोरावापिकांतमनुद्धुत्यंदेवाआज्यपाआज्यमजुषंतांवीवृधंतमहोज्यायोऽक्रतां
ग्निर्होत्रेणेदंहविरजुषतांवीवृधतमहोज्यायोकृत । अस्यामृधेद्धोत्रायांदेवंगमायामाशास्तैंयंयजमानोसावसावित्यस्यादि
श्यनामनींउपाँशुसन्निधौगुरोः ॥ आयुराशास्तैंसुप्रजास्त्वमाशास्तैंरायस्पोषमाशास्तैंसजातवनस्यामाशास्तंउत्तरांदेवय
ज्यामाशास्तैंभूयोहविष्करणमाशास्तैंदिव्यंधामाशास्तैंविश्वंप्रियमाशास्तैंयदनेनहविषाशास्तैंतदश्यात्तदृध्यांत्तदस्मैदे
वारासंतांतदग्निर्देवोदेवेभ्योवनतैंवयमग्नेर्मानुषाः । इष्टंचवित्तंचोभेचनोंद्यावापृथिवीअंहसस्पातांमेहगतिर्वामस्येदं
नमोदेवेभ्यइति ॥ ९ ॥ शंयुवाकायसंप्रेषितंस्तच्छंयोरावृणीमहइत्याहानुवाक्यावदप्रणवांवेदमस्मैप्रयच्छत्यध्वर्युस्तं
गृह्णीयांद्वेदोसिवेदोविदेयैंत्युदायुषेत्येतेनोपोत्थायंपश्चाद्गार्हपत्यस्योपविश्यंसोमंत्वष्टारंदेवानांपत्नीरग्निंगृहपतिमित्या
ज्येनयजैंत्याप्यायस्वसमेतुतेसंतेपयांसिसमुयंतुवाजांइहत्वष्टारमग्रियंतन्नस्तुरीपमधपोषयित्नुंदेवानांपत्नीरुशतीरवंतु
नइतिद्वेंअग्निर्होतागृहपतिःसराजांहव्यवाळग्निरजरःपितानइतिपत्नीसंयाजांअथप्रजाकामोंराकांसिनीवालींकुहूमितिं

प्राग्गृहपतेर्यजेतंराकामहंसिनीवालिकुहूमहमितिद्वेद्वेयाज्यानुवाक्ये । कुहूमहंसुवृतंविद्मनापसमस्मिन्यज्ञेसुहवांजोहवीमि । सानोददातुश्रवणंपितृणांतस्यैतेदेविहविषाविधेम । कुहूर्देवानाममृतस्यपत्नीहव्यानोअस्यहविषःशृणोतु । संदाशुषेकिरतुभूरिवामंरायस्पोषंयजमानेदधात्वित्याज्यंपाणितलेवदापयीतेंळामुपहूयसर्वाप्राश्नीयाच्छंयुवाकोभवेन्नवा ॥ १० ॥ वेदंपत्न्यैप्रदायवाचयेद्धोताध्वर्युर्वावेदोसिवित्तिरसिविदेयकर्मासिकरणमसिक्रियासंसनिरसिसनितासिसनेयंघृतवंतंकुलायिनंरायस्पोषंसहस्रिणंवेदोददातुवाजिनं । यंबहवउपजीवंतियोजनानामसद्वशी । तंविदेयप्रजांविदेयकामायत्वेतिवेदशिरसानाभिदेशमालभेतंप्रजाकामाचेदथास्यायोक्त्रंविचृतेत्प्रत्वामुंचामिवरुणस्यपाशादितितत्प्रत्यग्गार्हपत्याद्द्विगुणंप्राक्पाशंनिधायोपरिष्टादस्योदगग्राणिवेदतृणानिकरोतिपुरस्तात्पूर्णपात्रंसंश्लिष्टंवेदतृणैरभिमृश्यवाचयेत्पूर्णमसिपूर्णंमेभूयाःसुपूर्णमसिसुपूर्णंमेभूयाःसदसिसन्मेभूयाःसर्वमसिसर्वंमेभूयाअक्षितिरसिमामेक्षेष्ठाइत्यथैनांपूर्णपात्रात्प्रतिदिशमुदकमुदुक्षन्नुदुक्षंतींवाचयतिप्राच्यांदिशिदेवाऋत्विजोमार्जयंतांदक्षिणस्यांदिशिमासाःपितरोमार्जयंतांप्रतीच्यांदिशिगृहाःपशवोमार्जयंतामुदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतामूर्ध्वायांदिशियज्ञःसंवत्सरःप्रजापतिर्मार्जयतांमार्जयंतामितिवाथास्याउत्तानमंजलिमधस्ताद्योक्त्रस्यनिधायात्मनश्चसव्यंपूर्णपात्रंनिनयन्वाचयेन्माहंप्रजांपरासिचंयानःसयावरीस्थन । समुद्रंवोनिनयानिस्वंपाथोअपीथेतिवेदतृणान्यग्रेगृहीत्वाविधून्वंत्संततं

स्तृणंतस्सव्येनगार्हपत्यादाहवनीयमेतिंतंतुंतन्वन्नजसोभानुमन्विहीतिशेषंनिधायंप्रत्यगुदगाहवनीयादवस्थायंस्थाल्याः
स्रुवेणादायंसर्वप्रायश्चित्तानिजुहुयात्स्वाहाकारांतैर्मंत्रैर्नचेन्मंत्रेपठितोयत्किंचाप्रेषितोयजेदन्यत्राप्येवंभूतोव्यक्तहोमा
भ्याधानोपस्थानानिच । अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि । अयासावयसाकृतोयासन्हव्यमूहिषेयानो
धेहिभेषजंस्वाहा । अतोदेवाअवंतुनइतिद्वाभ्यांव्याहृतिभिश्चभूःस्वाहाभुवःस्वाहास्वःस्वाहाभूर्भुवःस्वःस्वाहेतिहुत्वा
संस्थाजपेनोपस्थायंतीर्थेननिष्क्रम्यानियमओंचमेस्वरश्चमेयज्ञोपचतेनमश्च । यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैते
नमइतिंसंस्थाजपइतिहोतुः ॥ ११ ॥ अथब्रह्मणोहोत्राचमनयज्ञोपवीतशौचानिनित्यःसर्वकर्मणांदक्षिणतोध्रुवाणांव्र
जतांवाबहिर्वेदियांदिशंव्रजेयुःसैवतत्रप्राचीचेष्टास्वमंत्रासुस्थानासनयोर्विकल्पस्तिष्ठद्धोमाश्चयेवषट्कारा आसीतान्य
त्रंसमस्तपाण्यंगुष्ठोग्रेणाहवनीयंपरीत्यंदक्षिणतःकुशेषूपविशेद्बृहस्पतिर्ब्रह्माब्रह्मसदनआशिष्यतेबृहस्पतेयज्ञंगोपायेत्यु
पविश्यजपेदेषब्रह्मजपःसर्वयज्ञतंत्रेषुसाग्नौयत्रोपवेशनंसुपविष्टमतिसर्जयतेब्रह्मन्नपःप्रणेष्यामीतिश्रुत्वाभूर्भुवःस्वर्बृह
स्पतिप्रसूतइतिजपित्वों ३ प्रणयेत्यतिसृजेत्सर्वत्रयथाकर्मत्वादेशाःप्रणवाद्युच्चैरूर्ध्वंवाप्रणवादंतऊर्ध्वंवाग्यतआस्तआह
विष्कृतंउद्वादनादामार्जनात्पशौसोमेघर्मादिचांतिप्रैषादिचासुब्रह्मण्यायाःप्रातरनुवाकाद्यांतर्यामाद्धरिवतोनुसवनंमे
ळायाःस्तोत्रेष्वतिसर्जनाद्यावषट्कारादोद्दचःपवमानेषुयच्चकिंचमंत्रवद्धोत्राशेषआपत्तिश्चयत्रत्वग्निःप्रणीयतेपिससोमे

तदादितन्त्रवाग्यमनं दक्षिणतश्चब्रजन्जपेत्याशुः शिशानइतिसूक्तं समाप्योपवेशनाद्युक्तं नतु सौमिके प्रणयने ब्रह्मजपोन्यत्र
विसृष्टवागबहुभाषी यज्ञमनाविपर्यासे तरिते मंत्रे कर्माणिवाख्यातेवोपलक्ष्यवाजान्वाच्याहुतिंजुहुयाद्दक्ष्वेंद्भूरितिगार्ह
पत्येयजुष्टोभुवइतिदक्षिण आग्नीध्रीये सोमेषुसामतः स्वरित्याहवनीये सर्वतोविज्ञाते वाभूर्भुवःस्वरित्याहवनीयएवंप्राक्प्र
याजेभ्योंगारं वहिष्परिधिनिर्वृत्तं स्रुवदंडेनाभिनिदध्यान्मातपोमायज्ञस्तपन्मायज्ञपतिस्तपन्नमस्तेअस्त्वायतेनमोरुद्रप
रायते । नमोयत्रनिषीदसीत्यमुंमाहिंसीरमुंमाहिंसीरिति चप्रतिदिशमध्वर्युयजमानौपुरस्ताच्चेद्ब्रह्मयजमानोदक्षिणतो
होतृपत्नीयजमानान्पश्चादाग्नीध्रयजमानाउत्तरतोथैनमनुप्रहरेदाहंयज्ञंददे निर्ऋतेरुपस्थात्तं देवेषुपरिददामिविद्वान् ।
सुप्रजास्त्वंशतहिमामदंतइहनोदेवामयिशर्मयच्छतेतितमभिजुहुयात्सहस्रशृंगोवृषभोजातवेदाःस्तोमपृष्ठोघृतवान्सुप्र
तीकः । मानोहिंसीद्धिंसितोनेत्वाजहामिगोपोषंचनोवीरपोषंचयच्छस्वाहेति ॥ १२ ॥ प्राशित्रमाह्रियमाणमीक्षेतमि
त्रस्यत्वाचक्षुषाप्रतीक्षइतिं देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांप्रतिगृह्णामीतितदंजलिनाप्रतिगृह्यपृथि
व्यास्त्वानाभौसादयाम्यदित्याउपस्थइतिंकुशेषुप्राग्दंडं निधायांगुष्ठोपकनिष्ठिकाभ्यामसंखादन्प्राश्नीयादग्नेष्ट्वास्येनप्रा
श्नामिबृहस्पतेर्मुखेनेत्याचम्यान्वाचामेत्सत्येनत्वाभिजिघर्मीयाअप्स्वंतर्देवताःस्ताइदंशमयंतुचक्षुःश्रोत्रंप्राणान्मेमाहिं
सीरितींद्रस्यत्वाजठरेदधामीतिनाभिमालभेतंप्रक्षाल्यप्राशित्रहरणंत्रिरनेनाभ्यात्ममपोनिनयेतेमार्जयित्वास्मिन्ब्रह्म

भागंनिदध्यात्पश्चात्कुशेषुयजमानभागमन्वाहार्यमवेक्षेतंप्रजापतेर्भागोस्यूर्जस्वान्पयस्वानक्षितिरसिमामेक्षेष्ठा अस्मिंश्च
लोकेमुष्मिंश्चंप्राणापानौमेपाहिकामायत्वेत्यस्पृशन्नवघ्रायांगुष्ठोपकनिष्ठिकाभ्यांशिष्टंगृहीत्वाब्रह्मभागेनिदध्याद्ब्रह्मन्प्र
स्थास्यामइतिश्रुत्वाबृहस्पतिर्ब्रह्माब्रह्मसदनआशिष्टंबृहस्पतेयज्ञमजूगुपंःसयज्ञंपाहिसयज्ञपतिंपाहिंसमांपाहिंभूर्भुवःस्व
र्बृहस्पतिप्रसूतइतिजपित्वों३प्रतिष्ठेतिंसमिधमनुजानीयात्संस्थितेजघन्यऋत्विजांसर्वप्रायश्चित्तानिजुहुयात्तमितरेन्वा
लभेरन्होतारंवैतयोर्नित्यहोमंःसर्वेसंस्थाजपेनोपतिष्ठंतउपतिष्ठंते॥ १३ ॥ इत्याश्वलायनश्रौतसूत्रेप्रथमोऽध्यायः ॥ १ ॥

ॐ३म् ॥ पौर्णमासेनेष्टिपशुसोमाउपदिष्टास्तैरमावास्यायांपौर्णमास्यांवायजेतराजन्यश्चाग्निहोत्रंजुहुयात्तपस्विने
ब्राह्मणायेतरंकालंभक्तमुपहरेद्दतसत्यशीलंःसोमसुत्सदाजुहुयाद्बहुषु बहूनामनुदेशआनंतर्ययोगोद्वेद्वेतुयाज्यानुवाक्ये
अदृष्टादेशेनित्येअग्न्याधेयंकृत्तिकासुरोहिण्यांमृगशिरसिफल्गुनीषुविशाखयोरुत्तरयोःप्रोष्ठपदयोरेतेषांकस्मिंश्चिद्वसंते
पर्वणिब्राह्मणआदधीतंग्रीष्मवर्षाशरत्सुक्षत्रियवैश्योपक्रुष्टायस्मिन्कस्मिंश्चिद्दतावादधीतंसोमेनयक्ष्यमाणोनर्तुंपृच्छेन्न
नक्षत्रमश्वत्थाच्छमीगर्भादरणीआहरेदनपेक्षमाणोयोअश्वत्थःशमीगर्भआरुरोहत्वेसचा । तंत्वाहरामिब्रह्मणायज्ञियैः
केतुभिःसहेतिपूर्णाहुत्यंतमग्न्याधेयंयदित्विष्टयस्तनुयुःप्रथमायामग्निरग्निःपवमानोग्नआयूंषिपवसेग्नेपवस्वस्वपाःसहव्य
वाळमर्त्योग्निर्होतापुरोहितइतिस्विष्टकृतःसंयाज्येइत्युक्तेसौविष्टकृतीप्रतीयात्सर्वत्रदेवतागमेनित्यानामपायोयाःस्विष्ट

कृतमंतराज्यभागौचतास्तत्स्थानंएषसमानजातिधर्मोद्वितीयस्यांवृधन्वंतावग्निःपावकोग्निःशुचिःसनःपावकदीदिवोंग्ने
पावकरोचिषा । अग्निःशुचिव्रततमंउदग्नेशुचयस्तवंसाह्वान्विश्वाअभियुजोंग्निमीळेपुरोहितमितिसंयाज्यैतृतीयस्यांसा
मिधेन्यावावपतैंप्रागुपोत्तमायाःपृथुपाजाअमर्त्यइतिंद्वेधाय्येइत्युक्तएतेप्रतीयांत्पुष्टिमंतावग्निनारयिमश्नवंद्वयस्फानो
अमीवहेंत्यग्नीषोमाविंद्राग्नीविष्णुरितिवैकल्पिकान्यदितिरुतत्वामदितेर्महिंमहीमूषुमातरंसुव्रतानांमृतस्यपत्नीमवसेहु
वेम । तुविक्षत्रामजरंतीमुरूचींसुशर्माणमदितिंसुप्रणीतिं । प्रेद्धोअग्नइमोअग्नइतिसंयाज्यैविराजावित्युक्तएतेप्रतीयादि
तितिस्रआद्योत्तमेवैवस्यातांमाद्यावातथासतितस्यामेवधाय्येविराजावितिमात्रेविकारेवैराजतंत्रेतिप्रतीयांदाधानाद्वा
दशरात्रमजस्रांअत्यंतंतुगतश्रियः ॥ १ ॥ उत्सर्गेपराह्णेगार्हपत्यंप्रज्वल्यदक्षिणाग्निमानीयंविट्कुलाद्वित्तवतोंवैकयोनय
इत्येकेध्रियमाणंवाप्रज्वल्यारणिमंतंवामथित्वांगार्हपत्यादाहवनीयंज्वलंतमुद्धरेद्देवंत्वादेवेभ्यःश्रियाउद्धरामीत्युद्धरे
दुद्ध्रियमाणउद्धरपाप्मनोमायदविद्वान्यच्चविद्वांश्चकार । अह्नायदेनःकृतमस्तिकिंचित्सर्वस्मान्मोद्धृतःपाहितस्मादिति
प्रणयैदमृताहुतिममृतायांजुहोम्यग्निंपृथिव्याममृतस्ययोनौं । तयानंतंकाममहंजयानिंप्रजापतिःप्रथमोयंजिगायांग्ना
वग्निःस्वाहेतिनिदध्यादादित्यमभिमुखंएवंप्रातर्व्युष्टायांतमेवाभिमुखोंरात्र्यायदेनइतितुप्रणयैदतऊर्ध्वमाहिताग्निर्व्रत
चार्याहोमादनुदितहोमीचोदयांदस्तमितेहोमोनित्यमाचमनंमृतसत्याभ्यांत्वापर्युक्षामीतिजपित्वापर्युक्षेत्त्रिस्त्रिरेकैकंपु

नः पुनरुदकमादायानंतयैंविकल्पौदक्षिणंत्वेवप्रथमंविज्ञायतेंपितावाएषोग्नीनांयद्दक्षिणंःपुत्रोगार्हपत्यःपौत्रआहवनीयं
स्तस्मादेवंपर्युक्षेंद्गार्हपत्यादविच्छिन्नामुदकधारांहरेंत्तंतुंतन्वन्नजसोभानुमन्विहीत्याहवनीयात्पश्चाद्गार्हपत्यस्योपविश्योंं
दगंगारानपोहेंत्सुहुतकृतस्थसुहुतंकरिष्यथेतिंतेष्वग्निहोत्रमधिश्रयेंदधिश्रितमध्यधिश्रितंमधिश्रितंहि ँ ३ इति। इळाया
स्पदंघृतवच्चराचरंंजातवेदोहविरिदंजुषस्व । येग्राम्याःपशवोविश्वरूपास्तेषांसप्तानांमयिपुष्टिरस्त्वितिवानदध्यधिश्रये
दधिश्रयेदित्येके ॥२॥ पयसानित्यहोमौंयवागूरोदनोदधिसर्पिंर्ग्रामकामान्नाद्यकामेंद्रियकामतेजस्कामानांमधिश्रितम
वज्वलयेंदनधिश्रयंदध्यंग्निष्टेतेजोमाहार्षीरितिंस्रुवेणप्रतिषिंच्यान्नवाशांतिरस्यमृतमसीतिंतयोरव्यतिचारंःपुनर्ज्वलता
परिहरेत्रिरंतरितंरक्षोंतरिताअरातयइतिंसमुदंतंकर्षन्निवोदगुद्वासयेंद्दिवेत्वांतरिक्षायत्वापृथिव्यैत्वेतिनिदधंत्सुहुतकृत
स्थसुहुतमकार्ष्टेत्यंगारानतिसृज्यंस्रुक्स्रुवंप्रतितपेत्प्रत्युष्टंरक्षःप्रत्युष्टाअरातयोंनिष्टप्तंरक्षोनिष्टप्ताअरातयइंत्युत्तरतः
स्थाल्याःस्रुचमासाद्योमुन्नयानीत्यतिसर्जयीतांहिताग्निराचम्यापरेणवेदिमतिव्रज्यंदक्षिणतउपविश्यैतच्छ्रुत्वोंमुन्नयेत्य
तिसृजेंदतिसृष्टोभूरिळाभुवइळांस्वदिळावृधइळेतिस्रुवपूरमुन्नयेंदग्रियमग्रियंपूर्णतमंयोनुज्येष्ठमृद्धिमिच्छेंत्पुत्राणांयो
स्यपुत्रःप्रियःस्यात्तंप्रतिपूर्णमुन्नयेंत्स्थालीमभिमृश्यसमिधंस्रुचंचाध्यधिगार्हपत्यंहृत्वाप्राणसंमितामाहवनीयसमीपेंकुशे
षूपसाद्यंजान्वाच्यसमिधमादध्यांद्रजतांत्वाग्निज्योतिषंरात्रिमिष्टकामुपदधेस्वाहेतिंसमिधमाधायंविद्युदसिविद्यमेपा

प्मानंमग्नौश्रद्धेत्यपउपस्पृश्यंप्रदीप्तांङ्क्ष्यंगुलमात्रेभिजुहुयांद्भूर्भुवःस्वरो३ मग्निर्ज्योतिर्ज्योतिरग्निःस्वाहेतिंपूर्वामाहुतिंहु
त्वांकुशेषुसादयित्वांगार्हपत्यमवेक्षेतंपशून्मेयच्छेत्यथोत्तरांतूष्णींभूयसीमसंसृष्टांप्रागुदगुत्तरतोवांप्रजापतिंमनसाध्या
यांत्तूष्णींहोमेषुसर्वत्रभूयिष्ठंस्रुचिशिष्टांत्रिरनुप्रकंप्यावमृज्यंकुशमूलेषुनिमार्ष्टिपशुभ्यस्त्वेतिंतेषांदक्षिणतउत्तानाअंगु
लीःकरोतिंप्राचीनावीतींतूष्णींस्वधापितृभ्यइतिवापोवनिनीयंवृष्टिरसिवृश्चमेपाप्मानंमप्सुश्रद्धेत्यपउपस्पृश्यांहिताग्निर
नुमंत्रयेतांधानमुक्त्वांतेनऋषिणातेनब्रह्मणांतयादेवतयांगिरस्वंद्ध्रुवासीदेतिसमिधैंताअस्यसूददोहसइतिंपूर्वामाहुति
मुपोत्थायोत्तरांकांक्षेतेक्षमाणोभूर्भुवःस्वःसुप्रजाःप्रजाभिःस्यांसुवीरोवीरैःसुपोषःपोषैंराग्नेयीभिश्चांग्नआयूंषिपवसइति
तिसृभिः ॥ ३ ॥ संवत्सरेसंवत्सरैंयवाग्वापयसावांस्वयंपर्वणिजुहुयांद्दत्विजामेकइतरंकालंमंतेवासीवास्पृष्ट्वोदकंमुद
ङ्ङावृत्यभक्षयेंदपरयोर्वाहुत्वांयुषेत्वाप्राश्नामीतिप्रथमंमन्नाद्यायत्वेत्युत्तरंतूष्णींसमिधमाधायांग्नयेगृहपतयेस्वाहेतिंगार्ह
पत्येनित्योत्तरांतूष्णींसमिधमाधायांग्नयेसंवेशपतयेस्वाहेतिंदक्षिणेग्नयेन्नादायान्नपतयेस्वाहेतिंवानित्योत्तराभक्षयित्वा
भ्यातममपःस्रुचानिनयतेंत्रिःसर्पदेवजनेभ्यःस्वाहेंत्यथैनांकुशैःप्रक्षाल्यंचतस्रःपूर्णाःप्रागुदीच्योर्निनयेंदृतुभ्यःस्वाहादि
ग्भ्यःस्वाहांसप्तऋषिभ्यःस्वाहेतरजनेभ्यःस्वाहेतिंपंचमींकुशदेशेंपृथिव्याममृतंजुहोम्यंग्नयेवैश्वानरायस्वाहेतिषष्ठींपश्चा
द्गार्हपत्यस्यंप्राणममृतेजुहोम्यमृतंप्राणेजुहोमिस्वाहेतिंपितापयांतर्वेदिनिदध्यांत्परिकर्मिणेवाप्रयच्छेंदग्रेणाहवनीयंपरी

त्यंसमिधआदध्यात्तिस्रस्तिस्रउदङ्मुखस्तिष्ठन्प्रथमांसमंत्रामाहवनीयेदीदिहीतिंगार्हपत्येंदीदायेतिंदक्षिणेंदीदिदायेत्यु
क्तंपर्युक्षणंताभ्यांपरिसमूहनेंपूर्वेतुपर्युक्षणादेवंप्रातरुपोदयंव्युषितउदितेवासत्यऋताभ्यांत्वेतिपर्युक्षणंमोमुन्नेष्यामीत्य
तिसर्जनंहरिणींत्वासूर्यज्योतिषंमहरिष्टकामुपदधेस्वाहेतिंसमिदाधानंभूर्भुवःस्वरों३ सूर्योज्योतिर्ज्योतिःसूर्यःस्वाहेतिं
होमउन्मार्जनंच ॥ ४ ॥ प्रवत्स्यन्नग्नीन्प्रज्वल्याचम्यातिक्रम्योपतिष्ठतंआहवनीयंशंस्यपशून्मेपाहीतिंगार्हपत्यंनर्यप्रजां
मेपाहीतिदक्षिणंमथर्वपितुंमेपाहीतिंगार्हपत्याहवनीयावीक्षेतेंमान्मेमित्रावरुणौगृहान्गोपायतंयुवं ॥ अविनष्टानविह
तान्पूषैनानभिरक्षंत्वस्माकंपुनरायनादितिंयथेतंप्रत्येत्यप्रदक्षिणंपरियन्नाहवनीयमुपतिष्ठते । ममनामंप्रथमंजातवेदः
पितामाताचदधंतुर्यदग्रे ॥ तत्त्वंविभृहिपुनराममैतोस्तवाहंनामबिभराण्यग्नइतिंप्रव्रजेदनपेक्षमाणोमाप्रगामेतिसूक्तंज
पन्नारादग्निभ्योवाचंविसृजेतंसदासुगःपितुमांअस्तुपंथाइतिंपंथानमवरुह्यानुपस्थिताग्निश्चेत्प्रवासमापद्येतेहैवसंतत्रंसं
तंत्वाग्नेहृदावाचामनंसावाबिभर्मि ॥ तिरोमासंतंमाप्रहासीर्ज्योतिषात्वावैश्वानरेणोपतिष्ठतइतिंप्रतिदिशमग्नीनुपस्था
यापिपंथामगन्महीतिप्रत्येत्यसमित्पाणिर्वाग्यतोग्नीन्ज्वलतःश्रुत्वाभिक्रम्याहवनीयमीक्षेतंविश्वदानींमारभंतोनातुरेण
मनंसा ॥ अग्नेमातेप्रतिवेशारिषाम ॥ नमस्तेअस्तुमीढुषेनमस्तउपसद्वने ॥ अग्नेशुंभस्वतन्वःसंमारय्यास्मजेत्यग्निषुस
मिधउपनिधायाहवनीयमुपतिष्ठते । ममनामतवचजातवेदोवाससीइवविवसानौचरावः ॥ तेबिभृवोदक्षसेजीवसे

चंयथायथंनौतन्वौजातवेदइतितितः समिधोभ्यादध्यादाहवनीये । अगंन्मविश्ववेदसमस्मभ्यंवसुवित्तमं । अग्नेसम्रा
ळभिद्युम्नंमभिसहआयच्छस्वस्वाहेतिंगार्हपत्येयमग्निर्गृहपतिर्गार्हपत्यः प्रजायावसुवित्तमः ॥ अग्नेगृहपतेभिद्युम्नंम
भिसहआयच्छस्वस्वाहेतिदक्षिणेयमग्निःपुरीष्योरयिमान्पुष्टिवर्धनः ॥ अग्नेपुरीष्याभिद्युम्नंमभिसहआयच्छस्वस्वा
हेतिंगार्हपत्याहवनीयावीक्षेतैमान्मेमित्रावरुणौगृहानजूगुपतंयुवं ॥ अविनष्टानविहृतान्पूषैनानभ्यराक्षींदास्माकंपुन
रायनादितिंयथेतंप्रत्येत्यंप्रोष्यभूयोदशरात्रांच्चतुर्गृहीतमाज्यंजुहुयान्मनोज्योतिर्जुषतामाज्यमेंविच्छिन्नंयज्ञंसमिमंद
धातु ॥ याइष्टाउषसोयाअनिष्टास्ताःसंतनोमिहविषाघृतेनस्वाहेत्यंग्निहोत्राहोमेचप्रतिहोममेकैपरिसमुह्योदग्विहा
रादुपविश्यंभूर्भुवःस्वरितिवाचंविसृजेतंगृहानीक्षेताप्यनाहितांग्निर्गृहामाबिभीतोंपवःस्वस्त्येवोस्मासुचप्रजायध्वंमाच
वोगोपतीरिषदितिप्रपद्येतंगृहानहंसुमनसःप्रपद्येवीरघ्नोवीरवतःसुवीरान् ॥ इरांवहंतोघृतमुक्षमाणास्तेष्वहंसुमनाःसंवि
शानीतिंशिवंशग्मंशंयोःशंयोरितिंत्रिरनुवीक्षमाणोविदितमप्यलीकंनतदहर्ज्ञापयेयुर्विज्ञायतेभयंवोभयंमेस्त्वित्येवोप
तिष्ठेतंप्रवसन्प्रत्येत्याहरहर्वेति ॥ ५ ॥ अमावास्यायामपराह्णेपिंडपितृयज्ञोदक्षिणाग्नेरेकोल्मुकंप्राग्दक्षिणाप्रणयेंद्येरू
पाणिंप्रतिमुंचमानाअसुराःसंतंःस्वधयाचरंति ॥ परापुरोनिपुरोयेभरंत्यग्निष्टाल्लोकात्प्रणुदात्वस्मादितिंसर्वकर्माणितां
दिशमुपसमाधायोभौपरिस्तीर्यंदक्षिणाग्नेःप्रागुदक्प्रत्यगुदग्वैकैकशःपात्राणिसादयेच्चरुस्थालिशूर्पंस्फ्योलूखलमुसलं

स्रुवध्रुवंकृष्णाजिनंसकृदाच्छिन्नेध्ममेक्षणकमंडलूंन्दक्षिणतोग्निष्ठमारुह्यंचरुस्थालींव्रीहीणांपूर्णांनिमृजेत्परिसन्नान्निद
ध्यांत्कृष्णाजिनउलूखलंकृत्वेंतरान्पल्व्ययवहन्यांदविवेचमवहतान्सकृत्प्रक्षाल्यंदक्षिणाग्नौश्रपयेंदर्वागतिप्रणीतांत्स्फ्येन
लेखामुल्लिखेंदपहताअसुरारक्षांसिवेदिषदइतिंतामभ्युक्ष्यंसकृदाच्छिन्नैरवस्तीर्यासादयेंदभिघार्यस्थालीपाकंमाज्यंसर्पि
रनुत्पूतंनवनीतंवोत्पूतंध्रुवायामाज्यंकृत्वांदक्षिणतआंजनाभ्यंजनंकशिपूपबर्हणानिंप्राचीनावीतींध्ममुपसमाधायंमेक्ष
णेनादायांवदानसंपदाजुहुयांत्सोमायपितृमतेस्वधानमोंग्नयेकव्यवाहनायस्वधानमइतिंस्वाहाकारेणवाग्निंपूर्वंयज्ञोप
वीतीमेक्षणमनुप्रहृत्यंप्राचीनावीतींलेखांत्रिरुदकेनोपनयेंच्छुंधंतांपितरःशुंधंतांपितामहाःशुंधंतांप्रपितामहाइतिंतस्यां
पिंडान्निपृणीयांत्पराचीनपाणिःपित्रेपितामहायप्रपितामहांयैतत्तेसौयेचत्वामत्रान्वितिंतस्मैतस्मैयएषांप्रेताःस्युरिति
गाणगारिःप्रत्यक्षमितरानर्चयेंत्तदर्थत्वात्प्रेतेभ्यएवनिपृणीयादितितौल्वालिःक्रियागुणत्वादपिजीवांतआत्रिभ्यःसर्वे
भ्यएवनिपृणीयादितिगौतमःक्रियाह्यर्थकारितोंपायविशेषोजीवमृतानांनपरेभ्योऽनधिकारांन्नप्रत्यक्षंनजीवेभ्योनिपृ
णीयांन्नजीवांताहिंतेभ्योंजुहुयाज्जीवेभ्यःसर्वहुतंसर्वजीविनोंनामान्यविद्वाँस्ततपितामहप्रपितामहेति॥६॥निपृतानुमं
त्रयेतांऽत्रपितरोमादयध्वंयथाभागमावृषायध्वमितिंसव्यावृदुदङ्ङावृत्यंयथाशक्त्यप्राणन्नासित्वांभिपर्यावृत्यांमीमदंत
पितरोयथाभागमावृषायीषतेतिंचरोःप्राणभक्षंभक्षयेंन्नित्यंनिनयनंमसावभ्यंक्ष्वासावंक्ष्वेतिंपिंडेष्वभ्यंजनांजनेवासोद

द्यांदृशामूर्णास्तुकांवांपंचाशद्वर्षतायाऊर्ध्वंस्वंलोमैतद्वः पितरोवासोमानोतोन्यत्पितरोयुङ्ग्ध्वमित्यथैनानुपतिष्ठेतंन
मोवः पितरइषेनमोवः पितरऊर्जेनमोवः पितरः शुष्मायनमोवः पितरोघोरायनमोवः पितरोजीवायनमोवः पितरोरसाय ।
स्वधावः पितरोनमोवः पितरोनमएतायुष्माकंपितरइमाअस्माकंजीवावोजीवंतइहसंतः स्याम । मनोन्वाहुवामहइतिच
तिसृभिरथैनान्प्रवाहयेत्परेतनपितरः सोम्यासोगंभीरेभिः पथिभिः पूर्विणेभिः ॥ दत्त्वायास्मभ्यंद्रविणेहभद्रंरयिंचनः
सर्ववीरंनियच्छतैत्यग्निंप्रत्येयादग्नेतमद्याश्वंनस्तोमैरितिगार्हपत्यंयदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिंसिम ।
अग्निर्मातस्मादेनसोगार्हपत्यः प्रमुंचतुकरोतुमामनेनसं ॥ वीरंमेदत्तपितरइतिपिंडानांमध्यमंपत्नींप्राशयेदाधत्तपितरो
गर्भंकुमारंपुष्करस्रजं ॥ यथायमरपाअसदित्यप्स्वितरावतिप्रणीतेवांयस्यवार्गतुरंनकाम्याभावः सप्राश्नीयान्महारोगे
णवाभितप्तः प्राश्नीयादन्यतरांगतिंगच्छेत्येवमनाहिताग्निर्नित्येश्रपयित्वातिप्रणीयजुहुयाद्विवत्पात्राणामुत्सर्गस्तृणंद्वि
तीयमुद्रिक्ते ॥७॥ दर्शपूर्णमासावारप्स्यमानोऽन्वारंभणीयामग्नाविष्णूसरस्वतींसरस्वानग्निर्भगी ॥ अग्नाविष्णूसजो
षसेमावर्धंतुवांगिरः ॥ द्युम्नैर्वाजेभिरागतं । अग्नाविष्णूमहिधामप्रियंवांवीथोघृतस्यगुह्याजुषाणा ॥ दमेदमेसुष्टुतिर्वा
मियानांप्रतिवांजिह्वाघृतमुच्चरण्यत् ॥ पावकानः सरस्वतींपावीरवीकन्याचित्रायुःपीपिवांसंसरस्वतोदिव्यंसुपर्णंवाय
संबृहंतंमासवंसवितुर्यथासनोराधांस्याभरेत्याधानाद्यद्यामायवींयदिवार्थाव्यथेरन्पुनराधेयइष्टिस्तस्यांप्रयाजानुयाजा

न्विभक्तिभिर्यजेत्समिधःसमिधोग्नेग्नआज्यस्यव्यंतु । तनूनपादग्निमग्नआज्यस्यवेत्त्विळोअग्निनाग्नआज्यस्यव्यंतु ।
बर्हिरग्निरग्नआज्यस्यवेत्विति समिधाग्निंदुवस्यतेह्यूषुब्रवाणितइत्याग्नेयावाज्यभागौबुद्धिमादिंदुमंतावित्याचक्षतेतथानु
वृत्तिरिज्याचंनित्यंपूर्वमनुब्राह्मणिनौग्नआयूंषिपवसइत्युत्तरैनित्यस्तूत्तरेहविःशब्दआग्नेयंहविरधाय्यग्नेक्रतोर्भद्रस्याभि
ष्टेअद्यगीर्भिर्गृणंतएभिर्नोअर्कैरग्नेतमद्याश्वंनस्तोमैरितिसंयाज्यैदेवंबर्हिरग्नेर्वसुवनेवसुधेयस्यवेतु ॥ देवोनराशंसोग्नौव
सुवनेवसुधेयस्यवेत्विति ॥ ८ ॥ आग्रयणंव्रीहिश्यामाकयवानांसस्यंनाश्नीयादग्निहोत्रमहुत्वायदावर्षस्यतृप्तस्यादथा
ग्रयणेनयजेतापिहिदेवाआहुस्तृप्तोनूनंवर्षस्याग्रयणेनहियजतइत्यग्निहोत्रींवैनानादयित्वातस्याःपयसाजुहुयादपिवा
क्रियायवेष्विष्टिस्तुराज्ञःसर्वेषांचैकैःश्यामाकेष्ट्यांसौम्यश्चरुः सोमयास्तेमयोभुवोयातेधामानिदिवियापृथिव्यामित्यवां
तरेळायानित्यंजपमुक्त्वासव्येपाणौकृत्वेतरेणाभिमृशेत्प्रजापतयेत्वाग्रहंगृह्णामिमह्यंश्रियैमह्यंयशसेमह्यमन्नाद्याय ॥
भद्रान्नःश्रेयःसमनैष्टदेवास्त्वयावसेनसमशीमहित्वा ॥ सनोमयोभूःपितवाविशेहशंनोभवद्विपदेशंचतुष्पदइतिप्राश्या
चम्यनाभिमालभेतामोसिप्राणतदृतंब्रवीम्यमासिसर्वानसिप्रविष्टः ॥ समेजरांरोगमपनुद्यशरीरादमामएधिमामृथा
मइंद्रैत्येतेनभक्षिणोभक्षान्सर्वत्रनवभोजनेथव्रीहियवानांधाय्येविराजावग्नींद्राविंद्राग्नीवाविश्वेदेवाःसोमोयदितत्रश्या
माकोद्यावापृथिवी आधायेअग्निमिंधतेसुकर्माणःसुरुचादेवयंतोविश्वेदेवासआगतयेकेचज्मामहिनोअहिमाया

महीद्यौःपृथिवीचनंःप्रपूर्वंजेपितरानव्यसीभिरिति ॥ ९ ॥ अथकाम्याआयुष्कामेष्ट्यांजीवातुमंतावानोअग्नेसु
चेतुनात्वंसोममहेभगमित्यंग्निरायुष्मानिंद्रंस्त्रातायुंष्टेविश्वतोदधदयमग्निर्वरेण्यः ॥ पुनंस्तेप्राणआयातुपरायक्ष्मंसु
वामिते ॥ आयुर्दाअंग्नेहविषोजुषाणोघृतप्रंतीकोघृतयोनिरेधि ॥ घृतंपीत्वामधुचारुगव्यंपितेवंपुत्रमभिरक्षतादिमं ॥
त्रातारमिंद्रमवितारमिंद्रंमातेअस्यांसहसावन्परिष्टौपाहिनोअग्नेपायुभिरजस्त्रैरग्नेत्वंपारयानव्योअस्मानितिसंयाज्यै
स्वस्त्ययन्यांरक्षितवंताव्यग्नेरक्षाणोअंहसस्त्वंमःसोमविश्वतइत्यग्निःस्वस्तिमान्स्वस्तिनोदिवोअग्नेपृथिव्याआरेअस्म
दमतिमारेअंहइतिपूर्वयोक्तेसंयाज्यैपुत्रकामेष्ट्यामग्निःपुत्रीयस्मैत्वंसुकृतेजातवेदोयस्त्वाहृदाकीरिणामन्यमानोग्निस्तु
विश्रवस्तममितिद्वेसंयाज्यैआग्नेय्याउत्तरैनित्येमूर्धन्वतंस्तुभ्यंताअंगिरस्तमाश्यामतंकाममग्नेतवोतीतिकामायंवैमृध्या
उत्तरेविनइंद्रमृधोजहि मृगोनभीमःकुचरोगिरिष्ठाःसघुत्तिमिंद्रसच्युतिंप्रच्युतिंजघनंच्युतिं ॥ प्रनाकाफानआभर ॥
प्रयप्स्यन्निवसक्थ्यौविनइंद्रमृधोजहि ॥ जनीखुदद्यथासर्फमभिनःसुष्टुतिंनयेतींद्रायदात्रेपुनर्दात्रेवायानिंनोधनानि
क्रुद्धोजिनासिमन्युना ॥ इंद्रानुविद्धिनस्तान्यनेनहविषापुनः ॥ पुनर्नइंद्रोमघवाददातुंधनानिशक्रोधनीःसुराधाः ॥
अस्मद्र्यक्कृणुतांयाचितोमनःश्रुष्टीनइंद्रोहविषामृधातींत्याशानामाशापालेभ्योवाशानामाशापालेभ्यश्चतुर्भ्योअमृते
भ्यः ॥ इदंभूतस्याध्यक्षेभ्योविधेमहविषावयं ॥ विश्वाआशामधुनासंसृजाम्यनमीवाआपओषधयःसंतुसर्वाः ॥ अ

यंयजमानोमृधोव्यस्यत्वगृभीताःपशवःसंतुसर्वइतिलोकेष्टिःपृथिव्यंतरिक्षंद्यौरितिदेवताःपृथिवींमातरंमहीमंतरिक्षमु
पब्रुवे ॥ बृहतीमूतयेदिवं ॥ विश्वंबिभर्तिपृथिव्यंतरिक्षंविपप्रथे ॥ दुहेद्यौर्बृहतीपयः ॥ वर्मेमेपृथिवीमह्यंतरिक्षंस्वस्त
ये ॥ द्यौर्मेशर्ममहिश्रवइतितिस्रस्त्रयाणांप्रथमेप्रथमस्योत्तरेमध्यमस्योत्तमाप्रथमाचोत्तमस्य ॥ १० ॥ मित्रविंदामहावै
राज्यंग्निःसोमोवरुणोमित्रइंद्रोबृहस्पतिःसवितापूषासरस्वतीत्वष्टेत्येकप्रदानाः ॥ अग्निःसोमोवरुणोमित्रइंद्रोबृहस्प
तिःसवितायःसहस्री ॥ पूषानोगोभिरवसासरस्वतीत्वष्टारूपेणसमनक्तुयज्ञं ॥ प्रतिलोममादिश्ययजेद्ये३यजामहेत्वष्टा
रंसरस्वतींपूषणंसवितारंबृहस्पतिमिंद्रंमित्रंवरुणंसोमममग्निं ॥ त्वष्टारूपाणिदधतीसरस्वतीभगंपूषासवितानोददातु ॥
बृहस्पतिर्ददर्दिंद्रःसहस्रंमित्रोदातावरुणःसोमोअग्निरित्यष्टौवैराजतंत्रास्तासामाद्याःषळेकहविषःस्नुषाःश्वशुरीययाभि
चरन्यजेतेंद्रःसूरोअतरद्रजांसिस्नुषासपत्नाःश्वशुरोहमस्मि ॥ अहंशत्रून्जयामिजर्हृषाणोऽहंवाजंजयामिवाजसातौ ॥
इंद्रःसूरःप्रथमोविश्वकर्मामरुत्वाँअस्तुगणवान्सजातैः ॥ ममस्नुषाःश्वशुरस्यप्रशिष्टौसपत्नावाचंमनसउपासतां ॥
जुष्टोदमूनाअग्नेशर्धमहतेसौभगायेतिसंयाज्यैविमतानांसंमत्यर्थेसंज्ञान्यग्निर्वसुमान्सोमोरुद्रवानिंद्रोमरुत्वान्वरुणआ
दित्यवानित्येकप्रदानाः ॥ अग्निःप्रथमोवसुभिर्नोअव्यात्सोमोरुद्रैरभिरक्षतुत्मना ॥ इंद्रोमरुद्भिर्ऋतुथाकृणोत्वादित्यै
र्नोवरुणःशर्मयंसत् ॥ समग्निर्वसुभिर्नोअव्यात्संसोमोरुद्रियाभिस्तनूभिः ॥ समिंद्रोरातहव्योमरुद्भिःसमादित्यैर्वरु

णोविश्ववेदाइंत्यैंद्रामारुतींभेदकामांमरुतोयस्यहिक्षयैंप्रशर्धायमारुतायस्वभानवइंत्यैंद्रीमनूच्यमारुत्यायजेन्मांरुतीम
नूच्यैंद्मायजेंदिंद्रंपूर्वंनिगमेषुंमरुतोवेंद्रंवांप्रदानादूर्ध्वंमरुतंःप्रकृत्यासंपत्तिकामांःसंज्ञानींचैंद्राबार्हस्पत्यांप्रधृष्यमाणां
आनइंद्राबृहस्पतींअस्मेइंद्राबृहस्पतीइंतिंयद्यपींद्रायचोदयेयुः ॥ ११ ॥ पवित्रेष्ट्यामुपामिदंन्ययंनंसमुद्रस्यंनिवे
शंनं ॥ अन्यंतेंअस्मत्तंपंतुहेतयंःपावकोअस्मभ्यंशिवोभंव ॥ नमंस्तेहरसेशोचिषेनमंस्तेअस्त्वर्चिषें ॥ अन्यंतेंअस्मत्तंपंतु
हेतयंःपावकोअस्मभ्यंशिवोभवेतिंपावकवत्यौधाय्यैंपावकवंतावाज्यभागांवग्नीरक्षांसिसेधतिंयोधारयापावकयेत्यृचौ
याज्येंयत्तेपवित्रमर्चिष्यांकलशेषुधावतीतिंपवित्रइत्येतेग्निःपवमानःसरस्वतींप्रियाअग्निःपावकंःसवितासत्यप्रसवोंग्निः
शुचिर्वायुर्नियुत्वांनग्निर्व्रतपतिर्दधिक्रावांग्निर्वैश्वानरोविष्णुःशिपिविष्टऽउतनःप्रियाप्रियास्विमाजुह्वानायुष्मदानमो
भिर्वायुरग्रेगायज्ञप्रींर्वायोशुक्रोअयामितेंदधिक्राव्णोअकारिषंमादधिक्राःशवसापंचकृष्टींर्जुष्टोदमूनांऽअग्नेशर्धमहते
सौभगायेतिसंयाज्येंसैषासंवत्सरमतिप्रवसतंःशुद्धिकामोवांतदेषाभियज्ञगाथागीयते ॥ वैश्वानरींव्रातपतींपवित्रेष्टिंत
थैवच ॥ ऋतावृतौप्रयुंजानंःपुनातिदशपौरुषमिति ॥ १२ ॥ वर्षकामेष्टिःकारीरींतस्यांप्रतित्यंचारुमध्वरंमीळेअग्निं
स्ववसंनमोभिरितिधाय्यैंयाःकाश्चवर्षकामेष्ट्यौप्सुमंतावप्स्वग्नेसधिष्टवांप्सुमेसोमोऽअब्रवीदिंत्यग्निर्धामच्छन्मरुतंःसूर्य
स्तिस्रश्चपिंड्यउत्तरांहिरण्यकेशोरजसोविसारइतिंद्वैतंवंत्याचिदच्युतांधामंतेविश्वंभुवनमधिश्रितमितिवांवाश्रेवविद्यु

न्मिमार्तिपर्वतश्चिन्महिवृद्धोविभायंसृजंतिरश्मिमोजसांवहिष्ठेभिर्विहरन्यासितंतुंमुदीरयथामरुतःसमुद्रतःप्रवोमरुत
स्तविषाउदन्यवंआयंनरःसुदानवोददाशुषेविद्युन्महसोनरोअश्मदिद्यवःकृष्णंनियानंहरयःसुपर्णानियुत्वंतोग्रामजितो
यथानरोऽग्नेबाधस्वविमृधोविदुर्गहायंत्वादेवापिःशुशुचानोअग्नइतिसंयाज्यैर्ऋचोनूच्ययजुर्भिरेकेयजंतिसंस्थितायांस
र्वादिशउपतिष्ठेतांच्छावदतवसंगीर्भिराभिरितिचतसृभिःप्रत्यृचंसूक्तेनसूक्तेनवा ॥ १३ ॥ अतऊर्ध्वमिष्ठ्ययनानिसांव
त्सरिकाणितेषांफाल्गुन्यांपौर्णमास्यांचैत्र्यांवाप्रयोगस्तुरायणमग्निरिंद्रोविश्वेदेवाइतिपृथगिष्टयोऽनुसवनंमहरहरेका
वांत्रिहविर्दाक्षायणयज्ञेद्वेपौर्णमास्यौद्वेअमावास्येयजेतनित्येपूर्वेयथासंनयतोमावास्यायामुत्तरयोरैंद्रंपौर्णमास्यांद्विती
यंमैत्रावरुणंममावास्यायामानोमित्रावरुणायद्वंहिष्ठंनातिविधेसुदानूइतिप्राजापत्यइळादधःप्रजापतेनत्वदेतान्यन्यं
स्तवेमेलोकाःप्रदिशोदिशश्चपरावतोनिवतउद्वतश्च ॥ प्रजापतेविश्वसृज्जीवधन्यंइदंनोदेवप्रतिहर्यहव्यमितिद्यावापृथि
व्योरयनेपौर्णमासेनामावास्यादामावास्येनापौर्णमासादसमाम्नातास्वर्थात्तंत्रविकारोध्वर्युर्वायथास्मरेद्वैराजंत्वग्निमं
थनेधाय्येत्वेवैकेदेवतलक्षणायाज्यानुवाक्यागायत्र्यावतीहूतवत्युपोत्तवतींपुरस्ताल्लक्षणानुवाक्यात्रिष्टुब्वतीवीतवतीं
जुष्टवत्युपरिष्टाल्लक्षणायाज्यापिवान्यस्यछंदसोनतुयाज्याह्सीयसीनोष्णिङ्नबृहतीक्षामनष्टहतदग्धवतीस्तुवर्जयेद्व्य
क्तेतुदैवतेतथैवलक्षणमपिवाव्यक्तेनधिगच्छेन्सर्वशोनधिगमआग्नेयीभ्यांव्याहृतिभिर्वादेवतामादिश्यप्रणुयाद्यजेच्चन

म्राभ्यांवेमुमाशृंणुधीहवंयंत्वांगीर्भिर्हवामहे ॥ एदंबर्हिर्निषीदनः ॥ स्तीर्णंबर्हिरानुषगासदेतदुपेळांनाइहनोअद्यगच्छ ॥
अहेळतामनंसेदंजुषस्वंवीहिहव्यंप्रयतमाहुतंमइतिनम्रैआग्नेय्यावनिरुक्ते ॥ १४ ॥ चातुर्मास्यानिप्रयोक्ष्यमाणःपूर्वेद्यु
वैश्वानरपार्जन्यांवैश्वानरोअंजीजनदग्निर्नोनव्यंसीमतिं ॥ क्षमयांवृधानओजंसा ॥ पृष्टोदिविपृष्टोअग्निःपृथिव्यांपर्ज
न्यायप्रगायतंप्रवातावांतिपतयंतिविद्युतइत्यन्वाधेयप्रभृत्यातउपाँशुहविषंःसौमिक्यःप्रायश्चित्तिक्यौन्वायात्यैककपा
लांःसर्वत्रवारुणवर्जंसावित्रश्चातुर्मास्येषुप्रधानहवींषिचैकैंपित्र्योपसदःसतंत्रांःपौनराधेयिकीचंप्रागुत्तमादनुयाजांदपि
वासुमंद्रतंत्रा आगूंःप्रणववषट्कारा उच्चैःसर्वत्रंतथाग्रयणेग्रियमाहार्यस्तुंप्राणसंततःप्रणवःपुरोनुवाक्यायांस्तथागूर्वष
ट्कारौयाज्यायांस्तंत्रस्वराण्युपांशोरुच्चानिंमंद्राण्युपांशुतंत्राणां ॥ १५ ॥ प्रातर्वैश्वदेव्यांप्रेषितोंऽग्निमंथनीयाअन्वाहं
पश्चात्सामिधेनीस्थानस्यंपदमात्रेवस्थायाभिहिंकृत्यांभित्वादेवसवितंर्महीद्यौःपृथिवीचनंस्त्वामग्नेपुष्करादधीतितिसृ
णांमर्धर्चंशिष्ट्वारमेदासंप्रैषांदन्यत्राप्यंतर्ऋचोवसानैंजायमानेत्वेतस्मिन्नेवावसानैंग्नेहंसिन्यत्रिणमितिंसूक्तमावपेतंपुनः
पुनराजन्मनोजातंश्रुत्वांनंतरेणप्रणवेनशिष्टमुपसंतनुयांच्छिष्टेनोत्तरांमुतब्रुवंतुजंतवंआयंहस्तेनखादिनमित्यर्धर्चंआर
मेत्प्रदेवंदेववीतयइतिद्वेंअग्निनाग्निःसमिध्यतेंत्वंह्यग्नेअग्निनांतंमर्जयंतसुक्रतुंयज्ञेनयज्ञमयजंतदेवाइतिपरिदध्यांत्सर्व
त्रोत्तमांपरिधानीयेतिविद्यांद्धाय्येविराजौनवप्रयाजांःप्रागुत्तमाच्चतुरआवपेतंदुरोअग्नआज्यस्यव्यंतूंषासानक्ताग्नआ

ज्यस्यवीतांदैव्याहोताराग्नआज्यस्यवीतांतिस्रोदेवीरग्नआज्यस्यव्यंत्वित्यग्निःसोमःसवितासरस्वतींपूषामरुतःस्वतव सोविश्वेदेवाद्यावापृथिवींआविश्वदेवंसत्पतिंवाममद्यसवितर्वाममुर्श्वःपूषंतवव्रतेवयंशुक्रंतेअन्यद्यजतंतेअन्यंदिहेहवः स्वतवसःप्रचित्रमर्कंगृणतेतुरायेतिनवानुयाजाःषळूर्ध्वंप्रथमांदेवीर्द्वारोवसुवनेवसुधेयस्यव्यंतु । देवीउषासानक्तावसु वनेवसुधेयस्यवीतां । देवीजोष्ट्रीवसुवनेवसुधेयस्यवीतां । देवीऊर्जाहुतीवसुवनेवसुधेयस्यवीतां । देवादैव्याहोताराव सुवनेवसुधेयस्यवीतां । देवीस्तिस्रस्तिस्रोदेवीर्वसुवनेवसुधेयस्यव्यंत्वित्यनुयाजानांसूक्तवाकस्यशंयुवाकस्यवोपरिष्टाद्वा जिभ्योवाजिनमनावाह्यादेशंशंनोभवंतुवाजिनोहवेषुवाजेवाजेवतवाजिनोनईत्यूर्ध्वज्ञुरनवानंयाज्याग्नेवीहीत्यनुवषट् कारोवाजिनस्याग्नेवीहीतिवांयत्रक्वचैकसंप्रैषेद्वौवषट्कारौसमस्तावेवंतत्रद्विरनुमंत्रयेतंनचागूरुत्तरस्मिन्वाजिनभक्षमि ळामिवप्रतिगृह्योपहवमिच्छेताध्वर्यउपह्वयस्वंब्रह्मन्नुपह्वयस्वाऽग्नीदुपह्वयस्वेतियन्मेरेतःप्रसिच्यतेयद्वामेअपिगच्छति यद्वाजायतेपुनः । तेनंमाशिवमाविशतेनमावाजिनंकुरु ॥ तस्यतेवाजिपीतस्योपहूतस्योपहूतोभक्षयामीतिप्राणभक्षंभ क्षयेदेवमध्वर्युर्ब्रह्माग्नीध्रोयजमानःप्रत्यक्षमितरेचदीक्षिताः । पौर्णमासेनेष्ट्वाचातुर्मास्यव्रतान्युपेयात्केशान्निवर्तयीतश्म श्रूणिवापयीताधःशयीतमधुमांसलवणक्षयवलेखनानिवर्जयेदृतौभार्यामुपेयाद्वापनंसर्वेषुपर्वस्वाद्योत्तमयोर्वा ॥ १६ ॥ पंचम्यांपौर्णमास्यांवरुणप्रघासैःपश्चाद्द्वार्पौर्णमासिकायावेदेरुपरिष्टात्प्रेषितोग्निप्रणयनीयाःप्रतिपद्यतेप्रदेवंदेव्याधिये

तितिस्रइळायास्त्वापदेवयंमग्नेविश्वेभिःस्वनीकदेवैरित्यर्धर्चआरभेदासीनःप्रथमामन्वाहोंपांशुसप्रणवांतत्रस्थानात्स्था
नसंक्रमणेप्रणवेनावसायांनुच्छ्वस्योत्तरांप्रतिपद्यतेप्राणसंततंभवतीतिविज्ञायतउत्तरमग्निमनुव्रजन्नुत्तरांइमंमहेविदथ्या
यशूर्पमयमिहप्रथमोधायिधातृभिरिरितिुंराजन्यवैश्ययोराद्यैपश्चादुत्तरस्यावेदेरवस्थायोंत्तरवेदेस्तुसोमेषुनिहितेग्नौसी
दहोतःस्वउलोकेचिकित्वांन्निहोताहोतृषदनेविदानइतिद्वेपरिधायतस्मिन्नेवासनउपविश्यभूर्भुवःस्वरितिवाचंविसृजे
तान्यत्रापियत्रानुब्रुवन्ननुव्रजेत्तिष्ठत्संप्रैषेषुतथैववाग्विसर्गोऽग्निमंथनादिसमानावैश्वदेव्यांहविषांतुस्थानेषष्ठप्रभृतीनां
मिंद्राग्नीमरुतोवरुणःकः ॥ इंद्राग्नीअवसागतंश्नथंद्धूत्रमुतसंनोतिवाजंमरुतोयस्यहिक्षयेराइवेदचंरसा अहेवेमंमेवरुणश्रु
धितत्त्वायामिब्रह्मणावंदमानःकयानश्चित्रआभुवद्धिरण्यगर्भःसमवर्तताग्रइतिप्रतिप्रस्थातावाजिनेतृतीयःसंस्थिता
यामवभृथंव्रजंतितत्रावभृथेष्टिःकृताकृतातामुपरिष्टाद्व्याख्यास्यामोद्वयोर्मासयोरैंद्राग्नःपशुः ॥ १७॥ तथाततःसाकमे
धाःपूर्वेद्युस्तिस्रइष्टयोनुसवनंप्रथमायामग्निरनीकवाननीकवंतमूतयेग्निंगीर्भिर्हवामहे । सनःपर्षदतिद्विषः । सैनानीकेन
सुविदत्रोअस्मेइत्युत्तरस्यांवृधन्वंतौमरुतःसांतपनाःसांतपनाइदंहविर्योनोमरुतोअभिदुर्हणायुरितिमरुद्भ्योगृहमेधेभ्यं
उत्तराज्यभागप्रभृतीळांतांगृहमेधासआगतंप्रबुध्न्यावईरतेमहांसीतिपुष्टिमंतौविराजौसंयाज्येअनिगदेअन्यत्राप्यना
वाहनंआवहनेपिपित्र्यायांपशौचंबहुचैतस्यांरात्र्यामन्नंप्रसुवीरंस्तस्याविवासेपौर्णदर्वंजुहुयुंरृषभेरवाणेस्तनयित्नौवाग्नी

ध्रंहैकेरावयंतिब्रह्मपुत्रंवदंतौयदिहोतारंचोदयेयुस्तस्ययाज्यानुवाक्ये ॥ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो ॥ देहिमेददामितेनिमेधेहिनितेदधे ॥ अपामिक्ष्यसिवसंभरकौवाददद्देददादितिमरुद्भ्यःक्रीळिभ्यउत्तरौतन्नुवंतुजंतवोयंक्रतुरगृभीतइतिपरोक्षवाक्त्रिज्ञौक्रीळंवःशर्धोमारुतमत्यासोनयेमरुतःस्वंचोजुष्टोदमूनाअग्नेशर्धमहतेसौभगायेतिसंयाज्यैवाजिनावभृथवर्जंमाहेन्द्रुक्तावरुणप्रघासैर्हविषांतुसप्तमादीनांस्थानइंद्रोवृत्रहेंद्रोमहेंद्रोवाविश्वकर्मातूनइंद्रवृत्रहंन्ननुतेदायिमहइंद्रियायविश्वकर्मन्हविषावावृधानोयातेधामानिपरमाणियावमंति ॥ १८ ॥ दक्षिणाग्नेरग्निमतिप्रणीयपित्र्यांसाशय्वंतालुप्तजपाहोतारमवृथावषट्कारानुमंत्रणाभिहिंकारवर्जंतस्यांप्रांचिकर्माणिदक्षिणेतराणितथान्वयंमुशंतस्त्वानिधीमहीत्येतांत्रिरनवानंताःसामिधेन्यस्तासामुत्तमेनप्रणवेनावहदेवान्पितॄन्यजमानायेतिप्रतिपत्तिरग्निहोत्रायावहस्वंमहिमानमावहेत्येतस्यस्थानेग्निंकव्यवाहनमावाहयेदुत्तमेचैनंप्रयाजेप्रागाज्यपेभ्योनिगमयेत्सूक्तवाकेचाग्निर्होत्रेणेत्येतस्यस्थानेनेहप्रादेशोनबर्हिष्मंतौप्रयाजानुयाजौनेळायांभक्षभक्षणंनमार्जनंनसूक्तवाकेनामादेशईक्षितःसीदहोतरितिवोक्तउपविशेज्जीवातुमंतौसव्योत्तर्युपस्थाःप्राचीनावीतिनोहविर्भिश्चरंतिदक्षिणआग्नीध्रउत्तरोध्वर्युर्द्वेद्वेअनुवाक्येअध्यर्धामनवानंमोस्वधेत्याश्रावणमस्तुस्वधेतिप्रत्याश्रावणमनुस्वधास्वधेतिसंप्रैषोयेस्वधेत्यागूर्येस्वधामहइतिवास्वधानमइतिवषट्कारोनित्याःप्रतयःपितरःसोमवंतःसोमोवापितृमान्पितरोवर्हिषदःपितरो

ग्निष्वात्तायमं उदीरतामवर उत्परासस्त्वयाहिनः पितरः सोमपूर्वंउपहूताः पितरः सोम्यासस्त्वंसोमप्रचिकितोमनीषासो मोधेनुंसोमोअर्वंतमाशुंत्वंसोमपितृभिः संविदानौवर्हिषदः पितरऊत्यर्वांगाहंपितृन्त्सुविदत्राँ अवित्सींदंपितृभ्योनमोअ स्त्वद्यांग्निष्वात्ताः पितरएहगच्छतंयेचेहपितरोयेचनेहंयेअग्निदग्धायेअनग्निदग्धाइमंयमप्रस्तरमाहिसीदेतिद्वेपरेयिवां संप्रवतोमहीरनुंवैवस्वतायचेन्मध्यमायाज्यांयेतातृषुर्देवत्राजेहमानास्त्वदग्नेकाव्यात्वन्मनीषाः सप्रत्नथासहसाजाय मानइंत्यग्निः स्विष्टकृत्कव्यवाहनः प्रकृत्यातऊर्ध्वंवषट्कारक्रियायांचोर्ध्वमाज्यभागाभ्यामन्यन्मंत्रलोपादेकैकाचानु वाक्यांयोअग्निः कव्यवाहनंस्त्वमग्नईळितोजातवेदइतिसंयाज्यैभक्षेषुप्राणभक्षान्भक्षयित्वावर्हिष्यनुप्रहरेयुः संस्थिता यांप्राग्वानुयाजाभ्यांदक्षिणावृतोदक्षिणाग्निमुपतिष्ठंतेनावृत्यानतिप्रणीतचर्यायामयाविष्ठाजनयत्कर्वराणिसहिघृणिरु रुर्वरायगातुः। सप्रत्युदैद्धरुणंमध्वोअग्रंस्वांयत्तनूंतन्वामैरयतेत्यावृत्यत्वेवेतरावाहवनीयंसुसंदृशंत्वेतिपंक्त्यागार्हपत्यं मग्निंतमन्यइत्यथैनमभिसमायंतिमाप्रगामाग्नेत्वंनइतिजपंतः पूर्वेणगार्हपत्यंसूक्तेसमाप्यसव्यावृतरूयंवकान्व्रजांतितत्रा ध्वर्यवः कर्माधीयतेप्रत्येत्यादित्ययाचरंतिपुष्टिमंतौधाय्येविराजौ ॥ १९ ॥ पंचम्यांपौर्णमास्यांशुनासीरीययावाग्य थोपपत्तिवावाजिनवर्जंसमानावैश्वदेव्याहविषांतुस्थानेषष्ठप्रभृतीनांवायुर्नियुत्वान्वायुर्वाशुनासीराविंद्रोवाशुनासीर इंद्रोवाशुनः सूर्यउत्तम्आवांयोभूषशुचिपाउपनः प्रयाभिर्यासिदाश्वांसमच्छसत्वंनोदेवमनंसेशानायप्रहुतिंयस्तआनट्

शुनासीराविमांवाचंजुषेथांशुनंनःफालाविकृषंतुभूमिमिंद्रंवयंशुनासीरमस्मिन्यज्ञेहवामहे ॥ सवाजेषुप्रनोविषत् ॥ अश्वायंतोगव्यंतोवाजयंतःशुनंहुवेममघवानमिंद्रमश्वायंतोगव्यंतोवाजयंतस्तरणिर्विश्वदर्शतश्चित्रंदेवानामुदगाद नीकमितियाज्यानुवाक्याःसमाप्यसोमेनयजेताशक्तौपशुनाचातुर्मास्यानिवापुनश्चातुर्मास्यानिवापुनः ॥ २० ॥ ॥ इत्याश्वलायनश्रौतसूत्रेपूर्वषट्केद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥

हरिःॐ३म् ॥ पशाविष्टिरुभयतोन्यतरतोवाग्नेयीवाग्नावैष्णवीवोभेवान्यत्तरापुरस्तादुक्तमग्निप्रणयनंपश्चात्पाशुवं धिकायावेदेरुपविश्यप्रेषितोयूपायाज्यमानायांजंतित्वामध्वरेदेवयंतइत्युत्तमेनवचनेनार्धर्चआरमेदुच्छ्रयस्ववनस्पते समिद्धस्यश्रयमाणःपुरस्तादूर्ध्वऊषुणऊतयइतिद्वेजातोजायतेसुदिनत्वेअह्नामित्यर्धर्चआरमेद्युवासुवासाःपरिवीतआ गादितिपरिदध्याद्यत्रैकतंत्रेबहवःसपशवोत्यंपरिधायसंस्तुयादनभिहिंकृत्ययान्वोनरोदेवयंतोनिमिम्युरितिषड्भिःपंच भिर्वानभ्यासमेकउक्तमग्निमंथनंतथाधाय्येकृताकृतावाज्यभागावावाहनेपशुदेवताभ्योवनस्पतिमनंतरंसंमार्गैःसंमृ ज्यप्रवृताहुतीर्जुहुयाज्जुष्टोवाचेभूयासंजुष्टोवाचस्पतयेदेविवाक् ॥ यद्वाचोमधुमत्तमंतस्मिन्माधाःसरस्वत्यैवाचेस्वा हा ॥ पुनरादायपंचविग्राहंस्वाहावाचेस्वाहावाचस्पतयेस्वाहासरस्वत्यैस्वाहासरस्वतेमहोभ्यःसंमहोभ्यःस्वाहेतिसो मएवैकेप्रशास्तारंतीर्थेनप्रपाद्यदंडमस्मैप्रयच्छेद्दक्षिणोत्तराभ्यांपाणिभ्यांमित्रावरुणयोस्त्वावाहुभ्यांप्रशास्त्रोःप्रशिषाप्र

॥ १९ ॥

यच्छामीतितथायुक्ताभ्यामेवेतरौमित्रावरुणयोस्त्वाबाहुभ्यांप्रशास्त्रोःप्रशिषाप्रतिगृह्णाम्यवक्रोविथुरोभूयासमितिप्र
तिगृह्योत्तरेणंहोतारमतिव्रजेद्दक्षिणेनदंडंहरेन्नचानेनसंस्पृशेदात्मानंवान्यंवाप्रैषवचनादन्यान्यपियज्ञांगान्युपयुक्ता
निनविहारेणव्यवेयाद्दक्षिणोहोतृषदनात्प्रह्वोवस्थायवेद्यांदंडमवष्टभ्यब्रूयात्प्रैषांश्चादेशमनुवाक्यांचसप्रैषेपूर्वांप्रैषात्पर्य
ग्निस्तोकमनोतोन्नीयमानसूक्तानिचसोमआसीनोन्यत् ॥१॥ एकादशप्रयाजांस्तेषांप्रैषाःप्रथमंप्रैषसूक्तमुक्तंद्वितीयेध्वर्यु
प्रेषितोमैत्रावरुणःप्रेष्यतिप्रैषैर्होतारंहोतायजत्याप्रीभिःप्रैषसलिंगाभिःसमिद्धोअग्निरितिशुनकानांजुषस्वनःसमिधमि
तिवसिष्ठानांसमिद्धोअद्येतिसर्वेषांयथऋषिवाप्राजापत्येतुजामदग्न्यंःसर्वेषांदशसूक्तेषुप्रेषितोमैत्रावरुणोग्निर्होतानइ
तितृचंपर्यग्नयेन्वाहाध्रिगवेप्रेष्योपप्रेष्यहोतरितिवोक्तोजैदग्निरसनद्वाजमितिप्रैषमुक्त्वांतर्वेदिदंडंनिदध्याद्दध्रिगुंहोतो
हनंगानिदैवतंपशुमितियथार्थंपुंवन्मिथुनेमेधपतींमेधायांविकल्पोयथार्थमूर्ध्वमध्रिगोरन्यन्मिथुनेभ्यःसर्वेषुयजुर्निग
देषुप्रकृतौसमर्थनिगमेषुप्राकृतास्त्वेवमंत्राणांशब्दाःप्रतिनिधिष्वपिनाभिरुपमामेदोहविरित्यनूह्यानि ॥ २ ॥ दैव्याः
शमितारआरभध्वंमुतमनुष्याउपनयतमेध्यादुरआशासानामेधपतिभ्यांमेधम् ॥ प्रास्माअग्निंभरतस्तृणीतबर्हिरन्वेनं
मातामन्यतांमनुपितानुभ्रातांसगर्भ्योनुसखासयूथ्यः ॥ उदीचीनांअस्यपदोनिधत्तात्सूर्यंचक्षुर्गमयताद्वातंप्राणमन्व
वसृजतादंतरिक्षमसुंदिशःश्रोत्रंपृथिवींशरीरं ॥ एकधास्यत्वचमाच्छ्यतात्पुरानाभ्याअपिशसोवपामुत्खिदतादंतरेवो

ष्माणंवारयध्वात् ॥ श्येनमस्यवक्षःकृणतात्प्रशसाबाहूशलादोषणीकश्यपेवांसाच्छिद्रेश्रोणीकवषोरूस्रेकपर्णाष्ठीवंता षड्विंशतिरस्यवंक्रयस्ताअनुष्ठ्योच्यावयताद्गात्रंगात्रमस्यानूनंकृणुतात् ॥ ऊवध्यगोहंपार्थिवंखनतात् ॥ अस्नारक्षः संसृजतात् ॥ वनिष्ठुमस्यमाराविष्टोरूकंमन्यमानानेद्वस्तोकेतनयैरवितारवच्छमितारः ॥ अध्रिगोशमीध्वंसुशमिशमी ध्वंशमीध्वमध्रिगा३उअपापास्नारक्षःसंसृजताच्छमितारोपापेत्युपांश्वेकधाषड्विंशतिरितिद्विर्द्विर्बहूनांपुरांतरितिचैके ध्रिग्वादितित्रिरुक्त्वांशमितारोयदत्रसुकृतंकृणवथास्मासुतद्यद्दुष्कृतंमन्यत्रतदितिजपित्वांदक्षिणावृदावर्ततेमैत्रावरु णश्चसव्यावृतौब्रह्मयजमानौसंज्ञप्तेपशावावर्तेरन् ॥ ३ ॥ वपायांश्रप्यमाणायांप्रेषितस्तोकेभ्योन्वाहजुषस्वसप्रथस्तमं मिमंनोयज्ञमित्युक्तमादापनंस्वाहाकृतिभ्योहोतायक्षदग्निंस्वाहाज्यस्यस्वाहामेदसइतिप्रैषंउत्तमाप्रीयाज्यांवपापुरोळा शोहविरितिपशोःप्रदानानिंतानिपृथङ्नानादेवतेषुमनोतांचनमनोतावर्तेततत्येकेतेषांसालिंगाःप्रैषांस्तेष्वग्नीषोमयोःस्थाने यायापशुदेवताछागस्थानेउस्रोगौर्मेषोविकोहयोश्वोन्वादेशेव्यक्तचोदनामेवंवनस्पतिःस्विष्टकृत्सूक्तवाकप्रैषेषुप्राजाप त्येत्वग्निचित्यासंयुक्तेवायव्यंपशुपुरोळाशमेकेवायव्येप्राजापत्यंतेनपशुदेवतावर्धतइत्याचार्याःपुरोळाशतत्प्रधानत्वा त्पुरोळाशनिगमेषुपुरोळाशवद्धवींष्याज्यवर्जंयेषांतेनसमवत्तहोमोमेधोरभीयानितिपश्वभिधानेआदद्धसकरंजुषताम घदग्रभींदवीवृधतेतिदेवतानां ॥४॥ हुतायांवपायां[illegible]र्जयंतेनिधायदंडंमैत्रावरुणंइदमापःप्रवहतंसु

मित्र्यानआपओषधयःसंतुंदुर्मित्र्यास्तस्मैसंतुंयोस्मान्द्वेष्टियंचवयंद्विष्मंइत्येतावन्मार्जनंपश्चौतीर्थेननिष्क्रम्यांऽसीता
मापुरोळाशश्रपणात्तेनचरित्वास्विष्टकृदाचरेयुर्यदित्वन्वायात्यानितैरग्रेचरेयुर्नतुतेषांनिगमेष्वनुवृत्तिर्नान्येषामूर्ध्वमा
वाहनादुत्पन्नानांमिळामग्नेपुरुदंसंसनिंगोर्होतायक्षदग्निंपुरोळाशस्यस्वदस्वहव्यासमिषोदिदीहीतिंपुरोळाशस्विष्टकृत
ऊर्ध्वमिळायाः ॥५॥ मनोतायैसंप्रेषितंस्त्वंह्यग्नेप्रथमइत्यन्वाहहविषाचरंतितत्रप्रैषेकरतएवांग्नीषोमावेवमित्यैतरेयिणो
न्यत्रद्विदेवतान्मैत्रावरुणदेवतेचंतथादृष्टत्वात्प्रकृत्यागाणगारिरुत्पन्नानांस्मृतआम्नायेनर्थभेदेनिरर्थोविकारोयाज्या
याअंतरार्धचौवसाहोमआरमेद्वनस्पतिनाचरंतिंप्रैषमभितोयाज्यानुवाक्येयत्राग्नेराज्यस्यहविषइत्यत्राज्यभागावयाळ
ग्निरग्नेराज्यस्यहविषइतिंस्विष्टकृतीळासुपहूयांनुयाजैश्चरंतितेषांप्रैषांस्तृतीयंप्रैषसूक्तमेकादशेहप्रागुत्तमाद्वावावपेतंदे
वोवनस्पतिर्वसुवनेवसुधेयस्यवेतु ॥ देवंबर्हिर्वारितीनांवसुवनेवसुधेयस्यवेत्वित्यंनवानंप्रेष्ष्यत्यनवानंयजत्युक्तमुत्तमे
सूक्तवाकप्रैषेपूर्वस्मिन्निगमेगृह्णन्नित्यत्राज्यभागौवध्नन्नमुष्माअमुंवध्नन्नमुष्माअमुमितिंपशूंश्चदेवताश्चदेवताश्चैवैकपशु
कांःपशूंश्चैवैकदेवतानुत्तरआज्येनेत्याज्यभागावमुष्माअमुनेतिपूर्वेणोक्तंसमाप्यप्रैषंमग्नौदंडमनुप्रहरेदनवभृथेवभृथे
न्यत्रकृताकृतंवेदस्तरणंतीर्थेननिष्क्रम्याग्निपशुकेतनान्यव्ययवयंतोहृदयशूलमुपोयमानमनुमंत्रयेरन्छुगसियोस्मान्द्वेष्टि
यंचवयंद्विष्मस्तमभिशोचेतिंतस्योपरिष्टाद्दप्सुउपस्पृशंतिद्वीपेराजोवरुणस्यगृहोमितोहिरण्ययः ॥ सनोधृतव्रंतोराजाधा

न्नौधाम्नइहमुंचतु ॥ धाम्नोधाम्नोराजन्नितोवरुणनोमुंच ॥ यदापोअघ्न्याइतिवरुणेतिशपामहेततोवरुणनोमुंच ॥ मयि वापोमोषधीर्हिंसीरतोविश्वव्यंचाभूस्त्वेतोवरुणंनोमुंच ॥ सुमित्र्यानआपओषधयःसंत्वितिचास्पृष्ट्वानवेक्षमाणाअसंस्पृ शंतःप्रत्यायंतःसमिधःकुर्वतेतिस्रस्तिस्रएकैकोऽग्नेःसमिदसितेजोसितेजोमेदेहीतिप्रथमांमेधोस्येधिषीमहीतिद्वितीयांस मिदसिसमेधिषीमहीतितृतीयामेत्योपतिष्ठंतआपोअद्यान्वचारिषमितिततःसमिधोभ्यादधतियथागृहीतमग्नेःसमिद सितेजोसितेजोमेदाःस्वाहा॥सोमस्यसमिदसिदुरिष्टेर्मापाहिस्वाहा॥पितॄणांसमिदसिमृत्योर्मापाहिस्वाहेतिततःसंस्थाज पइतिपशुतंत्रं॥६॥ प्रदानानामुक्ताःप्रैषास्तेषांयाज्यानुवाक्याःसर्वेषामग्रेग्रेनुवाक्यास्ततोयाज्यादैवतेनपशुनानात्वमग्ने नयसुपथारायेअस्मानितिद्वेपाहिनोअग्नेपायुभिरजस्रैःप्रवःशुक्रायभानवेभरध्वंयथाविप्रस्यमनुषोहविर्भिःप्रकारवोमन्न नावच्यमानाएकाचेतत्सरस्वतीनदीनामुतस्यानःसरस्वतीजुषाणासरस्वत्यभिनोनेषिवस्यःप्रक्षोदसाधायसासस्रएषा पावीरवीकन्याचित्रायुर्यस्तेस्तनःशशयोयोमयोभूस्त्वंसोमप्रचिकितोमनीषेतिद्वेत्वंनःसोमविश्वतोवयोधायातेधामा निदिवियापृथिव्यामषाद्वंयुत्सुपृतनासुपप्रियातेधामानिहविषायजंतियास्तेपूषन्नावोअंतःसमुद्रइतिद्वेपूषेमाआशाअनु वेदसर्वाःशुक्रंतेअन्यद्यजतंतेअन्यत्प्रपथेपथामजनिष्टपूषाप्रपथस्पथःपरिपतिंवचस्याबृहस्पतेयापरमापरावदितिद्वेबृह स्पतेअतियदर्योअर्हाद्युमद्विभातिक्रतुमज्जनेषुयद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्रमित्यृ

त्यानोदेवानामुपवेतुशंसंआनोविश्वआस्क्रागमंतुदेवाविश्वेदेवाःश्रृणुतेमंहवंमेयेकेचज्मामहिनोअहिमायाअग्नेयाहिदू
त्यंमारिषण्यंइंद्रंनरोनेमधिताहवंतइतितिस्रउरुंनोलोकमनुनेषिविद्वान्प्रससाहिषेपुरुहूतशत्रून्त्स्वस्तयेवाजिभिश्चप्रणे
तंःशुचीवोहव्यामरुतःशुचीनांनूष्ठिरंमरुतोवीरवंतंमावोहोताजोहवीतिसत्तःप्रचित्रमर्कंगृणतेतुरायाराइवेदचरमाअ
हेवंयावःशर्मंशशमानायसंत्यावृत्रहणावृत्रहभिःशुष्मैराभरतंशिक्षतंवज्रबाहुउभावामिंदाग्नीआहुवध्यैशुचिंनुस्तोमंनव
जातमद्यंगीर्भिर्विप्रःप्रमतिमिच्छमानंःप्रचर्षणिभ्यःपृतनाहवेष्वादेवोयातुसवितासुरत्नःसघानोदेवःसवितासहावेतिद्वे
उदीरयकवितमंकवीनांभगंधियंवाजयंतःपुरंधिमितिद्वेअवसिंधुंवरुणोद्यौरिवस्थादयंसुतुभ्यंवरुणस्वधावएवावंदस्व
वरुणंबृहंतंतत्त्वायामिब्रह्मणावंदमानइतिद्वेअस्तभ्नाद्द्यामसुरोविश्ववेदाइत्यैकादशिनाः ॥ ७ ॥ अग्नीषोमाविमंसुमेयु
वमेतानिदिविरोचनानीतितृचावावांमित्रावरुणाहव्यजुष्टिमायातंमित्रावरुणासुशस्त्यानोमित्रावरुणाहव्यजुष्टिंयुवंव
स्त्राणिपीवसावसाथेप्रवाहवासिसृतंजीवसेनोयद्वंहिष्ठंनातिविधेसुदानूहिरण्यगर्भःसमवर्तताग्रइतिषट्प्राजापत्याश्चित्रं
देवानामुदगादनीकमितिपंचशंनोभवचक्षसाशंनोअह्नावायोभूषशुचिपाउपनःप्रयाभिर्यासिदाश्वांसमच्छानोनियुद्भिः
शतिनीभिरध्वरंपीवोअन्नांरयिवृधःसुमेधारायेनुयंजज्ञतूरोदसीमेप्रवायुमच्छाबृहतीमनीषातववायवृतस्पतेत्वांहिसुप्स
रस्तममितिद्वेकुविदंगनमसायेवृधासंईशानायप्रहुतियस्तआनट्प्रवीवायुरथयुजकृणुध्वमुतत्वामदितेमह्यनेहोनउरुव्र

जैंदितिर्ह्यजनिष्टंसुत्रामाणंपृथिवींद्यामनेहसंँमहीमूषुमातरंसुव्रतानांमदितिर्द्यौरदितिरंतरिक्षंनतेविष्णोजायमानोनजा
तंस्त्वंविष्णोसुमतिंविश्वजन्यांँविचक्रमेपृथिवीमेषएतांँत्रिर्देवःपृथिवीमेषएतांपरोमात्रयातन्वावृधानैंरावतीधेनुमतीहि
भूतंँविश्वकर्मन्हविषावावृधानइतिद्वेंविश्वकर्माविमनाआद्विहायाःकिंस्विदासीदधिष्ठानंयोनःपितिजनितायोविधाता
यातेधामानिपरमाणियावमायइमेद्यावापृथिवीजनित्रींतन्नस्तुरीपमधपोषयित्नुंदेवस्त्वष्टासविताविश्वरूपोंदेवत्वष्टर्यद्ध
चारुत्वमानट्पिशंगरूपःसुभरोवयोधाःप्रथमभाजंयशसंवयोधांसोमापूषणाजननारयीणामितिसूक्तंमादित्यानामव
सानूतनेनैंमागिरआदित्येभ्योघृतस्नूंस्तआदित्यासउरवोगभीराइमंस्तोमंसक्रतवोमेअद्यंतिस्रोभूमीर्धारयंतांँरुतद्यूंन्नद
क्षिणाविचिकितेनसव्यांमहीद्यावापृथिवीइहज्येष्ठेक्रतंदिवेतदवोचंपृथिव्याइतिद्वेंप्रद्यावायज्ञैःपृथिवीनमोभिरितिद्वेंप्र
द्यावायज्ञैःपृथिवीऋतावृधांमृळानोरुद्रोतनोमयस्कृधीतिद्वेंआतेपितर्मरुतांसुम्नमेतुंप्रबभ्रवेवृषभायश्वितीचइतितिस्र
आपश्चातान्नासत्यापुरस्तादागोमतानासत्यारथेनेतिचतस्रोंहिरण्यत्वङ्मधुवर्णोघृतस्नुंरभिक्रत्वेंद्रभूरधज्मंस्त्वंमहाँइंद्रतु
भ्यंहक्षाःसत्राहणंदाधृषिंतुम्रमिंद्रंसहदानुंपुरुहूतक्षियंतंस्तुतइंद्रोमघवायद्धवृत्रैवावस्वइंद्रःसत्यःसम्राञ्यद्वाग्वदंत्यवि
चेतनानिंपतंगोवाचंमनसाबिभर्तिचत्वारिवाक्परिमितापदानियज्ञेनवाचःपदवीयमायन्नितिद्वेंदेवींवाचमजनयंतदे
वांजनीयंतोन्वग्रवइतितिस्रोंदिव्यंसुपर्णवायसंबृहंतंसवावृधेनर्योयोषणासुंयस्यव्रतंपशवोयंतिसर्वेयस्यव्रतमुपतिष्ठंत

तिंदक्षिणाप्रवणेसभांमापयेंत्साद्यूताहभवतिंयुवानस्तस्याकितवाःकलहिनःप्रमायुकाभवंतिंयत्रसर्वतआपःप्रस्यंदेरं
न्तसास्वस्त्ययनंद्यूताचं ॥ ७ ॥ अथैतैर्वास्तुपरीक्षेतंजानुमात्रंगर्तंखात्वांतैरेवपांसुभिःप्रतिपूरयेंदधिकेप्रशस्तंसमेवा
तंन्यूनेगर्हितंमस्तमितेपांपूर्णंपरिवासयेंत्सोदकेप्रशस्तंमार्द्रेवातिंशुष्केगर्हितंश्वेतंमधुरास्वादंसिकतोत्तरंब्राह्मणस्यंलोहितं
क्षत्रियस्यंपीतंवैश्यस्यंतत्सहस्रसीतंकृत्वांयथादिक्समचतुरस्रंमापयेंदायतचतुरस्रंवांतच्छमीशाखयोदुंवरशाखयावांशं
तातीयेनत्रिःप्रदक्षिणंपरिव्रजन्प्रोक्षत्यविच्छिन्नयाचोदकधारयांपोहिष्ठामयोभुवइतितृचेनंवंशांतरेषुशरणानिकारयेंद्ग
तेंष्ववकांशीपालमित्यवधापयेंन्नास्यदाहुकोभवतीतिविज्ञायतेंमध्यमस्थूणायागर्तेवधार्यंप्रागग्रोदगग्रान्कुशानास्तीर्यं·
व्रीहियवमतीरपआसेचयेंदच्युतायभौमायस्वाहेंत्यथैनामुच्छ्रीयमाणामनुमंत्रयेतेंहैवतिष्ठनिमितांतिल्विलास्तामिराव
तींमंध्येपोषस्यतिष्ठंतीं॥आत्वाप्रापन्नघायर्वआत्वाकुमारस्तरुणंआवत्सोजायतांसहं॥ आत्वापरिश्रितःकुंभंआदध्नःकल
शैरयन्निति ॥८॥ वंशमाधीयमानंमृतेनस्थूणामधिरोहवंशंद्राघीयआयुःप्रतरंदधानाऽइतिंसदूर्वासुचतसृषुशिलासुंम
णिकंप्रतिष्ठापयेंत्पृथिव्याअधिसंभवेंत्यरंगरोवावदीतिंत्रेधाबद्धोवरत्रया ॥ इरामुहप्रशंसंत्यनिराममपबाधतामितिवां
थास्मिन्नपआसेचयेंदैतुराजावरुणोरेवतीभिंरस्मिंस्थानेतिष्ठतुमोदमानंः॥ इरांवहंतोघृतमुक्षमाणांमित्रेणसाकंसहसंवि
शंत्वित्यंथैनच्छमयातिंव्रीहियवमतीभिरद्भिर्हिरण्यमवधार्यंशंतातीयेनत्रिःप्रदक्षिणंपरिव्रजन्प्रोक्षंत्यविच्छिन्नयाचोदक

धारयांपोहिष्ठासमयोभुवइतितृचेनमध्येगारस्यस्थालीपाकंश्रपयित्वावास्तोष्पतेप्रतिजानीह्यस्मानितिचतसृभिःप्रत्यृचंहु
त्वान्नंसंस्कृत्यंब्राह्मणान्भोजयित्वाशिवंवास्तुशिवंवास्त्वितिवाचयीत ॥ ९ ॥ उक्तंगृहप्रपदनंवीजवतोगृहान्प्रपद्येतंक्षे
त्रंप्रकर्षयेदुत्तरैःप्रोष्ठपदैःफल्गुनीभीरोहिण्यावांक्षेत्रस्यानुवातंक्षेत्रस्यपतिनावयमितिप्रत्यृचंजुहुयाज्जपेद्वागाःप्रतिष्ठमा
नाअनुमंत्रयेतंमयोभूर्वातोऽअभिवातूस्राइतिद्वाभ्यामायतीर्यासामूधश्चतुर्विलंमधोःपूर्णंघृतस्यच ॥ तानःसंतुपयस्व
तीर्बह्वीर्गोष्ठेघृताच्यः ॥ उपमैतुमयोभुवंऊर्जंचौजश्चबिभ्रतीः ॥ दुहानाअक्षितंपयोमयिगोष्ठेनिविशध्वंयथाभवाम्यु
त्तमोयादेवेषुतन्वमैरयंतेतिचसूक्तशेषमागावीयमेकैंगणानासामुपतिष्ठेतांगुरुगवीनांभूतास्थप्रशस्तास्थशोभनाःप्रियाः
प्रियोवोभूयासंशंमयिजानीध्वंशंमयिजानीध्वं ॥ १० ॥ ॥ इतिगृह्यसूत्रेद्वितीयोऽध्यायः ॥ २ ॥ ॥

हरिः ॥ ॐ ३म् ॥ अथातःपंचयज्ञादेवयज्ञोभूतयज्ञःपितृयज्ञोब्रह्मयज्ञोमनुष्ययज्ञइतितद्यदग्नौजुहोतिसदेवयज्ञो
यद्बलिंकरोतिसभूतयज्ञोयत्पितृभ्योददातिसपितृयज्ञोयत्स्वाध्यायमधीतेसब्रह्मयज्ञोयन्मनुष्येभ्योददातिसमनुष्ययज्ञ
इतितानेतान्यज्ञानहरहःकुर्वीत ॥ १ ॥ अथस्वाध्यायविधिःप्राग्वोदग्वाग्रामान्निष्क्रम्यापआप्लुत्यशुचौदेशेयज्ञोप
वीत्याचम्याक्लिन्नवासादर्भाणांमहदुपस्तीर्यप्राक्कूलानांतेषुप्राङ्मुखउपविश्योपस्थंकृत्वादक्षिणोत्तरौपाणीसंधायपवित्रवं
तौविज्ञायतेपांवाएषऽओषधीनांरसोयद्दर्भाः... संधिमीक्षमाणःसंमील्यवायथावा

युक्तमात्मानंमन्येतंतथायुक्तोधीयीतस्वाध्यायंमोंपूर्वाव्याहृतयंःसावित्रीमन्वाहपच्छोर्धर्चशंःसर्वामितितृतीयं॥२॥अथ
स्वाध्यायमधीयीतंऋचोयजूंपिसामान्यंथर्वांगिरसोब्राह्मणानिकल्पांन्गाथानाराशंसींरितिहासपुराणानीतिंयदृचोधी
तेपयआहुतिभिरेवंतद्देवतास्तर्पयतिंयद्यजूंपिघृताहुतिभिंर्यसामानिमध्वाहुतिभिर्यदथर्वांगिरसःसोमाहुतिभिंर्यद्ब्राह्म
णानिकल्पांन्गाथानाराशंसींरितिहासपुराणानींत्यमृताहुतिभिंर्यदृचोधीतेपयसःकुल्यांअस्यपितृन्स्वधाउपक्षरंतिंयद्य
जूंषिघृतस्यकुल्यांयत्सामानिमध्वःकुल्यांयदथर्वांगिरसःसोमस्यकुल्यांयद्ब्राह्मणानिकल्पांन्गाथानाराशंसींरितिहासपु
राणानींत्यमृतस्यकुल्यांःसयावन्मन्येतंतावदधीत्येतयापरिदधातिंनमोब्रह्मणेनमोअस्त्वग्नयेंनमःपृथिव्यैनमओषधी
भ्यः॥ नमोवाचेनमोवाचस्पतयेंनमोविष्णवेमहतेकरोमीति॥३॥देवतास्तर्पयतिंप्रजापतिर्ब्रह्मावेदादेवाऋषयःसर्वाणि
च्छंदांस्योंकारोवषट्कारोंव्याहृतयःसावित्रीयज्ञांद्यावापृथिवीऽअंतरिक्षमहोरात्राणिसांख्याःसिद्धाःसमुद्रानद्योगिरयंः
क्षेत्रौषधिवनस्पतिगंधर्वाप्सरसोंनागावयांसिगावःसाध्यांविप्रायक्षारक्षांसिंभूतान्येवमंतान्यथऽऋषयंःशतर्चिनोम
ध्यमांगृत्समदोविश्वामित्रोंवामदेवोत्रिर्भरद्वाजोंवसिष्ठःप्रगाथाःपावमान्यंःक्षुद्रसूक्तामहासूक्ताइतिप्राचीनावीतींसुमं
तुजैमिनिवैशंपायनंपैलसूत्रभाष्यभारतंमहाभारतधर्माचार्याजानंतिबाहविगार्ग्यगौतमंशाकल्यबाभ्रव्यमांडव्यमांडू
केयांगर्गीवाचक्नवींवडवाप्रातीथेयींसुलभांमैत्रेयींकहोलंकौषीतकंमहाकौषीतकंपैंग्यंमहापैंग्यंसुयज्ञंसांख्यायनंमैतरेयं

महैतरेयं शाकलं बाष्कलं सुजातवक्रं मौदवाहिं महौदवाहिं सौजामिं शौनकं माश्वलायनं ये चान्ये ऽआचार्यास्ते सर्वे तृप्यन्त्विति प्रतिपुरुषं पितृंस्तर्पयित्वा गृहानेत्य यद्ददाति सा दक्षिणा ॥ थापि विज्ञायते सयदि तिष्ठन्व्रजन्नासीनः शयानो वा यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टं भवतीति विज्ञायते तस्य द्वावनध्यायौ यदात्माशुचिर्यद्देशः ॥४॥ अथातोध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रवणेन श्रावणस्य पंचम्यां हस्तेन वाज्यभागौ हुत्वाज्याहुतीर्जुहुयात्सावित्र्यै ब्रह्मणे श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेनुमतये छंदोभ्य ऽऋषिभ्यश्चेत्यथ दधिसक्तूजुहोत्यग्निमीळे पुरोहितमित्येका कुशुंभकस्तदब्रवीदावदंस्त्वं शकुने भद्रमावद गृणाना जमदग्निना धामंते विश्वं भुवनमधिश्रितं गंता नो यज्ञं यज्ञियाः सुशर्मि यो नस्वो ऽअरणः प्रतिचक्ष्व विचक्ष्वाग्ने याहि मरुत्सखा यत्ते राजन्छृतं हविरिति द्वृचाः समानीव ऽआकूतिरित्येका तच्छंयोरावृणीमह इत्येकाध्येष्यमाणोध्याप्यैरन्वारब्ध एताभ्यो देवताभ्यो हुत्वा सौविष्टकृतं हुत्वा दधिसक्तून्प्राश्य ततो मार्जनमपरेणाग्निं प्राक्कूलेषु दर्भेषूपविश्योदपात्रे दर्भान्कृत्वा ब्रह्मांजलिकृतो जपेदोंपूर्वा व्याहृतयः सावित्रीं च त्रिरभ्यस्य वेदादिमारभेत्तथोत्सर्गे षण्मासानधीयीत संमावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयेत्येके प्राजापत्यं तद्वार्षिकमित्येतदाचक्षते मध्यमाष्टकायामेताभ्यो देवताभ्योन्नेन हुत्वापोभ्यवयंत्येता एव तद्देवतास्तर्पयंत्याचार्यानृषीन्पितृंश्चैतदुत्सर्जनं ॥५॥ अथ काम्यानां स्थाने काम्याश्चर्वस्तानेव कामानाप्नोत्यथ व्याधितस्यातुरस्य यक्ष्मगृहीतस्य वाषळाहुतिश्चरुर्मुंचामि त्वा हविषा जीवनाय कमित्येतेन स्वप्नम

मनोज्ञं दृष्ट्वा द्यानो देवः सवितरिति द्वाभ्यां यच्च गोषु दुःस्वप्न्यमिति पंचभिरादित्यमुपतिष्ठेत यो मे राजन्युज्यो वा सखा वेति वा क्षुत्वा जृंभित्वा मनोज्ञं दृष्ट्वा पापकं गंधमाघ्राय अक्षिस्पंदने कर्णध्वनने च सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां मयि दक्षक्रतू इति जपेद् गमनीयां गत्वा याज्यं याजयित्वा भोज्यं भुक्त्वा प्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं वोपहत्य पुनर्मामैत्विंद्रियं पुनरायुः पुनर्भगः॥ पुनर्द्रविणमैतु मां पुनर्ब्राह्मणमैतु मां स्वाहा॥ इमे ये धिष्ण्यासो अग्नयो यथास्थानमिह कल्पतां ॥ वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो हृद्यंतरमृतस्य केतुः स्वाहेत्याज्याहुतीर्जुहुयात्समिधौ वा जपेद्वा ॥ ६ ॥ अभ्याधितं चेत्स्वपंतमादित्योऽभ्यस्तमियाद्वाग्यतोऽनुपविशन्रात्रिशेषं भूत्वा येन सूर्यज्योतिषा बाधसे तम इति पंचभिरादित्यमुपतिष्ठेताभ्युदियाच्चेदकर्मश्रांतमनभिरूपेण कर्मणा वाग्यत इति समानमुत्तराभिश्चतसृभिरुपस्थानं यज्ञोपवीती नित्योदकः संध्यामुपासीत वाग्यतः सायमुत्तरापराभिमुखोऽन्वष्टमदेशं सावित्रीं जपेदर्धास्तमिते मंडल आनक्षत्रदर्शनादेवं प्रातः प्राङ्मुखस्तिष्ठन्नामंडलदर्शनात्कपोतश्चेदगारमुपहन्याद् अनुपतेद्वा देवाः कपोत इति प्रत्यृचं जुहुयाज्जपेद्वा वयमुत्वा पथस्पत इत्यर्थचर्यां चरिष्यन् संपूषन्विदुष इति नष्टमधिजिगमिषन्मूढो वा संपूषन्नध्वन इति महांतमध्वानमेष्यन्प्रतिभयं वा ॥ ७ ॥ अथैतान्युपकल्पयीत समावर्तमानो मणिं कुंडले वस्त्रयुगं छत्रमुपानद्युगं दंडं स्रजमुन्मर्दनमनुलेपनमांजनमुष्णीषमित्यात्मने चाचार्याय च यद्युभयोर्न विंदेताचार्यायैव समिधं त्वाहरेदपराजितायां दिशि यज्ञियस्य वृक्षस्यार्द्रामन्नाद्यकामः पुष्टिकामस्तेजस्कामो

वांब्रह्मवर्चसकामंउपवातामुभयीमुभयकामंउपरिसमिधंकृत्वांगामन्नंचब्राह्मणेभ्यःप्रदायंगौदानिकंकर्मकुर्वीतांत्मनि
मंत्रान्त्सन्नमयेंदेकक्रीतकेनंशीतोष्णाभिरद्भिःस्नात्वांयुवंवस्त्राणिपीवसावसाथेइंत्यहतेनवाससीआच्छाद्यांश्मनस्तेजो
सिचक्षुर्मेपाहीतिंचक्षुषीआंजयीतांश्मनस्तेजोसिश्रोत्रंमेपाहीतिंकुंडलेआबध्नीतांनुलेपनेनपाणीप्रलिप्यंमुखमग्रेब्राह्मणो
नुलिंपैद्बाहूराजन्यउदरंवैश्यंउपस्थंस्त्र्यूरूसरणजीविनोंनार्तास्यनार्तोहंभूयासमितिंस्रजमपिबध्नीतंनमालोक्तांमालेतिचे
द्ब्रूयुंःस्रगित्यभिधापयीतंदेवानांप्रतिष्ठेस्थंःसर्वतोमापातमिंत्युपानहावास्थायंदिवश्छद्मासीतिछत्रमादत्तेंवेणुरसिवान
स्पत्योसिंसर्वतोमापाहीतिवैणवंदंडमायुष्यमितिसूक्तेनंमणिंकंठेप्रतिमुच्यौंष्णीषंकृत्वांतिष्ठन्त्समिधमादध्यात् ॥ ८॥
स्मृतंनिंदाचविद्याचंश्रद्धाप्रज्ञाचपंचमी ॥ इष्टंदत्तमधीतंचंकृतंसत्यंश्रुतंव्रतं ॥ यदग्नेसेंद्रस्यसप्रजापतिकस्यंसऋषिक
स्यंसऋषिराजन्यस्यंसपितृकस्यंसपितृराजन्यस्यंसमनुष्यस्यंसमनुष्यराजन्यस्यंसाकाशस्यंसातीकाशस्यसानूकाशस्यस
प्रतीकाशस्यंसदेवमनुष्यस्यंसगंधर्वाप्सरस्कस्यंसहारण्यैश्चपशुभिर्ग्राम्यैश्चंयन्मआत्मनआत्मनिव्रतंतन्मेसर्वंव्रतमिदम
हमग्नेसर्वंव्रतोभवामिस्वाहेतिंममाग्नेवर्चइतिंप्रत्यृचंसमिधोभ्यादध्यांद्यत्रैनंपूजयिष्यंतोभवंतिंतत्रैतांरात्रींवसेद्द्वियांत
गुरुमर्थेननिमंत्र्यंकृतानुज्ञातस्यवास्नानंतस्यैतानिव्रतानिभवंतिंननक्तंस्नायान्ननग्नःस्नायान्ननग्नःशयीतंननग्नांस्त्रियमी
क्षेतान्यत्रमैथुनाद्वर्षतिनधावेन्नवृक्षमारोहेन्नकूपमवरोहेन्नबाहुभ्यांनदींतरेन्नसंशयमभ्यापद्येतंमहद्वैभूतंस्नातकोभवती

तिविज्ञायते ॥ ९ ॥ गुरवेप्रव्रक्ष्यमाणोनामप्रब्रुवीतेदंवत्स्यामोभो३ इत्युच्चैरूर्ध्वंनाम्नःप्राणापानयोरुपांश्वामंद्रैरिंद्रहरि
भिरितिचांतोवृद्धोजपतिप्राणापानयोरुरुव्यचास्तयाप्रपद्येदेवायसवित्रेपरिददामीत्यृचंचसमाप्योंप्राक्स्वस्तीतिजपि
त्वांमहित्रीणामित्यनुमंत्र्यैवंमतिसृष्टस्यनकुताश्चिद्भयंभवतीतिविज्ञायतेवयसाममनोज्ञावाचःश्रुत्वाकनिक्रदज्जनुषंप्रब्रु
वाणइतिसूक्तेजपेद्देवींवाचमजनयंतदेवाइतिचस्तुहिश्रुतंगर्तसदंयुवानमितिमृगस्ययस्यादिशोबिभीयाद्यस्माद्वातांदि
शमुल्मुकंमुभयतःप्रदीप्तंप्रत्यस्येन्मंथंवाप्रसव्यमालोड्यांभयंमित्रावरुणामह्यमस्त्वर्चिषाशत्रून्दहतंप्रतीत्यमाज्ञातारं
माप्रतिष्ठांविंदंतुमिथोभिंदानाउभयंतुमृत्युमितिसंसृष्टंधनमुभयंसमाकृतमितिमंथंन्यंचंकरोति ॥ १० ॥ सर्वतोभया
दनाज्ञातादष्टावाज्याहुतीर्जुहुयात्पृथिवीवृतासाग्निनावृतातयावृतयावत्र्यायस्माद्भयाद्बिभेमितद्वारयेस्वाहा ॥ अंत
रिक्षंवृतंतद्वायुनावृतंतेनवृतेनवर्त्रेणयस्माद्भयाद्बिभेमितद्वारयेस्वाहा ॥ द्यौर्वृतासादित्येनवृतातयावृतयावत्र्यायस्मा
द्भयाद्बिभेमितद्वारयेस्वाहा ॥ दिशोवृतास्ताश्चंद्रमसावृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमितद्वारयेस्वाहा ॥
आपोवृतास्तावरुणेनवृतास्ताभिर्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमितद्वारयेस्वाहा ॥ प्रजावृतास्ताःप्राणेनवृतास्ताभि
र्वृताभिर्वर्त्रीभिर्यस्माद्भयाद्बिभेमितद्वारयेस्वाहा ॥ वेदावृतास्तेछंदोभिर्वृतास्तैर्वृतैर्वर्त्रैर्यस्माद्भयाद्बिभेमितद्वारयेस्वा
हा ॥ सर्वंवृतंतद्ब्रह्मणावृतंतेनवृतेनवर्त्रेणयस्माद्भयाद्बिभेमितद्वारयेस्वाहेत्यथापराजितायांदिश्यवस्थायस्वस्त्यात्रेयं

जपतिंयतइंद्रभयामहइतिचसूक्तशेषं ॥ ११ ॥ संग्रामेसमुपोढेराजानंसंनाहयेंदात्वाहार्षमंतरेधीतिंपश्चाद्रथस्यावस्थाय
जीमूतस्येवभवतिप्रतीकमितिंकवचंप्रयच्छेदुत्तरयाधनुरुत्तरांवाचयेंत्स्वयंचतुर्थींजपेंत्पंचम्येषुधिंप्रयच्छेदभिप्रवर्तमा
नेषष्ठींसप्तम्याश्वानष्टमींमिषूनवेक्षमाणंवाचयत्यहिरिवभोगैः पर्येतिबाहुमितिंतलंनह्यमानंमथैनंसारयमाणमुपारुह्या
भीवर्तंवाचयतिंप्रयोवांमित्रावरुणेतिचद्वेअथैनवोमन्वीक्षेतांप्रतिरथशाससौपर्णैःप्रधारयंतुमधुनोघृतस्येत्येतत्सौपर्णंस
र्वांदिशोनुपर्यायांदादित्यमौशनसंवावस्थायप्रबोधयेंदुपश्वासयपृथिवीमुतद्यामितितृचेनंदुंदुभिमभिमृशेंदवसृष्टापरा
पततेतीषून्विसर्जयेंद्यत्रबाणाःसंपतंतीतिचंयुध्यमानेषुजपेंत्संशिष्याद्वासंशिष्याद्वा ॥ १२ ॥ ॥ इतिगृ. तृ. ॥ ३ ॥

अथचतुर्थःपादः ॥ हरिःॐ३म् ॥ ॥ आहिताग्निश्चेदुपतपेत्प्राच्यामुदीच्यामपराजितायांवादिश्युदवस्येंद्रा
मकामाअग्नयइत्युदाहरंत्याशंसंतएनंग्राममाजिगमिषंतोऽगदंकुर्युरितिहविज्ञायतेऽगदःसोमेनंपशुनेष्टेष्ट्वावस्येदनिष्ट्वा
वासंस्थितेभूमिभागंखानयेदक्षिणपूर्वस्यांदिशिंदक्षिणापरस्यांवांदक्षिणाप्रवणंप्राग्दक्षिणाप्रवणंवांप्रत्यग्दक्षिणाप्रवण
मित्येकेयावानूर्ध्वबाहुकःपुरुषस्तावदायामंव्याममात्रंतिर्यग्वितस्त्यवांगभितआकाशंश्मशानंबहुलौषधिकंकंटकिक्षी
रिणस्त्विर्तियथोक्तंपुरस्तांद्यत्रसर्वतआपःप्रस्यंदेरन्नेतदादहनस्यलक्षणंश्मशानस्यकेशश्मश्रुलोमनखानीत्युक्तंपुरस्तां
द्विगुल्फंबर्हिराज्यंचंदधन्यत्रसर्पिरानयंत्येतत्पित्र्यंपृषदाज्यम् ॥ १ ॥ अथैतांदिशमग्नीन्नयंतिंयज्ञपात्राणिचां

न्वंचंप्रेतंमयुजोमिथुनाप्रवयसः पीठचक्रेणगोयुक्तेनेत्येकेनुस्तरणींगामजांवैकवर्णांकृष्णामेकेसव्यबाहूबध्वानुसंकालयं
त्यन्वंचोमात्यांअधोनिवीताःप्रवृत्तशिखांज्येष्ठप्रथमाःकनिष्ठजघन्याःप्राप्यैवंभूमिभागंगर्तोदकेनशमीशाखयांत्रिःप्रस
व्यमायतनंपरिव्रजन्प्रोक्षत्यपेतवीतविचसर्पतातइतिंदक्षिणपूर्वउद्धृतांतंआहवनीयंनिदधात्युत्तरपश्चिमेगार्हपत्यंदक्षि
णपश्चिमेदक्षिणंमथैनमंतर्वेदींध्मचित्तिंचिनोतियोजानातिंतस्मिन्वर्हिरास्तीर्यंकृष्णाजिनंचोत्तरलोमंतस्मिन्प्रेतंसंवेश
यंत्युत्तरेणगार्हपत्यंहृत्वाहवनीयमभिशिरसमुत्तरतःपत्नींधनुश्चक्षत्रियायंतामुत्थापयेदेवरःपतिस्थानीयोंतेवासीजरद्दा
सोवोंदीर्ष्वनार्यभिजीवलोकमितिंकर्तावृषलेजपेद्धनुर्हस्तादाददानोमृतस्येतिधनुरुक्तंवृषलेऽधिज्यंकृत्वासंचितिमचि
त्वासंशीर्यानुप्रहरेत् ॥ २ ॥ अथैतानिपात्राणियोजयेद्दक्षिणेहस्तेजुहूंसव्यऽउपभृतंदक्षिणेपार्श्वेस्फ्यंसव्येऽग्नि
होत्रहवणीमुरसिध्रुवांशिरसिकपालानिंदत्सुग्रावणोंनासिकयोःस्रुवौभित्वाचैकंकर्णयोःप्राशित्रहरणेभित्वाचैकंमुदरे
पात्रींसमवत्तधानंचचमसंमुपस्थेशम्यामरणीऊर्वोरुलूखलमुसलेजंघयोःपादयोःशूर्पेछित्त्वाचैकमासेचनवंतिंपृषदाज्यं
पूरयंत्यमापुत्रोद्दृषदुपलेकुर्वीतंलौहायसंचकौलालंमनुस्तरण्यावपामुत्खिद्यंशिरोमुखंप्रच्छादयेदग्नेर्वर्मपरिगोभिर्व्य
यस्वेतिंवृक्काउद्धृत्यपाण्योरादध्यादतिद्रवसारमेयौश्वानाविंतिंदक्षिणेदक्षिणंसव्येसव्यंहृदयेहृदयंपिंड्योचैकेवृक्कापचा
रइत्येकेसर्वांयथांगंविनिक्षिप्यचर्मणाप्रच्छाद्येममग्नेचमसंमाविजिह्वरइतिंप्रणीताप्रणयनमनुमंत्रयतेसव्यंजान्वाच्यंद

वाज्याहुतीर्जुहुयांदग्नयेस्वाहाकामायस्वाहांलोकायस्वाहानुमतयेस्वाहेतिंपंचमीमुरसिप्रेतस्यांस्माद्वैत्वमजायथांअयं
त्वदधिजायतांमसौंस्वर्गायलोकायस्वाहेति ॥ ३ ॥ प्रेष्यतियुगपदग्नीन्प्रज्वालयतेंत्याहवनीयश्चेत्पूर्वंप्राप्नुयांत्स्वर्गंलो
कएनंप्रापदितिविद्यांद्रात्स्यत्यसावमुत्रैवमयमस्मिन्निंतिपुत्रौंगार्हपत्यश्चेत्पूर्वंप्राप्नुयांदंतरिक्षलोकएनंप्रापदितिविद्यांद्रा
त्स्यत्यसावमुत्रैवमयमस्मिन्निंतिपुत्रौंदक्षिणाग्निश्चेत्पूर्वंप्राप्नुयांन्मनुष्यलोकएनंप्रापदितिविद्यांद्रात्स्यत्यसावमुत्रैवमयम
स्मिन्निंतिपुत्रौंयुगपत्प्राप्तौंपरामृद्धिंवदंतिंतंदह्यमानमनुमंत्रयतेंप्रेहिप्रेहिपथिभिःपूर्व्येभिरितिसमानंसएवंविदादह्यमा
नंःसहैवधूमेनंस्वर्गंलोकमेतीतिविज्ञायतंउत्तरपुरस्तादाहवनीयस्यंजानुमात्रंगर्तंखात्वांद्भिपूरयित्वावकांशीपालमित्यव
धापयेंत्ततोहवाएषनिष्क्रम्यंसहैवधूमेनंस्वर्गंलोकमेतीतिविज्ञायतंइमेजीवाविमृतैरावबृत्रन्निंतिंसव्यावृतोव्रजंत्यनवेक्ष
माणांयत्रोदकमवहद्भवतिंतत्प्राप्यसकृदुन्मृज्यैकांजलिमुत्सृज्यंतस्यगोत्रंनामचगृहीत्वौंत्तीर्यान्यानिवासांसिपरिधाय
सकृदेनान्पीड्यौंदग्दशानिविसृज्यासतंआनक्षत्रदर्शनांदादित्यस्यवादर्शनेप्रविशेयुंःकनिष्ठप्रथमाज्येष्ठजघन्यांःप्राप्या
गारंमश्मानमग्निंगोमयमक्षतांस्तिलानपउपस्पृशंतिंनैतस्यांरात्र्यामन्नंपचेरंन्क्रीतोत्पन्नेनवावर्तेरन्ंत्रिरात्रमक्षारालवणा
शिनःस्युंर्द्वादशरात्रंवामहागुरुषुंदानाध्ययनेवर्जयेरंन्दशाहंसपिंडेषुगुरौंचासपिंडेंप्रत्तासुचस्त्रीषुंत्रिरात्रमितरेष्वाचार्ये
षुंज्ञातौंचासपिंडेंप्रत्तासुचस्त्रींष्वदंतजातेपरिजातेचैंकाहंसब्रह्मचारिणिंसमानग्रामीयेचश्रोत्रिये ॥ ४ ॥ संचयनमूर्ध्वंद

शम्याः कृष्णपक्षस्यांयुजास्वेकनक्षत्रेलक्षणेकुंभेपुमांसंमलक्षणायांस्त्रियंमयुजोमिथुनाःप्रवयसंःक्षीरोदकेनशमीशाखयां
त्रिःप्रसव्यमायतनंपरिव्रजन्प्रोक्षंतिंशीतिकेशीतिकावतींत्यंगुष्ठोपकनिष्ठिकाभ्यांमेकैकमस्थ्यसंह्रादयंतोवदध्युंःपादौपू
र्वंशिरउत्तरंसुसंचितंसंचित्यंपवनेनसंपूर्यंयत्रसर्वतआपोनाभिस्यंदेरंन्नन्यावर्षाभ्यंस्तत्रगर्तेवदध्युंरुपसर्पमातरंभूमिमे
तामित्युत्तरयापांसूनवकिरेंदवकीयोंत्तरांमुत्तेस्तभ्नामीतिंकपालेनापिधायांथानवेक्षन्प्रत्याव्रज्यांपउपस्पृश्यंश्राद्धमस्मै
दद्युः ॥ ५ ॥ गुरुणाभिमृतांअन्यतोवापक्षीयमाणांअमावास्यायांशांतिकर्मकुर्वीरंन्पुरोदयादग्निंसहभस्मानंसहायतनं
दक्षिणाहरेयुंःक्रव्यादमग्निंप्रहिणोमिदूरमित्यर्धर्चेनंतंचतुष्पथेन्युप्यंयत्रवात्रिःप्रसव्यंपरियंतिंसव्यैःपाणिभिंःसव्यानू
रूनाघ्नानांअथानवेक्षन्प्रत्याव्रज्यांपउपस्पृश्यंकेशश्मश्रुलोमनखानिवापयित्वोंपकल्पयीरंन्नवान्मणिकान्कुंभांनाचम
नीयांश्चंशमीसुमनोमलिनंःशमीमयमिध्मंशमीमय्यावरणीपरिधींश्चांनडुहंगोमयंचर्मचनवनीतमश्मानंयावत्योयुवतयं
स्तावंतिकुशपिंजूलांन्यग्निवेलायामग्निंजनयेंदिहैवायमितरोजातवेदाऽइत्यर्धर्चेनंतंदीपयमानाआसतंआशांतरात्रांदा
युष्मतांकथाःकीर्तयंतोंमांगल्यानीतिहासपुराणानींत्याख्यापयमानांउपरतेषुशब्देषुंसंप्रविष्टेषुवांगृहंनिवेशनंवांदक्षि
णाद्वारपक्षात्प्रक्रम्यांविच्छिन्नामुदकधारांहरेंत्तंतुंतन्वन्रजसोभानुमन्विहीत्योत्तरस्मांदथाग्निमुपसमाधायंपश्चादस्यान
डुहंचर्मास्तीर्यंप्राग्ग्रीवमुत्तरलोमंतस्मिन्नमात्यानारोहयेंदारोहतायुर्जरसंवृणानाऽइतींमंजीवेभ्यःपरिधिंदधामीतिंपरि

धिंपरिदध्यादंतर्मृत्युंदधतापर्वतेनेत्यश्मानमुत्तरतोग्नेः कृत्वापरंमृत्योअनुपरेहिपंथामितिचतसृभिः प्रत्यृचंहुत्वाथयथाहा न्यनुपूर्वंभवंतीत्यमात्यानीक्षेतंयुवतयः पृथक्पाणिभ्यांदर्भतरुणकैर्नवनीतेनचांगुष्ठोपकनिष्ठाभ्यामक्षिणीऽआंज्यपरां च्योविसृजेयुरिमानारीरविधवाः सुपत्नीरित्यंजनाईक्षेतांश्मन्वतीरीयतेसंरभध्वमित्यश्मानंकर्ताप्रथमोभिमृशेदथापरा जितायांदिश्यवस्थायाग्निनानडुहेनगोमयेनचाविच्छिन्नयाचोदकधारयापोहिष्ठामयोभुवइतितृचेनपरीमेगामनेषतेति परिक्रामत्सुजपेत्पिंगलोनड्वान्परिणेयः स्यादित्युदाहरंत्यथोपविशंत्यत्राभिरंस्यमानाभवंत्यहतेनवाससाप्रच्छाद्यासतेस्व पंतओदयादुदितआदित्येसौर्याणिस्वस्त्ययनानिचजपित्वान्नंसंस्कृत्यापनः शोशुचदघमितिप्रत्यृचंहुत्वाब्राह्मणान्भोज यित्वास्वस्त्ययनंवाचयीतंगौः कंसोहतंवासश्चदक्षिणा ॥६॥ अथातः पार्वणेश्राद्धेकाम्यआभ्युदयिकेएकोद्दिष्टेवाब्राह्म णान्छ्रुतशीलवृत्तसंपन्नानेकेनवाकालेज्ञापितान्स्नातान्कृतपच्छौचानाचांतानुदङ्मुखान्पितृवदुपवेश्यैकैकमेकैकस्यं द्वौद्वौत्रींस्त्रीन्वावृद्धौफलभूयस्त्वंनत्वेवैकंसर्वेषांकाममनाद्येपिंडेव्याख्यातमपः प्रदायदर्भान्द्विगुणभुग्नानासनंप्रदाया पः प्रदायतैजसाश्ममयमृन्मयेषुत्रिषुपात्रेष्वेकद्रव्येषुवादर्भांतर्हितेष्वपआसिच्यशंनोदेवीरभिष्टयइत्यनुमंत्रितासुतिलां नावपतितिलोसिसोमदेवत्योगोसवेदेवनिर्मितः ॥ प्रत्नवद्भिः प्रत्तः स्वधयापितॄंनिमाँल्लोकान्प्रीणयाहिनः स्वधानमऽइ तिप्रसव्येनेतरपाण्यंगुष्ठांतरेणोपवीतित्वाद्दक्षिणेनवासव्योपगृहीतेनंपितरिदंतेअर्घ्यंपितामहेदंतेअर्घ्यंप्रपितामहेदंते

अर्घ्यमित्यपपूर्वताःप्रतिग्राहयिष्यन्त्सकृत्सकृत्स्वधाअर्घ्याइतिप्रसृष्टाअनुमंत्रयेत यादिव्याआपःपृथिविसंबभूवुर्या
अंतरिक्ष्याउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानआपःशंस्योनाभवंत्वितिसंस्रवान्समवनीयताभिरद्भिःपुत्रका
मोमुखमनक्ति ॥ नोद्धरेत्प्रथमंपात्रंपितृणामर्घ्यपातितं ॥ आवृतास्तत्रतिष्ठंतिपितरःशौनकोब्रवीत् ॥ उद्धरेद्यदि
चेत्पात्रंविवृतंवायदाभवेत् ॥ तदासुरंभवेच्छ्राद्धंक्रुद्धैःपितृगणैर्गतैरिति ॥ ७ ॥ एतस्मिन्कालेगंधमाल्यधूपदीपा
च्छादनानांप्रदानमुद्धृत्यघृताक्तमन्नमनुज्ञापयत्यग्नौकरिष्येकरवैकरवाणीतिवाप्रत्यभ्यनुज्ञाक्रियतांकुरुष्वकुर्वित्यथा
ग्नौजुहोतियथोक्तंपुरस्तादभ्यनुज्ञायांपाणिष्वेववाग्निमुखावैदेवाःपाणिमुखाःपितरइतिहिब्राह्मणंयदिपाणिष्वाचांतेष्व
न्यदन्नमनुदिशत्यन्नमन्नेसृष्टंदत्तमृध्नुकमितितृप्तान्ज्ञात्वामधुमतीःश्रावयेदक्षन्नमीमदंतेतिचसंपन्नमितिपृष्ट्वायद्यदन्नमु
पभुक्तंतत्तत्स्थालीपाकेनसहपिंडार्थमुद्धृत्यशेषंनिवेदयेदभिमतेनुमतेवाभुक्तवत्स्वनाचांतेषुपिंडान्निदध्यादाचांतेष्वेके
प्रकीर्यान्नमुपवीयोंस्वधोच्यतामितिविसृजेदस्तुस्वधेतिवा ॥ ८ ॥ अथशूलगवःशरदिवसंतेवार्द्रयाश्रेष्ठंस्वस्ययूथस्या
कुष्ठिपृषत्कल्माषमित्येकेकामंकृष्णमालोहवांश्चेद्व्रीहियवमतीभिरद्भिरभिषिच्यशिरस्तऽआभसतोरुद्रायमहादेवायजु
ष्टोवर्धस्वेतितंवर्धयेत्संपन्नदंतमृषभंवायज्ञियायांदिश्यसंदर्शनेग्रामादूर्ध्वमर्धरात्रादुदितइत्येकेवैद्यंचरित्रवंतंब्राह्मणमु
पवेश्यसपलाशामार्द्रशाखांयूपंनिखायव्रततयौकुशरज्जूरवाशनेअन्यतरयायूपंपरिवीयान्यतरयार्धशिरसिपशुंबध्वायूपे

रशनायांवानियुनक्तियस्मैनमस्तस्मैत्वाजुष्टंनियुनज्मीतिंप्रोक्षणादिसमानंपशुनाविशेषान्वक्ष्यामंःपात्र्यापलाशेनवांव
पांजुहुयादितिहविज्ञायतेंहरायमृडायंशर्वायशिवायंभवायमहादेवायोंग्रायभीमायंपशुपतयेरुद्रायंशंकरायेशानाय
स्वाहेतिंषड्भिर्वोत्तरैरुद्रायस्वाहेतिवांचतसृषुचतसृषुकुशसूनासुंचतसृषुदिक्षुबलिंहरेंद्यास्तेरुद्रपूर्वस्यांदिशिंसेनास्ताभ्य
एनंनमस्तेअस्तुमामाहिंसीरिंत्येवंप्रतिदिशंत्वादेशनंचतुर्भिःसूक्तैश्चतस्रोदिशउपतिष्ठेतंकद्रुद्रायेमारुद्रायांतेपितरिमारु
द्रायस्थिरधन्वनइतिंसर्वेरुद्रयज्ञेषुदिशामुपस्थानंतुषान्फलीकरणांश्चंपुच्छंचर्मशिरंःपादानित्यग्नावनुप्रहरेंद्भोगंचर्मणा
कुर्वीतेतिशांवत्यंउत्तरतोग्नेर्दर्भवीतासुंकुशसूनासुवाशोणितंनिनयेंच्छ्वासिनीर्घोषिणींर्विचिन्वतीःसमश्नुतींःसर्पायएत
द्धोनेनवःप्रीणात्यथोदङ्गावृत्यंश्वासिनीर्घोषिणींर्विचिन्वतीःसमश्नुतींःसर्पायद्धोत्रतद्धरध्वमितिसर्पेभ्योंयत्तत्रासृगूवध्यं
वांवस्रुतंभवंतितद्धरंतिसर्पाःसर्वाणिह्वाअस्यनामधेयानिंसर्वाःसेनाःसर्वाण्युच्छ्रयणानींत्येवंविद्यजमानंप्रीणातिंना
स्यभ्रुवाणंचंनहिनस्तीतिविज्ञायतेंनास्यप्राश्नीयांन्नास्यग्राममाहरेयुंरभिमारुकोहैषदेवःप्रजाभवतीत्यमात्यानंततःप्रति
षेधयेंन्नियोगात्तुप्राश्नीयांत्स्वस्त्ययनइतिंसएषशूलगवोंधन्योलोक्यःपुण्यःपुत्र्यःपशव्यआयुष्योयशस्यंइष्ट्वान्यमुत्सृजें
न्नानुत्सृष्टस्यांन्महापशुर्भवतीतिविज्ञायतेंशंतातीयंजपन्गृहानियांत्पशूनामुपतापंएतमेवदेवंमध्येगोष्ठस्ययजेतंस्थाली

पाकंसर्वंहुतंत्रर्हिंराज्यंचानुप्रहृत्यंधूमतोगाआनयैच्छंतातीयंजपंन्पशूनांमध्यमियान्मध्यमियांन्नमःशौनकायनमःशौनकायं ॥ ९ ॥ ॥ इत्याश्वलायनगृह्यसूत्रेचतुर्थोऽध्यायःसमाप्तः ॥ ४ ॥ इत्याश्वलायनगृह्यसूत्रंसमाप्तम् ॥ ॥

इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा
स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् । शके १९०७

॥ इत्याश्वलायनगृह्यसूत्रं समाप्तम् ॥

॥ इत्याश्वलायनगृह्यसूत्रं समाप्तम् ॥



इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् । शके १९०७,

# अथशिक्षा—पाणिनीया ।

श्रीगणेशायनमः ॥ ॥ हरिः ॐ ॥ अथशिक्षांप्रवक्ष्यामिपाणिनीयंमतंयथा ॥ शास्त्रानुपूर्वंतद्विद्याद्यथोक्तंलोक-वेदयोः ॥ प्रसिद्धमपिशब्दार्थमविज्ञातमबुद्धिभिः ॥ पुनर्व्यक्तीकरिष्यामिवाचउच्चारणेविधिं ॥ त्रिषष्टिश्चतुःषष्टि-र्वावर्णाःशंभुमतेमताः ॥ प्राकृतेसंस्कृतेचापिस्वयंप्रोक्ताःस्वयंभुवा ॥ स्वराविंशतिरेकश्चस्पर्शानांपंचविंशतिः ॥ यादयश्चस्मृताह्यष्टौचत्वारश्चयमाःस्मृताः ॥ अनुस्वारोविसर्गश्च ᳲकᳲपौचापिपराश्रितौ ॥ दुःस्पृष्टश्चेतिविज्ञेयोऌ-कारःप्लुतएवच ॥ १ ॥ आत्माबुद्ध्यासमेत्यार्थान्मनोयुङ्क्तेविवक्षया ॥ मनःकायाग्निमाहंतिसप्रेरयतिमारुतम् ॥ मारुतस्तूरसिचरन्मंद्रंजनयतिस्वरम् ॥ प्रातःसवनयोगंतंछंदोगायत्रमाश्रितम् ॥ कंठेमाध्यंदिनयुगंमध्यमंत्रैष्टुभा-नुगम् ॥ तारंतार्तीयसवनंशीर्षण्यंजागतानुगम् ॥ सोदीर्णोमूर्ध्न्यभिहतोवक्त्रमापद्यमारुतः ॥ वर्णान्जनयतेतेषांवि-भागःपंचधास्मृतः ॥ स्वरतःकालतःस्थानात्प्रयत्नानुप्रदानतः ॥ इतिवर्णविदःप्राहुर्निपुणंतन्निबोधत ॥ २ ॥ उदात्तश्चानुदात्तश्चस्वरितश्चस्वरास्त्रयः ॥ ह्रस्वोदीर्घःप्लुतइतिकालतोनियमाअचि ॥ उदात्तेनिषादगांधारावनुदा-त्तऋषभधैवतौ ॥ स्वरितप्रभवाह्येतेषड्जमध्यमपंचमाः ॥ अष्टौस्थानानिवर्णानामुरःकंठःशिरस्तथा ॥ जिह्वामूलं

यदंताश्चनासिकोष्ठौपतालुच ॥ ओभावश्चविवृतिश्चशषसारेफएवच ॥ जिह्वासूलमुपध्माचगतिरष्टविधोष्मणः ॥ यद्योभावप्रसंधानमुकारादिपरंपदं ॥ स्वरांततादृशंविद्याद्यदन्यद्व्यक्तमूष्मणः ॥ ३ ॥ हकारंपंचमैर्युक्तमंतःस्थाभिश्चसंयुतं ॥ औरस्यंतंविजानीयात्कंठ्यमाहुरसंयुतं ॥ कंठ्यावहाविचुयशास्तालव्याओष्ठजावुपू ॥ स्युर्मूर्धन्याऋटुरषादंत्याऌतुलसाःस्मृताः ॥ जिह्वामूलेतुकुःप्रोक्तोदंत्योष्ठ्योवःस्मृतोबुधैः ॥ एऐतुकंठतालव्याओऔकंठोष्ठजौस्मृतौ ॥ अर्धमात्रातुकंठ्यास्यादेकारैकारयोर्भवेत् ॥ ओकारौकारयोर्मात्रातयोर्विवृतसंवृतं ॥ संवृतंमात्रिकंज्ञेयं विवृतंतुद्विमात्रिकं ॥ घोषावासंवृताःसर्वेअघोषाविवृताःस्मृताः ॥ ४ ॥ स्वराणामूष्मणांचैवविवृतंकरणंस्मृतं ॥ तेभ्योपिविवृतावेङौताभ्यामैचौतथैवच ॥ अनुस्वारयमानांचनासिकास्थानमुच्यते ॥ अयोगवाहाविज्ञेयाआश्रयस्थानभागिनः ॥ अलाबुवीणानिर्घोषोदंत्यमूल्यस्वराननु ॥ अनुस्वारस्तुकर्तव्योनित्यंह्रोःशषसेषुच ॥ अनुस्वारे विवृत्यांतुविरामेचाक्षरद्वये ॥ द्विरोष्ठ्यौतुविगृह्णीयाद्यत्रौकारवकारयोः ॥ व्याघ्रीयथाहरेत्पुत्रान्दंष्ट्राभ्यांनचपीडयेत् ॥ भीतापतनभेदाभ्यांतद्वद्वर्णान्प्रयोजयेत् ॥ ५ ॥ यथासौराष्ट्रिकानारीतक्रँइत्यभिभाषते ॥ एवंरंगाःप्रयोक्तव्याःखेअराँइवखेदया ॥ रंगवर्णंप्रयुंजीरन्नोग्रसेत्पूर्वमक्षरं ॥ दीर्घस्वरंप्रयुंजीयात्पश्चान्नासिक्यमाचरेत् ॥ हृदयेचैकमात्रस्त्वर्धमात्रस्तुमूर्धनि ॥ नासिकायांतथार्धंचरंगस्यैवंद्विमात्रता ॥ हृदयादुत्करेतिष्ठन्कांस्येनसमनुस्वरन् ॥

मार्दवंचद्विमात्रंचजघन्वाँइतिनिदर्शनं ॥ मध्येतुकंपयेत्कंपमुभौपार्श्वौसमौभवेत् ॥ सरंगंकंपयेत्कंपंरथीवेतिनिद-
र्शनं ॥ एवंवर्णाःप्रयोक्तव्यानाव्यक्तानचपीडिताः ॥ सम्यग्वर्णप्रयोगेणब्रह्मलोकेमहीयते ॥ ६ ॥ गीतीशीघ्री
शिरःकंपीतथालिखितपाठकः ॥ अनर्थज्ञोल्पकंठश्चषडेतेपाठकाधमाः ॥ माधुर्यमक्षरव्यक्तिःपदच्छेदस्तुसुस्वरः ॥
धैर्यंलयसमर्थंचषडेतेपाठकागुणाः ॥ शंकितंभीतमुद्घृष्टमव्यक्तमनुनासिकं ॥ काकस्वरंशिरसिगतंतथास्थानविव-
र्जितं ॥ उपांशुदष्टंत्वरितंनिरस्तंविलंबितंगद्गदितंप्रगीतं ॥ निष्पीडितंग्रस्तपदाक्षरंचवदेन्नदीनंनतुसानुनास्यं ॥
प्रातःपठेन्नित्यमुरःस्थितेनस्वरेणशार्दूलरुतोपमेन ॥ मध्यंदिनेकंठगतेनचैवचक्राह्वसंकूजितसंनिभेन ॥ तारंतुविद्या-
त्सवनंतृतीयंशिरोगतंतच्चसदाप्रयोज्यं ॥ मयूरहंसान्यभृतस्वराणांतुल्येननादेनशिरःस्थितेन ॥ ७ ॥ अचोस्पृष्टाय-
णस्त्वीषन्नेमस्पृष्टाःशलःस्मृताः ॥ शेषाःस्पृष्टाहलःप्रोक्तानिबोधानुप्रदानतः ॥ अमोनुनासिकानह्रोनादिनोहझषः
स्मृताः ॥ ईषन्नादायणंजश्चश्वासिनस्तुखफादयः ॥ ईषच्छ्वासांश्चरोविद्याद्गोर्धामैतत्प्रचक्षते ॥ दाक्षीपुत्रःपाणिनि-
नायेनेदंव्यापितंभुवि ॥ छंदःपादौतुवेदस्यहस्तौकल्पोथपठ्यते ॥ ज्योतिषामयनंचक्षुर्निरुक्तंश्रोत्रमुच्यते ॥ शिक्षा-
घ्राणंतुवेदस्यमुखंव्याकरणंस्मृतं ॥ तस्मात्सांगमधीत्यैवब्रह्मलोकेमहीयते ॥ ८ ॥ उदात्तमाख्यातिवृषोंगुलीनांप्रदे-
शिनीमूलनिविष्टमूर्धा ॥ उपांतमध्येस्वरितंधृतंचकनिष्ठिकायामनुदात्तमेव ॥ उदात्तंप्रदेशिनींविद्यात्प्रचयंमध्यतों-

गुलिं ॥ निहतंतुकनिष्ठिक्यांस्वरितोपकनिष्ठिकां ॥ अंतोदात्तमाद्युदात्तमुदात्तमनुदात्तंनीचस्वरितं ॥ मध्योदात्तं-स्वरितंद्व्युदात्तंत्र्युदात्तमितिनवपदशय्या ॥ अग्निःसोमःप्रवोवीर्यंहविषांस्वर्बृहस्पतिरिंद्राबृहस्पती ॥ अग्निरित्यंतो-दात्तंसोमइत्याद्युदात्तंप्रेत्युदात्तंवइत्यनुदात्तंवीर्यंनीचस्वरितं ॥ हविषांमध्योदात्तंस्वरितिस्वरितं ॥ बृहस्प-तिरितिद्व्युदात्तमिंद्राबृहस्पतीइतित्र्युदात्तं ॥ अनुदात्तोहृदिज्ञेयोमूर्ध्र्युदात्तउदाहृतः ॥ स्वरितःकर्णमूलीयःस-र्वास्येप्रचयःस्मृतः ॥ ९ ॥ चाषस्तुवदतेमात्रांद्विमात्रंत्वेववायसः ॥ शिखीरौतित्रिमात्रंतुनकुलस्त्वर्धमात्रकं ॥ कुतीर्थादागतंदग्धमपवर्णंचभक्षितं ॥ नतस्यपाठेमोक्षोस्तिपापाहेरिवकिल्बिषात् ॥ सुतीर्थादागतंव्यक्तंस्वाम्नाय्यं-सुव्यवस्थितं ॥ सुस्वरेणसुवक्त्रेणप्रयुक्तंब्रह्मराजते ॥ मंत्रोहीनःस्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाह ॥ सवाग्व-ज्रोयजमानंहिनस्तियथेंद्रशत्रुःस्वरतोपराधात् ॥ अवक्षरंहनायुष्यंविस्वरंव्याधिपीडितं ॥ अक्षताशस्त्ररूपेणवज्रंप-ततिमस्तके ॥ हस्तहीनंतुयोधीतेस्वरवर्णविवर्जितं ॥ ऋग्यजुःसामभिर्दग्धोवियोनिमधिगच्छति ॥ हस्तेनवेदंयोधीते-स्वरवर्णार्थसंयुतं ॥ ऋग्यजुःसामभिःपूतोब्रह्मलोकेमहीयते ॥ १० ॥ शंकरःशांकरींप्रादाद्दाक्षीपुत्रायधीमते ॥ वाङ्मयेभ्यःसमाहृत्यदेवींवाचमितिस्थितिः ॥ येनाक्षरसमाम्नायमधिगम्यमहेश्वरात् ॥ कृत्स्नंव्याकरणंप्रोक्तंतस्मै-पाणिनयेनमः ॥ येनधौतागिरःपुंसांविमलैःशब्दवारिभिः ॥ तमश्चाज्ञानजंभिन्नंतस्मैपाणिनयेनमः ॥ अज्ञानांधस्य

लोकस्यज्ञानांजनशलाकया ॥ चक्षुरुन्मीलितंयेनतस्मैपाणिनयेनमः ॥ त्रिनयनमभिमुखनिःसृतामिमांयइहपठेत्प्र-
यतश्चसदाद्विजः ॥ सभवतिधनधान्यपशुपुत्रकीर्तिमानतुलंचसुखंसमश्नुतेदिवीतिदिवीति ॥ ११ ॥ अथशिक्षामा-
त्मोदात्तश्चहकारंस्वराणांयथागीत्यचोस्पृष्टोदात्तंचाषस्तुशंकरएकादश ॥ ॥ इतिपाणिनीयशिक्षासमाप्ता ॥ ॥

# अथज्योतिषं-लगधः ।

श्रीगणेशायनमः ॥ हरिः ॐ ॥ पंचसंवत्सरमयंयुगाध्यक्षंप्रजापतिं ॥ दिनर्त्वयनमासांगंप्रणम्यशिरसाशुचिः ॥ प्रणम्यशिरसाकालमभिवाद्यसरस्वतीं ॥ कालज्ञानंप्रवक्ष्यामिलगधस्यमहात्मनः ॥ ज्योतिषामयनंकृत्स्नंप्रवक्ष्याम्यनुपूर्वशः ॥ विप्राणांसंमतंलोकेयज्ञकालार्थसिद्धये ॥ निरेकंद्वादशार्धाब्दंद्विगुणंगतसंज्ञिकं ॥ षष्ट्याषष्ट्यायुतंद्वाभ्यां-पर्वणांराशिरुच्यते ॥ स्वरार्कमेकेसोमार्कौयदासाकंसवासवौ ॥ स्यात्तदादियुगंमाघस्तपःशुक्लोदिनंत्यजः ॥ १ ॥ प्रपद्येतेश्रविष्ठादौसूर्याचांद्रमसावुदक् ॥ सार्पार्धेदक्षिणार्कस्तुमाघश्रावणयोःसदा ॥ घर्मवृद्धिरपांप्रस्थःक्षपाह्रासउदग्गतौ ॥ दक्षिणेतौविपर्यस्तौषण्मुहूर्त्ययनेनतु ॥ द्विगुणंसप्तमंचाहुरयनाद्यंत्रयोदश ॥ चतुर्थंदशमंचैवद्विर्युग्माद्यं-वहुलेप्यृतौ ॥ वसुस्त्वष्टाभगोजश्चमित्रःसर्पाश्विनौजलं ॥ धाताकश्चायनाद्याश्चार्धपंचनभस्त्वृतुः ॥ भांशाःस्युरष्टकाःकार्याःपक्षाद्द्वादशचोद्गताः ॥ एकादशगुणःस्योनःशुक्लेर्धंचैंदवायदि ॥ २ ॥ कार्याभांशाष्टकास्थानेकलाएकान्नविंशतिः ॥ ऊनस्थानेद्विसप्ततीरुद्धपेदूनसंमिताः ॥ त्र्यहंशीभशेषोदिवसांशभागश्चतुर्दशस्याप्युपनीतभिन्नं ॥ भार्धेधिकेचाधिगतेपरेंशेद्वावुत्तमैकंनवकैरवेद्यं ॥ पक्षात्पंचदशाच्चोर्ध्वंतद्भुक्तमितिनिर्दिशेत् ॥ नवभिस्तूद्गतोंशः

स्यादूनांशश्च्यधिकेनतु ॥ जौद्राघःखेश्वेहीरोषाचिन्मूषण्यःसोमाधानः ॥ रेमृध्राश्वाओजस्तृष्वोहर्येष्ठाइत्यृक्षालिंगैः ॥
जाबाद्यंशैःसमंविद्यात्पूर्वार्धेपार्वसूत्तरे ॥ भादानांशाच्चतुर्दशीकाष्ठानांदेविनाकलाः ॥ ३ ॥ कलादशचविंशास्या-
द्विमुहूर्तस्तुनाडिके ॥ द्विर्त्रिंशस्तत्कलानांतुषट्शतीत्र्यधिकंभवेत् ॥ नाडिकेद्वेमुहूर्तस्तुपंचाशत्पलमाषकं ॥ माष-
कात्कुंभकोद्रोणःकुटपैर्वर्धतेत्रिभिः ॥ ससप्तकुंभयुक्स्योनःसूर्याद्योनिंत्रयोदश ॥ नवमानिचपंचाह्नःकाष्ठाःपंचाक्षराः
स्मृताः ॥ श्रविष्ठाभ्यांगुणाभ्यस्तान्प्राग्विलग्नान्विनिर्दिशेत् ॥ सूर्यान्मासान्षळभ्यस्तान्विद्याच्चान्द्रमसानृतून् ॥
अतीतपर्वभागेषुशोधयेद्द्विगुणांतिथिं ॥ तेषुमंडलभागेषुतिथिनिष्ठांगतोरविः ॥ ४ ॥ याःपर्वभादानकलास्तासुस
प्तगुणांतिथिं ॥ प्रक्षिपेत्कलासमूहस्तुविद्यादादानकीःकलाः ॥ यदुत्तरस्यायनतोयनंस्याच्छेषंतुयद्दक्षिणतोयनस्य ॥
तदेवषष्ठ्याद्विगुणंद्विभक्तंसद्वादशंस्याद्दिवसप्रमाणं ॥ तदर्धंदिनभागानांसदापर्वणिपर्वणि ॥ ऋतुशेषंतुतद्विद्यात्सं-
ख्यायसहपर्वणां ॥ इत्युपायसमुद्देशोभूयोप्प्येनंप्रकल्पयेत् ॥ ज्ञेयराशिंगताभ्यस्तान्विभजेज्ज्ञानराशिषु ॥ अग्निः
प्रजापतिःसोमोरुद्रोदितिर्बृहस्पतिः ॥ सर्पाश्चपितरश्चैवभगश्चैवार्यमापिच ॥ ५ ॥ सवितात्वष्टाथवायुश्चेंद्राग्नीमि-
त्रएवच ॥ इंद्रोनिर्ऋतिरापोवैविश्वेदेवास्तथैवच ॥ विष्णुर्वसवोवरुणोजएकपात्तथैवच ॥ अहिर्बुध्न्यस्तथापूषाश्वि-
नौयमएवच ॥ नक्षत्रदेवताएताएताभिर्यज्ञकर्मणि ॥ यजमानस्यशास्त्रज्ञैर्नामनक्षत्रजंस्मृतं ॥ इत्येतन्मासवर्षाणां-

मुहूर्तोदयपर्वणां ॥ दिनर्त्वयनमासांगंव्याख्यातंलगधोऽब्रवीत् ॥ सोमसूर्यस्त्रिचरितोलोकाँल्लोकेचसंमितं ॥ सोम-सूर्यस्त्रिचरितोविद्वान्वेदविदश्नुते ॥ ६ ॥ विषुवंतद्गुणंद्वाभ्यांरूपहीनंतुषड्गुणं ॥ यल्लब्धंतानिपर्वाणितथोर्ध्वंसातिथि र्भवेत् ॥ माघशुक्लप्रवृत्तस्तुपौषकृष्णसमापिनः ॥ युगस्यपंचवर्षाणिकालज्ञानंप्रचक्षते ॥ तृतीयांनवमींचैवपौर्णमा-सींत्रयोदशीं ॥ षष्ठींचविषुवांप्रोक्तोद्वादश्यांचसमंभवेत् ॥ चतुर्दशीमुपवसथस्तथाभवेद्यथोदितोदिनमुपैतिचंद्र-माः ॥ माशुक्लाह्निकोयुंक्तेश्रविष्ठायांचवार्षिकीं ॥ यथाशिखामयूराणांनागानांमणयोयथा ॥ तद्वद्वेदांगशास्त्रा-णांज्योतिषंमूर्धनिस्थितं ॥ वेदाहियज्ञार्थमभिप्रवृत्ताःकालानुपूर्वाविहिताश्चयज्ञाः ॥ तस्मादिदंकालविधानशास्त्रं-योज्योतिषंवेदसवेदयज्ञान्योज्योतिषंवेदसवेदयज्ञानिति ॥ ७ ॥ ॥ पंचसंवत्सरंप्रपद्येतेकार्याःकलादशचयाःपर्व-सविताविषुवंसप्त ॥ ॥ इतिवेदांगज्योतिषंसमाप्तम् ॥ ॥ ॥ ॥

# अथछन्दः—पिंगलनागः ।

श्रीगणेशायनमः ॥ हरिःॐम् ॥ मयरसतजभनलगसंमितंभ्रमतिवाङ्मयंजगतियस्य ॥ सजयतिपिंगलनागःशि-
वप्रसादाद्विशुद्धमतिः ॥ त्रिगुरुंविद्धिमकारंलघ्वादिसमन्वितंयकाराख्यं ॥ लघुमध्यमंतुरेफंसकारमंतेगुरुनिबद्धं ॥
लघ्वंत्यंहितकारंजकारमुभयोर्लघुंविजानीयात् ॥ आदिगुरुंचभकारंनकारमिहपैंगलेत्रिलघुं ॥ दीर्घसंयोगपरंतथा-
स्वरव्यंजनांतमूष्मांतं ॥ सानुस्वारंचगुरुंक्वचिदवसानेपिलघ्वंत्यं ॥ आदिमध्यावसानेषुयरतायांतिलाघवं ॥ भज-
सागौरवंयांतिमनौतुगुरुलाघवं ॥ त्रिविरामंदशवर्णषण्मात्रमुवाचपिंगलःसूत्रं ॥ छंदोवर्गपदार्थप्रत्ययहेतोश्चशा-
स्त्रादौ ॥ १ ॥ धीश्रीस्त्रीम् । वरासाय् । कागुहार् । वसुधास् । सातेक्वत् । कदासज् । किंवदभ् । नहसन् ।
गृल् । गंते । ध्रादिपरः । हे । लौसः । ग्लौ । अष्टौवसवइति ॥ २ ॥ छंदः । गायत्री । दैव्येकं । आसुरीपंच-
दश । प्राजापत्याष्टौ । यजुषांषट् । साम्नांद्विः । ऋचांत्रिः । द्वौद्वौसाम्नांवर्धेत । त्रींस्त्रीनृचां । चतुरश्चतुरःप्रा-
जापत्यायाः । एकैकंशेषे । जह्यादासुरी । तान्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यः । तिस्रस्तिस्रःसनाम्न्यएकैका-
ब्राह्म्यः । प्राग्यजुषामार्ष्यइति ॥ ३ ॥ पादः । इयादिपूरणः । गायत्र्यावसवः । जगत्याआदित्याः । विराजो-

दिशः । त्रिष्टुभोरुद्राः । एकद्वित्रिचतुष्पादुक्तपादं । आद्यंचतुष्पादृतुभिः । क्वचित्रिपादृषिभिः । सापादनिचृत् । षट्कसप्तकयोर्मध्येष्टावतिपादनिचृत् । द्वौनवकौषट्कश्चनागी । विपरीतावाराही । षट्कसप्तकाष्टकैर्वर्धमाना । विपरीताप्रतिष्ठा । तृतीयंद्विपाज्जागतगायत्राभ्यां । त्रिपात्रैष्टुभैः । उष्णिग्गायत्रौजागतश्च । ककुम्मध्येचेदंत्यः । पुरउष्णिक्पुरः ॥ ४ ॥ परोष्णिक्परः । चतुष्पादृषिभिः । अनुष्टुप्गायत्रैः । त्रिपात्क्वचिज्जागताभ्यांच । मध्येंतेच । बृहती जागतस्त्रयश्चगायत्राः । पथ्यापूर्वश्चेत्तृतीयः । न्यंकुसारिणीद्वितीयः । स्कंधोग्रीवीक्रौष्टुकेः । उरोबृहतीयास्कस्य । उपरिष्टाद्बृहत्यंते । पुरस्ताद्बृहतीपुरः । क्वचिन्नवकाश्चत्वारः । वैराजौगायत्रौच । त्रिभिर्जागतैर्महाबृहती । सतोबृहतीतांडिनः । पंक्तिर्जागतौगायत्रौच । पूर्वौचेदयुजौसतःपंक्तिः । विपरीतौच ॥ ५ ॥ आस्तारपंक्तिःपरतः । प्रस्तारपंक्तिःपुरतः । विष्टारपंक्तिरंतः । संस्तारपंक्तिर्बहिः । अक्षरपंक्तिःपंचकाश्चत्वारः । द्वावप्यल्पशः । पदपंक्तिःपंच । चतुष्कषट्कौत्रयश्च । पथ्यापंचभिर्गायत्रैः । जगतीषड्भिः । एकेनत्रिष्टुब्ज्योतिष्मती । तथाजगती । पुरस्ताज्ज्योतिःप्रथमेन । मध्येज्योतिर्मध्यमेन । उपरिष्टाज्ज्योतिरंत्येन । एकस्मिन्पंचकेछंदःशंकुमती । षट्केककुद्मती । त्रिपादनिष्ठमध्यापिपीलिकमध्या । विपरीतायवमध्या । ऊनाधिकेनैकेननिचृद्भुरिजौ । द्वाभ्यांविराट्स्वराजौ । आदितःसंदिग्धे ॥ ६ ॥ देवतादितश्च । अग्निःसवितासोमोबृहस्पतिर्मित्रावरुणाविंद्रोविश्वेदेवादेवताः । स्वराःषड्जऋषभगांधारमध्यमपंचम-

धैवतनिषादाः । सितसारंगपिशंगकृष्णनीललोहितगौरावर्णाः । आग्निवेश्यकाश्यपगौतमांगिरसभार्गवकौशिकवासि-
ष्ठानिगोत्राणि । श्यामान्यतिच्छंदांसि । रोचनाभाःकृतयः । अनुक्तानांकामतोवर्णाइति ॥ ७ ॥ चतुःशतमुत्कृतिः ।
चतुरश्चतुरस्त्यजेदुत्कृतेः । तान्यभिसंव्याप्रेभ्यःकृतिः । प्रकृत्याचोपसर्गवर्जितः । धृत्यष्टिशक्करीजगत्यः । पृथक्-
पृथक्पूर्वतएतान्येवैषां । द्वितीयंद्वितीयमतितः । अथलौकिकं । आत्रैष्टुभाच्चयदार्षं । पादश्चतुर्भागः । यथा-
वृत्तसमाप्तिर्वा । लःसमुद्रागणः । गौगंतमध्यादिर्न्लश्च । स्वराअर्धंचार्यार्धं । अत्रायुङ्नज् । षष्ठोज् । न्लौवा ।
न्लौचेत्पदंद्वितीयादि । सप्तमःप्रथमादि । अंत्येपंचमः ॥ ८ ॥ षष्ठश्चल् । त्रिपुगणेषुपादःपथ्याद्यचे । विपुला-
न्या । चपलाद्वितीयचतुर्थौग्मध्येजौ । पूर्वेमुखपूर्वा । जघनपूर्वेतरत्र । उभयोर्महाचपला । आद्यर्धसमागीतिः ।
अंत्येनोपगीतिः । उत्क्रमेणोद्गीतिः । अर्धेवसुगणआर्यागीतिः । वैतालीयंद्विःस्वराअयुक्पादेयुग्वसवोंतेर्ल्गौ ।
गौपच्छंदसिकं । आपातलिकाभ्गौग् । शेषेपरेणयुङ्नसाकं । षड्वामिश्रायुजि । पंचमेनपूर्वःसाकंप्राच्यवृत्तिः ।
अयुक्तृतीयेनोदीच्यवृत्तिः । आभ्यांयुगपत्प्रवृत्तकं । आयुक्चारुहासिनी ॥ ९ ॥ युगपरांतिका । गंताद्विर्वसवो-
मात्रासमकल्नवमः । द्वादशश्चवानवासिका । विश्लोकःपंचमाष्टमौ । चित्रानवमश्च । परयुक्तेनोपचित्रा । एभिः
पादाकुलकं । गीत्यार्यालः । शिखाविपर्यस्तार्धा । लःपूर्वश्चेज्ज्योतिः । गश्चेत्सौम्या । चूलिकैकान्नत्रिंशदेकत्रिंशदं-

तेग् । साग्येननसमालांग्लइति ॥ १० ॥ वृत्तं । सममर्धसमंविषमंच । समंतावत्कृत्वःकृतमर्धसमंविषमंच । राश्यूनं । ग्लितिसमानी । ल्गितिप्रमाणी । वितानमन्यत् । पादस्यानुष्टुब्वक्रं । नप्रथमात्स्नौ । द्वितीयचतुर्थयो रश्च । वान्यत् । यच्चतुर्थात् । पथ्यायुजोज् । विपरीतैकीयं । चपलायुजोन् । विपुलायुग्लःसप्तमः । सर्वतःसैतवस्य । भ्रौन्तौच । प्रतिपादंचतुर्वृद्ध्यापदचतुरूर्ध्वं । गावंतआपीडः ॥ ११ ॥ गावादौचेत्प्रत्यापीडः । प्रत्यापीडोगावादौच । प्रथमस्यविपर्यासेमंजरीलवल्यमृतधाराः । उद्गतामेकतसजौस्लौन्सौज्गौभ्नौज्लौग्स्जौस्जौग् । तृतीयस्यसौरभकंनौभ्गौ । ललितंमौसौ । उपस्थितप्रचुपितंपृथगाद्यम्सौज्भौगौस्नौज्रौग्नौस्नौन्जौय् । वर्धमानंतृतीयेनौस्नौन्सौ । शुद्धविराळृषभंतज्राः । अर्धे । उपचित्रकंसौस्लौग्भौभ्गौग् । द्रुतमध्याभौभ्गौग्नजौज्यौ । वेगवतीसौस्गौभौभ्गौग् । भद्रविराट्त्जौगौम्सौज्गौग् । केतुमतीस्जौस्गौभ्रौन्गौग् । आख्यानकीतौज्गौग्ज्तौज्गौग् । विपरीताख्यानकीज्तौज्गौग्तौज्गौग् । हरिणप्लुतासौस्लौग्नभौभ्रौ । अपरवक्रंनौलौग्नजौज्रौ । पुष्पिताग्रानौयौन्जौज्रौग् ॥ १२ ॥ यवमतीजौंजौंज्रौज्रौग् । शिखैकान्नत्रिंशदेकात्रिंशदंतेग् । खंजामहत्ययुजीति ॥ १३ ॥ यतिर्विर्विच्छेदः । तनुमध्यात्यौ । कुमारललिताज्सौग् । माणवकाक्रीडितकंभ्तौल्गौ । चित्रपदाभौगौ । विद्युन्मालामौगौ । भुजगशिशुभृतानौम् । हलमुखीनौस् । शुद्धविराण्म्सौज्गौ । पणवोम्नौय्गौ । रुक्मवतीभ्मौस्गौ । मयूरसा-

रिणीजौंगौं । मत्ताम्भौस्गौ । उपस्थितात्जौज्गौ । एकरूपंसौज्गौग् । इंद्रवज्रातौज्गौग् । उपेंद्रवज्राज्तौज्गौग् । वाद्यंतावुपजातयः । दोधकंम्भौभ्गौग् । शालिनीम्तौतगौग्समुद्रऋषयः ॥ १४ ॥ वातोर्मीम्भौतगौग्च । भ्रमरविलसितंम्भौन्लौग् । रथोद्धतानौंलौग् । स्वागतानौभ्गौग् । वृत्तानौस्लौग् । श्येनीजौंलौग् । जगती । वंशस्थाज्तौज्रौ । इंद्रवंशातौज्रौ । द्रुतविलंवितंन्भौभ्रौ । तोटकंसः । पुटोनौम्यौवसुसमुद्राः । जलोद्धतगतिज्सौज्सौरसर्तवः । भुजंगप्रयातंयः । स्रग्विणीरः । प्रमिताक्षरास्जौसौ । वैश्वदेवीमौयाविंद्रियऋषयः । नवमालिनीन्जौभ्याविति ॥ १५ ॥ प्रहर्षिणीम्नौज्रौग्त्रिकदशकौ । रुचिराज्भौस्जौग्समुद्रनवकौ । मत्तमयूराम्तौय्सौग् । असंबाधाम्तौन्सौगाविंद्रियनवकौ । अपराजितानौसौंल्गौस्वरऋषयः । प्रहरणकलितानौभ्नौल्गौच । वसंततिलकात्भौजौगौ । सिंहोन्नताकाश्यपस्य । उद्धर्षिणीसैतवस्य । चंद्रावर्तानौनौस् । मालर्तुनवकौचेत् । मणिगुणनिकरोवस्वृषयः । मालिनीनौम्यौय्च । ऋषभगजविलसितंभ्रौःनौन्गौस्वरनवकौ । हरिणीन्सौम्रौस्लौग्रससमुद्रऋषयः । पृथ्वीज्सौज्सौय्लौग्वसुनवकौ । वंशपत्रपतितंभ्रौन्भौन्लौग्दिगृषयः । मंदाक्रांताम्भौन्तौद्गौग्स्समुद्रर्तुस्वराः । शिखरिणीय्मौन्सौभ्लौग्तुरुद्राः । कुसुमितलतावेल्लिताम्तौन्यौयाविंद्रियर्तुस्वराः ॥ १६ ॥ शार्दूलविक्रीडितंम्सौज्सौतौगादित्यऋषयः । सुवदनाम्रौभ्नौय्भौल्गौस्वरऋषिरसाः । ग्लितिवृत्तं । स्रग्धराम्रौभ्नौयौयुत्रिःसप्तकाः । मद्रकंभ्रौत्रौन्रौन्गौ-

दिगादित्याः । अश्वललितंन्जौभ्जौभ्जौभ्लौग्रुद्रादित्याः । मत्ताक्रीडामौत्वौनौन्लौग्वसुपंचदशंकौ । तन्वीभ्तौन्सौ-
भौन्यौद्विरादित्याः । क्रौंचपदाभ्मौस्भौनौनौग्भूतेंद्रियवस्वृषयः । भुजंगविजृंभितंमौत्वौनौसौंल्गौवसुरुद्रक्षयः ।
अपवाहकोम्नौनौनौन्सौगौनवकर्तुरसेंद्रियाणि । दंडकोनौरः । प्रथमश्चंडवृष्टिप्रपातः । अन्यत्ररातमांडव्याभ्यां ।
शेषःप्रचितइति ॥ १७ ॥ अत्रानुक्तंगाथा । द्विकौग्लौ । मिश्रौच । पृथग्लामिश्राः । वसवस्त्रिकाः । लर्धे ।
सैकेग् । प्रतिलोमगुणंद्विर्लाद्यं । ततोग्येकंजह्यात् । द्विरर्धे । रूपेशून्यं । द्विःशून्ये । तावदर्धेतद्गुणितं । द्विर्द्व्यूनं ।
तदंतानां । एकोनेद्धा । परेपूर्णंपरेपूर्णमिति ॥ १८ ॥ मयद्वादशधीःपंचदशछंदःषोडशपादःपरोष्णिक्प्रस्तारपंक्ति-
विंशतिर्विंशतिरेकविंशतिर्देवतादितोष्टौचतुःशतंषष्ठोविंशतिर्विंशतिर्युगपरांतिकात्रयोदशवृत्तंगावादौविंशतिर्विंशति-
र्यवमतीत्रीणियतिर्विंशतिर्वातोर्मीमष्टादशप्रहर्षिणीविंशतिःशार्दूलविक्रीडितंपञ्चदशात्रानुक्तंसप्तदशाष्टादश ॥ १९ ॥
इतिछंदःसमाप्तः ॥ ॥ ॥ ॥ ॥

॥ ८ ॥

## ॥ इतिवेदांगछंदःसमाप्तः ॥

## अथ निघंटुः यास्कः ।

श्रीगणेशायनमः ॥ हरिःॐम् ॥ गौः । ग्मा । ज्मा । क्ष्मा । क्षा । क्षमा । क्षोणी । क्षितिः । अवनिः । उर्वी । पृथ्वी । मही । रिपः । अदितिः । इळा । निर्ऋतिः । भूः । भूमिः । पूषा । गातुः । गोत्रेत्येकविंशतिःपृथिवी-नामधेयानि ॥ १ ॥ हेम । चंद्रं । रुक्मं । अयः । हिरण्यं । पेशः । कृशनं । लोहं । कनकं । कांचनं । भर्म । अमृतं । मरुत् । दत्रं । जातरूपमितिपंचदशहिरण्यनामानि ॥ २ ॥ अंबरं । वियत् । व्योम । बर्हिः । धन्व । अंतरिक्षं । आकाशं । आपः । पृथिवी । भूः । स्वयंभूः । अध्वा । पुष्करं । सगरः । समुद्रः । अध्वरमितिषोळ-शांतरिक्षनामानि ॥ ३ ॥ स्वः । पृश्निः । नाकः । गौः । विष्टप् । नभइतिषट्साधारणानि ॥ ४ ॥ खेदयः । किरणाः । गावः । रश्मयः । अभीशवः । दीधितयः । गभस्तयः । वनं । उस्राः । वसवः । मरीचिपाः । मयूखाः । सप्तऋषयः । साध्याः । सुपर्णाइतिपंचदशरश्मिनामानि ॥ ५ ॥ आताः । आशाः । उपराः । आष्टाः । काष्ठाः । व्योम । ककुभः । हरितइत्यष्टौदिङ्नामानि ॥ ६ ॥ श्यावी । क्षपा । शर्वरी । अक्तुः । ऊर्म्या । राम्या । यम्या । नम्या । दोषा । नक्ता । तमः । रजः । असिक्नी । पयस्वती । तमस्वती । घृताची । शिरिणा । मोकी । शोकी । ऊधः । पयः । हिमा । वस्वीतित्रयोविंशतीरात्रिनामानि ॥ ७ ॥ विभावरी । सूनरी । भास्वती । ओ-

दंती । चित्रामघा । अर्जुनी । वाजिनी । वाजिनीवती । सुम्नावरी । अहुना । द्योतना । श्वेत्या । अरुषी । सूनृता । सूनृतावती । सूनृतावरीतिषोळशोषोनामानि ॥ ८ ॥ वस्तोः । द्युः । भानुः । वासरं । स्वसराणि । घ्रंसः । घर्मः । घृणः । दिनं । दिवा । दिवेदिवे । द्यविद्यवीतिद्वादशाहर्नामानि ॥ ९ ॥ अद्रिः । ग्रावा । गोत्रः । वलः । अश्नः । पुरुभोजाः । वलिशानः । अश्मा । पर्वतः । गिरिः । व्रजः । चरुः । वराहः । शंबरः । रौहिणः । रैवतः । फलिगः । उपरः । उपलः । चमसः । अहिः । अभ्रं । बलाहकः । मेघः । दृतिः । ओदनः । वृषंधिः । वृत्रः । असुरः । कोशइतित्रिंशन्मेघनामानि ॥ १० ॥ श्लोकः । धारा । इळा । गौः । गौरी । गांधर्वी । गभीरा । गंभीरा । मंद्रा । मंद्राजनी । वाशी । वाणी । वाणीची । वाणः । पविः । भारती । धमनिः । नाळी । मेळिः । मेना । सूर्या । सरस्वती । निवित् । स्वाहा । वग्नुः । उपब्दिः । मायुः । काकुत् । जिह्वा । घोषः । स्वरः । शब्दः । स्वनः । ऋक् । होत्रा । गीः । गाथा । गणः । धेना । ग्नाः । विपा । नना । कशा । धिषणा । नौः । अक्षरं । मही । अदितिः । शची । वाक् । अनुष्टुप् । धेनुः । वल्गुः । गल्दा । सरः । सुपर्णी । बेकुरेतिसप्तपंचाशद्वाङ्नामानि ॥ ११ ॥ अर्णः । क्षोदः । क्षद्म । नभः । अंभः । कबंधं । सलिलं । वाः । वनं । घृतं । मधु । पुरीषं । पिप्पलं । क्षीरं । विषं । रेतः । कशः । जन्म । बृबूकं । बुसं । तुग्र्या । बर्बुरं । सुक्षेम ।

धरुणं । सुरा । अररिंदानि । ध्वस्मन्वत् । जामि । आयुधानि । क्षपः । अहिः । अक्षरं । स्रोतः । तृप्तिः । रसः । उदकं । पयः । सरः । भेषजं । सहः । शवः । यहः । ओजः । सुखं । क्षत्रं । आवयाः । शुभं । यादुः । भूतं । भुवनं । भविष्यत् । आपः । महत् । व्योम । यशः । महः । सर्णीकं । स्वृतीकं । सतीनं । गहनं । गभीरं । गंभरं । ईं । अन्नं । हविः । सद्म । सदनं । ऋतं । योनिः । ऋतस्ययोनिः । सत्यं । नीरं । रयिः । सत् । पूर्णं । सर्वं । अक्षितं । बर्हिः । नाम । सर्पिः । अपः । पवित्रं । अमृतं । इंदुः । हेम । स्वः । सर्गाः । शंबरं । अभ्वं । वपुः । अंबु । तोयं । तूयं । कृपीटं । शुक्रं । तेजः । स्वधा । वारि । जलं । जलाषं । इदमित्येकशतमुदकनामानि ॥ १२ ॥ अवनयः । यव्याः । खाः । सीराः । स्रोत्याः । एन्यः । धुनयः । रुजानाः । वंक्षणाः । खादोअर्णाः । रोधचक्राः । हरितः । सरितः । अग्रुवः । नभन्वः । वध्वः । हिरण्यवर्णाः । रोहितः । सस्रुतः । अर्णाः । सिंधवः । कुल्याः । वर्यः । उर्व्यः । इरावत्यः । पार्वत्यः । स्रवंत्यः । ऊर्जस्वत्यः । पयस्वत्यः । तरस्वत्यः । सरस्वत्यः । हरस्वत्यः । रोधस्वत्यः । भास्वत्यः । अजिराः । मातरः । नद्यइतिसप्तत्रिंशन्नदीनामानि ॥ १३ ॥ अत्यः । हयः । अर्वा । वाजी । सप्तिः । वह्निः । दधिक्राः । दधिक्रावा । एतग्वः । एतशः । पैद्वः । दौर्गहः । औच्चैश्रवसः । तार्क्ष्यः । आशुः । ब्रध्नः । अरुषः । मांश्चत्वः । अव्यथयः । श्येनासः ।

सुपर्णाः । पतंगाः । नरः । ह्वार्याणाँ । हंसासः । अश्वाइतिषड्विंशतिरश्वनामानि ॥ १४ ॥ हरीइंद्रस्य । रोहिं-तोग्नेः । हरितआदित्यस्य । रासभाववश्विनोः । अजाःपूष्णः । पृषत्योमरुताँ । अरुण्योगावउषसाँ । श्यावाः सवितुः । विश्वरूपाबृहस्पतेः । नियुतोवायोरितिदशादिष्टोपयोजनानि ॥ १५ ॥ भ्राजते । भ्राशते । भ्राश्यति । दीदयति । शोचति । मंदते । भंदते । रोचते । ज्योतते । द्योतते । द्युमदित्येकादशज्वलतिकर्माणः ॥ १६ ॥ जमत् । कल्मलीकिनँ । जंजणाभवन् । मल्मलाभवन् । अर्चिः । शोचिः । तपः । तेजः । हरः । हृणिः । शृंगाणिशृंगाणीत्येकादशज्वलतोनामधेयानि ॥ १७ ॥ गौर्हेमांबरस्व१ःखेदयआताःश्यावीविभावरीवस्तोरद्रिश्लोकोर्णोवनंयोत्योहरीइंद्रस्यभ्राजतेजमदितिसप्तदश ॥ इतिनिघंटेप्रथमोऽध्यायः ॥ १ ॥

अपः । अप्नः । दंसः । वेषः । वेपः । विष्ट्वी । व्रतं । कवरं । करुणँ । शक्म । क्रतुः । करणानि । करांसि । करिक्रत् । करंती । चक्रत् । कर्त्वं । कर्तोः । कर्तवे । कृत्वी । धीः । शचीँ । शमीँ । शिमीँ । शक्तिः । शिल्पमितिषड्विंशतिः कर्मनामानि ॥ १ ॥ तुक् । तोकं । तनयः । तोक्म । तक्मा । शेषः । अप्नः । गयः । जाः । अपत्यं । यहुः । सूनुः । नपात् । प्रजा । बीजमितिपंचदशापत्यनामानि ॥ २ ॥ मनुष्याः । नरः । धवाः । जंतवः । विशः । क्षितयः । कृष्टयः । चर्षणयः । नहुषः । हरयः । मर्याः । मर्त्याः । मर्ताः । व्राताः । तुर्वशाः ।

द्रुह्यवः । आयवः । यदवः । अनवः । पूरवः । जगतः । तस्थुषः । पंचजनाः । विवस्वंतः । पृतनाइतिपंचविं-
शतिर्मनुष्यनामानि ॥ ३ ॥ आयती । च्यवाना । अभीशू । अप्नवाना । विनंगृसौ । गभस्ती । करस्नौ । बाहू ।
भुरिजौ । क्षिपस्ती । शक्करी । भरित्रेतिद्वादशबाहुनामानि ॥ ४ ॥ अग्रुवः । अण्व्यः । क्षिपः । विशः ।
शर्यः । रशनाः । धीतयः । अथर्यः । विपः । कक्ष्याः । अवनयः । हरितः । स्वसारः । जामयः । सनाभयः ।
योक्त्राणि । योजनानि । धुरः । शाखाः । अभीशवः । दीधितयः । गभस्तयइतिद्वाविंशतिरंगुलिनामानि ॥ ५ ॥
वश्मि । उश्मसि । वेति । वेनति । वेसति । वांछति । वष्टि । वनोति । जुषते । हर्यति । आचके । उशिक् ।
मन्यते । छन्त्सत् । चाकनत् । चकमानः । कनति । कानिषदित्यष्टादशकांतिकर्माणः ॥ ६ ॥ अंधः । वाजः ।
पयः । श्रवः । पृक्षः । पितुः । सुतः । सिनं । अवः । क्षु । धासिः । इरा । इळा । इषं । ऊर्क् । रसः । स्वधा ।
अर्कः । क्षद्म । नेमः । ससं । नमः । आयुः । सूनृता । ब्रह्म । वर्चः । कीलालं । यशइत्यष्टाविंशतिरन्ननामानि
॥ ७ ॥ आवयति । भर्वति । बभस्ति । वेति । वेवेष्टि । अविष्यन् । बप्सति । भसथः । बब्धां । ह्वरतीतिदशा-
त्तिकर्माणः ॥ ८ ॥ ओजः । पाजः । शवः । तवः । तरः । त्वक्षः । शर्धः । बाधः । नृम्णं । तविषी । शुष्मं ।
शुष्णं । दक्षः । वीळु । च्यौत्नं । शूषं । सहः । यहः । वधः । वर्गः । वृजिनं । वृक् । मज्मना । पौंस्यानि ।

धर्णसिः । द्रविणं । स्पंद्रासः । शंबरमित्यष्टाविंशतिर्बलनामानि ॥ ९ ॥ मघं । रेक्णः । रिक्थं । वेदः । वरिवः । श्वात्रं । रत्नं । रयिः । क्षत्रं । भगः । मीळ्हुं । गयः । द्युम्नं । इंद्रियं । वसु । रायः । राधः । भोजनं । तना । नृम्णं । बंधुः । मेधा । यशः । ब्रह्म । द्रविणं । श्रवः । वृत्रं । वृतमित्यष्टाविंशतिरेवधननामानि ॥ १० ॥ अघ्न्या । उस्रा । उस्रिया । अही । मही । अदितिः । इळा । जगती । शक्करीतिनवगोनामानि ॥ ११ ॥ रेळते । हेळते । भामते । भृणीयते । श्रीणाति । भ्रेषति । दोधति । वनुष्यति । कंपते । भोजतइतिदशक्रुध्यतिकर्माणः ॥ १२ ॥ हेळः । हरः । हृणिः । त्यजः । भामः । एहः । ह्वरः । तपुषी । जूर्णिः । मन्युः । व्यथिरित्येकादश-क्रोधनामानि ॥ १३ ॥ वर्तते । अयते । लोटते । लोठते । स्यंदते । कसति । सर्पति । स्यमति । स्रवति । संस्रंते । अवति । श्चोतति । ध्वंसति । वेनति । मार्ष्टि । भुरण्यति । शवति । कालयति । पेलयति । कंठति । पिस्यति । बिस्यति । मिस्यति । प्रवते । प्लवते । च्यवते । कवते । गवते । नवते । क्षोदति । नक्षति । सक्षति । स्यक्षति । सचति । ऋच्छति । तुरीयति । चतति । अतति । गाति । इयक्षति । सश्चति । त्सरति । रंहति । यतते । भ्रमति । ध्रजति । रजति । लजति । क्षियति । धमति । मिनाति । ऋण्वति । ऋणोति । स्वरति । सिसर्ति । वेविष्टि । योषिष्टि । रिणाति । रीयते । रेजति । दृध्यति । दभ्नोति । युध्यति । धन्वति । अरुषति ।

आर्यति । डीयते । तर्कति । दीयति । ईषति । फणति । हनति । अर्दति । मर्दति । सस्रृते । नसते । हर्यति । इर्यति । ईर्ते । ईंखते । ऋयति । श्वात्रति । गंति । आगनीगंति । जंगति । जिन्वति । जसति । गमति । ध्रति । ध्राति । ध्रयति । वहते । रथर्यति । जेहते । ष्वःकति । क्षुंपति । प्साति । वाति । याति । इषति । द्राति । द्रूळति । एजति । जमति । जवति । वंचति । अनिति । पवते । हंति । सेधति । अग्मन् । अजगन् । जिगाति । पतति । इन्वति । द्रमति । द्रवति । वेति । हयंतात् । एति । जगायात् । अयुथुरितिद्वाविंशंशतंगतिकर्माणः ॥ १४ ॥ नु । मक्षु । द्रवत् । ओषं । जीराः । जूर्णिः । शूर्ताः । शूघनासः । शीभं । तृषु । तूयं । तूर्णिः । अजिरं । भुरण्युः । शु । आशु । प्राशुः । तूतुजिः । तूतुजानः । तुर्ज्यमानासः । अज्राः । साचीवित् । द्युगत् । ताजत् । तरणिः । वातरंहाइतिषड्विंशतिःक्षिप्रनामानि ॥ १५ ॥ तळित् । आसात् । अंबरं । तुर्वशे । अस्तमीके । आके । उपाके । अर्वाके । अंतमानां । अवमे । उपमइत्येकादशांतिकनामानि ॥ १६ ॥ रणः । विवाक् । विखादः । नदनुः । भरे । आक्रंदे । आहवे । आजौ । पृतनाज्यं । अभीके । समीके । ममसत्यं । नेमधिता । संकाः । समितिः । समनं । मीळ्हे । पृतनाः । स्पृधः । मृधः । पृत्सु । समत्सु । समर्ये । समरणे । समोहे । समिथे । संख्ये । संगे । संयुगे । संगथे । संगमे । वृत्रतूर्ये । पृक्षे । आणौ ।

शूरसातौ । वाजसातौ । समनीके । खले । खजे । पौंस्ये । महाधने । वाजे । अज्म । सद्म । संयत् । संवतइतिषट्चत्वारिंशत्संग्रामनामानि ॥ १७ ॥ इन्वति । नक्षति । आक्षाणः । आनट् । आष्ट । आपनः । अश्नत् । नशत् । आनशे । अश्नुतइतिदशव्याप्तिकर्माणः ॥ १८ ॥ दभ्नोति । श्नथति । ध्वरति । धूर्वति । वृणक्ति । वृश्चति । कृण्वति । कृंतति । श्वसिति । नभते । अर्दयति । स्तृणाति । स्नेहयति । यातयति । स्फुरति । स्फुलति । निर्वपतु । अवतिरति । वियातः । आतिरत् । तळित् । आखंडल । द्रूणाति । रम्णाति । शृणाति । शम्नाति । तृणेढि । ताढि । नितोशते । निर्बर्हयति । मिनाति । मिनोति । धमतीतित्रयस्त्रिंशद्वध- कर्माणः ॥ १९ ॥ दिद्युत् । नेमिः । हेतिः । नमः । पविः । सृकः । वृकः । वधः । वज्रः । अर्कः । कुत्सः । कुलिशः । तुंजः । तिग्मः । मेनिः । स्वधितिः । सायकः । परशुरित्यष्टादशवज्रनामानि ॥ २० ॥ इरज्यति । पत्यते । क्षयति । राजतीतिचत्वारऐश्वर्यकर्माणः ॥ २१ ॥ राष्ट्री । अर्यः । नियुत्वान् । इनइनइतिचत्वारीश्व- रनामानि ॥ २२ ॥ अपस्तुग्ध्मनुष्यांआयुत्य१ग्रुवौवश्म्यंधआवयुत्योजोमघमह्न्यारेळंतेहेळोवतंतेनुतळिद्रणइन्वतिद- भ्नोतिदिद्युदिरज्यतिराष्ट्रीद्वाविंशतिः ॥ इतिनैघंटुकेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥

ॐउरु । तुवि । पुरु । भूरि । शश्वत् । विश्वं । परीणसा । व्यानशिः । शतं । सहस्रं । सलिलं । कुविदि-

तिद्वादशबहुनामानि ॥ १ ॥ ऋहन् । ह्रस्वः । निघृष्वः । मायुकः । प्रतिष्ठा । कृधु । वम्रकः । दभ्रं । अर्भकः । क्षुल्लकः । अल्पइत्येकादशह्रस्वनामानि ॥ २ ॥ महत् । ब्रध्नः । ऋष्वः । बृहत् । उक्षितः । तवसः । तविषः । महिषः । अभ्वः । ऋभुक्षाः । उक्षाः । विहायाः । यह्वः । ववक्षिथ । विवक्षसे । अंभृणः । माहिनः । गभीरः । ककुहः । रभसः । व्राधन् । विरप्शी । अद्भुतं । वंहिष्ठः । बर्हिषदितिपंचविंशतिर्महन्नामानि ॥ ३ ॥ गयः । कृदरः । गर्तः । हर्म्यं । अस्तं । पस्त्यं । दुरोणे । नीळं । दुर्याः । स्वसराणि । अमा । दमे । कृत्तिः । योनिः । सद्म । शरणं । वरूथं । छर्दिः । छदिः । छाया । शर्म । अज्मेतिद्वाविंशतिर्गृहनामानि ॥ ४ ॥ इरज्यति । विधेम । सपर्यति । नमस्यति । दुवस्यति । ऋध्नोति । ऋणद्धि । ऋच्छति । सपति । विवासतीतिदशपरिचरण-कर्माणः ॥ ५ ॥ शिंवाता । शतरा । शातपंता । शिल्गुः । स्यूमकं । शेवृधं । मयः । सुग्म्यं । सुदिनं । शूषं । शुनं । शग्मं । भेषजं । जलाषं । स्योनं । सुम्नं । शेवं । शिवं । शं । कमितिविंशतिःसुखनामानि ॥ ६ ॥ निर्णिक् । वव्रिः । वर्पः । वपुः । अमतिः । अप्सः । प्सु । अप्नः । पिष्टं । पेशः । कृशनं । मरुत् । अर्जुनं । ताम्रं । अरुषं । शिल्पमितिषोडशरूपनामानि ॥ ७ ॥ अस्रेमा । अनेमा । अनेद्यः । अनवद्यः । अनभिशस्त्यः । उक्थ्यः । सुनीथः । पाकः । वामः । वयुनमितिदशप्रशस्यनामानि ॥ ८ ॥ केतुः । केतः । चेतः । चित्तं । क्रतुः ।

असुः । धीः । शची । माया । वयुनं । अभिख्येत्येकादशप्रज्ञानामानि ॥ ९ ॥ बट् । श्रत् । सत्रा । अद्धा । इत्था । ऋतमितिषट्सत्यनामानि ॥ १० ॥ चिक्यत् । चाकनत् । अचक्ष्म । चष्टे । विचष्टे । विचर्षणिः । विश्वचर्षणिः । अवचाकशदित्यष्टौपश्यतिकर्माणः ॥ ११ ॥ हिकं । नुकं । सुकं । आहिकं । आकीं । नकिः । माकिः । नकीं । आकृतमितिनवोत्तराणिपदानिसर्वपदसमाम्नानाय ॥ १२ ॥ इदमिव । इदंयथा । अग्निर्नये । चतुरश्चिद्ददमानात् । ब्राह्मणाव्रतचारिणः । वृक्षस्यनुतेपुरुहूतवयाः । जारआभगं । मेषोभूतो३भियंनयः । तद्रूपः । तद्वर्णः । तद्वत् । तथेत्युपमाः ॥ १३ ॥ अर्चति । गायति । रेभति । स्तोभति । गूर्धयति । गृणाति । जरते । ह्वयते । नदति । पृच्छति । रिहति । धमति । कृपायति । कृपण्यति । पनस्यति । पनायते । वल्गूयति । मंदते । भंदते । छंदति । छदयते । शशमानः । रंजयति । रजयति । शंसति । स्तौति । यौति । रौति । नौति । भनति । पणायति । पणते । सपति । पपृक्षाः । महयति । वाजयति । पूजयति । मन्यते । मंदति । रसति । स्वरति । वेनति । मंद्रयते । जल्पतीतिचतुश्चत्वारिंशदर्चतिकर्माणः ॥ १४ ॥ विप्रः । विग्रः । गृत्सः । धीरः । वेनः । वेधाः । कण्वः । ऋभुः । नवेदाः । कविः । मनीषी । मंधाता । विधाता । विपः । मनश्चित् । विपश्चित् । विपन्यवः । आकेनिपः । उशिजः । कीस्तासः । अद्धातयः । मतयः । मतुथाः । वाघतइतिचतुर्विंशतिर्मेधाविना-

मानि ॥ १५ ॥ रेभः । जरिता । कारुः । नदः । स्तामुः । कीरिः । गौः । सूरिः । नादः । छंदः । स्तुप् । रुद्रः । कृपण्युरितित्रयोदशस्तोतृनामानि ॥ १६ ॥ यज्ञः । वेनः । अध्वरः । मेधः । विदथः । नार्यः । सवनं । होत्रा । इष्टिः । देवताता । मखः । विष्णुः । इंदुः । प्रजापतिः । धर्मइतिपंचदशयज्ञनामानि ॥ १७ ॥ भरताः । कुरवः । वाघतः । वृक्तबर्हिषः । यतस्रुचः । मरुतः । सबाधः । देवयवइत्यष्टावृत्विङ्नामानि ॥ १८ ॥ ईमहे । यामि । मन्महे । दद्धि । शग्धि । पूर्धि । मिमिड्ढि । मिमीहि । रिरिड्ढि । रिरीहि । पीपरत् । यंतारः । यंधि । इषुध्यति । मदेमहि । मनामहे । मायतइतिसप्तदशयाच्ञाकर्माणः ॥ १९ ॥ दाति । दाशति । दासति । राति । रासति । पृणक्षि । पृणाति । शिक्षति । तुंजति । मंहतइतिदशदानकर्माणः ॥ २० ॥ परिस्रव । पवस्व । अभ्यर्ष । आशिषइतिचत्वारोध्येषणाकर्माणः ॥ २१ ॥ स्वपिति । सस्तीतिद्वौस्वपितिकर्माणौ ॥ २२ ॥ कूपः । कातुः । कर्तः । वव्रः । काटः । खातः । अवतः । क्रिविः । सूदः । उत्सः । ऋश्यदात् । कारोतरात् । कुशयः । केवटइतिचतुर्दशकूपनामानि ॥ २३ ॥ तृपुः । तक्वा । रिभ्वा । रिपुः । रिक्वा । रिहायाः । तायुः । तस्करः । वनर्गुः । हुरश्चित् । मुषीवान् । मलिम्लुचः । अघशंसः । वृकइतिचतुर्दशैवस्तेननामानि ॥ २४ ॥ निण्यं । सस्वः । सनुतः । हिरुक् । प्रतीच्यं । अपीच्यमितिषण्णिर्णीतांतर्हितनामधेयानि ॥ २५ ॥ आके । पराके । पराचैः ।

आरे । परावतइतिपंचदूरनामानि ॥ २६ ॥ प्रत्नं । प्रदिवः । प्रवयाः । सनेमि । पूर्व्यं । अह्नायेतिषट्पुराणनामानि ॥ २७ ॥ नवं । नूत्नं । नूतनं । नव्यं । इदा । इदानीमितिषळेवनवनामानि ॥ २८ ॥ प्रपित्वे । अभीके । दभ्रं । अर्भकं । तिरः । सतः । त्वः । नेमः । ऋक्षाः । स्तृभिः । वम्रीभिः । उपजिह्विका । ऊर्दरं । कृदरं । रंभः । पिनाकं । मेना । ग्नाः । शेपः । वैतसः । अया । एना । सिषक्तु । सचते । भ्यसते । रेजतइतिषड्विंशतिर्द्विशउत्तराणिनामानि ॥ २९ ॥ स्वधे । पुरंधी । धिषणे । रोदसी । क्षोणी । अंभसी । नभसी । रजसी । सदसी । सद्मनी । घृतवती । बहुले । गभीरे । गंभीरे । ओण्यौ । चम्वौ । पार्श्वौ । मही । उर्वी । पृथ्वी । अदिती । अही । दूरअंते । अपारेअपारेइतिचतुर्विंशतिर्द्यावापृथिव्योर्नामधेयानिनामधेयानि ॥ ३० ॥ उर्वी१हन्महद्वयंइरज्यतिंशिंवार्तानिर्णिंगस्त्रेमाकेतुर्वट्चिक्यद्धिकमिदमिवाचेतिविप्रोरेभोयज्ञोभरताईमहेदातिपरिस्त्रवस्वपितिकूपस्त्रिपुर्निण्यमाकेप्रत्नंनवंप्रपित्वेस्वधेत्रिंशत् ॥ इतिनैघंटुकेतृतीयोऽध्यायः ॥ ३ ॥

ॐ जहा । निधा । शितांम । मेहना । दमूनाः । मूषः । इषिरेण । कुरुतनं । जठरे । तितउ । शिप्रे । मध्या । मंदू । इर्मांतासः । कायमानः । लोधं । शीरं । विद्रधे । द्रुपदे । तुग्वनि । नंसंते । नसंतः । आहनसः । अद्मसत् । इष्मिणः । वाहः । परितक्म्या । सुविते । दयते । नूचित् । नूच । द्रावने । अकूपारस्य । शिशीते ।

सुतुकः । सुप्रायणाः । अप्रायुवः । च्यवनः । रजः । हरः । जुहुरे । व्यंतः । क्राणाः । वाशी । विषुणः । जामिः । पिता । शंयोः । अदितिः । एरिरे । जसुरिः । जरते । मंदिने । गौः । गातुः । दंसयः । तूताव । चयसे । वियुते । ऋधक् । अस्याः । अस्येतिद्विषष्टिःपदानि ॥ १ ॥ सस्निं । वाहिष्ठः । दूतः । वावशानः । वार्यं । अंधः । असश्चंती । वनुष्यति । तरुष्यति । भंदनाः । आहनः । नदः । सोमोअक्षाः । श्वात्रं । ऊतिः । हासमाने । पड्भिः । ससं । द्विता । व्राः । वराहः । स्वसराणि । शर्याः । अर्कः । पविः । वक्षः । धन्व । सिनं । इत्था । सचा । चित । आ । द्युम्नं । पवित्रं । तोदः । स्वंचाः । शिपिविष्टः । विष्णुः । आघृणिः । पृथुज्रयाः । अथर्यु । काणुका । अध्रिगुः । आंगूषः । आपांतमन्युः । श्मशा । उर्वशी । वयुनं । वाजपस्त्यं । वाजगंध्यं । गध्यं । गधिता । कौरयाणः । तौरयाणः । अह्रयाणः । हरयाणः । आरितः । व्रंदी । निष्षपी । तूर्णाशं । क्षुंपं । निचुंपुणः । पादं । पादुः । वृकः । जोषवाकं । कृत्तिः । श्वघ्नी । समस्य । कुटस्य । चर्षणिः । शंबः । केपयः । तूतुमाकृषे । असंत्रं । काकुदं । बीरिटे । अच्छं । परि । ईं । सीं । एनं । एनां । सृणिरितिचतुरुत्तरमशीतिःपदानि ॥ २ ॥ आशुशुक्षणिः । आशाभ्यः । काशिः । कुणारुं । अलातृणः । सलल्कं । कत्पयं । विस्रुहः । वीरुधः । नक्षद्दाभं । अस्कृधोयुः । निशृंभाः । वृबदुक्थं । ऋदूदरः । ऋदूपे । पुलुकामः । असिन्वती । कपना । भाऽऋजीकाः ।

रुजानाः । जूर्णिः । ओमना । उपलप्रक्षिणी । उपसि । प्रकलवित् । अभ्यर्धयज्वा । ईक्षे । क्षोणस्य । अस्मे । पार्थः । सर्वीमनि । सप्रथाः । विदथानि । श्रायंतः । आशीः । अजीगः । अमूरः । शशमानः । देवोदेवाच्या-कृपा । विजामातुः । ओमासः । सोमानं । अनवायं । किमीदिने । अमवान् । अमीवा । दुरितं । अप्वा । अमतिः । श्रुष्टी । पुरंधिः । रुशत् । रिशादसः । सुदत्रः । सुविदत्रः । आनुषक् । तुर्वणिः । गिर्वणसे । असूर्ते-सूर्ते । अम्यक् । यादृश्मिन् । जारयायि । अग्रिया । चनः । पचता । शुरुधः । अमिनः । जज्झतीः । अप्रति-ष्कुतः । शाशदानः । सृप्रः । सुशिप्रः । शिप्रे । रंसु । द्विबर्हाः । अक्रः । उराणः । स्तियानां । स्तिपाः । जवारु । जरूथं । कुलिशः । तुंजः । बर्हणा । ततनुष्टिं । इलीविशः । कियेधाः । भृमिः । विष्पितः । तुरीपं । रास्पिनः । ऋंजतिः । ऋजुनीती । प्रतद्वसू । हिनोत । चोष्कूयमाणः । चोष्कूयते । सुमत् । दिविष्टिषु । दूतः । जिन्वति । अमत्रः । ऋचीषमः । अनर्शराति । अनर्वा । असामि । गल्दया । जल्हवः । बकुरः । बेकनाटान् । अभिधेतन । अंहुरः । बतः । वाताप्यं । चाकन् । रथर्यति । असक्रां । आधवः । अनवब्रवः । सदान्वे । शिरिंबिठः । पराशरः । क्रिविर्दती । करूळती । दनः । शरारुः । इदंयुः । कीकटेषु । बुंदः । वृंदं । किः । उल्बं । ऋबीसम्-बीसमितित्रयस्त्रिंशच्छतंपदानि ॥ ३ ॥ जहासस्निमाग्रशुक्षणिपस्त्रीणि ॥ इतिनैघंटुकेचतुर्थोऽध्यायः ॥ ४ ॥

॥ ॐ अग्निः । जातवेदाः । वैश्वानरइतित्रीणिपदानि ॥ १ ॥ द्रविणोदाः । इध्मः । तनूनपात् । नराशंसः । इळः । बर्हिः । द्वारः । उषासानक्ता । दैव्याहोतारा । तिस्रोदेवीः । त्वष्टा । वनस्पतिः । स्वाहाकृतयइतित्रयोदशपदानि ॥ २ ॥ अश्वः । शकुनिः । मंडूकाः । अक्षाः । ग्रावाणः । नराशंसः । रथः । दुंदुभिः । इषुधिः । हस्तघ्नः । अभीशवः । धनुः । ज्या । इषुः अश्वा । अश्वाजनी । उलूखलं । वृषभः । द्रुघणः । पितुः । नद्यः । आपः । ओषधयः । रात्रिः । अरण्यानी । श्रद्धा । पृथिवी । अप्वा । अग्नायी । उलूखलमुसले । हविर्धाने । द्यावापृथिवी । विपाट्छुतुद्री । आर्त्नी । शुनासीरौ । देवीजोष्ट्री । देवीऊर्जाहुतीतिषट्त्रिंशत्पदानि ॥ ३ ॥ वायुः । वरुणः । रुद्रः । इंद्रः । पर्जन्यः । बृहस्पतिः । ब्रह्मणस्पतिः । क्षेत्रस्यपतिः । वास्तोष्पतिः । वाचस्पतिः । अपांनपात् । यमः । मित्रः । कः । सरस्वान् । विश्वकर्मा । ताक्ष्यैः । मन्युः । दधिक्राः । सविता । त्वष्टा । वातः । अग्निः । वेनः । असुनीतिः । ऋतः । इंदुः । प्रजापतिः । अहिः । अहिर्बुध्न्यः । सुपर्णः । पुरूरवाइतिद्वात्रिंशत्पदानि ॥ ४ ॥ श्येनः । सोमः । चंद्रमाः । मृत्युः । विश्वानरः । धाता । विधाता । मरुतः । रुद्राः । ऋभवः । अंगिरसः । पितरः । अथर्वाणः । भृगवः । आप्त्याः । अदितिः । सरमा । सरस्वती । वाक् । अनुमतिः । राका । सिनीवाली । कुहूः । यमी । उर्वशी । पृथिवी । इंद्राणी । गौरी । गौः ।

धेनुः । अघ्न्या । पथ्या । स्वस्तिः । उषाः । इळा । रोदसीतिषट्त्रिंशत्पदानि ॥ ५ ॥ अश्विनौ । उषाः । सूर्या । वृषाकपायी । सरण्यूः । त्वष्टा । सविता । भगः । सूर्यः । पूषा । विष्णुः । विश्वानरः । वरुणः । केशी । केशिनः । वृषाकपिः । यमः । अजएकपात् । पृथिवी । समुद्रः । अथर्वा । मनुः । दध्यङ् । आदित्याः । सप्तऋषयः । देवाः । विश्वेदेवाः । साध्याः । वसवः । वाजिनः । देवपत्न्योदेवपत्न्यइत्येकत्रिंश-त्पदानि ॥ ६ ॥ अग्निर्द्रविणोदाअश्वोवायुःश्येनोश्विनौषट् ॥ इतिनैघंटुकेपंचमोऽध्यायः ॥

॥ शिक्षादिवेदांगचतुष्टयंसमासम् ॥



इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा
स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् । शके १९०७, सन १९८६

श्रीगणेशायनमः ॥ हरिः ॐ ॥ समाम्नायःसमाम्नातःसव्याख्यातव्यस्तमिमंसमाम्नायंनिघंटवइत्याचक्षतेनिघंटवःकस्मा
न्निगमाइमेभवंतिच्छंदोभ्यःसमाहृत्यसमाहृसत्यसमाम्नातास्तेनिगंतवएवसंतोनिगमनान्निघंटवउच्यंतइत्यौपमन्यवो
ऽपिवाहननादेवस्युःसमाहताभवंतियद्वासमाहृताभवंतितद्यान्येतानिचत्वारिपदजातानिनामाख्यातेचोपसर्गनिपाता
श्चतानीमानिभवंतितत्रैतन्नामाख्यातयोर्लक्षणंप्रदिशंतिभावप्रधानमाख्यातंसत्त्वप्रधानानिनामानितद्यत्रोभेभावप्रधा
नेभवतःपूर्वापरीभूतंभावमाख्यातेनाचष्टेव्रजतिपचतीत्युपक्रमप्रभृत्यपवर्गपर्यंतंमूर्तंसत्त्वभूतंसत्त्वनामभिर्व्रज्यापक्तिरि
त्यदइतिसत्त्वानामुपदेशोगौरश्वःपुरुषोहस्तीतिभवतीतिभावस्यास्तेशेतेव्रजतितिष्ठतीतींद्रियनित्यंवचनमौदुंबरायणः
॥ १ ॥ तत्रचतुष्ट्वंनोपपद्यतेयुगपदुत्पन्नानांवाशब्दनामितरेतरोपदेशःशास्त्रकृतोयोगश्चव्याप्तिमत्त्वात्तुशब्दस्याणी
यस्त्वाच्चशब्देनसंज्ञाकरणंव्यवहारार्थंलोकेतेषांमनुष्यवद्देवताभिधानंपुरुषविद्यानित्यत्वात्कर्मसंपत्तिर्मंत्रोवेदेषड्भाव
विकाराभवंतीतिवार्ष्यायणिर्जायतेऽस्तिविपरिणमतेवर्धतेऽपक्षीयतेविनश्यतीतिजायतइतिपूर्वभावस्यादिमाचष्टेना
परभावमाचष्टेनप्रतिषेधत्यस्तीत्युत्पन्नस्यसत्त्वस्यावधारणंविपरिणमतइत्यप्रच्यवमानस्यतत्वाद्विकारंवर्धतइतिस्वांगा
भ्युच्चयंसांयौगिकानांवार्थानांवर्धतेविजयेनेतिवावर्धतेशरीरेणेतिवाऽपक्षीयतइत्येतेनैवव्याख्यातःप्रतिलोमंविनश्य
तीत्यपरभावस्यादिमाचष्टेनपूर्वभावमाचष्टेनप्रतिषेधति ॥ २ ॥ अतोऽन्येभावविकाराएतेषामेवविकाराभवंतीतिह

स्माहंतेयथावचनमभ्यूहितव्यांननिर्बद्धाउपसर्गाअर्थान्निराहुरितिशाकटायनोनामाख्यातयोस्तुंकर्मोपसंयोगद्योतका
भवंत्युच्चावचाःपदार्थाभवंतीतिगार्ग्यस्तद्यऽएषुपदार्थःप्राहुरिमेतन्नामाख्यातयोरर्थविकरणमाइत्यर्वागर्थेप्रपरेत्येतस्य
प्रातिलोम्यंमभीत्याभिमुख्यंप्रतीत्येतस्यप्रातिलोम्यंमतिसुइत्यभिपूजितार्थेनिर्दुरित्येतयोःप्रातिलोम्यंन्यवेतिविनिग्र
हार्थीयांउदित्येतयोःप्रातिलोम्यंसमित्येकीभावंव्यपेत्येतस्यप्रातिलोम्यंमन्वितिसादृश्यापरभावंमपीतिसंसर्गमुपेत्युप
जनंपरीतिसर्वतोभावमधीत्युपरिभावंमैश्वर्यंवैवमुच्चावचानर्थान्प्राहुंस्तउपेक्षितव्याः ॥ ३ ॥ अथनिपाताउच्चाव
चेष्वर्थेषुनिपतंत्यप्युपमार्थेऽपिकर्मोपसंग्रहार्थेऽपिपदपूरणास्तेषामेतेचत्वारउपमार्थेभवंतींवेतिभाषायांचान्वध्यायं
चाग्निरिवेंद्रइवेतिंनेतिप्रतिषेधार्थीयोभाषायामुभयमन्वध्यायंनेंद्रंदेवममंसतेतिंप्रतिषेधार्थीयःपुरस्तादुपाचारंस्तस्य
यत्प्रतिषेधतिंदुर्मदासोनसुरायामित्युपमार्थीयउपरिष्टादुपाचारंस्तस्ययेनोपमिमीतेचिदित्येषोऽनेककर्माचार्यश्चिदिदं
ब्रूयादितिपूजायामाचार्यःकस्मादाचार्यआचारंग्राहयत्याचिनोत्यर्थानाचिनोतिबुद्धिमितिवादधिचिदित्युपमार्थेकु
ल्माषांश्चिदाहरेत्यवकुत्सितेकुल्माषाःकुलेषुसीदंतिंनुइत्येषोऽनेककर्मेदंनुकरिष्यतीतिहेत्वपदेशेकथंनुकरिष्यतीत्यनुपृ
ष्टेनन्वेतदकार्षीदितिचाथाप्युपमार्थेभवति ॥ वृक्षस्यनुतेपुरुहूतवयाः ॥ वृक्षस्येवतेपुरुहूतशाखावयाःशाखावेते
र्वातायनाभवंतिशाखाःखशयाःशक्नोतेर्वाथयस्यागमादर्थपृथक्त्वमहविज्ञायतेनत्वौद्देशिकमिवविग्रहेणपृथक्त्वात्सक

॥ २ ॥

मोपसंग्रहश्चेतिसमुच्चयार्थउभाभ्यांसंप्रयुज्यतेऽहंचत्वंचवृत्रहन्नित्येतस्मिन्नेवार्थेदेवेभ्यश्चपितृभ्यएत्याकारोवेतिविचा रणार्थेहंताहंपृथिवीमिमांनिदधानीहवेहवेत्यथापिसमुच्चयार्थेभवति ॥ ४ ॥ वायुर्वात्वामनुर्वात्वेति । अहइतिचह इतिचविनिग्रहार्थीयौपूर्वेणसंप्रयुज्येतेअयमहेदंकरोत्वयमिदामिदंहकरिष्यतीदंनकरिष्यतीत्यथाप्युकारएतस्मिन्नेवा र्थेउत्तरेणमृषेमेवदंतिसत्यमुतेवदंतीत्यथापिपदपूरणइदमुतदुहीत्येषोऽनेककर्मेदंहिकरिष्यतीतिहेत्वपदेशेकथंहिकरि ष्यतीत्यनुपृष्टेकथंहिव्याकरिष्यतीत्यसूयायांकिलेतिविद्याप्रकर्षएवंकिलेत्यथापिननन्विइत्येताभ्यांसंप्रयुज्यतेऽनुपृष्टेन किलैवंननुकिलैवंमेतिप्रतिषेधेमाकार्षीर्माहार्षीरितिचखल्वितिचखलुकृत्वाखलुकृतमथापिपदपूरणएवंखलुतद्बभूवेति शश्वदितिविचिकित्सार्थीयोभाषायांशश्वदेवमित्यनुपृष्टएवंशश्वदित्यस्वयंपृष्टेनूनमितिविचिकित्सार्थीयोभाषायामुभ यमन्वध्यायंविचिकित्सार्थीयश्चपदपूरणश्चागस्त्यइंद्रायहविर्निरुप्यमरुद्भ्यःसंप्रदित्सांचकारसइंद्रएत्यपरिदेवयांचक्रे ॥ ५ ॥ ननूनमस्तिनोश्वःकस्तद्वेदयदद्भुतं । अन्यस्यचित्तमभिसंचरेण्यमुताधीतंविनश्यति ॥ ननूनमस्त्यद्यतनं नोएवश्वस्तनमद्यास्मिन्द्यावित्युरित्यह्नोनामधेयंद्योततइतिसतःश्वउपाशंसनीयःकालोह्योहीनःकालः ॥ कस्तद्वेदयद द्भुतं ॥ कस्तद्वेदयदभूतमिदमपीतरदद्भुतमभूतमिवान्यस्यचित्तमभिसंचरेण्यमभिसंचार्यन्योनानेयश्चित्तंचेततेरुता धीतंविनश्यतीत्यप्याध्यातंविनश्यंत्याध्यातमभिप्रेतमथापिपदपूरणः ॥ ६ ॥ नूनंसातेप्रतिवरंजरित्रेदुहीयदिन्द्रद

क्षिणां मघोनी । शिक्षास्तोतृभ्यो माति धग्भगो नो बृहद्वदेम विदथे सुवीराः ॥ सा ते प्रतिदुग्धां वरं जरित्रे वरो वरयितव्यो
भवति जरिता गरिता दक्षिणां मघोनी मघवतीं मघमिति धननामधेयं मंहतेर्दानकर्मणो दक्षिणा दक्षतेः समर्धयतिकर्मणो
व्यृद्धं समर्धयतीत्यपि वा प्रदक्षिणागमनाद्दिशमभिप्रेत्य दिग्घस्तप्रकृतिर्दक्षिणो हस्तो दक्षतेरुत्साहकर्मणो दाशतेर्वा स्याद्दा
नकर्मणो हस्तो हंतेः प्राशुर्हनने देहि स्तोतृभ्यः कामान्मास्मानतिदंहीर्मास्मानतिहाय दा भगो नोऽस्तु बृहद्वदेम स्वे वेदने भ
गो भजतेर्बृहदिति महतो नामधेयं परिवृढं भवति वीरवंतः कल्याणवीरा वा वीरो वीरयत्यमित्रान्वेतेर्वा स्याद्गतिकर्मणो वी
रयतेर्वा सीमिति परिग्रहार्थीयो वा पदपूरणो वा । प्र सीमादित्यो असृजत् ॥ प्रासृजदिति वा प्रासृजत्सर्वत इति वा वि सीम
तः सुरुचो वेन आवरिति च व्यवृणोत्सर्वत आदित्यः सुरुच आदित्यरश्मयः सुरोचनादपि वा सीमेत्येतदनर्थकमुपबंधमाद
दीत पंचमीकर्माणं सीम्नः सीमतः सीमातो मर्यादातः सीमा मर्यादा विषीव्यति देशाविति त्व इति विनिग्रहार्थीयं सर्वनामानु
दात्तमर्धनामेत्येके ॥ ७ ॥ ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्वरीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मा
त्रां वि मिमीत उ त्वः ॥ इत्यृत्विक्कर्मणां विनियोगमाचष्टे ऋचामेकः पोषमास्ते पुपुष्वान्होतर्गर्चनी गायत्रमेको गायति शक्व
रीषूद्गाता गायत्रं गायतेः स्तुतिकर्मणः शक्वर्य ऋचः शक्नोतेस्तद्यदाभिर्वृत्रमशकद्धंतुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते
ब्रह्मैको जाते जाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति ब्रह्मा परिवृढः श्रुततो ब्रह्म परिवृढं सर्वतो यज्ञस्य मात्रां विमि

मीतएकोऽध्वर्युंरध्वर्युरध्वरयुंरध्वरंयुनक्त्यध्वरस्यनेताध्वरंकामयतइतिवापिवाधीयानेयुरुपबंधोऽध्वरइतियज्ञनामं
ध्वरतिर्हिंसाकर्मातत्प्रतिषेधोनिपातइत्येकैतत्कथमनुदात्तप्रकृतिनामस्याद्दृष्टव्ययंतुभवत्युतत्वंसख्येस्थिरपीतमाहुरि
तिद्वितीयायांमुतोत्वस्मैतन्वंविसस्रइतिचतुर्थ्यांमथापिप्रथमाबहुवचने ॥ ८ ॥ अक्षण्वन्तःकर्णवंतःसखायोमनोजवे
ष्वसमाबभूवुः । आदघ्नासउपकक्षासउत्वेह्रदाइवस्नात्वाउत्वेददृश्रे ॥ अक्षिमंतःकर्णवंतःसखायोऽक्षिचष्टेरनक्तेरि
त्याग्रायणस्तस्मादेतेव्यक्ततरेइवभवतइतिहविज्ञायतेकर्णःकृंततेर्निकृत्तद्वारोभवत्यृच्छतेरित्याग्रायणऋच्छंतीवखेउ
दगंतामितिहविज्ञायतेमनसांप्रजवेष्वसमाबभूवुरास्यदघ्नाअपरउपकक्षदघ्नाअपरआस्यमस्यतेरास्यंदतएनदन्नमिति
वादघ्नंदघ्यतेःस्रवतिकर्मणोदस्यतेर्वास्याद्विदस्ततरंभवतिप्रस्नेयाह्रदाइवैकेप्रस्नेयादद्दशिरेस्नानार्हाह्रदोह्रादतेःशब्दक
र्मणोह्लादतेर्वास्याच्छीतीभावकर्मणोऽथापिसमुच्चयार्थेभवतिपर्यायाइवत्वदाश्विनमाश्विनंचपर्यायाश्चेत्यथयेप्रवृत्तेऽ
र्थेऽमिताक्षरेषुग्रंथेषुवाक्यपूरणाआगच्छंतिपदपूरणास्तेमिताक्षरेष्वनर्थकाःकमीमिद्विति ॥ ९ ॥ निष्टत्क्रासश्चि
दिन्नरोभूरितोकावृकादिव । बिभ्यस्यंतोववाशिरेशिशिरंजीवनायकं ॥ शिशिरंजीवनाय ॥ शिशिरंश्रृणातेःशंम्नाते
र्वा । एमेनंसृजतासुते । आसृजतैनंसुते । तमिद्वर्धंतुनोगिरः । तंवर्धयंतुनोगिरःस्तुतयोगिरोगृणातेः । अयमुंतेस
मतसि । अयंतेसमतसीवोऽपिदृश्यतेसुविदुरिवसुविज्ञायेतेइवाथापिनैयेवइदिष्येतेनसंप्रयज्यतेपरिभये ॥ १० ॥

हविर्भिरेकेस्वरितःसचंतेसुन्वंतएकेसवनेषुसोमान् । शचीर्मदंतउतदक्षिणाभिर्नेज्जिह्मायंत्योनरकंपतामेतिनरकंन्यर
कंनीचैर्गमनंनास्मिन्नरमणंस्थानंमल्पमप्यस्तीतिवांथापिनचेत्येषइदित्येतेनंसंप्रयुज्यतेनुपृष्टेनचेत्सुरांपिबंतीतिसुरासुनो
तेरेवमुच्चावचेष्वर्थेषुनिपतंतितेतउपेक्षितव्याः ॥ ११ ॥ इतीमानिचत्वारिपदजातान्यनुक्रांतानिनामाख्यातेचोपस
र्गनिपाताश्चंतत्रनामान्याख्यातजानीतिशाकटायनोनैरुक्तसमयश्चनसर्वाणीतिगार्ग्योवैयाकरणानांचैकेंतद्यत्रस्वरसं
स्कारौसमर्थौप्रादेशिकेनगुणेनान्वितौस्यातांसंविज्ञातानितानियथागौरश्वःपुरुषोहस्तीत्यथचेत्सर्वाण्याख्यातजानि
नामानिस्युंयःकश्चतत्कर्मकुर्यात्सर्वंतत्सत्वंतथाचक्षीरन्यःकश्चाध्वानमश्नुवीतांश्वःसवचनीयःस्यांद्यत्किंचित्तृंद्यात्तृणंतं
दथापिचेत्सर्वाण्याख्यातजानिनामानिस्युर्यावद्भिर्भावैःसंप्रयुज्येतंतावद्भ्योनामधेयप्रतिलंभःस्यात्तत्रैवंस्थूणादरश
यावासंजनीचस्यात् ॥ १२ ॥ अथापियएषांन्यायवान्कार्मनामिकःसंस्कारोयथाचापिप्रतीतार्थानिस्युस्तथैनान्या
चक्षीरन्पुरुषंपुरिशयइत्याचक्षीरन्नष्टेत्यश्वंतर्दनमितितृणमथापिनिष्पन्नेऽभिव्याहारेऽभिविचारयंतिप्रथनात्पृथिवी
त्याहुःकएनामप्रथयिष्यंत्किमाधारश्चेत्यथानन्वितेऽर्थेऽप्रादेशिकेविकारेपदेभ्यःपदेतरार्धान्त्संचस्कारशाकटायनंए
तेःकारितंचंयकारादिंचांतकरणमस्तेःशुद्धंचसकारादिंचांथापिसत्त्वपूर्वोभावइत्याहुरपरस्माद्भावात्पूर्वस्यप्रदेशोनोप
पद्यतइतितदेतन्नोपपद्यते ॥ १३ ॥ यथोहिनुवाएतत्तद्यत्रस्वरसंस्कारौसमर्थौप्रादेशिकेनगुणेनान्वितौस्यातांसर्वंप्रा

देशिकमित्यैवंसत्यनुपालंभएषभवतिंयथोएतद्यःकश्चतत्कर्मकुर्यात्सर्वंतत्सत्वंतथाचक्षीरन्निंतिपश्यामःसमानकर्मणां
नामधेयप्रतिलंभमेकेषांनैकेषांयथातक्षापरिव्राजकौजीवनोभूमिजइत्यतेनैवोत्तरःप्रत्युक्तोयथोएतद्यथाचापिप्रतीता
र्थानिस्युंस्तथैनान्याचक्षीरन्निंतिसंत्यल्पप्रयोगाःकृतोप्यैकपदिकायथाव्रततिर्दमूनाजाट्यआट्णारोजागरूकोदर्विहोमी
तिंयथोएतन्निष्पन्नेऽभिव्याहारेभिविचारयंतीतिंभवतिहिनिष्पन्नेऽभिव्याहारेयोगपरीष्टिःप्रथनात्पृथिवीत्याहुःकए
नामप्रथयिष्यंत्किमाधारश्चेत्यथवैदर्शनेनपृथुरप्रथिताचेदप्यन्यैरथाप्येवंसर्वएवदृष्टप्रवादाउपालभ्यंतैयथोएतत्पदे
भ्यःपदेतराधान्त्संचस्कारेतिंयोनन्वितेर्थेसंचस्कारसतेनगर्ह्यःसैषापुरुषगर्हानशास्त्रगर्हाइतिंयथोएतदपरस्माद्भावा
त्पूर्वस्यंप्रदेशोनोपपद्यतइतिपश्यामःपूर्वोत्पन्नानांसत्वानामपरस्माद्भावान्नामधेयप्रतिलंभमेकेषांनैकेषांयथाबिल्वादो
लंबचूडकइतिंबिल्वंभरणाद्वाभेदनाद्वा ॥ १४ ॥ अथापीदमंतरेणमंत्रेष्वर्थप्रत्ययोनविद्यतेऽर्थमप्रतियतोनात्यंतं
स्वरसंस्कारोद्देशस्तदिदंविद्यास्थानंव्याकरणस्यकार्त्स्न्यंस्वार्थसाधकंचंयदिमंत्रार्थप्रत्ययायानर्थकंभवतीतिकौत्सोऽन
र्थकाहिमंत्रास्तदेतेनोपेक्षितव्यंनियतवाचोयुक्तयोनियतानुपूर्व्याभवंत्यथापिब्राह्मणेनरूपसंपन्नाविधीयंतउरुप्रथस्वे
तिप्रथयतिंप्रोहाणीतिप्रोहत्यंथाप्यनुपपन्नार्थाभवंत्योषधेत्रायस्वैनंस्वधितेमैनंहिंसीरित्याहहिंसन्नथापिविप्रतिषिद्धा
र्थाभवंति । एकंएवरुद्रोऽवंतस्थेनद्वितीयः । असंख्याताःसहस्राणियेरुद्राअधिभूम्याम् ॥ अशत्रुरिंद्रजज्ञिषेशतंसेना

अजयत्साकमिंद्रइंत्यथापिजानंतंसंप्रेष्यंत्यग्नयेसमिध्यमानायांनुब्रूहीत्यथाप्याहादितिःसर्वमित्यंदितिद्यौरदितिरंतरि
क्षमितिंतदुपरिष्टाद्व्याख्यास्यामोथाप्यविस्पष्टार्थाभवंन्त्यम्यग्याद्दश्मिन्जारयायिकाणुकेति ॥ १५ ॥ अर्थवंतःश
ब्दसामान्यांदेतद्वैयज्ञस्यसमृद्धंयद्रूपसमृद्धंयत्कर्मक्रियमाणंमृग्यजुर्वाभिवदतीतिचब्राह्मणंक्रीळंतौपुत्रैर्नप्तृभिरितिय
थोएतंन्नियतवाचोयुक्तयोंनियतानुपूर्व्याभवंतीतिंलौकिकेष्वप्येतंद्यथेंद्राग्नीपितापुत्राविर्तियथोऽएतंद्ब्राह्मणेनरूपसंप
न्नाविधीयंतइंत्युदितानुवादःसभवतियथोऽएतंदनुपपन्नार्थाभवंतींत्याम्नायवचनादहिंसाप्रतीयेतंयथोऽएतद्विप्रतिषि
द्धार्थाभवंतीतिंलौकिकेष्वप्येतंद्यथासपत्नोऽयंब्राह्मणोऽनमित्रोराजेर्तियथोएतज्जानंतंसंप्रेष्यतीतिंजानंतमभिवादय
तेंजानतेमधुपर्कंप्राहेर्तियथोऽएतददितिःसर्वमितिंलौकिकेष्वप्येतंद्यथासर्वरसाऽअनुप्राप्ताःपानीयमितिंयथोएतदवि
स्पष्टार्थाभवंतीतिंनैषस्थाणोरपराधोंयदेनमंधोनपश्यतिंपुरुषापराधःसभवतिंयथाजानपदीषुविद्यातःपुरुषविशेषोभव
तिंपारोवर्यवित्सुतुखलुवेदितृषुंभूयोविद्यःप्रशस्योभवति ॥ १६ ॥ अथापीदमंतरेणंपदविभागोनविद्यते । अव
सायपद्धतेरुद्रमृळेतिंपद्धदवसंगावंःपथ्यदनमवतेर्गत्यर्थस्यासोनामकरणंस्तस्मान्नावगृह्णंत्यवसायाश्वानितिंस्यतिरुपसृ
ष्टोविमोचनेंतस्मादवगृह्णंतिंदूतोनिर्ऋत्याइदमाजगामेतिंपंचम्यर्थप्रेक्षावांषष्ठ्यर्थप्रेक्षावाःकारांतंपरोनिर्ऋत्याआचक्ष्वे
तिंचतुर्थ्यर्थप्रेक्षैकारांतंपरःसंनिकर्षःसंहितापदप्रकृतिःसंहितापदप्रकृतीनिसर्वचरणानांपार्षदान्यथापियाज्ञेदैवतेनवह

वःप्रदेशाभवंतिंतदेतेनोपेक्षितव्यंतेचेद्भूयुलिंगज्ञाअत्रस्मइतिं । इंद्रंनत्वाशवसादेवतावायुंपृणंतीतिंवायुलिंगंचेंद्रलिंगं चाग्नेयेमंत्रेऽग्निरिवमन्योत्विषितःसहस्वेतिंतथाऽग्निर्मान्यवेमंत्रेत्विषितोज्वलितस्त्विषिरित्यप्यस्यदीप्तिनामभवत्यथा पिज्ञानप्रशंसाभवत्यज्ञाननिंदाच ॥ १७ ॥ स्थाणुरयंभारहारःकिलाभूदधीत्यवेदंनविजानातियोर्थं । योर्थज्ञइत्स कलंभद्रमश्नुतेनाकमेतिज्ञानविधूतपाप्मा । यद्गृहीतमविज्ञातंनिगदेनैवशब्द्यते । अनग्नाविवशुष्कैधोनतज्ज्वलतिकर्हि चित् । स्थाणुस्तिष्ठतेरर्थोऽर्तेररणस्थोवा ॥ १८ ॥ उतत्वःपश्यन्नददर्शवाचमुतत्वःशृण्वन्नशृणोत्येनां । उतोत्वस्मै तन्वं१ विसस्रेजायेवपत्यउशतीसुवासाः ॥ अप्येकःपश्यन्नपश्यतिवाचमपिचशृण्वन्नशृणोत्येनामित्यविद्वांसमाहार्ध मप्येकस्मैतन्वंविसस्रइतिस्वमात्मानंविवृणुतेज्ञानंप्रकाशनमर्थस्याहानयावाचोपमोत्तमयावाचाजायेवपत्येकामयमा नासुवासाऋतुकालेषुसुवासाःकल्याणवासाःकामयमानाऽऋतुकालेषुयथासएनांपश्यतिसशृणोतीत्यर्थज्ञप्रशंसातस्यो त्तराभूयसेनिर्वचनाय ॥ १९ ॥ उतत्वंसख्येस्थिरपीतमाहुर्नैनंहिन्वंत्यपिवाजिनेषु । अधेन्वाचरतिमाययैषवाचं शुश्रुवाँअफलामपुष्पां ॥ अप्येकंवाक्सख्येस्थिरपीतमाहूरममाणंविपीतार्थंदेवसख्येरमणीयेस्थानइतिवाविज्ञातार्थं यंनाप्नुवंतिवाग्ज्ञेयेषुबलवत्स्वप्यधेन्वाह्येषचरतिमाययावाक्प्रतिरूपयानास्मैकामान्दुग्धेवाग्दोह्यान्देवमनुष्यस्थानेषु योवाचंश्रुतवान्भवत्यफलामपुष्पामित्यफलास्माअपुष्पावाग्भवतीतिवाकिंचित्पुष्पफलेतिवार्थंवाचःपुष्पफलमाहया

ज्ञदैवतेंपुष्पफलेदेवताध्यात्मेवांसाक्षात्कृतधर्माणऋषयोबभूवुंस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्यंऽउपदेशेनमंत्रान्त्संप्रादु
रुपदेशायग्लायंतोऽवरेंबिल्मग्रहणायेमंग्रंथंसमाम्नासिषुंर्वेदंचवेदांगानिचंबिल्मंभिल्मंभासनमितिवैंतावंतःसमानक
र्माणोंधातवोधातुर्दधातेंरेतावंत्यस्यसत्त्वस्यनामधेयांन्येतावतामर्थानामिदमभिधानंनैघंटुकमिदंदेवतानामंप्राधान्ये
नेदमितितद्यदन्यदैवतेमंत्रेंनिपततिनैघंटुकंतत् । अश्वंनत्वावारंवंतं । अश्वमिवत्वावालवंतंवालादंशवारणार्थाभवं
तिंदंशोदशतेंः । मृगोनभीमःकुचरोगिंरिष्ठाः । मृगइवभीमःकुचरोगिरिष्ठांमृगोमार्ष्टेर्गतिकर्मणोंभीमोबिभ्यत्यस्मां
द्भीष्मोऽप्येतस्मादेवंकुचरइतिचरतिकर्मकुत्सितंमथचेद्देवताभिधानंक्कायंनचरतीतिंगिरिष्ठागिरिस्थायींगिरिःपर्वतः
समुद्गीर्णोभवतिंपर्ववान्पर्वतःपर्वपुनःपृणातेःप्रीणातेर्वाऽर्धमासपर्वदेवानस्मिन्प्रीणंतीतिंतत्प्रकृतीतरंत्संधिसामान्यान्मे
घस्थायींमेघोपिगिरिरेतस्मादेवंतद्यानिनामानिंप्राधान्यस्तुतीनांदेवतानांतद्दैवतमित्याचक्षतेंतदुपरिष्टाद्व्याख्यास्या
मोंनैघंटुकानिनैगमानीहेह ॥ २० ॥ ( समाम्नायस्तत्रचतुष्ट्वमतोऽन्येऽथनिपातांवायुर्वात्वाननूनंनूनंसातऋचांत्वो
क्षण्वंतोंनिष्ट्वत्क्रासोहविर्भिरितीमान्यथापियोयथोहिंन्वथापीदमर्थवंतोंऽथापीदंस्थाणुरयंमुतत्वःपश्यन्नुतत्वंसख्येविं
शतिः ) ॥ इतिनिरुक्तपूर्वषट्केप्रथमोऽध्यायः ॥ १ ॥ ॥ ६४ ॥ ॥ ६४ ॥

ॐ ॥ अथनिर्वचनंतद्येषुपदेषुस्वरसंस्कारौसमर्थौंप्रादेशिकेनगुणेनान्वितौस्यातांतथातानिनिर्ब्रूयांदथानन्वितेऽ
र्थेऽप्रादेशिकेविकारेंऽर्थनित्यःपरीक्षेतंकेनचिद्वृत्तिसामान्येनांविद्यमानेसामान्येंऽप्यक्षरवर्णसामान्यान्निर्ब्रूयांन्नत्वेवन
निर्ब्रूयांन्नसंस्कारमाद्रियेतंविशयवत्योहिवृत्तयोभवंतियथार्थंविभक्तीःसंनमयेंत्प्रत्तमवत्तमितिधात्वादीएवशिष्येतेंअ
थाप्यस्तेर्निवृत्तिस्थानेंष्वादिलोपोभवतिंस्तःसंतीत्यथाप्यंतलोपोभवतिंगत्वागतमित्यथाप्युपधालोपोभवतिंजग्मतुर्ज
ग्मुरित्यथाप्युपधाविकारोभवतिंराजादंडीत्यथापिवर्णलोपोभवतिंतत्त्वायामीत्यथापिद्विवर्णलोपस्तृंचइत्यथाप्यादि
विपर्ययोभवतिंज्योतिर्घनोबिंदुर्वाट्यइत्यंथाप्याद्यंतविपर्ययोभवतिंस्तोकारज्जुःसिकतास्तर्क्विंत्यथाप्यंतव्यापत्तिर्भव
ति ॥१॥ ओघोमेघोनाधोगाधोंवधूर्मध्वित्यथापिवर्णोपजनंआस्थद्द्वारोभरूजेतिंतद्यत्रस्वरादनंतरांतस्थांतर्धातुभवतिं
तद्द्विप्रकृतीनांस्थानमितिप्रदिशंतिंतत्रसिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेंत्तत्राप्येकेऽल्पनिष्पत्तयोभवंति
तद्यथैतदूतिर्मृदुःपृथुःपृषतःकुणारुमित्यथापिभाषिकेभ्योधातुभ्योंनैगमाःकृतोभाष्यंतेंदमूनाःक्षेत्रसाधाइत्यंथापिनै
गमेभ्योभाषिकाउष्णंघृतमित्यंथापिप्रकृतयएवैकेषुभाष्यंतेंविकृतयएकेषुंशवतिर्गतिकर्माकंबोजेष्वेवभाष्यतेंकंबोजाः
कंबलभोजाःकमनीयभोजावांकंबलःकमनीयोभवतिंविकारमस्यार्येषुभाषंतेंशवइतिदातिर्लवनार्थेप्राच्येषुदात्रमुदीच्ये
ष्वेवमेकपदानिनिर्ब्रूयांदथतद्धितसमासेष्वेकपर्वसुचानेकपर्वसुचंपूर्वंपूर्वमपरमपरंप्रविभज्यनिर्ब्रूयांदंड्यःपुरुषोदंडपुरु

षोदंडमर्हतीतिवादंडेनसंपद्यतइतिवादंडोददतेर्धारयतिकर्मणोऽक्रूरोददतेमणिमित्यभिभाषंतेदमनादित्यौपमन्यवो दंडमस्याकर्षतेतिगर्हायांकक्ष्यारज्जुरश्वस्यकक्षंसेवतेकक्षोगाहतेःक्सइतिनामकरणःख्यातेर्वानर्थकोऽभ्यासःकिमस्मि न्ख्यानमितिकषतेर्वातत्सामान्यान्मनुष्यकक्षोबाहुमूलसामान्यादश्वस्य ॥ २ ॥ राज्ञःपुरुषोराजपुरुषोराजाराज तेःपुरुषःपुरिषादःपुरिशयःपूरयतेर्वापूरयत्यंतरित्यंतरंपुरुषमभिप्रेत्य ॥ यस्मात्परंनापरमस्तिकिंचिद्यस्मान्नाणीयोन ज्यायोऽस्तिकश्चित् । वृक्षइवस्तब्धोदिवितिष्ठत्येकस्तेनेदंपूर्णंपुरुषेणसर्वमित्यपिनिगमोभवतिविश्वकद्राकर्षवीतिचक द्रइतिश्वगतौभाष्यतेद्रातीतिगतिकुत्सनाकद्रातीतिद्रातिकुत्सनाचकद्रातिकद्रातीतिसतोऽनर्थकोऽभ्यासस्तदस्मिन्न स्तीतिविश्वकद्रःकल्याणवर्णरूपःकल्याणवर्णस्येवास्यरूपंकल्याणंकमनीयंभवतिवर्णोवृणोतेरूपंरोचतेरेवंतद्धितसमा सान्निर्ब्रूयान्नैकपदानिनिर्ब्रूयान्नावैयाकरणायनानुपसन्नायाऽनिदंविदेवानित्यंह्यविज्ञातुर्विज्ञानेऽसूयोपसन्नायतुनिर्ब्रू यायोवालंविज्ञातुंस्यान्मेधाविनेतपस्विनेवा ॥ ३ ॥ विद्याहवैब्राह्मणमाजगामगोपायमाशेवधिष्टेऽहमस्मि । अ सूयकायानृजवेऽयतायनमाब्रूयावीर्यवतीतथास्यां । यआतृणत्त्यवितथेनकर्णावदुःखंकुर्वन्नमृतंसंप्रयच्छन् । तंमन्ये तपितरंमातरंचतस्मैनद्रुह्येत्कतमच्चनाह । अध्यापितायेगुरुंनाद्रियंतेविप्रावाचामनसाकर्मणावा । यथैवतेनगुरोर्भो जनीयास्तथैवतान्नभुनक्तिश्रुतंतत् । यमेवविद्याःशुचिमप्रमत्तंमेधाविनंब्रह्मचर्योपपन्नं । यस्तेनद्रुह्येत्कतमच्चनाहतस्मै

माब्रूयानिधिपायब्रह्मन्निर्तिनिधिःशेवधिरिति ॥ ४ ॥ अथातोऽनुक्रमिष्यामोंगौरितिपृथिव्यानामधेयँयद्दूरंगताभव
र्तियच्चास्यांभूतानिगच्छंर्तिगातेर्वौकारोनामकरणोंऽथापिपशुनामेहभर्वत्येतस्मादेर्वाऽथाप्यस्यांताद्धितेर्नकृत्स्नवन्निग
माभर्वांर्तिगोभिःश्रीणीतमत्सरमिर्तिपयसोमत्सरंःसोमोमंदतेस्तृप्तिकर्मणोंमत्सरइतिलोभनामोभिमत्तएनेनधनंभवर्ति
पयःपिबतेर्वाप्यायतेर्वांक्षीरंक्षरतेर्घसेर्वेरोनामकरणंउशीरमितियथांशुंदुहंतोअध्यासतेगर्वीत्यधिषवणचर्मणोंऽशुःशम
ष्टमात्रोभर्वत्यननायशंभवतीतिर्वाचर्मचरतेर्वोच्चृत्तंभवतीतिर्वाश्चापिचर्मचश्लेष्माचंगोभिःसंनद्धोअसिवीळयस्वेतिरथ
स्तुर्तावथापिस्नावचश्लेष्माचंगोभिःसंनद्धापततिप्रसूतेतीषुस्तुर्तौज्यापिगौरुच्यतैंगव्याचेत्ताद्धितंमथचेन्नगव्यागमय
तीषूनिति ॥ ५ ॥ वृक्षेवृक्षेनियंतामीमयद्गौस्ततोवयःप्रपंतान्पूरुषार्दः । वृक्षेवृक्षेधनुषिधनुर्षिवृक्षोव्रश्चनाद्वृत्वाक्षा
न्तिष्ठतीतिर्वाक्षाक्षियतेर्निवासकर्मणोंनियतामीमयद्गौःशब्दंकरोर्तिमीमयतिःशब्दकर्मांततोवयःप्रपतंर्तिपुरुषानदना
र्यविरितिशकुनिनामवेतेर्गतिकर्मणोंऽथापीषुनामेहभर्वत्येतस्मादेर्वादित्यो(ऽपि)पौरुच्यते । उतादःपरुषेगवि । पर्वव
तिभास्वतीत्यौपमन्यवोंऽथाप्यस्यैकोरश्मिश्चंद्रमसंप्रतिदीप्यतैतदेतेनोपेक्षितव्यमादित्यतोऽस्यदीप्तिर्भवतीर्तिसुषुम्नः
सूर्यरश्मिश्चंद्रमागंधर्वइत्यपिनिगमोभवर्तिसोऽपिगौरुच्यते । अत्राहगोरमन्वतेर्तितदुपरिष्टाद्व्याख्यास्यामंःसर्वेऽपि
रश्मयोगावउच्यंते ॥ ६ ॥ तावांवास्तून्युश्मसिगमध्यैयत्रगावोभूरिशृंगाअयासः । अत्राहतदुरुगायस्यवृष्णःपरमं

पदमवभाति भूरि । तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृंगा बहुशृंगा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृंगं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोद्गतमिति वा शिरसो निर्गतमिति वा यासोऽयनास्तत्र तदुरुगायस्य विष्णो महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि । पादः पद्यतेस्तन्निधानात्पदं पशुपादप्रकृतिः प्रभागपादः प्रभागपादसामान्यादितराणि पदान्येवमन्येषामपि सत्त्वानां संदेहा विद्यंते तानि चेत्समानकर्माणि समाननिर्वचनानि नानाकर्माणि चेन्नानानिर्वचनानि यथार्थं निर्वक्तव्यानीतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रांतानि तत्र निर्ऋतिर्निरमणादृच्छतेः कृच्छ्रापत्तिरितरा सा पृथिव्या संदिह्यते तयोर्विभागस्तस्या एषा भवति ॥ ७ ॥ य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् । स मातुर्योना परिवीतो अंतर्बहुप्रजा निर्ऋतिमा विवेश । बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजका वर्षकर्मेति नैरुक्ता य ईं चकारेति करोतिकिरती संदिग्धौ वर्षकर्मणा न सो अस्य वेद मध्यमः स एवास्य वेद मध्यमो यो ददर्शादित्यो पहितं स मातुर्योनौ माता अंतरिक्षं निर्मीयंतेऽस्मिन्भूतानि योनिरंतरिक्षं महानवयवः परिवीतो वायुनायमपीतरो योनिरेतस्मादेव परियुतो भवति बहुप्रजा भूमिमापद्यते वर्षकर्मणा शाकपूणिः संकल्पयांचक्रे सर्वा देवता जानामीति तस्मै देवतोभयलिंगा प्रादुर्बभूव तां न जज्ञे तां पप्रच्छ विविदिषाणि त्वेति सास्मा एतामृचमादिदेशैषा मद्देवतेति ॥ ८ ॥ अयं स शिंक्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता । सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवंती प्रति वव्रिमौहत । अयं स शब्दायते येन

गौरभिप्रवृत्तासिमातिमायुंशब्दंकरोतिमायुमिवादित्यमितिवावागेषामाध्यमिकाध्वंसनेमेघेऽधिश्रितासाचित्तिभिः कर्मभिर्नीचैर्निकरोतिमर्त्यैविद्युद्भवंतीप्रत्यूहतेवाव्रिंवव्रिरितिरूपनामवृणोतीतिसतोवर्षेणप्रच्छाद्यपृथिवींतत्पुनरादत्ते ॥ ९ ॥ हिरण्यनामान्युत्तराणिपंचदशहिरण्यंकस्माद्ध्रियतऽआयम्यमानमितिवाह्रियतेजनाज्जनमितिवाहितरमणं भवतीतिवाहृदयरमणंभवतीतिवाहर्यतेर्वास्यात्प्रेप्साकर्मणोऽतरिक्षनामान्युत्तराणिषोळशांतरिक्षंकस्मादंतराक्षांतंभवं त्यंतरेमेइतिवाशरीरेष्वंतरक्षयमितिवातत्रसमुद्रइत्येतत्पार्थिवेनसमुद्रेणसंदिह्यतेसमुद्रःकस्मात्समुद्द्रवंत्यस्मादापःसम भिद्रवंत्येनमापःसंमोदंतेऽस्मिन्भूतानिसमुदकोभवतिसमुनत्तीतिवातयोर्विभागस्तत्रेतिहासमाचक्षतेदेवापिश्चार्ष्टिषे णःशंतनुश्चकौरव्यौभ्रातरौवभूवतुःसशंतनुःकनीयानभिषेचयांचक्रेदेवापिस्तपःप्रतिपेदेततःशंतनोराज्येद्वादशवर्षाणि देवोनववर्षतमूचुर्ब्राह्मणाऽअधर्मस्त्वयाचरितोज्येष्ठंभ्रातरमंतरित्याभिषेचितंतस्मात्तेदेवोनवर्षतीतिसशंतनुर्देवापिंशि शिक्षराज्येनतमुवाचदेवापिःपुरोहितस्तेऽसानियाजयानिचत्वेतितस्यैतद्वर्षकामसूक्तंतस्यैषाभवति ॥ १० ॥ आर्ष्टिषेणोहोत्रमृषिर्निषीदन्देवापिर्देवसुमतिंचिकित्वान् । सउत्तरस्मादधरंसमुद्रमपोदिव्याअसृजद्वर्ष्याअभि । आर्ष्टिषेण ऋष्टिषेणस्यपुत्रइषितसेनस्येतिवासेनासेश्वरासमानगतिर्वापुत्रःपुरुत्रायतेनिपरणाद्वापुंनरकंततस्त्रायतइतिवाहोत्रमृ षिर्निषीदन्नृषिर्दर्शनात्स्तोमान्ददर्शेत्यौपमन्यवस्तद्यदेनांस्तपस्यमानान्ब्रह्मस्वयंभ्वभ्यानर्षत्तऋषयोऽभवंस्तदृषीणामृषि

त्वमितिविज्ञायतेंदेवापिर्देवानामार्ष्टर्यास्तुत्याचप्रदानेनचंदेवसुमतिंदेवानांकल्याणींमतिंचिकित्वांश्चेतनावान् । सउत्तरस्मादधरंसमुद्रं । उत्तरउद्धततरोभवत्यधरोऽधोऽरोऽधोनधावतीत्यूर्ध्वगतिःप्रतिषिद्धातस्योत्तराभूयसेनिर्वचनाय ॥ ११ ॥ यद्देवापिःशंतनवेपुरोहितोहोत्रायवृतःकृपयन्नदीधेत् । देवश्रुतंवृष्टिवनिंरराणोबृहस्पतिर्वाचमस्माऽअयच्छत् । शंतनुःशंतनोस्त्वितिवांशमस्मैतन्वाऽअस्त्वितिवापुरोहितःपुरएनंदधातिहोत्रायवृतःकृपायमाणोऽन्वध्यायद्देवश्रुतंदेवाएनंशृण्वंतिवृष्टिवनिंवृष्टियाचिनंरराणोरातिरभ्यस्तोबृहस्पतिर्ब्रह्मासीत्सोऽस्मैवाचमयच्छद्बृहदुपव्याख्यातं ॥ १२ ॥ साधारणान्युत्तराणिषड्दिवश्चादित्यस्यचयानित्वस्यप्राधान्येनोपरिष्टात्तानिव्याख्यास्यामआदित्यःकस्मादादत्तेरसानादत्तेभासंज्योतिषामादीप्तोभासेतिवादितेःपुत्रइतिवाल्पप्रयोगंत्वस्यैतदार्चाभ्याम्नायेसूक्तभाक्सूर्यमादितेयमदितेःपुत्रमन्यासामपिदेवतानामादित्यप्रवादाःस्तुतयोभवंतितद्यथैतन्मित्रस्यवरुणस्यार्यम्णोदक्षस्यभगस्यांशस्येत्यथापिमित्रावरुणयोः । आदित्यादानुनस्पतीदानुपती । अथापिमित्रस्यैकस्य । प्रसमित्रमर्तोऽअस्तुप्रयस्वान्यस्तआदित्यशिक्षतिव्रतेनेत्यपिनिगमोभवत्यथापिवरुणस्यैकस्य । अथावयमादित्यव्रतेतव । व्रतमितिकर्मनामनिवृत्तिकर्मवारयतीतिसतइदमपीतरद्व्रतमेतस्मादेववृणोतीतिसतोऽन्नमपिव्रतमुच्यतेयदावृणोतिशरीरं ॥ १३ ॥ स्वरादित्योभवतिसुअरणःसुईरणःस्वृतोरसान्स्वृतोभासंज्योतिषांस्वृतोभासेतिवैतेनद्यौर्व्याख्याता । पृश्निरादित्योभवति

प्राश्नुतएनंवर्णइतिनैरुक्ताः संस्प्रष्टारसान्त्संस्प्रष्टाभासंज्योतिषाँसंस्पृष्टोभासेतिवांथद्यौः संस्पृष्टाज्योतिर्भिः पुण्यकृद्भिश्च । नाकआदित्योभवतिनेतारसानांनेताभासांज्योतिषांप्रणयोऽथद्यौः कमितिसुखनामतत्प्रतिषिद्धंप्रतिषिध्येतंनवाअमुंलो कंजग्मुषेकिंचनाकंनवाअमुंलोकंगतवतेकिंचनासुखंपुण्यकृतोह्येवतत्रगच्छंति । गौरादित्योभवतिगमयतिरसान्गच्छ त्यंतरिक्षेऽथद्यौर्यत्पृथिव्याअधिदूरंगताभवतियच्चास्यांज्योतींषिगच्छंति । विष्टबादित्योभवत्याविष्टोरसानांविष्टोभा सांज्योतिषांमाविष्टोभासेतिवांथद्यौराविष्टाज्योतिर्भिः पुण्यकृद्भिश्च । नभआदित्योभवतिनेतारसानांनेताभासांज्यो तिषाँप्रणयोऽपिवाभनएवस्याद्विपरीतोननभातीतिवैतेनद्यौर्व्याख्याता ॥ १४ ॥ रश्मिनामान्युत्तराणिपंचदशरश्मि र्यमनात्तेषामादितः साधारणानिपंचाश्वरश्मिभिर्दिङ्नामान्युत्तराण्यष्टौदिशः कस्माद्दिशतेरासदनादपिवाभ्यशनात्त त्रकाष्ठाइत्येतदनेकस्यापिसत्त्वस्यनामभवतिकाष्ठादिशोभवंतिक्रांत्वास्थिताभवंतिकाष्ठाउपदिशोभवंतीतरेतरंक्रांत्वा स्थिताभवंत्यादित्योऽपिकाष्ठोच्यतेक्रांत्वास्थितोभवत्याज्यंतोऽपिकाष्ठोच्यतेक्रांत्वास्थितोभवत्यापोऽपिकाष्ठाउच्यंते क्रांत्वास्थिताभवंतीतिस्थावराणां ॥ १५ ॥ अतिष्ठंतीनामनिवेशनानांकाष्ठानांमध्येनिहितंशरीरं । वृत्रस्यंनिण्यंविच रंत्यापोदीर्घंतमआशयदिंद्रशत्रुः । अतिष्ठंतीनामनिविशमानानामित्यस्थावराणांकाष्ठानांमध्येनिहितंशरीरंमेघः श रीरंशृणातेःशम्नातेर्वावृत्रस्यनिण्यंनिर्णामंविचरंतीविजानंत्यापइतिदीर्घंद्राघतेस्तमस्तनोतेराशयदाशेतेरिंद्रशत्रुरिंद्रोऽ

स्यशमयितावाशातयितावांतस्मादिंद्रशत्रुस्तत्कोवृत्रोमेघइतिनैरुक्तास्त्वाष्ट्रोऽसुरइत्यैतिहासिकाअपांचज्योतिषश्चमि
श्रीभावकर्मणोवर्षकर्मजायतेतत्रोपमार्थेनयुद्धवर्णाभवंत्यहिवत्तुखलुमंत्रवर्णाब्राह्मणवादाश्चविवृद्ध्याशरीरस्यस्रोतांसि
निवारयांचकारतस्मिन्हतेप्रसस्यंदिरआपस्तदभिवादिन्येषर्ग्भवति ॥ १६ ॥ दासपत्नीरहिगोपाअतिष्ठन्निरुद्धाआपः
पणिनेवगावः । अपांबिलमपिहितंयदासीद्वृत्रंजघन्वाँऽअपतद्ववार । दासपत्नीर्दासादिपत्न्योदासोदस्यतेरुपदासयति
कर्माण्यहिगोपाअतिष्ठन्नहिनागुप्ताअहिरयनादेत्यंतरिक्षेऽयमपीतरोऽहिरेतस्मादेवनिर्ह्रसितोपसर्गआहंतीति । निरु
द्धाआपःपणिनेवगावः । पणिर्वणिग्भवतिपणिःपणनाद्वणिक्पण्यंनेनेक्ति । अपांबिलमपिहितंयदासीत् । बिलंभरं
भवतिबिभर्तेर्वृत्रंजघ्निवानपववारतद्वृत्रोवृणोतेर्वावर्ततेर्वावर्धतेर्वायदवृणोत्तद्वृत्रस्यवृत्रत्वमितिविज्ञायतेयदवर्तततद्वृ
त्रस्यवृत्रत्वमितिविज्ञायतेयदवर्धततद्वृत्रस्यवृत्रत्वमितिविज्ञायते ॥ १७ ॥ रात्रिनामान्युत्तराणित्रयोविंशती
रात्रिःकस्मात्प्ररमयतिभूतानिनक्तंचारीण्युपरमयतीतराणिध्रुवीकरोतिरातेर्वास्याद्दानकर्मणःप्रदीयन्तेऽस्यामवश्या
यउषोनामान्युत्तराणिषोळशोषाःकस्मादुच्छतीतिसत्यारात्रेरपरःकालस्तस्याएषाभवति ॥ १८ ॥ इदंश्रेष्ठंज्यो
तिषांज्योतिरागाच्चित्रःप्रकेतोअजनिष्टविभ्वा । यथाप्रसूतासवितुःसवायँऽएवारात्र्युषसेयोनिमारैक् ॥ इदंश्रेष्ठंज्योति
षांज्योतिरागमच्चित्रंप्रकेतनंप्रज्ञाततममजनिष्टविभूततमंयथाप्रसूतासवितुःप्रसवायरात्रिरादित्यस्यैवंरात्र्युषसेयोनि

मरिचत्स्थानँस्त्रीयोनिरभियुतएनांगर्भँस्तस्याएषापराभवति ॥ १९ ॥ रुशंद्वत्सारुशंतीश्वेत्यागादारैगुकृष्णासदंना
न्यस्याः । समानबंधूअमृतेंअनूचीद्यावावर्णंचरतआमिनाने । रुशद्वत्सासूर्यवत्सांरुशदितिवर्णनामरोचतेर्ज्वलतिक
र्मणंःसूर्यमस्यावत्समाहंसाहचर्यांद्रसहरणाद्वां रुशंतीश्वेत्यागांत् । श्वेत्याश्वेततेररिचंत्कृष्णासदनान्यस्याःकृष्णवर्णा
रात्रिंःकृष्णंकृष्यतेर्निकृष्टोवर्णोंऽथैनेसंस्तौतिंसमानबंधूसमानबंधनेंअमृतेअमरणधर्माणांवनूचीअनूच्यांवितीतरेतर
मभिप्रेत्यंद्यावावर्णंचरतस्तेएवंद्यावौद्योतनांदपिवाद्यावाचरतंस्तयासहचरतइतिस्यांदामिनानेऽआमिन्वानेंअन्योन्य
स्याध्यात्मंकुर्वाणेंऽअहर्नामान्युत्तराणिंद्वादशाहःकस्मांदुपाहरंत्यस्मिन्कर्माणिंतस्यैषनिपातोभवतिंवैश्वानरीयायामृ
चि ॥ २० ॥ अहंश्चकृष्णमहुरर्जुंनंचविवर्तेतेरजंसीवेद्याभिंः । वैश्वानरोजायंमानोनराजावांतिरज्योतिंषाग्निस्तमांसि ।
अहश्चकृष्णंरात्रिंःशुक्लंचाहरर्जुनंविवर्तेतेरजंसीवेद्याभिर्वेदितव्याभिःप्रवृत्तिभिंर्वैश्वानरोजायमानंइवोद्यन्नादित्यंःसर्वे
षांज्योतिषांराजावांहन्नग्निर्ज्योतिषातमांसिंमेघनामान्युत्तराणित्रिंशंन्मेघःकस्मांन्मेहतीतिसतंआउपरउपलइत्येताभ्यां
साधारणानिपर्वतनामभिंरुपरउपलोमेघोभवंत्युपरमंतेऽस्मिन्नभ्राण्युपरताआपइतिवांतेषामेषाभवति ॥ २१ ॥ देवानां
मानेंप्रथमाऽअंतिष्ठन्कृंतत्रांदेषामुपंराउदायंन् । त्रयंस्तपंतिपृथिवीमनूपाद्वाबृबूकंवहतःपुरीषं । देवानांनिर्माणेप्रथमा
ऽअतिष्ठन्माध्यमकादेवगणांःप्रथमइतिमुख्यनामैतत्सोभवतिंकृंतत्रमंतरिक्षंविकर्तनंमेघानांविकर्तनेनमेघानामुदकं

जायते ॥ त्रयंस्तपंतिपृथिवीमनूपाः । पर्जन्योवायुरादित्यःशीतोष्णवर्षैरोषधीःपाचयंत्यनूपाअनुवपंतिलोकान्त्स्वेन स्वेनकर्मणायमपीतरोऽनूपएतस्मादेवानूप्यतेऽउदकेनापिवान्यावितिस्याद्यथाप्रागितितस्यानूपइतिस्याद्यथाप्राचीन मिति । द्वाबृबूकंवहतःपुरीषं । वाय्वादित्याउदकंबृबूकमित्युदकनामब्रवीतेर्वाशब्दकर्मणोभ्रंशतेर्वापुरीषंपृणातेःपूर यतेर्वा ॥ २२ ॥ वाङ्नामान्युत्तराणिसप्तपंचाशद्वाक्कस्माद्वचेस्तत्रसरस्वतीत्येतस्यनदीवद्देवतावच्चनिगमाभवंतितद्य देवतावदुपरिष्टात्तद्व्याख्यास्यामोऽथैतन्नदीवत् ॥२३॥ इयंशुष्मेभिर्बिसखाऽइवारुजत्सानुगिरीणांतविषेभिरूर्मिभिः। पारावतघ्नीमवसेसुवृक्तिभिःसरस्वतीमाविवासेमधीतिभिः । इयंशुष्मैःशोषणैःशुष्ममितिवलनामशोषयतीतिसतोबिसं बिस्यतेर्भेदनकर्मणोवृद्धिकर्मणोवासानुसमुच्छ्रितंभवतिसमुन्नमितिवामहद्भिरूर्मिभिःपारावतघ्नींपारावारघातिनीं पारंपरंभवत्यवारमवरमवनायसुप्रवृत्ताभिःशोभनाभिःस्तुतिभिःसरस्वतींनदींकर्मभिःपरिचरेमोदकनामान्युत्तराण्ये कशतमुदकंकस्मादुनत्तीतिसतोनदीनामान्युत्तराणिसप्तत्रिंशन्नद्यःकस्मान्नदनाइमाभवंतिशब्दवत्योवहुलमासांनैघं टुकंवृत्तमाश्चर्यमिवप्राधान्येनतत्रेतिहासमाचक्षतेविश्वामित्रऋषिःसुदासःपैजवनस्यपुरोहितोबभूवविश्वामित्रःसर्वमि- त्रःसर्वंसंसृतंसुदाःकल्याणदानःपैजवनःपिजवनस्यपुत्रःपिजवनःपुनःस्पर्धनीयजवोवामिश्रीभावगतिर्वासवित्तंगृही त्वाविपाट्छुतुद्र्योःसंभेदमाययावनुययुरितरेसविश्वामित्रोनदीस्तुष्टावगाधाभवतेत्यपिद्विवदपिबहुवत्तद्यद्द्विवदुपरि

ष्टांत्तद्व्याख्यास्यामोऽथैतद्बहुवत् ॥ २४ ॥ रमध्वंमेवचसेसोम्यायऋतावरीरुपमुहूर्तमेवैः । प्रसिंधुमच्छाबृहतीमनीषावस्युरह्वेकुशिकस्यसूनुः । उपरमध्वंमेवचसेसोम्यायसोमसंपादिनंऋतावरीऋतवत्यऋतमित्युदकनामप्रत्यृतंभवति मुहूर्तमेवैरयनैरवनैर्वामुहूर्तोमुहुऋतुंऋतुरर्तेर्गतिकर्मणोमुहुर्मूढइवकालोयावदभीक्ष्णंचेत्यभीक्ष्णमभिक्षणंभवतिक्षणः क्षणोतेःप्रक्ष्णुतःकालःकालःकालयतेर्गतिकर्मणःप्राभिह्वयामिसिंधुंबृहत्यामहत्यामनीषयामनसईषयास्तुत्याप्रज्ञयावावनायकुशिकस्यसूनुःकुशिकोराजाबभूवक्रोशतेःशब्दकर्मणःक्रंशतेर्वास्यात्प्रकाशयतिकर्मणःसाधुविक्रोशयितार्थानामितिवानद्यःप्रत्यूचुः ॥ २५ ॥ इंद्रोअस्माँऽअरदद्वज्रबाहुरपाहन्वृत्रंपरिधिंनदीनाँ । देवोऽनयत्सवितासुपाणिस्तस्यवयंप्रसवेयामउर्वीः । इंद्रोअस्मानरदद्वज्रबाहूरदतिःखनतिकर्मापाहन्वृत्रंपरिधिंनदीनामितिव्याख्यातंदेवोऽनयत्सवितासुपाणिःकल्याणपाणिःपाणिःपणायतेःपूजाकर्मणःप्रगृह्यपाणीदेवान्पूजयंति । तस्यवयंप्रसवेयामउर्वीः । उर्व्यऊर्णोतेर्वृणोतेरित्यौर्णवाभःप्रत्याख्यायांततआशुश्रुवुः ॥ २६ ॥ आतेकारोशृणवामावचांसियुयाथदूरादनसारथेन । नितेनंसैपीप्यानेवयोषामर्यायेवकन्याशश्वचैते । आशृणवामतेकारोवचनानियाहिदूरादनसाचरथेनचनिनमाम तेपाययमानेवयोषापुत्रंमर्यायेवकन्यापरिष्वजनायनिनमाइतिवाऽश्वनामान्युत्तराणिषड्विंशतिस्तेषामष्टाउत्तराणिबहुवदश्वःकस्मादश्नुतेऽध्वानंमहाशनोभवतीतिवातत्रदधिक्राइत्येतद्दधत्क्रामतीतिवादधत्क्रंदतीतिवादधदाकारीभव

तीतिर्वातस्याश्ववद्देवतावच्चनिगमाभवंतितद्यद्देवतावदुपरिष्टात्तद्व्याख्यास्यामोऽथैतदश्ववत् ॥ २७ ॥ उतस्यवाजी क्षिपणिंतुरण्यतिग्रीवायांबद्धोअपिकक्षआसनि । क्रतुंदधिक्राअनुसंतवीत्वत्पथामंकांस्यन्वापनीफणत् । अपिसवाजी वेजनवान्क्षेपणमनुतूर्णमश्नुतेऽध्वानंग्रीवायांबद्धोग्रीवागिरतेर्वागृणातेर्वागृह्णातेर्वापिकक्षआसनीतिव्याख्यातंक्रतुंद धिक्राःकर्मवाप्रज्ञांवा । अनुसंतवीत्वत् । तनोतेःपूर्वयाप्रकृत्यानिगमःपथामंकांसिपथांकुटिलानिपंथाःपततेर्वापद्यते र्वापंथतेर्वाकोंऽचतेरापनीफणदितिफणतेश्चर्करीतवृत्तंदशोत्तराण्यादिष्टोपयोजनानीत्याचक्षतेसाहचर्यज्ञानायज्वलति कर्माणउत्तरेधातवएकादशतावंत्येवोत्तराणिज्वलतोनामधेयानिनामधेयानि ॥ २८ ॥ ( अथनिर्वचनमोघोराज्ञोवि द्याहवाअथातोऽनुक्रमिष्यामोवृक्षेवृक्षेतावांवास्तूनियईचकारायंसशिङ्क्तेहिरण्यनामान्यार्ष्टिषेणोयद्देवापिःसाधारणा निस्वरादित्योरश्मिनामान्यतिष्ठंतीनांदासपत्नीरात्रिनामानीदंश्रेष्ठंरुशद्वत्साहश्चकृष्णंदेवानांमानेवाङ्नामानीयंशुष्मे भीरमध्वंमइंद्रोअस्नानातेकारंउतस्यवाज्यष्टाविंशतिः ) ॥ इतिनिरुक्तेपूर्वषट्केद्वितीयोऽध्यायः ॥ २ ॥ ॥

ॐ ॥ कर्मनामान्युत्तराणिषड्विंशतिःकर्मकस्मात्क्रियतइतिसतोऽपत्यनामान्युत्तराणिपंचदशापत्यंकस्मादपततंभ वतिनानेनपततीतिवातद्यथाजनयितुःप्रजैवमर्थीयेऋचाउदाहरिष्यामः ॥ १ ॥ परिषद्यंह्यरणस्यरेक्णोनित्यस्यरायः पतयःस्याम । नशेषोअग्नेअन्यजातमस्त्यचेतानस्यमापथोविदुक्षः । परिहतव्यंहिनोपसर्तव्यमरणस्यरेक्णोऽरणो

पार्णोभवतिरेक्णइतिधननामरिच्यतेप्रयतोनित्यस्यरायःपतयःस्यामपित्र्यस्येवधनस्य । नशेषोअग्नेअन्यजातमस्ति ।
शेषइत्यपत्यनामशिष्यतेप्रयतोऽचेतयमानस्यतत्प्रमत्तस्यभवतिमानःपथोविदूदुषइतितस्योत्तराभूयसेनिर्वचनाय ॥२॥
नहिग्रभायारणःसुशेवोऽन्योदर्योमनसामंतवाउ । अधाचिदोकःपुनरित्सएत्यानोवाज्यभीषाळेतुनव्यः । नहिग्रही
तव्योऽरणःसुसुखतमोऽप्यन्योदर्योमनसापिनमंतव्योममायंपुत्रइत्यथसओकःपुनरेवतदेतियतआगतोभवत्योकइति
निवासनामोच्यतएतुनोवाजीवेजनवानभिषहमाणःसपत्नान्नवजातःसएवपुत्रइत्यथैतांदुहितृदायाद्यउदाहरंतिपुत्रदा
याद्यइत्येके ॥ ३ ॥ शासद्वह्निर्दुहितुर्नप्त्यंगाद्विद्वाँऽऋतस्यदीधितिंसपर्यन् । पितायत्रदुहितुःसेकमृंजन्त्संशग्म्येन
मनसादधन्वे । प्रशास्तिवोढासंतानकर्मणेदुहितुःपुत्रभावंदुहितादुर्हितादूरेहितादोग्धेर्वानप्तारमुपागमद्दौहित्रंपौत्र
मितिविद्वान्प्रजननयज्ञस्यरेतसोवांगादंगात्संभूतस्यहृदयादधिजातस्यमातरिप्रत्यृतस्यविधानंपूजयन्नविशेषेणमिथु
नाःपुत्रादायादाइतितदेतदृक्श्लोकाभ्यामभ्युक्तं । अंगादंगात्संभवसिहृदयादधिजायसे । आत्मावैपुत्रनामासिसजीव
शरदःशतमित्यविशेषेणपुत्राणांदायोभवतिधर्मतः । मिथुनानांविसर्गादौमनुःस्वायंभुवोऽब्रवीत् । नदुहितरइत्येके
तस्मात्पुमान्दायादोऽदायादास्त्रीतिविज्ञायतेतस्मात्स्त्रियंजातांपरास्यंतिनपुमांसमितिचस्त्रीणांदानविक्रयातिसर्गावि
द्यंतेनपुंसःपुंसोऽपीत्येकेशौनःशेपेदर्शनात् । अभ्रातृमतीवादइत्यपरं । अमूर्यायंतिजामयःसर्वालोहितवाससः ।

अभ्रातरईवयोषास्तिष्ठतिहतवर्त्मनः । अभ्रातृकाइवयोषास्तिष्ठतिसंतानकर्मणेपिंडदानायहतवर्त्मानइत्यभ्रातृकाया अनिर्वाहऔपमिकस्तस्योत्तराभूयसेनिर्वचनाय ॥ ४ ॥ अभ्रातेवपुंसएतिप्रतीचीगर्तारुगिवसनयेधनानां । जायेवपत्य उशतीसुवासाउषाहस्रेवनिरिणीतेअप्सः । अभ्रातृकेवपुंसःपितृनेत्यभिमुखीसंतानकर्मणेपिंडदानायनपतिंगर्तारोहिणी वधनलाभायदाक्षिणाजीगर्तःसभास्थाणुर्गृणातेःसत्यसंगरोभवतितंतत्रयापुत्रायापतिकासारोहतितांतत्राक्षैराघ्नंतिसा रिक्थंलभतेश्मशानसंचयोऽपिगर्तउच्यतेगुरतेरपगूर्णोभवतिश्मश ।नंश्मशयनंश्मशरीरंशरीरंशृणातेःशम्नातेर्वाश्म श्रुलोमश्मनिश्रितंभवतिलोमलुनातेर्वालीयतेर्वानोपरस्याविःकुर्याद्यदुपरस्याविःकुर्याद्गर्तेष्ठाःस्यात्प्रमायुकोयजमानइ त्यपिनिगमोभवतिरथोऽपिगर्तउच्यतेगृणातेःस्तुतिकर्मणःस्तुततमंयानं । आरोहथोवरुणमित्रगर्तमित्यपिनिगमोभ वतिजायेवपत्येकामयमानासुवासाऋतुकालेषूषाहसनेवदंतान्विवृणुतेरूपाणीतिचतस्रउपमानाभ्रात्रीमुपयच्छेततोकं ह्यस्यतद्भवतीत्यभ्रातृकायाउपयमनप्रतिषेधःप्रत्यक्षःपितुश्चपुत्रभावःपितायत्रदुहितुरप्रत्तायारेतःसेकंप्रार्जयतिसंदधा त्यात्मानंसंगमेनमनसेत्यथैतांजाम्यारिक्थप्रतिषेधउदाहरंतिज्येष्ठंपुत्रिकायाइत्येके ॥ ५ ॥ नजामयेतान्वोरिक्थमा रैक्चकारगर्भंसनितुर्निधानं । यदीमातरोजनयंतवह्निमन्यःकर्तासुकृतोरन्यऋंधन् । नजामयेभगिन्यैजामिरन्येऽस्यां जनयंतिजामपत्यंजमतेर्वास्याद्गतिकर्मणोनिगमनप्रायाभवतितान्वआत्मजःपुत्रोरिक्थंप्रारिचत्प्रादाच्चकारैनांगर्भनि

धार्नीसनितुर्हस्तग्राहस्यंयदिहमातरोजनयंतवह्निंपुत्रमवह्निंचस्त्रियमन्यतरः संतानकर्ताभवतिपुमान्दायादोऽन्यतरो ऽर्धयित्वाजामिः प्रदीयतेपरस्मै ॥ ६ ॥ मनुष्यनामान्युत्तराणिपंचविंशतिर्मनुष्याः कस्मान्मत्वाकर्माणिसीव्यंतिमन स्यमानेनसृष्टामनस्यतिः पुनर्मनस्वीभावेमनोरपत्यंमनुषोवातत्रपंचजनाइत्येतस्यनिगमाभवंति ॥ ७ ॥ तदद्यवाचः प्रथमंमंसीयुयेनासुराँऽअभिदेवाऽअसाम । ऊर्जादउतयज्ञियासः पंचजनाममहोत्रंजुषध्वं । तदद्यवाचः परमंमंसीयंयेना सुरानभिभवेमदेवाअसुराअसुरताः स्थानेष्वस्ताः स्थानेभ्यइतिवापिवासुरितिप्राणनामास्तः शरीरेभवतितेनतद्वंतः सोर्दे वानसृजतंतत्सुराणांसुरत्वंमसोरसुरानसृजतंतदसुराणामसुरत्वमितिविज्ञायते । ऊर्जादउतयज्ञियासः । अन्नादा श्चयज्ञियाश्चौर्गित्यन्ननामोर्जयतीतिसतः पक्कंसुप्रवृक्णमितिवा । पंचजनाममहोत्रंजुषध्वं । गंधर्वाः पितरोदेवाअसुरा रक्षांसीत्येकेचत्वारोवर्णानिषादः पंचमइत्यौपमन्यवोनिषादः कस्मान्निषदनोभवतिनिषण्णमस्मिन्पापकमितिनैरुक्ताः । यत्पांचजन्ययाविशा । पंचजनीनयाविशापंचपृक्तासंख्यास्त्रीपुंनपुंसकेष्वविशिष्टाबाहुनामान्युत्तराणिद्वादशबाहूक स्मात्प्रबाधतआभ्यांकर्माण्यंगुलिनामान्युत्तराणिद्वाविंशतिरंगुलयः कस्मादग्रगामिन्योभवंतीतिवाग्रगालिन्योभवंती तिवाग्रकारिण्योभवंतीतिवाग्रसारिण्योभवंतीतिवांकनाभवंतीतिवांजनाभवंतीतिवापिवाभ्यंचनादेवस्युस्तासामेषा भवति ॥८॥ दशावनिभ्योदशकक्ष्येभ्योदशयोक्त्रेभ्योदशयोजनेभ्यः दशाभीशुभ्यो अर्चताजरेभ्योदशधुरोदशयुक्ताव

हंव्यः । अवनयोंऽगुलयोभवंत्यवंतिकर्माणिकक्ष्याःप्रकाशयंतिकर्माणियोक्त्राणियोजनानीतिव्याख्यातमभीशवोऽ
भ्यश्नुवतेकर्माणि । दशधुरोदशयुक्तावहंत्यः । धूर्धूर्वतेर्वधकर्मणइयमपीतराधूरेतस्मादेवविहंतिवहंधारयतेर्वाकांतिक
र्माणउत्तरेधातवोऽष्टादशान्ननामान्युत्तराण्यष्टाविंशतिरन्नंकस्मादानतंभूतेभ्योऽत्तेर्वात्तिकर्माणउत्तरेधातवोदशबल
नामान्युत्तराण्यष्टाविंशतिर्बलंकस्माद्बलंभरंभवतिविभर्तेर्धननामान्युत्तराण्यष्टाविंशतिरेवधनंकस्माद्धिनोतीतिसतो
गोनामान्युत्तराणिनवक्रुध्यतिकर्माणउत्तरेधातवोदशक्रोधनामान्युत्तराण्यैकादशगतिकर्माणउत्तरेधातवोद्वाविंशश
तंक्षिप्रनामान्युत्तराणिषड्विंशतिःक्षिप्रंकस्मात्संक्षिप्तोविकर्षोऽतिकनामान्युत्तराण्येकादशांतिकंकस्मादानीतंभवतिसं
ग्रामनामान्युत्तराणिषट्चत्वारिंशत्संग्रामःकस्मात्संगमनाद्वासंगरणाद्वासंगतौग्रामावितिवातत्रखलइत्येतस्यनिगमाभ
वंति ॥९॥ अभीदमेकमेकोअस्मिनिष्षाळभीद्वाकिमुत्रयःकरंति । खलेनपर्षान्प्रतिहन्मिभूरिकिंमानिंदंतिशत्रवोऽनिं
द्राः । अभिभवामीदमेकमेकोऽस्मिनिष्षहमाणःसपत्नानभिभवामिद्वौकिंमात्रयःकुर्वंत्येकइतासंख्याद्वौद्रुततरासंख्या
त्रयस्तीर्णतमासंख्याचत्वारश्चलिततमासंख्याष्टावश्नोतेर्नवनवननीयानावाप्तावादशदस्ताद्दृष्टार्थावाविंशतिर्द्विर्दशतं
शतंदशदशतःसहस्रंसहस्वदयुतंनियुतंप्रयुतंतत्तदभ्यस्तमंबुदोमेघोभवत्यरणमंबुतद्दोंबुदोऽबुमद्भातीतिवांबुमद्भवती
तिवासयथामहान्बहुर्भवतिवर्षस्तदिवाबुर्दंखलेनपर्षान्प्रतिहन्मिभूरि । खलइवपर्षान्प्रतिहन्मिभूरिखलइतिसंग्रामना

मंखलतेर्वास्खलतेर्वायमपीतरःखलएतस्मादेवंसमास्कन्नोभवति। किंमांनिंदतिशत्रवोऽनिंद्राः। यइंद्रंनविविदुरिंद्रोह्य
हमस्म्यनिंद्राइतरइतिवाव्याप्तिकर्माणउत्तरेधातवोदशतत्रद्वेनामनी आक्षाणआश्नुवानआपानआभुवानोवधकर्माण
उत्तरेधातवस्त्रयस्त्रिंशत्तत्रवियातइत्येतद्वियातयतइतिवावियातयेतिवा। आखण्डलप्रहूयसे। आखंडयितःखंडंखंडयते
स्तळिदित्यंतिकवधयोःसंसृष्टकर्मताडयतीतिसतः ॥ १० ॥ त्वयावयंसुवृधाब्रह्मणस्पतेस्पार्हावसुमनुष्यादददीमहि। या
नोदूरेतळितोयाअरातयोऽभिसंतिजंभयाताअनप्नसः। त्वयावयंसुवर्धयित्राब्रह्मणस्पतेस्पृहणीयानिवसूनिमनुष्येभ्य
आददीमहियाश्चनोदूरेतळितोयाश्चांतिकेऽरातयोऽदानकर्माणोवादानप्रज्ञावाजंभयताअनप्नसोऽप्नइतिरूपनामाप्नो
तीतिसतोविद्युत्तळिद्भवतीतिशाकपूणिःसाह्यवताडयतिदूराच्चदृश्यतेऽपित्विदमंतिकनामैवाभिप्रेतंस्यात्। दूरेचित्संत
ळिदिवातिरोचसे। दूरेपिसन्नंतिकइवसंदृश्यसइतिवज्रनामान्युत्तराण्यष्टादशवज्रःकस्माद्वर्जयतीतिसतस्तत्रकुत्सइ
त्येतत्कृंततेर्ऋषिःकुत्सोभवतिकर्तास्तोमानामित्यौपमन्यवोऽत्राप्यस्यवधकर्मैवभवतितत्सखइंद्रःशुष्णंजघानेत्यैश्वर्यक
र्माणउत्तरेधातवश्चत्वारईश्वरनामान्युत्तराणिचत्वारितत्रेनइत्येतत्सनितऐश्वर्येणेतिवासनितमनेनैश्वर्यमितिवा ॥ ११ ॥
यत्रासुपर्णाअमृतस्यभागमनिमेषंविदथाभिस्वरंति। इनोविश्वस्यभुवनस्यगोपाःसमाधीरःपाकमत्राविवेश। यत्रसुपर्णाः
सुपतनाआदित्यरश्मयोऽमृतस्यभागमुदकस्यानिमिषंतोवेदनेनाभिस्वरंतीतिवाभिप्रयंतीतिवेश्वरःसर्वेषांभूतानांगोपा

यितादित्यः समाधीरः पाकमत्रा विवेशेतिं धीरो धीमान्पाकः पक्तव्यो भवति विपक्कप्रज्ञ आदित्य इत्युपनिषद्वर्णो भवतीत्यधि
दैवतमथाध्यात्मं यत्र सुपर्णाः सुपतनानींद्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषंतो वेदनेनाभिस्वरंतीति वाभिप्रयंतीति वि
श्वरः सर्वेषामिंद्रियाणां गोपायितात्मा समाधीरः पाकमत्रा विवेशेतिं धीरो धीमान्पाकः पक्तव्यो भवति विपक्कप्रज्ञ आत्मेत्या
त्मगतिमाचष्टे ॥ १२ ॥ बहुनामान्युत्तराणि द्वादश बहु कस्मात्प्रभवतीति सतो ह्रस्वनामान्युत्तराण्येकादश ह्रस्वो ह्रसतेर्म
हन्नामान्युत्तराणि पंचविंशतिर्महान्कस्मान्मानेनान्याञ्जहातीति शाकपूर्णिर्महनीयो भवतीति वा तत्रवववक्षिथ विवक्षस
इत्येते वक्तेर्वा वहतेर्वा साभ्यासा द्गृहनामान्युत्तराणि द्वाविंशतिर्गृहाः कस्माद्गृह्णंतीति सतां परिचरणकर्माण उत्तरे धातवो द
श सुखनामान्युत्तराणि विंशतिः सुखं कस्मात्सुहितं खेभ्यः खं पुनः खनते रूपनामान्युत्तराणि षोळश रूपं रोचतेः प्रशस्यनामा
न्युत्तराणि दश प्रज्ञानामान्युत्तराण्येकादश सत्यनामान्युत्तराणि षट् सत्यं कस्मात्सत्सु तायते सत्प्रभवं भवतीति वाष्टा उत्तरा
णि पदानि पश्यतिकर्माण उत्तरे धातवश्चायतिप्रभृतीनि चनामान्यामिश्राणि नवोत्तराणि पदानि सर्वपदसमाम्नानायाथा
त उपमा यदतत्तत्सदृशमिति गार्ग्यस्तदासां कर्म ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वा प्रख्यातं वोपमिमीतेऽथापि
कनीयसा ज्यायांसं ॥ १३ ॥ तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीतां । तनूत्यक्तनूत्यक्ता वनर्गू वनगामिनाव
ग्निमंथनौ बाहू तस्कराभ्यामुपमिमीते तस्करस्तत्करो भवति यत्पापकमिति नैरुक्तास्तनोतेर्वा स्यात्संततकर्मा भवत्यहोरात्र

कर्मावा । रशनाभिर्दशभिरभ्यधीतां । अभ्यधीतामित्यभ्यधातांज्यायांस्तत्रगुणोऽभिप्रेतः ॥ १४ ॥ कुहस्विद्दो
षाकुहवस्तोरश्विनाकुहाभिपित्वंकरतःकुहोषतुः । कोवांशयुत्राविधवेवदेवरंमर्यंनयोषाकृणुतेसधस्थआ । क्वस्विद्रात्रौ
भवथःक्वदिवाक्वाभिप्राप्तिंकुरुथःक्ववसथःकोवांशयनेविधवेवदेवरंदेवरःकस्माद्द्वितीयोवरउच्यतेविधवाविधातृकाभ
वतिंविधवनाद्वाविधावनाद्वेतिंचर्मशिराअपिवाधवइतिमनुष्यनामतद्वियोगाद्विधवादेवरोदिव्यतिकर्मामर्योमनुष्यो
मरणधर्मायोषायौतेराकुरुतेसहस्थानेऽथनिपाताःपुरस्तादेवव्याख्यातायथेतिकर्मोपमा । यथावातोयथावनंयथासमु
द्रएजंति । भ्राजंतोअग्नयोयथा । आत्मायक्ष्मस्यनश्यतिपुराजीवगृभोयथा । आत्माऽततेर्वाप्तेर्वापिवाप्तइवस्याद्या
वद्व्याप्तिभूतइति । अग्निर्नयेभ्राजसारुक्मवक्षसः । अग्निरिवयेमरुतोभ्राजमानारोचिष्णूरस्काभ्राजस्वंतोरुक्मव
क्षसः ॥ १५ ॥ चतुरश्चिद्ददमानाद्बिभीयादानिधातोः । नदुरुक्तायस्पृहयेत् । चतुरोऽक्षान्धारयतइतितद्यथाकि
तवाद्बिभीयादेवमेवदुरुक्ताद्बिभीयान्नदुरुक्तायस्पृहयेत्कदाचिदाइत्याकारउपसर्गःपुरस्तादेवव्याख्यातोऽथाप्युपमा
र्थेदृश्यते । जारआभगं । जारइवभगमादित्योऽत्रजारउच्यतेरात्रेर्जरयितासएवभासांतथापिनिगमोभवति ।
स्वसुर्जारःशृणोतुनइत्युषसमस्यस्वसारमाहसाहचर्याद्रसहरणाद्वापित्वयंमनुष्यजारएवाभिप्रेतःस्यात्स्त्रीभगस्तथास्या
ञ्जतेर्मेषइतिभूतोपमा । मेषोभूतो३भियन्नयः । मेषोमिषतेस्तथापशुःपश्यतेरग्निरितिरूपोपमा । हिरण्यरूपःस

निरुक्त

हिरण्यसंदृगपांनपात्सेदुहिरण्यवर्णः । हिरण्यवर्णस्येवास्यरूपंथाइतिच । तंप्रत्नथापूर्वथाविश्वथेमथा । प्रत्नइवपूर्वइवविश्वइवेमइवेत्ययमेततरोऽमुष्मादसावस्ततरोऽस्मादमुथायथासावितिव्याख्यातंवदितिसिद्धोपमा । ब्राह्मणवद्वृषलवत् । ब्राह्मणाइववृषलाइवेतिवृषलोवृषशीलोभवतिवृषाशीलोवा ॥ १६ ॥ प्रियमेधवदत्रिवज्जातवेदोविरूपवत् । अंगिरस्वन्महिव्रतप्रस्कण्वस्यश्रुधीहवं । प्रियमेधःप्रियाअस्यमेधायथैतेषामृषीणामेवंप्रस्कण्वस्यशृणुह्वानंप्रस्कण्वःकण्वस्यपुत्रःकण्वप्रभवोयथाप्राग्रमर्चिषिभृगुःसंबभूवभृगुर्भृज्यमानोनदेहेऽगारेष्वंगिराअंगाराअंकनाअंचनाअत्रैवतृतीयमृच्छतेत्यूचुस्तस्मादत्रिर्नत्रयइतिविखननाद्वैखानसोभरणाद्भारद्वाजोविरूपोनानारूपोमहिव्रतोमहाव्रतइति ॥ १७ ॥ अथलुप्तोपमान्यर्थोपमानीत्याचक्षतेसिंहोव्याघ्रइतिपूजायांश्वाकाकइतिकुत्सायांकाकइतिशब्दानुकृतिस्तदिदंशकुनिषुबहुलंनशब्दानुकृतिर्विद्यतइत्यौपमन्यवःकाकोऽपकालयितव्योभवतितित्तिरिस्तरणात्तिलमात्रचित्रइतिवाकपिंजलःकपिरिवजीर्णःकपिरिवजवतईषत्पिंगलोवाकमनीयंशब्दंपिंजयतीतिवाश्वाशुयायीशवतेर्वास्याद्गतिकर्मणःश्वसितेर्वासिंहःसहनाद्धिंसेर्वास्याद्विपरीतस्यसंपूर्वस्यवाहंतेःसंहायहंतीतिवाव्याघ्रोव्याघ्राणाद्व्यादायहंतीतिवा ॥ १८ ॥ अर्चतिकर्माणउत्तरेधातवश्चतुश्चत्वारिंशन्मेधाविनामान्युत्तराणिचतुर्विंशतिर्मेधावीकस्मान्मेधयातद्वान्भवतिमेधामतौधीयतेस्तोतृनामान्युत्तराणित्रयोदशस्तोतास्तवतायज्ञनामान्युत्तराणिपंचदशयज्ञःकस्मात्प्रख्यातंयजतिकर्मेतिनैरु

॥ १६ ॥

पूर्वष. अ. ३

॥ १६ ॥

क्तायाच्चोभवतीतिवायजुरुन्नोभवतीतिवाबहुकृष्णाजिनइत्यौपमन्यवोयजूंष्येनंनयंतीतिवर्विङ्गामान्युत्तराण्यष्टा
वृत्विकस्मादीरणऋग्यष्टाभवतीतिशाकपूर्णिऋतुयाजीभवतीतिवायाच्ञाकर्माणउत्तरेधातवःसप्तदशदानकर्माणउत्त
रेधातवोदशाध्येषणाकर्माणउत्तरेधातवश्चत्वारःस्वपितिसस्तीतिद्वौस्वपितिकर्माणौकूपनामान्युत्तराणिचतुर्दशकूपः
कस्मात्कुपानंभवतिकुप्यतेर्वास्तेननामान्युत्तराणिचतुर्दशैवस्तेनःकस्मात्संस्त्यानमस्मिन्पापकमितिनैरुक्तानिर्णीतांत
र्हितनामधेयान्युत्तराणिषण्णिर्णीतंकस्मान्निर्निक्तंभवतिदूरनामान्युत्तराणिपंचदूरंकस्माद्द्रुतंभवतिदुरयंवापुराणना
मान्युत्तराणिषट्पुराणंकस्मात्पुरानवंभवतिनवनामान्युत्तराणिषळेवनवंकस्मादानीतंभवति ॥ १९ ॥ द्विशउत्तराणि
नामानिप्रपित्वेऽभीकइत्यासन्नस्यप्रपित्वेप्राप्तेऽभीकेऽभ्यक्ते । आपित्वेनःप्रपित्वेतूयमागहि । अभीकेचिदुलोककृ
दित्यपिनिगमौभवतोदभ्रमर्भकमित्यल्पस्यदभ्रंदभ्नोतेःसुदंभंभवत्यर्भकमवहृतंभवति । उपोपमेपरामृशमामेदभ्रा
णिमन्यथाः । नमोमहद्भ्योनमोअर्भकेभ्यइत्यपिनिगमौभवतस्तिरःसतइतिप्राप्तस्यतिरस्तीर्णंभवतिसतःसंसृतंभवति ।
तिरश्चिदर्ययापरिवर्तिर्यातमदाभ्या । पात्रेवभिंदन्त्सतएतिरक्षसइत्यपिनिगमौभवतस्त्वोनेमइत्यर्धस्यत्वोऽपततोने
मोऽपनीतोऽर्धंहरतेर्विपरीताद्धारयतेर्वास्याद्दुद्धृतंभवत्यृध्नोतेर्वास्यादृद्धतमोविभागः । पीयतित्वोअनुत्वोगृणाति ।
नेमेदेवानेमेऽसुराइत्यपिनिगमौभवतऋक्षाःस्तृभिरितिनक्षत्राणांनक्षत्राणिनक्षतेर्गतिकर्मणोनेमानिक्षत्राणीतिचब्राह्म

णंमृक्षाउदीर्णानीवख्यायंतेंस्तृभिस्तीर्णानीवख्यायंते । अमीयऋक्षानिहिंतासउच्चा . पश्यंतोद्यामिवस्तृभिरित्यपि
निगमौभवतोंवम्रीभिरुपजिह्विकाइतिसीमिकानांवम्योवमनात्सीमिकास्यमनांदुपजिह्विकाउपजिघ्र्यः । वम्रीभिःपुत्र
मग्रुवोअदानं । यदत्त्युपजिह्विकांयद्वम्रोअतिसर्पतीत्यपिनिगमौभवतंऊर्दरंकृदरमित्यावपनंस्योर्दरमुदीर्णंभवत्यूर्जेदी
र्णंवा । तमूर्दरंनपृणतायवेनेत्यपिनिगमोभवतिंतमूर्दरमिवपूरयतियवेनंकृदरंकृतदरंभवति । समिद्धोअंजन्कृदरंम
तीनामित्यपिनिगमोभवति ॥ २० ॥ रंभःपिनाकमितिदंडस्य । रंभआरभंतएनं । आत्वारंभंनजिव्रयोररम्भेत्यपि
निगमोभवंत्यारभामहेत्वाजीर्णाइवदंडंपिनाकंप्रतिपिनष्ट्येनेनंकृत्तिवासाःपिनाकहस्तोऽवततधन्वेत्यपिनिगमोभवतिं
मेनाग्नाइतिस्त्रीणांस्त्रियस्त्यायतेरपत्रपणकर्मणोंमेनामानयंत्येनांग्नागच्छंत्येनाः । अमेनांश्चिज्जनिवतश्चकर्थ । ग्नास्त्वा
कृंतन्नपसोऽतन्वतेनेत्यपिनिगमौभवतःशेपोवैतसइतिपुंस्प्रजननस्यंशेपःशपतेःस्पृशतिकर्मणोंवैतसोवितस्तंभवंति । य
स्यामुशंतःप्रहरामशेपं । त्रिःस्ममाह्नःश्नथयोवैतसेनेत्यपिनिगमौभवतोऽयैनेत्युपदेशस्य । अयातेअग्नेसमिधाविधेमेति
स्त्रियाः । एनावोअग्निमितिनपुंसकस्य । एनापत्यातन्वंसंसृजस्वेतिपुंसः । सिषक्तुसचतइतिसेवमानस्य । सनंःसि
षक्तुयस्तुरः । सनंःसेवतांयस्तुरः । सचंस्वानःस्वस्तये । सेवस्वनःस्वस्तये । स्वस्तीत्यविनाशिनामास्तिरभिपूजितः
स्वस्तीतिभ्यसतेरेजतइतिभयवेपनयोः । अपुशुभ्रुमा रोदसीभ्यसेतां । रेजतेअग्नेपृथिवीमखेभ्यइत्यपिनिगमौभवतो

द्यावापृथिवीनामधेयान्युत्तराणिचतुर्विंशतिस्तयोरेषाभवति ॥ २१ ॥ कतरापूर्वाकतरापरायोःकथाजातेकवयःको विवेद । विश्वंत्मनाबिभृतोयद्धनामविवर्तेतेअहनीचक्रियैव । कतरापूर्वाकतरापरैनयोःकथंजातेकवयःकएनेविजाना तिसर्वमात्मनाविभृतोयद्धैनयोःकर्मविवर्तेतेचैनयोरहनीअहोरात्रेचक्रयुक्तेइवेतिद्यावापृथिव्योर्महिमानमाचष्टआच ष्टे ॥ २२ ॥ ( कर्मनामानिपरिषद्धैनहिग्रभायशासद्वार्त्तिरश्वातेवनजामयेमनुष्यनामानितदद्यदशावनिभ्योऽभीदं त्वयावयंयत्रासुपर्णाबहुनामानितनूत्यजेवंकुहस्विच्चतुरश्चित्प्रियमेधवदथलुप्तोपमान्यर्चतिद्विशोरंभःकतरापूर्वाद्वाविं शतिः ॥ ) इतिनिरुक्तेपूर्वषट्केतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥

ॐ ॥ एकार्थमनेकशब्दमित्येतदुक्तमथयान्यनेकार्थान्येकशब्दानितान्यतोऽनुक्रमिष्यामोऽनवगतसंस्कारांश्चनि गमांस्तदैकपदिकमित्याचक्षतेजहाजघानेत्यर्थः ॥ १ ॥ कोनुमर्याअमिथितःसखासखायमब्रवीत् । जहाकोअस्मदी षते । मर्याइतिमनुष्यनाममर्यादाभिधानंवास्यान्मर्यादामयैरादीयतेमर्यादामर्यादिनोर्विभागोमेथतिराक्रोशकर्मा पापकंजघानकमहंजातुकोऽस्मद्भीतःपलायतेनिधापाश्याभवतियन्निधीयतेपाश्यापाशसमूहःपाशःपाशयतेर्विपाश नात् ॥ २ ॥ वयःसुपर्णाउपसेदुरिंद्रंप्रियमेधाऋषयोनाधमानाः । अपध्वांतमूर्णुहिपूर्धिचक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् । वयोवेर्बहुवचनंसुपर्णाःसुपतनाआदित्यरश्मयउपसेदुरिंद्रंयाचमानाअपोर्णुह्याध्वस्तंचक्षुश्चक्षुःख्यातेर्वाच

ष्टेर्वापूर्धिपूरयदेहीतिवामुंचास्मान्पाशैरिवबद्धान्पार्श्वतःश्रोणितःशितामतःपार्श्वंपर्शुमयमंगंभवतिपर्शुःस्पृशतेःसंस्पृष्टापृष्ठदेशंपृष्ठंस्पृशतेःसंस्पृष्टमंगैरंगमंगनादंचनाद्वाश्रोणिःश्रोणतेर्गतिचलाकर्मणःश्रोणिश्चलतीवगच्छतोदोःशितामभवतिदोर्द्रवतेर्योनिःशितामेतिशाकपूणिर्विषितोभवतिश्यामतोयकृत्तइतितैटीकिःश्यामंश्यायतेर्यकृद्यथाकथाचकृत्यतेःशितिमांसतोमेदस्तइतिगालवःशितिःश्यतेर्मांसंमानंवामानसंवामनोऽस्मिन्त्सीदतीतिवामेदोमेद्यतेः ॥ ३ ॥ यदिंद्रचित्रमेहनास्तित्वादातमद्रिवः । राधस्तन्नोविदद्वसउभयाहस्त्याभर । यदिंद्रचित्रंचायनीयंमहनीयंधनमस्तियन्मइहनास्तीतिवात्रीणिमध्यमानिपदानित्वयानस्तद्दातव्यमद्रिवन्नद्रिरादृणात्यनेनापिवात्तेःस्यात्तेसोमादइतिहविज्ञायतेराधइतिधननामराध्नुवंत्यनेनतन्नस्त्वंवित्तधनोभाभ्यांहस्ताभ्यामाहरोभौसमुब्धौभवतोदमूनादममनावादानमनावादांतमनावापिवादमइतिगृहनामतन्मनाःस्यान्मनोमनोतेः ॥ ४ ॥ जुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् । विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि । अतिथिरभ्यतितोगृहान्भवत्यभ्येतितिथिषुपरकुलानीतिवापरगृहाणीतिवादुरोणइतिगृहनामदुरवाभवंतिदुस्तर्पाइमंनोयज्ञमुपयाहिविद्वान्त्सर्वाअग्नेअभियुजोविहत्यशत्रूयतामाहरभोजनानिनिहत्यान्येषांवलानिशत्रूणांभवनादाहरभोजनानीतिवाधनानीतिवामूषोमूषिकाइत्यर्थोमूषिकाःपुनर्मुष्णातेर्मूषोऽप्येतस्मादेव ॥ ५ ॥ संमातपंत्यभितःसपत्नीरिवपर्शवः । मूषोनशि

श्चाव्यदंतिमाध्यःस्तोतारंतेशतक्रतोवित्तंमेअस्यरोदसी । संतपंतिमामभितःसपत्न्यइवेमाःपर्शवःकूपपर्शवोमूषिका
इवास्नातानिसूत्राणिव्यदंतिस्वांगाभिधानंवास्याच्छिश्नानिव्यदंतीतिवासन्तपन्तिमाध्यःकामाःस्तोतारंतेशतक्रतोवि
त्तंमेअस्यरोदसी । जानीतंमेऽस्यद्यावापृथिव्याविति त्रितंकूपेऽवहितमेतत्सूक्तंप्रतिबभौतत्रब्रह्मेतिहासमिश्रमृङ्मि
श्रंगाथामिश्रंभवतित्रितस्तीर्णतमोमेधयाबभूवापिवासंख्यानामैवाभिप्रेतंस्यादेकतोद्वितस्त्रितइतित्रयोबभूवुः ॥ ६ ॥
इषिरेणतेमनसासुतस्यभक्षीमहिपित्र्यस्येवरायः । सोमराजन्प्रणआयूँषितारीरहानीवसूर्योवासराणि । ईषणेनवैषणे
नवार्षणेनवातेमनसासुतस्यभक्षीमहिपित्र्यस्येवधनस्यप्रवर्धयचनआयूँषिसोमराजन् । अहानीवसूर्योवासराणि । वा
सराणिवेसराणिविवासनानिगमनानीतिवाकुरुतनेत्यनर्थकाउपजनाभवन्तिकर्तनहंतनयातनेतिजठरमुदरंभवतिज
ग्धमस्मिन्ध्रियतेधीयतेवा ॥ ७ ॥ मरुत्वाँइंद्रवृषभोरणायपिबासोममनुष्वधंमदाय । आसिंचस्वजठरेमध्वऊ
र्मिंत्वंराजासिप्रदिवःसुतानां । मरुत्वानिंद्रमरुद्भिस्तद्वान्वृषभोवर्षितापांरणायरमणीयायसंग्रामायपिबसोममनुष्व
धमन्वन्नंमदायमदनीयायजैत्रायासिंचस्वजठरेमधुनऊर्मिंमधुसोममित्यौपमिकंमाद्यतेरिदमपीतरन्मध्वेतस्मादेवत्वं
राजासिपूर्वेष्वप्यहःसुसुतानां ॥ ८ ॥ तितउपरिपवनंभवतिततवद्वातुन्नवद्वातिलमात्रतुन्नमितिवा ॥ ९ ॥ सक्तु
मिवतितउनापुनंतोयत्रधीरामनसावाचमक्रत । अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचि । सक्तु

निरुक्त

॥ १९ ॥

मिवपरिपवनेनपुनंतः सक्तुः सचतेर्दुर्धावोभवतिकसतेर्वास्याद्विपरीतस्यविकसितोभवतियत्रधीरामनसावाचमकृषतप्र ज्ञानंधीराःप्रज्ञानवंतोध्यानवन्तस्तत्रसखायःसख्यानिसंजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचीतिभद्रंभगेनव्याख्यातं भजनीयंभूतानामभिद्रवणीयंभवद्रमयतीतिवाभाजनवद्वालक्ष्मीर्लाभाद्वालक्षणाद्वालप्स्यनाद्वालाञ्छनाद्वालषतेर्वा स्यात्प्रेप्साकर्मणोलग्यतेर्वास्यादाश्लेषकर्मणोलज्जतेर्वास्यादश्लाघाकर्मणःशिप्रेइत्युपरिष्टाद्व्याख्यास्यामः ॥ १० ॥ त त्सूर्यस्यदेवत्वंतन्महित्वंमध्याकर्तोर्विततंसंजभार । यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसिमस्मै । तत्सूर्यस्य देवत्वंतन्महित्वंमध्येयत्कर्मणांक्रियमाणानांविततंसंह्रियतेयदासावयुंक्तहरणानादित्यरश्मीन्हरितोऽश्वानितिवाथरा त्रीवासस्तनुतेसिमस्मैवेसरमहरवयुवतीसर्वस्मादपिवोपमार्थेस्याद्रात्रीववासस्तनुतइतितथापिनिगमोभवति । पुनः समव्यद्विततंवयंती । समनात्सीत् ॥ ११ ॥ इंद्रेणसंहिदृक्षसेसंजग्मानोअबिभ्युषा । मंदूसमानवर्चसा । इं द्रेणहिसंदृश्यसेसंगच्छमानोऽबिभ्युषागणेनमंदूमदिष्णूयुवांस्थोऽपिवामंदुनातेनेतिस्यात्समानवर्चसेत्येतेनव्याख्यातं ॥ १२ ॥ ईर्मांतासःसिलिकमध्यमासःसंशूरणासोदिव्यासोअत्याः । हंसाइवश्रेणिशोयतंतेयदाक्षिषुर्दिव्यमज्मम श्वाः । ईर्मांताःसमीरितांताःसुसमीरितांताःपृथ्वंतावासिलिकमध्यमाःसंसृतमध्यमाःशीर्षमध्यमावापिवाशिरआदि त्योभवतियदनुशेतेसर्वाणिभूतानिमध्येचैषांतिष्ठतीदमपीतरच्छिरएतस्मादेवसमाश्रितान्येतानींद्रियाणिभवंति ॥ सं

पूर्वार्ध

अ. ४

॥ १२ ॥

शूरंणासोदि्व्यासोअत्याः । शूरः शवतेर्गतिकर्मणोंदिव्यादिविजाअत्याअतनाः । हंसाइंवश्रेणिशोयंतंते । हंसाहंते
र्ध्नत्यध्वानंश्रेणिशइतिश्रेणिः श्रयतेः समाश्रिताभवन्तियदाक्षिपुर्यदापन्दिव्यमज्ममजनिमाजिमश्वांअस्त्यादित्यस्तुति
रश्वस्यादित्यादश्वोनिस्तष्टइति । सूरादश्वंवसवोनिरतष्टेत्यपिनिगमोभवति ॥ १३ ॥ कार्यमानोवनात्वंयन्मातृरजं
गन्नपः । नतत्तेंअग्नेप्रमृषेंनिवर्तनंयद्दूरेसन्निहाभंवः । कायमानश्चायमानंः कामयमानइतिवांवनानित्वंयन्मातृरपोऽ
गमउपशाम्यंन्नतत्तेअग्नेप्रमृष्यतेनिवर्तनंदूरेयत्सन्निहभवसिजायमानः । लोधंनंयन्तिपशुमन्यंमानाः । लुब्धमृषिंन
यन्तिपशुंमन्यमानाः । शीरंपावकशौचिषं । पावकदीप्तिं । अनुशायिनमितिवाशिनमितिवा ॥ १४ ॥ कनीनकेवं
विद्रधेनवेंद्रुपदेऽअर्भके । बभ्रूयामेंषुशोभेते । कनीनकेकन्यकेंकन्याकमनीयाभवतिंक्केयंनेतव्येतिवांकमनेनानीयतइ
तिवांकनतेर्वास्यात्कान्तिकर्मणंः कन्ययोरधिष्ठानप्रवचनानिंसप्तम्याएकवचनानीतिशाकपूर्णिर्विद्धयोर्दारुपाद्द्रोंर्दारु
द्दणातेर्वाद्रूणातेर्वातस्मादेवद्रुनवेनवजातेंअर्भकेअवृद्धेतेंयथातदधिष्ठानेषुशोभेतेंएवंबभ्रूयामेषुशोभेतेंबभ्वोरश्वयोः
संस्तवंइदंचमेऽदादिदंचमेऽदादित्यृषिः प्रसंख्यायाह । सुवास्त्वाअधितुग्वंनि । सुवास्तुर्नदीतुग्वतीर्थंभवतिंतूर्णमेतदा
यन्ति । कुविन्नंसंतेमरुतः पुनर्नः । पुनर्नोनमंतेंमरुतोनसंतइत्युपरिष्टाद्व्याख्यास्यामः । येतेमदांआहनसोविहायस
स्तेभिरिंद्रंचोदयदातंवेमघं । येतेमदाआहनवंतोवहनवंतस्तैरिंद्रंचोदयदानायमघं ॥ १५ ॥ उपोंअदर्शिशुंध्युवोन

वक्षोनोधाइवाविरकृतप्रियाणि । अज्मसन्नसंसतोबोधयंतीशश्वत्तमागात्पुनरेयुषीणां । उपादर्शिशुन्ध्युर्वःशुन्ध्युरा
दित्योभवतिशोधनात्तस्यैववक्षोभासोध्यूढमिदमपीतरद्वक्षएतस्मादेवाध्यूढंकायेशकुनिरपिशुंध्युरुच्यतेशोधनादेवोद
कचरोभवत्यापोऽपिशुंध्यवउच्यंतेशोधनादेवनोधाऋषिर्भवतिनवनंदधातिसयथास्तुत्याकामानाविष्कुरुतएवमुषारू
पाण्याविष्कुरुतेऽज्मसदज्मान्नंभवत्यज्मसादिनीतिवाञ्ज्ञसानिनीतिवा । ससतोबोधयंतीशश्वत्तमागात्पुनरेयुषीणां ।
स्वपतोबोधयंतीशाश्वतिकतमागात्पुनरागामिनीनां । तेवाशीमंतइष्मिणः । ईषणिनइतिवैषणिनइतिवार्षणिनइति
वावाशीतिवाङ्नामवाश्यतइतिसत्याः । शंसावाध्वर्योप्रतिमेगृणीहीन्द्रायवाहःकृणवावजुष्टं । अभिवहनस्तुतिमधि
षवणप्रवादांस्तुतिंमन्यंतऐन्द्रीत्वेवशस्यतेपरितक्म्येत्युपरिष्टाद्व्याख्यास्यामः ॥ १६ ॥ सुवितेसुइतेसूतेसुगतेप्रजाया
मितिवा । सुवितेमाधाइत्यपिनिगमोभवतिदयतिरनेककर्मा । नवेनपूर्वंदयमानाःस्यामेत्युपदयाकर्मा । यएकइद्वि
दयतेवस्विर्तिदानकर्मावाविभागकर्मावा । दुर्वर्तुर्भीमोदयतेवनानीतिदहतिकर्मादुर्वर्तुर्दुर्वारः । विदद्वसुर्दयमानो
विशत्रूनितिहिंसाकर्मा । इमेसुताइंदवःप्रातरित्वनासजोषसापिबतमश्विनातान् । अयंहिवांमूतयेवंदनायमांवायसो
दोषादयमानोअबूबुधत् । दयमानइति । नूचिदितिनिपातःपुराणनवयोर्नूचेतिच । अद्याचिन्नूचित्तदपोनदीनां ।
अद्यचपुराचतदेवकर्मनदीनां । नूचपुराचसदनंरयीणां । अद्यचपुराचसदनंरयीणांरयिरितिधननामरातेर्दानकर्मणः

॥ १७ ॥ विद्यामतस्यंतेवयमकूपारस्यदावनें । विद्यामतस्यतेवयमकुपरणस्यदानस्यादित्योऽप्यकूपारउच्यतेऽकूपा
रोभवतिदूरपारंःसमुद्रोऽप्यकूपारउच्यतेऽकूपारोभवतिमहापारंःकच्छपोऽप्यकूपारउच्यतेऽकूपारोनकूपमृच्छतीति
कच्छपःकच्छंपातिकच्छेनपातीतिवाकच्छेनपिबतीतिवाकच्छःखच्छःखच्छदोऽयमपीतरोनदीकच्छएतस्मादेवकसुद
कंतेनछाद्यते । शिशीतेशृगेरक्षसेविनिक्षे । निश्यतिशृंगेरक्षसोविनिक्षणनायरक्षोरक्षितव्यमस्माद्रहसिक्षणोतीतिवा
रात्रौनक्षतइतिवा । अग्निःसुतुकःसुतुकेभिरश्वैः । सुतुकनःसुतुकनैरितिवासुप्रजाःसुप्रजोभिरितिवा । सुप्रायणाअ
स्मिन्यज्ञेविश्रयंतां । सुप्रगमनाः ॥ १८ ॥ देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे । देवानोयथास
दावर्धनायस्युरप्रायुवोऽप्रमाद्यंतोरक्षितारश्चाहन्यहनिच्यवनऋषिर्भवतिच्यावयितास्तोमानांच्यवानमित्यप्यस्यनिग
माभवंति । युवंच्यवानंसनयंयथारथंपुनर्युवानंचरथायतक्षथुः । युवांच्यवनंसनयंपुराणंयथारथंपुनर्युवानंचरणाय
ततक्षथुर्युवाप्रयौतिकर्माणितक्षतिःकरोतिकर्मारजोरजतेर्ज्योतीरजउच्यतउदकंरजउच्यतेलोकारजांस्युच्यंतेऽसृगह
नीरजसीउच्येते । रजांसिचित्राविचरंतितन्यवइत्यपिनिगमोभवतिहरोहरतेर्ज्योतिर्हरउच्यतउदकंहरउच्यतेलोकाह
रांस्युच्यंतेऽसृगहनीहरसीउच्येते । प्रत्यग्नेहरसाहरःशृणीहीत्यपिनिगमोभवति । जुहुरेविचितयंतः । जुह्विरेविचेत
यमानाव्यंतइत्येषोऽनेककर्मापदंदेवस्यनमसाव्यंतइतिपश्यतिकर्मावीहिशूरपुरोळाशमितिखादतिकर्मा । वीतंपातंप

यंसउस्रियायाः । अश्नीतंपिवतंपयसउस्रियायाउस्रियेतिगोनामोस्राविणोऽस्यांभोगाउस्रेतिच । त्वामिंद्रमतिभिःसुते सुनीथासोवसूयवः । गोभिःक्राणाअंनूषतगोभिःकुर्वाणाअस्तोषत । आतूषिंचहरिमींद्रोरुपस्थेवाशीभिस्तक्षताश्मन्म यीभिः । आसिंचहरिंद्रोरुपस्थेद्रुममयस्यहरिःसोमोहरितवर्णोऽयमपीतरोहरिरेतस्मादेव । वाशीभिस्तक्षताश्मन्मयी भिः । वाशीभिरश्ममयीभिरितिर्वावाग्भिरितिवा । सशर्धदर्योविषुणस्यजंतोर्माशिश्नदेवाअपिगुर्ऋतंनः । सउत्सह तांयोविषुणस्यजंतोर्विषमस्यमाशिश्नदेवाअब्रह्मचर्याःशिश्नंश्नथतेः । अपिगुर्ऋतंनः । सत्यंवायज्ञंवा ॥ १९ ॥ आ घाताग॑च्छानुत्त॑रायुगानियत्र॑जामयःकृणवन्नजामि । उपबर्बृहिवृषभाय॑बाहुमन्यमिच्छस्वसुभगेपतिंमत् । आगमि ष्यन्तितान्युत्तराणियुगानियत्रजामयःकृणवंत्यजामिकर्माणिजाम्यतिरेकनामबालिशस्यवासमानजातीयस्यवोपजन उपधेहिवृषभायवाहुंमन्यमिच्छस्वसुभगेपतिंमदितिव्याख्यातं ॥ २० ॥ द्यौर्मेपिताजनिताना॑भिरत्रबंधुर्मेमातापृ थिवीमहीयं । उत्तानयोश्चम्वो३र्योनिरंतरत्रापितादुहितुर्गर्भमाधात् । द्यौर्मेपितापातावापालयितावाजनयिताना भिरत्रबंधुर्मेमातापृथिवीमहतीयंबंधुःसंबंधनान्नाभिःसन्नहनान्नाभ्यासन्नद्धागर्भाजायन्तइत्याहुरेतस्मादेवज्ञातीन्स नाभयइत्याचक्षतेसबंधवइतिचज्ञातिःसंज्ञानात् । उत्तानयोश्चम्वो३र्योनिरंतः । उत्तानउत्ततानऊर्ध्वतानोवातत्र पितादुहितुर्गर्भंदधातिपर्जन्यःपृथिव्याःशंयुःसुखयुः । अथातःशंयोरपोदंधात । रपोरिप्रमितिपापनामनीभवतःश

मनंचरोगाणांयावनंचभयानामथापिशंयुर्बार्हस्पत्यउच्यते । तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयइत्यपिनिग
मोभवतिगमनंयज्ञायगमनंयज्ञपतये ॥ २१ ॥ अदितिरदीनादेवमाता ॥ २२ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदिति
र्मातासपितासपुत्रः । विश्वेदेवाअदितिःपंचजनाअदितिर्जातमदितिर्जनित्वं । इत्यदितेर्विभूतिमाचष्टएनान्यदीना
नीतिवा । यमेरिरेभृगवः । एरिरइतीर्तिरुपसृष्टोऽभ्यस्तः ॥ २३ ॥ उतस्मैनंवस्त्रमथिनतायुमनुक्रोशंतिक्षितयोभरे
षु । नीचायमानंजसुरिंनश्येनंश्रवश्चाच्छापशुमच्चयूथं । अपिस्मैनंवस्त्रमथिमिववस्त्रमाथिनंवस्त्रंवस्तेस्तायुरितिस्तेननना
मसंस्त्यानमस्मिन्पापकमितिनैरुक्तास्तस्यतेर्वास्यादनुक्रोशन्तिक्षितयःसंग्रामेषुभरइतिसंग्रामनामभरतेर्वाहरतेर्वानी
चायमानंनीचैरयमानंनीचैर्निचितंभवत्युच्चैरुच्चितंभवतिजस्तमिवश्येनंश्येनःसंशनीयंगच्छति । श्रवश्चाच्छापशुमच्च
यूथं । श्रवश्चापिपशुमच्चयूथंप्रशंसांचयूथंचधनंचयूथंचेतिवायूथंयौतेःसमायुतंभवति । इन्धानएनंजरतेस्वाधीः ।
गृणाति । मन्दीमन्दतेःस्तुतिकर्मणः । प्रमंदिनेपितुमदर्चतावचः । प्रार्चतमंदिनेपितुमद्वचोगौर्व्याख्यातः ॥ २४ ॥
अत्राहगोरमन्वतनामत्वष्टुरपीच्यं । इत्थाचंद्रमसोगृहे। अत्रहगोःसममंसतादित्यरश्मयःस्वंनामापीच्यमपगतमपचि
तमपिहितमंतर्हितंवामुत्रचंद्रमसोगृहेगातुर्व्याख्यातोगातुंकृणवन्नुषसोजनायेत्यपिनिगमोभवतिदंसयःकर्माणिदंसयं
त्येनानि । कुत्सायमन्मन्नह्यश्चदंसयइत्यपिनिगमोभवति ॥ सतूतावनैनमश्नोत्यंहतिः । सतुतावनैनमंहतिरश्नोत्यं

हंतिश्वांहश्वांहुश्वहंतेर्निरूढोपधाद्विपरीतात् । बृहस्पतेचयसइतिपियारुं । बृहस्पतेयच्चातयसिदेवपीयुंपीयतिर्हिंसाकर्मा
वियुतेद्यावापृथिव्यौवियवनात् । समान्यावियुतेदूरेअंते । समानंसंमानमात्रंभवतिमात्रामानांदूरंव्याख्यातंमंतोऽ
ततेर्ऋधगितिपृथग्भावस्यप्रवचनंभवत्यथाप्यृध्नोत्यर्थेदृश्यते । ऋधंगयाऋधंगुताशमिष्ठाः । ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नश
मिष्ठाइतिचास्याइतिचास्येतिचोदात्तंप्रथमादेशेऽनुदात्तमन्वादेशेतीव्रार्थतरमुदात्तमल्पीयोऽर्थतरमनुदात्तं । अस्या
ऊषुणउपसातयेभुवोऽहेळमानोररिवाँऽअजाश्वश्रवस्यतामजाश्व । अस्यैनःसातयउपभवाहेळमानोऽक्रुध्यन्नरिवान्नाति
रभ्यस्तोऽजाश्वेतिपूषणमाहाजाश्वाजाअजनांअथानुदात्तं । दीर्घायुरस्यायःपतिर्जीवातिशरदःशतं । दीर्घायुरस्यायः
पतिर्जीवतुसशरदःशतंशरच्छृताअस्यामोषधयोभवंतिशीर्णाआपइतिवास्येत्यस्याइत्येतेनव्याख्यातं ॥ २५ ॥ अस्यवा
मस्यपलितस्यहोतुस्तस्यभ्रातामध्यमोअस्त्यश्नः । तृतीयोभ्राताघृतपृष्ठोअस्यात्रापश्यंविश्पतिंसप्तपुत्रं । अस्यवामस्यव
ननीयस्यपलितस्यपालयितुर्होतुर्ह्वातव्यस्यतस्यभ्रातामध्यमोऽस्त्यशनोभ्राताभरतेर्हरतिकर्मणोहरतेभागंभर्तव्यो
भवतीतिवातृतीयोभ्राताघृतपृष्ठोऽस्यायमग्निस्तत्रापश्यंसर्वस्यपातारंवापालयितारंवाविश्पतिंसप्तपुत्रंसप्तमपुत्रंसर्पण
पुत्रमितिवासप्तसृप्तासंख्यासप्तादित्यरश्मयइतिवदंति ॥ २६ ॥ सप्तयुंजंतिरथमेकचक्रमेकोअश्वोवहतिसप्तनामा ।
त्रिनाभिचक्रमजरमनर्वंयत्रेमाविश्वाभुवनाधितस्थुः । सप्तयुंजंतिरथमेकचक्रमेकचारिणंचक्रंचकतेर्वाचरतेर्वाक्रामते

वैकोऽश्वोवहतिसप्तनामादित्यंःसप्तास्मैरश्मयोरसानभिसंनामयंतिसप्तैनमृषयःस्तुवंतीतिवेदमपीतरन्नामैतस्मादेवा
भिसंनामात्संवत्सरंप्रधानउत्तरोऽर्धर्चेत्रिनाभिचक्रंत्यृतुःसंवत्सरोग्रीष्मोवर्षाहेमंतइतिसंवत्सरःसंवसंतेऽस्मिन्भूतानि
ग्रीष्मोग्रस्यंतेऽस्मिन्रसांवर्षावर्षत्यासुपर्जन्योहेमंतोहिमवान्हिमंपुनर्हंतेर्वाहिनोतेर्वाजरमजरणधर्माणंमनर्वमप्रत्यृतम
न्यस्मिन्यत्रेमानिसर्वाणिभूतान्यभिसंतिष्ठंतेतंसंवत्सरंसर्वमात्राभिःस्तौति । पंचारेचक्रेपरिवर्तमानइतिपंचर्तुतयापंच
र्तवःसंवत्सरस्येतिचब्राह्मणंहेमंतशिशिरयोःसमासेनंषळरआहुरर्पितमितिषळृतुतयाराःप्रत्यृतानाभौषट्पुनःसहतेः ।
द्वादशारंनहितज्जराय । द्वादशप्रधयश्चक्रमेकमितिमासानांमासामानात्प्रधिःप्रहितोभवति । तस्मिन्त्साकंत्रिशताना
शङ्कवोऽर्पिताःषष्टिर्नचलाचलासः । षष्टिश्चहवैत्रीणिचशतानिसंवत्सरस्याहोरात्राइतिचब्राह्मणंसमासेन । सप्तशता
निविंशतिश्चतस्थुः । सप्तचवैशतानिविंशतिश्चसंवत्सरस्याहोरात्राइतिचब्राह्मणंविभागेनविभागेन ॥ २७ ॥ (एकार्थं
कोनुवयःसुपर्णायदिंद्रजुष्टोदमूर्नाःसंमातपंतीषिरेणंमरुत्वाँतितउसक्तुमिवंतत्सूर्यस्येंद्रेणसमीर्मातासंःकायमानःकनी
नकेवोपोअदर्शिसुवितेविद्यामदेवानंआघाद्यौर्मेऽदितिरदितिरुतस्मात्राहास्यवामस्यंसप्तयुंजंतिसप्तविंशतिः ) ॥ इति
निरुक्तेपूर्वषट्केचतुर्थोऽध्यायःसमाप्तः ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥

ॐ ॥ सस्निमविंदच्चरणेनदीनां । संस्नातंमेघं । त्वांहिष्ठोवांहवानांस्तोमोदूतोहुवंनरा । वोळ्हतमोह्वानानांस्तोमोदूतो हुवंनरौनरामनुष्यानृत्यंतिकर्मसुदूतोजवतेर्वाद्रवतेर्वावारयतेर्वा । दूतोदेवानामसिमर्त्यानामित्यपिनिगमोभवतिवाव शानोवष्टेर्वावाशयतेर्वा । सप्तस्वसृररुषीर्वावशानइत्यपिनिगमोभवतिवार्यंवृणोतेरथापिवरतमं । तद्वार्यंवृणीमहेवरिं ष्ठंगोपयत्यं । तद्वार्यंवृणीमहेवर्षिष्ठंगोपायितव्यंगोपायितारोयूयंस्थयुष्मभ्यमितिवांधइत्यन्ननामाध्यानीयंभवति । आमंत्रेभिःसिंचतामद्यमंधः । आसिंचतामत्रैर्मदनीयमंधोऽमत्रंपात्रममाअस्मिन्नदंत्यमापुनरनिर्मितंभवतिपात्रंपानां त्तमोऽप्यंधउच्यतेनास्मिन्ध्यानंभवतिनदर्शनमंधंतमइत्यभिभाषंतेऽयमपीतरोंऽधएतस्मादेव । पश्यदक्षण्वान्नविचेत दंधइत्यपिनिगमोभवति ॥ १ ॥ असश्चंतीभूरिधारेपयस्वती । असज्यमानेइतिवांव्युदस्यंत्याविततिवाबहुधारेउदक वत्यौवनुष्यतिर्हंतिकर्मानवगतसंस्कारोभवति । वनुयामवनुष्यतइत्यपिनिगमोभवति । दीर्घप्रयज्युमतियोवनुष्यातिव यंजयेमपृतनासुदूढ्यः । दीर्घप्रततयज्ञमभिजिगांसातियोवयंतंजयेमपृतनासुदूढ्यंदुर्धियंपापधियंपापःपातापेयानांपा पत्यमानोऽवाङेवपततीतिवापापत्यतेर्वास्यात्तरुष्यतिरप्येवंकर्मा । इंद्रेणयुजातरुषेमवृत्रमित्यपिनिगमोभवतिभंदना भंदतेःस्तुतिकर्मणः । पुरुप्रियोभंदतेधामभिःकविरित्यपिनिगमोभवति । सभंदनाउदियर्तिप्रजावतीरितिच । अन्ये नमदाहनोयाहितूयं । अन्येनमदहनोगच्छक्षिप्रंमाहंसीवभाषमाणेत्यसभ्यभाषणादाहनाइवभवत्येतस्मादाहनःस्यादि

षिर्नदोभवतिनदतेःस्तुतिकर्मणः । नदस्यमारुधतःकामआगन् । नदनस्यमारुधतःकामआगमत्संरुद्धप्रजननस्यब्रह्म चारिणइत्यृषिपुत्र्याविलपितंवेदयंते ॥ २ ॥ नयस्यद्यावापृथिवीनधन्वनांतरिक्षंनाद्रयःसोमोअक्षाः । अश्नोतेरित्ये के । अनूपेगोमान्गोभिरक्षाःसोमोदुग्धाभिरक्षाः । लोपाशःसिंहंप्रत्यंचमत्साः । क्षियतिनिगमःपूर्वःक्षरतिनिगमउत्त रइत्येकेऽनूपेगोमान्गोभिर्यदाक्षियंत्यथसोमोदुग्धाभ्यःक्षरंतिसर्वेक्षियतिनिगमाइतिशाकपूणिःश्वात्रमितिक्षिप्रनामा शुअतनंभवति । सपत्त्रीत्वरंस्थाजगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः । सपतत्रिचेत्वरंस्थावरंजंगमंचयत्तत्क्षिप्रमग्निर करोज्जातवेदाऊतिरवनात् । आत्वारथंयथोतयइत्यपिनिगमोभवतिहासमानेइत्युपरिष्टाद्व्याख्यास्यामः । वम्रकःपड्भिरु पसर्पदिंद्रं । पानैरितिवास्पाशनैरितिवास्पर्शनैरितिवा । ससंनपक्कमविदच्छुचंतं । स्वपनमेतन्माध्यमिकंज्योतिर नित्यदर्शनंतदिवाविदज्जाज्वल्यमानं । द्विताचसत्तास्वधयाचशंभुः । द्वैधंसत्तामध्यमेचस्थानउत्तमेचशंभुःसुखभूः । मृगंनव्रामृगयंते । मृगमिवव्रात्याःप्रैषाः ॥ ३ ॥ वराहोमेघोभवतिवराहारः । विध्यद्वराहंतिरोअद्रिमस्तेत्यपिनिगमो भवत्ययमपीतरोवराहएतस्मादेववरमाहारमाहार्षीरितिचब्राह्मणंवृहतिमूलानिवरंवरंमूलंवृहतीतिवा । वराहमिंद्र एमुषमित्यपिनिगमोभवत्यंगिरसोऽपिवराहाउच्यंते । ब्रह्मणस्पतिर्वृषभिर्वराहैः । अथाप्येतेमाध्यमकादेवगणावराह वउच्यंते । पश्यन्हिरण्यचक्रानयोदंष्ट्रान्विधावतोवराहून् । स्वसराण्यादित्योभवंतिस्वयंसारीण्यपिवास्वरादित्योभव

तिंसएनानिसारयति । उस्राइवस्वसराणीत्यपिनिगमोभवतिंशर्याअंगुलयोभवंतिंशर्याइषवः शरमय्यः शरः शृणातेः । श र्याभिर्नभरमाणोगभस्त्योरित्यपिनिगमोभवंत्यर्कोदेवोभवतिंयदेनमर्चंत्यर्कोमंत्रोभवतिंयदनेनार्चंत्यर्कमन्नंभवंत्यर्चति भूतान्यर्कोवृक्षोभवतिंसवृतःकटुकिम्ना ॥ ४ ॥ गायंतित्वागायत्रिणोऽर्चंत्यर्कमर्किणः । ब्रह्माणस्त्वाशतक्रतउद्वंश मिवयेमिरे । गायंतित्वागायत्रिणःप्रार्चंतितेऽर्कमर्किणोंब्राह्मणास्त्वाशतक्रतंउद्येमिरेवंशमिवंवंशोवनशयोभवतिंवन नाच्छूयतइतिवांपवीरथनेमिर्भवतिंयद्विपुनातिभूमिं । उतपव्यारथानामद्रिंभिंदंत्योजसा । तंमरुतःक्षुरपविनाव्ययु रित्यपिनिगमौभवतौवक्षोव्याख्यातंधन्वांतरिक्षंधन्वंत्यस्मादापस्तिरोधन्वातिरोचतइत्यपिनिगमोभवतिंसिनमन्नंभव तिंसिनातिभूतानि । येनस्मासिनंभरथःसखिभ्यइत्यपिनिगमोभवतींत्थामुथेत्येतेनव्याख्यातंसचासहेत्यर्थः । वसु भिःसचाभुवा । वसुभिःसहभुवौंचिदितिनिपातोऽनुदात्तःपुरस्तादेवव्याख्यातोंऽथापिपशुनामेहभवंत्युदात्तश्चिदसि मनासिचितास्त्वयिभोगाश्चेतयसइतिवा आइत्याकारउपसर्गःपुरस्तादेवव्याख्यातोंऽथाप्यध्यर्थेदृश्यते । अभ्रआँ अपः । अभ्रे आ अपः । अपोऽभ्रेऽधीतिद्युम्नंद्योततेर्यशोवान्नंवा । अस्मेद्युम्नमधिरत्नंचधेहि । अस्मासुद्युम्नंचरत्नंचधे हि ॥ ५ ॥ पवित्रंपुनातेर्मंत्रःपवित्रमुच्यते । येनदेवाःपवित्रेणात्मानंपुनतेसदेत्यपिनिगमोभवतिंरश्मयःपवित्रमुच्यं ते । गभस्तिपूतोनृभिरद्रिभिःसुतइत्यपिनिगमोभवंत्यापःपवित्रमुच्यंते । शतपवित्राःस्वधयामदंतीर्बहूदकाः । अग्निः

पवित्रमुच्यतेवायुःपवित्रमुच्यतेसोमःपवित्रमुच्यतेसूर्यःपवित्रमुच्यतइंद्रःपवित्रमुच्यते । अग्निःपवित्रंसमापुनातुवा
युःसोमःसूर्यइंद्रःपवित्रंतेमापुनंत्वित्यपिनिगमोभवतितोदस्तुद्यतेः ॥ ६ ॥ पुरुत्वादाश्वान्वोचेऽरिरग्नेतवस्विदा ।
तोदस्येवशरणआमहस्य । बहुदाश्वांस्त्वामेवाभिह्वयाम्यरिरमित्रऋच्छतेरीश्वरोऽप्यरिरेतस्मादेवंयदन्यदेवत्याअग्ना
वाहुतयोह्वयंतइत्येतदृष्ट्वैवमवक्ष्यत् । तोदस्येवशरणआमहस्य । तुदस्येवशरणेऽधिमहतःस्वंचाःसुअंचनः । आजुह्वा
नोघृतपृष्ठःस्वंचाइत्यपिनिगमोभवतिशिपिविष्टोविष्णुरितिविष्णोर्द्वेनामनीभवतःकुत्सितार्थीयंपूर्वंभवतीत्यौपमन्यवः
॥ ७ ॥ किमित्तेविष्णोपरिचक्ष्यंभूत्प्रयद्ववक्षेशिपिविष्टोअस्मि । मावर्पोअस्मदर्पगूहएतद्यदन्यरूपःसमिथेबभूथ ।
किंतेविष्णोऽप्रख्यातमेतद्भवत्यप्रख्यापनीयंयन्नःप्रब्रूषेशेपइवनिर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिरपिवाप्रशंसानामैवाभिप्रे
तंस्यात्किंतेविष्णोप्रख्यातमेतद्भवतिप्रख्यापनीयंयदुतप्रब्रूषेशिपिविष्टोऽस्मीतिप्रतिपन्नरश्मिःशिपयोऽत्ररश्मयउच्यंते
तैराविष्टोभवति । मावर्पोअस्मदर्पगूहएतत् । वर्पइतिरूपनामवृणोतीतिसतोयदन्यरूपःसमिथेसंग्रामेभवसिसंयतर
श्मिस्तस्योत्तराभूयसेनिर्वचनाय ॥ ८ ॥ प्रतत्तेअद्यशिपिविष्टनामार्यःशंसामिवयुनानिविद्वान् । तंत्वागृणामितवसम
तव्यान्क्षयंतमस्यरजसःपराके । तत्तेऽद्यशिपिविष्टनामार्यःप्रशंसाम्यर्योऽहमस्मीश्वरःस्तोमानामर्यस्त्वमसीतिवातंत्वा
स्तौमितवसमतव्यांस्तवसइतिमहतोनामधेयमुदितोभवति निवसंतमस्यरजसःपराकेपराक्रांते। आघृणिरागतहृणिः। आ

निरुक्त
॥ २५ ॥

घृणेसंसचावहै। आगतहृणेसंसेवावहैपृथुज्रयाःपृथुजवः। पृथुज्रयाअमिनादायुर्दस्योः । प्रामापयदायुर्दस्योः ॥ ९॥ अग्निंनरोदीधितिभिररण्योर्हस्तच्युतीजनयंतप्रशस्तं। दूरेदृशंगृहपतिमथर्युं। दीधितयोऽगुलयोभवंतिधीयंतेकर्मस्वरणीप्रत्यृतएनेअग्निःसमरणाज्जायतइतिवाहस्तच्युतीहस्तप्रच्युत्याजनयंतप्रशस्तंदूरेदर्शनंगृहपतिमतनवंतं ॥ १० ॥ एकयाप्रतिधापिवत्साकंसरांसित्रिंशतं। इंद्रःसोमस्यकाणुका। एकेनप्रतिधानेनापिवत्साकंसहेत्यर्थइंद्रःसोमस्यकाणुकाकांतकानीतिवाक्रांतकानीतिवाकृतकानीतिवेंद्रःसोमस्यकांतइतिवाकणेघातइतिवाकणेहतःकांतिहतस्तत्रैतद्याज्ञिकावेदयंतेत्रिंशदुक्थपात्राणिमाध्यंदिनेसवनएकदेवतानितान्येतस्मिन्कालएकेनप्रतिधानेनपिबंतितान्यत्रसरांस्युच्यंतेत्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येतिनैरुक्तास्तद्याएताश्चांद्रमस्यआगामिन्यआपोभवंतिरश्मयस्ताअपरपक्षेपिबंतितथापिनिगमोभवतियमक्षितमक्षितयःपिबंतीतितंपूर्वपक्षआप्याययंतितथापिनिगमोभवतियथादेवाअंशुमाप्याययंतीत्यध्रिगुर्मंत्रोभवतिगव्यधिकृतत्वादपिवाप्रशासनमेवाभिप्रेतंस्यात्तच्छन्दवत्त्वादध्रिगोशमीध्वंसुशमिशमीध्वंशमीध्वमध्रिगवित्यग्निरप्यध्रिगुरुच्यते । तुभ्यंश्चोतंत्यध्रिगोशचीवोऽधृतगमनकर्मवन्निंद्रोप्यध्रिगुरुच्यते । अध्रिगवओहमिंद्रायेत्यपिनिगमोभवत्यांगूषःस्तोमआघोषः । एनांगूषेणवयमिंद्रवंतः । अनेनस्तोमेनवयमिंद्रवंतः ॥ ११ ॥ आपांतमन्युस्तृपलप्रभर्माधुनिःशिमीवाञ्छरुमाँऋजीषी । सोमोविश्वान्यतसावनानिनार्वागिंद्रंप्रतिमाना

पूर्वष. अ. ५
॥ २५ ॥

निदेभुः । आपातितमन्युस्तृप्रप्रहारीक्षिप्रप्रहारींसृप्रप्रहारीसोमोवेंद्रोवांधुनिर्धूनोतेःशिमीतिकर्मनामंशमयतेर्वांशक्नोते
र्वेर्जीषीसोमोयत्सोमस्यंपूयमानस्यातिरिच्यतेंतदृजीषमपार्जितंभवतिंतेनर्जीषीसोमोंथाप्यैंद्रोनिगमोभवंत्यृजीषीवज्री
तिंहर्योरस्यसभागोधानाश्चेतिंधानाभ्राष्ट्रेहिताभवंतिंफलेहिताभवंतीतिवांबध्धांतेहरीधानांउपक्रजीषंजिघ्रतामित्य
पिनिगमोभवंत्यादिनाभ्यासेनोपहितेंनोपधामादत्तेंबभस्तिरत्तिकर्मासोमःसर्वाण्यतसानिवनानिंनावांगिंद्रंप्रतिमाना
निदभ्नुवंतिंयैरेनंप्रतिमिमतेंनैनंतानिदभ्नुवंत्यंवांगेवैनमप्राप्यविनश्यंतीतींद्रप्रधानेत्येकेनैघंटुकंसोमकर्मोभयप्रधानेत्य
परंश्मशाशुअश्नुतइतिवांश्माश्नुतइतिवा । अवंश्मशारुंधद्वाः । अवारुधच्छ्मशावारिति ॥ १२ ॥ उर्वश्यप्सराउर्व
भ्यश्नुतंऊरुभ्यामश्नुतंउरुर्वावशोऽस्यांअप्सराअप्सारिण्यपिवांप्सइतिरूपनामांप्सातेरप्सानीयंभवत्यांदर्शनीयंव्याप
नीयंवांस्पष्टंदर्शनायेतिशाकपूणिर्यदप्सइत्यभक्षस्याप्सोनामेतिंव्यापिनस्तद्राभवतिरूपवतींतदनयात्तमितिवांतदस्यै
दत्तमितिवांतस्यादर्शनान्मित्रावरुणयोरेतश्चस्कंदंतदभिवादिन्येषर्ग्भवति ॥ १३ ॥ उतासिंमैत्रावरुणोवंसिष्ठोर्वश्यां
ब्रह्मन्मनसोऽधिजातः । द्रप्संस्कन्नंब्रह्मणादैव्येनविश्वेंदेवाःपुष्करेत्वाददंत । अप्यसिमैत्रावरुणोवसिष्ठोर्वश्याब्रह्म
न्मनसोऽधिजातोंद्रप्संस्कन्नंब्रह्मणादैव्येनंद्रप्सःसंभृतप्सानीयोभवतिंसर्वेदेवाःपुष्करेत्वाधारयंतंपुष्करमंतरिक्षंपो
षतिभूतान्युदकंपुष्करंपूजाकरंपूजयितव्यंवेदमपीतरत्पुष्करमेतस्मादेवंपुष्करंवपुष्करंवांपुष्पंपुष्पतेर्व्युनंवेतेःकांतिर्वा

निरुक्त

॥ २६ ॥



प्रज्ञावा ॥ १४ ॥ सइत्तमोऽवयुनंततन्वत्सूर्येणवयुनवच्चकार । सतमोऽप्रज्ञानंततन्वंत्सतंसूर्येणप्रज्ञानवच्चकारंवाज पस्त्यंवाजपतनं । सनेमवाजपस्त्यमित्यपिनिगमोभवतिवाजगन्ध्यंगध्यत्युत्तरपदं । अश्यामवाजगंध्यमित्यपिनिग मोभवतिगध्यंगृह्णातेः । ऋञ्जावाजंनगध्यंयुयूषन्नित्यपिनिगमोभवतिगध्यतिर्मिश्रीभावकर्मा । आगधितापरिगधि तेत्यपिनिगमोभवतिकौरयाणःकृतयानः । पाकस्थामाकौरयाणइत्यपिनिगमोभवतितौरयाणस्तूर्णयानः । सतौ रयाणउपयाहियज्ञं । मरुद्भिरिंद्रसखिभिःसजोषाइत्यपिनिगमोभवत्यह्रयाणोह्रीतयानः । अनुष्टुयाकृणुह्यह्रयाणेत्य पिनिगमोभवतिहरयाणोहरमाणयानः । रजतंहरयाणइत्यपिनिगमोभवति । यआरितःकर्मणिकर्मणिस्थिरः । प्रत्यृतःस्तोमान्व्रंदीव्रंदतेर्मृदूभावकर्मणः ॥ १५ ॥ नियद्वृणक्षिश्वसनस्यमूर्धनिशुष्णस्यचिद्व्रंदिनोरोरुवद्वना । निवृ णक्षियच्छ्वसनस्यमूर्धनिशब्दकारिणःशुष्णस्यादित्यस्यचशोषयितूरोरूयमाणोवनानीतिवावधेनेतिवा । अव्रदंतवीळि तेत्यपिनिगमोभवतिवीळयतिश्चव्रीडयतिश्चसंस्तंभकर्माणौपूर्वेणसंप्रयुज्येतेनिष्षपीस्त्रीकामोभवतिविनिर्गतपसाःपसः सपतेःस्पृशतिकर्मणः । मानोमघेवनिष्षपीपरादाः । सयथाधनानिविनाशयतिमानस्त्वंतथापरादास्तूर्णाशमुदकंभ वतितूर्णमश्नुते । तूर्णाशंनगिरेरधीत्यपिनिगमोभवतिक्षुंपमहिच्छत्रकंभवतियत्क्षुभ्यते ॥ १६ ॥ कुदामर्तमराधसंप दाक्षुंपमिवस्फुरत् । कुदानःशुश्रवद्गिरइंद्रोअंग । कदामर्तमनाराधयंतंपादेनक्षुंपमिवावस्फुरिष्यतिकदानःश्रोष्य

॥ २६ ॥

तिचगिरंइंद्रोअंगांतेतिक्षिप्रनामाँचितमेवांकितंभवतिंनिचुंपुणःसोमोनिचांतपृणोंनिचमनेनप्रीणाति ॥ १७ ॥ पत्नीं
वंतःसुताइमउशंतोंयंतिवीतयें । अपांजग्मिर्निचुंपुणः । पत्नीवंतःसुताइमेंऽद्भिःसोमाःकामयमानायंतिंवीतयेपाना
यांपांगंतानिचुंपुणंःसमुद्रोऽपिनिचुंपुणउच्यतेंनिचमनेनपूर्यतेंऽवभृथोऽपिनिचुंपुणउच्यतेंनीचैरस्मिन्क्वणंतिंनीचैर्दध
तीतिवा । अवभृथनिचुंपुणइत्यपिनिगमोभवतिंनिचुंपुणनिचुंकुणेतिर्चपदिगंतुर्भवतियत्पद्यते ॥ १८ ॥ सुगुरंसत्सुहि
रण्यःस्वश्वोंबृहदंस्मैवयइंद्रोंदधाति । यस्त्वायंतंवसुनाप्रातरित्वोमुक्षीजंयेवपदिंमुत्सिनातिं । सुगुर्भवतिसुहिरण्यः
स्वश्वोंमहच्चास्मैवयइंद्रोदधातिंयस्त्वायंतमन्नेनंप्रातरागामिन्नतिथे । मुक्षीजंयेवपदिंमुत्सिनातिं । कुमारोमुक्षीजामो
चनाच्चंसयनाच्चततनाच्चंपादुःपद्यतेः । आविःस्वंःकृणुतेगूहंतेबुसंसपादुरंस्यनिर्णिजोनमुंच्यते । आविःकुरुतेभास
मादित्योंगूहतेबुसंबुसमित्युदकनामंब्रवीतेःशब्दकर्मणोभ्रंशतेर्वायद्वर्षन्पातयत्युदकैंरश्मिभिस्तत्प्रत्यादत्ते ॥ १९ ॥
वृकश्चंद्रमाभवतिंविवृतज्योतिष्कोवांविकृतज्योतिष्कोवांविक्रांतज्योतिष्कोवा ॥ २० ॥ अरुणोमांसकृद्वृकंःपथायंतं
ददर्शहि । उज्जिहीतेनिचाय्यातष्टेवपृष्ट्यामयीवित्तंमेंअस्यरोंदसी । अरुणआरोचनोंमासकृन्मासानांचार्धमासानां
चकर्ताभवतिंचंद्रमावृकःपथायंतंददर्शनक्षत्रगणमभिजिहीतेनिचाय्यंयेनयेनयोक्ष्यमाणोभवतिंचंद्रमास्तक्ष्णुवन्निवपृ
ष्टरोगींजानीतंमेऽस्यद्यावापृथिव्याविंत्यांदित्योऽपिवृकउच्यतेयदावृंक्ते । अजोंहवीदश्विनावर्तिकावामास्नोयत्सीम

मुंचतंवृकस्य । आह्वयदुषाअश्विनावादित्येनाभिग्रस्तांतामश्विनौप्रमुमुचतुरित्याख्यानंश्वापिवृकउच्यतेविकर्तनात् ।
वृकश्चिदस्यवारणउरामथिः । उरणमथिः । उरणऊर्णावान्भवत्यूर्णापुनर्वृणोतेरूर्णोतेर्वावृद्धवाशिन्यपिवृक्युच्यते
शतंमेषान्वृक्येचक्षदानंमृज्राश्वंतंपितांधंचकारेत्यपिनिगमोभवतिजोषवाकमित्यविज्ञातनामधेयंजोषयितव्यंभवति
॥ २१ ॥ यइंद्राग्नीसुतेषुवांस्तवत्तेष्वृतावृधा । जोषवाकंवदतःपज्रहोषिणानदेवाभसथश्चन । यइंद्राग्नीसुतेषुवांसोमे
षुस्तौतितस्याश्नीथोऽथयोऽयंजोषवाकंवदतिविजंजपःप्राजितहोषिणौनदेवौतस्याश्नीथःकृत्तिःकृंततेर्यशोवान्नंवा । म
हीवकृत्तिःशरणातंइंद्र । सुमहत्तइन्द्रशरणमंतरिक्षेकृत्तिरिवेतीयमपीतराकृत्तिरेतस्मादेवसूत्रमय्युपमार्थेवा । कृत्तिं
वसानआचरपिनाकंबिभ्रदागहीत्यपिनिगमोभवतिश्वघ्नीकितवोभवतिस्वंहंतिस्वंपुनराश्रितंभवति । कृतंनश्वघ्नीवि
चिनोतिदेवने । कृतमिवश्वघ्नीविचिनोतिदेवनेकितवःकिंतवास्तीतिशब्दानुकृतिःकृतवान्वाशीर्नामकःसममितिपरि
ग्रहार्थीयंसर्वनामानुदात्तं ॥ २२ ॥ मानःसमस्यदूढ्यः१परिद्वेषसोअंहुतिः । ऊर्मिर्ननावमावधीत् । मानःसर्वस्यदुर्धि
यःपापधियःसर्वतोद्वेषसोंऽहतिरूर्मिरिवनावमावधीदूर्मिरूर्णोतेर्नौःप्रणोत्तव्याभवतिनमतेर्वातत्कथमनुदात्तप्रकृति
नामस्यादृष्टव्ययंतुभवत्युतोसमस्मिन्नाशिशीहिनोवसोइतिसप्तम्यांशिशीतिर्दानकर्मा । उरुष्याणोअघायतःसमस्मा
दितिपंचम्यांमुरुष्यतीरक्षाकर्माथापिप्रथमाबहुवचने नभंतामन्यकेसमे ॥ २३ ॥ हुविषांजारोअपांपिपर्तिपपुरिर्नरा ।

पिताकुर्टस्यचर्षणिः । हविषापांजरयितापिपर्तिंपपुरिरितिंपृणातिनिगमौवाप्रीणातिनिगमौवापिताकृतस्यकर्मणश्चा
यितादित्यःशंवइतिवज्रनामशमयतेर्वाशातयतेर्वा । उग्रोयःशंबःपुरुहूततेनेत्यपिनिगमोभवतिंकेपयःकपूयाभवंतिंकपू
यमितिपुनातिकर्मकुत्सितंदुष्पूयंभवति ॥ २४ ॥ पृथक्प्रायन्प्रथमादेवहूतयोऽकृण्वतश्रवस्यानिदुष्टरा । नयेशेकुर्युज्ञि
यांनावमारुहमीमैंवतेन्यंविशंतकेपयः । पृथक्प्रायन्पृथक्प्रथतैःप्रथमादेवहूतयोयेदेवानाह्वयंताकुर्वतःश्रवणीयानिय
शांसिंदुरनुकराण्यन्यैर्येऽशक्नुवन्यज्ञियांनावमारोढुमथयेनाशक्नुवन्यज्ञियांनावमारोढुमीमैंवतेन्यविशंतेंहैवतेन्यविशं
तंऋणेहैवतेन्यविशंतास्मिन्नेवलोकइतिंवेर्मइतिबाहुनामंसमीरिततरोभवति । एताविश्वासवनातूतुमाकृषेस्वयंसूनोस
हसोयानिंदधिषे । एतानिसर्वाणिस्थानानिंतूर्णमुपाकुरुषैस्वयंबलस्यपुत्रयानिधत्स्वांसत्रमंहसस्त्राणंधनुर्वाकवचंवाक
वचंकुअंचितंभवतिंकांचितंभवतिकायेंऽचितंभवतीतिवा ॥ २५ ॥ प्रीणीताश्वान्हितंजंयाथस्वस्तिवाहंरथमित्कृणु
ध्वं । द्रोणाहावमवतमश्मचक्रमंसत्रकोशंसिंचतानृपाणं । प्रीणीताश्वान्त्सुहितंजयथंजयनंवोहितमस्तुंस्वस्तिवाहनंर
थंकुरुध्वंद्रोणाहावंद्रोणंद्रुममयंभवंत्याहावआह्वानादावहआवहनादवतोऽवातितोमहान्भवत्यश्मचक्रमशनचक्रंमस
नचक्रमितिवांसत्रकोशमंसत्राणिवंःकोशस्थामीयानिसंतुंकोशःकुष्णातेर्विकुषितोभवत्ययमपीतरःकोशएतस्मादेवंसंच
यआचितमात्रोमहान्भवतिंसिंचतनृपाणंनरपाणंनृणांकर्मणासंग्राममुपगमितौकाकुदंताल्वित्याचक्षतेंजिह्वाकोकुवासा

स्मिन्धीयतेंजिह्वाकोकुवाकोकूयमानांवर्णान्नुदतीतिवांकोकूयतेर्वास्याच्छब्दकर्मणोंजिह्वाजोहुवांतालुतरतेस्तीर्णतममं
गंलततेर्वास्याद्विपरीतांद्यथातलल्लतेत्यविपर्ययः ॥ २६ ॥ सुदेवोअसिवरुणयस्यंतेसप्तसिन्धंवः । अनुक्षरंतिकाकुदं
सूर्म्यंसुषिरामिव । सुदेवस्त्वंकल्याणदेवंःकमनीयदेवोवाभवसिवरुणंयस्यतेसप्तसिंधवंःसिंधुःस्रवणाद्यस्यतेसप्तस्रोतां
सितानितेकाकुदमनुक्षरंतिसूर्मिकल्याणोर्मिस्रोतःसुषिरमनुयथावीरिटंतैटीकिरंतरिक्षंमेवमाहपूर्ववयतेरुत्तरमिरतेर्व
यांसीरंत्यस्मिन्भांसिवांतदेतस्यामृच्युदाहरंत्यपिनिगमोभवति ॥ २७ ॥ प्रवांवृजेसुप्रयावर्हिरेषामाविश्पतींववीरिं
टइयाते । विशामक्तोरुषसंःपूर्वहूंतौवायुःपूषास्वस्तयेंनियुत्वान् । प्रवृज्यतेंसुप्रायणंवर्हिरेषामेयातेंसर्वस्यपातारौवा
पालयितारौवांवीरिटमंतरिक्षंभियोवाभासोवांततिरपिवोपमार्थेस्यांत्सर्वपतीइवराजानौंवीरिटेगणेमनुष्याणांरात्र्या
विवासेपूर्वस्यामभिहूतौंवायुश्चनियुत्वान्पूषाचंस्वस्त्ययनायंनियुत्वान्नियुतोऽस्याश्वांनियुतोनियमनाद्वानियोजनाद्वां
ऽच्छाभेरासुमितिशाकपूर्णिःपरींसीमितिव्याख्यातांएनमेनामस्यांअस्येत्येतेनव्याख्यातंसृणिरंकुशोभवतिंसरणादंकु
शोंऽचतेंराकुचितोभवतीतिवांनेदीयइत्सृण्यःपक्वमेयादित्यपिनिगमोभवंत्यंतिकतममंकुशादायांत्पक्वमौषधमागच्छ
त्वित्यागच्छत्विति ॥ २८ ॥ ( सस्निमसश्चंतीनयस्यवराहौंगायंतित्वापवित्रंपुरुत्वाकिमित्तेप्रतत्तेंऽग्निंनरएकया

पांतमन्युंरुर्वश्यप्सराउतासिंसइन्नियत्कदामर्तंपत्नीवंतः सुगुरसद्धकश्चंद्रमांअरुणोमायइंद्राग्नीमानःसमस्यहविषाजारः
पृथक्प्रायन्प्रीणीताश्वान्सुदेवःप्रवावृजेऽष्टाविंशतिः ) ॥ इतिनिरुक्तेपूर्वषट्केपंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥
ॐ ॥ त्वमंग्नेद्युभिस्त्वमांशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजायसेशुचिः ।
त्वमग्नेद्युभिरहोभिस्त्वमाशुशुक्षणिराशुइतिचशुइतिचक्षिप्रनामनीभवतःक्षणिरुत्तरःक्षणोतेराशुशुचाक्षणोतीतिवांस
नोतीतिवांशुक्शोचतेःपंचम्यर्थेवाप्रथमांतथाहिवाक्यसंयोगंआइत्याकारउपसर्गःपुरस्ताच्चिकीर्षितजउत्तरंआशुशो
चयिषुरितिशुचिःशोचतेर्ज्वलतिकर्मणोऽयमपीतरःशुचिरेतस्मादेवनिष्षिक्तमस्मात्पापकमितिनैरुक्ताः । इंद्रआशां
भ्यस्परिसर्वाभ्योअभयंकरत् । आशादिशोभवंत्यासदनादाशाउपदिशोभवंत्यभ्यशनात्काशिर्मुष्टिःप्रकाशनान्मुष्टि
र्मोचनाद्वामोषणाद्वामोहनाद्वा । इमेचिदिंद्ररोदसीअपारेयत्संगृभ्णामघवन्काशिरित्ते । इमेचिदिंद्ररोदसीरोधसी
द्यावापृथिव्यौविरोधनाद्रोधःकूलंनिरुणद्धिस्रोतःकूलंरुजतेर्विपरीताल्लोष्ठोऽविपर्ययेणापारेदूरपारेयत्संगृभ्णासिमघ
वन्काशिस्तेमहान् । अहस्तमिंद्रसंपिणक्कुणारुं । अहस्तमिंद्रकृत्वासंपिंढिपरिक्वणनंमेघं ॥ १ ॥ अलातृणोवलइंद्रव्र
जोगोःपुराहंतोर्भयमानोव्यार । सुगान्पथोअकृणोन्निरजेगाःप्रावन्वाणीःपुरुहूतंधमंतीः । अलातृणोऽलमातर्दनो
मेघोवलोवृणोतेर्व्रजोव्रजत्यंतरिक्षेगोरेतस्यामाध्यमिकायावाचःपुराहननाद्भयमानोव्यार । सुगान्पथोअकृणोन्निरजे

गाः । सुगमनान्पथोऽकरौन्निर्गमनायगवां । प्रावन्वाणीः पुरुहूतंधमंती: । आपोवावहनाद्वाचोवावदनाद्बहुभिराहूत
मुदकंभवतिधमतिर्गतिकर्मा ॥ २ ॥ उद्बृहरक्षः सहमूलमिंद्रवृश्चामध्यंप्रत्यग्रंशृणीहि । आकीवतः सलल्लूकंचकर्थब्रह्मद्वि
षेतपुषिंहेतिमस्य । उद्धररक्षः सहमूलमिंद्रंमूलंमोचनाद्वामोषणाद्वामोहनाद्वावृश्चमध्यंप्रतिशृणीह्यग्रंमग्रमागतंभवत्या
कियतोदेशात्सलल्लूकंसल्लुब्धंभवतिपापकमितिनैरुक्ताः सररूकंवास्यात्सर्तेरभ्यस्तात्तपुषिस्तपतेर्हेतिर्हंतेः । त्यंचिदित्था
कत्पयंशयानं । सुखपयसंसुखमस्यपयः । विस्रुहआपोभवंतिविस्रवणात् । वयाइवरुरुहुः सप्तविस्रुहइत्यपिनिगमो
भवतिवीरुधओषधयोभवंतिविरोहणात् । वीरुधः पारयिष्णवइत्यपिनिगमोभवतिनक्षद्दाभमश्नुवानदाभंमभ्यश्नने
नदश्नोतीति । नक्षद्दाभंततुरिंपर्वतेष्ठामित्यपिनिगमोभवत्यस्कृधोयुरकृध्वायुः कृध्वितिह्रस्वनामनिकृत्तंभवति । यो
अस्कृधोयुरजरः स्वर्वानित्यपिनिगमोभवतिनिशृंभानिश्रथ्यहारिणः ॥ ३ ॥ आजासः पूषणंरथेनिशृंभास्तेजनश्रियं ।
देवंवहंतुबिभ्रतः । आवहंत्वजाः पूषणंरथेनिः श्रथ्याहारिणस्तेजनश्रियंजातश्रियंबृबदुक्थोमहदुक्थोवक्तव्यमस्माउक्थ
मितिबृबदुक्थोवा । बृबदुक्थंहवामहइत्यपिनिगमोभवत्यृदूदरः सोमोमृदूदरोमृदुरुदरेष्वितिवा । ऋदूदरेणसख्या
सचेयेत्यपिनिगमोभवत्यृदूपेइत्युपरिष्टाद्व्याख्यास्यामः पुलुकामः पुरुकामः । पुलुकामोहिमर्त्यइत्यपिनिगमोभवत्यसि
न्वतीअसंखादंत्यौ । असिन्वतीबप्सतीभूर्यत्तइत्यपिनिगमोभवतिकपनाः कंपनाः क्रिमयोभवंति । मोषथावृक्षंकपने

ववेधसइत्यपिनिगमोभवतिभाऋजीकःप्रसिद्धभाः । धूमकेतुःसमिधाभाऋजीकंइत्यपिनिगमोभवतिरुजानानद्योभवं
तिरुजंतिकूलानि । संरुजानाःपिपिषइंद्रशत्रुरित्यपिनिगमोभवतिजूर्णिर्जवतेर्वाद्रवतेर्वादूनोतेर्वा । क्षिप्राजूर्णिर्नव
क्षतीत्यपिनिगमोभवति । परिघ्रंसमोमनांवांवयोऽगात् । पर्यगाद्धांघ्रंसंमहरवनायान्नं ॥ ४ ॥ उपलप्रक्षिण्युपले
षुप्रक्षिणात्युपलप्रक्षेपिणीवेंद्रऋषीन्पप्रच्छेदुर्भिक्षेकेनजीवतीतितेषामेकःप्रत्युवाचशकटःशाकिनीगावोजालमस्यंदनंव
नंमुदधिःपर्वतोराजादुर्भिक्षेनववृत्तयइतिसानिगदव्याख्याता ॥ ५ ॥ कारुरहंततोभिषगुपलप्रक्षिणीनना । नानां
धियोवसूयवोऽनुगाइवतस्थिमेंद्रायेंदोपरिस्रव । कारुरहमस्मिकर्तास्तोमानांततोभिषक्तइतिसंताननामपितुर्वापु
त्रस्यवोपलप्रक्षिणीसक्तुकारिकाननानमतेर्मातावादुहितावानानाधियोनानाकर्माणोवसूयवोवसुकामा अन्वास्थिता
स्मोगावइवलोकंसिंद्रायेंदोपरिस्रवेत्यध्येषणा । आसीनऊर्ध्वामुपसिक्षिणात्युपस्थेप्रकलविद्वणिग्भवतिकलाश्चवे
दप्रकलाश्च । दुर्मित्रासःप्रकलविन्मिमानाइत्यपिनिगमोभवत्यभ्यर्धयज्वाभ्यर्धयन्यजति । सिषक्तिपूषाअभ्यर्धयज्वे
त्यपिनिगमोभवतीक्षईशिषे । ईक्षेहिवस्वउभयस्यराजन्नित्यपिनिगमोभवतिक्षोणस्यक्षयणस्य । महःक्षोणस्याश्वि
नाकण्वायेत्यपिनिगमोभवति ॥ ६ ॥ अस्मेतेबन्धुः । वयमित्यर्थः । अस्मेयातंनासत्यासजोषाः । अस्मानित्यर्थः ।
अस्मेसंमानेभिर्वृषभपौंस्येभिः । अस्माभिरित्यर्थः । अस्मेप्रयंधिमघवन्नृजीषिन् । अस्मभ्यमित्यर्थः । अस्मेआराच्चि

निरुक्त

॥ ३० ॥

द्वेषःसनुतर्युयोतु । अस्मादित्यर्थः । ऊर्वइवपप्रथेकामोअस्मे । अस्माकमित्यर्थः । अस्मेधत्तवसवोवसूनि । अस्मास्वित्यर्थः । पाथोऽन्तरिक्षंपथाव्याख्यातं । श्येनोनदीयन्नन्वेतिपाथइत्यपिनिगमोभवत्युदकमपिपाथउच्यतेपानात् । आचष्टआसांपाथोनदीनामित्यपिनिगमोभवत्यन्नमपिपाथउच्यतेपानादेव । देवानांपाथउपवक्षिविद्वानित्यपिनिगमोभवतिसवीमनिप्रसवे । देवस्यवयंसवितुःसवीमनीत्यपिनिगमोभवतिसप्रथाःसर्वतःपृथुः । त्वमग्नेसप्रथाअसीत्यपिनिगमोभवतिविदथानिवेदनानि । विदथानिप्रचोदयन्नित्यपिनिगमोभवति ॥ ७ ॥ श्रायंतइवसूर्यंविश्वेदिंद्रस्यभक्षत । वसूनिजातेजनमानओजसाप्रतिभागंनदीधिम । समाश्रिताःसूर्यमुपतिष्ठंतेऽपिवोपमार्थेस्यात्सूर्यमिवेंद्रमुपतिष्ठंतइतिसर्वाणींद्रस्यधनानिविभक्ष्यमाणाःसयथाधनानिविभजतिजातेचजनिष्यमाणेचतंवयंभागमनुध्यायामौजसाबलेनौजओजतेर्वौब्जतेर्वाशीराःश्रयणाद्वाश्रपणाद्वाथेयमितराशीराशास्तेः । इंद्रायगावआशिरमित्यपिनिगमोभवतिसामेसत्याशीर्देवेष्वितिच । यदातेमर्तोअनुभोगमानळादिद्ध्रसिष्ठओषधीरजीगः । यदातेमर्तोभोगमन्वापदथग्रसितृतमओषधीरगारीर्जिगर्तिर्गिरतिकर्मावागृणातिकर्मावागृह्णातिकर्मावा । मूराअमूरनवयंचिकित्वोमहित्वमग्नेत्वमंगवित्से । मूढावयंस्मोऽमूढस्त्वमसिनवयंविद्मोमहत्त्वमग्नेत्वंतुवेत्थशशमानःशंसमानः । योवांयज्ञैःशशमानोहदाशतीत्यपिनिगमोभवति । देवोदेवाच्याकृपा । देवोदेवान्प्रत्यक्तयाकृपाकृपक्कपतेर्वाकल्पतेर्वा ॥ ८ ॥ अश्वंवंहिभूरि

पूर्वष.
अ. ६

॥ ३० ॥

दावंत्तरावांविजामातुरुतवांघास्यालात् । अथासोमस्यप्रयंतीयुवभ्यामिंद्राग्नीस्तोमंजनयामिनव्यं । अश्रौषंहिबहुदा
तृतरौवांविजामातुरसुसमाप्तांज्जामातुर्विजामातेतिशश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षतेऽसुसमाप्तइववरोऽभिप्रेतो
जामाताजाअपत्यंतन्निर्मातोतवाघास्यालादपिचस्यालात्स्यालआसन्नःसंयोगेनेतिनैदानाःस्याल्लाजानावपतीतिवाला
जालाजतेःस्यंशूर्पस्यतेःशूर्पमशनपवनंशृणातेर्वाऽथसोमस्यप्रदानेनंयुवाभ्यामिंद्राग्नीस्तोमंजनयामिनव्यं । नवतरमोमा
सइत्युपरिष्टाद्व्याख्यास्यामः ॥ ९ ॥ सोमानंस्वरणंकृणुहिब्रह्मणस्पते । कक्षीवंतंयऔशिजः । सोमानंसोतारंप्रका
शनवन्तंकुरुब्रह्मणस्पतेकक्षीवंतमिवयऔशिजःकक्षीवान्कक्ष्यावानौशिजउशिजःपुत्रउशिग्वष्टेःकान्तिकर्मणोऽपित्व
यंमनुष्यकक्षएवाभिप्रेतःस्यात्तंसोमानंसोतारंमाप्रकाशनवन्तंकुरुब्रह्मणस्पते ॥ १० ॥ इन्द्रासोमासमघशंसमभ्यं१
घंतपुर्ययस्तुचरुरग्निवाँइव । ब्रह्मद्विषेक्रव्यादेघोरचक्षसेद्वेषोधत्तमनवायंकिमीदिने । इन्द्रासोमावघस्यशंसितारमघं
हन्तेर्निर्ह्रसितोपसर्गआहन्तीतितपुस्तपतेश्चरुर्मृच्चयोभवतिचरतेर्वासमुच्चरन्त्यस्मादापोब्रह्मद्विषेब्राह्मणद्वेष्ट्रेक्रव्यादेक्र
व्यमदतेघोरचक्षसेघोरख्यानायक्रव्यंविकृत्ताज्जायतइतिनैरुक्ताद्वेषोधत्तमनवायमनवयवंयदन्येनव्यवेयुरद्वेषसइति
वाकिमीदिनेकिमिदानीमितिचरतेकिमिदंकिमिदमितिवापिशुनायचरतेपिशुनःपिंशतेर्विपिंशतीति ॥ ११ ॥ कृणु
ष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाँइभेन । तृष्वीमनुप्रसितिंद्रूणानोऽस्तासिविध्यरक्षसस्तपिष्ठैः । कुरुष्वपाजः

पाजः पालनात्प्रसितिमिव पृथ्वीं प्रसितिः प्रसयनात्तंतुर्वा जालं वा याहि राजेवामात्यवानभ्यमनवान्त्स्ववान्वेराभृतागणे नंगतभयेनहस्तिनेतिवा तृष्व्यानुप्रसित्याद्रूणानस्तृष्वीतिक्षिप्रनामतरतेर्वात्वरतेर्वासितासिविध्यरक्षसस्तपिष्ठैस्तप्ततमै स्तृप्ततमैः प्रपिष्टतमैरितिवा । यस्तेगर्भममीवादुर्णामायोनिमाशये । अमीवाभ्यमनेनव्याख्यातोदुर्णामाक्रिमिर्भवतिपापनामाक्रिमिः क्रव्येमेद्यतिक्रमतेर्वास्यात्सरणकर्मणः क्रामतेर्वा । अतिक्रामन्तोदुरितानिविश्वा । अतिक्रममाणादुर्गतिगमनानिसर्वाण्यप्वायदेनयाविद्धोऽपवीयतेव्याधिर्वाभयंवा । अप्वेपरेहीत्यपिनिगमोभवत्यमतिरमामयी मतिरात्ममयी । ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनीत्यपिनिगमोभवतिश्रुष्टीतिक्षिप्रनामाशुअष्टीति ॥ १२ ॥ ताँ अध्वरउशतोयक्ष्यग्नेश्रुष्टीभगंनासत्यापुरंधिं । तानध्वरेयज्ञउशतः कामयमानान्यजाग्नेश्रुष्टीभगंनासत्यौचाश्विनौसत्यावेवनासत्यावित्यौर्णवाभः सत्यस्यप्रणेताराावित्याग्रायणोनासिकाप्रभवौवभूवतुरितिवापुरन्धिर्वहुधीस्तत्कः पुरन्धिर्भगः पुरस्तात्तस्यान्वादेशइत्येकमिन्द्रइत्यपरंसवहुकर्मतमः पुरांचदारयितृतमोवरुणइत्यपरंतंप्रज्ञयास्तौति । इमामूनुकवितमस्यमायामित्यपिनिगमोभवतिरुशदितिवर्णनामरोचतेर्ज्वलतिकर्मणः । समिद्धस्यरुशददर्शिपाजइत्यपिनिगमोभवति ॥ १३ ॥ अस्तिहिवः सजात्यंरिशादसोदेवासोअस्त्याप्यं । अस्तिहिवः समानजातितारेशयदारिणोदेवाअस्त्याप्यमाप्यमाप्नोतेः सुदत्रः कल्याणदानः । त्वष्टासुदत्रोविदधातुरायइत्यपिनिगमोभवतिसुविदत्रः कल्याणवि

द्यः । आग्नेयाहिसुविदत्रेभिरर्वाङित्यपिनिगमोभवत्यानुषगितिनामानुपूर्वस्यानुषक्तंभवति । स्तृणन्तिबर्हिरा
नुषगित्यपिनिगमोभवतितुर्वणिस्तूर्णवनिः । सतुर्वणिर्महाँअरेणुपौंस्यइत्यपिनिगमोभवतिगिर्वणादेवोभवतिगीर्भि
रेनंवनयन्ति । जुष्टंगिर्वणसेबृहदित्यपिनिगमोभवति ॥ १४ ॥ असूर्तेसूर्तेरजसिनिषत्तेयेभूतानिसमकृण्वन्निमानि ।
असुसमीरिताःसुसमीरितेवातसमीरितामाध्यमकादेवगणायेरसेनपृथिवींतर्पयंतोभूतानिचकुर्वन्तितआयजंतेत्यति
क्रांतंप्रतिवचनं । अभ्युक्सातइन्द्रऋष्टिः । अमाक्तेतिवाभ्यक्तेतिवा । याद्दश्मिन्धायितमपस्ययाविदत् ।
याद्दशेऽधायितमपस्ययाविदत् । उस्रःपितेवजारयायियज्ञैः । उस्रइवगोपिताजाययियज्ञैः ॥ १५ ॥ प्रवो
ऽच्छाजुजुषाणासोअस्थुरभूतविश्वेअग्रियोतवाजाः । प्रास्थुर्वोजोषयमाणाअभवतसर्वेऽग्रगमनेनेतिवाग्रगरणेने
तिवाग्रसंपादिनइतिवापिवाग्रमित्येतदनर्थकमुपबंधमाददीत । अद्धीदिंद्रप्रस्थितेमाहवींषिचनोदधिष्वपचतोत
सोमं । अद्धीन्द्रप्रस्थितानीमानिहवींषिचनोदधिष्वचनइत्यन्ननामपचतिर्नामीभूतस्तंमेदस्तःप्रतिपचताग्रभीष्टामि
त्यपिनिगमोभवत्यपिवामेदसश्चपशोश्चसात्वंद्विवचनंस्याद्यत्रह्येकवचनार्थःप्रसिद्धंतद्भवति । पुरोळाअग्नेपचतइ
तियथाशुरुधआपोभवन्तिशुचंसंरुंधंति । ऋतस्यहिशुरुधःसन्तिपूर्वीरित्यपिनिगमोभवत्यमिनोऽमितमात्रोमहान्भ
वत्यभ्यमितोवा । अमिनःसहोभिरित्यपिनिगमोभवतिजज्झतीरापोभवंतिशब्दकारिण्यः । मरुतोजज्झतीरि

वेत्यपिनिगमोभवंत्यप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितोवा । अस्मभ्यमप्रतिष्कुतइत्यपिनिगमोभवतिशाशदानः शाशाद्यमानः । प्रस्वांमतिमतिरच्छाशदानइत्यपिनिगमोभवति ॥ १६ ॥ सृप्रःसर्पणादिदमपीतरंत्सृप्रमेतस्मादेवंस र्पिर्वातैलंवा । सृप्रकरस्नमूतयइत्यपिनिगमोभवतिकरस्नौवाहूकर्मणांप्रस्नातारौसुशिप्रमेतेनव्याख्यातं । वाजेसुशि प्रगोमतीत्यपिनिगमोभवतिशिप्रेहनूनासिकेवाहनुर्हंतेर्नासिकानसतेः । विष्यस्वशिप्रेविसृजस्वधेनेइत्यपिनिगमोभ वतिधेनादधातेरंसुरमणात् । सचित्रेणचिकितेरंसुभासेत्यपिनिगमोभवतिद्विवर्हाद्वयोःस्थानयोःपरिवृढोमध्यमेचस्था नउत्तमेच । उतद्विवर्हाअमिनःसृद्धोभिरित्यपिनिगमोभवंत्यक्रआक्रमणात् । अक्रोनबभ्रिःसामथेमहीनामित्यपिनिग मोभवंत्युराणउरुकुर्वाणः । दूतईयसेप्रदिवउराणइत्यपिनिगमोभवतिस्तियाआपोभवन्तिस्त्यायनात् । वृषासिंधू नांवृषभःस्तियानामित्यपिनिगमोभवतिस्तिपाःस्तियापालनंउपस्थितान्पालयतीतिवा । सनःस्तिपाउतभवातनूपाइ त्यपिनिगमोभवतिजवारुजवमानरोहिंजरमाणरोहिंगरमाणरोहीतिवा । अग्नेरुपआरुपितंजबार्वित्यपिनिगमोभवति जरूथंगरूथंगृणातेः । जरूथंहन्यक्षिरायेपुरंधिमित्यपिनिगमोभवतिकुलिशइतिवज्रनामकूलशातनोभवति । स्कंधां सीवकुलिशेनाविवृक्णाहिःशयतउपपृक्पृथिव्याः । स्कंधोवृक्षस्यसमास्कन्नोभवंत्ययमपीतरस्कन्धएतस्मादेवास्कन्नं कायेऽहिःशयतउपपर्चनःपृथिव्यांस्तुंजस्तुंजतेर्दानकर्मणः ॥ १७ ॥ तुंजेतुंजेयउत्तरेस्तोमाइंद्रस्यवज्रिणः । नविन्धे

अस्यसुष्टुतिं । दानेदानेयउत्तरैस्तोमाइंद्रस्यवज्रिणोनास्यतैर्विदाभिसमाप्तिंस्तुतैर्वर्हणापरिबर्हणा । बृहच्छ्रवाअसुरोब र्हणाकृतइत्यपिनिगमोभवति ॥ १८ ॥ योअस्मैघ्रंसउतवायऊधनिसोमंसुनोतिभवतिद्युमाँअहं । अपापशक्रस्ततनुष्टिमूह तितनूशुभ्रंमघवायःकवासखः । घ्रंसइत्यहर्नामग्रस्यंतेऽस्मिन्रसागोरूधउद्धततरंभवत्युपोन्नद्धमितिवास्नेहानुप्रदान सामान्याद्रात्रिरप्यूधउच्यतेसयोऽस्माअहन्यपिवारात्रौसोमंसुनोतिभवत्यहद्योतनवानपोहत्यपोहतिशक्रस्तितनिषुंध र्मसंतानादपेतमलंकरिष्णुमयज्वानंतनूशुभ्रंतनूशोभयितारंमघवायःकवासखोयस्यकपूयाःसखायः । न्यांविध्यदिली बिशस्यदृह्वाविशृंगिणमभिनच्छुष्णमिंद्रः । निरविध्यदिलाबिलशयस्यदृह्वानिव्यभिनच्छृंगिणंशुष्णमिंद्रः ॥ १९ ॥ अस्माइदुप्रभरातूतुजानोवृत्रायवज्रमीशानःकियेधाः । गोर्नपर्वविरदातिरश्चेष्यन्नर्णांस्यपांचरध्यै । अस्मैप्रहरतूर्णत्व रमाणोवृत्रायवज्रमीशानःकियेधाःकियद्धाइतिवाक्रममाणधाइतिवागोरिवपर्वाणिविरदमेघस्येष्यन्नर्णांस्यपांचरणाय भृमिर्भ्राम्यतेः । भृमिरस्यृषिकृन्मर्त्यानामित्यपिनिगमोभवतिविष्पितोविप्राप्तः । पारंनोअस्यविष्पितस्यपर्षन्नित्य पिनिगमोभवति ॥ २० ॥ तन्नस्तुरीपमद्भुतंपुरुवारंपुरुत्मना । त्वष्टापोषायविष्यतुरायेनाभानोअस्मयुः । तन्नस्तू र्णापिमहत्संभृतमात्मनात्वष्टाधनस्यपोषायविष्यत्वित्यस्मयुरस्मान्कामयमानोराःसिनोरास्पीरपतेर्वारसतेर्वा । रा स्पिनस्यायोरित्यपिनिगमोभवत्यृंजतिःप्रसाधनकर्मा । आवऋंजसऊर्जांव्युष्टिष्वित्यपिनिगमोभवत्यृजुरित्यप्यस्यभ

वति । ऋजुनीतीनोवरुणइत्यपिनिगमोभवतिप्रतद्वसूप्राप्तवसू । हरीइंद्रप्रतद्वसूअभिस्वरेत्यपिनिगमोभवति ॥ २१ ॥
हिनोतानोअध्वरंदेवयज्याहिनोतब्रह्मसनयेधनानां । ऋतस्ययोगेविष्यध्वमूधःश्रुष्टीवरीर्भूतनास्मभ्यमापः । प्रहिणुत
नोऽध्वरंदेवयज्यायैप्रहिणुतब्रह्मधनस्यसननायऋतस्ययोगेयज्ञस्ययोगेयाज्ञेशकटइतिवाशकटंशकृदितंभवतिशनकैस्त
कतीतिवाशब्देनतकतीतिवा । श्रुष्टीवरीर्भूतनास्मभ्यमापः । सुखवत्योभवतास्मभ्यमापः । चोष्कूयमाणइंद्रभूरिवामं ।
ददर्दिंद्रबहुवननीयं । एधमानद्विळुभयस्यराजाचोष्कूयतेविशइंद्रोमनुष्यान् । व्युदस्यत्येधमानानहर्द्वेष्टृसुन्वतःसुन्व
तोऽभ्यादधात्युभयस्यराजादिव्यस्यचपार्थिवस्यचचोष्कूयमाणइतिचोष्कूयतेश्चर्करीतवृत्तंसुमत्स्वयमित्यर्थः । उप
प्रागात्सुमन्मेऽधायिमन्म । उपप्रैतुमांस्वयंयन्मेमनोऽध्यायियज्ञेनेत्याश्वमेधिकोमंत्रोदिविष्टिषुदिवएषणेषु । स्थूरंरा
धःशताश्वंकुरुंगस्यदिविष्टिषु । स्थूरःसमाश्रितमात्रोमहान्भवत्यणुरनुस्थवीयांसमुपसर्गोलुप्तनामकरणोयथासंप्रतिकु
रुंगोराजाबभूवकुरुगमनाद्वाकुलगमनाद्वाकुरुःकृंततेःक्रूरमित्यप्यस्यभवतिकुलंकुष्णातेर्विकुषितंभवतिदूतोव्याख्य।
तोजिन्वतिःप्रीतिकर्मा । भूमिंपर्जन्याजिन्वन्तिदिवंजिन्वन्त्यग्नयइत्यपिनिगमोभवति ॥ २२॥ अमत्रोऽमात्रोमहान्भ
वत्यभ्यमितोवा । महाँअमत्रोवृजनेविरप्शीत्यपिनिगमोभवति । स्तवेवज्र्यृचीषमः । स्तूयतेवज्र्यृचासमोऽनर्शरातिमन
श्लीलदानमश्लीलंपापकमश्रिमद्विषमं । अनर्शरातिंवसुदामुपस्तुहीत्यपिनिगमोभवत्यनर्वाप्रत्यृतोऽन्यस्मिन् । अनर्वा

णंवृषभंमन्द्रजिह्वंबृहस्पतिंवर्धयानव्यमर्कैः । अनर्वमप्रत्यृतमन्यस्मिन्वृषभंमन्द्रजिह्वंमन्दनजिह्वंमोदनजिह्वमितिवा
बृहस्पतिंवर्धयनव्यमर्कैरर्चनीयैःस्तोमैरसामिसामिप्रतिषिद्धंसामिस्यतेः। असाम्योजोबिभृथासुदानवः। असुसमाप्तंबलं
बिभृथकल्याणदानाः ॥२३॥ मात्वासोमस्यगल्दयासदायाचन्नहंगिरा। भूर्णिंमृगंनसवनेषुचुक्रुधंकईशानंनयाचिषत्।
माचुक्रुधंत्वासोमस्यगालनेनसदायाचन्नहंगिरागीत्यास्तुत्याभूर्णिमिवमृगंनसवनेषुचुक्रुधंकईशानंनयाचिष्यतइतिग
ल्दाधमनयोभवंतिगलनमासुधीयते । आत्वाविशन्त्विन्दवआगल्दाधमनीनां । नानाविभक्तीत्यतेभवंतआगलनाधम
नीनामित्यत्रार्थः ॥२४॥ नपापासोमनामहेनारायासोनजल्हवः । नपापामन्यामहेनाधनानज्वलनेनहीनाअस्त्यस्मासु
ब्रह्मचर्यमध्ययनंतपोदानकर्मेत्यृषिरवोचद्बकुरोभास्करोभयंकरोभासमानोद्रवतीतिवा ॥ २५ ॥ यवंवृकेणाश्विनावपं
तेषंदुहंतामनुषायदस्रा । अभिदस्युंबकुरेणाधमन्तोरुज्योतिश्चक्रथुरार्याय । यवमिववृकेणाश्विनौनिवपंतौवृकोलांगलं
भवतिविकर्तनाल्लांगलंलगतेर्लांगूलवद्वालांगूलंलगतेर्लंगतेर्लंबतेर्वान्नंदुहंतौमनुष्यायदर्शनीयावभिधमंतौदस्युंबकुरेण
ज्योतिषावोदकेनवार्यईश्वरःपुत्रोवेकनाटाःखलुकुसीदिनोभवंतिद्विगुणकारिणोवाद्विगुणदायिनोवाद्विगुणंकामयंत
इतिवा । इंद्रोविश्वान्बेकनाटाँअहर्दृशउतक्रत्वापणीँरभि । इंद्रोयःसर्वान्बेकनाटानहर्दृशःसूर्यदृशोयइमान्यहानिपश्यं
तिनपराणीतिवाभिभवतिकर्मणापणींश्चवणिजः ॥ २६ ॥ जीवान्नोअभिधेतनादित्यासःपुराहथात्। कद्धस्थहवन

श्रुतः । जीवतोनोऽभिधावतादित्यांःपुराहननात्कनुस्थहानश्रुतइतिंमत्स्यानांजालमापन्नानांमेतदार्षंवेदयन्तेंमत्स्याम
धाउदकेस्यंदंतेंमाद्यन्तेऽन्योन्यंभक्षणायेतिवांजालंजलचरंभवतिंजलेभवंवाजलेशयंवांहुरोंऽहस्वानंहूरणमित्यप्यस्य
भवति । कृण्वन्नंहूरणादुर्वित्यपिनिगमोभवति । सप्तमर्यादांःकवयस्ततक्षुस्तासामेकामिदभ्यंहुरोगात् । सप्तैवमर्यादाः
कवयश्चक्रुंस्तासामेकामप्यधिगच्छन्नंहस्वान्भवतिंस्तेयमतल्पारोहणंब्रह्महत्यांभ्रूणहत्यांसुरापानंदुष्कृतस्यकर्मणःपुनः
पुनःसेवांपातकेनृतोद्यमितिंबतइतिनिपातःखेदानुकंपयोः ॥ २७ ॥ बतोबतासियमनैवतेमनोहृदयंचाविदाम । अन्या
किलत्वांकक्ष्येंवयुक्तंपरिष्वजातेलिबुंजेववृक्षं । बतोबलादतीतोभवतिंदुर्बलोबतासियमनैवतेमनोहृदयंचविजानीमो
ऽन्याकिलत्वांपरिष्वंक्ष्यतेंकक्ष्येवयुक्तंलिबुजेववृक्षंलिबुजाव्रततिर्भवतिंलीयतेविभजंतीतिंव्रततिर्वरणाच्चसयनाच्चतत
नाच्चवाताप्यमुदकंभवतिंवातएतदाप्याययति । पुनानोवाताप्यंविश्वश्चंद्रमित्यपिनिगमोभवति । वनेनवायोन्यधा
यिचाकन् । वनइववायोवेःपुत्रश्चायन्निंतिवांकामयमानइतिवांवेतिचयइतिंचचकारशाकल्यउदात्तंत्वेवमाख्यातम
भविष्यंदसुसमाप्तश्चार्थोरथर्यतीतिंसिद्धस्तत्प्रेप्सूरथंकामयतइतिवा । एषदेवोरथर्यतीत्यपिनिगमोभवति ॥ २८ ॥ 
धेनुंनइषंपिन्वतमसंक्रां । असंक्रमणीं । आधवआधवनात् । मतीनांचसाधनंविप्राणांचाधवमित्यपिनिगमोभवत्यन
वब्रवोऽनवक्षिप्तवचनः । विजेषकृदिंद्रइवानवब्रवइत्यपिनिगमोभवति ॥ २९ ॥ अरायिकाणेविकटेगिरिंगच्छसदा

न्वे । शिरिंबिठस्यसत्वभिस्तेभिष्ट्वाचातयामसि । अदायिनिकाणेविकटेकाणोऽविक्रांतदर्शनइत्यौपमन्यवःकणतेर्वा स्यादणूभावकर्मणःकणतिःशब्दाणूभावेभाष्यतेऽनुकणतीतिमात्राणूभावात्काणोदर्शनाणूभावात्काणोविकटोविक्रां तगतिरित्यौपमन्यवःकुटतेर्वास्याद्विपरीतस्यविकुटितोभवतिगिरिंगच्छसदानोनुवेशब्दकारिके । शिरिंबिठस्यसत्व भिः । शिरिंबिठोमेघःशीर्यतेबिठेबिठमंतरिक्षंबिठंबीरिटेनव्याख्यातंतस्यसत्त्वैरुदकैरितिस्यात्तैष्ट्वाचातयामोऽपिवा शिरिंबिठोभारद्वाजःकालकर्णोपेतोऽलक्ष्मीर्निर्नाशयांचकारतस्यसत्त्वैःकर्मभिरितिस्यात्तैष्ट्वाचातयामश्चातयतिर्नाशने पराशरःपराशीर्णस्यवसिष्ठस्यस्थविरस्यजज्ञे । पराशरःशतयातुर्वसिष्ठइत्यपिनिगमोभवतींद्रोऽपिपराशरउच्यतेप राशातयितायातूनां । इंद्रोयातूनामभवत्पराशरइत्यपिनिगमोभवतिक्रिविर्दतीविकर्तनदंती । यत्रावोदिद्युद्रदति क्रिविर्दतीत्यपिनिगमोभवतिकरूळतीकृत्तदती । अपिवादेवंकंचित्कृत्तदंतंदृष्ट्वैवमवक्ष्यत् ॥ २० ॥ वामंवामंतआदुरे देवोददात्वर्यमा । वामंपूषावामंभगोवामंदेवःकरूळती । वामंवननीयंभवत्यादुरिरादरणात्तत्कःकरूळतीभगःपुर स्तात्तस्यान्वादेशइत्येकंपूषेत्यपरंसोऽदन्तकोऽदंतकःपूषेतिचब्राह्मणं । दनोविशइंद्रमृध्रवाचः । दानमनसोनोमनु ष्यांनिंद्रमृदुवाचःकुरु । अवीरामिवमामयंशरारुरभिमन्यते । अबलामिवमामयंबालोऽभिमन्यतेसंशिशरिषुरिदंयु रिदंकामयमानोऽथापितद्ददर्थेभाष्यतेवसूयुरिन्द्रोवसुमानित्यत्रार्थः । अश्वयुर्गव्यूरथयुर्वसूयुरिंद्रइत्यपिनिगमोभव

ति ॥ २१ ॥ किंते॑कृण्वंति॒कीक॑टेषु॒गावो॒नाशिरं॑दुह्रेनत॑पंति॒घर्मं॑ । आनो॑भर॒प्रम॑गंदस्य॒वेदो॑नैचाशा॒खंम॑घवन्रंधयानः ।
किंतेकुर्वन्तिकीकटेषुगावः कीकटानामदेशोऽनार्यनिवासः कीकटाः किंकृताः किंक्रियाभिरितिप्रेप्सावानैवचाशिरंदुह्रेन
तपंतिघर्मंहर्म्यमाहरनः प्रमगंदस्यधनानिमगंदः कुसीदीमांगदोमामागमिष्यतीतिचददातिलदपत्यंप्रमगंदोऽत्यंतकुसी
दिकुलीनः प्रमदकोवायोऽयमेवास्तिलोकोनपरइतिप्रेप्सुः पंडकोवापंडकः पंडगः प्रार्दकोवाप्रार्दयत्यांडावांडावाणीइवव्री
डयतितत्स्थंनैचाशाखंनीचाशाखोनीचैः शाखः शाखाः शक्नोतेराणिररणात्तन्नोमघवन्रंधयेतिरध्यतिर्वशगमनेबुंदयिषुर्भ
वतिबुंदोवाभिंदोवाभयदोवाभासमानोद्रवतीतिवा ॥ २२ ॥ तु॒वि॒क्षंते॒सुकृ॑तंसू॒मयं॒धनुः॑साधु॒र्बुं॒दोहि॑र॒ण्ययः॑ । उ॒भाते॒
बा॒हूरण्या॒सुसं॑स्कृतऋ॒दू॒पेचि॒दृदू॒वृधा॑ । तुविक्षंबहुविक्षेपंमहाविक्षेपंवातेसुकृतंसूमयंसुसुखंधनुःसाधयितातेबुंदोहिरण्म
यंउभौतेबाहूरण्यौरमणीयौसंग्राम्यौवर्दूपेअर्दनपातिनौगमनपातिनौशब्दपातिनौदूरपातिनौवामर्मण्यर्दनवेधिनौगम
नवेधिनौशब्दवेधिनौदूरवेधिनौवा ॥ २३ ॥ निरा॑विध्यद्गि॒रिभ्य॒आधा॒रय॑त्प॒क्वमो॑द॒नं । इंद्रो॑बुं॒दंस्वा॑ततं । निरविध्य
द्गिरिभ्यआधारयत्पक्वमोदनमुदकदानंमेघं । इंद्रोबुंदंस्वाततं । वृंदंबुंदेनव्याख्यातंवृंदारकश्च ॥३४॥ अ॒यंयोहोता॒कि
रु॒सय॒मस्य॒कमप्यूहे॒यत्सं॑म॒ञ्जन्ति॑दे॒वाः । अह॑रहर्जा॒यतेमा॒सिमा॒स्यथा॑दे॒वाद॑धिरेहव्य॒वाहं॑ । अयंयोहोताकर्तासयम
स्यकमप्यूहेऽन्नमभिवहातियत्समश्नुवंतिदेवाअहरहर्जायतेमासेमासेऽर्धमासेऽर्धमासेवाथदेवानिदधिरेहव्यवाहंमुल्बमू

र्णोतेर्वृणोतेर्वा । महत्तदुल्बंस्थविरंतदासीदित्यपिनिगमोभवंत्यृवीसमपगतभासमपहृतभासंमंतर्हितभासंगतभासंवा ॥ ३५ ॥ हिमेनाग्निंघ्रंसमंवारयेथांपितुमतीमूर्जमस्माऽअधत्तं । ऋबीसेअत्रिमश्विनावनीतमुन्निन्यथुःसर्वगणंस्वस्ति । हिमेनोदकेनग्रीष्मांतेग्निंघ्रंसमहरवारयेथामन्नवतींचास्माऊर्जमधत्तमग्नयेयोऽयमृबीसेपृथिव्यामग्निरंतरोषधिवनस्पतिष्वप्सुतमुन्निन्यथुःसर्वगणंसर्वनामानंगणोगणनाद्गुणश्चयद्दृष्टओषधयउद्यन्तिप्राणिनश्चपृथिव्यांतदश्विनोरूपंतेनैनौस्तौतिस्तौतीति ॥ ३६ ॥ ( त्वमग्नेऽलातृणउद्वृहाजासंउपलप्रक्षिणीकारुरहमस्मेतेंश्रायंतइवाश्रवंहिंसोमानंस्वरणंमिंद्रासोमाकृणुष्वपाजस्ताँअध्वरेऽस्तिहिवोऽसूर्तेसूर्तंप्रवोच्छासृप्रस्तुंजेंतुंजेयोअस्माअस्माइत्तन्नस्तुरीपंहिनोतानोऽमत्रोमात्वांनपापासोयवंवृकेणंजीवान्नोवतोवतासिंधेनुंनोऽरायिकाणेवामंवामंकिंतेतुविक्षंतेंनिराविध्यदयंयोंहिमेनाग्निंषट्त्रिंशत् ) ॥ इतिनिरुक्तेपूर्वषट्केषष्ठोऽध्यायः ॥ ६ ॥ ॥ इतिनिरुक्तपूर्वषट्कःसमाप्तः ॥ ॥ ॥

ॐ ॥ अथातोदैवतंतद्यानिनामानिप्राधान्यस्तुतीनांदेवतानांतद्दैवतमित्याचक्षतेसैषादेवतोपपरीक्षायत्कामऋषि
र्यस्यांदेवतायामार्थपत्यमिच्छन्स्तुतिंप्रयुंक्तेतद्दैवतःसमंत्रोभवतितास्त्रिविधाऋचःपरोक्षकृताःप्रत्यक्षकृताआध्यात्मि
क्यश्चतत्रपरोक्षकृताःसर्वाभिर्नामविभक्तिभिर्युज्यंतेप्रथमपुरुषैश्चाख्यातस्य ॥ १ ॥ इंद्रोदिवइंद्रईशेपृथिव्याइंद्रमिद्गा
थिनोबृहदिंद्रेणैतेतृत्सवोवेविषाणाइंद्रायसामगायतनेंद्राद्दतेपवतेधामकिंचनेंद्रस्यनुवीर्याणिप्रवोचमिंद्रेकामाअयंसते
त्यथप्रत्यक्षकृतामध्यमपुरुषयोगास्त्वमितिचैतेनसर्वनाम्नात्वमिंद्रबलादधिविनइंद्रमृधोजहीत्यथापिप्रत्यक्षकृताःस्तो
तारोभवन्तिपरोक्षकृतानिस्तोतव्यानिमाचिदन्यद्विशंसतकण्वाअभिप्रगायतोपप्रेतकुशिकाश्चेतयध्वमित्यथाध्यात्मि
क्यउत्तमपुरुषयोगाअहमितिचैतेनसर्वनाम्नायथैतदिंद्रोवैकुंठोलवसूक्तंवागांभृणीयमिति ॥ २ ॥ परोक्षकृताःप्रत्यक्ष
कृताश्चमंत्राभूयिष्ठाअल्पशआध्यात्मिकाअथापिस्तुतिरेवभवतिनाशीर्वादइंद्रस्यनुवीर्याणिप्रवोचमितियथैतस्मिन्सू
क्तेऽथाप्याशीरेवनस्तुतिःसुचक्षाअहमक्षीभ्यांभूयासंसुवर्चामुखेनसुश्रुत्कर्णाभ्यांभूयासमितितदेतद्बहुलमाध्वर्यवेयाज्ञे
षुचमंत्रेष्वथापिशपथाभिशापौ । अद्यामुरीययदियातुधानोअस्मि । अधासवीरैर्दशभिर्वियूयाइत्यथापिकस्यचिद्भाव
स्याचिख्यासा । नमृत्युरासीदमृतंनतर्हि । तमआसीत्तमसागूढमग्रे । अथापिपरिदेवनाकस्माच्चिद्भावात् । सुदेवो
अद्यप्रपतेदनावृत् । नविजानामियदिवेदमस्मीत्यथापिनिंदाप्रशंसे । केवलाघोभवतिकेवलादी । भोजस्येदंपुष्करि

णीवचेश्मेत्येवमक्षसूक्तैद्यूतानिंदा चकृषिप्रशंसा चैवमुच्चावचैरभिप्रायैर्ऋषीणांमंत्रदृष्टयोभवंति ॥ ३ ॥ तद्येऽनादिष्टदे
वतामंत्रास्तेषुदेवतोपपरीक्षायद्देवतः सयज्ञोवायज्ञांगंवातद्देवताभवंत्यथान्यत्रयज्ञात्प्राजापत्याइतियाज्ञिकानाराशंसा
इतिनैरुक्ताअपिवासाकामदेवतास्यात्प्रायोदेवतावास्तिह्याचारोवहुलंलोकेदेवदेवत्यमतिथिदेवत्यंपितृदेवत्यंयाज्ञदैव
तोमंत्रइत्यपिह्यदेवतादेवतावत्स्तूयंतेयथाश्वप्रभृतीन्योषधिपर्यंतान्यथाप्यष्टौद्वंद्वानिसनमन्येतागंतूनिवार्थादेवता
नांप्रत्यक्षदृश्यमेतद्भवतिमाहाभाग्याद्देवतायाएकआत्मावहुधास्तूयतएकस्यात्मनोऽन्येदेवाःप्रत्यंगानिभवंत्यपिचस
त्वानांप्रकृतिभूमभिर्ऋषयःस्तुवंतीत्याहुःप्रकृतिसार्वनाम्न्याच्चेतरेतरजन्मानोभवंतीतरेतरप्रकृतयःकर्मजन्मानआत्मज
न्मानआत्मैवैषांरथोभवत्यात्माश्वाआत्मायुधमात्मेषवआत्मासर्वंदेवस्यदेवस्य ॥ ४ ॥ तिस्रएवदेवताइतिनैरुक्ताअ
ग्निःपृथिवीस्थानोवायुर्वेंद्रोवांतरिक्षस्थानःसूर्योद्युस्थानस्तासांमाहाभाग्यादेकैकस्याअपिवहूनिनामधेयानिभवंत्यपिवा
कर्मपृथक्त्वाद्यथाहोताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्यसतोऽपिवापृथगेवस्युःपृथग्घिस्तुतयोभवंतितथाभिधानानियथोएत
त्कर्मपृथक्त्वादितिवहवोऽपिविभज्यकर्माणिकुर्युस्तत्रसस्थानैकत्वंसंभोगैकत्वंचोपेक्षितव्यंयथापृथिव्यांमनुष्याःपश
वोदेवाइतिस्थानैकत्वंसंभोगैकत्वंचदृश्यतेयथापृथिव्याःपर्जन्येनचवाय्वादित्याभ्यांचसंभोगोऽग्निनाचेतरस्यलोकस्य
तत्रैतन्नरराष्ट्रमिव ॥ ५ ॥ अथाकारचिंतनंदेवतानांपुरुषविधाःस्युरित्येकंचेतनावद्धिस्तुतयोभवंतितथाभिधाना

न्यथापिपौरुषविधिकैरंगैःसंस्तूयंते । ऋष्वातइंद्रस्थविरस्यबाहूयत्सगृभ्णामघवन्काशिरित्ते । अथापिपौरुषविधिकै
र्द्रव्यसंयोगैः । आद्वाभ्यांहरिभ्यामिंद्रयाहि । कल्याणीर्जायासुरणंगृहेते । अथापिपौरुषविधिकैःकर्मभिः । अद्धींद्र
पिबचप्रस्थितस्याश्रुत्कर्णश्रुधीहवं । अपुरुषविधाःस्युरित्यपरमपितुयद्दृश्यते ॥ ६ ॥ अपुरुषविधंतद्यथाग्निर्वायुरादि
त्यःपृथिवीचंद्रमाइतियथोएतच्चेतनावद्वद्धिस्तुतयोभवंतीत्यचेतनान्यप्येवंस्तूयंतेयथाक्षप्रभृतीन्योषधिपर्यंतानियथो
एतत्पौरुषविधिकैरंगैःसंस्तूयंतइत्यचेतनेष्वप्येतद्भवत्यभिक्रंदंतिहरितेभिरासभिरितिग्रावस्तुतिर्यथोएतत्पौरुषविधि
कैर्द्रव्यसंयोगैरित्येतदपिताद्दशमेवंसुखंरथंयुयुजेसिंधुरश्विनमितिनदीस्तुतिर्यथोएतत्पौरुषविधिकैःकर्मभिरित्येतद
पिताद्दशमेवंहोतुश्चित्पूर्वेहविरद्यमाशतेतिग्रावस्तुतिरेवापिवोभयविधाःस्युरपिवापुरुषविधानामेवसतांकर्मात्मानएते
स्युर्यथायज्ञोयजमानस्यैषचाख्यानसमयः ॥ ७ ॥ तिस्रएवदेवताइत्युक्तंपुरस्तात्तासांभक्तिसाहचर्यंव्याख्यास्यामोऽ
थैतान्यग्निभक्तीन्ययंलोकःप्रातःसवनंवसंतोगायत्रीत्रिवृत्स्तोमोरथंतरंसामयेचदेवगणाःसमाम्नाताःप्रथमेस्थानेऽग्ना
यीपृथिवीळेतिस्त्रियोऽथास्यकर्मवहनंचहविषामावाहनंचदेवतानांयच्चकिंचिद्दार्ष्टिविषयिकंमग्निकर्मैवतदथास्यसंस्तवि
कादेवाइंद्रःसोमोवरुणःपर्जन्यऋतवआग्नावैष्णवंहविर्नत्वृक्संस्तविकीदशतयीषुविद्यतेऽथाप्याग्नापौष्णंहविर्नतुसंस्तवं
स्तत्रैतांविभक्तिस्तुतिमृचमुदाहरंति ॥ ८ ॥ पूषात्वेतश्च्यावयतुप्रविद्वाननष्टपशुर्भुवनस्यगोपाः । सत्वैतेभ्यःपरिदद

त्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः । पूषात्वेतःप्रच्यावयतुविद्वाननष्टपशुर्भुवनस्यगोपाइत्येषहिसर्वेषांभूतानांगोपायितादित्यःसत्वैतेभ्यःपरिददत्पितृभ्यइतिसांशयिकस्तृतीयःपादःपूषापुरस्तात्तस्यान्वादेशइत्येकमग्निरुपरिष्टात्तस्यप्रकीर्तनेत्यपरं । अग्निर्देवेभ्यः सुविदत्रियेभ्यः । सुविदत्रंधनंभवतिविंदतेर्वैकोपसर्गाद्ददातेर्वास्याद्व्युपसर्गात् ॥ ९ ॥ अथैतानींद्रभक्तीन्यंतरिक्षलोकोमाध्यंदिनंसवनंग्रीष्मस्त्रिष्टुप्पंचदशस्तोमोबृहत्सामयेचदेवगणाःसमाम्नाताःमध्यमेस्थानेयाश्चस्त्रियोऽथास्यकर्मरसानुप्रदानंवृत्रवधोयाचकाचबलकृतिरिंद्रकर्मैवतदथास्यसंस्तविकादेवाअग्निःसोमोवरुणःपूषाबृहस्पतिर्ब्रह्मणस्पतिःपर्वतःकुत्सोविष्णुर्वायुरथापिमित्रोवरुणेनसंस्तूयतेपूष्णारुद्रेणचसोमोऽग्निनाचपूषावातेनचपर्जन्यः ॥ १० ॥ अथैतान्यादित्यभक्तीन्यसौलोकस्तृतीयसवनंवर्षाजगतीसप्तदशस्तोमोवैरूपंसामयेचदेवगणाःसमाम्नाताउत्तमेस्थानेयाश्चस्त्रियोऽथास्यकर्मरसादानंरश्मिभिश्चरसधारणंयच्चकिंचित्प्रवल्हितमादित्यकर्मैवतच्चंद्रमसावायुनासंवत्सरेणेतिसंस्तवएतेष्वेवस्थानव्यूहेष्वृतुच्छंदःस्तोमपृष्ठस्यभक्तिशेषमनुकल्पयीतशरदनुष्टुबेकविंशस्तोमोवैराजंसामेतिपृथिव्यायतनानिहेमंतःपंक्तिस्त्रिणवस्तोमःशाक्करंसामेत्यंतरिक्षायतनानिशिशिरोऽतिच्छंदास्त्रयस्त्रिंशस्तोमोरैवतंसामेतिद्युभक्तीनि ॥ ११ ॥ मंत्रामननाच्छंदांसिछादनात्स्तोमःस्तवनाद्यजुर्यजतेःसामसंमितमृचास्यतेर्वाचांसमंमेनइतिनैदानागायत्रीगायतेःस्तुतिकर्मणस्त्रिगमनाद्वाविपरीतांगायतोमुखादुदपतदितिचब्राह्मणंमुष्णिगुत्स्ना

ताभवतिस्निह्यतेर्वास्यात्कांतिकर्मणउष्णीषिणीवेत्यौपमिकमुष्णीषंस्नायतेःककुप्ककुभिनीभवतिककुप्चकुब्जश्चकुजते
र्वोब्जतेर्वानुष्टुबनुष्टोभनाद्गायत्रीमेवत्रिपदांसतींचतुर्थेनपादेनानुष्टोभतीतिचब्राह्मणंबृहतीपरिबर्हणात्पंक्तिःपंचपदा
त्रिष्टुप्स्तोभत्युत्तरपदाकातुत्रितास्यात्तीर्णतमंछंदस्त्रिवृद्वज्रस्तस्यस्तोभनीतिवायत्त्रिरस्तोभत्तत्त्रिष्टुभस्त्रिष्टुप्त्वमितिविज्ञा
यते ॥ १२ ॥ जगतीगततमंछन्दोजलचरगतिर्वाजल्गल्यमानोऽसृजदितिचब्राह्मणंविराड्विराजनाद्वाविराधनाद्वा
विप्रापणाद्वाविराजनात्संपूर्णाक्षराविराधनादूनाक्षराविप्रापणादधिकाक्षरापिपीलिकमध्येत्यौपमिकंपिपीलिकापेलते
र्गतिकर्मणइतीमादेवताअनुक्रांताःसूक्तभाजोहविर्भाजऋग्भाजश्चभूयिष्ठाःकाश्चिन्निपातभाजोऽथोताभिधानैःसंयुज्य
हविश्चोदयतीन्द्रायवृत्रघ्नइंद्रायवृत्रतुरइंद्रायांहोमुचइतितान्यप्येकेसमामनंतिभूयांसितुसमाम्नानाद्यत्तुसंविज्ञानभूतं
स्यात्प्राधान्यस्तुतितत्समामनेऽथोतकर्मभिर्ऋषिर्देवताःस्तौतिवृत्रहापुरंदरइतितान्यप्येकेसमामनंतिभूयांसितुसमा
म्नानाद्व्यंजनमात्रंतुतत्तस्याभिधानस्यभवतियथाब्राह्मणायबुभुक्षितायौदनंदेहिस्नातायानुलेपनंपिपासतेपानीयमिति
॥ १३ ॥ अथातोऽनुक्रमिष्यामोऽग्निःपृथिवीस्थानस्तंप्रथमंव्याख्यास्यामोऽग्निःकस्मादग्रणीर्भवत्यग्रंयज्ञेषुप्रणीय
तेऽगंनयतिसंनममानोऽक्नोपनोभवतीतिस्थौलाष्ठीविर्नक्नोपयतिनस्नेहयतित्रिभ्यआख्यातेभ्योजायतइतिशाकपूणि
रितादक्ताद्दग्धाद्वानीतात्सखल्वेतेरकारमादत्तेगकारमनक्तेर्वादहतेर्वानीःपरस्तस्यैषाभवति ॥ १४ ॥ अग्निमीळेपुरो

हितंयुज्ञस्यंदेवमृत्विजं । होतांरंरत्नधातंमं । अग्निमीळेऽग्निंयाचामीळिरध्येषणाकर्मापूजाकर्मावापुरोहितोव्याख्यातो यज्ञश्चदेवोदानाद्वादीपनाद्वाद्योतनाद्वाद्युस्थानोभवतीतिवायोदेवःसादेवताहोतारंह्वातारंजुहोतेर्होतेत्यौर्णवाभोरत्न धातमंरमणीयानांधनानांदातृतमंतस्यैषापराभवति ॥ १५ ॥ अग्निःपूर्वेभिर्ऋषिभिरीड्योनूतंनैरुत । सदेवाँऽएहवं क्षति । अग्निर्यःपूर्वैर्ऋषिभिरीळितव्योवेदितव्योऽस्माभिश्चनवतरैःसदेवानिहावहत्वितिसनमन्येतायमेवाग्निरित्यप्ये तेउत्तरेज्योतिषींअग्नीउच्येतेततोनुमध्यमः ॥ १६ ॥ अभिप्रवंतसमनेवयोषाःकल्याण्यःस्मयमानासोअग्निं । घृतस्य धाराःसुमिधोनसंतताजुषाणोहर्यतिजातवेदाः । अभिनवंतसमनसइवयोषाःसमनंसमननाद्वासंमाननाद्वाकल्याण्यः स्मयमानासोअग्निमित्यौपमिकंघृतस्यधाराउदकस्यधाराःसमिधोनसंतंनसतिराप्नोतिकर्मावानमतिकर्मावा । ताजुषा णोहर्यतिजातवेदाः । हर्यतिःप्रेप्साकर्माविहर्यतीतिसमुद्रादूर्मिर्मधुमाँऽउदारदित्यादित्यमुक्तंमन्यंतेसमुद्राद्ध्येषोद्भ्वंउ देतीतिचब्राह्मणमथापिब्राह्मणंभवत्यग्निःसर्वादेवताइतितस्योत्तराभूयसेनिर्वचनाय ॥ १७ ॥ इंद्रंमित्रंवरुणमग्निमाहु रथोदिव्यःससुपर्णोगरुत्मान् । एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुः । इममेवाग्निंमहांतमात्मानमेकमात्मा नंबहुधामेधाविनोवदंतींद्रंमित्रंवरुणमग्निंदिव्यंचगरुत्मंतंदिव्योदिविजोगरुत्मान्गरणवान्गुर्वात्मामहात्मेतिवायस्तु सूक्तंभजतेयस्मैहविर्निरुप्यतेऽयमेवसोग्निर्निपातमेवैतेउत्तरेज्योतिषीएतेननामधेयेनभजेते ॥ १८ ॥ जातवेदाःकस्मा

ज्ञातानिवेदजातानिवैनंविदुर्जातेजातेविद्यतइतिवाजातवित्तोवाजातधनोजातविद्योवाजातप्रज्ञानोयत्तज्जातःपशून
विंदतेतितज्जातवेदसोजातवेदस्त्वमितिब्राह्मणंतस्मात्सर्वान्‌तूनपशवोऽग्निमभिसर्पंतीतिचतस्यैषाभवति ॥ १९ ॥
प्रनूनंजातवेदसमश्वंहिनोतवाजिनं । इदंनोबर्हिरासदे । प्रहिणुतजातवेदसंकर्मभिःसमश्नुवानमपिवोपमार्थेस्यादश्व
मिवजातवेदसमितीदंनोवर्हिरासीदत्विर्तितदेतदेकमेवंजातवेदसंगायत्रंतृचंदशतयीषुविद्यतेयत्तुकिंचिदाग्नेयंतज्जात
वेदसानांस्थानेयुज्यतेसनमन्येतायमेवाग्निरित्यप्येतेउत्तरेज्योतिषीजातवेदसीउच्येतेततोनुमध्यमः । अभिप्रवंतस
मनेवयोषाइतितत्पुरस्ताद्व्याख्यातमथासावादित्यंउदुत्यंजातवेदसमितितदुपरिष्टाद्व्याख्यास्यामोयस्तुसूक्तंभजतेयस्मै
हविर्निरुप्यतेऽयमेवसोऽग्निर्जातवेदानिपातमेवैतेउत्तरेज्योतिषीएतेननामधेयेनभजेते ॥ २० ॥ वैश्वानरःकस्मा
द्विश्वान्नरान्नयतिविश्वएनंनरानयंतीतिवापिवाविश्वानरएवस्यात्प्रत्यृतःसर्वाणिभूतानितस्यवैश्वानरस्तस्यैषाभवति
॥ २१ ॥ वैश्वानरस्यसुमतौस्यामराजाहिकंभुवनानामभिश्रीः । इतोजातोविश्वमिदंविचष्टेवैश्वानरोयततेसूर्येण ।
इतोजातःसर्वमिदमभिविपश्यतिवैश्वानरःसंयततेसूर्येणराजायःसर्वेषांभूतानामभिश्रयणीयस्तस्यवयंवैश्वानरस्यक
ल्याण्यांमतौस्यामेतितत्कोवैश्वानरोमध्यमइत्याचार्यावर्षकर्मणाह्येनंस्तौति ॥ २२ ॥ प्रनूमहित्वंवृषभस्यवोचंयंपूरवो
वृत्रहणंसचंते । वैश्वानरोदस्युमग्निर्जघन्वाँऽअधूनोत्काष्ठाअवशम्बरंभत् । प्रब्रवीमितन्महत्त्वंमाहाभाग्यंवृषभस्य

वर्षितुरपांयंपूरवः पूरयितव्यामनुष्यांवृत्रहणंमेघहनंसचंतेसेवंतेवर्षकामांदस्युर्दस्यतेः क्षयार्थादुपदस्यंत्यस्मिन्रसाउप
दासयतिकर्माणितमग्निर्वैश्वानरोघ्नन्नवाधूनोंदपः काष्ठाअभिनच्छम्वरंमेघंमथासावादित्यंइतिपूर्वेयाज्ञिकाएषांलोका
नांरोहेणंसवनानांरोहआम्नातोंरोहात्प्रत्यवरोहश्चिकीर्षितंस्तामनुकृतिंहोताग्निमारुतेशस्त्रेवैश्वानरीयेणसूक्तेनप्रतिपद्य
तेसोऽपिनस्तोत्रियमाद्रियेंताग्नेयोहिभवंतिततआगच्छतिमध्यस्थानादेवतारुद्रंचमरुतश्चंततोऽग्निमिहस्थानंमत्रैवस्तो
त्रियंशंसंत्यथापिवैश्वानरीयोद्वादशकपालोभवंत्येतस्यहिद्वादशविधंकर्मथापिब्राह्मणंभवंत्यसौवाआदित्योऽग्निर्वैश्वा
नरइत्यथापिनिवित्सौर्यवैश्वानरीभवंत्यायोद्यांभात्यापृथिवीमित्येषहिद्यावापृथिव्यावाभासयंत्यथापिछान्दोमिकंसू
क्तंसौर्यवैश्वानरंभवतिदिविपृष्टोअरोचतेत्येषहिदिविपृष्टोअरोचतेत्यथापिहविष्पांतीयंसूक्तंसौर्यवैश्वानरंभवंत्ययमेवा
ग्निर्वैश्वानरइतिशाकपूर्णिर्विश्वानरावित्यप्येतेउत्तरेज्योतिषीवैश्वानरोऽयंयत्ताभ्यांजायतेकथंन्वयमेताभ्यांजायतइ
तियत्रवैद्युतः शरणमभिहंतियावदनुपात्तोभवंतिमध्यमधर्मैवतावद्भवत्युदकेंधनः शरीरोपशमनंउपादीयमानंएवायंसं
पद्यतंउदकोपशमनः शरीरदीप्तिरथादित्यादुदीचिप्रथमसमावृत्तआदित्येकंसंवामणिंवापरिमृज्यंप्रतिस्वरेयत्रशुष्कगो
मयंमसंस्पर्शयन्धारयातिंतत्प्रदीप्यतेसोऽयमेवसंपद्यतेथाप्याहवैश्वानरोयततेसूर्येणेतिनचपुनरात्मनात्मानंसंयततेन्ये
नैवान्यः संयततंइतइममादधांत्यमुतोऽमुष्यरश्मयः प्रादुर्भवंतीतोऽस्यार्चिषस्तयोर्भासोः संसंगंदृष्ट्वैवमवक्ष्यदथयान्ये

तान्यौत्तमिकानिसूक्तानिभागानिवासावित्राणिवासौर्याणिवापौष्णानिवावैष्णवानिवावैश्वदेव्यानिवातेषुवैश्वानरी
याःप्रवादाअभविष्यन्नादित्यकर्मणाचैनमस्तोष्यन्नित्युदेषीत्यस्तमेषीतिविपर्येषीत्याग्नेयेष्वेवहिसूक्तेषुवैश्वानरीयाःप्रवा
दाभवन्त्यग्निकर्मणाचैनंस्तौतीतिवहसीतिपचसीतिदहसीतियथोएतद्वर्षकर्मणाह्येनंस्तौतीत्यस्मिन्नप्येतदुपपद्यते । स
मानमेतदुदकमुच्चैत्यवचाहभिः । भूमिंपर्जन्याजिन्वंतिदिवंजिन्वंत्यग्नयः । इतिसानिगदव्याख्याता ॥ २३ ॥
कृष्णंनियानंहरयःसुपर्णाअपोवसानादिवमुत्पतंति । तआववृत्रन्त्सदनादृतस्यादिद्घृतेनपृथिवीव्युद्यते । कृष्णंनिरय
णंरात्रिरादित्यस्यहरयःसुपर्णाहरणाआदित्यरश्मयस्तेयदामुतोऽर्वाञ्चःपर्यावर्ततेसहस्थानादुदकस्यादित्यादथघृतेनो
दकेनपृथिवीव्युद्यतेघृतमित्युदकनामजिघर्तेःसिंचतिकर्मणोऽथापिब्राह्मणंभवत्यग्निर्वाइतोवृष्टिंसमीरयतिधामच्छदि
वखलुवैभूत्वावर्षतिमरुतःसृष्टांवृष्टिंनयंतियदाखलुवाअसावादित्योन्यङ्रश्मिभिःपर्यावर्ततेऽथवर्षतीतियथोएतद्रोहा
त्प्रत्यवरोहश्चिकीर्षितइत्याम्नायवचनादेतद्भवतियथोएतद्वैश्वानरीयोद्वादशकपालोभवतीत्यनिर्वचनंकपालानिभवं
त्यस्तिहिसौर्यएककपालःपंचकपालश्चयथोएतद्ब्राह्मणंभवतीतिबहुभक्तिवादीनिहिब्राह्मणानिभवंतिपृथिवीवैश्वानरः
संवत्सरोवैश्वानरोब्राह्मणोवैश्वानरइतियथोएतन्निवित्सौर्यवैश्वानरीभवतीत्यस्यैवसाभवतियोविड्भ्योमानुषीभ्योदीदे
दित्येषहिविड्भ्योमानुषीभ्योदीप्यतेयथोएतच्छांदोमिकसूक्तंसौर्यवैश्वानरंभवतीत्यस्यैवतद्भवतिजमदग्निभिराहुतइति

निरुक्त ॥ ६ ॥

जमदग्नय:प्रजमिताग्नयोवाप्रज्वलिताग्नयोवातैरभिहुतोभवतियथोएतद्धविष्पांतीयंसूक्तंसौर्यवैश्वानरंभवतीत्यस्यैवत द्भवति ॥ २४ ॥ हविष्पांतमजरंस्वर्विदिदिविस्पृश्याहुतंजुष्टमग्नौ । तस्यभर्मणेभुवनायदेवाधर्मणेकंस्वधयापप्रथंत । हविर्यत्पानीयमजरंसूर्यविदिदिविस्पृश्यभिहुतंजुष्टमग्नौतस्यभरणायचभावनायचधारणायचैतेभ्य:सर्वेभ्य:कर्मभ्यो देवाइममग्निमन्नेनापप्रथंताथाप्याह ॥ २५ ॥ अपामुपस्थेमहिषाअंगृभ्णतविशोराजानमुपतस्थुर्ऋग्मियं । आदूतोअ ग्निमभरद्विवस्वतोवैश्वानरंमातरिश्वापरावतः । अपामुपस्थउपस्थानेमहत्यन्तरिक्षलोकआसीनामहांतइतिवागृह्णत माध्यमिकादेवगणाविशइवराजानमुपतस्थुर्ऋग्मियंमृग्मंतमितिवार्चनीयमितिवापूजनीयमितिवाहरद्यंदूतोदेवानां विवस्वतआदित्याद्विवस्वान्विवासनवान्प्रेरितवत:परागताद्वापिवास्याग्नेर्वैश्वानरस्यंमातरिश्वानमाहर्तारमाहंमातरि श्वावायुर्मातर्यन्तरिक्षेश्वसितिमातर्याश्वनितीतिवाथैनमेताभ्यांसर्वाणिस्थानान्यभ्यापादंस्तौति ॥ २६ ॥ मूर्धाभुवो भवतिनक्तमग्निस्ततःसूर्योजायतेप्रातरुद्यन् । मायामूतुयज्ञियानामेतामपोयत्तूर्णिश्चरतिप्रजानन् । मूर्धामूर्तमस्मि न्धीयतेमूर्धाय:सर्वेषांभूतानांभवतिनक्तमग्निस्ततःसूर्योजायतेप्रातरुद्यन्त्सएवप्रज्ञांत्वेतांमन्यंतेयज्ञियानांदेवानांयज्ञ संपादिनामपोयत्कर्मचरतिप्रजानन्त्सर्वाणिस्थानान्यनुसंचरतित्वरमाणस्तस्योत्तराभूयसेनिर्वचनाय ॥ २७ ॥ स्तोमे नहिदिविदेवासोअग्निमजीजनन्छक्तिभीरोदसिप्रां । तमूअकृण्वन्त्रेधाभुवेकंसओषधी:पचतिविश्वरूपा: । स्तोमे

उत्तरष. अ. १ ॥ ६ ॥

नयंहिदिविदेवासोअग्निमजनयन्छक्तिभिःकर्मभिर्द्यावापृथिव्योरापूरणंतमकुर्वंस्त्रेधाभावायपृथिव्यामंतरिक्षेदिवीति शाकपूणिर्यदस्यदिवितृतीयंतदसावादित्यइतिहिब्राह्मणंतदग्नीकृत्यस्तौत्यथैनमेतयादित्यीकृत्यस्तौति ॥ २८ ॥ यदेदेनमदधुर्यज्ञियासोदिविदेवाःसूर्यमादितेयं । यदाचरिष्णूमिथुनावभूतामादित्प्रापश्यन्भुवनानिविश्वा । यदैनमदधुर्यज्ञियाःसर्वेदिविदेवाःसूर्यमादितेयमदितेःपुत्रंयदाचरिष्णूमिथुनौप्रादुरभूतांसर्वदासहचारिणावुषाश्चादित्यश्चमिथुनौकस्मान्मिनोतिःश्रयतिकर्माथुइतिनामकरणस्थकारोवानयतिःपरोवनिर्वांसमाश्रितावन्योन्यंनयतोवनुतोवामनुष्यमिथुनावप्येतस्मादेवमेथंतावन्योन्यंवनुतइतिवाथैनमेतयाग्नीकृत्यस्तौति ॥ १९ ॥ यत्रावदेतेअवरःपरश्चयज्ञन्योःकतरोनौविवेद । आशेकुरित्सधमादंसखायोनक्षंतयज्ञंकइदंविवोचत् । यत्रविवदेतेदैव्यौहोतारावयंचाग्निरसौचमध्यमःकतरोनौयज्ञेभूयोवेदेत्याशक्नुवंतिसत्सहमदनंसमानाख्यानाऋत्विजस्तेषांयज्ञंसमश्नुवानानांकोनइदंविवक्ष्यतीतितस्योत्तराभूयसेनिर्वचनाय ॥ ३० ॥ यावन्मात्रमुषसोनप्रतीकंसुपर्ण्यो३वसंतेमातरिश्वः । तावद्दधात्युपयज्ञमायन्ब्राह्मणोहोतुरवरोनिषीदन् । यावन्मात्रमुषसःप्रत्यक्तंभवतिप्रदिदर्शनमितिवास्त्युपमानस्यसंप्रत्यर्थेप्रयोगइहेवनिधेहीतियथासुपर्ण्यःसुपतनाएतारात्रयोवसतेमातरिश्वन्ज्योतिर्वर्णस्यतावदुपदधातियज्ञमागच्छन्ब्राह्मणोहोतास्याग्नेर्होतुरवरोनिषीदन्होतृजपस्त्वनग्निर्वैश्वानरीयोभवातिदेवसवितरतंत्वावृणतेऽग्निंहोत्रायसहपित्रावैश्वानरेणेतीममे

वाग्निंसवितारमाहसर्वस्यप्रसवितारंमध्यमंवोत्तमंवापितरंयस्तुसूक्तंभजतेयस्मैहविर्निरुप्यतेऽयमेवसोग्निर्वैश्वानरोनि पातमेवैतेउत्तरेज्योतिषीएतेननामधेयेनभजेतेभजेते ॥ ३१ ॥ ( अथातोदैवतमिंद्रोदिवः परोक्षकृतास्तद्येनतिस्रोऽथा कारश्चिंतनमपुरुषविधंतत्तिस्रएवदेवताइत्युक्तंपूषात्वाथैतानींद्रभक्तीन्यथैतान्यादित्यभक्तीनिमंत्रामननाज्जगतीगतत मथातोनुक्रमिष्यामोऽग्निमीळेऽग्निःपूर्वेभिरभिप्रवंतेद्रंमित्रंजातवेदाःकस्मात्प्रनूनंजातवेदसंवैश्वानरःकस्माद्वैश्वान रस्यप्रनूमहित्वंकृष्णंनियानंहविष्पांतमपामुपस्थेमूर्धाभुवस्तोमेनहियदेदेनैयत्रावदेतेयावन्मात्रमेकात्रिंशत् ) ॥ इतिनि रुक्तउत्तरषट्केप्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

ॐ ॥ द्रविणोदाःकस्माद्धनंद्रविणमुच्यतेयदेनदभिद्रवंतिबलंवाद्रविणंयदेनेनाभिद्रवंतितस्यदाताद्रविणोदास्त स्यैषाभवति ॥ १ ॥ द्रविणोदाद्रविणसोग्रावहस्तासोऽअध्वरे । यज्ञेषुदेवमीळते । द्रविणोदायस्त्वंद्रविणसइतिद्रवि णसादिनइतिवाद्रविणसानिनइतिवाद्रविणसस्तस्मात्पिबत्विति वा । यज्ञेषुदेवमीळते । याचंतिस्तुवंतिवर्धयंतिपूजयं तीतिवातत्कोद्रविणोदाइंद्रइतिक्रौष्टुकिःसबलधनयोर्दातृतमस्तस्यचसर्वाबलकृतिरोजसोजातमुतमन्यएनमितिचाहा थाप्यग्निंद्राविणोदसमाहैषपुनरेतस्माज्जायते। योअश्मनोरंतराग्निंजजानेत्यपिनिगमोभवत्यथाप्यृतुयाजेषुद्राविणोदसाः प्रवादाभवंतितेषांपुनःपात्रस्यैंद्रपानमितिभवत्यथाप्येनंसोमपानेनस्तौत्यथाप्याहद्रविणोदाःपिबतुद्राविणोदसईत्यय

मेवाग्निर्द्रविणोदाइतिशाकपूणिराग्नेयेष्वेवहिसूक्तेषुंद्राविणोदसाःप्रवादाभवंति । देवाअग्निंधारयन्द्रविणोदामित्यपि
निगमोभवतिंयथोएतत्सवलधनयोर्दातृतमइतिंसर्वासुदेवतास्वैश्वर्यंविद्यतेंयथोएतदोजसोजातमुतमन्यएनमितिचा
हैंत्ययमप्यग्निरोजसावलेनंमथ्यमानोजायतेंतस्मादेनमाहंसहसस्पुत्रंसहसःसूनुंसहसोयहुंयथोएतंदग्निंद्राविणोदसमाहं
त्यृत्विजोऽत्रद्रविणोदसउच्यंतेंहविषोदातारस्तेचैनंजनयंति । ऋषीणांपुत्रोअधिराजएषइत्यपिनिगमोभवतिंयथोएत
त्तेषांपुनःपात्रस्यैंद्रपानमितिभवतीतिंभक्तिमात्रंतद्भवतिंयथावायव्यानीतिंसर्वेषांसोमपात्राणांयथोएतत्सोमपानेनैनं
स्तौतींत्यस्मिन्नप्येतदुपपद्यते । सोमंपिबमंदसानोगणश्रिभिरित्यपिनिगमोभवतिंयथोएतद्द्रविणोदाःपिबतुद्राविणोद
सइंत्यस्यैवतद्भवति ॥ २ ॥ मेद्यंतुतेवह्नयोयेभिरीयसेऽरिंषण्यन्वीळयस्वावनस्पते । आयूयाधृष्णोअभिगूर्यात्वंने
ष्ट्रात्सोमंद्रविणोदःपिबंऋतुभिः । मेद्यंतुतेवह्नयोवोढारोंयैर्यास्यऋष्यन्दृढीभवायूयधृष्णोअभिगूर्यत्वंनेष्ट्रीयाद्धिष्ण्यां
द्धिष्ण्योधिषण्योधिषणाभवोंधिषणावाग्धिषेर्दधात्यर्थेंधीसादिनीवाधीसानिनीतिवांवनस्पतइत्येनमाहैंषहिवनानांपा
तावापालयितावांवनंवनोतेःपिबर्तुभिःकालैः ॥ ३ ॥ अथातआप्रियआप्रियःकस्मादाप्नोतेःप्रीणातेर्वांप्रीभिराप्रीणा
तीतिचब्राह्मणंतासामिध्मःप्रथमागामीभवतींध्मःसमिन्धनात्तस्यैषाभवति ॥ ४ ॥ समिद्धोअद्यमनुषोदुरोणेदेवोदे
वान्यंजसिजातवेदः । आचवहमित्रमहश्चिकित्वान्त्वंदूतःकविरसिप्रचेताः । समिद्धोऽद्यमनुष्यस्यमनुष्यस्यगृहेदेवोदे

वान्यजसिजातवेदंआचवहमित्रमहश्चिकित्वाँश्चेतनावांस्त्वंदूतःकविरसिप्रचेताःप्रवृद्धचेतायज्ञेध्मइतिकात्थक्योऽग्नि
रितिशाकपूर्णिस्तनूनपादाज्यंभवतिनपादित्यननंतरायाःप्रजायानामधेयँनिर्णततमाभवतिगौरत्रतनूरुच्येततताअस्यां
भोगास्तस्याःपयोजायतेपयसआज्यंजायतेऽग्निरितिशाकपूर्णिरापोऽत्रतन्वउच्यंतेततताअंतरिक्षेताभ्यओषधिवनस्पत
योजायंतेओषधिवनस्पतिभ्यएषजायतेतस्यैषाभवति ॥ ५ ॥ तनूनपात्पथऋतस्ययानान्मध्वासमंजन्त्स्वदयासुजि
ह्व । मन्मानिधीभिरुतयज्ञमृन्धन्देवत्राचकृणुह्यध्वरंनः । तनूनपातपथऋतस्ययानान्यज्ञस्ययानान्मधुनासमंजन्त्स्वद
यकल्याणजिह्वमननानिचनोधीभिर्यज्ञंचसमर्धयंदेवान्नोयज्ञंगमयंनराशंसोयज्ञइतिकात्थक्योनराअस्मिन्नासीनाःशंसं
त्यग्निरितिशाकपूर्णिर्नरैःप्रशस्योभवतितस्यैषाभवति ॥ ६ ॥ नराशंसस्यमहिमानमेषामुपस्तोषामयजतस्ययज्ञैः । येसु
क्रतवःशुचयोधियंधाःस्वदंतिदेवाउभयानिहव्या । नराशंसस्यमहिमानमेषामुपस्तुमोयज्ञियस्ययज्ञैर्येसुकर्माणःशुच
योधियंधारयितारःस्वदयंतुदेवाउभयानिहवींषिसोमंचेतराणिचेतिवातांत्राणिचावापिकानिचेतिवेळईट्टेःस्तुतिकर्मण
इंधतेर्वातस्यैषाभवति ॥ ७ ॥ आजुह्वानईड्योवंद्यश्चायाह्यग्नेवसुभिःसजोषाः । त्वंदेवानामसियह्वहोतासएनान्यक्षी
षितोयजीयान् । आहूयमानईळितव्योवंदितव्यश्चायाह्यग्नेवसुभिःसहजोषणस्त्वंदेवानामसियह्वहोतायह्वइतिमहतो
नामधेयँयातश्चहूतश्चभवति । सएनान्यक्षीषितोयजीयान् । इषितःप्रेषितइतिवाधीष्टइतिवायजीयान्यष्टृतरोवाहिः

परिवर्हणात्तस्यैषाभवति ॥ ८ ॥ प्राचीनंबर्हिःप्रदिशापृथिव्यावस्तोरस्यावृज्यतेअग्रेअह्नां । व्युंप्रथतेवितरंवरीयोदेवे
भ्योअदितयेस्योनं । प्राचीनंबर्हिःप्रदिशापृथिव्यावसनायास्याःप्रवृज्यतेऽग्रेऽह्नांबर्हिःपूर्वाह्णेतद्विप्रथतेवितरंवितीर्ण
तरमितिर्वाविस्तीर्णतरमितिर्वावरीयोवरतरमुरुतरंवादेवेभ्यश्चादितयेचस्योनंस्योनमितिसुखनामस्यतेरवस्यन्त्येतत्से
वितव्यंभवतीतिर्वाद्वारोजवतेर्वाद्रवतेर्वावारयतेर्वातासामेषाभवति ॥ ९ ॥ व्यचस्वतीरुर्विया विश्रयंतांपतिभ्योन
जनयः शुंभमानाः । देवीर्द्वारोबृहतीर्विश्वमिन्वादेवेभ्योभवतसुप्रायणाः । व्यंचनवत्यउरुत्वेनविश्रयंतांपतिभ्यइव
जायाऊरूमैथुनेधर्मेशुशोभिषमाणावरतममंगमूरूदेव्योद्वारोबृहत्योमहत्योविश्वमिन्वाविश्वमाभिरेतियज्ञेगृहद्वारइ
तिकात्थक्योऽग्निरितिशाकपूणिरुषासानक्तोषाश्चनक्ताचोषाव्याख्यातानक्तेतिरात्रिनामानक्तिभूतान्यवश्यायेनापि
वानक्ताव्यक्तवर्णातयोरेषाभवति ॥ १० ॥ आसुष्वयंतीयजतेउपाकेउषासानक्तासदतांनियोनौ । दिव्येयोषणेबृह
तीसुरुक्मेअधिश्रियंशुक्रपिशंदधाने । सेष्मीयमाणेइतिर्वासुष्वापयंत्याविति र्वासीदतामितिर्वान्यासदतामितिर्वाय
ज्ञियेउपक्रांतेदिव्येयोषणेबृहत्यौमहत्यौसुरुक्मेसुरोचनेअधिदधानेशुक्रपेशसंश्रियंशुक्रंशोचतेर्ज्वलतिकर्मणःपेशइति
रूपनामपिंशतेर्विपिशितंभवतिदैव्याहोतारादैव्यौहोतारावयंचाग्निरसौचमध्यमस्तयोरेषाभवति ॥ ११ ॥ दैव्याहो
तारा प्रथमासुवाचामिमानायज्ञंमनुषोयजध्यै । प्रचोदयंताविदथेषुकारूप्राचीनंज्योतिःप्रदिशादिशंता । दैव्यौहोता

निरुक्त उत्तरष. अ. २

॥ ९ ॥

रौप्रथमौसुवाचौनिर्मिमानौयज्ञंमनुष्यस्यमनुष्यस्ययजनायप्रचोदयमानौयज्ञेषुकर्तारौपूर्वस्यांदिशियष्टव्यमितिप्रदिशं
तौतिस्रोदेवीस्तिस्रोदेव्यस्तासामेषाभवति ॥ १२ ॥ आनोयज्ञंभारतीतूयमेत्विळामनुष्वदिहचेतयंती । तिस्रोदेवी
र्बर्हिरेदंस्योनंसरस्वतीस्वपसःसदंतु । ऐतुनोयज्ञंभारतीक्षिप्रंभरतआदित्यस्तस्यभाइडाचमनुष्यवदिहचेतयमानातिस्रोदेव्योबर्हिरिदं खंसरस्वतीचसुकर्माणआसीदंतुत्वष्टातूर्णमश्नुतइतिनैरुक्तास्त्विषेर्वास्याद्दीप्तिकर्मणस्त्वक्षतेर्वास्या
त्करोतिकर्मणस्त षाभवति ॥ १३ ॥ यइमेद्यावापृथिवीजनित्रीरूपैरपिंशद्भुवनानिविश्वा । तमद्यहोतरिषितोयजीया
न्देवंत्वष्टारमिहयक्षिविद्वान् । यइमेद्यावापृथिव्यौजनयित्र्यौरूपैरकरोद्भूतानिचसर्वाणितमद्यहोतरिषितोयजीयान्दे
वंत्वष्टारमिहयजविद्वान्माध्यमिकस्त्वष्टेत्याहुर्मध्यमेचस्थानेसमाम्नातोऽग्निरितिशाकपूणिस्तस्यैषापराभवति ॥ १४ ॥
आविष्ट्योवर्धतेचारुरासुजिह्मानामूर्ध्वःस्वयशाउपस्थे । उभेत्वष्टुर्बिभ्यतुर्जायमानात्प्रतीचीसिंहंप्रतिजोषयेते । आ
विरावेदनात्तत्योवर्धतेचारुरासुचारुचरतेजिह्मंजिहीतेरूर्ध्वउच्छ्रितोभवतिस्वयशाआत्मयशाउपस्थउपस्थानउभेत्वष्टु
र्बिभ्यतुर्जायमानात्प्रतीचीसिंहंप्रतिजोषयेते । द्यावापृथिव्यावितिवाहोरात्रेइतिवारणीइतिवाप्रत्यक्तेसिंहंसहनंप्रत्या
सेवेते ॥ १५ ॥ वनस्पतिर्व्याख्यातस्तस्यैषाभवति ॥ १६ ॥ उपावसृजत्मन्यासमंजन्देवानांपाथऋतुथाहवींषि ।
वनस्पतिःशमितादेवोअग्निःस्वदंतुहव्यंमधुनाघृतेन । उपावसृजात्मनात्मानंसमंजन्देवानामन्नमृतावृतौहवींषिकाले

कालेवनस्पतिःशमितादेवोअग्निरित्येतेत्रयःस्वदयंतुहव्यंमधुनाचघृतेनचेतत्कोवनस्पतिर्यूपइतिकात्थक्योऽग्निरिति
शाकपूणिस्तस्यैषापराभवति ॥ १७ ॥ अंजंतित्वामध्वरेदेवयंतोवनस्पतेमधुनादैव्येन । यदूर्ध्वस्तिष्ठाद्रविणेहधत्ताद्य
द्वाक्षयोमातुरस्याउपस्थे । अंजंतित्वामध्वरेदेवान्कामयमानावनस्पतेमधुनादैव्येनचघृतेनचयदूर्ध्वःस्थास्यसिद्रविणा
निचनोदास्यसियद्वातेकृतःक्षयोमातुरस्याउपस्थउपस्थानेऽग्निरितिशाकपूणिस्तस्यैषापराभवति ॥ १८ ॥ देवेभ्योव
नस्पतेहवींषिहिरण्यपर्णप्रदिवस्तेअर्थं । प्रदक्षिणिद्रशनयानियूयऋतस्यवक्षिपथिभीरजिष्ठैः । देवेभ्योवनस्पतेहवींषि
हिरण्यपर्णऋतपर्णापिवोपमार्थेस्याद्धिरण्यवर्णपर्णेतिप्रदिवस्तेअर्थंपुराणस्तेसोऽर्थोयंतेप्रब्रूमोयज्ञस्यवहपथिभीरजिष्ठैर्ऋ
जुतमैरजस्वलतमैस्तपिष्ठतमैरितिवातस्यैषापराभवति ॥ १९ ॥ वनस्पतेरशनयानियूयपिष्टतमयावयुनानिविद्वान् ।
वहदेवत्रादिधिषोहवींषिप्रचदातारममृतेषुवोचः । वनस्पतेरशनयानियूयसुरूपतमयावयुनानिविद्वान्प्रज्ञानानिप्र
जानन्वहदेवान्यज्ञेदातुर्हवींषिप्रब्रूहिचदातारममृतेषुदेवेषुस्वाहाकृतयःस्वाहेत्येतत्सुआहेतिवास्वावागाहेतिवास्वंप्राहे
तिवास्वाहुतंहविर्जुहोतीतिवातासामेषाभवति ॥ २० ॥ सद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः । अस्य
होतुःप्रदिश्यृतस्यवाचिस्वाहाकृतंहविरदंतुदेवाः । सद्योजायमानोनिरमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाम्यस्यहो
तुःप्रदिश्यृतस्यवाच्यास्यैस्वाहाकृतंहविरदन्तुदेवायजंतीतीमाआप्रीदेवताअनुक्रांताअथकिंदेवताःप्रयाजानुयाजाआ

ग्नेयाइत्येके ॥ २१ ॥ प्रयाजान्मेअनुयाजांश्चकेवलानूर्जस्वन्तंहविषोदत्तभागं । घृतंचापांपुरुषंचौषधीनामग्नेश्चदीर्घ
मायुरस्तुदेवाः । तवप्रयाजाअनुयाजाश्चकेवलऊर्जस्वंतोहविषःसंतुभागाः । तवाग्नेयज्ञोऽयमस्तुसर्वस्तुभ्यंनमंतांप्रदि
शश्चतस्रः । आग्नेयावैप्रयाजाआग्नेयाअनुयाजाइतिचब्राह्मणंछन्दोदेवताइत्यपरंछन्दांसिवैप्रयाजाश्छंदांस्यनुयाजाइ
तिचब्राह्मणंमृतुदेवताइत्यपरंमृतवोवैप्रयाजाऋतवोऽनुयाजाइतिचब्राह्मणंपशुदेवताइत्यपरंपशवोवैप्रयाजाःपशवोऽ
नुयाजाइतिचब्राह्मणंप्राणदेवताइत्यपरंप्राणावैप्रयाजाःप्राणावाअनुयाजाइतिचब्राह्मणंमात्मदेवताइत्यपरंमात्मावैप्र
याजाआत्मावाअनुयाजाइतिचब्राह्मणंमाग्नेयाइतितुस्थितिर्भक्तिमात्रमितरत्किमर्थंपुनरिदमुच्यतेयस्यैदेवतायैहविर्गृ
हीतंस्यात्तांमनसाध्यायेद्वषट्करिष्यन्नितिहविज्ञायतेतान्येतान्येकादशाप्रीसूक्तानितेषांवासिष्ठमात्रेयंवाध्र्यश्वंगार्त्समद
मितिनाराशंसवंतिमैधातिथंदैर्घतमसंप्रैषिकमित्युभयवंत्यतोऽन्यानितनूनपात्वंतितनूनपात्वंति ॥ २२ ॥ ( द्रविणो
दाःकस्माद्द्रविणोदाद्रविणसोमेद्यंतुतेऽथातआप्रियःसमिद्धोअद्यतनूनपान्नराशंसस्याजुह्वानःप्राचीनंव्यचस्वतीरासु
ष्वयंतीदैव्याहोतारानोयज्ञंयइमेआविष्ठोवनस्पतिरुपावसृजांजंतिदेवेभ्योवनस्पतेवनस्पतेरशनयानियूयसद्योजातः
प्रयाजान्मेद्वाविंशतिः ) ॥ इतिनिरुक्तउत्तरषट्केद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥

ॐ ॥ अथयानिपृथिव्यायतनानिसत्त्वानिस्तुतिंलभंतेतान्यतोऽनुक्रमिष्यामस्तेषामश्वःप्रथमागामीभवत्यश्वो व्याख्यातस्तस्यैषाभवति ॥ १ ॥ अश्वोवोह्लासुखंरथंहसनामुपमंत्रिणः । शेपोरोमण्वन्तौभेदौवारिन्मंडूकइच्छ तींद्रायेंदोपरिस्रव । अश्वोवोह्लासुखंवोह्लारथंवोह्लासुखमितिकल्याणनामकल्याणंपुण्यंसुहितंभवतिसुहितंगम्यतीति वांहसैतावापातावापालयितावांशेपमृच्छतीतिवारिवारयतिमानोव्याख्यातस्तस्यैषाभवति ॥ २ ॥ मानोमित्रोवरुणो अर्यमायुरिंद्रऋभुक्षामरुतःपरिख्यन् । यद्वाजिनोदेवजातस्यसप्तेःप्रवक्ष्यामोविदथेवीर्याणि । यद्वाजिनोदेवैर्जातस्य सप्तेःसरणस्यप्रवक्ष्यामोयज्ञेविदथेवीर्याणिमानस्त्वंमित्रश्चवरुणश्चार्यमाचायुश्चवायुरयनइंद्रश्चोरुक्षयणऋभूणांराजेति वामरुतश्चपरिख्यन्छकुनिःशक्नोत्युन्नेतुमात्मानंशक्नोतिनदितुमितिवाशक्नोतितकितुमितिवासर्वतःशंकरोऽस्त्वितिवा शक्नोतेर्वातस्यैषाभवति ॥ ३ ॥ कनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावम् ॥ सुमंगलश्चशकुनेभवासिमात्वाका चिदभिभाविश्व्याविदत् । न्यक्रंदीज्जन्मप्रब्रुवाणोयथास्यशब्दस्तथानामेरयतिवाचमीरयितेवनावंसुमंगलश्चशकुने भवकल्याणमंगलोमंगलंगिरतेर्गृणात्यर्थेगिरत्यनर्थानितिवागलमंगवन्मज्जयतिपापकमितिनैरुक्तामागच्छत्वितिवा माचत्वाकाचिदभिभूतिःसर्वतोविदद्गृत्समदमर्थमभ्युत्थितंकपिंजलोऽभिववाशेतदभिवादिन्येषर्ग्भवति ॥ ४ ॥ भद्रं वदंदक्षिणतोभद्रमुत्तरतोवद । भद्रंपुरस्तान्नोवदभद्रंपश्चात्कपिंजल । इतिसानिगदव्याख्यातागृत्समदोगृत्समदनो

गृत्सइतिमेधाविनामगृणातेःस्तुतिकर्मणोमंडूकामज्जूकामज्जनान्मदतेर्वामोदतिकर्मणोमंदतेर्वातृप्तिकर्मणोमंडयतेरि
तिवैयाकरणामंडएषामोकइतिवामंडोमदेर्वामुदेर्वातेषामेषाभवति ॥ ५ ॥ संवत्सरंशशयानाब्राह्मणाव्रतचारिणः ।
वाचंपर्जन्यजिन्वतांप्रमंडूकाअवादिषुः । संवत्सरंशिश्यानाब्राह्मणाव्रतचारिणोऽब्रुवाणाअपिवोपमार्थेस्याद्ब्राह्मणाइ
वव्रतचारिणइतिवाचंपर्जन्यप्रीतांप्रावादिषुर्मंडूकावसिष्ठोवर्षकामःपर्जन्यंतुष्टावतंमंडूकाअन्वमोदंतसमंडूकाननुमोद
मानान्दृष्ट्वातुष्टावतदभिवादिन्येषर्ग्भवति ॥ ६ ॥ उपप्लवदमंडूकिवर्षमावदतादुरि । मध्येह्रदस्यप्लवस्वनिगृह्यचतुरः
परः । इतिसानिगदव्याख्याताऽक्षाअश्नुवतएनानितिवाभ्यश्नुवतएभिरितिवातेषामेषाभवति ॥ ७ ॥ प्रावेपामाबृह
तोमादयंतिप्रवातेजाइरिणेवर्वृताना । सोमस्येवमौजवतस्यभक्षोविभीदकोजागृविर्मह्यमच्छान् । प्रवेपिणोमामहतो
विभीदकस्यफलानिमादयंतिप्रवातेजाःप्रवणेजाइरिणेवर्तमानाइरिणंनिर्ऋणमृणातेरपार्णभवत्यपरताअस्मादोषधयइ
तिवा । सोमस्येवमौजवतस्यभक्षः । मौजवतोमूजवतिजातोमूजवान्पर्वतोमुंजवान्मुंजोविमुच्यतइषीकयेषीकेषतेर्गति
कर्मणइयमपीतरेषीकैतस्मादेवविभीदकोविभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत्प्रशंसत्येनान्प्रथमयानिंदत्युत्तरा
भिर्ऋषेरक्षपरिद्यूनस्यैतदार्षवेदयंतेग्रावाणोहन्तेर्वागृणातेर्वागृह्णातेर्वातेषामेषाभवति ॥ ८ ॥ प्रैतेवदन्तुप्रवयंवदामग्रा
वभ्योवाचंवदतावदद्भ्यः । यदद्रयःपर्वताःसाकमाशवःश्लोकंघोषंभरथेंद्रायसोमिनः । प्रवदंत्वेतेप्रवदामवयंग्रावभ्यो

वाचंवदतवदञ्चोयदद्रयः पर्वताअदरणीयाः सहसोममाशवः क्षिप्रकारिणंः श्लोकः शृणोतेर्धोषोघुष्यतेः सोमिनोयूयंस्थे तिवासोमिनोगृहेष्वितिवायेननराः प्रशस्यंतेसनाराशंसोमंत्रस्तस्यैषाभवति ॥ ९ ॥ अमंदान्स्तोमान्प्रभरेमनीषासिंधाव धिक्षियतोभाव्यस्य । योमेसहस्रममिमीतसवानतूर्तोराजाश्रवइच्छमानः । अमंदान्स्तोमानबालिशाननल्पान्वाबालो बलवर्तीभर्तव्योभवत्यंवास्माअलंभवतीतिवांबास्मैबलंभवतीतिवाबलोवाप्रतिषेधव्यवहितःप्रभरेमनीषयामनसईषया स्तुत्याप्रज्ञयावासिंधावधिनिवसतोभावयव्यस्यराज्ञोयोमेसहस्रंनिरमिमीतसवानतूर्तोराजातूर्णइतिवात्वरमाणइति वाप्रशंसामिच्छमानः ॥ १० ॥ यज्ञसंयोगाद्राजास्तुतिंलभेतराजसंयोगाद्युद्धोपकरणानितेषांरथः प्रथमागामीभवति रथोरंहतेर्गतिकर्मणःस्थिरतेर्वास्याद्विपरीतस्यरममाणोऽस्मिंस्तिष्ठतीतिवारपतेर्वारसतेर्वातस्यैषाभवति ॥ ११ ॥ वन स्पतेवीड्वंगोहिभूयाअस्मत्सखाप्रतरणः सुवीरः । गोभिःसन्नद्धोअसिवीळयस्वास्थातातेजयतुजेत्वानि । वनस्पतेदृढां गोहिभवास्मत्सखाप्रतरणःसुवीरःकल्याणवीरोगोभिःसंनद्धोअसिवीळयस्वेतिसंस्तंभस्वास्थातातेजयतुजेतव्यानिदुंदु भिरितिशब्दानुकरणंद्रुमोभिन्नइतिवादुंदुभ्यतेर्वास्याच्छब्दकर्मणस्तस्यैषाभवति ॥ १२ ॥ उपश्वासयपृथिवीमुतद्यांपु रुत्रातेमनुतांविष्ठितंजगत् । सदुंदुभेसजूरिंद्रेणदेवैर्दूराद्दवीयोअपसेधशत्रून् । उपश्वासयपृथिवींचदिवंचबहुधातेघोषं मन्यतांविष्ठितंस्थावरंजंगमंचयत्सदुंदुभेसहजोषणइंद्रेणचदेवैश्चदूराद्दूरतरमपसेधशत्रून्निषुधिरिषूणांनिधानंतस्यैषाभ

निरुक्त

॥ १२ ॥

उत्तरष.

अ. २

वति ॥ १३ ॥ बह्वीनांपिताबहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य । इषुधिःसंकाःपृतनाश्चसर्वाःपृष्ठेनिनद्धोजय
तिप्रसूतः । बहूनांपिताबहुरस्यपुत्रइतीषूनभिप्रेत्यप्रस्मयतइवापाव्रियमाणःशब्दानुकरणंवासंकाःसचतेःसंपूर्वाद्वा
किरतेःपृष्ठेनिनद्धोजयतिप्रसूतइतिव्याख्यातंहस्तघ्नोहस्तेहन्यतेतस्यैषाभवति ॥ १४ ॥ अहिरिवभोगैःपर्येतिबाहुं
ज्यायाहेतिंपरिबाधमानः । हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः । अहिरिवभोगैःपरिवेष्टयति
बाहुंज्यायावधात्परित्रायमाणोहस्तघ्नःसर्वाणिप्रज्ञानानिप्रजानन्पुमान्पुरुमनाभवतिपुंसतेर्वाभीशवोव्याख्यातास्तेषा
मेषाभवति ॥ १५ ॥ रथेतिष्ठन्नयतिवाजिनःपुरोयत्रयत्रकामयतेसुषारथिः । अभीशूनांमहिमानंपनायतमनःपश्चा
दनुयच्छंतिरश्मयः । रथेतिष्ठन्नयतिवाजिनःपुरस्तात्सतोयत्रयत्रकामयतेसुषारथिःकल्याणसारथिरभीशूनांमहि
मानंपूजयामिमनःपश्चात्संतोऽनुयच्छंतिरश्मयोधनुर्धन्वतेर्गतिकर्मणोवधकर्मणोवाधन्वंत्यस्मादिषवस्तस्यैषाभवति
॥ १६ ॥ धन्वनागाधन्वनाजिंजयेमधन्वनातीव्राःसमदोजयेम । धनुःशत्रोरपकामंकृणोतिधन्वनासर्वाःप्रदिशो
जयेम । इतिसानिगदव्याख्यातासमदःसमदोवात्तेःसंमदोवामदतेर्ज्याजयतेर्वाजिनातेर्वाप्रजावयतीषूनितिवातस्या
एषाभवति ॥ १७ ॥ वक्ष्यंतीवेदागनीगंतिकर्णंप्रियंसखायंपरिषस्वजाना । योषेवशिंक्तेवितताधिधन्वन्ज्याइयंसमने
पारयंती । वक्ष्यंतीवागच्छतिकर्णंप्रियमिवसखायमिषुपरिष्वजमानायोषेवशिंक्तेशब्दंकरोतिवितताधिधनुषिज्येयंस

॥ १२ ॥

मनेसंग्रामेपारयंतीपारंनयंतीषुरीपतेर्गतिकर्मणोवधकर्मणोवातस्यैषाभवति ॥ १८ ॥ सुपर्णंवस्तेमृगोअस्यादंतोगो
भिःसंनद्धापतति प्रसूता । यत्रानरःसंचविचद्रवंतितत्रास्मभ्यमिषवःशर्मयंसन् । सुपर्णंवस्तइतिवाजानभिप्रेत्यमृग
मयोऽस्यादंतोमृगयतेर्वागोभिःसंनद्धापततिप्रसूतेतिव्याख्यातंयत्रनराःसंद्रवंतिचविद्रवंतिचतत्रास्मभ्यमिषवःशर्म
यच्छंतुशरणंसंग्रामेष्वश्वाजनींकशेत्याहुःकशाप्रकाशयतिभयमश्वायकृष्यतेर्वाणूभावाद्वाक्पुनःप्रकाशयत्यर्थान्खश
याक्रोशतेर्वाश्वकशायाएषाभवति ॥ १९ ॥ आजंघंतिसान्वेषांजघनाँऽउपजिघ्नते । अश्वाजनिप्रचेतसोऽश्वान्त्समत्सु
चोदय । आघ्नंतिसानून्येषांसरणानिसक्थीनिसक्थिसचतेरासक्तोऽस्मिन्कायोजघनानिचोपघ्नंतिजघनंजंघन्यतै
रश्वाजनिप्रचेतसःप्रवृद्धचेतसोऽश्वान्त्समत्सुसमरणेषुसंग्रामेषुचोदयोलूखलमुरुकरंवोर्करंवोर्ध्वखंवोरुमेकुर्वित्यब्रवी
त्तदुलूखलमभवंदुरुकरंचैतदुलूखलमित्याचक्षतेपरोक्षेणेतिचब्राह्मणंतस्यैषाभवति ॥ २० ॥ यच्चिद्धित्वंगृहेगृहउलू
खलकयुज्यसे । इहद्युमत्तमंवदजयतामिवदुंदुभिः । इतिसानिगदव्याख्याता ॥ २१ ॥ वृषभःप्रजांवर्षतीतिवातिबृह
तिरेतइतिवातद्वृषभकर्मावर्षणाद्वृषभस्तस्यैषाभवति ॥ २२ ॥ न्यक्रंदयन्नुपयंतएनममेहयन्वृषभंमध्यआजेः । तेनसूभ
र्वंशतवत्सहस्रंगवांमुद्गलःप्रधनेजिगाय । न्यक्रंदयन्नुपयंतएनमितिव्याख्यातंममेहयन्वृषभंमध्यआजेराजयनस्याज
वनस्येतिवातेनतंसूभर्वंराजानंभर्वतिरत्तिकर्मातद्वासुभर्वंसहस्रंगवांमुद्गलःप्रधनेजिगायप्रधनइतिसंग्रामनामप्रकीर्णा

न्यस्मिन्धनानिभवंतिंद्रुघणोद्रुममयोघनंस्तत्रेतिहासमाचक्षतेंमुद्गलोभार्म्यश्वऋषिर्वृषभंचद्रुघणंचयुक्त्वांसंग्रामेव्यवहृ
त्याजिंजिगायंतदभिवादिन्येषर्ग्भवति ॥ २३ ॥ इमंतंपश्यवृषभस्ययुंजंकाष्ठांयामध्येंद्रुघणंशयानं । येनजिगायंशत
वंत्सहस्रंगवांमुद्गलःपृतनाज्येषु । इमंतंपश्यवृषभस्यसहयुजंकाष्ठायामध्येद्रुघणंशयानंयेनजिगायशतवत्सहस्रंगवांमु
द्गलःपृतनाज्येषुंपृतनाज्यमितिसंग्रामनामंपृतनानामजनाद्वाजयनाद्वांमुद्गलोमुद्गवान्मुद्गगिलोवांमदनंगिलतीतिवांम
दंगिलोवामुदंगिलोवांभार्म्यश्वोभृम्यश्वस्यपुत्रोंभृम्यश्वोभृमयोऽस्याश्वांअश्वभरणाद्वांपितुरित्यन्ननामंपातेर्वापिबते
र्वाप्यायतेर्वांतस्यैषाभवति ॥ २४ ॥ पितुंनुस्तोषंमहोधर्माणंतांविषीं । यस्यंत्रितोव्योजंसावृत्रंविपर्वमर्दयंत् । तंपि
तुंस्तौमिमहतोधारयितारंबलस्यंतविषीतिबलनामंतवतेर्वावृद्धिकर्मणोंयस्यत्रितओजसाबलेनंत्रितस्त्रिस्थानंइंद्रोवृत्रं
विपर्वाणंव्यर्दयतिंनद्योव्याख्यातांस्तासामेषाभवति ॥ २५ ॥ इमंमेंगंगेयमुनेसरस्वतिशुतुंद्रिस्तोमंसचतापरुष्ण्या ।
असिक्न्यामंरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमंया । इमंमेगंगेयमुनेसरस्वतिंशुतुद्रिपरुष्णिस्तोममासेवध्वंमसि
क्न्याचसहमरुद्वृधेवितस्तयाचार्जीकीयंआशृणुहिसुषोमयाचेतिंसमस्तार्थोऽथैकपदनिरुक्तंगंगागमनांद्यमुनाप्रयुवतीग
च्छतीतिवांप्रयुवितंगच्छतीतिवांसरस्वतीसरइत्युदकनामंसर्तेस्तद्वतींशुतुद्रीशुद्राविणींक्षिप्रद्राविण्यांशुतुन्नेवद्रवतीति
वेंरावतींपरुष्णीत्याहुःपर्ववतीभास्वतीकुटिलगामिन्यसिक्न्यशुक्लासितांसितमितिवर्णनामंतत्प्रतिषेधोऽसितंमरुद्वृधाः

सर्वानद्योमरुतएनावर्धयंतिवितस्ताविदग्धाविवृद्धामहाकूलार्जीकीयाविपाळित्याहुर्ऋजीकप्रभवावर्जुगामिनीवाविपा
ड्विपाटनाद्वाविपाशनाद्वाविप्रापणाद्वापाशाअस्यांव्यपाश्यंतवसिष्ठस्यमुमूर्षतस्तस्माद्विपाळुच्यतेपूर्वमासीदुरुंजिरासु
षोमासिंधुर्यदेनामभिप्रसुवंतिनद्यःसिंधुःस्यंदनादापआप्नोतेस्तासामेषाभवति ॥ २६ ॥ आपोहिष्ठामयोभुवस्तान
ऊर्जेदधातन । महेरणायचक्षसे । आपोहिस्थसुखभुवस्तानोऽन्नायधत्तमहतेचनोरणायरमणीयायचदर्शनायौषध
यओषद्धयंतीतिवौषत्येनाधयंतीतिवादोषंधयंतीतिवातासामेषाभवति ॥ २७ ॥ याओषधीःपूर्वाजातादेवेभ्यस्त्रियु
गंपुरा । मनैनुबभ्रूणामहंशतंधामानिसप्तचं । याओषधयःपूर्वाजातादेवेभ्यस्त्रीणियुगानिपुरामन्येनुतद्बभ्रूणामहंब
भ्रुवर्णानांहरणानांभरणानामितिवाशतंधामानिसप्तचेतिधामानित्रयाणिभवंतिस्थानानिनामानिजन्मानीतिजन्मा
न्यत्राभिप्रेतानिसप्तशतंपुरुषस्यमर्मणांतेष्वेनादधतीतिवारात्रिर्व्याख्यातातस्याएषाभवति ॥ २८ ॥ आरात्रिपा
र्थिवंरजःपितरःप्रायुधामभिः । दिवःसदांसिबृहतीवितिष्ठसआत्वेषंवर्ततेतमः । आपूपुरस्त्वंरात्रिपार्थिवंरजःस्थानैर्म
ध्यमस्यदिवःसदांसिबृहतीमहतीवितिष्ठसआवर्ततेत्वेषंतमोरजोऽरण्यान्यरण्यस्यपत्न्यरण्यमपार्णंग्रामादरमणंभवती
तिवातस्याएषाभवति ॥ २९ ॥ अरण्यान्यरण्यान्यसौयाप्रेवनश्यसि । कथाग्रामंनपृच्छसिनत्वाभीरिवविंदतीँ ३।
अरण्यानीत्येनामामंत्रयतेयासावरण्यानिवनानिपराचीवनश्यसिकथंग्रामंनपृच्छसिनत्वाभीर्विंदतीवेतीवःपरिभयार्थे

वांश्रद्धाश्रद्धानात्तस्याएषाभवति ॥ ३० ॥ श्रद्धयाग्निःसमिध्यतेश्रद्धयाहूयतेहविः । श्रद्धांभगस्यमूर्धनिवचसावेद
यामसि । श्रद्धयाग्निःसाधुसमिध्यतेश्रद्धयाहविःसाधुहूयतेश्रद्धांभगस्यभागधेयस्यमूर्धनिप्रधानांगेवचनेनावेदयामः
पृथिवीव्याख्यातातस्याएषाभवति ॥ ३१ ॥ स्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्रथः । सुखानः
पृथिविभवानृक्षरानिवेशन्यृक्षरःकण्टकऋच्छतेःकंटकःकंतपोवाकृंततेर्वाकंटतेर्वास्याद्गतिकर्मणउद्गततमोभवतियच्छ
नःशर्मयच्छंतुशरणंसर्वतःपृथ्वप्वाव्याख्यातातस्याएषाभवति ॥ ३२ ॥ अमीषांचित्तंप्रतिलोभयंतीगृहाणांगान्यप्वे
परेहि । अभिप्रेहिनिर्दहहृत्सुशोकैरंधेनामित्रास्तमसासचंतां । अमीषांचित्तानिप्रज्ञानानिप्रतिलोभयमानागृहाणां
गान्यप्वेपरेह्यभिप्रेहिनिर्दहैषांहृदयानिशोकैरंधेनामित्रास्तमसासंसेव्यंतामग्नाय्यग्नेःपत्नीतस्याएषाभवति ॥ ३३ ॥
इहेंद्राणीमुपह्वयेवरुणानींस्वस्तये । अग्नायींसोमपीतये । इतिसानिगदव्याख्याता ॥ ३४ ॥ अथातोऽष्टौद्वंद्वान्यु
लूखलमुसलेउलूखलंव्याख्यातंमुसलंमुहुःसरंतयोरेषाभवति ॥ ३५ ॥ आयजीवाजसातमाताह्यु१च्चाविजर्भृतः ।
हरीइवांधांसिवप्संता । आयष्टव्येअन्नानांसंभक्ततमेतेह्युच्चैर्विह्रियेतेहरीइवान्नानिभुंजानेहविर्धानेहविषांनिधानेतयो
रेषाभवति ॥ ३६ ॥ आवामुपस्थमद्रुहादेवाःसीदंतुयज्ञियाः । इहाद्यसोमपीतये । आसीदंतुवामुपस्थउपस्थानमद्रो
ग्धव्येइतिवायज्ञियादेवायज्ञसंपादिनइहाद्यसोमपानायद्यावापृथिव्यौव्याख्यातेतयोरेषाभवति ॥ ३७ ॥ द्यावा

नःपृथिवीइमंसिध्रमद्यादिंविस्पृशं । यज्ञंदेवेषुयच्छतां । द्यावापृथिव्यौनइमंसाधनमद्यदिविस्पृशंयज्ञंदेवेषुनियच्छतां
विपाट्छुतुद्यौव्याख्यातैतयोरेषाभवति ॥ ३८ ॥ प्रपर्वतानामुशतीउपस्थादश्वेइवविषितेहासमाने । गावेवशुभ्रेमा
तरारिहाणेविपाट्छुतुद्रीपयसाजवेते । पर्वतानामुपस्थादुपस्थानादुशत्यौकामयमानेअश्वेइवविमुक्तेइतिवाविषण्णेइ
तिवाहासमानेहासतिःस्पर्धायांहर्षमाणेवागावाविवशुभ्रेशोभनेमातरौसंरिहाणेविपाट्छुतुद्यौपयसाप्रजवेतेआर्लीअ
र्तन्यौवारण्यौवारिषण्यौवातयोरेषाभवति ॥ ३९ ॥ तेआचरंतीसमनेवयोषामातेवपुत्रंबिभृतामुपस्थे । अपशत्रून्वि
ध्यतांसंविदानेआर्लीइमेविस्फुरंतीअमित्रान् । तेआचरंत्यौसमनसाविवयोषेमातेवपुत्रंबिभृतामुपस्थउपस्थानेऽपवि
ध्यतांशत्रून्त्संविदानेआर्त्न्याविमेविघ्नत्यावमित्रान्छुनासीरौशुनोवायुःशुएत्यंतरिक्षेसीरआदित्यःसरणात्तयोरेषाभव
ति ॥ ४० ॥ शुनासीराविमांवाचंजुषेथांयद्दिविचक्रथुःपयः । तेनेमामुपसिंचतं । इतिसानिगदव्याख्यातादेवीजो
ष्ट्रीदेव्यौजोषयित्र्यौद्यावापृथिव्याविवितिवाहोरात्रेइतिवासस्यंचसमाचेतिकात्थक्यस्तयोरेषसंप्रैषोभवति ॥ ४१ ॥
देवीजोष्ट्रीवसुधितीययोरन्याघाद्वेषांसियुयवदान्यावक्षद्वसुवार्याणियजमानायवसुवनेवसुधेयस्यवीतांयज । देवीजो
ष्ट्रीदेव्यौजोषयित्र्यौवसुधितीवसुधान्यौययोरन्याघानिद्वेषांस्यवयावयत्यावहत्यन्यावसूनिवरणीयानियजमानायव
सुवननायचवसुधानायचवीतांपिबेतांकामयेतांवायजेतिसंप्रैषोदेवीऊर्जाहुतीदेव्याऊर्जाह्वान्यौद्यावापृथिव्याविविवा

 



होरात्रेइतिवासस्यंचसमाचेतिकात्थर्म्यस्तयोरेषसंप्रैषोभवति ॥ ४२ ॥ देवीऊर्जाहुतीइषमूर्जमन्यावक्षत्सग्धिंसपीति मन्यानवेनपूर्वंदयमानाःस्यामपुराणेननवंतामूर्जमूर्जाहुतीऊर्जयमानेअधातांवसुवनेवसुधेयस्यवीतांयज । देवीऊर्जाहुतीदेव्याऊर्जाह्वान्यावन्नंचरसंचावहत्यावहत्यन्यासहजग्धिंचसहपीतिंचान्यानवेनपूर्वंदयमानाःस्यामपुराणेननवंतामूर्जमूर्जाहुतीऊर्जयमानेअधातांवसुवननायचवसुधानायचवीतांपिबेतांकामयेतांवायजेतिसंप्रैषोयजेतिसंप्रैषः ॥ ४३ ॥

( अथयान्यश्वोवोह्यमानोमित्रःकनिक्रदंद्रुद्रंवदसंवत्सरंमुपप्लवदप्रावेपाःप्रैतेवदंत्वमंदान्यंज्ञसंयोगाद्वनस्पतउपश्वासयवह्वीनामहिरिवभोगैरथेतिष्ठंन्धन्वनागावक्ष्यंतीवसुपर्णवस्तआजंघंतियच्चिद्धित्वंवृषभोन्यक्रंदयन्निमंतंपितुन्विमंमआपोहिंयाओषधीरारात्र्यरण्यानिंश्रद्धयास्योनामीषामिहेंद्राणीमथातोष्टावायजीआवामुपस्थंद्यावानःप्रपर्वतानांसेआचरंतींशुनासीरौदेवीजोष्ट्रीदेवीऊर्जाहुतीत्रिचत्वारिंशत् ) ॥ इतिनिरुक्तउत्तरषट्केतृतीयोऽध्यायः ॥ ३ ॥ ॥

ॐ ॥ अथातोमध्यस्थानादेवतास्तासांवायुःप्रथमागामीभवतिवायुर्वातेर्वेतेर्वास्याद्गतिकर्मणएतेरितिस्थौलाष्ठीविंरनर्थकोवकारस्तस्यैषाभवति ॥ १ ॥ वायवायाहिदर्शतेमेसोमाअरंकृताः । तेषांपाहिश्रुधीहवं । वायवायाहिदर्शनीयेमेसोमाअरंकृतअलंकृतास्तेषांपिबशृणुनोह्वानमितिकमन्यंमध्यमादेवमवक्ष्यत्तस्यैषापराभवति ॥ २ ॥ आसस्राणासंःशवसानमच्छेंद्रंसुचक्रेरथ्यासोअश्वाः । अभिश्रवऋज्यंतोवहेयुर्नूचिन्नुवायोरमृतंमिदस्येत् । आससृवांसोऽभिवलाय

मानंमिंद्रंकल्याणचक्रेरथेयोगायरथ्याअश्वारथस्यवोह्लारंऋज्यंतऋजुगामिनोऽन्नमभिवहेयुर्नवंचपुराणंचश्रवइत्यन्न
नामंश्रूयतइतिसतोवायोश्चास्यभक्षौयथानविदस्येदितींद्रप्रधानेत्येकेनैघंटुकंवायुकर्मोभयप्रधानेत्यपरंवरुणोवृणोती
तिसतस्तस्यैषाभवति ॥३॥ नीचीनबारंवरुणःकवंधंप्रससर्जरोदसीअंतरिक्षं । तेनविश्वस्यभुवनस्यराजायवंनवृष्टिर्व्युन
त्तिभूम । नीचीनद्वारंवरुणःकवंधंमेघंकवनमुदकंभवतितदस्मिन्धीयतउदकमपिकवंधमुच्यतेवंधिरनिभृतत्वेकमनि
भृतंचप्रसृजातिद्यावापृथिव्यौचांतरिक्षंचमहत्त्वेनतेनसर्वस्यभुवनस्यराजायवमिववृष्टिर्व्युनत्तिभूमितस्यैषापराभवति
॥ ४ ॥ तमूषुसमनागिरापितॄणांचमन्मभिः । नाभाकस्यप्रशस्तिभिर्यःसिंधूनामुपोदयेसप्तस्वसासमध्यमोनभंतामन्य
केसमे । तंस्वभिष्टौमिसमानयागिरागीत्यास्तुत्यापितॄणांचमननीयैःस्तोमैर्नाभाकस्यप्रशस्तिभिर्ऋषिर्नाभाकोवभूवंयः
स्यंदमानानामासामपामुपोदयेसप्तस्वसारमेनमाहवाग्भिःसमध्यमइतिनिरुच्यतेऽथैषएवभवति । नभंतामन्यकेसमे ।
माभूवन्नन्यकेसर्वेयेनोद्विषंतिदुर्धियःपापधियःपापसंकल्पारुद्रोरौतीतिसतोरोरूयमाणोद्रवतीतिवारोदयतेर्वायदरुद
त्तद्रुद्रस्यरुद्रत्वमितिकाठकंयदरोदीत्तद्रुद्रस्यरुद्रत्वमितिहारिद्रविकंतस्यैषाभवति ॥ ५ ॥ इमारुद्रायस्थिरधन्वनेगिरः
क्षिप्रेषवेदेवायस्वधान्ने । अषाह्लायसहमानायवेधसेतिग्मयुधायभरताशृणोतुनः । इमारुद्रायदृढधन्वनेगिरःक्षिप्रेष
वेदेवायान्नवतेऽषाढायान्यैःसहमानायविधात्रेतिग्मायुधायभरतशृणोतुनस्तिग्मंतेजतेरुत्साहकर्मणआयुधमायोधना

त्तस्यैषापराभवति ॥ ६ ॥ यातेदिद्युदवसृष्टादिवस्परिक्ष्मयाचरतिपरिसावृणक्तुनः । सहस्रंतेस्वपिवातभेषजामास्तोकेषुतनयेषुरीरिषः । यातेदिद्युदवसृष्टादिवस्परिदिवोऽधिदिद्युद्द्यतेर्वाद्युतेर्वाद्योततेर्वाक्ष्मयाचरतिक्ष्मापृथिवीतस्यांचरतितयाचरतिविक्ष्मापयंतीचरतीतिवापरिवृणक्तुनःसासहस्रंतेस्वाप्तवचनभैषज्यानिमानस्त्वंपुत्रेषुचपौत्रेषुचरीरिषंस्तोकंतुद्यतेस्तनयंतनोतेरग्निरपिरुद्रउच्यतेतस्यैषाभवति ॥ ७ ॥ जराबोधतद्विविड्ढिविशेविशेयज्ञियाय । स्तोमंरुद्रायदृशीकं । जरास्तुतिर्जरतेःस्तुतिकर्मणस्तांबोधतयाबोधयितरितिवातद्विविड्ढितत्कुरुमनुष्यस्यमनुष्यस्ययजनायस्तोमंरुद्रायदर्शनीयमिंद्रइरांदृणातीतिवैरांददातीतिवैरांदधातीतिवैरांदारयतइतिवैरांधारयतइतिवेंदवेद्रवतीतिवेंदौरमतइतिवेंधेभूतानीतिवातद्यदेनंप्राणैःसमैंधंस्तदिंद्रस्येंद्रत्वमितिविज्ञायतइदंकरणादित्याग्रायणइदंदर्शनादित्यौपमन्यवइंदतेर्वैश्वर्यकर्मणइन्छत्रूणांदारयितावाद्रावयितावादरयिताचयज्वनांतस्यैषाभवति ॥ ८ ॥ अर्ददुरुत्समसृजोविखानित्वमर्णवान्बद्बधानाँऽअरम्णाः । महांतमिंद्रपर्वतंवियद्वःसृजोविधाराअववदानवंहन् । अर्दणाउत्समुत्सउत्सरणाद्वोत्सदनाद्वोत्स्यंदनाद्वोनत्तेर्वाव्यसृजोऽस्यखानित्वमर्णवानर्णस्वतएतान्माध्यमिकान्त्संस्त्यायांन्वाबध्यमानानरम्णारम्णातिःसंयमनकर्माविसर्जनकर्मावामहांतमिद्रपर्वतंमेघंयद्व्यवृणोर्व्यसृजोऽस्यधाराअवहन्नेनंदानवंदानकर्माणंतस्यैषापराभवति ॥ ९ ॥ योजातएवप्रथमोमनस्वान्देवोदेवान्क्रतुनापर्यभूषत् । यस्यशुष्माद्रोदसीअभ्यसे

तांनृम्णस्यमह्नासजनासइंद्रः । योजायमानएवप्रथमोमनस्वींदेवोदेवान्क्रतुनाकर्मणापर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रा मदितिर्वायस्यबलाद्द्यावापृथिव्यौविभ्यबिभीतांनृम्णस्यमह्नाबलस्यमहत्त्वेनसजनासइंद्रइत्यृषेर्दृष्टार्थस्यप्रीतिर्भवत्या ख्यानसंयुक्तापर्जन्यस्तृपेराद्यंतविपरीतस्यतर्पयिताजन्यः परोजेतावाजनयितावाप्राजयितावारसानांतस्यैषाभवति ॥ १० ॥ विवृक्षान्हंत्युतहंतिरक्षसोविश्वंबिभायभुवनंमहावधात् । उतानागाईषतेवृष्ण्यावतोयत्पर्जन्यःस्तनयन्हंति दुष्कृतः । विहन्तिवृक्षान्विहंतिचरक्षांसिसर्वाणिचास्माद्भूतानिबिभ्यतिमहावधान्महान्ह्यस्यवधोऽप्यनपराधोभीतः पलायतेवर्षकर्मवतोयत्पर्जन्यःस्तनयन्हंतिदुष्कृतःपापकृतोबृहस्पतिर्बृहतःपातावापालयितावातस्यैषाभवति ॥ ११ ॥ अश्नापिनद्धंमधुपर्यपश्यन्मत्स्यंनदीनउदनिक्षियन्तं । निष्टज्जभारचमसंनवृक्षाद्बृहस्पतिर्विरवेणाविकृत्य । अशनवता मेघेनापिनद्धंमधुपर्यपश्यन्मत्स्यमिवदीनउदकेनिवसंतंनिर्जहारतच्चमसमिववृक्षाच्चमसःकस्माच्चमंत्यस्मिन्निर्तिबृहस्प तिर्विरवेणशब्देनविकृत्यब्रह्मणस्पतिर्ब्रह्मणःपातावापालयितावातस्यैषाभवति ॥ १२ ॥ अश्मास्यमवतंब्रह्मणस्पतिर्मधु धारमभियमोजसातृणत् । तमेवविश्वेपपिरेस्वर्दृशोबहुसाकंसिसिचुरुत्समुद्रिणं । अशनवंतमास्यंदनवंतमवातितंब्र ह्मणस्पतिर्मधुधारमभियमोजसाबलेनाभ्यतृणत्तमेवसर्वेपिबंतिरश्मयःसूर्यदृशोबह्वेनंसहसिंचंत्युत्समुद्रिणमुदकवंतं ॥ १३ ॥ क्षेत्रस्यपतिःक्षेत्रंक्षियतेर्निवासकर्मणस्तस्यपातावापालयितावातस्यैषाभवति ॥ १४ ॥ क्षेत्रस्यपतिनावयंहि

तेनैवजयामसि । गामश्वंपोषयित्वासनोमृळातीदृशे । क्षेत्रस्यपतिनावयंसुहितेनेवजयामोगामश्वंपुष्टंपोषयितृचाहरे तिसनोमृळातीदृशे । बलेनवाधनेनवामृळतिर्दानकर्मातस्यैषापराभवति ॥ १५ ॥ क्षेत्रस्यपतेमधुमन्तमूर्मिंधेनुरिवपयो अस्मासुधुक्ष्व । मधुश्चुतंघृतमिवसुपूतमृतस्यनःपतयोमृळयंतु । क्षेत्रस्यपतेमधुमंतमूर्मिंधेनुरिवपयोऽस्मासुधुक्ष्वेतिम धुश्चुतंघृतमिवोदकंसुपूतमृतस्यनःपातारोवापालयितारोवामृळयंतुमृळयतिरुपदयाकर्मापूजाकर्मावातद्यत्समान्यामृ चिसमानाभिव्याहारंभवतितज्जामिभवतीत्येकंमधुमंतंमधुश्चुतमितियथायदेवसमानेपादेसमानाभिव्याहारंभवतित ज्जामिभवतीत्यपरं । हिरण्यरूपःसहिरण्यसंदृगितियथायथाकथाचविशेषोऽजामिभवतीत्यपरं । मंडूकाइवोदकान्मंडू काउदकादिवेतियथा । वास्तोष्पतिर्वास्तुर्वसतेर्निवासकर्मणस्तस्यपातावापालयितावातस्यैषाभवति ॥१६॥ अमीवहा वास्तोष्पतेविश्वारूपाण्याविशन् । सखासुशेवएधिनः । अभ्यमनहावास्तोष्पतेसर्वाणिरूपाण्याविशन्त्सखानःसुसुखो भवशेवइतिसुखनामशिष्यतेर्वकारोनामकरणोऽतस्थांतरोपलिंगीविभाषितगुणःशिवमित्यप्यस्यभवतियद्यद्रूपंकाम यतेतत्तद्देवताभवति । रूपंरूपंमघवाबोभवीतीत्यपिनिगमोभवतिवाचस्पतिर्वाचःपातावापालयितावातस्यैषाभवति ॥ १७ ॥ पुनरेहिवाचस्पतेदेवेनमनसासह । वसोष्पतेनिरामयमय्येवतन्वं१ मम । इतिसानिगदव्याख्यातापान्नपा त्तनूनप्त्राव्याख्यातस्तस्यैषाभवति ॥ १८ ॥ योअनिध्मोदीदयदप्स्व१ तर्यविप्रासईळतेअध्वरेषु । अपान्नपान्मधुम

तीरपोदायाभिरिंद्रोवावृधेवीर्याय । योऽनिध्मोदीदयदीप्यतेंऽभ्यंतरमप्सुयंमेधाविनःस्तुवंतियज्ञेषुसोऽपान्नपान्मधु
मतीरपोदेह्यभिषवार्ययाभिरिंद्रोवर्धतेवीर्यायवीरकर्मणेयमोयच्छतीतिसतंस्तस्यैषाभवति ॥ १९ ॥ परेयिवांसंप्रवतो
महीरनुबहुभ्यःपंथामनुपस्पशानं । वैवस्वतंसंगमनंजनानांयमंराजानंहविषादुवस्य । परेयिवांसंपर्यागतवंतंप्रवतउद्ध
तोनिवतइत्यवतिर्गतिकर्माबहुभ्यःपंथानमनुपस्पाशयमानंवैवस्वतंसंगमनंजनानांयमंराजानंहविषादुवस्येतिदुवस्यती
राध्नोतिकर्माग्निरपियमउच्यतेतमेताऋचोऽनुप्रवदंति ॥ २० ॥ सेनेवसृष्टामंदधात्यस्तुर्नदिद्युत्त्वेषप्रतीका । यमोह
जातोयमोजनित्वंजारःकनीनांपतिर्जनीनां । तंवश्चराथावयंवसत्यास्तंनगावोनक्षंतइद्धं । इतिद्विपदाःसेनेवसृष्टाभयं
वाबलंवादधात्यस्तुरिवदिद्युत्त्वेषप्रतीकाभयप्रतीकाबलप्रतीकायशःप्रतीकामहाप्रतीकादीप्तप्रतीकावा । यमोहजात
इंद्रेणसहसंगतः । यमाविहेहमातरेत्यपिनिगमोभवतियमइवजातोयमोजनिष्यमाणोजारःकनीनांजरयिताकन्यानां
पतिर्जनीनांपालयिताजायानांतत्प्रधानाहियज्ञसंयोगेनभवति। तृतीयोअग्निष्टेपतिरित्यपिनिगमोभवतितंवश्चराथाचरं
त्यापश्वाहुत्यावसत्याचनिवसंत्यौषधाहुत्यास्तंयथागावआप्नुवंतितथाप्नुयामेद्धंसमृद्धंभोगैर्मित्रःप्रमीतेस्त्रायतेसंमिन्वा
नोद्रवतीतिवामेदयतेर्वातस्यैषाभवति ॥२१॥ मित्रोजनान्यातयतिब्रुवाणोमित्रोदाधारपृथिवीमुतद्यां । मित्रःकृष्टीरनि
मिषाभिचष्टेमित्रायहव्यंघृतवज्जुहोत । मित्रोजनानायातयतिब्रुवाणःशब्दंकुर्वन्मित्रएवधारयतिपृथिवींचदिवंच

मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति कृष्टय इति मनुष्यनाम कर्मवंतो भवंति विकृष्टदेहा वा मित्राय हव्यं घृतवज्जुहोतेति
व्याख्यातं जुहोतिर्दानकर्मा कः कमनो वा क्रमणो वा सुखो वा तस्यैषा भवति ॥ २२ ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जा
तः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम । हिरण्यगर्भो हिरण्यमयो गर्भो हिरण्यमयो
गर्भोऽस्येति वा गर्भो गृभेर्गृणात्यर्थे गिरत्यनर्थानिति वा यदा हि स्त्री गुणान्गृह्णाति गुणाश्चास्या गृह्यंते ऽथ गर्भो भवति समभ
वदग्रे भूतस्य जातः पतिरेको बभूव स धारयति पृथिवीं च दिवं च कस्मै देवाय हविषा विधेमेति व्याख्यातं विधतिर्दानकर्मा सर
स्वान्व्याख्यातस्तस्यैषा भवति ॥ २३ ॥ ये ते सरस्व ऊर्मयो मधुमंतो घृतश्चुतः । तेभिर्नोविता भव । इति सा निगद
व्याख्याता ॥ २४ ॥ विश्वकर्मा सर्वस्य कर्ता तस्यैषा भवति ॥ २५ ॥ विश्वकर्मा विमना आद्विहाया धाता विधाता प
रमोत संदृक् । तेषामिष्टानि समिषा मदंति यत्रा सप्तऋषीन्पर एकमाहुः । विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च
परमश्च संद्रष्टा भूतानां तेषामिष्टानि वा कांतानि वा क्रांतानि वा गतानि वा मतानि वा नतानि वाद्भिः सह संमोदंते यत्रैतानि सप्त
ऋषीणानि ज्योतींषि तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवंतीत्यधिदैवतमथाध्यात्मं विश्वकर्मा विभूतमना व्याप्ता धाता



च विधाता च परमश्च संदर्शयितेंद्रियाणामेषामिष्टानि वा कांतानि वा क्रांतानि वा गतानि वा मतानि वा नतानि वान्नेन सह सं
मोदन्ते यत्रेमानि सप्तऋषीणानींद्रियाण्येभ्यः पर आत्मा तान्येतस्मिन्नेकं भवंतीत्यात्मगतिमाचष्टे तत्रेतिहासमाचक्षते वि

श्वकर्माभौवनः सर्वमेधे सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यन्ततो जुहवांचकार तदभिवादिन्येषर्ग्भवति य इमा विश्वा भुवनानि जुह्वदिति तस्योत्तरा भूयसे निर्वचनाय ॥ २६ ॥ विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्यां । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु । विश्वकर्मन्हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च मुह्यन्त्वन्ये अभितो जनाः सपत्ना इहास्माकं मघवा सूरिरस्तु प्रज्ञाता ताक्ष्र्यस्त्वष्ट्रा व्याख्यातस्तीर्णेऽन्तरिक्षे क्षियति तूर्णमर्थं रक्षत्यश्नोतेर्वा तस्यैषा भवति ॥ २७ ॥ त्यमूषु वाजिनं देवजूतं सहावानं तरुतारं रथानां । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये ताक्ष्र्यमिहा हुवेम । तं भृशमन्नवन्तं जूतिर्गतिः प्रीतिर्वा देवजूतं देवगतं देवप्रीतं वा सहस्वन्तं तारयितारं रथानामरिष्टनेमिं पृतनाजितमाशुं स्वस्तये ताक्ष्र्यमिह ह्वयेमेति कमन्यं मध्यमादेवमवक्ष्यत्तस्यैषापरा भवति ॥ २८ ॥ सद्यश्चिद्यः शवसा पंच कृष्टीः सूर्य इव ज्योतिषापस्ततान । सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्यां । सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पंच मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुं मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा मन्युन्त्यस्मादिषवस्तस्यैषा भवति ॥ २९ ॥ त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः । तिग्मेषव आयुधा संशिशाना अभि प्रयन्तु नरो अग्निरूपाः । त्वया मन्यो सरथमारुह्य रुजन्तो हर्षमाणासो धृषिता मरुत्वन्तिग्मेषव आयुधानि संशिशाना अभिप्रयन्तु नरो अग्निरूपा अग्निकर्माणः संन

द्धाः कवचिनइतिवादधिक्राव्याख्यातस्तस्यैषाभवति ॥ ३० ॥ आदधिक्राःशवसापंचकृष्टीःसूर्यइवज्योतिषापस्ततान । सहस्रसाःशतसावाज्यर्वापृणक्तुमध्वासमिमावचांसि । आतनोतिदधिक्राःशवसाबलेनापःसूर्यइवज्योतिषापंचमनुष्यजातानिसहस्रसाःशतसावाजीवेजनवानवैरणवान्त्संपृणक्तुनोमधुनोदकेनवचनानीमानीतिमधुधमतेर्विपरीतस्य सवितासर्वस्यप्रसवितातस्यैषाभवति ॥ ३१ ॥ सवितायंत्रैःपृथिवीमरम्णादस्कंभनेसविताद्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमंतरिक्षमतूर्तेबद्धंसवितासमुद्रं । सवितायंत्रैःपृथिवीमरमयदनारंभणेऽतरिक्षेसविताद्यामदृंहदश्वमिवाधुक्षद्धुनिमंतरिक्षेमेघंबद्धमतूर्तेबद्धमतूर्णइतिवात्वरमाणइतिवासवितासमुदितारमितिकमन्यंमध्यमादेवमवक्ष्यदादित्योऽपिसवितोच्यतेतथाचहैरण्यस्तूपेस्तुतोऽर्चन्हिरण्यस्तूपऋषिरिदंसूक्तंप्रोवाचतदभिवादिन्येषर्ग्भवति ॥ ३२ ॥ हिरण्यस्तूपःसवितर्यथात्वांगिरसोजुह्वेवाजेअस्मिन् । एवात्वार्चन्नवसेवंदमानःसोमस्येवांशुंप्रतिजागराहं । हिरण्यस्तूपोहिरण्यमयःस्तूपोहिरण्यमयःस्तूपोऽस्येतिवास्तूपःस्त्यायतेःसंघातःसवितर्यथात्वांगिरसोजुह्वेवाजेऽन्नेऽस्मिन्नेवंत्वार्चन्नवनायवंदमानःसोमस्येवांशुंप्रतिजागर्म्यहंत्वष्टाव्याख्यातस्तस्यैषाभवति ॥ ३३ ॥ देवस्त्वष्टासविताविश्वरूपःपुपोषप्रजाःपुरुधाजजान । इमाचविश्वाभुवनान्यस्यमहद्देवानामसुरत्वमेकं । देवस्त्वष्टासवितासर्वरूपःपोषतिप्रजारसानुप्रदानेनबहुधाचेमाजनयतीमानिचसर्वाणिभूतान्युदकान्यस्यमहच्चास्मैदेवानामसुरत्वमेकंप्रज्ञावत्त्वंवानवत्वं

वापिवासुरितिप्रज्ञानामास्यत्यनर्थानस्ताश्चास्यामर्थाअसुरत्वमादिलुप्तंवातोवातीतिसतंस्तस्यैषाभवति ॥ ३४ ॥ वात
आवातुभेषजंशंभुर्मयोभुनोहृदे । प्रणआयूंषितारिषत् । वातआवातुभैषज्यानिशंभुमयोभुचनोहृदयायंप्रवर्धयतुच
नआयुरग्निर्व्याख्यातंस्तस्यैषाभवति ॥ ३५ ॥ प्रतित्यंचारुमध्वरंगोपीथायप्रहूयसे । मरुद्भिरग्नआगहि । तंप्रतिचा
रुमध्वरंसोमपानायप्रहूयसेसोऽग्नेमरुद्भिःसहागच्छेतिकमन्यंमध्यमादेवमवक्ष्यंत्तस्यैषापराभवति ॥ ३६ ॥ अभित्वा
पूर्वपीतयेसृजामिसोम्यंमधु । मरुद्भिरग्नआगहि । अभिसृजामित्वापूर्वपीतयेपूर्वपानायंसोम्यंमधुसोममयंसोऽग्नेमरु
द्भिःसहागच्छेति ॥ ३७ ॥ वेनोवेनतेःकान्तिकर्मणस्तस्यैषाभवति ॥ ३८ ॥ अयंवेनश्चोदयत्पृश्निगर्भाज्योतिर्जरायूर
जंसोविमाने । इममपांसंगमेसूर्यस्यशिशुंनविप्रामतिभीरिहन्ति । अयंवेनश्चोदयत्पृश्निगर्भाःप्राष्टवर्णगर्भाआपइतिवा
ज्योतिर्जरायुर्ज्योतिरस्यजरायुस्थानीयंभवतिजरायुजरयागर्भस्यजरयायूयतइतिवेममपांचसंगमनेसूर्यस्यचंशिशुमि
वविप्रामतिभीरिहंतिलिहंतिस्तुवंतिवर्धयंतिपूजयंतीतिवाशिशुःशंसनीयोभवतिशिशीतेर्वास्याद्दानकर्मणश्चिरलब्धो
गर्भोभवत्यसुनीतिरसून्नयतितस्यैषाभवति ॥ ३९ ॥ असुनीतेमनोअस्मासुधारयजीवातवेसुप्रतिरानआयुः । रारंधिनः
सूर्यस्यसन्दृशिघृतेनत्वंतन्वंवर्धयस्व । असुनीतेमनोऽस्मासुधारयंचिरंजीवनायंप्रवर्धयचनआयूरंधयचनःसूर्यस्यसं
दर्शनायरध्यतिर्वशगमनेऽपिदृश्यते । मारधामद्विषतेसोमराजन्नित्यपिनिगमोभवतिघृतेनत्वमात्मानंतन्वंवर्धयस्व

तौंव्याख्यातंस्तस्यैषाभवति ॥ ४० ॥ ऋतस्यहिशुरुधःसंतिपूर्वीर्ऋतस्यधीतिर्वृजिनानिहंति । ऋतस्यश्लोकोबधिरात
तर्द्कर्णाबुधानःशुचमानआयोः । ऋतस्यहिशुरुधःसंतिपूर्वीर्ऋतस्यप्रज्ञावर्जनीयानिहंतिऋतस्यश्लोकोबधिरस्यापिक
र्णावातृणत्तिबधिरोबद्धश्रोत्रःकर्णौबोधयन्दीप्यमानश्चायोरयनस्यमनुष्यस्यज्योतिषोवोदकस्यवैदुरिंधेरुनत्तेर्वातस्यै
षाभवति ॥ ४१ ॥ प्रतद्वोचेयंभव्यायेन्दवेहव्योनयइषवान्मन्मरेजतिरक्षोहामन्मरेजंति । स्वयंसोअस्मदानिदोवधै
रंजेतदुर्मतिं । अवस्रवेदघशंसोऽवतरमवक्षुद्रमिवस्रवेत् । प्रब्रवीमितद्भव्यायेन्दवेहवनार्हइवयइषवान्नवान्कामवा
न्वांसननानिचनोरेजयतिरक्षोहाचबलेनरेजयतिस्वयंसोऽस्मदभिनिंदितारं । वधैरंजेतदुर्मतिं । अवस्रवेदघशंसस्ततश्चा
वतरंक्षुद्रमिवावस्रवेदभ्यासेभूयांसमर्थंमन्यंतेयथाहोदर्शनीयाहोदर्शनीयेतितत्परुच्छेपस्यशीलंपरुच्छेपऋषिःपर्ववच्छे
पःपरुषिपरुषिशेपोऽस्येतिवेतीमानिसप्तविंशतिर्देवतानामधेयान्यनुक्रांतानिसूक्तभांजिहविर्भांजितेषामेतान्यहविर्भा
जिवेनोऽसुनीतिर्ऋतइंदुःप्रजापतिःप्रजानांपातावापालयितावातस्यैषाभवति ॥ ४२ ॥ प्रजापतेनत्वदेतान्यन्योविश्वा
जातानिपरितावभूव । यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां । प्रजापतेनहित्वदेतान्यन्यःसर्वाणिजाता
नितानिपरिबभूवयत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणामित्याशीरहिर्व्याख्यातस्तस्यैषाभवति ॥ ४३ ॥
अब्जामुक्थैरहिंगृणीषेबुध्नेनदीनांरजःसुषीदन् । अब्जुजमुक्थैरहिंगृणीषेबुध्नेनदीनांरजःसूदकेषुसीदन्बुध्नमन्तरिक्षंब

द्धाअस्मिन्धृताआपइतिवैदमपीतरद्बुध्नमेतस्मादेवंबद्धाअस्मिन्धृताःप्राणाइतियोऽहिःसबुध्न्योबुध्नमन्तरिक्षंतन्निवा
सात्तस्यैषाभवति ॥ ४४ ॥ मानोऽहिर्बुध्न्योरिषेधान्मायज्ञोअस्यस्रिधदृतायोः । माचनोऽहिर्बुध्न्योरेषणायधान्मास्ययज्ञो
स्वाचस्रिधद्यज्ञकामस्यसुपर्णोव्याख्यातस्तस्यैषाभवति ॥ ४५ ॥ एकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंविचं
ष्टे । तंपाकेनमनसापश्यमंतितस्तंमातारेळ्हिसउरेळ्हिमातरं । एकःसुपर्णःससमुद्रमाविशतिसइमानिसर्वाणिभूतान्य
भिविपश्यतितंपाकेनमनसापश्यमंतितइत्यृषेर्दृष्टार्थस्यप्रीतिर्भवत्याख्यानसंयुक्तातंमातारेळ्हिवागेषामाध्यमिकासउ
मातरंरेळ्हिपुरूरवाबहुधारोरूयतेतस्यैषाभवति ॥ ४६ ॥ समस्मिञ्जायमानआसतग्नाउतेमवर्धन्नद्य१स्वगूर्ताः । महे
यत्त्वापुरूरवोरणायावर्धयन्दस्युहत्यायदेवाः । समासतास्मिञ्जायमाणेग्नागमनादापोदेवपत्न्योवापिचैनमवर्धयन्न
द्यःस्वगूर्ताःस्वयंगामिन्योमहतेचयत्त्वापुरूरवोरणायरमणीयायसंग्रामायावर्धयन्दस्युहत्यायचदेवादेवाः ॥ ४७ ॥
( अथातोमध्यस्थानावायवायाह्यासस्राणासोनीचीनबारंतमूष्विमारुद्रायंयातेदिद्युज्जराबोधादर्दर्योजातोविवृक्षानश्वा
पिनद्धमश्मास्यमवतंक्षेत्रस्यपतिःक्षेत्रस्यपतिनाक्षेत्रस्यपतेऽमीवहापुनरेहियोअनिध्मःपरेयिवांसंसेनेवसृष्टामित्रोजना
न्हिरण्यगर्भोयेतेसरस्वोविश्वकर्मासर्वस्यकर्ताविश्वकर्माविमनाविश्वकर्मन्हविषात्यमूषुसद्यश्चित्त्वयामन्योआदधि
क्राःसविताहिरण्यस्तूपोदेवस्त्वष्टावातआवातुप्रतित्यमभित्वावेनोवेनतैरयंवेनोऽसुनीतऋतस्यहिप्रतद्वोचेयंप्रजापते

ऽजमुक्थैर्मानोहिरेकः सुपर्णः समस्मिन्त्सप्तचत्वारिंशत् ) ॥ इतिनिरुक्तउत्तरषट्केचतुर्थोऽध्यायःसमाप्तः ॥ ४ ॥

ॐ । श्येनोव्याख्यातस्तस्यैषाभवति ॥ १ ॥ आदायश्येनोअभरत्सोमंसहस्रंसवाँअयुतंचसाकं । अत्रापुरंधिरजहादरातीर्मदेसोमस्यमूराअमूरः । आदायश्येनोऽहरत्सोमंसहस्रंसवानयुतंचसहसहस्रंसहस्रसाव्यमभिप्रेत्यतत्रायुतंसोमभक्षास्तत्संबंधेनायुतंदक्षिणाइतिवातत्रपुरंधिरजहादमित्रानदानानितिवामदेसोमस्यमूराअमूरइत्यैंद्रेचसूक्तेसोमपानेनचस्तुतस्तस्मादिंद्रंमन्यंतओषधिःसोमःसुनोतेर्यदेनमभिषुण्वंतिबहुलमस्यनैघंटुकंवृत्तमाश्चर्यमिवप्राधान्येनतस्यपावमानीषुनिदर्शनायोदाहरिष्यामः ॥ २ ॥ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया । इंद्रायपातवेसुतः । इतिसानिगदव्याख्यातथैषापराभवतिचंद्रमसोवैतस्यवा ॥ ३ ॥ सोमंमन्यतेपपिवान्यत्संपिंषंत्योषधिं । सोमंयंब्रह्माणोविदुर्नतस्याश्नातिकश्चन । सोमंमन्यतेपपिवान्यत्संपिंषंत्योषधिमितिवृथासुतमसोममाहसोमंयंब्रह्माणोविदुरितिनतस्याश्नातिकश्चनायज्वेत्यधियज्ञमथाधिदैवतंसोमंमन्यतेपपिवान्यत्संपिंषंत्योषधिमितियजुःसुतमसोममाहसोमंयंब्रह्माणोविदुश्चंद्रमसंनतस्याश्नातिकश्चनादेवइत्यथैषापराभवतिचंद्रमसोवैतस्यवा ॥ ४ ॥ यत्त्वादेवप्रपिबंतिततआप्यायसेपुनः । वायुःसोमस्यरक्षितासमानांमासआकृतिः । यत्त्वादेवप्रपिबंतिततआप्यायसेपुनरितिनाराशंसानभिप्रेत्यपूर्वपक्षापरपक्षावितिवावायुःसोमस्यरक्षितावायुमस्यरक्षितारमाहसाहचर्याद्रसहरणाद्वासमानांसंवत्सरणांमासआकृतिः

सोमोरूपविशेषैरोषधिश्चंद्रमावाचंद्रमाश्चायंद्रमतिचंद्रोमाताचांद्रंमानमस्येतिवाचंद्रश्चंदतेःकांतिकर्मणश्चंदनमित्यप्य
स्यभवतिचारुद्रमतिचिरंद्रमतिचमेर्वापूर्वंचारुरुचेर्विपरीतस्यतस्यैषाभवति ॥ ५ ॥ नवोनवोभवतिजायमानोऽह्नांके
तुरुषसामेत्यग्रं । भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः । नवोनवोभवतिजायमानइतिपूर्वपक्षादिमभि
प्रेत्याह्नांकेतुरुषसामेत्यग्रमित्यपरपक्षांतमभिप्रेत्यादित्यदैवतोद्वितीयःपादइत्येकेभागंदेवेभ्योविदधात्यायन्नित्यर्धमा
सेज्यामभिप्रेत्यंप्रवर्धयतेचंद्रमादीर्घमायुर्मृत्युर्मारयतीतिसतोमृतंच्यावयतीतिवाशतबलाक्षोमौद्गल्यस्तस्यैषाभवति
॥ ६ ॥ परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् । चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान् ।
परंमृत्योध्रुवंमृत्योध्रुवपरेहिमृत्योकथितंतेनमृत्योमृतंच्यावयतेभवतिमृत्योमदेर्वामुदेर्वातेषामेषाभवति ॥ ७ ॥ त्वेष
मित्थासमरणंशिमीवतोरिंद्राविष्णूसुतपावामुरुष्यति । यामर्त्यायप्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ।
इतिसानिगदव्याख्याताविश्वानरोव्याख्यातस्तस्यैषाभवति ॥ ८ ॥ प्रवोमहेमंदमानायांधसोऽर्चाविश्वानरायवि
श्वाभुवे । इंद्रस्ययस्यसुमखंसहोमहिश्रवोनृम्णंचरोदसीसपर्यतः । प्रार्चतयूयंस्तुतिंमहतेऽधसोऽन्नस्यदात्रेमंदमाना
यमोदमानायस्तूयमानायशब्दाय्यमानायेतिवाविश्वानरायसर्वविभूतायेंद्रस्ययस्यप्रीतौसुमहद्बलंमहच्चश्रवणीयंयशो
नृम्णंचबलंनृन्नतंद्यावापृथिव्यौवःपरिचरतइतिकमन्यंमध्यमादेवमवक्ष्यत्तस्यैषापराभवति ॥ ९ ॥ उदुज्योतिरमृतं

विश्वजंन्यंविश्वानंरःसवितादेवोअंश्रेत् । उदशिश्रियज्ज्योतिरमृतंसर्वजन्यंविश्वानरःसवितादेवइतिंधातासर्वस्यवि धातातस्यैषाभवति ॥ १० ॥ धातादंदातुदाशुषेप्राचींजीवातुमक्षितां । वयंदेवस्यधीमहिसुमतिंसत्यधर्मणः । धाता ददातुदत्तवतेंप्रवृद्धांजीविकामनुपक्षीणांवयंदेवस्यधीमहिसुमतिंकल्याणींमतिंसत्यधर्मणोविधाताधात्राव्याख्यातस्त स्यैषनिपातोभवतिंबहुदेवतायामृचि ॥ ११ ॥ सोमंस्यराज्ञोवरुणस्यधर्मंणिबृहस्पतेरनुंमत्याउशर्मंणि । तवाहमद्यमंघव न्नुपंस्तुतौधातर्विधातःकलशाँअभक्षयं । इत्येताभिर्देवताभिरभिप्रसूतःसोमकलशानभक्षयमितिंकलशःकस्मात्कलाअ स्मिञ्छेरतेमात्राःकलिश्चकलाश्चकिरतेर्विकीर्णामात्राः ॥ १२ ॥ अथातोमध्यस्थानादेवगणास्तेषांमरुतःप्रथमागामिनोभ वंतिमरुतोमितराविणोवामितरोचिनोवामहद्द्रवंतीतिवातेषामेषाभवति ॥ १३ ॥ आविद्युन्मंद्भिर्मरुतःस्वर्कैरथेंभिर्यात ऋष्टिमद्भिरश्वंपर्णैः । आवर्षिष्ठयानइषावयोनपप्तसुमायाः । विद्युन्मद्भिर्मरुतःस्वर्कैःस्वंचनैरितिवास्वर्चनैरितिवास्व र्चिभिरितिवारथैरायातऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेनचनोऽन्नेनवयइवापततसुमायाःकल्याणकर्माणोवाकल्या णप्रज्ञावारुद्राव्याख्यातास्तेषामेषाभवति ॥ १४ ॥ आरुद्रासइंद्रवंतःसजोषसोहिरंण्यरथाःसुवितायंगंतन । इयंवोअस्म त्प्रतिंहर्यतेमतिस्तृष्णजेनदिवउत्साउदन्यवे । आगच्छतरुद्राइंद्रेणसहजोषणाःसुवितायकर्मणइयंवोऽस्मदपिप्रतिकाम यतेमतिंस्तृष्णजइवदिवउत्साउदन्यवेतृष्णक्तृष्यतेरुदन्युरुदन्यतेरुभवउरुभांतीतिंवर्तेनभांतीतिंवर्तेनभवंतीतिवाते

षामेषाभवति ॥ १५ ॥ विष्ट्वीशमीतरणित्वेनवाघतोमर्तासःसंतोअमृतत्वमानशुः । सौधन्वनाऋभवःसूरचक्षसःसंव त्सरेसमपृच्यंतधीतिभिः । कृत्वाकर्माणिक्षिप्रत्वेनवोढारोमेधाविनोवामर्तासःसंतोऽमृतत्वमानशिरेसौधन्वनाऋभ वःसूरख्यानावासूरप्रज्ञावासंवत्सरेसमपृच्यंतधीतिभिःकर्मभिर्ऋभुर्विभ्वावाजइतिसुधन्वनआङ्गिरसस्यत्रयःपुत्रावभू वुस्तेषांप्रथमोत्तमाभ्यांबहुवन्निगमाभवंतिनमध्यमेनंतदेतदृभोश्चबहुवचनेनंचमसस्यचसंस्तवेनंबहूनिदशतयीषुसूक्ता निभवंत्यादित्यरश्मयोऽप्यृभवउच्यंते । अगोह्यस्ययदसस्तेनागृहेदुतद्येदमृभवोनानुगच्छथ । अगोह्यआदित्योऽगूह नीयस्तस्ययदस्वपथगृहेयावत्तत्रभवथनतावदिहभवथेत्यंगिरसोव्याख्यातास्तेषामेषाभवति ॥ १६ ॥ विरूपासइदृषं यस्तइद्गंभीरवेपसः । तेअङ्गिरसःसूनवस्तेअग्नेःपरिजज्ञिरे । बहुरूपाऋषयस्तेगंभीरकर्माणोवागंभीरप्रज्ञावातेऽङ्गिरसः पुत्रास्तेऽग्नेरधिजज्ञिरइत्यग्निजन्मपितरोव्याख्यातास्तेषामेषाभवति ॥ १७ ॥ उदीरतामवरउतपरासउन्मध्यमाःपित रःसोम्यासः । असुंयईयुरवृकाऋतज्ञास्तेनोऽवंतुपितरोहवेषु । उदीरतामवरउदीरतांपरउदीरतांमध्यमाःपितरःसो म्याःसोमसंपादिनस्तेऽसुंयेप्राणमन्वीयुरवृकाअनमित्राःसत्यज्ञावायज्ञज्ञावातेनआगच्छंतुपितरोह्वानेषुमाध्यमिकोय मइत्याहुस्तस्मान्माध्यमिकान्पितॄन्मन्यंतेऽगिरसोव्याख्याताःपितरोव्याख्याताभृगवोव्याख्याताअथर्वाणोऽथनवंत स्थर्वतिश्चरतिकर्मातत्प्रतिषेधस्तेषामेषसाधारणाभवति ॥ १८ ॥ अंगिरसोनःपितरोनवग्वाअथर्वाणोभृगवःसोम्या

॥ २३ ॥

सः । तेषांवयंसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम । अंगिरसोनःपितरोनवगतयोनवनीतगतयोवाथर्वाणोभृगवः सोम्याःसोमसंपादिनस्तेषांवयंसुमतौकल्याण्यांमतौयज्ञियानामपिचैषांभद्रेभंदनीयेभाजनवतिवाकल्याणेमनसिस्यामे तिमाध्यमिकोदेवगणइतिनैरुक्ताःपितरइत्याख्यानंमथाप्यृषयःस्तूयंते ॥ १९ ॥ सूर्यस्येववक्षथोज्योतिरेषांसमुद्रस्ये वमहिमागंभीरः । वातस्येवप्रजवोनान्येनस्तोमोवसिष्ठाअन्वेतवेवः । इतियथाआप्त्याआप्नोतेस्तेषामेषनिपातोभवत्यै न्द्र्यामृचि ॥ २० ॥ स्तुषेय्यंपुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानां । आदर्षतेशवसासप्तदानून्प्रसाक्षतेप्रतिमानानि भूरि । स्तोतव्यंबहुरूपमुरुभूतमीश्वरतममाप्तव्यमाप्तव्यनांमाद्दणातियःशवसाबलेनसप्तदातॄनितिवासप्तदानवा नितिवाप्रसाक्षतेप्रतिमानिबहूनिसाक्षतिराप्नोतिकर्मा ॥ २१ ॥ अथातोमध्यस्थानाःस्त्रियस्तासामदितिःप्रथमा गामिनीभवत्यदितिर्व्याख्यातातस्याएषाभवति ॥ २२ ॥ दक्षस्यवादितेजन्मनिव्रतेराजानामित्रावरुणाविवाससि । अतूर्तपंथाःपुरुरथोअर्यमासप्तहोताविषुरूपेषुजन्मसु । दक्षस्यवादितेजन्मनिव्रतेकर्मणिराजानौमित्रावरुणौपरिचर सिविवासतिःपरिचर्यायांहविष्माँआविवासतीत्याशास्तेर्वातूर्तपंथाअत्वरमाणपंथाबहुरथोऽर्यमादित्योऽरीन्नियच्छति सप्तहोतासप्तास्मैरश्मयोरसानभिसंनामयंतिसप्तैनमृषयःस्तुवंतीतिवाविषमरूपेषुजन्मसुकर्मसूदयेष्वादित्योदक्षइत्या हुरादित्यमध्येचस्तुतोऽदितिर्दाक्षायणी । अदितेर्दक्षोअजायतदक्षाद्वदितिःपरीतिचतत्कथमुपपद्येतसमानजन्मानौ

॥ २३ ॥

स्यातामित्यपिवादेवधर्मेणैतरेतरजन्मानौस्यातामितरेतरप्रकृतीअग्निरप्यदितिरुच्यतेतस्यैषाभवति ॥ २३ ॥ यस्मै त्वंसुद्रविणोददाशोऽनागास्त्वमदितेसर्वताता । यंभद्रेणशवसाचोदयासिप्रजावताराधसातेस्याम । यस्मैत्वंसुद्रविणो ददास्यनागास्त्वमनपराधत्वमदितेसर्वासुकर्मततिष्वागआङ्पूर्वाद्गमेरेनएतेःकिल्बिषंकिल्भिदंसुकृतकर्मणोभयंकीर्ति मस्यभिनत्तीतिवायंभद्रेणशवसाबलेनचोदयसिप्रजावताचराधसाधनेनतेवयमिहस्यामेतिसरमासरणात्तस्याएषाभव ति ॥ २४ ॥ किमिच्छंतीसरमाप्रेदमानड्दूरेह्यध्वाजगुरिःपराचैः । कास्मेहितिःकापरितक्म्यासीत्कथंरसायाअतरः पयांसि । किमिच्छंतीसरमेदंप्रानड्दूरेह्यध्वाजगुरिजंगम्यतेःपरांचनैरचितःकातेऽस्मास्वर्थहितिरासीत्किंपरितकनं परितक्म्यारात्रिःपरितएनांतक्मतक्मेत्युष्णनामतकतइतिसतःकथंरसायाअतरःपयांसीतिरसानदीरसतेःशब्दकर्म णःकथंरसानितान्युदकानीतिवादेवशुनींद्रेणप्रहितापणिभिरसुरैःसमूदइत्याख्यानंसरस्वतीव्याख्यातातस्याएषाभव ति ॥ २५ ॥ पावकानःसरस्वतीवाजेभिर्वाजिनीवती । यज्ञंवष्टुधियावसुः । पावकानःसरस्वत्यन्नैरन्नवतीयज्ञंवष्टुधि यावसुःकर्मवसुस्तस्याएषापराभवति ॥ २६ ॥ महोअर्णःसरस्वतीप्रचेतयतिकेतुना । धियोविश्वाविराजति । महदर्णः सरस्वतीप्रचेतयतिप्रज्ञापयतिकेतुनाकर्मणाप्रज्ञयावैमानिचसर्वाणिप्रज्ञानान्यभिविराजतिवागर्थेषुविधीयतेतस्मान्मा ध्यमिकांवाचंमन्यंतेवाग्व्याख्यातातस्याएषाभवति ॥ २७ ॥ यद्वाग्वदंत्यविचेतनानिराष्ट्रीदेवानांनिषसादमंद्रा ।

| निरुक्त | | उत्तरष. अ. ५ |
|---|---|---|
| ॥ २४ ॥ | चतंस्रऊर्जंदुदुहेपयांसिकंस्विदस्याःपरमंजगाम । यद्वाग्वदंत्यविचेतनान्यविज्ञातानिराष्ट्रीदेवानांनिषसादमंद्रामदनां च्चतस्रोऽनुदिशऊर्जंदुदुहेपयांसिकंस्विदस्याःपरमंजगामेतियत्पृथिवींगच्छतीतिवांयदादित्यरश्मयोहरंतीतिवातस्या एषापराभवति ॥ २८ ॥ देवींवाचंमजनयंतदेवास्तांविश्वरूपाःपशवोवदंति । सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुप सुष्टुतैतु । देवींवाचमजनयंतदेवास्तांसर्वरूपाःपशवोवदंतिव्यक्तवाचश्चाव्यक्तवाचश्चसानोमदनान्नंचरसंचदुहानांधे नुर्वागस्मानुपैतुसुष्टुतानुमतींराकेतिदेवपत्न्यावितिनैरुक्ताःपौर्णमास्यावितियाज्ञिकांयापूर्वापौर्णमासीसाऽनुमतिर्यो त्तरासाराकेतिविज्ञायतेऽनुमतिरनुमननात्तस्याएषाभवति ॥ २९ ॥ अन्विदनुमतेत्वंमन्यासैशंचनस्कृधि । क्रत्वेद क्षायनोहिनुप्रणआयूंषितारिषः । अनुमन्यस्वानुमतेत्वंसुखंचनःकुर्वन्नंचनोऽपत्यायधेहिप्रवर्धयचनआयूराकारातेर्दा नकर्मणस्तस्याएषाभवति ॥ ३० ॥ राकामहंसुहवांसुष्टुतीहुवेशृणोतुनःसुभगावोधतुत्मना । सीव्यत्वपःसूच्याच्छिद्यमा नयाददातुवीरंशतदायमुक्थ्यं । राकामहंसुह्वानांसुष्टुत्याह्वयेशृणोतुनःसुभगाबोधत्वात्मनासीव्यत्वपःप्रजननकर्मसू च्याच्छिद्यमानयासूचीसीव्यतेर्ददातुवीरंशतप्रदमुक्थ्यंवक्तव्यप्रशंसंसिनीवालीकुहूरितिदेवपत्न्यावितिनैरुक्ताअमा वास्येइतियाज्ञिकायापूर्वामावास्यासासिनीवालीयोत्तरासाकुहूरितिविज्ञायतेसिनीवालीसिनमन्नंभवतिसिनातिभूता निवालंपर्ववृणोतेस्तस्मिन्नन्नवतीवालिनीवावालेनैवास्यामणुत्वाच्चन्द्रमाःसेवितव्योभवतीतिवातस्याएषाभवति ॥ ३१ ॥ | ॥ २४ ॥ |

सिनीवालिपृथुष्टुकेयादेवानामसिस्वसा । जुषस्वहव्यमाहुतंप्रजांदेविदिदिड्ढिनः । सिनीवालिपृथुजघनैस्तुकस्त्याय
तेःसंघातःपृथुकेशस्तुकेपृथुस्तुकेवायात्वंदेवानामसिस्वसास्वसासुअसास्वेषुसीदतीतिवाजुषस्वहव्यमदनंप्रजांचदेवि
दिशनःकुहूर्गूहतेःक्वाभूदितिवाक्वसतीहूयतइतिवाक्काहुतंहविर्जुहोतीतिवातस्याएषाभवति ॥ ३२ ॥ कुहूमहंसुवृतं
विद्मनापसमस्मिन्यज्ञेसुहवांजोहवीमि । सानोददातुश्रवणंपितृणांतस्यैतेदेविहविषाविधेम । कुहूमहंसुकृतंविदितक
र्माणमस्मिन्यज्ञेसुह्वानामाह्वयेसानोददातुश्रवणंपितृणांपित्र्यंधनमितिवापित्र्यंयशइतिवातस्यैतेदेविहविषाविधेमेति
व्याख्यातंयमीव्याख्यातातस्याएषाभवति ॥ ३३ ॥ अन्यमूषुत्वंयम्यन्यउत्वांपरिष्वजातेलिबुजेववृक्षं । तस्यवात्वं
मनइच्छासवातवाधाकृणुष्वसंविदंसुभद्रां । अन्यमेवहित्वंयम्यन्यस्त्वांपरिष्वंक्ष्यतेलिबुजेववृक्षंतस्यवात्वंमनइच्छस
वातवाधानेनकुरुष्वसंविदंसुभद्रांकल्याणभद्रांयमीयमंचकमेतांप्रत्याचचक्षइत्याख्यानं ॥ ३४ ॥ उर्वशीव्याख्याता
तस्याएषाभवति ॥ ३५ ॥ विद्युन्नयापतन्तीदविद्योद्भरन्तीमेअप्याकाम्यानि । जनिष्टोअपोनर्यःसुजातःप्रोर्वशीति
रतदीर्घमायुः । विद्युदिवयापतंत्यद्योततहरंतीमेअप्याकाम्यान्युदकान्यंतरिक्षलोकस्ययदानूनमयंजायेताद्भ्योऽध्यय
इतिनर्योमनुष्योनृभ्योहितोनरापत्यमितिवासुजातःसुजाततरोऽथोर्वशीप्रवर्धयतेदीर्घमायुःपृथिवीव्याख्याताताःतस्याए
षाभवति ॥ ३६ ॥ बळित्थापर्वतानांखिद्रंबिभर्षिपृथिवि । प्रयाभूमिंप्रवत्वतिमह्नाजिनोषिमहिनि । सत्यंत्वंपर्वता

नांमेघानांखेदनंछेदनंभेदनंबलममुत्रधारयसिपृथिविप्रजिन्वसियाभूमिंप्रवणवर्तिमहत्त्वेनमहतीत्युदकवतीतिवैंद्राणीं
द्रस्यपत्नींतस्याएषाभवति ॥ ३७ ॥ इन्द्राणीमासुनारिंषुसुभगांमहमंश्रवं । नह्यस्याअपरंचनजरसामरंतेपतिर्विश्वं
स्मादिन्द्रउत्तरः । इन्द्राणीमासुनारिषुसुभगामहमश्रृणवंनह्यस्याअपरामपिसमांजरयाम्रियतेपतिःसर्वस्माद्यइंद्रउत्त
रस्तमेतद्ब्रूमंस्तस्याएषापराभवति ॥ ३८ ॥ नाहमिंद्राणिरारणसख्युर्वृषाकपेर्ऋते । यस्येदमप्यंहविःप्रियंदेवेषुगच्छं
तिविश्वस्मादिंद्रउत्तरः । नाहमिंद्राणिरमेसख्युर्वृषाकपेर्ऋतेयस्येदमप्यंहविरप्सुशृतमद्भिःसंस्कृतमितिवाप्रियंदेवेषु
निगच्छतिसर्वस्माद्यइंद्रउत्तरस्तमेतद्ब्रूमोगौरीरोचतेर्ज्वलतिकर्मणोऽयमपीतरोगौरोवर्णएतस्मादेवप्रशस्योभवतितस्या
एषाभवति ॥ ३९ ॥ गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी । अष्टापदीनवपदीबभूवुषीसहस्राक्षरा
परमेव्योमन् । गौरीनिर्मिमायसलिलानितक्षतीकुर्वत्येकपदीमध्यमेनद्विपदीमध्यमेनचादित्येनचचतुष्पदीदिग्भिरष्टा
पदीदिग्भिश्चावांतरदिग्भिश्चनवपदीदिग्भिश्चावांतरदिग्भिश्चादित्येनचसहस्राक्षराबहूदकापरमेव्यवनेतस्याएषापरा
भवति ॥ ४० ॥ तस्याःसमुद्राअधिविक्षरंतितेनजीवंतिप्रदिशश्चतस्रः । ततःक्षरत्यक्षरंतद्विश्वमुपजीवति । तस्याः
समुद्राअधिविक्षरंतिवर्षतिमेघास्तेनजीवंतिदिगाश्रयाणिभूतानिततःक्षरत्यक्षरमुदकंतत्सर्वाणिभूतान्युपजीवंतिगौ
र्व्याख्यातातस्याएषाभवति ॥ ४१ ॥ गौरमीमेदनुवत्संमिषंतंमूर्धानंहिङ्ङकृणोन्मातवाउ । सृक्काणंघर्ममभिवावशा

नामिमांतिमायुंपर्यंतेपयोभिः । गौरन्वमीमेद्वत्संनिमिषंतंमनिमिषंतमादित्यमितिवांमूर्धानमस्याभिहिङ्करोन्मनना
यंसृक्काणंसरणंघर्मंहरणंमभिवावशानांमिमातिमायुंप्रप्यायतेपयोभिर्मायुमिवादित्यमितिवांवागेषामाध्यमिकांघर्मधु
गितियाज्ञिकांधेनुर्धयतेर्वाधिनोतेर्वातस्याएषाभवति ॥ ४२ ॥ उपह्वयेसुदुघांधेनुमेतांसुहस्तोंगोधुगुतदोंहदेनां । श्रे
ष्ठंसवंसवितासांविषन्नोऽभींद्धोघर्मस्तदुषुप्रवोंचं । उपह्वयेसुदोहनांधेनुमेतांकल्याणहस्तोगोधुगपिचदोग्ध्येनांश्रेष्ठंसवं
सवितासुनोतुनइंत्येषहिश्रेष्ठःसर्वेषांसवानांयदुदकंयद्वापयोयजुष्मदभीद्धोघर्मस्तंसुप्रब्रवीमिवागेषामाध्यमिकांघर्मधु
गितियाज्ञिकांअघ्न्याहंतव्याभवत्यघघ्नीतिवांतस्याएषाभवति ॥ ४३ ॥ सूयवसाद्भगवतीहिभूयाअथोवयंभगवंतः
स्याम । अद्धितृणमघ्न्येविश्वदानींपिबंशुद्धमुदकमाचरंती । सुयवसादिनीभगवतीहिभवाथेदानींवयंभगवंतःस्यामं
द्धितृणमघ्न्येसर्वदापिबचशुद्धमुदकमाचरंतींतस्याएषापराभवति ॥ ४४ ॥ हिंकृण्वतीवसुपत्नीवसूनांवत्समिच्छंती
मनसाभ्यागांत् । दुहामश्विभ्यांपयोअघ्न्येयंसावर्धतांमहतेसौभगाय । इतिसानिगदव्याख्यातांपथ्यास्वस्तिःपंथाअं
तरिक्षंतन्निवासात्तस्याएषाभवति ॥ ४५ ॥ स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावाममेतिं । सानोअमासोअरणेनि
पातुस्वावेशाभवतुदेवगोपा । स्वस्तिरेवहिप्रपथेश्रेष्ठारेकणस्वतीधनवत्यभ्येतियावसूनिवननीयानिसानोऽमागृहेसानि
रमणेसानिर्गमनेपातुंस्वावेशाभवतुदेवीगोप्त्रीदेवान्गोपायत्वितिदेवाएनांगोपायंत्वितिवाषाव्याख्यातांतस्याएषाभ

वति ॥ ४६ ॥ अपोषाअनसःसरत्संपिष्टादहंबिभ्युषी । नियत्सींशिश्नथद्वृषा । अपासरदुषाअनसःसंपिष्टान्मेघाद्बिभ्युष्यनोवायुरनितेरपिवोपमार्थेस्यादनसइवशकटादिवानःशकटमानद्धमस्मिंश्चीवरंमनितेर्वास्याज्जीवनकर्मणउपजीवंत्येनन्मेघोऽप्यनएतस्मादेवयन्निरशिश्नथद्वृषावर्षितामध्यमस्तस्याएषापराभवति ॥ ४७ ॥ एतदस्याअनःशयेसुसंपिष्टंविपाश्या । ससारसींपरावतः । एतदस्याअनआशेतेसुसंपिष्टमितरदिवविपाशिविमुक्तपाशिससारोषाःपरावतःप्रेरितवतःपरागतांश्चेळाव्याख्यातातस्याएषाभवति ॥ ४८ ॥ अभिनइळायूथस्यमातास्मन्नदीभिरुर्वशीवागृणातु । उर्वशीवाबृहद्दिवागृणानाभ्यूर्ण्वानाप्रभृथस्यायोः । सिषक्तुनऊर्जव्यस्यपुष्टेः । अभिगृणातुनइळायूथस्यमातासर्वस्यमातास्मदभिनदीभिरुर्वशीवागृणातूर्वशीवाबृहदिवामहद्दिवागृणानाभ्यूर्ण्वानाप्रभृथस्यप्रभृतस्यायोरयनस्यमनुष्यस्यज्योतिषोवोदकस्यवासेवतांनोऽन्नस्यपुष्टेरोदसीरुद्रस्यपत्नीतस्याएषाभवति ॥ ४९ ॥ रथंनुमारुतंवयंश्रवस्युमाहुवामहे । आयस्मिन्तस्थौसुरणानिबिभ्रतीसचामरुत्सुरोदसी । रथंक्षिप्रंमारुतंमेघंवयंश्रवणीयमाह्वयामहआयस्मिन्तस्थौसुरमणीयान्युदकानिबिभ्रतीसचामरुद्भिःसहरोदसीरोदसी ॥ ५० ॥ ( श्येनोव्याख्यातआदायस्वादिष्ठयासोमंमन्यतेयत्त्वादेवनवोनवःपरंमृत्योत्वेषमित्थाप्रवोमहउदुज्योतिर्धाताददातुसोमस्यराज्ञोऽथातोमध्यस्थानादेवगणाआविद्युन्मद्भिरारुद्रासोविष्टीशमीविरूपासउदीरतामंगिरसोनःसूर्यस्येवस्तुषेय्यमथातोमध्यस्थानाःस्त्रियोदक्षस्यवा

यस्मैत्वंकिमिच्छंतीपावकानोमहोअर्णोयद्वाग्वदंतींदेवींवाचमन्विदनुमतेराकामहंसिनीवालिंकुहूमहमन्यमूपूर्वशींवि
द्युन्नबळित्थैंद्राणींनाहमिंद्राणिंगौरीर्मिमायतस्याःसमुद्रागौरमीमेदुपह्वयेसूयवसाद्धिकृण्वतीस्वस्तिरिच्छ्यपोषाएतद
स्याअभिनइळरथंनुपञ्चाशत् ) ॥ इतिनिरुक्तउत्तरषट्केपंचमोऽध्यायःसमाप्तः ॥ ५ ॥

ॐ ॥ अथातोद्युस्थानादेवतास्तासामश्विनौप्रथमागामिनौभवतोऽश्विनौयद्व्यश्नुवातेसर्वंरसेनान्योज्योतिषान्योऽ
श्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौद्यावापृथिव्यावित्येकेऽहोरात्रावित्येकेसूर्याचंद्रमसावित्येकेराजानौपुण्यकृता
वित्यैतिहासिकास्तयोःकालऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टंभमनुतमोभागोहिमध्यमोज्योतिर्भागआदित्यस्तयो
रेषाभवति ॥ १ ॥ वसातिषुस्मचरथोऽसितौपेत्वाविव । कुदेदमश्विनायुवमभिदेवाँअगच्छतं । इतिसानिगदव्या
ख्यातावसातिषुस्मचरथोवसातयोरातयोवसंतेस्माइतरेतरातयोवक्तेर्वावहतेर्वासितौपेत्वामिव । अपेत्वावृत्रहणंसुरा
तयोस्तयोःसमानकालयोःसमानकर्मणोःसंस्तुतप्राययोरसंस्तवेनैषोऽर्धर्चोभवतिवासात्योऽन्यउच्यतउषःपुत्रस्तवान्य
इतितयोरेषाभवति ॥ २ ॥ इहेहजातासमवावशीतामरेपसातन्वा३नामभिःस्वैः । जिष्णुर्वामन्यःसुमखस्यसूरिर्दि
वोअन्यःसुभगःपुत्रऊहे । इहचेहचजातौसंस्तूयेतेपापेनालिप्यमानयातन्वानामभिश्चस्वैर्जिष्णुर्वामन्यःसुमहतोबल
स्यैरयितामध्यमोदिवोऽन्यःसुभगःपुत्रऊह्यतआदित्यस्तयोरेषाभवति ॥ ३ ॥ प्रातर्युजाविबोधयाश्विनावेहगं

च्छतां । अस्यसोमस्यपीतये । प्रातर्योगिनौविबोधयाश्विनाविहागच्छतामस्यसोमस्यपानायतयोरेषापराभवति ॥ ४ ॥ प्रातर्यजध्वमश्विनाहिनोतनसायमस्तिदेवयाअजुष्टं । उतान्योअस्मद्यजतेविचावः पूर्वः पूर्वोयजमानोवनीयान् । प्रातर्यजध्वमश्विनौप्रहिणुतनसायमस्तिदेवेज्याअजुष्टमेतदप्यन्योऽस्मद्यजतेविचार्वः पूर्वः पूर्वोयजमानोवनीयान्वनयितृतमस्तयोः कालः सूर्योदयपर्यंतस्तस्मिन्नन्यादेवताओप्यंतउषावष्टेः कांतिकर्मणउच्छतेरितरामाध्यमिकातस्याएषाभवति ॥ ५ ॥ उषस्तच्चित्रमाभरास्मभ्यंवाजिनीवति । येनतोकंचतनयंचधामहे । उषस्तच्चित्रंचायनीयंमंहनीयंधनमाहरास्मभ्यमन्नवतियेनपुत्रांश्चपौत्रांश्चदधीमहितस्याएषापराभवति ॥ ६ ॥ एताउत्याउषसःकेतुमक्रतपूर्वेअर्धे रजसोभानुमंजते । निष्कृण्वानाआयुधानीवधृष्णवः प्रतिगावोऽरुषीर्यंतिमातरः । एतास्ताउषसःकेतुमकृषतप्रज्ञानमेकस्याएवंपूजनार्थेबहुवचनंस्यात्पूर्वेऽर्धेऽन्तरिक्षलोकस्यसमंजतेभानुनां । निष्कृण्वानाआयुधानीवधृष्णवः । नि रित्येषसमित्येतस्यस्थानेएमीदेषांनिष्कृतंजारिणीवेत्यपिनिगमोभवतिप्रतियंतिगावोगमनादरुषीरारोचनान्मातरोभासोनिर्मात्र्यः सूर्यासूर्यस्यपत्न्येषैवाभिसृष्टकालतमातस्याएषाभवति ॥ ७ ॥ सुकिंशुकंशल्मलिंविश्वरूपंहिरण्यवर्णंसुवृतंसुचक्रं । आरोहसूर्येअमृतस्यलोकंस्योनंपत्यैवहतुंकृणुष्व । सुकाशनंशन्नमलंसर्वरूपमपिवोपमार्थेस्यात्सुकिंशुक



सिवशल्मलिमितिकिंशुकंक्रंशतेः प्रकाशयतिकर्मणःशल्मलिः सुशरोभवतिशरवान्वारोहसूर्येअमृतस्यलोकमुदकस्यसु

खंपत्येवहतुंकुरुष्वंसवितासूर्याप्रायच्छंत्सोमायराज्ञेप्रजापतयेवेतिचब्राह्मणंवृषाकपायीवृषाकपेःपत्यैषैवाभिसृष्टकाल
तमातस्याएषाभवति ॥ ८ ॥ वृषाकपायिरेवतिसुपुत्रआदुसुस्नुषे । घसत्तइंद्रउक्षणःप्रियंकाचित्करंहविर्विश्वस्मादिं
द्रउत्तरः । वृषाकपायिरेवतिसुपुत्रेमध्यमेनसुस्नुषेमाध्यमिकयावाचास्नुषासाधुसादिनीतिवासाधुसानिनीतिवास्वप
त्यंतत्सनोतीतिवाप्राश्नातुतइंद्रउक्षणएतान्माध्यमिकान्संस्त्यायानुक्षणउक्षतेर्वृद्धिकर्मणउक्षंत्युदकेनेतिवाप्रियंकुरु
ष्वसुखाचयकरंहविःसुखकरंहविःसर्वस्माद्यइन्द्रउत्तरस्तमेतद्ब्रूमआदित्यंसरण्यूःसरणात्तस्याएषाभवति ॥ ९ ॥ अपागू
हन्नमृतांमर्त्यैभ्यःकृत्वीसवर्णामददुर्विवस्वते । उताश्विनावभरद्यत्तदासीदजहादुद्वामिथुनासरण्यूः । अप्यगूहन्नमृ
तांमर्त्येभ्यःकृत्वीसवर्णामददुर्विवस्वतेऽप्यश्विनावभरद्यत्तदासीदजहाद्द्वौमिथुनौसरण्यूर्मध्यमंचमाध्यमिकांचवाच
मितिनैरुक्तायमंचयमींचेत्यैतिहासिकास्तत्रेतिहासमाचक्षतेत्वाष्ट्रीसरण्यूर्विवस्वतआदित्याद्यमौमिथुनौजनयांचकार
सासवर्णामन्यांप्रतिनिधायाश्वंरूपंकृत्वाप्रदुद्रावसविवस्वानादित्यआश्वमेवरूपंकृत्वातामनुसृत्यसंबभूवततोऽश्विनौ
जज्ञातेसवर्णायांमनुस्तदभिवादिन्येषर्ग्भवति ॥ १० ॥ त्वष्टादुहित्रेवहतुंकृणोतीतीदंविश्वंभुवनंसमेति । यमस्यमा
तापर्युह्यमानामहोजायाविवस्वतोननाश । त्वष्टादुहितुर्वहनंकरोतीतीदंविश्वंभुवनंसमेतीमानिचसर्वाणिभूतान्यभि
समागच्छंतियमस्यमातापर्युह्यमानामहतोजायाविवस्वतोननाशरात्रिरादित्यस्यादित्योदयेऽतर्धीयते ॥ ११ ॥ सवि

ताव्याख्यातंस्तस्यकालोयद्राद्यौरपहततमस्काकीर्णरश्मिर्भवतितस्यैषाभवति ॥ १२ ॥ विश्वारूपाणिप्रतिमुञ्चतेक
विःप्रासावीद्भद्रंद्विपदेचतुष्पदे । विनाकमख्यत्सवितावरेण्योऽनुप्रयाणमुषसोविराजति । सर्वाणिप्रज्ञानानिप्रतिमुं
चतेमेधावीकविःक्रांतदर्शनोभवतिकवतेर्वाप्रसुवतिभद्रंद्विपाद्भ्यश्चतुष्पाद्भ्यश्चव्यचिख्यपन्नाकंसवितावरणीयःप्रया
णमनूषसोविराजत्यधोरामःसावित्रइतिपशुसमाम्नायेविज्ञायतेकस्मात्सामान्यादित्यधस्तात्तद्वेळायांतमोभवत्येतस्मा
त्सामान्यादधस्ताद्रामोऽधस्तात्कृष्णःकस्मात्सामान्यादित्यग्निंचित्वानरामामुपेयाद्रामारमणायोपेयतेनधर्मायकृष्ण
जातीयैतस्मात्सामान्यात्कृकवाकुःसावित्रइतिपशुसमाम्नायेविज्ञायतेकस्मात्सामान्यादितिकालानुवादंपरीत्यकृकवा
कोःपूर्वंशब्दानुकरणंवचेरुत्तरंभगोव्याख्यातस्तस्यकालःप्रागुत्सर्पणात्तस्यैषाभवति ॥ १३ ॥ प्रातर्जितंभगमुग्रंहुवेम
वयंपुत्रमदितेर्योविधर्ता । आध्रश्चिद्यंमन्यमानस्तुरश्चिद्राजाचिद्यंभगंभक्षीत्याह । प्रातर्जितंभगमुग्रंह्वयेमवयंपुत्रमदि
तेर्योविधारयितासर्वस्याध्रश्चिद्यंमन्यमानंआढ्यालुर्दरिद्रस्तुरश्चित्तुरइतियमनामंतरतेर्वात्वरतेर्वात्वरयातूर्णगतिर्यमो
राजाचिद्यंभगंभक्षीत्याहांधोभगइत्याहुरनुत्सृप्तोनदृश्यतेप्राशित्रमस्याक्षिणीनिर्जघानेतिचब्राह्मणंजनंभगोगच्छतीति
वांजनंगच्छत्यादित्यउदयेनसूर्यःसर्तेर्वासुवतेर्वास्वीर्यतेर्वातस्यैषाभवति ॥१४॥ उदुत्यंजातवेदसंदेवंवहंतिकेतवः । दृशे
विश्वायसूर्यं । उद्वहंतितंजातवेदसंरश्मयःकेतवःसर्वेषांभूतानांदर्शनायसूर्यमितिकमन्यमादित्यादेवमवक्ष्यत्तस्यैषापरा

भवति ॥ १५ ॥ चित्रंदेवानामुदंगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः । आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्त
स्थुषश्च । चायनीयंदेवानामुदगमदनीकंख्यानंमित्रस्यवरुणस्याग्नेश्चापूपुरद्द्यावापृथिव्यौचांतरिक्षंचमहत्त्वेनतेनसू
र्यआत्माजंगमस्यचस्थावरस्यचाथयद्रश्मिपोषंपुष्यतितत्पूषाभवतितस्यैषाभवति ॥ १६ ॥ शुक्रंतेअन्यद्यजतंतेअन्य
द्विषुरूपेअहनीद्यौरिवासि । विश्वाहिमायाअवसिस्वधावोभद्रातेपूषन्निहरातिरस्तु । शुक्रंतेअन्यल्लोहितंतेअन्यद्य
जतंतेअन्यद्यज्ञियंतेअन्यद्विषमरूपेतेअहनीकर्मद्यौरिवचासिसर्वाणिप्रज्ञानान्यवस्यन्नवन्भाजनवतीतेपूषन्निहदत्तिर
स्तुतस्यैषापराभवति ॥ १७ ॥ पथस्पथःपरिपतिंवचस्याकामेनकृतोअभ्यानळर्कं । सनोरासच्छुरुधश्चन्द्राग्राधियं
धियंसीषधातिप्रपूषा । पथस्पथोऽधिपतिंवचनेनकामेनकृतोऽभ्यानळर्कमभ्यापन्नोऽर्कमितिवासनोददातुचायनी
याग्राणिधनानिकर्मकर्मचनःप्रसाधयतुपूषेत्यथयद्विषितोभवतितद्विष्णुर्भवतिविष्णुर्विशतेर्वाव्यश्नोतेर्वातस्यैषाभव
ति ॥ १८ ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं । समूळ्हमस्यपांसुरे । यदिदंकिंचतद्विक्रमतेविष्णुस्त्रिधानिधत्तेपदं
त्रेधाभावायपृथिव्यामंतरिक्षेदिवीतिशाकपूणिःसमारोहणेविष्णुपदेगयशिरसीत्यौर्णवाभःसमूळ्हमस्यपांसुरेप्यायनेऽ
न्तरिक्षेपदंनदृश्यतेऽपिवोपमार्थेस्यात्समूळ्हमस्यपांसुलइवपदंनदृश्यतइतिपांसवःपादैःसूयंतइतिवापन्नाःशेरतइतिवा
पसंनीयाभवंतीतिवा ॥ १९ ॥ विश्वानरस्याख्यातस्तस्यैषनिपातोभवत्यैन्द्राग्नामृचि ॥ २० ॥ विश्वानरस्यवस्प

तिमनांनतस्यशवंसः । एवैश्चचर्षणीनामूतीहुंवेरथानां । विश्वानरस्यादित्यस्यांनानतस्यशवसोमहतोबलस्यैवैश्वकामै
रयनैरवनैर्वाचर्षणीनांमनुष्याणामूत्याचपथारथानांमिंद्रमस्मिन्यज्ञेह्वयामिंवरुणोव्याख्यातंस्तस्यैषाभवति ॥ २१ ॥
येनांपावकुचक्षंसाभुरण्यंतंजनाँअनुं । त्वंवंरुणपश्यंसि । भुरण्युरितिक्षिप्रनामंभुरण्युःशकुर्निर्भूरिमध्वानंनयतिंस्व
र्गस्यलोकस्यापिवोढांतत्संपातीभुरण्युंरनेनपावकख्यानेन । भुरण्यंतंजनाँअनुं । त्वंवंरुणपश्यंसि । तत्तेवयंस्तुमइ
तिवाक्यशेषोंऽपिवोत्तरस्यां ॥ २२ ॥ येनांपावकुचक्षंसाभुरण्यंतंजनाँअनुं । त्वंवंरुणपश्यंसि । विद्यामैंषिरजंस्पृ
थ्वहामिमांनोअक्तुभिंः । पश्यन्जन्मांनिसूर्य । व्येषिद्यांरजश्चपृथुंमहांतंलोकंमहानिचमिमानोक्तुभीरात्रिभिःसहपश्य
न्जन्मानिजातानिंसूर्यापिवापूर्वस्यां ॥ २३ ॥ येनांपावकुचक्षंसाभुरण्यंतंजनाँअनुं । त्वंवंरुणपश्यंसि । प्रत्यङ्देवानां
विशंःप्रत्यङ्ङुदेंषिमानुंषान् । प्रत्यङ्विश्वंस्वंर्दृशे । प्रत्यङ्ङिदंसर्वमुदेषिंप्रत्यङ्ङिदंज्योतिरुच्यतेंप्रत्यङ्ङिदंसर्वमभिविपश्य
सींत्यपिवैतस्यामेव ॥ २४ ॥ येनांपावकुचक्षंसाभुरण्यन्तंजनाँअनुं । त्वंवंरुणपश्यंसि । तेननोजनानभिविपश्यसिंके
शीकेशारश्मयंस्तैस्तद्वान्भवतिंकाशनाद्वाप्रकाशनाद्वांतस्यैषाभवति ॥ २५ ॥ केश्य१ग्निंकेशीविषंकेशीर्बिभर्तिरोदंसी ।
केशीविश्वंस्वंर्दृशेकेशीदंज्योतिंरुच्यते । केश्यग्निंचविषंचंविषमित्युदकनामंविष्णातेर्विंपूर्वस्यंस्नातेःशुद्ध्यर्थस्यंविपूर्वस्य
वासचतेंद्यावापृथिव्यौचधारयतिंकेशीदंसर्वमिदमभिविपश्यतिंकेशीदंज्योतिरुच्यतइत्यादित्यमाहाथाप्येतेइतरेज्यो

तिर्षीकेशिनीउच्येतैधूमेनाग्नीरजसाचमध्यमस्तेषामेषासाधारणाभवति ॥ २६ ॥ त्र्यःकेशिनंऋतुथाविचक्षतेसंवत्सरेवं
पतएकंएषां । विश्वमेकोअभिचष्टेशचीभिर्भ्राजिरेकस्यददृशेनरूपं । त्रयःकेशिनऋतुथाविचक्षतेंकालेकालेऽभिविप
श्यंतिसंवत्सरेवपतएकएषामित्यग्निःपृथिवींदहतिसर्वमेकोऽभिविपश्यतिकर्मभिरादित्योगतिरेकस्यदृश्यतेनरूपंमध्य
मस्यांथयद्रश्मिभिरभिप्रकम्पयन्नेतितद्वृषाकपिर्भवतिवृषाकम्पनस्तस्यैषाभवति ॥ २७ ॥ पुनरेहिवृषाकपेसुविताकल्प
यावहै । यएषःस्वप्ननंशनोऽस्तमेषिपथापुनर्विश्वस्मादिंद्रउत्तरः । पुनरेहिवृषाकपेसुप्रसूतानिवःकर्माणिकल्पयावहैय
एषःस्वप्ननंशनःस्वप्नान्नाशयस्यादित्यउदयेनसोऽस्तमेषिपथापुनःसर्वस्माद्यइंद्रउत्तरस्तमेतद्भूमआदित्यंयमोव्याख्यातं
स्तस्यैषाभवति ॥ २८ ॥ यस्मिन्वृक्षेसुपलाशेदेवैःसंपिबतेयमः । अत्रानोविश्पतिःपितापुराणाँअनुवेनति । यस्मिन्वृ
क्षेसुपलाशेस्थानेवृतःक्षयेवापिवोपमार्थेस्याद्वृक्षइवसुपलाशइतिवृक्षोव्रश्चनात्पलाशंपलाशनाद्देवैःसंगच्छतेयमोरश्मि
भिरादित्यस्तत्रनःसर्वस्यपातावापालयितावापुराणाननुकामयेताजएकपादजनएकःपादएकेनपादेनपातीतिवैकेनपा
देनपिबतीतिवैकोऽस्यपादइतिवा । एकंपादंनोत्खिदतीत्यपिनिगमोभवतितस्यैषनिपातोभवतिवैश्वदेव्यामृचि
॥ २९ ॥ पावीरवीतन्यतुरेकपादजोदिवोधर्तासिंधुरापःसमुद्रियः । विश्वेदेवासःशृणवन्वचांसिमेसरस्वतीसह
धीभिःपुरंध्या । पविःशल्योभवतियद्विपुनातिकायंतद्वत्पवीरमायुधंतद्वानिंद्रःपवीरवान् । अतितस्यैपवीरवानित्य

॥ ३० ॥

पिनिगमोभवतितद्देवतावाक्पावीरवीपावीरवीचदिव्यावाक्तन्यतुस्तनित्रीवाचोऽन्यस्यांअजश्चैकपाद्दिवोधारयिता सिन्धुश्चापश्चसमुद्रियाश्चसर्वेचदेवाःसरस्वतीचसहपुरन्ध्यास्तुत्याप्रयुक्तानिधीभिःकर्मभिर्युक्तानिशृण्वंतुवचनानीमा नीतिपृथिवीव्याख्यातातस्याएषनिपातोभवत्यैंद्राग्न्यामृचि ॥ ३० ॥ यदिंद्राग्नीपरमस्यांपृथिव्यांमध्यमस्यांमवम स्यांमुतस्थः। अतःपरिवृषणावाहियातमथासोमस्यपिबतंसुतस्य । इतिसानिगदव्याख्यातासमुद्रोव्याख्यातस्तस्यैष निपातोभवतिपावमान्यामृचि ॥ ३१ ॥ पवित्रवंतःपरिवाचमासतेपितैषांप्रत्नोअभिरक्षतिव्रतं । महःसमुद्रंवरुण स्तिरोदधेधीराइच्छेकुर्धरुणेष्वारभं । पवित्रवंतोरश्मिवंतोमाध्यमिकादेवगणाःपर्यासतेमाध्यमिकांवाचंपितैषांप्रत्नः पुराणोऽभिरक्षतिव्रतंकर्ममहःसमुद्रंवरुणस्तिरोऽतर्दधात्यथधीराःशक्नुवंतिधरुणेषूदकेषुकर्मणआरंभमारब्धुमजएक पाद्व्याख्यातःपृथिवीव्याख्यातासमुद्रोव्याख्यातस्तेषामेषनिपातोभवत्यपरस्यांबहुदेवतायामृचि ॥ ३२ ॥ उतनोऽ हिर्बुध्न्यःशृणोत्वजएकपात्पृथिवीसमुद्रः। विश्वेदेवाऋतावृधोहुवानाःस्तुतामंत्राःकविशस्ताअवंतु । अपिचनोऽहि र्बुध्न्यःशृणोत्वजश्चैकपात्पृथिवीचसमुद्रश्चसर्वेचदेवाःसत्यवृधोवायज्ञवृधोवाहूयमानामंत्रैःस्तुतामंत्राःकविशस्ताअवंतु मेधाविशस्तादध्यङ्प्रत्यक्तोध्यानमितिवाप्रत्यक्तमस्मिन्ध्यानमितिवाथर्वाव्याख्यातोमनुर्मननात्तेषामेषनिपातोभवत्यैं द्र्यामृचि ॥ ३३ ॥ यामथर्वामनुष्पितादध्यङ्धियमत्नत । तस्मिन्ब्रह्माणिपूर्वथैंद्रउक्थासमग्मतार्चन्ननुस्वराज्यं।

॥ ३० ॥

यामथर्वाचमनुश्चपितामानवानांदध्यङ्चधियमतनिषतंतस्मिन्ब्रह्माणिकर्माणिपूर्वैन्द्रउक्थानिचसंगच्छंतांमर्चन्योऽ
नूपास्तेस्वाराज्यं ॥ ३४ ॥ अथातोद्युस्थानादेवगणास्तेषामादित्याःप्रथमागामिनोभवंत्यादित्याव्याख्यातास्तेषामेषाभ
वति ॥ ३५ ॥ इमागिरआदित्येभ्योघृतस्नूःसनाद्राजभ्योजुह्वाजुहोमि । शृणोतुमित्रोअर्यमाभगोनस्तुविजातोवरु
णोदक्षोअंशः । घृतस्नूर्घृतप्रस्नाविन्यौघृतप्रस्नाविण्योघृतसानिन्यौघृतसारिण्यइतिवाहुतीरादित्येभ्यश्चिरंजुह्वाजुहो
मिचिरंराजभ्यइतिवाशृणोतुनइमागिरोमित्रश्चार्यमाचभगश्चबहुजातश्चधातादक्षोवरुणोऽशश्चांशोऽशुनाव्याख्यातः
सप्तऋषयोव्याख्यातास्तेषामेषाभवति ॥ ३६ ॥ सप्तऋषयःप्रतिहिताःशरीरेसप्तरक्षंतिसदमप्रमादं । सप्तापःस्वपतो
लोकमीयुस्तत्रजागृतोअस्वप्नजौसत्रसदौचदेवौ । सप्तऋषयःप्रतिहिताःशरीरेरश्मयआदित्येसप्तरक्षंतिसदमप्रमादंसं
वत्सरमप्रमाद्यन्तंःसप्तापनास्तएवस्वपतोलोकमस्तमितमादित्यंयन्तितत्रजागृतोऽस्वप्नजौसत्रसदौचदेवौवाय्वादित्या
वित्यधिदैवतमथाध्यात्मंसप्तऋषयःप्रतिहिताःशरीरेषळिंद्रियाणिविद्यासप्तम्यात्मनिसप्तरक्षंतिसदमप्रमादंशरीरमप्र
माद्यन्तिसप्तापनानीमान्येवस्वपतोलोकमस्तमितमात्मानंयंतितत्रजागृतोऽस्वप्नजौसत्रसदौचदेवौप्राज्ञश्चात्मातैजस
श्चेत्यात्मगतिमाचष्टेतेषामेषापराभवति ॥ ३७ ॥ तिर्यग्बिलश्चमसऊर्ध्वबुध्नोयस्मिन्यशोनिहितंविश्वरूपं । अत्रासत
ऋषयःसप्तसाकंयेअस्यगोपामहतोबभूवुः । तिर्यग्बिलश्चमसऊर्ध्वबंधनऊर्ध्वबोधनोवायस्मिन्यशोनिहितंसर्वरूपंमत्रा

॥ ३१ ॥

सतऋषयः सप्तसहादित्यरश्मयोयेअस्यगोपामहतोबभूवुरित्यधिदैवतमथाध्यात्मंतिर्यग्बिलश्चमसऊर्ध्वबंधनऊर्ध्वबो धनोवायस्मिन्यशोनिहितंसर्वरूपमत्रासतऋषयः सप्तसहेंद्रियाणियान्यस्यगोप्तॄणिमहतोबभूवुरित्यात्मगतिमाचष्टेदेवा व्याख्यातास्तेषामेषाभवति ॥ ३८ ॥ देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्ततां । देवानांसख्यमुप सेदिमावयंदेवानआयुःप्रतिरंतुजीवसे । देवानांवयंकल्याण्यांमतावृजुगामिनामृतुगामिनामितिवादेवानांदानमभि नोनिवर्ततांदेवानांसख्यमुपसीदेमवयंदेवानआयुःप्रवर्धयंतुचिरंजीवनायविश्वेदेवाःसर्वेदेवास्तेषामेषाभवति ॥ ३९ ॥ ओमासश्चर्षणीधृतोविश्वेदेवासआगत । दाश्वांसोदाशुषःसुतं । अवितारोवावनीयावामनुष्यधृतःसर्वेचदेवाइहाग च्छतदत्तवंतोदत्तवतःसुतमितितदेतदेकमेवंवैश्वदेवंगायत्रंतृचंदशतयीषुविद्यतेयत्तुकिंचिद्बहुदैवतंतद्वैश्वदेवानांस्था नेयुज्यतेयदेवविश्वलिंगमितिशाकपूणिरनत्यंतगतस्त्वेषउद्देशोभवतिबभ्रुरेकइतिदशद्विपदाअलिंगाभूतांशःकाश्यप आश्विनमेकलिंगमभितष्टीयंसूक्तमेकलिंगंसाध्यादेवाःसाधनास्तेषामेषाभवति ॥ ४० ॥ यज्ञेनयज्ञमयजंतदेवास्ता निधर्माणिप्रथमान्यासन् । तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः । यज्ञेनयज्ञमयजंतदेवाअग्निनाग्निमय जंतदेवाअग्निःपशुरासीत्तमालभंततेनायजंतेतिचब्राह्मणं । तानिधर्माणिप्रथमान्यासन् । तेहनाकंमहिमानःसमसेवं तयत्रपूर्वेसाध्याःसंतिदेवाःसाधनाद्युस्थानोदेवगणइतिनैरुक्ताःपूर्वंदेवयुगमित्याख्यानंवसवोयद्विवसतेसर्वमग्निर्वसु

॥ ३१ ॥

भिर्वासवइतिसमाख्यांतस्मात्पृथिवीस्थानांइंद्रोवसुभिर्वासवइतिसमाख्यांतस्मान्मध्यस्थानांवसवआदित्यरश्मयोवि
वासनांत्तस्माद्द्युस्थानांस्तेषामेषाभवति ॥ ४१ ॥ सुगावोदेवाःसदनमकर्मयआजग्मुःसवनमिदंजुषाणाः । जक्षिवां
सःपपिवांसश्चविश्वेऽस्मेधत्तवसवोवसूनि । स्वागमनानिवोदेवाःसुपथान्यकर्मयआगच्छतसवनानीमानिजुषाणाःखा
दितवंतःपीतवंतश्चसर्वेऽस्मासुधत्तवसवोवसूनितेषामेषापराभवति ॥ ४२ ॥ ज्मयाअत्रवसवोरंतदेवाउरावंतरि
क्षेमर्जयंतशुभ्राः । अर्वाक्पथउरुज्रयःकृणुध्वंश्रोतादूतस्यजग्मुषोनोअस्य । ज्मयाअत्रवसवोऽरमन्तदेवाज्मापृथि
वीतस्यांभवाउरौचान्तरिक्षेमर्जयन्तंगमयन्तरमयन्तशुभ्राःशोभमानाअर्वाचएनान्पथोबहुजवाःकुरुध्वंशृणुतदूतस्य
जग्मुषोनोऽस्याग्नेर्वाजिनोव्याख्यातास्तेषामेषाभवति ॥ ४३ ॥ शंनोभवन्तुवाजिनोहवेषुदेवतातामितद्रवःस्वर्काः ।
जंभयंतोऽहिंवृकंरक्षांसिसनेम्यस्मद्युयवन्नमीवाः । सुखानोभवन्तुवाजिनोह्वानेषुदेवतातौयज्ञेवितद्रवःसुमितद्रवःस्व
र्काःस्वंचनाइतिवास्वर्चनाइतिवास्वार्चिषइतिवाजम्भयंतोऽहिंचवृकंचरक्षांसिचक्षिप्रमस्मद्यावयन्त्वमीवादेवाश्वाइति
वादेवपत्न्योदेवानांपत्न्यस्तासामेषाभवति ॥ ४४ ॥ देवानांपत्नीरुशतीरवंतुनःप्रावन्तुनस्तुजयेवाजसातये । याःपा
र्थिवासोयाअपामपिव्रतेतानोदेवीःसुहवाःशर्मयच्छत । देवानांपत्न्यउशत्योऽवंतुनःप्रावंतुनस्तुजयेऽपत्यजननायचा
न्नसंसननायचवाःपार्थिवासोयाअपामपिव्रतेकर्माणितानोदेव्यःसुहवाःशर्मयच्छन्तुशरणंतासामेषापराभवति ॥ ४५ ॥

॥ ३२ ॥

उतग्नाव्यंतुदेवपत्नीरिंद्राण्य१ग्नाय्य्श्विनीराट् । आरोदसीवरुणानीशृणोतुव्यंतुदेवीर्यऽऋतुर्जनीनां । अपिचग्नाव्यंतु देवपत्न्यइन्द्राणींद्रस्यपत्न्यग्नाय्यग्नेःपत्न्यश्विन्यश्विनोःपत्नीराड्राजतेरोदसीरुद्रस्यपत्नीवरुणानीचवरुणस्यपत्नीव्यंतुदे व्यःकामयंतांयऋतुःकालोजायानांयऋतुःकालोजायानां ॥ ४६ ॥ ( अथातोद्युस्थानावसातिषुस्मेहेहजाताप्रातर्युजा प्रातर्यजध्वमुषस्तच्चित्रमेताउत्याःसुकिंशुकंवृषाकपाय्यपागूहंस्त्वष्टादुहित्रेसवितविश्वारूपाणिप्रातर्जितमुदुत्यंचित्रं शुक्रंतेपथस्पथइदंविष्णुर्विंश्वानरोव्याख्यातौविश्वानरस्ययेनापावकेतिचतुष्कंकेश्यग्निंत्रयःकेशिनःपुनरेहिंयस्मिन्वृक्षे पावीरवींयदिंद्राग्नीपवित्रवंतउतनोहिर्यामथर्वाथातोद्युस्थानादेवगणाइमागिरःसप्तऋषयस्तिर्यग्बिलोदेवानांभद्रामासो यज्ञेनसुगावोदेवाज्मयाअत्रशंनोभवंतुदेवानांपत्नीरुतग्नाव्यंतुषट्चत्वारिंशत् ) ॥ इतिनिरुक्तउत्तरषट्केषष्ठोऽध्यायः ६

## ॥ अथपरिशिष्टम् ॥

ॐ ॥ अथेमाअतिस्तुतयइत्याचक्षतेऽपिवासंप्रत्ययएवस्यान्माहाभाग्याद्देवतायाःसोऽग्निमेवप्रथमंमाहत्वमग्नेद्यु भिस्त्वमाशुशुक्षणिरितियथैतस्मिन्त्सूक्तेनहित्वदारेनिमिषश्चनेशइतिवरुणस्याथैषेंद्रस्य ॥ १ ॥ यद्द्यावइंद्रतेशतंशतं भूमीरुतस्युः । नत्वावज्रिन्त्सहस्रंसूर्याअनुनजातमष्टरोदसी । यदितइंद्रशतंदिवःशतंभूमयःप्रतिमानानिस्युर्नत्वाव

॥ ३२ ॥

त्रिन्त्सहस्रमपिसूर्यांनद्यावापृथिव्यावप्यभ्यश्नुवीतामित्यथैषादित्यस्य ॥ २ ॥ यदुदंचोवृषाकपेगृहमिंद्राजंगंतन ।
क्व१स्यपुल्वघोमृगःकमगंजनयोपनोविश्वस्मादिंद्रउत्तरः । यदुदंचोवृषाकपेगृहमिंद्राजगमतंक्वस्यपुल्वघोमृगःक्वसव
ह्वादीमृगोमृगोमार्ष्टेर्गतिकर्मणःकमगमद्देशंजनयोपनःसर्वस्माद्यइंद्रउत्तरस्तमेतद्ब्रूमआदित्यमथैषादित्यरश्मीनां ॥३॥
विहिसोतोरसृक्षतनेंद्रंदेवममंसत । यत्राम्दद्वृषाकपिर्यःपुष्टेषुमत्सखाविश्वस्मादिंद्रउत्तरः । व्यसृक्षतहिप्रसवायन
चेंद्रंदेवममंसतंयत्रामाद्यद्वृषाकपिर्यईश्वरःपुष्टेषुपोषेषुमत्सखाममसखामदनसखायेनःसखायस्तैःसहेतिवासर्वस्माद्य
इंद्रउत्तरस्तमेतद्ब्रूमआदित्यमथैषाश्विनोः॥४॥ सृण्येवजर्भरीतुर्फरीतूनैतोशेवतुर्फरीपर्फरीका । उदन्यजेवजेमनामदेरू
तामेजराय्वजरंमरायु । सृण्येवेतिद्विविधासृणिर्भवतिभर्ताचहंताचतथाश्विनौचापिभर्तारौजर्भरीभर्ताराविल्यथैस्तुर्फ
रीतूहंतारौ । नैतोशेवतुर्फरीपर्फरीका । नितोशस्यापत्यंनैतोशंनैतोशेवतुर्फरीक्षिप्रहन्तारौ । उदन्यजेवजेमनामदेरू ।
उदन्यजेवेत्युदकजेइवरत्नेसामुद्रेचान्द्रमसेवाजेमनेजयमनेजेमनामदेरू । तामेजराय्वजरंमरायु । एतज्जरायुजंश
रीरंशरदमजीर्णमथैषासोमस्य ॥ ५ ॥ तरत्समन्दीधावतिधारासुतस्यांधसः । तरत्समंदीधावति । तरतिसपापंसर्व
मंदीयःस्तौतिधावतिगच्छत्यूर्ध्वांगतिं । धारासुतस्यांधसः । धारयाभिषुतस्यसोमस्यमंत्रपूतस्यवाचास्तुतस्याथैषा
यज्ञस्य ॥ ६ ॥ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य । त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआ

विवेश । चत्वारिशृंगेतिवेदावाएतउक्तास्त्रयोऽस्यपादाइतिसवनानित्रीणिद्वेशीर्षेप्रायणीयोदयनीयेसप्तहस्तासःसप्तछं
दांसित्रिधावद्धस्त्रेधावद्धोमंत्रब्राह्मणकल्पैर्वृषभोरोरवीतिरोरवणमस्यसवनक्रमेणऋग्भिर्यजुर्भिःसामभिर्यदेनमृग्भिः
शंसंतियजुर्भिर्यजंतिसामभिःस्तुवंतिमहोदेवइत्येपहिमहान्देवोयद्यज्ञोमर्त्याँआविवेशेत्येषहिमनुष्यानाविशतियजना
यतस्योत्तराभूयसेनिर्वचनाय ॥ ७ ॥ स्व॒र्यं॑तो॒नापे॑क्षंत॒आद्यांरो॑हं॑ति॒रोद॑सी । य॒ज्ञंये॑वि॒श्वतो॑धार॒ंसुवि॑द्वांसो॑विते॑नि॒रे ।
स्वर्गच्छंतईजानावानेक्षंतेतेऽमुमेवलोकंगतवंतमीक्षंतमिति । आद्यांरोहंति॒रोदसी । यज्ञंयेविश्वतोधारंसर्वतोधारं
सुविद्वांसोवितेनिरइत्यर्थैषावाचःप्रवह्लितेव ॥ ८ ॥ च॒त्वारि॒वाक्परि॑मिता॒प॒दानि॒तानि॑विदुर्ब्राह्म॒णायेम॑नी॒षिणः॑ ।
गुहा॒त्रीणि॒निहि॑ता॒नेंग॑यंतितुरीयं॑वा॒चोम॑नु॒ष्या॑वदंति । चत्वारिवाचःपरिमितानिपदानितानिविदुर्ब्राह्मणायेमेधावि
नोगुहायांत्रीणिनिहितानिनार्थवेदयंतेगुहागूहतेस्तुरीयंत्वरतेःकतमानितानिचत्वारिपदान्योंकारोमहाव्याहृतयश्चेत्या
र्षनामाख्यातेचोपसर्गनिपाताश्चेतिवैयाकरणामंत्रःकल्पोब्राह्मणंचतुर्थीव्यावहारिकीतियाज्ञिकाऋचोयजूंषिसामानि
चतुर्थीव्यावहारिकीतिनैरुक्ताःसर्पाणांवाग्वयसांक्षुद्रस्यसरीसृपस्यचतुर्थीव्यावहारिकीत्येकेपशुषुतूणवेषुमृगेष्वात्मनि
चेत्यात्मप्रवादाअथापिब्राह्मणंभवति सावैवाक्सृष्टाचतुर्धाव्यभवदेष्वेवलोकेषुत्रीणिपशुषुतुरीयंयापृथिव्यांसाग्नौसार
थंतरेयांतरिक्षेसावायौसावामदेव्येयादिवि[illegible]तत[illegible]ततोयावागत्यरिच्यततांब्राह्मणेष्व

दधुस्तस्माद्ब्राह्मणाउभयींवाचंवदंतियाचदेवानांयाचमनुष्याणामित्यथैषाक्षरस्य ॥ ९ ॥ ऋचोअक्षरेपरमेव्योमन्
न्यस्मिन्देवाअधिविश्वेनिषेदुः । यस्तन्नवेदकिमृचाकरिष्यतिइयत्तद्विदुस्तइमेसमासते । ऋचोअक्षरेपरमेव्यवनेय
स्मिन्देवाअधिनिषण्णाःसर्वेयस्तन्नवेदकिंसऋचाकरिष्यतियइत्तद्विदुस्तइमेसमासतइतिविदुषउपदिशतिकतमत्तदेतद
क्षरमो३मित्येषावागितिशाकपूणिर्ऋचश्चह्यक्षरेपरमेव्यवनेधीयंतेनानादेवतेषुचमंत्रेष्वेतद्धवाएतदक्षरंयत्सर्वांत्रयींवि
द्यांप्रतिप्रतीतिचब्राह्मणं ॥ १० ॥ आदित्यइतिपुत्रःशाकपूणेरेषऋग्भवतियदेनमर्चंतिप्रत्यृचःसर्वाणिभूतानितस्ययद
न्यन्मंत्रेभ्यस्तदक्षरंभवतिरश्मयोऽत्रदेवाउच्यंतेयएतस्मिन्नधिनिषण्णाइत्यधिदैवतमथाध्यात्मंशरीरमत्रऋगुच्यतेयदे
नेनार्चंतिप्रत्यृचःसर्वाणींद्रियाणितस्ययदविनाशिधर्मंतदक्षरंभवतींद्रियाण्यत्रदेवाउच्यन्तेयान्यस्मिन्नात्मन्येकंभव
न्तीत्यात्मप्रवादाः ॥ ११ ॥ अक्षरंनक्षरतिनक्षीयतेवाक्षरंभवतिवाचोऽक्षइतिवाक्षोयानस्यांजनात्तत्प्रकृतीतरद्वर्तन
सामान्यादित्ययंमंत्रार्थचिंताभ्यूहोऽभ्यूढोऽपिश्रुतितोपितर्कतोनतुपृथक्त्वेनमंत्रानिर्वक्तव्याःप्रकरणशएवतुनिर्वक्त
व्यानह्येषुप्रत्यक्षमस्त्यनृषेरतपसोवापारोवर्यवित्सुतुखलुवेदितृषुभूयोविद्यःप्रशस्योभवतीत्युक्तंपुरस्तान्मनुष्यावाऋषि
षूत्क्रामत्सुदेवानब्रुवन्कोनऋषिर्भविष्यतीतितेभ्यएतंतर्कमृषिंप्रायच्छन्मंत्रार्थचिन्ताभ्यूहमभ्यूढंतस्माद्यदेवकिंचानू
चानोऽभ्यूहत्यार्षंतद्भवति ॥ १२ ॥ हृदातष्टेषुमनसोजवेषुयद्ब्राह्मणाःसंयजंतेसखायः । अत्राहत्वंविजहुर्वेद्याभिरो

हंब्रह्माणोविचरंत्युत्वे । हृदातष्टेषुमनसांप्रजवेषुयद्ब्राह्मणाःसंयजंतेसमानाख्यानाऋत्विजोऽत्राहत्वंविजहुर्वेद्याभिर्वे दितव्याभिःप्रवृत्तिभिरोहब्रह्माणऊहब्रह्माणंऊहएषांब्रह्मेतिवासेयंविद्याश्रुतिमतिबुद्धिस्तस्यास्तपसापारमीप्सितव्यंत दिदमायुरिच्छतानननिर्वक्तव्यंतस्माच्छन्दःसुशेषाउपेक्षितव्याअथागमोयांयांदेवतांनिराहतस्यास्तस्यास्ताद्भाव्यमनुभव त्यनुभवति ॥ १३ ॥ ( अथेमायद्यावोयदुदंचोविहिसोतोःसृण्येवतरत्सचत्वारिशृंगास्वर्यंतश्चत्वारिवागृचोअक्षरंआ दित्यइत्यक्षरंनक्षरांतिंहृदातष्टेषुत्रयोदश ) ॥ इतिनिरुक्तउत्तरषट्केसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥

ॐ ॥ व्याख्यातंदैवतंयज्ञांगंचाथातऊर्ध्वमार्गगतिंव्याख्यास्यामःसूर्यआत्मेत्युदितस्यहिकर्मद्रष्टाऽथैतदनुप्रवदं त्यथैतंमहांतमात्मानमेषगणःप्रवदंतींद्रंमित्रंवरुणमग्निमाहुरित्यथैषमहानात्मात्मजिज्ञासयात्मानंप्रोवाचाग्निरस्मिज न्मनाजातवेदाअहमस्मिप्रथमजाइत्येताभ्यां ॥ १ ॥ अग्निरस्मिजन्मनाजातवेदाघृतंमेचक्षुरमृतंमआसन् । अर्कस्त्रि धातूरजसोविमानोऽजस्रोघर्मोहविरस्मिनाम । अहमस्मिप्रथमजाऋतस्यपूर्वदेवेभ्योअमृतस्यनाभिः । योमाददाति सइदेवमावाअहमन्नमन्नमदंतमद्मि । इतिसहज्ञात्वाप्रादुर्बभूवैवंतंव्याजहारायतमात्मानमभ्यात्मजमंतिकमन्यस्मा आचचक्ष्वेति ॥२॥ अपश्यंगोपामनिपद्यमानमाचपराचपथिभिश्चरंतं । ससध्रीचीःसविषूचीर्वसानआवरीवर्तिभुवने ष्वंतः । आवरीवर्तिभुवनेष्वंतरित्यथैषमहानात्मासत्वलक्षणंस्तत्परंतद्ब्रह्मतत्सत्यंतत्सलिलंतदव्यक्तंतदस्पर्शंतदरूपंतदर

सैतदगंधंतदमृतैंतच्छुक्रंतन्निष्ठोभूतात्मासैषाभूतप्रकृतिरित्येकैतत्क्षेत्रंतदज्ञानात्क्षेत्रज्ञमनुप्राप्यनिरात्मजमर्थैषमहाना
त्मात्रिविधोभवतिसत्वंरजस्तमइतिसत्वंतुमध्येविशुद्धंतिष्ठत्यभितोरजस्तमसीइतिकामद्वेषस्तमइत्यविज्ञातस्यविशुध्य
तोविभूतिंकुर्वतःक्षेत्रज्ञपृथक्त्वायकल्पतेप्रतिभातिलिंगोमहानात्मातमोलिंगोविद्याप्रकाशलिंगस्तमोऽपिनिश्चयलिंग
आकाशः ॥ ३ ॥ आकाशगुणःशब्दआकाशाद्वायुर्द्विगुणःस्पर्शेनवायोर्ज्योतिस्त्रिगुणंरूपेणज्योतिषआपश्चतुर्गुणा
रसेनाद्भ्यःपृथिवीपंचगुणागंधेनपृथिव्याभूतग्रामस्थावरजंगमास्तदेतदहर्युगसहस्रंजागर्तितस्यान्तेसुषुप्स्यन्नंगानिप्रत्या
हरतिभूतग्रामाःपृथिवीमपियंतिपृथिव्यपआपोज्योतिषंज्योतिर्वायुंवायुराकाशमाकाशोमनोमनोविद्यांविद्यामहांतमा
त्मानंमहानात्माप्रतिभांप्रतिभाप्रकृतिंसास्वपितियुगसहस्रंरात्रिस्तावेतावहोरात्रावजस्रंपरिवर्तेतेसकालस्तदेतदहर्भव
तियुगसहस्रपर्यन्तमहर्यद्ब्रह्मणोविदूरात्रिंयुगसहस्रांतांतेऽहोरात्रविदोजनाइति ॥ ४ ॥ तंपरिवर्तमानमन्योऽनु
प्रवर्ततेस्रष्टाद्रष्टाविभक्तातिमात्रोऽहमितिगम्यतेसमिथ्यादर्शनेदंपावकमहाभूतेषुचिरोण्वाकाशाद्वायोःप्राणश्चक्षुश्चव
क्तारंचतेजसोऽद्भ्यःस्नेहंपृथिव्यामूर्तिःपार्थिवास्त्वष्टौगुणान्विद्यात्रीन्मातृतस्त्रीन्पितृतोस्थिस्नायुमज्जानःपितृतस्त्व
ङ्मांसशोणितानिमातृतोऽन्नपानमित्यष्टौसोऽयंपुरुषःसर्वमयःसर्वज्ञानोऽपिक्लृप्तः ॥ ५ ॥ सयद्यनुरुध्यतेतद्भवतियदिध
र्मोऽनुरुध्यतेतद्देवोभवतियदिज्ञानमनुरुध्यतेतदमृतोभवतियदिकाममनुरुध्यतेसंच्यवतंइमांयोनिंसंदध्यात्तदिदमत्र

मतंश्लेष्मारेतसःसंभवतिश्लेष्मणोरसोरसाच्छोणितंशोणितान्मांसंमांसान्मेदोमेदसःस्नावास्नाव्नोऽस्थीन्यस्थिभ्योम
ज्जामज्जातोरेतंस्तदिदंयोनौरेतःसिक्तंपुरुषःसंभवतिशुक्रातिरेकेपुमान्भवतिशोणितातिरेकेस्त्रीभवतिद्वाभ्यांसमेनेननपुं
सकोभवतिशुक्रभिन्नेनयमोभवतिशुक्रशोणितसंयोगान्मातृपितृसंयोगाच्चतत्कथमिदंशरीरंपरंसंयम्यतेसौम्योभवत्ये
करात्रोषितंकललंभवतिपंचरात्राद्बुद्बुदाःसप्तरात्रात्पेशीद्विःसप्तरात्रादर्बुदःपंचविंशतिरात्रःस्वस्थितोघनोभवतिमास
मात्रात्कठिनोभवतिद्विमासाभ्यंतरेशिरःसंपद्यतेमासत्रयेणग्रीवाव्यादेशोमासचतुष्केणत्वग्व्यादेशःपंचमेमासेनखरो
मव्यादेशःषष्ठेमुखनासिकाऽक्षिश्रोत्रंचसंभवतिसप्तमेचलनसमर्थोभवत्यष्टमेबुद्ध्याध्यवस्यतिनवमेसर्वांगसंपूर्णोभवति ।
मृतश्चाहंपुनर्जातोजातश्चाहंपुनर्मृतः । नानायोनिसहस्राणिमयोषितानियानिवै । आहाराविविधाभुक्ताःपीतानां
नाविधाःस्तनाः । मातरोविविधादृष्टाःपितरःसुहृदस्तथा । अवाङ्मुखःपीड्यमानोजंतुश्चैवसमन्वितः । सांख्यं
योगंसमभ्यस्येत्पुरुषंवापंचविंशकमिति ततश्चदशमेमासेप्रजायतेजातश्चवायुनास्पृष्टस्तन्नस्मरतिजन्ममरणंमंतेचशु
भाशुभंकर्मैतच्छरीरस्यप्रामाण्यं ॥ ६ ॥ अष्टोत्तरंसन्धिशतंमष्टाकपालंशिरःसंपद्यतेषोडशवपापलानिनवस्नायु
शतानिसप्तशतंपुरुषस्यमर्मणामर्धचतस्रोरोमाणिकोट्योहृदयंह्यष्टकपालानिद्वादशकपालानिजिह्वावृषणौह्यष्टसुपर्णौत
थोपस्थगुदपाय्वेतन्मूत्रपुरीषंकस्मादाहारपानसिक्तत्वादनुपचितकर्मणावन्योन्यंजायेतेइतितंविद्याकर्मणीसमन्वार

भेतैंपूवप्रज्ञाचमहंत्यज्ञानतमसिमग्नौंजरामरणक्षुत्पिपासांशोकक्रोधलोभमोहंमदभयमत्सरंहर्षविषादे र्ष्यासूयात्मकैर्द्व
द्वैरभिभूयमानंःसोऽस्मादार्जवंजवीभावानांतन्निर्मुच्यतेंसोऽस्मापाप्नैमहाभूमिकावच्छरीरांन्निमेषमात्रैःप्रक्रम्यंप्रकृति
रधिपरीत्यंतैजसंशरीरंकृत्वांकर्मणोऽनुरूपंफलमनुभूयंतस्यसंक्षयेपुनरिमंलोकंप्रतिपद्यते ॥ ७ ॥ अथयेहिंसामा
श्रित्यंविद्यामुत्सृज्यमहत्तपस्तेपिरेंचिरेणवेदोक्तानिवाकर्माणिकुर्वन्तितेधूममभिसंभवंतिधूमाद्रात्रिंरात्रेरपक्षीयमाणप
क्षंमपक्षीयमाणपक्षाद्दक्षिणायनंदक्षिणायनात्पितृलोकंपितृलोकाच्चंद्रमसंचंद्रमसोवायुंवायोर्वृष्टिंवृष्टेरोषधयश्चैतद्भूत्वा
तस्यसंक्षयेपुनरेवेमंलोकंप्रतिपद्यते ॥ ८ ॥ अथयेहिंसामुत्सृज्यंविद्यामाश्रित्यंमहत्तपस्तेपिरेंज्ञानोक्तानिवाकर्माणि
कुर्वंतितेऽर्चिरभिसंभवंत्यर्चिषोऽहरह्नआपूर्यमाणपक्षंमापूर्यमाणपक्षादुदगयनंमुदगयनादेवलोकंदेवलोकादादित्यंमा
दित्याद्वैद्युतंवैद्युतान्मानसंमानसःपुरुषोभूत्वांब्रह्मलोकमभिसंभवन्तितेनपुनरावर्ततेशिष्टादंदशूकांयतइदंनजानन्ति
तस्मादिदंवेदितव्यमथाप्याह ॥ ९ ॥ नतंविदाथयइमाजजानान्यद्युष्माकमंतरंबभूव । नीहारेणप्रावृताजल्प्यां
चासुतृपंउक्थशासंश्चरंति । नतंविद्ययाविदुषोंयमेवंविद्वांसोवदंत्यक्षरंब्रह्मणस्पतिमन्यद्युष्माकमंतरंमन्यदेषामंतरं
बभूवेतिनीहारेणप्रावृतास्तमसाजल्प्याचांसुतृपउक्थशासःप्राणंसूर्यंयत्पथगामिनश्चरंत्यविद्वांसंःक्षेत्रज्ञमनुप्रवदंत्यथा
होविद्वांसंःक्षेत्रज्ञोऽनुकल्पतेतस्यतपसासहाप्रमादमेत्यथासव्योभवंतितेनासंततमिच्छेत्तेनसख्यमिच्छेदेषहिसखाश्रे

ष्ठःसंजानातिभूतंभवद्भविष्यदितिज्ञाताकस्माज्जायतेसखाकस्मात्सख्यतेसहभूतेंद्रियैःशेरतेमहाभूतानिसेंद्रियाणिप्र
ज्ञयाकर्मकारयतीतितस्ययदापःप्रतिष्ठाशीलमुपशमआत्माब्रह्मेतिसब्रह्मभूतोभवतिसाक्षिमात्रोव्यवतिष्ठतेऽबंधोज्ञान
कृतोऽथात्मनोमहतःप्रथमंभूतनामधेयान्यनुक्रमिष्यामः ॥ १० ॥ हंसः । घर्मः । यज्ञः । वेनः । मेधः । कृमिः ।
भूमिः । विभुः । प्रभुः । शंभुः । राभुः । वधकर्मा । सोमः । भूतं । भुवनं । भविष्यत् । आपः । महत् ।
व्योम । यशः । महः । स्वर्णीकं । स्वृतीकं । स्मृतीकं । सतीकं । सतीनं । गहनं । गभीरं । गह्वरं । कं । अन्नं ।
हविः । सद्म । सदनं । ऋतं । योनिः । ऋतस्ययोनिः । सत्यं । नीरं । हविः । रयिः । सत् । पूर्णं । सर्वं ।
अक्षितं । बर्हिः । नाम । सर्पिः । अपः । पवित्रं । अमृतं । इंदुः । हेम । स्वः । सर्गाः । शम्बरं । अम्बरं ।
वियत् । व्योम । बर्हिः । धन्व । अंतरिक्षं । आकाशं । आपः । पृथिवी । भूः । स्वयंभूः । अध्वा । पुष्करं ।
सगरः । समुद्रः । तपः । तेजः । सिंधुः । अर्णवः । नाभिः । वृक्षः । ऊर्ध्वः । तत् । यत् । किं । ब्रह्म । वरे-
ण्यं । हंसः । आत्मा । भवति । वधंत्यध्वानं । यद्वाहिष्या । शरीराणि । अव्ययंचसंकुरुते । यज्ञः । आत्मा ।
भवति । यदेनंतन्वतेऽथैतंमहांतमात्मानमेतानिसूक्तान्येताऋचोऽनुप्रवदंति ॥ ११ ॥ सोमःपवतेजनितामतीनांज
नितादिवोजनितापृथिव्याः । जनिताग्नेर्जनितासूर्यस्यजनितेंद्रस्यजनितोतविष्णोः । सोमःपवतेसोमःसूर्यःप्रसवना

ज्जनितामतीनांप्रकाशकर्मणामादित्यरश्मीनांदिवोद्योतनकर्मणामादित्यरश्मीनांपृथिव्याःप्रथनकर्मणामादित्यरश्मी
नांमग्नेर्गतिकर्मणामादित्यरश्मीनांसूर्यस्यस्वीकरणकर्मणामादित्यरश्मीनांमिंद्रस्यैश्वर्यकर्मणामादित्यरश्मीनांविष्णो
र्व्याप्तिकर्मणामादित्यरश्मीनांमित्यधिदैवतमथाध्यात्मंसोमआत्माप्येतस्मादेवेंद्रियाणांजनितेत्यर्थः । अपिवासर्वाभि
र्विभूतिभिर्विभूततआत्मेत्यात्मगतिमाचष्टे॥१२॥ ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां । श्येनोगृध्रा
णांस्वधितिर्वनानांसोमःपवित्रमत्येतिरेभन् । ब्रह्मादेवानामित्येषहिब्रह्माभवतिदेवानांदेवनकर्मणामादित्यरश्मीनांपद
वीःकवीनामित्येषहिपदंवेत्तिकवीनांकवीयमानानामादित्यरश्मीनांमृषिर्विप्राणामित्येषहिऋषिणोभवतिविप्राणांव्या
पनकर्मणामादित्यरश्मीनांमहिषोमृगाणामित्येषहिमहान्भवतिमृगाणांमार्गणकर्मणामादित्यरश्मीनांश्येनोगृध्राणामि
तिश्येनआदित्योभवतिश्यायतेर्गतिकर्मणोगृध्रआदित्योभवतिगृध्यतेःस्थानकर्मणोयतएतस्मिंस्तिष्ठतिस्वधितिर्वना
नामित्येषहिस्वयंकर्माण्यादित्योधत्तेवनानांवननकर्मणामादित्यरश्मीनांसोमःपवित्रमत्येतिरेभन्नित्येषहिपवित्रंरश्मी
नांमत्येतिस्तूयमानएषएवैतंत्सर्वमक्षरमित्यधिदैवतमथाध्यात्मंब्रह्मादेवानामित्ययमपिब्रह्माभवतिदेवानांदेवनकर्म
णामिंद्रियाणांपदवीःकवीनामित्ययमपिपदंवेत्तिकवीनांकवीयमानानामिंद्रियाणांमृषिर्विप्राणामित्ययमप्यृषिणोभव
तिविप्राणांव्यापनकर्मणामिंद्रियाणांमहिषोमृगाणामित्ययमपिमहान्भवतिमृगाणांमार्गणकर्मणामिंद्रियाणांश्येनोगृ

घ्राणामितिश्येनआत्माभवतिश्यायतेर्ज्ञानकर्मणोगृध्राणींद्रियाणिगृध्यतेर्ज्ञानकर्मणोयतएतस्मिंस्तिष्ठतिस्वधितिर्वना
नामित्ययमपिस्वयंकर्माण्यात्मनिधत्तेवनानांवननकर्मणामिंद्रियाणांसोमःपवित्रमत्येतिरेभन्नित्ययमपिपवित्रमिंद्रि
याण्यत्येतिस्तूयमानोऽयमेवैतत्सर्वमनुभवत्यात्मगतिमाचष्टे ॥ १३ ॥ तिस्रोवाचईरयतिप्रवह्निर्ऋतस्यधीतिंब्रह्मणो
मनीषां । गावोयंतिगोपतिंपृच्छमानाःसोमंयंतिमतयोवावशानाः । वह्निरादित्योभवतिसतिस्रोवाचःप्रेरयत्यृचोयजूं
षिसामान्यृतस्यादित्यस्यकर्माणिब्रह्मणोमतान्येषएवैतत्सर्वमक्षरमित्यधिदैवतमथाध्यात्मंवह्निरात्माभवतिसतिस्रोवा
चईरयतिप्रेरयतिविद्यामतिबुद्धिमतामृतस्यात्मनःकर्माणिब्रह्मणोमतान्ययमेवैतत्सर्वमनुभवत्यात्मगतिमाचष्टे ॥१४॥
सोमंगावोधेनवोवावशानाःसोमंविप्रामतिभिःपृच्छमानाः । सोमःसुतःपूयतेअज्यमानःसोमेअर्कास्त्रिष्टुभःसंनवंते ।
एतएवसोमंगावोधेनवोरश्मयोत्रावश्यमानाःकामयमानाआदित्यंयंत्येवमेवसोमंविप्रारश्मयोमतिभिःपृच्छमानाःका
मयमानाआदित्यंयंत्येवमेवसोमःसुतःपूयतेअज्यमानएतमेवार्काश्चत्रिष्टुभश्चसन्नवंतेततएतस्मिन्नादित्यएकंभवंतीत्य
धिदैवतमथाध्यात्ममेतएवसोमंगावोधेनवइंद्रियाणिवावश्यमानानिकामयमानान्यात्मानंयंत्येवमेवसोमंविप्राइंद्रिया
णिमतिभिःपृच्छमानानिकामयमानान्यात्मानंयंत्येवमेवसोमःसुतःपूयतेअज्यमानइममेवात्माचसप्तऋषयश्चसंनवंते
तान्येतस्मिन्नात्मन्येकंभवंतीत्यात्मगतिमाचष्टे ॥ १५ ॥ अक्रान्त्समुद्रःप्रथमेविधर्मन्जनयन्प्रजाभुवनस्यराजा ।

वृषापवित्रेअधिसानोअव्येबृहत्सोमोवावृधेसुवानइंदुः । अत्यक्रमीत्समुद्रआदित्यःपरमेव्यवनेवर्षकर्मणाजनयन्प्र
जांभुवनस्यराजासर्वस्यराजांवृषापवित्रेअधिसानोअव्येबृहत्सोमोवावृधेसुवानइंदुरित्यधिदैवतमथाध्यात्ममत्यक्रमी
त्समुद्रआत्मापरमेव्यवनेज्ञानकर्मणाजनयन्प्रजांभुवनस्यराजासर्वस्यराजांवृषापवित्रेअधिसानोअव्येबृहत्सोमोवावृधे
सुवानइंदुरित्यात्मगतिमाचष्टे ॥ १६ ॥ महत्तत्सोमोमहिषश्चकारापांयद्गर्भोऽवृणीतदेवान् । अदधादिंद्रेपवमान
ओजोऽजनयत्सूर्येज्योतिरिंदुः । महत्तत्सोमोमहिषश्चकारापांयद्गर्भोऽवृणीतदेवानाधिपत्यमदधादिंद्रेपवमानओजो
ऽजनयत्सूर्येज्योतिरिंदुरादित्यइंदुरात्मा ॥ १७ ॥ विधुंदद्राणंसमनेबहूनांयुवानंसंतंपलितोजगार । देवस्यपश्यका
व्यंमहित्वाद्यामममारसह्यःसमान । विधुंविधमनशीलंदद्राणंदमनशीलंयुवानंचंद्रमसंपलितआदित्योगिरतिसद्योम्रि
यतेसदिवासमुदितेत्यधिदैवतमथाध्यात्मंविधुंविधमनशीलंदद्राणंदमनशीलंयुवानंमहांतंपलितआत्मागिरतिरात्रौ
म्रियतेरात्रिःसमुदितेत्यात्मगतिमाचष्टे ॥ १८ ॥ साकंजानांसप्तथमाहुरेकजंषळिद्यमाऽऋषयोदेवजाइति । तेषामि
ष्टानिविहितानिधामशःस्थात्रेरेजंतेविकृतानिरूपशः । सहजातानांषण्णामृषीणामादित्यरश्मयस्तेषामिष्टानिवाकांता
निवाक्रांतानिवागतानिवामतानिवानतानिवाद्भिःसहसंमोदंतेयत्रैतानिसप्तऋषीणानिज्योतींषितेभ्यःपरआदित्यस्ता
न्येतस्मिन्नेकंभवंतीत्यधिदैवतमथाध्यात्मंसहजातानांषण्णामिंद्रियाणामात्मासप्तमस्तेषामिष्टानिवाकांतानिवाक्रांता

निर्वागतानिवामतानिवानतानिर्वान्नेनसहसंमोदंतेयत्रेमानिसप्तऽऋषीणानींद्रियाण्येभ्यःपरआत्मातान्येतस्मिन्नेकंभ
वंतीत्यात्मगतिमाचष्टे ॥ १९ ॥ स्त्रियःसतीस्ताँउमेपुंसआहुःपश्यदक्षण्वान्नविचेतदंधः । कविर्यःपुत्रःसईमाचिकेत
यस्ताविजानात्सपितुष्पितासत् । स्त्रियएवैतिताःशब्दस्पर्शरूपरसगंधहारिण्यस्ताअमुंपुंशब्देनिराहारःप्राणइतिपश्य
न्कष्टान्नविजानात्यंधःकविर्यःपुत्रःसइमाजानातियःसइमाजानातिसपितुष्पितासदित्यात्मगतिमाचष्टे ॥ २० ॥ सप्ता
र्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठंतिप्रदिशाविधर्मणि । तेधीतिभिर्मनसातेविपश्चितःपरिभुवःपरिभवंतिविश्वतः ।
सप्तैतानादित्यरश्मीनयमादित्योगिरतिमध्यस्थानोर्ध्वशब्दोयतएतस्मिंस्तिष्ठंतितानिधीतिभिश्चमनसाचविपर्ययंतिप
रिभुवःपरिभवंतिसर्वाणिकर्माणिवर्षकर्मणेत्यधिदैवतमथाध्यात्मंसप्तेमानींद्रियाण्ययमात्मागिरतिमध्यस्थानोर्ध्वशब्दो
यान्यस्मिंस्तिष्ठंतितानिधीतिभिश्चमनसाचविपर्ययंतिपरिभुवःपरिभवंतिसर्वाणींद्रियाणिज्ञानकर्मणेत्यात्मगतिमाचष्टे
॥२१॥ नविजानामियदिवेदमस्मिनिण्यःसन्नद्धोमनसाचरामि । नहिविजानान्बुद्धिमतःपुत्रःपरिवेदयंतेऽयमादित्योऽ
यमात्मा ॥२२॥ अपाङ्प्राङेतिस्वधयागृभीतोऽमर्त्योमर्त्येनासयोनिः । ताशश्वंताविषूचीनावियंतान्य१न्यंचिक्युर्ननि
चिक्युरन्यं । अपांचयतिप्रांचयतिस्वधयागृभीतोऽमर्त्यआदित्योमर्त्येनचंद्रमसासहतौशश्वद्गामिनौविश्वगामिनौबहु
गामिनौवापश्यत्यादित्यंचंद्रमसमित्यधिदैवतमथाध्यात्ममपांचयतिप्रांचयतिस्वधयागृभीतोऽमर्त्यआत्मामर्त्येनमन

सासहंतौशश्वद्गामिनौविश्वगामिनौबहुगामिनौवापश्यत्यात्मानंनमनईत्यात्मगतिमाचष्टे ॥ २३ ॥ तदिदासभुवंने
षुज्येष्ठंयतोजज्ञउग्रस्त्वेषनृम्णः । सद्योजज्ञानोनिरिणातिशत्रूननुयंविश्वेमदंत्यूमाः । तद्भवतिभूतेषुभुवनेषुज्येष्ठमा
दित्यंयतोजज्ञउग्रस्त्वेषनृम्णोदीप्तिनृम्णःसद्योजज्ञानोनिरिणातिशत्रूनिर्तिरिणातिःप्रीतिकर्मादीप्तिकर्मावानुमदन्तियं
विश्वऊमाईत्यधिदैवतमथाध्यात्मंतद्भवतिभूतेषुभुवनेषुज्येष्ठमव्यक्तंतपोजायतउग्रस्त्वेषनृम्णोज्ञाननृम्णःसद्योजज्ञा
नोनिरिणातिशत्रूनिर्तिरिणातिःप्रीतिकर्मादीप्तिकर्मावानुमदन्तियंसर्वऊमाईत्यात्मगतिमाचष्टे ॥ २४ ॥ कोअद्ययुं
क्तेधुरिगाऋतस्यशिमीवतोभामिनोदुर्हृणायून् । आसन्निषून्हृत्स्वसोमयोभून्यएषांभृत्यामृणधत्सजीवात् । कआदित्यो
धुरिगायुंक्तेरश्मीन्कर्मवतोभानुमतोदुराधर्षानसून्यसुनवंतीषुनिषुणवंतिमयोभूनिसुखभूनियइमंसंभृतंवेदकथंसजीव
तीत्यधिदैवतमथाध्यात्मंकआत्माधुरिगायुंक्तइन्द्रियाणिकर्मवतोभानुमतोदुराधर्षानसून्यसुनवंतीषूनिषुणवंतिमयो
भूनिसुखभूनियइमंसंभृतंवेदंचिरंजीवतीत्यात्मगतिमाचष्टे ॥ २५ ॥ कईषतेतुज्यतेकोबिभायकोमंसतेसंतमिंद्रंको
अंति । कस्तोकायकइभायोतरायेऽधिब्रवत्तन्वेकोजनाय । कएवगच्छतिकोददातिकोबिभेतिकोमंसतेसंतमिंद्रंक
स्तोकायापत्यायमहतेचनोरणायरमणीयायचदर्शनीयाय ॥ २६ ॥ कोअग्निमींट्टेहविषाघृतेनस्रुचायजाताऋतुभिर्ध्रु
वेभिः । कस्मैदेवाआवहनाशुहोमकोमंसतेवीतिहोत्रःसुदेवः । कआदित्यंपूजयतिहविषाचघृतेनचस्रुचायजाताऋतु

निरुक्त

॥ ३९ ॥

भिर्ध्रुवेभिरिरितिकस्मैदेवाआवहानाशुहोमार्थान्कोमंसतेवीतिहोत्रःसुदेवःकल्याणदेवइत्यधिदैवतमथाध्यात्मंकआत्मा नंपूरयतिहविशाचधृतेनचस्रुचायजाताक्रतुभिर्ध्रुवेभिरिरितिकस्मैदेवाआवहानाशुहोमार्थान्कोमंसतेवीतिहोत्रःसुप्रज्ञःक ल्याणप्रज्ञइत्यात्मगतिमाचष्टे ॥ २७ ॥ त्वमंगप्रसंसिषोदेवःशविष्ठमर्त्यं । नत्वदन्योमघवन्नस्तिमर्डितेन्द्रब्रवीमि तेवचः । त्वमङ्गप्रशंसीर्देवःशविष्ठमर्त्यंनत्वदन्योऽस्तिमघवन्पातावापालयितावाजेतावासुखयितावेन्द्रब्रवीमितेवचः स्तुतियुक्तं ॥ २८ ॥ हंसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जागोजा ऋतजाअद्रिजाऋतं । हंसइतिहंसाःसूर्यरश्मयःपरमात्मापरंज्योतिःपृथिवीव्याप्तेतिव्याप्तंसर्वंव्याप्तंवननकर्मणान भ्यासेनादित्यमंडलेनेतित्ययतीतिलोकोत्ययतीतिहंसयंत्ययतीतिहंसाःपरमहंसाःपरमात्मासूर्यरश्मिभिःप्रभूतगभीरव सतीतित्रिभिर्वसतीतिवारश्मिर्वसतीतिवावह्निर्वसतीतिवासुवर्णरेताःपूषागर्भारिभेतिरिभंतावनकुटिलानिकुटंतारि भंतांतरिक्षाचरत्पथांतरिक्षाचरदितिदिविभुविगमनंवासुभानुःसुप्रभूतोहोतादित्यस्यगताभवंत्यतिथिर्दुरोणसत्सर्वेदु रोणसंद्रवंसर्वैरसाविकर्षयतिरश्मिर्विकर्षयतिवह्निर्विकर्षयतिवननंभवत्यश्वगोजाअद्रिगोजाधरित्रिगोजाःसर्वेगोजा ऋतजाबहुशब्दाभवंतिनिगमोनिगमव्यतिभवत्यृषेनिर्वचनाय ॥ २९ ॥ द्वासुपर्णासयुजासखायासमानंवृक्षंपरिष स्वजाते । तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति । द्वौद्वौप्रतिष्ठितौसुकृतौधर्मकर्तारौदुष्कृतंपापंपरि

उत्तरष०

अ. ८

॥ ३९ ॥

सारकमित्याचक्षतेंसुपर्णासयुजासखायैंत्यात्मानंदुरात्मानंपरमात्मानंप्रत्युत्तिष्ठतिंशरीरएवतज्जायतेंवृक्षंरक्षशरीरंवृक्षं पक्षौंप्रतिष्ठापयतिंतयोरन्यद्भुक्त्वांन्नमनश्नन्नन्यैंसरूपतांसलोकतामश्नुतेयएवंवेदांन्नमनश्नन्नन्योंअभिचाकशीतीत्या त्मगतिमाचष्टे ॥ ३० ॥ आयांहींद्रपृथिभिंरीळितेभिंर्यज्ञमिमंनोंभागधेयंजुषस्व । तृप्तांजहुर्मातुळस्येवयोषांभागस्ते पैतृष्वसेयींवपामिव। आगमिष्यंतिशक्रोदेवतांस्ताखिभिस्तीर्थैंभिः शक्रप्रतरैरीळितेभिस्त्रिभिस्तीर्थैर्यज्ञमिमंनोयज्ञभागं मग्नीषोमभागाविंद्रोजुषस्वंतृप्तामेवंमातुळयोगकन्यांभागंसभर्तृकेवंसायादेवतांस्तास्तत्स्थानेंशक्रंनिदर्शनं॥ ३१॥ विप्रं विप्रासोऽवंसेदेवंमतींसऊतयें । अग्निंगीर्भिर्हवामहे । विप्रंविप्रासोऽवसैंविदुर्वेदविंदतेंवेदितव्यंविमलशरीरेणवायु नांविप्रस्तुहृत्पद्मनिलयस्थितंमकारसंमितमुकारंपूरयैन्मकारनिलयंगतंविप्रंप्राणेषुबिंदुसिक्तंविकसितंवह्नितेजःप्रभंक नकपद्मेष्वंमृतशरीरममृतजातस्थितंममृतवाचामृतमुखेवदंति । अग्निंगीर्भिर्हवामहे। अग्निंसंबोधयेंदग्निःसर्वादेव ताइतिंतस्योत्तराभूयसेनिर्वचनाय ॥ ३२ ॥ जातवेंदसेसुनवामसोमंमरातीयतोनिदंहातिवेदंः । सनंःपर्षदतिंदुर्गा णिविश्वांनावेवसिंधुंदुरितात्यग्निः । जातवेदसइतिजातमिदंसर्वंसचराचरंस्थित्युत्पत्तिप्रलयन्यायेनांच्छायसुनवाम सोममितिंप्रसवेनाभिषवायंसोमंराजानममृतमरातीयतोंयज्ञार्थमितिस्मोंनिश्चयेनिदहातिंदहतिभस्मीकरोतिंसोमोदद दित्यर्थःसनःपर्षदतिदुर्गाणिंदुर्गमनानिस्थानानिनावेवसिंधुंयथाकश्चित्कर्णधारोंनावेवसिंधोःस्यंदनान्नदींजलदुर्गांम

निरुक्त

॥ ४० ॥

हाकूलांतारयतिंदुरितात्यग्निरितिंदुरितानितारयतिंतस्यैषापराभवति ॥ ३३ ॥ इदंतेऽन्याभिरसमानमद्भिर्याःका
श्चसिंधुंप्रवहंतिनद्यः । सर्पोजीर्णामिवत्वचंजहातिपापंसशिरस्कोऽभ्युपेत्य । इदंतेऽन्याभिरसमानाभिर्याःकाश्चसिंधुं
पतिंकृत्वांनद्योवहंतिसर्पोजीर्णामिवसर्पस्त्वचंत्यजतिपापंत्यजंत्यापआप्नोतेंस्तासामेषाभवति ॥ ३४ ॥ त्र्यंबकंयजा
महेसुगन्धिंपुष्टिवर्धनं । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् । त्र्यंबकोरुद्रस्तंत्र्यंबकंयजामहेसुगंधिंसगंधिंसु
ष्टुगंधिंपुष्टिवर्धनंपुष्टिकारकमिवोर्वारुकमिवफलंबंधनादारोधनान्मृत्योःसकाशान्मुंचस्वमांकस्मादित्येषामितरेपाप
राभवति ॥ ३५ ॥ शतंजीवशरदोवर्धमानःशतंहेमंतान्छतमुवसंतान् । शतमिंद्राग्नीसवितावृहस्पतिःशतायुषाह
विषेमंपुनर्दुः । शतंजीवशरदोवर्धमानइत्यपिनिगमोभवतिंशतमितिशतंदीर्घमायुर्मरुतएनावर्धयंतिंशतमेनमेवंशता
त्मानंभवतिंशतमनंतंभवतिंशतमैश्वर्यंभवतिंशतमितिशतंदीर्घमायुः ॥ ३६ ॥ मातेराधांसिमातऊतयोवसोऽस्मा
न्कदाचनादभन् । विश्वाचनउपमिमीहिमानुषवसूनिचर्षणिभ्यआ । माचतेधामानिमाचतेकदाचनःसरिषुःसर्वा
णिप्रज्ञानान्युपमानायमनुष्यहितोऽयमादित्योऽयमात्मांथैतदनुप्रवदन्त्यथैतंमहान्तमात्मानमेषगणःप्रवदतिवैश्वक
र्मणदेवानांनुवयंजानांनासदासीन्नोसदासीत्तदानीमितिचसैषात्मजिज्ञासांसैषासर्वभूतजिज्ञासांब्रह्मणःसारिष्टसरूप
तांसलोकतांगमयतियएवंवेदनमोब्रह्मणेनमोमहतेभूतायनमःपारस्करायनमोयास्कायब्रह्मशुक्लमसीयब्रह्मशुक्लमसीय

उत्तरष.

अ. ८

॥ ४० ॥

॥ ३७ ॥ व्याख्यातमग्निरस्मिजन्मनापश्यंगोपामाकाशगुर्णस्तंपरिवर्तमानंसयद्यनुरुध्यतेऽष्टोत्तरमथयेहिंसामाश्रित्यांथयेहिंसामुत्सृज्यंनतंहंसोघर्मःसोमःपवतेब्रह्मादेवानांतिस्रोवाचईरयतिसोमंगावोऽक्रान्महत्तत्सोमोविधुंदद्राणंसाकंजानांस्त्रियःसतीःसप्तार्धगर्भानविजानाम्यपाङ्प्राङेतितदिदासकोअद्ययुंक्तेकईषतेकोअग्निमीट्टेत्वमंगहंसःशुचिषद्वासुपर्णायाहींद्रंविप्रंविप्रासोजातवेदसंइदंतेऽन्याभिरूर्यंबकंशतंजीवमातेराधांसीतिसप्तत्रिंशत् ॥ ॥ इतिनिरुक्त उत्तरषट्केऽष्टमोऽध्यायः ॥ ८ ॥

॥ इतिनिरुक्तउत्तरषट्कःसमाप्तः ॥ ॥ ॥



इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् ।

शके १९०७, सन १९८६

श्रीः ॥ ॥ अथास्यनिरुक्तस्याखिलपुरुषार्थोपकारवृत्तिसमर्थस्यसंग्रहः ॥ यथा—नामाख्यातोपसर्गनिपातलक्षणम् १, भावविकारलक्षणम् २, नामान्याख्यातजानिसर्वाणिचयथोपन्यस्यपक्षप्रतिपक्षतोविचार्यावधारणम् ३, सर्वाण्याख्यातजानिकानिचिदेवानेकधातुजान्यपीतिमंत्राणामर्थवत्त्वानर्थवत्त्वेविचार्य शास्त्रारंभप्रयोजनद्वारेणार्थवत्तावधारणम् ४, पदविभागपरिज्ञानप्रतिज्ञानवोधावलंबिप्रदर्शनायआदिमध्यांतानेकदैवतलिंगसंकटेषुमंत्रेषुयाज्ञिकपरिज्ञानद्वारेणदेवतापरिज्ञानप्रतिज्ञा ५, अर्थज्ञप्रशंसा ६, अर्थज्ञानावधारणम् ७, वेदवेदांगव्यूहः ८, सप्रयोजननिघंटुसमाम्नायविरचनम् ९, प्रकरणत्रयविभागेननैघंटुकप्रधानदेवताभिधानप्रविभागलक्षणम् १०, निर्वचनलक्षणद्वारेण शब्दवृत्तिविषयोपदेशः ११, अर्थप्राधान्याल्लोपोपधाविकारवर्णलोपविपर्ययोपदेशेनसामर्थ्योपप्रदर्शनायादिमध्यांतलोपोपधाविकारवर्णलोपविपर्ययाद्यंतवर्णव्यापत्तिवर्णोपजनोदाहरणचिंता १२, अंतस्थांतर्धातुनिमित्तेनसंप्रसार्यासंप्रसार्योभयप्रकृतिधातुनिर्वचनोपदेशः १३, भाषिकप्रायोवृत्तिभ्योनैगमशब्दार्थप्रसिद्धिः १४, नैगमप्रायोवृत्तिभ्योभाषिकशब्दार्थप्रसिद्धिः १५, देशव्यवस्थयाशब्दरूपव्यपदेशः १६, तद्धितसमासनामनिर्वचनलक्षणम् १७, शिष्यलक्षणम् १८, विशेषेणव्याख्ययातत्त्वपर्यायभेदसंख्यासंदिग्धोदाहरणान्निर्वचनव्यवस्थयानामाख्यातोपसर्गनिपातानांविभागेननैघंटुकप्रकरणानुक्रमणम् १९, अनेकार्थानवगतसंस्कारानुक्रमणम् २०, परोक्षकृत

प्रत्यक्षकृताध्यात्मिकमंत्रलक्षणम् २१, स्तुत्याशीःशपथाभिशापाभिख्यापरिदेवनानिंदाप्रशंसादिभिर्मंत्राभिव्यक्ति हेतूपदेशः २२, निदानपरिज्ञानव्याख्यापनायानादिष्टदेवतोपपरीक्षणायाध्यात्मोपदेशप्रकृतिभूमत्वम् २३, इतरेत रजन्मत्वम् २४, स्थानत्रयभेदशस्तिसृणामेकैकस्यामाहाभाग्यकृतोऽनेकनामधेयप्रतिलंभः २५, पृथगभिधानंतूप त्तिसंबंधाद्वा २६, देवतानामाकारचिंतनम् २७, भक्तिसाहचर्यसंस्तवकर्मसूक्तभाक्त्वहविर्भाक्त्वव्यंजनभाक्त्वानि २८-३३, पृथिव्यंतरिक्षद्युस्थानदेवतानामभिधेयाभिधानव्युत्पत्तिप्राधान्यश्रुत्युदाहरणम् ३४, तन्निर्वचनविचा रोपपत्त्यवधारणानुक्रमेणव्याख्यायदैवतप्रकरणनिर्णयः ३५, विद्यापारप्राप्त्युपायोपदेशः ३६, मंत्रार्थनिर्वचन द्वारेणदेवताभिधाननिर्वचनफलंदेवतातादात्म्यम् ३७, इत्येषसमासतोनिरुक्तशास्त्रचिंताविषयः ॥ तस्यैषागवाद्या देवपत्न्यंतापंचाध्यायीसूत्रसंग्रहः । साचपुनरियंसाक्षात्कृतधर्मभ्योमहर्षिभ्यउपदेशेनमंत्रार्थमुपश्रुत्यश्रुतर्षिभिरवर शक्तिदौर्बल्यमवेक्ष्यतदनुजिघृक्षयावाच्यार्थसामर्थ्यादभिधेयानुन्नीयमंत्रार्थावबोधायछंदोभ्यःसमाहृत्यसमाहृत्यसमा म्नाता । सैषाछंदोवयवभूताछंदोधर्मिण्येवयथायथापन्नस्तागौर्गोधर्माइति ॥ ॥ ॥

इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् ।



शके १९०७, सन १९८६

श्रीगणेशायनमः॥ ॥ हरिःॐम् ॥ येनाक्षरसमाम्नायमधिगम्यमहेश्वरात् । कृत्स्नंव्याकरणंप्रोक्तंतस्मैपाणिनयेनमः ॥ १ ॥ येनधौतागिरःपुंसांविमलैःशब्दवारिभिः । तमश्चाज्ञानजंभिन्नंतस्मैपाणिनयेनमः ॥ २ ॥ वाक्यकारंवररुचिंभाष्यकारंपतंजलिम् । पाणिनिंसूत्रकारंचप्रणतोऽस्मिमुनित्रयम् ॥ ३ ॥ अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् । इतिप्रत्याहारसूत्राणि ॥ वृद्धिरादैच् । अदेङ्गुणः । इकोगुणवृद्धी । नधातुलोपआर्धधातुके । क्ङितिच । दीधीवेवीटाम् । हलोऽनन्तराःसंयोगः । मुखनासिकावचनोऽनुनासिकः । तुल्यास्यप्रयत्नंसवर्णम् । नाज्झलौ । ईदूदेद्द्विवचनंप्रगृह्यम् । अदसोमात् । शे । निपातएकाजनाङ् । ओत् । संबुद्धौशाकल्यस्येतावनार्षे । उञः । ऊँ । ईदूतौचसप्तम्यर्थे । दाधाघ्वदाप् ॥१॥ आद्यन्तवदेकस्मिन् । तरप्तमपौघः । बहुगणवतुडतिसंख्या । ष्णान्ताषट् । डतिच । क्तक्तवतूनिष्ठा । सर्वादीनिसर्वनामानि । विभाषादिक्समासेबहुव्रीहौ । नबहुव्रीहौ । तृतीयासमासे । द्वन्द्वेच । विभाषाजसि । प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरंबहिर्योगोपसंव्यानयोः । स्वरादिनिपातमव्ययम् । तद्धितश्चासर्वविभक्तिः । कृन्मेजन्तः । क्त्वातोसुन्कसुनः ॥ २ ॥ अव्ययीभावश्च । शिसर्वनामस्थानम् । सुडनपुंसकस्य । नवेतिविभाषा ।

अष्टा.

॥ २ ॥

सूत्रपा.

१ । २

इग्यणःसंप्रसारणम् । आद्यन्तौटकितौ । मिदचोऽन्त्यात्परः । एचइग्घ्रस्वादेशे । षष्ठीस्थानेयोगा । स्थानेऽन्तरतमः । उरण्रपरः । अलोऽन्त्यस्य । ङिच्च । आदेःपरस्य । अनेकाल्शित्सर्वस्य । स्थानिवदादेशोऽनल्विधौ । अचःपरस्मिन्पूर्वविधौ । नपदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु । द्विर्वचनेऽचि । अदर्शनंलोपः ॥ ३ ॥ प्रत्ययस्यलुक्श्लुलुपः । प्रत्ययलोपेप्रत्ययलक्षणम् । नलुमताङ्गस्य । अचोऽन्त्यादिटि । अलोऽन्त्यात्पूर्वउपधा । तस्मिन्नितिनिर्दिष्टेपूर्वस्य । तस्मादित्युत्तरस्य । स्वंरूपंशब्दस्याशब्दसंज्ञा । अणुदित्सवर्णस्यचाप्रत्ययः । तपरस्तत्कालस्य । आदिरन्त्येनसहेता । येनविधिस्तदन्तस्य । वृद्धिर्यस्याचामादिस्तद्वृद्धम् । त्यदादीनिच । एङ्प्राचांदेशे ॥ ४ ॥ वृद्धिराद्यन्तवदव्ययीभावःप्रत्ययस्यलुक्पञ्चदश ॥ इतिप्रथमाध्यायेप्रथमःपादः ॥ १ ॥ ॥ छ ॥

गाङ्कुटादिभ्योऽञ्णिन्ङित् । विजइट् । विभाषोर्णोः । सार्वधातुकमपित् । असंयोगाल्लिट्कित् । इन्धिभवतिभ्यांच । मृडमृदगुधकुषक्लिशवदवसःक्त्वा । रुदविदमुषग्रहिस्वपिप्रच्छःसंश्च । इकोझल् । हलन्ताच्च । लिङ्सिचावात्मनेपदेषु । उश्च । वागमः । हनःसिच् । यमोगन्धने । विभाषोपयमने । स्थाघ्वोरिच्च । नक्त्वासेट् । निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृषः । मृषस्तितिक्षायाम् ॥ १ ॥ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् । पूङःक्त्वाच । नोपधात्थफान्ताद्वा । वंचिलुंच्यृतश्च । तृषिमृषिकृशेःकाश्यपस्य । रलोव्युपधाद्धलादेःसंश्च । ऊकालोऽज्झ्रस्वदीर्घ

॥ २ ॥

प्लुतः । अचश्च । उच्चैरुदात्तः । नीचैरनुदात्तः । समाहारःस्वरितः । तस्यादितउदात्तमर्धह्रस्वम् । एकश्रुतिदूरा
त्संबुद्धौ । यज्ञकर्मण्यजपन्यूंखसामसु । उच्चैस्तरांवावषट्कारः । विभाषाछन्दसि । नसुब्रह्मण्यायांस्वरितस्यतूदात्तः ।
देवब्रह्मणोरनुदात्तः । स्वरितात्संहितायामनुदात्तानाम् । उदात्तस्वरितपरस्यसन्नतरः ॥ २ ॥ अपृक्तएकाल्प्रत्ययः ।
तत्पुरुषःसमानाधिकरणःकर्मधारयः । प्रथमानिर्दिष्टंसमासउपसर्जनम् । एकविभक्तिचापूर्वनिपाते । अर्थवदधातु
रप्रत्ययःप्रातिपदिकम् । कृत्तद्धितसमासाश्च । ह्रस्वोनपुंसकेप्रातिपदिकस्य । गोस्त्रियोरुपसर्जनस्य । लुक्तद्धितलु
कि । इद्गोण्याः । लुपियुक्तवद्व्यक्तिवचने । विशेषणानांचाजातेः । तदशिष्यंसंज्ञाप्रमाणत्वात् । लुब्योगाप्रख्याना
त् । योगप्रमाणेचतदभावेऽदर्शनंस्यात् । प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् । कालोपसर्जनेचतुल्यम् ।
जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् । अस्मदोद्वयोश्च । फल्गुनीप्रोष्ठपदानांचनक्षत्रे ॥ ३ ॥ छन्दसिपुन
र्वस्वोरेकवचनम् । विशाखयोश्च । तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वेबहुवचनस्यद्विवचनंनित्यम् । सरूपाणामेकशेषएकवि
भक्तौ । वृद्धोयूनातल्लक्षणश्चेदेवविशेषः । स्त्रीपुंवच्च । पुमान्स्त्रिया । भ्रातृपुत्रौस्वसृदुहितृभ्याम् । नपुंसकमनपुंस
केनैकवच्चास्यान्यतरस्याम् । पितामात्रा । श्वशुरःश्वश्र्वा । त्यदादीनिसर्वैर्नित्यम् । ग्राम्यपशुसंघेष्वतरुणेषुस्त्री
॥ ४ ॥ गाङ्कुटाद्युदुपधादपृक्तश्छन्दसिपुनर्वस्वोस्त्रयोदश ॥ इतिप्रथमाध्यायेद्वितीयःपादः ॥ २ ॥ ॥ ७ ॥ भूवादयो

अष्टा. ॥ ३ ॥

धातवः । उपदेशेऽजनुनासिकइत् । हलन्त्यम् । नविभक्तौतुस्माः । आदिर्ञिटुडवः । षःप्रत्ययस्य । चुटू । लशक्वतद्धिते । तस्यलोपः । यथासंख्यमनुदेशःसमानाम् । स्वरितेनाधिकारः । अनुदात्तङितआत्मनेपदम् । भावकर्मणोः । कर्तरिकर्मव्यतिहारे । नगतिहिंसार्थेभ्यः । इतरेतरान्योन्योपपदाच्च । नेर्विशः । परिव्यवेभ्यःक्रियः । विपराभ्यांजेः । आङोदोऽनास्यविहरणे ॥ १ ॥ क्रीडोऽनुसंपरिभ्यश्च । समवप्रविभ्यःस्थः । प्रकाशनस्थेयाख्ययोश्च । उदोऽनूर्ध्वकर्मणि । उपान्मन्त्रकरणे । अकर्मकाच्च । उद्भिभ्यांतपः । आङोयमहनः । समोगम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः । निसमुपविभ्योह्वः । स्पर्धायामाङः । गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषुकृञः । अधेःप्रसहने । वेःशब्दकर्मणः । अकर्मकाच्च । संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषुनियः । कर्तृस्थेचाशरीरेकर्मणि । वृत्तिसर्गतायनेषुक्रमः । उपपराभ्याम् । आङउद्गमने ॥ २ ॥ वेःपादविहरणे । प्रोपाभ्यांसमर्थाभ्याम् । अनुपसर्गाद्वा । अपह्नवेज्ञः । अकर्मकाच्च । संप्रतिभ्यामनाध्याने । भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषुवदः । व्यक्तवाचांसमुच्चारणे । अनोरकर्मकात् । विभाषाविप्रलापे । अवाद्ग्रः । समःप्रतिज्ञाने । उदश्चरःसकर्मकात् । समस्तृतीयायुक्तात् । दाणश्चसाचेच्चतुर्थ्यर्थे । उपाद्यमःस्वकरणे । ज्ञाश्रुस्मृदृशांसनः । नानोर्ज्ञः । प्रत्याङ्भ्यांश्रुवः । शदेःशितः ॥ ३ ॥ म्रियतेर्लुङ्लिङोश्च । पूर्ववत्सनः । आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ।

सूत्रपा. १ । ३

॥ ३ ॥

प्रोपाभ्यांयुजेरयज्ञपात्रेषु । समःक्ष्णुवः । भुजोऽनवने । णेरणौयत्कर्मणौचेत्सकर्तानाध्याने । भीस्म्योर्हेतुभये । गृधिवंच्योःप्रलम्भने । लियःसंमाननशालीनीकरणयोश्च । मिथ्योपपदात्कृञोऽभ्यासे । स्वरितञितःकर्त्रभिप्राये क्रियाफले । अपाद्वदः । णिचश्च । समुदाङ्भ्योयमोऽग्रन्थे । अनुपसर्गाज्ज्ञः । विभाषोपपदेनप्रतीयमाने । शेषा त्कर्तरिपरस्मैपदम् । अनुपराभ्यांकृञः । अभिप्रत्यतिभ्यःक्षिपः ॥ ४ ॥ प्राद्वहः । परेर्मृषः । व्याङ्परिभ्योरमः । उपाच्च । विभाषाकर्मकात् । बुधयुधनशजनेङ्प्रुद्रुस्रुभ्योणेः । निगरणचलनार्थेभ्यश्च । अणावकर्मकाच्चित्तवत्कर्तृ कात् । नपादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः । वाक्यषः । द्युद्भ्योलुङि । वृद्भ्यःस्यसनोः । लुटिचक्लृपः ॥ ५ ॥ भूवादयःक्रीडोऽनुवेःपादम्रियतेःप्राद्वहस्त्रयोदश ॥ इतिप्रथमाध्यायेतृतीयःपादः ॥ ३ ॥ ॥ ७ ॥ आकडा रादेकासंज्ञा । विप्रतिषेधेपरंकार्यम् । यूस्त्र्याख्यौनदी । नेयङुवङ्स्थानावस्त्री । वामि । ङितिह्रस्वश्च । शेषोघ्य सखि । पतिःसमासएव । षष्ठीयुक्तश्छन्दसिवा । ह्रस्वंलघु । संयोगेगुरु । दीर्घंच । यस्मात्प्रत्ययविधिस्तदादिप्रत्य येऽङ्गम् । सुप्तिङन्तंपदम् । नःक्ये । सितिच । स्वादिष्वसर्वनामस्थाने । यचिभम् । तसौमत्वर्थे । अयस्मयादी निच्छन्दसि ॥ १ ॥ बहुषुबहुवचनम् । द्व्येकयोर्द्विवचनैकवचने । कारके । ध्रुवमपायेऽपादानम् । भीत्रार्थानांभय हेतुः । पराजेरसोढः । वारणार्थानामीप्सितः । अन्तर्धौयेनादर्शनमिच्छति । आख्यातोपयोगे । जनिकर्तुःप्रकृ

अष्टा. ॥ ४ ॥

तिः । भुवःप्रभवः । कर्मणायमभिप्रैतिससंप्रदानम् । रुच्यर्थानांप्रीयमाणः । श्लाघह्नुङ्स्थाशपांज्ञीप्स्यमानः । धारे रुत्तमर्णः । स्पृहेरीप्सितः । क्रुधद्रुहेर्ष्यासूयार्थानांयंप्रतिकोपः । क्रुधद्रुहोरुपसृष्टयोःकर्म । राधीक्ष्योर्यस्यविप्रश्नः । प्रत्याङ्भ्यांश्रुवःपूर्वस्यकर्ता ॥ २ ॥ अनुप्रतिगृणश्च । साधकतमंकरणम् । दिवःकर्मच । परिक्रयणेसंप्रदानमन्य तरस्याम् । आधारोऽधिकरणम् । अधिशीङ्स्थासांकर्म । अभिनिविशश्च । उपान्वध्याङ्वसः । कर्तुरीप्सिततमंकर्म । तथायुक्तंचानीप्सितम् । अकथितंच । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्तासणौ । हृक्रोरन्यतरस्या म् । स्वतन्त्रःकर्ता । तत्प्रयोजकोहेतुश्च । प्राग्रीश्वरान्निपाताः । चादयोऽसत्त्वे । प्रादयः । उपसर्गाःक्रियायोगे । गतिश्च ॥ ३ ॥ ऊर्यादिच्विडाचश्च । अनुकरणंचानितिपरम् । आदरानादरयोःसदसती । भूषणेऽलम् । अन्तर परिग्रहे । कणेमनसीश्रद्धाप्रतीघाते । पुरोऽव्ययम् । अस्तंच । अच्छगत्यर्थवदेषु । अदोऽनुपदेशे । तिरोऽन्तर्धौ । विभाषाकृञि । उपाजेऽन्वाजे । साक्षात्प्रभृतीनिच । अनत्याधानउरसिमनसी । मध्येपदेनिवचनेच । नित्यंहस्ते पाणावुपयमने । प्राध्वंबन्धने । जीविकोपनिषदावौपम्ये । तेप्राग्धातोः ॥ ४ ॥ छन्दसिपरेऽपि । व्यवहिताश्च । कर्मप्रवचनीयाः । अनुर्लक्षणे । तृतीयार्थे । हीने । उपोऽधिकेच । अपपरीवर्जने । आङ्मर्यादावचने । लक्षणेत्थंभू ताख्यानभागवीप्सासुप्रतिपर्यनवः । अभिरभागे । प्रतिःप्रतिनिधिप्रतिदानयोः । अधिपरीअनर्थकौ । सुःपूजायाम् ।

सूत्रपा. १ । ४ ॥ ४ ॥

अतिरतिक्रमणेच । अपिःपदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु । अधिरीश्वरे । विभाषाकृञि । लःपरस्मैपदम् । तङानावात्मनेपदम् ॥ ५॥ तिङस्त्रीणित्रीणिप्रथममध्यमोत्तमाः । तान्येकवचनद्विवचनबहुवचनान्येकशः । सुपः । विभक्तिश्च । युष्मद्युपपदेसमानाधिकरणेस्थानिन्यपिमध्यमः । प्रहासेचमन्योपपदेमन्यतेरुत्तमएकवच्च । अस्मद्युत्तमः । शेषेप्रथमः । परःसंनिकर्षःसंहिता । विरामोऽवसानम् ॥ ६ ॥ आकडाराद्वहुष्वनुप्रतिगृणऊर्यादिच्छन्दसि तिङोदश ॥ इतिप्रथमाध्यायेचतुर्थःपादः ॥ ४ ॥ ॥ इतिसूत्रपाठेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥

ॐ ॥ समर्थःपदविधिः । सुबामन्त्रितेपराङ्गवत्स्वरे । प्राक्कडारात्समासः । सहसुपा । अव्ययीभावः । अव्ययेविभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु । यथासादृश्ये । यावदवधारणे । सुप्प्रतिनामात्रार्थे । अक्षशलाकासंख्याःपरिणा । विभाषा । अपपरिबहिरंचवःपंचम्या । आङ्मर्यादाभिविध्योः । लक्षणेनाभिप्रतीआभिमुख्ये । अनुर्यत्समया । यस्यचायामः । तिष्ठद्गुप्रभृतीनिच । पारेमध्येषष्ठ्यावा । संख्यावंश्येन । नदीभिश्च ॥ १ ॥ अन्यपदार्थेचसंज्ञायाम् । तत्पुरुषः । द्विगुश्च । द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । स्वयंक्तेन । खट्वाक्षेपे । सामि । कालाः । अत्यन्तसंयोगेच । तृतीया तत्कृतार्थेनगुणवचनेन । पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः । कर्तृकरणेकृताबहुलम् । कृत्यैरधिकार्थवचने ।

अष्टा. ॥ ५ ॥

सूत्रपा. २ । २

अन्नेनव्यंजनम् । भक्ष्येणमिश्रीकरणम् । चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः । पंचमीभयेन । अपेतापोढमुक्तपतितापत्रस्तैरल्पशः । स्तोकान्तिकदूरार्थकृच्छ्राणिक्तेन । सप्तमीशौण्डैः ॥ २ ॥ सिद्धशुष्कपक्वबन्धैश्च । ध्वाङ्क्षेण क्षेपे । कृत्यैर्ऋणे । संज्ञायाम् । क्तेनाहोरात्रावयवाः । तत्र । क्षेपे । पात्रेसमितादयश्च । पूर्वकालैकसर्वजरत्पुराणनवकेवलाःसमानाधिकरणेन । दिक्संख्येसंज्ञायाम् । तद्धितार्थोत्तरपदसमाहारेच । संख्यापूर्वोद्विगुः । कुत्सितानिकुत्सनैः । पापाणकेकुत्सितैः । उपमानानिसामान्यवचनैः । उपमितंव्याघ्रादिभिःसामान्याप्रयोगे । विशेषणंविशेष्येणबहुलम् । पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च । श्रेण्यादयःकृतादिभिः । क्तेननञ्विशिष्टेनानञ् ॥ ३ ॥ सन्महत्परमोत्तमोत्कृष्टाःपूज्यमानैः । वृन्दारकनागकुंजरैःपूज्यमानम् । कतरकतमौजातिपरिप्रश्ने । किंक्षेपे । पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः । प्रशंसावचनैश्च । युवाखलतिपलितवलिनजरतीभिः । कृत्यतुल्याख्याअजात्या । वर्णोवर्णेन । कुमारःश्रमणादिभिः । चतुष्पादोगर्भिण्या । मयूरव्यंसकादयश्च ॥ ४ ॥ समर्थोऽन्यपदार्थेसिद्धशुष्कसन्महद्वादश ॥ इतिद्वितीयाध्यायेप्रथमःपादः ॥ १ ॥ ॥ ७ ॥

॥ ५ ॥

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे । अर्धंनपुंसकम् । द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् । प्राप्तापन्नेचद्वितीयया । कालाःपरिमाणिना । नञ् । ईषदकृता । षष्ठी । याजकादिभिश्च । ननिर्धारणे । पूरणगुणसुहितार्थसदव्यय

तव्यसमानाधिकरणेन । क्तेनचपूजायाम् । अधिकरणवाचिनाच । कर्मणिच । तृजकाभ्यांकर्तरि । कर्तरिच । नित्यं क्रीडाजीविकयोः । कुगतिप्रादयः । उपपदमतिङ् । अमैवाव्ययेन ॥ १ ॥ तृतीयाप्रभृतीन्यन्यतरस्याम् । क्त्वाच । शेषोबहुव्रीहिः । अनेकमन्यपदार्थे । संख्ययाव्ययासन्नादूराधिकसंख्याःसंख्येये । दिङ्नामान्यन्तराले । तत्रतेनेद मितिसरूपे । तेनसहेतितुल्ययोगे । चार्थेद्वन्द्वः । उपसर्जनंपूर्वम् । राजदन्तादिषुपरम् । द्वन्द्वेघि । अजाद्यदन्तम् । अल्पाच्तरम् । सप्तमीविशेषणेबहुव्रीहौ । निष्ठा । वाहिताग्न्यादिषु । कडाराःकर्मधारये ॥ २ ॥ पूर्वापराधरोत्तरंतृ तीयाप्रभृतीन्यष्टादश ॥ इतिद्वितीयाध्यायेद्वितीयःपादः ॥ २ ॥ ॥ ७ ॥ अनभिहिते । कर्मणिद्वितीया । तृतीया चहोश्छन्दसि । अन्तरान्तरेणयुक्ते । कालाध्वनोरत्यन्तसंयोगे । अपवर्गेतृतीया । सप्तमीपंचम्यौकारकमध्ये । कर्म प्रवचनीययुक्तेद्वितीया । यस्मादधिकंयस्यचेश्वरवचनंतत्रसप्तमी । पंचम्यपाङ्परिभिः । प्रतिनिधिप्रतिदानेचयस्मा त् । गत्यर्थकर्मणिद्वितीयाचतुर्थ्यौचेष्टायामनध्वनि । चतुर्थीसंप्रदाने । क्रियार्थोपपदस्यचकर्मणिस्थानिनः । तुम र्थाच्चभाववचनात् । नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च । मन्यकर्मण्यनादरेविभाषाप्राणिषु । कर्तृकरणयोस्तृती या । सहयुक्तेऽप्रधाने । येनाङ्गविकारः ॥१॥ इत्थंभूतलक्षणे । संज्ञोऽन्यतरस्यांकर्मणि । हेतौ । अकर्तर्यृणेपंचमी । विभाषागुणेऽस्त्रियाम् । षष्ठीहेतुप्रयोगे । सर्वनाम्नस्तृतीयाच । अपादानेपंचमी । अन्यारादितरर्तेदिक्छब्दांचूत्तरप

दाजाहियुक्ते। षष्ठ्यतसर्थप्रत्ययेन। एनपाद्वितीया। पृथग्विनानानाभिस्तृतीयान्यतरस्याम्। करणेचस्तोकाल्पकृच्छ्र
कतिपयस्यासत्त्ववचनस्य। दूरान्तिकार्थैःषष्ठ्यन्यतरस्याम्। दूरान्तिकार्थेभ्योद्वितीयाच। सप्तम्यधिकरणेच।
यस्यचभावेनभावलक्षणम्। षष्ठीचानादरे। स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च। आयुक्तकुशलाभ्यां
चासेवायाम् ॥२॥ यतश्चनिर्धारणम्। पंचमीविभक्ते। साधुनिपुणाभ्यामर्चायांसप्तम्यप्रतेः। प्रसितोत्सुकाभ्यांतृ
तीयाच। नक्षत्रेचलुपि। प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रेप्रथमा। संबोधनेच। सामन्त्रितम्। एकवचनंसं
बुद्धिः। षष्ठीशेषे। ज्ञोऽविदर्थस्यकरणे। अधीगर्थदयेशांकर्मणि। कृञः प्रतियत्ने। रुजार्थानांभाववचनानामज्वरेः।
आशिषिनाथः। जासिनिप्रहणनाटक्राथपिषांहिंसायाम्। व्यवहृपणोःसमर्थयोः। दिवस्तदर्थस्य। विभाषोपसर्गे।
द्वितीयाब्राह्मणे। प्रेष्यब्रुवोर्हविषोदेवतासंप्रदाने ॥३॥ चतुर्थ्यर्थेबहुलंछन्दसि। यजेश्चकरणे। कृत्वोर्थप्रयोगेकालेऽ
धिकरणे। कर्तृकर्मणोःकृति। उभयप्राप्तौकर्मणि। क्तस्यचवर्तमाने। अधिकरणवाचिनश्च। नलोकाव्ययनिष्ठाख
लर्थतृनाम्। अकेनोर्भविष्यदाधमर्ण्ययोः। कृत्यानांकर्तरिवा। तुल्यार्थैरतुलोपमाभ्यांतृतीयान्यतरस्याम्। चतुर्थी ॥ ६ ॥
चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ ४ ॥ अनभिहितइत्थंभूतयतश्चप्रेष्यब्रुवोस्त्रयोदश ॥ इतिद्वितीयाध्या
येतृतीयःपादः ॥ ३ ॥ ७ ॥ द्विगुरेकवचनम्। द्वन्द्वश्चप्राणितूर्यसेनाङ्गानाम्। अनुवादेचरणानाम्। अध्वर्युक्र

तुरनपुंसकम् । अध्ययनतोऽविप्रकृष्टाख्यानाम् । जातिरप्राणिनाम् । विशिष्टलिङ्गोनदीदेशोऽग्रामाः । क्षुद्रजन्त
वः । येषांचविरोधःशाश्वतिकः । शूद्राणामनिरवसितानाम् । गवाश्वप्रभृतीनिच । विभाषावृक्षमृगतृणधान्यव्यं
जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । विप्रतिषिद्धंचानधिकरणवाचि । नदधिपयआदीनि । अधिकरणै
तावत्त्वेच । विभाषासमीपे । सनपुंसकम् । अव्ययीभावश्च । तत्पुरुषोऽनञ्कर्मधारयः । संज्ञायांकन्थोशीनरेषु
॥ १ ॥ उपज्ञोपक्रमंतदाद्याचिख्यासायाम् । छायाबाहुल्ये । सभाराजामनुष्यपूर्वा । अशालाच । विभाषासेनासु
राच्छायाशालानिशानाम् । परवल्लिङ्गंद्वन्द्वतत्पुरुषयोः । पूर्ववदश्ववडवौ । हेमन्तशिशिरावहोरात्रेचच्छन्दसि ।
रात्राह्नाहाःपुंसि । अपथंनपुंसकम् । अर्धर्चाःपुंसिच । इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । एतदस्त्रतसोस्त्रतसौ
चानुदात्तौ । द्वितीयाटौस्स्वेनः । आर्धधातुके । अदोजग्धिर्ल्यप्तिकिति । लुङ्सनोर्घस्लृ । घञपोश्च । बहुलंछन्दसि ।
लिट्यन्यतरस्याम् ॥ २ ॥ वेञोवयिः । हनोवधलिङि । लुङिच । आत्मनेपदेष्वन्यतरस्याम् । इणोगालुङि । णौ
गमिरबोधने । सनिच । इङश्च । गाङ्लिटि । विभाषालुङ्लृङोः । णौचसंश्चङोः । अस्तेर्भूः । ब्रुवोवचिः । चक्षिङः
ख्याञ् । वालिटि । अजेर्व्यघञपोः । वायौ । ण्यक्षत्रियार्षञितोयूनिलुगणिञोः । पैलादिभ्यश्च । इञःप्राचाम्
॥ ३ ॥ नतौल्वलिभ्यः । तद्राजस्यबहुषुतेनैवास्त्रियाम् । यस्कादिभ्योगोत्रे । यञञोश्च । अत्रिभृगुकुत्सवसिष्ठगोत

माङ्गिरोभ्यश्च । बह्वचइञः प्राच्यभरतेषु । नगोपवनादिभ्यः । तिककितवादिभ्योद्वन्द्वे । उपकादिभ्योऽन्यतरस्या मद्वन्द्वे । आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । सुपोधातुप्रातिपदिकयोः । अदिप्रभृतिभ्यःशपः । वहुलंछन्दसि । यङोऽचिच । जुहोत्यादिभ्यःश्लुः । बहुलंछन्दसि । गातिस्थाघुपाभूभ्यःसिचःपरस्मैपदेषु । विभाषाघ्राधेट्शाच्छासः । तनादिभ्यस्तथासोः । मन्त्रेघसह्वरणशवृदहाद्वृच्कृगमिजनिभ्योलेः ॥ ४ ॥ आमः । अव्ययादाप्सुपः । नाव्ययीभा वादतोऽम्त्वपंचम्याः । तृतीयासप्तम्योर्बहुलम् । लुटःप्रथमस्यडारौरसः ॥ ५ ॥ द्विगुरुपञ्जोपक्रमंवेञोवम्रिर्नतौल्व लिभ्यआमःपञ्च ॥ इतिद्वितीयाध्यायेचतुर्थःपादः ॥ ४ ॥ इतिद्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥

ॐ ॥ प्रत्ययः । परश्च । आद्युदात्तश्च । अनुदात्तौसुप्पितौ । गुप्तिज्किद्भ्यःसन् । मान्वधदान्शान्भ्योदीर्घश्चाभ्या सस्य । धातोःकर्मणःसमानकर्तृकादिच्छायांवा । सुपआत्मनःक्यच् । काम्यच्च । उपमानादाचारे । कर्तुःक्यङ्सलो पश्च । भृशादिभ्योभुव्यच्वेर्लोपश्चहलः । लोहितादिडाज्भ्यःक्यष् । कष्टायक्रमणे । कर्मणोरोमन्थतपोभ्यांवर्तिच रोः । वाष्पोष्मभ्यामुद्वमने । शब्दवैरकलहाभ्रकण्वमेघेभ्यःकरणे । सुखादिभ्यःकर्तृवेदनायाम् । नमोवरिवश्चित्रङः क्यच् । पुच्छभाण्डचीवराण्णिङ् ॥ १ ॥ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्योणिच् । धातोरेकाचो हलादेःक्रियासमभिहारेयङ् । नित्यंकौटिल्येगतौ । लुपसदचरजपजभदहदशगॄभ्योभावगर्हायाम् । सत्यापपाशरूप

वीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्योणिच् । हेतुमतिच । कण्ड्वादिभ्योयक् । गुपूधूपविच्छिपणिपनि भ्यआयः । ऋतेरीयङ् । कमेर्णिङ् । आयादयआर्धधातुकेवा । सनाद्यन्ताधातवः । स्यतासीलृलुटोः । सिब्बहुलं लेटि । कास्प्रत्ययादाममन्त्रेलिटि । इजादेश्चगुरुमतोऽनृच्छः । दयायासश्च । उषविदजागृभ्योऽन्यतरस्याम् । भीह्रीभृहुवांश्लुवच्च । कृञ्चानुप्रयुज्यतेलिटि ॥ २ ॥ विदांकुर्वन्त्वित्यन्यतरस्याम् । अभ्युत्सादयांप्रजनयांचिकयांर मयामकःपावयांक्रियाद्विदामक्रन्निति च्छन्दसि । च्लिलुङि । च्लेःसिच् । शलइगुपधादनिटःक्सः । श्लिषआलिङ्ग ने । नदृशः । णिश्रिद्रुस्रुभ्यःकर्तरिचङ् । विभाषाधेट्श्व्योः । गुपेश्छन्दसि । नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः । अस्यतिवक्तिख्यातिभ्योऽङ् । लिपिसिचिह्वश्च । आत्मनेपदेष्वन्यतरस्याम् । पुषादिद्युताद्यॢदितःपरस्मैपदेषु । स र्तिशास्त्यर्तिभ्यश्च । इरितोवा । जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुंचुश्विभ्यश्च । कृमृदृरुहिभ्यश्छन्दसि । चिण्तेपदः ॥ ३ ॥ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । अचःकर्मकर्तरि । दुहश्च । नरुधः । तपोऽनुतापेच । चि ण्भावकर्मणोः । सार्वधातुकेयक् । कर्तरिशप् । दिवादिभ्यःश्यन् । वाभ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । यसोऽनुपसर्गात् । संयसश्च । स्वादिभ्यःश्नुः । श्रुवःशृच । अक्षोऽन्यतरस्याम् । तनूकरणेतक्षः । तुदादिभ्यःशः । रुधादिभ्यःश्नम् । तनादिकृञ्भ्यउः । धिन्विकृण्व्योरच ॥ ४ ॥ क्र्यादिभ्यःश्ना । स्तंभुस्तुंभुस्कंभुस्कुंभुस्कु

अष्टा. ॥ ८ ॥

ञ्भ्यःश्नुश्च । हलःश्नःशानज्झौ । छन्दसिशायजपि । व्यत्ययोबहुलम् । लिङ्याशिष्यङ् । कर्मवत्कर्मणातुल्यक्रियः । तपस्तपःकर्मकस्यैव । नदुहस्नुनमांयक्चिणौ । कुषिरजोःप्राचांश्यन्परस्मैपदंच । धातोः । तत्रोपपदंसप्तमीस्थम् । कृदतिङ् । वासरूपोस्त्रियाम् । कृत्याःप्राङ्ण्वुलः । तव्यत्तव्यानीयरः । अचोयत् । पोरदुपधात् । शकिसहोश्च । गदमदचरयमश्चानुपसर्गे ॥ ५ ॥ अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु । वह्यंकरणम् । अर्यःस्वामिवैश्ययोः । उपसर्याकाल्याप्रजने । अजर्यंसंगतम् । वदःसुपिक्यप्च । भुवोभावे । हनस्तच । एतिस्तुशास्वृदृजुषःक्यप् । ऋदुपधाच्चाक्लृपिचृतेः । ईचखनः । भृञोऽसंज्ञायाम् । मृजेर्विभाषा । राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः । भिद्योद्ध्यौनदे । पुष्यसिद्ध्यौनक्षत्रे । विपूयविनीयजित्यामुंजकल्कहलिषु । प्रत्यपिभ्यांग्रहेश्छन्दसि । पदास्वैरिबाह्यापक्ष्येषुच । विभाषाकृवृषोः ॥ ६ ॥ युग्यंचपत्रे । अमावस्यदन्यतरस्याम् । छन्दसिनिष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि । ऋहलोर्ण्यत् । ओरावश्यके । आसुयुवपिरपिलपित्रपिचमश्च । आनाय्योऽनित्ये । प्रणाय्योऽसंमतौ । पाय्यसांनाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु । क्रतौकुण्डपाय्यसंचाय्यौ । अग्नौपरिचाय्योपचाय्यसमूह्याः । चित्याग्निचित्येच । ण्वुल्तृचौ । नन्दिग्रहिपचादिभ्योल्युणिन्यचः । इगुपधज्ञाप्रीकिरःकः । आतश्चोपसर्गे । पाघ्राध्माधेड्

सूत्रपा. ३ । १

॥ ८ ॥

दृशःशः । अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ददातिदधात्योर्विभाषा । ज्वलितिकसन्ते भ्योणः ॥ ७ ॥ श्याद्व्यधास्रुसंस्त्र्वतीणवसावहृलिहश्लिषश्वसश्च । दुन्योरनुपसर्गे । विभाषाग्रहः । गेहेकः । शिल्पि निष्वुन् । गस्थकन् । ण्युट्च । हश्चव्रीहिकालयोः । प्रुसृल्वः समभिहारेवुन् । आशिषिच । प्रत्ययोमुण्डविदांदीपज नक्ष्यादिभ्योऽवद्ययुग्यंचश्याद्व्यधादश ॥ इतितृतीयाध्यायेप्रथमःपादः ॥ १ ॥ ७ ॥ कर्मण्यण् । ह्वावामश्च । आ तोऽनुपसर्गेकः । सुपिस्थः । तुन्दशोकयोःपरिमृजापनुदोः । प्रेदाज्ञः । समिख्यः । गापोष्टक् । हरतेरनुद्यमनेऽच् । वयसिच । आङिताच्छील्ये । अर्हः । स्तम्बकर्णयोरमिजपोः । शमिधातोःसंज्ञायाम् । अधिकरणेशेतेः । चरेष्टः । भिक्षासेनादायेषुच । पुरोऽग्रतोऽग्रेषुसर्तेः । पूर्वेकर्तरि । कृञोहेतुताच्छील्यानुलोम्येषु ॥ १ ॥ दिवाविभानिशाप्र भाभास्कारान्तानन्तादिवहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घावाह्वहर्यत्तद्धनुररुःषु । कर्मणिभृ तौ । नशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु । स्तम्बशकृतोरिन् । हरतेर्दृतिनाथयोःपशौ । फलेग्रहिरात्मंभ रिश्च । छन्दसिवनसनरक्षिमथाम् । एजेःखश् । नासिकास्तनयोर्ध्माधेटोः । नाडीमुष्ट्योश्च । उदिकूलेरुजिवहोः । वहाभ्रेलिहः । परिमाणेपचः । मितनखेच । विध्वरुषोस्तुदः । असूर्यललाटयोर्दृशितपोः । उग्रंपश्येरंमदपाणिंध माश्च । प्रियवशेवदःखच् । द्विषत्परयोस्तापेः । वाचियमोव्रते ॥ २ ॥ पूःसर्वयोर्दारिसहोः । सर्वकूलाभ्रकरीषेषुक

षः । मेघर्तिभयेषुकृञः । क्षेमप्रियमद्रेऽण्च । आशितेभुवःकरणभावयोः । संज्ञायांभृतृवृजिधारिसहितपिदमः । गमश्च । अन्तात्यन्ताध्वदूरपारसर्वानन्तेषुडः । आशिषिहनः । अपेक्लेशतमसोः । कुमारशीर्षयोर्णिनिः । लक्षणेजायापत्योष्टक् । अमनुष्यकर्तृकेच । शक्तौहस्तिकपाटयोः । पाणिघताडघौशिल्पिनि । आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषुच्व्यर्थेष्वच्वौकृञःकरणेख्युन् । कर्तरिभुवःखिष्णुच्खुकञौ । स्पृशोऽनुदकेक्किन् । ऋत्विग्दधृक्स्रग्दिगुष्णिगंचुयुजिक्रुञ्चांच । त्यदादिषुदृशोनालोचनेकञ्च ॥३॥ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपिक्किप् । भजोण्विः । छन्दसिसहः । वहश्च । कव्यपुरीषपुरीष्येषुञ्युट् । हव्येऽनन्तःपादम् । जनसनखनक्रमगमोविट् । अदोऽनन्ने । क्रव्येच । दुहःकब्घश्च । मन्त्रेश्वेतवहोक्थशस्पुरोडाशोण्विन् । अवेयजः । विजुपेच्छन्दसि । आतोमनिन्क्वनिब्वनिपश्च । अन्येभ्योऽपिदृश्यन्ते । क्विप्च । स्थःकच । सुप्यजातौणिनिस्ताच्छील्ये । कर्तर्युपमाने । व्रते ॥ ४ ॥ बहुलमाभीक्ष्ण्ये । मनः । आत्ममानेखश्च । भूते । करणेयजः । कर्मणिहनः । ब्रह्मभ्रूणवृत्रेषुक्विप् । बहुलंछन्दसि । सुकर्मपापमन्त्रपुण्येषुकृञः । सोमेसुञः । अग्नौचेः । कर्मण्यग्न्याख्यायाम् । कर्मणीनिविक्रियः । दृशेःक्वनिप् । राजनियुधिकृञः । सहेच । सप्तम्यांजनेर्डः । पंचम्यामजातौ । उपसर्गेचसंज्ञायाम् । अनौकर्मणि ॥ ५ ॥ अन्येष्वपिदृश्यते । निष्ठा । सुयजोर्ङ्वनिप् । जीर्यतेरतृन् । छन्दसिलिट् । लिटःकानज्वा । क्वसुश्च । भाषा

यांसदवसश्रुवः । उपेयिवाननाश्वाननूचानश्च । लुङ् । अनद्यतनेलङ् । अभिज्ञावचनेलृट् । नयदि । विभाषा साकाङ्क्षे । परोक्षेलिट् । हशश्वतोर्लङ्च । प्रश्नेचासन्नकाले । लट्स्मे । अपरोक्षेच । ननौपृष्टप्रतिवचने ॥६॥ नन्वो र्विभाषा । पुरिलुङ्चास्मे । वर्तमानेलट् । लटःशतृशानचावप्रथमासमानाधिकरणे । संबोधनेच । लक्षणहेत्वोः क्रियायाः । तौसत् । पूङ्यजोःशानन् । ताच्छील्यवयोवचनशक्तिषुचानश् । इङ्धार्योःशत्रकृच्छ्रिणि । द्विषोऽमि त्रे । सुञोयज्ञसंयोगे । अर्हःप्रशंसायाम् । आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । तृन् । अलंकृञ्निराकृञ्प्रजनोत्पचो त्पतोन्मदरुच्यपत्रपवृतुवृधुसहचरइष्णुच् । णेश्छन्दसि । भुवश्च । ग्लाजिस्थश्चग्स्नुः । त्रसिगृधिधृषिक्षिपेःक्नुः ॥७॥ शमित्यष्टाभ्योघिनुण् । संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुह दुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च । वौकषलसकत्थस्रम्भः । अपेचलषः । प्रेलपसृद्रुमथवदवसः । निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञोवुञ् । देविक्रुशोश्चोपस र्गे । चलनशब्दार्थादकर्मकाद्युच् । अनुदात्तेतश्चहलादेः । जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । क्रुधम ण्डार्थेभ्यश्च । नयः । सूददीपदीक्षश्च । लषपतपदस्थाभूवृषहनकमगमशृभ्यउकञ् । जल्पभिक्षकुट्टलुण्टवृङःषाक न् । प्रजोरिनिः । जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च । स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्यआलुच् ।

दाधेट्सिशदसदोरुः । सृघस्यदःक्मरच् ॥ ८ ॥ भंजभासमिदोघुरच् । विदिभिदिच्छिदेःकुरच् । इण्नशजिसर्ति
भ्यःक्वरप् । गत्वरश्च । जागरूकः । यजजपदशांयङः । नमिकम्पिस्म्यजसकमहिंसदीपोरः । सनाशंसभिक्षउः ।
बिंदुरिच्छुः । क्याच्छन्दसि । आदृगमहनजनःकिकिनौलिट्च । स्वपितृषोर्नजिङ् । शृवन्द्योरारुः । भियःक्रुक्लुक
नौ । स्थेशभासपिसकसोवरच् । यश्चयङः । भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवःक्विप् । अन्येभ्योऽपिदृश्यते ।
भुवःसंज्ञान्तरयोः । विप्रसंभ्योड्वसंज्ञायाम् ॥ ९ ॥ धःकर्मणिष्ट्रन् । दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः
करणे । हलसूकरयोःपुवः । अर्तिलूधूसूखनसहचरइत्रः । पुवःसंज्ञायाम् । कर्तरिचर्षिदेवतयोः । ञीतःक्तः । म
तिबुद्धिपूजार्थेभ्यश्च । कर्मणिदिवापूःसर्वसत्सूबहुलमन्येष्वपिनन्वोःशमितिभंजभासधःकर्मण्यष्टौ ॥ इतितृतीया
ध्यायेद्वितीयःपादः ॥ २ ॥ ७ ॥ उणादयोबहुलम् । भूतेऽपिदृश्यन्ते । भविष्यतिगम्यादयः । यावत्पुरानिपात
योर्लट् । विभाषाकदाकर्ह्योः । किंवृत्तेलिप्सायाम् । लिप्स्यमानसिद्धौच । लोडर्थलक्षणेच । लिङ्चोर्ध्वमौहूर्तिके ।
तुमुन्ण्वुलौक्रियायांक्रियार्थायाम् । भाववचनाश्च । अण्कर्मणिच । लृट्शेषेच । लृटःसद्वा । अनद्यतनेलुट् । पदरु
जविशस्पृशोघञ् । सृस्थिरे । भावे । अकर्तरिचकारकेसंज्ञायाम् । परिमाणाख्यायांसर्वेभ्यः ॥ १ ॥ इङश्च ।
उपसर्गेरुवः । समियुद्रुदुवः । श्रिणीभुवोऽनुपसर्गे । वौक्षुश्रुवः । अवोदोर्नियः । प्रेद्रुस्तुस्रुवः । निरभ्योःपूल्वोः ।

उन्न्योर्ग्रः । कॄधान्ये । यज्ञेसमिस्तुवः । प्रेस्त्रोऽयज्ञे । प्रथनेवावशब्दे । छन्दोनाम्निच । उदिग्रहः । समिमुष्टौ । परिन्योर्नीणोर्द्यूताभ्रेषयोः । परावनुपात्ययइणः । व्युपयोःशेतेःपर्याये । हस्तादानेचेरस्तेये ॥ २ ॥ निवासचिति शरीरोपसमाधानेष्वादेश्चकः । संघेचानौत्तराधर्ये । कर्मव्यतिहारेणच्स्त्रियाम् । अभिविधौभावइनुण् । आक्रोशेऽ वन्योर्ग्रहः । प्रेलिप्सायाम् । परौयज्ञे । नौवृधान्ये । उदिश्रयतियौतिपूद्रुवः । विभाषाङिरुप्लुवोः । अवेग्रहोवर्ष प्रतिबन्धे । प्रेवणिजाम् । रश्मौच । वृणोतेराच्छादने । परौभुवोऽवज्ञाने । एरच् । ऋदोरप् । ग्रहवृदृणिश्चिगम श्च । उपसर्गेऽदः । नौणच ॥ ३ ॥ व्यधजपोरनुपसर्गे । स्वनहसोर्वा । यमःसमुपनिविषुच । नौगदनदपठस्वनः । क्वणोवीणायांच । नित्यंपणःपरिमाणे । मदोऽनुपसर्गे । प्रमदसंमदौहर्षे । समुदोरजःपशुषु । अक्षेषुग्लहः । प्रजने सर्तेः । ह्वःसंप्रसारणंचन्यभ्युपविषु । आङियुद्धे । निपानमाहावः । भावेऽनुपसर्गस्य । हनश्चवधः । मूर्तौघनः । अन्तर्घनोदेशे । अगारैकदेशेप्रघणःप्रघाणश्च । उद्घनोऽत्याधानम् ॥ ४ ॥ अपघनोऽङ्गम् । करणेऽयोविद्रुषु । स्तम्बेकच । परौघः । उपघ्नआश्रये । संघोद्घौगणप्रशंसयोः । निघोनिमितम् । ड्वितःक्त्रिः । ट्वितोऽथुच् । यज याचयतविच्छप्रच्छरक्षोनङ् । स्वपोनन् । उपसर्गेघोःकिः । कर्मण्यधिकरणेच । स्त्रियांक्तिन् । स्थागापापचोभावे । मन्त्रेवृषेषपचमनविदभूवीराउदात्तः । ऊतियूतिजूतिसातिहेतिकीर्तयश्च । व्रजयजोर्भावेक्यप् । संज्ञायांसमजनिष

दनिपतमनविदषुञ्शीङ्भृञिणः । कृञः शच ॥ ५ ॥ इच्छा । अप्रत्ययात् । गुरोश्चहलः । षिद्भिदादिभ्योऽङ् । चिन्तिपूजिकथिकुम्बिचर्चश्च । आतश्चोपसर्गे । ण्यासश्रन्थोयुच् । रोगाख्यायांण्वुल्बहुलम् । संज्ञायाम् । विभाषाख्यानपरिप्रश्नयोरिञ्च । पर्यायार्हर्णोत्पत्तिषुण्वुच् । आक्रोशेनञ्यनिः । कृत्यल्युटोबहुलम् । नपुंसकेभावेक्तः । ल्युट्च । कर्मणिचयेनसंस्पर्शात्कर्तुःशरीरसुखम् । करणाधिकरणयोश्च । पुंसिसंज्ञायांघःप्रायेण । गोचरसंचरवहव्रजव्यजापणनिगमाश्च । अवेतृस्त्रोर्घञ् ॥ ६ ॥ हलश्च । अध्यायन्यायोद्यावसंहाराधारावायाश्च । उदङ्कोऽनुदके । जालमानायः । खनोघच । ईषद्दुःसुषुकृच्छ्राकृच्छ्रार्थेषुखल् । कर्तृकर्मणोश्चभूकृञोः । आतोयुच् । छन्दसिगत्यर्थेभ्यः । अन्येभ्योऽपिदृश्यते । वर्तमानसामीप्येवर्तमानवद्वा । आशंसायांभूतवच्च । क्षिप्रवचनेलृट् । आशंसावचनेलिङ् । नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः । भविष्यतिमर्यादावचनेऽवरस्मिन् । कालविभागेचानहोरात्राणाम् । परस्मिन्विभाषा । लिङ्निमित्तेलृङ्क्रियातिपत्तौ । भूतेच ॥ ७ ॥ वोताप्योः । गर्हायांलडपिजात्वोः । विभाषाकथमिलिङ्च । किंवृत्तेलिङ्लृटौ । अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । किंकिलास्त्यर्थेषुलृट् । जातुयदोर्लिङ् । यच्चयत्रयोः । गर्हायांच । चित्रीकरणेच । शेषेलृडयदौ । उताप्योःसमर्थयोर्लिङ् । कामप्रवेदनेकच्चिति । संभावनेऽलमितिचेत्सिद्धाप्रयोगे । विभाषाधातौसंभावनवचनेऽयदि । हेतुहेतुमतोर्लिङ् । इच्छार्थेषुलिङ्लोटौ । समानकर्तृकेषुतुमुन् ।

लिङ्च । इच्छार्थेभ्योविभाषावर्तमाने ॥ ८ ॥ विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषुलिङ् । लोट्च । प्रैषातिसर्ग
प्राप्तकालेषुकृत्याश्च । लिङ्चोर्ध्वमौहूर्तिके । स्मेलोट् । अधीष्टेच । कालसमयवेलासुतुमुन् । लिङ्यदि । अर्हेकृत्यतृ
चश्च । आवश्यकाधमर्ण्ययोर्णिनिः । कृत्याश्च । शकिलिङ्च । आशिषिलिङ्लोटौ । क्तिच्क्तौचसंज्ञायाम् । माङिलुङ् ।
स्मोत्तरेलङ्च ॥ उणादयइङोनिवासव्यधजपोरपघनइच्छाहलश्चवोताप्योर्विधिषोडश ॥ इतितृतीयाध्यायेतृतीयः
पादः ॥ ३ ॥ ७ ॥ धातुसंबन्धेप्रत्ययाः । क्रियासमभिहारेलोट्लोटोहिस्वौवाचतध्वमोः । समुच्चयेऽन्यतरस्याम् ।
यथाविध्यनुप्रयोगःपूर्वस्मिन् । समुच्चयेसामान्यवचनस्य । छन्दसिलुङ्लङ्लिटः । लिङर्थेलेट् । उपसंवादाशङ्कयोश्च ।
तुमर्थेसेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः । प्रयैरोहिष्यैअव्यथिष्यै । दृशेविख्येच ।
शकिणमुल्कमुलौ । ईश्वरेतोसुन्कसुनौ । कृत्यार्थेतवैकेन्केन्यत्वनः । अवचक्षेच । भावलक्षणेस्थेण्कृञ्वदिचरिहुत
मिजनिभ्यस्तोसुन् । सृपितृदोःकसुन् । अलंखल्वोःप्रतिषेधयोःप्राचांक्त्वा । उदीचांमाङोव्यतीहारे । परावरयोगेच
॥ १ ॥ समानकर्तृकयोःपूर्वकाले । आभीक्ष्णयेणमुल्च । नयद्यनाकाङ्क्षे । विभाषाग्रेप्रथमपूर्वेषु । कर्मण्याक्रोशेकृञः
खमुञ् । स्वादुमिणमुल् । अन्यथैवंकथमित्थंसुसिद्धाप्रयोगश्चेत् । यथातथयोरसूयाप्रतिवचने । कर्मणिदृशिविदोः
साकल्ये । यावतिविन्दजीवोः । चर्मोदरयोःपूरेः । वर्षप्रमाणऊलोपश्चास्यान्यतरस्याम् । चेलेक्नोपेः । निमूलसमू

लयोःकषः । शुष्कचूर्णरूक्षेषुपिषः । समूलाकृतजीवेषुहन्कृञ्ग्रहः । करणेहनः । स्नेहनेपिषः । हस्तेवर्तिग्रहोः । स्वेपुषः ॥ २ ॥ अधिकरणेबन्धः । संज्ञायाम् । कर्त्रोर्जीवपुरुषयोर्नशिवहोः । ऊर्ध्वेशुषिपूरोः । उपमानेकर्मणिच । कषादिषुयथाविध्यनुप्रयोगः । उपदंशस्तृतीयायाम् । हिंसार्थानांचसमानकर्मकाणाम् । सप्तम्यांचोपपीडरुधकर्षः । समासत्तौ । प्रमाणेच । अपादानेपरीप्सायाम् । द्वितीयायांच । स्वाङ्गेऽध्रुवे । परिक्लिश्यमानेच । विशिपतिपदिस्कन्दांव्याप्यमानासेव्यमानयोः । अस्यतितृषोःक्रियान्तरेकालेषु । नाम्न्यादिशिग्रहोः । अव्ययेऽयथाभिप्रेताख्यानेकृञःक्त्वाणमुलौ । तिर्यच्यपवर्गे ॥ ३ ॥ स्वाङ्गेतस्प्रत्ययेकृभ्वोः । नाधार्थप्रत्ययेच्व्यर्थे । तूष्णीमिभुवः । अन्वच्यानुलोम्ये । शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषुतुमुन् । पर्याप्तिवचनेष्वलमर्थेषु । कर्तरिकृत् । भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्यावा । लःकर्मणिचभावेचाकर्मकेभ्यः । तयोरेवकृत्यक्तखलर्थाः । आदिकर्मणिक्तःकर्तरिच । गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च । दाशगोघ्नौसंप्रदाने । भीमादयोऽपादाने । ताभ्यामन्यत्रोणादयः । क्तोऽधिकरणेचध्रौव्यगतिप्रत्यवसानार्थेभ्यः । लस्य । तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् । टितआत्मनेपदानांटेरे । थासःसे ॥ ४ ॥ लिटस्तझयोरेशिरेच् । परस्मैपदानांणलतुसुस्थलथुसणल्वमाः । विदोलटोवा । ब्रुवःपञ्चानामादितआहोब्रुवः । लोटोलङ्वत् । एरुः । सेर्ह्यपिच्च । वाछन्दसि ।

मेर्निः । आमेतः । सवाभ्यांवामौ । आडुत्तमस्यपिच्च । एतऐ । लेटोऽडाटौ । आतऐ । वैतोऽन्यत्र । इतश्चलोपः परस्मैपदेषु । सउत्तमस्य । नित्यंङितः । इतश्च ॥ ५ ॥ तस्थस्थमिपांतांतंतामः । लिङःसीयुट् । यासुट्परस्मैपदेषूदात्तोङिच्च । किदाशिषि । झस्यरन् । इटोऽत् । सुट्तिथोः । झेर्जुस् । सिजभ्यस्तविदिभ्यश्च । आतः । लङःशाकटायनस्यैव । द्विषश्च । तिङ्शित्सार्वधातुकम् । आर्धधातुकंशेषः । लिट्च । लिङाशिषि । छन्दस्युभयथा । धातुसंबन्धेसमानाधिकरणेस्वाङ्गेलिटस्तस्थस्थमिपांसप्तदश ॥ इतितृतीयाध्यायेचतुर्थःपादः ॥ ४ ॥ ॥ ६९ ॥ इत्यष्टाध्यायीसूत्रपाठेतृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥ ॥

ॐ ॥ ङ्याप्प्रातिपदिकात् । स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् । स्त्रियाम् । अजाद्यतष्टाप् । ऋन्नेभ्योङीप् । उगितश्च । वनोरच । पादोऽन्यतरस्याम् । टाबृचि । नषट्स्वस्रादिभ्यः । मनः । अनोबहुव्रीहेः । डाबुभाभ्यामन्यतरस्याम् । अनुपसर्जनात् । टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनां । यञश्च । प्राचांष्फतद्धितः । सर्वत्रलोहितादिकतन्तेभ्यः । कौरव्यमांडूकाभ्यांच । वयसिप्रथमे ॥ १ ॥ द्विगोः । अपरिमाणबिस्ताचितकम्बल्येभ्योनतद्धितलुकि । काण्डान्तात्क्षेत्रे । पुरुषात्प्रमाणेऽन्यतरस्याम् । बहुव्रीहेरूधसो ङीष् । संख्याव्ययादेर्ङीप् । दामहायनान्ताच्च । अनउपधालोपिनोऽन्यतरस्याम् । नित्यंसंज्ञाछन्दसोः । केवल

स्त्री

मामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च । रात्रेश्चाजसौ । अन्तर्वत्पतिवतोर्नुक् । पत्युर्नोयज्ञसंयोगे । विभाषासपूर्वस्य । नित्यंसपत्न्यादिषु । पूतक्रतोरैच । वृषाकप्यग्निकुसितकुसिदानामुदात्तः । मनोरौवा । वर्णाद नुदात्तात्तोपधात्तोनः । अन्यतोङीष् ॥ २ ॥ षिद्गौरादिभ्यश्च । जानपदकुण्डगोणस्थलभाजनागकालनीलकुशका मुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु । शोणात्प्राचाम् । वोतोगुणवचनात् । बह्वादिभ्यश्च । नित्यंछन्दसि । भुवश्च । पुंयोगादाख्यायाम् । इन्द्रवरुणभवशर्वरुद्रमृडहिमार ण्ययवयवनमातुलाचार्याणामानुक् । क्रीतात्करणपूर्वात् । क्तादल्पाख्यायाम् । बहुव्रीहेश्चान्तोदात्तात् । अस्वाङ्ग पूर्वपदाद्वा । स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् । नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च । नक्रोडादिबह्वचः । सहन ञ्विद्यमानपूर्वाच्च । नखमुखात्संज्ञायाम् । दीर्घजिह्वीचच्छन्दसि । दिक्पूर्वपदान्ङीप् ॥ ३ ॥ वाहः । सख्यशिश्वी तिभाषायाम् । जातेरस्त्रीविषयादयोपधात् । पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च । इतोमनुष्यजातेः । ऊङु तः । बाह्वन्तात्संज्ञायाम् । पङ्गोश्च । ऊरूत्तरपदादौपम्ये । संहितशफलक्षणवामादेश्च । कद्रुकमण्डल्वोश्छन्दसि । संज्ञायाम् । शार्ङ्गरवाद्यञोङीन् । यङश्चाप् । आवट्याच्च । तद्धिताः । यूनस्तिः । अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ्गोत्रे । गोत्रावयवात् । क्रौड्यादिभ्यश्च ॥ ४ ॥ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ।

समर्थानांप्रथमाद्वा । प्राग्दीव्यतोऽण् । अश्वपत्यादिभ्यश्च । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । उत्सादिभ्योऽ
ञ् । स्त्रीपुंसाभ्यांनञ्स्नञौभवनात् । द्विगोर्लुगनपत्ये । गोत्रेऽलुगचि । यूनिलुक् । फक्फिञोरन्यतरस्याम् । तस्या
पत्यम् । एकोगोत्रे । गोत्राद्यून्यस्त्रियाम् । अतइञ् । बाह्वादिभ्यश्च । सुधातुरकङ्च । गोत्रेकुंजादिभ्यश्च्फञ् ।
नडादिभ्यःफक् । हरितादिभ्योऽञः ॥ ५ ॥ यञिञोश्च । शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु । द्रोणपर्वतजीव
न्तादन्यतरस्याम् । अनृष्यानन्तर्येबिदादिभ्योऽञ् । गर्गादिभ्योयञ् । मधुबभ्र्वोर्ब्राह्मणकौशिकयोः । कपिबोधादा
ङ्गिरसे । वतण्डाच्च । लुक्स्त्रियाम् । अश्वादिभ्यःफञ् । भर्गात्त्रैगर्ते । शिवादिभ्योऽण् । अवृद्धाभ्योनदीमानुषी
भ्यस्तन्नामिकाभ्यः । ऋष्यन्धकवृष्णिकुरुभ्यश्च । मातुरुत्संख्यासंभद्रपूर्वायाः । कन्यायाःकनीनच । विकर्णशुङ्ग
च्छगलाद्वत्सभरद्वाजात्रिषु । पीलायावा । ढक्चमण्डूकात् । स्त्रीभ्योढक् ॥ ६ ॥ द्व्यचः । इतश्चानिञः । शुभ्रा
दिभ्यश्च । विकर्णकुषीतकात्काश्यपे । भुवोवुक्च । कल्याण्यादीनामिनङ् । कुलटायावा । चटकायाऐरक् ।
गोधायाढ्रक् । आरगुदीचाम् । क्षुद्राभ्योवा । पितृष्वसुश्छण् । ढकिलोपः । मातृष्वसुश्च । चतुष्पाद्भ्योढञ् ।
गृष्ट्यादिभ्यश्च । राजश्वशुराद्यत् । क्षत्राद्घः । कुलात्खः । अपूर्वपदादन्यतरस्यांयड्ढकञौ ॥ ७ ॥ महाकुलादञ्ख
ञौ । दुष्कुलाड्ढक् । स्वसुश्छः । भ्रातुर्व्यच्च । व्यन्सपत्ने । रेवत्यादिभ्यष्ठक् । गोत्रस्त्रियाःकुत्सनेणच । वृद्धा

ठक्सौवीरेषुबहुलम् । फेश्छच । फाण्टाहृतिमिमताभ्यांणफिञौ । कुर्वादिभ्योण्यः । सेनान्तलक्षणकारिभ्यश्च । उदीचामिञ् । तिकादिभ्यःफिञ् । कौशल्यकार्मार्याभ्यांच । अणोद्व्यचः । उदीचांवृद्धादगोत्रात् । वाकिनादीनां कुक्च । पुत्रान्तादन्यतरस्याम् । प्राचामवृद्धात्फिन्बहुलम् ॥ ८ ॥ मनोर्जातावञ्यतौषुक्च । अपत्यंपौत्रप्रभृतिगोत्रम् । जीवतितुवंश्येयुवा । भ्रातरिचज्यायसि । वान्यस्मिन्सपिण्डेस्थविरतरेजीवति । वृद्धस्यचपूजायाम् । यूनश्चकुत्सायाम् । जनपदशब्दात्क्षत्रियादञ् । साल्वेयगान्धारिभ्यांच । द्व्यञ्मगधकलिङ्गसूरमसादण् । वृद्धेत्कोसलाजादाञ्ञ्यङ् । कुरुनादिभ्योण्यः । साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् । तेतद्राजाः । कम्बोजाल्लुक् । स्त्रियामवन्तिकुन्तिकुरुभ्यश्च । अतश्च । नप्राच्यभर्गादियौधेयादिभ्यः । ङ्याब्द्विगोःषिड्गौरादिवाहोदैवयज्ञियज्ञोर्ध्वचोमहाकुलान्मनोर्जातावष्टादश ॥ इतिचतुर्थाध्यायेप्रथमःपादः ॥ १ ॥ छ ॥ तेनरक्तंरागात् । लाक्षारोचनाशकलकर्दमाट्ठक् । नक्षत्रेणयुक्तःकालः । लुबविशेषे । संज्ञायांश्रवणाश्वत्थाभ्याम् । द्वन्द्वाच्छः । दृष्टंसाम । कलेर्ढक् । वामदेवाड्ड्यड्ड्यौ । परिवृतोरथः । पाण्डुकम्बलादिनिः । द्वैपवैयाघ्रादञ् । कौमारापूर्ववचने । तत्रोद्धृतममत्रेभ्यः । स्थण्डिलाच्छयितरिव्रते । संस्कृतंभक्षाः । शूलोखाद्यत् । दध्नष्ठक् । उदश्वितोऽन्यतरस्याम् । क्षीराड्ढञ् ॥ १ ॥ सास्मिन्पौर्णमासीतिसंज्ञायाम् । आग्रहायण्यश्वत्थाट्ठक् । विभाषाफाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ।

सास्यदेवता । कस्येत् । शुक्राद्धन् । अपोनप्त्रपांनप्तृभ्यांघः । छच । महेन्द्राद्घाणौच । सोमाट्ट्यण् । वाय्वृतुपित्रु
षसोयत् । द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छच । अग्नेर्ढक् । कालेभ्योभववत् । महाराज
प्रोष्ठपदाट्ठञ् । पितृव्यमातुलमातामहपितामहाः । तस्यसमूहः । भिक्षादिभ्योऽण् । गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराज
पुत्रवत्समनुष्याजाद्वुञ् । केदाराद्यञ्च ॥ २ ॥ ठञ्कवचिनश्च । ब्राह्मणमाणववाडवाद्यत् । ग्रामजनबन्धुसहायेभ्यस्त
ल् । अनुदात्तादेरञ् । खण्डिकादिभ्यश्च । चरणेभ्योधर्मवत् । अचित्तहस्तिधेनोष्ठक् । केशाश्वाभ्यांयञ्छावन्यतर
स्याम् । पाशादिभ्योयः । खलगोरथात् । इनित्रकट्यचश्च । विषयोदेशे । राजन्यादिभ्योवुञ् । भौरिक्याद्यैषुका
र्यादिभ्योविधल्भक्तलौ । सोऽस्यादिरितिच्छन्दसःप्रगाथेषु । संग्रामेप्रयोजनयोद्धृभ्यः । तदस्यांप्रहरणमितिक्रीडा
यांणः । घञःसास्यांक्रियेतिञः । तदधीतेतद्वेद । क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ३ ॥ क्रमादिभ्योवुन् । अनुब्राह्मणा
दिनिः । वसन्तादिभ्यष्ठक् । प्रोक्ताल्लुक् । सूत्राच्चकोपधात् । छन्दोब्राह्मणानिचतद्विषयाणि । तदस्मिन्नस्तीतिदेशेत
न्नाम्नि । तेननिर्वृत्तम् । तस्यनिवासः । अदूरभवश्च । ओरञ् । मतोश्चबह्वजङ्गात् । बह्वचःकूपेषु । उदक्चविपाशः ।
संकलादिभ्यश्च । स्त्रीषुसौवीरसाल्वप्राक्षु । सुवास्त्वादिभ्योऽण् । रोणी । कोपधाच्च । वुञ्छण्कठजिलसेनिरढञ्ण्यय
फक्फिफिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदा

दिभ्यः ॥ ४ ॥ जनपदेलुप् । वरणादिभ्यश्च । शर्करायावा । ठक्छौंच । नद्यांमतुप् । मध्वादिभ्यश्च । कुमुदनडवेत
सेभ्योड्मतुप् । नडशादाड्डलच् । शिखायावलच् । उत्करादिभ्यश्छः । नडादीनांकुक्च । शेषे । राष्ट्रावारपारा
द्धखौ । ग्रामाद्यखञौ । कत्र्यादिभ्योढकञ् । कुलकुक्षिग्रीवाभ्यःश्वास्यलंकारेषु । नद्यादिभ्योढक् । दक्षिणापश्चा
त्पुरसस्त्यक् । कापिश्याःष्फक् । रङ्कोरमनुष्येऽण्च ॥ ५ ॥ द्युप्रागपागुदक्प्रतीचोयत् । कन्थायाष्ठक् । वर्णौवुक् ।
अव्ययात्त्यप् । ऐषमोह्यःश्वसोऽन्यतरस्याम् । तीररूप्योत्तरपदादञ्ञौ । दिक्पूर्वपदादसंज्ञायांञः । मद्रेभ्योञ् ।
उदीच्यग्रामाच्चबह्वचोऽन्तोदात्तात् । प्रस्थोत्तरपदपलद्यादिकोपधादण् । कण्वादिभ्योगोत्रे । इञश्च । नद्व्यचः
प्राच्यभरतेषु । वृद्धाच्छः । भवतष्ठक्छसौ । काश्यादिभ्यष्ठञ्ञिठौ । वाहीकग्रामेभ्यश्च । विभाषोशीनरेषु । ओर्दे
शेठञ् । वृद्धात्प्राचाम् ॥ ६ ॥ धन्वयोपधाद्वुञ् । प्रस्थपुरवहान्ताच्च । रोपधेतोःप्राचाम् । जनपदतदवध्योश्च ।
अवृद्धादपिवहुवचनविषयात् । कच्छाग्निवक्रवर्तोत्तरपदात् । धूमादिभ्यश्च । नगरात्कुत्सनप्रावीण्ययोः । अरण्या
न्मनुष्ये । विभाषाकुरुयुगंधराभ्याम् । मद्रवृज्योःकन् । कोपधादण् । कच्छादिभ्यश्च । मनुष्यतत्स्थयोर्वुञ् । अप
दातौसाल्वात् । गोयवाग्वोश्च । गर्तोत्तरपदाच्छः । गहादिभ्यश्च । प्राचांकटादेः । राज्ञःकच ॥ ७ ॥ वृद्धादकेका
न्तखोपधात् । कन्थापलदनगरग्राममह्रदोत्तरपदात् । पर्वताच्च । विभाषामनुष्ये । कृकणपर्णाद्भारद्वाजे । तेनसास्मि

न्ठञ्कमादिभ्योजनपदेद्युप्रागपाग्धन्ववृद्धात्पञ्च ॥ इतिचतुर्थाध्यायेद्वितीयःपादः ॥ २ ॥ ७ ॥ युष्मदस्मदोरन्यत
रस्यांखञ्च । तस्मिन्नणिचयुष्माकास्माकौ । तवकममकावेकवचने । अर्धाद्यत् । परावराधमोत्तमपूर्वाच्च । दिक्पूव
पदाट्ठञ्च । ग्रामजनपदैकदेशादञ्ठञौ । मध्यान्मः । असांप्रतिके । द्वीपादनुसमुद्रंयञ् । कालाट्ठञ् । श्राद्धेशरदः ।
विभाषारोगातपयोः । निशाप्रदोषाभ्यांच । श्वसस्तुट्च । संधिवेलाद्यृतुनक्षत्रेभ्योऽण् । प्रावृषएण्यः । वर्षाभ्यष्ठक् ।
छन्दसिठञ् । वसन्ताच्च ॥ १ ॥ हेमन्ताच्च । सर्वत्राण्चतलोपश्च । सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौतुट्च ।
विभाषापूर्वाह्णापराह्णाभ्याम् । तत्रजातः । प्रावृषष्ठप् । संज्ञायांशरदोवुञ् । पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करा
द्वुन् । पथःपन्थच । अमावास्यायावा । अच । सिन्ध्वपकराभ्यांकन् । अणञौच । श्रविष्ठाफल्गुन्यनुराधास्वा
तितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् । स्थानान्तगोशालखरशालाच्च । वत्सशालाभिजिदश्वयुक्शतभिषजो
वा । नक्षत्रेभ्योबहुलम् । कृतलब्धक्रीतकुशलाः । प्रायभवः । उपजानूपकर्णोपनीवेष्ठक् ॥ २ ॥ संभूते । कोशा
ड्ढञ् । कालात्साधुपुष्प्यत्पच्यमानेषु । उप्तेच । आश्वयुज्यावुञ् । ग्रीष्मवसन्तादन्यतरस्याम् । देयमृणे । कला
प्यश्वत्थयवबुसाद्वुन् । ग्रीष्मावरसमाद्वुञ् । संवत्सराग्रहायणीभ्यांठञ्च । व्याहरतिमृगः । तदस्यसोढम् । तत्र
भवः । दिगादिभ्योयत् । शरीरावयवाच्च । दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् । ग्रीवाभ्योऽणच । गम्भीराञ्ञ्यः ।

अव्ययीभावाच्च । अन्तःपूर्वपदाट्ठञ् ॥ ३ ॥ ग्रामात्पर्यनुपूर्वात् । जिह्वामूलाङ्गुलेश्छः । वर्गान्ताच्च । अशब्दे यत्खावन्यतरस्याम् । कर्णललाटात्कनलंकारे । तस्यव्याख्यानइतिचव्याख्यातव्यनाम्नः । बह्वचोऽन्तोदात्ताट्ठञ् । क्रतुयज्ञेभ्यश्च । अध्यायेष्वेवर्षेः । पौरोडाशपुरोडाशात्ष्ठन् । छन्दसोयदणौ । द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् । अणृगयनादिभ्यः । ततआगतः । ठगायस्थानेभ्यः । शुण्डिकादिभ्योऽण् । विद्यायोनिसंबन्धेभ्योवुञ् । ऋतष्ठञ् । पितुर्यच्च । गोत्रादङ्कवत् ॥ ४ ॥ हेतुमनुष्येभ्योऽन्यतरस्यांरूप्यः । मयट्च । प्रभवति । विदूराञ्ञ्यः । तद्गच्छतिपथिदूतयोः । अभिनिष्क्रामतिद्वारम् । अधिकृत्यकृतेग्रन्थे । शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः । सोऽस्यनिवासः । अभिजनश्च । आयुधजीविभ्यश्छःपर्वते । शण्डिकादिभ्योञ्यः । सिन्धुतक्षशिलादिभ्योऽणञौ । तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः । भक्तिः । अचित्तादेशकालाट्ठक् । महाराजाट्ठञ् । वासुदेवार्जुनाभ्यांवुन् । गोत्रक्षत्रियाख्येभ्योबहुलंवुञ् । जनपदिनांजनपदवत्सर्वंजनपदेनसमानशब्दानांबहुवचने ॥ ५ ॥ तेनप्रोक्तम् । तित्तिरिवरतन्तुखण्डिकोखाच्छण् । काश्यपकौशिकाभ्यामृषिभ्यांणिनिः । कलापिवैशम्पायनान्तेवासिभ्यश्च । पुराणप्रोक्तेषुब्राह्मणकल्पेषु । शौनकादिभ्यश्छन्दसि । कठचरकाल्लुक् । कलापिनोऽण् । छगलिनोढिनुक् । पाराशर्यशिलालिभ्यांभिक्षुनटसूत्रयोः । कर्मन्दकृशाश्वादिनिः । तेनैकदिक् । तसिश्च ।

उरसोयच्च । उपज्ञाते । कृतेग्रन्थे । संज्ञायाम् । कुलालादिभ्योवुञ् । क्षुद्राभ्रमरवटरपादपादञ् । तस्येदम्
॥ ६ ॥ रथाद्यत् । पत्रपूर्वादञ् । पत्राध्वर्युपरिषदश्च । हलसीराठ्ठक् । द्वन्द्वाद्वुन्वैरमैथुनिकयोः । गोत्रचरणाद्वु
ञ् । सङ्घाङ्कलक्षणेष्वञ्यञिञामण् । शाकलाद्वा । छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः । नदण्डमाणवान्तेवा
सिषु । रैवतिकादिभ्यश्छः । कौपिंजलहास्तिपदादण् । आथर्वणिकस्येकलोपश्च । तस्यविकारः । अवयवेचप्राण्यौ
षधिवृक्षेभ्यः । बिल्वादिभ्योऽण् । कोपधाच्च । त्रपुजतुनोःषुक् । ओरञ् । अनुदात्तादेश्च ॥ ७ ॥ पलाशादिभ्यो
वा । शम्याःष्लञ् । मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः । नित्यंवृद्धशरादिभ्यः । गोश्चपुरीषे । पिष्टाच्च । संज्ञा
यांकन् । व्रीहेःपुरोडाशे । असंज्ञायांतिलयवाभ्याम् । द्व्यचश्छन्दसि । नोत्वद्वर्ध्रबिल्वात् । तालादिभ्योऽण् ।
जातरूपेभ्यःपरिमाणे । प्राणिरजतादिभ्योऽञ् । ञितश्चतत्प्रत्ययात् । क्रीतवत्परिमाणात् । उष्ट्राद्वुञ् । उमोर्ण
योर्वा । एण्याढञ् । गोपयसोर्यत् ॥ ८ ॥ द्रोश्च । मानेवयः । फलेलुक् । प्लक्षादिभ्योऽण् । जम्ब्वावा । लुप्च ।
हरीतक्यादिभ्यश्च । कंसीयपरशव्ययोर्यञञौलुक्च ॥ ९ ॥ युष्मद्धेमन्तात्संभूतेग्रामाद्धेतुतेनरथात्पलाशादिभ्यो
द्रोश्चाष्टौ ॥ इतिचतुर्थाध्यायेतृतीयःपादः ॥ ३ ॥ छ ॥ प्राग्वहतेष्ठक् । तेनदीव्यतिखनतिजयतिजितम् । संस्कृ
तम् । कुलत्थकोपधादण् । तरति । गोपुच्छाट्ठञ् । नौद्व्यचष्ठन् । चरति । आकर्षात्ष्ठल् । पर्पादिभ्यःष्ठन् । श्वग

णाठञ्च । वेतनादिभ्योजीवति । वस्नक्रयविक्रयाट्ठन् । आयुधाच्छच । हरत्युत्सङ्गादिभ्यः । भस्त्रादिभ्यष्ठन् । विभाषाविवधवीवधात् । अण्कुटिलिकायाः । निर्वृत्तेऽक्षद्यूतादिभ्यः । क्त्रेर्मम्नित्यम् ॥ १ ॥ अपमित्ययाचिता भ्यांकक्नौ । संसृष्टे । चूर्णादिनिः । लवणाल्लुक् । मुद्गादण् । व्यंजनैरुपसिक्ते । ओजःसहोऽम्भसावर्तते । तत्प्र त्यनुपूर्वमीपलोमकूलम् । परिमुखंच । प्रयच्छतिगर्ह्यम् । कुसीददशैकादशात्ष्ठन्ष्ठचौ । उञ्छति । रक्षति । शब्द दर्दुरंकरोति । पक्षिमत्स्यमृगान्हन्ति । परिपन्थंचतिष्ठति । माथोत्तरपदपदव्यनुपदंधावति । आक्रन्दाट्ठञ्च । पदोत्त रपदंगृह्णाति । प्रतिकण्ठार्थललामंच ॥ २ ॥ धर्मंचरति । प्रतिपथमेतिठंश्च । समवायान्त्समवैति । परिषदोण्यः । सेनायावा । संज्ञायांललाटकुक्कुट्यौपश्यति । तस्यधर्म्यम् । अण्महिष्यादिभ्यः । ऋतोऽञ् । अवक्रयः । तदस्यप ण्यम् । लवणाट्ठञ् । किसरादिभ्यष्ठन् । शलालुनोऽन्यतरस्याम् । शिल्पम् । मड्डुकझर्झरादणन्यतरस्याम् । प्रहरणम् । परश्वधाट्ठञ्च । शक्तियष्ट्योरीकक् । अस्तिनास्तिदिष्टंमतिः ॥ ३ ॥ शीलम् । छत्रादिभ्योणः । कर्माध्यय नेवृत्तम् । बह्वच्पूर्वपदाट्ठच् । हितंभक्षाः । तदस्मैदीयतेनियुक्तम् । श्राणामांसौदनाट्टिठन् । भक्तादणन्यतरस्या म् । तत्रनियुक्तः । अगारान्ताट्ठन् । अध्यायिन्यदेशकालात् । कठिनान्तप्रस्तारसंस्थानेषुव्यवहरति । निकटेवस ति । आवसथात्ष्ठल् । प्राग्घिताद्यत् । तद्वहतिरथयुगप्रासङ्गम् । धुरोयड्ढकौ । खःसर्वधुरात् । एकधुराल्लुक्च ।

शकटादण् ॥ ४ ॥ हलसीराट्ठक् । संज्ञायांजन्याः । विध्यत्यधनुषा । धनगणंलब्धा । अन्नाण्णः । वशंगतः । पदम
स्मिन्दृश्यम् । मूलमस्यावर्हि । संज्ञायांधेनुष्या । गृहपतिनासंयुक्तेञ्यः । नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्ता
र्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु । धर्मपथ्यर्थन्यायादनपेते । छन्दसोनिर्मिते । उरसोऽण्च । हृदयस्य
प्रियः । बन्धनेचर्षौ । मतजनहलात्करणजल्पकर्षेषु । तत्रसाधुः । प्रतिजनादिभ्यःखञ् । भक्ताण्णः ॥ ५ ॥ परि
षदोण्यः । कथादिभ्यष्ठक् । गुडादिभ्यष्ठञ् । पथ्यतिथिवसतिस्वपतेर्ढञ् । सभायायः । ढश्छन्दसि । समानती
र्थेवासी । समानोदरेशयितओचोदात्तः । सोदराद्यः । भवेछन्दसि । पाथोनदीभ्यांड्यण् । वेशन्तहिमवद्भ्या
मण् । स्रोतसोविभाषाड्यड्ड्यौ । सगर्भसयूथसनुताद्यत् । तुग्राद्घन् । अग्राद्यत् । घच्छौच । समुद्राभ्राद्घः ।
बर्हिषिदत्तम् । दूतस्यभागकर्मणी ॥ ६ ॥ रक्षोयातूनांहननी । रेवतीजगतीहविष्याभ्यःप्रशस्ये । असुरस्यस्वम् ।
मायायामण् । तद्वानासामुपधानोमन्त्रइतीष्टकासुलुक्मतोः । अश्विमानण् । वयस्यासुमूर्ध्नोमतुप् । मत्वर्थेमासत
न्वोः । मधोर्ञच । ओजसोऽहनियत्खौ । वेशोयशआदेर्भगाद्यल् । खच । पूर्वैःकृतमिनयौच । अद्भिःसंस्कृतम् ।
सहस्रेणसंमितौघः । मतौच । सोममर्हतियः । मयेच । मधोः । वसोःसमूहेच ॥ ७ ॥ नक्षत्राद्घः । सर्वदेवात्ता

तिल् । शिवशमरिष्टस्यकरे । भावेच । प्राग्वहतेरपमित्यधर्मशीलंहलपरिषदोरक्षोनक्षत्राच्चत्वारि ॥ इतिचतुर्थाध्याये चतुर्थःपादः ॥ ४ ॥ इतिअष्टाध्यायीसूत्रपाठेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥

ॐ ॥ प्राक्क्रीताच्छः । उगवादिभ्योयत् । कम्बलाच्चसंज्ञायाम् । विभाषाहविरपूपादिभ्यः । तस्मैहितम् । शरीरावयवाद्यत् । खलयवमाषतिलवृषब्रह्मणश्च । अजाविभ्यांथ्यन् । आत्मन्विश्वजनभोगोत्तरपदात्खः । सर्वपुरुषाभ्यांणढञौ । माणवचरकाभ्यांखञ् । तदर्थंविकृतेःप्रकृतौ । छदिरुपधिबलेर्ढञ् । ऋषभोपानहोर्ञ्यः । चर्मणोऽञ् । तदस्यतदस्मिन्स्यादिति । परिखायाढञ् । प्राग्वतेष्ठञ् । आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् । असमासेनिष्कादिभ्यः ॥ १ ॥ शताच्चठन्यतावशते । संख्यायाअतिशदन्तायाःकन् । वतोरिड्वा । विंशतित्रिंशद्भ्यांड्वुन्नसंज्ञायाम् । कंसाट्टिठन् । शूर्पादञन्यतरस्याम् । शतमानविंशतिकसहस्रवसनादण् । अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् । विभाषाकार्षापणसहस्राभ्याम् । द्वित्रिपूर्वान्निष्कात् । बिस्ताच्च । विंशतिकात्खः । खार्याईकन् । पणपादमाषशताद्यत् । शाणाद्वा । द्वित्रिपूर्वादण्च । तेनक्रीतम् । तस्यनिमित्तंसंयोगोत्पातौ । गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् । पुत्राच्छच ॥ २ ॥ सर्वभूमिपृथिवीभ्यामणञौ । तस्येश्वरः । तत्रविदितइतिच । लोकसर्वलोकाट्ठञ् । तस्यवापः । पात्रात्ष्ठन् । तदस्मिन्वृद्ध्यायलाभशुल्कोपदादीयते । पूरणार्धाट्ठन् । भागाद्यच्च । तद्धरतिवहत्यावह

तिभाराद्वंशादिभ्यः । वस्नद्रव्याभ्यांठन्कनौ । संभवत्यवहरतिपचति । आढकाचितपात्रात्खोऽन्यतरस्याम् । द्विगोष्ठंश्च । कुलिजाल्लुक्खौच । सोऽस्यांशवस्नभृतयः । तदस्यपरिमाणम् । संख्यायाःसंज्ञासंघसूत्राध्ययनेषु । पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पंचाशत्षष्टिसप्तत्यशीतिनवतिशतम् । पंचद्शतौवर्गेवा ॥ ३ ॥ सप्तनोऽञ्छन्दसि । त्रिंशच्चत्वारिंशतोर्ब्राह्मणेसंज्ञायांडण् । तदर्हति । छेदादिभ्योनित्यम् । शीर्षच्छेदाद्यच्च । दण्डादिभ्योयः । छन्दसिच । पात्राद्घंश्च । कडंकरदक्षिणाच्छच । स्थालीबिलात् । यज्ञर्त्विग्भ्यांघखञौ । पारायणतुरायणचान्द्रायणंवर्तयति । संशयमापन्नः । योजनंगच्छति । पथःष्कन् । पन्थोणनित्यम् । उत्तरपथेनाहृतंच । कालात् । तेननिर्वृत्तम् । तमधीष्टोभृतोभूतोभावी ॥ ४ ॥ मासाद्वयसियत्खञौ । द्विगोर्यप् । षण्मासाण्ण्यच्च । अवयसिठंश्च । समायाः खः । द्विगोर्वा । रात्र्यहःसंवत्सराच्च । वर्षाल्लुक्च । चित्तवतिनित्यम् । षष्टिकाःषष्टिरात्रेणपच्यन्ते । वत्सरान्ताच्छश्छन्दसि । संपरिपूर्वात्खच । तेनपरिजय्यलभ्यकार्यसुकरम् । तदस्यब्रह्मचर्यम् । तस्यचदक्षिणायज्ञाख्येभ्यः । तत्रचदीयतेकार्यंभववत् । व्युष्टादिभ्योऽण् । तेनयथाकथाचहस्ताभ्यांणयतौ । संपादिनि । कर्मवेषाद्यत् ॥ ५ ॥ तस्मैप्रभवतिसंतापादिभ्यः । योगाद्यच्च । कर्मणउकञ् । समयस्तदस्यप्राप्तम् । ऋतोरण् । छन्दसिघस् । कालाद्यत् । प्रकृष्टेठञ् । प्रयोजनम् । विशाखाषाढादण्मन्थदण्डयोः । अनुप्रवचनादिभ्यश्छः । समापनात्सपूर्वपदात् ।

ऐकागारिकट्चौरे । आकालिकडाद्यन्तवचने । तेनतुल्यंक्रियाचेद्वतिः । तत्रतस्येव । तदर्हम् । उपसर्गाच्छन्दसि
धात्वर्थे । तस्यभावस्त्वतलौ । आचत्वात् ॥ ६ ॥ ननञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटबुधकतरसलसेभ्यः ।
पृथ्वादिभ्यइमनिज्वा । वर्णदृढादिभ्यःष्यञ्च । गुणवचनब्राह्मणादिभ्यःकर्मणिच । स्तेनाद्यन्नलोपश्च । सख्युर्यः ।
कपिज्ञात्योर्ढक् । पत्यन्तपुरोहितादिभ्योयक् । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । हायनान्तयुवादिभ्यो
ऽण् । इगन्ताच्चलघुपूर्वात् । योपधाद्गुरूपोत्तमाद्वुञ् । द्वन्द्वमनोज्ञादिभ्यश्च । गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ।
होत्राभ्यश्छः । ब्रह्मणस्त्वः । प्राक्क्रीताच्छताच्चसर्वभूमिसप्तनोऽञ्मासात्तस्मैप्रभवतिननञ्पूर्वात्षोडश ॥ इतिपञ्चमा
ध्यायेप्रथमःपादः ॥ १ ॥ ७ ॥ धान्यानांभवनेक्षेत्रेखञ् । व्रीहिशाल्योर्ढक् । यवयवकषष्टिकाद्यत् । विभाषातिलमा
षोमाभङ्गाणुभ्यः । सर्वचर्मणःकृतःखखञौ । यथामुखसंमुखस्यदर्शनःखः । तत्सर्वादेःपथ्यङ्गकर्मपत्रपात्रंव्याप्नोति ।
आप्रपदंप्राप्नोति । अनुपदसर्वान्नायानयंबद्धाभक्षयतिनेयेषु । परोवरपरंपरपुत्रपौत्रमनुभवति । अवारपारात्यन्तानु
कामंगामी । समांसमांविजायते । अद्यश्वीनावष्टब्धे । आगवीनः । अनुग्वलंगामी । अध्वनोयत्खौ । अभ्यमित्राच्छच ।
गोष्ठात्खञ्भूतपूर्वे । अश्वस्यैकाहगमः । शालीनकौपीनेअधृष्टाकार्ययोः ॥ १ ॥ व्रातेनजीवति । साप्तपदीनंसख्यम् ।
हैयङ्गवीनंसंज्ञायाम् । तस्यपाकमूलेपील्वादिकर्णादिभ्यःकुणब्जाहचौ । पक्षात्तिः । तेनवित्तश्चुञ्चुप्चणपौ । विन

ञ्भ्यांनानाञौनसह । वेःशालच्छङ्कटचौ । संप्रोदश्चकटच् । अवात्कुटारच्च । नतेनासिकायाःसंज्ञायांटीटञ्नाटज्भ्र
टचः । नेर्बिडज्बिरीसचौ । इनच्पिटच्चिकचिच । उपाधिभ्यांत्यकन्नासन्नारूढयोः । कर्मणिघटोऽठच् । तदस्यसंजा
तंतारकादिभ्यइतच् । प्रमाणेद्वयसज्दघ्नञ्मात्रचः । पुरुषहस्तिभ्यामण्च । यत्तदेतेभ्यःपरिमाणेवतुप् । किमिदंभ्यां
वोघः ॥ २ ॥ किमःसंख्यापरिमाणेडतिच । संख्यायाअवयवेतयप् । द्वित्रिभ्यांतयस्यायज्वा । उभादुदात्तोनि
त्यम् । तदस्मिन्नधिकमितिदशान्ताड्डः । शदन्तविंशतेश्च । संख्यायागुणस्यनिमानेमयट् । तस्यपूरणेडट् । नान्ता
दसंख्यादेर्मट् । थट्चच्छन्दसि । षट्कतिकतिपयचतुरांथुक् । बहुपूगगणसंघस्यतिथुक् । वतोरिथुक् । द्वेस्तीयः । त्रेः
संप्रसारणंच । विंशत्यादिभ्यस्तमडन्यतरस्याम् । नित्यंशतादिमासार्धमाससंवत्सराच्च । षष्ठ्यादेश्चासंख्यादेः ।
मतौछःसूक्तसाम्नोः । अध्यायानुवाकयोर्लुक् ॥ ३ ॥ विमुक्तादिभ्योऽण् । गोषदादिभ्योवुन् । तत्रकुशलःपथः ।
आकर्षादिभ्यःकन् । धनहिरण्यात्कामे । स्वाङ्गेभ्यःप्रसिते । उदराट्ठगाद्यूने । सस्येनपरिजातः । अंशंहारी । तन्त्रा
दचिरापहृते । ब्राह्मणकोष्णिकेसंज्ञायाम् । शीतोष्णाभ्यांकारिणि । अधिकम् । अनुकाभिकाभीकःकमिता । पार्श्वे
नान्विच्छति । अयःशूलदण्डाजिनाभ्यांठक्ठञौ । तावतिथंग्रहणमितिलुग्वा । सएषांग्रामणीः । शृङ्खलमस्यबन्धनं
करभे । उत्कउन्मनाः ॥ ४ ॥ कालप्रयोजनाद्रोगे । तदस्मिन्नन्नंप्रायेसंज्ञायाम् । कुल्माषादञ् । श्रोत्रियँश्छन्दो

अष्टा.

॥ २० ॥

ऽधीते । श्राद्धमनेनभुक्तमिनिठनौ । पूर्वादिनिः । सपूर्वाच्च । इष्टादिभ्यश्च । छन्दसिपरिपन्थिपरिपरिणौपर्यवस्थातरि । अनुपद्यन्वेष्टा । साक्षाद्द्रष्टरिसंज्ञायाम् । क्षेत्रियच्परक्षेत्रेचिकित्स्यः । इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमितिवा । तदस्यास्त्यस्मिन्निितिमतुप् । रसादिभ्यश्च । प्राणिस्थादातोलजन्यतरस्याम् । सिध्मादिभ्यश्च । वत्सांसाभ्यांकामबले । फेनादिलच्च । लोमादिपामादिपिच्छादिभ्यःशनेलचः ॥ ५ ॥ प्रज्ञाश्रद्धार्चाभ्योणः । तपःसहस्राभ्यांविनीनी । अण्च । सिकताशर्कराभ्यांच । देशेलुबिलचौच । दन्तउन्नतउरच् । ऊषशुषिमुष्कमधोरः । द्युद्रुभ्यांमः । केशाद्वोऽन्यतरस्याम् । गाण्ड्यजगात्संज्ञायाम् । काण्डाण्डादीरन्नीरचौ । रजःकृष्यासुतिपरिषदोवलच् । दन्तशिखात्संज्ञायाम् । ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः । अतइनिठनौ । व्रीह्यादिभ्यश्च । तुन्दादिभ्यइलच्च । एकगोपूर्वाठ्ठञ्नित्यम् । शतसहस्रान्ताच्चनिष्कात् । रूपादाहतप्रशंसयोर्यप् ॥ ६ ॥ अस्मायामेधास्रजोविनिः । बहुलंछन्दसि । ऊर्णायायुस् । वाचोग्मिनिः । आलजाटचौबहुभाषिणि । स्वामिन्नैश्वर्ये । अर्शआदिभ्योऽच् । द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः । वातातीसाराभ्यांकुक्च । वयसिपूरणात् । सुखादिभ्यश्च । धर्मशीलवर्णान्ताच्च । हस्ताज्जातौ । वर्णाद्ब्रह्मचारिणि । पुष्करादिभ्योदेशे । बलादिभ्योमतुबन्यतरस्याम् । संज्ञायांमन्माभ्याम् । कंशंभ्यांबभयुस्तितुतयसः । तुन्दिबलिवटेर्भः । अहंशुभमो

सूत्रपा.

५ । २

॥ २० ॥

र्युस् ॥ ७ ॥ धान्यानांभ्रातेनकिमोविमुक्तादिभ्यःकालप्रयोजनात्प्रज्ञाश्रद्धास्मायामेधाविंशतिः ॥ इतिपञ्चमाध्याये द्वितीयःपादः ॥ २ ॥ छ ॥ प्राग्दिशोविभक्तिः । किंसर्वनामबहुभ्योऽद्व्यादिभ्यः । इदमइश् । एतेतौरथोः । एत दोऽन् । सर्वस्यसोऽन्यतरस्यांदि । पञ्चम्यास्तसिल् । तसेश्च । पर्यभिभ्यांच । सप्तम्यास्त्रल् । इदमोहः । किमोऽ त् । वाहचच्छन्दसि । इतराभ्योऽपिदृश्यन्ते । सर्वैकान्यकिंयत्तदःकालेदा । इदमोर्हिल् । अधुना । दानींच । तदोदाच । तयोर्दार्हिलौचच्छन्दसि ॥ १ ॥ अनद्यतनेर्हिलन्यतरस्याम् । सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्ये द्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः । प्रकारवचनेथाल् । इदमस्थमुः । किमश्च । थाहेतौचच्छन्दसि। दिक्छब्देभ्यःसप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिः । दक्षिणोत्तराभ्यामतसुच् । विभाषापरावराभ्याम् । अञ्चेर्लुक् । उपर्युपरिष्टात् । पश्चात् । पश्चपश्चाचच्छन्दसि । उत्तराधरदक्षिणादातिः । एनबन्यतरस्यामदूरेऽपञ्च म्याः । दक्षिणादाच् । आहिचदूरे । उत्तराच्च । पूर्वाधरावराणामसिपुरधवश्चैषाम् । अस्तातिच ॥ २ ॥ विभाषा वरस्य । संख्यायाविधार्थेधा । अधिकरणविचालेच । एकाद्धोध्यमुञन्यतरस्याम् । द्वित्र्योश्चधमुञ् । एधाच्च । याप्येपाशप् । पूरणाद्भागेतीयादन् । प्रागेकादशभ्योऽछन्दसि । षष्ठाष्टमाभ्यांञच । मानपश्वङ्गयोःकन्लुकौच । एकादाकिनिच्चासहाये । भूतपूर्वेचरट् । षष्ठ्यारूप्यच । अतिशायनेतमबिष्ठनौ । तिङश्च । द्विवचनविभज्योपपदे

तरबीयसुनौ । अजादीगुणवचनादेव । तुश्छन्दसि । प्रशस्यस्यश्रः ॥ ३ ॥ ज्यच । वृद्धस्यच । अन्तिकबाढयो
र्नेदसाधौ । युवाल्पयोःकनन्यतरस्याम् । विन्मतोर्लुक् । प्रशंसायांरूपप् । ईषदसमाप्तौकल्पब्देश्यदेशीयरः । वि
भाषासुपोबहुच्पुरस्तात्तु । प्रकारवचनेजातीयर् । प्रागिवात्कः । अव्ययसर्वनाम्नामकच्प्राक्टेः । कस्यचदः ।
अज्ञाते । कुत्सिते । संज्ञायांकन् । अनुकम्पायाम् । नीतौचतद्युक्तात् । बह्वचोमनुष्यनाम्नष्ठज्वा । घनिलचौच ।
प्राचामुपादेरडज्वुचौच ॥ ४ ॥ जातिनाम्नःकन् । अजिनान्तस्योत्तरपदलोपश्च । ठाजादावूर्ध्वंद्वितीयादचः । शेव
लसुपरिविशालवरुणार्यमादीनांतृतीयात् । अल्पे । ह्रस्वे । संज्ञायांकन् । कुटीशमीशुण्डाभ्योरः । कुत्वाडुपच् ।
कासूगोणीभ्यांष्टरच् । वत्सोक्षाश्वर्षभेभ्यश्चतनुत्वे । किंयत्तदोर्निर्धारणेद्वयोरेकस्यडतरच् । वाबहूनांजातिपरिप्रश्ने
डतमच् । एकाच्चप्राचाम् । अवक्षेपणेकन् । इवेप्रतिकृतौ । संज्ञायांच । लुम्मनुष्ये । जीविकार्थेचापण्ये । देवप
थादिभ्यश्च ॥ ५ ॥ वस्तेर्ढञ् । शिलायाढः । शाखादिभ्योयः । द्रव्यंचभव्ये । कुशाग्राच्छः । समासाच्चतद्विष
यात् । शर्करादिभ्योऽण् । अङ्गुल्यादिभ्यष्ठक् । एकशालायाष्ठजन्यतरस्याम् । कर्कलोहितादीकक् । प्रत्नपूर्वविश्वे
मात्थाल्छन्दसि । पूगाञ्ञ्योऽग्रामणीपूर्वात् । व्रातच्फञोरस्त्रियाम् । आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराज
न्यात् । वृकाट्टेण्यण् । दामन्यादित्रिगर्तषष्ठाच्छः । पर्श्वादियौधेयादिभ्योऽणञौ । अभिजिद्विदभृच्छालावच्छि

खावच्छमीवद्गूर्णावक्त्रुमदणोयञ् । ञ्यादयस्तद्राजाः ॥ ६ ॥ प्राग्दिशोऽनद्यतनेर्विभाषाज्यचजातिनाम्नोवस्तेरेको नविंशतिः ॥ इतिपञ्चमाध्यायेतृतीयःपादः ॥ ३ ॥ ७ ॥ पादशतस्यसंख्यादेर्वीप्सायांवुन्लोपश्च । दण्डव्यवसर्गयोश्च । स्थूलादिभ्यःप्रकारवचनेकन् । अनत्यन्तगतौक्तात् । नसामिवचने । बृहत्याआच्छादने । अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः । विभाषाञ्चेरदिक्स्त्रियाम् । जात्यन्ताच्छबन्धुनि । स्थानान्ताद्विभाषासस्थानेनेतिचेत् । किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे । अमुचच्छन्दसि । अनुगादिनष्ठक् । णचःस्त्रियामञ् । अणिनुणः । विसारिणोमत्स्ये । संख्यायाःक्रियाभ्यावृत्तिगणनेकृत्वसुच् । द्वित्रिचतुर्भ्यःसुच् । एकस्यसकृच्च । विभाषाबहोर्धाविप्रकृष्टकाले ॥ १ ॥ तत्प्रकृतवचनेमयट् । समूहवच्चबहुषु । अनन्तावसथेतिहभेषजाञ्ञ्यः । देवतान्तात्तादर्थ्येयत् । पादार्घाभ्यांच । अतिथेर्ञ्यः । देवात्तल् । अवेःकः । यावादिभ्यःकन् । लोहितान्मणौ । वर्णेचानित्ये । रक्ते । कालाच्च । विनयादिभ्यष्ठक् । वाचोव्याहृतार्थायाम् । तद्युक्तात्कर्मणोऽण् । ओषधेरजातौ । प्रज्ञादिभ्यश्च । मृदस्तिकन् । सस्नौप्रशंसायाम् ॥ २ ॥ वृकज्येष्ठाभ्यांतिल्तातिलौचच्छन्दसि । बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् । संख्यैकवचनाच्चवीप्सायाम् । प्रतियोगेपञ्चम्यास्तसिः । अपादानेचाहीयरुहोः । अतिग्रहाव्यथनक्षेपेष्वकर्तरितृतीयायाः । हीयमानपापयोगाच्च । षष्ठ्याव्याश्रये । रोगाच्चापनयने । अभूततद्भावेकृभ्वस्तियोगेसंपद्यकर्तरिच्विः ।

अरुर्मनश्चक्षुश्चेतोरहोरजसांलोपश्च । विभाषासातिकात्स्र्ये । अभिविधौसंपदाच । तदधीनवचने । देयेत्राच । देवमनुष्यपुरुषपुरुमर्त्येभ्योद्वितीयासप्तम्योर्बहुलम् । अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौडाच् । कृञोद्वितीयतृतीयशम्बबीजात्कृषौ । संख्यायाश्चगुणान्तायाः । समयाच्चयापनायाम् ॥ ३ ॥ सपत्रनिष्पत्रादतिव्यथने । निष्कुलान्निष्कोषणे । सुखप्रियादानुलोम्ये । दुःखात्प्रातिलोम्ये । शूलात्पाके । सत्यादशपथे । मद्रात्परिवापणे । समासान्ताः । नपूजनात् । किमःक्षेपे । नञस्तत्पुरुषात् । पथोविभाषा । बहुव्रीहौसंख्येयेडजबहुगणात् । ऋक्पूरब्धूःपथामानक्षे । अच्प्रत्यन्ववपूर्वात्सामलोम्नः । अक्ष्णोऽदर्शनात् । अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः । ब्रह्महस्तिभ्यांवर्चसः । अवसमन्धेभ्यस्तमसः । श्वसोवसीयःश्रेयसः ॥ ४ ॥ अन्ववतप्ताद्रहसः । प्रतेरुरसःसप्तमीस्थात् । अनुगवमायामे । द्विस्तावात्रिस्तावावेदिः । उपसर्गादध्वनः । तत्पुरुषस्याङ्गुलेःसंख्याव्ययादेः । अहःसर्वैकदेशसंख्यातपुण्याच्चरात्रेः । अह्नोऽह्नएतेभ्यः । नसंख्यादेःसमाहारे । उत्तमैकाभ्यांच । राजाहःसखिभ्यष्टच् । गोरतद्धितलुकि । अग्राख्यायामुरसः । अनोश्मायःसरसांजातिसंज्ञयोः । ग्रामकौटाभ्यांचतक्ष्णः । अतेःशुनः । उपमानादप्राणिषु । उत्तरमृगपूर्वाच्चसक्थ्नः । नावोद्विगोः । अर्धाच्च ॥५॥ खार्याः

प्राचाम् । द्वित्रिभ्यामञ्जलेः । अनसन्तान्नपुंसकाच्छन्दसि । ब्रह्मणोजानपदाख्यायाम् । कुमहद्भ्यामन्यतरस्याम् । द्वन्द्वाच्चुदषहान्तात्समाहारे । अव्ययीभावेशरत्प्रभृतिभ्यः । अनश्च । नपुंसकादन्यतरस्याम् । नदीपौर्णमास्या ग्रहायणीभ्यः । झयः । गिरेश्चसेनकस्य । बहुव्रीहौसक्थ्यक्ष्णोःस्वाङ्गात्षच् । अङ्गुलेर्दारुणि । द्वित्रिभ्यांषमूर्ध्नः । अप्पूरणीप्रमाण्योः । अन्तर्बहिर्भ्यांचलोम्नः । अञ्नासिकायाःसंज्ञायांनसंचास्थूलात् । उपसर्गाच्च । सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ॥ ६ ॥ नञ्दुःसुभ्योहलिसक्थ्योरन्यतरस्याम् । नित्यमसिच्प्रजामेधयोः । बहुप्रजाश्छन्दसि । धर्मादनिच्केवलात् । जम्भासुहरिततृणसोमेभ्यः । दक्षिणेर्मालुब्धयोगे । इच्कर्मव्यतिहारे । द्विदण्ड्यादिभ्यश्च । प्रसंभ्यांजानुनोर्ज्ञुः । ऊर्ध्वाद्विभाषा । ऊधसोऽनङ् । धनुषश्च । वासंज्ञायाम् । जायायानिङ् । गन्धस्येदुत्पूतिसुसुरभिभ्यः । अल्पाख्यायाम् । उपमानाच्च । पादस्यलोपोऽहस्त्यादिभ्यः । कुम्भपदीषुच । संख्या सुपूर्वस्य ॥ ७ ॥ वयसिदन्तस्यदतृ । छन्दसि । स्त्रियांसंज्ञायाम् । विभाषाश्यावारोकाभ्याम् । अग्रान्तशुद्ध शुभ्रवृषवराहेभ्यश्च । ककुदस्यावस्थायांलोपः । त्रिककुत्पर्वते । उद्विभ्यांकाकुदस्य । पूर्णाद्विभाषा । सुहृद्दुर्हृदौ मित्रामित्रयोः । उरःप्रभृतिभ्यःकप् । इनःस्त्रियाम् । नद्यृतश्च । शेषाद्विभाषा । नसंज्ञायाम् । ईयसश्च । वन्दिते

भ्रातुः । ऋतश्छन्दसि । नाडीतन्त्र्योःस्वाङ्गे । निष्प्रवाणिश्च ॥ ८ ॥ पादशतस्यतत्प्रकृतवृकज्येष्ठाभ्यांसपत्रान्वव तक्षात्खार्यांनञ्दुःसुभ्योवयसिविंशतिः ॥ इतिपञ्चमाध्यायेचतुर्थःपादः ॥ ४ ॥ इतिपञ्चमोऽध्यायः ॥ ५ ॥ ॥

ॐ ॥ एकाचोद्वेप्रथमस्य । अजादेर्द्वितीयस्य । नन्द्राःसंयोगादयः । पूर्वोऽभ्यासः । उभेअभ्यस्तम् । जक्षित्या दयःषट् । तुजादीनांदीर्घोऽभ्यासस्य । लिटिधातोरनभ्यासस्य । सन्यङोः । श्लौ । चङि । दाश्वान्साह्वान्मीढ्वां श्च । ष्यङःसंप्रसारणंपुत्रपत्योस्तत्पुरुषे । बन्धुनिबहुव्रीहौ । वचिस्वपियजादीनांकिति । ग्रहिज्यावयिव्यधिवष्टि विचतिवृश्चतिपृच्छतिभृज्जतीनांङितिच । लिट्यभ्यासस्योभयेषाम् । स्वापेश्चङि । स्वपिस्यमिव्येञांयङि । नवशः ॥ १ ॥ चायःकी । स्फायःस्फीनिष्ठायाम् । स्त्यःप्रपूर्वस्य । द्रवमूर्तिस्पर्शयोःश्यः । प्रतेश्च । विभाषाभ्यवपूर्वस्य । शृतंपाके । प्यायःपी । लिड्यङोश्च । विभाषाश्वेः । णौचसंश्चङोः । ह्वःसंप्रसारणम् । अभ्यस्तस्यच । बहुलंछन्द सि । चायःकी । अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताःश्रितमाशीराशीर्ताः । नसंप्रसारणेसंप्रसारणम् । लिटिवयोयः । वश्चास्यान्यतरस्यांकिति । वेञः ॥ २ ॥ ल्यपिच । ज्यश्च । व्यश्च । विभाषापरेः । आदेचउपदेशे ऽशिति । नव्योलिटि । स्फुरतिस्फुलत्योर्घञि । क्रीङ्जीनांणौ । सिध्यतेरपारलौकिके । मीनातिमिनोतिदीङांल्य पिच । विभाषालीयतेः । खिदेश्छन्दसि । अपगुरोणमुलि । चिस्फुरोर्णौ । प्रजनेवीयतेः । बिभेतेर्हेतुभये । नित्यं

स्नयतेः । सृजिदृशोर्झल्यमकिति । अनुदात्तस्यचर्दुपधस्यान्यतरस्याम् । शीर्षश्छन्दसि ॥ ३ ॥ येचतद्धिते । अ
चिशीर्षः । पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु । धात्वादेःषःसः । णोनः । लोपोव्योर्व
लि । वेरपृक्तस्य । हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तंहल् । एङ्ह्रस्वात्संबुद्धेः । शेश्छन्दसिवहुलम् । ह्रस्वस्यपितिकृ
तितुक् । संहितायाम् । छेच । आङ्माङोश्च । दीर्घात् । पदान्ताद्वा । इकोयणचि । एचोऽयवायावः । वान्तो
यिप्रत्यये । धातोस्तन्निमित्तस्यैव ॥ ४ ॥ क्षय्यजय्यौशक्यार्थे । क्रय्यस्तदर्थे । भय्यप्रवय्येचच्छन्दसि । एकःपूर्वप
रयोः । अन्तादिवच्च । षत्वतुकोरसिद्धः । आद्गुणः । वृद्धिरेचि । एत्येधत्यूठ्सु । आटश्च । उपसर्गादृतिधातौ ।
वासुप्यापिशलेः । औतोम्शसोः । एङिपररूपम् । ओमाङोश्च । उस्यपदान्तात् । अतोगुणे । अव्यक्तानुकरणस्या
तइतौ । नाम्रेडितस्यान्त्यस्यतुवा । नित्यमाम्रेडितेडाचि ॥ ५ ॥ अकःसवर्णेदीर्घः । प्रथमयोःपूर्वसवर्णः । तस्मा
च्छसोनःपुंसि । नादिचि । दीर्घाज्जसिच । वाछन्दसि । अमिपूर्वः । संप्रसारणाच्च । एङःपदान्तादति । ङसिङ
सोश्च । ऋतउत् । ख्यत्यात्परस्य । अतोरोरप्लुतादप्लुते । हशिच । प्रकृत्यान्तःपादमव्यपरे । अव्यादवद्यादवक्र
मुरव्रतायमवन्त्ववस्युषुच । यजुष्युरः । आपोजुषाणोवृष्णोवर्षिष्ठेम्बेऽम्बालेऽम्बिकेपूर्वे । अङ्गइत्यादौच । अनुदा
त्तेचकुधपरे ॥ ६ ॥ अवपथासिच । सर्वत्रविभाषागोः । अवङ्स्फोटायनस्य । इन्द्रेच । प्लुतप्रगृह्याअचिनित्यम् ।

आङोऽनुनासिकश्छन्दसि । इकोऽसवर्णेशाकल्यस्यह्रस्वश्च । ऋत्यकः । अप्लुतवदुपस्थिते । ईं३चाक्रवर्मणस्य । दिव उत् । एतत्तदोःसुलोपोऽकोरनञ्समासेहलि । स्यश्छन्दसिबहुलम् । सोऽचिलोपेचेत्पादपूरणम् । सुट्कात्पूर्वः । अडभ्यासव्यवायेऽपि । संपर्युपेभ्यःकरोतौभूषणे । समवायेच । उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु । किरतौलवने ॥ ७ ॥ हिंसायांप्रतेश्च । अपाच्चतुष्पाच्छकुनिष्वालेखने । कुस्तुम्बुरूणिजातिः । अपरस्पराःक्रियासातत्ये । गोष्पदंसेवितासेवितप्रमाणेषु । आस्पदंप्रतिष्ठायाम् । आश्चर्यमनित्ये । वर्चस्केऽवस्करः । अपस्करोरथाङ्गम् । विष्किरःशकुनिर्विकिरोवा । ह्रस्वाच्चन्द्रोत्तरपदेमन्त्रे । प्रतिष्कशश्चकशेः । प्रस्कण्वहरिश्चन्द्रावृषी । मस्करमस्करिणौवेणुपरिव्राजकयोः । कास्तीराजस्तुन्देनगरे । कारस्करोवृक्षः । पारस्करप्रभृतीनिचसंज्ञायाम् । अनुदात्तंपदमेकवर्जम् । कर्षात्वतोघञोऽन्तउदात्तः । उञ्छादीनांच ॥ ८ ॥ अनुदात्तस्यचयत्रोदात्तलोपः । धातोः । चितः । तद्धितस्य । कितः । तिसृभ्योजसः । चतुरःशसि । सावेकाचस्तृतीयादिर्विभक्तिः । अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे । अञ्चेश्छन्दस्यसर्वनामस्थानम् । ऊडिदंपदाद्यप्पुम्रैद्युभ्यः । अष्टनोदीर्घात् । शतुरनुमोनद्यजादी । उदात्तयणोहल्पूर्वात् । नोङ्धात्वोः । ह्रस्वनुड्भ्यांमतुप् । नामन्यतरस्याम् । ङ्याश्छन्दसिबहुलम् । षट्त्रिचतुर्भ्योहलादिः । झल्युपोत्तमम् ॥ ९ ॥ विभाषाभाषायाम् । नगोश्वन्साववर्णराड्क्रुङ्कृद्भ्यः । दिवोझल् ।

नृचान्यतरस्याम् । तित्स्वरितम् । तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्हिङोः । आदिःसिचोऽन्यत
रस्याम् । स्वपादिर्हिंसामच्यनिटि । अभ्यस्तानामादिः । अनुदात्तेच । सर्वस्यसुपि । भीह्रीभृहुमदजनधनदरिद्रा
जागरांप्रत्ययात्पूर्वंपिति । लिति । आदिर्णमुल्यन्यतरस्याम् । अचःकर्तृयकि । थलिचसेटीडन्तोवा । ञ्नित्यादि
र्नित्यम् । आमन्त्रितस्यच । पथिमथोःसर्वनामस्थाने । अन्तश्चतवैयुगपत् ॥ १० ॥ क्षयोनिवासे । जयःकरणम् ।
वृषादीनांच । संज्ञायामुपमानम् । निष्ठाचद्व्यजनात् । शुष्कधृष्टौ । आशितःकर्ता । रिक्तेविभाषा । जुष्टार्पितेचच्छ
न्दसि । नित्यंमन्त्रे । युष्मदस्मदोर्ङसि । ङयिच । यतोऽनावः । ईडवन्दवृशंसदुहाण्यतः । विभाषावेण्विन्धान
योः । त्यागरागहासकुहश्वठक्रथानाम् । उपोत्तमंरिति । चङ्यन्यतरस्याम् । मतोःपूर्वमात्संज्ञायांस्त्रियाम् ।
अन्तोऽवत्याः ॥ ११ ॥ ईवत्याः । चौ । समासस्य ॥ १२ ॥ एकाचश्चायोल्यपिचयेचक्षय्यजय्यावकःसवर्णेऽवप
थाहिंसायामनुदात्तस्यविभाषाक्षयईवत्यास्त्रीणि ॥ इतिषष्ठाध्यायेप्रथमःपादः ॥ १ ॥ छ ॥ बहुव्रीहौप्रकृत्यापूर्वप
दम् । तत्पुरुषेतुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः । वर्णोवर्णेष्वनेते । गाधलवणयोःप्रमाणे । दाया
द्यंदायादे । प्रतिबन्धिचिरकृच्छ्रयोः । पदेऽपदेशे । निवातेवातत्राणे । शारदेऽनार्तवे । अध्वर्युकषाययोर्जातौ ।
सदृशप्रतिरूपयोःसादृश्ये । द्विगौप्रमाणे । गन्तव्यपण्यंवाणिजे । मात्रोपज्ञोपक्रमच्छायेनपुंसके । सुखप्रिययोर्हिते ।

प्रीतौच । स्वंस्वामिनि । पत्यावैश्वर्यें । नभूवाक्चिद्दिधिषु । वाभुवनम् ॥ १ ॥ आशङ्काबाधनेदीयःसुसंभावने । पूर्वेभूतपूर्वे । सविधसनीडसमर्यादसवेशसदेशेषुसामीप्ये । विस्पृष्टादीनिगुणवचनेषु । श्रज्यावमकन्पापवत्सुभावे कर्मधारये । कुमारश्च । आदिःप्रत्येनसि । पूगेष्वन्यतरस्याम् । इगन्तकालकपालभगालशरावेषुद्विगौ । बह्वन्यतरस्याम् । दिष्टिवितस्त्योश्च । सप्तमीसिद्धशुष्कपक्वबन्धेष्वकालात् । परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु । राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु । संख्या । आचार्योपसर्जनश्चान्तेवासी । कार्तकौजपादयश्च । महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारतहैलिहिलरौरवप्रवृद्धेषु । क्षुल्लकश्चवैश्वदेवे । उष्ट्रःसादिवाम्योः ॥ २ ॥ गौःसादसादिसारथिषु । कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूःपण्यकम्बलोदासीभाराणांच । चतुर्थीतदर्थे । अर्थे । क्तेच । कर्मधारयेऽनिष्ठा । अहीनेद्वितीया । तृतीयाकर्मणि । गतिरनन्तरः । तादौचनितिकृत्यतौ । तवैचान्तश्चयुगपत् । अनिगन्तोऽञ्चतौवप्रत्यये । न्यधीच । ईषदन्यतरस्याम् । हिरण्यपरिमाणंधने । प्रथमोऽचिरोपसंपत्तौ । कतरकतमौकर्मधारये । आर्योब्राह्मणकुमारयोः । राजाच । षष्ठीप्रत्येनसि ॥ ३ ॥ क्तेनित्यार्थे । ग्रामःशिल्पिनि । राजाचप्रशंसायाम् । आदिरुदात्तः । सप्तमीहारिणौधर्म्येऽहरणे । युक्तेच । विभाषाध्यक्षे । पापंचशिल्पिनि । गोत्रान्तेवासिमाणवब्राह्मणेषुक्षेपे । अङ्गानिमैरेये । भक्ताख्यास्तदर्थेषु । गोबिडालसिंहसैन्धवेषू

पमाने । अकेजीविकार्थे । प्राचांक्रीडायाम् । अणिनियुक्ते । शिल्पिनिचाकृञः । संज्ञायांच । गोतन्तियवंपाले । णिनि । उपमानंशब्दार्थप्रकृतावेव ॥ ४ ॥ युक्तारोह्यादयश्च । दीर्घकाशतुषभ्राष्ट्रवटंजे । अन्त्यात्पूर्वंबह्वचः । ग्रामेऽनिवसन्तः । घोषादिषुच । छात्र्यादयःशालायाम् । प्रस्थेऽवृद्धमकर्क्यादीनाम् । मालादीनांच । अमहन्नव न्नगरेऽनुदीचाम् । अर्मेचावर्णंद्व्यच्त्र्यच् । नभूताधिकसंजीवमद्राश्मकज्जलम् । अन्तः । सर्वंगुणकार्त्स्न्ये । संज्ञायां गिरिनिकाययोः । कुमार्यांवयसि । उदकेऽकेवले । द्विगौक्रतौ । सभायांनपुंसके । पुरेप्राचाम् । अरिष्टगौडपूर्वेच ॥ ५ ॥ नहास्तिनफलकमार्देयाः । कुसूलकूपकुम्भशालंबिले । दिक्छब्दाग्रामजनपदाख्यानचानराटेषु । आचार्यो पसर्जनश्चान्तेवासिनि । उत्तरपदवृद्धौसर्वंच । बहुव्रीहौविश्वंसंज्ञायाम् । उदराश्वेषुषु । क्षेपे । नदीवन्धुनि । निष्ठोपसर्ग पूर्वमन्यतरस्याम् । उत्तरपदादिः । कर्णोवर्णलक्षणात् । संज्ञौपम्ययोश्च । कण्ठपृष्ठग्रीवाजङ्घंच । शृङ्गमवस्थायांच । नञोजरमरमित्रमृताः । सोर्मनसीअलोमोषसी । क्रत्वादयश्च । आद्युदात्तंद्व्यच्छन्दसि । वीरवीर्यौच ॥ ६ ॥ कूल तीरतूलमूलशालाक्षसममव्ययीभावे । कंसमन्थशूर्पपाय्यकाण्डंद्विगौ । तत्पुरुषेशालायांनपुंसके । कन्थाच । आ दिश्चिहणादीनाम् । चेलखेटकटुककाण्डंगर्हायाम् । चीरमुपमानम् । पललसूपशाकंमिश्रे । कुरुसूदस्थलकर्षाःसंज्ञा याम् । अकर्मधारयेराज्यम् । वर्ग्यादयश्च । पुत्रःपुम्भ्यः । नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः । चूर्णादीन्यप्रा

णिषष्ठ्याः । षट्चकाण्डादीनि । कुण्डंवनम् । प्रकृत्याभगालम् । शितेर्नित्याबह्वज्बहुव्रीहावभसत् । गतिकारको पपदात्कृत् । उभेवनस्पत्यादिषुयुगपत् ॥७॥ देवताद्वन्द्वेच । नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु । अन्तः । थाथघञ्क्ताजबित्रकाणाम् । सूपमानात्क्तः । संज्ञायामनाचितादीनाम् । प्रवृद्धादीनांच । कारकादत्तश्रुतयोरेवा शिषि । इत्थंभूतेनकृतमितिच । अनोभावकर्मवचनः । मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः । सप्त म्याःपुण्यम् । ऊनार्थकलहंतृतीयायाः । मिश्रंचानुपसर्गमसंधौ । नञोगुणप्रतिषेधेसंपाद्यर्हहितालमर्थास्तद्धिताः । ययतोश्चातदर्थे । अच्कावशक्तौ । आक्रोशेच । संज्ञायाम् । कृत्योकेष्णुच्चार्वादयश्च ॥ ८ ॥ विभाषातृन्नन्नतीक्ष्णशु चिषु । बहुव्रीहाविदमेतत्तद्भ्यःप्रथमपूरणयोःक्रियागणने । संख्यायाःस्तनः । विभाषाछन्दसि । संज्ञायांमित्राजि नयोः । व्यवायिनोऽन्तरम् । मुखंस्वाङ्गम् । नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः । निष्ठोपमानादन्यतर स्याम् । जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः । वाजाते । नञ्सुभ्याम् । कपिपूर्वम् । ह्रस्वा न्तेऽन्त्यात्पूर्वम् । बहोर्नञ्वदुत्तरपदभूम्नि । नगुणादयोऽवयवाः । उपसर्गात्स्वाङ्गंध्रुवमपर्शु । वनंसमासे । अन्तः । अन्तश्च ॥ ९ ॥ ननिविभ्याम् । परेरभितोभाविमण्डलम् । प्रादस्वाङ्गंसंज्ञायाम् । निरुदकादीनिच । अभेर्मुखम् । अपाच्च । स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनामनामच । अधरुपरिस्थम् । अनोरप्रधानकनीयसी । पुरुषश्चान्वादिष्टः ।

अतेरकृत्पदे । नेरनिधाने । प्रतेरंश्वादयस्तत्पुरुषे । उपाद्व्यजजिनमगौरादयः । सोरवक्षेपणे । विभाषोत्पुच्छे । द्वित्रिभ्यांपाद्दन्मूर्धसुबहुव्रीहौ । संक्थंचाक्रान्तात् । परादिश्छन्दसिबहुलम् ॥ १० ॥ बहुव्रीहावाशङ्कागौःसादक्के नित्यार्थेयुक्तानहास्तिनकुलतीरदेवताविभाषाननिव्येकोनविंशतिः ॥ इतिषष्ठाध्यायेद्वितीयःपादः ॥ २ ॥ ॥ ७ ॥

अलुगुत्तरपदे । पंचम्याःस्तोकादिभ्यः । ओजःसहोऽम्भस्तमसस्तृतीयायाः । मनसःसंज्ञायाम् । आज्ञायिनिच । आत्मनश्चपूरणे । वैयाकरणाख्यायांचतुर्थ्याः । परस्यच । हलदन्तात्सप्तम्याःसंज्ञायाम् । कारनाम्निचप्राचांहलादौ । मध्याद्गुरौ । अमूर्धमस्तकात्स्वाङ्गादकामे । बन्धेचविभाषा । तत्पुरुषेकृतिबहुलम् । प्रावृट्शरत्कालदिवांजे । विभाषावर्षक्षरशरवरात् । घकालतनेषुकालनाम्नः । शयवासवासिष्वकालात् । नेन्सिद्धबध्नातिषुच । स्थेचभाषायाम् ॥ १ ॥ षष्ठ्याआक्रोशे । पुत्रेऽन्यतरस्याम् । ऋतोविद्यायोनिसंबन्धेभ्यः । विभाषास्वसृपत्योः । आनङृतो द्वन्द्वे । देवताद्वन्द्वेच । ईदग्नेःसोमवरुणयोः । इद्वृद्धौ । दिवोद्यावा । दिवसश्चपृथिव्याम् । उषासोषसः । मातरपितरावुदीचाम् । पितरामातराचच्छन्दसि । स्त्रियाःपुंवद्भाषितपुंस्कादनूङ्समानाधिकरणेस्त्रियामपूरणीप्रियादिषु । तसिलादिष्वाकृत्वसुचः । क्यङ्मानिनोश्च । नकोपधायाः । संज्ञापूरण्योश्च । वृद्धिनिमित्तस्यचतद्धितस्यारक्तविकारे । स्वाङ्गाच्चेतोऽमानिनि ॥ २ ॥ जातेश्च । पुंवत्कर्मधारयजातीयदेशीयेषु । घरूपकल्पचेलड्ब्रुवगोत्रमत

हृतेषुङ्योऽनेकाचोह्रस्वः । नद्याःशेषस्यान्यतरस्याम् । उगितश्च । आन्महतःसमानाधिकरणजातीययोः । द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । त्रेस्त्रयः । विभाषाचत्वारिंशत्प्रभृतौसर्वेषाम् । हृदयस्यहृल्लेखयदण्लासेषु । वाशोक ष्यञ्रोगेषु । पादस्यपदाज्यातिगोपहतेषु । पद्यत्यतदर्थे । हिमकाषिहतिषुच । ऋचःशे । वाघोषमिश्रशब्देषु । उद कस्योदःसंज्ञायाम् । पेषंवासवाहनधिषुच । एकहलादौपूरयितव्येऽन्यतरस्याम् । मन्थौदनसक्तुबिन्दुवज्रभारहार वीवधगाहेषुच ॥ ३ ॥ इकोह्रस्वोऽङ्योगालवस्य । एकतद्धितेच । ङ्यापोःसंज्ञाछन्दसोर्बहुलम् । त्वेच । इष्टकेषी कामालानांचिततूलभारिषु । खित्यनव्ययस्य । अरुर्द्विषदजन्तस्यमुम् । इचएकाचोऽम्प्रत्ययवच्च । वाचंयमपुरंद रौच । कारेसत्यागदस्य । श्येनतिलस्यपातेञे । रात्रेःकृतिविभाषा । नलोपोनञः । तस्मान्नुडचि । नभ्राण्नपान्न वेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषुप्रकृत्या । एकादिश्चैकस्यचादुक् । नगोऽप्राणिष्वन्यतरस्याम् । सहस्यसःसंज्ञायाम् । ग्रन्थान्ताधिकेच । द्वितीयेचानुपाख्ये ॥ ४ ॥ अव्ययीभावेचाकाले । वोपसर्जनस्य । प्रकृ त्याशिष्यगोवत्सहलेषु । समानस्यच्छन्दस्यमूर्धप्रभृत्युदर्केषु । ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयो वचनबन्धुषु । चरणेब्रह्मचारिणि । तीर्थेये । विभाषोदरे । दृग्दृशवतुषु । इदंकिमोरीश्की । आसर्वनाम्नः । वि ष्वग्देवयोश्चटेरद्र्यञ्चतावप्रत्यये । समःसमि । तिरसस्तिर्यलोपे । सहस्यसध्रिः । सधमादस्थयोश्छन्दसि । द्व्यन्तरुप

सर्गेभ्योऽपईत् । ऊदनोर्देशे । अषष्ठ्यतृतीयास्थस्यान्यस्यदुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । अर्थेवि
भाषा ॥ ५ ॥ कोःकत्तत्पुरुषेऽचि । रथवदयोश्च । तृणेचजातौ । कापथ्यक्षयोः । ईषदर्थे । विभाषापुरुषे । कवंचो
ष्णे । पथिचच्छन्दसि । पृषोदरादीनियथोपदिष्टम् । संख्याविसायपूर्वस्याह्नस्याहनन्यतरस्यांङौ । ढ्लोपेपूर्वस्यदी
र्घोऽणः । सहिवहोरोदवर्णस्य । साढ्यैसाढ्वासाढेतिनिगमे । संहितायाम् । कर्णेलक्षणस्याविष्टाष्टपंचमणिभिन्नच्छि
न्नच्छिद्रस्रुवस्वस्तिकस्य । नहिवृतिवृषिव्यधिरुचिसहितनिषुक्कौ । वनगिर्योःसंज्ञायांकोटरकिंशुलुकादीनाम् । वले ।
मतौबह्वचोऽनजिरादीनाम् । शरादीनांच ॥ ६ ॥ इकोवहेऽपीलोः । उपसर्गस्यघञ्यमनुष्येबहुलम् । इकःकाशे ।
दस्ति । अष्टनःसंज्ञायाम् । छन्दसिच । चितेःकपि । विश्वस्यवसुराटोः । नरेसंज्ञायाम् । मित्रेचर्षौ । मन्त्रेसोमा
श्वेन्द्रियविश्वदेव्यस्यमतौ । ओषधेश्चविभक्तावप्रथमायाम् । ऋचितुनुघमक्षुतङ्कुत्रोरुष्याणाम् । इकःसुञि । द्व्यचो
ऽतस्तिङः । निपातस्यच । अन्येषामपिदृश्यते । चौ । संप्रसारणस्य ॥७॥ अलुक्षष्ठ्याजातेरिकोऽव्ययीभावेकोः
कत्तदिकोवहएकोनविंशतिः । इतिषष्ठाध्यायेतृतीयःपादः ॥ ३ ॥ ७ ॥ अङ्गस्य । हलः । नामि । नतिसृचतसृ ।
छन्दस्युभथा । नृच । नोपधायाः । सर्वनामस्थानेचासंबुद्धौ । वासपूर्वस्यनिगमे । सान्तमहतःसंयोगस्य । अप्तृ
न्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् । इन्हन्पूषार्यम्णांशौ । सौच । अत्वसन्तस्यचाधातोः । अनुनासि

कस्यक्किझलोःक्किति । अज्झनगमांसनि । तनोतेर्विभाषा । क्रमश्चक्त्वि । च्छ्वोःशूडनुनासिकेच । ज्वरत्वरस्रिव्यवि मवामुपधायाश्च ॥ १ ॥ राल्लोपः । असिद्धवदत्राभात् । श्नान्नलोपः । अनिदितांहलउपधायाःक्किति । दंशसञ्जस्व ञ्जांशपि । रञ्जेश्च । घञिचभावकरणयोः । स्यदोजवे । अवोदैधोद्मप्रश्रथहिमश्रथाः । नाञ्चेःपूजायाम् । क्त्विस्क न्दिस्यन्दोः । जान्तनशांविभाषा । भञ्जेश्चचिणि । शासइदङ्हलोः । शाहौ । हन्तेर्जः । अनुदात्तोपदेशवनतित नोत्यादीनामनुनासिकलोपोझलिक्किति । वाल्यपि । नक्तिचिदीर्घश्च । गमःक्वौ ॥ २ ॥ विड्वनोरनुनासिकःस्यात् । जनसनखनांसञ्झलोः । येविभाषा । तनोतेर्यकि । सनःक्तिचिलोपश्चास्यान्यतरस्याम् । आर्धधातुके । भ्रस्जोरोप धयोरमन्यतरस्याम् । अतोलोपः । यस्यहलः । क्यस्यविभाषा । णेरनिटि । निष्ठायांसेटि । जनितामन्त्रे । शमिता यज्ञे । अयामन्ताल्वाय्येत्न्विष्णुषु । ल्यपिलघुपूर्वात् । विभाषापः । युप्लुवोर्दीर्घश्छन्दसि । क्षियः । निष्ठायामण्य दर्थे ॥३॥ वाक्रोशदैन्ययोः । स्यसिच्सीयुट्तासिषुभावकर्मणोरुपदेशेऽज्झनग्रहदृशांवाचिण्वदिट्च । दीङोयुडचि क्ङिति । आतोलोपइटिच । ईद्यति । घुमास्थागापाजहातिसांहलि । एर्लिङि । वान्यस्यसंयोगादेः । नल्यपि । मय तेरिदन्यतरस्याम् । लुङ्लङ्लृङ्क्ष्वडुदात्तः । आडजादीनाम् । छन्दस्यपिदृश्यते । नमाङ्योगे । वहुलंछन्दस्यमा ङ्योगेऽपि । इरयोरे । अचिश्नुधातुभ्रुवांय्वोरियङुवङौ । अभ्यासस्यासवर्णे । स्त्रियाः । वाम्शसोः ॥ ४ ॥ इणो

यण् । एरनेकाचोऽसंयोगपूर्वस्य । ओःसुपि । वर्षाभ्वश्च । नभूसुधियोः । छन्दस्युभयथा । हुश्नुवोःसार्वधातुके ।
भुवोवुग्लुङ्लिटोः । ऊदुपधायागोहः । दोषोणौ । वाचित्तविरागे । मितांह्रस्वः । चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ।
खचिह्रस्वः । ह्लादोनिष्ठायाम् । छादेर्घेऽद्व्युपसर्गस्य । इस्मन्त्रन्क्विषुच । गमहनजनखनघसांलोपःक्ङित्यनङि । तनि
पत्योश्छन्दसि । घसिभसोर्हलिच ॥ ५ ॥ हुझल्भ्योहेर्धिः । श्रुशृणुपॄकृवृभ्यश्छन्दसि । अङितश्च । चिणोलुक् ।
अतोहेः । उतश्चप्रत्ययादसंयोगपूर्वात् । लोपश्चास्यान्यतरस्यांम्वोः । नित्यंकरोतेः । येच । अतउत्सार्वधातुके ।
श्नसोरल्लोपः । श्नाभ्यस्तयोरातः । ईहल्यघोः । इद्दरिद्रस्य । भियोऽन्यतरस्याम् । जहातेश्च । आचहौ । लोपोयि ।
घ्वसोरेद्धावभ्यासलोपश्च । अतएकहल्मध्येऽनादेशादेर्लिटि ॥६॥ थलिचसेटि । तॄफलभजत्रपश्च । राधोहिंसायाम् ।
वाजॄभ्रमुत्रसाम् । फणांचसप्तानाम् । नशसददवादिगुणानाम् । अर्वणस्त्रसावनञः । मघवाबहुलम् । भस्य ।
पादःपत् । वसोःसंप्रसारणम् । वाहऊठ् । श्वयुवमघोनामतद्धिते । अल्लोपोऽनः । षपूर्वहन्धृतराज्ञामणि । विभा
षाङिश्योः । नसंयोगाद्वमन्तात् । अचः । उदईत् । आतोधातोः ॥ ७ ॥ मन्त्रेष्वाङ्यादेरात्मनः । तिविंशतेर्डि
ति । टेः । नस्तद्धिते । अह्नष्टखोरेव । ओर्गुणः । ढेलोपोऽकद्र्वाः । यस्येतिच । सूर्यतिष्यागस्त्यमत्स्यानांयउपधायाः ।
हलस्तद्धितस्य । आपत्यस्यचतद्धितेऽनाति । क्यच्व्योश्च । बिल्वकादिभ्यश्छस्यलुक् । तुरिष्ठेमेयःसुः । टेः । स्थूल

अष्टा.
॥२१॥

दूरयुवह्रस्वक्षिप्रक्षुद्राणांयणादिपरंपूर्वस्यचगुणः । प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणांप्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः । बहोर्लोपोभूचबहोः । इष्ठस्ययिट्च । ज्यादादीयसः ॥ ८ ॥ रऋतोहलादेर्लघोः । विभाषर्जोश्छन्दसि । प्रकृत्यैकाच् । इनण्यनपत्ये । गाथिविदथिकेशिगणिपणिनश्च । संयोगादिश्च । अन् । येचाभावकर्मणोः । आत्माध्वानौखे । नमपूर्वोऽपत्येऽवर्मणः । ब्राह्मोऽजातौ । कार्मस्ताच्छील्ये । औक्षमनपत्ये । दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि ॥ ९ ॥ अङ्गस्यरालोपोविड्वनोर्वाक्रोशेणोयण्हुझल्भ्यस्थलिचमन्त्रेषुरऋतःपंचदश ॥ इतिषष्ठाध्यायेचतुर्थःपादः ॥ ४ ॥ इत्यष्टाध्यायीसूत्रपाठेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥

ॐ ॥ युवोरनाकौ । आयनेयीनीयियःफढखछघांप्रत्ययादीनाम् । झोऽन्तः । अदभ्यस्तात् । आत्मनेपदेष्वनतः । शीङोरुट् । वेत्तेर्विभाषा । बहुलंछन्दसि । अतोभिसऐस् । बहुलंछन्दसि । नेदमदसोरकोः । टाङसिङसामिनात्स्याः । ङेर्यः । सर्वनाम्नःस्मै । ङसिङ्योःस्मात्स्मिनौ । पूर्वादिभ्योनवभ्योवा । जसःशी । औङआपः । नपुंसकाच्च । जःशसोःशिः ॥ १ ॥ अष्टाभ्यऔश् । षड्भ्योलुक् । स्वमोर्नपुंसकात् । अतोऽम् । अद्ड्डुतरादिभ्यःपञ्चभ्यः । नेतराच्छन्दसि । युष्मदस्मद्भ्यांङसोऽश् । ङेप्रथमयोरम् । शसोन । भ्यसोभ्यम् । पञ्चम्याअत् । एकव

सूत्रपा.
७ । १

॥ २९ ॥

चनस्यच । सामआकम् । आतऔणलः । तुह्योस्तातङाशिष्यन्यतरस्याम् । विदेःशतुर्वसुः । समासेऽनञ्पूर्वेक्त्वो ल्यप् । क्त्वापिच्छन्दसि । सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः । अमोमश् ॥ २ ॥ लोपस्तआत्मनेपदेषु । ध्वमोध्वात् । यजध्वैनमितिच । तस्यतात् । तप्तनप्तनथनाश्च । इदन्तोमसि । क्त्वोयक् । इष्ट्वीनमितिच । स्नात्व्यादयश्च । आज्जसेरसुक् । अश्वक्षीरवृषलवणानामात्मप्रीतौक्यचि । आमिसर्वनाम्नःसुट् । त्रेस्त्रयः । ह्रस्वनद्यापोनुट् । षट्चतुर्भ्यश्च । श्रीग्रामण्योश्छन्दसि । गोःपादान्ते । इदितोनुम्धातोः । शेमुचादीनाम् । मस्जिनशोर्झलि ॥ ३ ॥ रधिजभोरचि । नेट्यलिटिरधेः । रभेरशब्लिटोः । लभेश्च । आङोयि । उपात्प्रशंसायाम् । उपसर्गात्खल्घञोः । नसुदुर्भ्यांकेवलाभ्याम् । विभाषाचिण्णमुलोः । उगिदचांसर्वनामस्थानेऽधातोः । युजेरसमासे । नपुंसकस्यझलचः । इकोऽचिविभक्तौ । तृतीयादिषुभाषितपुंस्कंपुंवद्गालवस्य । अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । छन्दस्यपिदृश्यते । ईचद्विवचने । नाभ्यस्ताच्छतुः । वानपुंसकस्य । आच्छीनद्योर्नुम् ॥ ४ ॥ शप्श्यनोर्नित्यम् । सावनडुहः । दृक्स्ववःस्वतवसांछन्दसि । दिवऔत् । पथिमथ्यृभुक्षामात् । इतोऽत्सर्वनामस्थाने । थोन्थः । भस्यटेर्लोपः । पुंसोऽसुङ् । गोतोणित् । णलुत्तमोवा । सख्युरसंबुद्धौ । अनङ्सौ । ऋदुशनस्पुरुदंसोऽनेहसांच । तृज्वत्क्रोष्टुः । स्त्रियांच । विभाषातृतीयादिष्वचि । चतुरनडुहोरामुदात्तः । अम्संबुद्धौ । ऋतइद्धातोः ॥ ५ ॥

उपधायाश्च । उदोष्ठ्यपूर्वस्य । बहुलंछन्दसि ॥ ६ ॥ युवोरष्टाभ्योलोपोरधिशप्रयनोरुपधायास्त्रीणि ॥ इतिसप्तमा
ध्यायेप्रथमःपादः ॥ १ ॥ ॥ ७ ॥ सिचिवृद्धिःपरस्मैपदेषु । अतोल्रान्तस्य । वदव्रजहलन्तस्याचः । नेटि । ह्म्य
न्तक्षणश्वसजागृणिश्व्येदिताम् । ऊर्णोतेर्विभाषा । अतोहलादेर्लघोः । नेड्वशिकृति । तितुत्रतथसिसुसरकसेषुच ।
एकाचउपदेशेऽनुदात्तात् । श्र्युकःकिति । सनिग्रहगुहोश्च । कृसृभृवृस्तुद्रुस्रुश्रुवोलिटि । श्वीदितोनिष्ठायाम् ।
यस्यविभाषा । आदितश्च । विभाषाभावादिकर्मणोः । क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानिमन्थमन
स्तमःसक्ताविस्पष्टस्वरानायासभृशेषु । धृषिशसीवैयात्ये । दृढःस्थूलबलयोः ॥ १ ॥ प्रभौपरिवृढः । कृच्छ्रगहनयोः
कषः । घुषिरविशब्दने । अर्देःसंनिविभ्यः । अभेश्चाविदूर्ये । णेरध्ययनेवृत्तम् । वादान्तशान्तपूर्णदस्तस्पष्टच्छन्न
ज्ञप्ताः । रुष्यमत्वरसंघुषास्वनाम् । हृषेर्लोमसु । अपचितश्च । हुह्वरेश्छन्दसि । अपरिह्वृताश्च । सोमेह्वरितः ।
ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्वलितिक्षरितिवमित्यमि
तीतिच । आर्धधातुकस्येड्वलादेः । स्नुक्रमोरनात्मनेपदनिमित्ते । ग्रहोऽलिटिदीर्घः । वृतोवा । नलिङि । सिचि
चपरस्मैपदेषु ॥ २ ॥ इट्सनिवा । लिङ्सिचोरात्मनेपदेषु । ऋतश्चसंयोगादेः । स्वरतिसूतिसूयतिधूञूदितोवा ।
रधादिभ्यश्च । निरःकुषः । इण्निष्ठायाम् । तीषसहलुभरुषरिषः । सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।

क्लिशः क्त्वानिष्ठयोः । पूङश्च । वसतिक्षुधोरिट् । अञ्चेः पूजायाम् । लुभोविमोहने । जॄव्रश्च्योःक्त्वि । उदितोवा । सेऽसिचिकृतचृतच्छृदतृदनृतः । गमेरिट्परस्मैपदेषु । नवृद्भ्यश्चतुर्भ्यः । तासिचक्लृपः ॥ ३ ॥ अचस्तास्वत्थल्यनिटोनित्यम् । उपदेशेऽत्वतः । ऋतोभारद्वाजस्य । बभूथाततन्थजगृभ्मववर्थेतिनिगमे । विभाषासृजिदृशोः । इडत्त्यर्तिव्ययतीनाम् । वस्वेकाजाद्घसाम् । विभाषागमहनविदविशाम् । सनिंससनिवांसम् । ऋद्धनोःस्ये । अञ्जेःसिचि । स्तुसुधूञ्भ्यःपरस्मैपदेषु । यमरमनमातांसक्च । स्मिपूङ्रञ्ज्वशांसनि । किरश्चपञ्चभ्यः । रुदादिभ्यःसार्वधातुके । ईशःसे । ईडजनोर्ध्वेच । लिङःसलोपोऽनन्त्यस्य । अतोयेयः ॥ ४ ॥ आतोङितः । आनेमुक् । ईदासः । अष्टनआविभक्तौ । रायोहलि । युष्मदस्मदोरनादेशे । द्वितीयायांच । प्रथमायाश्चद्विवचनेभाषायाम् । योऽचि । शेषेलोपः । मपर्यन्तस्य । युवावौद्विवचने । यूयवयौजसि । त्वाहौसौ । तुभ्यमह्यौङयि । तवममौङसि । त्वमावेकवचने । प्रत्ययोत्तरपदयोश्च । त्रिचतुरोःस्त्रियांतिसृचतसृ । अचिरऋतः ॥ ५ ॥ जरायाजरसन्यतरस्याम् । त्यदादीनामः । किमःकः । कुतिहोः । क्वाति । तदोःसःसावनन्त्ययोः । अदसऔसुलोपश्च । इदमोमः । दश्च । यःसौ । इदोऽय्पुंसि । अनाप्यकः । हलिलोपः । मृजेर्वृद्धिः । अचोञ्णिति । अतउपधायाः । तद्धितेष्वचामादेः । किति च ॥ ७ ॥ सिचिप्रभाविट्सन्यचआतोजरायाअष्टादश ॥ इतिसप्तमाध्यायेद्वितीयःपादः ॥ २ ॥ ७ ॥

देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् । केकयमित्रयुप्रलयानांयादेरियः । नय्वाभ्यांपदान्ताभ्यांपूर्वौतुताभ्यामैच् । द्वारादीनांच । न्यग्रोधस्यचकेवलस्य । नकर्मव्यतिहारे । स्वागतादीनांच । श्वादेरिञि । पदान्तस्यान्यतरस्याम् । उत्तरपदस्यच । अवयवादृतोः । सुसर्वार्धाज्जनपदस्य । दिशोऽमद्राणाम् । प्राचांग्रामनगराणाम् । संख्यायाःसंवत्सरसंख्यस्यच । वर्षस्याभविष्यति । परिमाणान्तस्यासंज्ञाशाणयोः । जेप्रोष्ठपदानाम् । हृद्भगसिन्ध्वन्तेपूर्वपदस्यच । अनुशतिकादीनांच ॥ १ ॥ देवताद्वन्द्वेच । नेन्द्रस्यपरस्य । दीर्घाच्चवरुणस्य । प्राचांनगरान्ते । जङ्गलधेनुवलजान्तस्यविभाषितमुत्तरम् । अर्धात्परिमाणस्यपूर्वस्यतुवा । नातःपरस्य । प्रवाहणस्यढे । तत्प्रत्ययस्यच । नञःशुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् । यथातथयथापुरयोःपर्यायेण । हनस्तोऽचिण्णलोः । आतोयुक् चिण्कृतोः । नोदात्तोपदेशस्यमान्तस्यानाचमेः । जनिवध्योश्च । अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातांपुङ्णौ । शाच्छासाह्वाव्यावेपांयुक् । वोविधूननेजुक् । लीलोर्नुग्लुकावन्यतरस्यांस्नेहविपातने । भियोहेतुभयेषुक् ॥ २ ॥ स्फायोवः । शदेरगतौतः । रुहःपोऽन्यतरस्याम् । प्रत्ययस्थात्कात्पूर्वस्यातइदाप्यसुपः । नयासयोः । उदीचामातःस्थानेयकपूर्वायाः । भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि । अभाषितपुंस्काच्च । आदाचार्याणाम् । ठस्येकः । इसुसुक्तान्तात्कः । चजोःकुघिण्यतोः । न्यङ्क्वादीनांच । होहन्तेर्ञ्णिन्नेषु । अभ्यासाच्च । हेरचङि । सन्लिटोर्जेः । विभाषा

चेः । नक्कादेः । अजिव्रज्योश्च ॥ ३ ॥ भुजन्युब्जौपाण्युपतापयोः । प्रयाजानुयाजौयज्ञाङ्गे । वञ्चेर्गतौ । ओकउ
च्चःके । ण्यआवश्यके । यजयाचरुचप्रवचर्चश्च । वचोऽशब्दसंज्ञायाम् । प्रयोज्यनियोज्यौशक्यार्थे । भोज्यंभक्ष्ये ।
घोर्लोपोलेटिवा । ओतःश्यनि । क्सस्याचि । लुग्वादुहदिहलिहगुहामात्मनेपदेदन्त्ये । शमामष्टानांदीर्घःश्यनि ।
ष्ठिवुक्लमुचमांशिति । क्रमःपरस्मैपदेषु । इषुगमियमांछः । पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदांपिबजिघ्रधमति
ष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ज्ञाजनोर्जा । प्वादीनांह्रस्वः ॥ ४ ॥ मीनातेर्निगमे । मिदेर्गुणः । जुसिच । सार्व
धातुकार्धधातुकयोः । जाग्रोऽविचिण्णल्ङित्सु । पुगन्तलघूपधस्यच । नाभ्यस्तस्याचिपितिसार्वधातुके । भूसुवो
स्तिङि । उतोवृद्धिर्लुकिहलि । ऊर्णोतेर्विभाषा । गुणोऽपृक्ते । तृणहइम् । ब्रुवईट् । यङोवा । तुरुस्तुशम्यमःसार्व
धातुके । अस्तिसिचोऽपृक्ते । बहुलंछन्दसि । रुदश्चपञ्चभ्यः । अड्गार्ग्यगालवयोः । अदःसर्वेषाम् ॥ ५ ॥ अतोदी
र्घोयञि । सुपिच । बहुवचनेझल्येत् । ओसिच । आङिचापः । संबुद्धौच । अम्बार्थनद्योर्ह्रस्वः । ह्रस्वस्यगुणः ।
जसिच । ऋतोङिसर्वनामस्थानयोः । घेर्ङिति । आण्नद्याः । याडापः । सर्वनाम्नःस्याड्ढ्रस्वश्च । विभाषाद्वितीया
तृतीयाभ्याम् । ङेराम्नद्याम्नीभ्यः । इदुद्भ्याम् । औत् । अच्चघेः । आङोनास्त्रियाम् ॥ ६ ॥ देविकादेवतास्फायो
भुजमीनातेरतोदीर्घोविंशतिः ॥ इतिसप्तमाध्यायेतृतीयःपादः ॥ ३ ॥ छ ॥ णौचङ्युपधायाह्रस्वः । नाग्लोपिशा

स्वृदिताम् । भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् । लोपःपिबतेरीच्चाभ्यासस्य । तिष्ठतेरित् । जिघ्रते
र्वा । उर्ऋत् । नित्यंछन्दसि । दयतेर्दिगिलिटि । ऋतश्चसंयोगादेर्गुणः । ऋच्छत्यॄताम् । शॄदॄप्रांह्रस्वोवा । केऽणः ।
नकपि । आपोऽन्यतरस्याम् । ऋदृशोऽङिगुणः । अस्यतेस्थुक् । श्वयतेरः । पतःपुम् । वचउम् ॥ १ ॥ शीङः
सार्वधातुकेगुणः । अयङ्यिक्ङिति । उपसर्गाद्ध्रस्वऊहतेः । एतेर्लिङि । अकृत्सार्वधातुकयोर्दीर्घः । च्वौच । रीङृ
तः । रिङ्शयग्लिङ्क्षु । गुणोऽर्तिसंयोगाद्योः । यङिच । ईघ्राध्मोः । अस्यच्वौ । क्यचिच । अशनायोदन्यधना
याबुभुक्षापिपासागर्धेषु । नच्छन्दस्यपुत्रस्य । दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति । अश्वाघस्यात् । देवसुम्नयोर्य
जुषिकाठके । कव्यध्वरपृतनस्यर्चिलोपः । द्यतिस्यतिमास्थामित्तिकिति ॥ २ ॥ शाच्छोरन्यतरस्याम् । दधाते
र्हिः । जहातेश्चक्त्वि । विभाषाछन्दसि । सुधितवसुधितनेमधितधिष्वधिषीयच । दोदद्धोः । अचउपसर्गात्तः ।
अपोभि । सःस्यार्धधातुके । तासस्त्योर्लोपः । रिच । हएति । यीवर्णयोर्दीधीवेव्योः । सनिमीमाघुरभलभशकपत
पदामचइस् । आप्ज्ञप्यृधामीत् । दम्भइच्च । मुचोऽकर्मकस्यगुणोवा । अत्रलोपोऽभ्यासस्य । ह्रस्वः । हलादिःशेषः
॥ ३ ॥ शर्पूर्वाःखयः । कुहोश्चुः । नकवतेर्यङि । कृषेश्छन्दसि । दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफण
त्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरीत्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीतिच । उरत् ।

द्युतिस्वाप्योःसंप्रसारणम् । व्यथोलिटि । दीर्घइणःकिति । अतआदेः । तस्मान्नुड्द्विहलः । अश्नोतेश्च । भवतेरः । ससूवेतिनिगमे । णिजांत्रयाणांगुणःश्लौ । भृञामित् । अर्तिपिपर्त्योश्च । बहुलंछन्दसि । सन्यतः । ओःपुयण्ज्यपरे ॥ ४ ॥ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनांवा । गुणोयङ्लुकोः । दीर्घोऽकितः । नीग्वञ्चुस्रंसुध्वंसुभ्रंसुक सपतपदस्कन्दाम् । नुगतोऽनुनासिकान्तस्य । जपजभदहदशभञ्जपशांच । चरफलोश्च । उत्परस्यातः । तिच । रीगृदुपधस्यच । रुग्रिकौचलुकि । ऋतश्च । सन्वल्लघुनिचङ्परेऽनग्लोपे । दीर्घोलघोः । अत्स्मृदृत्वरप्रथम्रदस्तृ स्पशाम् । विभाषावेष्टिचेष्ट्योः । ईचगणः ॥ ५ ॥ णौचङ्युपधायाह्रस्वः ... 

ॐ ॥ सर्वस्यद्वे । तस्यपरमाम्रेडितम् । अनुदात्तंच । नित्यवीप्सयोः । परेर्वर्जने । प्रसमुपोदःपादपूरणे । उपर्यध्यधसःसामीप्ये । वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु । एकंबहुव्रीहिवत् । आबाधेच । कर्मधारयवदुत्तरेषु । प्रकारेगुणवचनस्य । अकृच्छ्रेप्रियसुखयोरन्यतरस्याम् । यथास्वेयथायथम् । द्वंद्वंरहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । पदस्य । पदात् । अनुदात्तंसर्वमपादादौ । आमन्त्रितस्यच । युष्मदस्मदोःषष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ॥ १ ॥ बहुवचनस्यवस्नसौ । तेमयावेकवचनस्य । त्वामौद्वितीयायाः ।

नचवाहाहैवयुक्ते । पश्यार्थैश्चानालोचने । सपूर्वायाःप्रथमायाविभाषा । तिङोगोत्रादीनिकुत्सनाभीक्ष्ण्ययोः । तिङ्ङतिङः । नलुट् । निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् । नहप्रत्यारम्भे । सत्यंप्रश्ने । अङ्गात्प्रातिलोम्ये । हिच । छन्दस्यनेकमपिसाकाङ्क्षम् । यावद्यथाभ्याम् । पूजायांनानन्तरम् । उपसर्गव्यपेतंच । तुपश्यपश्यताहैःपूजायाम् । अहोच ॥ २ ॥ शेषेविभाषा । पुराचपरीप्सायाम् । नन्वित्यनुज्ञैषणायाम् । किंक्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् । लोपेविभाषा । एहिमन्येप्रहासेलृट् । जात्वपूर्वम् । किंवृत्तंचचिदुत्तरम् । आहोउताहोचानन्तरम् । शेषेविभाषा । गत्यर्थलोटालृण्नचेत्कारकंसर्वान्यत् । लोट्च । विभाषितंसोपसर्गमनुत्तमम् । हन्तच । आमएकान्तरमामन्त्रितमनन्तिके । यद्धितुपरंछन्दसि । चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः । चादिषुच । चवायोगेप्रथमा । हेतिक्षियायाम् ॥ ३ ॥ अहेतिविनियोगेच । चाहलोपएवेत्यवधारणम् । चादिलोपेविभाषा । वैवावेतिचच्छन्दसि । एकान्याभ्यांसमर्थाभ्याम् । यद्वृत्तान्नित्यम् । पूजनात्पूजितमनुदात्तंकाष्ठादिभ्यः । सगतिरपितिङ् । कुत्सनेचसुप्यगोत्रादौ । गतिर्गतौ । तिङिचोदात्तवति । आमन्त्रितंपूर्वमविद्यमानवत् । नामन्त्रितेसमानाधिकरणेसामान्यवचनम् । विभाषितंविशेषवचनेबहुवचनम् ॥ ४ ॥ सर्वस्यबहुवचनस्यशेषेऽहेतिचतुर्दश ॥ इत्यष्टमाध्यायेप्रथमःपादः ॥ १ ॥ ७४ ॥ पूर्वत्रासिद्धम् । नलोपःसुप्स्वरसंज्ञातुग्विधिषुकृति । नमुने । उदात्तस्वरितयोर्यणःस्वरितोऽनुदात्त

स्य । एकादेशउदात्तेनोदात्तः । स्वरितोवानुदात्तेपदादौ । नलोपःप्रातिपदिकान्तस्य । नङिसंबुद्ध्योः । मादुपधाया श्चमतोर्वोऽयवादिभ्यः । झयः । संज्ञायाम् । आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती । उदन्वानुदधौच । राजन्वान्सौराज्ये । छन्दसीरः । अनोनुट् । नाद्धस्य । कृपोरोलः । उपसर्गस्यायतौ । ग्रोयङि ॥ १ ॥ अचिविभाषा । परेश्चघाङ्कयोः । संयोगान्तस्यलोपः । रात्सस्य । धिच । झलोझलि । ह्रस्वादङ्गात् । इटईटि । स्कोःसंयोगाद्योरन्तेच । चोःकुः । होढः । दादेर्धातोर्घः । वाद्रुहमुहष्णुहष्णिहाम् । नहोधः । आहस्थः । व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशांषः । एकाचोबशोभष्झषन्तस्यस्ध्वोः । दधस्तथोश्च । झलांजशोऽन्ते । झषस्तथोर्धोऽधः ॥ २ ॥ षढोःकःसि । रदाभ्यांनिष्ठातोनःपूर्वस्यचदः । संयोगादेरातोधातोर्यण्वतः । ल्वादिभ्यः । ओदितश्च । क्षियोदीर्घात् । श्योऽस्पर्शे । अञ्चोऽनपादाने । दिवोऽविजिगीषायाम् । निर्वाणोऽवाते । शुषःकः । पचोवः । क्षायोमः । प्रस्त्योऽन्यतरस्याम् । अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः । नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् । नध्याख्यापॄमूर्च्छिमदाम् । वित्तोभोगप्रत्यययोः । भित्तंशकलम् । ऋणमाधमर्ण्ये ॥ ३ ॥ नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानिच्छन्दसि । क्विन्प्रत्ययस्यकुः । नशेर्वा । मोनोधातोः । म्वोश्च । ससजुषोरुः । अवयाःश्वेतवाःपुरोडाश्च । अहन् । रोऽसुपि । अम्नरूधरवरित्युभयथाछन्दसि । भुवश्चमहाव्याहृतेः । वसुस्रंसुध्वंस्वनडुहांदः । तिप्यनस्तेः । सिपिधातोरुर्वा ।

दश्च । वोरुपधायादीर्घइकः । हलिच । उपाधायांच । नभकुर्छुराम् । अदसोऽसेर्दादुदोमः ॥४॥ एतईद्बहुवचने । वाक्यस्यटेःप्लुतउदात्तः । प्रत्यभिवादेऽशूद्रे । दूराद्धूतेच । हैहेप्रयोगेहैहयोः । गुरोरनृतोऽनन्त्यस्याप्येकैकस्यप्राचाम् । ओमभ्यादाने । येयज्ञकर्मणि । प्रणवष्टेः । याज्यान्तः । ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः । अग्नीत्प्रेषणेपरस्यच । विभाषापृष्टप्रतिवचनेहेः । निगृह्यानुयोगेच । आम्रेडितंभर्त्सने । अङ्गयुक्तंतिङाकाङ्क्षम् । विचार्यमाणानाम् । पूर्वंतु भाषायाम् । प्रतिश्रवणेच । अनुदात्तंप्रश्नान्ताभिपूजितयोः ॥ ५ ॥ चिदितिचोपमार्थेप्रयुज्यमाने । उपरिस्विदासी दितिच । स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु । क्षियाशीःप्रैषेषुतिङाकाङ्क्षम् । अनन्त्यस्यापिप्रश्नाख्यानयोः । प्लुतावैचइदुतौ । एचोऽप्रगृह्यस्यादूराद्धूतेपूर्वस्यार्धस्यादुत्तरस्येदुतौ । तयोर्य्वावचिसंहितायाम् ॥ ६ ॥ पूर्वत्राचि षढोर्नसत्तैतईच्चिदित्यष्टौ ॥ इत्यष्टमाध्यायेद्वितीयःपादः ॥ २ ॥ ७ ॥ मतुवसोरुसंबुद्धौछन्दसि । अत्रानुनासिकः पूर्वस्यतुवा । आतोऽटिनित्यम् । अनुनासिकात्परोऽनुस्वारः । समःसुटि । पुमःखय्यम्परे । नश्छव्यप्रशान् । उभ यथर्क्षु । दीर्घादटिसमानपादे । नॄन्पे । स्वतवान्पायौ । कानाम्रेडिते । ढोढेलोपः । रोरि । खरवसानयोर्विसर्ज नीयः । रोःसुपि । भोभगोअघोअपूर्वस्ययोऽशि । व्योर्लघुप्रयत्नतरःशाकटायनस्य । लोपःशाकल्यस्य । ओतोगार्ग्य स्य ॥ १ ॥ ञमिचपदे । हलिसर्वेषाम् । मोऽनुस्वारः । नश्चापदान्तस्यझलि । मोराजिसमःक्वौ । हेमपरेवा । नप

रेनः । ङ्णोःकुक्टुक्शरि । डःसिधुट् । नश्च । शितुक् । ङमोह्रस्वादचिङमुण्नित्यम् । मयउञोवोवा । विसर्ज नीयस्यसः । शर्परेविसर्जनीयः । वाशरि । कुप्वोः ≍क ≍पौच । सोऽपदादौ । इणःषः । नमस्पुरसोर्गत्योः ॥ २ ॥ इदुदुपधस्यचाप्रत्ययस्य । तिरसोऽन्यतरस्याम् । द्विस्त्रिश्चतुरितिकृत्वोऽर्थे । इसुसोःसामर्थ्ये । नित्यंसमासेऽनुत्त रपदस्थस्य । अतःकृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य । अधःशिरसीपदे । कस्कादिषुच । छन्दसिवाप्राम्रे डितयोः । कःकरत्करतिकृधिकृतेष्वनदितेः । पञ्चम्याःपरावध्यर्थे । पातौचवहुलम् । षष्ठ्याःपतिपुत्रपृष्ठपारपदप यस्पोषेषु । इडायावा । अपदान्तस्यमूर्धन्यः । सहेःसाडःसः । इण्कोः । नुम्विसर्जनीयशर्व्यवायेऽपि । आदेशप्र त्यययोः । शासिवसिघसीनांच ॥ ३ ॥ स्तौतिण्योरेवषण्यभ्यासात् । सःस्विदिस्वदिसहीनांच । प्राक्सितादड्व्यवा येऽपि । स्थादिष्वभ्यासेनचाभ्यासस्य । उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । सदिरप्रतेः । स्तन्भेः । अवाच्चालम्बनाविदूर्ययोः । वेश्चस्वनोभोजने । परिनिविभ्यःसेवसितसयसिवुसहसुट्स्तुस्व ञ्जाम् । सिवादीनांवाड्व्यवायेऽपि । अनुविपर्यभिनिभ्यःस्यन्दतेरप्राणिषु । वेःस्कन्देरनिष्ठायाम् । परेश्च । परि स्कन्दःप्राच्यभरतेषु । स्फुरतिस्फुलत्योर्निर्निविभ्यः । वेःस्कभ्नातेर्नित्यम् । इणःषीध्वंलुङ्लिटांधोऽङ्गात् । विभाषे टः । समासेऽङ्गुलेःसङ्गः ॥ ४ ॥ भीरोःस्थानम् । अग्नेःस्तुत्स्तोमसोमाः । ज्योतिरायुषःस्तोमः । मातृपितृभ्यांस्व

सा । मातुःपितुर्भ्यामन्यतरस्याम् । अभिनिसःस्तनःशब्दसंज्ञायाम् । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । सुविनिर्दुर्भ्यः सुपिसूतिसमाः । निनदीभ्यांस्नातेःकौशले । सूत्रंप्रतिष्णातम् । कपिष्ठलोगोत्रे । प्रष्ठोऽग्रगामिनि । वृक्षासनयोर्विष्टरः । छन्दोनाम्निच । गवियुधिभ्यांस्थिरः । विकुशमिपरिभ्यःस्थलम् । अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यःस्थः । सुषामादिषुच । एतिसंज्ञायामगात् । नक्षत्राद्वा ॥ ५ ॥ ह्रस्वात्तादौतद्धिते । निसस्तपतावनासेवने । युष्मत्तत्ततक्षुष्वन्तःपादम् । यजुष्येकेषाम् । स्तुतस्तोमयोश्छन्दसि । पूर्वपदात् । सुञः । सनोतेरनः । सहेःपृतनर्ताभ्यांच । नरपरसृजिस्पृशिस्पृहिसवनादीनाम् । सात्पदाद्योः । सिचोयङि । सेधतेर्गतौ । प्रतिस्तब्धनिस्तब्धौच । सोढः । स्तम्भुसिवुसहांचङि । सुनोतेःस्यसनोः । सदेःपरस्यलिटि । निव्यभिभ्योऽड्व्यवायेवाछन्दसि ॥ ६ ॥ मतुवसोरुञ्चिचेदुदुपधस्यस्तौतिण्योर्भीरोर्ह्रस्वात्तादेकोनविंशतिः ॥ इत्यष्टमाध्यायेतृतीयःपादः ॥ ३ ॥ ७ ॥ रषाभ्यांनोणःसमानपदे । अट्कुप्वाङ्नुम्व्यवायेऽपि । पूर्वपदात्संज्ञायामगः । वनंपुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः । प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्श्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि । विभाषौषधिवनस्पतिभ्यः । अह्नोऽदन्तात् । वाहनमाहितात् । पानंदेशे । वाभावकरणयोः । प्रातिपदिकान्तनुम्विभक्तिषुच । एकाजुत्तरपदेणः । कुमतिच । उपसर्गादसमासेऽपिणोपदेशस्य । हिनुमीना । आनिलोट् । नेर्गदनदपतप

दघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषुच। शेषेविभाषाकखादावषान्तउपदेशे। अनितेः। अन्तः ॥ १ ॥ उभौसाभ्यासस्य। हन्तेरत्पूर्वस्य। वमोर्वा। अन्तरदेशे। अयनंच। छन्दस्यृदवग्रहात्। नश्चधातुस्थोरुषुभ्यः। उपसर्गाद्बहुलम्। कृत्यचः। णेर्विभाषा। हलश्चेजुपधात्। इजादेःसनुमः। वानिंसनिक्षनिन्दाम्। नभाभूपूकमिगमिप्यायीवेपाम्। षात्पदान्तात्। नशेःषान्तस्य। पदान्तस्य। पदव्यवायेऽपि। क्षुभ्नादिषुच। स्तोश्चुनाश्चुः ॥ २ ॥ ष्टुनाष्टुः। नपदान्ताट्टोरनाम्। तोःषि। शात्। यरोऽनुनासिकेऽनुनासिकोवा। अचोरहाभ्यांद्वे। अनचिच। नादिन्याक्रोशेपुत्रस्य। शरोऽचि। त्रिप्रभृतिषुशाकटायनस्य। सर्वत्रशाकल्यस्य। दीर्घादाचार्याणाम्। झलांजश्झशि। अभ्यासेचर्च। खरिच। वावसाने। अणोऽप्रगृह्यस्यानुनासिकः। अनुस्वारस्ययियिपरसवर्णः। वापदान्तस्य। तोर्लि ॥ ३ ॥ उदःस्थास्तम्भोःपूर्वस्य। झयोहोऽन्यतरस्याम्। शश्छोऽटि। हलोयमांयमिलोपः। झरोझरिसवर्णे। उदात्तादनुदात्तस्यस्वरितः। नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्। अअइति। रषाभ्यामुभौष्टुनोदःस्थाष्टौ ॥ इत्यष्टमाध्यायेचतुर्थपादः ॥ ४ ॥ इत्यष्टाध्यायीसूत्रपाठेऽष्टमोऽध्यायः ॥८॥

॥ इतिश्रीपाणिनिमुनिप्रणीतोऽष्टाध्यायीसूत्रपाठःसमाप्तः ॥

इदं पुस्तकं घैसासोपाव्हहरिशर्मतनुजनुषा वेदाचार्यविनायकशर्मणा
स्वीयघैसासगुरुजीवेदपाठशालाद्वारा प्रकाशितम् ।

शके १९०७, सन १९८६

